# ब्रह्मवैवर्त्तपुराणम् ।

द्वितीयखण्डम् ।

## श्रीकृष्णजन्मखण्डात्मकम् ।

---

कृष्णद्वैपायन-महर्षि-श्रीवेदव्यास-
प्रणीतम् ।

---

पण्डितवरश्रीयुक्तपञ्चाननतर्करत्नेन
सम्पादितम् ।
श्रीयुक्तवीरसिंहशास्त्रिणा श्रीयुक्तधीरानन्दकाव्यनिधिना च
परिशोधितम् ।

---

कलिकाताराजधान्याम्
कलुटोलाष्ट्रीटस्थित ३४।१ नं वङ्गवासी-ष्टीम-मेसिन-यन्त्रे
श्रीविहारिलालसरकारेण
मुद्रितं प्रकाशितञ्च ।

---

शकाब्दाः १८१२ ।

# ब्रह्मवैवर्त्तपुराणम् ।

कृष्णद्वैपायन-महर्षि-श्रीवेदव्यास-

प्रणीतम् ।

पण्डितवरश्रीयुक्तपञ्चाननतर्करत्नेन

सम्पादितम् ।

श्रीयुक्तवीरसिंहशास्त्रिणा श्रीयुक्तधीरानन्दकाव्यनिधिना च

परिशोधितम् ।


कलिकाताराजधान्याम्

कलुटोलाष्ट्रीटस्थित ३४।१ नं वङ्गवासी-ष्टीम-मेसिन लय ।

श्रीयुक्तविहारिलालसरकारेण व्यस्य ।

मुद्रितं प्रकाशितञ्च ।

शकाब्दाः १८१२ ।

# विज्ञप्तिः ।

सरससरलरचनापूर्णमद्भुताख्यानभूयिष्ठमिदं महर्षिकृष्णद्वैपायनलिपिकौशललीलाभूमिर्ब्रह्मवैवर्त्तं नाम महापुराणं ब्रह्म-प्रकृति-गणेश-श्रीकृष्णजन्मखण्डाभिधानैर्विभक्तं चतुर्भिः खण्डैः। "दशमं ब्रह्मवैवर्त्तम्" इति विष्णुपुराणोक्तेः पुराणेषु दशममेतत् सारतरं पुराणमन्तरेण नेतरत्रोपलभ्यते श्रीराधामाधवयोः साङ्गोपाङ्ग-पुण्यलीला।

भवति चैवमस्माकमभाग्यवैभवेन मुद्रितममुद्रितानि चैतत्


[illegible]णि, [illegible] राधाया उत्पत्तिः, राधा-कृष्णशरीरतो गोपी-गोप-गवामाविर्भावः, शिवादिभ्यो वाहनदानं, गुह्यकादीनामुत्पत्तिकथनञ्च ... ८

६ अः। श्रीकृष्णस्य शङ्कराय वरदानं, शिव-नामनिरुक्तिकथनं, सृष्ट्यर्थं ब्रह्माणं प्रतिनियोगः १०

७ अः। पृथिव्यादिब्रह्मसृष्टिकथनम् १२

८ अः। ब्रह्मसर्गः वेदादिशास्त्रोत्पत्तिः, स्वायम्भुवमनु-मानसपुत्र-पुलस्त्यादीनामुत्पत्तिः, ब्रह्म-नारदशापोपलम्भनञ्च ... १३

९ अः। कश्यपादेः सृष्टिः, धरागर्भे मङ्गलोत्पत्तिः, कश्यपवंशवर्णन, चन्द्रं प्रति दक्षस्याभिशापः, शिवशरणापन्नस्य चन्द्रस्य विष्णुवरलाभः, दक्षेण सार्द्धं गमनञ्च ... १५

१० अः। जातिनिर्णयप्रस्तावे घृताची-विश्वकर्म्मणोः परस्परशापोपलम्भनं, सम्बन्ध-निरूपणञ्च ... ... १८

११ अः। आश्विनेयशापविमोचनप्रस्तावे विष्णु-वैष्णव-ब्राह्मणप्रशंसा ... २३

१२ अः। उपवर्हणगन्धर्व्वरूपेण नारदस्य जन्म... ... ... २४

१८ अ. [illegible]रूपलम्भाभि-स्तोत्रम्, उपवर्हणस्य पुनर्जीवनप्राप्तिः

१९ अः। महापुरुषब्रह्माण्डपावनकवचं, वाणासुरकृतं शङ्करस्तोत्रञ्च ... ३८

२० अः। उपवर्हणगन्धर्व्वस्य शूद्रयोनौ जन्म ४१

२१ अः। नारदादिनामव्युत्पत्तिः, नारद-शापविमोचनञ्च ... ... ४३

२२ अः। नारदादिब्रह्मपुत्राणां नाम-निरुक्तिः ... ... ४४

२३ अः। ब्रह्म-नारदसंवादः ... ४५

२४ अः। मन्त्रग्रहणार्थं शिवलोकगम-नाय नारदं प्रति ब्रह्मण उपदेशः ... ४७

२५ अः। शिव-नारदसम्मेलनम् ४८

२६ अः। महादेवस्य नारदाय कृष्ण-मन्त्रादिदानम्, आह्निकप्रकरणकथनञ्च ४९

२७ अः। भक्ष्याभक्ष्यादिनिरूपणम् ५२

२८ अः। ब्रह्मनिरूपणं, लब्धवरनारदस्य शिवाज्ञया नारायणाश्रमगमनञ्च ... ५४

२९ अः। नारायणर्षिं प्रति नारदप्रश्नः ५६

३० अः। भगवत्स्वरूपकथनम् ५६

इति ब्रह्मखण्डसूचीपत्रम्।

# ब्रह्मवैवर्त्त-सूचीपत्रम्।

## ब्रह्मखण्डम्।


| प्रकरणम् | पृष्ठे |
|---|---|
| १ अध्यायः। तत्र मङ्गलाचारः, सौति-शौनकसंवादश्च ... ... | १ |
| २ अः। परब्रह्मनिरूपणम् ... | ३ |
| ३ अः। सृष्टिनिरूपणं, कृष्णादितो नारायणादीनामाविर्भावः, तैः कृतं श्रीकृष्णस्तोत्रञ्च | ४ |
| ४ अः। सावित्र्यादीनामाविर्भावः, ब्रह्माण्डोत्पत्तिः, महाविराड्जन्मकथनञ्च ... | ७ |
| ५ अः। कालसं[illegible], रासमण्डले राधाया उत्पत्तिः, राधा-कृष्णशरीरतो गोपी-गोपगवामाविर्भावः, शिवादिभ्यो वाहनदानं, गुह्यकादीनामुत्पत्तिकथनञ्च ... | ८ |
| ६ अः। श्रीकृष्णस्य शङ्कराय वरदानं, शिवनामनिरुक्तिकथनं, सृष्ट्यर्थं ब्रह्माणं प्रतिनियोगः | १० |
| ७ अः। पृथिव्यादिब्रह्मसृष्टिकथनम् | १२ |
| ८ अः। ब्रह्मसर्गः वेदादिशास्त्रोत्पत्तिः, स्वायम्भुवमनु-मानसपुत्र-पुलस्त्यादीनामुत्पत्तिः, ब्रह्म-नारदशापोपलम्भनञ्च ... | १३ |
| ९ अः। कश्यपादेः सृष्टिः, धरागर्भे मङ्गलोत्पत्तिः, कश्यपवंशवर्णन, चन्द्रं प्रति दक्षस्याभिशापः, शिवशरणापन्नस्य चन्द्रस्य विष्णुवरलाभः, दक्षेण सार्द्धं गमनञ्च ... | १५ |
| १० अः। जातिनिर्णयप्रस्तावे घृताची-विश्वकर्म्मणोः परस्परशापोपलम्भनं, सम्बन्ध-निरूपणञ्च ... ... | १८ |
| ११ अः। आश्विनेयशापविमोचनप्रस्तावे विष्णु-वैष्णव-ब्राह्मणप्रशंसा ... | २३ |
| १२ अः। उपवर्हणगन्धर्व्वरूपेण नारदस्य जन्म... ... ... | २४ |
| १३ अः। ब्रह्मणः शापेन उपवर्हणस्य प्राणविसर्ज्जनं, मालावतीविलापश्च | २६ |
| १४ अः। ब्राह्मणबालकवेशेन मालावतीसकाशे विष्णोरागमनं, ब्राह्मण-मालावतीसंवादे कर्म्मफलकथनञ्च... ... | २८ |
| १५ अः। मालावती-कालपुरुषादिसंवादः | ३० |
| १६ अः। चिकित्साप्रणयनं ... | ३२ |
| १७ अः। ब्राह्मण-देववृन्दसंवादे विष्णु-प्रशंसा ... ... ... | ३५ |
| १८ अः। मालावतीकृतं महापुरुषस्तोत्रम्, उपवर्हणस्य पुनर्जीवनप्राप्तिः | [illegible] |
| १९ अः। महापुरुषब्रह्माण्डपावनकवचं, वाणासुरकृतं शङ्करस्तोत्रञ्च ... | ३८ |
| २० अः। उपवर्हणगन्धर्व्वस्य शूद्रयोनौ जन्म | ४१ |
| २१ अः। नारदादिनामव्युत्पत्तिः, नारदशापविमोचनञ्च ... ... | ४३ |
| २२ अः। नारदादिब्रह्मपुत्राणां नामनिरुक्तिः ... ... | ४४ |
| २३ अः। ब्रह्म-नारदसंवादः ... | ४५ |
| २४ अः। मन्त्रग्रहणार्थं शिवलोकगमनाय नारदं प्रति ब्रह्मण उपदेशः ... | ४७ |
| २५ अः। शिव-नारदसम्मेलनम् | ४८ |
| २६ अः। महादेवस्य नारदाय कृष्णमन्त्रादिदानम्, आह्निकप्रकरणकथनञ्च | ४९ |
| २७ अः। भक्ष्याभक्ष्यादिनिरूपणम् | ५२ |
| २८ अः। ब्रह्मनिरूपणं, लब्धवरनारदस्य शिवाज्ञया नारायणाश्रमगमनञ्च ... | ५४ |
| २९ अः। नारायणर्षिं प्रति नारदप्रश्नः | ५६ |
| ३० अः। भगवत्स्वरूपकथनम् | ५६ |


इति ब्रह्मखण्डसूचीपत्रम्।

## प्रकृतिखण्डम् ।


| प्रकरणम् | पृष्ठे |
| --- | --- |
| १ अध्यायः । तत्र प्रकृतिचरितसूत्रम् | ५८ |
| २ अः । प्रकृत्यादिशब्दनिरुक्तिः, ब्रह्माण्डोत्पत्तिः, देवदेवीनामाविर्भावश्च ... | ६२ |
| ३ अः । विश्वनिर्णयवर्णनम् ... | ६५ |
| ४ अः । सरस्वतीपूजाविधि-ध्यानकवचादिकथनम् ... ... | ६७ |
| ५ अः । याज्ञवल्क्योक्तो वाणीस्तवः | ६९ |
| ६ अः । वाणी-लक्ष्मी-गङ्गाणां परस्परविवादेनान्योन्याभिशम्पातः, तासां नदीरूपताप्राप्तिश्च ... ... | ७० |
| ७ अः । काल-कालीश्वरगुणनिरूपणम् | ७४ |
| ८ अः । वसुधोत्पत्तिः, तत्पूजाविधिध्यान-स्तोत्रादिकथनञ्च ... | ७७ |
| ९ अः । पृथिव्युपाख्याने भूमिदानजन्यपुण्यादिकथनम् ... ... | ७९ |
| १० अः । भागीरथ्युपाख्याने भगीरथस्य गङ्गानयनं, देव्याः स्तवपूजादिकञ्च ... | ८० |
| ११ अः । गङ्गाया विष्णुपदीतिनामनिरुक्तौ राधाकृतं श्रीकृष्णभर्त्सनं, कोपेन पानोद्यतायां राधायां गङ्गायाः श्रीकृष्णचरणशरणग्रहणं, ब्रह्मादिप्रार्थनया श्रीकृष्णपदाङ्गात् तस्या निष्क्रान्तिश्च ... | ८५ |
| १२ अः । गङ्गा-नारायणविवाहः | ८९ |
| १३ अः । तुलस्युपाख्याने तदाभिजात्यादिकथनम् ... ... | ९० |
| १४ अः । वेदवत्युपाख्यानं, समासेन रामायणकथनञ्च ... ... | ९१ |
| १५ अः । तुलस्या जन्म, वदरिकाश्रमे तपश्चरणं, ब्रह्मतो वरलाभश्च ... | ९३ |
| १६ अः । तुलस्याश्रमे शङ्खचूडस्यागमनं, तयोर्वाकोवाक्यं, विवाहश्च, हृताधिकारदेवानां वैकुण्ठागमनपूर्व्वकं विष्णवे शङ्खचूडवृत्तान्तनिवेदनं, तद्वधाय विष्णुसकाशात् शूलप्राप्तिश्च शङ्करस्य ... ... | ९५ |
| १७ अः । युद्धार्थं शङ्खचूडसमीपे महादेवस्य दूतसम्प्रेषणं, तुलसीशङ्खचूडयोः सम्भोगः ... ... | १०१ |
| १८ अः । शङ्खचूडस्य युद्धाभिगमनं, शिवशङ्खचूडसंवादश्च ... ... | १०३ |
| १९ अः । देव-दानवसैन्यानां द्वैरथयुद्धवर्णनं, स्कन्दपराभवः, काली-शङ्खचूडयुद्धकथनञ्च ... ... | १०६ |
| २० अः । वृद्धब्राह्मणवेशेन विष्णोः शङ्खचूडसकाशात् कवचग्रहणं महादेवकर्तृकः शङ्खचूडवधः, शङ्खचूडास्थिभ्यः शङ्खोत्पत्तिः | १०८ |
| २१ अः । शङ्खचूडवेशधारिणो हरेस्तुलसीसम्भोगः, तुलस्यभिशप्तस्य तस्य तत्काले वरदानच्छलेन तुलसीपत्रमाहात्म्यकीर्त्तनं, शालग्रामचक्रनिर्द्देशस्तद्गुणवर्णनञ्च | १०९ |
| २२ अः । तुलसीनामाष्टकं, तत्पूजाविधिश्च | ११२ |
| २३ अः । अश्वपतिं प्रति पराशरस्योपदेशकथनं, सावित्रीध्यान-पूजाविधानादिकीर्त्तनं, ब्रह्मकृततत्स्तोत्रकथनञ्च ... | ११३ |
| २४ अः । सावित्रीसत्यवतोर्विवाहः, सत्यवतः पञ्चत्वप्राप्तिः, यमस्य सावित्रीसमीपे कर्म्मणः सर्व्वहेतुत्वप्रदर्शनम् ... | ११६ |
| २५ अः । सावित्री-यमसंवादः ... | ११७ |
| २६।२७ अः । यमस्य सावित्र्यै वरदानं, शुभकर्म्मविपाककथनञ्च ... | ११८ |
| २८ अः । सावित्रीकृतं यमस्तोत्रम् | १२४ |
| २९ अः । नरककुण्डसंख्यानम् | १२५ |
| ३०।३१ अः । पापिभेदेन नरकादिभेदनिरूपणम् ... ... | १२५ |
| ३२ अः । श्रीकृष्णसेवनस्य कर्म्मच्छेदवीजता, लिङ्गदेहनिरूपणञ्च ... | १३३ |
| ३३ अः । नरककुण्डलक्षणकथनम् | १३४ |
| ३४ अः । श्रीकृष्णमाहात्म्यादिकथनं, सत्यवतो जीवनलाभः, सावित्रीशब्दनिरुक्तिश्च | १३७ |
| ३५ अः । लक्ष्मीस्वरूपकथनं, तदादिपूजाकीर्त्तनञ्च ... ... | १४० |

| प्रकरणम् | पृष्ठे |
|---|---|
| ३६ अः। इन्द्रं प्रति दुर्व्वाससः शापः, श्रीभ्रष्टशक्रस्य तत्सकाशाज्ज्ञानलाभो वरलाभश्च ... ... | १४१ |
| ३७ अः। सुरगुरोः सकाशे शक्रस्य गमनं, तं प्रति गुरोः प्रबोधदानञ्च ... | १४६ |
| ३८ अः। सगुरोः शक्रस्य देवगणैः सार्द्धं ब्रह्मलोकगमनं, ततो ब्रह्मपुरःसराणां तेषां वैकुण्ठधाम्नि नारायणसमीपे गमनं, नारायणकर्त्तृकं लक्ष्मीस्थानकीर्त्तनं, तदुपदेशात् पयोधिमन्थनपूर्व्वकलक्ष्मीप्राप्तिकथनञ्च | १४८ |
| ३९ अः। सुरेशकृतलक्ष्मीपूजनप्रस्तावे महालक्ष्म्या मन्त्र-ध्यान-पूजनविधि-स्तोत्रादिकम् ... ... | १४९ |
| ४० अः। स्वाहोपाख्यानम् ... | १५२ |
| ४१ अः। स्वधोपाख्यानं, तं ... | १५३ |
| ४२ अः। कथनमुखेन वि... यज्ञकृत-... ... ... | १५५ |
| ४३ अः। श्रीकृष्णस्य विरजया ...प्रतनृप-...विहारः, राधिकाभयात् श्री... ... | १५८ |
| ४४ अः। मङ्गलचण्ड्युपाख्यानं, तत्पूजाविधि-ध्यान-मन्त्र-स्तोत्रकथनञ्च ... | १६० |
| ४५ अः। मनसोपाख्याने तस्या मनसादिद्वादशनामनिरुक्तिः ... | १६१ |
| ४६ अः। जरत्कारुणा मनसादेव्या विवाहः, आस्तीकजन्म, लब्धब्रह्मशापस्य परिक्षितस्य परलोकानन्तरं जनमेजयनागयज्ञे आस्तीककर्त्तृकनागकुलरक्षणं, महेन्द्रकृतमनसास्तोत्रादिकथनञ्च ... | १६२ |
| ४७ अः। सुरभ्युपाख्यानं, तत्स्तोत्रञ्च | १६६ |
| ४८ अः। पार्व्वतीं प्रति शिवस्य राधाशब्दनिरुक्तिपूर्व्वकं राधोपाख्यानवर्णनारम्भः | १६७ |
| ४९ अः। विरजया विहारप्रवृत्तस्य श्रीकृष्णस्य राधाभयादन्तर्द्धानं, विरजागोप्या नदीरूपत्वप्राप्तिः, राधासुदाम्नोर्विवादः, परस्परमभिशप्यातश्च ... | १६९ |
| ५० अः। सुयज्ञराजं प्रति ब्रह्मशापः | १७१ |
| ५१।५२ अः। अतिथिविनयमिषेण तदनुगामिनाम्रषीणां राजानं प्रत्युपदेशः | १७२ |
| ५३ अः। राज्ञा प्रसादितस्यातिथेः सुतपसस्तं प्रत्युपदेशकथनम् ... | १७६ |
| ५४ अः। श्रीकृष्णस्वरूपवर्णनप्रसङ्गेन कालमानकथनं, विप्रपादोदकप्रशंसा, तपसा सुयज्ञस्य राधा-कृष्णसाक्षात्कारश्च | १७७ |
| ५५ अः। राधिकायाः पूजाविधिः, श्रीकृष्णकृतं स्तोत्रञ्च ... | १८२ |
| ५६ अः। राधिकाकवचम् ... | १८५ |
| ५७ अः। दुर्गोपाख्याने दुर्गाया दुर्गादिषोडशनामनिरुक्तिः ... | १८७ |
| ५८ अः। देवीमाहात्म्ये सुरथवंशवर्णनप्रसङ्गेन ताराहरणोदन्तकथनं, शरणागतचन्द्रस्य पापविमोचनञ्च शुक्राचार्य्येण | १८९ |
| ५९ अः। श्रीकृष्णाज्ञया शक्रादिदेवानां सन्नद्धानां नर्म्मदातटेऽवस्थितिः, सुरगुरोः कैलासगमनञ्च ... ... | १९२ |
| ६० अः। शिव-जीवयोर्वाकोवाक्यं, तयोर्नर्म्मदातटगमनं, विष्णुना दौत्यकर्म्मणि नियुक्तस्य ब्रह्मणः शुक्रालयगमनञ्च ... | १९४ |
| ६१ अः। ब्रह्मप्रार्थितेन शुक्रेण तस्मै तारकाप्रत्यर्पणं, बुधजन्म, बृहस्पतेस्तारालाभः, सुरथ-वैश्ययोर्वंशपरिचयश्च | १९७ |
| ६२ अः। सुरथ-मेधससंवादः | २०० |
| ६३ अः। समाधेर्वैश्यस्य प्रकृतिसाक्षात्कारस्ततो मुक्तिश्च ... ... | २०२ |
| ६४ अः। सुरथकृतप्रकृतिपूजायाः क्रमकीर्त्तनम् ... ... | २०३ |
| ६५ अः। प्रकृतिपूजनस्य फल-कालपरिकीर्त्तनम् ... ... | २०६ |
| ६६ अः। दुर्गास्तोत्रं, तत्कवचञ्च | २०७ |


इति प्रकृतिखण्डसूचीपत्रम्।

## गणेशखण्डम् ।


प्रकरणम् — पृष्ठे

१ अध्यायः । तत्र हर-पार्व्वतीसम्भोग-भङ्गः ... ... ... २१०

२ अः । शङ्करसकाशे पार्व्वत्याः खेदः २११

३ अः । पार्व्वतीं प्रति शङ्करस्य पुण्यक-व्रतोपदेशः, गङ्गातीरे तस्यै हरिमन्त्रदानञ्च २१२

४ अः । पुण्यकव्रतविधानकथनम् २१३

५ अः । व्रतकथाप्रकरणम् ... २१६

६ अः । व्रतमहोत्सवः, व्रताशाग्रहणञ्च २१७

७ अः । व्रतानुष्ठानं, श्रीकृष्णादेशेन कुमाराय पार्व्वत्याः पतिदक्षिणादानं, पुनः पतिप्राप्त्यर्थं पार्व्वतीकृतं श्रीकृष्णस्तोत्रञ्च २२०

८ अः । पार्व्वत्याः श्रीकृष्णसकाशाद्द वरप्राप्तिः, सनत्कुमारात् पुनः शङ्करप्राप्तिः, गणेशजन्मकथनञ्च ... ... २२४

९ अः । हरपार्व्वत्योर्गणेशसन्दर्शनम् २२७

१० अः । गणेशमङ्गलार्थं मङ्गलाचारः २२८

११ अः । पार्व्वती-शनैश्चर[illegible] [illegible]

१२ अः । [illegible]र्व्वविघ्नोपशमनम् ... २३०

१३ अः । गणेशस्य नामकरणं, पूजा-स्तोत्र-कवचादिकञ्च ... ... २३२

१४ अः । कार्त्तिकप्रवृत्तिप्राप्तिः २३५

१५ अः । कार्त्तिकानयनार्थं नन्दिकेश्वरादिशिवदूतानां कृत्तिकाभवने गमनं, कार्त्तिकनन्दिकेश्वरयोः कथोपकथनञ्च २३७

१६ अः । कैलासे कार्त्तिकस्यागमनम् २३८

१७ अः । कार्त्तिकस्याभिषेकः, कार्त्तिक-गणेशयोः परिणयश्च ... २४०

१८ अः । गणेशशिरोराहित्यस्य हेतु-प्रदर्शनप्रसङ्गेन शङ्करं प्रति कश्यपशापः २४०

१९ अः । श्रीसूर्य्यस्तवकवचादिकथनम् २४१

२० अः । गणेशस्य गजाननत्वे हेतुः २४३

२१ अः । शक्रलक्ष्मीप्राप्तिकथनम् २४५

२२ अः । शक्राय हरेर्महालक्ष्मीस्तव-कवचादिदानम् ... ... २४५

प्रकरणम् — पृष्ठे

२३ अः । लक्ष्मीचरितकथनम् ... २४७

२४ अः । गणेशैकदन्तताहेतुकथनप्रस्तावे जमदग्निकार्त्तवीर्य्यसंवादः ... २४८

२५ अः । कापिलसैन्ययुद्धे कार्त्तवीर्य्य-पराभवकथनम् ... ... २५०

२६ अः । जमदग्निसकाशात् कार्त्तवीर्य्यस्य पराभवः ... २५१

२७ अः । कार्त्तवीर्य्ययुद्धे जमदग्नेः प्राण-त्यागः, परशुरामस्य च प्रतिज्ञा ... २५२

२८ अः । भृगु-रेणुकासंवादः, ब्रह्मलोके ब्रह्म-परशुरामयोः कथोपकथनञ्च ... २५६

२९ अः । ब्रह्मणो लब्धवरस्य भार्गवस्य शिवलोकगमनं, तत्र तत्कृतं शिवस्तोत्रञ्च २५६

३० अः । शङ्करपरशुरामसंवादः २५८

३१ अः । भार्गवं प्रति शङ्करस्य त्रैलोक्य-विजयकवचदानम् ... ... २५९

३२ अः । भार्गवाय शङ्करस्य भगवन्मन्त्र-स्तवादिद[illegible] ... २६०

३३ अः । [illegible]स्तोत्रकथ[illegible]शीला स्वप्नदर्शनञ्च २६[illegible]

३४ अः । कार्त्तवीर्य्यसमीपे भार्गवस्य दूत-सम्प्रेषणं, स्वभार्य्यां मनोरमां प्रति कार्त्त-वीर्य्यस्य स्वप्नदर्शनवृत्तान्तकथनञ्च ...

३५ अः । मनोरमायाः परलोकगमनं भार्गव-कार्त्तवीर्य्यसंवादः, मत्स्यराज-परशु-रामयोः संग्रामवर्णनावसरे शिवकवचकथनञ्च २६७

३६ अः । राज्ञा सुचन्द्रेण सार्कं परशु-रामस्य युद्धवर्णनावसरे भृगुकृतकालीस्तोत्र-कथनं, ब्रह्म-भार्गवसंवादः, सुचन्द्रवधकथनञ्च २७१

३७ अः । भद्रकालीकवचकथनम् २७२

३८ अः । पुष्कराक्ष-परशुरामयोर्युद्ध-वर्णनप्रसङ्गेन महालक्ष्मीकवचकथनम् २७३

३९ अः । दुर्गाकवचकथनम् ... २७५

४० अः । कार्त्तवीर्य्य-परशुरामयोर्युद्धे कार्त्तवीर्य्यसमीपान्महादेवस्य छलेन कवच-हरणं, नृप-भार्गवयोर्वाकोवाक्यं, कार्त्तवीर्य्यस्य परलोकगमनं, ब्रह्म-परशुरामसंवादश्च २७६

| प्रकरणम् | पृष्ठे |
| --- | --- |
| ४१ अः। परशुरामस्य कैलासगमनम् | २७९ |
| ४२ अः। गणेश-भार्गवसंवादः ... | २८० |
| ४३ अः। भार्गवयुद्धे गणेशस्य दन्तभङ्गः | २८२ |
| ४४ अः। पार्व्वतीभर्त्सितपरशुरामं प्रति श्रीविष्णोरुपदेशकथनं, गणेशस्तोत्रकथनञ्च | २८३ |
| ४५ अः। परशुरामकृतं भगवतीस्तोत्रम् | २८६ |
| ४६ अः। तुलसीं विना भार्गवकृतगणेश-पूजाकथनप्रसङ्गेन तुलसी-गणेशयोः परस्पर-मभिसम्पातकथनम् ... ... | २८८ |

इति गणेशखण्डसूचीपत्रम्।

## श्रीकृष्णजन्मखण्डम्।

| प्रकरणम् | पृष्ठे |
| --- | --- |
| १ अध्यायः। नारायणर्षिं प्रति नारदस्य हरिकथाविषयकप्रश्नः, तं प्रति नारायणस्य तत्कथाकथनमुखेन विष्णु-वैष्णवगुण-कथनञ्च ... ... | २९१ |
| २ अः। श्रीकृष्णस्य विरजया साकं विहारः, राधिकाभयात् श्रीकृष्णस्यान्तर्द्धानं, विरजाया नदीरूपत्वञ्च ... | २९३ |
| ३ अः। श्रीकृष्णं प्रति राधिकायाः शापः, राधिका-श्रीदाम्नोः परस्परमभिसम्पातश्च | २९५ |
| ४ अः। स्वीयभारहरणकथनार्थं क्षिति-ब्रह्मलोकगमनं, ब्रह्मसकाशे तन्निवेदनं, देववृन्दस्य हरिभवनगमनं, गोलोकवर्णनञ्च | २९८ |
| ५ अः। ब्रह्मादीनां गोलोकगमनं, ब्रह्मकृतं श्रीहरिस्तोत्रञ्च ... | ३०४ |
| ६ अः। श्रीकृष्णस्याविर्भावः, ब्रह्मादिकृतं भगवत्स्तोत्रं, भगवता सार्द्धं तेषां वाकोवाक्यञ्च ... ... | ३०७ |
| ७ अः। पूर्व्वजन्मपरिचयपूर्व्वकं देवकी-वसुदेवयोः परिणयवृत्तान्तकीर्त्तनं, कंसेन तयोः पुत्रषट्कनिधनं, ब्रह्मादिकृतं श्रीकृष्णस्तोत्रं, समासेन सङ्कर्षण-भगवतोर्जन्मवृत्तान्तवर्णनं, वसुकृतं श्रीकृष्णस्तोत्रं, योगमाया-वृत्तान्तकथनञ्च ... ... | ३१५ |
| ८ अः। जन्माष्टमीव्रतादिनिरूपणम् | ३१९ |
| ९ अः। नन्दोत्सवकथनम् ... | ३२२ |
| १० अः। पूतनामोचणप्रस्तावः | ३२४ |
| ११ अः। तृणावर्त्तासुरवधः ... | ३२५ |
| १२ अः। शकटभञ्जनं, कवचन्यासश्च | ३२७ |
| १३ अः। गर्ग-नन्दसंवादः, श्रीकृष्णान्न-प्राशन-नामकरणप्रस्तावश्च ... | ३२८ |
| १४ अः। यमलार्ज्जुनभञ्जनं, कुबेरतनयस्य शापकारणञ्च ... ... | ३३५ |
| १५ अः। श्रीराधाकृष्णसंवादः, ब्रह्माभिगमनं, ब्रह्मकृतश्रीराधास्तोत्रकथनं, राधाकृष्णयोर्विवाहवर्णनञ्च ... | ३३६ |
| १६ अः। वक-केशि-प्रलम्बासुरवधः, वसुदेवादिगन्धर्व्वाणां शङ्करशापोपलम्भनं, वृन्दावनगमनप्रस्तावश्च ... ... | ३४१ |
| १७ अः। वृन्दावननिर्म्माणं, कलावत्या सह वृषभानोः परिणयवृत्तान्तः, वृन्दावन-नामकारणकथनं, राधादिषोड़शनामनिरुक्तिः, श्रीनारायणकृतं श्रीराधास्तोत्रञ्च | ३४६ |
| १८ अः। विप्रपत्नीमोचणं, विप्रपत्नीकृतं श्रीकृष्णस्तोत्रं, वह्नेः सर्व्वभक्ष्यत्ववीजञ्च | ३५४ |
| १९ अः। कालीयदमनं, कालीयकृतं श्रीकृष्णस्तोत्रं, नागपत्नीकृतं स्तोत्रं, दावाग्निमोचणं, गोप-गोपीकृतं स्तोत्रञ्च ... | ३५८ |
| २० अः। ब्रह्मकर्त्तृकं गोवत्सादिहरणं, ब्रह्मकृतं श्रीकृष्णस्तोत्रञ्च ... | ३६४ |
| २१ अः। इन्द्रयागभञ्जनं, नन्दकृतमिन्द्र-स्तोत्रं, श्रीकृष्णस्य गोवर्द्धनोद्धरणं, इन्द्र-नन्दकृते श्रीकृष्णस्तोत्रे च ... ... | ३६५ |
| २२ अः। धेनुकवधः, धेनुककृतं श्रीकृष्ण-स्तोत्रञ्च ... ... | ३७२ |
| २३ अः। प्रसङ्गतस्तिलोत्तमा-वलि-पुत्रयोर्ब्रह्मशापविवरणम् ... | ३७५ |
| २४ अः। दुर्व्वाससो विवाहः, पत्नीवियोगश्च | ३७९ |
| २५ अः। और्व्वशापाद्दुर्व्वाससः पराभवः, तत्कृतं श्रीकृष्णस्तोत्रं, ततस्तन्मोचणञ्च | ३८२ |

प्रकरणम् पृष्ठे

२६ अः। एकादशीव्रतविधानम् ३८७

२७ अः। गोपकन्याकृतं श्रीकृष्णस्तोत्रं, गोपिकावस्त्रहरणं, राधिकाकृतं श्रीकृष्णस्तोत्रं, गौरीव्रतविधानं, व्रतकथा, पार्व्वतीस्तोत्रं, व्रतान्ते पार्व्वत्या वरदानञ्च ... ३८८

२८ अः। रासलीलावर्णनम् ... ३९६

२९ अः। अष्टावक्रमोचनं, तत्कृतं श्रीकृष्णस्तोत्रञ्च ... ... ४०१

३० अः। राधिकां प्रति श्रीकृष्णस्याष्टावक्रोपाख्यानवर्णनप्रसङ्गेनासितकृतशिवस्तोत्रकथनं, रम्भाशापाद्देवलस्याष्टाङ्गवक्रताकीर्त्तनञ्च ४०३

३१ अः। ब्रह्म-मोहिनीसमागमे मोहिनीकृतं कामस्तोत्रम् ... ... ४०६

३२ अः। ब्रह्म-मोहिन्योर्वाकोवाक्यं, ब्रह्मकृतं श्रीकृष्णस्तोत्रञ्च ... ४०८

३३ अः। ब्रह्माणं प्रति मोहिन्याः शापः, ब्रह्मदर्पभङ्गश्च ... ... ४११

३४ अः। गङ्गाया जन्म, तस्या भागीरथ्यादिनामनिरुक्तिः, तन्माहात्म्यकीर्त्तनञ्च ४१३

३५ अः। गङ्गास्नानेन शापान्मोचनं ब्रह्मणः, तस्य भारतीसम्भोगः, रति-कामयोर्जन्म, कन्दर्पवाणाद्ब्रह्मणश्चित्तविकारः, तस्मै ऋषीणां नारायणस्य चोपदेशप्रदानम् ४१४

३६ अः। हरदर्पभङ्गकथनं, तद्दैश्वर्य्यवर्णनञ्च ४१७

३७ अः। पार्व्वतीशापात् शिवनैवेद्यस्याग्राह्यताकथनं, शिवकृतं पार्व्वतीस्तोत्रञ्च ४२०

३८ अः। दुर्गादर्पभङ्गप्रस्तावे दर्पनाशात् सतीदेव्या देहत्यागः, पार्व्वतीजन्म, हर-गिरिसमागमश्च ... ... ४२२

३९ अः। हिमालय-पार्व्वत्योः शिवसन्दर्शनं, मदनभस्मवृत्तान्तः ... ४२४

४० अः। पार्व्वत्यास्तपश्चरणं विप्रबालकरूपेण तत्सकाशे शङ्करस्यागमनं, तयोः कथोपकथनं, पितृगेहगतायाः पार्व्वत्याः समीपे भिक्षुवेशेन शिवस्य गमनं, वृहस्पतिना सार्द्धं देववृन्दस्य मन्त्रणा च ४२६

प्रकरणम् पृष्ठे

४१ अः। हिमालयसकाशे ब्राह्मणवेशेन शङ्करस्य शिवनिन्दा, सारुन्धतीकसप्तर्षीणां हिमालयसमीपे गमनं, तत्समीपे कन्यादानकथाप्रसङ्गेन चानरण्योपाख्यानकथनं वशिष्ठस्य ४३०

४२ अः। वशिष्ठस्य पद्मा-धर्म्मसंवादकथनं, सतीदेहत्यागकथनञ्च ... ४३५

४३ अः। शङ्करविरहशोकापनोदनकथनम् ... ... ४३९

४४ अः। महादेवस्य विवाहयात्रा, हिमालयकृतं शिवस्तोत्रञ्च ... ४४०

४५ अः। शिवविवाहवर्णनम् ... ४४८

४६ अः। हर-गौरीविलासवर्णनं, सर्व्वमङ्गलवर्णनञ्च ... ... ४४५

४७ अः। इन्द्रदर्पभङ्गः ... ४४७

४८ अः। सूर्य्यदर्पभङ्गः ... ४५२

४९ अः। वह्निदर्पभङ्गः ... ४५३

५० अः। दुर्व्वाससो दर्पभङ्गः ... ४५३

५१ अः। धन्वन्तरि-दर्पभङ्गः, मनसाविजयश्च ... ... ४५४

५२ अः। राधिकायाः खेदः, राधानामनिरुक्तिश्च ... ... ४५६

५३ अः। राधा-कृष्णयोर्विहारः ४५८

५४ अः। समासेन श्रीकृष्णचरितवर्णनम् ४५९

५५ अः। श्रीकृष्णप्रभाववर्णनम् ४६०

५६ अः। महाविष्णुप्रभृतीनां दर्पभङ्गः, देववृन्दकृतं लक्ष्मीस्तोत्रञ्च ... ४६१

५७ अः। कृष्णविच्छेदात् प्राणत्यागोद्यतया राधिकया सार्द्धं ब्रह्मणो वैकुण्ठधामगमनं ... ... ४६३

५८ अः। संक्षेपतो राधाविरहवर्णनम् ४६५

५९ अः। सविस्तरमिन्द्रदर्पभङ्गकथनमुखेन शची-नहुषसंवादकथनम् ... ४६५

६० अः। वृहस्पति-दूतसंवादः, नहुषस्य सर्पत्वप्राप्तिः, शक्रमोचनकथनञ्च ४७०

६१ अः। इन्द्राहल्यासंवादः, इन्द्रस्याहल्याधर्षणं, तयोर्गौतमशापोपलम्भश्च ४७२

प्रकरणम् — पृष्ठे

६२ अः। समासेन रामायणवर्णनम् ... ४७४
६३ अः। कंसस्य दुःस्वप्नदर्शनम् ... ४७७
६४ अः। कंसयज्ञकथनम् ... ४७८
६५ अः। अक्रूरानन्दकथनम् ... ४७९
६६ अः। राधिकाशोकापनोदनम् ... ४८१
६७ अः। राधिकां प्रति श्रीकृष्णस्याध्यात्मिकयोगकथनम् ... ४८१
६८ अः। राधाशोकविमोचनम् ... ४८४
६९ अः। ब्रह्मणा सार्द्धं श्रीकृष्णस्य कथोपकथनं श्रीकृष्णं प्रति रत्नमालावाक्यञ्च ४८५
७० अः। अक्रूरस्वप्नदर्शनवृत्तान्तवर्णनं, कृतश्रीकृष्णस्तोत्रकथनं, गोपीविषयवर्णनञ्च ४८८
७१ अः। श्रीकृष्णस्य मथुरायात्रायां मङ्गलाचारः ... ४९०
७२ अः। श्रीकृष्णस्य मथुराप्रवेशः, पुरीदर्शनं, रजकनिग्रहः, कुब्जाप्रसादः, कंसवधः, देवकीवसुदेवयोर्मोचनञ्च ... ४९१
७३ अः। श्रीकृष्णकर्त्तृकं नन्दादिशोकमोचनम् ... ४९४
७४ अः। कर्म्मनिगडच्छेदोपदेशः ४९७
७५ अः। सांसारिकज्ञानोपदेशः ४९८
७६ अः। शुभदर्शनपुण्यकथनं, दानफलकीर्त्तनञ्च ... ५०१
७७ अः। सुस्वप्नफलकथनम् ... ५०३
७८ अः। आध्यात्मिकोपदेशः, अशुभदर्शनजन्यपापकथनम् ... ५०६
७९ अः। सूर्य्यग्रहणबीजकथनम् ५०७
८० अः। चन्द्रग्रहणादिकारणकथने चन्द्रं प्रति तारायाः शापः ... ५०९
८१ अः। तारोद्धरणकीर्त्तनम् ५१०
८२ अः। दुःस्वप्नकथनं, तच्छान्तिकथनञ्च ५१२
८३ अः। चातुर्व्वर्ण्यादीनां धर्म्मनिरूपणम् ... ५१४
८४ अः। गृहस्थधर्म्मनिरूपणं, स्त्रीचरित्रकीर्त्तनं, भक्त-लक्षणकथनं, समासेन ब्रह्माण्डानां वर्णनञ्च ... ५१८

प्रकरणम् — पृष्ठे

८५ अः। भक्ष्याभक्ष्यनिरूपणं, कर्म्मविपाककथनञ्च ... ... ५२२
८६ अः। केदारराजकन्यावृत्तान्तः, तां धर्षितुकामं ब्राह्मणरूपिणं धर्मं प्रति तस्या अभिसम्पातः, तत्र समागतानां देवानामनुरोधेन तस्य शापविमुक्तिकरणञ्च ... ५२८
८७ अः। भगवत्समीपे पुलहादीनामृषीणां समागमनं, तैः सह तस्य संलापश्च ५३३
८८ अः। नन्दराजाय भगवतो महादेवकृतप्रकृतिस्तोत्रदानम् ... ५३५
८९ अः। नन्दराजं प्रति भगवदुक्तिः ५३७
९० अः। युगधर्म्मकथनम् ... ५३८
९१ अः। भगवता सार्द्धं देवकी-वसुदेवसंवादः ... ... ५४०
९२ अः। भगवत्प्रेरितस्योद्धवस्य वृन्दावनगमनं, तद्दर्शनं, तत्कृतराधास्तोत्रञ्च ५४१
९३ अः। राधिकोद्धवयोः कथोपकथनम् ५४४
९४ अः। उद्धवं प्रति राधायाः सखीवचनम्, उद्धवस्य च कलावत्याद्युपाख्यानकथनम् ... ... ५४७
९५ अः। राधिकाखेदवर्णनम् ... ५५०
९६ अः। उद्धवं प्रति राधाया उपदेशः ५५१
९७ अः। राधोद्धवसंवादः ... ५५४
९८ अः। मथुरायामुद्धवस्य प्रत्यागमनं, भगवत्सकाशे तस्य वृन्दावनवार्त्ताकथनञ्च ५५६
९९ अः। वसुदेवसमीपे गर्गस्य रामकृष्णयोरुपनयनप्रस्तावः, तत्र ऋषीणामागमनं, वसुदेवकर्त्तृकप्रकृतिवृत्तान्तकथनञ्च ५५८
१०० अः। वसुदेवसमीपे देवदेवीनां समागमनम् ... ५५९
१०१ अः। राम-कृष्णयोरुपनयनं, तदर्थं समागतानां सर्व्वेषां स्वस्वगृहगमनञ्च ५६०
१०२ अः। सान्दीपनिमुनेः सकाशे रामकृष्णयोर्विद्याध्ययनं, मुनिपत्नीकृतं तत्-स्तोत्रं, गुरुदक्षिणादानञ्च ... ५६२
१०३ अः। द्वारावतीनिर्म्माणार्थं विश्व-

| प्रकरणानि | पृष्ठे |
|---|---|


-कर्म्मणां प्रत्युपदिष्टकथनमुखेन [illegible]शुभाशुभ-विवरणादिकथनं श्रीकृष्णस्य ... ५६३

१०४ अः। श्रीकृष्णसमीपे [illegible]दीनां सनत्कुमारादीनाञ्च समागमनं, श्रीकृष्णस्य द्वारकाप्रवेशपूर्व्वकमुग्रसेनादिभिः सार्द्धं कथोपकथनञ्च ... ... ५६५

१०५ अः। रुक्मिण्युद्वाहे भीष्मक-राजं प्रति शतानन्दवाक्यं, तच्छ्रवणाद्दुष्ट-रुक्मिवाक्यञ्च ... ... ५६८

१०६ अः। रेवती-बलदेवयोर्विवाहः, श्रीकृष्णादीनां कुण्डिननगरे गमनं, शाल्व-राजादीनां भगवदधिक्षेपश्च ... ५७१

१०७ अः। हलधरकृतो रुक्मिपराजयः, श्रीकृष्णस्याधिवासनं, विवाहप्राङ्गणे शुभा-गमनं, भीष्मकराजकृते श्रीकृष्णस्तोत्रे च ५७२

१०८ अः। रुक्मिणीसम्प्रदानम् ... ५७४

१०९अः। श्रीकृष्णेन सार्द्धमरुन्धत्यादीनां श्रीत्रासकथोपकथनं, सवरयात्रिणोर्वधूवरयो-र्द्वारकागमनञ्च ... ... ५७५

११० अः। भगवदन्तिकान्नन्द-यशोदयोः कदलीवनगमनं, राधायशोदासंवादश्च ५७६

१११ अः। यशोदां प्रति राधिकाया भक्तिज्ञानोपदेशः, तत्प्रसङ्गेन रामादिकृष्ण-नामनिरुक्तिकथनञ्च ... ५७८

११२ अः। रुक्मिणीगर्भाधानं, कामजन्म, कामकर्त्तृकः शम्बरवधः, रतिकामयोर्द्वारका-गमनं, श्रीकृष्णस्य षोड़शसहस्रकामिनी-पाणिग्रहणं, तासामपत्यसंख्यानं, दुर्व्वाससे श्रीकृष्णस्य कन्यासम्प्रदानं, दुर्व्वासःकृतं श्रीकृष्णस्तोत्रञ्च ... ... ५८०

११३ अः। कैलासगतस्य दुर्व्वाससः पार्व्व-त्युपदेशेन पुनर्द्वारकागमनं, श्रीकृष्णस्य हस्तिनागमनं, जरासन्ध-शाल्वघातनं, शिशु-पाल-दन्तवक्त्रवधः, कुरु-पाण्डवयुद्धे भूभार-हरणं, स्वमातृे मृतपुत्रप्रदानं, पारिजात-हरणं, सत्यभामायाः पुण्यकव्रतानुष्ठानञ्च ५८२

११४ अः। ऊषानिरुद्धयोः [illegible] चित्रलेखाकर्त्तृकमनिरुद्धहरणात्, [illegible] द्वयोर्गान्धर्व्वविवाहश्च ... ...

११५ अः। [illegible] श्रीकृष्णं वाणं प्रति महादेवादीनां हितोपदेशः वाणासुरस्य युद्धयात्रा, वाणानिरुद्धसंवादः

११६ अः। वाणं प्रत्यनिरुद्धस्य [illegible] एकत्वाभिलहेतुकीर्त्तनं, [illegible] हरणवृत्तान्तकथनञ्च, तथानिरुद्धाद्वाणपरा-जयश्च ... ... ५८[illegible]

११७ अः। गणेश्वरं प्रति महादेवस्यानि-रुद्धपराक्रमकीर्त्तनम् ... ... ५८[illegible]

११८ अः। दूतमुखाच्छ्रीकृष्णागमनवार्त्ता-श्रवणाद्धरपार्व्वत्योः कर्त्तव्यविषयकपरामर्शः ५८[illegible]

११९ अः। वाणसभायां बलेरागमनं. हर-बलिसंवादे हरकृता वैष्णवप्रशंसा, हरि-बलिसंवादे बलिकृतं श्रीकृष्णस्तोत्रं,श्रीकृष्णस्य बलयेऽभयदानञ्च ... ५८[illegible]

१२० अः। यादवासुरसैन्ययोर्युद्धवर्णनं, वैष्णवज्वरोत्पत्तिकथनं, श्रीकृष्णाद्वाणपरा-भवश्च ... ... ... ५९[illegible]

१२१ अः। शृगालराजमोक्षणम् ५९८

१२२ अः। स्यमन्तकोपाख्यानम् ५९९

१२३ अः। सिद्धाश्रमे राधाकृतं गणेश-पूजनम् ... ... ६०[illegible]

१२४ अः। राधिकां प्रति गणेशवाक्यं, तस्यै पार्व्वत्या वरदानं, पार्व्वत्याज्ञया सखीनां राधायाः सुवेशादिकरणं, राधिकातेजसा विस्मितानां सिद्धाश्रमस्थानां देवादीनां तत्स-मीपागमनं, ब्रह्मादिकृतं राधिकास्तोत्रञ्च

१२५ अः। महादेवादस्वदेवस्य ज्ञान-लाभः, राजसूययज्ञानुष्ठानञ्च ... ६०५

१२६ अः। राधा-कृष्णयोः पुनः सम्मेलनं, राधाकृत-श्रीकृष्णस्तोत्रादिकथनं, श्रीकृष्णं प्रति राधिकाया विनयगर्भो विविधप्रश्नः, तां प्रति तस्याध्यात्मिकज्ञानोपदेश ... ६०९

| प्रकरणम् | पृष्ठे |
|---|---|
| १२७ अः। राधाकृष्णयोर्विहारः, यशोदानन्दजननञ्च ... ... | ६१० |
| १२८ अः। नन्दं प्रति श्रीकृष्णस्य कलिधर्म्मकथनं, गोकुलवासिभी राधाया गोलोकगमनञ्च ... ... | ६११ |
| १२९ अः। भाण्डीरागतैर्ब्रह्मादिभिः कृतानि श्रीकृष्णस्तोत्राणि, यदुकुलध्वंसः, पाण्डवानां स्वर्गारोहणं, भागीरथ्यै भगवतो वरदानं, गोलोकारोहणञ्च ... | ६१३ |
| १३० अः। नारदस्य बदरिकाश्रमाद्ब्रह्मलोकगमनं, सृञ्जयकन्यया सह विवाहविहारौ, सनत्कुमारोपदेशेन तपसे गमनं, तं प्रति शम्भोरुपदेशवाक्यं, नारदस्य मुक्तिश्च | ६१६ |
| १३१ अः। वह्निसुवर्णोत्पत्तिकथनम् | ६१८ |
| १३२ अः। समासेन ब्रह्मादिखण्डचतुष्टयार्थनिरूपणम् ... ... | ६१९ |
| १३३ अः। महापुराणोपपुराणलक्षणकथनं, महापुराणानां श्लोकसंख्यानम्, उपपुराणानां नामकीर्त्तनं, ब्रह्मवैवर्त्तनामनिरुक्तिकथनं, तन्माहात्म्यवर्णनं, श्रवणफलश्रवणक्रमाणां यथाक्रममनुकीर्त्तनञ्च ... | ६२८ |

इति श्रीकृष्णजन्मखण्डसूचीपत्रम्।

समाप्तञ्चेदं ब्रह्मवैवर्त्तसूचीपत्रम्।

# ब्रह्मवैवर्तपुराणम् ।

## श्रीकृष्णजन्मखण्डम् ।

### प्रथमोऽध्यायः ।

नारद उवाच ।

श्रुतं प्रथमतो ब्रह्मन् ब्रह्मखण्डं मनोहरम् ।
ब्रह्मणो वदनाम्भोजात् परमाद्भुतमेव च ॥ १
ततस्तद्वचनात् तूर्णं समागत्य तवान्तिकम् ।
श्रुतं प्रकृतिखण्डञ्च सुधाखण्डात् परं वरम् ॥ २
ततो गणपतेः खण्ड-मखण्डजन्मखण्डनम् ।
न मे तृप्तं मनो लोलं विशिष्टं श्रोतुमिच्छति ॥ ३
श्रीकृष्णजन्मखण्डञ्च जन्मादिखण्डनं नृणाम् ।
प्रदीपं सर्व्वतत्त्वानां कर्म्मघ्नं हरिभक्तिदम् ॥ ४
सद्यो वैराग्यजनकं भवरागनिकृन्तनम् ।
कारणं मुक्तिवीजानां भवाब्धितारणं परम् ॥ ५
कर्म्मोपभोगरोगाणां खण्डने च रसायनम् ।
श्रीकृष्णचरणाम्भोज-प्राप्तिसोपानकारणम् ॥ ६
जीवनं वैष्णवानाञ्च जगतां पावनं परम् ।
वद विस्तरशो भक्तं शिष्यं मां शरणागतम् (क)॥७
केन वा प्रार्थितः कृष्ण आजगाम महीतलम् ।
सर्व्वांशैरेक एवेशः परिपूर्णतमः स्वयम् ॥ ८
युगे कुत्र कुतो हेतोः कुत्र वाविर्ब्बभूव ह ।
वसुदेवोऽस्य जनकः कोऽवा का वा च देवकी ॥ ९
वद कस्य कुले जन्म मायया सुविडम्बनम् ।
किं चकार समागत्य केन रूपेण वा हरिः ॥ १०
जगाम गोकुलं कंस-भयेन सूतिकागृहात् ।
कथं कंसात् कीटतुल्याद्भयमीशस्य (क) भयं मुने ॥११
हरिर्वा गोपवेशेन गोकुले किं चकार ह ।
कुतो गोपाङ्गनासार्द्धं विजहार जगत्पतिः ॥ १२
का वा गोपाङ्गनाः के वा गोपाला बालरूपिणः ।
का वा यशोदा को नन्दः किं वा पुण्यं चकार ह॥१३
कथं राधा पुण्यवती देवी गोलोकवासिनी ।
व्रजे वा व्रजकन्या सा बभूव प्रेयसी हरेः ॥ १४
कथं गोप्यो दुराराध्यं सम्प्रापुरीश्वरं परम् ।
कथं ताश्च परित्यज्य जगाम मथुरां पुनः ॥ १५
भारावतारणं कृत्वा किं विधाय जगाम सः ।
कथयस्व महाभाग पुण्यश्रवणकीर्त्तनम् ॥ १६
सुदुर्लभां हरिकथां तरणिं भवतारणे ।
निषिक्त-भोग-सुलभ-क्लेश-च्छेदन-कर्त्तनीम् ॥ १७
पापेन्धनानां दहने ज्वलदग्निशिखामिव ।
पुंसां श्रुतवतां कोटि-जन्मकिल्बिषनाशिनीम् ॥ १८
सुक्तिं कर्णसुधारम्यां शोकसागरनाशिनीम् ।
मह्यं भक्ताय शिष्याय ज्ञानं देहि कृपानिधे ॥ १९
तपो-जप-महादान-पृथिवी-तीर्थदर्शनात् ।
श्रुतिपाठानशनाद्व्रत-(ख) देवार्च्चनादपि ॥ २०

(क) विस्तारं वद मां भक्तं शिष्यञ्चेति क्वचित् पाठः ।

(क) अभयस्य इति वा पाठः ।
(ख) अनशनव्रतेति वा पाठः ।

दीक्षायाः सर्व्वयज्ञेषु यत् फलं लभते नरः।
षोडशीं स्नानदानस्य कलां नार्हन्ति तत् फलम् २१
पित्राहं प्रेषिता स्नाना-दानाय तव सन्निधिम्।
सुधासमुद्रं सम्प्राप्य न को वा पातुमिच्छति ॥२२
नारायण उवाच।
मया ज्ञातोऽसि धन्यस्त्वं पुण्यराशिः सुमूर्त्तिमान्।
करोषि भ्रमणं लोकान् पावितुं कुलपावन ॥ २३
जनानां हृदयं सद्यः सुव्यक्तं वचनेन वै।
शिष्ये कलत्रे कन्यायां दौहित्रे बान्धवेऽपि च ॥२४
पुत्रे पौत्रे च वचसि प्रतापे यशसि श्रियाम्।
बुद्धौ वारिणि विद्यायां ज्ञायते हृदयं नृणाम् ॥२५
जीवन्मुक्तोऽसि पूतस्त्वं शुद्धभक्तो गदाभृतः।
पुनासि पादरजसा सर्व्वाधारां वसुन्धराम् ॥ २६
पुनासि लोकान् सर्व्वांश्च स्वयं विग्रहदर्शनात्।
सुमङ्गलां हरिकथां तेन तां श्रोतुमिच्छसि ॥ २७
यत्र कृष्णकथाः सन्ति तत्रैव सर्व्वदेवताः।
ऋषयो मुनयश्चैव तीर्थानि निखिलानि च ॥ २८
कथाः श्रुत्वा तथान्ते ते यान्ति सन्तो निरापदम्।
भवन्ति तानि तीर्थानि येषु कृष्णकथाः शुभाः ॥२९
सद्यः कृष्णकथावक्ता स्वस्य पुंसां शतं शतम्।
समुद्धृत्य श्रुतवतां पुनाति निखिलं कुलम् ॥ ३०
प्रष्टा तु प्रश्नमात्रेण पुनाति कुलमात्मनः।
श्रोता श्रवणमात्रेण स्वकुलं स्वस्ववान्धवान् ॥३१
शतजन्मतपःपूतो जन्मेदं भारते लभेत्।
करोति सफलं जन्म श्रुत्वा हरिकथामृतम् ॥ ३२
अर्च्चनं वन्दनं मन्त्र-जपं सेवनमेव च।
स्मरणं कीर्त्तनं शश्वद्गुणश्रवणमीप्सितम् ॥३३
निवेदनं स्वस्य दास्यं नवधा भक्तिलक्षणम्।
करोति जन्मसफलं श्रुत्वैतानि च भारते ॥ ३४
न च विघ्नो भवेत् तस्य परमायुर्न नश्यति।
न याति तत्पुरः कालो वैनतेयमिवोरगः ॥ ३५
न जहाति समीपञ्च क्षणं तस्य हरिः स्वयम्।
उपतिष्ठन्ति तूर्णं त-मणिमादिकसिद्धयः ॥ ३६
सुदर्शनं भ्रमत्येव तस्य पार्श्वे दिवानिशम्।
कृष्णाज्ञया च रक्षार्थं को वा किं कर्त्तुमीश्वरः ॥३७
न यान्ति तत्समीपञ्च स्वप्नेऽपि यमकिङ्कराः।
ज्वलदग्निं यथा दृष्ट्वा शलभा न व्रजन्ति तम् ॥ ३८
व्याधयो विपदः शोका विघ्नानि न प्रयान्ति तम्।
न याति तत्समीपञ्च मृत्युमृत्युभयान्मुने ॥ ३९
ऋषयो मुनयः सिद्धाः सन्तुष्टाः (क) सर्व्वदेवताः।
स च सर्व्वत्र निःशङ्कः सुखी कृष्णप्रसादतः ॥ ४०
तव कृष्णकथायाञ्च रतिरात्यन्तिकी सदा।
जनकस्य स्वभावो हि जन्ये तिष्ठति निश्चितम् ॥ ४१
विप्रेन्द्र का प्रशंसेयं जन्म ते ब्रह्ममानसे।
यस्य यत्र कुले जन्म तन्मतिस्तादृशी भवेत् ॥ ४२
पिता विधाता जगतां कृष्णपादाब्जसेवया।
नित्यं करोति यः शश्वन्नवधा भक्तिलक्षणम् ॥४३
रतिः कृष्णकथायाञ्च यस्याश्रुपुलकोद्गमः।
मनो निमग्नं तत्रैव स भक्तः कथितो बुधैः ॥ ४४
पुत्रदारादिकं सर्व्वं जानाति यो हरेरपि।
आत्मना मनसा वाचा स भक्तः कथितो बुधैः(ख)४५
दयास्ति सर्व्वजीवेषु सर्व्वं कृष्णमयं जगत्।
यो जानाति महाज्ञानी स भक्तो वैष्णवोत्तमः ॥४६
निर्ज्जने तीर्थसम्पर्के निःसङ्गा ये मुदान्विताः।
ध्यायन्ते चरणाम्भोजं श्रीहरेस्ते च वैष्णवाः ॥ ४७
शश्वद्धूये नाम गायन्ति गुणं मन्त्रं जपन्ति च।
कुर्व्वन्ति श्रवणं गाथा वदन्ति तेऽतिवैष्णवाः ॥ ४८
लब्ध्वा मिष्टानि वस्तूनि प्रदातुं हरये सदा।
तूर्णं यस्य मनो हृष्टं स भक्तो ज्ञानिनां वरः ॥४९
यन्मनो हरिपादाब्जे स्वप्ने ज्ञाने दिवानिशम्।
पूर्व्वकर्म्मोपभोगञ्च वह्निर्भुङ्क्ते स वैष्णवः ॥ ५०
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशत्ययम्।
तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥ ५१
पूर्व्वान् सप्त परान् सप्त सप्त मातामहादिकान्।
सोदरानुद्धरेद्भक्तः स्वप्रसूञ्च प्रसूप्रसूम् ॥ ५२
कलत्रं कन्यकां बन्धुं शिष्यं दौहित्रमात्मनः।
किङ्करं किङ्करीं पुत्र-मुद्धरेद्वैष्णवः सदा ॥ ५३
सदा वाञ्छन्ति तीर्थानि वैष्णवस्पर्शदर्शने।
पापिदत्तानि पापानि तेषां नश्यन्ति सङ्गतः ॥५४
गोदोहनक्षणं यावद्यत्र तिष्ठति वैष्णवः।
तत्र सर्व्वाणि तीर्थानि सन्ति तावन्महीतले ॥ ५५
ध्रुवं तत्र मृतः पापी मुक्तो याति हरेः पदम्।

(क) तं तुष्टा इत्यपि पाठः।
(ख) अयं श्लोकः क्वचित् पुस्तके नास्ति।

यथैव ज्ञानगङ्गाया-मन्ते कृष्णस्मृतौ यथा ॥ ५६
तुलसीकानने गोष्ठे श्रीकृष्णमन्दिरे पदे।
वृन्दारण्ये हरिद्वारे तीर्थेष्वन्येषु वा यथा ॥ ५७
पापानि पापिनां यान्ति तीर्थस्नानावगाहनात्।
तेषां पापानि नश्यन्ति वैष्णवस्पर्शवायुना ॥ ५८
न हि स्रातुं शक्नुवन्ति पापान्येव कृतानि च।
ज्वलदग्नौ यथा दग्धशुष्काणि च तृणानि च ॥ ५९
भक्तं वर्त्मनि गच्छन्तं ये ये पश्यन्ति मानवाः।
सप्तजन्मकृतापानि तेषां नश्यन्ति निश्चितम् ॥ ६०
ये निन्दन्ति हृषीकेशं तद्भक्तं पुण्यरूपिणम्।
शतजन्मार्ज्जितं पुण्यं तेषां नश्यति निश्चितम् ॥ ६१
ते पच्यन्ते महाघोरे कुम्भीपाके भयानके।
भक्षिताः कीटसङ्घेन यावचन्द्र-दिवाकरौ ॥ ६२
तस्य दर्शनमात्रेण पुण्यं नश्यति निश्चितम्।
गङ्गां स्नात्वा रविं दृष्ट्वा तदा विद्वान् विशुध्यति ॥ ६३
वैष्णवस्पर्शमात्रेण मुक्तो भवति पातकी।
तस्य पापानि हन्त्येव स्वान्तस्थो मधुसूदनः ॥ ६४
इत्येवं कथितौ विप्र विष्णु-वैष्णवयोर्गुणाः।
अधुना श्रीहरेर्जन्म निबोध कथयामि ते ॥ ६५

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारद-संवादे
विष्णु-वैष्णवगुणप्रशंसा नाम
प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः।

नारायण उवाच।

येन वा प्रार्थितः कृष्ण आजगाम महीतलम्।
यं यं विधाय भूमौ स जगाम स्वालयं विभुः ॥ १
भारावतारणोपायं दुष्टानाञ्च वधोद्यमम्।
सर्व्वं ते कथयिष्यामि सुविचार्य्य विधानतः ॥ २
अधुना गोपवेशञ्च गोकुलागमनं हरेः।
राधा गोपालिका येन निबोध कथयामि ते ॥ ३
शङ्खचूड़वधे पूर्व्वं संक्षेपात् कथितं श्रुतम्।
अधुना तत् सुविस्तार्य्य निबोध कथयामि ते ॥ ४
श्रीदाम्नः कलहश्चैव बभूव राधया सह।
श्रीदामा शङ्खचूड़श्च शापात् तस्या बभूव ह ॥ ५
राधां शशाप श्रीदामा या हि योनिञ्च मानवीम्।
व्रजे व्रजाङ्गना भूत्वा विचरस्व च भूतले ॥ ६
भीता श्रीदामशापात् सा श्रीकृष्णं समुवाच ह।
गोपीरूपा भविष्यामि श्रीदामा मां शशाप ह ॥ ७
कमुपायं करिष्यामि वद मां भयभञ्जन।
त्वया विना कथमहं धरिष्यामि स्वजीवनम् ॥ ८
क्षणेन मे युगशतं कालं नाथ त्वया विना।
चक्षुर्निमेषविरहाद्भवेद्दग्धं मनो मम ॥ ९
शरत्पार्व्वणचन्द्राभ-सुधापूर्णाननं तव।
नाथ चक्षुश्चकोराभ्यां पिबाम्यहमहर्निशम् ॥ १०
त्वमात्मा मे मनः प्राणा देहमात्रं वदाम्यहम्।
दृष्टिशक्तिश्च चक्षुस्त्वं जीवनं परमं धनम् ॥ ११
स्वप्ने ध्याने त्वयि मनः स्मरामि त्वत्पदाम्बुजम्।
तव दास्यं विना नाथ न जीवामि क्षणं विभो ॥ १२
कृष्णस्तद्वचनं श्रुत्वा बोधयामास सुन्दरीम्।
वक्षसि प्रेयसीं कृत्वा चकार निर्भयाञ्च ताम् ॥ १३
महीतलं गमिष्यामि वाराहे च वरानने।
मया सार्द्धं भूगमनं जन्म तेऽपि निरूपितम् ॥ १४
व्रजं गत्वा व्रजे देवि विहरिष्यामि कानने।
मम प्राणाधिका त्वञ्च भयं किं ते मयि स्थिते ॥ १५
तामित्युक्त्वा हरिस्तत्र विरराम जगत्पतिः।
अतो हेतोर्जगन्नाथो जगाम नन्दगोकुलम् ॥ १६
किं वा तस्य भयं कस्माद्भयान्तकारकस्य च।
मायाभयच्छलेनैव जगाम राधिकान्तिकम् ॥ १७
विजहार तया सार्द्धं गोपवेशं विधाय सः।
सह गोपाङ्गनाभिश्च प्रतिज्ञापालनाय च ॥ १८
ब्रह्मणा प्रार्थितः कृष्णः समागत्य महीतलम्।
भारावतारणं कृत्वा जगाम स्वालयं विभुः ॥ १९

नारद उवाच।

श्रीदाम्नः कलहश्चैव कथं वा राधया सह।
संक्षेपात् कथितं पूर्व्वं व्यस्य कथयाधुना ॥ २०

नारायण उवाच।

एकदा राधया सार्द्धं गोलोके श्रीहरिः स्वयम्।
विजहार महारण्ये विजने रासमण्डले।
राधिका सुखसम्भोगाद्बुबुधे न स्वकं परम् ॥ २१
कृत्वा विहारं श्रीकृष्ण-स्तामतृप्तां विहाय च।
गोपिकां विरजामन्यां शृङ्गारार्थं जगाम ह ॥ २२

वृन्दारण्ये च विरजा सुभगा राधिकासमा।
तस्या वयस्याः सुन्दर्य्यो गोपीनां शतकोटयः॥ २३
कृष्णप्राणाधिका गोपी धन्या मान्या च योषिताम्।
रत्नसिंहासनस्था सा ददर्श हरिमन्तिके॥ २४
ददर्श श्रीहरिस्ताञ्च शरच्चन्द्रनिभाननाम्।
मनोहरां सस्मिताञ्च पश्यन्तीं वक्रचक्षुषा॥ २५
सदा षोड़शवर्षीयां शोद्भिन्ननवयौवनाम्।
रत्नालङ्कारशोभाढ्यां भूषितां सूक्ष्मवाससा॥ २६
पुलकाङ्कितसर्व्वाङ्गीं कामबाणप्रपीड़िताम्।
दृष्ट्वा तां श्रीहरिस्तूर्णं विजहार तया सह॥ २७
पुष्पतल्पे महारण्ये निर्ज्जने रत्नमण्डले।
मूर्च्छामवाप विरजा कृष्णशृङ्गारकौतुकात्॥ २८
कृत्वा वक्षसि प्राणेशं कोटिकन्दर्पसन्निभम्।
तयासक्तं श्रीहरिञ्च रत्नमण्डपसंस्थितम्॥ २९
दृष्ट्वा च राधिकान्याश्च चक्रुस्ताञ्च निवेदनम्।
तासाञ्च वचनं श्रुत्वा सुष्वाप च चुकोप च॥ ३०
भृशं रुरोद सा देवी रक्तपङ्कजलोचना।
ता उवाच महादेवी मां तं दर्शयितुं क्षमाः॥ ३१
यदि सत्यं ब्रूत यूयं मया सार्द्धं प्रगच्छत।
करिष्यामि फलं गोप्याः कृष्णस्य च यथोचितम्॥ ३२
को रक्षिताद्य तस्याश्च मयि शास्तिं प्रकुर्व्वति।
शीघ्रमानयतान्याश्च तया सार्द्धं हरिं प्रियाः।
अन्तर्व्वक्रं सस्मितञ्च विषकुम्भं सुधामुखम्॥ ३३
मदाश्रयं समागन्तुं यूयं दास्यो न दास्यथ।
तमेव मण्डपं रम्यं यात संरक्षतेश्वरम्॥ ३४
राधिकावचनं श्रुत्वा काश्चिद्गोप्यो भयान्विताः।
ताः सर्व्वाः सम्पुटाञ्जल्यो भक्तिनम्रात्मकन्धराः॥ ३५
तामूचुः पुरतः स्थित्वा सर्व्वा एव प्रियां सतीम्।
वयं तं दर्शयिष्यामो विरजासहितं प्रभुम्॥ ३६
तासाञ्च वचनं श्रुत्वा रथमारुह्य सुन्दरी।
जगाम सार्द्धं गोपीभिस्त्रिषष्टिशतकोटिभिः॥ ३७
रत्नेन्द्रसाररचितं कोटिसूर्य्यसमप्रभम्।
मणीन्द्रसाररचित-कलसानां त्रिकोटिभिः॥ ३८
राजितैश्चित्रराजीभि-र्वैजयन्तीविराजितम्।
लक्षचक्रसमायुक्तं मनोयायि-मनोहरम्॥ ३९
मणिसारविकारैश्च कोटिस्तम्भैः सुशोभितम्।
नानाचित्रविचित्रेण सहितैः सुमनोहरैः॥ ४०
सिन्दूराकारमणिभि-र्मध्यदेशविभूषितैः।
रत्नकृत्रिमसङ्घैश्च रथचक्रोर्द्ध्वसंस्थितैः॥ ४१
चतुर्लक्षपरिमितै-श्चित्रघण्टासमन्वितैः।
चित्रनूपुरशोभाढ्यै-र्विचित्रैश्च विराजितैः॥ ४२
मणिमन्दिरलक्षैश्च रत्नसारविनिर्म्मितैः।
मणिसारकवाटैश्च शोभितैश्चित्रराजिभिः॥ ४३
मणीन्द्रसारकलसैः शेखरोज्ज्वलितैर्युतम्।
भोगद्रव्यसमायुक्तं वेशद्रव्यसमन्वितैः॥ ४४
शोभितं रत्नशय्याभी रत्नपात्रपुटान्वितम्।
हिरण्मयीनां वेदीनां समूहेन समन्वितम्॥ ४५
कुङ्कुमाभमणीनाञ्च सोपानकोटिभिर्युतम्।
स्यमन्तकैः कौस्तुभैश्च रुचकैः प्रवरैस्तथा॥ ४६
पद्मकृत्रिमकोटीनां शतकैश्च सुशोभितम्।
चित्रकाननवापीभि-र्विशिष्टाभिर्विराजितम्॥ ४७
रत्नेन्द्रसाररचितं कलसोज्ज्वलशेखरम्।
शतयोजनमूर्द्ध्वञ्च दशयोजनविस्तृतम्॥ ४८
पारिजातप्रसूनानां मालाकोटिविराजितम्।
कुन्दानां करवीराणां यूथिकानां तथैव च॥ ४९
सुचारुचम्पकानाञ्च नागेशानां मनोहरैः।
मल्लिकानां मालतीनां माधवीनां सुगन्धिनाम्॥ ५०
कदम्बनाञ्च मालानां कदम्बैश्च विराजितम्।
सहस्रदलपद्मानां मालापद्मैर्विभूषितम्॥ ५१
चित्रपुष्पोद्यानसरः-काननैश्च विभूषितम्।
सर्व्वेषां स्यन्दनानाञ्च श्रेष्ठं वायुवर्त्त्म परम्॥ ५२
ससूक्ष्मवस्त्रसाराणां वरैराच्छादितं वरम्।
रत्नदर्पणलक्षाणां शतकैश्च समन्वितम्॥ ५३
श्वेतचामरकोटिभि-र्वज्रमुष्टिभिरन्वितम्।
चन्दनागुरुकस्तूरी-कुङ्कुमद्रव्यचर्च्चितैः॥ ५४
पारिजातप्रसूनानां कोटितल्पैर्विराजितम्।
कोटिघण्टासमायुक्तं पताकाकोटिभिर्युतम्॥ ५५
रत्नशय्या-कोटिभिश्च चित्रवस्त्र-परिच्छदैः।
चन्दनार्त्तैश्चम्पकानां कुङ्कुमैश्च विचर्च्चितैः॥ ५६
पुष्पोपधानसंयुक्त-शृङ्गाराद्यैरन्वितम्।
अष्टम्भैरश्रुतैर्द्रव्यैः सुन्दरैश्च विभूषितम्॥ ५७
एवम्भूताद्रथात् तूर्णमवरुह्य हरिप्रिया।
जगाम सहसा देवी तं रत्नमण्डपं मुने॥ ५८
द्वारे नियुक्तं ददर्श द्वारपालं मनोहरम्।

लक्षगोपपरिवृतं स्मेराननसरोरुहम् ॥ ५९
गोपं श्रीदामनामानं श्रीकृष्णस्य प्रियङ्करम्।
तमुवाच रुषा देवी रक्तपङ्कजलोचना ॥ ६०
दूरं गच्छ गच्छ दूरं रतिलम्पटकिङ्कर।
कीदृशीं मत्परां कान्तां द्रक्ष्यामि लम्पभीरुहम्॥६१
राधिकावचनं श्रुत्वा निःशङ्कः पुरतः स्थितः।
तामेव न ददौ गन्तुं वेत्रपाणिर्महाबलः ॥ ६२
तूर्णञ्च राधिकान्याश्च श्रीदामानं सुकिङ्करम्।
बलेन प्रेरयामासुः कोपेन स्फुरिताधराः ॥ ६३
श्रुत्वा कोलाहलं शब्दं गोलोकानां हरिः स्वयम्।
ज्ञात्वा च कोपितां राधामन्तर्द्धानं चकार ह ॥६४
विरजा राधिकाशब्दा-दन्तर्द्धानं हरेरपि।
दृष्ट्वा राधाभयार्त्ता सा जहौ प्राणांश्च योगतः ॥६५
सद्यस्तत्र सरिद्रूपं तच्छरीरं बभूव ह।
व्याप्तञ्च वर्त्तुलाकारं तया गोलोकमेव च ॥ ६६
कोटियोजनविस्तीर्णं प्रस्थेऽतिनिम्नमेव च।
दैर्घ्ये दशगुणं चारु नानारत्नाकरं परम् ॥ ६७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे विरजानन्द-प्रस्तावो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः।

नारायण उवाच।

राधा रतिगृहं गत्वा न ददर्श हरिं मुने।
विरजाञ्च सरिद्रूपां दृष्ट्वा गेहं जगाम सा ॥ १
श्रीकृष्णो विरजां दृष्ट्वा सरिद्रूपां प्रियां सतीम्।
उच्चै रुरोद विरजा-तीरे नीरमनोहरे ॥ २
ममान्तिकं समागच्छ प्रेयसीनां परे वरे।
त्वया विनाहं सुभगे कथं जीवामि सुन्दरि ॥ ३
नद्यधिष्ठातृदेवी त्वं भव मूर्त्तिमती सति।
ममाशिषा रूपवती सुन्दरी योषितां वरा ॥ ४
पूर्व्वरूपाच्च सौभाग्या-दिदानीमधिका भव।
पुरातनं शरीरं ते सरिद्रूपमभूत् सति ॥ ५
जलादुत्थाय चागच्छ विधाय नूतनां तनूम्।
आजगाम हरेरग्रं साक्षाद्राधेव सुन्दरी ॥ ६
पीतवस्त्रपरीधाना स्मेराननसरोरुहा।
पश्यन्तं प्राणनाथञ्च पश्यन्ती वक्रचक्षुषा ॥ ७
नितम्बश्रोणिभारार्त्ता पीनोन्नतपयोधरा।
मानिनी मानिनीनाञ्च गजेन्द्रमन्दगामिनी ॥ ८
सुन्दरी सुन्दरीणाञ्च धन्या मान्या च योषिताम्।
चारुचम्पकवर्णाभा पक्वबिम्बाधरा वरा ॥ ९
पक्वदाड़िम्बवीजाभ-दन्तपङ्क्तिमनोहरा।
शरत्पार्व्वणचन्द्रास्या फुल्लेन्दीवरलोचना ॥ १०
कस्तूरीबिन्दुना सार्द्धं सिन्दूरबिन्दुभूषिता।
चारुपत्रकशोभाढ्या सुचारुकवरीयुता ॥ ११
रत्नकुण्डलगण्डस्था (क) भूषिता रत्नमालया।
गजमौक्तिकनासाग्रा मुक्ताहारविराजिता ॥ १२
रत्नकङ्कण-केयूर-चारु-शङ्ख-करोज्ज्वला।
किङ्किणीजालशब्दाढ्या रत्नमञ्जीररञ्जिता ॥ १३
ताञ्च रूपवतीं दृष्ट्वा प्रेमोद्रेकां जगत्पतिः।
चकारालिङ्गनं तूर्णं चुचुम्ब च मुहुर्मुहुः ॥ १४
नानाप्रकारशृङ्गारं विपरीतादिकं विभुः।
रहसि प्रेयसीं प्राप्य चकार च पुनः पुनः ॥ १५
विरजा सा रजोयुक्ता धृत्वा वीर्य्यममोघकम्।
सद्यो बभूव तत्रैव धन्या गर्भवती सती ॥ १६
दधार गर्भमीशस्य दिव्यं वर्षशतञ्च सा।
ततः सुषाव तत्रैव पुत्रान् सप्त मनोहरान् ॥ १७
माता सा सप्तपुत्राणां श्रीकृष्णस्य प्रिया सती।
तस्थौ तत्र सुखासीना सार्द्धं पुत्रैश्च सप्तभिः ॥ १८
एकदा हरिणा सार्द्धं वृन्दारण्ये सुनिर्ज्जने।
विजहार पुनः साध्वी शृङ्गारासक्तमानसा ॥ १९
एतस्मिन्नन्तरे तत्र मातुः क्रोड़ं जगाम ह।
कनिष्ठपुत्रस्तस्याश्च भ्रातृभिः पीड़ितो भिया ॥ २०
भीतं स्वतनयं दृष्ट्वा तत्याज तां कृपानिधिः।
क्रोड़े चकार बालं सा कृष्णो राधागृहं ययौ ॥ २१
प्रबोध्य बालं सा साध्वी न ददर्शान्तिके प्रियम्।
विललाप भृशं तत्र शृङ्गारातृप्तमानसा ॥ २२
शशाप स्वसुतं कोपात्लवणोदो भविष्यसि।
कदापि ते जलं केचित् न खादिष्यन्ति जीविनः ॥२३
शशाप सर्व्वान् बालांश्च यान्तु मूढ़ा महीतलम्।
गच्छध्वञ्च महीं मूढ़ा जम्बूद्वीपं मनोहरम् ॥ २४
स्थितिर्नैकत्र युष्माकं भविष्यति पृथक् पृथक्।

(क) रत्नमंडलमध्यस्थेति च पाठः।

द्वीपे द्वीपे स्थितिं कृत्वा तिष्ठन्तु सुखिनः सुताः ॥ २५
द्वीपस्वामिभिर्नदीभिश्च सह क्रीड़न्तु निर्ज्जने।
कनिष्ठो मातृशापाच्च लवणोदो बभूव ह ॥ २६
कनिष्ठः कथयामास मातृशापञ्च बालकान्।
आजग्मुर्दुःखिताः सर्व्वे मातृस्थानञ्च बालकाः ॥ २७
श्रुत्वा विवरणं सर्व्वे प्रजग्मुर्धरणीतलम्।
प्रणम्य चरणं मातुर्भक्तिनम्रात्मकन्धराः ॥ २८
सप्तद्वीपे समुद्राश्च सप्त तस्थुर्विभागशः।
कनिष्ठाद्बृहत्पर्य्यन्तं द्विगुणं द्विगुणं मुने ॥ २९
लवणेक्षु-सुरा-सर्पिर्दधि-दुग्ध-जलार्णवाः।
एतेषाञ्च जलं पृथ्व्यां शस्यार्थञ्च भविष्यति ॥ ३०
व्याप्ताः समुद्राः सप्तैव सप्तद्वीपां वसुन्धराम्।
रुरुदुर्बालकाः सर्व्वे मातृ-भ्रातृ-शुचान्विताः ॥ ३१
रुरोद च भृशं साध्वी पुत्रविच्छेदकातरा।
मूर्च्छामवाप शोकेन पुत्राणां भर्त्तुरेव च ॥ ३२
तां शोकसागरे मग्नां विज्ञाय राधिकापतिः।
आजगाम पुनस्तस्याः स्मेराननसरोरुहः ॥ ३३
दृष्ट्वा हरिं सा तत्याज शोकं रोदनमेव च।
आनन्दसागरे मग्ना दृष्ट्वा कान्तं बभूव ह ॥ ३४
चकार श्रीहरिं क्रोड़े विजहार स्मरातुरा।
ताञ्च पुत्रपरित्यक्तां हरिस्तुष्टो बभूव ह ॥ ३५
वरं तस्यै ददौ प्रीत्या प्रसन्नवदनेक्षणः।
कान्ते नित्यं तव स्थान-मागमिष्यामि निश्चितम् ॥३६
यथा राधा तत्समा त्वं भविष्यसि प्रिया मम।
पुत्रान् रक्षसि नित्यं त्वं मद्वरस्य प्रभावतः ॥ ३७
इत्युक्तवन्तं श्रीकृष्णं वसन्तं विरजान्तिके।
दृष्ट्वा राधावयस्याश्च कथयामासुरीश्वरीम् ॥ ३८
श्रुत्वा रुरोद सा देवी सुष्वाप क्रोधमन्दिरे।
एतस्मिन्नन्तरे कृष्णो जगाम राधिकान्तिकम् ॥ ३९
स तस्थौ राधिकाद्वारे श्रीदाम्ना सह नारद।
रासेश्वरी हरिं दृष्ट्वा रुष्टा वाचा प्रियं पुरः ॥ ४०
मत्तो बहुतराः कान्ता गोलोके सन्ति ते हरे।
याहि तासां सन्निधानं मया ते किं प्रयोजनम् ॥ ४१
विरजा प्रेयसी कान्ता सरिद्रूपा बभूव ह।
देहं त्यक्त्वा मम भयात् तथापि यासि तां प्रति ॥४२
तत्तीरे मन्दिरं कृत्वा तिष्ठ तिष्ठ च याहि ताम्।
नदी बभूव सा त्वञ्च नदो भवितुमर्हसि ॥ ४३
नदस्य नद्या सार्द्धञ्च सङ्गमो गुणवान् भवेत्।
स्वजातौ परमा प्रीतिः शयने भोजने सुखात् ॥ ४४
देवचूड़ामणेः क्रीड़ा नद्या सार्द्धं मयेरितम्।
महाजनः स्मेरसुखः श्रुत्वा सद्यो भविष्यति ॥ ४५
ये त्वां वदन्ति सर्व्वेशं ते किं जानन्ति लम्पट।
भगवान् सर्व्वभूतात्मा नदीं सम्भोक्तुमिच्छति ॥ ४६
इत्युक्त्वा राधिका देवी विरराम रुषान्विता।
नोत्तस्थौ भूमिशयनाद्गोपीलक्षसमन्विता ॥ ४७
काश्चिच्चामरहस्ताश्च काश्चित् सूक्ष्मांशुकाकराः।
काश्चित् ताम्बूलहस्ताश्च काश्चिन्मालाकरा वराः ॥४८
वासितोदकराः काश्चित् काश्चित् पद्मकरा वराः।
काश्चित् सिन्दूरहस्ताश्च माल्यहस्ताश्च काश्चन ॥ ४९
रत्नालङ्कारहस्ताश्च काश्चित् कज्जलवाहिकाः।
वेणुवीणाकराः काश्चित् काश्चित् कङ्कतिकाकराः॥५०
काश्चिदावीरहस्ताश्च यन्त्रहस्ताश्च काश्चन।
सुगन्धितैलहस्ताश्च काश्चन प्रमदोत्तमाः।
करतालकराः काश्चित् गेण्डूहस्ताश्च काश्चन ॥ ५१
काश्चिन्मृदङ्ग-मुरज-मुरली-तालकारिकाः।
सङ्गीतनिपुणाः काश्चित् काश्चिन्नर्त्तनतत्पराः ॥ ५२
क्रीड़ावस्तुकराः काश्चिन्मधुहस्ताश्च काश्चन।
सुधापात्रकराः काश्चि-दङ्घ्रिपीठकराः पराः ॥ ५३
वेशवस्तुकराः काश्चित् काश्चिच्चरणसेविकाः।
पुटाञ्जलिकराः काश्चित् काश्चित् स्तुतिपरा वराः॥५४
एवं कतिविधाः सन्ति राधिकापुरतो मुने।
बहिर्द्देशस्थिताः काश्चित् कोटिशः कोटिशः सदा॥५५
काश्चिद्द्वारनियुक्ताश्च वयस्या वेत्रधारिकाः।
कृष्णमभ्यन्तरं गन्तुं न ददुर्द्वारसंस्थितम् ॥ ५६
पुरः स्थितं तं प्राणेशं राधा पुनरुवाच सा।
नानुरूपमत्यकथ्य-मयोग्यमतिकर्कशम् ॥ ५७

राधिकोवाच।

हे कृष्ण विरजाकान्त गच्छ मत्पुरतो हरे।
कथं दुनोषि मां लोल-रतिचौरातिलम्पट ॥ ५८
शीघ्रं पद्मावतीं गच्छ रत्नमालां मनोरमाम्।
अथवा वनमालां वा रूपेणाप्रतिमां व्रज ॥ ५९
हे नदीकान्त देवेश देवानाञ्च गुरोर्गुरो।
मया ज्ञातोऽसि भद्रं ते गच्छ गच्छ ममाश्रमात् ॥६०
शश्वत् ते मानुषाणाञ्च व्यवहारश्च लम्पट।

लभतां मानुषीं योनिं गोलोकाद्व्रज भारतम् ॥ ६१
हे सुशीले शशिकले हे पद्मावति माधवि।
निवार्य्यतांश्च धूर्त्तोऽयं-मस्मात् किं प्रयोजनम् ॥ ६२
राधिकावचनं श्रुत्वा तमूचुर्गोपिका हरिम्।
हितं तथ्यञ्च विनयं सारं यत् समयोचितम् ॥ ६३
काश्चिदूचुरिति हरे गच्छ स्थानान्तरं क्षणम्।
राधाकोपापनयने शमयिष्यामि हे वयम् ॥ ६४
काश्चिदूचुरतिप्रीत्या क्षणं गच्छ गृहान्तरम्।
तथैव वर्द्धिता राधा त्वां विना कश्च रक्षति ॥ ६५
काश्चिदूचुरिति-प्रेम्णा राधिकाया हरिं मुने।
क्षणं वृन्दावनं गच्छ मानापनयनावधि ॥ ६६
काश्चिदित्यूचुरीशञ्च परिहासपरं वचः।
मानापनयनं भक्त्या कामिन्याः कुरु कामुक ॥ ६७
काश्चनोचुरितीशं तं याहि जायान्तरं-तव।
लोलुपस्य फलं नाथ करिष्यामो यथोचितम् ॥ ६८
काश्चनोचुरिति हरिं सस्मितं पुरतः स्थितम्।
गत्वा समीपमुत्थाय मानापनयनं कुरु ॥ ६९
काश्चनोचुरिति प्राण-नाथं गोप्यो दुरत्ययम्।
कः क्षमः साम्प्रतं द्रष्टुं राधिकामुखपङ्कजम् ॥ ७०
काश्चनोचुरिति विभुं व्रज स्थानान्तरं हरे।
कोपापनयने काले पुनरागमनं तव ॥ ७१
काश्चनोचुरितीदं तं प्रगल्भाः प्रमदोत्तमाः।
वयं त्वां वारयिष्यामो न चेद्याहि गृहान्तरम्॥७२
काश्चिन्निवारयामासु-र्माधवं प्रमदोत्तमाः।
स्मितवक्त्रञ्च सर्व्वेशं स्वच्छमक्रोधमीश्वरम् ॥ ७३
गोपीभिर्वार्य्यमाणे च जगत्कारणकारणे।
सद्यश्चुकोप श्रीदामा हरौ गेहान्तरे गते ॥ ७४
कोपादुवाच श्रीदामा राधिकां परमेश्वरीम्।
रक्तपद्मेक्षणां रुष्टां रक्तपङ्कजलोचनः ॥ ७५

श्रीदामोवाच।

कथं वदसि मातस्त्वं कटुवाक्यं मदीश्वरम्।
विचारणां विना देवि करोषि भर्त्सनं वृथा ॥ ७६
ब्रह्मानन्तेशधर्म्मेशं जगत्कारणकारणम्।
वाणी पद्मालया माया प्रकृतीशञ्च निर्गुणम् ॥ ७७
आत्मारामं पूर्णकामं करोषि त्वं विडम्बनम्।
देवीनां प्रवरा त्वञ्च निबोध यस्य सेवया ॥ ७८
यस्य पादार्च्चनेनैव सर्व्वेषामीश्वरी परा।
तं न जानासि कल्याणि किमहं वक्तुमीश्वरः ॥ ७९
भ्रूभङ्गलीलया कृष्णः स्रष्टुं शक्तश्च त्वद्विधाः।
कोटिशः कोटिदेवीस्त्वं न जानासि च निर्गुणम् ॥ ८०
वैकुण्ठे श्रीहरेरस्य चरणाम्बुजमार्ज्जनम्।
करोति केशैः शश्वच्छ्रीः सेवनं भक्तिपूर्व्वकम् ॥८१
सरस्वती च स्तवनैः कर्णपीयूषसुन्दरैः।
सन्ततं स्तौति यं भक्त्या न जानासि तमीश्वरम् ८२
भीता च प्रकृतिर्माया सर्व्वेषां जीवरूपिणी।
सन्ततं स्तौति यं भक्त्या तं न जानासि मानिनि॥८३
स्तुवन्ति सततं वेदा महिम्नः षोड़शीं कलाम्।
कदापि तं न जानन्ति तं न जानासि भामिनि ॥ ८४
वक्त्रैश्चतुर्भिर्यं ब्रह्मा वेदानां जनको विभुः।
स्तौति सेवाञ्च कुरुते चरणाम्भोजमीश्वरि ॥ ८५
शङ्करः पञ्चभिर्वक्त्रैः स्तौति यं योगिनां गुरुः।
साश्रुपूर्णः सपुलकः सेवते चरणाम्बुजम् ॥ ८६
शेषः सहस्रवदनैः परमात्मानमीश्वरम्।
सततं स्तौति भक्त्या च सेवते चरणाम्बुजम् ॥ ८७
धर्म्मः पाता च सर्व्वेषां साक्षी च जगतां पतिः।
भक्त्या च चरणाम्भोजं सेवते सततं मुदा ॥ ८८
श्वेतद्वीपनिवासी यः पाता विष्णुः स्वयं विभुः।
अस्यांशश्च तथा चायं ध्यायतेऽनुक्षणं परम् ॥ ८९
सुरासुर-मुनीन्द्राश्च मनवो मानवा बुधाः।
सेवन्ते न हि पश्यन्ति स्वप्नेऽपि चरणाम्बुजम् ॥ ९०
क्षिप्रं रोषं परित्यज्य भज पादाम्बुजं हरेः।
भ्रूभङ्गलीलामात्रेण सृष्टिसंहर्त्तुरेव च ॥ ९१
निमेषमात्रादस्यैव ब्रह्मणः पतनं भवेत्।
यस्यैकदिवसेऽप्यष्टा-विंशतीन्द्राः पतन्त्यपि ॥ ९२
एवमष्टोत्तरशत-मायुरस्य जगद्विधेः।
त्वं वा कान्याश्च वा राधे मदीश्वरवशेऽखिलम्॥ ९३
श्रीदाम्नो वचनं श्रुत्वा कोपलं कटुमुल्बणम्।
सद्यश्चुकोप सा ब्रह्मन्नुत्थाय तमुवाच ह ॥ ९४
रासेश्वरी वहिर्गत्वा तमुवाच ह निष्ठुरम्।
स्फुरदोष्ठी मुक्तकेशी रक्ताम्भोरुहलोचना ॥ ९५

राधिकोवाच।

रे रे जाल्म महामूढ़ शृणु लम्पटकिङ्कर।
त्वञ्च जानासि सर्व्वार्थं न जानामि त्वदीश्वरम् ॥९६
त्वदीश्वरो हि श्रीकृष्णो न ह्यस्माकं प्रजाधम।

जानामि जनकं स्तौषि सदा निन्दसि मातरम् ॥९७
यथाऽसुराश्च विद्वान् नित्यं निन्दन्ति सन्ततम्।
तथा निन्दसि मां मूढ़ तस्मात् त्वमसुरो भव ॥९८
गोप व्रजासुरीं योनिं गोलोकाच्च वहिर्भव।
मयाद्य शप्तो मूढ़स्त्वं कस्त्वां रक्षितुमीश्वरः ॥ ९९
रासेश्वरी तमित्युक्त्वा सुष्वाप विरराम च।
वयस्याः सेवयामासुश्चामरै रत्नमुष्टिभिः ॥ १००
श्रुत्वा च वचनं तस्याः कोपेन स्फुरिताधरः।
शशाप ताञ्च श्रीदामा व्रज योनिञ्च मानुषीम् ॥ १०१
मानुषा इव कोपस्ते तस्मात् त्वं मानुषी भुवि।
भविष्यसि न सन्देहो मया शप्ता त्वमम्बिके ॥ १०२
छायया कलया चापि परग्रस्ता (क) कलङ्किनी।
मूढ़ा रायाणपत्नीं त्वां वक्ष्यन्ति जगतीतले ॥ १०३
रायाणः श्रीहरेरंशो वैश्यो वृन्दावने वने।
भविष्यति महायोगी राधाशापेन गर्भजः ॥ १०४
गोकुले प्राप्य तं कृष्णं विहृत्य वस कानने।
भविता ते वर्षशतं विच्छेदो हरिणा सह।
पुनः प्राप्य तमीशञ्च गोलोकमागमिष्यसि ॥ १०५
तामित्युक्त्वा च नत्वा च स जगाम हरेः पुरः।
गत्वा प्रणम्य श्रीकृष्णं शापाख्यानमुवाच ह ॥ १०६
आनुपूर्व्यात् तु तत्सर्व्वं रुरोद च भृशं व्रजः।
उवाच तं रुदन्तञ्च गच्छन्तं धरणीतलम् ॥ १०७
न जेता ते त्रिभुवने ह्यसुरेन्द्रो भविष्यसि ॥ १०८
काले शङ्करशूलेन देहं त्यक्त्वा ममान्तिकम्।
आगमिष्यसि पश्चाद्युगेऽतीते महाशिवा ॥ १०९
श्रीकृष्णस्य वचः श्रुत्वा तमुवाच शुचान्वितः।
त्वद्भक्तिरहितं माञ्च कदाचिन्न करिष्यसि ॥ ११०
इत्युक्त्वा स हरिं नत्वा जगाम स्वाश्रमाद्वहिः।
पश्चाज्जगाम सा देवी रुरोद च पुनः पुनः ॥ १११
क्व यासि वत्सेत्युच्चार्य्य विललाप भृशं सती।
स एव शङ्खचूड़श्च बभूव तुलसीपतिः ॥ ११२
गते श्रीदाम्नि सा देवी जगामेश्वरसन्निधिम्।
सर्व्वं निवेदयमास हरिः प्रत्युत्तरं ददौ ॥ ११३
शोकातुराञ्च तां कृष्णो बोधयामास प्रेयसीम्।
शङ्खचूड़श्च कालेन सम्प्राप पुनरीश्वरम् ॥ ११४
राधा जगाम धरणीं वाराहे हरिणा सह।
वृकभानुगृहे जन्म लेभे गोकुले मुने ॥ ११५
इत्येवं कथितं सर्व्वं श्रीकृष्णाख्यानमुत्तमम्।
सर्व्वेषां वाञ्छितं सारं किं भूयः श्रोतुमिच्छसि॥११६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारद-संवादे राधा-श्रीदाम-शापोद्भवो नाम तृतीयोऽध्यायः ॥३॥

## चतुर्थोऽध्यायः।

नारद उवाच।

केन वा प्रार्थितः कृष्णो महीञ्च केन हेतुना।
आजगाम जगन्नाथो वद वेदविदां वर ॥ १

नारायण उवाच।

पुरा वाराहकल्पे सा भाराक्रान्ता वसुन्धरा।
भृशं बभूव शोकार्त्ता ब्रह्माणं शरणं ययौ ॥ २
सुरैश्चासुरसन्तप्तै-र्भृशमुद्विग्नमानसैः।
सार्द्धं तैस्तां दुर्गमाञ्च जगाम वेधसः सभाम् ॥ ३
ददर्श तस्यां देवेशं ज्वलन्तं ब्रह्मतेजसा।
ऋषीन्द्रैश्च मुनीन्द्रैश्च सिद्धेन्द्रैः सेवितं मुदा ॥ ४
अप्सरोगणनृत्यञ्च पश्यन्तं सस्मितं मुदा।
गन्धर्व्वाणाञ्च सङ्गीतं श्रुतवन्तं मनोहरम् ॥ ५
जपन्तं परमं ब्रह्म कृष्ण इत्यक्षरद्वयम्।
भक्त्यानन्दाश्रुपूर्णं तं पुलकाङ्कितविग्रहम् ॥ ६
भक्त्या सा त्रिदशैः सार्द्धं प्रणम्य चतुराननम्।
सर्व्वं निवेदनं चक्रे दैत्यभारादिकं मुने।
साश्रुपूर्णा सपुलका तुष्टाव च रुरोद च ॥ ७
तामुवाच जगद्धाता कथं स्तौषि च रोदिषि ॥ ८
कथमागमनं भद्रे वद भद्रं भविष्यति।
सुस्थिरा भव कल्याणि भयं किं ते मयि स्थिते ॥ ९
आश्वास्य पृथिवीं ब्रह्मा देवान् पप्रच्छ सादरम्।
कथमागमनं देवा युष्माकं मम सन्निधिम् ॥ १०
ब्रह्मणो वचनं श्रुत्वा देवा ऊचुः प्रजापतिम्।
भाराक्रान्ता च वसुधा दैत्यग्रस्ता वयं प्रभो ॥ ११
त्वमेव जगतां स्रष्टा शीघ्रं नो निष्कृतिं कुरु।
गतिस्त्वमस्या भो ब्रह्मन्-निर्वृतिं कर्त्तुमर्हसि ॥ १२
पीड़िता येन भारेण पृथिवीयं पितामह।
वयं तेनैव दुःखार्त्ता-स्तद्भारहरणं कुरु ॥ १३

(क) परसक्तेति च पाठः।

देवानां वचनं श्रुत्वा पप्रच्छ तां जगद्विधिः।
दूरीकृत्य भयं वत्से सुखं तिष्ठ ममान्तिके ॥ १५
केषां भारमशक्ता त्वं सोढुं पद्मविलोचने।
अपनेष्यामि तं भद्रे भद्रं ते भविता ध्रुवम् ॥ १६
तस्य सा वचनं श्रुत्वा तमुवाच स्वपीड़नम्।
पीड़िता येन येनेवं प्रसन्नवदनेक्षणा ॥ १७
क्षितिरुवाच।
शृणु तात प्रवक्ष्यामि स्वकीयां मानसीं व्यथाम्।
विना बन्धुं स्वविश्वासं नान्यं कथितुमर्हति ॥ १८
स्त्रीजातिरबला शश्वद्रक्षणीया स्वबन्धुभिः।
जनकस्वामिपुत्रैश्च गर्हितान्यैश्च निश्चितम् ॥ १९
त्वया सृष्टा जगत्तात न लज्जा कथितुं मम।
येषां भारैः पीड़िताहं श्रूयतां कथयामि ते ॥ २०
कृष्णभक्तिविहीना ये ये च तद्भक्तनिन्दकाः।
तेषां महापातकिना-मशक्ता भारवाहने ॥ २१
स्वधर्म्माचारहीना ये नित्यकृत्यविवर्ज्जिताः।
श्रद्धाहीनाश्च वेदेषु तेषां भारेण पीड़िता ॥ २२
पितृ-मातृ-गुरु-स्त्रीणां पोषणं पुत्त्र-पोष्ययोः।
ये न कुर्व्वन्ति तेषाञ्च न शक्ता भारवाहने ॥ २३
ये मिथ्यावादिनस्तात दया-सत्यविहीनकाः।
निन्दका गुरु-देवानां तेषां भारेण पीड़िता ॥ २४
मित्रद्रोही कृतघ्नश्च मिथ्यासाक्ष्यप्रदायकः।
विश्वासघ्नः स्थाप्यहारी तेषां भारेण पीड़िता ॥ २५
कल्याणसूक्तसामानि हरेर्नामैकमङ्गलम्।
कुर्व्वन्ति विक्रयं ते वै तेषां भारेण पीड़िता ॥ २६
जीवघाती गुरुद्रोही ग्रामयाजी च लुब्धकः।
शवदाही शूद्रभोजी तेषां भारेण पीड़िता ॥ २७
पूजायज्ञोपवासानि व्रतानि नियमानि च।
ये ये मूढ़ा निहन्तारस्तेषां भारेण पीड़िता ॥ २८
सदा द्विषन्ति ये पापा गो-विप्र-सुर-वैष्णवान्।
हरिं हरिकथाभक्तिं तेषां भारेण पीड़िता ॥ २९
शङ्खादीनाञ्च भारेण पीड़िताहं यथा विधेः।
ततोऽधिकेन दैत्यानां तेषां भारेण पीड़िता ॥ ३०
इत्येवं कथितं सर्व्व-मनाथाया निवेदनम्।
त्वया यदि सनाथाहं प्रतिकारं कुरु प्रभो ॥ ३१
इत्येवमुक्त्वा वसुधा रुरोद च मुहुर्मुहुः।
ब्रह्मा तद्रोदनं दृष्ट्वा तामुवाच कृपानिधिः।
भारं तवापनेष्यामि दस्यूनामप्युपायतः ॥ ३२
उपायतोऽपि कार्य्याणि सिध्यन्त्येव वसुन्धरे।
कालेन भारहरणं करिष्यति महीश्वरः ॥ ३३
यन्त्रं मङ्गलकुम्भञ्च शिवलिङ्गञ्च कुङ्कुमम्।
मधु काष्ठं चन्दनञ्च कस्तूरीं तीर्थमृत्तिकाम् ॥ ३४
खड्गं गण्डकखड्गञ्च स्फटिकं पद्मरागकम्।
इन्द्रनीलं सूर्य्यमणिं रुद्राक्ष-कुशमूलकम् ॥ ३५
शालग्रामशिलाशङ्खं तुलसीं प्रतिमां जलम्।
शङ्खं प्रदीपमालाञ्च शिलार्च्चां यष्ठिकां तथा ॥ ३६
निर्म्माल्यञ्चैव नैवेद्यं हरिदग्धमणिं तथा ॥ ३७
ग्रन्थियुक्तं यज्ञसूत्रं दर्पणं श्वेतचामरम्।
गोरोचनाञ्च मुक्ताञ्च शुक्तिं माणिक्यमेव च।
पुराणसंहितां वह्निं कर्पूरं परश्वं तथा ॥ ३८
रजतं काञ्चनञ्चैव प्रवालं रत्नमेव च।
कुशद्विजं तीर्थतोयं गव्यं गोमूत्र-गोमयम् ॥ ३९
त्वयि ये स्थापयिष्यन्ति मूढ़ास्येतानि सुन्दरि।
पच्यते कालसूत्रे वै वर्षाणामयुतं ध्रुवम् ॥ ४०
ब्रह्मा पृथ्वीं समाश्वास्य देवताभिस्तया सह।
जगाम जगतां धाता कैलासं शङ्करालयम् ॥ ४१
गत्वा तमाश्रमं रम्यं ददर्श शङ्करं विधिः।
वसन्तमक्षयवट-मूले च सरितस्तटे ॥ ४२
व्याघ्रचर्म्मपरीधानं दक्षकन्यास्थिभूषणम्।
त्रिशूलपट्टिशधरं पञ्चवक्त्रं त्रिलोचनम् ॥ ४३
नानासिद्धैः परिवृतं योगीन्द्रगणसेवितम्।
परितोऽप्सरसां नृत्यं पश्यन्तं सस्मितं मुदा ॥ ४४
गन्धर्व्वाणाञ्च सङ्गीतं शृृण्वन्तं कुतूहलात्।
पश्यन्तीं पार्व्वतीं प्रीत्या पश्यन्तं वक्रचक्षुषा ॥ ४५
जपन्तं पञ्चवक्त्रेण हरेर्नामैकमङ्गलम्।
मन्दाकिनीपद्मवीज-मालया पुलकाञ्चितम् ॥ ४
एतस्मिन्नन्तरे ब्रह्मा तस्यावग्रे स धूर्ज्जटिः।
पृथिव्या सुरसंघैश्च सार्द्धं प्रणतकन्धरैः ॥ ४७
उत्तस्थौ शङ्करः शीघ्रं भक्त्या दृष्ट्वा जगद्गुरुम्।
ननाम मूर्द्ध्ना सम्प्रीत्या लब्धवानाशिषं ततः ॥ ४८
प्रणेमुर्देवताः सर्व्वाः शङ्करं चन्द्रशेखरम्।
प्रणनाम धरा भक्त्या चाशिषं युयुजे हरः ॥ ४९
वृत्तान्तं कथयामास पार्व्वतीशं प्रजापतिः।
श्रुत्वा नतमुखस्तूर्णं शङ्करो भक्तवत्सलः ॥ ५०

भक्तापायं समाकर्ण्य पार्व्वती-परमेश्वरौ।
बभूवतुस्तौ दुःखार्त्तौ बोधयामासतो विधिः॥ ५१
ततो ब्रह्मा महेशश्च सुरसङ्घान् वसुन्धराम्।
गृहं प्रस्थापयामास समाश्वास्य प्रयत्नतः॥ ५२
ततो देवेश्वरौ तूर्णमागत्य धर्म्ममन्दिरम्।
सह तेन समालोच्य प्रजग्मुर्भवनं हरेः॥ ५३
वैकुण्ठं परमं धाम जरा-मृत्युहरं परम्।
वायुना धार्य्यमाणञ्च ब्रह्माण्डादूर्द्ध्वमुत्तमम्॥ ५४
कोटियोजनमूर्द्ध्वञ्च ब्रह्मलोकात् सनातनम्।
न वर्णनीयं कविभिर्विचित्रं रत्ननिर्म्मितम्॥ ५५
पद्मरागैरिन्द्रनीलै राजमार्गविभूषितम्।
ते मनोयायिनः सर्व्वे सम्प्रापुस्तं मनोहरम्।
हरेरन्तःपुरं गत्वा ददृशुः श्रीहरिं सुराः॥ ५६
रत्नसिंहासनस्थञ्च रत्नालङ्कारभूषितम्।
रत्नकेयूर-वलय-रत्न-नूपुर-शोभितम्॥ ५७
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम्।
पीतवस्त्रपरीधानं वनमालाविभूषितम्॥ ५८
शान्तं सरस्वतीकान्तं लक्ष्मीधृतपदाम्बुजम्।
कोटिकन्दर्पलीलाभं स्मितवक्त्रं चतुर्भुजम्॥ ५९
सुनन्द-नन्द-कुमुदैः पार्षदैरुपसेवितम्।
चन्दनोक्षितसर्व्वाङ्गं सुरत्नमुकुटोज्ज्वलम्॥ ६०
परमानन्दरूपञ्च भक्तानुग्रहकातरम्।
तं प्रणेमुः सुरेन्द्राश्च भक्त्या ब्रह्मादयो मुने॥६१
तुष्टुवुः परया भक्त्या भक्तिनम्रात्मकन्धराः।
परमानन्दभारार्त्ताः पुलकाङ्कित.विग्रहाः॥ ६२
ब्रह्मोवाच।
नमामि कमलाकान्तं शान्तं सर्व्वेशमच्युतम्।
वयं यस्य कलाभेदाः कलांशकलया सुराः॥ ६३
मनवश्च मुनीन्द्राश्च मानुषाश्च चराचराः।
कला कलांशकलया भूतास्त्वत्तो निरञ्जन॥ ६४
शङ्कर उवाच।
त्वामहमजरं वा शाममव्यक्तमीश्वरम्।
अनादिमादिमानन्द-रूपिणं सर्व्वरूपिणम्॥ ६५
अणिमादिकसिद्धीनां कारणं सर्व्वकारणम्।
सिद्धिज्ञं सिद्धिदं सिद्धि-रूपं कस्तोतुमीश्वरः॥ ६६
धर्म्म उवाच।
वेदे निरूपितं वस्तु वर्णनीयं विचक्षणैः।
वेदेऽनिर्व्वचनीयं यत् तन्निर्व्वक्तुञ्च कः क्षमः॥ ६७
यस्य सम्भावनीयं यद्गुणरूपं निरञ्जनम्।
तदतिरिक्तञ्च स्तवनं किमहं स्तौमि निर्गुणम्॥६८
ब्रह्मादीनामिदं स्तोत्रं षट्श्लोकोक्तं महामुने।
पठित्वा मुच्यते दुर्गाद्वाञ्छितञ्च लभेन्नरः॥ ६९
देवानां स्तवनं श्रुत्वा तानुवाच हरिः स्वयम्।
गोलोकं यात यूयञ्च यामि पश्चाच्छ्रिया सह॥७०
नरनारायणौ तौ द्वौ श्वेतद्वीपनिवासिनौ।
एते यास्यन्ति गोलोकं तथा देवी सरस्वती॥ ७१
अनन्तो मम माया च कार्त्तिकेयो गणाधिपः।
सा सावित्री वेदमाता पश्चाद्यास्यति निश्चितम्॥७२
तत्राहं द्विभुजः कृष्णो गोपीभी राधया सह।
अत्राहं कमलायुक्तः सुनन्दादिभिरावृतः॥ ७३
नारायणश्च कृष्णोऽहं श्वेतद्वीपनिवासकृत्।
ममैवान्ये कलाः सर्व्वे देवा ब्रह्मादयः स्मृताः॥ ७४
कला-कलांश-कलया सुरासुर-नरादयः।
गोलोकं यात यूयञ्च कार्य्यसिद्धिर्भविष्यति॥ ७५
वयं पश्चाद्गमिष्यामः सर्व्वेषामिष्टसिद्धये।
इत्युक्त्वैवं सभामध्ये विरराम हरिः स्वयम्॥ ७६
प्रणम्य देवताः सर्व्वा जग्मुर्गोलोकमद्भुतम्।
विचित्रं परमं धाम जरा-मृत्युहरं परम्॥ ७७
ऊर्द्ध्वं वैकुण्ठतोऽगम्यं पञ्चाशत्कोटियोजनम्।
वायुना धार्य्यमाणञ्च निर्म्मितं स्वेच्छया विभोः॥७८
तमनोर्व्वचनीयञ्च देवास्ते गमनोन्मुखाः।
ते मनोयायिनः सर्व्वे सम्प्रापुर्विरजातटम्॥ ७९
दृष्ट्वा देवाः सरित्तीरं विस्मयं परमं ययुः।
शुद्धस्फटिकसङ्काशं सुविस्तीर्णं मनोहरम्॥ ८०
मुक्ता-माणिक्य-परमंमणि-रत्नाकरान्वितम्।
कृष्ण-शुभ्र-हरिद्रक्त-मणिराजिविराजितम्॥ ८१
प्रवालाङ्कुरसम्भूतं कुत्रचित् सुमनोहरम्।
परमामूल्यसद्रत्न-कराजीविभूषितम्॥ ८२
विधिरहस्यमाश्चर्य्यं निधिश्रेष्ठाकरान्वितम्।
पद्मरागेन्द्रनीलाना-माकरं कुत्रचिन्मुने॥ ८३
कुत्रचिच्च मरकता-करश्रेणीसमन्वितम्।
स्यमन्तकाकरं कुत्र कुत्रचिद्रुचकाकरम्॥ ८४
अमूल्यपीतवर्णैक-मणिश्रेणाकरान्वितम्।
रत्नाकरं कुत्रचिच्च कुत्रचित् कौस्तुभाकरम्॥ ८५

कुत्रानिर्व्वचनीयानां मणीनामाकरं परम्।
कुत्रचित् कुत्रचिद्रम्य-विहारस्थलमुत्तमम् ॥ ८६
दृष्ट्वा तु परमाश्चर्यं जग्मुस्तत्पारमीश्वराः।
ददृशुः पर्व्वतश्रेष्ठं शतशृङ्गं मनोहरम् ॥ ८७
पारिजाततरूणाञ्च वनराजीविराजितम्।
कल्पवृक्षैः परिवृतं वेष्टितं कामधेनुभिः ॥ ८८
कोटियोजनमूर्द्ध्वञ्च दैर्घ्यं दशगुणोत्तरम्।
शैलप्रस्थपरिमितं पञ्चाशत्कोटियोजनम् ॥ ८९
प्राकाराकारमस्यैव शिखरे रासमण्डलम्।
दशयोजनविस्तीर्णं वर्त्तुलाकारमुत्तमम् ॥ ९०
पुष्पोद्यानसहस्रेण पुष्पितेन सुगन्धिना।
सङ्कुलेन मधुभ्राणां समूहेन समन्वितम् ॥ ९१
सुरत्नद्रव्यसंयुक्तै राजितं रतिमन्दिरैः।
रत्नमण्डपकोटीनां सहस्रेण समन्वितम् ॥ ९२
रत्नसोपानयुक्तेन सद्रत्नकलसेन च।
हरिन्मणीनां स्तम्भेन शोभितेन च शोभितम् ॥ ९३
सिन्दूरवर्णमणिभिः परितः खचितेन च।
इन्द्रनीलैर्मध्यभाग-मण्डितेन मनोहरैः ॥ ९४
रत्नप्राकारसंयुक्तं मणिभेदैर्विराजितम्।
द्वारैः कवाटसंयुक्तैश्चतुर्भिश्च विराजितम् ॥ ९५
वज्रग्रन्थिसमायुक्तै- रसालपल्लवान्वितैः।
परितः कदलीस्तम्भ-समूहैश्च समन्वितम् ॥ ९६
शुक्लधान्य-पर्ण-लाजफल-दूर्व्वाङ्कुरान्वितम्।
चन्दनागुरुकस्तूरी-कुङ्कुमद्रवचर्च्चितम् ॥ ९७
वेष्टितं गोपकन्यानां समूहैः कोटिशो मुने।
रत्नालङ्कारसंयुक्तै रत्नमालाविराजितैः ॥ ९८
रत्नकङ्कणकेयूर-रत्ननूपुरभूषितैः।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितैः ॥ ९९
रत्नाङ्गुरीयललितै-र्हस्ताङ्गुलिविभूषितैः।
रत्नपाशकवृन्दैश्च विराजितपदाङ्गुलैः ॥ १००
भूषितै रत्नभूषाभिः सद्रत्नमुकुटोज्ज्वलैः।
गजेन्द्रमुक्तालङ्कारै-र्नासिकामध्यराजितैः ॥ १०१
सिन्दूरविन्दुना सार्द्धमलकाधःस्थलोज्ज्वलैः।
चारुचम्पकवर्णाभै-श्चन्दनद्रवचर्च्चितैः ॥ १०२
पीतवस्त्रपरीधानै-र्विम्बाधरमनोहरैः।
शरत्पार्व्वणचन्द्राणां प्रभामुष्टमुखोज्ज्वलैः ॥ १०३
शरत्फुल्लपद्मानां शोभामोचनलोचनैः।
कस्तूरीपत्रिकायुक्त-रेखात्तकज्ज्वलोज्ज्वलैः ॥ १०४
प्रफुल्लमालतीमालाजालैः कवरशोभितैः।
मधुलुब्धमधुभ्राणां समूहैश्चापि सङ्कुलैः ॥ १०५
चारुणा गमनेनैव गजखञ्जनगञ्जनैः।
वक्रभ्रूभङ्गसंयोग-स्वल्पस्मितसमन्वितैः ॥ १०६
पक्वदाड़िम्ववीजाभ-दन्तपङ्क्तिविराजितैः।
खगेन्द्रचञ्चुशोभाढ्य-नासिकोन्नतभूषितैः ॥ १०७
गजेन्द्रगण्डयुग्माभ-स्तनभारनतैरिव।
नितम्बकठिनश्रोणि-पीनभारभरानतैः ॥ १०८
कन्दर्पशरचेष्टाभिर्जर्ज्जरीभूतमानसैः।
दर्पणैः पूर्णचन्द्रास्य-सौन्दर्य्यदर्शनोत्सुकैः ॥ १०९
राधिकाचरणाम्भोज-सेवाशक्तमनोरथैः।
सुन्दरीणां समूहैश्च रक्षितं राधिकाज्ञया ॥ ११०
क्रीड़ासरोवराणाञ्च लक्षैश्च परिवेष्टितम्।
श्वेतरक्तलोहितैश्च वेष्टितैः पद्मराजितैः।
सुकूजद्भिर्मधुभ्राणां समूहसङ्कुलैः सदा ॥ १११
पुष्पोद्यानसहस्रेण पुष्पितेन समन्वितम्।
कोटिकुञ्जकुटीरैश्च पुष्पशय्यासमन्वितैः ॥ ११२
भोगद्रव्यसकर्पूर-ताम्बूलवस्त्रसंयुतैः।
रत्नप्रदीपैः परितः श्वेतचामरदर्पणैः ॥ ११३
विचित्रपुष्पमालाभिः शोभितैः शोभितं मुने।
तं रासमण्डलं दृष्ट्वा जग्मुस्ते पर्व्वताद्बहिः ॥ ११४
ततो विलक्षणं रम्यं ददृशुः सुन्दरं वनम्।
वनं वृन्दावनं नाम राधामाधवयोः प्रियम् ॥ ११५
क्रीड़ास्थानं तयोरेव कल्पवृक्षचयान्वितम्।
विरजातीरनीरात्तैः कलितं मन्दवायुभिः ॥ ११६
कस्तूरीयुक्तपत्रात्तैः सर्व्वत्र सुरभीकृतम्।
नवपल्लवसंयुक्तं परपुष्टरुतश्रुतम् ॥ ११७
कुत्र केलिकदम्बानां कदम्बैः कमनीयकम्।
मन्दराणां चन्दनानां चम्पकानां तथैव च ॥ ११८
सुगन्धिकुसुमानाञ्च गन्धेन सुरभीकृतम्।
आम्राणां नागरङ्गाणां पनसानां तथैव च ॥ ११९
तालानां नारिकेलानां वृन्दैर्वृन्दावनं वनम्।
जम्बूनां वदरीणाञ्च खर्ज्जूराणां विशेषतः ॥ १२०
गुवाकाम्रातकानाञ्च जम्बीराणाञ्च नारद।
कदलीनां श्रीफलानां दाड़िम्वानां मनोहरैः ॥ १२
सुपक्वफलसंयुक्तैः समूहैश्च विराजितम्।

पियालानाञ्च सालाना-मश्वत्थानां तथैव च ॥ १२२
निम्बानां शाल्मलीनाञ्च तिन्तिड़ीनाञ्च शोभनैः।
अन्येषां तरुभेदानां सङ्कुलैः सङ्कुलं सदा ॥ १२३
परितः कल्पवृक्षाणां वृन्दैर्वृन्दैर्विराजितम्।
मल्लिका-मालती-कुन्दं केतकी माधवीलता ॥ १२४
एतासाञ्च समूहैश्च यूथिकाभिः समन्वितम्।
चारुकुञ्जकुटीरैस्तैः पञ्चाशत्कोटिभिर्मुने ॥ १२५
रत्नप्रदीपदीपैश्च धूपेन सुरभीकृतैः।
शृङ्गारद्रव्ययुक्तैश्च वासितैर्गन्धवायुभिः ॥ १२६
चन्दनाक्तैः पुष्पतल्पैर्मालाजालसमन्वितैः।
मधुलुब्धमधुव्राणां कलशब्दैश्च शब्दितम् ॥ १२७
रत्नालङ्कारशोभाढ्यैर्गोपीवृन्दैश्च वेष्टितम्।
पञ्चाशत्कोटिगोपीभी रचितं राधिकाज्ञया ॥ १२८
द्वात्रिंशत्काननं तत्र रम्यं रम्यं मनोहरम्।
वृन्दावनाभ्यन्तरितं निर्ज्जनस्थानमुत्तमम् ॥ १२९
सुपक्वमधुरस्वादु-फलैर्वृन्दावनं मुने।
गोष्ठानाञ्च गवानाञ्च समूहैश्च समन्वितम् ॥ १३०
पुष्पोद्यानसहस्रेण पुष्पितेन सुगन्धिना।
मधुलुब्धमधुव्राणां समूहेन समन्वितम् ॥ १३१
पञ्चाशत्कोटिगोपानां निवासैश्च विराजितम्।
श्रीकृष्णतुल्यरूपाणां सद्रत्नगठितैर्वरैः ॥ १३२
दृष्ट्वा वृन्दावनं रम्यं ययुर्गोलोकमीश्वराः।
परितो वर्त्तुलाकारं कोटियोजनविस्तृतम् ॥ १३३
रत्नप्राकारसंयुक्तं चतुर्द्वारान्वितं मुने।
गोपानाञ्च समूहैश्च द्वारपालैः समन्वितम् ॥ १३४
आश्रमै रत्नखचितैर्नानाभोगसमन्वितैः।
गोपानां कृष्णभृत्यानां पञ्चाशत्कोटिभिर्युतम् ॥ १३५
भक्तानां गोपवृन्दानां आश्रमैः शतकोटिभिः।
ततोऽधिकसुनिर्म्माणैः सद्रत्नगठितैर्युतम् ॥ १३६
आश्रमैः पार्षदानाञ्च ततोऽधिकविलक्षणैः।
सुमूल्यरत्नरचितैः संयुक्तं दशकोटिभिः ॥ १३७
पार्षदप्रवराणाञ्च श्रीकृष्णरूपधारिणाम्।
आश्रमैः कोटिभिर्युक्तं सद्रत्नेन विनिर्म्मितैः ॥ १३८
राधिकाशुद्धभक्तानां गोपीनामाश्रमैर्वरैः।
सद्रत्नरचितैर्द्दिव्यै-र्द्वात्रिंशत्कोटिभिर्युतम् ॥ १३९
तासाञ्च किङ्करीणाञ्च भवनैः सुमनोहरैः।
मणिरत्नादिरचितैः शोभितं दशकोटिभिः ॥ १४०
शतजन्म तपःपूता भक्ता ये भारते भुवि।
हरिभक्तिदृढ़ायुक्ताः कर्म्मनिर्व्वाणकारकाः ॥ १४१
स्वप्ने ज्ञाने हरेर्ध्याने निविष्टमानसा मुने।
राधाकृष्णेति कृष्णेति प्रजपन्तो दिवानिशम् ॥ १४२
तेषां श्रीकृष्णभक्तानां निवासः सुमनोहरैः।
सद्रत्नमणिनिर्म्माणैर्नानाभोगसमन्वितैः ॥ १४३
पुष्पशय्या-पुष्पमाला-श्वेतचामरशोभितैः।
रत्नदर्पणशोभाढ्यैर्हरिन्मणिसमन्वितैः ॥ १४४
अमूल्यरत्नकलस-समूहान्वितशेखरैः।
सूक्ष्मवस्त्राभ्यन्तरितैः संयुक्तं शतकोटिभिः ॥ १४५
देवास्तमद्भुतं दृष्ट्वा कियद्दूरं ययुर्मुदा।
तत्राक्षयवटं रम्यं ददृशुर्जगदीश्वराः ॥ १४६
पञ्चयोजनविस्तीर्ण-मूर्द्धं तद्द्विगुणं मुने।
सहस्रस्कन्धसंयुक्तं शाखासंख्यसमन्वितम् ॥ १४७
रत्नपक्वफलाकीर्णं शोभितं रत्नवेदिभिः।
कृष्णस्वरूपान् तन्मूले ददृशुर्बालवान् शिशून् ॥ १४८
पीतवस्त्रपरीधानान् क्रीड़ाशक्तमनोहरान्।
चन्दनोक्षितसर्व्वाङ्गान् रत्नभूषणभूषितान् ॥ १४९
ददृशुस्तत्र देवेशाः पार्षदप्रवरान् हरेः।
ततो विदूरे दृष्ट्वा राजमार्गं मनोहरम् ॥ १५०
सिन्दूराकारमणिभिः परितो रचितं मुने।
इन्द्रनीलैः पद्मरागैर्हीरकैः रुचकैस्तथा ॥ १५१
निर्म्मितैर्वेदिभिर्युक्तं परितो रत्नमण्डपम्।
चन्दनागुरु-कस्तूरी-कुङ्कुमद्रवचर्च्चितम् ॥ १५२
दधि-पर्ण-लाज-फल-पुष्पदूर्व्वाङ्कुरान्वितैः।
सूक्ष्मसूत्रग्रन्थियुक्त-श्रीखण्डपल्लवान्वितैः ॥ १५३
रम्भास्तम्भसमूहैश्च कुङ्कुमाक्तैर्विराजितम्।
सद्रत्नमङ्गलघटैः फलशाखासमन्वितैः ॥ १५४
सिन्दूरकुङ्कुमाक्तैश्च गन्धचन्दनचर्च्चितैः।
भूषितैः पुष्पमालाभिः परितो भूषितं परम् ॥ १५५
गोपिकानां समूहैश्च क्रीड़ासक्तैश्च वेष्टितम् ॥ १५६
बहुमूल्येन रत्नेन रत्नसोपाननिर्म्मितान्।
वह्निशुद्धांशुके रम्यैः श्वेतचामरदर्पणैः ॥ १५७
रत्नतल्पविचित्रैश्च पुष्पमाल्यैर्विराजितान्।
षोड़शद्वारसंयुक्तान् द्वारपालैश्च रक्षितान् ॥ १५८
परितः परिखायुक्तान् रत्नप्राकारवेष्टितान्।
चन्दनागुरुकस्तूरी-कुङ्कुमद्रवचर्च्चितान्।

एतान् मनोरमान् दृष्ट्वा ते देवा गमनोन्मुखाः ॥१५९
जग्मुः शीघ्रं कियद्दूरं ददृशुः सुन्दरं ततः।
आश्रमं राधिकायाश्च रासेश्वर्य्याश्च नारद ॥ १६०
देवाधिदेव्या गोपीनां वरायाश्चारुनिर्म्मितम्।
प्राणाधिकायाः कृष्णस्य रम्यं द्रव्यं मनोहरम् ॥१६१
सर्व्वानिर्व्वनीयञ्च पण्डितैर्न निरूपितम्।
सुचारुवर्त्तुलाकारं षड्गव्यूतिप्रमाणकम् ॥ १६२
शतमन्दिरसंयुक्तं ज्वलितं रत्नतेजसा।
अमूल्यरत्नसाराणां वरैर्विरचितं वरम् ॥ १६३
दुर्लङ्घ्याभिर्गभीराभिः परिखाभिः सुशोभितम्।
कल्पवृक्षैः परिवृतं पुष्पोद्यानशतान्तरम् ॥ १६४
सुमूल्यरत्नरचितं प्राकारैः परिवेष्टितम् ॥ १६५
सद्रत्नवेदिकायुक्तं युक्तैर्द्वारैश्च सप्तभिः।
संयुक्तरत्नचित्रैश्च विचित्रैर्वर्द्धलैर्मुने ॥ १६६
प्रधानद्वारसप्तस्थः क्रमशः क्रमशो मुने।
सर्व्वतोऽपि ततस्तत्र षोड़शद्वारसंयुतम् ॥ १६७
देवा दृष्ट्वा च प्राकारं सहस्रधनुरुच्छ्रितम्।
सद्रत्नचुद्रकलस-समूहैः सुमनोहरैः।
सुदीप्तं तेजसा रम्यं परमं विस्मयं ययुः ॥ १६८
ततः प्रदक्षिणीकृत्य कियद्दूरं ययुर्मुदा।
पुरतो गच्छतां तेषां पश्चाद्भूतं तदाश्रमम् ॥ १६९
गोपानां गोपिकानाञ्च ददृशुराश्रमान् परान्।
सुमूल्यरत्नरचितान् शतकोटिमितान् मुने ॥ १७०
दृष्टं दृष्टञ्च परितो गोपानां सर्व्वमाश्रमम्।
गोपिकानाञ्चापरं वा रम्यं रम्यं नवं नवम् ॥ १७१
गोलोकं निखिलं दृष्ट्वा पुनरन्तं ययुः सुराः।
तदेव वर्त्तुलाकारं रम्यं वृन्दावनं वनम् ॥ १७२
ददृशुः शतशृङ्गञ्च तद्बहिर्विरजानदीम्।
विरजान्तं ययुर्देवा ददृशुः शून्यमेव च ॥ १७३
वाय्वाधारञ्च गोलोकं सद्रत्नमयमद्भुतम्।
ईश्वरेच्छाविनिर्म्माणं राधिकाध्यानबन्धनात् ॥ १७४
युक्तं सहस्रैः सरसां केवलं मङ्गलालयम्।
नृत्यञ्च ददृशुस्तत्र देवाश्च सुमनोहरम् ॥ १७५
सुतालं चारु सङ्गीतं राधाकृष्णगुणान्वितम्।
श्रुत्वैव गीतपीयूषं मूर्च्छामापुः सुरा मुने ॥ १७६
क्षणेन चेतनां प्राप्य ते देवाः कृष्णमानसाः।
ददृशुः परमाश्चर्य्यं स्थाने स्थाने मनोहरम् ॥१७७
ददृशुर्गोपिकाः सर्व्वा नानावेशविधायिकाः।
काश्चिन्मृदङ्गहस्ताश्च काश्चिद्वीणाकरा वराः ॥१७८
काश्चिच्चामरहस्ताश्च करतालकराः पराः।
काश्चिद्धयन्त्रवाद्यहस्ता रत्ननूपुरशब्दिताः ॥ १७९
सद्रत्नकिङ्किणीजाल-शब्देन शब्दिताः पराः।
काश्चिन्मस्तककुम्भाश्च नृत्यभेदमनोरथाः ॥ १८०
पुंवेशनायिकाः काश्चित् काश्चित् तासाञ्च नायिकाः।
कृष्णवेशधराः काश्चिद्द राधावेशधराः पराः ॥ १८१
काश्चित् संयोगविरताः काश्चिदालिङ्गने रताः।
क्रीड़ासक्ताश्च ता दृष्ट्वा लज्जिता जगदीश्वराः ॥१८२
प्रगच्छन्तः कियद्दूरं ददृशुराश्रमान् बहून्।
राधासखीनां गेहानि प्रधानानाञ्च नारद ॥ १८३
रूपेणैव गुणेनैव वेशेन यौवनेन च।
सौभाग्येनैव वयसा सदृशीनाञ्च तत्र वै ॥ १८४
त्रयस्त्रिंशद्वयस्याश्च राधिकायाश्च गोपिकाः।
वेशानिर्व्वचनीयाश्च तासां नामानि च शृणु ॥ १८५
सुशीला च शशिकला यमुना माधवी रतिः।
कदम्बमाला कुन्ती च जाह्नवी च स्वयम्प्रभा ॥ १८६
चन्द्रमुखी पद्ममुखी सावित्री च सुधामुखी।
शुभा पद्मा पारिजाता गौरी च सर्व्वमङ्गला ॥ १८७
कालिका कमला दुर्गा भारती च सरस्वती।
गङ्गाम्बिका मधुमती चम्पाऽपर्णा च सुन्दरी ॥ १८८
कृष्णप्रिया सती चैव नन्दनी नन्दनेति च।
एतासां समरूपाणां रत्नधातुविचित्रितान् ॥ १८९
नानाप्रकारचित्रेण चित्रितान् सुमनोहरान्।
अमूल्यरत्नकलस-समूहैः शिखरोज्ज्वलान् ॥ १९०
सद्रत्नरचितान् शुभ्रान् मणिश्रेष्ठेन संयुतान्।
ब्रह्माण्डाद्बहिरूर्द्ध्वञ्च नास्ति लोकं तदूर्द्ध्वकम् ॥ १९१
ऊर्द्ध्वं शून्यमयं सर्व्वं तदन्ता सृष्टिरेव च।
रसातलेभ्यः सप्तभ्यो नास्त्यधः सृष्टिरेव च ॥ १९२
तदधश्च जलं ध्वान्त-मगन्तव्यमदृश्यकम्।
ब्रह्माण्डान्तं तद्बहिश्च सर्व्वं मत्तो निशामय ॥ १९३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारद-संवादे गोलोक-
वर्णनं नाम चतुर्थोऽध्यायः ॥४॥

## पञ्चमोऽध्यायः।

नारायण उवाच।

गोलोकं निखिलं दृष्ट्वा देवास्ते हृष्टमानसाः।
पुनराजग्मु (क) राधायाः पश्चाद्दारमेन च ॥ १
सद्रत्नमणिनिर्म्माण-वेदिकाद्वयसंयुतम्।
हरिद्राकारमणिना वज्रसंमिश्रितेन च ॥ २
अमूल्यरत्नरचित-कपाटेन विभूषितम्।
द्वारे नियुक्तं ददृशुर्वीरभानुमनुत्तमम् ॥ ३
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम्।
पीतवस्त्रपरीधानं सद्रत्नमुकुटोज्ज्वलम् ॥ ४
द्वारं चित्रविचित्रेण चित्रितं परमाद्भुतम्।
सर्व्वं निवेदनं चक्रुर्देवा दौवारिकं मुदा ॥ ५
तानुवाच द्वारपालो निःशङ्कस्त्रिदशेश्वरान्।
नाहं विनाज्ञया गन्तुं दातुं साम्प्रतमीश्वराः ॥ ६
किङ्करान् प्रेषयामास श्रीकृष्णस्थानमेव च।
हरेरनुज्ञां सम्प्राप्य ददौ गन्तुं सुरान् मुने ॥ ७
तं सम्भाष्य ययुर्देवा द्वितीयद्वारमुत्तमम्।
ततोऽधिकं विचित्रञ्च सुन्दरं सुमनोहरम् ॥ ८
द्वारे नियुक्तं ददृशुश्चन्द्रभानञ्च नारद।
किशोरं श्यामलं चारु-स्वर्णवेत्रधरं वरम् ॥ ९
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम्।
गोपालञ्च-समूहेन पञ्चलक्षेण शोभितम् ॥ १०
तं सम्भाष्य ययुर्देवा-स्तृतीयं द्वारमुत्तमम्।
ततोऽति सुन्दरं चित्रं ज्वलितं मणितेजसा ॥ ११
द्वारे नियुक्तं ददृशुः सूर्य्यभानञ्च नारद।
द्विभुजं मुरलीहस्तं किशोरं श्यामसुन्दरम् ॥ १२
मणिकुण्डलयुग्मेन कपोलञ्च विराजितम् ॥ १३
रत्नकुण्डलिनं श्रेष्ठं प्रेष्ठं राधेशयोः परम्।
नवलक्षेण गोपेन वेष्टितञ्च नृपेन्द्रवत् ॥ १४
तं सम्भाष्य ययुर्देवाश्चतुर्थद्वारमेव च।
तेभ्यो विलक्षणं रम्यं सुदीप्तं मणितेजसा ॥ १५
अत्यद्भुतविचित्रेण भूषितं सुमनोहरम्।
द्वारे नियुक्तं ददृशुर्वसुभानं व्रजेश्वरम् ॥ १६
किशोरं सुन्दरवरं मणिदण्डकरं परम्।
रत्नसिंहासनस्थञ्च रम्यभूषणभूषितम् ॥ १७
पक्वविम्बाधरौष्ठञ्च सस्मितं सुमनोहरम्।
तं सम्भाष्य ययुर्देवाः पञ्चमद्वारमेव च ॥ १८
वज्रभित्तिस्थितैश्चित्र-विचित्रैर्ज्वलितं परम्।
द्वारपालञ्च ददृशुर्देवभानाभिधायकम् ॥ १९
चारुसिंहासनस्थञ्च रत्नभूषणभूषितम्।
मयूरपुच्छचूडञ्च रत्नमालाविभूषितम् ॥ २०
कदम्बपुष्पसंयुक्तं सद्रत्नकुण्डलोज्ज्वलम्।
चन्दनागुरु-कस्तूरी-कुङ्कुमद्रवचर्च्चितम् ॥ २१
नृपेन्द्रवरतुल्यञ्च दशलक्षप्रजान्वितम्।
तं वेत्रपाणिं सम्भाष्य ययुर्देवा मुदान्विताः ॥ २२
विलक्षणं द्वारषट्कं चित्रराजीविराजितम्।
वज्रभित्तियुग्मयुक्तं पुष्पमाल्यविभूषितम् ॥ २३
द्वारे नियुक्तं ददृशुः शक्रभानं व्रजेश्वरम्।
नानालङ्कारशोभाढ्यं दशलक्षप्रजान्वितम् ॥ २४
श्रीखण्डपत्रवासक्त-कपोलं कुण्डलोज्ज्वलम्।
तूर्णं सुरास्तं सम्भाष्य ययुर्द्वारञ्च सप्तमम् ॥ २५
ननाप्रकारचित्रञ्च षड्भ्यश्चातिविलक्षणम्।
द्वारे नियुक्तं ददृशू रत्नभानं हरेः प्रियम् ॥ २६
चन्दनोक्षितसर्व्वाङ्गं पुष्पमालाविभूषितम्।
भूषितं भूषितै रम्यैर्मणिरत्नमनोहरैः ॥ २७
गोपैर्द्वादशलक्षैश्च राजेन्द्रमिव राजितम्।
रत्नसिंहासनस्थञ्च स्मेराननसरोरुहम् ॥ २८
तं वेत्रहस्तं सम्भाष्य जग्मुर्देवेश्वरा मुदा।
विचित्रमष्टमं द्वारं सप्तभ्योऽपि विलक्षणम् ॥ २९
दौवारिकं ते ददृशुः सुपार्श्वं सुमनोहरम्।
सस्मितं सुन्दरवरं श्रीखण्डतिलकोज्ज्वलम् ॥ ३०
बन्धुजीवाधरौष्ठञ्च रत्नकुण्डलमण्डितम्।
सर्व्वालङ्कारशोभाढ्यं रत्नदण्डधरं वरम् ॥ ३१
गोपैर्द्वादशलक्षैश्च किशोरैश्च समन्वितम्।
ततः शीघ्रं ययुर्देवा नवमद्वारमीप्सितम् ॥ ३२
वज्रसद्रत्नरचित-चतुर्व्वेदीसमन्वितम्।
अपूर्व्वं चित्रविचित्रं मालाजालैर्विराजितम् ॥ ३३
द्वारपालञ्च ददृशुः सुबलं ललिताकृतिम्।
नानाभूषणभूषाढ्यं भूषणार्हं मनोहरम्। ३४
व्रजैर्द्वादशलक्षैश्च संयुक्तं सुमनोहरम्।
तं दण्डहस्तं सम्भाष्य सुरा द्वारान्तरं ययुः ॥ ३५
विशिष्टं दशमद्वारं दृष्ट्वा ते विस्मिताः सुराः।

(क) आजग्मु राधाया इत्यत्र ह्रस्वीकारत्वमार्षम्।

सर्व्वानिर्व्वचनीयञ्चा-प्यदृष्टमश्रुतं मुने ॥ ३६
ददृशुर्द्वारपालञ्च सुदामानञ्च सुन्दरम्।
रूपानिर्व्वचनीयञ्च कृष्णतुल्यं मनोहरम् ॥ ३७
गोपविंशतिलक्षाणां समूहैः परिवारितम्।
तं दण्डहस्तं दृष्ट्वैव जग्मुर्द्वारान्तरं सुराः ॥ ३८
द्वारमेकादशाख्यञ्च सुचित्रमहदद्भुतम्।
द्वारपालञ्च तत्रस्थं श्रीदामानं व्रजेश्वरम् ॥ ३९
राधिकापुत्रतुल्यञ्च पीतवस्त्रेण भूषितम्।
अमूल्यरत्नरचित-रम्यसिंहासनस्थितम् ॥ ४०
अमूल्यरत्नभूषाभि-र्भूषितं सुमनोहरम्।
चन्दनागुरुकस्तूरी-कुङ्कुमेण विराजितम् ॥ ४१
गण्डस्थलकपोलाढ्य-सद्रत्नकुण्डलोज्ज्वलम्।
सद्रत्नश्रेष्ठरचित-विचित्रमुकुटोज्ज्वलम् ॥ ४२
प्रफुल्लमालतीमाला-जालैः सर्व्वाङ्गभूषितम्।
कोटिगोपैः परिवृतं राजेन्द्राधिकमुज्ज्वलम् ॥ ४३
तं सम्भाष्य ययुर्द्वारं द्वादशाख्यं सुरा मुदा।
अमूल्यरत्नरचित-वेदिकाभिः समन्वितम् ॥ ४४
सर्व्वेषां दुर्लभं चित्र-मदृश्यमश्रुतं मुने।
वज्रभित्तिस्थितं चित्र-सुन्दरं सुमनोहरम् ॥ ४५
द्वारे नियुक्ता ददृशुर्देवा गोपाङ्गना वराः।
रूपयौवनसम्पन्ना रत्नाभरणभूषिताः ॥ ४६
पीतवस्त्रपरीधानाः कवरीभारशोभिताः।
सुगन्धिमालतीमाला-जालैः सर्व्वाङ्गभूषिताः ॥ ४७
रत्नकङ्कण-केयूर-रत्ननूपुर-भूषिताः।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताः ॥ ४८
चन्दनागुरु-कस्तूरी-कुङ्कुमद्रवचर्च्चिताः।
पीनश्रोणिभरानम्रा नितम्बभारपीड़िताः ॥ ४९
गोपीनां शतकोटीनां श्रेष्ठाः प्रेष्ठा हरेरपि।
गोपीनां कोटिशो दृष्ट्वा सुरास्ते विस्मयं ययुः ॥ ५०
सम्भाष्य ता मुदा युक्ता ययुर्द्वारान्तरं मुने।
ततश्च क्रमशो विप्र त्रिषु द्वारेषु तत्र वै ॥ ५१
गोपाङ्गनानां श्रेष्ठाश्च ददृशुः सुमनोहराः।
वराणाञ्च वरा रम्या धन्या मान्याश्च शोभनाः ॥ ५२
सर्व्वाः सौभाग्ययुक्ताश्च राधिकायाः प्रियाः स्मृताः।
भूषिता भूषणै रम्यैः प्रोद्भिन्ननवयौवनाः ॥ ५३
एवं द्वारत्रयं दृष्ट्वा सुचानादद्भुताश्रयम्।
अदृश्यमतिरम्यञ्चा-प्यनिरूप्यं विचक्षणैः ॥ ५४

तास्ताः सम्भाष्य देवास्ते विस्मिता ययुरीश्वराः।
राधिकाभ्यन्तरं द्वारं षोड़शाख्यं मनोहरम् ॥ ५५
सर्व्वासाञ्च विधानानां गोप्यं गोपाङ्गनागणैः।
त्रयस्त्रिंशद्वयस्यानां वयस्यानिकरैर्मुने ॥ ५६
वेशानिर्व्वचनीयैश्च नानागुणसमन्वितैः।
रूपयौवनसम्पन्नै रत्नालङ्कारभूषितैः ॥ ५७
रत्नकङ्कण-केयूर-रत्ननूपुर-भूषितैः।
सद्रत्नकिङ्किणीजालै-र्मध्यदेशविभूषितैः ॥ ५८
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितः।
प्रफुल्लमालतीमाला-जालैर्वक्षःस्थलोज्ज्वलैः ॥ ५९
शरत्पार्व्वणचन्द्राणां प्रभामुष्टमुखेन्दुभिः।
पारिजातप्रसूनानां मालाजालेन वेष्टितैः ॥ ६०
सुरम्यकवरीभारै-र्भूषणैर्भूषितैर्वरैः।
पक्वबिम्बाधरोष्ठैश्च स्मेराननसरोरुहैः ॥ ६१
पक्वदाड़िम्बवीजाभैः शोभितैर्दन्तपङ्क्तिभिः।
चारुचम्पकवर्णाभै-र्मध्यस्थलकृशैर्मुने ॥ ६२
गजमौक्तिकयुक्ताभिर्नासिकाभिर्विराजितैः।
खगेन्द्रचारुचञ्चूनां शोभामुष्टिकरैश्च तैः (क) ॥ ६३
गजेन्द्रगण्डकठिन-स्तनभारभरानतैः।
पीनश्रोणिभरार्त्तैश्च मुकुन्दपद्ममानसैः ॥ ६४
निमेषरहिता देवा द्वारस्था ददृशुश्च ताः।
सद्रत्नमणिरत्नैश्च वेदिकायुग्मशोभितम् ॥ ६५
हरिन्मणीनां स्तम्भानां समूहैः संयुतं सदा।
सिन्दूराकारमणिभि-र्मध्यस्थलविराजितैः ॥ ६६
पारिजातप्रसूनानां मालाजालैर्विभूषितम्।
तत्सम्पर्कैर्गन्धवाहैः सर्व्वत्र सुरभीकृतम् ॥ ६७
दृष्ट्वा तत् परमाश्चर्य्यं राधिकाभ्यन्तरं सुराः।
श्रीकृष्णचरणाम्भोज-दर्शनोत्सुकमानसाः ॥ ६८
ताः सम्भाष्य ययुः शीघ्रं पुलकाञ्चितविग्रहाः।
भक्त्युद्रेकादश्रुपूर्णाः किञ्चिन्नम्रात्मकन्धराः ॥ ६९
आरात् ते ददृशुर्देवा राधिकाभ्यन्तरं वरं।
मन्दिराणाञ्च मध्यस्थं चतुःशालं मनोहरम् ॥ ७०
अमूल्यरत्नसाराणां सारेण रचितं परम्।
नानारत्नमणिस्तम्भै-र्वज्रयुक्तैश्च भूषितम् ॥ ७१
पारिजातप्रसूनानां मालाजालैर्विराजितम्।
मुक्तासमूहैर्माणिक्यैः श्वेतचामरदर्पणैः ॥ ७२

(क) शोभांमुष्टाभिरेव च इत्यपि वार्च्चिकः पाठः।

अमूल्यरत्नसाराणां कलसैर्भूषितं मुने।
पट्टसूत्रग्रन्थियुक्त-श्रीखण्डपल्लवान्वितैः ॥ ७३
मणिस्तम्भसमूहैश्च रम्यप्राङ्गणभूषितम्।
चन्दनागुरु-कस्तूरी-कुङ्कुमद्रवसंयुतम् ॥ ७४
शुक्लधान्य-शुक्लपुष्प-प्रवाल-फलतण्डुलैः।
पूर्णदूर्वाक्षतैर्लाजै-र्निर्मञ्छनविभूषितम् ॥ ७५
फलरत्नै रत्नकुम्भैः सिन्दूरकुङ्कुमान्वितैः।
पारिजातप्रसूनानां मालायुक्तैर्विराजितम् ॥ ७६
प्रसूनातिगन्धवहैः सर्व्वत्र सुरभीकृतम्।
सर्व्वानिर्व्वचनीयञ्च यद्द्रव्यमनिरूपितम् ॥ ७७
ब्रह्माण्डदुर्लभं यद्यद्-वस्तुभिस्तैर्विराजितम्।
रत्नशय्या सुललिता सूक्ष्मवस्त्रपरिच्छदा ॥ ७८
पारिजातप्रसूनानां मालाजालैः सुशोभितम्।
कोटिशो रत्नकुम्भाश्च रत्नपात्राणि नारद ॥ ७९
अमूल्यानि च चारूणि तैस्तैरेव विभूषितम्।
नानाप्रकारवाद्यानां कलनादनिनादितम् ॥ ८०
स्वरयन्त्रैश्च वीणाभि-र्गोपीसङ्गीतसुश्रुतम्।
मोहितं वाद्यशब्दैश्च मृदङ्गानाञ्च नारद ॥ ८१
गोपानां कृष्णतुल्यानां समूहैः परिवारितम्।
राधासखीनां गोपीनां वृन्दैर्वृन्दैर्विराजितम् ॥ ८२
राधाकृष्णगुणोद्रेक-पदसङ्गीतसुश्रुतम्।
एवमभ्यन्तरं दृष्ट्वा बभूवुर्विस्मिताः सुराः ॥ ८३
शुश्रुवुर्मधुरं गीतं ददृशुर्नृत्यमुत्तमम्।
तत्र तस्थुः सुराः सर्व्वे ध्यानैकतानमानसाः ॥ ८४
रत्नसिंहासनं रम्यं ददृशुस्त्रिदशेश्वराः।
चतुःशतप्रमाणञ्च परितो मण्डलाकृति ॥ ८५
सद्रत्नक्षुद्रकलस-समूहैश्च समन्वितम्।
चित्रपुत्तलिकापुष्प-चित्रकाननभूषितम् ॥ ८६
तत्र तेजःसमूहञ्च सूर्य्यकोटिसमप्रभम्।
प्रभया ज्वलितं ब्रह्मन्नाश्चर्य्यं महदद्भुतम् ॥ ८७
सप्ततालप्रमाणं तद्व्याप्तमूर्द्ध्वं समन्ततः।
तेजो मुष्टञ्च सर्व्वेषां व्याप्ताश्रमविराजितम् ॥ ८८
सर्व्वव्यापि सर्व्ववीजं चक्षूरोधकरं परम्।
दृष्ट्वा तेजःस्वरूपञ्च ते देवा ध्यानतत्पराः ॥ ८९
प्रणेमुः परया भक्त्या भक्तिनम्रात्मकन्धराः।
परमानन्दसंयोगा-दश्रुपूर्णविलोचनाः।
पुलकाञ्चितसर्व्वाङ्गा वाञ्छापूर्णमनोरथाः ॥ ९०

नत्वा तेजःस्वरूपञ्च तमीशं त्रिदशेश्वराः।
तत्रोत्थाय ध्यानयुक्ताः प्रतस्थुस्तेजसः पुरः ॥ ९१
ध्यात्वैवं जगतां धाता बभूव सम्पुटाञ्जलिः।
दक्षिणे शङ्करं कृत्वा वामे धर्म्मञ्च नारद ॥ ९२
भक्त्युद्रेकात् प्रतुष्टाव ध्यानैकतानमानसः।
परात्परं गुणातीतं परमात्मानमीश्वरम् ॥ ९३

ब्रह्मोवाच।

वरं वरेण्यं वरदं वरदानाञ्च कारणम्।
कारणं सर्व्वभूतानां तेजोरूपं नमाम्यहम् ॥ ९४
मङ्गल्यं मङ्गलार्हञ्च मङ्गलं मङ्गलप्रदम्।
समस्तमङ्गलाधारं तेजोरूपं नमाम्यहम् ॥ ९५
स्थितं सर्व्वत्र निर्लिप्त-मात्मरूपं परात्परम्।
निरीहमवितर्क्यञ्च तेजोरूपं नमाम्यहम् ॥ ९६
सगुणं निर्गुणं ब्रह्म ज्योतीरूपं सनातनम्।
साकारञ्च निराकारं तेजोरूपं नमाम्यहम् ॥ ९७
तमनिर्व्वचनीयञ्च व्यक्तमव्यक्तमेककम्।
स्वेच्छामयं सर्व्वरूपं तेजोरूपं नमाम्यहम् ॥ ९८
गुणत्रयविभागाय रूपत्रयधरं परम्।
कलया ते सुराः सर्व्वे किं जानन्ति श्रुतिः परम् ॥ ९९
सर्व्वाधारं सर्व्वरूपं सर्व्ववीजमवीजकम्।
सर्व्वान्तकमनन्तञ्च (क) तेजोरूपं नमाम्यहम् ॥ १००
लक्षं यद्गुणरूपञ्च वर्णनीयं विचक्षणैः।
किं वर्णयामि लक्षं ते तेजोरूपं नमाम्यहम् ॥ १०१
अशरीरं विग्रहवदिन्द्रियवदतीन्द्रियम्।
यदसाक्षि सर्व्वसाक्षि तेजोरूपं नमाम्यहम् ॥ १०२
गमनार्हमपादं यद-चक्षुः सर्व्वदर्शनम्।
हस्तास्यहीनं यद्भोक्त तेजोरूपं नमाम्यहम् ॥ १०३
वेदे निरूपितं वस्तु सन्तः शक्ताश्च वर्णितुम्।
वेदेऽनिरूपितं यत् तत् तेजोरूपं नमाम्यहम् ॥ १०४
सर्व्वेशं यदनीशं यत् सर्व्वादि यदनादि यत्।
सर्व्वात्मकमनात्मं यत् तेजोरूपं नमाम्यहम् ॥ १०५
अहं विधाता जगतां वेदानां जनकः स्वयम्।
पाता धर्म्मो हरो हर्त्ता स्तोतुं शक्ता न कोऽपि यत् ॥ १०६
सेवया तव धर्म्मोऽयं रक्षिताऽरञ्च रक्षति।
तवाज्ञया यं संहर्त्ता लया काले निरूपिते ॥ १०७
निषेकलिपिकर्त्ताहं त्वत्पादाम्भोजसेवया।

(क) सर्व्वान्तःकरणं तच्चेति क्वचित् पाठः।

कर्म्मिणां फलदाता च लङ्घितानाञ्च न प्रभुः ॥ १०८
ब्रह्माण्डे डिम्बसदृशे भूत्वा विषयिणो वयम्।
एवं कतिविधाः सन्ति तेष्वनन्तेषु सेवकाः ॥ १०९
यथा न संख्या रेणूनां तथा तेषामणीयसाम्।
सर्व्वेषां जनकस्तेषो यस्तं स्तोतुञ्च के क्षमाः ॥११०
एकैकलोमविवरे ब्रह्माण्डमेकमेककम्।
यस्यैव महतो विष्णोः षोड़शांशस्तवैव सः ॥ १११
ध्यायन्ति योगिनः सर्व्वे तवैतद्रूपमीप्सितम्।
न भक्ता दास्यनिरताः सेवन्ते चरणाम्बुजम् ॥ ११२
किशोरं सुन्दरतरं यद्रूपं कमनीयकम्।
मन्त्रध्यानानुरूपञ्च दर्शयास्माकमीश्वर ॥ ११३
नवीनजलदश्यामं पीताम्बरधरं परम्।
द्विभुजं मुरलीहस्तं सस्मितं सुमनोहरम् ॥ ११४
मयूरपुच्छचूड़ञ्च मालतीजालमण्डितम्।
चन्दनागुरुकस्तूरी-कुङ्कुमद्रवचर्चितम् ॥ ११५
अमूल्यरत्नसाराणां सुविभूषणभूषितम्।
अमूल्यरत्नरचित-किरीटमुकुटोज्ज्वलम् ॥ ११६
शरत्प्रफुल्लपद्मानां प्रभामुष्टास्यचन्द्रकम्।
पक्वबिम्बविनिन्दैक-मोष्ठाधरविनिन्दितम् ॥११७
पक्वदाड़िम्बवीजाभ-दन्तपङ्क्तिमनोरमम्।
केलिकदम्बमूलेषु स्थितं रासरसोत्सुकम् ॥ ११८
गोपीवक्त्रेक्षिततनुं राधावक्षःस्थलस्थितम्।
एवं वाञ्छितरूपं ते द्रष्टुं केलिरसोत्सुकम् ॥ ११९
इत्येवमुक्त्वा विश्वस्रट् प्रणनाम पुनः पुनः।
एतत्स्तोत्रेण तुष्टाव धर्म्मोऽपि शङ्करः स्वयम् ॥१२०
ननाम भूयो भूयश्च साश्रुपूर्णविलोचनः।
तिष्ठन्तोऽपि पुनः स्तोत्रं प्रचक्रुस्त्रिदशेश्वराः ॥१२१
व्याप्तास्तत्रामराः सर्व्वे श्रीकृष्णतेजसा मुने।
स्तवराजमिमं नित्यं धर्म्मेश-ब्रह्मभिः कृतम् ॥ १२२
पूजाकाले हरेरेव भक्तियुक्तश्च यः पठेत्।
सुदुर्लभां दृढां भक्तिं निश्चलां लभते हरेः ॥ १२३
सुरासुर-मुनीन्द्राणां दुर्लभं दास्यमेव च।
अणिमादिकसिद्धिञ्च सालोक्यादिचतुष्टयम् ॥ १२४
इहैव विष्णुतुल्यश्च विख्यातः पूजितो ध्रुवम्।
वाक्सिद्धिर्मन्त्रसिद्धिश्च भवेत् तस्य विनिश्चितम् ॥१२५
सर्व्वसौभाग्यमारोग्यं यशसा पूरितं जगत्।
पुत्रश्च विद्या-कविता-निश्चलाश्रमलान्वितः ॥ १२६
पत्नी पतिव्रता साध्वी सुशीलाः सुस्थिराः प्रजाः।
कीर्त्तिश्च चिरकालीनाप्यन्ते कृष्णान्तिके स्थितिः १२७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः।

नारायण उवाच।

ध्यात्वा स्तुत्वा च तिष्ठन्तो देवास्ते तेजसः पुरः।
ददृशुस्तेजसो मध्ये शरीरं कमनीयकम् ॥ १
सजलाम्भोदवर्णाभं सस्मितं सुमनोहरम्।
परमाह्लादकं रूपं त्रैलोक्यचित्तमोहनम् ॥ २
गण्डस्थल-कपोलाभ्यां ज्वलन्मकरकुण्डलम्।
सद्रत्ननूपुराभ्याञ्च चरणाम्भोजराजितम् ॥ ३
वह्निशुद्धहरिद्राभ-वस्त्रामूल्यविराजितम्।
मणिरत्नेन्द्रसाराणां स्वेच्छाकौतुकनिर्म्मितैः ॥ ४
भूषितं भूषणै रम्यै-स्तद्रूपेणैव भूषितैः।
विनोदमुरलीयुक्त-विम्बाधरमनोहरम् ॥ ५
प्रसन्नेक्षणपश्यन्तं भक्तानुग्रहकातरम्।
सद्रत्न-गुड़िकायुक्त-कवाटोरःस्थलोज्ज्वलम् ॥ ६
कौस्तुभासक्तसद्रत्न-प्रदीप्ततेजसोज्ज्वलम्।
अत्र तेजसि चार्व्वङ्गीं ददृशू राधिकाभिधाम् ॥ ७
पश्यन्तं सस्मितं कान्तं पश्यन्तीं वक्रचक्षुषा।
मुक्तापङ्क्तिविनिन्दैक-दन्तपङ्क्तिविराजिताम् ॥ ८
ईषद्धास्यप्रसन्नास्यां शरत्पङ्कजलोचनाम्।
शरत्पार्व्वणचन्द्राभा-विनिन्दास्यमनोहराम् ॥ ९
बन्धुजीवप्रभामुष्टा-धरौष्ठरुचिरां वराम्।
रणन्मञ्जीरयुग्मेन पादाम्बुजविराजिताम् ॥ १०
मणीन्द्राणां प्रभामोष-नखराजीविराजिताम्।
कुङ्कुमाभासमाच्छाद्य-पादाधोरागभूषिताम् ॥ ११
अमूल्यरत्नसाराणां पाशकश्रेणिशोभिताम्।
हुताशनविशुद्धांशु-कामूल्यज्वलितोज्ज्वलाम् ॥ १२
महामणीन्द्रसाराणां किङ्किणीमध्यसंयुताम्।
सद्रत्नहारकेयूर-करकङ्कणभूषिताम् ॥ १३
रत्नेन्द्ररचितोत्कृष्ट-कपोलोज्ज्वलकुण्डलाम्।
कर्णोपरि-मणीन्द्राणां कर्णभूषणभूषिताम् ॥ १४

खगेन्द्रचञ्चुनासाग्र-गजेन्द्रमौक्तिकान्विताम्।
मालतीमालया बद्ध-(क) कवरीभारबिभ्रतीम्॥ १५
मणीनां कौस्तुभेन्द्राणां वक्षःस्थलसुशोभिताम्।
पारिजातप्रसूनानां मालाजालोज्ज्वलां वराम्॥ १६
रत्नाङ्गुरीयनिकरैः कराङ्गुलिविभूषिताम्॥ १७
दिव्यशङ्खविकारैश्च चित्ररागविभूषितैः।
सूक्ष्मसूत्रकृतै रम्यै-भूषितां शङ्खभूषणैः॥ १८
सद्रत्नसारगुटिका-रक्तसूत्राक्तशोभिताम्।
प्रतप्तस्वर्णवर्णाभा-माच्छाद्य चारुविग्रहाम्॥ १९
नितम्बश्रोणिललितां स्तनपीनोन्नतां नताम्।
भूषितां भूषणैः सर्व्वैं-स्तत्सौन्दर्य्यैश्च भूषितैः॥ २०
विस्मिताखिदृशाः सर्व्वे दृष्ट्वेशमीश्वरीं वराम्।
तुष्टुवुस्ते सुराः सर्व्वे पूर्णसर्व्वमनोरथाः॥ २१

ब्रह्मोवाच।

तव चरणसरोजे मन्मनश्चञ्चरीटो
भ्रमतु सततमीश प्रेमभक्त्यासवाप्तौ।
भवनमरणरोगात् पाहि शान्त्यौषधाङ्गे
सुदृढ़सुपरिपक्वां देहि भक्तिञ्च दास्यम्॥ २२

शङ्कर उवाच।

भवजलधिनिमग्नश्चित्तमीनो मदीयो
भ्रमति सततमस्मिन् घोरसंसारकूपे।
विषयमतिविनिन्द्यं सृष्टिसंहाररूप-
मपनय तव भक्तिं देहि पादारविन्दे॥ २३

धर्म्म उवाच।

तव निजजनसार्द्धं सङ्गमो मे मदीश
भवतु विषयबन्धच्छेदने तीक्ष्णखड्गः।
तव चरणसरोजस्थानदानैकहेतु-
र्जनुषि जनुषि भक्तिं देहि पादारविन्दे॥ २४

नारायण उवाच।

इत्येवं स्तवनं कृत्वा परिपूर्णकमानसाः।
कामपूरस्य पुरत-स्तिष्ठन्तो राधिकापतेः॥ २५
सुराणां स्तवनं श्रुत्वा तानुवाच कृपानिधिः।
हितं तथ्यञ्च वचनं स्मेराननसरोरुहः॥ २६

श्रीकृष्ण उवाच।

तिष्ठतागच्छत पुरीं मदीयां नात्र संशयः।
शिवाश्रयाणां कुशलं प्रष्टुं युक्तमसाम्प्रतम्॥ २७
निश्चिन्ता भवतात्रैव का चिन्ता वो मयि स्थिते॥२८
स्थितोऽहं सर्व्वजीवेषु प्रत्यक्षोऽहं स्तवेन वै।
युष्माकं यदभिप्रायं सर्व्वं जानामि निश्चितम्॥ २९
शुभाशुभञ्च यत् कर्म्म काले खलु भविष्यति।
महत् क्षुद्रञ्च यत् कर्म्म सर्व्वं कालकृतं सुराः॥ ३०
स्वस्वकाले च तरवः फलिनः पुष्पिणः सदा।
परिपक्कफलाः काले कालेऽपक्कफलान्विताः॥ ३१
सुखं दुःखं विपत् सम्पत् शोकश्चिन्ता शुभाशुभम्।
स्वकर्म्मफलनिष्ठञ्च सर्व्वं कालेऽप्युपस्थितम्॥ ३२
न हि कस्य प्रियः को वा विप्रियो वा जगत्त्रये।
काले कार्य्यवशात् सर्व्वे भवन्त्येवाप्रियाः प्रियाः॥३३
राजानो मनवः पृथ्व्यां दृष्टा युष्माभिस्तत्र वै।
स्वकर्म्मफलपाकेन सर्व्वे कालवशं गताः॥ ३४
युष्माकमधुनात्रैव गोलोके यत् क्षणं गतम्।
पृथिव्यां तत्क्षणेनैव सप्तमन्वन्तरं गतम्॥ ३५
इन्द्राः सप्त गतास्तत्र देवेन्द्रश्चाष्टमोऽधुना।
कालचक्रं भ्रमत्येवं मदीयञ्च दिवानिशम्॥ ३६
इन्द्राश्च मनवो भूपाः सर्व्वे कालवशं गताः।
कीर्त्तिः पृथ्वी पुण्यमशं कथामात्रावशेषिताः॥ ३७
अधुनापि च राजानो दुष्टाश्च हरिनिन्दकाः।
बभूवुर्बहवो भूमौ महाबलपराक्रमाः॥ ३८
सर्व्वे यास्यन्ति कालेन कालान्तकवशं ध्रुवम्॥ ३९
उपस्थितोऽपि कालोऽयं वातो वाति निरन्तरम्।
वह्निर्दहति सूर्य्यश्च तपत्येव ममाज्ञया॥ ४०
व्याधयः सन्ति देहेषु मृत्युश्चरति जन्तुषु।
वर्षन्त्येते जलधराः सर्व्वे देवा ममाज्ञया॥ ४१
ब्रह्मणनिष्ठा विप्राश्च तपोनिष्ठास्तपोधनाः।
ब्रह्मर्षयो ब्रह्मनिष्ठा योगनिष्ठाश्च योगिनः॥ ४२
ते सर्व्वे मद्भयाद्भीताः स्वधर्म्मकर्म्मतत्पराः।
मद्भक्ताश्चैव निःशङ्काः कर्म्मनिर्म्मूलकारकाः॥ ४३
देवाः कालस्य कालोऽहं विधाता धातुरेव च।
संहारकर्त्तुः संहर्त्ता पातुः पाता परात्परः॥ ४४
ममाज्ञयाऽयं संहर्त्ता नाम्ना तेन हरः स्मृतः।
त्वं विश्वसृक् सृष्टिहेतोः पाता धर्म्मश्च रक्षणात्॥४५
ब्रह्मादितृणपर्य्यन्तं सर्व्वेषामहमीश्वरः।
स्वकर्म्मफलदाताहं कर्म्मनिर्म्मूलकारकः॥ ४६
अहं यान् संहरिष्यामि कस्तेषामपि रक्षिता।

(क) वक्रेति वक्रमिति च क्वचित् पाठः।

यावदहं पालयिष्यामि तेषां हन्ता न कोऽपि च ॥४७
सर्व्वेषामपि संहर्त्ता स्रष्टा पाताहमेव च ।
नाहं शक्तश्च भक्तानां संहारे नित्यदेहिनाम् ॥ ४८
भक्ता ममानुगा नित्यं मत्पादार्च्चनतत्पराः ।
अहं भक्तान्तिके शश्वत् तेषां रक्षणहेतवे ॥ ४९
सर्व्वे नश्यन्ति ब्रह्माण्डे प्रभवन्ति पुनः पुनः ।
न मे भक्ताः प्रणश्यन्ति निःशङ्काश्च निरापदः ५०
ततो विपश्चितः सर्व्वे दास्यं वाञ्छन्ति नो वरम् ।
ये मां दास्यं प्रयाचन्ते धन्यास्तेऽन्ये च वञ्चिताः ॥५१
जन्म-मृत्यु-जराव्याधि-भयञ्च यमताड़ना ।
अन्येषां कर्म्मिणामस्ति न भक्तानाञ्च कर्म्मिणाम् ॥५२
भक्ता न लिप्ताः पापेषु पुण्येषु सर्व्वकर्म्मणाः ।
अहं धुनोमि तेषाञ्च कर्म्मभोगांश्च निश्चितम् ॥ ५३
अहं प्राणाश्च भक्तानां भक्ताः प्राणा ममापि च ।
ध्यायन्ति ये च मां नित्यं तान् स्मरामि दिवानिशम् ५४
चक्रं सुदर्शनं नाम षोड़शारं सुतीक्ष्णकम् ।
यत्तेजःषोड़शांशोऽपि नास्ति सर्व्वेषु जीविषु ॥ ५५
भक्तान्तिके तु तच्चक्रं दत्त्वा रक्षार्थमीप्सितम् ।
तथापि न प्रतीतिर्मे यामि तेषाञ्च सन्निधिम् ॥ ५६
न मे स्वास्थ्यञ्च वैकुण्ठे गोलोके राधिकान्तिके ।
यत्र तिष्ठन्ति भक्तास्ते तत्र तिष्ठाम्यहर्निशम् ॥ ५७
प्राणेभ्यः प्रेयसी राधा स्थितोरसि दिवानिशम् ।
यूयं प्राणाधिका लक्ष्मीन मे भक्तात्परा प्रिया(क)५८
भक्तदत्तञ्च यद्द्रव्यं भक्त्याश्नामि सुरेश्वराः ।
अभक्तदत्तं नाश्नामि ध्रुवं भुङ्क्ते बलिः स्वयम् ॥ ५९
स्त्री-पुत्र-स्वजनांस्त्यक्त्वा ध्यायन्ति मामहर्निशम् ।
युष्मान् विहाय तान् नित्यं स्मराम्यहमहर्निशम् ॥६०
द्वेष्टा सदा मे भक्तानां ब्राह्मणानां गवामपि ।
क्रतूनां देवतानाञ्च हिंसां कुर्व्वन्ति निश्चितम् ॥ ६१
तदाऽचिरं ते नश्यन्ति यथा वह्नौ तृणानि च ।
न कोऽपि रक्षिता तेषां मयि हन्तर्य्युपस्थिते ॥ ६२
यास्यामि पृथिवीं देवा यात यूयं स्वमालयम् ।
यूयञ्चैवांशरूपेण शीघ्रं गच्छत भूतलम् ॥ ६३
इत्युक्त्वा जगतां नाथो गोपानाहूय गोपिकाम् ।
उवाच मधुरं सत्यं वाक्यं तत्समयोचितम् ॥ ६४
गोपा गोप्यश्च शृणुत यात नन्दव्रजं परम् ।
वृषभानुगृहं क्षिप्रं गच्छ त्वमपि राधिके ॥ ६५
वृषभानुप्रिया साध्वी नाम्ना गोपी कलावती ।
सुबलस्य सुता सा च कमलांशसमुद्भवा ॥ ६६
पितॄणां मानसी कन्या धन्या मान्या च योषिताम् ।
पुरा दुर्व्वाससः शापाज्जन्म तस्या व्रजे गृहे ॥ ६७
तस्यां लभस्व त्वं जन्म शीघ्रं नन्दव्रजं व्रज ।
त्वामहं बालरूपेण गृह्णामि कमलानने ॥ ६८
त्वं मे प्राणाधिके राधे तव प्राणाधिकोऽप्यहम् ।
न किञ्चिदावयोर्भिन्न-मेकाङ्गं सर्व्वदैव हि ॥ ६९
श्रुत्वैवं राधिका तत्र रुरोद प्रेमविह्वला ।
पपौ चक्षुश्चकोराभ्यां मुखचन्द्रं हरेर्मुने ॥ ७०
जग्मुर्लभत गोपाश्च गोप्यश्च पृथिवीतले ।
गोपानामुत्तमानाञ्च मन्दिरे मन्दिरे शुभे ॥ ७१
एतस्मिन्नन्तरे सर्व्वे ददृशू रथमुत्तमम् ।
मणिरत्नेन्द्रसारेण हीरकेण परिच्छदम् ॥ ७२
श्वेतचामरलक्षेण शोभितं दर्पणायुतैः ।
सूक्ष्मकाषायवस्त्रेण वह्निशुद्धेन भूषितम् ॥ ७३
सद्रत्नकलसानाञ्च सहस्रेण सुशोभितम् ।
पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥ ७४
पार्षदप्रवरैर्युक्तं शतकुम्भमयं शुभम् ।
तेजःस्वरूपमतुलं शतसूर्य्यसमप्रभम् ॥ ७५
तत्रस्थं पुरुषं श्याम-सुन्दरं कमनीयकम् ।
शङ्ख-चक्र-गदा-पद्म-धरं पीताम्बरं परम् ॥ ७६
किरीटिनं कुण्डलिनं वनमालाविभूषितम् ।
चन्दनागुरु-कस्तूरी-कुङ्कुमद्रवचर्च्चितम् ॥ ७७
चतुर्भुजं स्मेरवक्त्रं भक्तानुग्रहकातरम् ।
मणिरत्नेन्द्रसाराणां सारभूषणभूषितम् ॥ ७८
देवीं तद्वामतो रम्यां शुक्लवर्णां मनोहराम् ।
वेणुवीणाग्रन्थहस्तां भक्तानुग्रहकातराम् ।
विद्याधिष्ठातृदेवीञ्च ज्ञानरूपां सरस्वतीम् ॥ ७९
अपरां दक्षिणे रम्यां शरच्चन्द्रसमप्रभाम् ।
तप्तकाञ्चनवर्णाभां सस्मितां सुमनोहराम् ॥ ८०
सद्रत्नकुण्डलाभ्याञ्च सुकपोलविराजिताम् ।
अमूल्यरत्नखचिता-मूल्यवस्त्रेण भूषिताम् ॥ ८१
अमूल्यरत्नकेयूर-कर-कङ्कणशोभिताम् ।
सद्रत्नसारमञ्जीर-कलशब्दसमन्विताम् ॥ ८२
पारिजातप्रसूनानां माला-वक्षःस्थलोज्ज्वलाम् ।

(क) परात्मय इति च पाठः ।

प्रफुल्लमालतीमाला-संयुक्ताकवरीं शुभाम् ॥ ८३
शरच्चन्द्रप्रभामुष्ट-मुखचारुविभूषिताम् ॥ ८४
कस्तूरीविन्दुसंयुक्त-सिन्दूरतिलकान्विताम्।
सुचारुकज्जलासक्त-शरत्पङ्कजलोचनाम् ॥ ८५
सहस्रदलसंयुक्त-लीलाकमलसंयुताम्।
नारायणञ्च पश्यन्तं पश्यन्तीं वक्रचक्षुषा ॥ ८६
अवरुह्य रथात् तूर्णं सस्त्रीकः सहपार्षदः।
जगाम च सभां रम्यां गोप-गोपीसमन्विताम् ॥ ८७
देवा गोपाश्च गोप्यश्चोत्तस्थुः प्राञ्जलयो मुदा।
सामवेदोक्तस्तोत्रेण कृतेन च सुरर्षिभिः ॥ ८८
गत्वा नारायणो देवो विलीनः कृष्णविग्रहे।
दृष्ट्वा च परमाश्चर्य्यं ते सर्व्वे विस्मयं ययुः ॥ ८९
एतस्मिन्नन्तरे तत्र शातकुम्भमयाद्रथात्।
अवरुह्य स्वयं विष्णुः पाता च जगतां पतिः॥ ९०
आजगाम चतुर्बाहु-वनमालाविभूषितः।
पीताम्बरधरः श्रीमान् सस्मितः सुमनोहरः ॥ ९१
सर्व्वालङ्कारशोभाढ्यः सूर्य्यकोटिसमप्रभः।
उत्तस्थुस्ते च तं दृष्ट्वा तुष्टुवुः प्रणता मुने ॥ ९२
स चापि लीनस्तत्रैव राधिकेश्वरविग्रहे।
ते दृष्ट्वा महदाश्चर्य्यं विस्मयं परमं ययुः ॥ ९३
संविलीने हरेरङ्गे श्वेतद्वीपनिवासिनि।
एतस्मिन्नन्तरे तूर्ण-माजगाम त्वरान्वितः ॥ ९४
शुद्धस्फटिकसङ्काशो नाम्ना सङ्कर्षणः स्मृतः।
सहस्रशीर्षा पुरुषः शतसूर्य्यसमप्रभः ॥ ९५
आगतं तुष्टुवुः सर्व्वे दृष्ट्वा तं विष्णुविग्रहम्।
स चागत्य नतस्कन्ध-स्तुष्टाव राधिकेश्वरम् ॥ ९६
सहस्रमूर्द्धा भक्त्या च प्रणनाम च नारद।
आवाञ्च धर्म्मपुत्त्रौ द्वौ नरनारायणाभिधौ ॥ ९७
लीनोऽहं कृष्णपादाब्जे बभूव फाल्गुनो वरः।
ब्रह्मेश-शेष-धर्म्माश्च तस्थुरेकत्र तत्र वै ॥ ९८
एतस्मिन्नन्तरे देवा ददृशू रथमुत्तमम्।
स्वर्णसारविकारञ्च नानारत्नपरिच्छदम् ॥ ९९
मणीन्द्रसारसंयुक्तं वह्निशुद्धांशुकान्वितम्।
श्वेतचामरसंयुक्तं भूषितं दर्पणायुतैः ॥ १००
सद्रत्नसारकलस-समूहेन विराजितम्।
पारिजातप्रसूनानां मालाजालैः सुशोभितम् ॥ १०१
सहस्रचक्रसंयुक्तं मनोयायि-मनोरमम्।
ग्रीष्मसध्याह्नमार्त्तण्ड-प्रभामोषकरं परम् ॥ १०२
मुक्ता-माणिक्य-वज्राणां समूहेन समुज्ज्वलम्।
चित्रपुत्तलिका-पुष्प-सरःकाननचित्रितम् ॥ १०३
देवानां दानवानाञ्च रथानां प्रवरं मुने।
यत्नेन शङ्करप्रीत्या निर्म्मितं विश्वकर्म्मणा ॥ १०४
पञ्चाशद्योजनोर्द्धञ्च चतुर्योजनविस्तृतम्।
रतितल्पसमायुक्तैः शोभितं शतमन्दिरैः ॥ १०५
तत्रस्थां ददृशुर्देवीं रत्नालङ्कारभूषिताम्।
प्रदग्धस्वर्णसाराणां प्रभामोषकरद्युतिम् ॥ १०६
तेजःस्वरूपमतुलां मूलप्रकृतिमीश्वरीम्।
सहस्रभुजसंयुक्तां नानायुधसमन्विताम् ॥ १०७
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकातराम्।
गण्डस्थल-कपोलाभ्यां सद्रत्नकुण्डलोज्ज्वलाम्।
रत्नेन्द्रसाररचित-क्वणन्मञ्जीररञ्जिताम् ॥ १०८
मणीन्द्रमेखलायुक्त-मध्यदेशसुशोभनाम्।
सद्रत्नसारकेयूर-करकङ्कणभूषिताम् ॥ १०९
मन्दारपुष्पमालाभि-रुरःस्थलसमुज्ज्वलाम्।
नितम्बकठिनश्रोणि-पीनोन्नतकुचानताम् ॥ ११०
शरत्सुधाकराभास-विनिन्द्यास्यमनोहराम्।
कज्जलोज्ज्वलरेखाक्त-शरत्पङ्कजलोचनाम् ॥ १११
चन्दनागुरुकस्तूरी-चित्रपत्रकभूषिताम्।
नवीनबन्धुजीवाभा-मोष्ठाधरसुशोभिताम् ॥ ११२
मुक्तापङ्क्तिप्रभामुष्ट-दन्तराजिविराजिताम्।
प्रफुल्लमालतीमाला-संसक्तकवरीं वराम् ॥ ११३
पक्षीन्द्रचञ्चुनासाग्र-गजेन्द्रमौक्तिकान्विताम् ॥ ११४
वह्निशुद्धांशुकासार-ज्वलितेन समुज्ज्वलाम्।
सिंहपृष्ठसमारूढां सुताभ्यां सहितां मुदा ॥ ११५
अवरुह्य रथात् तूर्णं श्रीकृष्णं प्रणनाम च।
सुताभ्यां सहसा देवी समुवास वरासने ॥ ११६
गणेशः कार्त्तिकेयश्च नत्वा कृष्णं परात्परम्।
ननाम शङ्करं धर्म्म-मनन्तं कमलोद्भवम् ॥ ११७
उत्तस्थुराराात् ते देवा दृष्ट्वा तौ त्रिदशेश्वरौ।
आशिषञ्च ददुर्देवा वासयामास (क) सन्निधौ।
ताभ्यां सह सदालापं चक्रुर्देवा मुदान्विताः ॥ ११८
तस्थुर्देवाः सभामध्ये देवी च पुरतो हरेः।

(क) वासयामासेत्यस्य देवगण इति कर्त्तृनिर्द्देशम्। वासयामासु इति च पाठः, तत्र विसर्गलोप आर्षः।

गोपा गोप्यश्च बहुशो बभूवुर्विस्मयाकुलाः ॥ ११९
उवाच कमलां कृष्णः स्मेराननसरोरुहः ।
त्वं गच्छ भीष्मकगृहं नानारत्नसमन्वितम् ॥ १२०
वैदर्भ्या उदरे जन्म लभ देवि सनातनि ।
तव पाणिं ग्रहीष्यामि गत्वाहं कुण्डिनं सति ॥ १२१
ता देव्यः पार्व्वतीं दृष्ट्वा समुत्थाय त्वरान्विताः ।
रत्नसिंहासने रम्ये वासयामासुरीश्वरीम् ॥ १२२
विप्रेन्द्र पार्व्वती लक्ष्मीर्वागधिष्ठातृदेवता ।
तस्थुरेकासने तत्र सम्भाष्य च यथोचितम् ॥ १२३
ताश्च सम्भाषयामासुः सम्प्रीत्या गोपकन्यकाः ।
जग्मुर्गोपालिकाः काश्चिन्मुदा तासाञ्च सन्निधौ ॥१२४
श्रीकृष्णः पार्व्वतीं तत्र समुवाच जगत्पतिः ।
देवि त्वमंशरूपेण व्रज नन्दव्रजं शुभे ॥ १२५
उदरे च यशोदायाः कल्याणि नन्दरेतसा ।
लभ जन्म महामाये सृष्टिसंहारकारिणि ॥ १२६
ग्रामे ग्रामे च पूजां ते कारयिष्यामि भूतले ।
कार्त्स्न्ये महीतले भक्त्या नगरे नगरेषु च ॥ १२७
त्वां तत्राधिष्ठातृदेवीं पूजयिष्यन्ति मानवाः ।
द्रव्यैर्नानाविधैर्दिव्यै-र्बलिभिश्च मुदान्विताः ॥ १२८
त्वयि भूस्पर्शमात्रेण सूतिकामन्दिरे शिवे ।
पिता मां तत्र संस्थाप्य त्वामादाय गमिष्यति ॥ १२९
कंसदर्शनमात्रेण गमिष्यसि शिवान्तिकम् ।
भारावतारणं कृत्वा गमिष्यामि स्वमाश्रमम् ॥ १३०
इत्युक्त्वा श्रीहरिस्तूर्ण-मुवाच च षडाननम् ।
अंशरूपेण वत्स त्वं गमिष्यसि महीतलम् ॥ १३१
जाम्ववत्याश्च गर्भे च लभ जन्म सुरेश्वर ।
अंशेन देवताः सर्व्वा गच्छन्तु धरणीतलम् ।
भारहारं करिष्यामि वसुधायाश्च निश्चितम् ॥ १३२
इत्युक्त्वा राधिकानाथ-स्तस्थौ सिंहासने वरे ।
तस्थुर्देवाश्च देव्यश्च गोपा गोप्यश्च नारद ॥ १३३
एतस्मिन्नन्तरे ब्रह्मा समुत्तस्थौ हरेः पुरः ।
पुटाञ्जलिर्जगन्नाथ-मुवाच विनयान्वितः ॥ १३४

ब्रह्मोवाच ।

अवधानं कुरु विभो किङ्करस्य निवेदने ।
आज्ञां कुरु महाभाग कस्य कुत्र स्थलं भुवि ॥ १३५
भर्त्ता पातोद्धारकर्त्ता सेवकानां प्रभुः सदा ।
सभृत्यः सर्व्वदा भक्त्या ईश्वराज्ञां करोति यः ॥ १३६
के देवाः केन रूपेण देव्यश्च कलया कया ।
कुत्र कस्याभिधेयश्च विषयश्च महीतले ॥ १३७
ब्रह्मणो वचनं श्रुत्वा प्रत्युवाच जगत्पतिः ।
यस्य यत्रावकाशश्च कथयामि विधानतः ॥ १३८

श्रीकृष्ण उवाच ।

कामदेवो रौक्मिणेयो रतिर्मायावती सती ।
शम्बरस्य गृहे या च छायारूपेण संस्थिता ॥१३९
त्वं तस्य पुत्रो भविता नाम्नाऽनिरुद्ध एव च ।
भारती शोणितपुरे वाणपुत्री भविष्यति ॥ १४०
अनन्तो देवकीगर्भा-द्रौहिणेयो जगत्पतिः ।
मायया गर्भसङ्कर्षान्नाम्ना सङ्कर्षणः स्मृतः ॥ १४१
कालिन्दी सूर्य्यतनया गङ्गांशेन महीतले ।
अर्द्धांशेनैव तुलसी लक्षणा राजकन्यका ॥ १४२
सावित्री वेदमाता च नाम्ना नाग्नजिती सती ।
वसुन्धरा सत्यभामा शैव्या देवी सरस्वती ॥ १४३
रोहिणी मित्रविन्दा च भविता राजकन्यका ।
सूर्य्यपत्नी रत्नमाला कलया च जगद्गुरोः ॥ १४४
स्वाहांशेन सुशीला च रुक्मिण्याद्याः स्त्रियो नव ।
दुर्गार्द्धांशा जाम्बवती महिषीणां दश स्मृताः ॥१४५
अर्द्धांशेन शैलपुत्री यातु जाम्बवती गृहम् ।
कैलासे शङ्कराज्ञा च बभूव पार्व्वतीं प्रति(क) ॥ १४६
कैलासगामिनं विष्णुं श्वेतद्वीपनिवासिनम् ।
आलिङ्गनं देहि कान्ते नास्ति दोषो ममाज्ञया॥१४७

ब्रह्मोवाच ।

कथं शिवाज्ञा तां देवीं बभूव राधिकापते ।
विष्णोः सम्भाषणे पूर्व्वं श्वेतद्वीपनिवासिनः ॥१४८

श्रीकृष्ण उवाच ।

पुरा गणेशं द्रष्टुञ्च प्रजग्मुः सर्व्वदेवताः ।
श्वेतद्वीपात् स्वयं विष्णुर्जगाम शङ्करस्तवात् ॥ १४९
दृष्ट्वा गणेशं मुदितः समुवास सुखासने ।
सुखेन ददृशुः सर्व्वे त्रैलोक्यमोहनं वपुः ॥ १५०
किरीटिनं कुण्डलिनं पीताम्बरधरं वरम् ।

(क) अष्टादशसहस्रश्लोकात्मकमिदं ब्रह्मवैवर्त्तपुराणमिति श्रीमद्भागवतादौ कथितं सम्प्रति गणनया पुनरत्र एकविंशतिसहस्रश्लोका लभ्यन्ते तत्त्रिसहस्रश्लोका अत्र प्र॰क्षिप्ता इत्यकामेनापि वक्ष्यन्ते अतः इत्यविंशतिश्लोकाः प्रक्षिप्तान्तर्गता एव ।

सुन्दरं श्यामरूपञ्च नवयौवनसंयुतम् ॥ १५१
चन्दनागुरुकस्तूरी-कुङ्कुमद्रवसंयुतम्।
रत्नालङ्कारशोभाढ्यं स्मेराननसरोरुहम् ॥ १५२
रत्नसिंहासनस्थञ्च पार्षदैः परिवेष्टितम्।
वन्दितेन सुरैः सर्व्वैः शिवेन पूजितं स्तुतम् ॥ १५३
तं दृष्ट्वा पार्व्वती विष्णुं प्रसन्नवदनेक्षणा।
मुखमाच्छादनं चक्रे वाससा व्रीड़या सती ॥ १५४
अतीवसुन्दरं रूपं दर्शं दर्शं पुनः पुनः।
ददर्श मुखमाच्छाद्य निमेषरहिता सती ॥ १५५
परमाद्भुतवेशञ्च सस्मिता वक्रचक्षुषा।
सुखसागरसंमग्ना बभूव पुलकाञ्चिता ॥ १५६
क्षणं ददर्श पञ्चास्यं शुभ्रवर्णं त्रिलोचनम्।
त्रिशूलपट्टिशधरं कन्दर्पकोटिसुन्दरम् ॥ १५७
क्षणं ददर्श श्यामं तमेकास्यञ्च द्विलोचनम्।
चतुर्भुजं पीतवस्त्रं वनमालाविभूषितम् ॥ १५८
एकं ब्रह्म मूर्त्तिभेद-मभेदं वा निरूपितम्।
दृष्ट्वा बभूव सा माया सकामा विष्णुमायया ॥ १५९
महदंशास्त्रयो देवा ब्रह्म-विष्णु-महेश्वराः।
ताभ्यामुत्कर्षपाताच्च श्रेष्ठः सत्त्वगुणात्मकः ॥ १६०
दृष्ट्वा तं पार्व्वती भक्त्या पुलकाञ्चितविग्रहा।
मनसा पूजयामास परमात्मानमीश्वरम् ॥ १६१
दुर्गान्तराभिप्रायञ्च बुबुधे शङ्करः स्वयम्।
सर्व्वान्तरात्मा भगवान-न्तर्यामी जगत्पतिः ॥ १६२
दुर्गाञ्च निर्ज्जनीभूय तामुवाच हरः स्वयम्।
बोधयामास विविधं हितं तथ्यमखण्डितम् ॥ १६३

शङ्कर उवाच।

निवेदनं मदीयञ्च निबोध शैलकन्यके।
शृङ्गारं देहि भद्रं ते हरये परमात्मने ॥ १६४
अहं ब्रह्मा च विष्णुश्च ब्रह्मैकञ्च सनातनम्।
देवैको भेदरहितो विषयान्मूर्त्तिभेदकः ॥ १६५
एका प्रकृतिः सर्व्वेषां माता त्वं सर्व्वरूपिणी।
स्वयम्भुवश्च वाणी त्वं लक्ष्मीर्नारायणोरसि ॥ १६६
मम वक्षसि दुर्गा त्वं निबोधाध्यात्मकं सति।
शिवस्य वचनं श्रुत्वा तमुवाच सुरेश्वरी ॥ १६७

पार्व्वत्युवाच।

दीनबन्धो कृपासिन्धो तव मामकृपा कथम्।
सुचिरं तपसा लब्धो नाथस्त्वं जगतां मया ॥ १६८
मादृशीं किङ्करीं नाथ न परित्यक्तुमर्हसि।
अयोग्यमीदृशं वाक्यं मां मा वद महेश्वर ॥ १६९
तव वाक्यं महादेव करिष्याम्येव पालनम्।
देहान्तरे जन्म लब्ध्वा भजिष्यामि हरिं हर ॥१७०
इत्येवं वचनं श्रुत्वा विरराम महेश्वरः।
उच्चैर्जहासाभयदः पार्व्वत्यै चाभयं ददौ ॥ १७१
तत्प्रतिज्ञापालनार्थं पार्व्वती जाम्बवद्गृहे।
लभिष्यति जनुर्धातर्नाम्ना जाम्बवती सती ॥ १७२

ब्रह्मोवाच।

भूमौ कतिविधे भूपे संस्थिते पार्व्वती कथम्
ललाभ भारते जन्म निन्दिते भाल्लुके गृहे ॥ १७३

श्रीकृष्ण उवाच।

रामावतारे त्रेतायां देवांशाश्च ययुर्महीम्।
हिमालयांशो भल्लूको जाम्बवान् रामकिङ्करः ॥ १७४
रामस्य वरदानेन चिरजीवी श्रिया युतः।
कोटिसिंहबलाधानं विधत्ते च महाबलः ॥ १७५
पितुरंशग्रहं गत्वा(क)जगामांशेन भूतलम्।
एवं पूर्व्वस्य वृत्तान्तं कथितं शृणु मन्मुखात् ॥ १७६
सर्व्वेषाञ्च सुराणाञ्चै-वांशा गच्छन्तु भूतलम्।
नृपपुत्रा महात्मानो भविष्यन्ति रणे(ख)विधे ॥ १७७
कमलाकलया सर्व्वा भवन्तु नृपकन्यकाः।
मन्महिष्यो भविष्यन्ति सहस्राणाञ्च षोड़श ॥ १७८
धर्म्मोऽयमंशरूपेण पाण्डुपुत्रो युधिष्ठिरः।
वायोरंशाद्भीमसेनोवज्र्यंशादर्ज्जुनःस्वयम्(ग)१७९
नकुलः सहदेवश्च स्वर्वैद्यांशसमुद्भवः।
सूर्य्यांशः कर्णवीरश्च विदुरः शमनः स्वयम् ॥ १८०
दुर्य्योधनः कलेरंशः समुद्रांशश्च शान्तनुः।
अश्वत्थामा शङ्करांशो द्रोणो वह्न्यंशसम्भवः ॥ १८१
चन्द्रांशोऽप्यभिमन्युश्च भीष्मश्चैव स्वयं वसुः।
वसुदेवः कश्यपांशोऽप्यदित्यंशा च देवकी ॥ १८२
वस्वंशो नन्दगोपश्च यशोदा वसुकामिनी।
द्रौपदी कमलांशा च यज्ञकुण्डसमुद्भवा ॥ १८३
हुताशनांशो भगवान् धृष्टद्युम्नो महाबलः।
सुभद्रा शतरूपांशा देवकीगर्भसम्भवा ॥ १८४

---

(क) दुर्गेति च पाठः।
(ख) वने इति क्वचित् पाठः।
(ग) नरशिरर्ज्जुने इति च पाठः।

देवा गच्छन्तु पृथिवीं-मंशेन भारहारकाः।
कलया देवपत्न्यश्च गच्छन्तु पृथिवीतलम् ॥ १८५
इत्येवमुक्त्वा भगवान् विरराम च नारद।
सर्व्वं विवरणं श्रुत्वा तत्रोवास प्रजापतिः ॥ १८६
कृष्णस्य वामे वाग्देवी दक्षिणे कमलालया।
पुरतो देवताः सर्व्वाः पार्व्वती चापि नारद ॥ १८७
गोप्यो गोपाश्च पुरतो राधावक्षःस्थलस्थिता।
एतस्मिन्नन्तरे सा च तमुवाच व्रजेश्वरी ॥ १८८

राधिकोवाच।

शृणु नाथ प्रवक्ष्यामि किङ्करीवचनं प्रभो।
प्राणा दहन्ति सतत-मान्दोलयति मे मनः ॥ १८९
चक्षुर्निमीलनं कर्त्तु-मशक्ता तव दर्शने।
त्वया विना कथं नाथ यास्यामि धरणीतलम् ॥ १९०
कतिकालान्तरं बन्धो मेलनं मे त्वया सह।
प्राणेश्वर ब्रूहि सत्यं भविष्यत्येव गोकुले ॥ १९१
निमेषञ्च युगशतं भविता मे त्वया विना।
कं द्रक्ष्यामि क्व यास्यामि को वा मां पालयिष्यति १९२
मातरं पितरं बन्धुं भ्रातरं भगिनीं सुतम्।
त्वया विनाहं प्राणेश चिन्तयामि न कं क्षणम् ॥ १९३
करोषि मायया च्छन्नां माञ्चेन्नाथेश भूतले।
विस्मृतां विभवं दत्त्वा सत्यं मे शपथं कुरु ॥ १९४
अनुक्षणं मम मनो-मधुपो मधुसूदन।
करोतु भ्रमणं नित्यं समाध्वीके पदाम्बुजे ॥ १९५
यत्र तत्र च यस्यां वा योनौ जन्म भवत्विदम्।
त्वं स्वस्य स्मरणं दास्यं मह्यं दास्यसि वाञ्छितम् १९६
कृष्णस्त्वं राधिकाहञ्च प्रेमसौभाग्यमावयोः।
न विस्मरामि भूमौ च देहि मह्यं परं वरम् ॥ १९७
यथा तन्वा सह प्राणाः शरीरं छायया सह।
तथावयोर्जन्म यातु देहि मह्यं वरं विभो ॥ १९८
चक्षुर्निमेषविच्छेदो भविता नावयोर्भुवि।
तत्रागत्यापि कुत्रापि देहि मह्यं वरं प्रभो ॥ १९९
मम प्राणैस्तव तनुः केन वा कारुणा हरे।
आत्मनो मुरली-पादौ मनसा वा विनिर्म्मितौ ॥ २००
स्त्रियः कतिविधाः सन्ति पुरुषा वा पुरुष्टुतः।
नास्ति कुत्रापि कान्ता वा कान्तासक्ता च मादृशी २०१
तव देहार्द्धभागेन केन वाहं विनिर्म्मिता।
इदमेवावयो[illegible]न्दो नास्त्यतस्त्वयि मे मनः ॥ २०२
ममात्ममानसप्राणां-स्त्वयि संस्थाप्य केन वा।
तवात्ममानसप्राणा मयि वासं स्थिता अपि ॥ २०३
अतो निमेषविरहा-दात्मनो विक्लवो मनः।
प्रदग्धं सन्ततं प्राणा दहन्ति विरहश्रुतौ ॥ २०४
इत्येवमुक्त्वा सा देवी तत्रैव सुरसंसदि।
भूयो भूयो रुरोदोच्चै-र्धृत्वा तच्चरणाम्बुजे ॥ २०५
क्रोड़े कृत्वा च तां कृष्णो मुखं संमृज्य वाससा।
बोधयामास विविधं सत्यं तथ्यं हितं वचः ॥ २०६

श्रीकृष्ण उवाच।

आध्यात्मिकं परं योगं शोकच्छेदनकारणम्।
शृणु देवि प्रवक्ष्यामि योगीन्द्राणाञ्च दुर्लभम् ॥ २०७
आधाराधेययोः सर्व्वं ब्रह्माण्डं पश्य सुन्दरि।
आधारव्यतिरेकेण नास्त्याधेयस्य सम्भवः ॥ २०८
फलाधारञ्च पुष्पञ्च पुष्पाधारश्च पल्लवः।
स्कन्धश्च पल्लवाधारः स्कन्धाधारस्तरुः स्वयम् ॥ २०९
वृक्षाधारोऽप्यङ्कुरश्च बीजशक्तिसमन्वितः।
अष्टिरेवाङ्कुराधार-श्चाष्ट्याधारो वसुन्धरा ॥ २१०
शेषो वसुन्धराधारः शेषाधारो हि कच्छपः।
वायुश्च कच्छपाधारो वाय्वाधारोऽहमेव च ॥ २११
ममाधारस्वरूपा त्वं त्वयि तिष्ठामि शाश्वतम्।
त्वञ्च शक्तिसमूहा च मूलप्रकृतिरीश्वरी ॥ २१२
त्वं शरीरस्वरूपासि त्रिगुणाधाररूपिणी।
तवात्माहं निरीहश्च चेष्टावांश्च त्वया सह ॥ २१३
पुरुषाद्वीर्य्यमुत्पन्नं वीर्य्यात् सन्ततिरेव च।
तयोराधाररूपा च कामिनी प्रकृतेः कला ॥ २१४
विना देहेन कुत्रात्मा क्व शरीरं विनात्मना।
प्राधान्यञ्च द्वयोर्देवि विना द्वाभ्यां कुतो भवः ॥ २१५
न कुत्राप्यावयोर्भेदो राधे संसारबीजयोः।
यत्रात्मा तत्र देहश्च न भेदो विनयेन किम् ॥ २१६
यथा क्षीरे च धावल्यं दाहिका च हुताशने।
भूमौ गन्धो जले शैत्यं तथा त्वयि मम स्थितिः ॥ २१७
धावल्यदुग्धयोरैक्यं दाहिकानलयोर्यथा।
भूगन्ध-जल-शैत्यानां नास्ति भेदस्तथावयोः ॥ २१८
मया विना त्वं निर्ज्जीवा चादृश्योऽहं त्वया विना।
त्वया विना भवं कर्त्तुं नालं सुन्दरि निश्चितम् ॥ २१९
विना मृदा घटं कर्त्तुं यथा नालं कुलालकः।
विना स्वर्णं स्वर्णकारोऽलङ्कारं कर्त्तुमक्षमः ॥ २२०

स्वयमात्मा यथा नित्य-स्तथा त्वं प्रकृतिः स्वयम्।
सर्व्वशक्तिसमायुक्ता सर्व्वाधारा सनातनी ॥ २२१
मम प्राणसमा लक्ष्मीर्वाणी च सर्व्वमङ्गला।
ब्रह्मेशानन्तधर्म्माश्च त्वं मे प्राणाधिका प्रिया ॥ २२२
समीपस्था इमे सर्व्वे सुरा देव्यश्च राधिके।
एतेभ्योऽप्यधिका नो चेत् कथं वक्षःस्थलस्थिता॥२२३
त्यजाश्रुमोक्षणं राधे भ्रान्तिञ्च निष्फलां सति।
विहाय शङ्कां निःशङ्के वृषभानुगृहं व्रज ॥ २२४
कलावत्याश्च जठरे मासानां नव सुन्दरि।
वायुना पूरयित्वा च गर्भं रोधय मायया ॥ २२५
दशमे समनुप्राप्ते त्वमाविर्भव भूतले।
आत्मरूपं परित्यज्य शिशुरूपं विधाय च ॥ २२६
वायुनिःसरणे काले कलावत्याः समीपतः।
भूमौ विवसनीभूय पतित्वा रोदिषि ध्रुवम् ॥ २२७
अयोनिसम्भवा त्वञ्च भविता गोकुले सति।
अयोनिसम्भवोऽहञ्च नावयोर्गर्भसंस्थितिः ॥ २२८
भूमिष्ठमात्रात् ततो मां गोकुलं प्रापयिष्यति।
तव हेतोर्गमिष्यामि कृत्वा कंसभयच्छलम् ॥ २२९
यशोदामन्दिरे माञ्च सानन्दे नन्दनन्दनम्।
नित्यं द्रक्ष्यसि कल्याणि समाश्लेषणपूर्व्वकम् ॥ २३०
स्मृतिस्ते भविता काले वरेण मम राधिके।
स्वच्छन्दं विहरिष्यामि नित्यं वृन्दावने वने ॥ २३१
त्रिःसप्तशतकोटिभि- र्गोपीभिर्गोकुलं व्रज।
त्रयस्त्रिंशद्वयस्याभिः सुशीलादिभिरेव च ॥ २३२
संस्थाप्य संस्काररहिता गोपीर्गोलोक एव च।
समाश्वास्य प्रबोधैश्च मितया च सुधागिरा ॥ २३३
अहं गोपानसंख्यांश्च संस्थाप्यात्रैव राधिके।
वसुदेवाश्रयं पश्चाद्यास्यामि मथुरां पुरीम् ॥ २३४
व्रजं व्रजन्तु क्रीड़ार्थं मम सङ्गे प्रियात् प्रियाः।
वल्लवानां गृहे जन्म लभन्तु गोपकोटयः ॥ २३५
इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद।
जग्मुर्देवाश्च देव्यश्च गोपा गोप्यश्च तत्र वै ॥ २३६
ब्रह्मेश-धर्म्म-शेषाश्च श्रीकृष्णं तत्परात्परम्।
शिवा-पद्मा-सरस्वत्य-स्तुष्टुवुः परया मुदा ॥ २३७
भक्त्या गोपाश्च गोप्यश्च विरहज्वरकातराः।
तत्र संस्तूय श्रीकृष्णं प्रणेमुः प्रेमविह्वलाः ॥ २३८
प्राणाधिकं प्रियं कान्तं राधा पूर्णमनोरथा।
परितुष्टाव भक्त्या च विरहज्वरकातरा ॥ २३९
साश्रुपूर्णातिदीनाञ्च दृष्ट्वा राधां भयाकुलाम्।
प्रबोधवचनं सत्यमुवाच तां हरिः स्वयम् ॥ २४०

श्रीकृष्ण उवाच।

प्राणाधिके महादेवि स्थिरा भव भयं त्यज।
यथा त्वञ्च तथाहञ्च का चिन्ता ते मयि स्थिते ॥२४१
किन्तु ते कथयिष्यामि किञ्चिदेवाक्ष्यमङ्गलम्।
वर्षाणां शतकं पूर्णं त्वद्विच्छेदो मया सह ॥ २४२
श्रीदामशापजन्येन कर्म्मभोगेण सुन्दरि।
भविष्यत्येव मम च मथुरागमनं ततः ॥ २४३
तत्र भारावतरणं पित्रोर्बन्धनमोक्षणम्।
मालाकार-तन्त्रवाय-कुब्जिकायाश्च मोक्षणम् ॥ २४४
घातयित्वा च यवनं मुचकुन्दस्य मोक्षणम्।
द्वारकायाश्च निर्म्माणं राजसूयस्य दर्शनम् ॥ २४५
उद्वाहं राजकन्यानां सहस्राणाञ्च षोड़श।
दशाधिकशतस्यापि शत्रूणां दमनं तथा ॥ २४६
मित्रोपकरणञ्चैव वाणपुर्य्याश्च दाहनम्।
हरस्य जृम्भणं तत्र वाणस्य भुजकर्त्तनम् ॥ २४७
पारिजातस्य हरणं यद्यत् कर्म्मान्यदेव च।
गमनं तीर्थयात्रायां मुनिसङ्घप्रदर्शनम् ॥ २४८
सम्भाषणञ्च बन्धूनां यज्ञसम्पादनं पितुः।
शुभक्षणे पुनस्तत्र त्वया सार्द्धं प्रदर्शनम् ॥ २४९
करिष्यामि च तत्रैव गोपिकानाञ्च दर्शनम्।
तुभ्यमाध्यात्मिकं दत्त्वा पुनः सत्यं त्वया सह ॥२५०
दिवानिशमविच्छेदो मया सार्द्धमतः परम्।
भविष्यति त्वया सार्द्धं पुनरागमनं व्रजम् ॥ २५१
कान्ते विच्छेदसमये वर्षाणां शतके सति।
नित्यं संमीलनं स्वप्ने भविष्यति त्वया सह ॥ २५२
मम नारायणांशो य-स्तस्य यानञ्च द्वारकाम्।
शतवर्षान्तरे साध्य-मेतान्येव सुनिश्चितम् ॥ २५३
भविष्यति पुनस्तस्य वने वासं त्वया सह।
पुनः पित्रोश्च गोपानां शोकसम्मार्ज्जनं परम् ॥ २५४
कृत्वा भारावतरणं पुनरागमनं मम।
त्वया सहापि गोलोकं गोपैर्गोपीभिरेव च ॥ २५५
मम नारायणांशस्य वाण्या च पद्मया सह।
वैकुण्ठगमनं राधे नित्यस्य परमात्मनः ॥ २५६
श्वेतद्वीपं धर्म्मगेह-मंशानाञ्च भविष्यति।

देवानाञ्चैव देवीना-मंशा यास्यन्ति स्वचयम्।
पुनः संस्थितिरत्रैव गोलोके मे त्वया सह ॥ २५७
इत्येवं कथितं सर्व्वं भविष्यञ्च शुभाशुभम्।
मया निरूपितं यत् तत् कान्ते केन निवार्य्यते॥२५८
इत्येवमुक्त्वा श्रीकृष्णः कृत्वा राधां स्ववक्षसि।
तस्थौ तस्थुः सुराः सर्व्वे सुरपत्न्यश्च विस्मिताः ॥२५९
उवाच श्रीहरिर्देवान् देवीश्च समयोचितम्।
देवा गच्छत कार्य्यार्थं स्वालयं विषयोचितम् ॥२६०
गच्छ पार्व्वति कैलासं सुताभ्यां स्वामिना सह।
मया नियोजितं कर्म्म सर्व्वं काले भविष्यति ॥ २६१
भविता कलया जन्म सर्व्वेषाञ्च मयोदितम्।
रुद्राणाञ्चैव महतां देवं लम्बोदरं विना ॥ २६२
प्रणम्य श्रीहरिं देवाः स्वालयं प्रययुर्मुदा।
लक्ष्मीं सरस्वतीं भक्त्या प्रणम्य पुरुषोत्तमम्॥ २६३
हरिणा योजितं कर्म्म कर्त्तुं व्यग्रा महीं ययुः।
भर्त्रा निरूपितं स्थानं देवानामपि दुर्लभम् ॥ २६४
उवाच राधिकां कृष्णो वृषभानुगृहं व्रज।
गोप-गोपीसमूहैश्च सह पूर्व्वनिरूपितैः ॥ २६५
अहं यास्यामि मथुरां वसुदेवालये प्रिये।
पश्चात् कंसभयव्याजाद् गोकुलं तव सन्निधिम् ॥२६६
राधा प्रणम्य श्रीकृष्णं रक्तपङ्कजलोचना।
भृशं रुरोद पुरतः प्रेमविच्छेदकातरा ॥ २६७
स्थायं स्थायं क्वचित् यान्ती गत्वा गत्वा पुनः पुनः।
पुनः पुनः समागत्य दृष्टं दृष्टं हरेर्मुखम् ॥ २६८
पपौ चक्षुश्चकोराभ्यां निमेषरहिता सती।
शरत्पार्व्वणचन्द्राभ-सुधापूर्णं प्रभोर्मुखम्॥ २६९
ततः प्रदक्षिणीकृत्य सप्तधा परमेश्वरी।
प्रणम्य सप्तधा चैव पुनस्तस्थौ हरेः पुरः ॥२७०
आजग्मुर्गोपिकानाञ्च त्रिःसप्तशतकोटयः।
आजगाम च गोपानां समूहः कोटिसंख्यकः ॥ २७१
गोपानां गोपिकानाञ्च समूहैः सह राधिका।
पुनः प्रणम्य तं राधा तत्र तस्थौ च नारद ॥ २७२
त्रयस्त्रिंशद्वयस्याभि-र्गोपीभिः सह सुन्दरी।
गोपानाञ्च समूहैश्च प्रणम्य प्रययौ महीम् ॥ २७३
हरिणा योजितं स्थानं प्रजग्मुर्नन्दगोकुलम्।
वृषभानुगृहं राधा गोपी गोपगृहं ययौ ॥ २७४
महीं गतायां राधायां गोपीभिः सह गोपकैः।
बभूव श्रीहरिः सत्यः पृथिवीगमनोन्मुखः ॥ २७५
सम्भाष्य गोपान् गोपीश्च नियोज्य स्वीयकर्म्मणि।
मनोयायी जगन्नाथो जगाम मथुरां हरिः ॥ २७६
पूर्व्वं यद्दृयत् प्रसूतञ्च देवकी-वसुदेवयोः।
बभूव सद्यस्तत् कंसः पुत्रषट्कं जघान ह ॥ २७७
शेषांशं सप्तमं गर्भं माययाकृष्य गोकुले।
निधाय रोहिणीगर्भे जगाम चाज्ञया हरेः ॥ २७८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारद-संवादे
षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः।

नारद उवाच।

व्यस्यातिरेकं कृष्णस्य महत् पुण्यकरं परम्।
वद जन्म महाभाग जन्म-मृत्यु-जरापहम् ॥ १
वसुदेवः कस्य पुत्रः कस्य कन्या च देवकी।
को वा वसुदेवकी वा विवाहश्च तयोर्वद ॥ २
कथं जघान कंसस्त-त्पुत्रषट्कं सुदारुणः।
कस्मिन् दिने हरेर्जन्म श्रोतुमिच्छामि तद्वद ॥ ३

नारायण उवाच।

कश्यपो वसुदेवश्च देवमाता च देवकी।
पूर्व्वपुण्यफलेनैव सम्प्राप श्रीहरिं सुतम् ॥ ४
देवमीढ़ान्मारिषायां वसुदेवो महानभूत्।
यस्य जन्मनि देवश्च वादयामास दुन्दुभिम् ॥ ५
आनकञ्च महाहृष्टः श्रीहरेर्जनकञ्च तम्।
सन्तः पुरातनास्तेन वदन्त्यानकदुन्दुभिम् ॥ ६
आहुकस्य सुतः श्रीमान् यदुवंशसमुद्भवः।
देवको ह्यानकिस्तुश्च तस्य कन्या च देवकी ॥ ७
गर्गो यदुकुलाचार्य्यः सम्बन्धं वसुना सह।
देवक्याः कारयामास विधिवच्च यथोचितम् ॥ ८
महासम्भृतसम्भारो वसुदेवः शुभक्षणे।
उद्वाहे देवकीं तस्मै देवकः प्रददौ किल ॥९
अश्वानाञ्च सहस्राणि स्वर्णपात्राणि नारद।
सालङ्कृतानां दासीनां शतानि सुन्दराणि च ॥ १०
नानाविधानि द्रव्याणि रत्नानि विविधानि च।
मणिश्रेष्ठानि वस्त्राणि रत्नपात्राणि नारद ॥ ११

सद्रत्नभूषितां कन्यां शतचन्द्रसमप्रभाम् ।
त्रैलोक्यमोहिनीं धन्यां मान्यां श्रेष्ठाञ्च योषिताम्॥१२
रूपाधारां गुणाधारां सस्मितां वक्रलोचनाम् ।
नवसङ्गमयोग्याञ्च प्रोद्भिन्ननवयौवनाम् ॥ १३
तां गृहीत्वा रथे कृत्वा प्रस्थानमकरोत् तदा ।
कंसो हृष्टः सहचरो भगिन्युद्वाहकर्म्मणि ॥ १४
तस्या रथसमीपस्थोऽगच्छत् कंसोऽपि तत्क्षणात् ।
कंसं सम्बोध्य गगने वाग्बभूवाशरीरिणी ॥ १५
कथं हृष्टोऽसि राजेन्द्र शृणु सत्यवचो हितम् ।
देवक्या अष्टमो गर्भो मृत्युहेतुस्तवैव हि ॥ १६
श्रुत्वैवं देवकीं कंसः खड्गहस्तो महाबलः ।
देववाक्याद्भयात् कोपात् पापिष्ठो हन्तुमुद्यतः॥१७
तां हन्तुमुद्यतं दृष्ट्वा वसुदेवः सुपण्डितः ।
बोधयामास नीतिज्ञो नीतिशास्त्रविशारदः ॥ १८

वसुदेव उवाच ।

राजनीतिं न जानासि शृणु मे वचनं हितम् ।
यशस्करञ्च दोषघ्नं शास्त्रोक्तं समयोचितम् ॥ १९
अस्या एवाष्टमो गर्भो मृत्युश्चेत् तव भूमिप ।
इमां हत्वा च दुष्कीर्त्तिं करोषि नरकं कथम् ॥ २०
वधे च क्षुद्रजन्तूनां हिंसकानाञ्च पण्डितः ।
कार्षापणं समुत्सृज्य मृत्युकाले प्रमुच्यते ॥ २१
अहिंसकानां क्षुद्राणां वधे शतगुणं ध्रुवम् ।
प्रायश्चित्तं मृत्युकाले कथितं पद्मयोनिना ॥ २२
वधे विशिष्टजन्तूनां पश्वादीनाञ्च कामतः ।
ततः शतगुणं पापं निश्चितं मनुरब्रवीत् ॥ २३
नराणां म्लेच्छजातीनां वधे शतगुणं ततः ।
म्लेच्छानाञ्च शतानाञ्च यत् पापं लभते वधे ॥ २४
सच्छूद्रैकस्य च वधे तत् पापं लभते पुमान् ।
सच्छूद्राणां शतानाञ्च यत् पापं लभते वधे ॥ २५
तत् पापं लभते नूनं गोवधेकेन निश्चितम् ।
गवां दशगुणं पापं ब्राह्मणस्य वधे भवेत् ॥ २६
विप्रहत्या समं पापं स्त्रीवधे लभते नरः ।
विशेषतो हि भगिनी पोष्या च शरणागता ॥ २७
स्त्रीहत्याशतपापञ्च भवेदस्या वधे नृप ॥ २८
तपो जपश्च दानञ्च पूजनं तीर्थदर्शनम् ।
विप्राणां भोजनं होमं स्वर्गार्थं कुरुते नरः ॥ २९
जलबुद्बुदवत् सर्व्वं स्वप्नतुल्यं भयं भवम् ।
पश्यन्ति सततं सन्तो धर्म्मं कुर्व्वन्ति यत्नतः॥३०
भगिनीं त्यज (क) धर्म्मिष्ठ स्ववंशपद्मभास्कर ।
बुधाः कतिविधाः सन्ति सभायां पृच्छ तान् नृप ॥३१
अस्याश्चैवाष्टमे गर्भे यदपत्यं भवेन्मम ।
बन्धो तुभ्यं प्रदास्यामि तेन मे किं प्रयोजनम् ॥ ३२
अथवा यान्यपत्यानि भवन्ति ज्ञानिनां वर ।
तानि सर्व्वाणि दास्यामि लक्तो नैको वरप्रियः॥३३
भगिनीं त्यज राजेन्द्र कन्यातुल्यां प्रियां तव ।
मिष्टान्नपानदानेन वर्द्धितामनुजां सदा ॥ ३४
वसुदेववचः श्रुत्वा तत्याज भगिनीं नृपः ।
वसुदेवः प्रियां नीत्वा जगाम निजमन्दिरम् ॥ ३५
क्रमादपत्यषट्कञ्च यद्बभूतञ्च नारद ।
ददौ तस्मै वसुः सत्यात् स जघान क्रमेण तान् ॥३६
देवक्याः सप्तमे गर्भे कंसो रक्षां ददौ भिया ।
रोहिणीजठरे माया तमाकृष्य ररक्ष च ॥ ३७
रक्षकाः कथयामासुर्गर्भस्रावो बभूव ह ।
तस्मादभूव भगवान् नाम्ना सङ्कर्षणः प्रभुः ॥ ३८
तस्या एवाष्टमो गर्भो वायुपूर्णो बभूव ह ॥ ३९
गते च नवमे मासि दशमे समुपस्थिते ।
दृष्टिं ददौ च गर्भे च भगवान् सर्व्वदर्शनः ॥ ४०
स्वयं रूपवती देवी सर्व्वासां योषितां वरा ।
बभूव दर्शनात् सद्यः सुन्दरी सा चतुर्गुणा ॥ ४१
ददर्श देवकीं कंसः प्रफुल्लवदनेक्षणाम् ।
तेजसा प्रज्वलन्तीञ्च मायामिव दिशो दश ॥ ४२
यथा ज्योतिःसमूहानां राशिं मूर्त्तिमतीमिव ।
दृष्ट्वा तामसुरेन्द्रश्च विस्मयं परमं ययौ ॥ ४३
अस्माद्गर्भादपत्यञ्च मृत्युबीजं ममैव च ।
इत्येवमुक्त्वा कंसश्च ददौ रक्षां प्रयत्नतः ।
देवकीवसुदेवञ्च सप्तद्वारा ररक्ष च ॥ ४४
पूर्णे च दशमे मासि गर्भः पूर्णो बभूव ह ।
बभूव साचलसन्द्रा जड़रूपा च नारद ॥ ४५
गर्भे च वायुना पूर्णे निर्लिप्तो भगवान् जितः ।
हृत्पद्मदेशे देवक्या ह्यधिष्ठानं चकार ह ॥ ४६
सा विश्वम्भरगर्भा च मन्दिराभ्यन्तरे सती ।
उवास जड़रूपा सा क्लेशयुक्ता बभूव ह ॥ ४७
उवास च क्षणं देवी क्षणमुत्थाय तिष्ठति ।

(क) भगीञ्च त्यजेति त्यज भगिनीञ्चेति वा प्रायः पाठः ।

क्षणं व्रजति पादैकं क्षणं सुष्वाप तत्र वै ॥ ४८
दृष्ट्वा च देवकीं शीघ्रं वसुदेवो महामनाः।
प्रसूतिसमयं दृष्ट्वा सस्मार हरिमीश्वरम् ॥ ४९
रत्नप्रदीपसंयुक्त-मन्दिरे सुमनोहरे।
स्थापयामास खड्गञ्च लौहतोयं हुताशनम् ॥ ५०
मन्त्रञ्च नरञ्चैव बन्धुपत्नीर्भयाकुलः।
विद्वांसं ब्राह्मणञ्चैव ततो बन्धूंश्च सादरम् ॥ ५१
एतस्मिन्नन्तरे तस्यां रात्रौ द्विप्रहरे गते।
व्याप्तञ्च गगनं मेघैः क्षणद्युतिसमन्वितैः ॥ ५२
बवुश्च वायवश्चाष्टौ ययुर्निद्राञ्च रक्षकाः।
अचेष्टिताश्च शयने मृता इव विचेतनाः ॥ ५३
एतस्मिन्नन्तरे तत्र-वाजग्मुस्त्रिदशेश्वराः।
तुष्टुवुर्धर्म्म ब्रह्मेशा गर्भस्थं परमेश्वरम् ॥ ५४

देवा ऊचुः।

जगद्योनिरयोनिस्त्व-मनन्तोऽव्यय एव च।
ज्योतिःस्वरूपो ह्यनघः सगुणो निर्गुणो महान् ॥ ५५
भक्तानुरोधात् साकारो निराकारो निरङ्कुशः।
स्वेच्छामयश्च सर्व्वशः सर्व्वः सर्व्वगुणाश्रयः ॥ ५६
सुखदो दुःखदो दुर्गो दुर्ज्जनान्तक एव च।
निर्व्यूहो निखिलाधारो निःशङ्को निरुपद्रवः ॥ ५७
निरुपाधिश्च निर्लिप्तो निरीहो निधनान्तकः।
आत्मारामः पूर्णकामो निर्दोषो नित्य एव च ॥ ५८
सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः।
वेदहेतुश्च वेदाश्च वेदाङ्गो वेदविद्विभुः ॥ ५९
इत्येवमुक्त्वा देवाश्च प्रणेमुश्च मुहुर्म्मुहुः।
हर्षाश्रुलोचनाः सर्व्वे ववृषुः कुसुमानि च ॥ ६०
द्विचत्वारिंशन्नामानि प्रातरुत्थाय यः पठेत्।
दृढां भक्तिं हरेर्दास्यं लभते वाञ्छितञ्च यत् ॥ ६१

इति ब्रह्मादिकृतं श्रीकृष्णस्तोत्रम्।

नारायण उवाच।

इत्येवं स्तवनं कृत्वा देवास्ते स्वालयं ययुः।
बभूव जलवृष्टिश्च निश्चेष्टा मथुरापुरी ॥ ६२
घोरान्धकारनिगड़ा बभूव यामिनी मुने।
गते च सप्तमुहूर्त्ते चाष्टमे समुपस्थिते ॥ ६३
वेदातिरिक्तो दुर्ज्ञेयः सर्व्वोत्कृष्टशुभक्षणे।
शुभग्रहैर्दृष्टलग्नेऽप्यदृष्टश्चाशुभग्रहैः ॥ ६४
अर्द्धरात्रे समुत्पन्ने रोहिण्यामष्टमीतिथौ।
जयन्तीयोगयुक्ते च चार्द्धचन्द्रोदये मुने ॥ ६५
दृष्ट्वा दृष्ट्वा क्षणं लग्नं भीताः सूर्य्यादयः स्मृताः।
गमने क्रममुल्लङ्घ्य जग्मुर्मीनं शुभाशुभाः ॥ ६६
सुप्रसन्ना ग्रहाः सर्व्वे बभूवुस्तत्र संस्थिताः।
एकादशस्थास्ते प्रीत्या मुहूर्त्तं धातुराज्ञया ॥ ६७
ववृषुश्च जलधरा ववुर्वाताः सुशीतलाः।
सुप्रसन्ना च पृथिवी प्रसन्नाश्च दिशो दश ॥ ६८
ऋषयो मनवश्चैव यक्ष-गन्धर्व्व-किन्नराः।
देवा-देव्यश्च मुदिता ननृतुश्चाप्सरोगणाः ॥ ६९
जगुर्गन्धर्व्वराजेन्द्रा विद्याधर्य्यश्च नारद।
सुखेन सुस्रुवुर्नद्यो जज्वलुश्चाग्नयो मुदा ॥ ७०
नेदुर्दुन्दुभयः स्वर्गे चानकाश्च मनोरमाः।
पारिजातप्रसूनानां पुष्पवृष्टिर्बभूव ह ॥ ७१
जगाम सूतिकागेहं नारीरूपं विधाय भूः।
जयशब्दः शङ्खशब्दो हरिशब्दो बभूव ह ॥ ७२
एतस्मिन्नन्तरे तत्र पपात देवकी सती।
निःससार च वायुश्च देवकीजठरात् ततः ॥ ७३
तत्रैव भगवान् कृष्णो दिव्यरूपं विधाय च।
हृत्पद्मकोषाद्देवक्या बहिराविर्ब्बभूव ह ॥ ७४
अतीवकमनीयञ्च शरीरं सुमनोहरम्।
द्विभुजं मुरलीहस्तं स्फुरन्मकरकुण्डलम् ॥ ७५
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम्।
मणिरत्नेन्द्रसाराणां भूषितैश्च विभूषितम् ॥ ७६
नवीननीरदश्यामं शोभितं पीतवाससा।
चन्दनागुरुकस्तूरी-कुङ्कुमद्रवचर्च्चितम् ॥ ७७
शरत्पार्व्वणचन्द्रास्यं बिम्बाधरमनोहरम्।
मयूरपुच्छचूड़ञ्च सद्रत्नमुकुटोज्ज्वलम् ॥ ७८
त्रिभङ्गवङ्कमध्यञ्च वनमालाविभूषितम्।
श्रीवत्सवक्षसं चारु-कौस्तुभेन विराजितम् ॥ ७९
किशोरवयसं शान्तं कान्तं ब्रह्मेशयोः परम्।
ददर्श वसुदेवश्च पुरतो देवकी मुने।
तुष्टाव परया भक्त्या विस्मयं परमं ययौ ॥ ८०
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः।
साश्रुपूर्णः सपुलको देवतातः स्त्रिया सह ॥ ८१

वसुदेव उवाच।

त्वामतीन्द्रियमव्यक्त-मक्षरं निर्गुणं विभुम्।
ध्यानासाध्यञ्च सर्व्वेषां परमात्मानमीश्वरम् ॥ ८२

स्वेच्छामयं सर्व्वरूपं स्वेच्छारूपधरं परम्।
निर्लिप्तं परमं ब्रह्म वीजरूपं सनातनम्॥ ८३
स्थूलात् स्थूलतरं व्याप्त-मतिसूक्ष्ममदर्शनम्।
स्थितं सर्व्वशरीरेषु साक्षिरूपमदृश्यकम्॥ ८४
शरीरवन्तं सगुण-मशरीरं गुणोत्करम्।
प्रकृतिं प्रकृतीशञ्च प्राकृतं प्रकृतेः परम्॥ ८५
सर्व्वेशं सर्व्वरूपञ्च सर्व्वान्तकरमव्ययम्।
सर्व्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभो॥८६
अनन्तः स्तवनेऽशक्तोऽशक्ता देवी सरस्वती।
यं स्तोतुमसमर्थश्च पञ्चवक्त्रः षडाननः॥ ८७
चतुर्म्मुखो वेदकर्त्ता यं स्तोतुमक्षमः सदा।
गणेशो न समर्थश्च योगीन्द्राणां गुरोर्गुरुः॥ ८८
ऋषयो देवताश्चैव मुनीन्द्र-मनु-मानवाः।
स्वप्ने तेषामदृश्यञ्च त्वामेवं किं स्तुवन्ति ते॥ ८९
श्रुतयस्तवनेऽशक्ताः किं स्तुवन्ति विपश्चितः।
विहायैवं शरीरञ्च बालो भवितुमर्हसि॥ ९०
वसुदेवकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः।
भक्तिं दास्यमवाप्नोति श्रीकृष्णचरणाम्बुजे॥ ९१
विशिष्टपुत्त्रं लभते हरिदासं गुणान्वितम्।
सङ्कटं निस्तरेत् तूर्णं शत्रुभीतात् प्रमुच्यते॥ ९२
इति वसुदेवकृतं श्रीकृष्णस्तोत्रम्।
नारायण उवाच।
वसुदेववचः श्रुत्वा तमुवाच हरिः स्वयम्।
प्रसन्नवदनः श्रीमान् भक्तानुग्रहकातरः॥ ९३
श्रीकृष्ण उवाच।
तपसाञ्च फलेनैव पुत्त्रोऽहं तव साम्प्रतम्।
वरं वृणुष्व भद्रं ते भविष्यति न संशयः॥ ९४
पुरा तपस्विनां श्रेष्ठः पृश्निस्त्वञ्च प्रजापतिः।
पत्नी ते सुतपेयञ्च तपसाराधितस्त्वया॥ ९५
पुत्त्रो मत्सदृशस्तत्र दृष्ट्वा माञ्च वृतो वरः।
मया दत्तो वरस्तुभ्यं मत्समो भविता सुतः॥ ९६
दत्त्वा तुभ्यं वरं तात मनसालोच्य चिन्तितम्।
मत्समो नास्ति भुवने पुत्त्रोऽहं तेन हेतुना॥ ९७
तपसाञ्च प्रभावेण त्वमेव कश्यपः स्वयम्।
सुतपा देवमातेय-मदितिश्च पतिव्रता॥ ९८
अधुना कश्यपांशस्त्वं वसुदेवः पिता मम।
देवकी देवमातेय-मदितेरंशसम्भवा॥ ९९
तातोऽदित्या वामनोऽहं पुत्त्रस्तेऽंशसमुद्भवः।
अधुना परिपूर्णोऽहं पुत्त्रस्ते तपसः फलात्॥ १००
मयि त्वं पुत्त्रभावेन ब्रह्मभावेन वा पुनः।
मां प्राप्स्यसि महाप्राज्ञ जीवन्मुक्तो भविष्यसि॥ १०१
यशोदाभवनं शीघ्रं मां गृहीत्वा व्रजं व्रज।
संस्थाप्य तत्र मां तात मायामादाय स्थापय॥ १०२
इत्युक्त्वा श्रीहरिस्तत्र बालरूपी बभूव ह।
नग्नं भूमौ शयानञ्च-ददर्श श्यामलं सुतम्॥ १०३
दृष्ट्वा स बालकं तत्र मोहितो विष्णुमायया।
किं वा दृष्टञ्च तन्द्राया-मपूर्व्वं सूतिकागृहे॥१०४
इत्युक्त्वा वसुदेवश्च समालोच्य स्त्रिया सह।
गृहीत्वा बालकं क्रोडे जगाम नन्दगोकुलम्॥ १०५
गत्वा नन्दव्रजं शीघ्रं विवेश सूतिकागृहम्।
ददर्श शयने न्यस्तां यशोदां निद्रयान्विताम्।
निद्रान्वितञ्च नन्दञ्च सर्व्वं तत्र गृहे स्थितम्॥ १०६
ददर्श बालिकां नग्नां तप्तकाञ्चनसन्निभाम्।
ईषद्धास्यप्रसन्नास्यां पश्यन्तीं गृहशेखरम्॥ १०७
तां दृष्ट्वा वसुदेवश्च विस्मयं परमं ययौ। १०८
संस्थाप्य तत्र पुत्त्रञ्च कन्यामादाय सत्वरम्।
जगाम मथुरां त्रस्तः स्वकान्तासूतिकागृहम्॥१०९
स्थापयामास तत्रैव महामायाञ्च बालिकाम्।
रोरूयमाणां तामेव दृष्ट्वा हृष्टा च देवकी॥११०
रोदनेनैव सा बाला बोधयामास रक्षकान्।
उत्थाय रक्षकाः शीघ्रं जगृहुर्बालिकां तदा॥ १११
गृहीत्वा बालिकां ते च प्रजग्मुः कंससन्निधिम्।
जगाम देवकी पश्चाद्वसुदेवश्च शोकतः॥ ११२
दृष्ट्वा च बालिकां कंसो नातिहृष्टो महामुने।
रोरूयमाणां कल्याणीं तद्दया न बभूव ह॥ ११३
तां गृहीत्वा च पाशाणे नष्टुं यातः सुदारुणः।
उवाच वसुदेवश्च देवकी परमादरम्॥ ११४
भो भो कंस नृपश्रेष्ठ नीतिशास्त्रविशारद।
निबोध वाक्यं सत्यञ्च नीतियुक्तं मनोहरम्॥ ११५
हतावयोः पुत्त्रषट्कं दया ते नास्ति बान्धव।
अधुना चाष्टमे गर्भे बालिकामबलां मम॥ ११६
हत्वा किं ते महैश्वर्य्यं भविष्यति महीतले।
त्वामेव हन्तुमबला किं क्षमा रणमूर्द्धनि॥ ११७

(क) हृष्ट इत्यपि पाठः।

इत्येवमुक्त्वा तं वसुदेवकी च सभातले ।
सुरेन्द्र पुरतस्तत्र कंसस्य च दुरात्मनः ॥ ११८
कंसस्तयोर्वचः श्रुत्वा तामुवाच सुदारुणः ।
शृणु वाक्यं मदीयञ्च निबोध बोधयामि ते ॥ ११९
कंस उवाच ।
तृणेन पर्व्वतं हन्तुं शक्तो धाता च देवतः ।
कीटेन सिंहशार्दूलं मशकेन गजं तथा ॥ १२०
शिशुना च महावीरं महान्तं क्षुद्रजन्तुभिः ।
मूषिकेण च मार्ज्जारं मण्डूकेन भुजङ्गमम् ॥ १२१
एवं जन्येन जनकं भक्ष्येणैव च भक्षकम् ।
वह्निना च जलं नष्टं वह्निं शुष्कतृणेन च ॥ १२२
पीताः सप्त समुद्राश्च द्विजेनैकेन जन्तुना ।
धातुर्गतिर्विचित्रा च दुर्ज्ञेया भुवनत्रये ॥ १२३
दैवेन बालिका नष्टुं मां समर्था भविष्यति ।
बालिकाञ्च बधिष्यामि नात्र कालविचारणा ॥ १२४
इत्येवमुक्त्वा कंसश्च गृहीत्वा बालिकां तदा ।
हन्तुमारब्धवान् कंस-स्तमुवाच वसुस्तदा ॥ १२५
वृथाहिंसितवान् राजन् देहि बालां कृपानिधे ।
स तच्छ्रुत्वा विचारज्ञः कंसस्तुष्टो महामुने ॥ १२६
सम्बोध्य यान्तं(क) तत्रैव वाग्बभूवाशरीरिणी ।
हे कंस हंसि कां मूढ़ न विज्ञेया विधेर्गतिः ॥ १२७
कुत्रचित् ते निहन्तास्ति काले व्यक्तो भविष्यति ।
श्रुत्वैवं देववाणीञ्च तत्याज बालिकां नृपः ॥ १२८
वसुदेवो देवकी च तामादाय मुदान्वितः ।
जग्मतुः स्वगृहं तौ च कन्यां कृत्वा स्ववक्षसि ॥ १२९
मृतामिव पुनः प्राप्य ब्राह्मणेभ्यो ददौ धनम् ।
सा परा भगिनी विप्र कृष्णस्य परात्मनः ।
एकानंशेति विख्याता पार्व्वत्यंशसमुद्भवा ॥ १३०
वसुस्तां द्वारकायान्तु रुक्मिण्युद्वाहकर्म्मणि ।
ददौ दुर्व्वाससे भक्त्या शङ्कराय भक्तितः ॥ १३१
एवं निगदितं सर्व्वं कृष्णजन्मानुकीर्त्तनम् ।
जन्म-मृत्यु-जराविघ्नं सुखदं पुण्यदं मुने ॥ १३२

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारद-संवादे
सप्तमोऽध्यायः ॥ ७ ॥

---

क) सम्बोधयन्तमिति च पाठः ।

## अष्टमोऽध्यायः ।

नारद उवाच ।
जन्माष्टमीव्रतं ब्रूहि व्रतानां व्रतमुत्तमम् ।
फलं जयन्तीयोगस्य सामान्येन च साम्प्रतम् ॥ १
को वा दोषोऽप्यकरणे भोजने वा महामुने ।
उपवासफलं किं वा जयन्त्याञ्च सुसंयतः ॥ २
व्रतपूजाविधानञ्च संयमस्य च साम्प्रतम् ।
उपवास-पारणयोः सुविचार्य्य वद प्रभो ॥ ३
नारायण उवाच ।
कृत्वा हविष्यं सप्तम्यां संयतः पारणे तथा ।
अरुणोदयवेलायां समुत्थाय परेऽहनि ॥ ४
प्रातःकृत्यं संविधाय स्नात्वा सङ्कल्पमाचरेत् ।
व्रतोपवासयोर्ब्रह्मन् श्रीकृष्णप्रीतिहेतुकम् ॥ ५
मन्वादिदिवसे प्राप्ते यत् फलं स्नानपूजनैः ।
फलं भाद्रपदेऽष्टम्यां भवेत् कोटिगुणं द्विज ॥ ६
तस्यां तिथौ वारिमात्रं पितृणां यः प्रयच्छति ।
गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः ॥ ७
स्नात्वा नित्यक्रियां कृत्वा निर्म्माय सूतिकागृहम् ।
लौहखड्गं वह्निजाले-र्युक्तं रक्षकसङ्घकैः ॥ ८
तत्र द्रव्यं बहुविधं नाड़िच्छेदनकर्त्तनीम् ।
धात्रीस्वरूपां नारीञ्च यत्नतः स्थापयेद्बुधः ॥ ९
पूजाद्रव्याणि चारूणि सोपचाराणि षोड़श ।
फलान्यष्टौ च मिष्टानि द्रव्याण्येव हि नारद ॥ १०
जातीफलञ्च कक्कोलं दाड़िम्बं श्रीफलं तथा ।
नारिकेलञ्च जम्बीरं कुष्माण्डञ्च मनोहरम् ॥ ११
आसनं वसनं पाद्यं मधुपर्कं तथैव च ।
अर्घ्यमाचमनीयञ्च स्नानीयं शयनं तथा ॥ १२
गन्ध-पुष्पञ्च नैवेद्यं ताम्बूलमनुलेपनम् ।
धूप-दीपौ भूषणञ्चे-त्युपचाराणि षोड़श ॥ १३
पादप्रक्षालनं कृत्वा धृत्वा धौते च वाससी ।
आचम्य चासने स्थित्वा स्वस्तिवाचनपूर्व्वकम् ॥ १४
घटमारोपणं कृत्वा सम्पूज्य पञ्चदेवताः ।
घट आवाहनं कृत्वा श्रीकृष्णं परमेश्वरम् ॥ १५
वसुदेवं देवकीञ्च यशोदां नन्दमेव च ।
रोहिणीं बलदेवञ्च षष्ठीदेवीं वसुन्धराम् ॥ १६
रोहिणीञ्चैव ब्रह्माणमष्टमीं स्थानदेवताम् ।

अश्वत्थाम-बली चैव हनूमन्तं विभीषणम्॥ १७
कृपं परशुरामञ्च व्यासदेवं सकण्डजम्।
सर्व्वमावाहनं कृत्वा ध्यानं कुर्य्याद्धरेस्तथा॥ १८
पुष्पकं मस्तके न्यस्य पुनर्ध्यायेद्विचक्षणः।
ध्यानञ्च सामवेदोक्तं शृणु वक्ष्यामि नारद।
ब्रह्मणा कथितं पूर्व्वं कुमाराय महात्मने॥ १९
बालं नीलाम्बुदाभं (क) अतिशयरुचिरं
स्मेरवक्त्राम्बुजं तं
ब्रह्मेशानन्तधर्म्मैः कति कति दिवसैः
स्तूयमानं परं यत्।
ध्यानासाध्यं ऋषीन्द्रैर्मुनिमनुजवरैः
सिद्धसङ्घैरसाध्यं
योगीन्द्राणामचिन्त्यं अतिशयमतुलं
साक्षिरूपं भजेऽहम्॥ २०
ध्यात्वा पुष्पञ्च दत्त्वा तु तत्सर्व्वं मन्त्रपूर्व्वकम्।
दत्त्वा व्रती व्रतं कुर्य्याच्छृणु मन्त्रं यथाक्रमम्॥२१
आसनं सर्व्वशोभाढ्यं सद्रत्नमणिनिर्म्मितम्।
विचित्रितञ्च चित्रेण गृह्यतां शोभनं हरे॥ २२
वसनं वह्निशौचञ्च निर्म्मितं विश्वकर्म्मणा।
प्रतप्तस्वर्णखचितं विचित्रं गृह्यतां हरे॥ २३
पादप्रक्षालनार्थञ्च स्वर्णपात्रस्थितं जलम्।
पवित्रं निर्म्मलं चारु पुष्पं पाद्यञ्च गृह्यताम्॥ २४
मधु-सर्पिर्दधि-क्षीर-शर्करा-संयुतं परम्।
स्वर्णपात्रस्थितं देयं साधारं गृह्यतां हरे॥ २५
दूर्व्वाक्षतं शुक्लपुष्पं स्वच्छतोयसमन्वितम्।
चन्दनागुरुकस्तूरी-सहितं गृह्यतां हरे॥ २६
सुस्वादु स्वच्छतोयञ्च वासितं गन्धवस्तुना।
शुद्धमाचमनार्हञ्च गृह्यतां परमेश्वर॥ २७
गन्धद्रव्यसमायुक्तं विष्णुतैलं सुवासितम्।
आमलक्या द्रवञ्चैव स्नानीयं गृह्यतां हरे॥ २८
सद्रत्नमणिसारेण रचितां सुमनोहराम्।
छादितां सूक्ष्मवस्त्रेण शय्यां गृहाण हे हरे॥ २९
चूर्णञ्च वृक्षभेदानां मूलानां द्रवसंयुतम्।
कस्तूरीरससंयुक्तं गन्धं गृहाण हे हरे॥ ३०
पुष्पं सुगन्धसंयुक्तं वनस्पतिसमुद्भवम्।
सुप्रियं सर्व्वदेवानां गृह्यतां परमेश्वर॥ ३१

(क) अत्र प्रथमहतीयचतुर्थपादेऽसन्धिरार्षः।

शर्कराखस्तिकाक्ताञ्च मिष्टद्रव्यसमन्वितम्।
सुपक्वफलसंयुक्तं नैवेद्यं गृह्यतां हरे॥ ३२
लड्डुकं मोदकञ्चैव सर्पिः क्षीरं गुड़ं मधु।
नवोद्धृतं दधि तक्रं नैवेद्यं गृह्यतां हरे॥ ३३
ताम्बूलं भोगसारञ्च कर्पूरादिसमन्वितम्।
मया निवेदितं भक्त्या गृह्यतां परमेश्वर॥ ३४
चन्दनागुरुकस्तूरी-कुङ्कुमद्रवसंयुतम्।
आवीरचूर्णं रुचिरं गृह्यतां परमेश्वर॥ ३५
तरुभेदरसोत्कर्षो गन्धयुक्तोऽग्निना सह।
सुप्रियः सर्व्वदेवानां धूपोऽयं गृह्यतां हरे॥ ३६
बीराम्धकारनाशैक-हेतुरेव शुभावहः।
सुप्रदीप्तो दीप्तिकरो दीपोऽयं गृह्यतां हरे॥ ३७
पवित्रं निर्म्मलं तोयं कर्पूरादिसुवासितम्।
जीवनं सर्व्वजीवानां पानार्थं गृह्यतां हरे॥ ३८
नानापुष्पसमायुक्तं ग्रथितं सूक्ष्मतन्तुना।
शरीरभूषणवरं माल्यञ्च प्रतिगृह्यताम्॥ ३९
दत्त्वा देयानि द्रव्याणि पूजोपयोगितानि च।
व्रतस्थानस्थितं द्रव्यं हरये देयमेव च॥ ४०
फलानि तरुबीजानि स्वादूनि सुन्दराणि च।
वंशवृद्धिकराण्येव गृह्यतां परमेश्वर॥ ४१
आवाहितांश्च देवांश्च प्रत्येकं पूजयेद्व्रती।
सम्पूज्य भक्तिभावेन दद्यात् पुष्पाञ्जलित्रयम्॥ ४२
सुनन्दनन्दकुसुदान् गोपान् गोपीश्च राधिकाम्।
गणेशं कार्त्तिकेयञ्च ब्रह्माणञ्च शिवं शिवाम्॥ ४३
लक्ष्मीं सरस्वतीञ्चैव दिक्पालांश्च ग्रहांस्तथा।
शेषं सुदर्शनञ्चैवं पार्षदप्रवरांस्तथा॥ ४४
सम्पूज्य सर्व्वदेवांश्च प्रणम्य दण्डवद्भुवि।
ब्राह्मणेभ्यश्च नैवेद्यं दत्त्वा दद्याच्च दक्षिणाम्॥ ४५
कथाञ्च जन्माध्यायोक्तां शृणुयाद्भक्तिभावतः।
तदा कुशासने स्थित्वा कुर्य्याज्जागरणं व्रती॥ ४६
प्रभाते चाह्निकं कृत्वा सम्पूज्य श्रीहरिं मुदा।
ब्राह्मणान् भोजयित्वा च चकार हरिकीर्त्तनम्॥४७

नारद उवाच।

व्रतकालव्यवस्थाञ्च वेदोक्तां सर्व्वसम्मताम्।
वेदाङ्गञ्च समालोच्य संहिताञ्च पुरातनीः॥ ४८
उपवासे जागरणे व्रते वा किं फलं भवेत्।
किं वा पापं तत्र भुक्त्वा वद वेदविदां वर॥ ४९

नारायण उवाच ।

अष्टमी पादसंयुक्ता रात्र्यर्द्धे यदि दृश्यते ।
स एव मुख्यकालश्च तत्र जातः स्वयं हरिः ॥ ५०
जयं पुण्यञ्च कुरुते जयन्ती तेन सा स्मृता ।
तत्रोपोष्य व्रतं कृत्वा कुर्य्याज्जागरणं बुधः ॥ ५१
सर्व्वापवादः कालोऽयं प्रधानः सर्व्वसम्मतः ।
इति वेदविदां वाणी चेत्युक्ता वेधसा पुरा ॥ ५२
तत्र जागरणं कृत्वा चोपोष्य यद्व्रतं भवेत् ।
कोटिजन्मार्ज्जितात् पापान्मुच्यते नात्र संशयः ॥ ५३
वर्ज्जनीया प्रयत्नेन सप्तमीसहिताष्टमी ।
सा सर्क्षापि न कर्त्तव्या सप्तमीसहिताष्टमी ॥ ५४
अविद्धायान्तु सर्क्षायां जातो देवकीनन्दनः ।
वेदवेदाङ्गगुप्तेऽति-विशिष्टे मङ्गले हरौ ।
व्यतीते पद्मयोनौ च व्रती कुर्य्याच्च पारणम् ॥ ५५
तिथ्यन्ते च हरिं स्मृत्वा कृत्वा देवासुरार्च्चनम् ।
पारणं पावनं पुंसां सर्व्वपापप्रणाशनम् ॥ ५६
उपवासाङ्गभूतञ्च फलदं शुद्धिकारणम् ।
सर्व्वेष्वेवोपवासेषु दिवा पारणमिष्यते ॥ ५७
अन्यथा फलहानिः स्याद्व्रतधारणपारणम् ॥ ५८
न रात्रौ पारणं कुर्य्या-दृते वै रोहिणीव्रतात् ।
निशायां पारणं कुर्य्याद्-वर्ज्जयित्वा महानिशाम् ॥ ५९
पूर्व्वाह्णे पारणं शस्तं कृत्वा विप्रसुरार्च्चनम् ।
सर्व्वेषां सम्मतं कुर्य्या-दृते वै रोहिणीव्रतम् ॥ ६०
बुधसोमसमायुक्ता जयन्ती यदि लभ्यते ।
न कुर्य्याद्गर्भवासञ्च तत्र कृत्वा व्रतं व्रती ॥ ६१
उदये चाष्टमी किञ्चि-न्नवमी सकला यदि ।
भवेद्बुधेन्दुसंयुक्ता प्राजापत्यर्क्षसंयुता ॥ ६२
अपि वर्षशतेनापि लभ्यते वा न लभ्यते ।
व्रती च तद्व्रतं कृत्वा पुंसां कोटीः समुद्धरेत् ॥ ६३
नृणां विना व्रतेनापि भक्तानां वित्तवर्ज्जितात् ।
कृतेनैवोपवासेन प्रीतो भवति माधवः ॥ ६४
भक्त्या नानोपचारेण रात्रौ जागरणेन च ।
फलं ददाति दैत्यारि-र्जयन्तीव्रतसम्भवम् ॥ ६५
वित्तशाठ्यमकुर्व्वाणः सम्यक् फलमवाप्नुयात् ।
कुर्व्वाणो वित्तशाठ्यञ्च लभतेऽसदृशं फलम् ॥ ६६
अष्टम्यामथ रोहिण्यां न कुर्य्यात् पारणं बुधः ।
हन्यात् पूर्व्वकृतं पुण्य-मुपवासार्ज्जितं फलम् ॥ ६७
तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम् ।
तस्मात् प्रयत्नतः कुर्य्यात् तिथिभान्ते च पारणम् ॥ ६८
महानिशायां प्राप्तायां तिथिभान्तं यदा भवेत् ।
तृतीयेऽह्नि मुनिश्रेष्ठ पारणं कुरुते व्रती ॥ ६९
यन्मुहूर्त्ते व्यतीते तु रात्रावेव महानिशा ।
लभते ब्रह्महत्याञ्च तत्र भुक्त्वा च नारद ॥ ७०
गोमांस-विण्मूत्रसमं ताम्बूलञ्च फलं जलम् ।
पुंसामभक्ष्यं शुद्धाया-श्चोदनास्यापि का कथा ॥ ७१
त्रियामां रजनीं प्राहु-स्त्यक्त्वाद्यञ्च चतुष्टयम् ।
नाड़ीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते ॥ ७२
जन्माष्टम्याञ्च शुद्धायां कृत्वा जागरणं व्रतम् ।
शतजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥ ७३
जन्माष्टम्याञ्च शुद्धाया-मुपोष्य केवलं नरः ।
अश्वमेधफलं तस्य व्रतं जागरणं विना ॥ ७४
यद्बाल्ये यच्च कौमारे यौवने यच्च वार्द्धके ।
सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥ ७५
श्रीकृष्णजन्मदिवसे यश्च भुङ्क्ते नराधमः ।
स भवेन्मातृगामी च ब्रह्महत्याशतं लभेत् ॥ ७६
कोटिजन्मार्ज्जितं पुण्यं तस्य नश्यति निश्चितम् ।
अनर्हश्चाशुचिः शश्वद्-दैवे पैत्रे च कर्म्मणि ॥ ७७
अन्ते वसेत् कालसूत्रे यावच्चन्द्रदिवाकरौ ।
कृमिभिः शूलतुल्यैश्च तीक्ष्णदंष्ट्रैश्च भक्षितः ॥ ७८
पापी ततः समुत्थाय भारते जन्म चेल्लभेत् ।
षष्टिं वर्षसहस्राणि विष्ठायाञ्च कृमिर्भवेत् ॥ ७९
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः ।
श्वापदं शतजन्मानि शृगालः शतजन्मसु ॥ ८०
सप्तजन्मसु सर्पश्च काकश्च सप्तजन्मसु ।
ततो भवेन्नरो मूको गलत्कुष्ठी सदातुरः ॥ ८१
ततो भवेत् पशुघ्नश्च व्यालग्राही ततो भवेत् ।
तदन्ते च भवेद्दस्यु-धर्म्महीनो नरघ्नकः ॥ ८२
ततो भवेत् स रजक-स्तैलकारस्ततो भवेत् ।
ततो भवेद्देवलश्च ब्राह्मणश्च सदाऽशुचिः ॥ ८३
उपवासासमर्थश्चे-देकं विप्रञ्च भोजयेत् ।
तावद्धनानि वा दद्यात् यद्भक्ताद्द्विगुणं भवेत् ॥ ८४
सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमम् ।
कुर्य्याद्द्वादशसंख्याकं यथा तु तद्व्रते नरः (क) ॥ ८५

(क) न यथां तत्र ते नर इति क्वचित् पाठः ।

इत्येवं कथितं वत्स श्रुतं यद्धर्म्मवक्त्रतः।
व्रतोपवासपूजानां विधानमक्षते च यत् ॥ ८६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे जन्माष्टमीव्रतादि-निरूपणप्रस्तावोऽष्टमोऽध्यायः ॥८॥

---

## नवमोऽध्यायः।

नारद उवाच।

संस्थाप्य गोकुले कृष्णं यशोदामन्दिरे वसुः।
जगाम स्वगृहं नन्दः किं चकार सुतोत्सवम् ॥ १
किं चकार हरिस्तत्र कतिवर्षं स्थितिर्विभोः।
बालक्रीड़नकं तस्य वर्णय क्रमशः प्रभो ॥२
पुरा कृता या प्रतिज्ञा गोलोके राधया सह।
तत् कृतं केन हरिणा प्रतिज्ञापालनं वने ॥ ३
कीदृग्वृन्दावनं रास-मण्डलं किंविधं वद।
रासक्रीड़ां जलक्रीड़ां संव्यस्य वर्णय प्रभो ॥ ४
नन्दस्तपः किं चकार यशोदा चाथ रोहिणी।
हरेः पूर्व्वञ्च हलिनः कुत्र जन्म बभूव ह ॥ ५
पीयूषखण्डमाख्यान-मपूर्व्वं श्रीहरेः स्तुतम्।
विशेषतः कविमुखे काव्यं नूतं पदे पदे ॥ ६
स्वरासमण्डलं क्रीड़ां वर्णय स्वयमेव च।
परोहवर्णनं काव्यं प्रशस्तं हृश्यवर्णनम् ॥ ७
श्रीकृष्णांशो भवान् साक्षाद्योगीन्द्राणां गुरोर्गुरुः।
यो यस्यांशः स च जन-स्तस्यैव सुखतः सुखी ॥ ८
त्वयैव वर्णितौ पादे विलीनौ तु युवां हरेः।
साक्षाद् गोलोकनाथां-शस्त्वमेव तत्समो महान् ॥९

नारायण उवाच।

ब्रह्मेश-शेष-विघ्नेशाः कूर्म्मो धर्म्मोऽहमेव च।
नरश्च कार्त्तिकेयश्च श्रीकृष्णांशा वयं नव ॥ १०
अहो गोलोकनाथस्य महिमा केन वर्णितः।
यं स्वयं नो विजानीमो किं नारद (क)विपश्चितः॥११
शूकरो वामनः कल्की बौद्धः कपिल-मीनकौ।
एते चांशाः कलाश्चान्ये सन्त्येव कतिधा मुने ॥ १२
पूर्णो नृसिंहो रामश्च श्वेतद्वीपविराजितः।
परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम् ॥ १३

(क) न वेदाः किमिति क्वचित् पाठः।

वैकुण्ठे कमलाकान्तो रूपभेदश्चतुर्भुजः।
गोलोके गोकुले राधा-कान्तोऽयं द्विभुजः स्वयम्॥१४
अस्यैव तेजो नित्यञ्च चिन्तां कुर्व्वन्ति योगिनः।
भक्ताः पादाम्बुजं तेजः कुतस्तेजस्विनं विना ॥ १५
शृणु विप्र वर्णयामि यशोदा-नन्दयोस्तपः।
रोहिण्याश्च यतो हेतो-ईदृशुस्ते हरेर्मुखम् ॥ १६
वसूनां प्रवरो नन्दो नाम्ना द्रोणस्तपोधनः।
तस्य पत्नी धरा साध्वी यशोदा सा तपस्विनी ॥१७
रोहिणी सर्पमाता च कद्रुः किंसपकारिणी।
एतेषां जन्मचरितं निबोध कथयामि ते ॥ १८
एकदा च धराद्रोणौ पर्व्वते गन्धमादने।
पुण्यदे भारते वर्षे गौतमाश्रमसन्निधौ ॥ १९
तपश्चकार तत्रैव वर्षाणामयुतं मुने।
कृष्णस्य दर्शनार्थञ्च निर्ज्जने सुप्रभातटे ॥ २०
न दृश्य हरिं द्रोणो धरा चैव तपस्विनी।
कृताग्निकुण्डं वैराग्यात् प्रवेष्टुं समुपस्थितौ ॥ २१
तौ मर्त्तुकामौ दृष्ट्वा च वाग्बभूवाशरीरिणी।
द्रक्ष्यथः श्रीहरिं पृथ्व्यां गोकुले पुत्ररूपिणम् ॥२२
जन्मान्तरे वसुश्रेष्ठ दुर्दर्शं योगिनां विभुम्।
ध्यानासाध्यञ्च विदुषां ब्रह्मादीनाञ्च वन्दितम् ॥ २३
श्रुत्वैवं तद्धरा-द्रोणौ जग्मतुः स्वालयं सुखात्।
लब्धा तु भारते जन्म दृष्टं ताभ्यां हरेर्मुखम् ॥ २४
यशोदानन्दयोरेव कथितं चरितं मया।
सुयोग्यं देवतानाञ्च रोहिणीचरितं शृणु ॥ २५
एकदा देवतामाता पुण्योत्सवदिने सती।
विज्ञापनं चरद्वारा चकार कश्यपं मुने ॥ २६
सुस्नाता सुन्दरी देवी रत्नालङ्कारभूषिता।
चकार वेशं विविधं ददर्श दर्पणे मुखम् ॥ २७
कस्तूरीबिन्दुना सार्द्धं सिन्दूरबिन्दुसंयुतम्।
रत्नकुण्डलशोभाढ्यं पत्नाभरणभूषितम् ॥ २८
गजमौक्तिकसंयुक्तं (क) नासाग्रं सुमनोहरम्।
शरत्पार्व्वणचन्द्रास्यं शरत्पङ्कजलोचनम्।
वक्रभङ्गिमसंयुक्तं विचित्रकज्जलोज्ज्वलम् ॥ २९
पक्वदाड़िम्ववीजाभ-दन्तराजिविराजितम्।
पक्वबिम्बाधरौष्ठञ्च स्मितं सुन्दरं सदा ॥ ३०
अतीवकमनीयञ्च मुनीन्द्रचित्तमोहनम् ॥ ३१

(क) सौन्दर्य्यमिति क्वचित् पाठः।

एवम्भूतं मुखं दृष्ट्वा सुन्दरी स्वगृहं स्थिता ।
पश्यन्ती पतिमार्गञ्च कामबाणप्रपीड़िता ॥ ३२
शुश्राव वार्त्तामदितिः कश्यपं कद्रुसंयुतम् ।
रसभारसमारम्भे तस्या वक्षःस्थलस्थितम् ॥ ३३
श्रुत्वा चुकोप साध्वी सा हताशा रतिकातरा ।
न शशाप पतिं प्रेम्णा शशाप सर्पमातरम् ॥ ३४
न देवालययोग्या सा धर्म्मिष्ठा धर्म्मनाशिनी ।
दूरं गच्छतु स्वर्लोकाद्-यातु योनिञ्च मानवीम् ॥३५
श्रुत्वैवं सा चरद्वारां शशाप देवमातरम् ।
सा चैव मानवीं योनिं यातु मर्त्त्यं जरायुताम् ॥३६
कश्यपो बोधयामास कद्रुञ्च सर्पमातरम् ।
काले यास्यसि मर्त्त्यञ्च मया सह शुचिस्मिते ॥ ३७
त्यज भीतिं लभ मुदं द्रक्ष्यसि श्रीहरेर्मुखम् ।
एवमुक्त्वा कश्यपश्च प्रजगामादितेर्गृहम् ॥ ३८
वाञ्छापूर्णञ्च तस्याश्च चकार भगवान् विभुः ।
ऋतौ तत्र महेन्द्रश्च बभूव ह सुरर्षभ ॥ ३९
अदितिर्देवकी चैव सपमाता च रोहिणी ।
कश्यपो वसुदेवश्च श्रीकृष्णजनको महान् ॥ ४०
रहस्यं गोपनीयञ्च सर्व्वं निगदितं मुने ।
अधुना बलदेवस्य जन्माख्यानं मुने शृणु ॥ ४१
अनन्तस्याप्रमेयस्य सहस्रशिरसः प्रभोः ।
रोहिणी वसुदेवस्य भार्य्यारत्नञ्च प्रेयसी ॥ ४२
जगाम गोकुलं साध्वी वसुदेवाज्ञया मुने ।
सङ्कर्षणस्य रक्षार्थं कंसभीतात् पलायिता ॥ ४३
देवक्याः सप्तमं गर्भं माया कृष्णाज्ञया तदा ।
रोहिण्या जठरे तत्र स्थापयामास गोकुले ।
संस्थाप्य च यदा गर्भं कैलासं सा जगाम ह ॥ ४४
दिनान्तरे कतिपये रोहिणी नन्दमन्दिरे ॥ ४५
सुषाव पुत्रं कृष्णांश-तप्तरौप्याभमीश्वरम् ।
ईषद्धास्यप्रसन्नास्यं ज्वलन्तं-ब्रह्मतेजसा ॥ ४६
तस्यैव जन्ममात्रेण देवा मुमुदिरे तदा ।
स्वर्गे दुन्दुभयो नेदु-रानका मुरजादयः ।
जयशब्दं शङ्खशब्दं चक्रुर्देवा मुदान्विताः ॥ ४७
नन्दो हृष्टो ब्राह्मणेभ्यो धनं बहुविधं ददौ ।
चिच्छेद नाड़ीं धात्री च स्नापयामास बालकम् ॥४८
जयशब्दं ददुर्गोप्यः सर्व्वाभरणभूषिताः ।
परपुत्रोत्सवं नन्द-श्चकार परमादरात् ॥ ४९
ददौ यशोदा गोपीभ्यो ब्राह्मणीभ्यो धनं मुदा ।
नानाविधानि द्रव्याणि सिन्दूरं तैलमेव च ॥ ५०
इत्येवं कथितं वत्स यशोदानन्दयोस्तपः ।
जन्माख्यानञ्च हलिनो रोहिणीचरितं तथा ॥ ५१
अधुना वाञ्छनीयं ते नन्दपुत्रोत्सवं शृणु ।
सुखदं मोक्षदं सारं जन्म-मृत्यु-जरापहम् ॥ ५२
मङ्गलं कृष्णचरितं वैष्णवानाञ्च जीवनम् ।
सर्व्वाशुभविनाशञ्च भक्तिदास्यप्रदं हरेः ॥ ५३
वसुदेवश्च श्रीकृष्णं संस्थाप्य नन्दमन्दिरे ।
गृहीत्वा बालिकां हृष्टो जगाम निजमन्दिरम् ॥ ५४
कथितं चरितं तस्याः श्रुतं मन्मुखतो (क) मुने ।
अधुना गोकुले कृष्ण-चरितं शृणु मङ्गलम् ॥ ५५
वसुदेवे गृहं याते यशोदा नन्द एव च ।
मङ्गले सूतिकागारे जजागार जयाश्रिते ॥ ५६
ददर्श पुत्रं भूमिष्ठं नवीननीरदप्रभम् ।
अतीवसुन्दरं नग्नं पश्यन्तं गृहशेखरम् ॥ ५७
शरत्पार्व्वणचन्द्रास्यं नीलेन्दीवरलोचनम् ।
रुदन्तञ्च हसन्तञ्च रेणुसंयुक्तविग्रहम् ॥ ५८
हस्तद्वयं भुवि न्यस्तं प्रेरयन्तं पदाम्बुजम् ।
दृष्ट्वा नन्दः प्रियासार्द्धं हरिं हृष्टो बभूव ह ॥ ५९
धात्री तं स्नापयामास शीततोयेन बालकम् ।
चिच्छेद नाड़ीं बालस्य हर्षाद्गोप्यो जयं ददुः ॥६०
आजग्मुर्गोपिकाः सर्व्वा बृहच्छ्रोण्यश्चलत्कुचाः ।
बालिकाश्च वयस्याश्च विप्रपत्न्यश्च सूतिकाम् ॥ ६१
आशिषं युयुजुः सर्व्वा ददृशुर्बालकं मुदा ।
क्रोड़ेषु चक्रुः प्रशशंसु-स्तुष्टुस्तत्र च काश्चन ॥ ६२
नन्दः सचेलः स्नात्वा च धृत्वा धौते च वाससी ।
पारम्पर्य्यविधं तत्र चकार हृष्टमानसः ॥ ६३
ब्राह्मणान् भोजयामास कारयामास मङ्गलम् ।
वाद्यानि वादयामास वन्दिभ्यश्च ददुधनम् ॥ ६४
ततो नन्दश्च सानन्दं ब्राह्मणेभ्यो धनं ददौ ।
सद्रत्नानि प्रवालानि हीरकाणि च सादरम् ॥ ६५
तिलानां पर्व्वतान् सप्त सुवर्णकाञ्चनं मुने ।
रौप्यं धान्याचलं वस्त्रं गोसहस्रं मनोरमम् ॥ ६६
दधि दुग्धं शर्कराञ्च नवनीतं घृतं मधु ।
मिष्टान्नं लड्डुकौघञ्च स्वादूनि मोदकानि च ॥ ६७

(क) यत् सुखदमिति क्वचित् पाठः ।

भूमिञ्च सर्व्वशस्याढ्यां वायुवेगान् तुरङ्गमान् ।
ताम्बूलानि च तैलानि दत्त्वा हृष्टो बभूव ह ॥ ६८
रक्षितुं सूतिकागारं योजयामास ब्राह्मणान् ।
तन्त्रमन्त्रज्ञमनुजान् स्थविरान् गोपिकागणान् ॥ ६९
वेदञ्च पाठयामास हरेर्नामैकमङ्गलम् ।
भक्त्या च ब्राह्मणद्वारा पूजयामास देवताः ॥ ७०
सस्मिता विप्रपत्न्यश्च वयस्थाः स्थविरा वराः ।
बालिका बालकयुता आजग्मुर्नन्दमन्दिरम् ।
तेभ्योऽपि प्रददौ रत्नं धनानि विविधानि च (क)॥७१
गोपालिकाश्च वृद्धाश्च रत्नालङ्कारभूषिताः ।
सस्मिताः शीघ्रगामिन्य आजग्मुर्नन्दमन्दिरम् ।
सूक्ष्मवस्त्राणि रौप्याणि गोसहस्राणि सादरम् ॥७२
नानाविधाश्च गणका ज्योतिःशास्त्रविशारदाः ।
वाक्सिद्धाः पुस्तककरा आजग्मुर्नन्दमन्दिरम् ॥ ७३
नन्दस्तेभ्यो नमस्कृत्य चकार विनयं मुदा ।
आशिषं युयुजुः सर्व्वे ददृशुर्बालकं परम् ॥ ७४
एवं सम्भृतसम्भारो बभूव व्रजपुङ्गवः ।
गणनां कारयामास यद्भविष्यं शुभाशुभम् ॥ ७५
एवं ववर्द्ध बालश्च शुक्लपक्षे यथा शशी ।
नन्दालये हली-चैव भुङ्क्ते मातुः पयोधरम् ॥ ७६
यशोदा रोहिणी हृष्टा तत्र पुत्त्रोत्सवे मुदा ।
तैल-सिन्दूर-ताम्बूलं धनं ताभ्यो ददौ मुने ॥ ७७
दत्त्वाशिषश्च शिरसि ताश्च ते स्वालयं ययुः ।
यशोदा-रोहिणी-नन्दास्तस्थुर्गेहे मुदान्विताः ॥७८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारद-संवादे नन्द-
पुत्त्रोत्सवो नाम नवमोऽध्यायः ॥९

---

## दशमोऽध्यायः ।

नारायण उवाच ।

अथ कंसः सभामध्ये स्वर्णसिंहासनस्थितः ।
शुश्राव वाचं गगने शृणु त्वमशरीरिणीम् ॥ १
किं करोषि महामूढ़ चिन्तां स्वश्रेयसः कुरु ।
जातः कालो धरण्यां ते तिष्ठोपाये नराधिप ॥ २
नन्दाय तनयं दत्त्वा वसुदेवस्तवान्तकः ।
कन्यामादाय तुभ्यञ्च दत्त्वा स मायया स्थितः ॥ ३
माया सा कन्यकेयञ्च वासुदेवः स्वयं हरिः ।
तव हन्ता गोकुले च वर्द्धते नन्दमन्दिरे ॥ ४
देवकीसप्तमो गर्भो न सुस्राव स्मृतं श्रुतम् ।
स्थापयामास माया तं रोहिणीजठरे किल ॥ ५
तत्र जातश्च शेषांशो बलदेवो महाबलः ।
गोकुले तौ च वर्द्धेते कालौ ते नन्दमन्दिरे ॥६
श्रुत्वा तद्वचनं राजा बभूव नतकन्धरः ।
चिन्तामवाप सहसा तत्याजाहारमुन्मनाः ॥ ७
पूतनाञ्च समानीय प्राणेभ्यः प्रेयसीं सतीम् ।
उवाच भगिनीं राजा सभामध्ये च नीतिवित् ॥ ८

कंस उवाच ।

पूतने गोकुलं गच्छ कार्य्यार्थं नन्दमन्दिरे ।
विषाक्तञ्च स्तनं कृत्वा शिशवे देहि सत्वरम् ॥ ९
त्वं मनोयायिनी वत्से मायाशास्त्रविशारदा ।
मायामानुषरूपञ्च विधाय व्रज योगिनि ॥ १०
दुर्व्वाससो महामन्त्रं प्राप्य सर्व्वत्रगामिणी ।
सर्व्वरूपं विधातुं त्वं शक्तासि सुप्रतिष्ठिते ॥ ११
इत्युक्त्वा तां महाराज-स्तस्थौ संसदि नारद ।
जगाम पूतना कंसं प्रणम्य कामचारिणी ॥ १२
तप्तकाञ्चनवर्णाभा नानालङ्कारभूषिता ।
बिभ्रती कवरीभारं मालतीमाल्यसंयुतम् ॥ १३
कस्तूरीबिन्दुना सार्द्धं सिन्दूरं बिभ्रती मुदा ।
मञ्जीर-रसनाभ्याञ्च कलशब्दं प्रकुर्व्वती ॥ १४
सम्प्राप्य गोष्ठं ददृशे नन्दाश्रममनोहरम् ।
परिखाभिर्गभीराभि-र्दुर्लङ्घ्याभिश्च वेष्टितम् ॥ १५
रचितं प्रस्तरैर्दिव्यै-र्निर्म्मितं विश्वकर्म्मणा ।
इन्द्रनीलैर्मरकतैः पद्मरागैश्च भूषितम् ॥ १६
सुवर्णकलसैर्दिव्यै-श्चित्रितैः शेखरोज्ज्वलम् ।
प्राकारैर्गगनस्पर्शै-श्चतुर्द्वारसमन्वितैः ॥ १७
युक्तैर्लौहकवाटैश्च द्वारपालसमन्वितैः ।
वेष्टितं सुन्दरं रम्यं सुन्दरीगणवेष्टितम् ॥ १८
मुक्ता-माणिक्य-परशैः पूर्णं रत्नादिभिर्धनैः ।
स्वर्णपात्रघटाकीर्णं गवां कोटिभिरन्वितम् ॥ १९
भरणीयैः किङ्करैश्च गोपलक्षैः समन्वितम् ।
दासीनाञ्च सहस्रैश्च कर्म्मव्यग्रैः समन्वितम् ॥ २०
प्रविवेशाश्रमं साध्वी सस्मिता सुमनोहरा ।

(क) - सार्द्धश्लोकोऽयं क्वचित् पुस्तके न दृश्यते ।

दृष्ट्वा तां प्रविशन्तीं ता गोप्यो दुष्टां न मेनिरे(क)२१
किं वा पद्मालया दुर्गा कृष्णं द्रष्टुं समागता।
प्रणेमुर्गोपिकाः सर्व्वाः पप्रच्छुः कुशलञ्च ताम्।
ददौ सिंहासनं पाद्यं वासयामास तत्र वै ॥ २२
पप्रच्छ कुशलं सा च गोपानां बालकस्य च।
उवास सस्मिता साध्वी पाद्यं जग्राह सादरम् ॥ २३
ताम्चुर्गोपिकाः सर्व्वाः का त्वमीश्वरि साम्प्रतम्।
वासस्ते कुत्र किं नाम किं वात्र कर्म्म तद्वद ॥ २४
तासाञ्च वचनं श्रुत्वा ता उवाच मनोहरा।
मथुरावासिनी गोपी साम्प्रतं विप्रकामिणी ॥ २५
श्रुतं वाचिकवक्त्रेण तत्त्वं मङ्गलसूचकम्।
बभूव स्थविरे काले नन्दपुत्रो महानिति ॥ २६
श्रुत्वागताहं तं द्रष्टु-माशिषं कर्त्तुमीप्सितम्।
पुत्रमानय तं दृष्ट्वा यामि कृत्वा तमाशिषम् ॥ २७
ब्राह्मणीवचनं श्रुत्वा यशोदा हृष्टमानसा।
प्रणम्य च सुतं क्रोड़े ददौ ब्राह्मणयोषिते ॥ २८
कृत्वा क्रोड़े शिशुं साध्वी चुचुम्ब च पुनः पुनः।
स्तनं ददौ सुखासीना हरिं पुण्यवती सती ॥ २९
अहोऽद्भुतोऽयं बालस्ते सुन्दरो गोपसुन्दरि।
गुणैर्नारायणसमो बालोऽयमित्युवाच ह ॥ ३०
हृष्टो विषस्तनं पीत्वा जहास वहसि स्थितः।
तस्याः प्राणैः सह पपौ विषक्षीरं सुधामिव ॥ ३१
तत्याज बालकं साध्वी प्राणांस्त्यक्त्वा पपात च।
विकृताकारवदना चोत्तानवदनं (ख) मुने ॥ ३२
स्थूलदेहं परित्यज्य सूक्ष्मदेहं विवेश सा।
आसरोह रथं शीघ्रं रत्नसारविनिर्म्मितम् ॥ ३३
पाषदप्रवरैर्दिव्यै-र्वेष्टितं सुमनोहरैः।
श्वेतचामरलक्षेण वेष्टितं लक्षदर्पणैः ॥ ३४
वह्निशौचेन वस्त्रेण सूक्ष्मेण शोभितं वरम्।
नानाचित्रविचित्रैश्च सद्रत्नकलसैर्युतम् ॥ ३५
सुन्दरं शतचक्रञ्च ज्वलितं रत्नतेजसा।
पाषदास्तां रथे कृत्वा जग्मुर्गोलोकमुत्तमम् ॥ ३६
दृष्ट्वा तमद्भुतं गोपा गोपिकाश्चातिविस्मिताः।
कंसः श्रुत्वा च तत् सर्व्वं विस्मितश्च बभूव ह ॥ ३७

(क) दृष्ट्वा तां प्रविवेशन्तीं ता गोप्यो बहु मेनिरे इत्यपि पाठः।

(ख) चोत्तारवदनेति क्वचित् पाठः।

यशोदा बालकं नीत्वा क्रोड़े कृत्वा स्तनं ददौ।
मङ्गलं कारयामास विप्रद्वारा शिशोर्मुने ॥ ३८
ददाह देहं तस्याश्च नन्दः सानन्दपूर्व्वकम्।
चन्दनागुरुकस्तूरी-समं सम्प्राप्य सौरभम् ॥ ३९

नारद उवाच।

सा वा का राक्षसीरूपा मुने पुण्यवती सती।
केन पुण्येन तं दृष्ट्वा जगाम कृष्णमन्दिरम् ॥ ४०

नारायण उवाच।

बलियज्ञे वामनस्य दृष्ट्वा रूपं मनोहरम्।
बलिकन्या रत्नमाला पुत्रस्नेहं चकार तम् ॥ ४१
मनसा मानसं चक्रे पुत्रस्य सदृशो मम।
भवेद्यदि स्तनं दत्त्वा करोमि तञ्च वक्षसि ॥ ४२
हरिस्तन्मानसं ज्ञात्वा पपौ जन्मान्तरे स्तनम्।
ददौ मातृगतिं तस्यै कामपूरकृपानिधिः ॥ ४३
दत्त्वा विषस्तनं कृष्णं पूतना राक्षसी मुने।
मुक्तिं मातृगतिं प्राप्य कं भजामि विना हरिम् ॥४४
इत्येवं कथितं विप्र श्रीकृष्णगुणवर्णनम्।
पदे पदे सुमधुरं प्रवरं कथयामि ते ॥ ४५

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे पूतनामोक्षणप्रस्तावो
दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः।

नारायण उवाच।

एकदा गोकुले साध्वी यशोदा नन्दगेहिनी।
गृहकर्म्मणि संयुक्ता कृत्वा बालं स्ववक्षसि ॥ १
वायुरूपं तृणावर्त्त-मागच्छन्तञ्च गोकुले।
श्रीहरिर्मनसा ज्ञात्वा भारयुक्तो बभूव ह ॥ २
भाराक्रान्ता यशोदा च तत्याज बालकं तदा।
शयानं कारयित्वा च जगाम यमुनां मुने ॥ ३
एतस्मिन्नन्तरे तत्र वायुरूपधरोऽसुरः।
आदाय तं भ्रामयित्वा गत्वा च शतयोजनम् ॥ ४
बभञ्ज वृक्षशाखाश्च अन्धीभूतञ्च गोकुलम्।
चकार सद्यो मायावी पुनस्तत्र पपात ह ॥ ५
असुरोऽपि हरिस्पर्शात् जगाम हरिमन्दिरम्।
सुन्दरं रथमारुह्य कृत्वा कर्म्मक्षयं स्वकम् ॥ ६

पाण्ड्यदेशोद्भवो राजा शापाद्दुर्व्वाससोऽसुरः ।
श्रीकृष्णचरणस्पर्शात् गोलोकं स जगाम ह ॥ ७
वात्यारूपेण ते गोपा गोप्यश्च भयविह्वलाः ।
न दृष्ट्वा बालकं तत्र शयानं शयने मुने ॥ ८
सर्व्वे निजघ्नुः स्वं वक्षः-स्थलं शोकाकुला भयात् ।
केचिन्मूर्च्छामवापुश्च रुरुदुश्चापि केवलम् ॥ ९
अन्वेषणं प्रकुर्व्वन्तो ददृशुर्बालकं व्रजाः ।
धूलिधूसरसर्व्वाङ्गं पुष्पोद्यानान्तरे स्थितम् ॥ १०
वाटैकदेश-(क) सरस-स्तीरे नीरसमीपतः ।
पश्यन्तं गगनं शश्वद्रुदन्तं भयकातरम् ॥ ११
गृहीत्वा बालकं नन्दः कृत्वा वक्षसि सत्वरम् ।
दृष्टं दृष्टं मुखं तस्य रुरोद च सुतान्वितः ॥ १२
यशोदा रोहिणी शीघ्रं दृष्ट्वा बालं रुरोद च ।
कृत्वा वक्षसि तद्वक्त्रं चचुम्ब च मुहुर्म्मुहुः ॥ १३
मङ्गलं कारयामास स्नापयामास बालकम् ।
स्तनं ददौ यशोदा च प्रसन्नवदनेक्षणा ॥ १४

नारद उवाच ।

कथं शशाप दूर्व्वासाः पाण्ड्यदेशोद्भवं नृपम् ।
सुविचार्य्य वद ब्रह्मन्नितिहासं पुरातनम् ॥ १५

नारायण उवाच ।

पाण्ड्यदेशोद्भवो राजा सहस्राक्षः प्रतापवान् ।
स्त्रीसहस्रं समादाय कामवाणप्रपीड़ितः ॥ १६
मनोहरे निर्ज्जने च पर्व्वते गन्धमादने ।
विजहार नदीतीरे पुष्पोद्याने मनोरमे ॥ १७
नानाप्रकारशृङ्गारं विपरीतादिकं नृपः ।
नखदन्तक्षताङ्कञ्च कामिनीनां चकार सः ॥ १८
कृत्वा मूर्त्तिसहस्रञ्च योगीन्द्रो नृपतीश्वरः ।
कृत्वा स्थले विहारञ्च जलक्रीड़ां चकार सः ॥ १९
नार्य्यो विवसनाः सर्व्वा नग्नाश्च नृपमूर्त्तयः ।
विजह्रुश्च पुष्पभद्रा-नदीतीरे मनोरमे ॥ २०
एतस्मिन्नन्तरे तेन पथा याति महामुनिः ।
शिष्यलक्षैः परिवृतः कैलासं शङ्करं प्रति ॥ २१
दृष्ट्वा मुनिं महामत्तो नोत्तस्थौ न ननाम च ।
वाचा हस्तेन राजा तु सम्भाषां न चकार ह ॥ २२
दृष्ट्वा चुकोप नृपतिं शशाप स्फुरिताधरः ।
असुरो भव पापिष्ठ योगाद्भ्रष्टो भुवं व्रज ॥ २३

भारते लक्षवर्षञ्च स्थातव्यं ते नराधम ।
ततो हरिपदस्पर्शाद्गोलोकं यास्यसि ध्रुवम् ॥ २४
स्थाने स्थाने हे महिष्यो जनिं लभत भारते ।
राजेन्द्रगेहे राजेन्द्राद्-भविष्यथ मनोहराः ॥ २५
इत्युक्त्वा तु मुनीन्द्रश्च जगाम शङ्करालयम् ।
हाहाशब्दं विचक्रुश्च शिष्यसङ्घाः कृपालवः ॥ २६
गते मुनीन्द्रे राजेन्द्रो रुरोद च सरित्तटे ।
रुरुदू रमणीयाश्च रमण्यो विरहातुराः ॥ २७
हे नाथ रमणश्रेष्ठे-त्युच्चार्य्य च पुनः पुनः ।
त्वां विना वा क्व यास्यामो वयं त्वं वा क्व यास्यसि॥२८
पुनर्न विहरिष्याम-स्त्वया सार्द्धं सुनिर्ज्जने ।
न करिष्यसि राज्यं त्वं न यास्यामो गृहं वयम् ॥२९
शरच्चन्द्रप्रभामुष्टं न द्रक्ष्यामो मुखं तव ।
प्रसारिताभ्यां बाहुभ्यां नानयिष्यामस्त्वामुरः ॥ ३०
इत्युक्त्वा रुरुदुः सर्व्वाः पुरस्कृत्य नराधिपम् ।
मूर्च्छामवापुश्चरणं धृत्वा राज्ञः सरित्तटे ॥ ३१
राजाग्निकुण्डं निर्म्माय नारीभिः सह नारद ।
स्मृत्वा हरिपदाम्भोजं ज्वलदग्नौ विवेश ह ॥ ३२
हाहाकारं सुराः सर्व्वे प्रचक्रुर्गगनस्थिताः ।
इत्यूचुर्मुनयश्चैव दैवञ्च बलवत्तरम् ॥ ३३
स च राजा तृणावर्त्तो जगाम हरिमन्दिरम् ।
महिष्यो भारते वर्षे लेभिरे जन्म वाञ्छितम् ॥ ३४
इत्येवं कथितं सर्व्वं हरेर्माहात्म्यमुत्तमम् ।
मोक्षणं नृपतेश्चैव मुनीन्द्रशापहेतुकम् ॥ ३५

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारद-संवादे तृणावर्त्त-
वध एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ।

नारायण उवाच ।

एकदा मन्दिरे नन्द-पत्नी सानन्दपूर्व्वकम् ।
कृत्वा वक्षसि गोविन्दं क्षुधितञ्च स्तनं ददौ ॥ १
एतस्मिन्नन्तरे गोप्य आजग्मुर्नन्दमन्दिरम् ।
स्थविराश्च वयस्याश्च बालिका बालकान्विताः ॥ २
अदृष्टं बालकं शीघ्रं संन्यस्य शयने सती ।
प्रणनाम समुत्थाय कर्म्मण्यौत्थानिके मुदा ॥ ३

(क) वाटैकदेशे इति वा पाठः ।

तैल-सिन्दूर-ताम्बूलं ददौ ताभ्यो मुदान्विता।
मिष्टवस्तूनि वस्त्राणि भूषणानि च गोपिकाः ॥ ४
एतस्मिन्नन्तरे कृष्णो रुरोद क्षुधितस्तदा।
प्रेरयित्वा तु चरणं मायेशो मायया विभुः ॥ ५
पपात चरणं तस्य प्रवीणे शकटे मुने।
विश्वम्भरपदाघातात् तच्च चूर्णं बभूव ह ॥ ६
बभञ्ज शकटं पेतुर्भग्नकाष्ठानि तत्र वै।
पपात दधि दुग्धञ्च नवनीतं घृतं मधु ॥ ७
दृष्ट्वाश्चर्यं गोपिकाश्च दुद्रुवुर्बल्लवा भयात्।
ददृशुर्भग्नशकट-मिन्धनान्यन्तरे शिशुम् ॥ ८
भग्नं भाण्डसमूहञ्च पतितं मधु गोरसम्।
प्रेरयित्वा तु काष्ठानि जग्राह बालकं तदा ॥ ९
मायालक्षितसर्व्वाङ्गं रुदन्तं क्षुधितं क्षुधा।
स्तनं ददौ यशोदा तं रुरोद च भृशं शुचा ॥ १०
पप्रच्छुर्बालकान् गोपा बभञ्ज शकटं कथम्।
किञ्चिद्वेत्तुं न पश्यामि सहसेति किमद्भुतम् ॥ ११
इत्यूचुर्बालकाः सर्व्वे गोपाः शृणुत तद्वचः।
श्रीकृष्णस्य पदाघाता-द्बभञ्ज शकटं ध्रुवम् ॥ १२
श्रुत्वा तद्वचनं गोपा गोप्यश्च जहसुर्मुदा।
न हि जग्मुः प्रतीतिञ्च मिथ्येत्यूचुर्व्रजे प्रजाः ॥ १३
शिशोः स्वस्त्ययनं तूर्णं चक्रुर्ब्राह्मणपुङ्गवाः।
हस्तं दत्त्वा शिशोर्गात्रे पपाठ कवचं द्विजः ॥ १४
वदामि तत् ते विप्रेन्द्र कवचं सर्व्वरक्षणम्।
यद्दत्तं मायया पूर्णं ब्रह्मणे नाभिपङ्कजे ॥ १५
निद्रिते जगतीनाथे जले च जलशायिने।
भीताय स्तुतिकर्त्रे च मधुकैटभयोर्भयात् ॥ १६

योगनिद्रोवाच।

दूरीभूतं कुरु भयं भयं किं ते हरौ स्थिते।
स्थितायां मयि च ब्रह्मन् सुखं तिष्ठ जगत्पते ॥ १७
श्रीहरिः पातु ते वक्त्रं मस्तकं मधुसूदनः।
श्रीकृष्णश्चक्षुषी पातु नासिकां राधिकापतिः ॥ १८
कर्णयुग्मञ्च कण्ठञ्च कपालं पातु माधवः।
कपोलं पातु गोविन्दः केशांश्च केशवः स्वयम् ॥ १९
अधरोष्ठं हृषीकेशो दन्तपङ्क्तिं गदाग्रजः।
रासेश्वरश्च रसनां तालुकां वामनोऽवतु ॥ २०
वक्षः पातु मुकुन्दस्ते जठरं पातु दैत्यहा।
जनार्दनः पातु नाभिं पातु विष्णुश्च मेहनम् ॥ २१
नितम्बयुग्मं गुह्यञ्च पातु ते पुरुषोत्तमः।
जानुयुग्मं जानकीशः पातु ते सर्व्वदा विभुः ॥ २२
हस्तयुग्मं नृसिंहश्च पातु सर्व्वत्र सङ्कटे।
पादयुग्मं वराहश्च पातु वः सर्व्वदा विभुः ॥ २३
ऊर्द्ध्वं नारायणः पातु अधस्तां कमलापतिः।
पातु पूर्व्वे च गोपालः पातु वह्नौ दशास्यहा ॥ २४
वनमाली पातु याम्यां वैकुण्ठः पातु नैरृते।
वारुणे वासुदेवश्च पातु ते जलजासनः ॥ २५
पातु ते सन्ततमजो वायव्यां विष्टरश्रवाः।
उत्तरे च सदा पातु चानन्तोऽन्तकरः स्वयम् ॥ २६
ऐशान्यामीश्वरः पातु सर्व्वत्र पातु शत्रुजित्।
जले स्थले चान्तरीक्षे निद्रायां पातु राघवः ॥ २७
इत्येवं कथितं ब्रह्मन् कवचं परमाद्भुतम्।
कृष्णेन कृपया दत्तं स्मृतेनैव पुरा मया ॥ २८
शुम्भेन सह संग्रामे निलक्ष्ये घोरदारुणे।
गगनस्थितो मया सद्यः प्राप्तिमात्रेण सज्जितः ॥२९
कवचस्य प्रभावेण धरण्यां पतितो मृतः।
पूर्व्वं वर्षशतं खे च कृत्वा युद्धं भयावहम् ॥ ३०
मृते शुम्भे च गोविन्दः कृपालुर्गगने स्थितः।
माल्यञ्च कवचं दत्त्वा गोलोकं स जगाम ह ॥ ३१
कल्पान्तरस्य वृत्तान्तं कृपया कथितं मुने।
अभ्यां तव भयं नास्ति कवचस्य प्रभावतः ॥ ३२
कोटिशः कोटिशो नष्टा मया दृष्टाश्च सर्व्वशः।
अहञ्च हरिणा सार्द्धं कल्पे कल्पे स्थिरा सदा ॥ ३३
इत्युक्त्वा कवचं दत्त्वा सान्तर्द्धानं चकार ह।
निःशङ्को नाभिकमले तस्थौ स कमलोद्भवः ॥ ३४
सुवर्णगुटिकायान्तु कृत्वेदं कवचं परम्।
कण्ठे वा दक्षिणे बाहौ बध्नीयाद्यः सुधीः सदा॥३५
विषाग्नि-सर्प-शत्रुभ्यो भयं तस्य न विद्यते।
जले स्थले चान्तरीक्षे निद्रायां रक्षतीश्वरः ॥ ३६
संग्रामे वज्रपाते च विपत्तौ प्राणसङ्कटे।
कवचस्य बलादेव सद्यो निःशङ्कतां व्रजेत् ॥ ३७
बद्ध्वेदं कवचं कण्ठे शङ्करस्त्रिपुरं पुरा।
जघान लीलामात्रेण दुरन्तमसुरेश्वरम् ॥ ३८
बद्ध्वेदं कवचं काली रक्तबीजं चखाद सा।
सहस्रशीर्षा धृत्वेदं विश्वं धत्ते तिलं यथा ॥ ३९
आवां सनत्कुमारश्च धर्म्मः साक्षी च कर्म्मणाम्।

कवचस्य प्रसादेन सर्व्वत्र जयिनो वयम् ॥ ४०
न्यस्य नन्दशिशोः कण्ठे जगाम कवचं द्विजः।
आत्मनः कवचं कण्ठे दधार च स्वयं हरिः ॥ ४१
प्रभावं कथितं सर्व्वं कवचस्य हरेस्तथा।
अनन्तस्याच्युतस्यैव प्रभावमतुलं मुने ॥ ४२

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारद-संवादे शकटभञ्जन-कवचन्यासो द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः।

नारायण उवाच।

अपरं कृष्णमाहात्म्यं शृणु किञ्चिन्महामुने।
विघ्ननिघ्नं पापहरं महत् पुण्यकरं परम् ॥ १
एकदा नन्दपत्नी सा कृत्वा कृष्णं स्ववक्षसि।
स्वर्णसिंहासनस्था च क्षुधितं तं स्तनं ददौ ॥ २
एतस्मिन्नन्तरे तत्र विप्रेन्द्रैकः समागतः।
वृतः शिष्यसमूहैश्च प्रज्वलन् ब्रह्मतेजसा ॥ ३
प्रजपन् परमं ब्रह्म शुद्धस्फटिकमालया।
दण्डी छत्री शुक्लदन्तः शोभितः शुक्लवाससा।
ज्योतिर्ग्रन्थो मूर्त्तिमांश्च वेदवेदाङ्गपारगः ॥ ४
परिबिभ्रज्जटाभारं तप्तकाञ्चनसन्निभम्।
शरत्पार्व्वणचन्द्रास्यो गौराङ्गः पद्मलोचनः ॥ ५
योगीन्द्रो धूर्जटेः शिष्यः शुद्धभक्तो गदाभृतः।
व्याख्यामुद्राकरः श्रीमान् शिष्यानध्यापयन्मुदा ॥ ६
वेदव्याख्यां कतिविधां प्रकुर्व्वन्नवलीलया।
एकीभूय चतुर्वेद-स्तेजो वा मूर्त्तिमानिव ॥ ७
साक्षात् सरस्वतीकण्ठः सिद्धान्तैकविशारदः।
ध्यानैकनिष्ठः श्रीकृष्ण-पादाम्भोजे दिवानिशम् ॥ ८
जीवन्मुक्तो हि सिद्धेशः सर्व्वज्ञः सर्व्वदर्शनः।
तं दृष्ट्वा सा समुत्तस्थौ यशोदा प्रणनाम च ॥ ९
पाद्यं गां मधुपर्कञ्च स्वर्णसिंहासनं ददौ।
बालकं वन्दयामास मुनीन्द्रं सस्मितं मुदा ॥ १०
मुनिश्च मनसा चक्रे प्रणामशतकं हरिम्।
आशिषं प्रददौ प्रीत्या वेदमन्त्रोपयोगिकम् ॥ ११
प्रणेमुश्चैव शिष्याश्च ते तां शुयुशुराशिषम्।
शिष्यान् पाद्यादिकं भक्त्या प्रददौ च पृथक् पृथक् ॥१२
ऋषिश्रेष्ठं च प्रक्षाल्य समुवास सुखासने।
समुद्यता सा तं प्रष्टुं पुटाञ्जलियुता सती ॥ १३
स्वक्रोडे बालकं कृत्वा भक्तिनम्रात्मकन्धरा।
आत्मारामं मङ्गलञ्च प्रष्टुं यद्यपि न क्षमा ॥ १४
तथापि भवतो नाम शिवं पृच्छामि साम्प्रतम्।
अबला बुद्धिहीना या दोषं हन्तं सहाहंति ॥१५
मूढस्य सततं दोषं क्षमां कुर्व्वन्ति साधवः ॥ १६
अङ्गिरा वाथवात्रिर्वा मरीचिर्गौतमोऽथवा।
क्रतुः किं वा प्रचेता वा पुलस्त्यः पुलहोऽथवा ॥१७
दुर्व्वासाः कर्द्दमस्त्वं वा वशिष्ठो गर्ग एव वा।
जैगीषव्यो देवलो वा कपिलो वा स्वयं विभुः ॥ १८
सनत्कुमारः सनकः सनन्दो वा सनातनः।
वोढुः पञ्चशिखो वा त्व-मासुरिः सौभरिः किमु ॥१९
विश्वामित्रोऽथ वाल्मीको वामदेवोऽथ कश्यपः।
सम्वर्त्तः किमुतथ्यो वा किं कचो वा बृहस्पतिः ॥२०
भृगुः शुक्रश्च च्यवनो नरो नारायणोऽथवा।
शक्तिः पराशरो व्यासः शुकदेवोऽथ जैमिनिः ॥ २१
माकण्डेयो लोमशश्च कण्वः कात्यायनस्तथा।
आस्तीको वा जरत्कारु-र्ऋष्यशृङ्गो विभाण्डकः ॥२२
पौलस्त्यस्त्वमगस्त्यो वा शरद्वान् शृङ्गिरेव च।
शमीकोऽरिष्टनेमिश्च माण्डव्यः पैल एव च ॥ २३
पाणिनिर्वा कणादो वा शाकल्यः शाकटायनः।
अष्टावक्रो भागुरिर्वा सुमन्तुर्वत्स एव वा ॥ २४
जावालिर्याज्ञवल्क्यश्च वैशम्पायन एव वा।
यतिर्हंसी पिप्पलादो मैत्रेयः करथस्तथा ॥ २५
उपमन्युर्गौरमुखोऽलशिरोर्व्वोऽथ काश्विवान्।
भरद्वाजो वेदशिराः शङ्कुकर्णोऽथ शौनकः ॥ २६
एतेषां पुण्यश्लोकानां को भवान् वद मे प्रभो।
प्रत्युत्तरार्हा नाहं चेत् तथापि वक्तुमर्हसि ॥ २७
किङ्करः किङ्करी वापि समर्था प्रष्टुमीश्वरम्।
यो यस्य सेवानिरतः स कं पृच्छति तं विना ॥ २८
धन्याहं कृतकृत्याहं सफलं जीवनं मम।
त्वत्पादाब्जरजःस्पर्शाज्जन्मकोट्यंहसः क्षयः ॥ २९
त्वत्पादोदकसंस्पर्शात् सद्यःपूता वसुन्धरा।
तवागमनमात्रेण तीर्थीभूतो ममाश्रमः ॥ ३०
ये ये श्रुताः श्रुतौ ब्रह्मन् श्रुतिसारा महाजनाः।
तेषामेको मया दृष्टः पूर्व्वपुण्यफलोदयात् ॥ ३१

शिष्या वेदा मूर्त्तिमन्तो ग्रीष्ममध्याह्नभास्कराः।
गोकुलं मङ्गलं सद्यः पुनन्ति पादरेणुना ॥ ३२
आशिषं कर्त्तुमर्हन्ति प्रसन्नमनसा शिशुम्।
पूर्णं स्वस्त्ययनं क्षेमं विप्राशीर्वचनं ध्रुवम् ॥ ३३
इत्येवमुक्त्वा नन्दस्त्री भक्त्या तस्थौ मुनेः पुरः।
चिरं प्रस्थापयामास नन्दमानयितुं सती ॥ ३४
यशोदावचनं श्रुत्वा जहास मुनिपुङ्गवः।
जहसुः शिष्यसङ्घाश्च भासयन्तो दिशो दश ॥ ३५
हितं तथ्यं नीतियुक्तं महत् प्रीतिकरं परम्।
तामुवाच मुदायुक्तः शुद्धबुद्धिमहामुनिः ॥ ३६
गर्ग उवाच।
सुधामयं ते वचनं लौकिकं समयोचितम्।
यस्य यत्र कुले जन्म स एव तादृशो भवेत् ॥ ३७
सर्व्वेषां गोपपद्मानां गिरिभानुश्च भास्करः।
पत्नी पद्मासमा तस्य नाम्ना पद्मावती सती ॥ ३८
तस्याः कन्या यशोदा त्वं यशोवर्द्धनकारिणी।
वल्लवानाञ्च प्रवरो लब्धो नन्दश्च वल्लवः ॥ ३९
नन्दो यस्त्वञ्च या भद्रे बालो यो येन वागतः।
जानामि निर्ज्जने सर्व्वं वच्यामि नन्दसन्निधिम् ॥४०
गर्गोऽहं यदुवंशानां चिरकालं पुरोहितः।
प्रस्थापितोऽहं वसुना नान्यसाध्ये च कर्म्मणि ॥ ४१
एतस्मिन्नन्तरे नन्दः श्रुतमात्रं जगाम ह।
ननाम दण्डवद्भूमौ मूर्द्ध्ना तं मुनिपुङ्गवम्।
शिष्यान् ननाम मूर्द्ध्ना च ते तं युयुजुराशिषम् ॥ ४२
समुत्थायासनात् तूर्णं यशोदां नन्दमेव च।
गृहीत्वाभ्यन्तरं रम्यं जगाम विदुषां वरः ॥ ४३
गर्गो नन्दो यशोदा च सपुत्त्रोषुर्मुदान्विताः।
गर्ग उवाच तौ वाक्यं निगूढ़ं निर्ज्जने मुने ॥ ४४
गर्ग उवाच।
अयि नन्द प्रवच्यामि वचनं ते शुभावहम्।
प्रस्थापितोऽहं वसुना येन तत् श्रूयतामिति ॥ ४५
वसुना सूतिकागारे शिशुः प्रत्यर्पणः कृतः।
पुत्त्रोऽयं वसुदेवस्य ज्येष्ठस्य तस्य च ध्रुवम्।
कन्या ते तेन नीता च मथुरां कंसभीरुणा ॥ ४६
अस्यान्नप्राशनार्थं नामानुकरणाय च।
गूढ़ेन प्रेषितस्तेन ताभ्यां योगं कुरु व्रज ॥४७
पूर्णब्रह्मस्वरूपोऽयं शिशुस्ते मायया महीम्।
आगत्य भारहरणं कर्त्ता धात्रा च साधितः ॥ ४८
गोलोकनाथो भगवान् श्रीकृष्णो राधिकापतिः।
नारायणो यो वैकुण्ठे कमलाकान्त एव च ॥ ४९
श्वेतद्वीपनिवासी यः पाता विष्णुश्च सोऽप्यजः।
कपिलोऽप्येतदंशश्च नरनारायणावृषी ॥ ५०
एकीभूय च सर्व्वेषां तेजसां राशिमूर्त्तिमान्।
तं वसुं दर्शयित्वा च शिशुरूपी बभूव ह ॥ ५१
साम्प्रतं सूतिकागारा-दाजगाम तवालयम्।
अयोनिसम्भवश्चाय-माविर्भूतो महीतले ॥ ५२
वायुपूर्णं मातृगर्भं कृत्वा च मायया हरिः।
आविर्भूय वसुं मूर्त्तिं दर्शयित्वा जगाम ह ॥ ५३
युगे युगे वर्णभेदो नामभेदोऽस्य वल्लव।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ ५४
शुक्लवर्णः सत्ययुगे सुतीव्रस्तेजसावृतः।
त्रेतायां रक्तवर्णोऽयं पीतोऽयं द्वापरे विभुः ॥ ५५
कृष्णवर्णः कलौ श्रीमान् तेजसां राशिरेव च।
परिपूर्णतमं ब्रह्म तेन कृष्ण इति स्मृतः ॥ ५६
ब्रह्मणो वाचकः कोऽयं-ऋकारोऽनन्तवाचकः।
शिवस्य वाचकः षश्च णकारो धर्म्मवाचकः ॥ ५७
अकारो विष्णुवचनः श्वेतद्वीपनिवासिनः।
नरनारायणार्थस्य विसर्गो वाचकः स्मृतः ॥ ५८
सर्व्वेषां तेजसां राशिः सर्व्वमूर्त्तिस्वरूपकः।
सर्व्वाधारः सर्व्वबीजस्तेन कृष्ण इति स्मृतः ॥ ५९
कृषिर्निर्व्वाणवचनो णकारो मोक्ष एव च।
अकारो दातृवचन-स्तेन कृष्ण इति स्मृतः ॥ ६०
कृषिर्निश्चेष्टवचनो णकारो भक्तिवाचकः।
अकारो दातृवचन-स्तेन कृष्ण इति स्मृतः ॥ ६१
कर्म्मनिर्मूलवचनः कृषिर्णो दास्यवाचकः।
अकारः प्राप्तिवचन-स्तेन कृष्ण इति स्मृतः ॥ ६२
नाम्नां भगवतो नन्द कोटीनां स्मरणे च यत्।
तत् फलं लभते नूनं कृष्णेति स्मरणान्नरः ॥ ६३
यद्विधं स्मरणे पुण्यं वचनाच्छ्रवणात् तथा।
कोटिजन्मांहसो नाशो भवेद्यत् स्मरणादिकात् ॥६४
विष्णोर्नाम्नाञ्च सर्व्वेषां सर्व्वात् सारं परात्परम्।
कृष्णेति मङ्गलं नाम सुन्दरं भक्ति-दास्यदम् ॥ ६५
ककारोच्चारणाद्भक्तः कैवल्यं जन्म-मृत्युहम्।
ऋकाराद्दास्यमतुलं षकाराद्भक्तिनिश्चला ॥ ६६

णकारात् सहवासञ्च तत्समं काममेव च।
तत्सारूप्यं विसर्गाच्च लभते नात्र संशयः॥ ६७
ककारोच्चरणान्नन्द वेपन्ते यमकिङ्कराः।
ऋकारोक्तेरनिष्टानि षकारात् पातकानि च॥ ६८
णकारोच्चारणाद्रोगा अकारान्मृत्युरेव च।
ध्रुवं सर्व्वे पलायन्ते नामोच्चारणभीरवः॥ ६९
स्मृत्युक्तिश्रवणोद्योगात् कृष्णनाम्नो व्रजेश्वर।
रथं गृहीत्वा धावन्ति गोलोकात् कृष्णकिङ्कराः॥७०
पृथिव्या रजसः संख्यां कर्त्तुं शक्ता विपश्चितः।
नाम्नः प्रभावं संख्यानं सन्तो वक्तुं न च क्षमाः॥ ७१
पुरा शङ्करवक्त्रेण नाम्नोऽस्य महिमा श्रुतः।
गुण-नामप्रभावञ्च किञ्चिज्जानाति मद्गुरुः॥ ७२
ब्रह्मानन्तश्च धर्म्मश्च सुरर्षि-मनु-मानवाः।
वेदाः सन्तो न जानन्ति महिम्नः षोड्शीं कलाम्॥७३
इत्येवं कथितो नन्द महिमा ते सुतस्य च।
यथामति यथाज्ञातं गुरुवक्त्राद्यथा श्रुतम्॥ ७४
कृष्णः पीताम्बरः कंस-ध्वंसी च विष्टरश्रवाः।
देवकीनन्दनः श्रीशो यशोदानन्दनो हरिः॥ ७५
सनातनोऽच्युतो विष्णुः सर्व्वेशः सर्व्वरूपधृक्।
सर्व्वाधारः सर्व्वगतिः सर्व्वकारणकारणः॥ ७६
राधाबन्धू राधिकात्मा राधिकाजीवनः स्वयम्।
राधिकासहचारी च राधामानसपूरकः॥ ७७
राधाधनो राधिकाङ्गो राधिकासक्तमानसः।
राधाप्राणो राधिकेशो राधिकारमणः स्वयम्॥७८
राधिकाचित्तचौरश्च राधाप्राणाधिकः प्रभुः।
परिपूर्णतमं ब्रह्म गोविन्दो गरुड्ध्वजः॥ ७९
नामान्येतानि कृष्णस्य श्रुतानि साम्प्रतं व्रज।
जन्म-मृत्युहराण्येव रहः नन्द शुभक्षणे॥ ८०
कृतं निरूपणं नाम्नां कनिष्ठस्य यथा श्रुतम्।
ज्येष्ठस्य हलिनो नाम्नः सङ्केतं शृणु मे मुखात्॥८१
गर्भसङ्कर्षणादेव नाम्ना सङ्कर्षणः स्मृतः।
नास्यन्तोऽस्त्येव वेदेषु तेनानन्त इति स्मृतः॥ ८२
बलदेवो बलोद्रेकाद्धली च हलधारणात्।
शितिवासो नीलवासो मुषली मुषलायुधात्॥ ८३
रेवतीसह सम्भोगा-द्रेवतीरमणः स्वयम्।
रोहिणीगर्भवासाच्च रौहिणेयो महामतिः॥ ८४
इत्येवं ज्येष्ठपुत्त्रस्य श्रुतं नाम निवेदितम्।
यास्याम्यहं गृहं नन्द सुखं तिष्ठ स्वमन्दिरे॥ ८५
ब्राह्मणस्य वचः श्रुत्वा नन्दस्तब्धो बभूव ह।
निश्चेष्टा नन्दपत्नी च जहास बालकः स्वयम्॥ ८६
प्रणम्योवाच नन्दस्तं वाक्यं विनयपूर्व्वकम्।
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः॥ ८७

नन्द उवाच।

गतश्चेत् त्वं तदा कर्म्म करिष्यत्येव को महान्।
स्वयं शुभक्षणं कृत्वा कुरु नामान्नप्राशनम्॥ ८८
यन्नामौषधं कथितो राधाप्राणाधिकं द्रुम।
तस्य किं कारणं नाथ का वा राधेति तद्वद॥ ८९
नन्दस्य वचनं श्रुत्वा जहास मुनिपुङ्गवः।
निगूढं परमं तत्त्वं रहस्यं कथयामि ते॥ ९०

गर्ग उवाच।

शृणु नन्द प्रवक्ष्येऽहमितिहासं पुरातनम्।
पुरा गोलोकवृत्तान्तं श्रुतं शङ्करवक्त्रतः॥ ९१
श्रीदाम्नो राधया सार्द्धं बभूव कलहो महान्।
श्रीदामा शापाद्दैत्यश्च गोपी राधा च गोकुले॥९२
वृषभानुसुता सा च माता यस्याः कलावती।
कृष्णस्यार्द्धाङ्गसम्भूता नाथस्य सदृशी सती॥ ९३
गोलोकवासिनी सेय-मत्र कृष्णाज्ञयाधुना।
अयोनिसम्भवा देवी मूलप्रकृतिरीश्वरी॥ ९४
मातुर्गर्भं वायुपूर्णं कृत्वा च मायया सती।
वायुनिःसारणे काले धृत्वा च शिशुविग्रहम्॥ ९५
आविर्ब्बभूव सा सद्यः पृथ्व्यां कृष्णोपदेशतः।
वर्द्धते सा व्रजे राधा शुक्ले चन्द्रकला यथा॥ ९६
श्रीकृष्णतेजसोऽर्द्धेन सा च मूर्त्तिमती सती।
एका मूर्त्तिर्द्विधा भूता भेदो वेदैर्निरूपितः॥ ९७
इयं स्त्री स पुमान् किं वा सा वा कान्ता पुमानयम्।
द्वे रूपे तेजसा तुल्ये रूपेण च गुणेन च॥ ९८
पराक्रमेण बुद्ध्या वा ज्ञानेन सम्पदापि च।
पुरतो गमनेनैव किन्तु सा वयसाधिका।
ध्यायते तामयं शश्व-दिमं सा स्मरति प्रियम्॥ ९९
रचिता सास्य प्राणैश्च तत्प्राणैर्मूर्त्तिमानयम्।
अस्य राधानुरोधेन गोकुलागमनं परम्॥ १००
लोकारं सार्थकं कर्त्तुं गोलोके यत् कृतं पुरा॥ १०१
कंसभीतिच्छलेनैव गोलोकाद्गमनं हरेः।
प्रतिज्ञापालनार्थञ्च भयेशस्य भयं कुतः॥ १०२

राधाशब्दस्य व्युत्पत्तिः सामवेदे निरूपिता।
नारायणस्तामुवाच ब्रह्माणं नाभिपङ्कजे ॥ १०३
ब्रह्मा तां कथयामास ब्रह्मलोके च शङ्करम्।
पुरा कैलासशिखरे मामुवाच महेश्वरः ॥ १०४
देवानां दुर्लभां नन्द निशामय वदामि ते।
सुरासुर-मुनीन्द्राणां वाञ्छितां मुक्तिदां पराम्॥१०५
रेफो हि कोटिजन्माघं कर्म्मभोगं शुभाशुभम्।
आकारो गर्भवासञ्च मृत्युञ्च रोगमुत्सृजेत् ॥ १०६
धकार आयुषोऽहानि-माकारो भवबन्धनम्।
श्रवण-स्मरणोक्तिभ्यः प्रणश्यति न संशयः ॥ १०७
राकारो निश्चलां भक्तिं दास्यं कृष्णपदाम्बुजे।
सर्व्वेप्सितं सदानन्दं सर्व्वसिद्धौघमीश्वरम् ॥ १०८
धकारः सहवासञ्च तत्तुल्यकालमेव च।
ददाति सार्ष्टिं सारूप्यं तत्त्वज्ञानं हरेः समम् ॥ १०९
आकारस्तेजसो राशिं दानशक्तिं हरौ यथा।
योगशक्तिं योगमतिं सर्व्वकालं हरिस्मृतिम् ॥ ११०
श्रुत्युक्तिस्मरणाद्योगान्मोहजालञ्च किल्बिषम्।
रोग-शोक-मृत्युयमा वेपन्ते नात्र संशयः ॥ १११
राधा-माधवयोः किञ्चित् स्तवाख्यानञ्च यच्छ्रुतम्।
तदुक्तञ्च यथाज्ञानं साकल्यं वक्तुमक्षमः ॥ ११२
आराद्वृन्दावने नन्द विवाहो भवितानयोः।
पुरोहितो जगद्धाता कृत्वाग्निं साक्षिणं मुदा ॥ ११३
कुवेरपुत्रमोक्षञ्च गव्यापह्रत्य भक्षणम्।
हिंसनं धेनुकस्यैव कानने तालभक्षणम् ॥ ११४
वक-केशि-प्रलम्बानां हिंसनं चावलीलया।
मोक्षणं द्विजपत्नीनां मिष्टान्नपानभोजनम् ॥ ११५
भञ्जनं शक्रयागस्य शक्राद्गोकुलरक्षणम्।
गोपीनां वस्त्रहरणं व्रतसम्पादनं तथा ॥ ११६
ताभ्यः पुनर्वस्त्रदानं वरदानं यथेप्सितम्।
चेतसां हरणं तासामयं वंश्या करिष्यति ॥ ११७
रासोत्सवं महद्रम्यं सर्व्वेषां हर्षवर्द्धनम्।
पूर्णचन्द्रोदये नक्तं वसन्ते रासमण्डले ॥ ११८
गोपीनां नवसम्भोगात् कृत्वा पूर्णं मनोरथम्।
ताभिः सह जलक्रीड़ां करिष्यति कुतूहलात् ॥११९
विच्छेदोऽस्य वर्षशतं श्रीदामशापहेतुकम्।
गोपालैर्गोपिकाभिश्च भविता राधया सह ॥ १२०
मथुरागमने तत्र गोपीनां शोकवर्द्धनम्।
पुनः प्रबोधनं तासां दानादाध्यात्मिकस्य च ॥ १२१
स्यन्दनाक्रूरयो रक्षां सद्यस्ताभ्यः करिष्यति।
रथमारोहणं कृत्वा पुनरागमनं हरेः ॥ १२२
पितृ-भ्रातृ-व्रजैः सार्द्धं विलङ्घ्य यमुनां व्रज।
अक्रूराय ज्ञानदानं दर्शयित्वा स्वकं जने ॥ १२३
कौतुकेन च सायाह्ने नगरोत्सवदर्शनम्।
मालाकार-तन्तुवाय-कुब्जानां बन्धमोक्षणम् ॥ १२४
धनुर्भङ्गं शङ्करस्य यागस्थानप्रदर्शनम्।
हिंसनं गजमल्लानां दर्शनं नृपतेः सभाम् ॥ १२५
कंसस्य हिंसनं सद्यः पित्रोर्निगड़मोक्षणम्।
प्रबोधनञ्च युष्माकं-मुग्रसेनाभिषेचनम् ॥ १२६
तस्य पुत्रवधूनाञ्च ज्ञानाच्छोकापनोदनम्।
भ्रातुः स्वस्योपनयनं विद्यादानं मुनेर्मुखात् ॥ १२७
गुरुपुत्रप्रदानञ्च पुनरागमनं गृहम्।
छलनं नृपसैन्यानां यवनस्य दुरात्मनः ॥ १२८
निर्म्माणं द्वारकायाश्च मुचकुन्दस्य मोक्षणम्।
द्वारकागमनञ्चैव यादवैः सह कौतुकात् ॥ १२९
स्त्रीसङ्गानां विहरणं ताभिः सार्द्धञ्च क्रीड़नम्।
सौभाग्यवर्द्धनं तासां पुत्र-पौत्रादिकस्य च ॥ १३०
मणिसम्बन्धिनो मिथ्या-कलङ्कस्य च मोक्षणम्।
साहाय्यं पाण्डवानाञ्च भारावतरणादिकम् ॥ १३१
निष्पन्नं राजसूयस्य धर्म्मपुत्रस्य लीलया।
पारिजातस्य हरणं शक्राहङ्कारमर्द्दनम् ॥ १३२
व्रतपूर्णञ्च सत्याया बाणस्य भुजकृन्तनम्।
दमनं शिवसैन्यानां हरस्य जृम्भणं परम् ॥ १३३
हरणं बाणपुत्र्याश्चै-वानिरुद्धस्य मोक्षणम्।
बाणपुर्य्याश्च दहनं विप्रदारिद्र्यभञ्जनम् ॥ १३४
विप्रपुत्रप्रदानञ्च दुष्टानां दमनादिकम्।
तीर्थयात्राप्रसङ्गेन युष्माभिः सह दर्शनम् ॥ १३५
कृत्वा च राधया सार्द्धं व्रजमागमिता पुनः।
प्रस्थापयिता द्वारायां परं नारायणांशकम् ॥ १३६
सर्व्वं निष्पादनं कृत्वा गोलोकं राधया सह।
गमिष्यत्येव गोलोक-नाथोऽयं जगतां पतिः ॥ १३७
नारायणश्च वैकुण्ठं गमिता पद्मया सह।
धर्म्मगृहं ऋषी द्वौ च विष्णुः क्षीरोदमेव च ॥ १३८
इत्येवं कथितं नन्द भविष्यं वेदनिर्णयम्।
श्रूयतां साम्प्रतं कर्म्म यदर्थं गमनं मम ॥ १३९

माघे शुक्लचतुर्द्दश्यां कुरु कर्म्म शुभच्चणे।
गुरुवारे च रेवत्यां विशुद्धे चन्द्रतारके॥ १४०
चन्द्रस्थे मीनलग्ने च सम्पूर्णचन्द्रदर्शने (क)।
वणिजे करणोत्कृष्टे शुभयोगे मनोहरे॥ १४१
सुदुर्लभे दिने तत्र सर्व्वोत्कृष्टोपयोगिके।
आलोच्य पण्डितैः सार्द्धं कुरु कर्म्म मुदान्वितः॥१४२
इत्युक्ता वहिरागत्य समुवास मुनीश्वरः।
हृष्टौ नन्दो यशोदा च कर्म्मोद्योगं चकार ह॥१४३
एतस्मिन्नन्तरे द्रष्टुं गर्गं गोपाश्च गोपिकाः।
बालका बालिकाश्चैव आजग्मुर्नन्दमन्दिरम्॥ १४४
ददृशुस्ते मुनिश्रेष्ठं ग्रीष्ममध्याह्नभास्करम्।
शिष्यसङ्घैः परिवृतं ज्वलन्तं ब्रह्मतेजसा।
गूढयोगं प्रवोचन्तं शिष्यै पृच्छते मुदा॥ १४५
पश्यन्तं सस्मितं नन्द-भवनानां परिच्छदम्।
स्वर्णसिंहासनस्थञ्च योगमुद्राधरं वरम्॥ १४६
भूत-भव्य-भविष्यांश्च पश्यन्तं ज्ञानचक्षुषा॥ १४७
हृदीश्वरं प्रपश्यन्तं सिद्धिमन्त्रप्रभावतः।
वहियशोदा क्रोड़े च तादृशं सस्मितं शिशुम्॥ १४८
महेशदत्तध्यानेन यद्रूपञ्च निरूपितम्।
तद्दृष्ट्वा परमप्रीत्या भूतपूर्णमनोरथम्॥ १४९
साश्रुनेत्रं पुलकितं निमग्नं भक्तिसागरे।
हृदि पूजां प्रणामञ्च कुर्व्वन्तं योगचर्य्यया॥ १५०
मूर्द्ध्ना प्रणेमुस्ते तञ्च स च नानाशिषं ददौ।
आसनस्थो मुनिस्तस्थौ ते जग्मुः स्वालयं मुदा॥१५१
नन्दः सानन्दयुक्तश्च बहुमङ्गलपत्रिकाः।
प्रस्थापयामास शीघ्र-माराद्दूरस्थितान् मुदा॥१५२
दधिकुल्यां दुग्धकुल्यां घृतकुल्यां प्रपूरिताम्।
गुड़कुल्यां तैलकुल्यां मधुकुल्याञ्च विस्तृताम्॥ १५३
नवनीतकुल्यां पूर्णाञ्च तक्रकुल्यां यदृच्छया।
शर्करोदककुल्याञ्च परिपूर्णाञ्च लीलया॥ १५४
तण्डुलानाञ्च शालीना-मुच्चैश्च शतपर्व्वतम्।
पृथुकानां शैलशतं लवणानाञ्च सप्त च॥ १५५
परिपक्वफलानाञ्च तत्र षोड़श पर्व्वतान्।
यव-गोधूमपूर्णानां पक्वलड्डुकपिष्टकैः॥ १५६
मोदकानाञ्च शैलञ्च स्वस्तिकानाञ्च पर्व्वतान्।
कपर्द्दकानामत्युच्चैः शैलान् सप्त च नारद॥ १५७

(क) लग्नेशपूर्णदर्शने इति वा पाठः।

कर्पूरादिकयुक्तानां ताम्बूलानाञ्च मन्दिरम्।
विस्तृतं द्वारदेशेनञ्च वासितोदकसंयुतम्॥ १५८
चन्दनागुरुकस्तूरी-कुङ्कुमेण समन्वितम्।
नानाविधानि रत्नानि स्वर्णानि विविधानि च॥१५९
मुक्ताफलानि रम्याणि प्रवालानि मुदान्वितः।
नानाविधानि चारूणि वासांसि भूषणानि च॥१६०
पुत्रान्नप्राशने नन्दः कारयामास कौतुकात्।
प्राङ्गणं कदलीस्तम्भै रसालनवपल्लवैः॥ १६१
ग्रथितैः सूक्ष्मसूत्रेण वेष्टयामास कौतुकात्।
संस्कारयुक्तं रुचिरं चन्दनद्रवचर्च्चितम्॥ १६२
युक्तं मङ्गलकुम्भैश्च फलपल्लवसंयुतैः।
चन्दनागुरुकस्तूरी-पुष्पमाल्यविराजितैः॥१६३
माल्यानां वरवस्त्राणां राशिभिश्च सुशोभितम्।
गवाञ्च मधुपर्काणा-मासनानाञ्च नारद॥ १६४
फलानां जलजानाञ्च समूहैश्च समन्वितम्।
नानाप्रकारैर्वाद्यैश्च दुन्दुभिभिर्मनोहरैः॥ १६५
ढक्कानां दुन्दुभीनाञ्च पटहानां तथैव च।
मृदङ्गमुरजादीना-मानकानां समूहकैः॥ १६६
वंशी-सन्नहनी-कांस्य-स्वरयन्त्रैश्च शब्दितम्।
विद्याधरीणां नृत्येन भङ्गिमा भ्रमेणेन च॥ १६७
गन्धर्व्वनायकानाञ्च सङ्गीतैर्मूर्च्छनीकृतम्।
स्वर्णसिंहासनानाञ्च रथानां निकरैर्वृतम्॥ १६८
एतस्मिन्नन्तरे नन्द-मुवाच वाचिको मुदा।
आजग्मुर्गिरिभानुश्च सस्त्रीकः सह किङ्करः॥ १६९
रथानाञ्च चतुर्लक्षं गजानाञ्च तथैव च।
तुरङ्गाणाञ्च कोटिश्च शिविकानां तथैव च॥ १७०
ऋषीन्द्राणां मुनीन्द्राणां विप्राणाञ्च विपश्चिताम्।
वन्दीनां भिक्षुकाणाञ्च समूहश्च समीपतः॥ १७१
गोपानां गोपिकानाञ्च संख्यां कर्त्तुञ्च कः क्षमः।
पश्चागत्य वहिर्भूर्थेत्युवाच प्राङ्गणे स्थितः॥ १७२
श्रुत्वैवंताननुव्रज्य समानीय व्रजेश्वरः।
प्राङ्गणे वासयामास पूजयामास सत्वरम्॥ १७३
ऋष्यादिकसमूहञ्च प्रणम्य शिरसा भुवि।
पाद्यादिकन्तु तेभ्यश्च प्रददौ सुसमाहितः॥ १७४
वस्तुभिर्व्वन्धुभिः पूर्णं बभूव नन्दमन्दिरम्।
न कोऽपि कस्य शब्दञ्च श्रोतुं शक्तश्च तत्र वै॥ १७५
विश्वकर्म्मा कुबेरश्च श्रीकृष्णप्रीतये मुदा।

चकार स्वर्णवृष्ट्या च परिपूर्णञ्च गोकुलम् ॥ १७६
यौतुकापह्नवं चक्रु-र्बन्धुवर्गाश्च क्रीड़या।
आनम्रकन्धराः सर्व्वे दृष्ट्वा नन्दस्य सम्पदम् ॥ १७७
नन्दः कृताह्निकः पूतो धृत्वा धौते च वाससी।
चन्दनागुरुकस्तूरी-कुङ्कुमेणैव भूषितः ॥ १७८
उवास पादौ प्रक्षाल्य स्वर्णपीठे मनोहरे।
गगस्यैव मुनीन्द्राणां गृहीत्वाज्ञां व्रजेश्वरः ॥ १७९
संस्मृत्य विष्णुमाचान्तः स्वस्तिवाचनपूर्व्वकम्।
कृत्वा कर्म्म च वेदोक्तं भोजयामास बालकम् ॥ १८०
गर्गवाक्यानुसारेण बालकस्य मुदान्वितः।
कृष्णेति मङ्गलं नाम ररक्ष च शुभक्षणे ॥ १८१
सघृतं भोजयित्वा च कृत्वा नाम जगत्पतेः।
वाद्यादीन् वादयामास कारयामास मङ्गलम् ॥ १८२
नानाविधानि रत्नानि स्वर्णानि भूषणानि च।
भक्षद्रव्याणि वासांसि ब्राह्मणेभ्यो ददौ मुदा ॥ १८३
वन्दिभ्यो भिक्षुकेभ्यश्च सुवर्णं विपुलं ददौ।
भाराक्रान्ताश्च ते सर्व्वे न शक्ता गन्तुमेव च ॥ १८४
ब्राह्मणान् वन्धुवर्गांश्च भिक्षुकांश्च विशेषतः।
मिष्टान्नं भोजयामास परिपूर्णं मनोहरम् ॥ १८५
दीयतां दीयतां पूर्णं खाद्यतां खाद्यतामिति।
बभूव शब्दोऽप्युच्चैश्च सन्ततं नन्दगोकुले ॥ १८६
रत्नानि परिपूर्णानि वासांसि भूषणानि च।
प्रवालानि सुवर्णानि मणिसाराणि यानि च ॥ १८७
चारूणि स्वर्णपात्राणि कृतानि विश्वकर्म्मणा।
दत्त्वा गर्गाय विनयं चकार व्रजपुङ्गवः ॥ १८८
शिष्येभ्यः स्वर्णभारांश्च प्रददौ विनयान्वितः।
द्विजेभ्योऽप्यवशिष्टेभ्यः परिपूर्णानि नारद ॥ १८९

नारायण उवाच।

गृहीत्वा श्रीहरिं गर्गो जगाम निभृतं मुदा।
तुष्टाव परया भक्त्या प्रणम्य च तमीश्वरम् ॥ १९०
साश्रुनेत्रः सपुलको भक्तिनम्रात्मकन्धरः।
पुटाञ्जलियुतो भूत्वा हरेश्चरणपङ्कजे ॥ १९१

गर्ग उवाच।

हे कृष्ण जगतां नाथ भक्तानां भयभञ्जन।
प्रसन्नो भव मामीश देहि दास्यं पदाम्बुजे ॥ १९२
त्वत्पित्रा मे धनं दत्तं तेन किं मे प्रयोजनम्।
देहि मे निश्चलां भक्तिं भक्तानामभयप्रदाम् ॥ १९३
अणिमादिषु सिद्धेषु योगेषु मुक्तिषु प्रभो।
ज्ञानतत्त्वेऽमरत्वे वा किञ्चिन्नास्ति स्पृहा मम ॥ १९४
इन्द्रत्वे वा मनुत्वे वा स्वर्गभोगं फलं चिरम्।
नास्ति मे मनसो वाञ्छा त्वत्पादसेवनं विना ॥ १९५
सालोक्य-सार्ष्टि-सामीप्य-सारूप्यैकत्वमीप्सितम्।
नाहं गृह्णामि ते ब्रह्मं-स्त्वत्पादसेवनं विना ॥ १९६
गोलोके वापि पाताले वासे तुल्यं मनोरथम्।
किन्तु ते चरणाम्भोजे सन्ततं स्मृतिरस्तु मे ॥ १९७
वेदाङ्गं शङ्करात् प्राप्य कतिजन्मफलोदयात्।
सर्व्वज्ञोऽहं सर्व्वदर्शी सर्व्वत्र गतिरस्ति मे ॥ १९८
कृपां कुरु कृपासिन्धो दीनबन्धो पदाम्बुजे।
रक्ष मामभयं दत्त्वा मृत्युर्मे किं करिष्यति ॥ १९९
सर्व्वेषामीश्वरः शर्व्व-स्त्वत्पादाम्भोजसेवया।
मृत्युञ्जयोऽन्तकारश्च बभूव योगिनां गुरुः ॥ २००
ब्रह्मा विधाता जगतां त्वत्पादाम्भोजसेवया।
यस्यैकदिवसे ब्रह्मन् पतन्तीन्द्राश्चतुर्द्दश ॥ २०१
त्वत्पादसेवया धर्म्मः साक्षी च सर्व्वकर्म्मणाम्।
पाता च फलदाता च जित्वा कालं सुदुर्ज्जयम् ॥ २०२
सहस्रवदनः शेषो यत्पादपद्मसेवया।
धत्ते सिद्धार्थवद्विश्वं शिरसा चैव मेदिनीम् ॥ २०३
सर्व्वसम्पद्विधात्री या देवीनाञ्च परात्परा।
करोति सततं लक्ष्मीः केशैस्त्वत्पादमार्ज्जनम् ॥ २०४
प्रकृतिर्वीजरूपा सा सर्व्वेषां शक्तिरूपिणी।
स्मारं स्मारं त्वत्पदाब्जं बभूव त्वत्परात्परा ॥ २०५
पार्व्वती सर्व्वदेवीशा सर्व्वेषां बुद्धिरूपिणी।
त्वत्पादसेवया कान्तं ललाभ शिवमीश्वरम् ॥ २०६
विद्याधिष्ठातृदेवी या ज्ञानमाता सरस्वती।
पूज्या बभूव सर्व्वेषां त्वत्पादाम्भोजसेवया ॥ २०७
सावित्री वेदमाता च पुनाति भुवनत्रयम्।
ब्रह्मणो ब्राह्मणानाञ्च गतिस्त्वत्पादसेवया ॥ २०८
क्षमा जगद्विधर्त्तुञ्च रत्नगर्भा वसुन्धरा।
प्रसूता सर्व्वशस्यानां त्वत्पादपद्मसेवया ॥ २०९
राधावामांशसम्भूता तव तुल्या च तेजसा।
स्थित्वा वक्षसि ते पादं सेवतेऽन्यस्य का कथा ॥ २१०
यथा शर्व्वादयो देवाः देव्यः पद्मादयो यथा।
तत्समं नाथ कुरु मा-मीश्वरस्य समा कृपा ॥ २११
न यास्यामि गृहं नाथ न गृह्णामि धनं तव।

कृत्वा मां रक्ष पादाब्ज-सेवायां सेवकं रतम् ॥ २१२
इति स्तुत्वा साश्रुनेत्रः पपात चरणे हरेः ।
रुरोद च भृशं भक्त्या पुलकाञ्चितविग्रहः ॥ २१३
गर्गस्य वचनं श्रुत्वा जहास भक्तवत्सलः ।
उवाच तं स्वयं कृष्णो मयि ते भक्तिरस्त्विति ॥२१४
इदं गर्गकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः ।
दृढ़ां भक्तिं हरेर्दास्यं स्मृतिञ्च लभते ध्रुवं ॥ २१५
जन्म-मृत्यु-जरा-रोग-शोक-मोहादिसङ्कटात् ।
तीर्णो भवति श्रीकृष्ण-दासः सेवनतत्परः ॥ २१६
कृष्णस्य भवनं काले कृष्णार्द्धं प्रमोदते ।
कदापि न भवेत् तस्य विच्छेदो हरिणा सह ॥२१७
इति श्रीब्रह्मवैवर्त्ते महापुराणे गर्गकृतस्तोत्रम्।

नारायण उवाच ।

हरिं मुनिः स्तवं कृत्वा नन्दाय तं ददौ मुदा ।
उवाच तं गृहं यामि कुर्व्वाज्ञामिति वल्लव ॥२१८
अहो विचित्रं संसारं मोहजालेन वेष्टितम् ।
संमीलनञ्च विरहो नराणां सिन्धुफेनवत् ॥ २१९
गर्गस्य वचनं श्रुत्वा रुरोद नन्द एव च ।
सद्विच्छेदो हि साधूनां मरणादतिरिच्यते ॥ २२०
सर्व्वशिष्यैः परिवृतं मुनीन्द्रं गन्तुमुद्यतम् ।
सर्व्वे नन्दादयो गोपा रुदन्तो गोपिकास्तथा ।
प्रणेमुः परया प्रीत्या चक्रुस्तं विनयं मुने ॥ २२१
दत्त्वाशिषं मुनिश्रेष्ठो जगाम मथुरां मुदा ॥ २२२
ऋषयो मुनयश्चैव बन्धुवर्गाश्च वल्लवाः ।
सर्व्वे जग्मुर्धनैः पूर्णाः स्वालयं हृष्टमानसाः ॥ २२३
प्रजग्मुर्वन्दिनः सर्व्वे परिपूर्णमनोरथाः ।
मिष्टद्रव्यांशुकोत्कृष्ट-तुरगस्वर्णभूषणैः ॥ २२४
आकण्ठपूर्णमाहाश्च भिक्षुका गन्तुमक्षमाः ।
सर्व्ववस्तुभरादेव परिश्रान्ता मुदान्विताः ॥ २२५
सुमन्दगामिनः केचित् केचिद्भूमौ च शेरते ।
केचिद्वर्त्मनि तिष्ठन्त-श्चोत्तिष्ठन्तश्च केचन ॥ २२६
केचिन्नृत्यं प्रकुर्व्वन्तो गायन्तस्तत्र केचन ।
केचिद्बहुविधा गाथाः कथयन्तः पुरातनाः ॥ २२७
मरुत्त-श्वेत-सगर-मान्धातॄणाञ्च भूभृताम् ।
उत्तानपाद-नहुष-नलादीनाञ्च या कथा ।
श्रीरामस्याश्वमेधस्य रन्तिदेवस्य कर्म्मणाम् ॥ २२८
येषां येषां नृपाणाञ्च श्रुत्वा वृद्धमुखात् कथाः ।
कथयन्तश्च ताः केचिच्छ्रुतवन्तश्च केचन ॥ २२९
स्वापं स्वापं गताः केचित् स्वापं स्वापञ्च केचन ।
एवं सर्व्वे प्रमुदिताः प्रजग्मुः स्वालयं व्रजात् ॥ २३०
हृष्टो नन्दो यशोदा च बालं कृत्वा स्ववक्षसि ।
तस्थौ स्वमन्दिरे रम्ये कुबेरभवनोपमे ॥ २३१
एवं प्रवर्द्धितौ रामौ शुक्ले चन्द्रकलोपमौ ।
गवां पुच्छञ्च भित्तिञ्च धृत्वा चोत्तस्थतुर्मुदा ॥ २३२
शब्दार्थं वा तदर्द्धं वा हसौ वक्तुं दिने दिने ।
पित्रोर्हर्षञ्च वर्द्धन्तौ गच्छन्तौ प्राङ्गणे मुने ॥ २३३
बालो द्विपादं पादं वा गन्तुं शक्तो बभूव ह ।
गन्तुं शक्तो हि जानुभ्यां प्राङ्गणे वा गृहे हरिः॥२३४
वर्षाधिको हि वयसा कृष्णात् सङ्कर्षणः स्वयम् ।
तयोर्मुदं वर्द्धयन्तौ जानुभ्यां तौ दिने दिने ॥ २३५
व्रजन्तौ गोकुले बालौ प्रहृष्टगमने क्षमौ ।
स्फुटवाक्यमुक्तवन्तौ मायाविग्रहबालकौ ॥ २३६
गर्गो जगाम मथुरां वसुदेवाश्रमं मुने ।
स तं ननाम भक्त्या च पप्रच्छ कुशलं तयोः ॥ २३७
मुनिस्तं कथयामास कुशलं सुमहोत्सवम् ।
आनन्दाश्रुनिमग्नश्च श्रुतमात्राद्बभूव ह ॥ २३८
देवकी परमप्रीत्या पप्रच्छ च पुनः पुनः ।
आनन्दाश्रुनिमग्ना सा रुरोद च मुहुर्मुहुः ॥ २३९
गर्गस्तावाशिषं कृत्वा जगाम स्वालयं मुदा ।
स्वगृहे तस्थतुस्तौ च कुबेरभवनोपमे ॥ २४०
यत्र कल्पे यथा चेयं तत्र लसुपवर्हणः ।
पञ्चाशत्कामिनीनाञ्च पतिर्गन्धर्व्वपुङ्गवः ॥ २४१
तासां प्राणाधिकस्त्वञ्च शृङ्गारनिपुणो युवा ।
ततोऽभूर्ब्रह्मणः शापाद्-दासीपुत्रो द्विजस्य च॥२४२
ततोऽधुना ब्रह्मपुत्रो वैष्णवोच्छिष्टभोजनात् ।
सर्व्वदर्शी च सर्व्वज्ञः स्मारको हरिसेवया ॥ २४३
कथितं कृष्णचरितं नामान्नप्राशनान्वितम् ।
जन्म-मृत्यु-जरानिघ्नमपरं कथयामि ते ॥ २४४

इति ब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारद-संवादे श्रीकृष्णान्न-प्राशननामकरणप्रस्तावस्त्रयो-दशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः।

नारायण उवाच।

एकदा नन्दपत्नी सा स्नानार्थं यमुनां ययौ।
गव्यपूर्णं गृहं दृष्ट्वा जहास मधुसूदनः॥ १
दधिदुग्धाज्यतक्रञ्च नवनीतं मनोरमम्।
गृहस्थितञ्च यत् किञ्चिच्चखाद मधुसूदनः॥ २
मधु हैयङ्गवीनं यत् स्वस्तिकं शकटस्थितम्।
भुक्त्वा पीतांशुकेर्वक्त्र-संस्कारं कर्त्तुमुद्यतम्॥ ३
ददर्श बालकं गोपी स्नात्वागत्य स्वमन्दिरम्।
गव्यशून्यं भग्नभाण्डं मध्वादिरिक्तभाजनम्॥ ४
दृष्ट्वा पप्रच्छ बालांश्च अहो कर्म्मेदमद्भुतम्।
यूयं वदत सत्यञ्च कृतं केन सुदारुणम्॥ ५
यशोदावचनं श्रुत्वा सर्व्वमूचुश्च बालकाः।
खाद सत्यं बालस्ते नाशयं दत्तमेव च॥ ६
बालानां वचनं श्रुत्वा चुकोप नन्दगेहिनी।
वेत्रं गृहीत्वा दुद्राव रक्तपङ्कजलोचना॥ ७
पलायमानं गोविन्दं ग्रहीतुं न शशाक सा।
ध्यानासाध्यं शिवादीनां दुरापमपि योगिनाम्॥ ८
यशोदा भ्रमणं कृत्वा विश्रान्ता घर्म्मसंयुता।
तस्थौ कोपवती सा च शुष्ककण्ठौष्ठतालुका॥ ९
विश्रान्तां मातरं दृष्ट्वा कृपालुः पुरुषोत्तमः।
सन्तस्थौ पुरतो मातुः सस्मितो जगदीश्वरः॥ १०
करे धृत्वा च तं गोपी समानीय स्वमालयम्।
बद्ध्वा वस्त्रेण वृक्षे च तताड़ मधुसूदनम्॥ ११
बद्ध्वा कृष्णं यशोदा सा जगाम स्वालयं प्रति।
हरिस्तस्थौ वृक्षमूले जगतां पतिरीश्वरः॥ १२
श्रीकृष्णस्पर्शमात्रेण सहसा तत्र नारद।
पपात वृक्षः शैलाभः शब्दं कृत्वा सुदारुणम्॥ १३
सुवेशः पुरुषो दिव्यो वृक्षादाविर्ब्बभूव ह।
दिव्यं स्यन्दनमारुह्य जगाम स्वालयं सुरः॥ १४
प्रणम्य जगतीनाथं शातकुम्भपरिच्छदः।
किशोरः सस्मितो गौरो रत्नालङ्कारभूषितः॥ १५
सा वृक्षपतनं दृष्ट्वा भयत्रस्ता व्रजेश्वरी।
क्रोड़े चकार बालं तं रुदन्तं श्यामसुन्दरम्॥ १६
आजग्मुर्गोकुलस्थाश्च गोपा गोप्यश्च तद्गृहम्।
यशोदां भर्त्सयामासुः शान्तिं चक्रुः शिशुं तदा॥ १७
आशिषं युयुजुर्विप्रा वन्दिभ्यश्च धनं ददौ।
द्विजेन कारयामास नामसङ्कीर्त्तनं हरेः॥ १८
सुमतिर्नास्ति ते सत्यं ज्ञातं नन्द व्रजेश्वरि।
अत्यन्तस्थविरे काले तनयोऽयं बभूव ह॥ १९
धनं धान्यञ्च रत्नं वा तत् सर्व्वं पुत्रहेतुकम्।
न भक्षितं यत् पुत्रेण तद्द्रव्यं निष्फलं भवेत्॥ २०
पुत्रं बद्ध्वा गव्यहेतो-र्वृक्षमूले च निष्ठुरे।
गृहकर्म्मणि सुव्यग्रा दैवाद्वृक्षः पपात ह॥ २१
वृक्षस्य पतनाद्गोपि भाग्याद्बालोऽपि जीवितः।
प्रनष्टे बालके मूढ़े वस्तूनां किं प्रयोजनम्॥ २२
इत्युक्त्वा तां जनाः सर्व्वे प्रययुर्निजमन्दिरम्।
उवाच पत्नीं नन्दश्च रक्तपङ्कजलोचनः॥ २३

नन्द उवाच।

यास्यामि तीर्थमद्यैव कण्ठे कृत्वा तु बालकम्।
अथवा त्वं गृहाद्गच्छ त्वया मे किं प्रयोजनम्॥ २४
शतकूपाधिकं वापी शतवापीसमं सरः।
सरः शताधिको यज्ञः पुत्रो यज्ञशताधिकः॥ २५
तपोदानोद्भवं पुण्यं जन्मान्तरसुखप्रदम्।
सुखप्रदोऽपि सत्पुत्र इहैव च परत्र च॥ २६
सर्व्वेषाञ्च प्रिया पत्नी वासनाबन्धशृङ्खला।
माया मूर्त्तिमयी साक्षात् स्नेहमोहकरण्डिका॥ २७
ततोऽधिकः प्रियः पुत्रः प्राणेभ्योऽपि सुनिश्चितम्।
पुत्रादपि परो बन्धुर्न भूतो न भविष्यति॥ २८
एवमुक्त्वा स्वभार्य्याञ्च तस्थौ नन्दः स्वमन्दिरे।
यशोदा रोहिणी चैव नियुक्ता गृहकर्म्मणि॥ २९

नारद उवाच।

सुवेशः पुरुषः को वा वृक्षरूपी च गोकुले।
भगवन् हेतुना केन वृक्षत्वं समवाप ह॥ ३०

नारायण उवाच।

कुवेरतनयः श्रीमान् नाम्ना च नलकूवरः।
जगाम नन्दनवनं क्रीड़ार्थं सह रम्भया॥ ३१
निर्जने सरसस्तीरे पुष्पोद्याने मनोहरे।
वटवृक्षसमीपे च सौरभे पुष्पवायुना॥ ३२
विधाय पुष्पशयनं रत्नदीपैश्च दीपितः।
चन्दनागुरु-कस्तुरी-कुङ्कुमद्रवचर्च्चितम्।
परितः पुष्पमाल्यैश्च क्षौमवस्त्रैश्च वेष्टितम्॥ ३३
तत्र रम्भां समानीय विजहार यथेच्छया।

शृङ्गाराष्टप्रकारञ्च विपरीतादिकं सुखम् ॥ ३४
चुम्बनं षट्प्रकारञ्च यथास्थानं निरूपितम्।
अङ्ग-प्रत्यङ्ग-संयोग-त्रिविधाश्लेषणं मुदा ॥ ३५
नख-दन्त-करक्रीड़ां चकार रसिकेश्वरः।
जलात् स्थले स्थलात् तोये कामशास्त्रविशारदः ३६
रतिभोगं प्रकुर्वन्तं ददर्श देवलो मुनिः।
नग्नां रम्भां मुक्तकेशीं पीनश्रोणिपयोधराम् ॥ ३७
नखदन्तक्षताङ्गीञ्च पुलकाञ्चितविग्रहाम्।
पश्यन्तीं प्राणनाथञ्च पश्यन्तं सस्मितं मुदा ॥ ३८
वक्रभ्रूभङ्गसंयुक्तां ददर्श ताञ्च कामुकीम्।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम् ॥ ३९
रत्नकेयूर-वलय-रत्न-नूपुरभूषिताम् ॥ ४०
विचित्ररत्नमाल्यैश्च पुष्पमाल्यैश्च भूषिताम्।
किङ्किणीजालसंयुक्तां सिन्दूरबिन्दुशोभिताम् ॥ ४१
तया युक्तं पुलकितं नोत्तिष्ठन्तं स्मरातुरम्।
वृक्षत्वं याहि पापिष्ठे-त्युवाच मुनिपुङ्गवः ॥ ४२
शशाप रम्भां कामार्त्तां मानुषी त्वं भवेति च।
जन्मेजयस्य सौभाग्या भविता कामिनीति च ॥ ४३
त्वमेव गोकुलं गच्छ वृक्षरूपी भवेति च।
श्रीकृष्णस्पर्शमात्रेण पुनरायास्यसि गृहम् ॥ ४४
रम्भे त्वमिन्द्रसम्भोगात् पुनरायास्यसि व्रज।
इत्येवमुक्त्वा स मुनि-र्जगाम निजमन्दिरम् ॥ ४५
कुबेरतनयः श्रीमान् स जगाम निजालयम्।
इत्येवं कथितं विप्र रम्भाख्यानं वदामि ते ॥ ४६
सुचन्द्रस्य गृहे रम्भा लेभे जन्म भारते।
कन्या लक्ष्मीस्वरूपा च बभूव सुन्दरी वरा ॥ ४७
ताञ्च सालङ्कृतां कृत्वा सुचन्द्रो नृपतीश्वरः।
नानायौतुकसंयुक्तां ददौ जन्मेजयाय च ॥ ४८
जन्मेजयस्य सुभगा बभूव महिषीश्वरी।
स्थाने स्थाने निर्ज्जने च राजा रेमे तया सह ॥ ४९
एकदा नृपतिश्रेष्ठोऽप्यश्वमेधेन दीक्षितः।
अश्वसंगोपनं कृत्वा तस्थौ यज्ञस्य मन्दिरे ॥ ५०
यज्ञाश्वं रुचिरं श्रुत्वा कौतुकेन वपुष्टमा।
द्रष्टुं जगाम सा साध्वी चाश्वमेकाकिनी मुदा ॥ ५१
शक्रोऽश्वान्निर्गतो भूत्वा धर्षयामास तां सतीम्।
तया निवार्य्यमाणश्च रेमे तत्र तया सह ॥ ५२
मूर्च्छामवाप शक्रश्च बुबुधे न दिवानिशम्।
सा च सम्भोगमात्रेण देहं तत्याज योगतः ॥ ५३
नृपस्य लज्जया भीत्या शक्रः स्वर्गं जगाम ह।
राजा श्रुत्वा मृतां दृष्ट्वा विललाप भृशं मुहुः ॥ ५४
यज्ञं समाप्य विप्रेभ्यो ददौ पूर्णाञ्च दक्षिणाम्।
रम्भा च मानवं देहं त्यक्त्वा स्वर्गं जगाम ह ॥ ५५
इत्येवं कथितं सर्व्वं वृक्षार्ज्जुनविभञ्जनम्।
नलकूवरमोक्षञ्च रम्भायाश्च महामुने ॥ ५६
पुण्यदं कृष्णचरितं जन्म-मृत्यु-जरापहम्।
इत्येवं कथितं सर्व्व-मपरं कथयामि ते ॥ ५७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे वृक्षार्ज्जुनभञ्जनं नाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः।

नारायण उवाच।

एकदा कृष्णसहितो नन्दो वृन्दावनं ययौ।
तत्रोपवनभाण्डीरे चारयामास गोकुलम् ॥ १
सरःसु स्वादु तोयञ्च पाययामास तत् पपौ।
उवास वटमूले च बालं कृत्वा स्ववक्षसि ॥ २
एतस्मिन्नन्तरे कृष्णो मायाबालकविग्रहः।
चकार मायया कस्मान्मेघाच्छन्नं नभो मुने ॥ ३
मेघावृतं नभो दृष्ट्वा श्यामलं काननान्तरम्।
झञ्झावातं मेघशब्दं वज्रशब्दञ्च दारुणम् ॥ ४
वृष्टिधारामतिस्थूलां कम्पमानाञ्च पादपान्।
दृष्ट्वैवं पतितस्कन्धान् नन्दो भयमवाप ह ॥ ५
कथं यास्यामि गोवत्सं विहाय स्वाश्रमं प्रति।
गृहं यदि न यास्यामि भविता बालकस्य किम् ॥६
एवं नन्दे प्रवदति रुरोद श्रीहरिस्तदा।
मायाभिया भयेभ्यश्च पितुः कण्ठं दधार सः ॥ ७
एतस्मिन्नन्तरे राधा जगाम कृष्णसन्निधिम्।
गमनं कुर्व्वती राज-हंसखञ्जनगञ्जनम् ॥ ८
शरत्पार्व्वणचन्द्राभ-चारुवक्त्रा मनोहरा।
शरन्मध्याह्नपद्मानां शोभामोचनलोचना ॥ ९
परितो नेत्रपक्ष्मश्री-विचित्रकज्जलोज्ज्वला।
खगेन्द्रचञ्चुचारुश्री-सद्गनाशकनासिका ॥ १०
तन्मध्यस्थलशोभाढ्य-स्थूलमुक्ताफलोज्ज्वला।

कवरीवेशसंयुक्ता मालतीमाल्यवेष्टिता ॥ ११
ग्रीष्ममध्याह्नमार्त्तण्ड-प्रभामुष्टककुण्डला।
पक्वबिम्बफलानां श्री-मुष्टोष्ठाधरयुग्मका ॥ १२
मुक्तापङ्क्तिप्रभान्तेक-दन्तपङ्क्तिसमुज्ज्वला।
ईषत्प्रफुल्लकुन्दानां सुप्रभानाशितस्मिता ॥ १३
कस्तूरीविन्दुसंयुक्ता-सिन्दूरविन्दुसंयुता।
कपोलमलकायुक्तं बिभ्रती श्रीयुतं सती ॥ १४
सुचारुवर्त्तुलाकार-कपोलपुलकान्विता।
मणिरत्नेन्द्रसाराणां हारोरःस्थलभूषिता ॥ १५
सुचारुश्रीफलद्वन्द्वात् कठिनस्तनसङ्गता।
पत्रावलीश्रिया युक्ता दीप्ता सद्रत्नतेजसा ॥ १६
सुचारु वर्त्तुलाकार-मुदरं सुमनोहरम्।
विचित्रत्रिवलीयुक्ता-निम्ननाभिञ्च बिभ्रती ॥ १७
सद्रत्नसाररचित-मेखलाजालभूषिता।
कामास्त्रसारभ्रूभङ्ग-योगीन्द्रचित्तमोहिनी ॥ १८
कठिनश्रोणियुगलं करिणीकरनिन्दितम्।
स्थलपद्मप्रभामुष्ट-चरणं दधती मुदा ॥ १९
रत्नपापकसंयुक्तं यावकद्रवभूषितम्।
मणीन्द्रशोभासंमुष्ट-सालक्तकपुनर्भवम्।
सद्रत्नसाररचित-क्वणन्मञ्जीररञ्जितम् ॥ २०
रत्नकङ्कणकेयूर-चारुशङ्खविभूषिता।
रत्नाङ्गुरीयनिकर-वह्निशुद्धांशुकोज्ज्वला।
चारुचम्पकपुष्पाणां प्रभामुष्टकलेवरा ॥ २१
सहस्रदलसंयुक्तं क्रीडाकमलमुज्ज्वलम्।
मुखश्रीदर्शनार्थञ्च बिभ्रती रत्नदर्पणम् ॥ २२
दृष्ट्वा तां निर्ज्जने नन्दो विस्मयं परमं ययौ।
चन्द्रकोटिप्रभामुष्टां भासयन्तीं दिशो दश ॥ २३
उवाच तां साश्रुनेत्रो भक्तिनम्रात्मकन्धरः।
जानामि त्वां गर्गमुखात् पद्माधिकप्रियां हरेः ॥२४
जानामीमं महाविष्णोः परं निर्गुणमच्युतम्।
तथापि मोहितोऽहञ्च मानवो विष्णुमायया ॥ २५
गृहाण प्राणनाथञ्च गच्छ भद्रे यथासुखम्।
पश्चाद्दास्यसि मत्पुत्रं कृत्वा पूर्णं मनोरथम् ॥ २६
इत्युक्त्वा स ददौ तस्यै रुदन्तं बालकं भिया।
जग्राह बालकं राधा जहास मधुरं सुखात् ॥ २७
उवाच नन्दं सा यत्नान्न प्रकाश्यं रहस्यकम्।
अहं दृष्टा त्वयानेन कतिजन्मफलोदयात् ॥ २८
प्राप्तस्त्वं गर्गवचनात् सर्व्वं जानासि कारणम्।
अकथ्यमावयोर्गोप्यं चरित्रं गोकुले व्रज ॥ २९
वरं वृणु व्रजेश त्वं यत् ते मनसि वाञ्छितम्।
ददामि लीलया तुभ्यं देवानामपि दुर्लभम् ॥ ३०
राधिकावचनं श्रुत्वा तामुवाच व्रजेश्वरः।
युवयोश्चरणे भक्तिं देहि नान्यत्र मे स्पृहा ॥ ३१
युवयोः सन्निधौ वासं दास्यसि त्वं सुदुर्लभम्।
आवाभ्यां देहि जगतामम्बिके परमेश्वरि ॥ ३२
श्रुत्वा नन्दस्य वचनमुवाच परमेश्वरी।
दास्यामि दास्यमतुल-मिदानीं भक्तिरस्तु ते ॥३३
आवयोश्चरणाम्भोजे युवयोश्च दिवानिशम्।
प्रफुल्लहृदये शश्वत् स्मृतिरस्तु सुदुर्लभा ॥ ३४
माया युवाञ्च प्रच्छन्नौ न करिष्यति मद्वरात्।
गोलोके यास्यथोऽन्ते च विहाय मानवीं तनूम् ॥३५
एवमुक्त्वा तु सानन्दं कृत्वा कृष्णं स्ववक्षसि।
गत्वा दूरे तं निनाय बाहुभ्याञ्च यथेप्सितम् ॥ ३६
कृत्वा वक्षसि तं कामात् श्लेषं श्लेषं चुचुम्ब ह।
पुलकाञ्चितसर्व्वाङ्गी सस्मार रासमण्डलम् ॥ ३७
एतस्मिन्नन्तरे राधा मायासद्रत्नमण्डपम्।
ददर्श रत्नकलस-शतकेन समन्वितम् ॥ ३८
नानाचित्रविचित्राढ्यं चित्रकाननशोभितम्।
सिन्दूराकारमणिभिः स्तम्भसङ्घैर्विराजितम् ॥ ३९
चन्दनागुरुकस्तूरी-कुङ्कुमद्रवयुक्तया।
संयुक्तं मालतीमाला-समूहपुष्पशय्यया ॥ ४०
नानाभोगसमाकीर्णं दिव्यदर्पणसंयुतम्।
मणीन्द्रमुक्तामाणिक्य-मालाजालैर्विभूषितम् ॥ ४१
मणीन्द्रसाररचित-कवाटेन विराजितम्।
भूषितं भूषणैर्वस्त्रैः पताकानिकरैर्वरैः ॥ ४२
कुङ्कुमाकारमणिभिः सप्तसोपानसंयुतम्।
युक्तं षट्पदसन्दोहैः पुष्पोद्यानञ्च पुष्पितैः ॥ ४३
सा देवी मण्डपं दृष्ट्वा जगामाभ्यन्तरं मुदा।
ददर्श तत्र ताम्बूलं कर्पूरादिसुवासितम् ॥ ४४
जलञ्च रत्नकुम्भस्थं शीतं स्वच्छं सुधोपमम्।
सुधामधुभ्यां पूर्णानि रत्नकुम्भानि नारद ॥ ४५
पुरुषं कमनीयञ्च किशोरं श्यामसुन्दरम्।
कोटिकन्दर्पलीलाभं चन्दनेन विभूषितम् ॥ ४६
शयानं पुष्पशय्यायां सस्मितं सुमनोहरम्।

पीतवस्त्रपरीधानं प्रसन्नवदनेक्षणम् ॥ ४७
मणीन्द्रसारनिर्म्माण-क्वणन्मञ्जीररञ्जितम् ।
सद्रत्नसारनिर्म्माण-केयूरवलयान्वितम् ॥ ४८
मणीन्द्रकुण्डलाभ्याञ्च गण्डस्थलविराजितम् ।
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् ॥ ४९
शरत्पार्व्वणचन्द्रास्य-प्रभामुष्टमुखोज्ज्वलम् ।
शरत्प्रफुल्लकमल-प्रभामोचनलोचनम् ॥ ५०
मालतीमाल्यसंश्लिष्ट-शिखिपुच्छसुशोभितम् ।
त्रिभङ्गचूडां बिभ्रन्तं पश्यन्तं रत्नमन्दिरम् ॥ ५१
क्रोड़ं बालकशून्यञ्च दृष्ट्वा तं नवयौवनम् ।
सर्व्वस्मृतिस्वरूपा सा तथापि विस्मयं ययौ ॥ ५२
रूपं रासेश्वरी दृष्ट्वा मुमोह सुमनोहरम् ।
कामाच्चक्षुश्चकोराभ्यां मुखचन्द्रं पपौ मुदा ॥ ५३
निमेषरहिता राधा नवसङ्गमलालसा ।
पुलकाञ्चितसर्व्वाङ्गी सस्मिता मदनातुरा ॥ ५४
तामुवाच हरिस्तत्र स्मेराननसरोरुहाम् ।
नवसङ्गमयोग्याञ्च पश्यन्तीं वक्रचक्षुषा ॥ ५५

श्रीकृष्ण उवाच ।

राधे स्मरसि गोलोके वृत्तान्तं स्मरणं यदि ।
अद्य पूर्णं करिष्यामि स्वीकृतं यत् पुरा प्रिये ॥ ५६
त्वं मे प्राणाधिका राधा प्रेयसी श्रेयसी परा ।
यथा त्वञ्च तथाहञ्च भेदो हि नावयोर्ध्रुवम् ॥ ५७
यथा क्षीरे च धावल्यं यथाग्नौ दाहिका सति ।
यथा पृथिव्यां गन्धश्च तथाहं त्वयि सन्ततम् ॥ ५८
विना मृदा घटं कर्त्तुं विना स्वर्णेन कुण्डलम् ।
कुलालः स्वर्णकारश्च न हि शक्तः कदाचन ॥ ५९
तथा त्वया विना सृष्टिं न च कर्त्तुमहं क्षमः ।
सृष्टेराधारभूता त्वं वीजरूपोऽहमच्युतः ॥ ६०
आगच्छ शयनं साध्वि कुरु वक्षःस्थलोज्ज्वलम् ।
त्वं मे शोभास्वरूपासि देहस्य भूषणं यथा ॥ ६१
कृष्णं वदन्ति मां लोकास्त्वयैव रहितं यदा ।
श्रीकृष्णञ्च तदा ते हि त्वयैव सहितं परम् ॥ ६२
त्वञ्च श्रीस्त्वञ्च सम्पत्ति-स्त्वमाधारस्वरूपिणी ।
सर्व्वशक्तिस्वरूपासि सर्व्वेषाञ्च ममापि च ॥ ६३
त्वं स्त्री पुमानहं राधे नेति वेदेषु निर्णयः ।
त्वञ्च सर्व्वस्वरूपासि सर्व्वरूपोऽहमक्षरे ॥ ६४
यदा तेजःस्वरूपोऽहं तेजोरूपासि त्वं तदा ।
न शरीरी यदाहञ्च तदात्वमशरीरिणी ॥ ६५
सर्व्ववीजस्वरूपोऽहं यदा योगेन सुन्दरि ।
त्वञ्च शक्तिस्वरूपासि सर्व्वस्त्रीरूपधारिणी ॥ ६६
ममार्द्धांशस्वरूपा त्वं मूलप्रकृतिरीश्वरी ।
शक्त्या बुद्ध्या च ज्ञानेन मम तुल्या च तेजसा ॥ ६७
आवयोर्भेदबुद्धिञ्च यः करोति नराधमः ।
तस्य वासः कालसूत्रे यावच्चन्द्रदिवाकरौ ॥ ६८
पूर्व्वान् सप्त परान् सप्त पुरुषान् पातयत्यधः ।
कोटिजन्मार्ज्जितं पुण्यं तस्य नश्यति निश्चितम् ॥ ६९
अज्ञानादावयोर्निन्दां ये कुर्व्वन्ति नराधमाः ।
पच्यन्ते नरके तावद्यावद्वै ब्रह्मणः शतम् ॥ ७०
राशब्दं कुर्व्वते त्रस्तो ददामि भक्तिमुत्तमाम् ।
धाशब्दं कुर्व्वतः पश्चाद्यामि श्रवणलोभतः ॥ ७१
ये सेवन्ते च दत्त्वा मामुपचाराणि षोड़श ।
यावज्जीवनपर्य्यन्तं नित्यं भक्त्या सुसंयुताः ॥ ७२
या प्रीतिर्जायते तत्र राधाशब्दात् ततोऽधिकः ।
ते प्रिया मे यथा राधे राधावक्ता ततोऽधिकः ॥ ७३
ब्रह्मानन्तः शिवो धर्म्मो नरनारायणावृषी ।
कपिलश्च गणेशश्च कार्त्तिकेयश्च मत्प्रियः ॥ ७४
लक्ष्मीः सरस्वती दुर्गा सावित्री प्रकृतिस्तथा ।
मम प्रियाश्च देव्यश्च तास्तथापि न ते समाः ॥ ७५
ते सर्व्वे प्राणतुल्या मे त्वं मे प्राणाधिका सति ।
भिन्नस्थानस्थितास्ते च त्वञ्च वक्षःस्थलस्थिता ॥ ७६
यो मे चतुर्भुजो मूर्त्तिर्बिभर्त्ति वक्षसि श्रियम् ।
योऽहं कृष्णस्वरूपस्त्वां बिभर्म्मि हृदयं सदा ॥ ७७
इत्येवमुक्त्वा श्रीकृष्ण-स्तस्थौ तल्पे मनोहरे ।
उवाच राधिका नाथं भक्तिनम्रात्मकन्धरा ॥ ७८

राधिकोवाच ।

स्मरामि सर्व्वं जानामि विस्मरामि कथं प्रभो ।
यत् त्वं वदसि सर्व्वाहं त्वत्पादाब्जप्रसादतः ॥ ७९
मायां करोषि मायेश मां भक्तां कथमीदृशीम् ।
त्वन्मायया भ्रमन्त्येव मद्विधाः कतिधा जनाः ॥ ८०
भक्तस्यैकस्य शापेन गोपिकाहं महीतले ।
शतवर्षञ्च विच्छेदो भविता मे त्वया सह ॥ ८१
ईश्वरस्याप्रियाः केचित् प्रियाश्च कुत्र केचन ।
ये यथा तं निषेवन्ते तेषु तस्य तथा कृपा ॥ ८२
तृणञ्च पर्व्वतं कर्त्तुं सक्षमः पर्व्वतं तृणम् ।

तथापि योग्यायोग्येषु दम्पत्योश्च समा कृपा ॥ ८३
तिष्ठन्त्यहं शयानस्त्वं कथाभियं द्वगतं निशो।
तत् क्षणञ्च युगशतं नाहं प्रापयितुं क्षमा ॥ ८४
वक्षःस्थले च शिरसि देहि ते चरणाम्बुजम्।
दुनोति मन्मनः सद्य-स्त्वदीयविरहानलात् ॥ ८५
पुरः पपात मे दृष्टि-स्त्वदीयचरणाम्बुजे।
नीता मया सातिक्लेशाद्द्रष्टुमन्यं कलेवरम् ॥ ८६
प्रत्येकमङ्गं दृष्ट्वैव दत्ता सा ते मुखाम्बुजे।
दृष्ट्वा मुखारविन्दञ्च नान्यं गन्तुं न सा क्षमा ॥ ८७
राधिकावचनं श्रुत्वा जहास पुरुषोत्तमः।
तामुवाच हितं तथ्यं श्रुतिस्मृतिनिरूपितम् ॥ ८८

श्रीकृष्ण उवाच।

यद्देवाचरणं यत्र देशे जन्मनि वा प्रिये।
न खण्डनीयं तत् तत्र मया पूर्व्वं निरूपितम् ॥ ८९
तिष्ठ भद्रे क्षणं भद्रं करिष्यामि तव प्रिये।
त्वन्मनोरथपूर्णस्य स्वयं कालः समागतः ॥ ९०
यस्य यल्लिखनं पूर्व्वं यत्र काले निरूपितम्।
तद्देव खण्डितुं राधे क्षमो नाहञ्च को विधिः ॥ ९१
विधातुश्च विधाताहं येषां यल्लिखनं कृतम्।
ब्रह्मादीनाञ्च क्षुद्राणां न तत् खण्ड्यं कदाचन ॥ ९२
एतस्मिन्नन्तरे ब्रह्मा जगाम पुरतो हरेः।
मालाकमण्डलुकर ईषत्स्मेरचतुर्मुखः ॥ ९३
गत्वा ननाम तं कृष्णं प्रतुष्टाव यथागमम्।
साश्रुनेत्रः पुलकितो भक्तिनम्रात्मकन्धरः ॥ ९४
स्तुत्वा नत्वा जगद्धाता जगाम हरिसन्निधिम्।
पुनर्नत्वा हरिं भक्त्या जगाम राधिकान्तिकम् ॥ ९५
मूर्द्ध्ना ननाम भक्त्या च मातुस्तच्चरणाम्बुजम्।
चकार सम्भ्रमेणैव जटाजालेन वेष्टितम् ॥ ९६
कमण्डलुजलेनैव शीघ्रं प्रक्षालितं मुदा।
यथागमं प्रतुष्टाव पुटाञ्जलियुतः पुनः ॥ ९७

ब्रह्मोवाच।

हे मातस्त्वत्पादाम्भोजं दृष्टं कृष्णप्रसादतः।
सुदुर्लभञ्च सर्व्वेषां भारते च विशेषतः ॥ ९८
षष्टिं वर्षसहस्राणि तपस्तप्तं पुरा मया।
भारते पुष्करे तीर्थे कृष्णस्य परमात्मनः ॥ ९९
आजगाम वरं दातुं वरदाता हरिः स्वयम्।
वरं वृणीष्वेत्युक्तेऽस्मिन् स्वाभीष्टश्च वृतो मुदा ॥ १००
राधिकाचरणाम्भोजं सर्व्वेषामपि दुर्लभम्।
हे गुणातीत मे शीघ्र-मधुनैव प्रदर्शय ॥ १०१
मायां त्यक्त्वा हरिरय-मुवाच मां तपस्विनम्।
दर्शयिष्यामि कालेन वत्सेदानीं क्षमेति च ॥ १०२
न हीश्वराज्ञा विफला तेन दृष्टं पदाम्बुजम्।
सर्व्वेषां वाञ्छितं मात-र्गोलोके भारतेऽधुना ॥ १०३
सर्व्वा देव्यः प्रकृत्यंशा जन्याः प्राकृतिका ध्रुवम्।
त्वं कृष्णार्द्धाङ्गसम्भूता तुल्या कृष्णेन सर्व्वतः ॥ १०४
श्रीकृष्णस्त्वमयं राधा त्वं राधा वा हरिः स्वयम्।
न हि वेदेषु मे दृष्ट इति केन निरूपितम् ॥ १०५
ब्रह्माण्डाद्बहिरूर्द्ध्वं च गोलोकोऽस्ति यथाम्बिके।
वैकुण्ठश्चाप्यजन्यश्च त्वमजन्या तथाम्बिके ॥ १०६
यथा समस्तब्रह्माण्डे श्रीकृष्णांशांशजीविनः।
सर्व्वशक्तिस्वरूपा त्वं तथा तेषु स्थिता तदा ॥ १०७
पुरुषाश्च हरेरंशा-स्त्वदंशा निखिलाः स्त्रियः।
आत्मायं देहरूपस्त्व-मस्याधारस्त्वमेव च ॥ १०८
अस्य प्राणैश्च त्वं मात-स्त्वत्प्राणैरयमीश्वरः।
किमहो निर्म्मितः केन कारुणा शिल्पकारिणा ॥ १०९
नित्योऽयञ्च यथा कृष्ण-स्त्वञ्च नित्या तथाम्बिके।
अस्यांशा त्वं त्वदंशो वाप्ययं केन निरूपितः ॥ ११०
अहं विधाता जगतां वेदानां जनकः स्वयम्।
तं पठित्वा गुरुमुखाद्भवन्त्येव बुधा जनाः ॥ १११
गुणानां वा स्तवानां ते शतांशं वक्तुमक्षमः।
वेदो वा पण्डितो वान्यः को वा त्वां स्तोतुमीश्वरः
स्तवानां जनकं ज्ञानं बुद्धिमात्राम्बिका स्मृता ॥ ११२
त्वं बुद्धेर्जननी मातः को वा त्वां स्तोतुमीश्वरः।
यद्वस्तु दृष्टं सर्व्वेषां तन्निर्व्वक्तुं बुधोऽक्षमः ॥ ११३
यददृष्टाश्रुतं वस्तु तन्निर्व्वक्तुञ्च कः क्षमः।
अहं महेशोऽनन्तश्च स्तोतुं त्वां कोऽपि न क्षमः ॥ ११४
सरस्वती न वेदश्च क्षमामः स्तोतुमीश्वरि।
यथागमं तथोक्तञ्च न मां निन्दितुमर्हति ॥ ११५
ईश्वराणामीश्वरीणां योग्यायोग्ये समा कृपा ॥ ११६
जनस्य प्रतिपाल्यस्य क्षणे दोषः क्षणे गुणः।
जननी जनको यो वा सर्व्वं क्षमति स्नेहतः ॥ ११७
इत्युक्त्वा जगतां धाता तस्थौ च पुरतस्तयोः।
प्रणम्य चरणाम्भोजं सर्व्वेषां वन्द्यमीप्सितम् ॥ ११८
ब्रह्मणा च कृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः।

राधामाधवयोः पादे भक्तिं दास्यं लभेद्ध्रुवम् ॥ ११९
कर्म्म निर्म्मूलनं कृत्वा जित्वा मृत्युं सुदुर्जयम् ।
विलङ्घ्य सर्व्वलोकांश्च याति गोलोकमुत्तमम् ॥ १२०

इति ब्रह्मणा कृतं श्रीराधास्तोत्रम् ।

नारायण उवाच ।

ब्रह्मणः स्तवनं श्रुत्वा तमुवाच ह राधिका ।
वरं वृणु विधातस्त्वं यत् ते मनसि वाञ्छितम् ॥१२१
राधिकावचनं श्रुत्वा तामुवाच जगद्विधिः ।
वरञ्च युवयोः पाद-पद्मे भक्तिञ्च देहि मे ॥ १२२
इत्युक्ते च विधौ राधा तूर्णमोमित्युवाच ह ।
पुनर्ननाम तां भक्त्या विधाता जगतां पतिः ॥ १२३
तदा ब्रह्मा तयोर्मध्ये प्रज्वाल्य च हुताशनम् ।
हरिं संस्मृत्य हवनं चकार विधिना विधिः ॥ १२४
उत्थाय शयनात् कृष्ण उवास वह्निसन्निधौ ।
ब्रह्मणोक्तेन विधिना चकार हवनं स्वयम् ॥ १२५
प्रणम्य च हरिं राधां वेदानां जनकः स्वयम् ।
ताञ्च तं कारयामास सप्तधा च प्रदक्षिणम् ॥ १२६
पुनः प्रदक्षिणं राधां कारयित्वा हुताशनम् ।
प्रणम्य च पुनः कृष्णं वासयामास तां विधिः ॥ १२७
तस्या हस्तञ्च श्रीकृष्णं ग्राहयामास तद्विधिः ।
वेदोक्तसप्तमन्त्रांश्च पाठयामास माधवम् ॥ १२८
संस्थाप्य राधिकाहस्तं हरेर्वक्षसि वेदवित् ।
श्रीकृष्णहस्तं राधायाः पृष्ठदेशे प्रजापतिः ।
स्थापयित्वा च मन्त्रांश्च पाठयामास राधिकाम्॥१२९
पारिजातप्रसूनानां मालामाजानुलम्बिताम् ।
श्रीकृष्णस्य गले ब्रह्मा राधाद्वारा ददौ मुदा ॥१३०
प्रणमय्य पुनः कृष्णं राधाञ्च कमलोद्भवः ।
राधागले हरिद्वारा ददौ मालां मनोरमाम् ॥ १३१
पुनश्च वासयामास श्रीकृष्णं कमलोद्भवः ।
तद्वामपार्श्वे राधाञ्च सस्मितां कृष्णचेतसम् ॥ १३२
पुटाञ्जलिं कारयित्वा माधवं राधिकां विधिः ।
पाठयामास वेदोक्तान् पञ्च मन्त्रांश्च नारद ॥ १३३
प्रणमय्य पुनः कृष्णं समर्प्य राधिकां विधिः ।
कन्यकाञ्च यथा तातो भक्त्या तस्थौ हरेः पुरः॥१३४
एतस्मिन्नन्तरे देवाः सानन्दपुलकोद्गमाः ।
दुन्दुभिं वादयामासु-रानकं मुरजादिकम् ॥ १३५
पारिजातप्रसूनानां पुष्पवृष्टिं चकार ह ।
जगुर्गन्धर्व्वप्रवरा ननृतुश्चाप्सरोगणाः ॥ १३६
तुष्टाव श्रीहरिं ब्रह्मा तमुवाच ह सस्मितः ।
युवयोश्चरणाम्भोजे भक्तिं मे देहि दक्षिणाम्॥१३७
ब्रह्मणो वचनं श्रुत्वा तमुवाच हरिः स्वयम् ।
मदीयचरणाम्भोजे सुदृढा भक्तिरस्तु ते ॥ १३८
स्वस्थानं गच्छ भद्रं ते भविता नात्र संशयः ।
मया नियोजितं कर्म्म कुरु वत्स ममाज्ञया ॥ १३९
ईश्वरस्य वचः श्रुत्वा विधाता जगतां मुने ।
प्रणम्य राधां कृष्णञ्च जगाम स्वालयं मुदा ॥ १४०
गते ब्रह्मणि सा देवी सस्मिता वक्रचक्षुषा ।
दृष्टं दृष्टं हरेर्वक्त्रं चच्छाद व्रीडया मुखम् ॥ १४१
पुलकाङ्कितसर्व्वाङ्गी कामबाणप्रपीड़िता ।
प्रणम्य श्रीहरिं भक्त्या जगाम शयनं हरेः ॥ १४२
चन्दनागुरुपङ्कञ्च कस्तूरीकुङ्कुमान्वितम् ।
ललाटे तिलकं दत्त्वा ददौ कृष्णस्य वक्षसि ॥ १४३
सुधापूर्णं रत्नपात्रं मधुपूर्णं मनोहरम् ।
प्रददौ हरये भक्त्या बुभुजे जगतां पतिः ॥ १४४
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम् ।
ददौ कृष्णाय सा राधा सादरं बुभुजे हरिः ॥१४५
चखाद सस्मिता राधा हरिदत्तं सुधारसम् ।
ताम्बूलं तेन दत्तञ्च बुभुजे पुरतो हरेः ॥ १४६
कृष्णश्चर्व्वितताम्बूलं राधिकायै ददौ मुदा ।
चखाद परया भक्त्या पपौ तन्मुखपङ्कजम् ॥ १४७
राधाचर्व्वितताम्बूलं ययाचे मधुसूदनः ।
जहास न ददौ राधा क्षमेत्युक्तं तया मुदा ॥ १४८
चन्दनागुरुकस्तूरी-कुङ्कुमद्रवमुत्तमम् ।
राधिकायाश्च सर्व्वाङ्गे प्रददौ माधवः स्वयम् ॥१४९
यः कामो ध्यायते नित्यं यस्यैव चरणाम्बुजम् ।
बभूव स तस्य वशो राधासन्तोषकारणात् ॥ १५०
यद्भृत्यभृत्यैर्मदनो जितः सर्व्वेषां मुने ।
स्वेच्छामयो हि भगवान् जितस्तेन कुतूहलात्॥१५१
करे धृत्वा च तां कृष्णः स्थापयामास वक्षसि ।
चकार शिथिलं वस्त्रं चुम्बनञ्च चतुर्व्विधम् ॥ १५२
बभूव रतियुद्धेन विच्छिन्ना क्षुद्रघण्टिका ।
चुम्बनेनौष्ठरागञ्च आश्लेषेण च पत्रकम् ॥ १५३
शृङ्गारेणैव कवरी सिन्दूरतिलकं मुने ।
जगामालक्ताङ्कश्च विपरीतादिकेन च ॥ १५४

पुलकाङ्कितसर्व्वाङ्गी बभूव नवसङ्गमात् ।
मूर्च्छामवाप सा राधा बुबुधे न दिवानिशम् ॥ १५५
प्रत्यङ्गेनैव प्रत्यङ्ग-मङ्गेनाङ्गं समाश्लिषत् ।
शृङ्गाराष्टविधं कृष्ण-श्चकार कामशास्त्रवित् ॥ १५६
पुनस्ताञ्च समाकृष्य सस्मितां वक्रलोचनाम् ।
क्षतविक्षतसर्व्वाङ्गीं नखदन्तैश्चकार ह ॥ १५७
कङ्कणानां किङ्किणीनां मञ्जीराणां मनोहरः ।
बभूव शब्दस्तत्रैव शृङ्गारसमरोद्भवः ॥ १५८
चकार रहितां राधां कवरीवेशवाससा ।
निर्ज्जने कौतुकात् कृष्णः कामशास्त्रविशारदः ॥१५९
चूड़ावेशांशुकैर्हीनं चकार तञ्च राधिका ।
न कस्य कस्मादानिश्च तौ द्वौ कार्य्यविशारदौ ॥१६०
जग्राह राधाहस्तात् तु माधवो रत्नदर्पणम् ।
मुरलीं माधवकराज्जग्राह राधिका बलात् ॥ १६१
चित्तापहारं राधायाश्चकार माधवो रसात् ।
जहार राधिका रसान्माधवस्यापि मानसम् ॥१६२
निवृत्ते कामयुद्धे च सस्मिता वक्रलोचना ।
प्रददौ मुरलीं प्रीत्या श्रीकृष्णाय महामुने ॥ १६३
प्रददौ दर्पणं कृष्णः क्रीड़ाकमलमुज्ज्वलम् ।
चकार कवरीं रम्यां सिन्दूरतिलकं ददौ ॥ १६४
विचित्रपत्रकं वेशं चकारैवंविधं हरिः ।
विश्वकर्म्मा न जानाति सखीनामपि का कथा ॥१६५
वेशं विधातुं कृष्णस्य यदा राधा समुद्यता ।
बभूव शिशुरूपः स कैशोरञ्च विहाय च ॥ १६६
ददर्श बालकं राधा रुदन्तं पीड़ितं क्षुधा ।
यादृशं प्रददौ नन्दो भीरुं तादृशमच्युतम् ॥ १६७
निशश्वास च सा राधा हृदयेन विदूयता ।
इतस्ततस्तं पश्यन्ती शोकार्त्ता विरहातुरा ॥ १६८
उवाच कृष्णमुद्दिश्य काकूक्तिमिति कातरा ।
मायां करोषि मायेश-किङ्करीं कथमीदृशीम् ॥ १६९
इत्येवमुक्त्वा सा राधा पपात च रुरोद च ।
रुरोद कृष्णस्तत्रैव वाग्बभूवाशरीरिणी ॥ १७०
कथं रोदिषि राधे त्वं स्मर कृष्णपदाम्बुजम् ।
आरासमण्डलं यावन्नक्तमत्रागमिष्यसि ॥ १७१
करिष्यसि रतिं नित्यं हरिणा सार्द्धमीप्सितम् ।
छायां विधाय स्वगृहे स्वयमागत्य मा रुदः ॥१७२
कृत्वा क्रोड़े च मायेशं प्राणेशं बालरूपिणम् ।
त्यज शोकं गृहं गच्छ सुन्दरीति प्रबोधिनी ॥१७३
श्रुत्वैवं वचनं राधा कृत्वा क्रोड़े च बालकम् ।
ददर्श पुष्पोद्यानञ्च वनं सद्रत्नमण्डपम् ॥ १७४
तूर्णं वृन्दावनाद्राधा जगाम नन्दमन्दिरम् ।
सा मनोयायिनी देवी निमेषार्द्धेन नारद ॥ १७५
संसिक्तस्निग्धसंमुक्त-वसना रक्तलोचना ।
यशोदायै शिशुं दातुमुद्यता सेत्युवाच ह ॥ १७६
गृहीत्वेमं शिशुं स्थूलं (क) रुदन्तञ्च क्षुधातुरम् ।
गोष्ठे त्वत्स्वामिना दत्तं प्राप्तातियातना पथि ॥१७७
संसिक्तवसना वृष्टेर्मेघ-च्छन्नेऽतिदुर्द्दिनम् ।
पिच्छिले दुर्गमोद्रेके यशोदे वोढुमक्षमा ॥ १७८
गृहाण बालकं भद्रे स्तनं दत्त्वा प्रबोधय ।
गृहं चिरपरित्यक्तं यामि तिष्ठ स्वयं सति ॥ १७९
इत्युक्त्वा बालकं दत्त्वा जगाम स्वालयं सती ।
यशोदा बालकं नीत्वा चुचुम्ब च स्तनं ददौ ॥१८०
वहिर्निविष्टा सा राधा स्वगृहे गृहकर्म्मणि ।
नित्यं नक्तं रतिं तत्र चकार हरिणा सह ॥ १८१
इत्येवं कथितं वत्स श्रीकृष्णचरितं शुभम् ।
सुखदं मोक्षदं पुण्य-मपरं कथयामि ते ॥ १८२

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे राधा-कृष्ण-विवाहो नाम पञ्चदशोऽध्यायः ॥१५॥

## षोड़शोऽध्यायः ।

नारायण उवाच

माधवो बालकैः सार्द्धमेकदा गोधनैः सह ।
भुक्त्वा पीत्वा च क्रीड़ार्थं जगाम श्रीवनं मुने ॥ १
तत्र नानाविधां क्रीड़ां चकार मधुसूदनः ।
कृत्वा तां शिशुभिः सार्द्धं चालयामास गोधनम् ॥ २
ययौ मधुवनं तस्मात् श्रीकृष्णो गोधनैः सह ।
तत्र स्वादु जलं पीत्वा बलेन सह बालकः ॥ ३
तत्रैकदैत्यो बलवान् श्वेतवर्णो भयङ्करः ।
विकृताकारवदनो वकाकारश्च शैलवत् ॥ ४
दृष्ट्वा च गोकुलं गोष्ठे शिशुभिर्बलकेशवौ ।
यथागस्त्यश्च वातापिं सर्व्वं जग्राह लीलया ॥ ५

(क) तूर्णमिति क्वचित् पाठः ।

बकग्रस्तं हरिं दृष्ट्वा सर्व्वे देवा भयान्विताः।
चक्रुर्हाहेति सन्त्रस्ता धावन्तः शस्त्रपाणयः ॥ ६
शक्रश्चिक्षेप वज्रञ्च मुनेरस्थिविनिर्म्मितम्।
न ममार बकस्तस्मात् पक्षमेकं ददाह च ॥ ७
नीहाराख्यं शशधरः शीतार्त्तस्तेन नारद।
यमदण्डं सूर्य्यपुत्त्र-स्तेन कुण्ठो बभूव ह ॥ ८
वायव्यास्त्रञ्च वायुश्च तेन स्थानान्तरं ययौ।
वरुणश्च शिलावृष्टिं चकार तेन पीड़ितः ॥ ९
हुताशनश्च वह्निञ्च पश्चात् तेन ददाह च।
कुवेरस्यार्द्धचन्द्रेण च्छिन्नपादो बभूव ह ॥ १०
ईशानस्य च शूलेन बभूव मूर्च्छितोऽसुरः।
ऋषयो मुनयश्चैव कृष्णं चक्रुर्भियाशिषम् ॥ ११
एतस्मिन्नन्तरे कृष्णः प्रज्वलन् ब्रह्मतेजसा।
ददाह दैत्यं सर्व्वाङ्गं वाह्याभ्यन्तरमीश्वरः ॥ १२
तत् सर्व्वं वमनं कृत्वा प्राणांस्तत्याज दानवः।
बकं निहत्य बलवान् शिशुभिर्गोधनैः सह।
ययौ कोलिकदस्त्रानां काननं सुमनोहरम् ॥ १३
एतस्मिन्नन्तरे तत्र वृषरूपधरोऽसुरः।
नाम्ना प्रलम्बो भगवान् महाधूर्त्तश्च शैलवत् ॥ १४
शृङ्गाभ्याञ्च हरिं कृत्वा भ्रामयामास तत्र वै।
दुद्रुवुर्बालकाः सर्व्वे रुरुदुश्च भयातुराः ॥ १५
बली जहास बलवान् ज्ञात्वा भ्रातरमीश्वरम्।
बालकान् बोधयामास भयं किं मित्युवाच ह ॥ १६
तद्विषाणं गृहीत्वा च स्वयं श्रीमधुसूदनः।
भ्रामयित्वा च गगने पातयामास भूतले ॥ १७
प्राणांस्तत्याज दैत्येन्द्रो निपत्य च महीतले।
जहसुर्बालकाः सर्व्वे ननृतुश्च जगुर्मुदा ॥ १८
हत्वा प्रलम्बं श्रीकृष्णो बलेन सह सत्वरः।
गोधनं चालयामास ययौ भाण्डीरमीश्वरः ॥ १९
गच्छन्तं माधवं दृष्ट्वा केशी दैत्येश्वरो बली।
वेष्टयामास तं शीघ्रं खुरेण विलिखन्महीम् ॥ २०
मूर्द्धि कृत्वा हरिं दुष्टो गगनं शतयोजनम्।
उत्पत्य भ्रामयामास पपात च महीतले ॥ २१
जग्राह स हरिं पापी चर्व्वयामास कोपतः।
स भग्नदन्तो दैत्यश्च वज्रादिचर्व्वणादहो ॥ २२
श्रीकृष्णतेजसा दग्धः प्राणांस्तत्याज भूतले।
स्वर्गे दुन्दुभयो नेदुः पुष्पवृष्टिर्बभूव ह ॥ २३
एतस्मिन्नन्तरे तत्र पार्षदा दिव्यरूपिणः।
तत्राजग्मुः स्यन्दनस्था द्विभुजाः पीतवाससः ॥ २४
किरीटिनः कुण्डलिनो वनमालाविभूषिताः।
विनोदमुरलीहस्ताः क्वणन्मञ्जीररञ्जिताः ॥ २५
चन्दनोक्षितसर्व्वाङ्गाः कमनीया मनोहराः।
कुङ्कुमद्रवसंयुक्ता गोपवेशधरा वराः ॥ २६
ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकातराः।
प्रदीप्तं रथमादाय रत्नसारविनिर्म्मितम् ॥ २७
भाण्डीरवनमाजग्मु-र्यत्र सन्निहितो हरिः।
दिव्यवस्त्रपरीधाना रत्नालङ्कारभूषिताः ॥ २८
प्रणमय्य हरिं नीत्वा जग्मुर्गोलोकमुत्तमम् ॥ २९
मुक्तं देहं परित्यज्य वैष्णवाः पुरुषास्तदा।
सम्प्राप्य दानवीं योनिं बभूवुः कृष्णपार्षदाः ॥ ३०

नारद उवाच।

के ते च दिव्यपुरुषा वैष्णवा दैत्यरूपिणः।
कथयस्व महाभाग श्रुतं किं परमाद्भुतम् ॥ ३१

नारायण उवाच।

शृणु ब्रह्मन् प्रवक्ष्येऽहमितिहासं पुरातनम्।
श्रुतं महेशवदनात् सूर्य्यपर्व्वणि पुष्करे ॥ ३२
हरेर्गुणप्रसङ्गेन कथयामास शङ्करः।
सम्पृष्टो मुनिसङ्घेश्च मया धर्म्मेण ब्रह्मणा ॥ ३३
ब्रह्मपुत्त्र महाभाग कथां भुवनपावनीम्।
कथयामि सुविस्तार्य्य सावधानं निशामय ॥ ३४
गन्धर्व्वेशो गन्धवाहः पर्व्वते गन्धमादने।
महांस्तपस्विप्रवरो हरिसेवनतत्परः ॥ ३५
बभूवुश्चतुरः पुत्त्रा गन्धर्व्वप्रवरा मुने।
सस्मरुः कृष्णपादाब्जं स्वप्ने ध्याने दिवानिशम् ॥ ३६
ते च दुर्व्वाससः शिष्याः श्रीकृष्णार्च्चनतत्पराः।
नित्यं दत्त्वा च कमलं सम्पूज्य च पपुर्जलम् ॥ ३७
वसुदेवः सुहोत्रश्च सुपार्श्वश्च सुदर्शकः।
चत्वारो वैष्णवश्रेष्ठास्तेपुस्ते पुष्करे तपः।
चिरकालं तपस्तप्त्वा बभूवुः सिद्धसञ्ज्ञिनः ॥ ३८
ज्येष्ठो दुर्व्वाससो योगं सम्प्राप्य योगिनां वरः।
सिद्धश्चाहृतदारश्च प्रज्वलन् ब्रह्मतेजसा ॥ ३९
सद्यो देहं परित्यज्य बभूव कृष्णपार्षदः।
एकदा भ्रातरस्ते च (क) जग्मुश्चित्रसरोवरम् ॥ ४०

(क) भ्रातुरन्ते चेति क्वचित् पाठः।

पद्मानि कृष्णपूजार्थमाहर्त्तुमुदये रवेः ॥ ४१
पद्मानां चयनं कृत्वा गच्छतो वैष्णवान् मुने।
दृष्ट्वा निबद्धा संजग्मुः सर्व्वे शङ्करकिङ्कराः ॥ ४२
बलिष्ठा दुर्ब्बलान् नीत्वा जग्मुः शङ्करसन्निधिम्।
ते सर्व्वे शङ्करं दृष्ट्वा प्रणेमुः शिरसा भुवि ॥ ४३
तानुवाच शिवः शीघ्रं प्रयुञ्ज्याशिषमुत्तमाम्।
ईषद्धास्यप्रसन्नास्यो भक्तानुग्रहकातरः ॥ ४४

शिव उवाच।

के यूयं पद्महर्त्तारः पार्व्वत्याश्च सरोवरे।
लक्षयक्षै रक्षणीये पार्व्वतीव्रतहेतवे ॥ ४५
नित्यं सहस्रकमलं ददाति हरये सती।
व्रते त्रैमासिके भक्त्या पतिसौभाग्यवर्द्धने ॥ ४६
शिवस्य वचनं श्रुत्वा तमूचुर्वैष्णवा भिया।
पुटाञ्जलियुताः सर्व्वे भक्तिनम्रात्मकन्धराः ॥ ४७

गन्धर्व्वा ऊचुः।

वयं गन्धर्व्वप्रवरा गन्धवाहसुताः प्रभो।
हरये कमलं दत्त्वा पिबामो जलमीश्वर ॥ ४८
वयं न जानहे नाथ पार्व्वत्या रक्षितं सरः।
गृहाण कमलं सर्व्वमस्माकञ्च फलं कुरु ॥ ४९
न दास्यामोऽद्य कमलं पास्यामोऽद्य जलं हर।
किं वा कथं न पास्यामस्तुभ्यं दत्तानि तानि च ॥ ५०
नित्यं ध्यात्वा यत्पदाब्जं पद्मेन पूजयामहे।
साक्षात् तस्मै प्रदत्त्वा च पद्मं पूता वयं विभो ॥ ५१
एकं ब्रह्म क्व द्वितीयं क्व देहः क्व च रूपवान्।
भक्तानुग्रहतो देही रूपभेदश्च मायया ॥ ५२
किन्तु गृहाण पद्मानि त्वमेव मत्प्रभुः प्रभो।
यतो न मानसं पूर्णं तद्रूपं दर्शयाच्युत ॥ ५३
द्विभुजं कमनीयञ्च किशोरं श्यामसुन्दरम्।
विनोदमुरलीहस्तं पीताम्बरधरं परम् ॥ ५४
एकवक्त्रं द्विनयनं चन्दनागुरुचर्च्चितम्।
ईषद्धास्यप्रसन्नास्यं रत्नालङ्कारभूषितम् ॥ ५५
मयूरपुच्छचूडञ्च मालतीमाल्यभूषितम्।
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् ॥ ५६
पारिजातप्रसूनानां मालाराजिविराजितम्।
कोटिकन्दर्पलावण्य-लीलाधाम मनोहरम् ॥ ५७
गोपीसङ्घैर्दृश्यमानं सस्मितैवक्रलोचनैः।
नवयौवनसम्पन्नं राधावक्षःस्थलस्थितम् ॥ ५८
ब्रह्मादिभिः स्तूयमानं वन्द्यं ध्येयमभीप्सितम्।
आत्मारामं पूर्णकामं भक्तानुग्रहकातरम् ॥ ५९
इत्युक्त्वा पुरतः शम्भोस्तस्थुर्गन्धर्व्वपुङ्गवाः।
श्रीकृष्णरूपस्मरणात् पुलकाङ्कितविग्रहाः ॥ ६०
गन्धर्व्वाणां वचः श्रुत्वा शिवस्तानित्युवाच ह।
श्रीकृष्णरूपस्मरणात् साश्रुपूर्णविलोचनः ॥ ६१
मयैव यूयं विज्ञाता वैष्णवप्रवरा महीम्।
पूतां कर्त्तुञ्च भ्रमथ चरणाम्भोजरेणुना ॥ ६२
अहं वाञ्छां करोम्येव श्रीकृष्णभक्तदर्शनम्।
समागमो हि साधूनां त्रिषु लोकेषु दुर्लभः ॥ ६३
पार्व्वत्याश्च सुराणाञ्च सदा यूयं मम प्रियाः।
आत्मनश्चात्मभक्तेभ्यो वैष्णवाश्च प्रियाश्च नः ॥ ६४
किन्तु मोघञ्च न भवेन्मया यत् स्वीकृतं पुरा।
तत् श्रूयतां महाभागाः पार्व्वतीव्रतकर्म्मणि ॥ ६५
सरस्यत्रैव पद्मानि येर्हृतानि व्रतान्तरे।
ते तूर्णमासुरीं योनिं गमिष्यन्ति न संशयः ॥ ६६
न हि श्रीकृष्णभक्तानामशुभं विद्यते क्वचित्।
सम्प्राप्य दानवीं योनिं गोलोकं यास्यथ ध्रुवम् ॥ ६७
यूयं श्रीकृष्णरूपञ्च प्रत्यक्षं द्रष्टुमुत्सुकाः।
ध्रुवं द्रक्ष्यथ हे वत्सा वृन्दारण्ये च भारते ॥ ६८
दृष्ट्वा कृष्णं ततो मृत्युं सम्प्राप्य वैष्णवोत्तमाः।
दिव्यं स्यन्दनमारुह्य गमिष्यथ हरेर्गृहम् ॥ ६९
अधुना वाञ्छनीयञ्च रूपं द्रष्टुमिहोत्सुकाः।
तत् सर्व्वं पश्यथेत्युक्त्वा दर्शयामास तच्छिवः ॥ ७०
रूपं दृष्ट्वा साश्रुनेत्राः प्रणम्य सर्व्वरूपिणम्।
आजग्मुर्दानवीं योनिमिमे ते दानवेश्वराः ॥ ७१
वसुदेवः पुरा मुक्तः सुचोरश्च वकासुरः।
सुदर्शनः प्रलम्बोऽयं स्वयं केशी सुपार्श्वकः ॥ ७२
हरस्य वरदानेन दृष्ट्वा रूपमनुत्तमम्।
मृत्युं सम्प्राप्य श्रीकृष्णाज्जग्मुस्ते कृष्णमन्दिरम् ॥ ७३
इत्येवं कथितं विप्र हरेश्चरितमद्भुतम्।
वक-केशि-प्रलम्बानां मोक्षणं मोक्षकारकम् ॥ ७४

नारद उवाच।

श्रुतं सर्व्वं महाभाग त्वत्प्रसादाद्यदद्भुतम्।
अधुना श्रोतुमिच्छामि पार्व्वत्या किं व्रतं कृतम् ॥ ७५
को वाराध्यो व्रतस्यास्य किं फलं नियमश्च कः।
कानि द्रव्याणि भगवन् व्रतोपयोगिकानि च ॥ ७६

कतिकालं व्रतं किं वा प्रतिष्ठायां निरूपणम् ।
सुविचार्य्य वद विभो श्रोतुं कौतूहलं मम ॥ ७७

नारायण उवाच ।

व्रतं त्रैमासिकं नाम पतिसौभाग्यवर्द्धनम् ।
आराध्यो भगवान् कृष्णो राधया सहितो मुने॥७८
विषुवे च समारम्भः समाप्तिर्दक्षिणायने ।
संयम्य पूर्व्वदिवसे कृत्वावश्यं हविष्यकम् ॥ ७९
स्नात्वा वैशाखसंक्रान्त्यां सङ्कल्प्य जाह्नवीतटे ।
घटे मणौ शालग्रामे जले वा पूजयेद्व्रती ॥ ८०
ध्यायेद्भक्त्या च राधेशं सम्पूज्य पञ्चदेवताः ।
ध्यानञ्च सामवेदोक्तं निबोध कथयामि ते ॥ ८१
नवीननीरदश्यामं पीतकौशेयवाससम् ।
शरत्पार्व्वणचन्द्रास्य-मीषद्धास्यसमन्वितम् ॥ ८२
शरत्फुल्लपद्माक्ष-मञ्जुलाञ्जनरञ्जितम् ।
मानसं गोपिकानाञ्च मोहयन्तं मुहुर्मुहुः ॥ ८३
राधया दृश्यमानञ्च राधावक्षःस्थलस्थितम् ।
ब्रह्मानन्तेश-ब्रह्माद्यैः स्तूयमानं परं भजे ॥ ८४
ध्यात्वा कृष्णञ्च ध्यानेन तमाराध्य व्रती मुदा ।
ध्यायेत् तथा राधिकाञ्च ध्यानं मध्यन्दिनेरितम् ॥ ८५
राधां रासेश्वरीं रम्यां रासोल्लासरसोत्सुकाम् ।
रासमण्डलमध्यस्थां रासाधिष्ठातृदेवताम् ॥ ८६
रासेशवक्षःस्थलस्थां रसिकां रसिकप्रियाम् ।
रसिकाप्रवरां रामां रम्यां चारुमनोरमाम् ॥ ८७
शरद्राजीवराजीनां प्रभामोचनलोचनाम् ।
वक्रभ्रूभङ्गसंयुक्ता-मञ्जनेनेव रञ्जिताम् ॥ ८८
शरत्पार्व्वणचन्द्रास्या-मीषद्धास्यमनोहराम् ।
चारुचम्पकवर्णाभां चन्दनेन विभूषिताम् ॥ ८९
कस्तूरीबिन्दुना सार्द्धं सिन्दूरबिन्दुशोभिताम् ।
चारुपत्रावलीयुक्तां वह्निशुद्धांशुकोज्ज्वलाम् ॥ ९०
सद्रत्नकुण्डलाभ्याञ्च सुकपोलस्थलोज्ज्वलाम् ।
रत्नेन्द्रसारहारेण वक्षःस्थलविराजिताम् ॥ ९१
रत्नकङ्कण-केयूर-किङ्किणी-रत्नरञ्जिताम् ।
सद्रत्नसाररुचिर-क्वणन्मञ्जीररञ्जिताम् ॥ ९२
ब्रह्मादिभिश्च सेव्येन श्रीकृष्णेनैव सेविताम् ।
सर्व्वेशेन स्तूयमानां सर्व्वबीजां भजाम्यहम् ॥ ९३
इति ध्यात्वा तु कृष्णेन सहितां ताञ्च पूजयेत् ।
भक्त्या दत्त्वा प्रतिदिन-मुपचाराणि षोड़श ॥ ९४
प्रत्येकञ्च पृथक् कृत्वा सर्व्वं दद्याद्व्रती मुदा ।
सहस्रकमलं दिव्यं फलमष्टोत्तरं मुने ॥ ९५
राधिकासहकृष्णाय दद्यात् पुष्पं फलं व्रती ।
दद्याद्भक्त्या च कृष्णाय स्वाद्वेत्युच्चार्य्य यत्नतः ॥ ९६
रसालस्य कदल्या वा रम्भायाः पक्वमेव वा ।
नित्यमष्टोत्तरशतं दद्याद्भक्त्याहृतं फलम् ॥ ९७
नित्यञ्च भोजयेद्भक्त्या ब्राह्मणानां शतं मुने ॥ ९८
होमं कुर्य्याद्व्रती नित्यमष्टोत्तरशताहुतिम् ।
दद्याद्भक्त्या च कृष्णाय राधिकासहिताय च ॥ ९९
तिलेन हवनं कुर्य्यादाज्यमिश्रेण नारद ।
वाद्यञ्च वादयेन्नित्यं कारयेद्धरिकीर्त्तनम् ॥ १००
एवं मासत्रयं कृत्वा प्रतिष्ठा तदनन्तरम् ।
प्रतिष्ठादिवसे तत्र विधानं शृणु नारद ॥ १०१
कमलानाञ्च नवति-सहस्राणशतानि च ।
ब्राह्मणानां सहस्राणि नव विप्रेन्द्र यत्नतः ।
भोजयेत् परमान्नानि स्वादूनि पिष्टकानि च ॥ १०२
फलं दद्याधिकं सप्त-शतं नवसहस्रकम् ।
दद्यान्नानाविधं द्रव्यं नैवेद्यं सुमनोहरम् ॥ १०३
संस्कृताग्निञ्च संस्थाप्य होमं कुर्य्याद्विचक्षणः ।
नवतिसहस्राहुतिं सघृतेन तिलेन च ॥ १०४
सवस्त्रञ्च सभोज्यञ्च यज्ञसूत्रफलान्वितम् ।
गन्धपुष्पार्च्चितं भक्त्या दद्यान्नवतिडल्लकम् ॥ १०५
दद्यान्नवतिकुम्भांश्च शीततोयप्रपूरितान् ।
एवंविधं व्रतं कृत्वा दद्याद्विप्राय दक्षिणाम् ॥ १०६
दक्षिणायाः परिमितं वेदेषु यन्निरूपितम् ।
वृषेन्द्राणां सहस्रञ्च स्वर्णशृङ्गसमन्वितम् ॥ १०७
इत्येवं कथितं विप्र व्रतं त्रैमासिकं परम् ।
विशिष्टसन्ततिकरं पतिसौभाग्यवर्द्धनम् ॥ १०८
व्रतस्यास्य प्रभावेण सौभाग्यं शतजन्मनि ।
सत्पुत्रजननी सा च भवेज्जन्मशतं ध्रुवम् ॥ १०९
कदापि न भवेत् तस्या भेदश्च पतिपुत्त्रयोः ।
दासतुल्यो भवेत् पुत्त्रो भर्त्ता च सुवशस्करः ॥ ११०
अनुचर्य्या भवेद्राधा-कृष्णभक्तियुता सती ।
भवेद्व्रतप्रभावेण स्वप्ने ध्याने हरिस्मृतिः ॥ १११
व्रतञ्च सामवेदोक्तं कृतं पूर्व्वं मयावयोः ।
सर्व्वेषाञ्च व्रतानाञ्च श्रेष्ठं शृणु वदामि ते ॥ ११२
स्वायम्भुवस्य च मनोः शतरूपाभिधा सती ।

तया कृतं प्रथमतः कृत्वागस्त्यं पुरोहितम् ॥ ११३
तदा कृतं दैवहूत्या चारुहूत्या तदा कृतम् ।
पुरोहितं पुलस्त्यञ्च कृत्वा स्वत्युक्तया मुने ॥ ११४
चकार रोहिणी तत् तु क्रतुं कृत्वा पुरोहितम् ।
रतिश्चकार तद्भक्त्या गौतमस्तत्पुरोहितः ॥ ११५
चकार तद्व्रतं भक्त्या तारया गुरुकान्तया ।
महत् सम्भृतसम्भारो वशिष्ठस्तत्पुरोहितः ॥ ११६
तद्दृष्ट्वा गुरुपत्न्याश्च मुदा शच्या कृतं व्रतम् ।
महत् सम्भृतसम्भारस्तत्पुरोधा बृहस्पतिः ॥ ११७
व्रतं चकार स्वाहा च सर्व्वतोऽपि विलक्षणम् ।
अतिसम्भृतसम्भारो मरीचिस्तत्पुरोहितः ॥ ११८
तद्दृष्ट्वा पार्व्वती ब्रह्मन्नुवाच शङ्करं मुदा ।
पुटाञ्जलियुता देवी भक्तिनम्रात्मकन्धरा ॥ ११९

पार्व्वत्युवाच ।

आज्ञां कुरु जगन्नाथ करोमि व्रतमुत्तमम् ।
आवयोरिष्टदेवस्य व्रतानाञ्च परं व्रतम् ॥ १२०
हरेराराधनं नाथ सर्व्वमङ्गलकारणम् ।
दृष्टं दत्तं श्रुतिः पाठस्तीर्थं पृथ्व्याः प्रदक्षिणम् ।
हरेराराधनस्यापि कलां नार्हन्ति षोड़शीम् ॥ १२१
वहिरभ्यन्तरे यस्य हरिस्मृतिरनुक्षणम् ।
जीवन्मुक्तस्य तस्यैव मुक्तिर्भवति दर्शनात् ॥ १२२
तस्य पादाब्जरजसा सद्यःपूता वसुन्धरा ।
तस्य दर्शनमात्रेण पुनाति भुवनत्रयम् ॥ १
ब्रह्मा विष्णुश्च धर्म्मश्च शेषस्त्वञ्च गणेश्वरः ।
ध्यायं ध्यायं यत्पदाब्जं तेजसा तत्समो महान् ॥ १२४
यश्च यं सततं ध्यायेत् स तमाप्नोति निश्चितम् ।
गुणेन तेजसा बुद्ध्या ज्ञानेन तत्समो भवेत् ॥ १२५
कृष्णस्य स्मरणाद्ध्यानात् तपसा तस्य सेवया ।
प्राप्तस्त्वत्सदृशः स्वामी तादृशो हि विलक्षणः ॥१२६
मया प्राप्तो हि गुणवान् स्वामी वा पुत्र एव च ।
स लब्धो लीलया सर्व्वः पूर्णं तन्मानसं मुदा ॥१२७
स्वामी त्वत्सदृशः पुत्त्रौ कार्त्तिकेयगणेश्वरौ ।
पिता हिमाद्रिः कृष्णांशो मम किं दुर्लभं प्रभो ॥१२८
र्त्तुः पुत्त्रस्य तातस्य गर्व्वं कुर्व्वन्ति योषितः ।
अतियोग्यास्त्रयो यासां तासां किं दुर्लभं कुतः ॥१२९
पार्व्वतीवचनं श्रुत्वा सुप्रीतः शङ्करः स्वयम् ।
प्रहस्योवाच मधुरं पुलकाञ्चितविग्रहः ॥ १३०

शङ्कर उवाच ।

महालक्ष्मीस्वरूपासि किमसाध्यं तवेश्वरि ।
सर्व्वसम्पत्स्वरूपा त्वमनन्तशक्तिरूपिणी ॥ १३१
त्वञ्च यस्य गृहे देवि स सर्व्वैश्वर्य्यभाजनम् ।
न लक्ष्मीर्यद्गृहे तस्य जीवनान्मरणं वरम् ॥ १३२
अहं ब्रह्मा च विष्णुश्च त्वया शक्त्या शुभप्रदे ।
संहारसृष्टिरक्षाणां त्वत्प्रसादाद्वयं क्षमाः ॥ १३३
को वा हिमालयः कोऽहं कौ कार्त्तिकगणेश्वरौ ।
त्वद्विहीना अशक्ताश्च त्वया च वयमीश्वराः ॥ १३४
युक्ता पतिव्रतायाश्च भर्त्तुराज्ञा श्रुतौ श्रुता ।
गृहीत्वाज्ञामीश्वरस्य व्रतं कुरु पतिव्रते ।
व्रतमेतत् कृतं याभिस्ताभ्यः कुरु विलक्षणम् ॥१३५
सनत्कुमारो भगवान् व्रते तेऽस्तु पुरोहितः ।
कमलानां ब्राह्मणानां द्रव्याणां दायकोऽप्यहम्॥ १३६
कुबेरं द्रव्यकोषे च रक्षकं कुरु सुन्दरि ।
व्रते च दानाध्यक्षोऽहं धनदात्री च श्रीः स्वयम्१३७
पाचको वह्निदेवश्च वरुणो जलदायकः ।
वस्तूनां वाहका यक्षास्तदध्यक्षः षड़ाननः ॥ १३८
स्नानसंस्कारकर्त्ता च व्रतेऽत्र पवनः स्वयम् ।
परिवेष्टा स्वयं शक्रश्चन्द्रोऽधिष्ठायको व्रते ॥ १३९
सूर्य्यश्च दातुं निर्व्वक्ता योग्यायोग्ये यथोचितम्॥१४०
व्रतोपयुक्तं यद्द्रव्यं दत्त्वा नियमितं प्रिये ।
ततोऽधिकं फलं पुष्पं हरये देहि सुन्दरि ॥ १४१
व्रते नियमितान् विप्रान् भोजयित्वा ततोऽधिकान् ।
असङ्ख्यान्ब्राह्मणान्देविभक्त्या कुरु निमन्त्रणम्१४२
समाप्तिदिवसे स्वर्णं देयं रत्नप्रवालकम् ।
व्रतोक्तां दक्षिणां दत्त्वा सर्व्वं देहि द्विजातये ॥१
इत्युक्त्वा शङ्करस्ताञ्च कारयामास तद्व्रतम् ।
व्रतं चकार सा दुर्गा सर्व्वाभ्यश्च विलक्षणम् १४४
इत्येवं कथितं विप्र पार्व्वत्या यद्व्रतं कृतम् ।
रत्नं वोढुमशक्ताश्च ब्राह्मणाः पार्व्वतीव्रते ॥ १४५
इतिहासः श्रुतः सर्व्वः प्रकृतं शृणु नारद ।
श्रीकृष्णबालचरितं नूतं नूतं पदे पदे ॥ १४६
हत्वा तान् दानवेन्द्रांश्च शिशुभिर्गोकुलैः सह ।
जगाम स्वगृहं कृष्णः कुबेरभवनोपमम् ॥ १४७
सर्व्वेभ्यो वनवार्त्तां च प्रदत्ता शिशुभिर्मुदा ।
श्रुत्वैवं विस्मिताः सर्व्वे नन्दो भयमवाप ह ॥ १४८

आनीय वृद्धान् गोपांश्च स्थविरा गोपिकास्तथा।
युक्तिं चकार तैः सार्द्धमालोच्य समयोचिताम्॥ १४९
कृत्वा युक्तिञ्च गोपेशस्तत् स्थानं त्यक्तुमुद्यतः।
गन्तुं वृन्दावनं गोपैः शकटं रचितं तदा॥ १५०
नन्दाज्ञाञ्च समाकर्ण्य ते सर्व्वे गन्तुमुद्यताः।
गोपाश्च गोपिकाश्चैव बालका बालिकास्तदा॥ १५१
कृष्णेन हलिना सार्द्धं प्रययुस्तद्वनं मुदा।
कृष्णगुणञ्च गायन्तो नानावेशसमन्विताः॥ १५२
वेणुप्रवादकाः केचित् केचिच्छृङ्गप्रवादिनः।
करतालकराः केचिद्वीणाहस्ताश्च केचन॥ १५३
स्वरयन्त्रकराः केचिच्छृङ्गहस्ताश्च केचन।
नवपल्लवकर्णाश्च केचिद्गोपालबालकाः॥ १५४
केचिन्मुकुलकर्णाश्च पुष्पकर्णाश्च केचन।
केचित् पल्लवचूड़ाश्च पुष्पचूड़ाश्च केचन॥ १५५
वनपुष्पमाल्यकराः केचिदाजानुमालिनः।
गोपालबालकाः सर्व्वे विप्रेन्द्र नवकोटयः॥ १५६
जग्मुर्गोप्यो वयःस्थाश्च कोटिशः कोटिशो मुदा।
वृद्धाश्च कोटिशस्तत्र वृद्धक्रोश्यश्चलत्कुचाः॥ १५७
राधिकासहचारिण्यो बाला गोपालिका मुने।
ताः सुशीलादयो भव्या नानालङ्कारभूषिताः।
दिव्यवस्त्रपरीधानाः सस्मितास्ता ययुर्मुदा॥ १५८
काश्चिच्छिविकामारुह्य रथमारुह्य काश्चन।
राधा स्यन्दनमारुह्य शातकुम्भपरिच्छदम्॥१५९
नन्दः सुनन्दः श्रीदामा गिरिभानुर्विभाकरः।
वीरभानश्चन्द्रभानो गजस्थाः प्रययुर्मुदा॥ १६०
ताभिर्युक्ता ययौ देवी रत्नालङ्कारभूषिता।
यशोदा रोहिणी चैव नानालङ्कारभूषिता॥ १६१
श्रीकृष्णबलदेवौ तौ रत्नालङ्कारभूषितौ।
स्वर्णस्यन्दनमास्थाय जग्मतुः परया मुदा॥ १६२
कोटिशः कोटिशो गोपा वृद्धाश्च यौवनान्विताः।
अश्वस्थाश्च गजस्थाश्च रथस्थाश्चैव केचन॥ १६३
गोपा ययुर्मुदा युक्ताश्चोद्धता नन्दकिङ्कराः।
वृषस्था गर्द्दभस्थाश्च सङ्गीततालतत्पराः॥ १६४
अपरा राधिकादास्यस्त्रिंशच्छतकोटयः।
मुदान्विताः सस्मिताश्च स्वर्णालङ्कारभूषिताः॥१६५
काश्चित् सिन्दूरहस्ताश्च काश्चित् कज्जलवाहिकाः।
वह्निशुद्धांशुकानाञ्च वाहिकाश्चैव काश्चन॥ १६६
चन्दनागुरुकस्तूरी-कुङ्कुम-द्रववाहिकाः।
स्वर्णपात्रकराः काश्चित् काश्चिद्दर्पणवाहिकाः॥१६७
श्वेतचामरहस्ताश्च काश्चित् ताम्बूलवाहिकाः।
काश्चिद्रैण्डूकहस्ताश्च काश्चित् पुत्तलिकाकराः॥१६८
भोगद्रव्यकराः काश्चित् क्रीड़ाद्रव्यकरा वराः।
वेशद्रव्यकराः काश्चित् काश्चिन्मालाकरा वराः॥१६९
काश्चिद्‌यावकहस्ताश्च प्रययुर्गोपिका मुदा।
काश्चित् सङ्गीतनिरताः काश्चिच्चित्रकरान्विताः॥१७०
कोटिशः कोटिशो रम्याः प्रययुः शिबिकां मुने।
कोटिशः कोटिशश्चाश्वाः कोटिशः कोटिशोरथाः१७१
कोटिशः कोटिशश्चैव शकटा द्रव्यपूरिताः।
कोटिशः कोटिशश्चैव वृषेन्द्रा द्रव्यवाहकाः॥१७२
कोटिशोष्ट्राश्चवयसां दशलक्षाणि हस्तिनाम्।
कुथाङ्कुशप्रयुक्तानि ययुर्वृन्दावनं वनम्॥ १७३
सर्व्वे वृन्दावनं गत्वा दृष्ट्वा शून्यं गृहं मुने।
वृक्षमूले यथास्थाने तस्थुस्तस्थुर्यथोचिते॥ १७४
उवाच गोपान् श्रीकृष्णो गृहांश्चेष्टतमा व्रजाः।
अद्य सन्तिष्ठतेत्येवं निबोधत वचो मम॥ १७५

श्रीकृष्ण उवाच।

अत्र स्थाने गृहाः सन्ति प्रच्छन्ना देवनिर्म्मिताः।
देवप्रीतिं विना शक्ता न हि द्रष्टुञ्च केचन॥ १७६
अद्य तिष्ठत गोपालाः सम्पूज्य वनदेवताम्।
प्रातर्यूयं गृहान् रम्यान् द्रक्ष्यथात्र ध्रुवं मुदा॥ १७७
धूपदीपैश्च नैवेद्यैर्वस्त्रैभिः पुष्पचन्दनैः।
देवीञ्च वटमूलस्थां पूजां कुरुत चण्डिकाम्॥ १७८
कृष्णस्य वचनं श्रुत्वा गोपाः सम्पूज्य देवताम्।
भुक्त्वा भोगं दिने रात्रौ तत्रैव सुषुपुर्मुदा॥ १७९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे वक-केशि-
प्रलम्बवध-वृन्दावनगमनप्रस्तावः
षोड़शोऽध्यायः॥ १६॥

## सप्तदशोऽध्यायः।

नारायण उवाच।

सुप्तेषु व्रजवृन्देषु नक्तं वृन्दावने वने।
सुनिद्रिते च निद्रेशे मातृवक्षःस्थलस्थिते॥ १

निद्रितासु च गोपीषु रम्यतल्पस्थितासु च।
यूनीषु सुखसम्भोगो-न्मत्तमानहृतासु च ॥ २
कासुचित् शिशुयुक्तासु कासुचिद्भर्त्तृसन्निधौ।
कासुचिच्छकटस्थासु कासुचित् स्यन्दनेषु च ॥ ३
पूर्णेन्दुकौमुदीयुक्ते स्वर्गादपि मनोहरे।
नानाप्रकारकुसुम-वायुना सुरभीकृते ॥ ४
सर्व्वप्राणिनि निश्चेष्टे मुहूर्त्ते पञ्चमे गते।
तत्राजगाम भवने शिल्पिनाञ्च गुरोर्गुरुः ॥ ५
बिभ्रद्वह्निदिव्यांशुकं सूक्ष्मं रत्नमालां मनोहराम्।
रत्नालङ्कारमतुलं श्रीमन्मकरकुण्डलम् ॥ ६
ध्यानेन वयसा वृद्धो दर्शनीयः किशोरवत्।
अतीवसुन्दरः श्रीमान् कामदेवसमप्रभः ॥ ७
विशिष्टशिल्पनिपुणैः सार्द्धं शिल्पैस्त्रिकोटिभिः।
मणिसारहेमरत्नैर्लौहास्त्रन्यस्तहस्तकैः ॥ ८
आजग्मुर्यक्षनिकराः कुवेरवरकिङ्कराः।
शैलजप्रस्तरकरा अञ्जनाकारमूर्त्तयः ॥ ९
विकृताकारवदनाः पिङ्गलाक्षा महोदराः।
स्फाटिकारक्तवेशाश्च दीर्घस्कन्धाश्च केचन ॥ १०
पद्मरागकराः केचि-दिन्द्रनीलकरा वराः।
केचित् स्यमन्तककरा-श्चन्द्रकान्तकरास्तथा ॥ ११
सूर्य्यकान्तकराश्चान्ये प्रभाकरकरा वराः।
केचित् परशुहस्ताश्च लौहसारकरा वराः ॥ १२
केचिच्च गन्धसाराणां मणीन्द्राणाञ्च हारकाः।
केचिच्चामरहस्ताश्च केचिद्दर्पणवाहकाः।
खणपात्रघटादीनां वाहकाश्चैव केचन ॥ १३
विश्वकर्म्मा च सामग्रीं दृष्ट्वातिसुमनोहराम्।
नगरं कर्त्तुमारेभे ध्यात्वा कृष्णं शुभक्षणे ॥ १४
पञ्चयोजनपर्य्यन्तं भारते श्रेष्ठमुत्तमम्।
पुण्यक्षेत्रं तीर्थसार-मतिप्रियतमं हरेः ॥ १५
तत्र स्थानं मुमुक्षूणां परं निर्व्वाणकारणम्।
गोलोकस्य च सोपानं सर्व्वेषां वाञ्छितं पदम् ॥१६
चतुष्कोटिचतुःशालं तत्रैवातिमनोहरम्।
कवाटस्तम्भसोपान-खचितं प्रस्तरैर्वरैः ॥ १७
चित्रपुत्तलिकापुष्प-कज्जलोज्ज्वलशेखरम्।
शैलजास्त्रविनिर्म्माण-वेदीप्राङ्गणसंयुतम् ॥ १८
शिलाप्राकारसंयुक्तं प्रचकारावलीलया।
यथोचितबृहत्क्षुद्र-द्वारद्वयसमन्वितम् ॥ १९
ततः कोटिचतुःशाल-मतीवसुमनोहरम्।
स्फाटिकाकारमणिभि-र्मुदा युक्तो विनिर्म्ममे ॥ २०
सोपानैर्गन्धसाराणां स्तम्भैः शङ्कुविनिर्म्मितैः।
कवाटैर्लौहसाराणां राजतैः कलसोज्ज्वलैः।
वज्रसारविनिर्म्माणैः प्राकारैः परिशोभितैः ॥ २१
कृत्वाश्रमं वल्लवानां यथास्थाने यथोचितम्।
वृषभानुगृहं रम्यं कर्त्तुमारब्धवान् पुनः ॥ २२
प्राकारपरिखायुक्तं चतुर्द्वारान्वितं परम्।
चारु विंशच्चतुःशालं महामणिविनिर्म्मितम् ॥ २३
व्यक्तभातुविकारैश्च स्थूणिकानिकरैर्वरैः।
सुवर्णाकारमणिभि-रारोहैरतिसुन्दरम् ॥ २४
लौहसारकवाटैश्च संयुक्तं चित्रकृत्रिमैः।
मन्दिरे मन्दिरे रम्ये सुवर्णकलसोज्ज्वलम् ॥ २५
तद्वाश्रमैकदेशे च निर्ज्जनेऽतिमनोरमे।
चारुचम्पकवृक्षाणा-मुद्यानाभ्यन्तरं मुने ॥ २६
सम्भोगार्थं कलावत्याः स्वामिना सह कौतुकात्।
विशिष्टेन मणीन्द्रेण चकाराट्टालिकालयम् ॥ २७
युक्तं नवभिरारोहै-रिन्द्रनीलविनिर्म्मितैः।
स्थूणाकवाटनिकरै-र्गन्धसारविकारजैः।
अत्युन्नतमनोरम्यं सर्व्वतोऽपि विलक्षणम् ॥ २८

नारद उवाच।

कलावती का भगवन् कस्य पत्नी मनोरमा।
यत्नतो यद्गृहं रम्यं निर्म्ममे सुरकारुणा ॥ २९

नारायण उवाच।

पितॄणां मानसी कन्या कमलांशा कलावती।
यस्याश्च तनया राधा कृष्णप्राणाधिका प्रिया।
श्रीकृष्णार्द्धांशसम्भूता तेन तुल्या च तेजसा ॥ ३०
यस्याश्च चरणाम्भोज-रजःपूता वसुन्धरा।
यस्याश्च सुदृढां भक्तिं सन्तो वाञ्छन्ति सन्ततम् ॥३१

नारद उवाच।

पितॄणां मानसीं कन्यां व्रजे तिष्ठन् व्रजो मुने।
मानवः केन पुण्येन कथमाप सुदुर्लभाम् ॥ ३२
वृषभानुर्व्रजपतिः पुरासीत् को महामनाः।
तस्य वा केन तपसा राधा कन्या बभूव ह ॥ ३३

सूत उवाच।

नारदस्य वचः श्रुत्वा महर्षिर्ज्ञानिनां वरः।
प्रहस्योवाच प्रीत्या तमितिहासं पुरातनम् ॥ ३४

नारायण उवाच ।

बभूवुः कन्यकास्तिस्रः पितॄणां मानसात् पुरा ।
कलावती रत्नमाला मेनकाश्चातिदुर्लभाः ॥ ३५
रत्नमाला च जनकं वरयामास कामुकी ।
शैलाधिपं हरेरंशं मेनका सा हिमालयम् ॥ ३६
दुहिता रत्नमालाया अयोनिसम्भवा सती ।
श्रीरामपत्नी श्रीः साक्षात् सीता सत्यपरायणा ॥३७
कन्यका मेनकायाश्च पार्व्वती सा पुरा सती ।
अयोनिसम्भवा सा च हरेर्माया सनातनी ॥ ३८
सा लेभे तपसा देवी शिवं नारायणात्मकम् ।
कलावती सुचन्द्रञ्च मनुवंशसमुद्भवम् ॥ ३९
स च राजा हरेरंशः सम्प्राप्य तां कलावतीम् ।
मेने पुण्यवतां श्रेष्ठ-मात्मानमतिसुन्दरीम् ॥ ४०
अहोरूपमहोवेश-महो अस्या नवं वयः ।
सुकोमलाङ्गं ललितं शरच्चन्द्राधिकाननम् ॥ ४१
गमनं दुर्लभमहो गजखञ्जनगञ्जनम् ।
कटाक्षैर्मोहितुं शक्ता मुनीन्द्राणाञ्च मानसम् ॥ ४२
श्रोणियुग्मं सुललितं रम्भास्तम्भविनिन्दितम् ।
स्तनद्वन्द्वं सुकठिन-मतिपीनोन्नतं मुने ॥ ४३
नितम्बयुगलं चारु रथचक्रविनिन्दितम् ।
हस्तौ पादौ च रक्तौ च पक्वविम्बफलाधरम् ॥ ४४
पक्वदाड़िम्बवीजाभ-दन्तपङ्क्तिमनोहरम् ।
शरन्मध्याह्नपद्मानां प्रभामोचनलोचनम् ॥ ४५
भूषणैर्भूषितं रूपं रूपं सद्रत्नभूषणम् ।
इतीव मत्वा दृष्ट्वा च कामवाणप्रपीड़ितः ॥ ४६
दिव्यस्यन्दनमारुह्य कान्तया सह कामुकः ।
क्रीड़ां चकार रहसि स्थाने स्थाने मनोहरे ॥ ४७
रम्यायां मलयद्रोण्यां चन्दनागुरुवायुना ।
चारुचम्पकपुष्पाणां तल्पे रतिसुखावहे ॥ ४८
मालतीमल्लिकानाञ्च पुष्पोद्याने सुपुष्पिते ।
पुष्पभद्रानदीतीरे नीरजेऽतिसुनिर्जने ॥ ४९
तत्र गङ्गासुपुलिने गन्धमादनगह्वरे ।
गोदावरीनदीतीरे निर्जने केतकीवने ॥ ५०
पश्चिमाब्धितटान्तस्थकानने जन्तुवर्ज्जिते ।
नन्दने मलयद्रोण्यां कावेरीतीरजे वने ॥ ५१
शैले शैले सुरम्ये च नद्यां नद्यां नदे नदे ।
द्वीपे द्वीपे च रहसि स रेमे रामया सह ॥ ५२
नवसङ्गमसंयोगाद्बुबुधे न दिवानिशम् ।
एवं वर्षसहस्रं तद्गतमेव मुहूर्त्तवत् ॥ ५३
कृत्वा विहारं सुचिरं स विरक्तो बभूव ह ।
जगाम तपसे विन्ध्य-शैलतीर्थं तया सह ॥ ५४
भारतेऽतिप्रशंस्यञ्च पुलहाश्रममुत्तमम् ।
तपस्तेपे नृपस्तत्र दिव्यवर्षसहस्रकम् ॥ ५५
मोक्षाकाङ्क्षी निःस्पृहश्च निराहारः कृशोदरः ।
मूर्च्छामापन्मुनिश्रेष्ठो ध्यात्वा कृष्णपदाम्बुजम् ॥५६
तत्रात्रे व्याप्तवल्मीकं साध्वी दूरं चकार सा ॥ ५७
निश्चेष्टितं पतिं दृष्ट्वा त्यक्तं प्राणैश्च पञ्चभिः ।
मांसशोणितरिक्तं तमस्थिसंसक्तविग्रहम् ॥ ५८
उच्चैरुरोद शोकार्त्ता निर्ज्जनेऽतिकलावती ।
हे नाथ नाथेत्युच्चार्य्य कृत्वा वक्षसि मूर्च्छितम् ॥ ५९
विललाप महाभीता दीना पतिपरायणा ।
दृष्ट्वा नृपं निराहारं कृशं धमनिसंयुतम् ॥ ६०
श्रुत्वा च रोदनं तस्याः कृपया च कृपानिधिः ।
आविर्ब्बभूव जगतां विधाता कमलोद्भवः ॥ ६१
क्रोड़े कृत्वा च तं तूर्णं रुरोद भगवान् विभुः ॥ ६२
ब्रह्मा कमण्डलुजले-नासिच्य नृपविग्रहम् ।
जीवं सञ्चारयामास ब्रह्मज्ञानेन ब्रह्मवित् ॥ ६३
नृपेन्द्रश्चेतनां प्राप्य पुरो दृष्ट्वा प्रजापतिम् ।
प्रणनाम च तं दृष्ट्वा तत्र कामसमप्रभः ॥ ६४
तमुवाचेति सन्तुष्टो वरं वृणु यथेप्सितम् ।
स विधेर्वचनं श्रुत्वा वव्रे निर्व्वाणमीप्सितम् ॥ ६५
दयानिधिस्तं दयया वरं दातुं समुद्यतः ।
प्रसन्नवदनः श्रीमान् स्मेराननसरोरुहः ॥ ६६
कृत्वानुमानं मनसि शुष्ककण्ठौष्ठतालुका ।
तमुवाच सती त्रस्ता वरं दातुं समुद्यतम् ॥ ६७

कलावत्युवाच ।

यदि युक्तं नृपेन्द्राय ददासि कमलोद्भव ।
अहोऽबलाया मे ब्रह्मन् का गतिर्भविता वद ॥ ६८
विना कान्तेन कान्तायाः का शोभा चतुरानन ।
व्रतं पतिव्रतायाश्च पतिरेव श्रुतौ श्रुतम् ॥ ६९
गुरुश्चाभीष्टदेवश्च तपोधर्म्ममयः पतिः ।
सर्व्वेषाञ्च प्रियतमो न बन्धुः स्वामिनः परः ॥ ७०
सर्व्वधर्म्मात् परो ब्रह्मन् पतिसेवा सुदुर्लभा ।
स्वामिसेवाविहीनायाः सर्व्वं तन्निष्फलं भवेत् ॥ ७१

व्रतं दानं तपः पूजा जपहोमादिकञ्च यत् ।
स्नानञ्च सर्व्वतीर्थेषु पृथिव्याश्च प्रदक्षिणम् ॥ ७२
दीक्षा च सर्व्वयज्ञेषु महादानानि यानि च ।
पठनं सर्व्ववेदानां सर्व्वाणि च तपांसि च ॥ ७३
वेदज्ञानं ब्राह्मणानां भोजनं देवसेवनम् ।
एतानि स्वामिसेवायाः कलां नार्हन्ति षोड़शीम् ॥ ७४
स्वामिसेवाविहीना या वदन्ति स्वामिने कटुम् ।
पचन्ति कालसूत्रे ता यावच्चन्द्रदिवाकरौ ॥ ७५
सर्पप्रमाणाः कृमयो दंशन्ति च दिवानिशम् ।
सन्ततं विपरीतञ्च कुर्व्वन्ति शब्दमुल्वणम् ॥ ७६
मूत्रश्लेष्मपुरीषञ्च कुर्व्वन्ति भक्षणं सदा ।
मुखे तासां ददत्येवमुल्काञ्च यमकिङ्कराः ॥ ७७
भुक्त्वा भोगञ्च नरके कृमियोनिं प्रयान्ति ताः ।
भक्षन्ति जन्मशतकं रक्तमांसपुरीषकम् ॥ ७८
श्रुत्वाहं विदुषां वक्त्राद्वेदवाक्यं सुनिश्चितम् ।
जानामि किञ्चिद्वत्स त्वं वेदजनको विभुः ॥ ७९
गुरोर्गुरुश्च विदुषां योगिनां ज्ञानिनां तथा ।
सर्व्वज्ञमेवम्भूतं त्वां बोधयामि किमच्युत ॥ ८०
प्राणाधिकोऽयं कान्तो मे यदि मुक्तो बभूव ह ।
मम को रक्षिता ब्रह्मन् धर्म्मस्य यौवनस्य च ॥ ८१
कौमारे रक्षिता तातो दत्त्वा पात्राय सत्कृतौ ।
सर्व्वदा रक्षिता कान्तस्तदभावे च तत्सुतः ॥ ८२
त्रिष्ववस्थासु नारीणां रक्षितारस्त्रयः सदा ।
याः स्वतन्त्राश्च ता नष्टाः सर्व्वधर्म्मबहिष्कृताः ॥ ८३
असत्कुलप्रसूतास्ताः कुलटा दुष्टमानसाः ।
शतजन्मकृतं पुण्यं तासां नश्यति पद्मज ॥ ८४
पुत्रस्नेहो यथा बाल्ये तथा यौवनवार्द्धके ।
पतिव्रतानां कान्ते च सर्व्वकाले समस्पृहा ॥ ८५
सुते स्तनान्धे यः स्नेहो याकाङ्क्षान्वेति शोभिते ।
पतिस्नेहस्य साध्वीनां कलां नार्हन्ति षोड़शीम् ॥ ८६
स्तनान्धे स्तनदानान्तं मिष्टान्ने भोजनावधि ।
कान्ते चित्तं सतीनाञ्च स्वप्ने ज्ञाने च सन्ततम् ॥ ८७
दुःखार्त्तो बन्धुविच्छेदः पुत्राणाञ्च ततोऽधिकः ।
सुदारुणः स्वामिनश्च दुःखं नातः परं स्त्रियाः ॥ ८८
अविदग्धा यथा दग्धा ज्वलदग्नौ विषादने ।
तथा विदग्धा दग्धा स्याद्विदग्धविरहानले ॥ ८९
नान्ने तृष्णा जले तृष्णा साध्वीनां स्वामिना विना ।
विरहाग्नौ मनो दग्धं वह्नौ शुष्कतृणं यथा ॥ ९०
न हि कान्तात् परो बन्धुर्न हि कान्तात् परः प्रियः ।
न हि कान्तात् परो देवो न हि कान्तात्परो गुरुः ॥ ९१
न हि कान्तात् परो धर्म्मो न हि कान्तात् परं धनम् ।
नहि कान्तात्परः प्राणा न कः कान्तात्परः स्त्रियाः ॥ ९२
निमग्नं कृष्णपादाब्जे वैष्णवानां यथा मनः ।
यथैकपुत्रे मातुश्च यथा स्त्रीषु च कामिनाम् ॥ ९३
धनेषु कृपणानाञ्च चिरकालार्ज्जितेषु च ।
यथा भयेषु भीतानां शास्त्रेषु विदुषां यथा ॥ ९४
स्तनान्धानां यथाम्बासु शिल्पेषु शिल्पिनां यथा ।
यथा जारे पुंश्चलीनां साध्वीनाञ्च तथा प्रिये ॥ ९५
मरणं जीवनं तासां जीवनं मरणाधिकम् ।
सद्भर्त्तृरहितानाञ्च शोकेन हतचेतसाम् ॥ ९६
शोकं निमग्नमन्येषां कालेन पानभोजनात् ।
विपरीतः कान्तशोको वर्द्धते भक्षणादहो ॥ ९७
कर्म्मच्छाया सतीनाञ्च सङ्गिनीनां सती वरा ।
इतरे भोगदेहान्ते साध्वी जन्मनि जन्मनि ॥ ९८
करोषि चेज्जगद्धातरिमं मुक्तं मया विना ।
त्वां शप्स्याहं त्वयि विभो पश्य दास्यामि स्त्रीवधम् ॥ ९९
श्रुत्वा कलावतीवाक्यमुवाच विस्मितो विधिः ।
हितं पीयूषसदृशं भयसंविग्नमानसः ॥ १००

ब्रह्मोवाच ।

वत्स मुक्तिं न दास्यामि स्वामिने ते त्वया विना ।
मुक्तं कर्त्तुं त्वया सार्द्धं साम्प्रतं नाहमीश्वरः ॥ १०१
मातर्मुक्तिर्विना भोगाद्दुर्लभा सर्व्वसम्मता ।
निर्व्वाणतां समाप्नोति भोगी भोगनिकृन्तने ॥ १०२
कतिवर्षं स्वगभोगं कुरुष्व स्वामिना सह ।
ततस्तु युवयोर्जन्म भारते भविता सति ॥ १०३
यदा भविष्यति सति कन्या ते राधिका स्वयम् ।
जीवन्मुक्तौ तया सार्द्धं गोलोकञ्च गमिष्यथः ॥ १०४
कतिकालं नृपश्रेष्ठ भुङ्क्ष्व भोगं स्त्रिया सह ।
साधवः सत्त्वयुक्ताश्च मा मां शप्तं त्वमर्हसि ॥ १०५
जीवन्मुक्ताः समाः सन्तः कृष्णपादाब्जमानसाः ।
वाञ्छन्ति हरिदास्यञ्च दुर्लभं न च निर्वृतम् ॥ १०६
इत्युक्त्वा तौ वरं दत्त्वा सन्तस्थौ पुरतस्तयोः ।
ययतुस्तौ तं प्रणम्य जगाम स्वालयं विधिः ॥ १०७
आजग्मतुस्तौ कालेन भुक्त्वा भोगञ्च भारते ।

पदं पुण्यप्रदं दिव्यं ब्रह्मादीनाञ्च वाञ्छितम् ॥ १०८
सुचन्द्रो वृषभानुश्च ललाभ जन्म गोकुले।
पद्मावत्याश्च जठरे सुरभानस्य तेजसा ॥ १०९
जातिस्मरो हरेरंशः शुक्लपक्षे यथा शशी।
ववर्द्धानुदिनं तत्र व्रजगेहे व्रजाधिपः ॥ ११०
सर्व्वज्ञश्च महायोगी हरिपादाब्जमानसः।
नन्दबन्धुर्वदान्यश्च रूपवान् गुणवान् सुधीः ॥ १११
कलावती कान्यकुब्जे बभूवायोनिसम्भवा।
जातिस्मरा महासाध्वी सुन्दरी कमलाकला ॥ ११२
कान्यकुब्जे नृपश्रेष्ठो भलन्दन उरुक्रमः।
स तां सम्प्राप योगान्ते यज्ञकुण्डसमुत्थिताम् ॥ ११३
नग्नां हसन्तीं रूपाढ्यां स्तनान्धामिव बालिकाम्।
तेजसा प्रज्वलन्तीञ्च प्रतप्तकाञ्चनप्रभाम् ॥ ११४
कृत्वा वक्षसि राजेन्द्रः स्वकान्तायै ददौ मुदा।
मालावती स्तनं दत्त्वा तां पुपोष प्रहर्षिता ॥ ११५
तदन्नप्राशनदिने सतां मध्ये शुभक्षणे।
नामरक्षणकाले च वाग्बभूवाशरीरिणी।
कलावतीति कन्याया नाम रक्ष नृपेति च ॥ ११६
इत्येवं वचनं श्रुत्वा तच्चकार महीपतिः।
विप्रेभ्यो भिक्षुकेभ्यश्च वन्दिभ्यश्च धनं ददौ ॥ ११७
सर्व्वेभ्यो भोजयामास चकार सुमहोत्सवम्।
सा कालेन रूपवती यौवनस्था बभूव ह ॥ ११८
अतीवसुन्दरी रम्या मुनिमानसमोहिनी।
चारुचम्पकवर्णाभा शरच्चन्द्रनिभानना ॥ ११९
ईषद्धास्यप्रसन्नास्या प्रफुल्लपद्मलोचना।
नितम्बश्रोणिभारार्त्ता स्तनभारनता सती ॥ १२०
दिव्यवस्त्रपरीधाना रत्नालङ्कारभूषिता।
गच्छन्ती राजमार्गे च गजेन्द्रमन्दगामिनी ॥ १२१
ददर्श नन्दः पथि तां गच्छन्तीं तीर्थं मुदान्वितः।
जितेन्द्रियश्च ज्ञानी च मूर्च्छामाप तथापि च ॥ १२२
त्रस्तो लोकान् पथि गतान् तूर्णं पप्रच्छ सादरम्।
गच्छन्ती कस्य कन्येयमितिहोवाच तं जनम् ॥ १२३
भलनन्दस्य नृपतेः कन्या नाम्ना कलावती।
कमलाकलया धन्या सम्भूता नृपमन्दिरे ॥ १२४
कौतुकेन च गच्छन्ती क्रीडार्थं सखिमन्दिरम्।
व्रज व्रजे व्रजश्रेष्ठेत्युक्त्वा लोको जगाम ह ॥ १२५
प्रहृष्टमानसो नन्दो जगाम राजमन्दिरम्।
अवरुह्य रथात् तूर्णं विवेश नृपतेः सभाम् ॥ १२६
उत्थाय राजा सम्भाष्य स्वर्णसिंहासनं ददौ ॥ १२७
इष्टालापं बहुविधं चकार च परस्परम्।
विनयावनतो नन्दः सम्बन्धोक्तिं चकार ह ॥ १२८

नन्द उवाच।

शृणु राजन् प्रवक्ष्यामि विशेषं वचनं शुभम्।
सम्बन्धं कुरु कन्याया विशिष्टेन च साम्प्रतम् ॥ १२९
सुरभानसुतः श्रीमान् वृषभानो व्रजाधिपः।
नारायणांशो गुणवान् सुन्दरश्च सुपण्डितः ॥ १३०
स्थिरयौवनयुक्तश्च योगी जातिस्मरो युवा।
कन्या तेऽयोनिसम्भूता यज्ञकुण्डसमुद्भवा ॥ १३१
त्रैलोक्यमोहिनी शान्ता कमलांशा कलावती।
स च योग्यस्त्वद्दुहितुस्तद्योग्या ते च कन्यका।
विदग्धाया विदग्धेन सम्बन्धो गुणवान् नृप ॥ १३२
इत्येवमुक्त्वा नन्दस्तु विरराम च संसदि।
उवाच तं नृपश्रेष्ठो विनयावनतो मुने ॥ १३३

भलन्दन उवाच।

सम्बन्धो हि विधिवशो न मे साध्यो व्रजाधिप।
प्रजापतिर्योगकर्त्ता जन्मदाताहमेव च ॥ १३४
का कस्य पत्नी कन्या वा वरः को वात्मसाधनः।
धर्म्मानुरूपफलदः सर्व्वेषां कारणं विधिः ॥ १३५
भवितव्यं कृतं कर्म्म तदमोघं श्रुतौ श्रुतम्।
अन्यथा निष्फलं सर्व्वमनीशस्योद्यमो यथा ॥ १३६
वृषभानप्रिया धात्रा लिखिता चेत् सुता मम।
पुरा भूतेव को वाहं केनान्येन निवार्य्यते ॥ १३७
इत्येवमुक्त्वा राजेन्द्रो विनयानतकन्धरः।
मिष्टान्नं भोजयामास सादरेण च नारद ॥ १३८
नृपानुज्ञामुपादाय व्रजश्रेष्ठो व्रजं गतः।
गत्वा स कथयामास सुरभानस्य संसदि ॥ १३९
सुरभानश्च यत्नेन नन्देन च ससादरम्।
सम्बन्धं योजयामास गर्गद्वारा च सत्वरम् ॥ १४०
विवाहकाले राजेन्द्रो विपुलं यौतुकं ददौ।
गजरत्नमश्वरत्नं रत्नादिमणिभूषणम् ॥ १४१
वृषभानुर्मुदा युक्तः प्राप्य ताञ्च कलावतीम्।
रेमे सुनिर्ज्जने रम्ये बुभुजे न दिवानिशम् ॥ १४२
चक्षुर्निमेषविरहादाकुला स्वामिना विना।
व्याकुलो वृषभानश्च क्षणेन च तया विना ॥ १४३

जातिस्मरा च सा कन्या मायामानुषरूपिणी।
जातिस्मरो हरेरंशो वृषभानो मुदान्वितः॥ १४४
ववर्द्ध च तयोः प्रेम नित्यं नित्यं नवं नवम्।
सदा सकामा सा प्रौढ़ा स च कामसमो युवा॥ १४५
तयोः कन्या च कालेन राधिका सा बभूव ह।
दैवात् श्रीदामशापेन श्रीकृष्णस्याज्ञया सती॥ १४६
अयोनिसम्भवा सा च कृष्णप्राणाधिका सती।
यस्य दर्शनमात्रेण तौ तु मुक्तौ बभूवतुः॥ १४७
इतिहासश्च कथितः प्रकृतं शृणु साम्प्रतम्।
पापेन्धनानां दाहे च ज्वलदग्निशिखोपमम्॥१४८
वृषभान्वाश्रमं कृत्वा शिल्पिनां प्रवरो मुदा।
स्थानान्तरं विश्वकर्म्मा जगाम स्वगणैः सह॥ १४९
क्रोशमात्रं स्थलं चारु मनसालोच्य तत्त्ववित्।
आश्रमं कर्त्तुमारेभे नन्दस्य सुमहात्मनः॥ १५०
तुलानुमानं बुद्ध्या च सर्व्वतोऽपि विलक्षणम्।
परिखाभिरगभीराभि-श्चतुर्भिः संयुतं वरम्॥ १५१
दुर्लङ्घ्याभिर्वैरिभिश्च खचिताभिश्च प्रस्तरैः।
पुष्पोद्यानैः पुष्पिताभिः पारावारेषु पुष्पितैः॥ १५२
चारुचम्पकवृक्षैश्च पुष्पितैः सुमनोहरैः।
परितो वासिताभिश्च सुगन्धिवायुना सह॥ १५३
आम्रैर्गुवाकैः पनसैः खर्ज्जूरैर्नारिकेलकैः।
दाड़िमैः श्रीफलैर्भृङ्गैर्जम्बीरैर्नागरङ्गकैः॥ १५४
तुङ्गैराम्रतकैर्जम्बू-सम्बूहैश्च फलान्वितैः।
कदलीनां केतकीनां कदम्बानां कदम्बकैः॥ १५५
सर्व्वतः शोभिताभिश्च फलिनैः पुष्पितैरहो।
क्रीड़ार्हाभिनिगूढ़ाभिर्वाञ्छिताभिश्च सर्व्वदा॥१५६
परिखाणां रहस्थाने चकार मार्गमुत्तमम्।
दुर्गमं परवर्गाणां स्वेषाञ्च सुगमं सदा॥ १५७
सङ्केतेन मणिस्तम्भैर्म्भ्छादितैः स्वल्पपायसा।
स्तम्भसीमाकृतमहो न सङ्कीर्णं न विस्तृतम्॥ १५८
परिखोपरिभागे च प्राकारं सुमनोहरम्।
धनुःशतप्रमाणञ्च चकारातिसमुच्छ्रितम्॥ १५९
प्रस्तरास्यप्रमाणञ्च पञ्चविंशतिहस्तकम्।
सिन्दूराकारमणिभि-र्निर्म्माणमतिसुन्दरम्॥ १६०
बाह्ये द्वाभ्याञ्च संयुक्त-मन्तरे सप्तभिस्तथा।
सर्व्वाभिः संनिसृष्टाभिर्मणिसारकपाटकैः॥ १६१
चतुर्विंशचतुःशालं पद्मरागैश्चकार ह।
गन्धसारविकारैश्च स्थूणिकानिकरैर्वरैः॥ १६२
कुङ्कुमाकारमणिभि-र्दारोहनिकरैर्युतम्।
इन्द्रनीलमणीनां कलसैश्चित्रयुक्तैर्विराजितम्॥ १६३
मणिसारविकारैश्च कपाटैश्चः सुशोभितम्।
स्वर्णसारविकारैश्च कलसोज्ज्वलशेखरम्॥ १६४
नन्दालयं विनिर्म्माय बभ्राम नगरं पुनः।
राजमार्गान् नवविधान् स च चारु चकार ह॥१६५
रत्नभानुविकारैश्च वेदिभिश्च सुपत्तनैः।
पारावारे च परितो निवद्धांश्च मनोहरान्॥ १६६
वाणिज्यार्हैश्च वणिजां परितो मणिमण्डपैः।
सर्व्वतो दक्षिणे वामे ज्वलद्भिश्च विराजितान्॥१६७
ततो वृन्दावनं गत्वा निर्म्ममे रासमण्डलम्।
सुन्दरं वर्त्तुलाकारं मणिप्राकारसंयुतम्॥ १६८
परितो योजनायामं मणिवेदिभिरन्वितम्।
मणिसारविकारैश्च मण्डपैर्नवकोटिभिः॥ १६९
शृङ्गारार्हैश्च चित्राढ्यै रतितल्पसमन्वितैः।
नानाजातिप्रसूनानां वायुना सुरभीकृतैः॥ १७०
रत्नप्रदीपसंयुक्तैः सुवर्णकलसोज्ज्वलैः।
पुष्पोद्यानैः पुष्पितैश्च सरोभिश्च सुशोभितम्॥ १७१
रासस्थानं विनिर्म्माय जगामान्यस्थलं पुनः।
दृष्ट्वा वृन्दावनं रम्यं परितुष्टो बभूव ह॥ १७२
वृन्दावनाभ्यन्तरे च स्थाने स्थाने सुनिर्ज्जने।
कृत्वा परिमितं बुद्ध्या मनसालोच्य यत्नतः॥ १७३
विलक्षणानि रम्याणि त्रयस्त्रिंशद्वनानि च।
राधामाधवयोरेव क्रीड़ार्थञ्च विनिर्म्ममे॥ १७४
ततो मधुवनाभ्यासे निर्ज्जनेऽतिमनोहरे।
वटमूलसमीपे च सरसः पश्चिमे तटे॥ १७५
चम्पकोद्यानपूर्व्वे च केतकीवनमध्यतः।
पुनस्तयोश्च क्रीड़ार्थं चकार रत्नमण्डपम्॥ १७६
स्वर्णमूल्यशतगुणै-र्दुर्लभैर्मणिभिर्मुदा।
चतुर्भिर्वेदिकाभिश्च परीतमतिसुन्दरम्॥ १७७
सद्रत्नसाररचितै राजितं स्थूणिकाशतैः।
अमूल्यरत्नरचितै-र्नानाचित्रेण चित्रितैः।
कपाटैर्नवभिर्युक्तं नवद्वारे मनोहरे॥ १७८
रत्नेन्द्रचित्रकलसैः कृत्रिमैश्च त्रिकोटिभिः।
परितः पुरतो भित्त्यामूर्द्ध्वञ्च परिशोभितम्॥ १७९
महामणीन्द्रविकृतै-र्दारोहैर्नवभिर्युतम्।

सद्रत्नसाररचित-कलसोज्ज्वलशेखरम् ॥ १८०
पताकातोरणैर्युक्तं शोभितं श्वेतचामरैः।
सर्व्वतः पुरतो दीप्त-ममूल्यरत्नदर्पणैः ॥ १८१
धनुःप्रमाणशतक-मूर्द्धमग्निशिखोपमम्।
शतहस्तप्रमाणञ्च प्रस्तारं वर्त्तुलाकृतम् ॥ १८२
शोभितं रत्नतल्पैश्च तदभ्यन्तरमुत्तमम्।
वह्निशुद्धांशुकैर्दिव्यै-र्मालाजालैर्विराजितम् ॥ १८३
पारिजातप्रसूनानां माल्योपाधानसंयुतैः।
चन्दनागुरुकस्तूरी-कुङ्कुमैः सुरभीकृतैः ॥ १८४
नवशृङ्गारयोग्यैश्च कामवर्द्धनकारिभिः।
मालतीचम्पकानाञ्च पुष्पराजिभिरन्वितैः ॥ १८५
सकर्पूरैश्च ताम्बूलैः सद्रत्नपात्रसंस्थितैः।
वज्रसारेण खचितै-र्मुक्ताजालविलम्बिभिः ॥ १८६
रत्नपात्रघटाकीर्णं रत्नाङ्घ्रिपीठसंयुतम्।
रत्नसिंहासनैर्युक्तं रत्नचित्रेण चित्रितैः ॥ १८७
हरितैश्चन्द्रकान्तैश्च सुषिक्तं जलबिन्दुभिः।
शीतवासिततोयेन संयुक्तं भोग्यवस्तुभिः ॥ १८८
दृष्ट्वा रतिगृहं रम्यं नगरञ्च पुनर्ययौ।
येषां यानि मन्दिराणि तन्नामानि लिलेख सः॥१८९
मुदा युक्तो विश्वकर्म्मा शिष्यैर्यक्षगणैः सह।
निद्रेशं निद्रितं नत्वा प्रययौ स्वालयं मुने ॥ १९०
सर्व्वत्रैवं सुकृतिनां समस्तं भवतीच्छया।
नेहाश्चर्य्यञ्च नगरं बभूवेशेच्छया भुवि ॥ १९१
इत्येवं कथितं सर्व्वं हरेश्चरितमङ्गलम्।
सुखदं पातकहरं किं भूयः श्रोतुमिच्छसि ॥ १९२

नारद उवाच।

कथं वृन्दावनं नाम काननस्यास्य भारते।
व्युत्पत्तिरस्ति संज्ञा वा तत् त्वं वद सुतत्त्ववित् ॥१९३

सूत उवाच।

नारदस्य वचः श्रुत्वा ऋषिर्नारायणो मुदा।
प्रहस्योवाच निखिलं तत्त्वमेव पुरातनम् ॥ १९४

नारायण उवाच।

पुरा केदारनृपतिः सप्तद्वीपपतिः स्वयम्।
आसीत् सत्ययुगे ब्रह्मन् सत्यधर्म्मरतः सदा ॥ १९५
स रेमे सह नारीभिः पुत्रपौत्रगणैः सह।
पुत्रानिव प्रजाः सर्व्वाः पालयामास धार्म्मिकः ॥१९६
कृत्वा शतक्रतुं राजा लेभे नेन्द्रत्वमीप्सितम्।
कृत्वा नानाविधं पुण्यं फलाकाङ्क्षी न च स्वयम् ॥१९७
नित्यं नैमित्तिकं सर्व्वं श्रीकृष्णप्रीतिपूर्व्वकम्।
केदारतुल्यो राजेन्द्रो न भूतो भविता पुनः ॥ १९८
पुत्रेषु राज्यं संन्यस्य प्रियास्त्रैलोक्यमोहिनीः।
जैगीषव्योपदेशेन जगाम तपसे वनम् ॥ १९९
हरेरैकान्तिकं भक्तो ध्यायते सन्ततं हरिम्।
शश्वत् सुदर्शनं चक्रमस्ति यत्सन्निधौ मुने ॥ २००
चिरं तप्त्वा नृपश्रेष्ठो गोलोकञ्च जगाम सः।
केदारनाम तत् तीर्थं तन्नाम्ना च बभूव ह।
तत्राद्यापि मृतः प्राणी सद्योमुक्तो भवेद्ध्रुवम् ॥ २०१
कमलांशा तस्य कन्या नाम्ना वृन्दा तपस्विनी।
न वव्रे सा वरं कञ्चिद्-योगशास्त्रविशारदा ॥ २०२
दत्तं दुर्व्वाससा तस्यै हरेर्मन्त्रं सुदुर्लभम् ॥ २०३
सा विरक्ता गृहं त्यक्त्वा जगाम तपसे वनम्।
षष्टिं वर्षसहस्राणि तपस्तेपे सुनिर्ज्जने ॥ २०४
आविर्ब्बभूव श्रीकृष्णस्तत्पुरो भक्तवत्सलः।
प्रसन्नवदनः श्रीमान् वरं वृणित्युवाच ह ॥ २०५
दृष्ट्वा च राधिकाकान्तं शान्तं सुन्दरविग्रहम्।
मूर्च्छामवाप सा सद्यः कामबाणप्रपीड़िता ॥ २०६
सा च शीघ्रं वरं वव्रे पतिस्त्वं मे भवेति च।
तथास्तूक्त्वा च रहसि चिरं रेमे तया सह ॥ २०७
सा जगाम च गोलोकं कृष्णेन सह कौतुकात्।
राधासमा च सौभाग्याद्गोपीश्रेष्ठा बभूव ह ॥२०८
वृन्दा यत्र तपस्तेपे तत् तु वृन्दावनं स्मृतम्।
वृन्दा यत्र कृतक्रीड़ा तेन वा मुनिपुङ्गव ॥ २०९
अथान्यथेतिहासञ्च शृणुष्व वत्स पुण्यदम्।
येन वृन्दावनं नाम निबोध कथयामि ते ॥ २१०
कुशध्वजस्य कन्ये द्वे धर्म्मशास्त्रविशारदे।
तुलसी वेदवत्यौ च विरक्ते भवकर्म्मणि ॥ २११
तपस्तप्त्वा वेदवती प्राप नारायणं वरम्।
सीता जनककन्या सा सर्व्वत्र परिकीर्त्तिता ॥२१२
तुलसी च तपस्तप्त्वा वाञ्छां कृत्वा पतिं हरिम्।
दैवाद्दुर्व्वाससः शापात् प्राप्य शङ्खासुरं पतिम् २१३
पश्चात् सम्प्राप कमलाकान्तं कान्तं मनोहरम्।
सा एव हरिशापेन वृक्षरूपा सुरेश्वरी ॥ २१४
तस्याः शापेन च हरिः शालग्रामो बभूव ह।
तथा तस्थौ च सततं शिलावक्षसि सुन्दरी ॥ २१५

विस्तीर्णं कथितं सर्व्वं तुलसीचरितञ्च ते।
तथापि च प्रसङ्गेन किञ्चिदुक्तं मुने पुनः॥ २१६
तस्या नामान्तरं वृन्दा तदिदञ्च तपोवनम्।
तेन वृन्दावनं नाम प्रवदन्ति मनीषिणः॥ २१७
अथवा ते प्रवक्ष्यामि परं हेत्वन्तरं शृणु।
येन वृन्दावनं नाम पुण्यक्षेत्रस्य भारते॥ २१८
राधाषोड़शनाम्नाञ्च वृन्दानाम श्रुतौ श्रुतम्।
तस्याः क्रीड़ावनं रम्यं तेन वृन्दावनं स्मृतम्॥ २१९
गोलोके प्रीतये तस्याः कृष्णेन निर्म्मितं पुरा।
क्रीड़ार्थं भुवि तन्नाम्ना वनं वृन्दावनं स्मृतम्॥ २२०

नारद उवाच।

कानि षोड़श नामानि राधिकाया जगद्गुरो।
तानि मे वद शिष्याय श्रोतुं कौतूहलं मम॥ २२१
श्रुतं नाम्नां सहस्रञ्च सामवेदे निरूपितम्।
तथापि श्रोतुमिच्छामि त्वत्तो नामानि षोड़श॥ २२२
अभ्यन्तराणि तेषां वा तदन्यान्येव वा विभो।
अहो पुण्यस्वरूपाणि भक्तानां वाञ्छितानि च॥ २२३
नामानि तेषां व्युत्पत्तिं सर्व्वेषां दुर्लभानि च।
पावनानि जगन्मातुर्जगतां मूढ़रूपिणाम्॥ २२४

नारायण उवाच।

राधा रासेश्वरी रास-वासिनी रसिकेश्वरी।
कृष्णप्राणाधिका कृष्ण-प्रिया कृष्णस्वरूपिणी॥ २२५
कृष्णवामांशसम्भूता परमानन्दरूपिणी।
कृष्णा वृन्दावनी वृन्दा वृन्दावनविनोदिनी॥ २२६
चन्द्रावती चन्द्रकान्ता शतचन्द्रनिभानना।
नामान्येतानि साराणि तेषामभ्यन्तराणि च॥ २२७
राधेत्येवञ्च संसिद्धा राकारो दानवाचकः।
धा निर्व्वाणञ्च तद्दात्री तेन राधा प्रकीर्त्तिता॥ २२८
रासेश्वरस्य पत्नीयं तेन रासेश्वरी स्मृता।
रासे च वासो यस्याश्च तेन सा रासवासिनी॥ २२९
सर्व्वासां रसिकानाञ्च देवीनामीश्वरी परा।
प्रवदन्ति सदा सन्तस्तेन तां रसिकेश्वरीम्॥ २३०
प्राणाधिका प्रेयसी सा कृष्णस्य परमात्मनः।
कृष्णप्राणाधिका सा च कृष्णेन परिकीर्त्तिता॥ २३१
कृष्णस्यातिप्रिया कान्ता कृष्णो वास्याः प्रियः सदा।
सर्व्वैर्देवगणैरुक्ता(क) तेन कृष्णप्रिया स्मृता॥ २३२
कृष्णरूपं संविधातुं या शक्ता चावलीलया।
सर्व्वांशैः कृष्णसदृशी तेन कृष्णस्वरूपिणी॥ २३३
वामार्द्धाङ्गेन कृष्णस्य या सम्भूता पुरा सती।
कृष्णवामांशसम्भूता तेन कृष्णेन कीर्त्तिता॥ २३४
परमानन्दराशिश्च स्वयं मूर्त्तिमती सती।
श्रुतिभिः कीर्त्तिता तेन परमानन्दरूपिणी॥ २३५
कृषिर्मोक्षार्थवचनो ण एवोत्कृष्टवाचकः।
आकारो दातृवचनस्तेन कृष्णात्र कीर्त्तिता॥ २३६
अस्ति वृन्दावनं यस्यास्तेन वृन्दावनी स्मृता।
वृन्दावनस्याधिदेवी तेन वाथ प्रकीर्त्तिता॥ २३७
वृन्दः सङ्घवचः सखुरकारोऽप्यस्तिवाचकः (क)।
सखिवृन्दोऽस्ति यस्याश्च सा वृन्दा परिकीर्त्तिता॥ २३८
मुदाचकी विनोदश्च सा अस्या अस्ति तत्र च।
वेदा वदन्ति तां तेन वृन्दावनविनोदिनीम्॥ २३९
नखचन्द्रावली यस्या वक्त्रचन्द्रोऽस्ति सन्ततम्।
तेन चन्द्रावली सा च कृष्णेन कीर्त्तिता पुरा॥ २४०
कान्तिरस्ति चन्द्रतुल्या सदा यस्या दिवानिशम्।
सा चन्द्रकान्ता हर्षेण हरिणा परिकीर्त्तिता॥ २४१
शतचन्द्रप्रभा यस्याश्चाननेऽस्ति दिवानिशम्।
मुनिना कीर्त्तिता तेन शतचन्द्रप्रभानना॥ २४२
इति षोड़शनामोक्त-मर्थव्याख्यानसंयुतम्।
नारायणेन दत्तं यद्ब्रह्मणे नाभिपङ्कजे॥ २४३
ब्रह्मणा च पुरा दत्तं धर्म्माय जनकाय मे।
धर्म्मेण कृपया दत्तं मह्यमादित्यपर्व्वणि।
पुष्करे च महातीर्थे पुण्याहे देवसंसदि॥ २४४
राधाप्रभावप्रस्तावे सुप्रसन्नेन चेतसा।
इदं स्तोत्रं मया पुण्यं तुभ्यं दत्तं महामुने॥ २४५
यावज्जीवमिदं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः।
राधामाधवयोः पाद-पद्मे भक्तिर्भवेदिह॥ २४६
अन्ते लभेत् तयोर्दास्यं शश्वत् सहचरो भवेत्।
अणिमादिकसिद्धिञ्च सम्प्राप्य नित्यविग्रहम्॥ २४७
व्रतदानोपवासैश्च सर्व्वैर्नियमपूर्व्वकैः।
चतुर्णाञ्चैव वेदानां पाठैः सर्व्वार्थसंयुतैः॥ २४८
सर्व्वेषां यज्ञतीर्थानां करणैर्विधिबोधितैः।
प्रादक्षिण्येन भूमेश्च कृत्स्नाया एव सप्तधा॥ २४९
शरणागतरक्षायामज्ञाने ज्ञानदानतः।

(क) उक्तेति इवकारपाठस्तु प्रामादिक एव।

(क) सखिशब्देऽत्र प्राधान्येन पुंलिङ्गता।

देवानां वैष्णवानाञ्च दर्शनेनापि यत् फलम् ॥ २५०
तदेव स्तोत्रपाठस्य कलां नार्हति षोड़शीम्।
स्तोत्रस्यास्य प्रभावेण जीवन्मुक्तो भवेन्नरः ॥ २५१
इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीनारायण-
प्रोक्तं राधास्तोत्रं समाप्तम्।

नारद उवाच।

सम्प्राप्तं परमाश्चर्य्यं स्तोत्रं सर्व्वसुदुर्लभम्।
कवचञ्चापि दिव्यञ्च संसारविजयं विभो ॥ २५२
कृतं स्तोत्रं सुयत्नेन सम्प्राप्तं तापखण्डनम्।
श्रुत्वा कृष्णकथां चित्रां त्वत्पादाब्जप्रसादतः ॥ २५३
अधुना श्रोतुमिच्छामि यद्रहस्यञ्च तद्वद।
प्रातश्च नगरं दृष्ट्वा किमूचुर्वल्लवा मुने ॥ २५४

नारायण उवाच।

गतायां तत्र यामिन्यां गते च विश्वकर्म्मणि।
अरुणोदयवेलायां जनाः सर्व्वे जजागरुः ॥ २५५
उत्थाय दृष्ट्वा नगरं स्वर्गादपि विलक्षणम्।
किमाश्चर्य्यं किमाश्चर्य्य-मित्यूचुर्व्रजवासिनः ॥ २५६
कांश्चिद्गोपान् केचिदूचुः कस्मात् सर्व्वमभूदिदम्।
जाने न केन रूपेण को भूमौ प्रभवेदिति ॥ २५७
बुबुधे मनसा नन्दो गर्गवाक्यमनुस्मरन्।
श्रीहरेरिच्छया सर्व्वं जगदेतच्चराचरम् ॥ २५८
ब्रह्मादितृणपर्य्यन्तं यस्य भ्रूभङ्गलीलया।
आविर्भूतं तिरोभूतं तस्यासाध्यञ्च किं कुतः ॥ २५९
विवरेष्वपि यल्लोम्नां ब्रह्माण्डान्यखिलानि च।
ईशस्य तन्महाविष्णोः किमसाध्यं हरेरहो ॥ २६०
ब्रह्मानन्तेशधर्म्माश्च ध्यायन्ते यत्पदाम्बुजम्।
किमसाध्यं तदंशस्य मायामानुषरूपिणः ॥ २६१
भ्रामं भ्रामं तन्नगरं दर्शं दर्शं गृहं गृहम्।
पाठं पाठञ्च नामानि सर्व्वेभ्यो निलयं ददौ ॥ २६२
कृत्वा शुभक्षणं नन्दो वृषभानुश्च कौतुकी।
चकार स्वगणैः सार्द्धं तदाश्रमप्रवेशनम् ॥ २६३
सर्व्वे वृन्दावनस्थाश्च प्रसन्नवदनेक्षणाः।
मुदा प्रवेशनं चक्रुः स्वं स्वमाश्रममण्डलम् ॥ २६४
सर्व्वे मुमुदिरे गोपाः स्वस्वस्थाने मनोहरे।
इत्येवं कथितं सर्व्वं निर्म्माणं नगरस्य च ॥ २६५
बालका बालिकाश्चैव चिक्रीड़ुश्च प्रहर्षिताः।
श्रीकृष्णो बलदेवश्च शिशुभिः सह कौतुकात् ॥ २६६
क्रीड़ां चकार तत्रैव स्थाने स्थाने मनोहरे।
वने वने च श्रीरास-मण्डलस्य च नारद ॥ २६७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे श्रीवृन्दा-
वन नगरवर्णनचरितप्रस्तावो नाम
सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः।

शौनक उवाच।

अहो किमद्भुतं सूत रहस्यं सुमनोहरम्।
श्रुतं कृष्णस्य चरितं सुखदं मोक्षदं परम् ॥ १
श्रुत्वा नगरनिर्म्माणं देवर्षिर्नारदो मुनिः।
किं पप्रच्छ धर्म्मपुत्रं हरेश्चरितमङ्गलम् ॥ २

सूत उवाच।

श्रुत्वा नगरनिर्म्माणं नारदो मुनिसत्तमः।
पप्रच्छ कृष्णचरितमपरं सुमनोहरम् ॥ ३

नारद उवाच।

श्रीकृष्णाख्यानचरितं पीयूषं मुनिसत्तम।
ज्ञानसिन्धो निगद मां शिष्यञ्च शरणागतम् ॥ ४
नारदस्य वचः श्रुत्वा मुदा नारायणः स्वयम्।
उवाच परमेशस्य चरितं परमाद्भुतम् ॥ ५

नारायण उवाच।

एकदा बालकैः सार्द्धं बलेन सह माधवः।
जगाम श्रीमधुवनं यमुनातीरनीरजम् ॥ ६
विचेरुर्गोसमूहाश्च चिक्रीड़ुर्बालकास्तथा।
विश्रान्तास्तत्परीताश्च क्षुधाभिः परिपीड़िताः ॥ ७
तमूचुर्गोपशिशवः श्रीकृष्णं परमेश्वरम्।
क्षुधार्त्तान् बाधते कृष्ण किं कुर्म्मो ब्रूहि किङ्करान् ॥ ८
शिशूनां वचनं श्रुत्वा तानुवाच दयानिधिः।
हितं तथ्यञ्च वचनं प्रसन्नवदनेक्षणः ॥ ९

श्रीकृष्ण उवाच।

बाला गच्छत विप्राणां यज्ञस्थानं सुखावहम्।
अन्नं याचत तं शीघ्रं ब्राह्मणांश्च कृतूत्सुकान् ॥ १०
विप्रा आङ्गिरसाः सर्व्वे स्वाश्रमे शीवनान्तिके।
यज्ञं कुर्व्वन्ति विप्राश्च श्रुतिस्मृतिविशारदाः ॥ ११
निस्पृहा वैष्णवाः सर्व्वे मां यजन्ति मुमुक्षवः।

मायया मां न जानन्ति मायामानुषरूपिणम् ॥ १२
न वेदद्रति यसम्यमन्नं विप्राः क्रतून्मुखाः।
तज्ज्ञात्वा याचत क्षिप्रं दयायुक्ताः स्त्रियः प्रति ॥१३
श्रीकृष्णवचनं श्रुत्वा ययुर्बालकपुङ्गवाः।
पुरतो ब्राह्मणानाञ्च तस्थुरानतकन्धराः ॥ १४
इत्यूचुर्बालकाः शीघ्रमन्नं दत्त द्विजोत्तमाः।
न श्रशुर्द्विजाः केचित् केचिच्छ्रुत्वा स्थिताः स्मिताः॥१५
ते ययू रन्धनागारं ब्राह्मण्यो यत्र पाचिकाः।
गत्वा बाला विप्रभार्याः प्रणेमुर्नतकन्धराः ॥ १६
नत्वेत्यूचुर्बालकाश्च विप्रभार्याः पतिव्रताः।
अन्नं दत्त मातरोऽस्मान् क्षुधार्त्तानपि बालकान् ॥१७
बालानां वचनं श्रुत्वा दृष्ट्वा तांश्च मनोहरान्।
पप्रच्छुः सादरं साध्व्यः स्मेराननसरोरुहाः ॥ १८

विप्रपत्न्य ऊचुः।

के यूयं प्रेषिताः केन कानि नामानि वो वद।
दास्यामोऽन्नं बहुविधैर्व्यञ्जनैः सहितं वरम् ॥ १९
ब्राह्मणीनां वचः श्रुत्वा ता ऊचुस्ते मुदान्विताः।
स्निग्धा हसन्तः स्फीताश्च सर्व्वे गोपालबालकाः ॥२०

बाला ऊचुः।

प्रेषिता रामकृष्णाभ्यां वयं क्षुत्पीड़िता भृशम्।
दत्तान्नं मातरोऽस्मभ्यं क्षिप्रं यामस्तदन्तिकम् ॥२१
इतोऽतिदूरे भाण्डीर-वनाभ्यन्तर एव च।
वटमूले मधुवने वसन्तौ रामकेशवौ ॥ २२
विश्रान्तौ क्षुधितौ तौ वो याचेतेऽन्नञ्च मातरः।
किमु देयं न वा देयं शीघ्रं वदत नोऽधुना ॥ २३
गोपानां वचनं श्रुत्वा हृष्टानन्दाश्रुलोचनाः।
पुलकाञ्चितसर्व्वाङ्गास्तत्याद्दाङ्गमनोरथाः ॥ २४
नानाव्यञ्जनसंयुक्तं शाल्यन्नं सुमनोहरम्।
पायसं पिष्टकं स्वादु दधि क्षीरं घृतं मधु ॥ २५
रौप्ये कांस्ये राजते च पात्रे कृत्वा मुदान्विताः।
ताः सर्व्वा विप्रपत्न्यश्च प्रययुः कृष्णसन्निधौ ॥ २६
नानामनोरथं कृत्वा मनसा गमनोन्मुखाः।
पतिव्रतास्ता धन्याश्च श्रीकृष्णदर्शनोत्सुकाः ॥ २७
गत्वा ददृशुः श्रीकृष्णं सबलं सहबालकम्।
वटमूले वसन्तं तमुडुमध्ये यथोडुपम् ॥ २८
श्यामं किशोरवयसं पीतकौषेयवाससम्।
सुन्दरं सस्मितं शान्तं राधाकान्तं मनोहरम् ॥ २९
शरत्पार्व्वणचन्द्रास्यं रत्नालङ्कारभूषितम्।
रत्नकेयूर-वलय-रत्ननूपुरभूषितम् ॥ ३०
आजानुलम्बितां शुभ्रां बिभ्रतं रत्नमालिकाम्।
मालतीमालया कण्ठ-वक्षःस्थलविराजितम् ॥ ३१
चन्दनागुरुकस्तूरी-कुङ्कुमार्चितविग्रहम्।
सुनसं सुकपोलञ्च तुष्टुवुर्मधुसूदनम् ॥ ३२
पक्वदाड़िम्ववीजाभं बिभ्रतं दन्तमुत्तमम्।
शिखिपुच्छसमायुक्त-वद्धचूड़ं परात्परम् ॥ ३३
कदम्बपुष्पयुग्माभ्यां कर्णमूलविराजितम्।
ध्यानासाध्यं योगिनाञ्च भक्तानुग्रहकातरम् ॥ ३४
ब्रह्मेशधर्म्मशेषेन्द्रैः स्तूयमानं मुनीश्वरैः।
दृष्ट्वेवमीश्वरं भक्त्या प्रणेमुर्द्विजयोषितः।
स्वासां ज्ञानानुरूपञ्च तुष्टुवुर्मधुसूदनम् ॥ ३५

विप्रपत्न्य ऊचुः।

त्वं ब्रह्म परमं धाम निरीहो निरहङ्कृतः।
निर्गुणश्च निराकारः साकारः सगुणः स्वयम् ॥ ३६
साक्षिरूपश्च निर्लिप्तः परमात्मा निराकृतिः।
प्रकृतिः पुरुषस्त्वञ्च कारणञ्च तयोः परः ॥ ३७
सृष्टिस्थित्यन्तविषये ये च देवास्त्रयः पराः।
ते त्वदंशाः सर्व्ववीजा ब्रह्म-विष्णु-महेश्वराः ॥ ३८
यस्य लोम्नाञ्च विवरेष्वखिलं विश्वमीश्वर।
महाविराड्महाविष्णुस्त्वं तस्य जनको विभो ॥ ३९
तेजस्त्वञ्चापि तेजस्वी ज्ञानं ज्ञानी च तत्परः।
वेदेऽनिर्व्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः ॥४०
महदादिसृष्टिसूत्रं पञ्चतन्मात्रमेव च।
वीजं त्वं सर्व्वशक्तीनां सर्व्वशक्तिस्वरूपकः ॥ ४१
सर्व्वशक्तीश्वरः सर्व्वः सर्व्वशक्त्याश्रयः सदा।
त्वमनीहः स्वयंज्योतिः सर्व्वानन्दः सनातनः ॥ ४२
अहोऽप्याकारहीनस्त्वं सर्व्वविग्रहवानपि।
सर्व्वेन्द्रियाणां विषयं जानासि नेन्द्रियी भवान् ॥४३
सरस्वती जड़ीभूता यत्स्तोत्रे यन्निरूपणे।
जड़ीभूतो महेशश्च शेषो धर्म्मो विधिः स्वयम् ॥ ४४
पार्व्वती कमला राधा सावित्री वेदसूरपि।
वेदश्च जड़तां याति के वा शक्ता विपश्चितः ॥ ४५
वयं किं स्तवनं कुर्म्मोऽयोग्याः प्राणेश्वरेश्वर।
प्रसन्नो भव नो देव दीनवन्धो कृपां कुरु ॥ ४६
इत्येवमुक्त्वा ताः पत्न्यः पेतुस्तच्चरणाम्बुजे।

अभयं प्रददौ ताश्च प्रसन्नवदनेक्षणाः ॥ ४७
विप्रपत्न्या कृतं स्तोत्रं पूजाकाले च यः पठेत्।
स गतिं विप्रपत्नीनां लभते नात्र संशयः ॥ ४८
इति ब्रह्मवैवर्त्ते विप्रपत्नीकृतं स्तोत्रं समाप्तम्।

नारायण उवाच।

ताः पदाम्भोजपतिता दृष्ट्वा श्रीमधुसूदनः।
वरं वृणुत कल्याणं भविता चेत्युवाच ह ॥ ४९
श्रीकृष्णस्य वचः श्रुत्वा विप्रपत्न्यो मुदान्विताः।
तमूचुर्वचनं भक्त्या भक्तिनम्रात्मकन्धराः ॥ ५०

विप्रपत्न्य ऊचुः।

वरं वत्स न गच्छामो नः स्पृहा त्वत्पदाम्बुजे।
देहि स्वदास्यमस्मभ्यं दृढां भक्तिं सुदुर्लभाम् ॥ ५१
पश्यामोऽनुक्षणं वक्त्र-सरोजं तव केशव।
अनुग्रहं कुरु विभो न यास्यामो गृहं पुनः ॥ ५२
द्विजपत्नीवचः श्रुत्वा श्रीकृष्णः करुणानिधिः।
ओमित्युक्त्वा विलोक्येशस्तस्थौ बालकसंसदि ॥ ५३
प्रदत्तं विप्रपत्नीभिर्मिष्टमन्नं सुधोपमम्।
बालकान् भोजयित्वा तु स्वयञ्च बुभुजे हरिः ॥ ५४
एतस्मिन्नन्तरे तत्र शातकुम्भरथं वरम्।
ददृशुर्विप्रपत्न्यश्च पतन्तं गगनाद्द्रुतम् ॥ ५५
रत्नदर्पणसंयुक्तं रत्नसारपरिच्छदम्।
रत्नस्तम्भैर्निरुद्धञ्च सद्रत्नकलसोज्ज्वलम् ॥ ५६
श्वेतचामरसंयुक्तं वह्निशुद्धांशुकान्वितम्।
पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥ ५७
शतचन्द्रसमायुक्तं मनोयायि मनोहरम्।
वेष्टितं पार्षदैर्दिव्यैर्वनमालाविभूषितैः ॥ ५८
पीतवस्त्रपरीधानै रत्नालङ्कारभूषितैः।
नवयौवनसम्पन्नैः श्यामलैः सुमनोहरैः ॥ ५९
द्विभुजैर्मुरलीहस्तैर्गोपवेशधरैर्वरैः।
शिखिपुच्छगुञ्जमाला-बद्धवङ्किमचूड़कैः ॥ ६०
अवरुह्य रथात् तूर्णं ते प्रणम्य हरेः पदम्।
रथमारोहणं कर्त्तुमूचुर्ब्राह्मणकामिनीः ॥ ६१
विप्रभार्य्या हरिं नत्वा जग्मुर्गोलोकमीप्सितम्।
बभूवुर्गोपिकाः सद्य-स्त्यक्त्वा मानुषविग्रहान् ॥ ६२
हरिश्छायां विनिर्म्माय तासाञ्च विष्णुमायया।
प्रस्थापयामास गृहान् ब्राह्मणानां स्वयं विभुः ॥६३
विप्राश्च भार्य्या उद्दिश्य परं सन्दिग्धमानसाः।
अन्वेषणं प्रकुर्व्वन्तो ददृशुः पथि कामिनीः ॥ ६४
दृष्ट्वोचुर्ब्राह्मणाः सर्व्वं तास्ते च विनयान्विताः।
पुलकाञ्चितसर्व्वाङ्गाः प्रसन्नवदनेक्षणाः ॥ ६५

ब्राह्मणा ऊचुः।

अहोऽतिधन्या यूयञ्च दृष्टो युष्माभिरीश्वरः।
अस्माकं जीवनं व्यर्थं वेदपाठोऽप्यनर्थकः ॥ ६६
वेदे पुराणे सर्व्वत्र विद्वद्भिः परिकीर्त्तितम्।
हरेर्विभूतयः सर्व्वाः सर्व्वेषां जनको हरिः ॥ ६७
तपो जपो व्रतं दानं वेदाध्ययनमर्च्चनम्।
तीर्थस्नानमनशनं सर्व्वेषां फलदो हरिः ॥ ६८
श्रीकृष्णः सेवितो येन किं तस्य तपसां फलैः।
प्राप्तः कल्पतरुर्येन किं तस्यान्येन शाखिना ॥ ६९
श्रीकृष्णो हृदये यस्य किं तस्य कर्म्मभिः कृतैः।
किं पीतसागरस्यैव पौरुषं कूपलङ्घने ॥ ७०
इत्येवमुक्त्वा विप्राश्च गृहीत्वा कामिनीवराः।
प्रजग्मुः स्वगृहं हृष्टास्ताभिः सार्द्धञ्च रेमिरे ॥ ७१
तासां ततोऽधिकं प्रेम क्रीड़ासु सर्व्वकर्म्मसु।
दाक्षिण्यं मायया शक्ता ब्राह्मणा न वितर्कितुम्॥७२
अथ नारायणः सोऽयं बलेन शिशुभिः सह।
जगाम स्वालयं तूर्णं पूर्णब्रह्म सनातनम् ॥ ७३
इत्येवं कथितं सर्व्वं हरेर्माहात्म्यमुत्तमम्।
पुरा श्रुतं धर्म्मवक्त्रात् किं भूयः श्रोतुमिच्छसि॥ ७४

नारद उवाच।

ऋषीन्द्र केन पुण्येन बभूव विप्रयोषिताम्।
मुनीन्द्राणाञ्च सिद्धानां दुर्लभा गतिरीदृशी ॥ ७५
इमाः का वा पुण्यवत्यः पुरा तस्युर्महीतलम्।
आजग्मुः केन दोषेण वद सन्देहभञ्जन ॥ ७६

नारायण उवाच।

सप्तर्षीणां रमण्यश्च रूपेणाप्रतिमाः पराः।
गुणवत्यः सुशीलाश्च स्वधर्म्मिष्ठाः पतिव्रताः ॥ ७७
नवीनयौवनाः सर्व्वाः पीनश्रोणिपयोधराः।
दिव्यवस्त्रपरीधाना रत्नालङ्कारभूषिताः ॥ ७८
तप्तकाञ्चनवर्णाभाः शरदाननसरोरुहाः।
मुनीनां मानसं शक्ता मोहितुं वक्रचक्षुषा ॥ ७९
दृष्ट्वा तासां स्तनश्रोणिमुखानि सुन्दराणि च।
अनलश्चकमे ताश्च मदनानलपीड़ितः ॥ ८०
अग्निस्थानस्थितानाञ्च शिखया सुरतोन्मुखः।

यस्पर्शाङ्गानि तासाञ्च बभूव हतचेतनः ॥ ८१
पतिव्रता न जानन्ति पतिपादाब्जमानसाः ।
अग्निरङ्गानि तासाञ्च ददर्श सर्श मुमोह च ॥ ८२
वह्नेश्च मानसं ज्ञात्वा भगवानङ्गिराः स्वयम् ।
शशाप तमित्युवाच सर्व्वभक्षो बभूव ह ॥ ८३
वह्निः सचेतनो भूत्वा तुष्टाव मुनिपुङ्गवम् ।
व्रीड़या नम्रवदनश्चकम्पे ब्रह्मतेजसा ॥ ८४
क्रुद्धो मुनिः परस्पृष्ट-कामिनीश्च शशाप ह ।
यात यूयं पापयुक्ता मानुषीं योनिमेव च ॥ ८५
भारते ब्राह्मणानाञ्च गृहे लभत जन्म वै ।
करिष्यन्ति विवाहञ्च युष्मान् नः कुलजा द्विजाः॥८६
श्रुत्वा वाक्यं मुनेस्ताश्च रुरुदुः प्रेमविह्वलाः ।
पुटाञ्जलियुताः सर्व्वा इत्यूचुस्तं विदां वरम् ॥ ८७

मुनिपत्न्य ऊचुः ।

न त्यजास्मान् मुनिश्रेष्ठ निष्पापाश्च पतिव्रताः ।
अजानन्तीः परस्पृष्टा न च नस्त्यक्तुमर्हति ॥ ८८
भक्तानां किङ्करीणाञ्च न दण्डं कर्त्तुमर्हति ।
युष्माकं चरणाम्भोजं कदा द्रक्ष्यामहे वयम् ॥ ८९
खड्गच्छेदाद्वज्रपातात् सर्व्वप्रहरणान्मुने ।
दारुणः कान्तविच्छेदः साध्वीनां दुःसहः सदा ॥९०
ब्रह्मिष्ठानां गुणवतां परान् कान्तान् महामुनीन् ।
एवम्भूतान् कथं त्यक्त्वा यास्यामः पृथिवीतलम् ॥ ९१
यास्यामो यदि विप्रेन्द्र कदात्रागमनं वद ।
अज्ञानस्पर्शदोषाणां न स्यान्नो विधिबोधितः ॥ ९२
अहल्यया पुनः प्राप्तः स्वामीन्द्रस्य प्रधर्षणात् ।
सा सम्भोगात् पुनः शुद्धा स्पर्शात् किं वर्ज्जितावयम्॥९३
विचारं कुरु धर्म्मिष्ठ वेदवेदाङ्गपारग ।
वेदकर्त्तुश्च पुत्रस्त्वं सर्व्ववेदविदां वरः ॥ ९४
अन्येषाञ्च भयात् कान्ता व्रजन्ति शरणं पतिम् ।
स्वकान्तभयसंविग्नाः शरणं कं व्रजन्ति ताः ॥ ९५
अभयं देहि धर्म्मिष्ठ भययुक्ताय एव च ।
पुत्रे शिष्ये कलत्रे च को दण्डं कर्त्तुमक्षमः ॥ ९६
दुर्व्वलः सबलो वापि स्ववस्तूनामपीश्वरः ।
स्वद्रव्यं विक्रयं कर्त्तुं न चान्यो रक्षितुं क्षमः ॥ ९७
कामिनीनां वचः श्रुत्वा दयालुर्मुनिपुङ्गवः ।
प्रेम्णा रुरोद तासाञ्च निरीक्ष्य मुखपङ्कजम् ॥९८
वेदवेदाङ्गपारज्ञो ज्ञानिनां योगिनां वरः ।
पत्नीविच्छेदविषयी मूर्च्छां प्राप तथापि सः ॥ ९९
सर्व्वा बभूवुः शोकार्त्ता विरहोद्विग्नमानसाः ।
निरीक्ष्य तासां वक्त्राणि तस्थौ पुत्तलिका यथा॥१००
कृत्वा विलापं सुचिरं सर्व्ववेदविदां वरः ।
भ्रातृभिश्च सहालोच्य ता उवाच शुचातुरः ॥ १०१

अङ्गिरा उवाच ।

यूयं शृणुत वक्ष्यामि वचनं सत्यमेव च ।
स्वकर्म्मभोगिणां भोगमाकर्म्मान्तं श्रुतौ श्रुतम् ॥ १०२
गतो भोगश्च युष्माकमस्माभिः सह निश्चितम् ।
गते भोगे पुनर्भोगो न हि वेदे निरूपितः ॥ १०३
शुभाशुभञ्च यत् कर्म्म भारते कृतिभिः कृतम् ।
नाभुक्तं क्षीयते कान्ता जन्मकोटिशतैरपि ॥१०४
परभुक्ताञ्च कान्ताञ्च यो भुङ्क्ते स नराधमः ।
स पच्यते कालसूत्रे यावच्चन्द्रदिवाकरौ ॥ १०५
न सा दैवे न सा पैत्र्ये पाकार्हा पापसंयुता ।
तस्याश्चालिङ्गने भर्त्ता भ्रष्टश्रीस्तेजसा हतः ॥ १०६
देवताः पितरस्तस्य हव्यदानेन तर्पणे ।
सुखिनो न भवन्त्येवमित्याह कमलोद्भवः ॥ १०७
तस्मात् प्रयत्नैर्भार्य्याञ्च रक्षणं कुरुते सुधीः ।
अन्यथा पापभाग्भूत्वा निश्चितं नरकं व्रजेत् ॥ १०८
पदे पदे सावधानः कान्तां रक्षति पण्डितः ।
न प्रतीतिस्थली योषा दोषाणाञ्च करण्डिका ॥१०९
कलत्रं पाकपात्रञ्च सदा रक्षितुमर्हति ।
परस्पर्शादशुद्धञ्च शुद्धं स्वस्पर्शने सदा ॥ ११०
स्वकान्तं वञ्चनं कृत्वा परं गच्छति याऽधमा ।
कुम्भीपाकं सा प्रयाति यावच्चन्द्रदिवाकरौ ॥ १११
तामेव यमदूताश्च संस्थाप्य नरकान्तरे ।
उत्तिष्ठन्तीं विक्षताञ्च कुर्व्वन्ति दण्डताड़नम् ॥ ११२
सर्पप्रमाणाः कीटाश्च तीक्ष्णदन्ताः सुदारुणाः ।
दशन्ति पुंश्चलीं तत्र सन्ततं तां दिवानिशम् ॥ ११३
विकृताकारशब्दञ्च करोति शाश्वतं भिया ।
न ममार प्रहारेण सूक्ष्मदेहविधारिणी ॥ ११४
सुदुर्लभं सुखं भुक्त्वा लोकेऽत्र यशसा हता ।
पतिता परलोके च गतिमेतादृशीं लभेत् ॥ ११५
परस्पृष्टा च या नारी या स्पृहां कुरुते परम् ।
सापि दुष्टा परित्याज्या चेत्याह कमलोद्भवः ॥११६
तस्मान्नारी परैर्यत्नाद्दृष्टा कृतिभिः कृता ।

असूर्य्यम्पश्या ये दाराः शुद्धास्ते च पतिव्रताः॥११७
स्वच्छन्दगामिनी या च स्वतन्त्रा शूकरीसमा।
अन्तर्दुष्टा सदा सैव निश्चितं परगामिणी॥ ११८
स्वामिसाध्या च या नारी कुलधर्म्मभिया स्थिता।
कान्तेन सार्द्धं सा कान्ता वैकुण्ठं याति निश्चितम् ११९
यात यूयञ्च पृथिवीं मानुषीं योनिमीप्सिताम्।
कृष्ण-दर्शनमात्रेण गोलोकं यास्यथ ध्रुवम्॥ १२०
हरिणा निर्म्मिताच्छाया युष्माकं योगमायया।
ता विप्रमन्दिरे स्थित्वा चागमिष्यन्ति नो गृहम्॥१२१
पुनरंशेन नः पत्न्यो भविष्यथ न संशयः।
युष्माकं मम शापश्च बभूव च वराधिकः॥ १२२
इत्येवमुक्त्वा स मुनि र्विरराम शुचान्वितः।
ताश्चागत्य महीं शापाद्बभूवुर्विप्रयोषितः॥ १२३
दत्त्वान्नं हरये भक्त्या प्रजग्मुर्हरिमन्दिरम्।
बभूव निश्चितं तासां शापश्च सम्पदोऽधिकः॥ १२४
निन्दनीयाच्च सम्पत्तेर्विपत्तिर्महती वरा।
अहो सद्यः सतां कोपश्चोपकाराय कल्पते॥१२५
विना विपत्तेर्महिमा कुतः कस्य भवेद्भुवि।
भूताः कान्तपरित्यागान्मुक्ता ब्राह्मणयोषितः॥१२६
इत्येवं कथितं सर्व्वं हरेश्चरितमुत्तमम्।
अहो पुण्यवतीनाञ्च मोक्षाख्यानं मनोहरम्॥१२७
श्रीकृष्णाख्यानं विप्रेन्द्र नूतनं नूतनं पदे पदे।
न हि तृप्तिः श्रुतवतां केन श्रेयसि तृप्यते॥ १२८
यावद्गम्यं तत् कथितं श्रुतं गुरुवक्त्रतः।
वद मां वाञ्छितं यत् ते किं भूयः श्रोतुमिच्छसि१२९

नारद उवाच।

यद्यच्छ्रुतं त्वया पूर्व्वं गुरुवक्त्रात् कृपानिधे।
मङ्गलं कृष्णचरितं तन्मे ब्रूहि जगद्गुरो॥ १३०

सूत उवाच।

श्रुत्वा देवर्षिवचनमृषिर्नारायणः स्वयम्।
अपरं कृष्णमाहात्म्यं प्रवक्तुमुपचक्रमे॥ १३१

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे विप्र-पत्नीमोचन-प्रस्तावो नाम अष्टादशोऽध्यायः॥१८॥

---

## एकोनविंशोऽध्यायः।

नारायण उवाच।

एकदा बालकैः सार्द्धं बलदेवं विना हरिः।
जगाम यमुनातीरं यत्र कालीयमन्दिरम्॥ १
परिपक्वफलं भुक्त्वा यमुनातीरजे वने।
स्वेच्छामयस्तट्परीतश्चखाद निर्म्मलं जलम्॥ २
गोकुलं चालयामास शिशुभिः सह कानने।
विजहार च तैः सार्द्धं स्थापयामास गोकुलम्॥ ३
क्रीडानिमग्नचित्तोऽयं बालकाश्च मुदान्विताः।
भुक्त्वा नवतृणं गावो विषतोयं पपुर्मुने॥ ४
विषाक्तञ्च जलं पीत्वा दारुणान्तकचेष्टया।
ज्वालाभिः कालकूटानां सद्यः प्राणांश्च तत्यजुः॥५
दृष्ट्वा मृतं गोसमूहं गोपाश्चिन्ताकुला भिया।
विषण्णवदनाः सर्व्वं तमूचुर्मधुसूदनम्॥ ६
श्रुत्वा सर्व्वं जगन्नाथो जीवयामास गोकुलम्।
उत्तस्थुस्तत्क्षणं गावो ददृशुः श्रीहरेर्मुखम्॥ ७
कृष्णः कदम्बमारुह्य यमुनातीरनीरजम्।
पपात सर्पभवने नीरमध्ये नराकृतिः॥ ८
शतहस्तप्रमाणञ्च जलोत्थानं बभूव ह।
बाला हर्षविषादञ्च मेनिरे तत्र नारद॥ ९
सर्पो नराकृतिं दृष्ट्वा कालीयः क्रोधविह्वलः।
जग्रास श्रीहरिं तूर्णं तप्तं लौहं यथा नरः॥ १०
दग्धकण्ठोदरो नागश्चोद्विग्नो ब्रह्मतेजसा।
प्राणा यान्तीत्येवमुक्त्वा चकारोद्गमनं पुनः॥ ११
भग्नदन्तो रक्तमुखः कृष्णवज्राङ्गचर्व्वणात्।
भग्नवक्त्रस्य भगवानुत्तस्थौ मस्तकोपरि॥ १२
नागो विश्वम्भराक्रान्तः स प्राणांस्त्यक्तुमुद्यतः।
चकारोद्गमनं रक्तं पपात मूर्च्छितो मुने॥ १३
दृष्ट्वा तं मूर्च्छितं नागा रुरुदुः प्रेमविह्वलाः।
केचित् पलायिता भीताः केचित् प्रविविशुर्विलम्॥१४
मरणाभिमुखं कान्तं दृष्ट्वा हि सुबला सती।
नागिनीभिः सह प्रेम्णा रुरोद पुरतो हरेः॥ १५
पुटाञ्जलियुता तूर्णं प्रणम्य श्रीहरिं भिया।
धृत्वा पादारविन्दञ्च तमुवाच भयाकुला॥ १६

सुबलोवाच।

हे जगत्कान्त कान्तं मे देहि मानञ्च मानद।

पतिः प्राणाधिकः स्त्रीणां नास्ति बन्धुश्च तत्परः ॥१७
अयि सुरवरनाथ प्राणनाथं मदीयं
न कुरु वधमनन्त प्रेमसिन्धो सुबन्धो।
अखिलभुवनबन्धो राधिकाप्रेमसिन्धो
पतिमिह कुरु दानं मे विधातुर्विधातः ॥ १८
त्रिनयन-विधि-शेषाः षण्मुखश्चास्यसङ्घैः
स्तवनविषयजाड्याः स्तोतुमीशा न वाणी।
न खलु निखिलवेदाः स्तोतुमीशाः किमन्ये
स्तवनविषयशक्ताः सन्ति सन्तस्तवेव ॥ १९
कुमतिरहमविज्ञा योषितां क्वाधमा वा
क्व भुवनगतिरीशश्चक्षुषोऽगोचरो मे।
विधि-हरि-हर-शेषैः स्तूयमानश्च यस्त्वं
मनु-मनुज-मुनीशैः स्तोतुमिच्छामि तं त्वाम्॥२०
स्तवनविषयभीता पार्व्वती यस्य पद्मा
श्रुतिगणजननी स्तोतुमीशा न यं तम्।
कलिकलुषनिमग्ना वेदवेदाङ्गशास्त्र-
श्रवणविषयमूढ़ा स्तोतुमिच्छामि किं त्वाम्॥२१
शयानो रत्नपर्य्यङ्के रत्नभूषणभूषितः।
रत्नभूषणभूषाङ्ग-राधावक्षःस्थलस्थितः ॥ २२
चन्दनोक्षितसर्व्वाङ्गः स्मेराननसरोरुहः।
प्रोद्यत्प्रेमरसाम्भोधौ निमग्नः सन्ततं सुखात् ॥२३
मल्लिकामालतीमाला-जालैः शोभितशेखरः।
पारिजातप्रसूनानां गन्धामोदितमानसः ॥ २४
पुंस्कोकिलकलध्वानि-भ्रमरध्वनिसंयुतैः।
कुसुमेषुविकारेण पुलकाञ्चितविग्रहः ॥ २५
प्रियाप्रदत्तताम्बूलं भुक्तवान् यः सदा मुने।
वन्देऽहं तत्पदाम्भोजं ब्रह्मेश-शेषवन्दितम् ॥ २६
लक्ष्मी-सरस्वती-दुर्गा-जाह्नवी-वेदमातृभिः।
सेवितं सिद्धसङ्घैश्च मुनीन्द्रैर्मुनिभिः सदा ॥ २७
वेदा न शक्ता यं स्तोतुं जड़ीभूता विचक्षणाः।
तमनिर्व्वचनीयञ्च किं स्तौमि नागवल्लभा ॥२८
निष्कारणायाखिलकारणाय
सर्व्वेश्वरायापि परात्पराय।
स्वयंप्रकाशाय परावराय
परावराणामधिपाय ते नमः ॥ २९
हे कृष्ण हे कृष्ण सुरासुरेश
ब्रह्मेश शेषेश प्रजापतीश।
मुनीश मर्त्त्यीश चराचरेश
सिद्धीश सिद्धेश गुणेश पाहि ॥ ३०
धर्म्मेश धर्म्मीश शुभाशुभेश
वेदेश वेदेष्वनिरूपितश्च।
सर्व्वेश सर्व्वात्मक सर्व्वबन्धो
जीवीश जीवेश्वर पाहि मत्प्रभुम् ॥ ३१
इत्येवं स्तवनं कृत्वा भक्तिनम्रात्मकन्धरा।
विधृत्य चरणाम्भोजं तस्थौ नागेश्वरी भिया ॥ ३२
नागपत्नीकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः।
सर्व्वपापात् प्रमुक्तश्च स याति श्रीहरेः पदम् ॥ ३३
इह लोके हरौ भक्तिमन्ते दास्यं लभेद्ध्रुवम्।
लभते पार्षदो भूत्वा सालोक्यादिचतुष्टयम् ॥ ३४
इति श्रीब्रह्मवैवर्त्ते नागपत्नीकृत-श्रीकृष्णस्तोत्रम्।

नारद उवाच।

नागपत्नीवचः श्रुत्वा किमुवाच हरिः स्वयम्।
कथयस्व महाभाग रहस्यं परमाद्भुतम् ॥ ३५

सूत उवाच।

नारदस्य वचः श्रुत्वा भगवान् धर्म्मनन्दनः।
उवाच परमाख्यानं मधुरञ्च पदे पदे ॥ ३६

नारायण उवाच।

नागपत्नीस्तवं श्रुत्वा श्रीकृष्णस्तामुवाच ह।
पुटाञ्जलियुतां पाद-पतितां भयविह्वलाम् ॥ ३७

श्रीकृष्ण उवाच।

उत्तिष्ठोत्तिष्ठ नागेशि वरं वृणु भयं त्यज।
गृहाण कान्तं हे मातर्मद्वरादजरामरम् ॥ ३८
कालिन्दीह्रदमुत्सृज्य स्वकीयभवनं व्रज।
भर्त्रा सगोष्ठ्या सार्द्धञ्च गच्छ वत्से त्वमीप्सितम् ॥३९
अद्यप्रभृति नागेशि भूता कन्या च त्वं मम।
त्वत्प्राणाधिक एवायं जामाता च न संशयः ॥ ४०
मत्पादपद्मचिह्नेन गरुड़स्त्वत्पतिं शुभे।
कृत्वा च स्तवनं भक्त्या प्रणमिष्यति मत्पदम् ॥ ४१
त्यज त्वं गरुड़ाद्भीतिं शीघ्रं रमणकं व्रज।
ह्रदान्निर्गच्छ हे भद्रे वरं वृणु यथेप्सितम् ॥ ४२
श्रीकृष्णस्य वचः श्रुत्वा प्रसन्नवदनेक्षणा।
उवाच साश्रुनेत्रा सा भक्तिनम्रात्मकन्धरा ॥ ४३

सुवलोवाच।

वरं दास्यसि चेन्मह्यं वरदेश्वर हे पितः।

त्वत्पादाब्जे दृढां भक्तिं निश्चलां दातुमर्हसि ॥ ४४
मन्मनस्त्वत्पदाम्भोजे भ्रमतु भ्रमरो यथा।
तव स्मृतेर्विस्मृतिर्मे कदापि न भविष्यति ॥ ४५
स्वकान्ते मम सौभाग्यं कान्तोऽयं ज्ञानिनां वरः।
इत्येवं प्रार्थनीयञ्च परिपूर्णं कुरु प्रभो ॥ ४६
इत्येवमुक्त्वा सर्पस्त्री प्रतस्थौ पुरतो हरेः।
शरत्पार्व्वणचन्द्रास्यं ददर्श श्रीहरेर्मुखम् ॥ ४७
लोचनाभ्यां पपौ वक्त्रं निमेषरहिता सती।
सर्व्वाङ्गपुलकोद्भिन्ना सानन्दाश्रुपरिप्लुता ॥ ४८
सुन्दरं बालकं दृष्ट्वा परं स्नेहं प्रकुर्व्वती।
उवाच पुनरेवं तं भक्त्युद्रिक्तपरिप्लुता ॥ ४९
न यास्यामि रमणकं तत्र नास्ति प्रयोजनम्।
सर्पः करोतु संसारं कुरु मां निजकिङ्करीम् ॥ ५०
न वाञ्छा मम हे कृष्ण सालोक्यादिचतुष्टये।
त्वत्पदाम्बुजसेवायाः कलां नार्हन्ति षोड़शीम् ॥५१
विना त्वत्पादसेवाञ्च यो वाञ्छति वरान्तरम्।
भारते दुर्लभं जन्म लब्ध्वासौ वञ्चितः स्वयम् ॥ ५२
नागपत्नीवचः श्रुत्वा स्मेराननसरोरुहः।
प्रसन्नवदनः श्रीमानोमित्येवमुवाच ह ॥ ५३
एतस्मिन्नन्तरे दिव्यः सद्रत्नसारनिर्म्मितः।
आजगाम रथस्तूर्णं प्रदीप्तस्तेजसा मुने ॥ ५४
पार्षदप्रवरैर्युक्तो वस्त्रमालापरिच्छदः।
शतचक्रो वायुवेगो मनोयायी मनोहरः॥ ५५
अवरुह्य रथात् तूर्णं श्यामलाः श्यामकिङ्कराः।
प्रणम्य कृष्णं नीत्वा तां जग्मुर्गोलोकमुत्तमम् ॥ ५६
हरिश्छायां विनिर्म्माय ददौ सर्पाय मायया।
स च किञ्चिन्न बुबुधे मोहितो विष्णुमायया ॥ ५७
अवरुह्य सर्पमूर्द्ध्नः श्रीकृष्णः करुणानिधिः।
ददौ हस्तञ्च कृपया शीघ्रं कालीयमस्तके ॥ ५८
सम्प्राप्य चेतनां सद्यो ददर्श पुरतो हरिम्।
पुटाञ्जलियुतां सोऽश्रुपूर्णाञ्च सुबलां सतीम् ॥ ५९
प्रणनाम हरिं सद्यो रुरोद प्रेमविह्वलः।
भक्त्युद्रेकात् साश्रुनेत्रं पुलकाञ्चितविग्रहम् ॥ ६०
तूष्णीम्भूतञ्च तं दृष्ट्वा तमुवाच कृपानिधिः।
सदीश्वरस्य सततं योग्यायोग्ये समा कृपा ॥ ६१

श्रीकृष्ण उवाच।

वरं वृणु त्वं कालीय यत् ते मनसि वाञ्छितम्।
त्वं मे प्राणाधिको वत्स सुखं तिष्ठ भयं त्यज ॥ ६२
तस्मादहमनुगृह्णामि योऽतिभक्तो ममांशजः।
किञ्चित् तद्दमनं कृत्वा प्रसादं हि करोम्यहम् ॥६३
त्वद्वंशजातान् सर्पांश्च हन्ति यो मानवाधमः।
ब्रह्महत्यासमं पापं भविता तस्य निश्चितम् ॥ ६४
मत्पादपद्मचिह्ने यः करोति दण्डताड़नम्।
द्विगुणं ब्रह्महत्यायाः भविता तस्य किल्विषम् ॥ ६५
लक्ष्मीर्यास्यति तद्गेहात् शापं दत्त्वा सुदारुणम्।
वंशायुर्यशसां हानिर्भविता तस्य निश्चितम् ॥ ६६
ध्रुवं वर्षशतं कालसूत्रे यास्यति दारुणे।
त्वत्प्रमाणाः कीटसङ्घा दंशिष्यन्ति च सन्ततम् ॥ ६७
भोगान्ते जन्म लब्ध्वा च तन्मृत्युस्तस्य दंशनात्।
तस्य वंशोद्भवानाञ्च त्वद्वंशाद्भविता भयम् ॥ ६८
ये च त्वद्वंशजं दृष्ट्वा तत्पदाङ्कं मदीयकम्।
प्रणमिष्यन्ति भक्त्या ते मुच्यन्ते सर्व्वपातकात् ॥ ६९
गच्छ शीघ्रं रमणकं त्यज भीतिं खगाधिपात्।
मत्पदाङ्कं मूर्द्ध्नि दृष्ट्वा भक्त्या च प्रणमिष्यति ॥ ७०
तव त्वद्वंशजातानां गरुड़ान्न भयं ध्रुवम्।
सर्व्वेषां ज्ञातिवर्गाणां वरोऽद्य भव मद्वरात् ॥ ७१
वरं किमपरं वत्स वाञ्छितं वरयाधुना।
भयं त्यक्त्वा कथय मां त्वदीयभयभञ्जनम् ॥ ७२
श्रीकृष्णवचनं श्रुत्वा कालीयः कम्पितो भिया।
पुटाञ्जलियुतो भूत्वा तमुवाच भुजङ्गमः ॥ ७३

कालीय उवाच।

वरेऽन्यस्मिन् मम विभो वाञ्छा नास्ति वरप्रद।
भक्तिं स्मृतिं त्वत्पदाब्जे देहि जन्मनि जन्मनि ॥ ७४
जन्म ब्रह्मकुले वापि तिर्य्यग्योनिषु वा मम।
तद्भवेत् सफलं तच्चेत् स्मृतिस्त्वच्चरणाम्बुजे ॥ ७५
तन्निष्फलः स्वर्गवासो नास्ति यस्य स्मृतिस्तव।
त्वत्पदध्यानयुक्तस्य यत् तत् स्थानञ्च तत्परम् ॥ ७६
क्षणं वा कोटिकल्पं वा पुरुषायुश्च यस्तथा।
यदि त्वत्सेवया याति सफलो निष्फलोऽन्यथा ॥ ७७
तेषाञ्चायुःक्षयो नास्ति ये त्वत्पादाब्जसेवकाः।
न सन्ति जन्म-मरणरोग-शोकार्त्ति-भीतयः ॥ ७८
इन्द्रत्वे चामरत्वे वा ब्रह्मत्वे चातिदुर्लभे।
वाञ्छा नास्त्येव भक्तानां त्वत्पादसेवनं विना ॥ ७९
सुजीर्णपटखण्डस्य समं तन्न्यूनमेव वा।

पश्यन्ति भक्ताः किञ्चान्यत् सालोक्यादिचतुष्टयम् ॥८०
सम्प्राप्य लब्धनं ब्रह्मानन्दाद्दयावदेव हि (क)।
तावत् लज्जावनेनैव लद्वर्णोऽहमनुग्रहात् ॥ ८१
माञ्च भक्तमपक्वं वा विज्ञाय गरुड़ः स्वयम्।
देशाद्दूरञ्च न्यक्कारं चकार दृढ़भक्तिमान् ॥ ८२
भवता च दृढ़ा भक्तिर्दत्ता मे वरदेश्वर।
स च सक्तश्च भक्तोऽहं न मां भोक्तुं क्षमोऽधुना ॥ ८३
त्वत्पादपद्मचिह्नाक्तं दृष्ट्वा श्रीमस्तकं मम।
सन्दोषं गुणयुक्तं मां सोऽधुना त्यक्तुमर्हति ॥ ८४
मम वाध्याश्च नागेन्द्रा न तद्वध्योऽहमीश्वर।
भयं न केभ्यः सर्व्वत्र तमनन्तं गुरुं विना ॥ ८५
यं देवेन्द्राश्च देवाश्च मुनयो मनवो नराः।
स्वप्ने ध्याने न पश्यन्ति चक्षुषोर्गोचरः स मे ॥ ८६
भक्तानुरोधात् साकारः कुतस्ते विग्रहो विभो।
सगुणस्त्वञ्च साकारो निराकारश्च निर्गुणः ॥ ८७
स्वेच्छामयः सर्व्वधाम सर्व्ववीजं सनातनः।
सर्व्वेषामीश्वरः साक्षी सर्व्वात्मा सर्व्वरूपधृक् ॥ ८८
ब्रह्मेश-शेष-धर्म्मेन्द्रा वेदवेदाङ्गपारगाः।
स्तोतुं यमीशं ते जाड्याः सर्पः स्तोष्यति तं विभुम् ॥८९
हे नाथ करुणासिन्धो दीनबन्धो क्षमाधमम्।
खलस्वभावादज्ञानाद्ग्रस्तस्त्वं चर्व्वितो मया ॥ ९०
नास्त्यस्मो यथाकाशो न दृश्यश्चाप्यलङ्घकः।
दुष्प्रेक्ष्यो हि न चावर्थ्यस्तथा तेजस्त्वमेव च ॥ ९१
इत्येवमुक्त्वा नागेन्द्रः पपात चरणाम्बुजे।
ओमित्युक्त्वा हरिस्तुष्टः सर्व्वं तस्मै वरं ददौ ॥ ९२
नागराजकृतं स्तोत्रं प्रातरुत्थाय यः पठेत्।
तद्वंशजानां तस्यापि नागेभ्यो न भयं भवेत् ॥ ९३
स नागशय्यां कृत्वैव स्वप्नुं शक्तः सदा भुवि।
विषपीयूषयोर्भेदो नास्त्येव तस्य सद्गृहे ॥ ९४
नागग्रस्ते नागघाते प्राणान्ते विषभोजनात्।
स्तोत्रश्रवणमात्रेण सुस्थो भवति मानवः ॥ ९५
भूर्ज्जे कृत्वा स्तोत्रमिदं कण्ठे वा दक्षिणे करे।
बिभर्त्ति यो भक्तियुक्तो न नागेभ्योऽपि तद्भयम् ॥९६
यत्र गेहे स्तोत्रमिदं नागस्तत्रैव तिष्ठति।
विषाग्निवज्रभीतिश्च न भवेत् तत्र निश्चितम् ॥ ९७

इह लोके हरौ भक्तिं स्मृतिञ्च सततं लभेत्।
अन्ते च स्वकुलं पूत्वा दास्यञ्च लभते ध्रुवम् ॥ ९८
इति श्रीब्रह्मवैवर्त्ते कालीयकृतं श्रीकृष्णस्तोत्रम्।

नारायण उवाच।

नागेन्द्राय वरं दत्त्वा पुनस्तं जगदीश्वरः।
उवाच मधुरं वाक्यं परिणामसुखावहम् ॥ ९९

श्रीकृष्ण उवाच

गच्छ वत्स रमणकं यथेन्द्रनगरं परम्।
सार्द्धं स्वगोष्ठ्या नागेन्द्र यमुनाजलवर्त्मना ॥ १००
श्रुत्वा नागो हरेर्वाक्यं रुरोद प्रेमविह्वलः।
कदा द्रक्ष्यामि त्वत्पाद-पद्मं नाथेत्युवाच ह ॥ १०१
प्रणम्य शतकृत्वश्च स्त्रिया गोष्ठ्या महेश्वरम्।
जगाम जलमार्गेण कालीयो विरहातुरः ॥ १०२
यमुनाह्रदतोयञ्च बभूवामृतकल्पकम्।
प्रसन्ना जन्तवः सर्व्वे बभूवुस्तत्र नारद ॥ १०३
गत्वा ददर्श भवनं यथेन्द्रनगरं परम्।
आज्ञया च कृपासिन्धोर्निर्म्मितं विश्वकर्म्मणा ॥ १०४
तत्र तस्थौ च नागेन्द्रः स्त्रिया पुत्त्रैर्गणैः सह।
निःशङ्को हर्षयुक्तश्च हरिभावनतत्परः ॥ १०५
इत्येवं कथितं वत्स हरेश्चरितमद्भुतम्।
सुखदं मोक्षदं सारं परं किं श्रोतुमिच्छसि ॥ १०६

सूत उवाच।

महर्षिवचनं श्रुत्वा नारदो हर्षविह्वलः।
ऋषिं पप्रच्छ सन्देहं सर्व्वसन्देहभञ्जनम् ॥ १०७

नारद उवाच।

कथं विहाय कालीयः स्वपूर्व्वभवनं परम्।
जगाम यमुनातीरं तन्मे ब्रूहि जगद्गुरो ॥ १०८

नारायण उवाच।

शृणु नारद वक्ष्येऽहमितिहासं पुरातनम्।
पुरा श्रुतं धर्म्मवक्त्रात्मलये सूर्य्यपर्व्वणि ॥ १०९
कृष्णाख्यानप्रसङ्गेन सुप्रभापश्चिमे तटे।
पप्रच्छ धर्म्मं पुलहः कथितुं मुनिसंसदि ॥ ११०
इदमाख्यानमाश्चर्य्यमुवाच तं कृपानिधिः।
तत्र श्रुतं मया ब्रह्मन् निबोध कथयामि ते ॥ १११
शेषाज्ञया नागगणाः प्रतिसंवत्सरं भिया।
कार्त्तिकीपूर्णिमायान्तु करोति गरुड़ार्च्चनम् ॥ ११२
पुष्पैर्धूपैश्च दीपैश्च नैवेद्यैर्बलिभिस्तथा।

(क) "सम्प्राप्तस्त्वमनुग्रहं ब्रह्मानन्दाद्दयावदेव हि" इति क्वाचित्कः पाठोऽत्र सङ्गच्छतेतराम्।

पुष्करे च महातीर्थे सुस्नाता भक्तिसंयुताः ॥ ११३
तस्य पूजाञ्च कालीयो न करोत्यत्यहङ्कृतः ।
नागः पूजोपकरणं बलाद्भक्षितुमुद्यतः ॥ ११४
चक्रुर्निवारणं नागा नीतिसूचमदीरितम् ।
न शक्ता वारणे ते चेदाविर्भूतः खगेश्वरः ॥ ११५
दृष्ट्वा खगेश्वरं नागाः कालीयप्राणरक्षया ।
प्राणशक्त्या च युयुधुर्यावत् सूर्य्योदयं मुने ॥ ११६
पक्षीन्द्रतेजसा सर्व्वे समुद्विग्नाः पलायिताः ।
अनन्तं शरणं जग्मुः सर्व्वेषामभयप्रदम् ॥ ११७
पलायनपरान् दृष्ट्वा नागांश्च करुणानिधिः ।
तत्र तस्थौ स निःशङ्कः कालीयस्तं ददर्श ह ॥ ११८
स्मृत्वा हरिपदाम्भोजं कालीयो युयुधे रणे ।
मुहूर्त्तञ्च तयोर्युद्धं बभूवातीवदारुणम् ॥ ११९
पराजितश्च नागेन्द्रः खगेन्द्रतेजसा ततः ।
भिया पलायनं कृत्वा जगाम यमुनाह्रदम् ॥ १२०
न तं सौभरिशापेन खगेन्द्रो गन्तुमीश्वरः ।
तत्र तस्थुर्भिया नागा जग्मुः पश्चाच्च तद्गणाः ॥१२१

नारद उवाच ।

कथं तं सौभरेः शापो बभूव गरुडं मुने ।
कथं न शक्तो गन्तुं त ह्रदमीश्वरवाहनः ॥ १२२

नारायण उवाच ।

दिव्यं शतसहस्रञ्च वर्षाणां तत्र सौभरिः ।
तपस्तप्त्वा महासिद्धो दध्यौ कृष्णपदाम्बुजम् ॥ १२३
समीपे ध्यानमानस्य शकुलो यमुनाजले ।
गणेन सार्द्धं निःशङ्कः करोति भ्रमणं मुदा ॥ १२४
पुच्छमुत्तोल्य बहुधा परितः परसेच्छया ।
मुनिं प्रदक्षिणीकृत्य यात्यायाति मुदान्वितः ॥ १२५
शकुलं सुमहापीनं दृष्ट्वा दृष्ट्वा खगाधिपः ।
जग्राह चञ्च्वा तूर्णञ्च मुनीन्द्रस्य समीपतः ॥ १२६
गच्छन्तं तं मीनमुखं दृष्ट्वा कोपचक्षुषा ।
शशाप मुनिर्दृष्ट्वा मीनस्तोये पपात ह ॥ १२७
तमुवाच मुनीन्द्रश्च पुनरादातुमुद्यतम् ।
मीनश्च गरुडत्रासात् तस्थौ मुनिसमीपतः ॥ १२८

सौभरिरुवाच ।

गच्छ दूरं गच्छ दूरं खगेन्द्र मत्समीपतः ।
का योग्यता मत्पुरस्ते ग्रहीतुं जीवमुल्बणम् ॥ १२९
श्रीकृष्णवाहनं ज्ञात्वा चात्मानं बहु मन्यसे ।
लङ्घितान् कोटिशः कृष्णः शक्तः स्रष्टुञ्च वाहनान् १३०
करोमि भस्मसात् तूर्णं त्वाञ्च भ्रूभङ्गलीलया ।
वाहनश्च लमीशस्य न वयं तस्य किङ्कराः ॥ १३१
अद्यप्रभृति पक्षीन्द्र यद्यागच्छसि मे ह्रदम् ।
मदीयशापात् तूर्णञ्च भस्मसाद्भविता ध्रुवम् ॥ १३२
मुनीन्द्रस्य वचः श्रुत्वा प्रचकम्पे खगेश्वरः ।
स्मारं स्मारं कृष्णपादं तं प्रणम्य जगाम ह ॥ १३३
ततः प्रभृति विप्रेन्द्र पतगेन्द्रस्य सन्ततम् ।
ह्रदस्य श्रुतिमात्रेण कम्पो भवति निश्चितम् ॥ १३४
इतिहासश्च कथितो यच्छ्रुतो धर्म्मवक्त्रतः ।
रहस्यञ्च श्रुतिसुखं प्रकृतं शृणु मङ्गलम् ॥ १३५
विज्ञाय सुचिरं बाला नोत्तस्थौ तज्जलाद्धरिः ।
चक्रुर्विषादं मोहाच्च रुरुदुर्यमुनातटे ॥ १३६
स्ववक्षोहातनं चक्रुः केचिद्बालाः शुचाकुलाः ।
केचिन्निपतिता भूमौ मूर्च्छामापुर्हरिं विना ॥ १३७
ह्रदं प्रवेष्टुं केचिच्च विरहेण समुद्यताः ।
केचिद्गोपालबालाश्च कुर्व्वन्तस्तन्निवारणम् ॥ १३८
कृत्वा विलापं केचित् तु प्राणांस्त्यक्तुं समुद्यताः ।
तान् केचिज्ज्ञातवन्तश्च रक्षां चक्रुः प्रयत्नतः ॥१३९
केचिदूचुश्च हा हेति कृष्ण कृष्णेति केचन ।
केचिज्ज्ञातुं प्रवृत्तिञ्च प्रययुर्नन्दसन्निधिम् ॥ १४०
केचित् सम्मिलितास्तत्र शोकमोहभयातुराः ।
इत्यूचुः किं करिष्यामः कुतोऽस्माकं गतो हरिः॥१४१
हे नन्दसूनो हे कृष्ण प्राणानामधिकप्रिय ।
हे बन्धो दर्शनं देहीत्यूचुः प्राणाः प्रयान्ति नः ॥१४२
एतस्मिन्नन्तरे केचिद्बालका नन्दसन्निधिम् ।
सम्प्रापुरतिलोलाश्च रुदन्तो भयविह्वलाः ॥
प्रवृत्तिमूचुस्तं शीघ्रं यशोदाम्भूकतो बलम् ॥ १४३
गोपाला गोपिकाश्चैव रक्तपङ्कजलोचनाः ।
श्रुत्वा वार्त्ताञ्च ते सर्व्वे शीघ्रं जग्मुः शुचान्विताः॥१४४
कालिन्दनन्दिनीतीरं रुदद्भिर्बालकैर्युतम् ।
गत्वा सम्मिलिताः सर्व्वे रुरुदुः शोकमूर्च्छिताः ॥१४५
ह्रदं विशन्ति केचिच्च केचिच्चक्रुर्निवारणम् ।
गोपा गोपालिकाश्चैव जघ्नुरङ्गानि शोकतः ॥ १४६
केचिद्विलपुस्तत्र मूर्च्छामापुश्च काश्चन ॥ १४७
ह्रदं विशन्तीं तां राधां वारयामासुरेव ते ।
मूर्च्छां सम्प्राप सा शोकात्मृता इव सरित्तटे ॥ १४८

विलप्यातिभृशं नन्दो मूर्च्छां प्राप पुनः पुनः।
भूयोऽपि रोदनं कृत्वा भूयो मूर्च्छां जगाम ह॥१४९
विलपन्तं भृशं नन्दं यशोदां शोकमूर्च्छिताम्।
रुदतो बालकान् दृष्ट्वा बालिकाश्च शुचान्विताः।
सर्व्वांश्च बोधयामास बलश्च ज्ञानिनां वरः॥ १५०

बलदेव उवाच।

गोपा गोपालिका बालाः सर्व्वे शृखन्तु मद्वचः।
हे नन्द ज्ञानिनां श्रेष्ठ गर्गवाक्यस्मृतिं कुरु॥१५१
जगद्विभर्त्तुः शेषस्य संहर्त्तुः शङ्करस्य च।
स्वयं विधातुर्जगतामीश्वरस्य कुतो विपत्॥ १५२
विवरेषु च लोम्नाञ्च यस्य ब्रह्माण्डसंहतिः।
तस्येशस्य महाविष्णोः श्रीकृष्णस्य कुतो भयम्॥१५३
कालान्तकस्यान्तकस्य मृत्योर्मृत्योरथात्मनः।
विधातुः संविधातुश्च भुवि कस्मात् पराजयः॥ १५४
परमाणुपरोऽनूहः स्थूलात् स्थूलतरः परः।
विद्यमानोऽप्यदृश्यश्च हृदिस्थो योगिनामपि॥ १५५
द्विशां नास्ति समाहारः दृश्यो नाकार एव च।
नापि राधेश्वरो बाध्य इत्यूचुः श्रुतयः स्फुटम्॥ १५६
नात्मा दृश्यो नाख्यलक्षो न वध्यो न हि नाशकः।
न हि दाह्यो न हिंस्यश्चापीदमाध्यात्मिका विदुः१५७
विग्रहोऽस्यैव कृष्णस्य भक्तध्यानार्थमेव च।
ज्योतिःस्वरूपस्य विभोर्नाद्यन्तमध्यमात्मनः॥ १५८
जलप्लुते च ब्रह्माण्डे जलशायी जनार्द्दनः।
यन्नाभिपद्मजो ब्रह्मा तस्येशस्य क्व रे विपत्॥ १५९
मशकश्च क्षमो ग्रस्तुं ब्रह्माण्डमखिलं पितः।
न तथापि मदीशं तं ग्रस्तुं सर्पः क्षमो भवेत्॥१६०
इत्येवं कथितं सर्व्वमाध्यात्मिकमनुत्तमम्।
निगूढं योगिनां सारं संशयच्छेदकारणम्॥ १६१
बलदेववचः श्रुत्वा गर्गवाक्यमनुस्मरन्।
तत्याज शोकं नन्दश्च व्रजाश्च व्रजयोषितः॥ १६२
प्रबोधं मेनिरे सर्व्वे न यशोदा न राधिका।
कृष्णविच्छेदसमये प्रबोधे न स्थिरं मनः॥ १६३
एतस्मिन्नन्तरे कृष्णमुत्पतन्तं जलान्मुने।
ददृशुः सुप्रसन्नाश्च व्रजाश्च व्रजयोषितः॥ १६४
शरत्पार्व्वणचन्द्रास्यं सस्मितं सुमनोहरम्।
अग्निशुद्धवस्त्रमस्निग्ध-मलुप्तचन्दनाञ्जनम्॥ १६५
सर्व्वाभरणसंयुक्तं ज्वलन्तं ब्रह्मतेजसा।
मयूरपुच्छचूडञ्च वंशीवदनमच्युतम्॥ १६६
यशोदा बालकं दृष्ट्वा कृत्वा वक्षसि सस्मिता।
चुचुम्ब वदनाम्भोजं प्रसन्नवदनेक्षणा॥ १६७
क्रोड़े चकार नन्दश्च बलश्च रोहिणी मुदा।
निमेषरहिताः सर्व्वे ददृशुः श्रीहरेर्मुखम्॥ १६८
प्रेमान्धा बालकाः सर्व्वे चक्रुरालिङ्गनं हरेः।
पपुश्चक्षुश्चकोरैश्च मुखचन्द्रञ्च गोपिकाः॥ १६९
एतस्मिन्नन्तरे तत्र सहसा काननान्तरम्।
दावाग्निर्वेष्टयामास तैः सर्व्वैः सह गोकुलम्॥ १७०
दृष्ट्वा शैलप्रमाणाग्निं परितः काननान्तरे।
प्रमादं मेनिरे सर्व्वे भयमापुश्च सङ्कटे॥ १७१
श्रीकृष्णं तुष्टुवुः सर्व्वे सम्पुटाञ्जलयो व्रजाः।
बाला गोप्यश्च सन्त्रस्ता भक्तिनम्रात्मकन्धराः॥ १७२

सर्व्वे ऊचुः।

यथा संरक्षितं ब्रह्मन् सर्व्वापत्स्वेव नः कुलम्।
तथा रक्षां कुरु पुनर्दावाग्नेर्मधुसूदन॥ १७३
त्वमिष्टदेवतास्माकं त्वमेव कुलदेवता।
वह्निर्वा वरुणो वापि चन्द्रो वा सूर्य्य एव वा॥१७४
यमः कुबेरः पवन ईशानाद्याश्च देवताः।
ब्रह्मेश-शेष-धर्म्माद्या मुनीन्द्रा मनवः स्मृताः॥ १७५
मानवाश्च तथा दैत्या यक्षराक्षसकिन्नराः।
ये ये चराचराश्चैव सर्व्वे तव विभूतयः॥ १७६
स्रष्टा पाता च संहर्त्ता जगताञ्च जगत्पते।
आविर्भावस्तिरोभावः सर्व्वेषाञ्च तवेच्छया॥ १७७
अभयं देहि गोविन्द वह्निसंहरणं कुरु।
वयं त्वां शरणं यामो रक्ष नः शरणागतान्॥ १७८
इत्येवमुक्त्वा ते सर्व्वे तस्थुर्ध्यात्वा पदाम्बुजम्।
दूरीकृतश्च दावाग्निः श्रीकृष्णामृतदृष्टितः॥ १७९
दूरीभूतेऽत्र दावाग्नौ विपत्तौ प्राणसङ्कटे।
स्तोत्रमेतत् पठित्वा च मुच्यते नात्र संशयः॥ १८०
शत्रुसैन्यं क्षयं याति सर्व्वत्र विजयी भवेत्।
इह लोके हरेर्भक्तिमन्ते दास्यं लभेद्ध्रुवम्॥ १८१
इति श्रीब्रह्मवैवर्त्ते श्रीकृष्णस्तोत्रं समाप्तम्।

नारायण उवाच।

दावाग्निमोचनं कृत्वा तैः सर्व्वैः सह नारद।
जगाम श्रीहरिर्गेहं कुबेरभवनोपमम्॥ १८२
ब्राह्मणेभ्यो धनं नन्दः परिपूर्णतमं ददौ।

भोजनं कारयामास ज्ञातिवर्गांश्च बान्धवान् ॥ १८३
नानाविधं मङ्गलञ्च हरेर्नामानुकीर्त्तनम्।
वेदांश्च पाठयामास विप्रद्वारा मुदान्वितः ॥ १८४
एवं सुमुदिते सर्व्वे वृन्दारण्ये गृहे गृहे।
श्रीकृष्णचरणाम्भोजे ध्यानैकतानमानसाः ॥ १८५
इत्येवं कथितं सर्व्वं हरेश्चरितमङ्गलम्।
कलिकिल्बिषकाष्ठानां दाहने दहनोपमम् ॥ १८६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे दावाग्नि-मोक्षणमेकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः।

नारायण उवाच।

एकदा बालकैः सार्द्धं बलेन सह माधवः।
भुक्त्वा पीतानुलिप्तश्च वृन्दारण्यं जगाम ह ॥ १
क्रीड़ां चकार भगवान् कौतुकेन च तैः सह।
क्रीड़ानिमग्नचित्तानां दूरं तद्गोकुलं ययौ ॥ २
तस्य प्रभावं विज्ञातुं विधाता जगतां पतिः।
चकारापह्नवं गाश्च वत्सांश्च बालकानपि ॥ ३
विज्ञाय तदभिप्रायं सर्व्वज्ञः सर्व्वकारकः।
पुनश्चकार तत् सर्व्वं योगीन्द्रो योगमायया ॥ ४
जगाम श्रीहरिर्गेहं चारयित्वा तु गोकुलम्।
बलेन बालकैः सार्द्धं क्रीड़ाकौतुकमानसः ॥ ५
एवं चकार भगवान् वर्षमेकञ्च प्रत्यहम्।
गमनागमनं गोभिर्बलेन बालकैः सह ॥ ६
ब्रह्मा प्रभावं विज्ञाय लज्जानम्रात्मकन्धरः।
आजगाम हरेः स्थानं भाण्डीरवटमूलकम् ॥ ७
ददर्श कृष्णं तत्रैव गोपालगणवेष्टितम्।
यथा पार्व्वणचन्द्रञ्च विभान्तं भगणैः सह ॥ ८
रत्नसिंहासनस्थञ्च वसन्तं सस्मितं मुदा।
पीतवस्त्रपरीधानं ज्वलन्तं ब्रह्मतेजसा ॥ ९
रत्न-केयूर-वलय-रत्नमञ्जीररञ्जितम्।
रत्नकुण्डलयुग्माभ्यां सुकपोलस्थलोज्ज्वलम् ॥ १०
कोटिकन्दर्पलावण्य-लीलाधाम मनोहरम्।
चन्दनागुरुकस्तूरी-कुङ्कुमार्च्चितविग्रहम् ॥ ११
पारिजातप्रसूनानां मालाजालैर्विराजितम्।
मालतीमाल्यसंयुक्त-मयूरपुच्छचूड़कम् ॥ १२
स्वाङ्गसौन्दर्य्यदीप्त्या च कृतभूषितभूषणम्।
नवीननीरदश्यामं प्रोद्भिन्ननवयौवनम् ॥ १३
शरत्पार्व्वणचन्द्रस्य प्रभामुष्टास्यसुन्दरम्।
पक्वबिम्बाधरौष्ठञ्च खगेन्द्रचञ्चुनासिकम् ॥ १४
शरन्मध्याह्नपद्मानां प्रभामोचनलोचनम्।
मुक्तापङ्क्तिविनिन्दैक-दन्तपङ्क्तिमनोहरम् ॥ १५
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम्।
शान्तञ्च राधिकाकान्तं परिपूर्णतमं परम् ॥ १६
एवम्भूतं प्रभुं दृष्ट्वा प्रणनामातिविस्मितः।
दृश्यं दृश्यमीश्वरं तं प्रणनाम पुनः पुनः ॥ १७
यद्दृष्टं हृदयाम्भोजे तद्रूपं बहिरेव च।
या मूर्त्तिः पुरतो दृष्टा सा पश्चात् परितस्ततः ॥१८
तत्र वृन्दावने सर्व्वं दृष्ट्वा कृष्णमयं मुने।
ध्यायं ध्यायञ्च तद्रूपं तत्र तस्थौ जगद्विधिः ॥ १९
गावो वत्साश्च बालाश्च लतागुल्माश्च वीरुधः।
सर्व्वं वृन्दावनं ब्रह्मा श्यामरूपं ददर्श ह ॥ २०
दृष्ट्वैवं परमाश्चर्य्यं पुनर्ध्यानं चकार ह।
ददर्श त्रिजगद्ब्रह्मा नान्यत् कृष्णं विना मुने ॥ २१
क्व च वृक्षः क्व वा शैलः क्व मही क्व च सागराः।
क्व देवाः क्व च गन्धर्व्वाः क्व मुनीन्द्राः क्व मानवाः॥२२
क्व चात्मा क्व जगद्बीजं क्व स्वर्गो गाव एव च।
सर्व्वञ्च सदृशं ब्रह्मा ददर्श मायया हरेः ॥ २३
कः कृष्णो जगतां नाथः का वा मायाविभूतयः।
सर्व्वं कृष्णमयं दृष्ट्वा किञ्चिन्निर्व्वक्तुमक्षमः ॥ २४
कं स्तौमि किं करोमीति मनसैवं प्रकल्प्य च।
तत्र स्थित्वा जगद्धाता जपं कर्त्तुं समुद्यतः ॥ २५
सुखं योगासनं कृत्वा बभूव सम्पुटाञ्जलिः।
पुलकाञ्चितसर्व्वाङ्गः साश्रुनेत्रोऽतिदीनवत् ॥ २६
ईड़ां सुषुम्नां मेध्याञ्च पिङ्गलां नलिनीं ध्रुवाम्।
नाड़ीषट्कञ्च योगेन निबध्य च प्रयत्नतः ॥ २७
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम्।
विशुद्धं परमाज्ञाख्यं षट्चक्रञ्च निबध्य च ॥ २८
लङ्घनं कारयित्वा च तत् षट्चक्रं क्रमाद्विधिः।
ब्रह्मरन्ध्रं समानीय वायुपूर्णं चकार ह ॥ २९
निबध्य वायुं मेध्यां तां समानीय हृदम्बुजम्।
तं वायुं भ्रामयित्वा च योजयामास मेध्यया ॥ ३०

एवं कृत्वा तु निष्पन्नो यो दत्तो हरिणा पुरा।
जजाप परमं मन्त्रं तं तस्यैकाद्‌शाक्षरम् ॥ ३१
सुहूर्त्तञ्च जपं कृत्वा ध्यायं ध्यायं पदाम्बुजम्।
ददर्श हृदयाम्भोजे सर्व्वं तेजोमयं मुने ॥ ३२
तत्तेजसोऽन्तरे रूपमतीव सुमनोहरम्।
द्विभुजं मुरलीहस्तं भूषितं पीतवाससा ॥ ३३
श्रुतिमूलसुविन्यस्त-ज्वलन्मकरकुण्डलम्।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम्।
नवीनजलदाकार-श्यामसुन्दरविग्रहम् ॥ ३४
स्थितं जन्तुषु सर्व्वेषु निर्लिप्तं साक्षिरूपिणम्।
आत्मारामं पूर्णकामं जगद्व्यापि जगत्परम् ॥ ३५
सर्व्वस्वरूपं सर्व्वेषां वीजरूपं सनातनम्।
सर्व्वाधारं सर्व्ववरं सर्व्वशक्तिसमन्वितम् ॥ ३६
सर्व्वाराध्यं सर्व्वगुरुं सर्व्वमङ्गलकारणम्।
सर्व्वमन्त्रस्वरूपञ्च सर्व्वसम्पत्करं वरम् ॥ ३७
यद्दृष्टं ब्रह्मरन्ध्रे च हृदि तद्बहिरेव च।
दृष्ट्वा च परमाश्चर्य्यं तुष्टाव परमेश्वरम् ॥ ३८
यत् स्तोत्रञ्च पुरा दत्तं हरिणैकार्णवे मुने।
नमीशं तेन विधिना भक्तिनम्रात्मकन्धरः ॥ ३९

ब्रह्मोवाच।

सर्व्वस्वरूपं सर्व्वेशं सर्व्वकारणकारणम्।
सर्व्वानिर्व्वचनीयं तं नमामि शिशुरूपिणम् ॥ ४०
शक्तीशं शक्तिवीजञ्च शक्तिरूपधरं परम्।
शक्तियुक्तमयुक्तञ्च स्तौमि स्वेच्छामयं विभुम् ॥ ४१
संसारसागरे घोरे शक्तिनौकासमन्वितम्।
कृपानिधिं कर्णधारं नमामि भक्तवत्सलम् ॥ ४२
आत्मस्वरूपमेकान्तं लिप्तं निर्लिप्तमेव च।
सगुणं निर्गुणं ब्रह्म स्तौमि स्वेच्छास्वरूपिणम् ॥ ४३
सर्व्वेन्द्रियाधिदेवं तमिन्द्रियालयमेव च।
सर्व्वेन्द्रियस्वरूपञ्च विराड्रूपं नमाम्यहम् ॥ ४४
वेदञ्च वेदजनकं सर्व्ववेदाङ्गरूपिणम्।
सर्व्वमन्त्रस्वरूपञ्च नमामि परमेश्वरम् ॥ ४५
सारात् सारतरं द्रव्यमपूर्व्वमनिरूपितम्।
स्वतन्त्रमस्वतन्त्रञ्च यशोदानन्दनं भजे ॥ ४६
सान्तं सर्व्वशरीरेषु तमदृष्टमनूहकम्।
ध्यानासाध्यं विद्यमानं योगीन्द्राणां गुरुं भजे ॥ ४७
रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम्।
गोपीभिः सेव्यमानञ्च तं राधेशं नमाम्यहम् ॥ ४८
सतां सदैव सन्तं तमसन्तमसतामपि।
योगीशं योगिनां योगं नमामि शिवसेवितम् ॥ ४९
मन्त्रवीजं मन्त्रराजं मन्त्रदं फलदं फलम्।
मन्त्रसिद्धिस्वरूपं तं नमामि च परात्परम् ॥ ५०
सुखं दुःखञ्च सुखदं दुःखदं पुण्यमेव च।
पुण्यदं शुभदञ्चैव शुभवीजं नमाम्यहम् ॥ ५१
इत्येवं स्तवनं कृत्वा दत्त्वा गोवत्स-बालकान्।
निपत्य दण्डवद्भूमौ रुरोद प्रणनाम च ॥ ५२
ददर्श चक्षुरुन्मील्य विधाता जगतां मुने।
भाण्डीरवटमूलस्थं रत्नसिंहासनस्थितम् ॥ ५३
वेष्टितं सर्व्वगोपालैरेकमेव मनोहरम्।
पुनः प्रणम्य तं ब्रह्मा ब्रह्मलोकं ययौ स्वयम् ॥ ५४
ब्रह्मणा च कृतं स्तोत्रं नित्यं भक्त्या च यः पठेत्।
इह लोके सुखं भुक्त्वा यात्यन्ते श्रीहरेः पदम् ॥ ५५
लभते दास्यमतुलं स्थानमीश्वरसन्निधौ।
लब्ध्वा च कृष्णसारूप्यं पार्षदप्रवरो भवेत् ॥ ५६
इति ब्रह्मवैवर्त्ते ब्रह्मकृतं श्रीकृष्णस्तोत्रं समाप्तम्।

नारायण उवाच।

गते जगत्कारणे च ब्रह्मलोकञ्च ब्रह्मणि।
श्रीकृष्णो बालकैः सार्द्धं जगाम स्वालयं विभुः ॥ ५७
गावो वत्साश्च बालाश्च जग्मुर्वर्षान्तरे गृहम्।
श्रीकृष्णमायया सर्व्वे मेनिरे ते दिनान्तरम् ॥ ५८
गोपा गोपालिकाः किञ्चित् तर्कितुं न क्षमास्तदा।
योगिनां कृत्रिमं सर्व्वं किं नूतं वा पुरातनम् ॥ ५९
इत्येवं कथितं विप्र श्रीकृष्णचरितं शुभम्।
सुखदं मोक्षदं पुण्यं सर्व्वकालसुखावहम् ॥ ६०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे गोवत्स-हरणं नाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः।

नारायण उवाच।

एकदानन्दयुक्ताश्च नन्दगोपो व्रजे मुने।
दुन्दुभिं वादयामास शक्रयागकृतोद्यमः ॥ १
दधि क्षीरं घृतं तक्रं नवनीतं गुड़ं मधु।

एतान्यादाय शक्रस्य पूजां कुर्व्वन्त्विति ब्रुवन् ॥ २
ये ये सन्त्यत्र नगरे गोपा गोप्यश्च बालकाः ।
बालिकाश्च द्विजा भूपा वैश्याः शूद्राश्च भक्तितः ॥ ३
इत्येवं श्रावयित्वा च स्वयमेव मुदान्वितः ।
यष्टिमारोपयामास-रम्यस्थाने सुविस्तृते ॥ ४
ददौ तत्र क्षौमवस्त्रं माल्याजालं मनोहरम् ।
चन्दनागुरुकस्तूरी-कुङ्कुमद्रवमेव च ॥ ५
स्नातः कृताह्निको भक्त्या धृत्वा धौते च वाससी ।
उवास स्वर्णपीठे स प्रक्षालितपदाम्बुजः ॥ ६
नानाप्रकारपात्रैश्च ब्राह्मणैश्च पुरोहितैः ।
गोपालैर्गोपिकाभिश्च बालाभिः सह बालकैः ॥ ७
एतस्मिन्नन्तरे तत्राजग्मुर्नगरवासिनः ।
महत्सम्भृतसम्भारा नानोपायनसंयुताः ॥ ८
आजग्मुर्मुनयः सर्व्वे ज्वलन्तो ब्रह्मतेजसा ।
शान्ताः शिष्यगणैः सार्द्धं वेदवेदाङ्गपारगाः ॥ ९
गर्गश्च गालवश्चैव शाकल्यः शाकटायनः ।
गौतमः कश्यपः कण्वो वात्स्यः कात्यायनस्तथा ॥१०
सौभरिर्वामदेवश्च याज्ञवल्क्यश्च पाणिनिः ।
ऋष्यशृङ्गो गौरमुखो भरद्वाजश्च वामनः ॥ ११
कृष्णद्वैपायनः शृङ्गी सुमन्तुर्जैमिनिः कठः ।
पराशरश्च मैत्रेयो वैशम्पायन एव च ॥ १२
ब्राह्मणाश्च कतिविधा भिक्षुका वन्दिनस्तथा ।
भूपा वैश्याश्च शूद्राश्च समाजग्मुर्महोत्सवे ॥ १३
दृष्ट्वा मुनीन्द्रान् नन्दश्च ब्राह्मणान् भूमिपांस्तथा ।
स्वर्णपीठात् समुत्तस्थौ प्रजाश्चोत्तस्थुरेव च ॥ १४
प्रणम्य वासयामास मुनीन्द्र-विप्र-भूमिपान् ।
तेषामनुमतिं प्राप्य तत्रोवास पुनर्मुदा ॥ १५
पाकञ्च यष्टिनिकटे कर्त्तुमाज्ञां चकार ह ।
पाकप्राज्ञब्राह्मणानां शतमानीय सादरात् ॥ १६
तत्र रत्नप्रदीपाश्च जज्वलुः परितः सदा ।
अन्धीभूतञ्च धूपेन स्थानं तत् सुरभीकृतम् ॥ १७
नानाविधानि पुष्पाणि माल्यानि विविधानि च ।
नैवेद्यञ्च बहुविधमपूर्व्वं सुमनोहरम् ॥ १८
तिललड्डुकपूर्णञ्च डल्लकानां सहस्रकम् ।
स्वस्तिकैः परिपूर्णञ्च डल्लकानां सहस्रकम् ।
कलसानां सहस्रञ्च पूर्णं शर्करया मुने ॥ १९
यवगोधूमचूर्णानां लड्डुकैर्मधुरैर्वरैः ।
घृतपक्वैर्विप्रकृतैः पूर्णानि कलसानि च ॥ २०
वृन्तपक्वानि रम्याणि चारुरम्भाफलानि च ।
फलानि परिपक्वानि कालदेशोद्भवानि च ॥ २१
क्षीराणां कुम्भलक्षाणि दध्नां तावन्ति नारद ।
मधूनां कुम्भशतकं सर्पिःकुम्भसहस्रकम् ॥ २२
कलसानाञ्च शतकं पूर्णञ्च नवनीतकैः ।
कलसानां त्रिलक्षाणि तक्रपूर्णानि निश्चितम् ॥ २३
घटानां पञ्चलक्षाणि गुड़पूर्णानि निश्चितम् ।
विष्णुतैलेन पूर्णञ्च कलसानां सहस्रकम् ॥ २४
वृषेन्द्राश्च बहुविधा भोगार्हद्रव्यवाहकाः ।
नानाविधानि वाद्यानि चारूणि मधुराणि च ॥ २५
वादकाः स्वरयन्त्राणि वादयामासुरुत्सवे ।
नानाविधानि पात्राणि सौवर्णराजतानि च ॥ २६
वस्त्राणि वरणार्हाणि चारूणि भूषणानि च ।
स्वर्णपीठानि च ब्रह्मन्नाजग्मुर्यष्टिसन्निधिम् ॥ २७
छागलानां सहस्राणि महिषाणां शतानि च ।
मेषकाणाञ्च लक्षाणि मायातीनाञ्च षोड़श ॥ २८
शतान्येव गण्डकानामाजग्मुर्यष्टिसन्निधिम् ।
प्रोक्षितानि च सर्व्वाणि रक्षितानि च रक्षकैः ॥ २९
बालकानां बालिकानां वृद्धानां वृद्धयोषिताम् ।
यूनाञ्च युवतीनाञ्च संख्यां कर्त्तुञ्च कः क्षमः ॥ ३०
गायकानाञ्च सङ्गीतं नर्त्तकानाञ्च नर्त्तनम् ।
श्रुत्वा दृष्ट्वा जनाः सर्व्वे सुमुहुः सुमहोत्सवे ॥ ३१
रम्भोर्व्वशी मेनका च घृताची मोहिनी रती ।
प्रभावती भानुमती विप्रचित्ती तिलोत्तमा ॥ ३२
चन्द्रप्रभा सुप्रभा च रत्नमाला मदालसा ।
रेणुका रमणी ब्रह्मन्नेता आजग्मुरुत्सवे ॥ ३३
तासां नृत्येन गीतेन स्तनास्यश्रोणिदर्शनात् ।
रूपेण वक्रदृष्ट्या च मूर्च्छामापुश्च मानवाः ॥ ३४
एतस्मिन्नन्तरे शीघ्रमाजगाम हरिः स्वयम् ।
गोपालबालकैः सार्द्धं बलेन बलशालिना ॥ ३५
दृष्ट्वा तञ्च जनाः सर्व्वे सम्भ्रमा हर्षविह्वलाः ।
उत्तस्थुरारादुत्थाताश्च पुलकाञ्चितविग्रहाः ॥ ३६
क्रीड़ास्थानात् समायान्तं शान्तं सुन्दरविग्रहम् ।
विनोदमुरली-वेणु-शृङ्गशब्दसमन्वितम् ॥ ३७
सद्रत्नसारभूषाभिर्भूषितं कौस्तुभेन च ।
चन्दनागुरुपङ्केण चर्च्चितं श्यामविग्रहम् ॥ ३८

शरन्मध्याह्नपद्मास्यं पश्यन्तं रत्नदर्पणे:।
चारुचन्द्रकचन्द्रेण कस्तूरीबिन्दुना सह।
शशाङ्केन यथाकाशं भालमध्ये विराजितम् ॥ ३९
मालतीमालया श्यामकण्ठवक्षःस्थलोज्ज्वलम्।
वकपङ्क्त्या यथाकाशं शारदीयं सुनिर्म्मलम् ॥ ४०
चारुणा पीतवस्त्रेण शोभितश्यामविग्रहम्।
विभान्तं विद्युता शश्वन्नवीननीरदं यथा ॥ ४१
कुन्दप्रसूनैर्गुञ्जाभिर्वेञ्जवह्निमचूडकम्।
यथेन्द्रधनुषा माता विभान्तं शरणेनभः ॥ ४२
रत्नकुण्डलदीप्त्या च क्षितवक्त्रं सुशोभितम्।
शरत्प्रफुल्लपद्मञ्च द्युमणेः किरणैर्यथा ॥ ४३
विप्र-क्षत्रिय-वैश्याय मुनयो वल्लवा मुदा।
प्रणम्य वासयामासु रत्नसिंहासने विभुम् ॥ ४४
उवास स्वर्णपीठे स तेषां मध्ये जगत्पतिः।
यथा वभौ शरच्चन्द्रो ज्योतिषामन्तरे च खे ॥ ४५
स्तुत्वा तम्मुनुस्ते सर्व्वे जगतामीश्वरं परम्।
स्वेच्छामयं गुणातीतं ज्योतीरूपं सनातनम् ॥ ४६
दृष्ट्वा महोत्सवं शीघ्रमुवाच पितरं हरिः।
विदुषां दुर्लभां नीतिं नीतिशास्त्रविशारदः ॥ ४७

श्रीकृष्ण उवाच।

भो भो वल्लवराजेन्द्र किं करोषीह सुव्रत।
आराध्यः कश्च का पूजा किं फलं पूजने भवेत् ॥ ४८
फलेन साधनं किं वा कः साध्यः साधनेन च।
देवे रुष्टे भवेत् किं वा पूजायाः प्रतिबन्धके ॥ ४९
तुष्टो देवः किं ददाति फलमत्र परत्र किम्।
काचिद्ददात्यत्र फलं परत्र नेह का च न ॥ ५०
काचिच्च नोभयत्रापि चोभयत्रापि काचन।
अवेदविहिता पूजा सर्व्वहानिकरण्डिका ॥ ५१
पूजेयमधुना वा ते किंसु वा पुरुषक्रमात्।
दृष्टो देवस्त्वया किंखित् पूजा यदनुसारिणी ॥ ५२
साक्षात् खादति देवस्ते साक्षात् किं वा न खादति
साक्षाद्भुङ्क्ते च यो देवः सुप्रशस्तं तदर्च्चनम् ॥ ५३
पृथिव्यां ब्राह्मणा देवा इति वेदैर्निरूपितम्।
सर्व्वेषां पूजनात् तात सुप्रशस्तं द्विजार्च्चनम् ॥ ५४
साक्षात् खादति नैवेद्यं विप्ररूपी जनार्द्दनः।
ब्राह्मणे परितुष्टे च सन्तुष्टाः सर्व्वदेवताः ॥ ५५
किं तस्य देवपूजायां यो नियुक्तो द्विजार्च्चने।
पूजिता ब्राह्मणा येन पूजिताः सर्व्वदेवताः ॥ ५६
देवाय दत्त्वा नैवेद्यं न दत्तं ब्राह्मणाय चेत्।
भस्मीभूतञ्च तद्द्रव्यं पूजनं निष्फलं भवेत् ॥ ५७
विप्राय देवनैवेद्यं दानाद्भवमनन्तकम्।
तुष्टो देवो वरं दत्त्वा प्रयाति च स्वमन्दिरम् ॥५८
दत्त्वा देवाय नैवेद्यं मूढो भुङ्क्ते स्वयं यदि।
दत्तापहारी देवस्वं भुक्त्वा च नरकं व्रजेत् ॥ ५९
देवदत्तं न भोक्तव्यं नैवेद्यञ्च विना हरेः।
प्रशस्तं सर्व्वदेवेषु विष्णोर्नैवेद्यभोजनम् ॥ ६०
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम्।
सर्व्वेषाञ्च क्रममिदं ब्राह्मणानां विशेषतः ॥ ६१
न दत्त्वा वस्तु देवाय दत्तं विप्राय चेत् सुधीः।
भुक्त्वा विप्रमुखे देवास्तुष्टाः स्वर्गं प्रयान्ति च ॥ ६२
तस्मात् सर्व्वप्रयत्नेन विप्राणामर्च्चनं कुरु।
प्रशस्तफलदातॄणामिह लोके परत्र च ॥ ६३
जपस्तपश्च पूजा वा यज्ञदानं महोत्सवः।
सर्व्वेषां कर्म्मणां सारो विप्रतुष्टिश्च दक्षिणा ॥ ६४
ब्राह्मणानां शरीरेषु तिष्ठन्ति सर्व्वदेवताः।
पादेषु सर्व्वतीर्थानि पुण्यानि पादधूलिषु ॥ ६५
पादोदकेषु विप्राणां तीर्थतोयानि सन्ति च।
तत्स्पर्शात् सर्व्वतीर्थेषु स्नानजन्यफलं भवेत् ॥ ६६
नश्यन्ति भक्षणाद्रोगा भक्तिभावेन वल्लव।
सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥ ६७
पापं पञ्चविधं कृत्वा यो विप्रं प्रणमेद्द्विजः।
स स्नातः सर्व्वतीर्थेषु सर्व्वपापात् प्रमुच्यते ॥ ६८
ब्राह्मणस्पर्शमात्रेण मुक्तो भवति पातकी।
दर्शनान्मुच्यते पापादिति वेदे निरूपितम् ॥ ६९
अशक्तो वाथ शक्तो वा ब्राह्मणो विष्णुविग्रहः।
विप्राः प्राणाधिका विष्णोर्ये विप्रा हरिसेविनः ॥ ७०
द्विजानां हरिभक्तानां प्रभावो दुर्लभः श्रुतौ।
येषां पादाब्जरजसा सद्यःपूता वसुन्धरा ॥ ७१
तेषाञ्च पादचिह्नं यत् तीर्थं तत् परिकीर्त्तितम्।
तेषाञ्च स्पर्शमात्रेण तीर्थपापं प्रणश्यति ॥ ७२
आलिङ्गनात् सदालापात् तेषामुच्छिष्टभोजनात्।
दर्शनात् स्पर्शनाच्चैव सर्व्वपापात् प्रमुच्यते ॥ ७३
भ्रमणे सर्व्वतीर्थानां यत् पुण्यं स्नानतो भवेत्।
हरिदासस्य विप्रस्य तत् पुण्यं दर्शनाल्लभेत् ॥ ७४

ये विप्रा हरये दत्त्वा नित्यमन्नञ्च भुञ्जते।
उच्छिष्टभोजनात् तेषां हरेर्दास्यं लभेन्नरः॥ ७५
न दत्त्वा हरये भक्त्या भुञ्जते च प्रमादपि।
पुरीषसदृशं वस्तु जलं मूत्रसमं भवेत्॥ ७६
भक्तहस्तगतं वस्तु तद्विष्णोरेव वल्लव।
अदत्त्वा हरये भुक्त्वा देवलभोजको भवेत्॥ ७७
शूद्रश्चेद्धरिभक्तश्च नैवेद्यभोजनोत्सुकः।
आमान्नं हरये दत्त्वा पाकं कृत्वा च खादति॥ ७८
विप्र-क्षत्रिय-वैश्यानां शालग्रामशिलार्च्चने।
अधिकारो न शूद्राणां हरेरेवार्च्चने तथा॥ ७९
द्रव्याण्येतानि गोपेन्द्र विप्रेभ्यश्चेन्न दास्यसि।
भस्मीभूतानि सर्व्वाणि भविष्यन्ति न संशयः॥ ८०
अन्नञ्च सर्व्वजीवेभ्यः पुण्यार्थं दातुमर्हसि।
दत्त्वा विशिष्टजीवेभ्यो विशिष्टं फलमाप्नुयात्॥ ८१
अतो दत्त्वा मानुषेभ्यो लभतेऽष्टगुणं फलम्।
ततो विशिष्टशूद्रेभ्यो दत्त्वा तद्द्विगुणं फलम्॥ ८२
दत्त्वान्नं वैश्यजातिभ्यस्ततश्चाष्टगुणं फलम्।
क्षत्रियेभ्योऽपि वैश्यानां दत्त्वान्नं द्विगुणं भवेत्॥ ८३
क्षत्रियाणां शतगुणं विप्रेभ्योऽन्नं प्रदाय च।
विप्राणाञ्च शतगुणं शास्त्रज्ञे ब्राह्मणे फलम्॥ ८४
शास्त्रज्ञानां शतगुणं भक्ते विप्रे लभेद्ध्रुवम्।
स चान्नं हरये दत्त्वा भुङ्क्ते भक्त्या च सादरम्॥ ८५
विष्णवे भक्तविप्राय दत्त्वा दातुश्च यत् फलम्।
तत् फलं लभते नूनं भक्तब्राह्मणभोजने॥ ८६
भक्ते तुष्टे हरिस्तुष्टो हरौ तुष्टे च देवताः।
भवन्ति सिक्ताः शाखाश्च यथा मूलनिषेचनात्॥ ८७
द्रव्याण्येतानि देवाय यद्येकस्मै प्रयच्छति।
सर्व्वे देवा वितुष्टाश्चेद्देवैकः किं करिष्यति॥ ८८
अथवा लक्ष वस्तूनि देहि गोवर्द्धनाय च।
गा वर्द्धयति यो नित्यं तेन गोवर्द्धनः स्मृतः॥ ८९
गोवर्द्धनसमस्तात पुण्यवान् न हि भूतले।
नित्यं ददाति गोभ्यो यो नवीनानि तृणानि च॥ ९०
तीर्थस्नानेषु यत् पुण्यं यत् पुण्यं विप्रभोजने।
यत् पुण्यञ्च महादाने यत् पुण्यं हरिसेवने॥ ९१
सर्व्वव्रतोपवासेषु सर्व्वेष्वेव तपःसु च।
भुवः पर्य्यटने यत् तु सत्यवाक्येषु यद्भवेत्॥ ९२
सर्व्वे देवा गवामङ्गे तीर्थानि तत्पदेषु च।
तद्गुह्येषु स्वयं लक्ष्मीस्तिष्ठत्येव सदा पितः॥ ९३
गोष्पदाक्तमृदा यो हि तिलकं कुरुते नरः।
तीर्थस्नातो भवेत् सद्योऽभयं तस्य पदे पदे॥ ९४
गावस्तिष्ठन्ति यत्रैव तत् तीर्थं परिकीर्त्तितम्।
प्राणांस्त्यक्त्वा नरस्तत्र सद्यो मुक्तो भवेद्ध्रुवम्॥ ९५
ब्राह्मणानां गवामङ्गं यो हन्ति मानवाधमः।
ब्रह्महत्यासमं पापं भवेत् तस्य न संशयः॥ ९६
नारायणांशान् विप्रांश्च गाश्च ये घ्नन्ति मानवाः।
कालसूत्रञ्च ते यान्ति यावच्चन्द्रदिवाकरौ॥ ९७
इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद।
आनन्दयुक्तो नन्दश्च तमुवाच स्मिताननः॥ ९८

नन्द उवाच।

पौर्व्वापरीयं पूजेति महेन्द्रस्य महात्मनः।
सुवृष्टिसाधनी साध्यं सर्व्वशस्यं मनोहरम्।
शस्यानि जीविनां प्राणाः शस्याज्जीवन्तिजीविनः॥ ९९
पूजयन्ति व्रजस्थाश्च महेन्द्रं पुरुषक्रमात्।
महोत्सवं वत्सरान्ते निर्विघ्नाय शिवाय च॥ १००
इत्येवं वचनं श्रुत्वा बलेन सह माधवः।
उच्चैर्जहास च पुनरुवाच पितरं मुदा॥ १०१

श्रीकृष्ण उवाच।

अहो श्रुतं विचित्रं ते वचनं परमाद्भुतम्।
उपहास्यं लोकशास्त्रे वेदेष्वेव विगर्हितम्॥ १०२
निरूपणं नास्ति कुत्र शक्राद्वृष्टिः प्रजायते।
अपूर्व्वं नीतिवचनं श्रुतमद्य मुखात् तव॥ १०३
शृणु नीतिं श्रुतवतां हे तात नानयं वद।
वचनं सामवेदोक्तं सन्तो जानन्ति सर्व्वतः॥ १०४
प्रश्नं कुरुष्व मल्लांश्च विबुधानपि संसदि।
ब्रुवन्तु परमार्थञ्च किमिन्द्राद्वृष्टिरेव च॥ १०५
सूर्य्याद्धि जायते तोयं तोयाच्छस्यानि शाखिनः।
तेभ्योऽन्नानि फलान्येव तेभ्यो जीवन्ति जीविनः॥ १०६
सूर्य्यग्रस्तञ्च नीरञ्च काले तस्मात् समुद्भवः।
सूर्य्यो मेघादयः सर्व्वे विधात्रा ते निरूपिताः॥ १०७
तोययुक्तो जलधरो गजश्च सागरो मरुत्।
शस्याधिपो नृपो मन्त्री विधात्रा ते निरूपिताः॥ १०८
जलाढ़कानां शस्यानां तृणानाञ्च निरूपितम्।
सर्व्वोऽब्देऽस्त्येव तत् सर्व्वं काले कल्पे युगे युगे॥ १०९
हस्ती समुद्रादादाय करेण जलमीप्सितम्।

दग्धाद्दनाय तद्दग्धाद्दातेन प्रेरितो घनः ॥ ११०
स्थाने स्थाने पृथिव्याञ्च काले काले यथोचितम्।
ईशेच्छयाविर्भूतञ्च न भूतं प्रतिबन्धकम् ॥ १११
भूतं भव्यं भविष्यञ्च महत् क्षुद्रञ्च मध्यमम्।
धात्रा निरूपितं कर्म्म केन तात निवार्य्यते ॥ ११२
जगच्चराचरं सर्व्वं कृतं तेनेश्वराज्ञया।
आदौ विनिर्म्मितो भक्ष्यः पश्चाज्जीव इति स्मृतम् ११३
अभ्यासाच्च स्वभावो हि स्वभावात् कर्म्म एव च।
जायते कर्म्मणा भोगो जीविनां सुखदुःखयोः ॥११४
यातना जन्ममरणं रोग-शोक-भयानि च।
समुत्पत्तिविपद्विद्या कविता वा यशोऽयशः ॥ ११५
पुण्यञ्च स्वर्गवासश्च पापं नरकसंस्थितिः।
मुक्तिर्भक्तिर्हरेर्दास्यं कर्म्मणा घटते नृणाम् ॥ ११६
सर्व्वेषां जनको हीशश्चाभ्यास-शील-कर्म्मणाम्।
धातुश्च फलदाता च सर्व्वं तस्येच्छया भवेत् ॥ ११७
विनिर्म्मितो विराड्येन तत्त्वानि प्रकृतिर्जगत्।
कूर्म्मः शेषश्च धरणी चाब्रह्मस्तम्ब एव च ॥ ११८
यस्याज्ञया मरुत् कूर्म्मं कूर्म्मः शेषं बिभर्त्ति च।
शेषो वसुन्धरां मूर्द्ध्ना सा च सर्व्वं चराचरम् ॥ ११९
यस्याज्ञया सदा वाति जगत्प्राणो जगत्त्रये।
तपति भ्रमणं कृत्वा भूर्लोकं सुप्रभाकरः ॥ १२०
दहत्यग्निः सञ्चरति मृत्युश्च सर्व्वजन्तुषु।
बिभ्रति शाखिनः काले पुष्पाणि च फलानि च ॥१२१
स्वस्वस्थाने समुद्राश्च तूर्णं मज्जन्त्यथोऽधुना।
तमीशं भज भक्त्या च को वा किं कर्त्तुमीश्वरः॥१२२
ब्रह्माण्डञ्च कतिविधमाविर्भूतं तिरोहितम्।
विधयश्च कतिविधा यस्य भ्रूभङ्गलीलया ॥ १२३
मृत्योर्म्मृत्युः कालकालो विधातुर्विधिरेव च।
व्रज तं शरणं तात स ते रक्षां करिष्यति ॥ १२४
अहोऽष्टाविंशतीन्द्राणां पतने यदहर्निशम्।
विधातुरेव जगतामष्टोत्तरशतायुषः ॥ १२५
निमेषाद्यस्य पतनं निर्गुणस्यात्मनः प्रभोः।
एवम्भूते तिष्ठतीशे शक्रः पूज्यो विडम्बनम् ॥ १२६
इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद।
प्रशशंसुश्च मुनयो भगवन्तं सभासदः ॥ १२७
नन्दः सपुलको हृष्टः सभायां साश्रुलोचनः।
आनन्दयुक्ता मनुजा यदि पुत्त्रैः पराजिताः ॥ १२८
श्रीकृष्णाज्ञां समादाय चकार स्वस्तिवाचनम्।
क्रमेण वरणं तत्र सर्व्वेषां स चकार ह ॥ १२९
पर्व्वतस्य मुनीन्द्राणां चकार पूजनं मुदा।
बुधानां ब्राह्मणानाञ्च गवां वह्नेश्च सादरम् ॥ १३०
तत्र पूजासमाप्तौ च मङ्गलेषु महोत्सवे।
नानाप्रकारवाद्यानां बभूव शब्दमुल्बणम् ॥ १३१
जयशब्दः शङ्खशब्दो हरिशब्दो बभूव ह।
वेदमङ्गलचण्डीञ्च पपाठ मुनिपुङ्गवः ॥ १३२
वन्दिनां प्रवरो डिण्डी कंसस्य सचिवप्रियः।
उच्चैः पपाठ पुरतो मङ्गलं मङ्गलाष्टकम् ॥ १३३
कृष्णः शैलान्तिकं गत्वा दिव्यां मूर्त्तिं विधाय च।
वस्तु खादामि शैलोऽस्मि वरं वृणिव्त्युवाच ह ॥१३४
उवाच नन्दं श्रीकृष्णः पश्य शैलं पितः पुरः।
वरं प्रार्थय भद्रं ते भविता चेत्युवाच ह ॥ १३५
हरेर्दास्यं हरेर्भक्तिं वरं वव्रे स वल्लवः।
द्रव्यं भुक्त्वा वरं दत्त्वा सोऽन्तर्द्धानं चकार ह ॥ १३६
मुनीन्द्रान् ब्राह्मणांश्चैव भोजयित्वा च गोपपः।
वन्दिभ्यो ब्राह्मणेभ्यश्च मुनिभ्यश्च धनं ददौ ॥ १३७
मुनिभ्यो ब्राह्मणेभ्यश्च नत्वा नन्दो मुदान्वितः।
रामकृष्णौ पुरस्कृत्य सगणः स्वालयं ययौ ॥ १३८
रौप्यं वस्त्रं सुवर्णञ्च वरमश्वं मणिं तथा।
भक्ष्यद्रव्यं बहुविधं वन्दिने डिण्डिने ददौ ॥ १३९
स्तुत्वा नत्वा रामकृष्णौ मुनयो ब्राह्मणा ययुः।
ययुरप्सरसः सर्व्वा गन्धर्व्वाः किन्नरास्तथा ॥ १४०
राजानो वल्लवाः सर्व्वे चागता ये महोत्सवे।
सर्व्वे प्रणम्य श्रीकृष्णं ययुरादरपूर्व्वकम् ॥ १४१
एतस्मिन्नन्तरे शक्रः कोपप्रस्फुरिताधरः।
मखभङ्गं बहुविधां निन्दां श्रुत्वा सुरेश्वरः ॥ १४२
मरुद्भिर्नारदैः सार्द्धं रथमारुह्य सादरम्।
जगाम नन्दनगरं वृन्दारण्यं मनोहरम् ॥ १४३
सर्व्वे देवा ययुः पश्चाद्युद्धशास्त्रविशारदाः।
शस्त्रास्त्रपाणयः कोपाद्रथमारुह्य नारद ॥ १४४
वायुशब्दैर्म्मेघशब्दैः सैन्यशब्दैर्भयानकैः।
चकम्पे नगरं सर्व्वं नन्दो भयमवाप ह ॥ १४५
भार्य्यां सम्बोध्य स्वगणमुवाच शोककातरः।
रहःस्थलं समानीय नीतिशास्त्रविशारदः ॥ १४६

(क) स्वगणैरिति पाठस्तु क्वाचित्कः।

नन्द उवाच।

हे यशोदे समागच्छ वचनं शृणु रोहिणि।
रामकृष्णौ समादाय व्रज दूरं व्रजात् प्रिये॥ १४७
बालका बालिका नार्य्यो यान्तु दूरं भयाकुलाः।
बलवन्तश्च गोपालास्तिष्ठन्तु मत्समीपतः॥ १४८
पश्चाच्च निर्गमिष्यामो वयञ्च प्राणसङ्कटात्।
इत्युक्त्वा वल्लवश्रेष्ठः सस्मार श्रीहरिं भिया॥ १४९
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः।
स्तोत्रेण कौथुमोक्तेन तुष्टाव श्रीशचीपतिम्॥ १५०
इन्द्रः सुरपतिः शक्रोऽदितिजः पवनाग्रजः।
सहस्राक्षो भगाङ्गश्च कश्यपात्मज एव च॥ १५१
विडौजाश्च सुनाशीरो मरुत्वान् पाकशासनः।
सर्व्वेषां जनकः श्रीमान् शचीशो दैत्यसूदनः॥१५२
वज्रहस्तः कामसखा गौतमीव्रतनाशनः।
वृत्रहा वासवश्चैव दधीचिदेहभिक्षुकः॥ १५३
जिष्णुश्च वामनभ्राता पुरुहूतः पुरन्दरः।
दिवस्पतिः शतमखः सुत्रामा गोत्रभिद्विभुः॥ १५४
लेखर्षभो बलारातिर्जम्भभेदी स्वराट् स्वयम्।
संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः॥ १५५
आखण्डलो हरिहयो नमुचिप्राणनाशनः।
वृद्धश्रवा वृषश्चैव दैत्यसर्पनिसूदनः॥ १५६
षट्चत्वारिंशन्नामानि पापघ्नानि निश्चितम्।
स्तोत्रमेतत् कौथुमोक्तं नित्यं यदि पठेन्नरः।
महाविपत्तौ शक्रस्तं वज्रहस्तश्च रक्षति॥ १५७
अतिवृष्टेः शिलावृष्टेर्वज्रपाताच्च दारुणात्।
कदापि न भयं तस्य रक्षिता वासवः स्वयम्॥ १५८
यत्र गेहे स्तोत्रमिदं यो वा जानाति पुण्यवान्।
न तत्र वज्रपतनं शिलावृष्टिश्च नारद॥ १५९

इति श्रीब्रह्मवैवर्त्ते शक्रस्तोत्रं समाप्तम्।

स्तोत्रं नन्दमुखाच्छ्रुत्वा चुकोप मधुसूदनः।
उवाच पितरं नीतिं प्रज्वलन् ब्रह्मतेजसा॥ १६०
कं स्तौषि भीरो को वेन्द्रस्त्यज भीतिं ममान्तिके।
क्षणार्द्धे भस्मसात् कर्त्तुं क्षमोऽहमवलीलया॥१६१
गाश्च वत्सांश्च बालांश्च योषितो वा भयातुराः।
गोवर्द्धनस्य कुहरे संस्थाप्य तिष्ठ निर्भयम्॥ १६२
बालस्य वचनं श्रुत्वा तच्चकार मुदान्वितः।
हरिर्दधार शैलं तं वामहस्तेन दण्डवत्॥ १६३
एतस्मिन्नन्तरे तत्र दीप्तिऽति रत्नतेजसा।
अन्धीभूतञ्च सहसा बभूव रजसावृतम्॥ १६४
सवातमेघनिकरैश्चच्छाद गगनं मुने।
वृन्दावने बभूवातिवृष्टिरेव निरन्तरम्॥ १६५
शिलावृष्टिर्वज्रवृष्टिरुल्कापातः सुदारुणः।
समस्तं पर्व्वतस्पर्शात् पतितं दूरतस्ततः॥ १६६
निष्फलस्तत्क्षमन्तरणे यथाऽनीशोद्यमो मुने।
दृष्ट्वा मोघञ्च तत् सर्व्वं सद्यः शक्रश्चुकोप ह॥ १६७
जग्राहामोघकुलिशं दधीचेरस्थिनिर्म्मितम्।
दृष्ट्वा तं वज्रहस्तञ्च जहास मधुसूदनः॥ १६८
समस्तं स्तम्भयामास वज्रमेवातिदारुणम्।
महामरुद्गणं मेघं चकार स्तम्भनं विभुः॥ १६९
सर्व्वे तस्थुर्निश्चलास्ते भित्तौ पुत्तलिका यथा।
हरिणा जृम्भितः शक्रः सद्यस्तन्द्रामवाप ह॥ १७०
ददर्श सर्व्वं तन्द्रायां तत्र कृष्णमयं जगत्।
द्विभुजं मुरलीहस्तं रत्नालङ्कारभूषितम्॥ १७१
पीतवस्त्रपरीधानं रत्नसिंहासनस्थितम्।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम्॥ १७२
चन्दनोक्षितसर्व्वाङ्गमेवम्भूतं चराचरम्।
दृष्ट्वाद्भुततमं तत्र सद्यो मूर्च्छामवाप ह॥ १७३
जजाप परमं मन्त्रं प्रदत्तं गुरुणा पुरा।
सहस्रदलपद्मस्थं ददर्श ज्योतिरुज्ज्वलम्॥१७४
तत्रान्तरे दिव्यरूपमतीवसुमनोहरम्।
नवीनजलदोत्कर्ष-श्यामसुन्दरविग्रहम्॥ १७५
सद्रत्नसारनिर्म्माण-ज्वलन्मकरकुण्डलम्।
मणीन्द्रसाररचित-किरीटोज्ज्वलविग्रहम्॥ १७६
ज्वलता कौस्तुभेन्द्रेण कण्ठवक्षःस्थलोज्ज्वलम्।
मणिकेयूर-वलय-मणिमञ्जीररञ्जितम्॥
अन्तर्बहिः समं दृष्ट्वा तुष्टाव परमेश्वरम्॥ १७७

इन्द्र उवाच।

अक्षरं परमं ब्रह्म ज्योतीरूपं सनातनम्।
गुणातीतं निराकारं स्वेच्छामयमनन्तकम्॥ १७८
भक्तध्यानाय सेवायै नानारूपधरं परम्।
शुक्ल-रक्त-पीत-श्यामं युगानुक्रममेव च॥ १७९
शुक्लं तेजःस्वरूपञ्च सत्ये सत्यस्वरूपिणम्।
त्रेतायां कुङ्कुमाकारं ज्वलन्तं ब्रह्मतेजसा॥ १८०
द्वापरे पीतवर्णञ्च शोभितं पीतवाससा।

कृष्णावर्णात् कलौ कृष्णं परिपूर्णतमं विभुम् ॥ १८१
नवनीरधरोत्कृष्ट-श्यामसुन्दरविग्रहम्।
नन्दैकनन्दनं वन्दे यशोदाजीवनं प्रभुम् ॥ १८२
गोपिकाचेतनहरं राधाप्राणाधिकं परम्।
विनोदमुरलीशब्दं कुर्व्वन्तं कौतुकेन च ॥ १८३
रूपेणाप्रतिमेनैव रत्नभूषणभूषितम्।
कन्दर्पकोटिसौन्दर्य्यं बिभ्रतं शान्तमीश्वरम् ॥ १८४
क्रीडन्तं राधया सार्द्धं वृन्दारण्ये च कुत्रचित्।
कुत्रचिन्निर्ज्जने रम्ये राधावक्षःस्थलस्थितम् ॥ १८५
जलक्रीड़ां प्रकुर्व्वन्तं राधया सह कुत्रचित्।
राधिकाकवरीभारं कुर्व्वन्तं कुत्रचिन्मुदा ॥ १८६
कुत्रचिद्राधिकापादे दत्तवन्तमलक्तकम्।
राधाचर्व्वितताम्बूलं गृह्णन्तं कुत्रचिन्मुदा ॥ १८७
पश्यन्तं कुत्रचिद्राधां पश्यन्तीं वक्रचक्षुषा।
दत्तवन्तञ्च राधायै कृत्वा मालाञ्च कुत्रचित्।
कुत्रचिद्राधया सार्द्धं गच्छन्तं रासमण्डलम् ॥ १८८
राधादत्तां गले मालां दत्तवन्तञ्च कुत्रचित्।
सार्द्धं गोपालिकाभिश्च विहरन्तञ्च कुत्रचित् ॥ १८९
राधां गृहीत्वा गच्छन्तं विहाय ताश्च कुत्रचित्।
विप्रपत्नीदत्तमन्नं भुक्तवन्तञ्च कुत्रचित् ॥१९०
भुक्तवन्तं तालफलं बालकैः सह कुत्रचित्।
वस्त्रं गोपालिकानाञ्च हरन्तं कुत्रचिन्मुदा ॥ १९१
गायन्तं रम्यसङ्गीतं कुत्रचिद्बालकैः सह।
कालीयमूर्द्ध्नि पादाब्जं दत्तवन्तञ्च कुत्रचित् ॥ १९२
गवां गणं व्याहरन्तं कुत्रचिद्बालकैः सह।
विनोदमुरलीशब्दं कुर्व्वन्तं कुत्रचिन्मुदा ॥ १९३
स्तुत्वानेन स्तवेनेन्द्रः प्रणनाम हरिं भिया।
पुरा दत्तेन गुरुणा रणे वृत्रासुरेः सह ॥ १९४
कृष्णेन दत्तं कृपया ब्रह्मणे च तपस्यते।
एकादशाक्षरो मन्त्रः कवचं सर्व्वलक्षणम् ॥ १९५
दत्तमेतत् कुमाराय पुष्करे ब्रह्मणा पुरा।
कुमारोऽङ्गिरसेऽदत्त गुरवेऽङ्गिरसा मुने ॥ १९६
इदमिन्द्रकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत्।
इह प्राप्य दृढां भक्तिमन्ते दास्यं लभेद्ध्रुवम् ॥ १९७
जन्म-मृत्यु-जरा-व्याधि-शोकेभ्यो मुच्यते नरः।
न हि पश्यति स्वप्नेन यमदूतं यमालयम् ॥ १९८
इति श्रीब्रह्मवैवर्त्ते शक्रकृतं श्रीकृष्णस्तोत्रम्।

नारायण उवाच।
इन्द्रस्य वचनं श्रुत्वा प्रसन्नः श्रीनिकेतनः।
प्रीत्या तस्मै वरं दत्त्वा स्थापयामास पर्व्वतम् (क)१९९
प्रणम्य श्रीहरिं शक्रः प्रययौ स्वगणैः सह।
गह्वरस्था जनाः सर्व्वे प्रजग्मुर्गह्वराद्गृहम् ॥ २००
ते सर्व्वे मेनिरे कृष्णं परिपूर्णतमं विभुम्।
पुरस्कृत्य व्रजस्थांश्च प्रययौ स्वालयं हरिः ॥ २०१
तुष्टाव नन्दः पुत्रं तं पूर्णब्रह्म सनातनम्।
पुलकाञ्चितसर्व्वाङ्गो भक्तिपूर्णाश्रुलोचनः ॥ २०२

नन्द उवाच।
नमो ब्रह्मण्यदेवाय गो-ब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ २०३
नमो ब्रह्मण्यदेवाय गो-ब्राह्मणपरात्मने।
अनन्तकोटिब्रह्माण्ड-धामनाम्ने नमोऽस्तु ते ॥ २०४
नमो मत्स्यादिरूपाणां वीजरूपाय साक्षिणे।
निर्लिप्ताय निर्गुणाय निराकाराय ते नमः ॥ २०५
अतिसूक्ष्मस्वरूपाय ध्यानसाध्याय योगिनाम्।
ब्रह्म-विष्णु-महेशानां वन्द्याय नित्यरूपिणे ॥ २०६
धाम्ने चतुर्णां वर्णानां युगेष्वेव चतुर्षु च।
शुक्ल-रक्त-पीत-श्यामाभिधानगुणशालिने ॥ २०७
योगिने योगरूपाय गुरवे योगिनामपि।
सिद्धेश्वराय सिद्धाय सिद्धानां गुरवे नमः ॥ २०८
यं स्तोतुमक्षमो ब्रह्मा विष्णुर्यं स्तोतुमक्षमः।
यं स्तोतुमक्षमो रुद्रः शेषो यं स्तोतुमक्षमः॥ २०९
यं स्तोतुमक्षमो धर्म्मो यं स्तोतुमक्षमो विधिः।
यं स्तोतुमक्षमो लम्बोदरश्चापि षड़ानन ॥ २१०
यं स्तोतुमक्षमा ब्रह्मऋषयः सनकादयः।
कपिलो नक्षमः स्तोतुं सिद्धेन्द्राणां गुरोर्गुरुः ॥२११
न शक्तौ स्तवनं कर्त्तुं नरनारायणावृषी।
अन्ये जड़धियः के वा स्तोतुं शक्ताः परात्परम्॥२१२
वेदा न शक्ता नो वाणी न च लक्ष्मीः सरस्वती।
न राधा स्तवने शक्ता किं स्तुवन्ति विपश्चितः ॥२१३
क्षमस्व निखिलं ब्रह्मन्नपराधं क्षणे क्षणे।
रक्ष मां करुणासिन्धो दीनबन्धो भवार्णवे ॥ २१४
पुरा तीर्थे तपस्तप्त्वा प्राप्तः पुत्रः सनातनः।
स्वकीयचरणाम्भोजे भक्तिं दास्यञ्च देहि मे ॥ २१५

(क) पूर्व्ववदिति क्वचित् पाठः।

ब्रह्मत्वममरत्वं वा सालोक्यादिचतुष्टयम्।
त्वत्पादाम्बुजदास्यस्य कलां नार्हन्ति षोड़शीम्॥२१६
इन्द्रत्वं वा सुरत्वं वा सम्प्राप्तिः खगसिद्धयोः।
राजत्वं चिरजीवित्वं सुधियो गणयन्ति किम्॥२१७
एतद्युत् कथितं सर्व्वं ब्रह्मत्वादिकमीश्वर।
भक्तसङ्गक्षणार्द्धस्य नोपमां ते किमर्हति॥ २१८
त्वद्भक्तास्तु त्वत्सदृशः कस्तं तर्कितुमीश्वरः।
क्षणार्द्धालापमात्रेण पारं कर्त्तुं स चेश्वरः॥ २१९
भक्तसङ्गाङ्कुरस्येव भक्त्यङ्कुरमनश्वरम्।
त्वद्भक्तजलदालाप-जलसेकेन वर्द्धते॥ २२०
अभक्तालापतापाच्च शुष्कतां याति तत्क्षणम्।
त्वद्गुणस्मृतिसेकाच्च सर्व्वं तत् तत्क्षणे स्फुटम्॥२२१
त्वद्भक्त्यङ्कुरसम्भूतं स्फीतं मानसजं परम्।
न नाश्यं वर्द्धनीयं तन्नित्यं नित्यं क्षणे क्षणे॥ २२२
ततः सम्प्राप्य ब्रह्मत्वं भक्तस्य जीवनावधि।
ददात्येव फलं तस्मै हरिदास्यमनुत्तमम्॥ २२३
सम्प्राप्य दुर्लभं दास्यं यदि दासो बभूव ह।
सुनिस्पृहेण तेनैव जितं सर्व्वं भयादिकम्॥ २२४
इत्येवमुक्त्वा भक्त्या च नन्दस्तस्थौ हरेः पुरः।
प्रसन्नवदनः कृष्णो ददौ तस्मै तदीप्सितम्॥ २२५
एवं नन्दकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत्।
सुदृढ़ां भक्तिमाप्नोति सद्यो दास्यं लभेद्धरेः॥ २२६
तपस्तप्तं यदा द्रोणस्तीर्थे च धरया सह।
स्तोत्रं तस्मै पुरा दत्तं ब्रह्मणा तत् सुदुर्लभम्॥२२७
हरेः षड़क्षरो मन्त्रः कवचं सर्व्वलक्षणम्।
ईह सौभरिणा दत्तं तस्मै तुष्टेन पुष्करे॥ २२८
तदेव कवचं स्तोत्रं स च मन्त्रः सुदुर्लभः।
ब्रह्मणोऽंशेन मुनिना नन्दाय च तपस्यते॥ २२९
मन्त्रः स्तोत्रञ्च कवचमिष्टदेवो गुरुस्तथा।
या यस्य विद्या प्राचीना न तां त्यजति निश्चितम्॥२३०
इत्येवं कथितं स्तोत्रं श्रीकृष्णाख्यानमद्भुतम्।
सुखदं मोक्षदं सारं भवबन्धनमोचनम्॥ २३१

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे इन्द्रयाग-
भञ्जने नन्दकृत-स्तोत्रप्रस्तावो
नामैकविंशोऽध्यायः॥२१॥

---

## द्वाविंशोऽध्यायः।

नारायण उवाच।

एकदा राधिकानाथो बलेन सह बालकैः।
जगाम तं तालवनं परिपक्वफलान्वितम्॥ १
वृक्षाणां रक्षिता दैत्यः खररूपी च धेनुकः।
कोटिसिंहसमबलो देवानां दर्पनाशनः॥ २
शरीरं पर्व्वतसमं कूपतुल्ये च लोचने।
ईषापङ्क्तिसमा दन्तास्तुण्डं पर्व्वतगह्वरम्॥ ३
शतहस्तपरिमिता जिह्वा लोला भयानका।
प्रासादसदृशी नाभिः शब्दस्तस्य भयानकः॥ ४
दृष्ट्वा तालवनं बाला हर्षमापुरनिन्दिताः।
कौतुकात् कृष्णमूचुस्ते स्मेराननसरोरुहाः॥ ५

बाला ऊचुः।

हे कृष्ण करुणासिन्धो दीनबन्धो जगत्पते।
महाबल बलभ्रातः समस्तबलिनां वर॥ ६
अवधानं कुरु विभो चेष्टां कर्त्तुं वयं क्षमाः।
भङ्क्तुं चालयितुं वृक्षान् पातितुञ्च फलानि च॥ ७
किन्त्वत्र दैत्यो बलवान् खररूपी च धेनुकः।
अजितस्त्रिदशैः सर्व्वैर्महाबलपराक्रमः॥ ८
दुर्निवार्य्यश्च सर्व्वेषां कंसस्य सचिवो महान्।
हिंसकः सर्व्वजन्तूनां वनानामस्ति रक्षिता॥ ९
सुविस्ताय्यं जगत्कान्त वद नो वदतां वर।
युक्तं कार्य्यमयुक्तं वा कर्त्तव्यमथवा न वा॥ १०
बालकानां वचः श्रुत्वा भगवान् मधुसूदनः।
उवाच मधुरं बालान् वचनं तत् सुखावहम्॥ ११

श्रीकृष्ण उवाच।

किं वो दैत्याद्भयं बाला यूयं मत्सहचारिणः।
वृक्षं गत्वा चालयित्वा फलानि खादताभयम्॥ १२
श्रीकृष्णाज्ञां समादाय बालका बलशालिनः।
उत्पेतुर्वृक्षशिखरं क्षुधिताश्च फलार्थिनः॥ १३
नानाप्रकारवर्णानि स्वादूनि सुन्दराणि च।
फलानि पातयामासुः परिपक्वानि नारद॥ १४
केचिद्बभञ्जुर्वृक्षांश्च चालयामासुरेव च।
केचित् कोलाहलं चक्रुर्ननृतुस्तत्र केचन॥ १५
अवरुह्य तरुभ्यश्च बालका बलशालिनः।
फलान्यादाय गच्छन्तो ददृशुर्दैत्यपुङ्गवम्॥ १६

महाबलं महाकायं घोरगर्द्दभरूपिणम्।
आगच्छन्तं घोरनादं कुर्व्वन्तं शब्दमुल्बणम्॥ १७
तं दृष्ट्वा रुरुदुः सर्व्वे फलानि तत्यजुर्भिया।
कृष्ण कृष्णेति शब्दञ्च प्रचक्रुर्वेङ्क्षवा भयम्॥ १८
अस्मान् रक्ष समागच्छ हे कृष्ण करुणानिधे।
हे सङ्कर्षण नो रक्ष प्राणा नो यान्ति दानवात्॥१९

हे कृष्ण हे कृष्ण हरे मुरारे
गोविन्द दामोदर दीनबन्धो।
गोपीश गोपेश भयार्णवेऽस्मा-
ननन्त नारायण रक्ष रक्ष॥ २०
भयेऽभये वाथ शुभेऽशुभे वा
सुखेषु दुःखेषु च दीननाथ।
त्वया विनान्यत् शरणं भयार्णवे
न नोऽस्ति हे माधव रक्ष रक्ष॥ २१
जय जय जयसिन्धो कृष्णभक्तैकबन्धो
बहुतरभययुक्तान् बालकान् रक्ष रक्ष।
जहि दनुजकुलानामीशमस्माकमन्तं
सुरकुलबलदर्पं वर्द्धयैनं निहत्य॥ २२

बालानां विक्लवं श्रुत्वा बलेन सह माधवः।
आजगाम शिशुस्थानं भयहा भक्तवत्सलः॥ २३
भयं नास्ति भयं नास्तीत्युक्त्वा दुद्राव सादरम्।
ईषद्धास्यप्रसन्नास्यो निर्भयं दत्तवान् शिशून्॥ २४
दृष्ट्वा कृष्णं बलं बाला ननृतुर्विजहुर्भयम्।
हरिस्मृतिश्चाभयदा सर्व्वमङ्गलदायिका॥ २५
श्रीकृष्णो दानवं दृष्ट्वा ग्रसन्तं कोपतः शिशून्।
बलं सम्बोध्य बलिनमुवाच मधुसूदनः॥ २६

श्रीकृष्ण उवाच।

दानवो बलिपुत्त्रोऽयं नाम्ना साहसिको बली।
गर्द्दभो ब्रह्मशापेन शप्तो दुर्व्वाससा पुरा॥ २७
पापिष्ठो मम वध्योऽयं महाबलपराक्रमः।
अहमेनं वधिष्यामि त्वं रक्ष बालकान् बल॥ २८
आदाय बालकान् सर्व्वान् दूरं गच्छेत्युवाच ह।
तान् गृहीत्वा बलः शीघ्रं जगाम दूरमाज्ञया॥ २९
दृष्ट्वा कृष्णं दानवेन्द्रो महाबलपराक्रमः।
जग्रास लीलया कोपाज्ज्वलदग्निशिखोपमम्॥ ३०
बभूवातिदाहयुक्तो मर्त्तुकामोऽतितेजसा।
उज्जग्रास पुनर्दैत्यो विभुं तेजस्विनं भिया॥ ३१
उज्जाग्राशितमीशं तं दृष्ट्वा दैत्यो मुमोह च।
अतीव सुन्दरं शान्तं ज्वलन्तं ब्रह्मतेजसा॥ ३२
कृष्णदशनमात्रेण बभूवास्य पुरा स्मृतिः।
आत्मानं बुबुधे कृष्णं जगतां कारणं परम्॥ ३३
तेजःस्वरूपमीशं तं दृष्ट्वा तुष्टाव दानवः।
यथागमं यथाजन्म गुणातीतं स्तुतिः परम्॥३४

दानव उवाच।

वामनोऽसि त्वमंशेन मत्पितुर्यज्ञभिक्षुकः।
राज्यहर्त्ता च श्रीहर्त्ता सुतलस्थलदायकः॥ ३५
बलिभक्तिवशादीशः सर्व्वेशो भक्तवत्सलः।
शीघ्रं संहर मां पापं शापाद्गर्द्दभरूपिणम्॥ ३६
मुनेर्दुर्व्वाससः शापादीदृशं जन्म कुत्सितम्।
मृत्युस्त्वत्तश्च मुनिना दत्तो मम जगत्पते॥ ३७
षोडशारेण चक्रेण सुतीक्ष्णेनातितेजसा।
जहि मां जगतां नाथ सद्गतिं कुरु मोक्षद॥ ३८
त्वमंशेन वराहश्च समुद्धर्त्तुं वसुन्धराम्।
देवानां रक्षिता नाथ हिरण्याक्षनिसूदन॥ ३९
त्वं नृसिंहः स्वयं पूर्णो हिरण्यकशिपोर्वधे।
प्रह्लादानुग्रहार्थाय देवानां रक्षणाय च॥ ४०
त्वञ्च वेदोद्धारकर्त्ता मीनांशेन दयानिधे।
नृपस्य ज्ञानदानाय रक्षायै सुरविप्रयोः॥ ४१
शेषाधारश्च कूर्म्मस्त्वमंशेन सृष्टिहेतवे।
विश्वाधारश्च शेषस्त्वमंशेनास्यसहस्रधृक्॥ ४२
रामो दाशरथिस्त्वञ्च जानक्युद्धारहेतवे।
दशस्कन्धनिहन्ता च सिन्धौ सेतुविधायकः॥ ४३
अंशेन ज्ञानिनां श्रेष्ठौ नरनारायणावृषी।
त्वञ्च धर्म्मसुतौ भूत्वा लोकनिस्तारकारकः॥ ४४
अधुना कृष्णरूपस्त्वं परिपूर्णतमः स्वयम्।
सर्व्वेषामवताराणां वीजरूपः सनातनः॥ ४५
यशोदाजीवनो नित्यो नन्दैकानन्दवर्द्धनः।
प्राणाधिदेवो गोपीनां राधाप्राणाधिकप्रियः॥ ४६
वसुदेवसुतः शान्तो देवकीदुःखभञ्जनः।
अयोनिसम्भवः श्रीमान् पृथिवीभारहारकः॥ ४७
पूतनायै मातृगतिं प्रदाता च कृपानिधिः।
बक-केशिप्रलम्बानां ममापि मोक्षकारकः॥ ४८
स्वेच्छामय गुणातीत भक्तानां भयभञ्जन।
प्रसीद राधिकानाथ प्रसीद कुरु मोक्षणम्॥ ४९

हे नाथ गाढ़मीयोनेः समुद्धर भवार्णवात् ।
मूर्खस्त्वद्भक्तपुत्रोऽहं मामुद्धर्त्तुं त्वमर्हसि ॥ ५०
वेदा ब्रह्मादयो यच्च मुनीन्द्राः स्तोतुमक्षमाः ।
किं स्तौमि तं गुणातीतं पुरा दैत्योऽधुना खरः ॥५१
एवं कुरु कृपासिन्धो येन मे न भवेज्जनुः ।
दृष्ट्वा पादारविन्दं ते कः पुनर्भवनं व्रजेत् ॥ ५२
ब्रह्मा स्तोता खरः स्तोता नोपहासितुमर्हसि ।
सदीश्वरस्य विश्वस्य योग्यायोग्ये समा कृपा ॥५३
इत्येवमुक्त्वा दैत्येन्द्रस्तस्थौ च पुरतो हरेः ।
प्रसन्नवदनः श्रीमानतितुष्टो बभूव ह ॥ ५४
इदं दैत्यकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ।
सालोक्य-सार्ष्टि-सामीप्यं लभते लीलया हरेः ॥ ५५
इह लोके हरेर्भक्तिमन्ते दास्यं सुदुर्लभम् ।
विद्यां प्रियां सुकवितां पुत्रं पौत्रं यशो लभेत् ॥५६
इति श्रीब्रह्मवैवर्त्ते धेनुककृतं श्रीकृष्णस्तोत्रम् ।

नारायण उवाच ।

श्रुत्वानुमेने दैत्येन्द्रस्तवनं करुणानिधिः ।
कथं करोमि संहारमीदृशं भक्तमित्यहो ॥ ५७
अनुमन्य स्मृतिं तस्य संहाराय हरिः स्वयम् ।
न हि युक्तो वधः स्तोतुर्दैवक्तुविधिरेव च ॥ ५८
दानवो मायया विष्णोर्विसस्मार पुनः स्वकम् ।
दुरुक्तिः कण्ठदेशे तदधिष्ठानं चकार ह ॥ ५९
उवाच श्रीहरिं दैत्यः कोपात् प्रस्फुरिताधरः ।
मुने सद्यो मर्त्तुकामो वैरग्रस्तो विचेतनः ॥ ६०

दैत्य उवाच ।

ध्रुवं त्वं मर्त्तुकामोऽसि दुर्बुद्धे मानवार्भक ।
अद्य प्रस्थापयिष्यामि त्वामहं यममन्दिरम् ॥ ६१
आयासि जीवनाकाङ्क्षी मम तालवनं शिशो ।
न यास्यसि पुनर्गेहं बान्धवं न हि द्रक्ष्यसि ॥ ६२
न हि कंसो जरासन्धो नरको न समो मम ।
देवाः कम्पन्ति मे नित्यं के वान्ये मत्समा भुवि ॥६३
न हि संहारकर्त्ता च मां संहर्त्तुं क्षमः शिवः ।
न ब्रह्मा न च विष्णुश्च न मृत्युः काल एव च ॥६४
मम तालवनं भङ्क्त्वा पातयित्वा फलानि च ।
अहं करोषि सहसा किमहो कस्य तेजसा ॥ ६५
कस्त्वं वद वटो सत्यं कमनीयोऽसि सुन्दरः ।
दुर्लभं जीवनं दातुं मह्यं कथमिहागतः ॥ ६६

इत्युक्त्वा मस्तके कृत्वा प्रेरयित्वा च तं बली ।
दूरतः पातयामास श्रीकृष्णं मरणोन्मुखः ॥ ६७
पातयित्वा च तं भूमौ विषाणाभ्यां जघान सः ।
कृष्णाङ्गस्पर्शमात्रेण तद्विषाणौ बभञ्जतुः ॥ ६८
दैत्यो भग्नविषाणश्च तमीशं कोपतो मुने ।
जग्राह चर्व्वणं कर्त्तुं भग्नदन्तो बभूव ह ॥ ६९
तेजसा दग्धवक्त्रश्च तमुज्जग्राह तत्क्षणे ।
जज्वाल कम्पितः कोपाद्ददार पुरतो महीम् ॥७०
घूर्णयित्वा तु लाङ्गूलं शब्दं कृत्वा भयानकम् ।
स जगाम शिशुस्थानं दुद्रुवुर्बालका भिया ॥ ७१
बलश्च प्रेरयामास मस्तकेन महाबली ।
बली मुष्टिं ददौ तस्मै मूर्च्छामाप ततोऽसुरः ॥ ७२
क्षणेन चेतनां प्राप्य जगाम हरिसन्निधिम् ।
वज्रमुष्ट्या च व्यथितः पुनर्मूर्च्छामवाप सः ॥ ७३
पुनश्च चेतनां प्राप्य समुत्तस्थौ व्यथाकुलः ।
उत्ससर्ज वृहल्लेण्डं मूत्रञ्च भयमाप ह ॥ ७४
क्षणात् सम्मुखं प्राप्य महाबलपराक्रमः ।
कृत्वा शिरसि गोविन्दं घूर्णयामास दानवः ॥ ७५
पातयामास भूमौ तं घूर्णयित्वा पुनः पुनः ।
उत्पाट्य तालवृक्षं तं ताड़यामास माधवः ॥ ७६
यथा केशप्रहारेण मानवस्य भवेद्व्यथा ।
तथा बभूव दैत्यस्य तालवृक्षस्य पातनात् ॥ ७७
गोवर्द्धनं समुत्पाट्य घातयामास तं विभुः ।
पपात वेगाच्छैलेन्द्रस्तस्योपरि महामुने ॥ ७८
पर्व्वतस्य प्रहारेण मूर्च्छामाप महाबलः ।
बभूवाकुलिताङ्गश्च रुधिरञ्च समुद्वमन् ॥ ७९
क्षणेन चेतनां प्राप्य समुत्तस्थौ बलेः सुतः ।
गृहीत्वा पर्व्वतश्रेष्ठं प्रेरयामास दूरतः ॥ ८०
उत्पत्य च महावेगाच्चकार वेष्टनं हरिम् ।
पृथिवीं धर्षयामास तीक्ष्णाग्रेण खुरेण च ॥ ८१
प्रशशंस श्रीहरिं वेगात् कृत्वा मूर्ध्नि महासुरः ।
उत्पपात मनोयायी लीलया लक्षयोजनम् ॥ ८२
प्रहरञ्च तयोर्युद्धं निर्लक्ष्ये च बभूव ह ।
ततो गृहीत्वा श्रीकृष्णं पपात धरणीतले ॥ ८३
पुनर्मुहूर्त्तं युद्धञ्च बभूव भूतले तयोः ।
मुदा हरिः प्रशशंस प्रहस्य दानवेश्वरम् ॥ ८४
मद्भक्तस्य बलेः पुत्र धन्यं त्वज्जीवनं परम् ।

स्वस्त्यस्तु ते दानवेन्द्र वत्स निर्व्वाणतां व्रज ॥ ८५
मद्दर्शनं स्वस्तिवीजं परं निर्व्वाणकारणम्।
सर्व्वाधिकं सर्व्वपरं लभ स्थानं मनोहरम् ॥ ८६
इत्येवमुक्त्वा श्रीकृष्णः सस्मार चक्रमुत्तमम्।
सूर्य्यकोटिसमं दीप्त्या जग्राह तं सुदर्शनम् ॥ ८७
चिक्षेप भ्रामयित्वा च षोड़शारमनुत्तमम्।
चिच्छेद लीलयाऽवध्यं ब्रह्म-विष्णु-महेश्वरैः ॥ ८८
पपात मस्तकं भूमौ दानवस्य महात्मनः।
तेजःसमूह उत्तस्थौ शतसूर्य्यसमप्रभः ॥ ८९
विलोक्य हरिर्लोकं स श्लिष्टं कृष्णपदाम्बुजम्।
सम्प्राप परमं मोक्षमहो दानवपुङ्गवः ॥ ९०
गगनस्थाः सुराः सर्व्वे मुनयश्च भृशं मुदा।
पारिजातप्रसूनानां चक्रुस्ते पुष्पवर्षणम् ॥ ९१
नेदुर्दुन्दुभयः स्वर्गे ननृतुश्चाप्सरोगणाः।
जगुर्गन्धर्व्वनिकरास्तुष्टुवुर्मुनयो मुदा ॥ ९२
स्तुत्वा जग्मुः सुराः सर्व्वे मुनयो हर्षविह्वलाः।
धेनुकस्य वधं दृष्ट्वा तत्राजग्मुश्च बालकाः ॥ ९३
बलश्च बलिनां श्रेष्ठस्तुष्टाव परमेश्वरम्।
तुष्टुवुर्बालकाः सर्व्वे ननृतुश्च मुदान्विताः ॥ ९४
दत्त्वा कृष्णबलाभ्याञ्च प्रकृष्टानि फलानि च।
सर्व्वाणि भक्षणं चक्रुर्बालका हृष्टमानसाः ॥ ९५
भुक्त्वा पीत्वा हरिः शीघ्रं बलेन बालकैः सह।
जगाम स्वालयं ब्रह्मन् निहत्य दानवेश्वरम् ॥ ९६

इति श्रीब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे धेनुकवधो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः।

नारद उवाच।

केन शापेन बलिजो गर्द्दभत्वमवाप ह।
दुर्व्वासाः केन दोषेण प्राप दानवेश्वरम् ॥ १
केन पुण्येन वा नाथ विलीनः श्रीहरेः पदे।
सहसैकत्वमुक्तिञ्च सम्प्राप दानवाधिपः ॥ २
मुने सर्व्वं सुविस्तार्य्य वद सन्देहभञ्जन।
अहो कविमुखे वाक्यं नूतं नूतं पदे पदे ॥ ३

नारायण उवाच।

शृणु वत्स प्रवक्ष्येऽहमितिहासं पुरातनम्।
पुरा श्रुतं धर्म्मवक्त्रात् पर्व्वते गन्धमादने ॥ ४
पाद्मकल्पस्य वृत्तान्तं विचित्रं सुमनोहरम्।
नारायणकथोपेतं कथापीयूषमुत्तमम् ॥ ५
यत्र कल्पे कथा चेयं तत्र त्वमुपवर्हणः।
आकल्पजीवी सश्रीकः सुन्दरः स्थिरयौवनः ॥ ६
पञ्चाशत्कामिनीनाञ्च पतिः शृङ्गारतत्परः।
वरेण ब्रह्मणस्त्वञ्च सुकण्ठो गायनेश्वरः ॥ ७
अनुत्तमां वपुस्ताश्च सुन्दरं सुखपङ्कजम्।
निमेषरहिताः सर्व्वाः कामवाणप्रपीड़िताः ॥ ८
तासां प्राणेश्च घटितो विधिना त्वमिति श्रुतम्।
दिवानिशं सहचरा न जीवन्ति त्वया विना ॥ ९
पुष्पोद्याने च रहसि स्थाने स्थाने मनोहरे।
गह्वरेषु च शैलानां कन्दरेषु नदीषु च ॥ १०
काननेषु च रम्येषु श्मशाने जन्तुवर्ज्जिते।
यथामनोरथं ताश्च क्रीड़ां चक्रुस्त्वया सह ॥ ११
तदा दैवाद्विधेः शापात्त्वं दासीसुतो भवान्।
अधुना ब्रह्मणः पुत्रो वैष्णवोच्छिष्टभोजनात् ॥ १२
असंख्यकल्पजीवी च वैष्णवप्रवरो महान्।
ज्ञानदृष्ट्या सर्व्वदर्शी प्रियशिष्यश्च धूर्ज्जटेः ॥ १३
तस्य कल्पस्य वृत्तान्तं मुने मत्तो निशामय।
विस्तार्य्य दैत्यवृत्तान्तं कथयामि सुधोपमम् ॥ १४
एकदैव बलेः पुत्रो नाम्ना साहसिको बली।
स्वतेजसा सुरान् जित्वा प्रतस्थौ गन्धमादने ॥ १५
चन्दनोक्षितसर्व्वाङ्गो रत्नभूषणभूषितः।
रत्नसिंहासनस्थश्च बहुसैन्यसमन्वितः ॥ १६
एतस्मिन्नन्तरे तेन पथा याति तिलोत्तमा।
रूपेणाप्सरसां श्रेष्ठा नानावेशविधायिनी ॥ १७
चारुचम्पकवर्णाभा रत्नभूषणभूषिता।
नवयौवनसम्पन्ना कामवाणप्रपीड़िता ॥ १८
ईषद्धास्यप्रसन्नास्या दिव्यवस्त्रं सुबिभ्रती।
वक्रभ्रूभङ्गयुक्ता सा गजेन्द्रमन्दगामिनी ॥ १९
स्तनमूलं मुखेन्दुञ्च दृष्ट्वा साहसिको युवा।
वायुना सूक्ष्मवस्त्रायास्तस्या मूर्च्छामवाप सः ॥ २०
सा ददर्श बलेः पुत्रमतीव सुमनोहरम्।
प्रफुल्लमालतीमाला बिभ्रतं नवयौवनम् ॥ २१
शरत्पार्व्वणचन्द्रास्यं सस्मितं सुमनोहरम्।
दृष्ट्वा तं सस्मिता कामात् कटाक्षञ्च चकार सा ॥ २२

क्रीड़ायै चन्द्रलोकञ्च गच्छन्ती चन्द्रकामुकी।
तस्थौ केन च्छलेनैव मत्ता शृङ्गारलालसा॥ २३
दर्शं दर्शञ्च तस्यास्यं प्रहस्य वक्रचक्षुषा।
मुखमाच्छादनं चक्रे वाससा सा पुनः पुनः॥ २४
पुलकाञ्चितसर्व्वाङ्गं धर्म्मकर्म्मसमन्वितम्।
बभूव काममत्तायाः योनौ कण्डूयनं जलम्॥ २५
विसस्मार शशधरं बलिपुत्रमनोरथा।
अहो को वेद भुवने दुर्ज्ञेयं पुंश्चलीमनः॥ २६
पुंश्चल्यां यो हि विश्वस्तो विधिना स विडम्बितः।
वह्निष्कृतश्च यशसा धनेन स्वकुलेन च॥ २७
वाञ्छितं नूतनं प्राप्य विनश्यति पुरातनम्।
सदा स्वकर्म्मसाध्या सा को वा तस्याःप्रियोऽप्रियः२८
दैवे कर्म्मणि पैत्रे च पुत्रे बन्धौ न भर्त्तरि।
दारुणं पुंश्चलीचित्तं सदा शृङ्गारकर्म्मणि॥ २९
प्राणाधिकं रतिज्ञं लम्पटदृष्ट्या हि पुंश्चली।
रत्नप्रदं रत्यविज्ञं विषदृष्ट्या हि पश्यति॥ ३०
सर्व्वेषां स्थलमस्त्येव पुंश्चलीनां न कुत्रचित्।
दारुणा पुंश्चलीजातिनरघातिन्य एव च॥ ३१
निष्कृतिः कर्म्मभोगान्ते सर्व्वेषामस्ति निश्चितम्।
न पुंश्चलीनां विप्रेन्द्र यावच्चन्द्रदिवाकरौ॥ ३२
अन्यासां कामिनीनाञ्च कीटं हन्तुञ्च या दया।
सा नास्ति पुंश्चलीनान्तु कान्तं हन्तुं पुरातनम्॥३३
रतिज्ञं नूतनं प्राप्य विषतुल्यं पुरातनम्।
कान्तं दृष्ट्वा हिनस्त्येव सोपायेनावलीलया॥ ३४
पृथिव्यां यानि पापानि पुंश्चलीष्वेव भारते।
तिष्ठन्ति पापिनस्ताभ्यो न पराः सन्ति केचन॥ ३५
पुंश्चलीपरिपक्वान्नं सर्व्वपातकमिश्रितम्।
दैवे कर्म्मणि पैत्रे च न च देयं तथा जलम्॥ ३६
अन्नं विष्ठा जलं मूत्रं पुंश्चलीनाञ्च निश्चितम्।
दत्त्वा पितृभ्यो देवेभ्यो भुक्त्वा च नरकं व्रजेत्॥३७
शतवर्षं कालसूत्रे पचत्येव सुदारुणे।
घोरान्धकारे कृमयस्तं दशन्ति दिवानिशम्॥ ३८
पुंश्चल्यन्नञ्च यो भुङ्क्ते दैवाद्यदि नराधमः।
सप्तजन्मकृतं पुण्यं तस्य नश्यति निश्चितम्॥ ३९
आयुःश्रीयशसां हानिरिह लोके परत्र च।
तस्माद्यत्नाद्वर्जनीयं पाकपात्रं कलत्रकम्॥ ४०
पुंश्चलीदर्शने पुण्य-यात्रासिद्धिर्भवेद्ध्रुवम्।
स्पर्शने च महापापं तीर्थस्नानाद्विशुध्यति॥ ४१
स्नानं दानं व्रतञ्चैव जपश्च देवपूजनम्।
निष्फलं पुंश्चलीनाञ्च भारते जीवनं वृथा॥ ४२
कथितं कुलटाख्यानं दुर्ज्ञेयञ्च यथागमम्।
संवादञ्च तयोस्तत्र प्रकृतं शृणु नारद॥ ४३
स पुनश्चेतनां प्राप्य तां दृष्ट्वैव बलेः सुतः।
कामातुरः प्रमत्तश्च जगाम कुलटान्तिकम्॥ ४४
उवाच कुटिलापाङ्गीं पीनश्रोणिपयोधराम्।
व्रीड़या वाससा वक्त्रमाच्छन्नं कुर्व्वतीं मुदा॥ ४५

साहसिक उवाच।

कासि त्वं कस्य कन्यासि कस्य कान्तासि कामिनि।
स्वयं क्व यासि कं सुभ्रु पुण्यवन्तं मनोहरम्॥ ४६
कल्पान्ततपसा पूतं भोक्तुं त्वामेव सुन्दरि।
यं तं यासि यासि यासि मां भृत्यं कर्त्तुमर्हसि॥ ४७
क्रीणीहि रतिपण्येन मां भृत्यं रतिलोलुपम्।
शृङ्गारलोलुपा त्वञ्च शृङ्गारं देहि कामुकि॥ ४८
त्वया सह ममाश्लेषो विधिना च विनिर्म्मितः।
निरूपितं यत् तेनैव वार्य्यते केन तत् प्रिये॥ ४९
वाक्यं पीयूषसदृशं सस्मितं वद सुन्दरि।
शीघ्रं भुजलतापाशैर्बन्धनं कुरु निर्ज्जने॥ ५०
आसनं देहि कल्याणि क्रोड़ं कनकसन्निभम्।
स्तनमण्डलयुग्मञ्च यात्रायोग्यं प्रदर्शय।
तीक्ष्णास्त्रेण कटाक्षेण जर्ज्जरं कुरु कामिनि॥ ५१
कामसर्पहतं पादस्पर्शेन नीरुजं कुरु।
अधरोष्ठामृतं स्वादु देहि मे क्षुभिताय च॥ ५२
पक्वदाड़िम्ववीजाभं दन्तं दर्शय सुन्दरम्।
गभीरनाभीं त्रिवलीं द्रष्टुमिच्छामि सुन्दरि॥ ५३
नीवीप्रमोचनं कर्त्तुमिच्छा मे वर्द्धते सदा।
श्रोणिं पश्यामि ललितां मुनिमानसमोहिनीम्॥५४
शरन्मध्याह्नपद्मानां प्रभामोचनलोचनम्।
शरत्पार्व्वणचन्द्रास्यं प्रसन्नञ्च प्रदर्शय॥ ५५
सा च तद्वचनं श्रुत्वा तमुवाच स्मरातुरा।
दृष्टान्तं कामवाणेन मानं संरक्ष्य कामिनी॥ ५६

तिलोत्तमोवाच।

पतिस्त्वत्सदृशो नाथ कामिनीनां मनीषितः।
बलिपुत्रोऽसि धर्म्मिष्ठो रूपवान् गुणवान् युवा॥५७
शृङ्गारनिपुणः शान्तः कामशास्त्रविशारदः।

सदा मनोज्ञः स्त्रीणां त्वं सुवेशश्च स्वभावतः॥ ५८
सुवेशं सुन्दरं शान्तं कान्तं दान्तमरोगिणम्।
शृङ्गारज्ञं गुणज्ञञ्च युवानं रसिकं शुचिम्॥ ५९
स्त्रीमनोज्ञं दयालुञ्च बलिष्ठं सन्तमीश्वरम्।
दाराणामनुरक्तञ्च कान्तमिच्छति कामिनी॥ ६०
एते सर्व्वे गुणाः कान्त सन्ति कान्ते त्वयि ध्रुवम्।
त्वां न वाञ्छन्ति याः कान्तास्ताश्चविधात्रवञ्चिताः॥६१
सन्तोषं ते करिष्यामि समागम्य विधोर्गृहात्।
वेशं कृत्वा तु चन्द्रार्थं जाताद्य तस्य कामिनी।
याश्च धर्म्मं न रक्षन्ति तासाञ्च जीवनं वृथा॥ ६२
चन्द्राश्लेषं न जानन्ति यास्ता मूढ़ाः प्रकीर्त्तिताः।
ता एव मातृगर्भस्था न प्राज्ञाः पौरुषे रसैः॥ ६३
स्वर्व्वैद्यौ मदनश्चन्द्रो मसलान् नलकूवरः।
एभिर्नालिङ्गिता यास्ता वञ्चिता रतिकर्म्मभिः॥६४
दिवानिशं मानसं मे तेषां क्रीड़ाञ्च चिन्तयेत्।
विशेषतः कामदेवो निपुणो रतिकर्म्मणि॥ ६५
चन्द्रशृङ्गारमाश्लेषं मनोज्ञममृताधिकम्।
अद्य तस्य रतिदिनं तेन तं चिन्तयेन्मनः॥ ६६
तिलोत्तमावचः श्रुत्वा जहास बलिनन्दनः।
सकामश्च सपुलकस्तामुवाच रहःस्थले॥ ६७

साहसिक उवाच।

ब्रह्मणा निर्म्मिता त्वञ्च कौतुकेन तिलोत्तमे।
त्वत्तो वरा नाप्सरसो विदग्धा रसिकेश्वरि॥ ६८
सुन्दोपसुन्दयोर्नाश-निमित्तेन प्रयत्नतः।
सर्व्वरूपगुणाधारा विधिना च कृता पुरा॥ ६९
सर्व्वं जानामि सर्व्वज्ञे विज्ञे सुरतकर्म्मणि।
हर्षेण श्रोतुमिच्छामि वद स्वमानसं वचः॥ ७०
अतिप्रियश्च को वा वः कः स्वभावो वरानने।
अकथ्यं गोपनीयञ्च श्रोतुमिच्छामि सुन्दरि॥ ७१
गन्धर्व्वाणां सुराणाञ्च राज्ञां पुण्यवतामपि।
सर्व्वेषां प्राणतुल्या त्वं तेषु कश्च परः प्रियः॥ ७२
असुरस्य वचः श्रुत्वा प्रहस्य सा तिलोत्तमा।
मुखमाच्छादनं चक्रे विलोक्य वक्रचक्षुषा॥ ७३
सत्यं सारमन्तरस्थ-मव्यक्तमतिगोपनम्।
उवाच मानसं वाक्यमज्ञातं विदुषामपि॥ ७४

तिलोत्तमोवाच।

कथनीयञ्चासुरेन्द्र पुंश्चलीनां मनो वचः।
वेदवेदान्तशास्त्रान्तं सर्व्वं जानाति पण्डितः।
कान्त नान्तं विजानाति दिवाकाशे च योषिताम्॥७५
विशादश्च प्रियो वृद्धो रन्तदोऽपि च योषिताम्।
युवा सर्व्वस्वहर्त्ता चेत् प्राणेभ्योऽपि परः प्रियः॥७६
युवानं सुन्दरं दृष्ट्वा मत्ता भवति पुंश्चली।
विशेषतः सुवेशञ्च दृष्ट्वैव हृतचेतना॥ ७७
निमेषरहिता तस्य लोचनाभ्यां पपौ सुखम्।
योनौ जलं स्रवेत् तस्याः सद्यः कण्डूयनं भवेत्॥७८
मनोऽतिलोलमस्थैर्य्यं सर्व्वाङ्गाणि चकम्पिरे।
जड़ीभूतं शरीरञ्च प्रदग्धं मदनानलात्॥ ७९
सम्प्राप्य तच्चेद्रहसि सालापं कुरुते स्फुटम्।
सकटाक्षं स्मेरवक्त्रं दर्शयित्वा पुनः पुनः॥ ८०
तदा यदि वशं कर्त्तुं न शशाक जितेन्द्रियम्।
स्वमङ्गं दर्शयित्वा तमन्तर्व्वाक्यं स्फुटं वदेत्॥ ८१
दुःसाध्ये नायके दुःखं भवेदाजन्म कर्म्मणि।
तत्तुल्यं तत्परं प्राप्य तं विस्मरति पुंश्चली॥ ८२
पुंश्चलीनामप्रियः कः प्रियः को वा महीतले।
यो हि शृङ्गारनिपुणः स च प्राणाधिकः प्रियः॥ ८३
पूर्व्वजारं पतिं पुत्त्रं भ्रातरं पितरं प्रसूम्।
विशिष्टं नूतनं प्राप्य सर्व्वं त्यजति लीलया॥ ८४
न दानेन न पुण्येन न सत्येन स्तवेन वा।
नोपकारेण प्रीता सा साध्या च सुरतिं विना॥ ८५
शयने भोजने चापि स्वप्ने ज्ञाने दिवानिशम्।
नित्यं सत्पुरुषाश्लेषं स्मरन्ति कुलटाः स्त्रियः॥ ८६
शृङ्गारनिपुणानाञ्च ध्यानसाध्या चिरं परम्।
दारुणा पुंश्चलीजातिः प्रार्थयन्ती नवं नवम्॥ ८७
सर्व्वासां कुलटानाञ्च चरितं कथितं मया।
अकथ्यं गोपनीयञ्च मम हृद्वचनं शृणु॥ ८८
न मे सन्ति प्रियतरा गन्धर्व्वेषु रगेषु च।
युवानो रतिशूराश्च कामशास्त्रविशारदाः॥ ८९
विशेषतः शशधरस्त्वेहो मे विद्यते परः।
ततोऽतिरेकः सर्व्वस्मादपि कामः प्रियो मम॥९०
प्रियो मे कामसदृशो न भूतो न भविष्यति।
स्मरस्य स्मरणात् तूर्णं सुस्निग्धं मानसं मम॥ ९१
इत्येवं कथितं सर्व्वमात्मनो योषितामपि।
आज्ञां कुरु महाराज यास्यामि चन्द्रसन्निधिम्॥९२
चन्द्रस्थानात् तव स्थानं समागत्य सुनिश्चितम्।

सन्तोषं तव दैत्येन्द्र करिष्यामि न संशयः॥ ९३
श्रुत्वैवं बलिपुत्रश्च जहासोच्चैः पुनः पुनः।
सा वक्रचक्षुषालोक्य तं जहास स्मरातुरा॥ ९४
छलेन दर्शयामास कठिनं स्तनयोर्युगम्।
चारुचम्पकवर्णाभं वर्त्तुलं पीनमुच्छ्रितम्॥ ९५
श्रोणीं सुकठिनां रम्यां रम्भास्तम्भविनिन्दिताम्।
सकटाक्षं स्मेरमुखं कपोलं पुलकाञ्चितम्॥ ९६
रहःस्थलं समासाद्य कामेन हतचेतना।
पुलकाञ्चितसर्व्वाङ्गी लोचनाभ्यां पपौ सुखम्॥ ९७
तस्य रूपञ्च वेशञ्च दर्शं दर्शं पुनः पुनः।
मुखमाच्छादनं भावात् कुर्व्वती सूक्ष्मवाससा॥ ९८
अतिकामातुरां दृष्ट्वा सुप्रश्नी बलिनन्दनः।
पप्रच्छ कामिनीं कामी भावं विज्ञातुमुत्सुकः॥ ९९

साहसिक उवाच।

किं करिष्यामि मां सत्यं वद पङ्कजलोचने।
कार्य्यान्तरं गमिष्यामि सुचिरं स्थातुमक्षमः॥ १००
कामिनीषु बलात्कारो न धर्म्मो धर्म्मिणां प्रिये।
विशेषतो हि विदुषां नास्माकं स्वकुलोचितः॥ १०१
शृङ्गारं देहि चागच्छ रतिशूरान्तिकं शुभे।
कः क्षमो वा वशीकर्त्तुं पुंश्चलीं बहुगामिनीम्॥ १०२
दैत्येन्द्रस्य वचः श्रुत्वा शुष्ककण्ठौष्ठतालुका।
आत्मानमवमत्याह हतमाना स्मरास्त्रतः॥ १०३

तिलोत्तमोवाच।

कथमेवं ब्रूहि कान्त त्वं मे प्राणाधिकः प्रियः।
कथं वा कोपयुक्तोऽसि कुरु कार्य्यं मनीषितम्॥ १०४
त्वामेव विमुखं कृत्वा यामि चन्द्रान्तिकं यदि।
तवाभिशापात् तत्रैव सद्यो विघ्नो भविष्यति॥ १०५
विचारं कुरु भद्रं ते करिष्यति हरिः स्वयम्।
पदे पदे शुभं तस्य यः स्त्रीमानञ्च रक्षति॥ १०६
अवमत्य स्त्रियं मूढ़ो यो याति पुरुषाधमः।
पदे पदे तदशुभं करोति पार्व्वती सती॥ १०७
तिलोत्तमावचः श्रुत्वा जहास बलिनन्दनः।
कामशास्त्रेषु विज्ञातस्तद्भावं बुबुधे सुधीः॥ १०८
भावं विज्ञाय भावज्ञः कामशास्त्रविशारदः।
करे धृत्वा समाश्लिष्य चुचुम्ब मुखपङ्कजम्॥ १०९
जगाम च तया सार्द्धं गन्धमादनगह्वरम्।
ददर्श तत्र गत्वा च स्थानं जन्तुविवर्ज्जितम्॥ ११०
संस्थाप्य रत्नदीपांश्च धूपञ्च सुमनोहरम्।
शय्यां रतिकरीं कृत्वा सुष्वाप च तया सह॥ १११
नानाप्रकारशृङ्गारं चकार काममोहितः।
तिलोत्तमा तं बुबुधे स्मरादपि विचक्षणम्॥ ११२
विपरीतरतौ तुष्टा बभूव रसिकेश्वरी।
दिवानिशं न बुबुधे नवसङ्गमसूर्च्छिता॥ ११३
तिलोत्तमा कामशराद्बलिपुत्रमुवाच ह।
कृत्वा वक्षसि प्राणेशं स्तनयोरन्तरे तदा॥ ११४

तिलोत्तमोवाच।

कदा द्रक्ष्यामि हे कान्त मुखचन्द्रं मनोहरम्।
एवम्भूतं शुभदिनं कदा मे भविता पुनः॥ ११५
अयि किं रूपमाश्चर्य्यं गुणो वा तव दानव।
ध्रुवं शृङ्गारनिपुणस्त्वत्परो नास्ति कश्चन॥ ११६
मां विस्मरसि कालेन पुरुषः षट्पदोपमः।
स्त्रीणां सत्पुरुषाश्लेषमाजीवं मनसि स्थितम्॥ ११७
सत्सङ्गमः शुभदिने पुण्यात् पुण्यवतां भवेत्।
तद्विच्छेदो दुःखहेतुर्मरणादतिरिच्यते॥ ११८
पीयूषभोजनात् स्वर्गवासादपि सुदुर्लभः।
सत्सङ्गमः सुखमयोऽप्यसत्सङ्गो विषाधिकः॥ ११९
क्षणं तिष्ठ महाराज पुनरालिङ्गनं कुरु।
तव सार्द्धं मम प्राणा यास्यन्ति चेतसा सह॥ १२०
इत्येवमुक्त्वा कुलटा कृत्वा वक्षसि दानवम्।
पुमङ्गसङ्गोत्पुलका मूर्च्छामाप सुखेन च॥ १२१
कुलटालिङ्गनालापात् सोऽतिकामी बभूव ह।
यथा दीप्तः कृष्णवर्त्मा वर्द्धते हविषाधिकम्॥ १२२
पुनश्चकार शृङ्गारमसुरोऽष्टविधं मुने।
चुम्बनञ्च नवविधं यथास्थाने यथोचितम्॥ १२३
नखदन्तकरैः क्रीड़ां चकार विविधां पुनः।
किङ्किणीकङ्कणानाञ्च बभूव रव उल्बणः॥ १२४
मुनेर्दुर्व्वाससस्तेन ध्यानभङ्गो बभूव ह।
अदृष्टस्य तयोस्तत्र वल्मीकाच्छादितस्य च॥ १२५
योगासनं कुर्व्वतश्च गन्धमादनगह्वरे।
ध्यायतश्चरणाम्भोजं कृष्णस्य परमात्मनः॥ १२६
न पपात तयोर्दृष्टिः समीपस्थे महामुनौ।
कामात्मनोर्न हि ज्ञानं कामेन हतचेतसोः॥ १२७
सहसा चेतनां प्राप्य प्रज्वलन् ब्रह्मतेजसा।
ददर्श पुरतस्तौ तु मुनिरुन्मील्य लोचने॥ १२८

दिवानिशं न जानन्तौ संयुक्तौ काममोहितौ ।
दृष्ट्वा चुकोप तेजस्वी रुद्रांशो भगवान् विभुः ॥१२९
उवाच तौ विहारान्ते रक्तपङ्कजलोचनः ।
ध्यानप्राप्तपदाम्भोज-विच्छेदोद्विग्नमानसः ॥ १३०

दुर्व्वासा उवाच ।

उत्तिष्ठ गर्द्दभाकार निर्लज्ज पुरुषाधम ।
भक्तप्रधानस्य बलेः कुपुत्रः पशुतुल्यकः ॥ १३१
देवो वा मानवो वापि दैत्यगन्धर्व्वराक्षसाः ।
लज्जां कुर्व्वन्ति सततं स्वजातौ च पशुं विना ॥१३२
ज्ञानलज्जाविहीना च खरजातिविशेषतः ।
तस्मात् त्वं दानवश्रेष्ठ खरयोनिं व्रजाधुना ॥ १३३
तिलोत्तमे त्वमुत्तिष्ठ लज्जाहीने च पुंश्चलि ।
एतादृशी स्पृहा दैत्ये व्रज योनिञ्च दानवीम् ॥१३४
इत्येवमुक्त्वा स मुनिस्तस्थौ तत्र रुषा ज्वलन् ।
तौ तु तुष्टुवतुर्भीतावुत्थाय व्रीडितौ मुनिम् ॥ १३५

साहसिक उवाच ।

त्वं ब्रह्मा त्वञ्च विष्णुश्च त्वञ्च साक्षान्महेश्वरः ।
हुताशनस्त्वं सूर्य्यश्च सृष्टिस्थित्यन्तकारकः ॥ १३६
क्षमापराधं भगवन् कृपां कुरु कृपानिधे ।
मूढापराधं सततं यः क्षमेत् स सदीश्वरः ॥ १३७
इत्येवमुक्त्वा दैत्येन्द्रो सरोदोच्चैः पुरो मुनेः ।
कृत्वा तृणानि दशने पपात चरणाम्बुजे ॥ १३८

तिलोत्तमोवाच ।

हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु ।
विधिः स्रष्टा च सर्व्वेषां मूढ़ा स्त्रीजातिरेव च ॥१३९
ततोऽतिमत्ता कुलटा सदा कामातुरा परा ।
लज्जा-भीति-चेतनाश्च न सन्ति कामुके विभो॥१४०
इत्युक्त्वा रोदनं कृत्वा जगाम शरणं मुनेः ।
विना विपत्तेः कोपाश्चिज्ज्ञानं भवति भूतले ॥ १४१
तयोर्दृष्ट्वा च वैकल्यं बभूव करुणा मुनेः ।
उवाच ताभ्यामभयं दत्त्वा मुनिवरो मुने ॥ १४२

दुर्व्वासा उवाच ।

अभिशापः प्रसादो वा भवेद्दैवेन दानव ।
सत्कीर्त्तिरपकीर्त्तिर्वा प्राक्तनप्रभवा ध्रुवम् ॥ १४३
विष्णुभक्तस्य च बलेः पुत्रः सद्वंशसम्भवः ।
जनकाद्विष्णुभक्तोऽसि जानामि त्वां सुनिश्चितम्॥१४४
जनकस्य स्वभावो हि जन्ये तिष्ठति निश्चितम् ।
यथा श्रीकृष्णपादाङ्कः कालीयवंशमस्तके ॥ १४५
सम्प्राप्य गार्द्दभीं योनिं वत्स निर्व्वाणतां लभ ।
पूर्व्वकृष्णार्च्चनफलं न हि लुप्तं सतश्चिरात् ॥ १४६
वृन्दारण्यं तालवनं व्रज शीघ्रं व्रजान्तिकम् ।
प्राणांस्त्यक्त्वा हरेश्चक्रान्मुक्तिं प्राप्स्यसि निश्चितम्॥१४७
तिलोत्तमे भारते त्वं बाणपुत्री भविष्यसि ।
श्रीकृष्णपौत्रात्श्लेषेण पुनरत्रागमिष्यसि ॥ १४८
इत्येवमुक्त्वा स मुनिर्विरराम महामुने ।
तौ जग्मतुर्यथास्थानं प्रणम्य मुनिपुङ्गवम् ॥ १४९
इत्युक्तं सर्व्ववृत्तान्तं दैत्यस्य खरजन्मनः ।
तिलोत्तमा बाणपुत्री ऊषानिरुद्धकामिनी ॥ १५०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे तिलोत्तमा
बलिपुत्रयोर्ब्रह्मशापप्रस्तावो नाम
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्व्विंशोऽध्यायः ।

नारायण उवाच ।

निगूढ़ं शृणु वृत्तान्तं मुनेर्दुर्व्वाससो मुने ।
अहोऽस्य दारसंयोगकथां तामूर्द्धरेतसः ॥ १
दृष्ट्वा तयोश्च शृङ्गारं मुनिः कामी बभूव ह ।
जितेन्द्रियेऽप्यसत्संसर्गाद्दोषः सांसर्गिको भवेत् ॥ २
सहसा तस्य हृदये बभूव सुरतस्पृहा ।
तपस्त्यक्त्वा तत्र दध्यौ कामिनीं मदनातुरः ॥ ३
एतस्मिन्नन्तरे तत्र पथा याति मुनीश्वरः ।
प्रार्थयन्त्या पतिं सन्तमौर्व्वश्च सुतया सह ॥ ४
जरुद्भवो ब्रह्मणश्च पुराकल्पे तपस्यतः ।
ऊर्द्धरेताश्च योगीन्द्र और्व्वस्तेन इति स्मृतः ॥ ५
तस्य जानूद्भवा कन्या कन्दली नाम विश्रुता ।
दुर्व्वाससं प्रार्थयन्ती नान्यं मनसि रोचते ॥ ६
ससुतो हि मुनिश्रेष्ठो मुनेर्दुर्व्वाससः पुरः ।
तस्थौ महाप्रसन्नश्च ज्वलदग्निशिखोपमः ॥ ७
मुनीन्द्रो हि मुनीन्द्रं तं पुरो दृष्ट्वा ससम्भ्रमः ।
प्रजवेन समुत्तस्थौ ननाम च मुदान्वितः ॥ ८
और्व्वो दुर्व्वाससं नत्वा समाश्लिष्य मुदान्वितः ।
उवाच मुनये सर्व्वं कन्यकाया मनोरथम् ॥ ९

और्व्व उवाच।

विख्याता कन्दली नाम्ना मम कन्या मनोहरा।
प्रौढ़ा त्वामेव ध्यायन्ती श्रुत्वा वाचिकवक्त्रतः॥ १०
अयोनिसम्भवा कन्या त्रैलोक्यं मोहितुं क्षमा।
सर्व्वरूपगुणाधारा दोषेणैकेन संयुता॥ ११
अतीवकलहाविष्टा कोपेन कटुभाषिणी।
नानागुणयुतं द्रव्यं न त्याज्यमेकदोषतः॥ १२
और्व्वस्य वचनं श्रुत्वा हर्षशोकान्वितो मुनिः।
ददर्श कन्यां पुरतो गुणरूपसमन्विताम्॥ १३
शरत्पार्व्वणचन्द्रास्यां शरत्पङ्कजलोचनाम्।
ईषद्धास्यप्रसन्नास्यां पीनश्रोणिपयोधराम्॥ १४
नवयौवनसंयुक्तां पश्यन्तीं वक्रचक्षुषा।
रत्नालङ्कारशोभाढ्यां वह्निशुद्धांशुकान्विताम्॥१५
मुनिर्मुमोह तां दृष्ट्वा कामबाणप्रपीड़ितः।
उवाच तं मुनिश्रेष्ठं हृदयेन विदूयता॥ १६

दुर्व्वासा उवाच।

नारीरूपं त्रिभुवने मुक्तिमार्गविरोधनम्।
व्यवधानं तपस्यायाः सन्ततं मोहकारणम्॥ १७
कारागारे च संसारे दुर्व्वहं निगड़ं परम्।
अच्छेद्यं ज्ञानखड्गाच्च महद्भिः शङ्करादिभिः॥ १८
सङ्गि च्छायातिरिक्तञ्च कर्म्मभोगात् परात्परम्।
इन्द्रियादिन्द्रियाधाराद्विद्यायाश्च मतेरपि॥ १९
आदेहं सङ्गिनी च्छाया भोगान्तं भोग एव च।
देहेन्द्रियाणि जीवान्तं विद्या चैवानुशीलनम्॥ २०
मतिश्चैवावशीलान्ता सुस्त्री जन्मनि जन्मनि।
यावज्जीवी च सस्त्रीको न तावज्जन्मखण्डनम्॥ २१
यावच्च जीविनो जन्म तावद्भोगं शुभाशुभम्।
परं मुनीन्द्र सर्व्वस्माद्धरिपादाब्जसेवनम्॥ २२
ध्यायतः कृष्णपादाब्जं मम विघ्नं बभूव ह।
न जाने कर्म्मदोषेण केन वा पूर्व्वजन्मनः॥ २३
पुंश्चल्या सह शृङ्गारं दृष्ट्वा दैत्यस्य मन्मनः।
बभूव कामयुक्तञ्च दत्तं धात्रा च तत्फलम्॥ २४
किन्त्वहं तव कन्यायाः कटूक्तिशतकं मुने।
श्रुवं क्षमां करिष्यामि दास्यामि च ततः फलम्॥ २५
सर्व्वतोऽपि परा निन्दा स्त्रीकटूक्तिसहिष्णुता।
अतीव निन्दितः सत्सु स्त्रीजितो भुवनत्रये॥ २६
तवाज्ञां मस्तके कृत्वा ग्रहीष्यामि सुतां तव।
उपेतां कामिनीं त्यक्त्वा कालसूत्रं व्रजेन्नरः॥ २७
रहस्युपस्थितां कामात् पुंश्चलीं चेज्जितेन्द्रियः।
परित्यजेद्धर्म्मभयाद्धर्म्मान्नरकं व्रजेत्॥ २८
इत्येवमुक्त्वा दुर्व्वासा विरराम मुनेः पुरः।
मुनिर्व्वेदोक्तविधिना ददौ तस्मै सुतां मुने॥ २९
स्वस्तीत्युवाच दुर्व्वासा मुनिश्च यौतुकं ददौ।
कन्यासमर्पणं कृत्वा मोहादुच्चै रुरोद ह॥ ३०
मूर्च्छामवाप स मुनिः स्वकन्याविरहातुरः।
अपत्यभेदशोकौघः स्वात्मारामं न मुञ्चति॥ ३१
क्षणेन चेतनां प्राप्य बोधयामास कन्यकाम्।
मूर्च्छितां तातविच्छेदे रुदतीं शोकसंयुताम्॥ ३२

और्व्व उवाच।

शृणु वत्से प्रवक्ष्यामि नीतिसारं सुदुर्लभम्।
हितं सत्यञ्च वेदोक्तं परिणामसुखप्रदम्॥ ३३
स्वकान्तश्च परो बन्धुरिह लोके परत्र च।
न हि कान्तात् परः प्रेयान् कुलस्त्रीणां परो गुरुः॥३४
देवपूजा व्रतं दानं तपश्चानशनं जपः।
स्नानञ्च सर्व्वतीर्थेषु दीक्षा सर्व्वमखेषु च॥ ३५
प्रादक्षिण्यं पृथिव्याश्च ब्राह्मणातिथिसेवनम्।
सर्व्वाणि पतिसेवायाः कलां नार्हन्ति षोड़शीम्॥३६
किमेतैः पतिभक्तायाः अभक्तायाश्च भारते।
पतिसेवापरो धर्म्मो न हि स्त्रीणां श्रुतौ श्रुतम्॥३७
स्वप्ने ध्यानेन सततं कान्तं नारायणाधिकम्।
दृष्ट्वा तच्चरणाम्भोज-सेवां नित्यं करिष्यसि॥ ३८
परिहासेन कोपेन भ्रमेणावज्ञया सुते।
कटूक्तिं स्वामिनः साक्षात् परोक्षान्न करिष्यसि॥३९
स्त्रिया वाग्योनिदुष्टायाः कामतो भारते भुवि।
प्रायश्चित्तं श्रुतौ नास्ति नरकं ब्रह्मणः शतम्॥ ४०
सर्व्वधर्म्मपरीता या कटूक्तिं कुरुते पतिम्।
शतजन्मकृतं पुण्यं तस्या नश्यति निश्चितम्॥ ४१
इत्वा कन्यां बोधयित्वा जगाम मुनिपुङ्गवः।
स्वात्मारामः स्वाश्रमे च तस्थौ स्त्रीसहितो मुदा॥४२
सम्भोगेच्छाकृते चित्ते कामी सम्प्राप कामिनीम्।
अहो सुकृतिनां कर्म्म वाञ्छामात्रेण सिध्यति॥ ४३
शय्यां रतिकरीं कृत्वा मुनिश्रेष्ठो महामनाः।
शुभक्षणे तां गृहीत्वा सुष्वाप निर्ज्जने प्रियाम्॥ ४४
नारीरसानभिज्ञः स्यादाजन्म मुनिपुङ्गवः।

तथापि सुरते विज्ञः कामशास्त्रविशारदः।
नानाप्रकारश्रृङ्गारं चकार विधिपूर्व्वकम् ॥ ४५
नवसङ्गममात्रेण मूर्च्छां सम्प्राप कन्दली।
मूर्च्छां प्राप मुनिश्रेष्ठो बुबुधे न दिवानिशम् ॥ ४६
यथा दुःखी सुखारम्भे साकाङ्क्षः प्रथमे भवेत्।
एवं प्रतिदिनं तत्र चकार सुरतिं सुखे।
विदग्धाया विदग्धेन बभूव सङ्गमः समः ॥ ४७
सम्बभूव शृङ्गासक्तास्तपस्त्यक्त्वा मुनीश्वरः।
करोति कलहं नित्यं कन्दली स्वामिना सह ॥ ४८
मुनीन्द्रो बोधयामास नीतिवाक्येन कामिनीम्।
सा तन्न बुबुधे किञ्चित् करोति कलहे स्पृहाम् ॥ ४९
तातप्रदत्तज्ञानेन सा न शान्ता बभूव ह।
न जहाति प्रबोधेन स्वभावो दुरतिक्रमः ॥ ५०
नित्यं कटूक्तिं कान्तं सा करोति हेतुना विना।
जगत् प्रकम्पितं येन तथा कोपात् स कम्पितः ॥५१
तया कृतां कटूक्तिञ्च क्षमासंख्यां चकार ह।
बोधयामास तां नित्यं कन्दलीं वै दयानिधिः ॥ ५२
कटूक्तिशतकं पूर्णं तत्कालेन बभूव ह।
क्षमां चकार कृपया कटूक्तिञ्च शताधिकाम् ॥ ५३
पत्नीकटूक्त्या नियतं प्रदग्धं मानसं मुनेः।
तस्याः कटूक्तिकारिण्याः कर्म्म पूर्णं बभूव ह ॥ ५४
स्वात्मारामो दयालुश्च कोपं त्यक्तुं न सक्षमः।
शशाप कामिनीं कोपाद्भस्मराशिर्भवेति च ॥ ५५
मुनेरिङ्गितमात्रेण भस्मसात् सा बभूव ह।
एवमत्युज्झितानाञ्च न कल्याणं जगत्त्रये ॥ ५६
शरीरे भस्मसाद्भूते प्रतिबिम्बः स चात्मनः।
जीवस्तत्रान्तरीक्षस्थ उवाच विनयं प्रभुम् ॥ ५७

जीव उवाच।

हे नाथ सर्व्वदर्शी त्वं सन्ततं ज्ञानचक्षुषा।
सर्व्वं जानासि सर्व्वज्ञ किमहं बोधयामि ते ॥ ५८
सदुक्तिर्वा कटूक्तिर्वा कोपः सन्तोष एव च।
लोभो मोहश्च कामश्च क्षुत्पिपासादिकञ्च यत् ॥ ५९
स्थौल्यं कार्श्यञ्च नाशश्च दृश्यादृश्यं समुद्भवम्।
सर्व्वं शरीरधर्म्मश्च न जीवस्य न चात्मनः ॥ ६०
सत्त्वं रजस्तम इति शरीरं त्रिगुणात्मकम्।
तच्च नानाप्रकारञ्च निबोध कथयामि ते ॥ ६१
किञ्चित् सत्त्वातिरिक्तञ्च किञ्चिदेव रजोऽधिकम्।
तमोऽतिरिक्तं किञ्चिच्च न समं कुत्रचिन्मुने ॥ ६२
सत्त्वाद्दया च मुक्तीच्छा कर्म्मेच्छा च रजोगुणात्।
तमोगुणाज्जीवहिंसा कोपोऽहङ्कार एव च ॥ ६३
कोपात् कटूक्तिर्नियतं कटूक्त्या शत्रुता भवेत्।
तया चाप्रियता सद्यः शत्रुः कः कस्य भूतले ॥ ६४
को वा प्रियोऽप्रियः को वा किं मित्रं को रिपुर्भुवि।
इन्द्रियाणि च बीजानि सर्व्वत्र शत्रुमित्रयोः ॥ ६५
प्राणाधिकः प्रियः स्त्रीणां भर्त्तुः प्राणाधिका प्रिया।
बभूव शत्रुता सद्यो दुरुक्त्या च क्षमावयोः ॥ ६६
यत् कृतं तद्गतं सर्व्वं कर्म्मदोषेण मे विभो।
क्षमापराधं निखिलं किं कर्त्तव्यं वदाधुना ॥ ६७
किं करोमि क्व यामीति भविता कुत्र जन्म मे।
तवान्यस्य न जायाहं भविष्यामि जगत्त्रये ॥ ६८
इत्येवमुक्त्वा जीवश्च मौनीभूतो बभूव ह।
मूर्च्छामवाप स मुनिः शोकेन हतचेतनः ॥ ६९
स्वात्मारामो महाज्ञानी जहार चेतनामहो।
स्त्रीविच्छेदो विदग्धानां सर्व्वशोकात् परात्परः ॥७०
क्षणेन चेतनां प्राप्य प्राणांस्त्यक्तुं समुद्यतः।
तत्र योगासनं कृत्वा चकार वायुधारणम् ॥ ७१
एतस्मिन्नन्तरे तत्राजगाम ब्राह्मणार्भकः।
दण्डी छत्री रक्तवासा बिभ्रत्तिलकमुज्ज्वलम् ॥७२
सस्मितः श्यामवर्णश्च प्रज्वलन् ब्रह्मतेजसा।
वयसातिशिशुः शान्तो ज्ञानी वेदविदां गुरुः ॥७३
दृष्ट्वा तं सम्भ्रमेणैव दुर्व्वासाः प्रणनाम ह।
वारयामास तत्रैव पूजयामास भक्तितः ॥ ७४
उवाच ब्राह्मणवटुर्दत्त्वा तस्मै शुभाशिषम्।
तद्दर्शनादाशिषा च सर्व्वदुःखं गतं मुनेः ॥ ७५
शिशुरूपः क्षणं स्थित्वा तमुवाच विचक्षणः।
पीयूषतुल्यं नीत्योघं नीतिशास्त्रविशारदः ॥ ७६

शिशुरुवाच।

सर्व्वं जानामि सर्व्वज्ञो गुरोर्मन्त्रप्रसादतः।
किं तत्त्वं त्वामहं विप्र पृच्छामि शोककातरम् ॥७७
ब्राह्मणानां तपो धर्म्मस्तपःसाध्यं जगत्त्रयम् ॥
स्वधर्म्मं सम्परित्यज्य किमिदानीं करोषि भोः ॥ ७८
का कस्य पत्नी कः कान्तः कस्या वा भुवनत्रये।
मूर्खांश्च वञ्चनं कर्त्तुं करोति मायया हरिः ॥ ७९
मिथ्या पत्नी तवैषा च क्षणात् तेन गताधुना।

न हि सत्यमदृश्यञ्च मिथ्या मात्रं व्यवस्थिता ॥ ८०
एकानंशा हरेर्भग्नी वसुदेवसुता मुने ।
पार्व्वत्यंशसमुद्भूता सुशीला चिरजीविनी ॥ ८१
कल्पे कल्पे सुन्दरी सा तव पत्नी भविष्यति ।
मनो देहि तपस्यांश सुधा कतिपयं दिनम् ॥ ८२
कन्दली कन्दलीजातिर्भविष्यति महीतले ।
शुभदा फलपाकान्ता सङ्गलुता सुदुर्लभा ॥ ८३
कल्पान्तरे सुन्दरी सा तव पत्नी भविष्यति ॥
अत्युच्छ्रितस्य दमनमुचितञ्च श्रुतौ श्रुतम् ॥ ८४
इत्येवमुक्त्वा शीघ्रञ्च विप्ररूपी जनार्द्दनः ।
दत्त्वा ज्ञानञ्च विप्राय सोऽन्तर्द्धानं चकार ह ॥ ८५
मुनिः सर्व्वं भ्रमं मत्वा तपस्यायां मनो दधौ ।
कन्दली कन्दलीजातिर्बभूव धरणीतले ॥ ८६
दैत्यस्तालवनं गत्वा बभूव गर्द्दभाकृतिः ।
तिलोत्तमा वाणपुत्त्री बभूव समये मुने ॥ ८७
दैत्येन्द्रो विष्णुचक्रेण प्राणांस्त्यक्त्वा सुवाञ्छितम् ।
सम्प्राप चरणाम्भोजं मुनेरपि सुदुर्लभम् ॥ ८८
काले तिलोत्तमा भूत्वा जगाम स्वालयं पुनः ।
कृष्णपौत्त्रालिङ्गनेन परिपूर्णमनोरथा ॥ ८९
इत्येवं कथितं सर्व्वं श्रीकृष्णाख्यानमुत्तमम् ।
पदे पदे सुन्दरञ्च किं भूयः श्रोतुमिच्छसि ॥ ९०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे तालभक्षण-
प्रसङ्गे बलिपुत्त्रमोक्षणं नाम
चतुर्व्विंशोऽध्यायः ॥२४॥

---

## पञ्चविंशोऽध्यायः ।

नारद उवाच ।

श्रुतौ किमद्भुतं ब्रह्मन् हरेश्चरितमङ्गलम् ।
विशेषतस्तव मुखे अतीव सुमनोहरम् ॥ १
मृतायामौर्व्वकन्यायां शापाद्दुर्व्वाससो मुनेः ।
स चागत्य किं चकार तन्मे ब्रूहि तपोधन ॥ २

नारायण उवाच ।

सरस्वतीनदीतीरे तपस्यां कुर्व्वती मुने ।
पपात शीतमूर्च्छाञ्च धार्य्यमाणे च वायुना ॥
पृथिव्यां पतिते वत्से तपस्यक्त्वा मुनीश्वरः ।
ध्यानेन बुबुधे सर्व्वं कन्यासम्बन्धि सङ्कटम् ॥ ४
जगाम शोकाविष्टोऽपि तूर्णं जामातुराश्रमम् ।
सिषेच पृथिवीरेणून् अश्रुन्नयनबिन्दुना ॥ ५
गत्वाश्रमसमीपञ्च विप्रः कातरमानसः ।
हे वत्से कन्दलीत्येवमुवाच च पुनः पुनः ॥ ६
श्वशुरस्य स्वरं ज्ञात्वा दुर्व्वासा भयविह्वलः ।
वहिर्बभूव शीघ्रञ्च पपात चरणाम्बुजे ॥ ७
प्रणम्य श्वशुरं शोकाद्विललाप भृशं पुनः ।
प्रवृत्तिं कथयामास मूलतो मुनिसत्तमम् ॥ ८
श्रुत्वा वार्त्तां शुचाविष्टः पपात धरणीतले ।
मूर्च्छामाप महाज्ञानी निश्चेष्टो हि मृतो यथा ॥ ९
मृतं ज्ञात्वा स दुर्व्वासा मेने मनसि सङ्कटम् ।
चेतनां कारयामास प्रयत्नेन महामुनेः ॥ १०
सम्प्राप्य चेतनां शीघ्रमुवाच तं पुरःस्थितम् ।
जामातरं शोकयुक्तं भीतं प्रणतकन्धरम् ॥ ११
महाशोकादश्रुपूर्ण-रक्तपङ्कजलोचनः ।
कोपात् कम्पितवान् शश्वत् सन्त्रस्तः स्फुरिताधरः॥१२

और्व्व उवाच ।

अयि ब्रह्मन्नत्रिवंश पौत्त्रस्त्वं जगतीपतेः ।
स्वल्पदोषे बहुतरः कृतो दण्डस्त्वया कथम् ॥ १३
त्वज्जन्म शङ्करांशेन शिष्यस्तस्य जगद्गुरोः ।
वेदवेदाङ्गविच्चत्र सर्व्वज्ञो गुणवान् स्वयम् ॥ १४
अनुसूया महासाध्वी कमलांशा तव प्रसूः ।
न जाने केन दोषेण तवैवैतादृशी मतिः ॥ १५
गुणवान् जनको यस्य माता गुणवती सती ।
तयोः पुत्त्रो दयाहीनो गतिः सूक्ष्मा श्रुतेरहो ॥ १६
मम प्राणाधिका कन्या मुदा त्वयि समर्पिता ।
महागुणान्विता स्वल्पदोषेण परिमिश्रिता ॥ १७
वाग्दुष्टायाश्च दण्डो हि परित्यागः श्रुतौ श्रुतः ।
त्वया यदि परित्यक्ता पित्रा यत्नेन पालिता ॥१८
मदपत्यं स्वल्पदोषे यतो भस्म त्वया कृतम् ।
पराभवस्तव महान् भविष्यति न संशयः ॥ १९
महतां क्षुद्रजन्तूनां सर्व्वेषां जीविनां सदा ।
स्रष्टा पाता च शास्ता च भगवान् करुणानिधिः॥२०
इत्युक्त्वा च मुनिश्रेष्ठो विलप्य च पुनः पुनः ।
हे वत्से वत्स इत्युक्त्वा जगाम स्वालयं रुषा ॥ २१
गते मुनीन्द्रे दुर्व्वासा विललाप भृशं पुनः ।

ध्यानेन विस्मृतः शोको बभूव द्विगुणः पुनः ॥ २२
शोकानलो हि कालेन संक्षुण्णो ज्ञानभस्मना।
बन्धुदर्शनशुश्क्रोशदानेन वर्द्धते पुनः ॥ २३
स्मारं स्मारं प्रियां तत्र विलप्य च पुनः पुनः।
बोधयित्वा भ्रमं स्वस्य तपस्यायां मनो दधौ ॥ २४
इत्येवं कथितं सर्व्वं मुनेः शापस्य कारणम्।
बभूव तस्य कालेन दुःसहश्च पराभवः ॥ २५

नारद उवाच।

दुर्व्वासाः शङ्करस्यांशः शिवतुल्यश्च तेजसा।
तेजस्वी को महानेव चकार तत्पराभवम् ॥ २६

नारायण उवाच।

अम्बरीषो हि राजेन्द्रः सूर्य्यवंशसमुद्भवः।
श्रीकृष्णचरणाम्भोजे तन्मनः सन्ततं मुने ॥ २७
न राज्येषु न भार्य्यासु न पुत्त्रेषु प्रजासु च।
न संसक्तं क्षणं चित्तं पूर्व्वकर्म्मार्ज्जितासु च ॥ २८
ध्यायतेऽहर्निशं धर्म्मी स्वप्ने ध्याने हरिं मुदा।
महान् जितेन्द्रियः शान्तो विष्णुव्रतपरायणः ॥२९
एकादशीव्रतरतः कृष्णपूजासु तत्परः।
सर्व्वकर्म्मसु लिप्तश्च कर्त्ता कृष्णार्पितेषु च ॥ ३०
सुतीक्ष्णं षोड़शारं तच्चक्रं नाम सुदर्शनम्।
तेजसा हरितुल्यञ्च सूर्य्यकोटिसमप्रभम् ॥ ३१
ब्रह्मादिभिः स्तूयमानं पूजितञ्च सुरासुरैः।
प्रभुणा रक्षितं शश्वद्रक्षायै नृपसन्निधौ ॥ ३२
एकादशीव्रतं कृत्वा द्वादशीदिवसे सति।
स्नात्वा विधाय पूजाञ्च कालेन विधिपूर्व्वकम्।
ब्राह्मणान् भोजयित्वा तु भोजनार्थमुवास ह ॥ ३३
एतस्मिन्नन्तरे विप्रस्तपस्वी क्षुधितो मुने।
दण्डी छत्त्री शुक्लवासा बिभ्रत्तिलकमुज्ज्वलम् ॥ ३४
जटिलोऽतिकृशस्त्रस्तः शुष्ककण्ठौष्ठतालुकः।
तत्राजगाम भगवान् दुर्व्वासा नृपतेः पुरः ॥ ३५
तं च दृष्ट्वा मुनीन्द्रं तमुत्थाय च प्रणम्य च।
दत्त्वा पाद्यञ्च सम्प्रीत्या स्वर्णसिंहासनं ददौ ॥ ३६
तस्मै दत्त्वाशिषं विप्रः समुवास सुखासने।
पप्रच्छ राजा तं भीतः काङ्क्षा ते वद मामिति॥ ३७
नृपस्य वचनं श्रुत्वा प्रोवाच मुनिपुङ्गवः।
मां भोजय नृपश्रेष्ठ क्षुधार्त्तोऽहमुपागतः ॥ ३८
अघमर्षणमन्त्रन्तु जप्त्वायास्यचिरेण हि।
क्षणं प्रतीक्षतां राजन्नित्युवाचागतो मुनिः ॥ ३९
गते विप्रे तु राजर्षिश्चिन्तां प्राप दुरत्ययाम्।
विलोक्य विगतप्रायां द्वादशीं भयसंयुतः ॥ ४०
एतस्मिन्नन्तरे तत्र समायान्तं गुरुं मुदा।
नत्वा निवेद्य सर्व्वन्तु नृपतिस्तमुवाच ह ॥ ४१
नायाति मुनिशार्द्दूलः प्रयाति द्वादशी तिथिः।
सङ्कटेऽस्मिन् विधेयञ्च विविच्य विधिपूर्व्वकम्।
शीघ्रं वद मुनिश्रेष्ठ भद्राभद्रञ्च मामिति ॥ ४२
श्रुत्वा नृपोक्तिं त्वरितमुवाच मुनिपुङ्गवः।
हितं तथ्यञ्च वेदोक्तं परिणामसुखावहम् ॥ ४३

वशिष्ठ उवाच।

द्वादश्यां समतीतायां त्रयोदश्यान्तु पारणम्।
उपवासफलं हत्वा व्रतिनं हन्ति निश्चितम् ॥ ४४
ब्रह्महत्यासमं पापं भवेत् तस्य श्रुतौ श्रुतम्।
भक्ष्यद्रव्यं सुरातुल्यमित्याह कमलोद्भवः ॥ ४५
न भोजयित्वा मूढश्चेदतिथिं समुपस्थितम्।
सन्त्रस्तः क्षुधितो भुङ्क्ते कुम्भीपाके व्रजेद्ध्रुवम् ॥ ४६
शतवर्षं तत्र तिष्ठन् नरश्चाण्डालतां व्रजेत्।
व्याधियुक्तो दरिद्रश्च भवेज्जन्मनि जन्मनि ॥ ४७
अतोऽतिसूक्ष्मं किं ब्रूमोऽधुना परमसङ्कटे।
रक्षां कुरु तयोर्धर्म्मं समालोच्य वदामि ते ॥ ४८
उपवासफलं रक्ष कृष्णार्चा-चरणोदकम्।
भुक्त्वा शीघ्रमथो राजन् जलपान(क)मभक्षणम् ॥ ४९
इत्युक्त्वा ब्रह्मणः पुत्त्रो विरराम महामुने।
बुभुजे च जलं किञ्चित् कृष्णपादाम्बुजं स्मरन् ॥ ५०
एतस्मिन्नन्तरे ब्रह्मन्नाजगाम मुनीश्वरः।
चिच्छेद कोपात् सर्व्वज्ञः स्वजटां नृपतेः पुरः ॥ ५१
ततः समुत्थितः शीघ्रं पुरुषोऽग्निशिखोपमः।
खड्गहस्तो महाभीमो राजेन्द्रं हन्तुमुन्मुखः ॥ ५२
हरेश्चक्रञ्च तं दृष्ट्वा सूर्य्यकोटिसमप्रभम्।
चिच्छेद कृत्यापुरुषं ब्राह्मणं छेत्तुमुद्यतम् ॥ ५३
दृष्ट्वा सुदर्शनं विप्रो दुद्राव भयविह्वलः।
द्विजपश्चात् तज्जगाम प्रलयाग्निशिखोपमम् ॥ ५४
ब्रह्माण्डं भ्रमणं कृत्वा निर्व्विण्णोऽतिभयाकुलः।
तच्च मत्वा जगन्नाथं ब्रह्माणं शरणं ययौ ॥ ५५
त्राहि त्राहीत्येवमुक्त्वा विवेश ब्रह्मणः सभाम्।

(क) जलभक्षणमभक्षणमिति च पाठः क्वचित्।

उत्थाय ब्रह्मा विप्रेन्द्रं पप्रच्छ कुशलं मुने ॥ ५६
तत् सर्व्वं कथयामास वृत्तान्तं मूलतोऽधिकम्।
श्रुत्वा ब्रह्मा निशश्वास तमुवाच भयाकुलः ॥ ५७

ब्रह्मोवाच।

हरिदासं वत्स शप्तं गतोऽसि कस्य तेजसा।
रक्षिता यस्य भगवान् तत् को हन्ता जगत्त्रये ॥५८
क्षुद्राणां महताञ्चैव भक्तानां रक्षणाय च।
रक्ष सततं चक्रं श्रीहरिर्भक्तवत्सलः ॥ ५९
यो मूढ़ो वैष्णवं द्वेष्टि विष्णुप्राणसमं द्विज।
तस्य संहारकर्त्ता च संहर्तुरीश्वरो हरिः ॥ ६०
शीघ्रं स्थानान्तरं गच्छ गच्छ वत्स न वाधुना।
अन्यथा त्वां मया सार्द्धं हनिष्यति सुदर्शनम् ॥ ६१
किं ब्रह्मलोकं ब्रह्माण्डं दग्धं कर्त्तुं क्षमो भवेत्।
तेजसा विष्णुतुल्यश्च केनान्येन निवार्य्यते ॥ ६२
ब्रह्मणो वचनं श्रुत्वा ततो दुद्राव ब्राह्मणः।
त्रस्तो जगाम कैलासं शङ्करं शरणं भिया ॥ ६३
कृपानिधान मां रक्षेत्युवाच शङ्करं भिया।
न हि पप्रच्छ कुशलं सर्व्वज्ञो ब्राह्मणं शिवः ॥ ६४
उवाच दीनं दीनेशः संहर्त्ता जगतां क्षणात्।
स्थिरो भव द्विजश्रेष्ठ मदीयं वचनं शृणु ॥ ६५

शङ्कर उवाच।

पौत्रस्त्वं जगतां धातुरत्रेश्च तनयो महान्।
वेदज्ञातासि सर्व्वज्ञ मूर्खतुल्यन्तु कर्म्म ते ॥ ६६
वेदेषु च पुराणेषु इतिहासेषु सर्व्वतः।
निरूपितो यः सर्व्वशस्तं न जानासि मूढ़वत् ॥ ६७
अहं ब्रह्मा च रुद्राश्च आदित्या वसवस्तथा।
धर्म्मेन्द्रौ च सुराः सर्व्वे मुनीन्द्रा मनवस्तथा ॥ ६८
आविर्भूतास्तिरोभूता यस्य भ्रूभङ्गलीलया।
तस्य प्राणाधिकं भक्तं हंसि त्वं कस्य तेजसा ॥ ६९
अहं ब्रह्मा च कमला दुर्गा वाणी च राधिका।
न हि भक्तात् पराः प्रेम्णा भक्ताश्च सर्व्वतः प्रियाः ॥७०
क्षुद्रांश्च महतो भक्तान् शश्वद्रक्षति यत्नतः।
सर्व्वान्तरात्मा भगवान् चक्रेण दुःसहेन च ॥ ७१
नियुज्य चक्रं दुर्व्वार्य्यं स्वात्मतुल्यञ्च तेजसा।
तथापि न प्रतीतश्च स्वयं गच्छति रक्षितुम् ॥ ७२
स्वकीयगुणनाम्नाञ्च श्रवणादतिसम्भ्रमः।
भक्तसङ्गे भ्रमत्येव छायेव संततं हरिः ॥ ७३
कान्ता प्राणाधिका शश्वन्न हि कोऽपि ततोऽधिकः।
भक्तान् द्वेष्टि स्वयं सा चेन्नूनं त्यजति तां विभुः ॥७४
सर्व्वेषाञ्च प्रिया विप्राः स्वशरीरादपि द्विज।
ब्राह्मणेभ्यः प्रिया भक्ताः प्राणेभ्योऽपि हरेरपि ॥७५
ईश्वरस्याप्रियः को वा प्रियः को वा जगत्त्रये।
यः शिष्टस्तं भजेत् शश्वद्ध्यायते च स तं सदा ॥ ७६
महति प्रलये ब्रह्मन् ब्रह्माण्डौघे जलप्लुते।
न तत्र नाशो भक्तानां सर्व्वेषाञ्च भविष्यति ॥ ७७
भज ब्राह्मण गोविन्दं स्मर तस्य पदाम्बुजम्।
सर्व्वापदो विनश्यन्ति श्रीहरेः स्मरणादपि ॥ ७८
व्रज शीघ्रञ्च वैकुण्ठं वैकुण्ठं शरणं तव।
दास्यत्येवाभयं तुभ्यं करुणासागरो विभुः ॥ ७९
एतस्मिन्नन्तरे व्याप्तः कैलासश्चक्रतेजसा।
यथा च सूर्य्यकिरणैः सुदीप्तञ्च महीतलम् ॥ ८०
दग्धा ज्वालाकरालैश्च सर्व्वे कैलासवासिनः।
त्राहि त्राहीत्येवमुक्त्वा शङ्करं शरणं ययुः ॥ ८१
दृष्ट्वा चक्रं दुर्व्विषहं शङ्करः करुणानिधिः।
पार्व्वत्या सह सम्प्रीत्या ब्राह्मणायाशिषं ददौ ॥ ८२
तेजः सत्यं तपः सत्यं यदि मेऽस्ति चिरसञ्चितम्।
कृतापराधो भीतश्च द्विजो भवतु विज्वरः ॥ ८३

पार्व्वत्युवाच।

मत्प्रभो मम पुत्रेषु ब्राह्मणः शरणागतः।
महाशिषा महाभीतः शीघ्रं भवतु विज्वरः ॥ ८४
इत्येवमुक्त्वा कृपया विरराम शिवः शिवा।
मुनिः प्रणम्य देवेशं वैकुण्ठं शरणं ययौ ॥ ८५
गत्वा वैकुण्ठभवनं मनोयायी मुनीश्वरः।
दृष्ट्वा सुदर्शनं पश्चाद्विवेशान्तःपुरं हरेः ॥ ८६
ददर्श श्रीहरिं विप्रो रत्नसिंहासनस्थितम्।
शङ्ख-चक्र-गदा-पद्मधरं पीताम्बरं परम् ॥ ८७
श्यामं चतुर्भुजं शान्तं लक्ष्मीकान्तं मनोहरम्।
रत्नालङ्कारशोभाढ्यं रत्नमालाविभूषितम् ॥ ८८
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम्।
सद्रत्नसाररचितं किरीटोज्ज्वलशेखरम् ॥ ८९
पार्षदप्रवरेन्द्रैश्च सेवितं श्वेतचामरैः।
पद्मासेवितपादाब्जं सरस्वत्या स्तुतं पुरः ॥ ९०
सुनन्द-नन्द-कुमुद-प्रचण्डादिभिरावृतम्।
गुणानुवादं गायन्तं प्रपन्नैः पश्यन्तमीप्सितम् ॥ ९१

एवम्भूतं प्रभुं दृष्ट्वा दण्डवत् प्रणनाम तम्।
तुष्टाव सामवेदोक्तस्तोत्रेण परमेश्वरम्॥ ९२

दुर्व्वासा उवाच।

त्राहि मां कमलाकान्त त्राहि मां करुणानिधे।
दीनबन्धो दीनेशश्च करुणासागर प्रभो॥ ९३
वेदवेदाङ्गसंस्रष्टुर्विधातुश्च स्वयं विधे।
मृत्योर्मृत्यो कालकाल पाहि मां सङ्कटार्णवे॥ ९४
संहारकर्त्तुः संहर्त्तः सर्व्वेश सर्व्वकारण।
महाविष्णुतरोर्बीज रक्ष मां भयसागरे॥ ९५
शरणागत-शोकार्त्त-भयत्राणपरायण।
मां भवच्छरणं भीतं नारायण नमोऽस्तु ते॥ ९६
वेदेष्वाद्यञ्च यद्वस्तु वेदाः स्तोतुं न च क्षमाः।
सरस्वती जड़ीभूता किं स्तुवन्ति विपश्चितः॥ ९७
शेषः सहस्रवक्त्रेण यं स्तोतुं जड़तां व्रजेत्।
पञ्चवक्त्रो-जड़ीभूतो जड़ीभूतश्चतुर्मुखः॥ ९८
श्रुतयः श्रुतिकर्त्तारो वाणी चेत् स्तोतुमक्षमाः।
कोऽहं विप्रश्च वेदज्ञः शिष्यः किं स्तौमि मानद॥९९
मनूनाञ्च महेन्द्राणामष्टाविंशतिमे गते।
दिवानिशं यस्य विधेरष्टोत्तरशतायुषः॥ १००
तस्य पातो भवेद्यस्य चक्षुरुन्मीलनेन च।
तमनिर्व्वचनीयञ्च किं स्तौमि पाहि मां विभो॥१०१
इत्येवं स्तवनं कृत्वा पपात चरणाम्बुजे।
नयनाम्बुजनीरेण सिषेच भयविह्वलः॥ १०२
दुर्व्वाससा कृतं स्तोत्रं हरेश्च परमात्मनः।
पुण्यदं सामवेदोक्तं जगन्मङ्गलनामकम्॥ १०३
यः पठेत् सङ्कटग्रस्तो भक्तियुक्तश्च संयतः।
नारायणस्तं कृपया शीघ्रमागत्य रक्षति॥ १०४
राजद्वारे श्मशाने च कारागारे भयाकुले।
शत्रुग्रस्त दस्युभीते हिंस्रजन्तुसमन्विते॥ १०५
वेष्टिते राजसैन्येन मग्नपोते महार्णवे।
स्तोत्रश्रवणमात्रेण मुच्यते नात्र संशयः॥ १०६

इति श्रीब्रह्मवैवर्त्ते दुर्व्वासःकृतं श्रीकृष्णस्तोत्रम्।

नारायण उवाच।

मुनेश्च स्तवनं श्रुत्वा भगवान् भक्तवत्सलः।
प्रहस्योवाच मधुरं पीयूषवृष्टिवन्मुदा॥ १०७

श्रीभगवानुवाच।

उत्तिष्ठोत्तिष्ठ भद्रं ते भविष्यति वरेण मे।
किन्तु मे वचनं नीतं शृणु सत्यं सुखावहम्॥ १०८
अन्येषाञ्च भवेज्ज्ञानं श्रुत्वा शास्त्रं सतां मुखात्।
सम्मूर्त्तिमन्ति शास्त्राणि भवे सन्तश्चरन्ति हि॥१०९
कर्म्म वेदविरुद्धञ्च सर्व्वेषामपि गर्हितम्।
करोति विद्वांश्चेज्ज्ञाला स च जीवन्मृताधिकः॥ ११०
पुराणेषु च वेदेषु चेतिहासेषु ब्राह्मण।
वैष्णवानाञ्च महिमा श्रुतः सर्व्वैश्च सर्व्वतः॥ १११
अहं प्राणा वैष्णवानां मम प्राणाश्च वैष्णवाः।
तानेव द्वेष्टि यो मूढ़ो ममासूनां स हिंसकः॥११२
पुत्रान् पौत्रान् कलत्रांश्च राजलक्ष्मीं विहाय च।
ध्यायन्ति सततं ये मां को मे तेभ्यः परः प्रियः॥११३
परा भक्तान्न मे प्राणा न च लक्ष्मीन शङ्करः।
न भारती न च ब्रह्मा न दुर्गा न गणेश्वरः॥ ११४
न ब्राह्मणा न वेदाश्च न वेदजननी सुराः।
न गोपी न च गोपाला न राधा प्राणतः प्रिया॥११५
इत्येवं कथितं सर्व्वं सत्यं सारञ्च वास्तवम्।
न प्रशंसा परं तेषां ते च प्राणाधिकाः प्रियाः॥ ११६
मां द्विषन्ति च ये मूढ़ा ज्ञानहीनाश्च वञ्चिताः।
स्वात्मानञ्च न जानन्ति ते यान्ति निरयं चिरम्॥११७
ये द्विषन्ति च मद्भक्तान् मम प्राणाधिकप्रियान्।
तेषां शास्तिरहं तूर्णं परत्र निरयं चिरम्॥ ११८
प्रभवोऽहञ्च सर्व्वेषामीश्वरः परिपालकः।
तथापि न स्वतन्त्रोऽहं भक्ताधीनो दिवानिशम्॥११९
गोलोके वाथ वैकुण्ठे द्विभुजश्च चतुर्भुजम्।
रूपमात्रमिदं शश्वत् प्राणा मे भक्तसन्निधौ॥ १२०
यद्वस्तु भक्तदत्तञ्च भक्षणीयञ्च तन्मम।
अभक्ष्यं द्रव्यमन्येन दत्तञ्चेदमृतोपमम्॥ १२१
अम्बरीषं नृपश्रेष्ठं निरीहं तमहिंसकम्।
कथं हंसि दयाशीलं सर्व्वप्राणिहिते रतम्॥ १२२
दयां कुर्व्वन्ति ये सन्तः सततं सर्व्वजीविषु।
तान् द्विषन्ति च ये मूढ़ास्तेषां हन्ताहमेव च॥ १२३
भक्तानां हिंसकं शत्रुमहं रक्षितुमक्षमः।
अम्बरीषालयं गच्छ स त्वां रक्षितुमीश्वरः॥१२४
नारायणवचः श्रुत्वा ब्राह्मणो भयविह्वलः।
विषण्णमानसस्तस्थौ स्मरन् कृष्णपदाम्बुजम्॥ १२५
एतस्मिन्नन्तरे ब्रह्मा भवान्या सह शङ्करः।
धर्म्मश्चेन्द्रादयो देवा आजग्मुर्मुनिपुङ्गव॥ १२६

प्रणम्य तुष्टुवुः सर्व्वे परमात्मानमीश्वरम्।
पुलकाञ्चितसर्व्वाङ्गा भक्तिनम्रात्मकन्धराः॥ १२७

ब्रह्मोवाच।

आत्मस्वरूप निर्लिप्त भक्तानुग्रहविग्रह।
भक्तापराधजनकं रक्ष ब्राह्मणपुङ्गवम्॥ १२८

महादेव उवाच।

दीनबन्धो जगन्नाथ नायं विप्रो जगद्बहिः।
कृतापराधं दीनञ्च पाहीमं शरणागतम्॥ १२९

पार्व्वत्युवाच।

भक्त एवाम्बरीषस्ते न द्विजा न सुरा वयम्।
सर्व्वेषामीश्वरस्त्वञ्च रक्ष विप्रं कृतागसम्॥ १३०

धर्म्म उवाच।

सर्व्वेषां जनकस्त्वञ्च पाता दण्डकृदीश्वरः।
शिशुहेतोः शिशुं हन्ति पितेत्येवं कुतः प्रभो॥ १३१

इन्द्र उवाच।

कृपा ते समता शश्वत् सर्व्वेषु जीवेषु प्रभो।
अपराधफलं भूतमधुना पातुमर्हसि॥ १३२

रुद्रा ऊचुः।

शान्तिं कर्त्तुं समुचितमुग्रथस्यास्य साम्प्रतम्।
कृतकुण्ठस्य मूढस्य पालनं कर्त्तुमर्हसि॥ १३३

दिक्पाला ऊचुः।

कृतापराधं विप्रञ्च छेत्तुमर्हति न श्रुतौ।
अपराधफलं कृत्वा कुरु पालनमीश्वर॥ १३४

ग्रहा ऊचुः।

यो द्वेष्टि वैष्णवं मूढः संरुष्टाः सर्व्वदेवताः।
पीड़ां कुर्म्मो वयं शश्वत् पश्चात् त्वं पातुमर्हसि १३५

मुनय ऊचुः।

नाथ विप्रे पराभूते सर्व्वे जीवन्मृता वयम्।
दण्डं विधातुमेकस्य भवेल्लज्जा स्वजातिषु॥ १३६

अत्रिरुवाच।

त्वयैव दत्तः पुत्त्रो मे सोऽपि त्वत्सेवकः सदा।
न कं बिभेति त्रैलोक्ये तेजसा मत्सुतो विभो॥१३७

लक्ष्मीरुवाच।

क्षमापराधं भगवन् रक्षेमं शरणागतम्।
स्तुवन्ति देवा विप्राश्च न हन्तुं विप्रमर्हति॥ १३८

सरस्वत्युवाच।

बोधयिष्यामि देवानां जन्म्म किमर्हं श्रुतेः।
सर्व्वेषां भगवान् स्वामी सर्व्वांश्च पातुमर्हति॥ १३९

पार्षदा ऊचुः।

भवतः स्मृतिमात्रेण सर्व्वेषां सर्व्वमङ्गलम्।
भवेत् सर्व्वापदो यान्ति पाहीमं शरणागतम्॥१४०

नर्त्तका ऊचुः।

दारिद्र्यभञ्जक वयं भिक्षुकास्तव सन्ततम्।
भिक्षां नः साम्प्रतं देहि परित्राणं द्विजस्य च॥१४१

एतेषां स्तवनं श्रुत्वा प्रभुः शरणपञ्जरः।
प्रहस्योवाच वचनं सर्व्वसन्तोषकारणम्॥ १४२

भगवानुवाच।

सर्व्वे शृणुत मद्वाक्यं नीतियुक्तं सुखावहम्।
विप्ररक्षां करिष्यामि युष्माकमाज्ञया ध्रुवम्॥ १४३

किन्त्वयं यातु वैकुण्ठादम्बरीषालयं पुनः।
करोतु पारणं तत्र राज्ञः सुप्रीतये मुनिः॥ १४४

विप्रस्तस्यातिथिर्भूत्वा निर्दोषं शप्तुमुद्यतः।
सुदर्शनं तं संरक्ष्य ब्राह्मणं हन्तुमुद्यतः॥ १४५

पूर्णं वर्षमयं भीतो भ्रमत्येव भवं सदा।
उपवासी स राजेन्द्रः सस्त्रीकश्च शुचान्वितः॥ १४६

ततोऽहमुपवासी च भक्तोपवासकारणात्।
स्तनान्धं बालकं दृष्ट्वा न भुङ्क्ते जननी यथा॥ १४७

समाशिषा मुनिश्रेष्ठः सद्यो भवतु विज्वरः।
पथि तत्रास्य हिंसाञ्च मच्चक्रं न करिष्यति॥ १४८

अहमेवाद्य निश्चिन्तः सुखं भोक्ष्यामि निश्चितम्।
भक्तदत्तञ्च यद्वस्तु प्रीत्या कृत्वाऽमृतोपमम्॥ १४९

लक्ष्मीदत्तञ्च यद्द्रव्यं न चाहं भोक्तुमीश्वरः।
विना भक्तप्रदानेन न च मां दातुमीश्वरी॥ १५०

हे मुनीन्द्र महाप्राज्ञ गच्छ वत्स नृपालयम्।
सर्व्वे देवाश्च देव्यश्च गच्छन्तु मुनयो गृहम्॥ १५१

इत्युक्त्वा श्रीहरिस्तूर्णं ययौ स्वान्तःपुरं मुदा।
ययुः सर्व्वे मुदा युक्ताः प्रणम्य जगदीश्वरम्॥१५२

ब्राह्मणश्च मनोयायी जगाम हरिमन्दिरात्।
सुदर्शनञ्च तच्चक्रं सूर्य्यकोटिसमप्रभम्॥ १५३

उपोष्य वत्सरं राजा शुष्ककण्ठोष्ठतालुकः।
सिंहासनस्थो ददृशे पुरतो मुनिपुङ्गवम्॥ १५४

उत्थाय सम्भ्रमात् सद्यः प्रणम्य सादरं मुदा।
भोजयित्वा तु मिष्टान्नं ब्राह्मणं बुभुजे स्वयम्॥१५५

भुक्त्वा तुष्टो द्विजश्रेष्ठो युयुजे नृपमाशिषम्।

जगाम स्वालयं तूर्णं प्रशशंस पुनः पुनः ॥ १५६
उवाच पथि विप्रेन्द्रो मनसा विस्मयाकुलः।
माहात्म्यं दुर्लभमहो वैष्णवानामिति द्विज ॥ १५७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे मुनिमोचनप्रस्तावो नाम पञ्चविंशोऽध्यायः॥२५॥

---

## षड्विंशोऽध्यायः।

नारद उवाच।

द्वादशीलङ्घने दोषः श्रुतस्त्वन्मुखतो मुने।
पराभवो मुनेश्चैव परित्राणं हरेरहो ॥ १
अधुना श्रोतुमिच्छामि सर्व्वेषामीप्सितञ्च मे।
एकादशीव्रतस्यास्य विधानं वद निश्चितम् ॥ २
अहो श्रुतौ श्रुतं किञ्चिन्मतभेदान्न निश्चितम्।
श्रुतीनां कारणमुखाच्छ्रोतुं कौतूहलं मनः ॥ ३

नारायण उवाच।

एकादशीव्रतमिदं व्रतानां दुर्लभं वरम्।
श्रीकृष्णप्रीतिजनकं तपःश्रेष्ठं तपस्विनाम् ॥ ४
देवानाञ्च यथा कृष्णो देवीनां प्रकृतिर्यथा।
आश्रमाणां यथा विप्रो वैष्णवानां यथा शिवः ॥ ५
यथा गणेशः पूज्यानां यथा वाणी विपश्चिताम्।
शास्त्राणाञ्च यथा वेदास्तीर्थानां जाह्नवी यथा ॥६
तेजसानां यथा स्वर्णं प्राणिनां वैष्णवो यथा।
धनानाञ्च यथा विद्या सङ्गिनाञ्च यथा प्रिया ॥ ७
प्रेयसाञ्च यथा प्राणाः प्रेयसीनां यथा मतिः।
आप्तानामिन्द्रियाणाञ्च चञ्चलानां यथा मनः ॥ ८
गुरूणाञ्च यथा माता वधूनाञ्च यथा पतिः।
बलिष्ठानां यथा दैवं कालः कलयतां यथा ॥ ९
यथा सुशीला मित्राणां शत्रूणां रुग्यथा मुने।
यथाऽकीर्त्तिः कीर्त्तिहानां गुह्यानाञ्चात्मको यथा॥१०
यथा सर्पो हिंसकानां दुष्टानां पुंश्चली यथा।
तेजस्विनां यथेशश्च सहिष्णूनां यथा क्षितिः ॥ ११
यथामृतञ्च भक्ष्याणां दाहकानां यथानलः।
यथा श्रीर्धनदातॄणां सतीनाञ्च यथा सती ॥ १२
प्रजेशानां यथा ब्रह्मा सरितां सागरो यथा।
यथा साम श्रुतीनाञ्च गायत्री च्छन्दसां यथा ॥ १३
वृक्षाणाञ्च यथाश्वत्थः पुष्पाणां तुलसी यथा।
यथा मार्गो हि मासानामृतूनाञ्च यथा मधुः ॥ १४
आदित्यानां यथा सूर्यो रुद्राणां शङ्करो यथा।
यथा भीष्मो वसूनाञ्च वर्षाणां भारतं यथा ॥ १५
देवर्षीणां यथा त्वञ्च ब्रह्मर्षीणां भृगुर्यथा।
नृपाणाञ्च यथा रामः सिद्धानां कपिलो यथा ॥ १६
यथा सनत्कुमारश्च योगिनां ज्ञानिनां वरः।
ऐरावतो गजेन्द्राणां पशूनां शरभो यथा ॥ १७
यथा हिमाद्रिः शैलानां मणीनां कौस्तुभो यथा।
सरस्वती नदीनाञ्च यथा पुण्यस्वरूपिणी ॥ १८
गन्धर्व्वाणां चित्ररथो यथा श्रेष्ठश्च नारद।
यथा कुबेरो यक्षाणां सुमाली रक्षसां यथा ॥ १९
यथा श्रेष्ठा च नारीणां शतरूपा वरा परा।
मनूनाञ्च यथा श्रेष्ठः स्वयं स्वायम्भुवो मनुः ॥ २०
सुन्दरीणां यथा रम्भा यथा माया च मायिनाम्।
एकादशीव्रतमिदं व्रतानाञ्च वरं तथा ॥ २१
कर्त्तव्यञ्च चतुर्णाञ्च वर्णानां नित्यमेव च।
यतीनां वैष्णवानाञ्च ब्राह्मणानां विशेषतः ॥ २२
सर्व्वं सर्व्वाणि पापानि ब्रह्महत्यादिकानि च।
सन्त्येवौदनमाश्रित्य श्रीकृष्णव्रतवासरे ॥ २३
भुङ्क्ते तानि च सर्व्वाणि यो भुङ्क्ते तत्र मन्दधीः।
इहातिपातकी सोऽपि यात्यन्ते नरकं ध्रुवम् ॥ २४
एकादशीप्रमाणानि युगसंख्याकृतानि च।
कुम्भीपाके महाघोरे स्थित्वा चाण्डालतां व्रजेत्॥२५
गलितव्याधियुक्तश्च ततः सप्तसु जन्मसु।
पश्चान्मुक्तो भवेत् पापादित्याह कमलोद्भवः ॥ २६
इत्येवं कथितो ब्रह्मन् यो दोषस्तत्र भोजने।
द्वादशीलङ्घने दोषो यथोक्तश्च श्रुतः पुरा ॥ २७
दशमीलङ्घने दोषं निबोध कथयामि ते।
पुरा श्रुतो धर्म्मवक्त्रादिदसारोद्धृतोऽपि च ॥ २८
दशमीं चेत् कलामात्रां मूढ़ो ज्ञानेन लङ्घयेत्।
याति श्रीसत्यहन्तासूर्यं शापं दत्त्वा सुदारुणम् ॥२९
इह वंशक्षानिश्च यशोहानिभवेद्ध्रुवम्।
अन्ते मन्वन्तरशतमन्धकूपे वसेद्विज ॥ ३०
दशम्येकादशी चापि द्वादशी यत्र वासरे।
तत्र भुक्त्वा परदिन उपोष्य व्रतमाचरेत् ॥ ३१
द्वादश्याञ्च व्रतं कृत्वा त्रयोदश्यान्तु पारणम्।

द्वादशीलङ्घने दोषो व्रतीनां नात्र विद्यते ॥ ३२
सम्पूर्णैकादशी यत्र प्रभाते किञ्चिदेव सा ।
तत्रोपोष्या द्वितीया च पूर्व्वा तु यदि वर्द्धते ॥ ३३
षष्टिदण्डात्मिका यत्र प्रभाते च तिथित्रयम् ।
कुर्व्वन्ति गृहिणः पूर्व्वां नैव यत्यादयस्तथा ॥ ३४
परत्रानशनं कृत्वा नित्यकृत्यं समापयेत् ।
व्रते जागरणं सर्व्वं परत्रैवाचरेद्बुधः ॥ ३५
गृही तत्पूर्व्वदिवसे व्रतं कृत्वा परेऽहनि ।
एकादश्यां व्यतीतायां पारणन्तु समाचरेत् ॥ ३६
वैष्णवानां यतीनाञ्च विधवानां तथैव च ।
सर्व्वाः समा उपोष्यास्तैर्भिक्षूणां ब्रह्मचारिणाम् ॥ ३७
शुक्लामेव तु कुर्व्वन्ति गृहिणो वैष्णवेतराः ।
न कृष्णालङ्घने दोषस्तेषां वेदेषु नारद ॥ ३८
शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥ ३९
इत्येवं कथितो ब्रह्मन् निर्णयो यः श्रुतौ श्रुतः ।
व्रतस्यास्य विधानञ्च निबोध कथयामि ते ॥ ४०
कृत्वा हविष्यं पूर्व्वाह्णे न च भुङ्क्ते पुनर्जलम् ।
एकाकी कुशशय्यायां नक्तं शयनमाचरेत् ॥ ४१
ब्राह्मे मुहूर्त्ते उत्थाय प्रातःकृत्यं विधाय च ।
नित्यकृत्यं विधायाथ ततः स्नानं समाचरेत् ॥ ४२
व्रतोपवाससङ्कल्पं श्रीकृष्णप्रीतिपूर्व्वकम् ।
कृत्वा सन्ध्यातर्पणञ्च विधायाह्निकमाचरेत् ॥ ४३
नित्यपूजां दिने कृत्वा व्रतद्रव्यं समाहरेत् ।
द्रव्यं षोड़शोपचारं प्रकृष्टं विधिबोधितम् ॥ ४४
आसनं वसनं पाद्यमर्घ्यं पुष्पानुलेपनम् ।
धूपदीपञ्च नैवेद्यं यज्ञसूत्रञ्च भूषणम् ॥ ४५
गन्धस्नानीयताम्बूलं मधुपर्कं पुनर्जलम् ।
एतान्याहृत्य दिवसे व्रतं नक्तं समाचरेत् ॥ ४६
उपविश्यासने पूतो धृत्वा धौते च वाससी ।
आचम्य श्रीहरिं स्मृत्वा स्वस्तिवाचनमाचरेत् ॥ ४७
आरोप्य मङ्गलघटं धान्याधारे शुभक्षणे ।
फलशाखाचन्दनाक्तं वेदोक्तं मुनिभिर्मुदा ॥ ४८
देवषट्कं समावाह्य पृथगृध्यानैः समर्च्चयेत् ।
पूजां पञ्चोपचारेण प्रकृष्टेन विचक्षणः ॥ ४९
गणेश्वरं दिनकरं वह्निं विष्णुं शिवं शिवाम् ।
सम्पूज्यतान् प्रणम्याथ व्रतं कुर्य्याद्धरिं स्मरन् ॥ ५०

नाराध्य देवषट्कञ्च यदि कर्म्म समाचरेत् ।
नित्यं नैमित्तिकं वापि तत् सर्व्वं निष्फलं भवेत् ॥ ५१
इत्येवं कथितं सर्व्वं व्रताङ्गभूतमेव च ।
काण्वशाखोक्तमिष्टञ्च व्रतं शृणु महामुने ॥ ५२
सामवेदोक्तध्यानेन ध्यात्वा कृष्णं परात्परम् ।
पुष्पं स्वशिरसि न्यस्य पुनर्ध्यानं समाचरेत् ॥ ५३
ध्यानं शृणु निगूढ़ञ्च सर्व्वेषामतिवाञ्छितम् ।
न प्रकाश्यमभक्ताय भक्तप्राणाधिकं परम् ॥ ५४
नवीननीरदोद्रिक्त-श्यामसुन्दरविग्रहम् ।
शरत्पार्व्वणचन्द्राभा-विनिन्द्यास्यमनुत्तमम् ॥ ५५
शरत्पद्मोदयाज्ञालि-प्रभामोचनलोचनम् ।
स्वाङ्गसौन्दर्य्यभूषाभी रत्नभूषणभूषितम् ॥ ५६
गोपीलोचनकोणैश्च प्रसन्नैरतिवञ्चितैः ।
शश्वन्निरीक्ष्यमाणं तत् प्राणैरिव विनिर्म्मितम् ॥ ५७
रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम् ।
राधावक्त्रशरच्चन्द्र-सुधापानचकोरकम् ॥ ५८
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् ।
पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥ ५९
सद्रत्नसारनिर्म्माण-किरीटोज्ज्वलशेखरम् ।
विनोदमुरलीहस्त-न्यस्तं पूज्यं सुरासुरैः ॥ ६०
ध्यानासाध्यं दुराराध्यं ब्रह्मादीनाञ्च वन्दितम् ।
कारणं कारणानां यं तमीश्वरमहं भजे ॥ ६१
ध्यात्वानेन तमावाह्य चोपहाराणि षोड़श ।
दत्त्वा सम्पूजयेद्भक्त्या मन्त्रैरेभिश्च नारद ॥ ६२
आसनं स्वर्णनिर्म्माणं रत्नसारपरिच्छदम् ।
नानाचित्रविचित्राढ्यं गृह्यतां परमेश्वर ॥ ६३
वस्त्रं वह्निविशुद्धञ्च निर्म्मितं विश्वकर्म्मणा ।
मूल्यानिर्व्वचनीयं तद्गृह्यतां राधिकापते ॥ ६४
पादप्रक्षालनार्हं तत् सुवर्णपात्रसंस्थितम् ।
सुवासितं शीतलञ्च गृह्यतां करुणानिधे ॥ ६५
इदमर्घ्यं पवित्रञ्च शङ्खतोयसमन्वितम् ।
पुष्प-दूर्व्वा-चन्दनाक्तं गृह्यतां भक्तवत्सल ॥ ६६
सुवासितं शुक्लपुष्पं चन्दनागुरुसंयुतम् ।
सदा ते प्रीतिजननं गृह्यतां सर्व्वकारण ॥ ६७
चन्दनागुरु-कस्तूरी-कुङ्कुमाबीरमुत्तमम् ।
सर्व्वेप्सितं हि श्रीकृष्ण गृह्यतामनुलेपनम् ॥ ६८
रसोऽवृक्षविशेषस्य नानाद्रव्यसमन्वितः

सुगन्धयुक्तः सुखदो धूपोऽयं प्रतिगृह्यताम् ॥ ६९
दिवानिशं सुप्रदीप्तो रत्नसारविनिर्म्मितः।
घनध्वान्तनाशवीजो दीपोऽयं गृह्यतां प्रभो ॥ ७०
नानाविधानि द्रव्याणि स्वादूनि मधुराणि च।
चोष्यादीनि पवित्राणि स्वात्माराम प्रगृह्यताम् ॥७१
सावित्रीग्रन्थिसंयुक्तं खगतन्तुविनिर्म्मितम्।
गृह्यतां देवदेवेश रचितं चारुकारुणा ॥ ७२
अमूल्यरत्नरचितं सर्व्वावयवभूषणम्।
त्विषा जाज्वल्यमानं तद्गृह्यतां नन्दनन्दन ॥ ७३
प्रधानादरणीयश्च सर्व्वमङ्गलकर्म्मणि।
प्रगृह्यतां दीनबन्धो गन्धोऽयं मङ्गलप्रदः ॥ ७४
धात्री-श्रीफलपत्राक्तं विष्णुतैलं मनोहरम्।
वाञ्छितं सर्व्वलोकानां भगवन् प्रतिगृह्यताम् ॥७५
वाञ्छनीयञ्च सर्व्वेषां कर्पूरादिसुवासितम्।
मया निवेदितं नाथ ताम्बूलं प्रतिगृह्यताम् ॥ ७६
सर्व्वेषां प्रीतिजननं सुमिष्टं मधुरं मधु।
सद्रत्नसारपात्रस्थं गोपीकान्त प्रगृह्यताम् ॥ ७७
निर्म्मलं जाह्नवीतोयं सुपवित्रं सुवासितम्।
पुनराचमनीयञ्च गृह्यतां मधुसूदन ॥ ७८
इति षोड़शोपचारं दत्त्वा भक्तो मुदान्वितः।
मन्त्रेणानेन पुष्पाणां माल्यं दद्यात् प्रयत्नतः ॥ ७९
नानाप्रकारपुष्पैश्च ग्रथितं सूक्ष्मतन्तुना।
प्रवरं भूषणानाञ्च माल्यञ्च गृह्यतां विभो ॥ ८०
इति पुष्पाञ्जलिं दद्यान्मूलमन्त्रेण च व्रती।
कुर्य्यात् तु स्तवनं भक्त्या पुटाञ्जलियुतः सुधीः ॥८१
हे कृष्ण राधिकानाथ करुणासागर प्रभो।
संसारसागरे घोरे मामुद्धर भयानके ॥ ८२
शतजन्मगतायातादुद्विग्नस्य मम प्रभो।
स्वकर्म्मपाशनिगड़ैर्बन्धस्य मोचनं कुरु ॥ ८३
प्रणतं पादपद्मे ते पश्य मां शरणागतम्।
मार्त्तण्डतनयाद्भीतं पाहि शरणपञ्जर ॥ ८४
भक्तिहीनं क्रियाहीनं विधिहीनञ्च वेदतः।
वस्तु-मन्त्रविहीनं यत् तत् सम्पूर्णं कुरु प्रभो ॥ ८५
वेदोक्तविहिताज्ञानात् स्वाङ्गहीने च कर्म्मणि।
त्वन्नामोच्चारणेनैव सर्व्वं पूर्णं भवेद्धरे ॥ ८६
इति स्तुत्वा तं प्रणम्य दत्त्वा विप्राय दक्षिणाम्।
महोत्सवं विधायाथ कुर्य्याज्जागरणं व्रती ॥ ८७

कृत्वा व्रतोपवासञ्च यदि निद्रां निषेवते।
फलस्यार्द्धमवाप्नोति व्रतोपवासयोर्व्रती ॥ ८८
द्वादश्यां पारणं कृत्वा यदि निद्रां निषेवते।
पुनरेव जलं भुङ्क्ते व्रतार्द्धफलमाप्नुयात् ॥ ८९
यत्नेन च हविष्यान्नं सकृदेव समाचरेत्।
मन्त्रेणानेन विप्रेन्द्र श्रीकृष्णचरणं स्मरन् ॥ ९०
हे अन्न प्राणिनां प्राण ब्रह्मणा निर्म्मितं पुरा।
देहि मे विष्णुरूपत्वं व्रतोपवासयोः फलम् ॥ ९१
एवं यः कुरुते भक्त्या भारते व्रतमुत्तमम्।
पूर्व्वान् सप्त परान् सप्त स्वात्मानमुद्धरेद्ध्रुवम् ॥ ९२
मातरं भ्रातरञ्चैव श्वश्रूञ्च श्वशुरं सुताम्।
जामातरं तथा भृत्यमुद्धरेन्निश्चितं नरः ॥ ९३
इत्येवं कथितं विप्र श्रीकृष्णचरितं व्रतम्।
सुखदं मोक्षदं सारमपरं कथयामि ते ॥ ९४

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे एकादशीव्रतनिरूपणप्रस्तावो नाम षड्विंशोऽध्यायः ॥२६॥

---

## सप्तविंशोऽध्यायः।

नारायण उवाच।

शृणु नारद वक्ष्यामि श्रीकृष्णचरितं पुनः।
गोपीनां वस्त्रहरणं वरदानं मनीषितम् ॥ १
हेमन्ते प्रथमे मासि गोपिकाः काममोहिताः।
कृत्वा हविष्यं भक्त्या च यावन्मासं सुसंयताः ॥ २
स्नात्वा सूर्य्यसुतातीरे पार्व्वतीं बालुकामयीम्।
कृत्वावाह्य च मन्त्रेण पूजां कुर्व्वन्ति नित्यशः ॥ ३
चन्दनागुरु-कस्तूरी-कुङ्कुमैः सुमनोहरैः।
नानाप्रकारपुष्पैश्च माल्यैर्बहुविधैरपि ॥ ४
धूपैर्दीपैश्च नैवेद्यैर्वस्त्रैर्नानाफलैर्मुने।
मणि-मुक्ता-प्रवालैश्च वाद्यैर्नानाविधैरपि ॥ ५
हे देवि जगतां मातः सृष्टिस्थित्यन्तकारिणि।
नन्दगोपसुतं कान्तमस्मभ्यं देहि सुव्रते ॥ ६
मन्त्रेणानेन देवेशीं परिहारं विधाय च।
ततः कृत्वा तु सङ्कल्पमपूजन्मूलमन्त्रतः ॥ ७
मन्त्रस्तु सामवेदोक्तोऽयातयामः सवीजकः।

क्लीं दुर्गायै नम इति सर्व्वकामफलप्रदः ॥ ८
पुष्पं माल्यञ्च नैवेद्यं धूपं दीपं तथांशुकम् ।
मन्त्रेणानेन तां भक्त्या ददुः सर्व्वा मुदान्विताः ॥ ९
ताश्चव परया भक्त्या चेमं मन्त्रं सहस्रधा ।
जपं कृत्वा च स्तुत्वा च प्रणेमुः शिरसा भुवि ॥ १०
सर्व्वमङ्गलमङ्गल्ये सर्व्वकामप्रदे शिवे ।
देहि मे वाञ्छितं देवि नमोऽस्तु शङ्करप्रिये ॥ ११
इत्युक्त्वा च नमस्कारं कृत्वा दत्त्वा च दक्षिणाम् ।
नैवेद्यानि च सर्व्वाणि ब्राह्मणेभ्योऽप्ययुर्मुदम् ॥ १२
स्तवराजं शृणु मुने तुष्टुवुर्येन पार्व्वतीम् ।
भक्त्या गोपाङ्गनाः सर्व्वाः सर्व्वाभीष्टफलप्रदम् ॥१३
जगत्येकार्णवे घोरे चन्द्रसूर्य्यविवर्ज्जिते ।
अञ्जनाकारतोयेन संप्लुते निश्चराचरे ॥ १४
दत्तं पुरा ब्रह्मणे च हरिणा जलशायिना ।
तस्मै दत्त्वा स्तवमिमं निद्रां भेजे जगत्पतिः ॥ १५
नाभिपद्मे जगत्स्रष्टा मधुना कैटभेन च ।
पीड़ितः परितुष्टाव मूलप्रकृतिमीश्वरीम् ॥ १६
ब्रह्मोवाच ।
दुर्गे शिवेऽभये माये नारायणि सनातनि ।
जये मे मङ्गलं देहि नमस्ते,सर्व्वमङ्गले ॥ १७
दैत्यनाशार्थवचनो दकारः परिकीर्त्तितः ।
उकारो विघ्ननाशस्य वाचको वेदसम्मतः ॥ १८
रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः ।
भयशत्रुघ्नवचनश्चाकारः परिकीर्त्तितः ॥ १९
स्मृत्युक्तिश्रवणाद्यस्यास्ते नश्यन्ति च निश्चितम् ।
अतो दुर्गा हरेः शक्तिर्हरिणा परिकीर्त्तिता ॥ २०
विपत्तिवाचको दुर्गश्चाकारो नाशवाचकः ।
दुर्गं नश्यति या नित्यं सा च दुर्गा प्रकीर्त्तिता ॥२१
दुर्गो दैत्येन्द्रवचनश्चाकारो नाशवाचकः ।
तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्त्तिता ॥ २२
शश्च कल्याणवचन इकारोत्कृष्टवाचकः ।
समूहवाचकश्चैव वाकारो दातृवाचकः ॥ २३
श्रेयःसंघोत्कृष्टदात्री शिवा तेन प्रकीर्त्तिता ।
शिवराशिर्मूर्त्तिमती शिवा तेन प्रकीर्त्तिता । २४
शिवो हि मोक्षवचनश्चाकारो दातृवाचकः ।
स्वयं निर्व्वाणदात्री या सा शिवा परिकीर्त्तिता २५
अभयोभयनाशोक्तश्चाकारो दातृवाचकः ।
प्रददात्यभयं या च साभया परिकीर्त्तिता ॥ २६
राजश्रीवचनो मा च या च प्रापणवाचकः ।
तां प्रापयति या सद्यः सा माया परिकीर्त्तिता॥ २७
मा च मोक्षार्थवचनो या च प्रापणवाचकः ।
तं प्रापयति या नित्यं सा माया परिकीर्त्तिता ॥ २८
नारायणार्द्धसम्भूता तेन तुल्या च तेजसा ।
सदा तस्य शरीरस्था तेन नारायणी स्मृता ॥ २९
निर्गुणस्य च नित्यस्य वाचकश्च सनातनः ।
सदा नित्या निर्गुणा या कीर्त्तिता सा सनातनी ॥३०
जः कल्याणप्रवचनो याकारो दातृवाचकः ।
जयं ददाति या नित्यं सा जया परिकीर्त्तिता ॥ ३१
सर्व्वमङ्गलशब्दश्च सम्पूर्णैश्वर्य्यवाचकः ।
आकारो दातृवचनस्तद्दात्री सर्व्वमङ्गला ॥ ३२
नामाष्टकमिदं सारं नामार्थसह संयुतम् ।
नारायणेन यद्दत्तं ब्रह्मणे नाभिपङ्कजे ।
तस्मै दत्त्वा निद्रितश्च बभूव जगतां पतिः ॥ ३३
मधुकैटभौ दुर्द्दान्तौ ब्रह्माणं हन्तुमुद्यतौ ।
स्तोत्रेणानेन स ब्रह्मा स्तुतिं निद्रां चकार ह ॥ ३४
साक्षाद्भूत्वा स्तवाद्दुर्गा ब्रह्मणे कवचं ददौ ।
श्रीकृष्णकवचं दिव्यं सर्व्वरक्षणनामकम् ॥ ३५
दत्त्वा तस्मै महामाया सान्तर्द्धानं चकार ह ।
स्तोत्रस्यैव प्रभावेण सम्प्राप कवचं विधिः ।
वरञ्च कवचं प्राप्य निर्भयं प्राप निश्चितम् ॥ ३६
त्रिपुरस्य च संग्रामे स रथे पतिते हरे ।
ब्रह्मा ददौ महेशाय स्तोत्रञ्च कवचं वरम् ॥ ३७
स्तोत्रे सर्व्वेण निद्रायाः संरक्ष कवचेन वै ।
निद्रानुग्रहतः सद्यः स्तोत्रस्यैव प्रभावतः ॥ ३८
तत्राजगाम भगवान् वृषरूपी जनार्द्दनः ।
शक्त्या च दुर्गया सार्द्धं शङ्करस्य जयाय च ॥ ३९
सरथं शङ्करं मूर्द्ध्नि कृत्वा च निर्भयं ददौ ।
अत्यूर्द्धं प्रापयामास जया तस्मै जयं ददौ ॥ ४०
ब्रह्मास्त्रञ्च गृहीत्वा स सनिद्रं श्रीहरिं स्मरन् ।
स्तोत्रञ्च कवचं प्राप्य जघान त्रिपुरं हरः ॥ ४१
स्तोत्रेणानेन तां दुर्गां कृत्वा गोपालिकाः स्तुतिम् ।
लेभिरे श्रीहरिं कान्तं स्तोत्रस्यास्य प्रभावतः ॥ ४२
गोपकन्याकृतं स्तोत्रं सर्व्वमङ्गलनामकम् ।
वाञ्छितार्थप्रदं सद्यः सर्व्वविघ्नविनाशनम् ॥ ४३

त्रिसन्ध्यं यः पठेन्नित्यं भक्तियुक्तश्च मानवः।
शैवो वा वैष्णवो वापि शाक्तो दुर्गात् प्रमुच्यते॥ ४४
राजद्वारे श्मशाने च दावाग्नौ प्राणसङ्कटे।
हिंस्रजन्तुभयग्रस्ते भग्नपोते महार्णवे॥ ४५
शत्रुग्रस्ते च संग्रामे कारागारे विपद्युते।
गुरुशापे ब्रह्मशापे बन्धुभेदे सुदुस्तरे॥ ४६
स्थानभ्रष्टे धनभ्रष्टे जातिभ्रष्टे शुचान्विते।
पतिभेदे पुत्रभेदे खलसर्पविषान्विते॥ ४७
स्तोत्रस्मरणमात्रेण सद्यो मुच्येत निर्भयः।
वाञ्छितं लभते सद्यः सर्व्वैश्वर्य्यमनुत्तमम्॥ ४८
इह लोके हरेर्भक्तिं दृढाञ्च सततं स्मृतिम्।
अन्ते दास्यञ्च लभते पार्व्वत्याश्च प्रसादतः॥ ४९
इति ब्रह्मवैवर्त्ते गोपकन्याकृतं सर्व्वमङ्गलस्तोत्रम्,

नारायण उवाच।

अनेन स्तवराजेन तुष्टुवुर्नित्यमीश्वरीम्।
प्रणेमुः परया भक्त्या यावन्मासं व्रजाङ्गनाः॥ ५०
एवं पूर्णे च मासे च समाप्तिदिवसे तथा।
स्नातुं प्रजग्मुर्गोप्यश्च वस्त्राण्याधाय तत्तटे॥ ५१
नानाविधानि द्रव्याणि रत्नमूल्यानि नारद।
पीत-शुक्ल-लोहितानि चारूणि मिश्रितानि च॥ ५२
तीरावृतान्यसंख्यानि तैश्च तीरं सुशोभितम्।
चन्दनागुरु-कस्तूरी-वायुना सुरभीकृतम्॥ ५३
नैवेद्यैश्च बहुविधैः कालदेशोद्भवैः फलैः।
धूपैः प्रदीपैः सिन्दूरैः कुङ्कुमैश्च विराजितम्॥ ५४
जलक्रीडोन्मुखा गोप्यो बभूवुः कौतुकेन च।
नग्ना क्रीडाभिरासक्ताः श्रीकृष्णार्पितमानसाः॥ ५५
दृष्ट्वा कृष्णश्च वस्त्राणि द्रव्याणि विविधानि च।
वासांस्यादाय वस्तूनि चखाद शिशुभिः सह॥ ५६
गत्वा दूरञ्च गोपालास्तस्थुः सर्व्वे मुदान्विताः।
वस्त्राणि पुञ्जिकां कृत्वा जघुः स्कन्धेऽतिलोलुपाः॥ ५७
श्रीदामा च सुदामा च वसुदामा तथैव च।
सुबलश्च सुपार्श्वश्च शुभाङ्गः सुन्दरस्तथा॥ ५८
चन्द्रभानो वीरभानः सूर्य्यभानस्तथैव च।
वसुभानो रत्नभानो गोपाला द्वादश स्मृताः॥ ५९
श्रीकृष्णो बलदेवश्च प्रधानाश्च चतुर्द्दश।
गोपा हरेर्वयस्याश्च कोटिशः कोटिशो मुने॥ ६०
वस्त्राण्यादाय ते सर्व्वे तस्थुरेकत्र दूरतः।
शतशः पुञ्जिकास्तत्र स्थापयामासुरुन्मुखाः॥ ६१
किञ्चिद्वस्त्रं समादाय कृत्वा च पुञ्जिकां मुदा।
समारुह्य कदम्बाग्रमुवाच गोपिकां हरिः॥ ६२

श्रीकृष्ण उवाच।

भो भो गोपालिकाः सर्व्वा निविष्टा व्रतकर्म्मणि।
कृत्वावधानं मद्वाक्यं श्रुत्वा क्रीडथ उन्मुखाः॥ ६३
सङ्कल्पिते व्रतार्हे च मासे मङ्गलकर्म्मणि।
यूयं नग्नाः कथं तोये व्रताङ्गहानिकारिकाः॥ ६४
परिधेयानि वासांसि पुष्पमाल्यानि यानि च।
व्रतार्हाणि च वस्तूनि केन नीतानि वोऽधुना॥ ६५
व्रतेन नग्ना या स्नाति तां रुष्टो वरुणः स्वयम्।
वरुणानुचरा वासश्चक्रुर्वस्तूनि निर्ह्वतिम्॥ ६६
कथं यास्यथ नग्नाश्च व्रतस्य किं भविष्यति।
व्रताराध्या कथं सा वो वस्तूनि किं न रक्षति॥ ६७
चिन्तां कुरुत तां पूज्यां तुष्टां बलिभिरीश्वरीम्।
युष्माकमीदृशी देवी न शक्ता वस्तुरक्षणे॥ ६८
कथं व्रतफलं सारं दातुं शक्ता सुरेश्वरी।
फलं प्रदातुं या शक्ता सा शक्ता सर्व्वकर्म्मणि॥ ६९
श्रीकृष्णस्य वचः श्रुत्वा चिन्तामापुर्व्रजस्त्रियः।
ददृशुर्यमुनातीरं वस्त्रवस्तुविहीनकम्॥ ७०
चक्रुर्विषादं तोये च नग्नास्ता रुरुदुर्भृशम्।
क्व गतानि च वस्तूनि वस्त्राणीत्यूचुरत्र नः॥ ७१
कृत्वा विषादं तत्रैव तमूचुर्गोपकन्यकाः।
पुटाञ्जलियुताः सर्व्वा भक्त्या विनयपूर्व्वकम्॥ ७२

गोपालिका ऊचुः।

परिधेयानि वस्त्राणि किङ्करीणां सदीश्वरः।
निबोधयात्मानमेव स्वधं कर्त्तुं त्वमर्हसि॥
व्रतार्हाणि च वस्तूनि देवस्वानि च साम्प्रतम्।
अदत्तानि नोचितानि ग्रहीतुं वेदविद्वर॥ ७४
देहि धौतानि दृत्वा च करिष्यामो व्रतं वयम्।
वस्तुनान्येन गोविन्द वस्तूनि भक्षणं कुरु॥ ७५
एतस्मिन्नन्तरे तत्र श्रीदामा वस्त्रपुञ्जिकाम्।
दंशयित्वा च ताः सर्व्वा दूरं दुद्राव तत्पुरः॥ ७६
दृष्ट्वा सवस्त्रं गोपालं सर्व्वासामीश्वरी परा।
सर्व्वा वयस्याश्चोवाच कोपयुक्ता जलप्लुता॥ ७७

राधिकोवाच।

हे सुशीले शशिकले हे चन्द्रमुखि माधवि।

कदम्बमाले हे कुन्ति यमुने सर्व्वमङ्गले ॥ ७८
हे पद्ममुखि सावित्रि हे पारिजातजाह्नवि।
सुधामुखि शुभे पद्मे गौरि च हे स्वयम्प्रभे ॥ ७९
कालिके कमले दुर्गे हे सरस्वति भारति।
अपर्णे रति हे गङ्गे चाम्बिके सति सुन्दरि ॥ ८०
कृष्णप्रिये मधुमति चम्पे चन्दननन्दिनि।
यूयं सर्व्वाः समुत्थाय बद्धानयत वल्लवम् ॥ ८१
सर्व्वा राधाज्ञया तूर्णं समुत्थाय जलात् क्रुधा।
प्रजग्मुर्गोपिका नग्ना योनिमाच्छाद्य पाणितः ॥ ८२
एतासां सहचारिण्यो गोप्यस्तूर्णं सहस्रशः।
प्रजग्मुस्तेन रूपेण कोपादारक्तलोचनाः ॥ ८३
वेगेन दुद्रुवुः सर्व्वाः श्रीदामानञ्च बालिकाः।
वेगेन च प्रधावन्तं बिभ्रतं वस्त्रपुञ्जिकाम् ॥ ८४
जगाम शीघ्रं श्रीदामा यत्र गोपाः सहांशुकाः।
जवेन दुद्रुवुर्गोप्यस्ताःशश्वाद्दलसंयुताः ॥ ८५
वस्त्रचौरांश्च गोपांश्च वेष्टयामासुराशु ताः।
भयात् प्रदुद्रुवुर्बाला यत्र कृष्णः सहांशुकः ॥ ८६
श्रीकृष्णसहितान् बालान् वारयामासुराशु च।
गोपिकानां भिया गोपा ददुर्वस्त्राणि माधवम् ॥ ८७
माधवः स्थापयामास स्कन्धे स्कन्धे तरोस्तरोः।
कदम्बवृक्षः शुशुभे वस्त्रैर्नानाविधैरपि ॥ ८८
वस्त्राणां पुञ्जिकाः सर्व्वाः स्कन्धेषु विनिधाय च।
उवाच गोपिकाः कृष्णः परिहासपरं वचः ॥ ८९

श्रीकृष्ण उवाच।

भो भो गोपालिका नग्ना इदानीं किं करिष्यथ।
याच्ञां कर्त्तुञ्च वस्त्राणि कुरुताशु पुटाञ्जलिम् ॥ ९०
गत्वा वदत युष्माकमीश्वरीमथ राधिकाम्।
करोतु शीघ्रं वस्त्राणि याच्ञां कृत्वा पुटाञ्जलिम् ॥ ९१
अन्यथाहं न दास्यामि युष्माकमंशुकानि च।
युष्माकमीश्वरी राधा किं करिष्यति मेऽधुना ॥ ९२
व्रताराध्या च या देवी सा वा मे किं करिष्यति।
इत्येवं कथितं सर्व्वं ब्रूत यूयञ्च राधिकाम् ॥ ९३
श्रीकृष्णवचनं श्रुत्वा ताः सर्व्वा गोपकन्यकाः।
वीक्ष्य लोचनकोणेन प्रजग्मू राधिकान्तिकम् ॥ ९४
चक्रुर्निवेदनं गत्वा यदुवाच हरिः स्वयम्।
श्रुत्वा जहास सा राधा बभूव कामपीड़िता ॥ ९५
श्रुत्वा तासाञ्च वचनं पुलकाञ्चितविग्रहा।
न जगाम हरेः स्थानं व्रीड़या लज्जिता सती ॥ ९६
जले योगासनं कृत्वा दध्यौ कृष्णपदाम्बुजम्।
ब्रह्मेशानन्तधर्म्माणां वन्द्यमीप्सितदं परम् ॥ ९७
स्मारं स्मारं पदाम्भोजं साश्रुसम्पूर्णलोचना।
भावातिरेकात् प्राणेशं तुष्टाव निर्गुणं विभुम् ॥ ९८

राधिकोवाच।

गोलोकनाथ गोपीश मदीश प्राणवल्लभ।
हे दीनबन्धो दीनेश सर्व्वेश्वर नमोऽस्तु ते ॥ ९९
गोपेश गोसमूहेश यशोदानन्दवर्द्धन।
नन्दात्मज सदानन्द नित्यानन्द नमोऽस्तु ते ॥ १००
शतमन्योर्मन्युभग्न ब्रह्मदर्पविनाशन।
कृष्ण कालीयदमन प्राणनाथ नमोऽस्तु ते ॥ १०१
शिवानन्तेश ब्रह्मेश ब्राह्मणेश परात्पर।
ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मवीज नमोऽस्तु ते ॥ १०२
चराचरतरोर्वीज गुणातीत गुणात्मक।
गुणवीज गुणाधार गुणेश्वर नमोऽस्तु ते ॥ १०३
अणिमादिकसिद्धीश सिद्ध सिद्धिस्वरूपक।
तपस्तपस्वितपसां वीजरूप नमोऽस्तु ते ॥ १०४
यदनिर्व्वचनीयञ्च वस्तु निर्व्वचनीयकम्।
तत्स्वरूप तयोर्वीज सर्व्ववीज नमोऽस्तु ते ॥ १०५
अहं सरस्वती लक्ष्मीर्दुर्गा गङ्गा श्रुतिप्रसूः।
यस्य पादार्च्चनान्नित्यं पूज्यास्तस्मै नमोऽस्तु ते ॥ १०६
स्पर्शेन यस्य भृत्यानां ध्यानेन च दिवानिशम्।
पवित्राणि च तीर्थानि तस्मै भगवते नमः ॥ १०७
इत्येवमुक्त्वा सा देवी जले सन्न्यस्य विग्रहम्।
मनः प्राणांश्च श्रीकृष्णे तस्थौ स्थाणुसमा सती ॥ १०८
राधाकृतं हरेः स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः।
हरिभक्तिञ्च दास्यञ्च लभेद्राधागतिं ध्रुवम् ॥ १०९
विपत्तौ च पठेद्भक्त्या सद्यः सम्पत्तिमाप्नुयात्।
चिरकालगतं द्रव्यं हृतं नष्टञ्च लभ्यते ॥ ११०
वंशवृद्धिर्भवेत् तस्य प्रसन्नं मानसं परम्।
चिन्ताग्रस्तः पठेद्भक्त्या परं निर्वृतिमाप्नुयात् ॥ १११
पतिभेदे पुत्रभेदे मित्रभेदे च सङ्कटे।
मासं भक्त्या यदि पठेत् सद्यः सन्दर्शनं लभेत् ॥ ११२
भक्त्या कुमारी स्तोत्रञ्च शृणुयाद्वत्सरं यदि।
श्रीकृष्णसदृशं कान्तं गुणवन्तं लभेद्ध्रुवम् ॥ ११३

इति श्रीब्रह्मवैवर्त्ते राधाकृतं श्रीकृष्णस्तोत्रम्।

जलस्था राधिका ध्यात्वा श्रीकृष्णचरणाम्बुजम्।
स्तुत्वैवं चक्षुरुन्मील्य दृष्ट्वा कृष्णमयं जगत्॥ ११४
ददर्श यमुनातीरं वस्त्रद्रव्यमयं मुने।
दृष्ट्वा तन्नाथ वा स्वप्न इति मेने च राधिका॥ ११५
यत्र स्थाने यदाधारे यद्द्रव्यं संस्थितं पुरा।
वस्त्रैश्च सहितं सर्व्वं तत् प्रापुर्गोपकन्यकाः॥ ११६
जलादुत्थाय ताः सर्व्वा व्रतं कृत्वा मनीषितम्।
सम्प्राप्य वचनं देव्यास्ताः सर्व्वाः स्वालयं ययुः॥११७

नारद उवाच।

व्रतस्य किं विधानञ्च किं नाम किं फलं विभो।
कानि द्रव्याणि देयानि का देया तत्र दक्षिणा॥११८
व्रतान्ते किं रहस्यञ्च बभूव सुमनोहरम्।
व्यासं कृत्वा महाभाग वद नारायणीं कथाम्॥११९

सूत उवाच।

नारदस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः।
कथां कथितुमारेभे कवीन्द्राणां गुरोर्गुरुः॥ १२०

नारायण उवाच।

सर्व्वं व्रतविधानञ्च मत्तो वत्स निशामय।
ख्यातं गौरीव्रतं नाम मार्गे मासि कृतं महत्॥ १२१
विधाय भौते स्नात्वा च नानाद्रव्येण कन्यकाः।
देवषट्कञ्च सम्पूज्य कृत्वा चावाहनं घटे॥ १२२
गणेशञ्च दिनेशञ्च वह्निं नारायणं शिवम्।
दुर्गां पञ्चोपचारेण सम्पूज्य व्रतमारभन्॥ १२३
घटाधः पिण्डिकां कृत्वा चतुरस्रां सुविस्तृताम्।
चन्दनागुरुकस्तूरी-कुङ्कुमैश्च सुसंस्कृताम्॥ १२४
निर्म्माय वालुकायाञ्च दुर्गां दशभुजां पराम्।
दत्त्वा कपाले सिन्दूरं तदधश्चन्दनेन्दुकम्॥ १२५
तां ध्यात्वावाहयेद्देवीं ततो भूत्वा पुटाञ्जलिः।
इमं मन्त्रं पठित्वादौ ततः पूजां समारभेत्॥ १२६
हे गौरि शङ्करार्द्धाङ्गि यथा त्वं शङ्करप्रिया।
तथा मां कुरु कल्याणि कान्तकान्तां सुदुर्लभाम्॥१२७
इमं मन्त्रं पठित्वा तु ध्यायेद्देवीं जगत्प्रसूम्।
ध्यानं तत् सामवेदोक्तं निगूढं सर्व्वकामदम्॥१२८
शृणु नारद वक्ष्यामि मुनीन्द्राणाञ्च दुर्लभम्।
ध्यायन्त्यनेन सिद्धाश्च दुर्गां दुर्गतिनाशिनीम्॥ १२९
शिवां शिवप्रियां शैवां शिववक्षःस्थलस्थिताम्।
ईषद्धास्यप्रसन्नास्यां सुप्रतिष्ठां सुलोचनाम्॥ १३०
नवयौवनसम्पन्नां रत्नाभरणभूषिताम्।
रत्न-कङ्कण-केयूर-रत्ननूपुरभूषिताम्॥ १३१
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम्।
मालतीमाल्यसंसक्त-कवरीभ्रमरान्विताम्॥ १३२
सिन्दूरतिलकं चारु कस्तूरीबिन्दुना सह।
वह्निशुद्धांशुकं रत्नकिरीटं बिभ्रतीं शुभम्॥ १३३
मणीन्द्रसारसंसक्त-रत्नमालासमुज्ज्वलाम्।
पारिजातप्रसूनानां मालामाजानुलम्बिताम्॥१३४
सुपीनकठिनश्रोणिं बिभ्रतीञ्च स्तनोन्नताम्।
नवयौवनभारौघादीषन्नम्रां मनोहराम्॥ १३५
ब्रह्मादिभिः स्तूयमानां सूर्य्यकोटिसमप्रभाम्।
पक्वबिम्बाधरोष्ठाञ्च चारुचम्पकसन्निभाम्॥ १३६
मुक्तापङ्क्तिविनिन्द्यैक-दन्तराजिविराजिताम्।
भक्तकामप्रदां देवीं शरच्चन्द्रमुखीं भजे॥ १३७
ध्यात्वैवं मस्तके पुष्पं विन्यस्य च व्रती मुदा।
पुष्पं गृहीत्वा भक्त्या च पुनर्ध्यात्वा च पूजयेत्॥ १३८
दत्त्वा षोड़शोपचारं प्रकृत तत्र नित्यशः।
पूर्व्वोक्तेनैव मन्त्रेण मुदा भक्त्या व्रते व्रती॥ १३९
पूर्व्वोक्तेनैव मन्त्रेण स्तुत्वा च प्रणमेत् तदा।
कृत्वा प्रणामं भक्त्या च संयता शृणुयात् कथाम्॥१४०

नारद उवाच।

श्रुतं व्रतविधानञ्च फलञ्च स्तोत्रमद्भुतम्।
अधुना श्रोतुमिच्छामि गौरीव्रतकथां शुभाम्॥१४१
व्रतं केन कृतं पूर्व्वं भूमौ केन प्रकाशितम्।
एतत् सर्व्वं सुविस्तार्य्य वद सन्देहभञ्जन॥ १४२

नारायण उवाच।

कुशध्वजस्य च सुता नाम्ना वेदवती सती।
तया व्रतं कृतमिदं महातीर्थे च पुष्करे॥ १४३
समाप्तिदिवसे साक्षाद्बभूव जगदम्बिका।
योगिनीलक्षसंयुक्ता सूर्य्यकोटिसमप्रभा॥ १४४
शातकुम्भविनिर्म्माण-रथस्था परमेश्वरी।
ईषद्धास्यप्रसन्नास्या तामुवाच सुसंयताम्॥ १४५

पार्व्वत्युवाच।

हे वेदवति भद्रं ते वरं वृणु यथेप्सितम्।
तव व्रतेन तुष्टाहं तुभ्यं दास्यामि वाञ्छितम्॥ १४६
पार्व्वत्या वचनं श्रुत्वा दृष्ट्वा प्रहृष्टमानसा।
पुटाञ्जलियुता साध्वी प्रणम्योवाच नारद॥ १४७

वेदवत्युवाच।
देवि नारायणं कान्तं मह्यं देहि मनोभिरामम्।
वरेऽन्यस्मिन् स्पृहा नास्ति दृढ़ां भक्तिञ्च तत्पदे॥१४८
श्रुत्वा वेदवतीवाक्यं प्रहस्य जगदम्बिका।
अवरुह्य रथात् तूर्णं तामुवाच हरप्रिया॥१४९
पार्व्वत्युवाच।
ज्ञातं सर्व्वं जगन्मातस्त्वञ्च लक्ष्मीः स्वयं सति।
भारतं पादरजसा पूतं कर्त्तुं समागता॥१५०
त्वत्पादरजसा साध्वि सद्यःपूता वसुन्धरा।
निखिलानि च तीर्थानि पूतानि परमेश्वरि॥१५१
व्रतं ते लोकशिक्षार्थं तपस्येव तपस्विनि।
नारायणस्य कान्ता त्वं प्रिया जन्मनि जन्मनि॥१५२
भारावतारणे विष्णुर्वसुधामागमिष्यति।
रामो दाशरथिः पूर्णः कर्त्तुं दस्युविनिग्रहम्॥१५३
ब्रह्मशापाच्च च्युतयोर्मोक्षणाय च भृत्ययोः।
अयोध्यायाञ्च त्रेतायामाविर्भावो हरेरपि॥१५४
त्वमेव मिथिलां गच्छ विधाय शिशुविग्रहम्।
त्वामिमां प्राप्य जनकोऽप्ययोनिसम्भवां सुताम्॥१५५
पालयिष्यति यत्नेन सीता त्वञ्च भविष्यसि।
गत्वा रामोऽपि मिथिलां त्वां विवाहं करिष्यति१५६
नारायणस्य कान्ता त्वं कल्पे कल्पे हरिप्रिया।
इत्युक्त्वा तां समालिङ्ग्य पार्व्वती स्वालयं ययौ॥१५७
गत्वा सा मिथिलां साध्वी शिशुरूपं विधाय च।
लाङ्गलस्य च रेखायां सुप्ता तस्थौ च मायया॥१५८
विलोक्य जनकस्ताञ्च नग्नां मुद्रितलोचनाम्।
तप्तकाञ्चनवर्णाञ्च रुदतीं तेजसान्विताम्॥१५९
ताञ्च गृहीत्वा च कृत्वा वक्षसि नारद।
गच्छन्तं पथि तत्रैव वाग्बभूवाशरीरिणी॥१६०
अयोनिसम्भवां कन्यां कमलां ग्रहणं कुरु।
नारायणस्ते जामाता भवितेत्येवमेव च॥१६१
श्रुत्वा तदा देववाणीं गृहीत्वा कन्यकामृषिः।
गत्वा ददौ स्वकान्तायै पालनाय मुदान्वितः॥१६२
सा लब्धयौवना प्राप रामं दाशरथिं सती।
व्रतस्यास्य प्रभावेण कान्तं त्रिजगतां पतिम्॥१६३
प्रकाशितं वशिष्ठेन पृथिव्यां भक्तिभावतः।
राधा कृत्वा व्रतमिदं श्रीकृष्णं प्राणवल्लभम्॥१६४
गोपाङ्गनाश्च तं प्रापुर्व्रतस्यास्य प्रभावतः।
इत्येवं कथिता विप्र कथा गौरीव्रतस्य च॥१६५
भारते च व्रतमिदं या करोति कुमारिका।
स्वामिनं कृष्णतुल्यञ्च सा प्राप्नोति न संशयः॥१६६
इति श्रीब्रह्मवैवर्त्ते गौरीव्रतकथा समाप्ता।
नारायण उवाच।
एवं व्रतञ्च चक्रुस्ता याः कन्यास्तञ्च गोपिकाः।
पूर्व्वस्तोत्रेण तां देवीं तुष्टुवुश्च दिने दिने॥१६७
समाप्तिदिवसे गोप्यो व्रतं कृत्वा मुदान्विताः।
काण्वशाखोक्तस्तोत्रेण तुष्टाव परमेश्वरीम्॥१६८
येन स्तोत्रेण तां स्तुत्वा सीता सत्यपरायणा।
सद्यः सम्प्राप कान्तञ्च रामं राजीवलोचनम्॥१६९
जानक्युवाच।
शक्तिस्वरूपे सर्व्वेषां सर्व्वाधारे गुणाश्रये।
सदा शङ्करयुक्ते मे पतिं देहि नमोऽस्तु ते॥१७०
सृष्टिस्थित्यन्तरूपे च सृष्टिस्थित्यन्तकारिणि।
सृष्टिस्थित्यन्तबीजानां बीजरूपे नमोऽस्तु ते॥१७१
हे गौरि पतिमर्म्मज्ञे पातिव्रत्यपरायणे।
पतिव्रते पतिरते पतिं देहि नमोऽस्तु ते॥१७२
सर्व्वमङ्गलमङ्गल्ये सर्व्वमङ्गलसंयुते।
सर्व्वमङ्गलबीजे च नमस्ते सर्व्वमङ्गले॥१७३
सर्व्वप्रिये सर्व्वबीजे सर्व्वाशुभविनाशिनि।
सर्व्वेशे सर्व्वजनके नमस्ते शङ्करप्रिये॥१७४
परमात्मस्वरूपे च नित्यरूपे सनातनि।
साकारे च निराकारे सर्व्वरूपे नमोऽस्तु ते॥१७५
क्षुत् तृष्णेच्छा दया श्रद्धा निद्रा तन्द्रा स्मृतिः क्षमा
एतास्तव कलाः सर्व्वा नारायणि नमोऽस्तु ते॥१७६
लज्जा-मेधा-तुष्टि-पुष्टि-शान्ति-सम्पत्ति-वृद्धयः।
कलास्तेऽन्याश्च सर्व्वाश्च सर्व्वरूपे नमोऽस्तु ते॥१७७
दृष्टादृष्टस्वरूपे च तयोर्बीजे फलप्रदे।
सर्व्वानिर्व्वचनीये च महामाये नमोऽस्तु ते॥१७८
शिवे शङ्करसौभाग्य-युक्ते सौभाग्यदायिनि।
हरिं कान्तञ्च सौभाग्यं देहि देवि नमोऽस्तु ते॥१७९
स्तोत्रेणैतेन याः स्तुत्वा समाप्तिदिवसे शिवाम्।
नमन्ति परया भक्त्या ता लभन्ते हरिं पतिम्॥१८०
इह कान्तसुखं भुक्त्वा पतिं प्राप्य परात्परम्।
दिव्यं स्यन्दनमारुह्य यान्त्यन्ते कृष्णसन्निधिम्॥१८१
इति श्रीब्रह्मवैवर्त्ते जानकीकृतं पार्व्वतीस्तोत्रम्।

समाप्तिदिवसे राधा गोपीभिः सह संयुता।
देवीं प्रणम्य स्तुत्वा च व्रतं पूर्णं चकार ह ॥ १८२
गोसहस्रं ब्राह्मणाय सुवर्णशतकं मुदा।
विप्राय दक्षिणां दत्त्वा स्वगृहं गन्तुमुद्यता ॥ १८३
ब्राह्मणानां सहस्रञ्च भोजयामास सादरम्।
वाद्यानि वादयामास भिक्षुकेभ्यो ददौ धनम् ॥१८४
एतस्मिन्नन्तरे तत्र दुर्गा दुर्गतिनाशिनी।
आविर्ब्बभूव गगनाज्ज्वलन्ती ब्रह्मतेजसा ॥ १८५
ईषद्धास्यप्रसन्नास्या योगिनीशतसंयुता।
सिंहस्था च दशभुजा रत्नालङ्कारभूषिता ॥ १८६
शातकुम्भमयाद्दिव्याद्रत्नसारपरिच्छदात्।
अवरुह्य रथात् तूर्णमालिङ्ग्योरसि राधिकाम् ॥१८७
दृष्ट्वा गोपाङ्गना देवीं प्रणेमुश्च मुदान्विताः।
आशिषं युयुजे दुर्गा वाञ्छासिद्धिर्भवत्विति ॥ १८८
गोपिकाभ्यो वरं दत्त्वा तांश्च सम्भाष्य सादरम्।
उवाच राधिकां दुर्गा स्मेराननसरोरुहा ॥ १८९

पार्व्वत्युवाच।

राधे सर्व्वेश्वरप्राणादधिके जगदम्बिके।
व्रतं ते लोकशिक्षार्थं मायामानुषरूपिणि ॥ १९०
गोलोकनाथं गोलोकं श्रीशैलं विरजातटम्।
श्रीरासमण्डलं रम्यं वृन्दावनमनोहरम् ॥ १९१
रचितं रतिचौरस्य स्त्रीणां मानसहारकम्।
विदुषः कामशास्त्राणां किञ्चित् स्मरसि सुन्दरि१९२
श्रीकृष्णार्द्धाङ्गसम्भूता कृष्णतुल्या च तेजसा।
तवांशकलया देव्यः कथं त्वं मानुषी सति ॥ १९३
कृष्णाज्ञया च त्वं देवी गोपीरूपं विधाय च।
आगतासि महीं शान्ते कथं त्वं मानुषी सति ॥१९४
श्रद्धो श्रीदामशापेन भारावतारणाय च।
भूमौ तवाधिष्ठानञ्च कथं त्वं मानुषी सति ॥ १९५
अयोनिसम्भवा त्वञ्च जन्ममृत्युजराहरा।
कलावतीसुता पुण्यात् कथं त्वं मानुषी सति ॥१९६
भवती च हरेः प्राणा भवत्याश्च हरिः स्वयम्।
वेदे नास्ति द्वयोर्भेदः कथं त्वं मानुषी सति ॥ १९७
षष्टिं वर्षसहस्राणि ब्रह्मा तप्ता तपः पुरा।
न ते ददर्श पादाब्जं कथं त्वं मानुषी सति ॥ १९८
सुयज्ञो हि नृपश्रेष्ठो मनुवंशसमुद्भवः।
त्वत्तो जगाम गोलोकं कथं त्वं मानुषी सति ॥१९९
त्रिःसप्तकृत्वो निर्भूपां चकार पृथिवीं भृगुः।
तव मन्त्रेण कवचात् कथं त्वं मानुषी सति ॥ २००
शङ्करात् प्राप्य त्वन्मन्त्रं सिद्धिं कृत्वा तु पुष्करे।
जघान कार्त्तवीर्य्यञ्च कथं त्वं मानुषी सति ॥ २०१
बभञ्ज दर्पदन्तञ्च गणेशस्य महात्मनः।
त्वत् ते नामभयं चक्रे कथं त्वं मानुषी सति ॥ २०२
पर्य्युद्यतायां कोपेन भस्मसात् कर्त्तुमीश्वरः।
ररक्षागत्य त्वत्प्रीत्या कथं त्वं मानुषी सति ॥ २०३
कल्पे कल्पे तव पतिः कृष्णो जन्मनि जन्मनि।
व्रतं लोकहितार्थाय जगन्मातस्त्वया कृतम् ॥ २०४
त्रिषु मासेष्वतीतेषु मधुमासे मनोहरे।
निर्ज्जने निर्म्मले रात्रौ सुरम्ये रासमण्डले ॥ २०५
सर्व्वाभिर्गोपिकाभिश्च सार्द्धं वृन्दावने वने।
हर्षेण हरिणा सार्द्धं क्रीड़ा ते भविता सति ॥२०६
विधात्रा लिखिता क्रीड़ा कल्पे कल्पे महीतले।
तव श्रीहरिणा सार्द्धं केन राधे निवार्य्यते ॥ २०७
यथा सौभाग्ययुक्ताहं हरस्य श्रीहरिप्रिये।
ततः सौभाग्ययुक्ता त्वं भव कृष्णस्य सुन्दरि ॥ २०८
यथा क्षीरे च धावल्यं यथा वह्नौ च दाहिका।
भुवि गन्धो जले शैत्यं तथा कृष्णे स्थितिस्तव ॥ २०९
देवी वा मानुषी वापि गन्धर्व्वी राक्षसी तथा।
त्वत्तुल्यपरसौभाग्या न भूता न भविष्यति ॥ २१०
परात्परो गुणातीतो ब्रह्मादीनाञ्च वन्दितः।
स्वयं कृष्णस्तवाधीनो मद्वरेण भविष्यति ॥ २११
ब्रह्मानन्तशिवाराध्यो भविता ते वशः सति।
ध्यानासाध्यो दुराराध्यो सर्व्वेषामपि योगिनाम्२१२
त्वञ्च भाग्यवती राधे स्त्रीजातिषु न ते परा।
कृष्णेन सार्द्धं पश्चात् त्वं गोलोकञ्च गमिष्यसि ॥२१३
इत्युक्त्वा पार्व्वती सद्यस्तत्रैवान्तर्दधे मुने।
सार्द्धं गोपालिकाभिश्च राधिका गन्तुमुद्यता ॥ २१४
एतस्मिन्नन्तरे कृष्णो जगाम राधिकापुरः।
राधा ददर्श श्रीकृष्णं किशोरं श्यामसुन्दरम् ॥ २१५
पीतवस्त्रपरीधानं रत्नालङ्कारभूषितम्।
आजानुमालतीमाला-वनमालाविभूषितम् ॥ २१६
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम्।
चन्दनोक्षितसर्व्वाङ्गं शरत्पङ्कजलोचनम् ॥
शरत्पार्व्वणचन्द्रास्यं सद्रत्नमुकुटोज्ज्वलम्।

पक्वदाडिम्बबीजाभ-दशनं सुमनोहरम् ॥ २१८
विनोदमुरलीहस्त-न्यस्तलीलासरोरुहम्।
कोटिकन्दर्पलावण्य-लीलाधाम मनोहरम् ॥ २१९
गुणातीतं स्तूयमानं ब्रह्मानन्त-शिवादिभिः।
ब्रह्मस्वरूपं ब्रह्माख्यं श्रुतिभिश्च निरूपितम् ॥ २२०
अव्यक्तमक्षरं व्यक्तं ज्योतीरूपं सनातनम्।
मङ्गल्यं मङ्गलाधारं मङ्गलं मङ्गलप्रदम् ॥ २२१
दृष्ट्वा तमद्भुतं रूपं सम्भ्रमात् प्रणनाम तम्।
तं दृष्ट्वा मूर्च्छिता राधा कामवाणप्रपीड़िता ॥ २२२
दृशं दृशं मुखाम्भोजं सस्मिता वक्रलोचना।
मुखमाच्छादनं चक्रे व्रीड़या च पुनः पुनः ॥ २२३
दृष्ट्वा हरिस्तामुवाच प्रसन्नवदनेक्षणः।
गोपालिकासमूहानां सर्व्वासां पुरतः स्थितः ॥ २२४

श्रीकृष्ण उवाच।

प्राणाधिके राधिके त्वं वरं वृणु मनीषितम्।
भो भो गोपालिकाः सर्व्वा वरं वृणुत वाञ्छितम्॥२२५
कृष्णस्य वचनं श्रुत्वा वरं वव्रे च राधिका।
गोपालिकाः प्रहृष्टाश्च सर्व्वेशं कल्पपादपम् ॥ २२६

राधिकोवाच।

त्वत्पादाब्जे मन्मनोऽलिः सन्ततं भ्रमतु प्रभो।
पातु भक्तिरसं पद्मे मधुपश्च यथा मधु ॥ २२७
मदीयप्राणनाथस्त्वं भव जन्मनि जन्मनि।
त्वदीयचरणाम्भोजे देहि भक्तिं सुदुर्लभाम् ॥२२८
तव स्मृतौ गुणे चित्तं स्वप्ने ध्याने दिवानिशम्।
अवेन्निमग्नं सततमेतन्मम मनीषितम् ॥ २२९

गोपालिका ऊचुः।

यथा राधा तथा नश्च प्राणबन्धो दिवानिशम्।
अविष्यसि प्राणनाथो दृक्ष्यसि प्रतिजन्मनि ॥ २३०
आसाञ्च वचनं श्रुत्वा ओं स्वस्त्येवमुवाच ह।
प्रसन्नवदनः श्रीमान् यशोदानन्दवर्द्धनः ॥ २३१
क्रीड़ापद्मं राधिकायै सहस्रदलसंयुतम्।
ललितां मालतीमालां ददौ प्रीत्या जगत्पतिः ॥२३२
मालासमूहं पुष्पाणि गोपीभ्यो गोपिकापतिः।
प्रहस्य परमप्रीत्या प्रददावित्युवाच ह ॥ २३३

श्रीकृष्ण उवाच।

त्रिषु मासेष्वतीतेषु यूयं क्रीड़ां मया सह।
श्रीरासमण्डले रम्ये वृन्दारण्ये करिष्यथ ॥ २३४
यथाहञ्च तथा यूयं न हि भेदः श्रुतौ श्रुतः।
प्राणा अहञ्च युष्माकं यूयं प्राणा ममैव च ॥ २३५
व्रतं वो लोकशिक्षार्थं न हि स्वार्थमिदं प्रियाः।
सहागता मे गोलोकाद्गमनञ्च मया सह ॥ २३६
गच्छत स्वालयं शीघ्रं वोऽहं जन्मनि जन्मनि।
प्राणेभ्योऽपि गरीयस्यो यूयं मे नात्र संशयः ॥२३७
इत्युक्त्वा श्रीहरिस्तत्र तस्थौ सूर्य्यसुतातटे।
तस्थुर्गोपालिकाः सर्व्वा वीक्ष्य कृष्णं पुनः पुनः ॥२३८
सर्व्वाः प्रहृष्टवदनाः सस्मिता वक्रलोचनाः।
प्रीत्या चक्षुश्चकोराभ्यां मुखचन्द्रं पपुर्हरेः ॥ २३९
ताः शीघ्रं प्रययुर्गेहं जयं दत्त्वा पुनः पुनः।
हरिश्च शिशुभिः सार्द्धं प्रसन्नः स्वालयं ययौ ॥ २४०
इत्येवं कथितं सर्व्वं हरेश्चरितमङ्गलम्।
गोपीनां वस्त्रहरणं सर्व्वलोकसुखावहम् ॥ २४१

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे गोपिकावस्त्र-हरणं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः।

नारद उवाच।

त्रिषु मासेष्वतीतेषु तासाञ्च हरिणा सह।
ऋषे केन प्रकारेण बभूव नवसङ्गमः ॥ १
वृन्दावनं किंप्रकारं किंविधं रासमण्डलम्।
हरिरेकस्ताश्च बह्व्यः केन क्रीड़ा बभूव ह ॥ २
कौतूहलं भवति मे श्रोतुं श्रोतुं नवं नवम्।
कथयस्व महाभाग पुण्यश्रवणकीर्त्तनम् ॥ ३
कथं पुराणधाराणां रासयात्रा हरेरहो।
हरिलीला पृथिव्यान्तु सर्व्वा श्रुतिमनोहरा ॥ ४

सूत उवाच।

नारदस्य वचः श्रुत्वा ऋषिर्नारायणः स्वयम्।
प्रहस्य सुप्रसन्नास्यः प्रवक्तुमुपचक्रमे ॥ ५

नारायण उवाच।

एकदा श्रीहरिर्नक्तं वनं वृन्दावनं ययौ।
शुभे शुक्लत्रयोदश्यां पूर्णचन्द्रोदये मधौ ॥ ६
यूथिका-माधवी-कुन्द-मालतीपुष्पवायुना।
वासितं कलनादेन मधुभ्राणां मनोहरम् ॥ ७

नवपल्लवसंयुक्त-पुंस्कोकिलरुतश्रुतम्।
नवक्षौम-वास-राससंयुक्तं सुमनोहरम्॥ ८
चन्दनागुरु-कस्तूरी-कुङ्कुमेण सुवासितम्।
कर्पूरान्विततांबूल-भोगद्रव्यसमन्वितम्॥ ९
प्रसूनैश्चम्पकानाञ्च कस्तूरीचन्दनान्वितैः।
रतियोग्यविरचितैर्नानातल्पैः सुशोभितम्॥ १०
दीप्तं रत्नप्रदीपैश्च धूपेन सुरभीकृतम्।
नानापुष्पेण रचितमालाजालैर्विराजितम्॥ ११
परितो वर्त्तुलाकारं तत्रैव रासमण्डलम्।
चन्दनागुरुकस्तूरी-कुङ्कुमेण सुसंस्कृतम्॥ १२
पुष्पोद्यानैः पुष्पितैश्च युक्तं क्रीड़ासरोवरैः।
हंसकारण्डवाकीर्णैर्जलकुक्कुटकूजितैः॥ १३
क्रीड़नीयैः सुन्दरैश्च सुरतश्रमहारिभिः।
शुद्धस्फटिकसङ्काश-तोयपूर्णैः सुनिर्म्मलैः॥ १४
दधिपूर्णशुक्लधान्यलाजैर्निर्म्मञ्छनीकृतम्।
रम्भास्तम्भसमूहेन सुन्दरेण सुशोभितम्॥ १५
आम्रपल्लवयुक्तेन सूत्रबद्धेन चारुणा।
भूषितं मङ्गलघटैः सिन्दूरचन्दनान्वितैः॥ १६
मालतीमाल्यसंयुक्तैर्नारिकेलफलान्वितैः।
स रासमण्डलं दृष्ट्वा जहास मधुसूदनः॥ १७
चकार तत्र कौतुक्याद्विनोदमुरलीरवम्।
गोपीनां कामुकीनाञ्च कामोद्दर्द्धनकारणम्॥ १८
तच्छ्रुत्वा राधिका सद्यो मुमोह मदनातुरा।
बभूव स्थाणुवद्देहस्तास्थेकतानमानसा॥ १९
क्षणेन चेतनां प्राप्य पुनः शुश्राव सा ध्वनिम्।
उवास च समुत्तस्थौ समुद्विग्ना पुनः पुनः॥ २०
त्यक्त्वा चावश्यकं कर्म्म निःससार स्वयं गृहात्।
ययौ तदनुसारेण प्रसमीक्ष्य चतुर्द्दिशम्॥ २१
ध्यायन्ती चरणाम्भोजं श्रीकृष्णस्य महात्मनः।
तेजसा च द्योतयन्ती समुद्रसारभूषणैः॥ २२
निश्चिभूतास्तास्तस्ता रवेण हृतचेतनाः।
कुलधर्म्मं परित्यज्य निःशङ्काः काममोहिताः।
त्रयस्त्रिंशद्वयस्याश्च ताः सुशीलादयः स्मृताः॥ २३
राधिकायाः प्रियतमा गोपीनां प्रवरा ययुः।
तासां पश्चाद्ययुर्गोप्यस्तासां संख्यां निबोध मे॥२४
समा, वेशेन वयसा रूपेण च गुणेन च।
ययुः सुशीलासङ्गेन सहस्राणि च षोड़श॥ २५
ययुः शशिकलापश्चात् सहस्राणि चतुर्द्दश।
जग्मुश्चन्द्रमुखीपश्चात् सहस्राणि त्रयोदश॥ २६
एकादश सहस्राणि माधव्याख्यश्च निर्ययुः।
जग्मुः कदम्बमालाख्यः सहस्राणि त्रयोदश॥ २७
ययुः कुन्तीवयस्याश्च सहस्राणि दश स्मृताः।
चतुर्द्दश सहस्राणि ययुस्ता यमुनानुगाः॥ २८
जाह्नवीसहचारिण्यः सहस्राणि चतुर्द्दश।
शुभानुगा ययुर्गोप्यः सहस्राणि चतुर्द्दश॥ २९
पद्मानुगा ययुर्गोप्यः सहस्राणि त्रयोदश।
दुर्गानुगा ययुर्गोप्यः सहस्राणि चतुर्द्दश॥ ३०
ययुः सर्व्वमङ्गलाख्यः सहस्राणि च षोड़श।
कालिकाख्यो ययुर्गोप्यः सहस्राणि चतुर्द्दश॥ ३१
निर्ययुः कमलाख्यश्च सहस्राणि त्रयोदश।
ययुः सरस्वतीपश्चात् सहस्राणि त्रयोदश॥ ३२
प्रजग्मुर्भारतीपश्चात् सहस्राणि दश व्रजाः।
अपर्णासहचारिण्यः सहस्राणि ययुर्दश॥ ३३
रतीपश्चाद्वयस्याश्च सहस्राणि ययुर्दश।
गङ्गावयस्याः प्रययुः सहस्राणि चतुर्द्दश॥ ३४
ययुः कृष्णप्रियापश्चात् सहस्राणि च षोड़श।
सतीपश्चाद्ययुर्गोप्यः सहस्राणि त्रयोदश॥ ३५
नन्दिनीसहचारिण्यः सहस्राणि ययुर्दश।
प्रययुः सुन्दरीपश्चात् सहस्राणि त्रयोदश॥ ३६
ययुः पश्चात् कृष्णप्राणाः सहस्राणि च षोड़श।
ययुर्मधुमतीपश्चात् सहस्राणि चतुर्द्दश॥ ३७
ययुश्चम्पानुगा गोप्यः सहस्राणि त्रयोदश।
चन्द्राख्यो ययुः पश्चात् सहस्राणि चतुर्द्दश॥ ३८
सर्व्वा बभूवुरेकत्र तत्र तस्थुः क्षणं मुदा॥ ३९
तत्रायवुर्गोपिकाश्च मालाहस्ताश्च काश्चन।
चारुचन्दनहस्ताश्च काश्चित् तत्राययुर्व्रजाः॥ ४०
श्वेतचामरहस्ताश्च काश्चित् तत्राययुर्मुदा।
तत्राययुर्गोपकन्याः काश्चित् कस्तूरिकाकराः॥ ४१
तत्राययुर्गोपकन्याः काश्चित् कुङ्कुमवाहिकाः।
काश्चित् तत्राययुर्गोप्यस्ताम्बूलपात्रवाहिकाः॥ ४२
यावत् काञ्चनवस्त्राणां वाहिका गोपकन्यकाः।
काश्चित् तत्राययुः शीघ्रं यत्र चन्द्रावली मुदा॥ ४३
सर्व्वाश्चैकत्र सम्भूय सज्जिताश्च मुदान्विताः।
विधाय राधिकावेशं स्थानञ्च प्रययुर्मुदा॥ ४४

चक्रुः पुनः पुनस्ताश्च हरिशब्दं जयं पथि।
प्रापुर्वृन्दावनं रम्यं ददृशू रासमण्डलम् ॥ ४५
स्वर्गस्थः सुन्दरं दृश्यं राकापतिकरान्वितम्।
सुनिर्ज्जनं कुसुमितं वासितं पुष्पवायुणा ॥ ४६
नारीणां कामजननं मुनिमोहनकारणम्।
शुश्रुवुस्तत्र ताः सर्व्वाः पुंस्कोकिलकलध्वनिम् ॥ ४७
अतिसूक्ष्मरवञ्चापि भ्रमराणां मनोहरम्।
प्रसूनमधुमत्तानां भ्रमरीसङ्गसङ्गिनाम् ॥ ४८
शुभक्षणे प्रविवेश राधिका रासमण्डलम्।
सार्द्धं सर्व्वालिकाभिर्ध्यात्वा कृष्णपदाम्बुजम् ॥४९
राधामारात् तु संवीक्ष्य कृष्णस्तत्र मुदान्वितः।
जगामानुव्रजं प्रीत्या सस्मितो मदनातुरः ॥ ५०
मध्यस्थां सखिसङ्घानां रत्नालङ्कारभूषिताम्।
दिव्यवस्त्रपरीधानां सस्मितां वक्रलोचनाम् ॥ ५१
गजेन्द्रगामिणीं रम्यां मुनिमानसमोहिनीम्।
नवीनवेशवयसा रूपेणातिमनोहराम् ॥ ५२
स्तन-श्रोणि-नितम्बानां भारवेशान्वितां पराम्।
चारुचम्पकवर्णाभां शरच्चन्द्रनिभाननाम्।
बिभ्रतीं कवरीभारं मालतीमाल्यसंयुतम् ॥ ५३
राधा ददर्श श्रीकृष्णं किशोरं श्यामसुन्दरम्।
नवयौवनसम्पन्नं रत्नाभरणभूषितम् ॥ ५४
कन्दर्पकोटिलावण्य-लीलाधाम मनोहरम्।
प्राणाधिकां तां पश्यन्तं पश्यन्तीं वक्रचक्षुषा ॥ ५५
परमाद्भुतरूपञ्च सर्व्वत्रानुपमं परम्।
तच्च वेशं विचित्रञ्च बिभ्रतं सस्मितं मुदा ॥ ५६
वक्रलोचनकोणेन दृशं दृशं पुनः पुनः।
मुखमाच्छादनं चक्रे व्रीड़या सस्मिता सती ॥ ५७
मूर्च्छामवाप सा सद्यः कामवाणप्रपीड़िता।
पुलकाञ्चितसर्व्वाङ्गी बभूव हतचेतना ॥ ५८
कटाक्षकामवाणेश्च विद्धः क्रीड़ारसोन्मुखः।
मूर्च्छां प्राप्य न पपात तस्थौ स्थाणुसमो हरिः ॥५९
पपात मुरली तस्य क्रीड़ाकमलमुज्ज्वलम्।
द्वितीयं पीतवस्त्रञ्च शिखिपुच्छं शरीरतः ॥ ६०
क्षणेन चेतनां प्राप्य ययौ राधान्तिकं मुदा।
कृत्वा वक्षसि तां प्रीत्या समाश्लिष्य चुचुम्ब च ॥ ६१
श्रीकृष्णस्पर्शमात्रेण सम्प्राप्य चेतनां सती।
प्राणाधिकं प्राणनाथं समाश्लिष्य चचुम्ब ह ॥ ६२
मनो जहार राधायाः कृष्णस्तस्य च सा मुने।
जगाम रसिकासार्द्धं रसिको रतिमन्दिरम् ॥ ६३
रत्नप्रदीपसंयुक्तं रत्नदर्पणसंयुतम्।
चारुचम्पकशय्याभिश्चन्दनाक्ताभि राजितम् ॥ ६४
कर्पूरान्विततांम्बूलैर्भोगद्रव्यैः समन्वितम्।
उवास राधया सार्द्धं कृष्णस्तत्र मुदान्वितः ॥ ६५
राधया दत्ततांम्बूलं चखाद मधुसूदनः ॥ ६६
रासेश्वरी कृष्णदत्तं ताम्बूलं बुभुजे मुदा।
दत्तं चर्व्विततांम्बूलं राधिकायै हरिर्मुदा।
चखाद भक्त्या सा तूर्णं प्रहस्य मदनातुरा ॥ ६७
राधाचर्व्विततांम्बूलं ययाचे माधवो मुदा।
न ददौ राधिका भीता पपात चरणाम्बुजे ॥ ६८
एतस्मिन्नन्तरे तत्र सकामः सुरतोन्मुखः।
सुष्वाप राधया सार्द्धं रतितल्पे मनोहरे ॥ ६९
शृङ्गाराष्टप्रकारञ्च विपरीतादिकं विभुः।
नखदन्तकराणाञ्च प्रहारञ्च यथोचितम् ॥ ७०
कामशास्त्रेषु यन्नोक्तं चुम्बनाष्टविधं परम्।
कामिनीनां मनोहारि चकार रसिकेश्वरः ॥ ७१
अङ्गैरङ्गानि प्रत्यङ्गैः प्रत्यङ्गानि स्मरातुरः।
चकाराश्लेषणं तत्र कामुकीनां सुखावहम् ॥ ७२
शृङ्गारकुशलौ तौ तु कामशास्त्रसुपस्थितौ।
रतियुद्धविरामश्च न बभूव द्वयोरपि ॥ ७३
एवं गृहे गृहे रम्ये नानामूर्त्तिं विधाय च।
रेमे गोपाङ्गनाभिश्च सुरम्ये रासमण्डले ॥ ७४
अभ्यन्तरे रतिं कृत्वा वहिःक्रीड़ां चकार ह।
गोपो गोप्या समाश्लिष्टः सर्व्वत्र रासमण्डले ॥ ७५
गोपीनां नव लक्षाणि गोपानाञ्च तथैव च।
लक्षाण्यष्टादश मुने युतानि रासमण्डले ॥ ७६
सुक्तकेशानि नग्नानि विच्छिन्नभूषणानि च।
वेशोच्छन्नानि मत्तानि मूर्च्छितानि स्मरेण च॥७७
कङ्कणानां किङ्किणीनां वलयानाञ्च नारद।
सद्रत्ननूपुराणाञ्च शब्दयुक्तानि सन्ततम् ॥ ७८
एवं कृत्वा स्थलक्रीड़ां ययुस्तानि जलं मुदा।
कृत्वा तत्र चिरं क्रीड़ां परिश्रान्तानि साम्प्रतम् ॥७९
तूर्णं जलात् समुत्थाय वासांसि परिधाय च।
ददृशुर्मुखपद्मानि सद्रत्नदर्पणेषु च ॥ ८०
चन्दनागुरुकस्तूरी-द्रव्याणि पुष्पमालिकाः।

मुदा परिदधुस्तानि सम्प्रापुश्चेतनानि च ॥ ८१
सकर्पूरञ्च ताम्बूलं भुक्त्वा सर्व्वाः सुकौतुकात् ।
ददृशुर्मुखचन्द्राणि सद्रत्नदर्पणे मुने ॥ ८२
काचित् कामातुरा कृष्णं बलादाकृष्य कौतुकात् ।
हस्ताद्वंशीं निजग्राह वसनञ्च चकर्ष ह ॥ ८३
काचित् कामप्रमत्ता च नर्म्मं कृत्वा च माधवम् ।
निजग्राह पीतवस्त्रं परिहास्य पुनर्ददौ ॥ ८४
मुक्तिं शृखित्येवमुक्त्वा काचित् संरुह्य स्वामिनम् ।
चुचुम्ब गण्डे विम्बौष्ठे समाश्लिष्य पुनः पुनः ॥ ८५
सस्मितं सकटाक्षञ्च मुखचन्द्रं स्तनोन्नतम् ।
काचित् श्रोणिं सुवलितां दर्शयामास कामतः ॥ ८६
काचित् कान्तं करे धृत्वा संस्थाप्य श्रोणिदेशतः ।
चकार चूडानिर्म्माणं मालतीमाल्यसंयुतम् ॥ ८७
काचिच्चूडां समाकृष्य मयूरपुच्छकं ददौ ।
[illegible] चूडायां वेष्टयामास काचन ॥ ८८
काचित् श्वेतचामरेण प्राणनाथं सिषेव च ।
चक्रेऽनुलेपनं कामात् कान्तं काचन कामिनी ॥ ८९
गोपीहस्ताच्च मुरलीं बलादाकृष्य काचन ।
प्रददौ स्वामिने कामात् प्रेमवर्द्धनहेतवे ॥ ९०
काचित् काञ्चित् समाकृष्य नग्नां कृत्वा तु कामतः ।
प्रेषयामास कृष्णस्य क्रोडे चन्दनचर्च्चिते ॥ ९१
ननृतुश्च जगुः काश्चित् कान्तं कृत्वा तु मध्यतः ।
नर्त्तनं कारयामासुस्तञ्च काचिद्वलेन च ॥ ९२
कृष्णश्च वस्त्रं कस्याश्च विचकर्ष कुतूहलात् ।
काञ्चित् कृत्वातिनग्नाञ्च कस्यैचिदंशुकं ददौ ॥ ९३
कृष्णो राधां समाकृष्य वासयामास वक्षसि ।
तस्याश्च कवरीं रम्यां सुनिर्म्माणं चकार ह ॥ ९४
सिन्दूरञ्च ददौ भाले कस्तुरीविन्दुभिः सह ।
अतिसूक्ष्मं चन्दनेन्दुं कौतुकात् तदधो ददौ ॥ ९५
पत्रावलीं सुललितां सुकपोले चकार ह ।
वह्निशुद्धांशुकं चारु परिधाप्यं प्रयत्नतः ॥ ९६
ददौ सद्रत्नमञ्जीरे गृहीत्वा चरणाम्बुजे ।
नखानि मार्ज्जनं कृत्वा सुन्दरं यावकं ददौ ॥ ९७
भूषणैर्भूषितां कृत्वा सम्प्रलिप्यानुलेपनैः ।
दत्त्वा च मालतीमालां चुचुम्ब च पुनः पुनः ॥ ९८
चारुलोचनपद्मे च चकाराञ्जनसंयुते ।
प्रददौ नासिकामध्ये दुर्लभं गजमौक्तिकम् ॥ ९९
श्रोणिदेशे च कुचयोर्नखच्छिद्रं चकार ह ।
चकार दंशनं दन्तैः पक्वविम्बाधरं वरम् ॥ १००
सरस्तटे तटे रम्ये पुष्पोद्याने सुनिर्ज्जने ।
कृत्वा क्रीडां पुनरपि जगाम रासमण्डलम् ॥ १०१
रासेश्वरः पूर्णरासं चकार रासमण्डले ।
वह्निचन्द्रोदये रम्ये पुष्पचन्दनचर्च्चिते ॥ १०२
सपुष्पचन्दनार्त्तेन वायुना सुरभीकृते ।
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरवश्रुते ॥ १०३
वहुमूर्त्तिं संविधाय योगिनां परमो गुरुः ।
पुनश्चकार शृङ्गारं गोपीनां चित्तहारकः ॥ १०४
किङ्किणीनां कङ्कणानां नूपुराणाञ्च नारद ।
शृङ्गारोद्रेकतस्तत्र वभूव सुन्दरो रवः ॥ १०५
मूर्च्छामवापुस्ताः सर्व्वा नवसङ्गमवाञ्छया ।
वभूवुरचलास्याङ्गाः पुलकाञ्चितविग्रहाः ॥ १०६
शृङ्गारे विरते भूते सम्प्रापुश्चेतनां पुनः ।
नखदन्तप्रहारञ्च प्रचकार परस्परम् ॥ १०७
कृष्णः कररुहाघातं ददौ तासां कुचोपरि ।
श्रोणिदेशे सुकठिने नखचिह्नं चकार ह ॥ १०८
नीवी विश्रंसिता तासां कवरीक्षुद्रघण्टिका ।
दूरीभूतं सुवलयं सुवेशं सुमनोहरम् ॥ १०९
आलिङ्गनं नवविधं चुम्बनाष्टविधं मुदा ।
शृङ्गारं षोडशविधं चकार रसिकेश्वरः ॥ ११०
अङ्गैरङ्गानि प्रत्यङ्गैः प्रत्यङ्गानि च योषिताम् ।
चकारालिङ्गनं प्रीत्या कामुकीनाञ्च कामुकः ॥ १११
नारीणां षोडश कलाः शृङ्गारस्तत्प्रमाणकः ।
कलाभेदेन तद्भेदं कामशास्त्रविदो विदुः ॥ ११२
प्रकृतं द्वादशविधं विपरीतं चतुर्व्विधम् ।
निरूपितं कामशास्त्रे चकारेशस्ततोऽधिकम् ॥ ११३
क्रीडारम्भे च मध्ये च विरतौ कर्म्म योषिताम् ।
प्रीत्यर्थमिति कर्त्तव्यं चकारेशस्ततोऽधिकम् ॥ ११४
गोपीकङ्कणरेखाभिः पादालक्तकचिह्नितः ।
शुशुभे कृष्णदेहश्च यथाद्रिर्गैरिकेण च ॥ ११५
एवम्भूते पूर्णरासे सम्भूते रासमण्डले ।
समाजग्मुः सुराः सर्व्वे सकलत्राश्च सानुगाः ॥ ११६
सुवर्णस्यन्दनस्थाश्च कौतुकाद्गगनावृताः ।
पुलकाञ्चितसर्व्वाङ्गाः कामवाणप्रपीडिताः ॥ ११७
ऋषयो मुनयश्चैव सिद्धाश्च पितरस्तथा ।

विद्याधराश्च गन्धर्व्व-यक्ष-राक्षस-किन्नराः ॥ ११८
सस्त्रीकाश्च समाजग्मुर्ददृशुश्च मुदान्विताः।
दिव्यं स्यन्दनमारुह्य शातकुम्भविनिर्म्मितम् ॥ ११९
सुशोभितञ्च मणिना रत्नसारपरिच्छदम्।
वह्निशुद्धांशुकेनैव वेष्टितं सुमनोहरम् ॥ १२०
श्वेतचामरसंयुक्तं सद्रत्नदर्पणान्वितम्।
शतचक्रं चित्रयुक्तं मनोयायि मनोहरम् ॥ १२१
सद्रत्नसारनिर्म्माण-कलसोज्ज्वलशेखरम्।
समाजगाम भगवान् पार्व्वत्या सह शङ्करः ॥ १२२
वामपार्श्वे महाकाली दक्षिणे नन्दिकेश्वरः।
पुरतः कार्त्तिकेयश्च स्वयं देवो गणेश्वरः ॥ १२३
पिङ्गलाक्षादयः सर्व्वे पार्षदाः परितस्तयोः।
क्षेत्रपालेश्वराः सर्व्वे तथाष्टौ भैरवेश्वराः ॥ १२४
वक्षःस्थलस्थिता दुर्गा सस्मिता वक्रलोचना। १२५
भारत्या सह ब्रह्मा च शातकुम्भरथस्थितः।
वामे सप्तर्षयस्तत्र दक्षिणे सनकादयः ॥ १२६
सुवर्णस्यन्दनस्थश्च धर्म्मः साक्षी च कर्म्मणाम्।
वक्षःस्थलस्थिता तस्य मूर्त्तिः स्मेराननना सती ॥ १२७
पश्यन्ती भूणरासञ्च सकामा वक्रलोचना।
परितः पार्षदाः सर्व्वे ज्वलन्तो ब्रह्मतेजसा ॥ १२८
शच्या सह महेन्द्रश्च रोहिण्याश्च कलानिधिः।
स्वाहासार्द्धं स्वयं वह्निः सूर्य्यश्च संज्ञया सह ॥१२९
समाजगाम कामश्च रतिं कृत्वा स्ववक्षसि।
सर्व्वे ग्रहाश्च दिक्पाला आजग्मुः सकलत्रकाः ॥१३०
आकाशस्थाश्च ददृशुः सरसं रासमण्डलम्।
केचिच्च मुमुहुस्तत्र मूर्च्छामापुश्च केचन ॥ १३१
मुहूर्त्तेच्च सुराः सर्व्वे सस्मिताश्च मुदान्विताः।
चन्दनद्रववृष्टिञ्च पुष्पवृष्टिञ्च चिक्षिपुः ॥ १३२
कस्तूरीयुक्तमाल्यानां वृष्टिं चक्रुर्मुनीश्वराः।
रासं दृष्ट्वा देवपत्न्यः कामबाणप्रपीड़िताः ॥ १३३
स्थले रतिरसं कृत्वा जगाम यमुनाजलम्।
राधया सह कृष्णश्च पूर्णब्रह्मसनातनः ॥ १३४
गोपीभिः सह जग्मुश्च मायाः श्रीकृष्णाद्धर्षिकाः।
प्रपीड़िताः कामबाणैः क्रीड़ां चक्रुर्जले मुदा ॥१३५
जलं ददौ राधिकायै सकामो माधवः स्वयम्।
ददौ सा च माधवाय कामार्त्तायाञ्जलित्रयम् ॥१३६
वस्त्रं जग्राह तस्याश्च सा च नग्ना बभूव ह।
मालां चिच्छेद कबरीं चकार शिथिलां हरिः ॥१३७
सिन्दूरपत्रकं लुप्तं वेशञ्च जलताड़नैः।
सुविचित्रमोष्ठरागं लुप्तं लोचनकज्जलम् ॥ १३८
ताञ्च नग्नां समाश्लिष्य निममज्ज जले हरिः।
प्रकृत्याभ्यन्तरे क्रीड़ामुत्तस्थौ च तया सह ॥ १३९
तां नग्नां दर्शयित्वा तु गोपिकां व्रीड़या नताम्।
सस्मितां प्रेरयामास दूरतो यमुनाजले ॥ १४०
सा वेगेन समुत्थाय बलाज्जग्राह माधवम्।
गृहीत्वा मुरलीं कोपात् प्रेरयामास दूरतः ॥ १४१
गृहीत्वा पीतवसनं चकार तं दिगम्बरम्।
वनमालाञ्च चिच्छेद ददौ तोयं पुनः पुनः ॥ १४२
हरिं पुनः समाकृष्य प्रेरयामास पाथसि।
गम्भीरे स्रोतसि जले निममज्ज जगत्पतिः ॥ १४३
उत्थाय माधवः शीघ्रं तां गृहीत्वा प्रहस्य च।
कृत्वा वक्षसि नग्नाञ्च चुचुम्ब च पुनः पुनः ॥ १४४
एवञ्च मूर्त्तयः सर्व्वा गोपीभिः सह कौतुकात्।
क्रीड़ां विचक्रुर्यमुना-तीरनीरे मनोहरे ॥ १४५
तीरं गत्वा तया सार्द्धं हरिर्नग्नश्च नग्नया।
सा तं ययाचे वसनं स तु तां सस्मितां सतीम् ॥१४६
राधिकायै ददौ वस्त्रं रम्यां मालाञ्च माधवः।
प्रददौ हरये वस्त्रं वंशीं रासेश्वरी मुदा ॥ १४७
चन्दनागुरु-कस्तूरीं सर्व्वाङ्गे कुसुमान्विताम्।
कृष्णस्य परया भक्त्या ददौ श्रोणिस्थितस्य च ॥१४८
निर्म्माय चूड़ां ललितां कामिनीचित्तमोहिनीम्।
शोभनैर्मालतीमाल्यैश्चकार वेष्टितं पुनः ॥ १४९
श्रीकृष्णो राधिकायाश्च कबरीं सुमनोहराम्।
कृत्वा कुन्तलसंस्कारं निर्ममे पत्रिकावलीम् ॥ १५०
ददौ ललाटे सिन्दूरं कस्तूरीबिन्दुभिः सह।
तदधश्चन्दनेन्दुञ्च सुसूक्ष्मं सुमनोहरम् ॥१५१
नखाङ्कं स्तनयोरूर्व्वोरुरस्येव घनं मुदा।
दत्त्वा तां वासयामास वह्निशुद्धांशुकेन वै ॥१५२
चन्दनागुरुकस्तूरी-कुङ्कुमाणां द्रवेण सः।
कृत्वा वक्षसि संलिप्य चुचुम्ब च मुहुर्मुहुः ॥ १५३
पुनराश्लेषणं कृत्वा ददौ मालां गले विभुः।
भूषणैर्भूषितां कृत्वा मञ्जीरभूषणं ददौ ॥ १५४
अलक्तकं चरणयोः श्रीहरिश्च ददौ पुनः।
एवं गोपाश्च गोपीनां विदधुश्च पृथक् पृथक् ॥ १५५

पुनः प्रजग्मुस्ता मत्ताः सुन्दरं रासमण्डलम्।
पूर्णेन्दुचन्द्रिकायुक्तं रतियोग्यं सुनिर्ज्जनम्॥ १५६
माधवी-केतकी-कुन्द-मालतीनां मनोहरैः।
चम्प-यूथी-मल्लिकानां पुष्पैश्च सुरभीकृतम्॥ १५७
दृष्ट्वा च स्फुटितं पुष्पं चयनं कर्त्तुमीश्वरी।
गोपीर्नियोजयामास कौतुकेन च राधिका॥ १५८
काश्चिन्नियोजयामास मालानिर्म्माणकर्म्मणि।
काश्चित् ताम्बूलसज्जेषु काश्चिच्चन्दनघर्षणे॥ १५९
माला-चन्दन-ताम्बूलं गोपीदत्तञ्च सुन्दरी।
ददौ कृष्णाय सम्प्रीत्या सस्मिता वक्रलोचना॥ १६०
काश्चिन्नियोजनं चक्रे कृष्णसङ्गीतकर्म्मणि।
मृदङ्गमुरजादीनां वादनेषु च काश्चन॥ १६१
एवं रासे रतिं कृत्वा लीलया हरिणा सह।
विजहार च सर्व्वत्र निर्ज्जने सुमनोहरे॥ १६२
पुष्पोद्यानेषु रम्येषु सरसाञ्च तटेषु च।
कन्दरे कन्दरे रम्ये नदेषु च नदीषु च॥ १६३
अतीव निर्ज्जने स्थाने श्मशाने गिरिगह्वरे।
वाञ्छितेषु च नारीणां त्रयस्त्रिंशद्वनेषु च॥ १६४
भाण्डीरे श्रीवने रम्ये कदम्बकानने तथा।
तुलसीकानने कुन्द-वने चम्पककानने॥ १६५
निम्बारण्ये मधुवने जम्बीरकानने तथा।
नारिकेलवने पूग-वने च कदलीदले (क)॥ १६६
बदरीकानने वंश-वने दाड़िम्बकानने।
अश्वत्थकानने विल्व-वने नारङ्गकानने॥ १६७
मन्दारकानने ताल-वने चूतवने तथा।
केतकीकाननेऽशोक-वने खर्ज्जूरकानने॥ १६८
आम्रातकवने जम्बू-गहने शालकानने।
कण्टकीकानने पद्म-वने जातीवने मुने॥ १६९
न्यग्रोधगहने घोरे श्रीखण्डकानने तथा।
प्रकृष्टकेशरवने पर्व्वतेऽपि विलक्षणे॥ १७०
एवं रेमे कौतुकेन कामात् त्रिंशद्दिवानिशम्।
तथापि मानसं पूर्णं न च किञ्चिद्बभूव ह॥ १७१
कामिनीनां न कामश्च शृङ्गारेण निवर्त्तते।
अधिकं वर्द्धते शश्वद्यथाग्निर्घृतधारया॥ १७२
जग्मुर्देवाः स्वगृहञ्च देव्यश्च मुनयस्तथा।
ते सर्व्वे प्रशशंसुश्च विस्मयञ्च ययुर्मुदा॥ १७३
गेहे गेहे नृपेन्द्राणां लेभिरे जन्म भारते।
दग्धाः कामाग्निनांशेन देव्यः शृङ्गारलालसाः॥ १७४

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे रासक्रीड़ाष्टविंशोऽध्यायः॥ २८॥

---

## एकोनत्रिंशोऽध्यायः।

नारायण उवाच।

अथ गोपाङ्गनाः सर्व्वाः काममत्ततया मुने।
अतिप्रौढ़ाश्च मानिन्यो नेश्वरं मेनिरे पतिम्॥
काश्चिदूचुरहो कृष्ण सस्मिता वक्रलोचनाः।
मालतीपुष्पमुत्तोल्य देहि नो माल्लिकामिति॥ २
काश्चिदूचुरये कृष्ण स्वक्रोड़ेऽस्मांश्च कुर्व्विति।
गृहीत्वा श्रीहरेः स्कन्धमारुरोह च काचन॥ ३
उवाच काचिद्दर्पेण प्रमत्ता प्राणवल्लभम्।
स्वकीयपीतवसनं परिधापय मामिति॥ ४
उवाच काचिदीशं तं सिन्दूरं देहि मामिति।
उवाच काचित् प्राणेशं शीघ्रमागत्य साम्प्रतम्।
कृत्वा कुन्तलसंस्कारं कुरु मे कवरीमिति॥ ५
काश्चित् तं प्रेरयामासुः श्रीखण्डपल्लवाय च।
स्वाङ्गवेशविधायिन्यो भूषार्थं श्रुतिमूलयोः॥ ६
उवाच काचित् कामेन परं सङ्केतपूर्व्वकम्।
पश्यन्ती तन्मुखाम्भोजं सस्मिता मैथुनाय च॥ ७
काचिज्जग्राह मुरलीं बलादाकृष्य माधवम्।
जहास पीतवसनं हृत्वा नग्नं चकार तम्॥ ८
कामिन्यः काश्चिदित्यूचुर्मानिन्यो मधुसूदनम्।
अलक्तकद्रवं देहि पादयोर्नखरेषु मे॥ ९
उवाच काचित् प्रेम्णा तं गण्डयोः स्तनयोर्मम।
नानाचित्रविचित्राढ्यां कुरु पत्रावलीमिति॥ १०
कृत्वानुमानं मनसा दृष्ट्वा तासां प्रमत्तताम्।
माधवो राधया सार्द्धमन्तर्द्धानं चकार ह॥ ११
अतीव निर्ज्जने स्थाने मुदा स्वेच्छामयो विभुः।
कलामानप्रकारञ्च शृङ्गारञ्च चकार ह॥ १२
पर्व्वते पर्व्वते रम्ये द्वीपे द्वीपे सुनिर्ज्जने।
तटे तटे नदीनाञ्च सर्व्वजन्तुविवर्ज्जिते॥ १३
श्रीगोष्ठे रत्नशैले च चेलगङ्गातटेऽपि च।

(क) दलशब्दोऽत्र खण्डवाची।

कलिन्दे च पुलिन्दे च मन्दिरे गन्धमादने ॥ १४
मनोहरे कुन्दवने कावेरीतीरनीरजे।
पुष्पभद्रापुलिनजे पुष्पोद्याने सुपुष्पिते ॥ १५
सर्व्वत्र रमणं कृत्वा राधावेशं विधाय च।
जगाम मलयद्रोणीं रम्यां चन्दनवायुना ॥ १६
शय्यां पुष्पमयीं कृत्वा तत्र रेमे तया सह ॥ १७
अतीवसुखसम्भोगान्मूर्च्छां सम्प्राप राधिका।
कृत्वा वक्षसि गोविन्दं पुलकाञ्चितविग्रहा ॥ १८
दृष्ट्वा तां मूर्च्छितां कृष्णो नतश्रोणिपयोधराम्।
विलुप्तवेशां कामार्त्तां नग्नां विश्लथकुन्तलाम् ॥ १९
चेतनां कारयामास कृत्वा वक्षसि तन्द्रिताम्।
वासयामास वसनं राधाया मेखलां वराम् ॥ २०
कवरीं रचयामास किञ्चिद्वामेन वङ्किमाम्।
मालतीमाल्यसंयुक्तां कुन्दपुष्पैश्च वेष्टिताम् ॥ २१
तस्याः कपाले सिन्दूरं तिलकं सुन्दरं ददौ।
गण्डयोः स्तनयोश्चित्रां चकार पत्रिकां मुदा ॥ २२
आलक्तकांश्च नखरान् विचित्रान् पादपद्मयोः।
नखैः कृत्रिमपद्मानि निर्म्ममे श्रोणि-वक्षसोः ॥ २३
उत्थायाथ तया सार्द्धं जगाम ह सरोवरम्।
नानाप्रकारपद्मानां राजिभिश्च विराजितम् ॥ २४
निर्म्मलस्फाटिकाकार-जलपूर्णं मनोहरम्।
हंस-कारण्डवाकीर्णं जलकुक्कुटकूजितम् ॥ २५
मधुलुब्धभ्रमराणां पद्मस्थानाच्च पार्श्वजः।
चारुणा कलशब्देन शब्दितं शश्वदेव हि ॥ २६
तत्र स्नात्वा जलक्रीड़ां चकार ह तया सह।
जलं ददौ राधिकायै मुदा सा माधवाय च ॥ २७
सहस्रदलपद्मं च गृहीत्वा माधवः स्वयम्।
एकं ददौ राधिकायै ररक्ष स्वार्थमेककम् ॥ २८
चन्दनागुरु-कस्तूरी-कुङ्कुमद्रवमीप्सितम्।
स्वाङ्गे दत्त्वा राधिकाङ्गे लिलेप रसिकेश्वरः ॥ २९
ततो गत्वा तया सार्द्धं ददर्श पुरतो वटम्।
अतीवोत्तुङ्गशाखाग्रमतिविस्तृतमेव च।
मूले योजनपर्य्यन्तं छायया परिवेष्टितम् ॥ ३०
उवास तत्र गोविन्दः केतकीवनसन्निधौ।
पुष्पान्तेन सुशीतेन वायुना सुरभीकृते ॥ ३१
चित्रं रहस्यरुचिरं प्रवीणानां पुरातनम्।
प्रहर्षितश्च श्रीकृष्णः कथयामास राधिकाम् ॥ ३२
एतस्मिन्नन्तरे तत्र ददर्श मुनिपुङ्गवम्।
आगच्छन्तञ्च तं दृष्ट्वा प्रसन्नवदनेक्षणम् ॥ ३३
न दृष्ट्वा हृदये रूपमीशस्य परमात्मनः।
ध्यानाद्विरतमग्रे च पश्यन्तं बहिरेव तत् ॥ ३४
सर्व्वावयववक्राच्च कृष्णं खर्व्वं दिगम्बरम्।
नामाष्टवक्रं जटिलं ज्वलन्तं ब्रह्मतेजसा ॥ ३५
सुखतोऽग्निसुद्गिरन्तं तपोराशिमिवोत्थितम्।
अहो किं वा ब्रह्मतेजो मूर्त्तिमन्तमिव स्वयम् ॥ ३६
नखश्मश्रुलोमदीर्घं शान्तं तेजस्विनं परम्।
पुटाञ्जलियुतं भक्त्या भीतं प्रणतकन्धरम् ॥ ३७
दृष्ट्वा हसन्तीं राधां तां वारयामास माधवः।
प्रभावं कथयामास मुनीन्द्रस्य महात्मनः ॥ ३८
अथ प्रणम्य गोविन्दं तुष्टाव मुनिपुङ्गवः।
षट्स्तोत्रञ्च पुरा दत्तं शङ्करेण महात्मना ॥ ३९

अष्टावक्र उवाच।

गुणातीत गुणाधार गुणवीज गुणात्मक।
गुणेश गुणिनां वीज गुणाद्याय नमो नमः ॥ ४०
सिद्धस्वरूप सिद्धांश सिद्धिवीज परात्पर।
सिद्ध सिद्धगणाधीश सिद्धानां गुरवे नमः ॥ ४१
हे वेदवीज वेदज्ञ वेद वेदविदां वर।
वेदज्ञातोऽसि रूपेण वेदज्ञेश नमोऽस्तु ते ॥ ४२
प्रकृते प्राकृत प्राज्ञ प्रकृतीश परात्पर।
संसारवृक्ष तद्वीज-फलरूप नमोऽस्तु ते ॥ ४३
सृष्टिस्थित्यन्तवीजेश सृष्टिस्थित्यन्तकारण।
महाविराट्तरोर्वीज राधिकेश नमोऽस्तु ते ॥ ४४
अहो यस्य त्रयः स्कन्धा ब्रह्म-विष्णु-महेश्वराः।
शाखाप्रशाखा देवाश्च तपांसि कुसुमानि च ॥ ४५
संसारविफलस्यास्य प्रकृत्यङ्कुरमेव च।
तदाधार निराधार सर्व्वाधार नमोऽस्तु ते ॥ ४६
तेजोरूप निराकार प्रकृत्यानूह-नित्य च।
सर्व्वाकारातिप्रत्यक्ष स्वेच्छामय नमोऽस्तु ते ॥ ४७
इत्युक्त्वा स मुनिश्रेष्ठो निपत्य चरणाम्बुजे।
प्राणांस्तत्याज योगेन तयोः प्रत्यक्ष एव च ॥ ४८
पपात तत्र तद्देहः पादपद्मसमीपतः।
तत्तेजश्च समुत्तस्थौ ज्वलदग्निशिखोपमम् ॥ ४९
सप्ततालप्रमाणं तदुत्थाय च निपत्य च।
भ्रामं भ्रामञ्च परितो लीनं कृष्णपदाम्बुजे ॥ ५०

अष्टावक्रकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ।
परं निर्व्वाणमोक्षञ्च स प्राप्नोति न संशयः ॥ ५१
प्राणाधिको सुसूक्ष्माणां स्तोत्रराजः स्वयं मुने ।
हरिणाऽहो पुरा दत्तो वैकुण्ठे शङ्कराय च ॥ ५२
इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे मुनिमोक्षणप्रस्तावो नामैकोनत्रिंशोऽध्यायः ॥२९॥

## त्रिंशोऽध्यायः ।

नारद उवाच ।

महामुने रहस्यञ्च श्रुतं ब्रह्मन् किमद्भुतम् ।
मृते मुनौ किं चकार श्रीकृष्णो भक्तवत्सलः ॥ १

नारायण उवाच ।

दृष्ट्वा मृतं मुनिं कृष्णः संस्कारं कर्त्तुमुद्यतः ।
कृत्वा वेवेषि तद्देहं ररोदोच्चैर्यथा नरः ॥ २
बाहुभ्याञ्च समाश्लिष्य निश्चेष्टोद्रिक्तमोहतः ।
निर्गतो भस्मनिकरः प्रवाहश्चाङ्गघर्षणात् ॥ ३
रक्तमांसास्थिहीनं तच्छरीरञ्च महात्मनः ।
षष्टिं वर्षसहस्राणि निराहारं कृतो मुनिः ॥४
दग्धं लोहितमांसास्थि ज्वलता जठराग्निना ।
बाह्यज्ञानविहीनस्य हरिपादाब्जचेतसः ॥ ५
चितां चन्दनकाष्ठेन निर्म्माय मधुसूदनः ।
कृत्वाग्निकार्य्यं तत्रैव स्थापयामास शोकतः ॥ ६
ददौ चितायामग्निञ्च काष्ठं दत्वा शवोपरि ।
ज्वलितायां चितायाञ्च मूर्च्छामाप चणं विभुः ॥७
तद्देहे भस्मसाद्भूते नेदुर्दुन्दुभयो दिवि ।
बभूव पुष्पवृष्टिश्च तत्क्षणं गगनाद्धरौ ॥ ८
एतस्मिन्नन्तरे तत्र रत्नसारविनिर्म्मितम् ।
स्यन्दनञ्च मनोयायि वस्त्रमाल्यपरिच्छदम् ॥ ९
पार्षदप्रवरैर्युक्तं श्रीकृष्णसदृशैर्वरैः ।
आविर्ब्बभूव गोलोकात् सुन्दरं पुरतो हरेः ॥ १०
अवरुह्य रथात् तूर्णं पार्षदप्रवरा हरेः ।
सर्व्वे समानरूपास्ते प्रणम्य राधिकेश्वरौ ॥ ११
स्तुतवन्तं सूक्ष्मदेहं प्रणम्य मुनीश्वरम् ।
रथे कृत्वा तु तं कृष्णं जग्मुर्गोलोकमुत्तमम् ॥ १२
गते मुनीन्द्रे गोलोकं वृन्दावनविनोदिनी ।
बभूव विस्मिता साध्वी पप्रच्छ जगदीश्वरम् ॥ १३

राधिकोवाच ।

कोऽयं नाथ मुनिश्रेष्ठः सर्व्वावयववक्रिमः ।
अतिखर्व्वोऽञ्जनाकारस्तजीयानतिकुत्सितः ॥ १४
कथं वा निर्गतं भस्म देहादस्य किमद्भुतम् ।
साक्षाद्विहीनं यत्तेजस्तयाद्राक्षोऽनलोपमम् ॥ १५
रथस्थः पुण्यवान् सद्यो गोलोकञ्च जगाम ह ।
त्वत्मारामस्य यद्देतो रोदनं ते बभूव ह ॥ १६
त्वया कृतञ्च सत्कारमश्रुपूर्णेन चक्षुषा ।
सर्व्वं विवरणं तूर्णं संव्यस्य कथय प्रभो ॥ १७
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः ।
कथां कथितुमारेभे युगान्तरगतामपि ॥ १८

श्रीकृष्ण उवाच ।

रहस्यमष्टावक्रीयं विख्यातं सर्व्वतः प्रिये ।
पश्चाच्छ्रोष्यसि कालेन प्रसङ्गे विदुषां मुखात् ॥ १९
अष्टावक्रो मुनीन्द्रश्च विख्यातो भुवनत्रये ।
परिपूर्णं यद्यशसा जगन्मातर्जगत्त्रयम् ॥ २०
कृष्णस्य वचनं श्रुत्वा विमनस्का हरिप्रिया ।
उवाच मधुरं यत्नाच्छुष्ककण्ठौष्ठतालुका ॥ २१

राधिकोवाच ।

पीयूषैर्यन्मनः पूर्णं न बभूव सुधाम्बुधौ ।
स विद्वन्तो भवति किं गोष्पदोदकपानतः ॥ २२
वेदानां वेदवक्तॄणां विधातुर्जनकस्य च ।
महाविष्णोरीश्वरस्त्वं कोऽन्यो वक्तास्ति तत्परः ॥२३
राधिकावचनं श्रुत्वा तुष्टः कृष्णो बभूव ह ।
उवाच गोपनीयञ्च रहस्यं परमाद्भुतम् ॥ २४

श्रीकृष्ण उवाच ।

शृणु कान्ते प्रवक्ष्येऽहमितिहासं पुरातनम् ।
श्रवणात् कथनाद्यस्य सर्व्वपापं प्रणश्यति ॥ २५
महाविष्णोर्नाभिपद्माद्बभूव जगतां विधिः ।
समांशस्य मत्कलया जलाकीर्णे जगत्त्रये ॥ २६
पुत्रा बभूवुश्चत्वारो ब्रह्मणो मानसात् पुरा ।
नारायणपराः सर्व्वे ज्वलन्तो ब्रह्मतेजसा ॥ २७
शिशवः पञ्चवर्षीया नग्ना अग्निनिनो यथा ।
बाह्यज्ञानविहीनाश्च ब्रह्मतत्त्वविशारदाः ॥ २८
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
सनत्कुमारो भगवान् जाताश्चत्वार एव च ॥ २९
तानुवाच जगद्धाता सृष्टिं कुरुत पुत्रकाः ।

ते न तस्थुः पितुर्वाक्ये प्रययुस्तपसे मम ॥ ३०
विधाता विमनस्कश्च तनयेषु गतेषु च।
पितुर्दुःखाय प्रभवेत् पुत्रश्चेदवचस्करः ॥ ३१
ज्ञानेन निर्ममे पुत्रान् स्वाङ्गेषु च तपोधनान्।
वेदवेदाङ्गविज्ञांश्च ज्वलतो ब्रह्मतेजसा ॥ ३२
अत्रिः पुलस्त्यः पुलहो मरीचिश्च भृगुरङ्गिराः।
क्रतुर्वशिष्ठो वोढुश्च कपिलश्चासुरिः कविः ॥ ३३
शङ्कुः शङ्कः पञ्चशिखः प्रचेतास्ते तपस्विनः।
बहुकालं तपस्तप्त्वा चक्रुः सृष्टिं तदाज्ञया ॥ ३४
कलवन्तस्ते सर्व्वे संसारं कर्त्तुमुन्मुखाः।
बभूवुः पुत्रपौत्राश्च सर्व्वेषाञ्च तपस्विनाम् ॥ ३५
तदस्तु च कथा वैधी मुनिवंशानुकीर्त्तनी।
मार्व्वी पुण्यस्वरूपा च प्रकृतं शृणु सुन्दरि ॥ ३६
प्रचेतसः सुतः श्रीमानसितो मुनिपुङ्गवः।
सकलत्रस्तपस्तेपे दिव्यं वर्षसहस्रकम् ॥ ३७
न बभूव सुतस्तस्य प्राणांस्त्यक्तुं स उद्यतः।
तं सम्बोध्य बभूवाथ सत्यवागशरीरिणी ॥ ३८
सिद्धं कुरु गृहीत्वा च मन्त्रं शङ्करवक्त्रतः।
मन्त्राधिष्ठातृदेवी ते सद्यः साक्षाद्भविष्यति।
वरेणाभीष्टदेव्याश्च पुत्रस्ते भविता ध्रुवम् ॥ ३९
इत्येतत् त्वरितं विप्रो जगाम हरसन्निधिम्।
योगिनामप्यगम्यञ्च शिवलोकं निरामयम् ॥ ४०
सकलत्रो यथा योगी तुष्टाव योगिनां गुरुम्।
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ ४१

असित उवाच।

जगद्गुरो नमस्तुभ्यं शिवाय शिवदाय च।
योगीन्द्राणाञ्च योगीन्द्र गुरूणां गुरवे नमः ॥ ४२
मृत्योर्मृत्युस्वरूपेण मृत्युखण्डनकारण।
मृत्योरीश मृत्युबीज मृत्युञ्जय नमोऽस्तु ते ॥ ४३
कालरूपः कलयतां कालेशः कालकारणम्।
कालादतीत कालस्थ कालकाल नमोऽस्तु ते ॥ ४४
गुणातीत गुणाधार गुणबीज गुणात्मक।
गुणीश गुणिनां बीज गुणिनां गुरवे नमः ॥ ४५
ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मभावनतत्पर।
ब्रह्मबीजस्वरूपेण ब्रह्मपुत्र नमोऽस्तु ते ॥ ४६
इति स्तुत्वा शिवं नत्वा पुरस्तस्थौ मुनीश्वरः।
दीनवत् साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ॥ ४७
असितेन कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत्।
वर्षमेकं हविष्याशी शङ्करस्य महात्मनः ॥ ४८
स लभेद्वैष्णवं पुत्रं ज्ञानिनं चिरजीविनम्।
भवेद्धनाढ्यो दुःखी च मूको भवति पण्डितः ॥ ४९
अभार्य्यो लभते भार्य्यां सुशीलाञ्च पतिव्रताम्।
इह लोके सुखं भुक्त्वा यात्यन्ते शिवमन्दिरम् ॥ ५०
इदं स्तोत्रं पुरा दत्तं ब्रह्मणा च प्रचेतसे।
प्रचेतसा स्वपुत्रायासिताय दत्तमद्भुतम् ॥ ५१

इति श्रीब्रह्मवैवर्त्ते शिवस्तोत्रं समाप्तम्।

श्रीकृष्ण उवाच।

समाकर्ण्य मुनिस्तोत्रं भगवान् शङ्करः स्वयम्।
उवाच ब्रह्मणः पौत्रं स्वभक्तं भक्तवत्सलः ॥ ५२

शङ्कर उवाच।

स्थिरो भव मुनिश्रेष्ठ जानामि तव वाञ्छितम्।
पुत्रस्ते भविता सत्यं मदंशेन च मत्समः ॥ ५३
दास्यामि मन्त्रं मत्तुल्यं सर्व्वेषाञ्च सुदुर्लभम्।
इत्युक्त्वा च ददौ मन्त्रं तत्रैव षोडशाक्षरम् ॥ ५४
स्तोत्रं पूजाविधानञ्च कवचं परमाद्भुतम्।
संसारविजयं नाम पुरश्चरणपूर्व्वकम्।
वरं दत्त्वा इष्टदेवी प्रत्यक्षा भवितेति च ॥ ५५
इत्युक्त्वा विरतो रुद्रः शतं नत्वा जगाम ह।
जजाप परमं मन्त्रं सोऽसितः शतवत्सरम् ॥ ५६
साक्षाद्भूत्वा वरस्तस्मै लया दत्तः पुरा सति।
पुत्रस्ते भविता सत्यं महाज्ञानी सुतेति च ॥ ५७
वरं दत्त्वा लमगमो गोलोकं मम सन्निधिम्।
कालेन च सुतस्तस्य शिवांशेन बभूव ह ॥ ५८
ब्रह्मिष्ठो देवलो नाम्ना कन्दर्पसमसुन्दरः ॥ ५९
सुयज्ञनृपतेः कन्यां रत्नमालावतीं मुदा।
तां सुन्दरीं समुद्वाहं चकार सर्व्वमोहिनीम् ॥ ६०
स्थाने स्थाने च रहसि शतवर्षं तया सह।
स रेमे निपुणश्रेष्ठः स्त्रीणां रमणकर्म्मणि ॥ ६१
कालान्तरे स विरतो बभूव मुनिपुङ्गवः।
सुखं सर्व्वं परित्यज्य धर्म्मिष्ठः श्रीहरिं स्मरन् ॥ ६२
रात्रौ स्त्रीशयनोत्थाय विरक्तश्च तपोधनः।
स ययौ तपसे कान्ते गन्धमादनगह्वरम् ॥ ६३
निद्रां विहाय तत्कान्ता न दृष्ट्वा स्वामिनं सती।
विललाप भृशं शोकात् प्रदग्धा विरहाग्निना ॥ ६४

उत्तिष्ठन्ती वसन्ती च रुदती चैव मुहुर्मुहुः।
तप्तपात्रे यथा धान्यं बभूव तन्मनस्तथा ॥ ६५
आहारञ्च परित्यज्य प्राणांस्तत्याज सुन्दरी।
चकार तत्सुतस्तस्याः कर्म्म निर्हरणादिकम् ॥ ६६
तपश्चकार स मुनिर्गन्धमादनगह्वरे।
दिव्यं वर्षसहस्रञ्च मम भक्तो जितेन्द्रियः ॥ ६७
तं ददर्श च दैवेन रम्भा शृङ्गारलोलुपा।
अतीवसुन्दरं शान्तं कन्दर्पमिव सुन्दरम् ॥ ६८
सा च तं कथयामास निर्ज्जने समुपस्थिता।
विधाय वेशं यत्नेन त्रैलोक्यचित्तमोहिनी ॥ ६९

रम्भोवाच।

निबोध साधो मद्वाक्यं कामिनीनां मनोहर।
त्यक्त्वा कठोरं रहसि भज मां सुखदायिकाम् ॥ ७०
त्वं ऋषिषु वरः पृथ्व्यां वरारोहास्वहं वरा।
विदग्धायां विदग्धस्य दुर्लभो नवसङ्गमः ॥ ७१
यत्नं कुर्व्वन्ति भूपाला भारते स्वर्गहेतुकम्।
स्वर्गभोगनिमित्तञ्च भोगसारा वयं मुने ॥ ७२
स्तनयोर्युगमूर्व्वोर्मे सुन्दरं मुखपङ्कजम्।
हास्यभ्रूभङ्गसहितं दृष्ट्वा को न भवेत् सुखी ॥ ७३
स्त्रीरसः सुखसारश्च मुनीनामभिवाञ्छितः।
रसिकासह सम्भोगो निर्ज्जने चातिदुर्लभः ॥ ७४
देवो वा मानुषो वापि गन्धर्व्वो वाथ राक्षसः।
स्त्रीसुखेष्वपि विज्ञेयो रम्भाया रतिवञ्चितः ॥ ७५
रहस्युपस्थितां कान्तां न भजेद्यो जितेन्द्रियः।
गात्रलोमप्रमाणाब्दं कुम्भीपाके वसेद्ध्रुवम् ॥ ७६
सत्यं तस्याश्च वधभाक् तस्याः शापे प्रणश्यति।
विधाता मोहिनीशापादपूज्यो भुवनत्रये ॥ ७७
येन त्यक्तोपस्थिता तं यथा पश्यति पुंश्चली।
स्वामिपुत्रस्वबन्धूनां न तथा घातकं रुषा ॥ ७८
परं प्रियञ्च सर्व्वेषां जारं जानाति पुंश्चली।
यदि तेन परित्यक्ता तं हन्तुं न च दक्षिणा ॥ ७९
पुंश्चली हिंस्रजन्तुभ्यो नरघातिभ्य एव च।
दुष्टा शश्वद्दयाहीना दुरन्ता प्रतिजन्मनि ॥ ८०
त्यज ध्यानं मुनिश्रेष्ठ भुङ्क्ष्वेदं तपसः फलम्।
रहस्युपस्थितां माञ्च गृहीत्वा सुचिरं सुखम् ॥ ८१
स रम्भावचनं श्रुत्वा तामुवाच भयाकुलः।
हितं तथ्यं नीतिसारं परिणामसुखावहम् ॥ ८२

देवल उवाच।

शृणु रम्भे प्रवक्ष्यामि वेदसारपरं वचः।
कुलधर्म्मोचितं सत्यं ब्राह्मणानां तपस्विनाम् ॥ ८३
धर्म्मोपयुक्तकाले च स्वयोषिति रतो द्विजः।
सर्व्वत्र पूजितः शश्वदिह लोके परत्र च ॥ ८४
ब्राह्मणः क्षत्रियो वैश्यो यो रतः परयोषिति।
याति तस्य पूजितस्य रुष्टा लक्ष्मीर्गृहादपि ॥ ८५
इहातिनिन्द्यः सर्व्वत्र नाधिकारी स्वकर्म्मसु।
परत्र चान्धकूपे च यावदब्दशतं वसेत् ॥ ८६
गृहीतोपस्थिता स्त्री च गृहिणा न तपस्विना।
त्यागे दोषः कामुकीनां शापभाक् पापभाग्गृही ॥ ८७
ब्रह्मा जगद्विधातापि न विरक्तः कलत्रवान्।
योगोदयस्तत् कदाचित् नास्माकं त्यक्तयोषिताम् ॥ ८८
स्वभार्य्याञ्च परित्यज्य यो गृह्णाति परस्त्रियम्।
यशोधनायुषां हानिर्भवेज्जीवन्मृतस्य च ॥ ८९
भुवि नास्ति यशो यस्य जीवनं तस्य निष्फलम्।
सुसम्पदा किं राज्येन सुखेन च धनेन च ॥ ९०
तपस्विनातिवृद्धेन मया ते किं प्रयोजनम्।
सुवेशं सुन्दरं मातर्युवानं पश्य सुन्दरि ॥ ९१
इत्येवं वचनं श्रुत्वा चुकोपाप्सरसां वरा।
उवाच भूयो वाक्यं तं त्रस्ता प्रस्फुरिताधरा ॥ ९२

रम्भोवाच।

चारुचम्पकवर्णाभः कन्दर्पसमसुन्दरः।
वपःप्रभावात् सश्रीकः सुवेशः सम्मतः स्त्रियाः ॥ ९३
त्वया विनान्यं कं यामि को वास्ति त्वत्परः पुमान्।
पुंश्चली त्वां परित्यज्य का जीवति स्मरातुरा ॥ ९४
शीघ्रं मां भज विप्रेन्द्र दग्धां कामाग्निना सदा।
कामो नश्यति मां त्वत्तो यथा रम्भां मतङ्गजः ॥ ९५
न चेच्छापं प्रदास्यामि वद वेदविदां वर।
मां वा दारुणशापं वा सत्वरं ग्रहणं कुरु ॥ ९६
दग्धाः प्राणा मनो दग्धमात्मा रोदिति सन्ततम्।
तव शृङ्गारपीयूष-पाननिर्व्वाणतां व्रजेत् ॥ ९७
अन्ते दुःखेन दुःखार्त्ता शैत्यं पश्यति निश्चितम्।
तं शापं खण्डितुं शक्तो न विधाता जगत्प्रभुः ॥ ९८
द्विजो रम्भावचः श्रुत्वा बभूव ध्यानतत्परः।
नोवाच किञ्चिद्योगस्थः सा तं कोपात् शशाप ह ॥ ९९
हे वज्रचित्त ते विप्र सर्व्वावयववक्रिमम्।

शरीरमञ्जनाकारं रूपयौवनवर्ज्जितम् ॥ १००
अतीवविकृताकारं त्रिषु लोकेषु गर्हितम्।
पुरातनं तपो नष्टं सद्यो भवति निश्चितम् ॥ १०१
इत्युक्त्वा पुंश्चली कामात् कामलोकं जगाम सा।
अचिरेण मुनीन्द्रश्च न ददर्श हरेः पदम् ॥ १०२
पदारविन्दविरहात् समुद्विग्नो बभूव ह।
स्वाङ्गे च दृष्ट्वा विकृतिं पूर्व्वपुण्यविवर्ज्जितम्।
कृत्वाग्निकुण्डं शोकेन प्राणांस्त्यक्तुं समुद्यतः ॥ १०३
मया दृष्टो वरो दत्तो दिव्यज्ञानेन बोधितः।
आश्वासश्च कृतः प्रीत्या ततः शान्तो बभूव ह ॥ १०४
अङ्गान्यष्टौ च वक्राणि दृष्ट्वा तूर्णं महामुनेः।
अष्टावक्रेति तन्नाम कौतुकेन मया कृतम् ॥ १०५
महाख्यान्मलयद्रोणीमिहागमत सत्वरम्।
षष्टिं वर्षसहस्राणि चकार परमं तपः ॥ १०६
तपोऽवसाने मद्भक्तो मया मुक्तः कृतः प्रिये।
सर्व्वस्मिन् प्रलये नष्टे न मद्भक्तः प्रणश्यति ॥ १०७
अचिरेणैव तपसा ज्वलता जठराग्निना।
त्यक्ताहारस्यान्तरञ्च भस्मपूर्णं ततो मुनेः ॥ १०८
आगता मलयद्रोणी मुनिहेतोर्मया प्रिये।
अष्टावक्राच्च मद्भक्तो न भूतो न भविष्यति ॥ १०९
एवम्भूतस्तपोनिष्ठः प्रपौत्रो ब्रह्मणो मुनिः।
निष्प्रभः पुंश्चलीशापाद्ब्रह्मपुत्रो यथा पुरा ॥ ११०
इत्येवं कथितं सर्व्वं रहस्यञ्च महात्मनः।
इदं पुण्यदं गूढं किं भूयः श्रोतुमिच्छसि ॥ १११

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे राधाप्रश्ने त्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशोऽध्यायः।

राधिकोवाच।

किमाश्चर्य्यं श्रुतं नाथ चरितं सुमनोहरम्।
अधुना श्रोतुमिच्छामि ब्रह्मणः शापकारणम् ॥ १
यो विधाता त्रिजगतां तपसां फलदायकः।
स कथं कुलटाशापादपूज्योऽयं बभूव ह ॥ २

श्रीकृष्ण उवाच।

मन्वन्तरे वैरते च सुचन्द्रो नृपपुङ्गवः।
तपस्वी वैष्णवश्रेष्ठो ज्ञानी परमधार्म्मिकः ॥ ३
स च पूर्व्वं तपः कर्त्तुमाजगाम मम प्रिये।
इमाञ्च मलयद्रोणीं भारतेषु मनोहराम् ॥ ४
तपश्चकार राजेन्द्रो वर्षाणाञ्च सहस्रकम्।
जीर्णं तस्य शरीरञ्च कठोरेण तपस्विनः ॥ ५
वल्मीकाच्छादितं दृष्ट्वा धाता कृपानिधिः।
आजगाम वरं दातुं तपःस्थानं सुनिर्ज्जनम् ॥ ६
कमण्डलुजलेनैव मम देहोद्भवेन च।
सिषेच तञ्च मन्त्रेण मया दत्तेन योगवित् ॥ ७
कमण्डलुजलस्पर्शादुत्थाय नृपतिः स्वयम्।
ननाम भक्त्या जगतां स्रष्टारं पुरतः स्थितः ॥ ८
स तं नमन्तं राजानमुवाच कमलोद्भवः।
वरं वृणिष्वेति राजेन्द्र यत् ते मनसि वाञ्छितम् ॥ ९
तस्य तद्वचनं श्रुत्वा वरं वव्रे परात्परम्।
ममैव चरणे भक्तिं मदीयं दास्यमीप्सितम् ॥ १०
कृपया च वरं ब्रह्मा दत्तवानभिवाञ्छितम्।
स च तत्पुरतस्तस्थौ कामदेवसमप्रभः ॥ ११
एतस्मिन्नन्तरे राजा ददर्श रथमुत्तमम्।
आकाशान्निपतन्तञ्च शतसूर्य्यसमप्रभम् ॥ १२
तेजसाच्छादितं सर्व्वं सुप्रदीप्तं दिशो दश।
रत्नेन्द्रसारनिर्म्माणं शतचक्रसमन्वितम् ॥ १३
अमूल्यरत्नरचित-विचित्रकलशोज्ज्वलम्।
मुक्तामाणिक्यहीराणां मालाराजिविराजितम् ॥ १४
सद्रत्नदर्पणैर्दीप्तैरतीव सुमनोहरम्।
भूषितं दिव्यवस्त्रैश्च श्वेतचामरकोटिभिः ॥ १५
पारिजातप्रसूनानां मालाजालैः सुशोभितम्।
मनोयायि-महाश्चर्य्यं नानाचित्रेण चित्रितम् ॥ १६
वेष्टितं पार्षदैर्दिव्यै रत्नभूषणभूषितैः।
चतुर्भुजैः श्यामलैश्च ज्वलद्भिः स्थिरयौवनैः।
पीतवस्त्रपरीधानैश्चन्दनागुरुचर्च्चितैः ॥ १७
दृष्ट्वा रथस्थान् देवांश्च ननाम नृपतिर्मुदा।
सहसा तस्य शिरसि पुष्पवृष्टिर्बभूव ह ॥ १८
नेदुर्दुन्दुभयः स्वर्गे चानकाश्च मनोहराः।
ऋषयो मुनयः सिद्धाः प्रकुर्व्वन्तो मुदाशिषम् ॥ १९
प्रशशंसुः सुराः सर्व्वे राजानं हर्षविह्वलाः।
राजा च पार्षदान् ध्यात्वा तद्रूपश्च बभूव ह ॥ २०
पार्षदास्तं रथे कृत्वा नीत्वा जग्मुर्ममालयम्।

मदीयपार्षदो भूत्वा स च तस्थौ ममान्तिके॥ २१
ततः स्वमन्दिरं यान्तं ददर्श मोहिनी विधिम्।
पुष्पोद्यानेऽतिरम्ये च पुष्पचन्दनभूषिते॥ २२
अधो मुमोह तं दृष्ट्वा प्रदग्धा मदनानलैः।
विलोक्य वक्रनयना जुगोप सस्मिता मुखम्॥ २३
सिन्दूरबिन्दुं दधती कस्तूरीबिन्दुना सह।
चारुचम्पकवर्णाभा सन्ततं स्थिरयौवना॥ २४
बृहन्नितम्बयुगला पीनश्रोणिपयोधरा।
शरत्पार्व्वणशुभ्रांशु-प्रभामुष्टकरानना॥ २५
सूक्ष्मवस्त्रपरीधाना रत्नालङ्कारभूषिता।
त्रैलोक्यं मोहितुं शक्ता कटाक्षैरवलीलया॥ २६
अतीवकामिनी शश्वद्गजेन्द्रमन्दगामिनी।
पुलकाञ्चितसर्व्वाङ्गी मूर्च्छां सम्प्राप वर्त्मनि॥ २७
संनीरिक्ष्य तु तां ब्रह्मा जगाम श्रीहरिं स्मरन्।
स विकारं न हि प्राप स्वात्मारामो जितेन्द्रियः॥२८
ब्रह्मलोकञ्च सम्प्राप ब्रह्मा च जगतां पतिः।
सकामा सा च कुलटा बभूव हतचेतना॥ २९
दिवानिशं चिन्तयन्ती स्वप्ने ध्याने चतुर्म्मुखम्।
सर्व्वं जारं विसस्मार तत्याजाहारमीश्वरि॥ ३०
उत्तिष्ठन्ती वसन्ती च शयनं कुर्व्वती क्षणम्।
तप्तपात्रे यथा मत्स्यं भ्रमत्येव तथा पथि॥ ३१
एतस्मिन्नन्तरे रम्भा विदग्धाप्सरसां परा।
गच्छन्ती कामलोकं सा सकामा तेन वर्त्मना॥ ३२
दृष्ट्वा सहचरीं सा तु शुष्ककण्ठौष्ठतालुकाम्।
अभिप्रायेण बुबुधे प्रपच्छ सस्मिता तदा॥ ३३

रम्भोवाच।

कथमेवंविधा त्वं हि त्रैलोक्यचित्तमोहिनी।
वद शीघ्रं महाभागे रम्भाहं चेतनं कुरु।
यमुद्दिश्य सकामा त्वं गच्छन्ती कान्तमीप्सितम्॥३४
कुलटा सर्व्वसौभाग्या न वयं कुलपालिकाः।
सर्व्वं व्यग्रा इन्द्रियाणां सुखाय भुवनत्रये॥ ३५
यान्ति प्राणा यतः कान्ते का लज्जा तत्र जीविनाम्
न चात्मनः परः कश्चित् प्रियोऽस्ति भुवनत्रये॥३६
कान्ते पत्यनुबन्धौ च स्नेहाय स्वात्महेतवे।
सम्बन्धः स्वात्मनो यावत्तावत् स्नेहोऽस्ति तत्र वै॥३७
येषु यन्मानसं शश्वत् तेषां प्राणास्त एव च।
गच्छन्तीं कामलोकञ्च सकामां पश्य मां प्रिये॥ ३८
सह सख्या समालोच्य मनसा गच्छ तं प्रियम्॥३९
निबध्य नीवीं केशांश्च कृत्वा वेशमभीप्सितम्।
मुनिमोहनवीजञ्च तं मोहं कुरु मोहिनि॥ ४०
कथयस्व महाभागे वचनं हृदयङ्गमम्।
रक्षात्मानं प्रभावञ्च स्त्रीजातीनां जगत्त्रये॥ ४१
स्वाभिप्रायश्च सुरतौ न प्रकाश्यः कदाचन।
स्वान्ते कान्तं स्वानुरक्तामन्वीं सहचरीं विना॥४२
तस्माद्यत्नेन हृद्वाक्यं प्रकाशय प्रिये प्रिये।
अन्यथा चोपहासाय मरणायैव कल्पते॥ ४३
तस्याश्च वचनं श्रुत्वा सस्मिता सा सलज्जिता।
हृदयञ्च कथयामास यद्देतोस्तादृशी गतिः॥ ४४

मोहिन्युवाच।

यावद्दृष्टो मया रम्भे निर्ज्जने चतुराननः।
तावन्मनो मेऽतिदग्धं शश्वन्मनसिजानलैः॥ ४५
न हृतमात्मने भक्ष्यमन्तरे न हि रोचते।
जानामि नाहमुदयं तं दिनेश-निशेशयोः॥ ४६
अधुना न हि भेदो मे सन्ततं स्वप्न-बोधयोः।
मम प्राणाः प्रतीक्षन्ते तस्यालिङ्गनमीप्सितम्।
क्षणं विज्ञाय न चिरं यास्यन्त्येवान्यथा प्रिये॥ ४७
कामज्वालाकलापैश्च स्वर्णाकारं कलेवरम्।
अनाहारेण वैशानीं बभूव दग्धशैलवत्॥ ४८
गन्तुं स्थातुं न शक्ताहं शयनं कर्त्तुमुद्यता।
धिगस्तु पुंश्चलीजातिं मामेव च विशेषतः॥ ४९
कमुपायं करिष्यामि वद रम्भे तु साम्प्रतम्।
लज्जां वापि शरीरं वा विसृजामि च किं द्वयोः॥५०
मोहिनीवचनं श्रुत्वा प्रहस्याप्सरसां वरा।
तामुवाच हितं दिव्यमुपायं शुभकारणम्॥ ५१

रम्भोवाच।

एवमेतद्गतो भद्रेऽभद्रस्य कारणं तव।
सर्व्वं त्वपनयिष्यामि शृणूपायं भयं त्यज॥ ५२
कृत्वा वेशमपूर्व्वञ्च पूर्व्वमाराध्य मन्मथम्।
तेन सार्द्धं स्वयं गत्वा तं मोहं कुरु मोहिनि॥ ५३
जितेन्द्रियाणां प्रवरं साक्षान्नारायणात्मकम्।
विना कामसहायेन का शक्ता जेतुमीश्वरम्॥ ५४
भज कामं तपः कृत्वा पुष्करं व्रज मोहिनि।
सद्यः साक्षात् स भविता दयालुर्योषितां प्रभुः॥ ५५
इत्युक्त्वा तामप्सरसां प्रवरा काममन्तिकम्।

जगामेन्द्रियशान्त्यर्थं सा जगाम च पुष्करम् ॥ ५६
पुष्करे च तपस्तप्त्वा कामं सम्प्राप्य मोहिनी ।
जगाम तेन सार्द्धञ्च ब्रह्मलोकमनामयम् ॥ ५७
ददृश निर्ज्जनस्थञ्च मोहिनी कमलोद्भवम् ।
तमेव मोहनं कर्त्तुं समारेभे पुरःस्थिता ॥ ५८
क्षणं ननर्त्त रुचिरं सुतालेन क्षणं जगौ ।
सङ्गीतं मम सम्बन्धि भक्तानां चित्तमोहनम् ॥ ५९
विधाता जगतां तस्याः श्रुत्वा सङ्गीतमीप्सितम् ।
पुलकाञ्चितसर्व्वाङ्गो मुमोह साश्रुलोचनः ॥ ६०
दृष्ट्वा मुग्धं चतुर्वक्त्रं मोहिनी हृष्टमानसा ।
कलाप्रमाणं भावञ्च चकार तत्र लीलया ॥ ६१
स्वाङ्गं सन्दर्शयामास स्मेरभ्रूभङ्गपूर्व्वकम् ।
का लज्जा तस्य संसारे यः कामहतचेतनः ॥ ६२
विज्ञाय ब्रह्मा तद्भावं नतवक्त्रो बभूव ह ।
प्रदाय तस्यै दानञ्च विरतः श्रीहरिं स्मरन् ॥ ६३
विज्ञाय ब्रह्मणो भावं शुष्ककण्ठौष्ठतालुका ।
हतोद्यमा सा तुष्टाव कामं कामप्रदं परम् ॥ ६४
मोहिन्युवाच ।
सर्व्वेन्द्रियाणां प्रवरं विष्णोरंशञ्च मानसम् ।
तदेव कर्म्मणां वीजं तदुद्भव नमोऽस्तु ते ॥ ६५
स्वयमात्मा हि भगवान् ज्ञानरूपो महेश्वरः ।
मनो ब्रह्मा जगत्स्रष्टा तदुद्भव नमोऽस्त ते ॥ ६६
स्थितः सर्व्वशरीरेष्वेवादृष्टो योगिनामपि ।
जगत्साध्य दुराराध्य दुर्निवार नमोऽस्तु ते ॥ ६७
सर्व्वाजित जगज्जेता जीववीज मनोहर ।
रतिवीज रतिस्वामिन् रतिप्रीत नमोऽस्तु ते ॥ ६८
शश्वद्योषिदधिष्ठान योषित्प्राणाधिकप्रिय ।
योषिद्वाहन योषास्त्र योषिद्बन्धो नमोऽस्तु ते ॥६९
पतिसाध्यकराशेषरूपाधार गुणाश्रय ।
सुगन्धवातसचिव मधुमित्र नमोऽस्तु ते ॥ ७०
शश्वद्यूनि कृताधार स्त्रीसन्दर्शनवर्द्धन ।
विदग्धानां विरहिणां प्राणान्तक नमोऽस्तु ते ॥७१
अकृपा ये च ते नाथ तेषां ज्ञानविनाशन ।
अनूहरूप भक्तेषु कृपासिन्धो नमोऽस्तु ते ॥ ७२
तपस्विनाञ्च तपसां विघ्नवीजावलीलया ।
मनः सकामं मुक्तानां कर्त्तुं शक्त नमोऽस्तु ते ॥ ७३
तव साध्याश्च बाध्याश्च सदैव पाञ्चभौतिकाः ।
पञ्चेन्द्रियकृताधार पञ्चवाण नमोऽस्तु ते ॥ ७४
मोहिनीत्येवमुक्त्वा तु मनसा सा विधेः पुरः ।
विररामानतवक्त्रा बभूव ध्यानतत्परा ॥ ७५
उक्तं माध्यन्दिने कान्ते स्तोत्रमेतन्मनोहरम् ।
पुरा दुर्व्वाससा दत्तं मोहिन्यै गन्धमादने ॥ ७६
स्तोत्रमेतन्महापुण्यं कामी भक्त्या यदा पठेत् ।
अभीष्टं लभते नूनं निष्कलङ्को भवेद्ध्रुवम् ॥ ७७
चेष्टां न कुरुते कामः कदाचिदपि तं प्रियम् ।
भवेदरोगी श्रीयुक्तः कामदेवसमप्रभः ।
विनीतां लभते साध्वीं पत्नीं त्रैलोक्यमोहिनीम्॥७८
इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे राधा-
प्रश्ने मोहिनीकृतस्तोत्रप्रसङ्गो
नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः ।

श्रीकृष्ण उवाच ।
मोहिनीस्तवनेनैव कामस्तुष्टो बभूव ह ।
चकार शरसन्धानमन्तरीक्षे स्थितः स्वयम् ॥ १
मन्त्रपूतं महास्त्रं चिक्षेप पितरं मुदा ।
बभूव चञ्चलो ब्रह्मा कामास्त्रेण सकामकः ॥ २
क्षणं निरीक्षणं चक्रे मोहिन्यास्यं पुनः पुनः ।
ज्ञानं प्राप्य तदा धाता विरराम हरिं स्मरन् ॥ ३
बुबुधे मनसा सर्व्वं चरित्रं मन्मथस्य च ।
शशाप तं सुतमपि विधाता क्रोधविह्वलः ॥ ४
हे काम यौवनोन्मत्त मूढैश्वर्य्येण गर्व्वितः ।
भविता दर्पभङ्गस्ते गुरोर्मोहेन नन्दित ॥ ५
हतोद्यमो जगामाशु मन्मथो मधुना सह ।
ब्रह्मणः शापभीतश्च शुष्ककण्ठौष्ठतालुकः ॥ ६
इत्युवाच जगद्धाता मोहिनीं मदनातुराम् ।
चतुर्व्वक्त्रञ्च पश्यन्तीं शश्वितां वक्रचक्षुषा ॥ ७
ब्रह्मोवाच ।
मातर्मोहिनि गच्छ त्वं निष्पन्नं कर्म्म-यत्र ते ।
ज्ञातस्तवाभिप्रायश्च नाहं योग्योऽस्य कर्म्मणः ॥ ८
वेदे जुगुप्सितं कर्म्म तदेव कर्त्तुमक्षमः ।
अकीर्त्तिर्व्वेदकर्त्तुश्च निन्द्यञ्च किमतः परम् ॥ ९
उपस्थिता च या योषित्त्याज्या योगिनामपि ।

यदुक्तं तन्न श्रद्धेयं सर्व्वदैव तपस्विनाम् ॥ १०
अहो सर्व्वैः परित्याज्या पुंश्चली च विशेषतः।
धनायुः-प्राण-यशसां नाशिनी दुःखदायिनी ॥ ११
नित्यं नवपरा शश्वत् परकार्य्यविघातिनी।
निष्ठुरा नरघातिभ्यः सर्व्वापद्बीजरूपिणी ॥ १२
विद्युद्दीप्तिर्जले रेखा लोभान्मैत्री यथा भवेत्।
परद्रोहाद्यथा सम्पत् कुलटाप्रेम तत्समम् ॥ १३
सर्व्वेभ्यो हिंस्रजन्तुभ्यो विपद्बीजं सदैव सा।
यो हि तत्प्रेमिको मूढ़ो विपत् तस्य पदे पदे ॥ १४
त्वञ्च रूपवती धन्या वञ्चिता कामुकैः सदा।
यूनां सम्पत्स्वरूपा च विषतुल्या तपस्विनाम् ॥ १५
त्वमेवाप्सरसां श्रेष्ठा सर्व्वदा स्थिरयौवना।
तवैव कर्म्मयोग्यञ्च युवानं पश्य सुन्दरि ॥ १६
विदग्धा च योषित्तु विदग्धञ्च वशं कुरु।
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत् ॥ १७
जरातुरोऽहं वृद्धश्च तपस्वी वैष्णवो द्विजः।
अस्वतन्त्रः पराधीनः का रतिः पुंश्चलीषु मे ॥ १८
अयि वत्से गच्छ शीघ्रं विहाय पितरञ्च माम्।
नान्त्राहञ्च जगत्स्रष्टा यः स्रष्टा(क)स पिता सदा ॥ १९
मन्मथं चन्द्रमिन्द्रञ्च जयन्तं नलकूवरम्।
स्वर्व्वैद्यौ चन्द्रतनयं दितिपुत्रांश्च सुन्दरान् ॥ २०
कामशास्त्रसुनिपुणान् रतिकर्म्मविशारदान्।
या मामायाति तांस्त्यक्त्वा साऽविदग्धा च कामुकी ॥ २१
सदा सम्भोगविषये स्त्रियं प्रार्थयते पुमान्।
स्त्री चेत् प्रयाति पुरुषं विपरीतं विड़म्बनम् ॥ २२
सर्व्वप्राप्येव रत्नानां स्त्रीरत्नं दुर्लभं परम्।
ताञ्च प्रार्थयते स्वामी न त्वं स्वामिनमेव च ॥ २३
योषिज्जातिर्विमानां च स्वयं या समुपस्थिता।
भवेद्ध्रुवं स्वल्पमूल्यं रत्नं स्वयमुपस्थितम् ॥ २४
नित्यं पुमान् स्त्रियं याति स्त्री वा याति च स्वप्रियम्
लोकाचारेषु वेदेषु न स्त्रीजातिः परप्रियम् ॥ २५
स्ववस्तु भुङ्क्ते यः काले शास्त्रोक्तविधिपूर्व्वकम्।
भवेत् पूज्योऽप्यसम्पूज्यो यद्रतिः परवस्तुनि ॥ २६
कः कस्य शत्रुरत्रैव निशामय जगत्त्रये।
स्वेन्द्रियाः शत्रवः सर्व्वे शत्रुताया निमित्ततः ॥ २७
वेदोक्ताचरणे सर्व्वं मित्रञ्च जगतां जगत्।
कृते वेदविरुद्धे च मित्रं शत्रुर्भवेद्ध्रुवम् ॥ २८
वेदोक्तं कृतवन्तञ्च हरिस्तुष्टो दिवानिशम्।
हरौ तुष्टे जगत् तुष्टं तस्मिन् रुष्टे भवेद्रिपुः ॥ २९
कुत्रास्ति कुलटाजातिः साध्वीजातिश्च कुत्र वा।
स्वकीयाचरणात् सर्व्वं भवे भवति कर्म्मणः ॥ ३०
स्त्रीजातिः प्रकृतेरंशा नारायणविनिर्म्मिता।
दुःशीला पुंश्चली निन्द्या सुशीला च पतिव्रता ॥ ३१
पतिव्रतास्तु त्रिविधाः पुंश्चलीषु च योषितः।
तासामेवंविधा नास्ति स्वयं याति परप्रियम् ॥ ३२
स्त्रीजातीनाञ्च मध्ये च कास्वेवं कुलकज्जला।
भवे रत्यै स्वयं दृष्ट्वा वेशं कृत्वा प्रयाति तम् ॥ ३३
इत्येवमुक्त्वा जगतां विधाता विरराम च।
वक्तुं समुद्यता सा च कोपप्रस्फुरिताधरा ॥ ३४
मोहिन्युवाच।
ज्ञातं सर्व्वं जगज्ज्ञातश्चरितं तव साम्प्रतम्।
त्वया निबोधिता नीतिर्मनो मे न स्थिरं भवेत् ॥ ३५
भूतं त्वयि निविष्टञ्च यावद्दृष्टः क्षणे भवान्।
त्वद्रूपदृष्टिमात्रेण सर्व्वे जाराश्च विस्मृताः ॥ ३६
देहं कामाग्निना दग्धं यदा त्यक्तुं समुद्यता।
निषिषेध च मां रम्भा प्रददौ मन्त्रणामिमाम् ॥ ३७
तदा कामसहायेन त्वत्समीपं समागतम्।
[illegible] शापेन स जगाम हतोद्यमः ॥ ३८
तत्याज गन्तुमशक्ताहं त्वया यद्यपि भर्त्सिता।
सर्व्वाङ्गेष्वेव मे जाड्यं बभूव साम्प्रतं विभो ॥ ३९
कृपां कुरु कृपासिन्धो न मां हन्तुं त्वमर्हसि।
तवाश्लेषणमात्रेण विज्वराहं सुनिश्चितम् ॥ ४०
त्वमेव जगतां धाता कुलटाहञ्च कर्म्मणा।
सन्तो गर्व्वं न कुर्व्वन्ति कर्म्मसाध्याश्च जीविनः ॥ ४१
कश्चित् प्रयाति यानेन वहन्ति तञ्च केचन।
करं गृह्णाति नृपतिः कर्म्मणा ददति प्रजाः ॥ ४२
कश्चित् सिंहासनस्थश्च नृपपार्श्वश्च कश्चन।
केचिद्भृत्या बहुविधास्तत्र तस्य स्वकर्म्मणा ॥ ४३
याति कश्चिदश्वपृष्ठे गजपृष्ठे च कश्चन।
कर्म्मणा वाहकाः केचित् केचिद्वाहनपालकाः ॥ ४४
शूकरीजठरं कश्चित् सम्प्रयाति स्वकर्म्मणा।
केचित् शच्याश्च जठरं तव पुत्राश्च केचन ॥ ४५
केचित् कृत्वा हरेर्भक्तिं कर्म्मणा तस्य पार्षदाः।

(क) सर्व्वेषाञ्च पिता सदा इत्यपि क्वचित् पुस्तके।

केचिद्भवन्ति क्रिमयो विष्ठाया दैवदोषतः ॥ ४६
स्वर्गं प्रयान्ति राजेन्द्राः केचिच्चैव स्वकर्म्मणा।
केचित् प्रयान्ति नरकं विपत्तिं तत्र भुञ्जते ॥ ४७
कर्म्मणा कश्चिदिन्द्रश्च सुराणां प्रवरः स्वयम्।
केचित् सुरा नराः केचित् केचिच्च क्षुद्रजन्तवः ॥ ४८
केचिच्च कर्म्मणा विप्रा वर्णश्रेष्ठा महीतले।
केचिन्नृप-वैश्य-शूद्राः केचिच्च म्लेच्छजातयः ॥ ४९
केचित् स्वकर्म्मणा प्राज्ञा ज्ञानेन समदर्शिनः।
केचिन्मूर्खाः केचिदन्धाः स्वाङ्गहीनाश्च केचन ॥ ५०
केचिच्छास्त्रं बोधयन्ति शिष्यवर्गान् स्वकर्म्मणा।
केचित् पठन्ति सर्व्वार्थं जानन्ति गुरुवक्त्रतः ॥ ५१
भवन्ति कर्म्मणा केचिद्देहाः स्थावरजङ्गमे।
तपस्वी नरघाती च त्वञ्च ब्रह्मा च कर्म्मणा ॥ ५२
काचित् स्वकर्म्मणा साध्वी पूज्येह च परत्र च।
काचिद्वेश्या तदाहारं भुङ्क्ते कृत्वाङ्गविक्रयम् ॥ ५३
सर्व्वेशाहं सुरपुरे सुरभोग्यासु पूजिता।
यासामालिङ्गनेनैव कर्म्मणां खण्डनं भवेत् ॥ ५४
मनः स्वभावबीजञ्च स्वभावः कर्म्मबीजकः।
तत्कर्म्म फलबीजञ्च सर्व्वेषां जनको हरिः ॥ ५५
फलं ददाति नियतं कर्म्मद्वारा विभुः स्वयम्।
सर्व्वेभ्यो बलवान् नित्यं कर्म्मरूपी जनार्द्दनः ॥ ५६
कुतो हेतोर्निन्दिताहं त्वयैव भर्त्सिता का
जगत्स्रष्टुरीश्वरस्य पदाब्जं द्रष्टुमागता ॥ ५७
स्वप्ने यस्य पदद्वन्द्वं न हि पश्यन्ति योगिनः।
तमीश्वरं पतिं कर्त्तुमिच्छया स्वयमागता ॥ ५८
गत्वा हि कस्यचित् स्थाने न स्पृश्येह परत्र च।
कस्यचित् पादरजसा यशसा भान्ति योषितः ॥ ५९
इत्युक्त्वा मोहिनी शीघ्रं गत्वोवास विधेः पुरः।
स्वयं विधाता जगतां चकम्पे कुलटाभयात् ॥ ६०
सस्मिता वक्रनयना कामभावं चकार ह।
स्वाङ्गञ्च दर्शयामास कामबाणप्रपीड़िता ॥ ६१
एतस्मिन्नन्तरे कामः सर्व्वज्ञः सर्व्वयोगवित्।
आविर्भूय पञ्च बाणान् चिक्षेप च ब्रह्मणि ॥ ६२
सम्मोहनं समुद्वेगबीजं तत्स्थितकारणम्।
उन्मत्तबीजं ज्वरदं शश्वच्चेतनहारकम् ॥ ६३
एतान् प्रक्षिप्य मदनोऽप्यन्तरीक्षस्थितः स्वयम्।
किङ्करान् प्रेरयामास सम्मोहय पितुर्मुदा ॥ ६४
वसन्त-कोकिलादींश्च गन्धवातं मनोहरम्।
नियोज्याभ्यन्तरं गत्वा तद्विकारं चकार ह ॥ ६५
पुंस्कोकिलः कलं चारु रुराव तत्समीपतः।
षट्पदः सुन्दरं सूक्ष्मं जुगुञ्ज पुरतः स्थितः।
शश्वद्ववौ गन्धवातो मन्दोऽतिशीतलः प्रिये ॥ ६६
सततं मुदितस्तत्र बभ्राम च मधुः स्वयम्।
पुलकाञ्चितसर्व्वाङ्गो बभूव जगतां विधिः ॥ ६७
सा सर्व्वमोहिनी भावं प्रहस्य च पुनः पुनः।
अतीववक्रनयना कामास्त्रहृतचेतना ॥ ६८
विधाता बुबुधे सर्व्वं कामधर्म्मनिबन्धनम्।
नियन्तुं मनसः शक्तुं सस्मार श्रीहरिं भिया ॥ ६९
तुष्टाव मनसा कृष्णं शान्तं हृद्यं रहःस्थितम्।
द्विभुजं मुरलीहस्तं हरिं पीताम्बरं परम् ॥ ७०
अतीव कमनीयञ्च किशोरस्थिरयौवनम्।
रत्नालङ्कारभूषाढ्यं सस्मितं श्यामसुन्दरम् ॥ ७१

ब्रह्मोवाच।

रक्ष रक्ष हरे माञ्च निमग्नं कामसागरे।
दुष्कीर्त्तिजलपूर्णे च दुष्पारे बहुसङ्कटे ॥ ७२
भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे।
अतीवनिर्म्मलज्ञान-चक्षुःप्रच्छन्नकारणे ॥ ७३
जन्मोर्म्मिसङ्गसहिते योषिन्नक्रौघसङ्कुले।
रतिस्रोतःसमायुक्ते गभीरे घोर एव च ॥ ७४
प्रथमामृतरूपे च परिणामविषावहे।
यमालयप्रवेशाय मुक्तिद्वारातिविस्मृते ॥ ७५
बुद्ध्या तरण्या विज्ञानैरुद्धरास्मानतः स्वयम्।
त्वञ्च स्वयं कर्णधार प्रसीद मधुसूदन ॥ ७६
मद्विधाः कतिधा नाथ नियोज्या भवकर्म्मणि।
सन्ति विश्वेश विधयो हे विश्वेश्वर मामव ॥ ७७
न कर्म्मक्षेत्रमेवेदं ब्रह्मलोकोऽयमीप्सितः।
तथापि न स्पृहा कामे त्वद्भक्तिव्यवधायके ॥ ७८
हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु।
त्वं महेश महाज्ञानं दुःस्वप्नं मामदर्शय ॥ ७९

श्रीकृष्ण उवाच।

इत्युक्त्वा जगतीधाता विरराम सनातनः।
ध्यायं ध्यायं मत्पदाब्जं शश्वत् सस्मार मामपि ॥ ८०
ब्रह्मणा च कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत्।
स चैवाकीर्त्तिविषये न निमग्नो भवेद्ध्रुवम् ॥ ८१

मम मायामतिक्रम्य मद्दास्यं लभते ध्रुवम्।
इह लोके भक्तियुक्तो मद्भक्तप्रवरो भवेत् ॥ ८८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे ब्रह्ममोहिनी-
संवादे ब्रह्मकृत-श्रीकृष्णस्तोत्रप्रसङ्गे
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः।

श्रीकृष्ण उवाच।

कृत्वा ब्रह्मा हरेः स्तोत्रं तस्थौ तस्याः समीपतः।
मनो मत्तगजेन्द्रञ्च कामासक्तं निवारयन् ॥ १
दिव्यज्ञानाङ्कुशेनैव मया दत्तेन राधिके।
उवाच मोहिनी तत्र परीहासपरं वचः ॥ २

मोहिन्युवाच।

इङ्गितेनैव नारीणां सद्यो मत्तो भवेत् पुमान्।
करोत्याकृष्य सम्भोगं यः स एवोत्तमो विभो ॥ ३
ज्ञात्वा स्फुटमभिप्रायं नार्य्या सम्प्रेरितः प्रियः।
पश्चात् करोति शृङ्गारं पुरुषः स च मध्यमः ॥ ४
पुनः पुनः प्रेरितश्च स्त्रिया कामार्त्तया च यः।
तया न लिप्तो रहसि स क्लीबो न पुमानहो ॥ ५
गृही तपस्वी कामी वा त्यजेत् स्त्रियमुपस्थिताम्।
अर्जेत् परत्र नरकमपूज्यश्च भवेदिह ॥ ६
भ्रष्टश्रीभ्रष्टरूपश्च भ्रष्टदर्पो भवेद्ध्रुवम्।
स मर्त्त्यः क्लीवतां याति ब्रह्मन् शापेन योषितः ॥ ७
उत्तिष्ठ जगतीनाथ पारं कुरु स्मरार्णवे।
निमग्नां दुस्तरे घोरे कर्णधार भयानके ॥ ८
अतीव निर्ज्जने स्थाने सर्व्वजन्तुविवर्ज्जिते।
सुगन्धवायुना रम्ये पुंस्कोकिलरुतश्रुते ॥ ९
सन्ततं [illegible] कामां दासीं जन्मनि जन्मनि।
क्रीणीहि रतिपण्येनामूल्यरत्नेन सत्वरम् ॥ १०
इत्युक्त्वा मोहिनी सद्यो जगत्स्रष्टुश्च ब्रह्मणः।
विचकर्ष करं वस्त्रं सस्मिता कामविह्वला ॥ ११
विज्ञाय समयं धाता तामुवाच भयातुरः।
पीयूषतुल्यं वचनं परं विनयपूर्व्वकम् ॥ १२

ब्रह्मोवाच।

शृणु मोहिनि मद्वाक्यं सत्यं सारं हितं स्फुटम्।
न कुरु लज्ज त्रैलोक्ये स्त्रीजातीनामपत्रपाम् ॥ १३
त्यज मामम्बिके पुत्रं वृद्धं निष्काममेव च।
तत्कर्मयोग्यं रसिकं युवानं पश्य सस्मिते ॥ १४
निषिकाल्लभते पत्नी गुरुभर्त्ता शुभाशुभम्।
मन्त्रं शिष्यमपत्यञ्च सर्व्वमेतन्न यत्नतः ॥ १५
त्वया सह मम रतेर्निर्ब्बन्धो नास्ति सुव्रते।
क्षुद्रं महद्वा यत् कर्म्म सर्व्वं दैवनिबन्धकम् ॥ १६
इत्युक्तवन्तं ब्रह्माणं स्मरन्तं मत्पदाम्बुजम्।
विचकर्ष पुनर्व्वेश्या कामेन हतचेतना ॥ १७
एतस्मिन्नन्तरे शीघ्रं स्थानं तत् सुमनोहरम्।
आजग्मुर्मुनयः सर्व्वे ज्वलन्तो ब्रह्मतेजसा ॥ १८
अत्रिः पुलस्त्यः पुलहो वशिष्ठः क्रतुरङ्गिराः।
भृगुर्मरीचिः कपिलो वोढ़ुः पञ्चशिखो रुचिः ॥ १९
आसुरिश्च प्रचेताश्च स्वयं शुक्रो बृहस्पतिः।
उतथ्यः करकः कण्वः कश्यपो गौतमस्तथा ॥ २०
सनकश्च सनन्दश्च कर्द्दमश्च सनातनः।
सनत्कुमारो भगवान् योगिनां परमो गुरुः ॥ २१
शातातपः पिप्पलश्च शङ्कुः शङ्खः पराशरः।
मार्कण्डेयो लोमशश्च मृकण्डुश्च्यवनस्तथा ॥ २२
दुर्व्वासाश्च जरत्कारुरास्तीकश्च विभाण्डकः।
ऋष्यशृङ्गो भरद्वाजो वामदेवश्च कौशिकः ॥ २३
दृष्ट्वैतांश्च मुनिश्रेष्ठानागतांश्च मसेच्छया।
तत्याज मोहिनी शीघ्रं व्रीड़या कमलोद्भवम् ॥ २४
तत्रैवास जगद्धाता तद्वामपार्श्वतश्च सा।
प्रणेमुर्मुनयस्तत्र भक्तिनम्रात्मकन्धराः ॥ २५
आशिषं युयुजे ब्रह्मा वासयामास तान् विभुः।
तेषु मध्ये प्रजज्वाल यथा तारासु चन्द्रमाः ॥ २६
प्रपच्छुर्मुनयो देवं कथमेषा तवान्तिके।
सर्व्वज्ञानाच्च प्रवरा मोहिनीत्येवमेव च ॥ २७
श्रुत्वा मुनीनां वचनमुवाच तान् प्रजापतिः।
स्त्रीजातीनाञ्च वचनं लज्जाच्छादनमेव च ॥ २८

ब्रह्मोवाच।

अपूर्व्वं नृत्यगीतञ्च चिरं कृत्वा शुभावहा।
उवासेयं परिश्रान्ता यथा कन्या पितुः पुरः ॥ २९
इत्युक्त्वा जगतां धाता जहास मुनिसंसदि।
जहसुर्मुनयः सर्व्वे सर्व्वज्ञास्तत्र राधिके ॥ ३०
सर्व्वं रहस्यं विज्ञाय जगत्स्रष्टुश्च मानसम्।

उवाच सुकोप कुलटा हास्यव्याजेन संसदि ॥ ३१
सर्व्वाङ्गकम्पमाना सा कुलटा कुटिलानना।
रक्तोत्पलदलनेत्रा च कोपप्रस्फुरिताधरा ॥ ३२
उत्थाय च सभामध्ये तेषाञ्च पुरतः स्थिता।
रुष्टोष्ठ्योवाच ब्रह्माणं मृत्युकन्या यथा रुषा ॥ ३३

मोहिन्युवाच।

अयि ब्रह्मन् जगन्नाथ वेदकर्त्ता त्वमेव च।
किं वा वेदप्रणिहितं कर्म्म किं तद्विपर्य्ययम् ॥ ३४
विचारं मनसा स्वेन कुरु वेदविदां गुरो।
स्वकन्यायां यत्स्पृहा स कथं हसति नर्त्तकीम् ॥ ३५
निर्म्मिताहमीश्वरेण सर्व्वेश्या सर्व्वगामिणी।
एतां कर्म्म विरुद्धं यत् तदत्यन्तविडम्बनम् ॥ ३६
दासीतुल्यां विनीताञ्च दैवेन शरणागताम्।
अतो हससि सर्व्वेण ततोऽपूज्यो भवाचिरम् ॥ ३७
अचिराद्दर्पभङ्गं ते करिष्यति हरिः स्वयम्।
निबोध स्वबलं ब्रह्मन् वेश्यायाश्चापि साम्प्रतम् ॥३८
तवैव कवचं स्तोत्रं मन्त्रं गृह्णाति यो नरः।
भविता तस्य विघ्नश्च स यास्यत्युपहास्यताम् ॥ ३९
भविता वार्षिकी पूजा देवतानां युगे युगे।
तव माघ्याञ्च संक्रान्त्यां न भविष्यति सा पुनः ॥ ४०
कल्पान्तरेऽत्र कल्पे वा देहे देहान्तरेऽत्वरी (क)।
पुनः पूजा न भविता या गता सा गतैव च ॥ ४१
इत्युक्त्वा मोहिनी शीघ्रं जगाम काममालयम्।
तेन सार्द्धं रतिं कृत्वा बभूव विज्वरा पुनः ॥ ४२
पश्चात् सा चेतनां प्राप्य विललाप भृशं पुनः।
अहह कथं मया शप्तो जगद्विधिरिति प्रिये ॥ ४३
स्वर्व्वेश्यायां गतायाञ्च मुनयो दुःखिता भृशम्।
स्वयं विधाता जगतां चकम्पे नतकन्धरः ॥ ४४
उपायं मुनयस्तस्मै ददुः कल्याणकारणम्।
शरणं व्रज वैकुण्ठमित्युक्त्वा ते गृहान् ययुः ॥ ४५
ब्रह्मा जगाम शरणं मम सूर्य्यान्तरं परम्।
शान्तं तं कमलाकान्तं श्यामं नारायणाभिधम् ॥४६
गत्वा विषण्णवदनः प्रणम्य च चतुर्भुजम्।
तत्र चोवास तत्कर्त्ता नातिदूरे समीपतः ॥ ४७
रहस्यं कथयामास शुष्ककण्ठोष्ठतालुकः।
दीनबन्धुं कृपासिन्धुं विपत्तारणकारणम् ॥ ४८

(क) देहे इत्यनेनान्वयि।

श्रुत्वा रहस्यं तत् सर्व्वं प्रहस्योवाच तं विभुः।
सत्यं सारं हितं वाक्यं जगताञ्च सुखावहम् ॥ ४९

श्रीनारायण उवाच।

स्वयं वेदविदोऽसि त्वं विदुषाञ्च गुरोर्गुरुः।
त्वया कृतञ्च यत् कर्म्म घातकेन न तत् कृतम् ॥ ५०
स्त्रीजातिः प्रकृतेरंशा जगतां बीजरूपिणी।
स्त्रीणां विडम्बनेनैव प्रकृतेश्च विडम्बना ॥ ५१
न तद्भारतवर्षञ्च पुण्यक्षेत्रमनुत्तमम्।
क्रीडाक्षेत्रे ब्रह्मलोके कस्तवेन्द्रियनिग्रहः ॥ ५२
यदि तद्भारते दैवात् कामिनी समुपस्थिता।
स्वयं रहसि कामार्त्ता न सन्त्याज्या जितेन्द्रियैः॥५३
त्यक्त्वा परत्र नरकं व्रजेदिह विडम्बितः।
भवेदेव हि दुःखार्त्ताः शापं ददति तं ध्रुवम् ॥ ५४
विहाय स्वकलत्रञ्च यो गृह्णाति परस्त्रियम्।
लोभात् कामसुखाद्वापि सोऽधमो नात्र संशयः॥
स पतेत् पातयित्वा च दश पूर्व्वान् दशापरान् ॥५५
त्यक्त्वा स्वस्वामिनं या च परं गच्छति कामतः।
न पुमान् न च वेश्या च कुलस्त्री तत्र दुष्यति ॥ ५६
उपायेन तु या साध्यं करोति परपूरुषम्।
सा तिष्ठत्येवान्धकूपे यावच्चन्द्र-दिवाकरौ ॥ ५७
स्वर्व्वेश्या च दिवं याति सन्ततं कुलधर्म्मतः।
ध्रुवं भवेत् सोऽपराधी तस्या अप्यवमानतः ॥ ५८
[तदु]पायं करिष्यामि शप्तो यत्र विशुध्यति।
क्षणं तिष्ठ जगद्धातः पापिनश्च भवार्णवे ॥ ५९
एतस्मिन्नन्तरे कश्चिदाजगाम हरेः पुरः।
द्वारपालः शीघ्रगामीत्युवाच नतकन्धरः ॥ ६०

द्वारपाल उवाच।

अन्यब्रह्माण्डाधिपतिर्ब्रह्मा दशमुखः स्वयम्।
द्वारे तिष्ठन् महाभक्तास्त्वां द्रष्टुं स्वयमागतः ॥ ६१
द्वारपोऽवचः श्रुत्वा भगवानमति ददौ।
द्वारपालाज्ञया ब्रह्मा तुष्टावागत्य भक्तितः ॥ ६२
स्तोत्रैरतिविचित्रैश्च चतुर्व्वक्त्राश्रुतरहो।
स्तुत्वोवासाज्ञया विष्णोः कृत्वा पश्चाच्चतुर्म्मुखम् ॥६३
नारायणो द्वारपालानित्युवाच चतुर्भुजान्।
आगन्तुकं जनमपि प्रवेशयत सादरम् ॥ ६४
एतस्मिन्नन्तरे तत्र वृन्दावनविनोदिनि।
आजगामाभिप्रणतो ब्रह्मा शतमुखः स्वयम् ॥ ६५
दिव्यैः स्तोत्रैश्च तुष्टाव निगूढमतिसुन्दरैः।

तुष्टाव स तयोरग्रे भक्त्या हर्षसुखाश्रुतैः ॥ ६६
जगद्विधौ सभायाश्च तत्र तिष्ठति तत्पुरे।
आजगामातिब्रह्माण्डाधिपो ब्रह्मा हरेः पुरः ॥६७
सहस्रवदनः श्रीमान् भक्त्या नम्रात्मकन्धरः।
तुष्टाव स वरैः स्तोत्रैः सर्व्वेषामश्रुतैरहो ॥ ६८
तत्र पप्रच्छ सर्व्वेषां ब्रह्माण्डानाञ्च ब्रह्मणाम्।
वार्त्तां विषयिणाञ्चैव सुराणाञ्च क्रमेण च ॥ ६९
चतुर्म्मुखस्य तान् दृष्ट्वा दर्पभङ्गो बभूव ह।
आत्मानं विष्णुसदृशं मन्यमानस्य दर्पतः ॥ ७०
अन्यान् स दर्शयामास ब्रह्माण्डस्थान् विधीन् हरिः
दृष्ट्वा च कृपया तत्र मशकतुल्यं चतुर्म्मुखम् ॥ ७१
यावन्ति गात्रलोमानि सन्ति नारायणस्य मे।
तत्प्रमाणाश्च ब्रह्माण्डा ब्रह्माणः सन्ति सन्ततम् ॥७२
नारायणं प्रणम्याशु जग्मुस्ते स्वालयं प्रति।
[illegible]नेने विधिरात्मानमत्यल्पविषयाधिपम् ॥ ७३
पप्रच्छ प्रणतं विष्णुर्लज्जानम्रचतुर्म्मुखम्।
वद तत् किमिदं दृष्टं स्वप्नवद्भवताधुना ॥ ७४
नारायणवचः श्रुत्वा विधिरित्युक्तवांस्तदा।
भूतं भव्यं भविष्यं वा तव मायासमुद्भवम् ॥ ७५
इत्येवमुक्त्वा स विधिस्तस्थौ संसदि लज्जया।
सर्व्वान्तरात्मा भगवान् तस्योपायं विनिर्म्ममे ॥ ७६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे ब्रह्मदर्पभङ्ग-
प्रस्तावो नाम त्रयस्त्रिंशोऽध्यायः॥३३॥

---

२१

## चतुस्त्रिंशोऽध्यायः।

श्रीकृष्ण उवाच।

एतस्मिन्नन्तरे तत्र शङ्करः समुपस्थितः।
सस्मितो वृषभेन्द्रस्थो विभूतिभूषणा[illegible]ङ्गम् ॥ १
व्याघ्रचर्म्माम्बरधरो न[illegible]पवीतकः।
स्वर्णाकारजटाभारमर्द्धचन्द्रञ्च सन्दधत् ॥ २
त्रिशूलं पट्टिशं चारु करे खट्वाङ्गमुत्तमम्।
सद्रत्नसाररचित-स्वरयन्त्रकरो मुदा ॥ ३
वाहनादवरुह्याशु भक्तिनम्रात्मकन्धरः।
प्रणम्य कमलाकान्तं पार्श्वे चोवास हर्षितः ॥ ४
आजग्मुर्मुनयः सर्व्वे सुराः शक्रादयस्तथा।
आदित्या वसवो रुद्रा मनवः सिद्धचारणाः ॥ ५
पुलकाञ्चितसर्व्वाङ्गास्तुष्टुवुः पुरुषोत्तमम्।
प्रणम्य तं शिवं पार्श्वे सुरा नम्रात्मकन्धराः ॥ ६
एतस्मिन्नन्तरे भक्त्या सङ्गीतं शङ्करो जगौ।
कृत्वातीव सुतालञ्च स्वरयन्त्रसमन्वितः।
आवयोश्च गुणाख्यानं रासमम्बन्धि सुन्दरम् ॥ ७
समयोचितरागेण मनोमोहनकारिणा।
यन्त्रकण्ठैकतालेन चैकमानेन चारुणा ॥ ८
पदभेदविरामेऽतिगुरुणा लघुना क्रमात्।
गमनेनातिदीर्घेण मन्देन मधुरेण च ॥ ९
भवेऽतिदुर्लभं स्पष्टं प्रीत्यार्थेन विनिर्म्मितम्।
पुलकाञ्चितसर्व्वाङ्गः साश्रुनेत्रः पुनः पुनः ॥ १०
तदैव श्रुतिमात्रेण मूर्च्छां प्राप्य विचेतनाः।
बभूवुरार्द्रपादाश्च मुनयः पुरतः शिवे ॥ ११
रुद्ररूपाः सुराः सर्व्वे विधाद्यहरिपार्षदाः।
नारायणश्च लक्ष्मीश्च गायनश्च शिवः स्वयम् ॥ १२
जलपूर्णञ्च वैकुण्ठं दृष्ट्वा त्रस्तोऽभूद्धरिः।
गङ्गामूर्त्तिं विनिर्म्माय सर्व्वांश्च तादृशीरिति ॥ १३
तत्स्वरूपास्तदङ्गाश्च तत्स्ववाहनभूषणाः।
तत्स्वभावा[illegible]मनस्कास्तत्तद्विषयमानसः ॥ १४
स्थानं निर्म्माय परितो वैकुण्ठस्य चतुर्द्दिशि।
तदधिष्ठातृदेवी च मन्निर्द्दिष्टं स्वमालयम् ॥ १५
नीरजा सुराणां सा बभूव सुरनिम्नगा।
मुक्तिदा च मुमुक्षूणां भक्तानां हरिभक्तिदा ॥ १६
कोटिजन्मार्ज्जितं पापं विविधं पापिना सह।
यस्याश्च स्पर्शवायोश्च सम्पर्केण विनश्यति ॥ १७
किं वा न जाने प्राणेभि स्पर्श-दर्शनयोः फलम्।
किमुत स्नानजन्यञ्च कथयामि निरूपणम् ॥ १८
सर्व्वतीर्थपरं पृथ्व्यां पुष्करं परिकीर्त्तितम्।
वेदोक्तञ्च तदेवास्याः कलां नार्हति षोडशीम् ॥ १९
भगीरथेनैवानीता तेन भागीरथी स्मृता।
गामायता स्रोतसोऽस्यात् गङ्गा तेन प्रकीर्त्तिता ॥२०
जानुद्वारा पुराऽदत्त जह्नुः सम्पीय कोपतः।
तस्य कन्यास्वरूपा सा जाह्नवी तेन कीर्त्तिता ॥२१
भीष्मः स्वयं वसुर्ज्जातस्तस्यांशा तेन भीष्मसूः ॥ २२
धाराभिस्त्रिसृभिः स्वर्गं पृथिवीमतलं तथा।
ममाज्ञया चागच्छन्ती तेन त्रिपथगामिनी ॥ २३

प्रधानधारया स्वर्गे सा च मन्दाकिनी स्मृता ।
योजनायुतविस्तीर्णा प्रस्थे च योजना स्मृता ॥ २४
क्षीरतुल्यजला शश्वदत्युत्तुङ्गतरङ्गिणी ।
वैकुण्ठाद्ब्रह्मलोकञ्च ततः स्वर्गं समागता ॥ २५
स्वर्गाद्धिमाद्रिमार्गेण पृथिवीमागता मुदा ।
सा धारालकनन्दाख्या लवणोदेन मिश्रिता ॥ २६
शुद्धस्फटिकसङ्काशा बहुवेगवती सती ।
पापिनां पापशुष्केध्मं दग्धुं पावकरूपिणी ॥ २७
अहो सगरवंशेभ्यो निर्व्वाणमुक्तिदायिनी ।
वैकुण्ठगामिनां मार्ग-सोपानरूपिणी वरा ॥ २८
अतोऽपि मृत्युसमये सतां पुण्यस्वरूपिणाम् ।
आदौ पादौ च संन्यस्य मुखे तोयं प्रदीयते ॥ २९
गङ्गासोपानमारुह्य सन्तो यान्ति ममालयम् ।
आब्रह्मलोकं संलङ्घ्य रथस्थाश्च निरापदः ॥ ३०
दैवात् पुराप्राप्तेनेन मृत्युश्चेत् कृतपापिभिः ।
विमुच्य सर्व्वपापेभ्यो लभ्यते मत्स्वरूपता ॥ ३१
पार्षदप्रवरास्ते च भवन्ति शिवसन्निधौ ।
न तेषां प्रलये मृत्युर्भवेद्देहे मत्स्वरूपिणाम् ॥ ३२
मृतानाञ्च शरीराणि तत्र चेन्निपतन्ति च ।
लोमप्रमाणवर्षञ्च मोदन्ते हरिमन्दिरे ॥ ३३
ततो भोगो भवेत् तेषां निश्चितं पापपुण्ययोः ।
अतिस्वल्पेन कालेन कायव्यूहञ्च बिभ्रताम् ॥ ३४
ततः पुण्यवतां गेहे लब्ध्वा जन्म च भारते ।
सम्प्राप्य निश्चलां भक्तिं भवन्ति मम पार्षदाः ॥ ३५
मृतद्विजानां देहांश्च दैवाच्छूद्रा वहन्ति चेत् ।
पादप्रमाणवर्षञ्च तेषाञ्च नरके स्थितिः ॥ ३६
ततस्तेषाञ्च साहाय्यं करोति हरिरूपिणी ।
ददाति मुक्तिं तेभ्योऽपि क्रमेण च कृपामयी ॥ ३७
जन्म पुण्यवतां गेहे कारयित्वा च भारते ।
स्थलं ददाति वैकुण्ठे निश्चितं जन्मभिस्त्रिभिः ॥ ३८
यात्रां कृत्वा तु यः शुद्धे स्नातुं याति सुरेश्वरीम् ।
यादप्रमाणवर्षञ्च वैकुण्ठे मोदते ध्रुवम् ॥ ३९
गङ्गां प्राप्यानुषङ्गेण स्नाति चेत् सजलो नरः ।
मुच्यते सर्व्वपापेभ्यः पुनर्यदि न लिप्यते ॥ ४०
कलौ पञ्चसहस्राब्दं स्थितिस्तस्याश्च भारते ।
तस्याञ्च विद्यमानायां कः प्रभावः कलेरहो ॥ ४१
कलौ दशसहस्राणि वर्षाणि प्रतिमा मम ।
तिष्ठन्ति च पुराणानि प्रभावस्तत्र कः कलेः ॥ ४२
अतलं याति या धारा सा च भोगवती स्मृता ।
पयःफेननिभा शश्वदतिवेगवती सदा ॥ ४३
आकरामूल्यरत्नानां मणीन्द्राणाञ्च सन्ततम् ।
नागकन्या च यत्तीरे क्रीडन्ति स्थिरयौवनाः ॥ ४४
स्वयं देवी च वैकुण्ठं वेष्टयित्वास्ति सन्ततम् ।
सहस्रयोजना प्रस्थे दैर्घ्ये च लक्षयोजना ॥ ४५
तस्या विनाशः प्राणेऽपि नास्त्येव दुहितुर्मम ।
नानारत्नाकरं दिव्यं तत्तीरं सुमनोहरम् ॥ ४६
इत्येवं कथितं सर्व्वं जाह्नवीजन्म पुण्यदम् ।
ब्रह्मणश्च प्रतीकारं मोहिनीशापतः शृणु ॥ ४७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे राधा कृष्ण-संवादे जाह्नवी-जन्मप्रस्तावो नाम चतुस्त्रिंशोऽध्यायः ॥३४॥

---

## पञ्चत्रिंशोऽध्यायः ।

श्रीकृष्ण उवाच ।

नारायणश्च ब्रह्माणमुवाच कृपया पुनः ।
दृष्ट्वा गङ्गाञ्च सर्व्वाङ्गीं मम मायाञ्च मेनिरे ॥ १

श्रीनारायण उवाच ।

उत्तिष्ठ गच्छ भद्रं ते भविष्यति चतुर्म्मुख ।
अत्र स्नात्वाभिशप्तस्त्वं पूतो भव ममाज्ञया ॥ २
लब्ध्वा सत्यं स्वयं पूतः स्पर्शं वाञ्छन्ति तानि च ।
[illegible]ष्णावेशस्य तीर्थानि सर्व्वाणि सन्ततं मुने ॥ ३
तथापि शापयुक्तस्त्वं यत्र प्रकृतिहेलना ।
अहङ्कारञ्च सर्व्वेषां पापवीजममङ्गलम् ॥ ४
शीघ्रं त्वं गच्छ गोलोकं ममालयपरात्परम् ।
प्रकृत्यंशां [illegible] तत्र प्राप्स्यसि [illegible]नीम् ॥ ५
प्रकृतिं भज कल्याण सृष्टिवीजस्वरूपिणीम् ।
अहो कल्पान्तपर्य्यन्तं तपस्तप्तं त्वयाधुना ।
तव मन्त्रं न गृह्णन्ति कोऽपि वेश्याभिशापतः ॥ ६
तदा ममाज्ञया ब्रह्मन् स्नात्वा च जाह्नवीजले ।
शीघ्रं जगाम गोलोकं मां प्रणम्य जगद्गुरुम् ॥ ७
ते देवा मुनयः सर्व्वे प्रजग्मुः स्वालयं मुदा ।
सुनिर्म्मलं मम यशो गायन्तश्च पुनः पुनः ॥ ८

विधिरागत्य गोलोकं सम्प्राप्य भारतीं सतीम्।
सर्व्वविद्याधिदेवीं तां महत्त्वाञ्जविनिर्गताम्॥ ९
वागीश्वरीञ्च सम्प्राप्य ब्रह्मा प्रमुदितः स्वयम्।
कामाख्यायाञ्च व्यापारमनुमेने स्वयं विधिः॥ १०
तत आगत्य मां नत्वा प्राप्य त्रैलोक्यमोहिनीम्।
क्रीड़ां चकार भगवान् स्थाने स्थानेऽतिनिर्ज्जने॥११
रतिं चिरतरं कृत्वा विरराम स्वयं विधिः।
आजगाम ब्रह्मलोकं पुनरेव निजालयम्॥ १२
ददृशुर्ब्रह्मलोकस्थां तां देवीं कौतुकान्विताम्।
अतीवसुन्दरीं रम्यां शुभ्रवर्णाञ्च सस्मिताम्॥ १३
शरच्छीतांशुवदनां शरत्पङ्कजलोचनाम्।
पक्वबिम्बप्रभामुष्ट-दीप्तोष्ठाधरपल्लवाम्॥ १४
मुक्तापङ्क्तिविनिन्द्यैक-दन्तपङ्क्तिमनोहराम्।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम्॥ १५
पुष्पेन्द्रसारहारेण वक्षःस्थलमसुज्ज्वलाम्।
वह्निशुद्धांशुकं सूक्ष्मं बिभ्रतीं नवयौवनाम्॥ १६
अतीव कमनीयाञ्च पीनश्रोणिपयोधराम्।
वीणापुस्तकहस्तां तां व्याख्यामुद्राकरां वराम्॥१७
ते च निर्म्मञ्छनं कृत्वा चक्रुः परममङ्गलम्।
पुरीं प्रवेशयामासुर्ब्रह्माणं भारतीं मुदा॥ १८
ब्रह्मा तया सह क्रीड़ां चकार स दिवानिशम्।
अतीवसुखसम्भोगे निमग्नः सततं मुदा॥ १९
गूढ़ं सर्व्वपुराणेषु किं पुनः श्रोतुमिच्छसि॥ २०

नारायण उवाच।

प्राणेशवचनं श्रुत्वा प्रहस्य परमेश्वरी।
भूयोऽपि परिपप्रच्छ कौतुकात्स्मानसं पुरा॥ २१

राधिकोवाच।

ब्रह्मा कथं न जग्राह वेश्यां स्वयमुपस्थिताम्।
न कस्मैचेले रहसि फलदाता च कर्म्मणाम्॥ २२
उपस्थितायास्त्यागे च महान् दोषो हि योषितः।
ज्ञात्वा वेदविधाता स कथं तत्याज मोहिनीम्॥२३

नारायण उवाच।

राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः।
प्राचीनस्यास्य वृत्तान्तमुवाच रसिकेश्वरीम्॥ २४

श्रीकृष्ण उवाच।

शृणु कान्ते प्रवक्ष्यामि पुरावृत्तान्तमीप्सितम्।
अकथ्यं गोपनीयञ्च महतामतिनिन्दितम्॥ २५
एकदा च प्रजाः स्रष्टुं विधाता प्रेरितो मया।
ससर्ज्ज मनसा पुत्रान् ज्वलतो ब्रह्मतेजसा॥ २६
सनकञ्च सनन्दञ्च सनातनमनुत्तमम्।
सनत्कुमारं वोढुञ्च कपिं पञ्चशिखं विभुः॥ २७
आसुरिं कपिलं सिद्धं सिद्धान् स कमलोद्भवः।
तान् नम्रान् पञ्चवर्षीयान् पिता स्रष्टुं जगाद ह॥२८
प्रजाः स्रष्टुं प्रेरयितुं जनकं तेऽवमन्य च।
प्रजग्मुस्तपसे तूर्णं ममार्च्चनपरायणाः॥ २९
तदा रुष्टो जगद्धाता पुनः पुत्रान् विनिर्म्ममे।
रुद्रानेकादश परान् रुदतो भीमविग्रहान्॥ ३०
तान् नियुज्यैव तरसा पुनः पुत्रान् विनिर्म्ममे।
योगी योगेन मां ध्यात्वा स्वात्मारामः सुविग्रहः॥३१
वशिष्ठं पुलहञ्चैव क्रतुमङ्गिरसं तथा।
भृगुमत्रिं पुलस्त्यञ्च दक्षं कर्द्दममेव च॥ ३२
मरीचिञ्च विनिर्म्माय प्रजाः स्रष्टुं नियुज्य च।
प्रहृष्टश्च मनः पुत्रं कन्यकाञ्च ससर्ज्ज ह॥ ३३
कृष्णस्य कामिनः पुत्रः कामदेवो बभूव ह।
कन्या षोड़शवर्षीया रत्नभूषणभूषिता॥ ३४
उवाच पुत्रं स विधिः सुदीप्तं पुरतः स्थितम्।
दुर्निवार्य्यं मल्ललाभं स्वात्मारामं मनोहरम्॥ ३५

ब्रह्मोवाच।

स्त्री-पुंसोः क्रीड़नार्थाय मुदा त्वञ्च विनिर्म्मितः।
हृदि योगेन सर्व्वेषामधिष्ठानं करिष्यसि॥ ३६
सम्मोहनं समुद्वेगबीजं स्तम्भनकारणम्।
उन्मत्तबीजं ज्वरदं शश्वच्चेतनहारकम्।
गृहाणैतान् मया दत्तान् सर्व्वान् सम्मोहनं कुरु॥३७
दुर्निवार्य्यो मम वरात्त्वञ्च वत्स भविष्य च।
वरं दत्त्वैवमुक्त्वा च प्रहृष्टश्च जगद्विधिः॥ ३८
हृष्टोवाच दुहितरं वरं दातुं समुद्यतः॥ ३९
एतस्मिन्नन्तरे कामो मनसालोच्य मन्मथाम्।
कर्त्तुं स्वशरपरीक्षाञ्च बाणांश्चिक्षेप ब्रह्मणि॥ ४०
तत्प्रभृतेश्च बाणैश्च दुर्निवार्य्यैः स्मरेण च।
अतिसिद्धो महायोगी मूर्च्छितो हतचेतनः॥ ४१
क्षणेन चेतनां प्राप्य ददर्शाग्रे च कन्यकाम्।
तां सस्मितां मनयन्तो सा दुद्राव भिया सती॥ ४२
दृष्ट्वा पश्चाच्च पितरं धावन्तं हतचेतनम्।
जगाम शरणं शीघ्रं स्वाहणाञ्च तपस्विनाम्॥ ४३

ते तां समीपे संस्थाप्य तमूचुः पितरं क्रुधा।
हितं तथ्यञ्च वेदोक्तं नीतिसारं परं वचः ॥ ४४

ऋषय ऊचुः।

अहो किमेतज्जनक कर्म्म तेऽतिविगर्हितम्।
नीचेनाचरितं यत् तत् करोषि त्वं जगद्विधे ॥ ४५
पश्यन्ति सततं सन्तः प्रसूमिव परस्त्रियम्।
एते सर्व्वत्र पूज्याश्च परत्रेह जितेन्द्रियाः ॥ ४६
त्वं स्वयं वेदकर्त्ता च कन्यां सम्भोक्तुमिच्छसि।
कन्या च मातृवर्गेषु प्रविष्टेव श्रुतौ श्रुता ॥ ४७
गुरोः पत्नी राजपत्नी विप्रपत्नी च या सती।
पत्नी च भ्रातृ-सुतयोर्मित्रपत्नी च तत्प्रसूः ॥ ४८
प्रसूः पित्रोस्तयोर्भ्रातुः पत्नी चैव स्वकन्यका।
जननी तत्सपत्नी च भगिनी सुरभी तथा ॥ ४९
अभीष्टगुरुपत्नी च धात्री कालप्रदायिका।
गर्भधात्रीस्तनाम्नी च भयत्रातुश्च कामिनी ॥ ५०
एता वेदप्रणीताश्च सर्व्वेषां मातरः स्मृताः।
एतासु यासु सर्व्वासु न्यूनता नास्ति काचन ॥ ५१
कन्यादातान्नदाता च ज्ञानदाताभयप्रदः।
जन्मदो मन्त्रदो ज्येष्ठ-भ्राता मातामहस्तथा।
एते वेदप्रणीताश्च सर्व्वेषां पितरः स्मृताः ॥ ५२
प्राणत्यागात् परं दुःखमयशश्च यशस्विनाम् ॥ ५३
एतद्धरन्ति ये मूढ़ा तत्र तान् जनकानपि।
पच्यन्ते निरये ते च यावद्वै ब्रह्मणो वयः ॥ ५४
तानन्धकूपे संस्थाप्य दुरन्ता यमकिङ्कराः।
कुर्व्वन्ति ताड़नं शश्वत् पुरीषं पाययन्ति च ॥ ५५
त्वमेव विश्वकर्त्ता च शास्ता च शमनस्य च।
स्वयं विधाता जगतां तेन गृह्लासि कन्यकाम् ॥ ५६
अस्माकं पुरतो दूरं गच्छ कामात्तमानस।
न कुर्म्मो भस्मसात् कर्त्तुं शक्ताश्च जनकं वयम् ॥ ५७
गुरोर्दोषसहस्राणि हन्तुमर्हन्ति पण्डिताः।
सर्व्वं घ्नन्तं विनिघ्नन्ति नीतिज्ञाः स्वगुरुं विना ॥ ५८
गृह्लन्तं यदि सर्व्वस्वं शपन्तं निष्ठुरं गुरुम्।
समीपस्थं न निन्दन्ति प्रणमन्ति स्वभक्तितः ॥ ५९
ये द्विषन्ति च निन्दन्ति गुरुमिष्टं परात्परम्।
पच्यन्ते ह्यन्धकूपे च यावच्चन्द्रदिवाकरौ ॥ ६०
पुरीषं भुञ्जते नित्यं क्षुधिता यमताड़नैः।
शालप्रमाणकीटैश्च दंशिताश्च दिवानिशम् ॥ ६१

इत्येवमुक्त्वा मुनयः प्रणेमुस्तत्पदाम्बुजम्।
उन्मुखा मुनयः सर्व्वे बभूवुश्च स्वकर्म्मणि ॥ ६२
सर्व्वं भवति दैवेन मनसेत्यनुमन्य च।
ब्रह्मा शरीरं सन्त्यक्तुं ब्रीड़या च समुद्यतः ॥ ६३
योगेन भित्त्वा षट्चक्रं सर्व्वान् प्राणान् निरुध्य च।
ब्रह्मरन्ध्रं समानीय तत्याज स्वेन कर्म्मणा ॥ ६४
मनसा श्रीहरिं स्मृत्वा मनस्कामं चकार ह।
न मे मनः परद्रव्ये भविता लोलमीश्वर।
बभूव हृदि कृत्वैवं ब्रह्मा लीनश्च ब्रह्मणि ॥ ६५
कन्या तातं मृतं दृष्ट्वा विलप्य च भृशं मुहुः।
योगेन देहं तत्याज सा प्रलीना च ब्रह्मणि ॥ ६६
मृतं तातं मृतां भग्नीं दृष्ट्वा च मुनिपुङ्गवाः।
सस्मरुः श्रीहरिं कोपात् स्वात्मारामं विलप्य च ॥ ६७
नारायणो महंशश्च कृपयागत्य सत्वरम्।
ब्रह्माणं जीवयामास ब्रह्मज्ञानात् सुताञ्च तासः
ब्रह्मा पुरो हरिं दृष्ट्वा वरं वव्रे स वाञ्छितम्।
भक्तिं मच्चरणे शश्वन्निश्चलामनपायिनीम् ॥ ६९
ब्रह्माणं विरसं दृष्ट्वा तमुवाच कृपानिधिः।
प्रबोधवचनं सत्यं नीतिसारं मनोहरम् ॥ ७०

श्रीनारायण उवाच।

शृणु ब्रह्मन् प्रवक्ष्येऽहं सुखमुक्तोत्थ साम्प्रतम्।
त्यज लज्जां जगन्नाथ हृदयज्वररूपिणीम् ॥ ७१
सत्कीर्त्तिश्चापकीर्त्तिर्वा सुप्रतिष्ठाप्युपद्रवः।
क्षुद्राणाञ्चैव महतां भवत्येव स्वकर्म्मणा ॥ ७२
सर्व्वेषामपि सर्व्वेभ्यः स्वकर्म्म बलवत्तरम्।
तस्मात् सन्तः प्रकुर्व्वन्ति नित्यं सत्कर्म्म सन्ततम् ॥ ७३
केचित् कुर्व्वन्ति निर्म्मूलं सर्व्वेषामपि कर्म्मणाम्।
कृतं कर्म्म परं भुक्त्वा हरिपादाब्जचेतनः ॥ ७४
कुकर्म्मणश्चापकीर्त्तिस्ततो लज्जा भवेद्ध्रुवम्।
सुकर्म्मणः सुप्रतिष्ठा सर्व्वत्र निर्म्मलं यशः ॥ ७५
कालेन जरसा देहो बलं रूपं शुभाशुभम्।
कीर्त्तिर्या च गुणाश्चैव न हिलुम्पेद्(क)यशो विधे ॥ ७६
ऋण-व्रणापवादश्च जन्तूनां जातिकालतः।
महतां तौ च पूर्व्वोक्तौ नेतरश्च कदाचन ॥ ७७
सदापकीर्त्तिर्वसति परस्त्रीषु च वस्तुषु।
तस्मात् ते वै न गृह्लन्ति सन्तः स्वक्लेशकारणे ॥ ७८

(क) लोप इति पाठस्तु प्रामादिक एव।

स्मर मामन्तरा वाञ्छे मदीयं विषयं कुरु।
ततस्ते न मनो लोलं भविता परवस्तुषु ॥ ७९
शेषिद्रूपा च या माया सर्व्वेषां मोहकारिणी।
लीलया कुरुते मोहमात्मारामस्य सन्ततम् ॥ ८०
नानामुद्रा-वयो-हास-रागिणां सन्ततं रतिः।
स्तनाभिधे मांसपिण्डे धारणा ननयेऽशुचौ ॥ ८१
श्रोणि-वक्त्र-स्तनं तासां कामदेवालयः सदा।
तस्मात् तां न हि पश्यन्ति सन्तो हि धर्म्मभीरवः॥८२
को धर्म्मः किं यशस्तेषां का प्रतिष्ठा च किं तपः।
किं बुद्धिविद्याज्ञानञ्च परस्त्रीषु च यन्मनः ॥ ८३
इहाप्ययशसी दुःखं नरकेषु परत्र च।
वासः प्रहारस्तेषाञ्च ताड़नैः कृमिभक्षणैः ॥ ८४
दुःखवीजं सुखं मत्वा मूढ़ाश्च दैवदोषतः।
परस्त्रीसेवनं प्रीत्या कुर्व्वन्ति सततं मुदा ॥ ८५
उत्तमा मत्पदाम्भोजं सत्कर्म्म मध्यमाः सदा।
स्मरन्ति शश्वदधमाः परस्त्रीसेवनं मुदा ॥ ८६
विपत्तिः सततं तस्य परवस्तुषु यन्मनः।
विशेषतः परस्त्रीषु सुवर्णेषु च भूमिषु ॥ ८७
दैवात् परस्त्रियं दृष्ट्वा विरमेद्यो हरिं स्मरन्।
स्पृष्ट्वा परसुवर्णञ्च हस्तप्रक्षालनाच्छुचिः ॥ ८८
सन्ततं नातिसंसक्ताः खन्तः स्वस्त्रीषु कामतः।
यक्ष्मव्याधि-ज्ञानहानि-लोकनिन्दाभयेन च ॥ ८९
तपस्विनस्तपस्यायां शास्त्रचिन्तासु पण्डिताः।
योगिनो योगचिन्तासु वेदार्थेषु च वैदिकाः ॥ ९०
साध्व्यश्च पतिसेवासु गृहस्था गृहकर्म्मसु।
विषयेषु विषयिणो मद्भक्ता मम सेवने ॥ ९१
ते नियुक्ता एतेषु सभासु च प्रशंसिताः।
वेदोक्ताचरणेनैव तद्विरुद्धेन निन्दिताः ॥ ९२
सर्व्वे नित्यं प्रशंसन्ति शश्वत् सन्मार्गगामिणम्।
हालिका(क) अपि निन्दन्ति कुपथागामिनं विधे॥९३
भविता न परस्त्रीषु परवस्तुषु ते मनः।
अद्यप्रभृति जीवान्तं निविष्टं मद्वरेण च ॥ ९४
मदीयविषयं वाञ्छे मया दत्तं कुरु प्रियम्।
अन्तरा मत्पदाम्भोजचिन्तां विघ्नविनाशिनीम् ॥९५
कन्या भवतु ते ब्रह्मन् कामदेवस्य कामिनी।

(क) हलवाहकाः। हालिका इति पाठे तु हीना इत्यर्थः। नीचा इति यावत्।

रतिर्नाम परित्याज्या रत्यधिष्ठातृदेवता ॥ ९६
इत्येवमुक्त्वा ब्रह्माणमाश्वास्य कमलापतिः।
जगाम नित्यं वैकुण्ठं वृन्दावनविनोदिनि ॥ ९७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशोऽध्यायः।

राधिकोवाच।

एतेन नियमेनैव ब्रह्मा तत्याज मोहिनीम्।
कथं स कुलटा शापादपूज्यः सम्बभूव ह ॥ १
कथं तस्य दर्पभङ्गं चकार कमलापतिः।
कथयस्व सर्व्ववीज सर्व्वेषामीश्वरः स्वयम् ॥ २

नारायण उवाच।

रासेश्वरीवचः श्रुत्वा प्रहस्य राधिकेश्वरः।
निगूढ़मितिहासञ्च तां वक्तुमुपचक्रमे ॥ ३

श्रीकृष्ण उवाच।

ब्रह्मा चिरं तपस्तप्त्वा मत्तो लब्ध्वा वरं वरम्।
सृष्टिं नानाविधां कृत्वा विधाता स बभूव ह ॥ ४
तपसां फलदाता च सर्व्वेषां शास्तिकृत् प्रभुः।
आत्मानमीश्वरं ज्ञात्वा महागर्व्वी बभूव ह ॥ ५
ब्रह्माण्डेषु च सर्व्वेषां गर्व्वपर्य्यन्तमुन्नतिः।
इति मत्वा ब्रह्मणश्च दर्पभङ्गः कृतो मया ॥ ६
येषां येषां भवेद्दर्पो ब्रह्माण्डेषु परात्परे।
विज्ञाय सर्व्वं सर्व्वात्मा तेषां शास्ताहमेव च ॥ ७
प्रथमे ब्रह्मणो गर्व्वो मया चूर्णीकृतः श्रुतः।
शङ्करस्य च पार्व्वत्याश्चन्द्रस्य च रवेस्तथा ॥ ८
वह्नेर्दुर्व्वाससश्चैव तथा धन्वन्तरेः प्रिये।
क्रमेण दर्पभङ्गञ्च कथयामि निशामय ॥ ९
क्षुद्राणां महताञ्चैव येषां गर्व्वो भवेत् प्रिये।
एवंविधमहं तेषां चूर्णीभूतं करोमि च ॥ १०

नारायण उवाच।

श्रीकृष्णस्य वचः श्रुत्वा शुष्ककण्ठौष्ठतालुका।
पप्रच्छ राधा यत्नेन सन्त्रस्ता भयविह्वला ॥ ११

राधिकोवाच।

कस्य केन प्रकारेण महादर्पो बभूव ह।

त्वया केन प्रकारेण तस्य भङ्गः कृतः पुरा ॥ १२
कथयस्व प्राणनाथ सर्व्वेषां दर्पभञ्जनम्।
दर्पहाभयद प्राण-दानैककारणेश्वर ॥ १३
श्रीकृष्ण उवाच।
येन भूतो गर्व्वभङ्गः श्रुतं त्रिजगतां विधेः।
अन्येषां श्रूयतां राधे व्यासेन कथयामि ते ॥ १४
स्वयं शिवो मदंशश्च संहर्त्ता जगताञ्च यः।
तेजसा मत्समः पूर्णो ज्ञानेन च गुणेन च ॥ १५
ध्यायन्ति योगिनो योगैर्योगीन्द्राणां गुरोर्गुरुम्।
ज्ञानानन्दस्वरूपं यं तस्याख्यानं शृणु प्रिये ॥ १६
युगषष्टिसहस्राणि तपस्तप्त्वा दिवानिशम्।
भूत्वा च मत्कलापूर्णो बभूव मत्समो विभुः ॥ १७
तपसा तेजसा शश्वत् तेजोराशिर्बभूव ह।
सूर्य्यकोटिप्रभावश्च भक्तानां कल्पपादपः ॥ १८
ध्यायं ध्यायञ्च योगीन्द्रास्तत्तेजो बहुकालतः।
तदन्तरे च पश्यन्ति तद्रूपमतिसुन्दरम् ॥ १९
शुद्धस्फटिकसङ्काशं पञ्चवक्त्रं त्रिलोचनम्।
त्रिशूलपट्टिशधरं व्याघ्रचर्म्माम्बरं परम् ॥ २०
जपन्तमात्मनात्मानं श्वेताब्जबीजमालया।
ईषद्धास्यप्रसन्नास्यं चन्द्रचूडं परात्परम् ॥ २१
स्वर्णाकारजटाभारं दधतं शिरसा मुदा।
शान्तं कान्तं त्रिजगतां भक्तानुग्रहकातरम् ॥ २२
आत्मानमीश्वरं ज्ञात्वा प्रदाता सर्व्वसम्पदाम्।
ददाति सर्व्वं सर्व्वेभ्यो वाञ्छितं कल्पपादपः ॥ २३
यो यं वाञ्छति तं तस्मै वरं दत्त्वा वरेश्वरः।
बभूव गर्व्वयुक्तश्च स्वात्मारामः स्वलीलया ॥ २४
एकदा च वृको दैत्यस्तपस्तेपे शिवस्य च।
नियमेन कठोरेण वर्षमेकं दिवानिशम् ॥ २५
नित्यं याति तत्समीपं कृपया च कृपानिधिः।
वरं दातुं ययाविष्टं न जग्राहासुरो वरम् ॥ २६
वर्षान्ते शङ्करः शश्वत् तस्थौ तत्पुरतः स्वयम्।
ववन्दे भक्तिभावेन क्षणं गन्तुं न स क्षमः ॥ २७
सर्व्वैश्वर्य्यं सर्व्वसिद्धिं मुक्तिं भक्तिं हरेः पदे।
दैत्यः किञ्चिन्न गृह्णाति प्रेरितः शूलपाणिना ॥ २८
ध्यायमानं तत्पदाब्जं दृष्ट्वा त्रस्तो महेश्वरः।
अयाचितारं निश्चेष्टं रुरोद प्रेमविह्वलः ॥ २९
अतीव रोदनात् तस्य ध्यानभङ्गो बभूव ह।
ददर्श पुरतः साक्षाद्दातारं सर्व्वसम्पदाम् ॥ ३०
मन्मायया वरं वव्रे दैत्येन्द्रो भक्तिपूर्व्वकम्।
हस्तं ददामि यन्मूर्ध्नि स भस्म भवितेति च ॥ ३१
ओमित्युक्त्वा प्रयान्तं तं दुद्राव दैत्यपुङ्गवः।
मृत्युञ्जयो मृत्युभयाद्दुद्राव त्रासविह्वलः ॥ ३२
पपात डमरुस्तस्य व्याघ्रचर्म्म मनोहरम्।
दिगम्बरो वृषं हित्वा भेजे दानवभीतये ॥ ३३
न हन्ति तञ्च कृपया भक्ताञ्च भक्तवत्सलः।
इष्टानुसारं साधुश्च न करोति कदाचन ॥ ३४
साधवो घ्नन्ति घ्नन्तुञ्च भृत्यं पुत्रं प्रियां विना।
प्रबोधितुं न शक्तश्च स्वात्मानं कृपया स्वयम् ॥ ३५
शिवः स्वमूर्त्तिं मत्वा च भीतश्च निरहङ्कृतः।
स्मारं स्मारञ्च मां भद्रे मामेव शरणं ययौ ॥ ३६
दृष्ट्वा स्वाश्रममायान्तं शुष्ककण्ठौष्ठतालुकम्।
हे हरे रक्ष रक्षेति जपन्तं भयविह्वलम् ॥ ३७
संस्थाप्य तं समीपे च स दैत्यो बोधितो मया।
पृष्टश्च सर्व्ववृत्तान्तमुवाच मां क्रमेण च ॥ ३८
तदा ममाज्ञया तूर्णं वञ्चितो माययासुरः।
दत्त्वा स्वमूर्ध्नि हस्तञ्च सद्यो भस्म बभूव ह ॥ ३९
तदा सिद्धाः सुरेन्द्राश्च मुनीन्द्रा मनवो मुदा।
तुष्टुवुर्मां स्वभक्त्या च लज्जया लज्जितः शिवः ॥ ४०
बभूव चूर्णस्तद्गर्व्वो जगाम बोधितो मया।
वरं ददाति वरदस्ततोऽबुद्धो ह्ययं शिवः ॥ ४१
अथ गर्व्वान्वितो रुद्रो हन्तुं त्रिपुरसत्तमम्।
मत्वा मनसि संहर्त्ता सर्व्वेषां जगतामिति ॥ ४२
कोऽयं पतङ्गवद्दैत्य इति मत्वा ययौ रणम्।
विहाय शूलं मद्दत्तं मदीयकवचं परम् ॥ ४३
चिरं बभूव समरं वर्षमेकं दिवानिशम्।
न कोऽपि जेतुं कं शक्तो द्वौ समौ समरे सदा ॥ ४४
पृथिव्यां चरणं कृत्वा दैत्येन्द्रो मायया प्रिये।
अत्यूर्द्धञ्च समुत्तस्थौ पञ्चाशत्कोटियोजनम् ॥ ४५
उत्तस्थौ शङ्करस्तूर्णं हन्तुं दैत्यं जगत्प्रभुः।
बभूव तत्र युद्धञ्च मासमेकं निराश्रये ॥ ४६
अस्त्राणि चापं चिच्छेद शङ्करस्यासुरो बली।
रथं बभञ्ज दैत्येन्द्र-चापमस्त्राणि शङ्करः ॥ ४७
जघान मुष्टिना रुद्रो दानवेन्द्रं प्रकोपितः।
वज्रमुष्टिप्रहारेण सद्यो मूर्च्छामवाप सः ॥ ४८

क्षणेन चेतनां प्राप्य कोपाद्दानवपुङ्गवः ।
शिवं शयानमुत्तोल्य पातयामास भूतले ॥ ४९
संरथे पतिते रुद्रे देवा देवर्षयो भिया ।
तुष्टुवुर्मां परित्राहि कृष्णेत्युक्त्वा पुनः पुनः ॥ ५०
हरः सस्मार मामेव निर्भयोऽभयकारणम् ।
तुष्टाव भक्त्या स्तोत्रेण मया दत्तेन सङ्कटे ॥ ५१
तदाहं कलया शीघ्रं वृषरूपं विधाय च ।
शयानं शङ्करं धृत्वा विषाणाभ्यामुदक्रमम् ॥ ५२
ददौ तस्मै स्वकवचं स्वशूलमरिमर्द्दनम् ।
प्रापय्य दानवस्थानमत्यूर्द्ध्वञ्च निराश्रयम् ॥ ५३
मया दत्तेन शूलेन जघान त्रिपुरं हरः ।
मामेव दर्पहन्तारं तुष्टाव व्रीडितः पुनः ॥ ५४
सद्यः पपात दैत्येन्द्रश्चूर्णीभूतश्च भूतले ।
देवता मुनयः सर्व्वे तुष्टुवुः शङ्करं मुदा ॥ ५५
तत्याज शङ्करो दर्पं विघ्नवीजं ततो विभुः ।
ज्ञानानन्दस्वरूपश्च निर्लिप्तः सर्व्वकर्म्मसु ॥ ५६
ततोऽहं वृषरूपेण वहामि तेन तं प्रियम् ।
मम प्रियतमो नास्ति त्रैलोक्येषु शिवात् परः ॥ ५७
मनःस्वरूपो ब्रह्मा मे ज्ञानरूपो महेश्वरः ।
बुद्धिर्भगवती दुर्गा मूलप्रकृतिरीश्वरी ॥ ५८
निद्रादयः शक्तयो यास्ताः सर्व्वाः प्रकृतेः कलाः ।
वागधिष्ठातृदेवी या सा स्वयञ्च सरस्वती ॥ ५९
मम कल्याणाधिदेवो हर्षरूपो गणेश्वरः ।
परमार्थः स्वयं धर्म्मो मम तेजो हुताशनः ॥ ६०
सर्व्वैश्वर्य्याधिदेवी मे सर्व्वस्था कमलालया ।
प्राणाधिष्ठातृदेवी त्वं सदा प्राणाधिका मम ॥ ६१
गोपाङ्गनास्तव कला अतएव मम प्रियाः ।
मल्लोमकूपजा गोपाः सर्व्वे गोलोकवासिनः ॥ ६२
तेजःस्वरूपः सूर्य्यश्च प्राणा मे वायवः स्मृताः ।
जलाधिदेवो वरुणः पृथिवी मे मलोद्भवा ॥ ६३
मम शून्यं महाकाशो मदनो मानसोद्भवः ।
इन्द्रादयः सुराः सर्व्वे मत्कलांशांशसम्भवाः ॥ ६४
एतानि सृष्टिवीजानि महदादीनि चैव हि ।
सर्व्वेषां वीजरूपोऽहं स्वयमात्मा निराश्रयः ॥ ६५
जीवो मे प्रतिविम्बश्च कर्म्मभोगाधिकारकः ।
अहं साक्षी निरीहश्च न भोगी सर्व्वकर्म्मसु ॥ ६६
भक्तध्यानाय देहोऽयं मम स्वेच्छामयस्य च ।
प्रकृतिः पुरुषोऽहञ्च एक एव परात्परः ।
इत्येवं कथितं राधे शिवदर्पविमोचनम् ॥ ६७

नारायण उवाच ।

इत्युक्तवन्तं श्रीकृष्णं परमात्मानमीश्वरम् ।
पप्रच्छ राधिका देवी निगूढ़मभिवाञ्छितम् ॥ ६८

राधिकोवाच ।

भगवन् सर्व्वतत्त्वज्ञ सर्व्ववीज सनातन ।
वद मे वाञ्छितं प्रश्नं सर्व्वसन्देहभञ्जन ॥ ६९
सर्व्वज्ञानाधिदेवश्च शङ्करः सर्व्वतत्त्ववित् ।
मृत्युञ्जयः कालकालो भगवांस्त्वत्समो महान् ॥ ७०
कथं विभूतिगात्रश्च पञ्चवक्त्रस्त्रिलोचनः ।
दिगम्बरो जटाधारी नागसङ्घविभूषणः ॥ ७१
वृषेणाटति देवेन्द्रो विहाय वरवाहनम् ।
न विभर्त्ति कथं रत्न-सारनिर्म्माणभूषणम् ॥ ७२
वह्निशुद्धांशुकं त्यक्त्वा धत्ते शार्द्दूलचर्म्मकम् ।
धत्ते धुस्तूरकुसुमं पारिजातं विहाय च ॥ ७३
नास्ति रत्नकिरीटेच्छा जटायां प्रीतिरुत्तमा ।
दिव्यलोकं परित्यज्य श्मशानेषु स्पृहा विभोः ॥ ७४
चन्दनागुरुकस्तूरी-सिन्दूरकुसुमानि च ।
त्यक्त्वा स्पृहा विल्वपत्रे विल्वकाष्ठानुलेपने ॥ ७५
एतद्वेदितुमिच्छामि व्यासेन कथय प्रभो ।
श्रोतुं कौतूहलं नाथ वर्द्धते मे मनःस्पृहा ॥ ७६
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः ।
कथां कथितुमारेभे कृत्वा राधां स्ववक्षसि ॥ ७७

श्रीकृष्ण उवाच ।

युगषष्टिसहस्राणि तपः कृत्वा महेश्वरः ।
विरराम पूर्णतमो ध्यात्वा मां मनसा मुदा ॥ ७८
एतस्मिन्नन्तरे माञ्च ददर्श पुरतः स्थितम् ।
अतीव कमनीयाङ्गं किशोरं श्यामसुन्दरम् ॥ ७९
अहोऽनिर्व्वचनीयञ्च दृष्ट्वा रूपमनुत्तमम् ।
न बभूव वितृप्तिश्च लोचनाभ्यां त्रिलोचनः ॥ ८०
पश्यन् निमेषरहित इति मत्वा स्वमानसे ।
भक्त्युद्रेकान्महाभक्तो रुरोद प्रेमविह्वलः ॥ ८१
सहस्रवदनोऽनन्तो भाग्यवांश्च चतुर्म्मुखः ।
बहुभिर्लोचनैर्दृष्ट्वा तुष्टाव बहुभिर्मुखैः ॥ ८२
पश्यामि किं वा किं स्तौमि सम्प्राप्य नाथमीदृशम् ।
आस्यैकेन लोचनाभ्यां चतुर्द्धा स पुनः पुनः ॥ ८३

स्वमानसे कुर्व्वतीदं शङ्करे च तपस्विनि।
तद्बभूव चतुर्व्वक्त्रं पूर्व्वेण सह पञ्चमम्॥ ८४
एकैकवक्त्रं शुशुभे लोचनैश्च त्रिभिस्त्रिभिः।
बभूव तेन तन्नाम पञ्चवक्त्रस्त्रिलोचनः॥ ८५
स्तवनाद्धिकप्रीतिः शिवस्य दर्शने मम।
तेनाधिकानि तस्यैव बभूवुर्लोचनानि च॥ ८६
चक्षूंषि गुणरूपाणि तस्य ब्रह्मस्वरूपिणः।
सत्त्वं रजस्तम इति तस्य हेतुं निशामय॥ ८७
सत्त्वांशेन दृशा शम्भुः पश्यन् पाति च सात्त्विकान्।
राजसेन राजसिकान् तामसेन च तामसान्॥ ८८
चक्षुषस्तामसात् पश्चाल्ललाटस्थाद्धरस्य च।
संहारकाले संहर्त्तुमग्निराविर्भवेत् क्रुधा॥ ८९
कोटितालप्रमाणश्च सूर्य्यकोटिसमप्रभः।
लेलिहानो दीर्घशिखस्त्रैलोक्यं दग्धुमीश्वरः॥ ९०
विभूतिगात्रः स विभुः सतीसत्कारभस्मना।
धत्ते तस्या अस्थिमालां प्रेमभावेण भस्म च॥ ९१
आत्मारामो यद्यपीशस्तथापि पूर्णमङ्कम्।
सतीशवं गृहीत्वा च भ्रामं भ्रामं (क) सरोद च॥ ९२
प्रत्यङ्गाङ्गञ्च तस्याश्च पपात यत्र यत्र च।
सिद्धपीठस्तत्र तत्र बभूव मन्त्रसिद्धिकृत्॥ ९३
तदा शवावशेषञ्च कृत्वा वक्षसि शङ्करः।
पपात मूर्च्छितो भूत्वा सिद्धक्षेत्रे च राधिके॥ ९४
तदा गत्वा महेशं तं कृत्वा क्रोडे प्रबोध्य च।
अददां दिव्यतत्त्वञ्च तस्मै शोकहरं परम्॥ ९५
तदा शिवश्च सन्तुष्टः स्वलोकञ्च जगाम ह।
सूर्य्यन्तरेण कालेन तां स प्राप प्रियां सतीम्॥ ९६
दिग्वस्त्रधारी योगेन नेच्छा तस्यापरे विभोः।
जटास्तपस्याकालीना धत्तेऽद्यापि विवेकतः॥ ९७
न चेच्छा केशसंस्कारे स्वाङ्गवेशे च योगिनः।
समता चन्दने पङ्के लोष्ट्रे रत्ने मणीश्वरे॥ ९८
गरुडद्वेषिणो नागाः शङ्करं शरणं ययुः।
बिभर्त्ति कृपया स्वाङ्गे तानेव शरणागतान्॥ ९९
वाहनं वृषरूपोऽहमन्यस्तं वोढुमक्षमः।
त्रिपुरस्य वधे पूर्व्वं मत्कलांशसमुद्भवः॥ १००
पारिजातादिकं पुष्पं सुगन्धि चन्दनादिकम्।
मयि संन्यस्य तेनैव प्रीतिर्नास्ति कदाचन॥ १०१

(क) भ्रामं भ्राममिति पाठः क्वचित्।

धुस्तूरे तत् सदा प्रीतिर्बिल्वपत्रेऽनुलेपने।
गन्धहीने प्रसूने च योगेष्टे व्याघ्रचर्म्मणि॥ १०२
दिव्यलोके दिव्यतल्पे जनतायां न तन्मनः।
श्मशानेऽतीवरहसि ध्यायते मामहर्निशम्॥ १०३
आब्रह्मतृणपर्य्यन्तं स्वप्नवन्मन्यते शिवः।
ममानिर्व्वचनीयेऽत्र रूपे तन्मग्नमानसम्॥ १०४
ब्रह्मणः पतने नापि शूलपाणेः क्षयो भवेत्।
तस्यायुषः प्रमाणञ्च नाहं जानामि का श्रुतिः॥१०५
ज्ञानं मृत्युञ्जयं शूलमदधात् तेजसा समम्।
विना मया न कश्चित् तं शङ्करं जेतुमीश्वरः॥१०६
शङ्करः परमात्मा मे प्राणेभ्योऽपि परः शिवः।
त्र्यम्बके मन्मनः शश्वन्न प्रियो मे भवात् परः॥१०७
ब्रह्माण्डनिकराच्छन्नं मायया च मदीयया।
शाक्तं पतिरहं शश्वत् सा च तं मोहितुं क्षमा॥१०८
न संवसामि गोलोके वैकुण्ठे तव वक्षसि।
सदा शिवस्य हृदये निबद्धः प्रेमपाशतः॥ १०९
स्वरसं किं सुतालेन पञ्चवक्त्रेण शङ्करः।
शश्वद्गायति मन्नाम्नां तेनाहं तत्समीपतः॥ ११०
स्रष्टुं शक्तो हि नष्टुञ्च भ्रूभङ्गलीलयापि यः।
ब्रह्माण्डनिकरं योगान्न योगी शङ्करात् परः॥ १११
दिव्यज्ञानेन यः स्रष्टुं नष्टुं भ्रूभङ्गलीलया।
मृत्युकालादिकं शक्तो न ज्ञानी शङ्करात् परः॥११२
पञ्चवक्त्रेण मन्नाम यशो गायत्यहर्निशम्।
मद्रूपं ध्यायते शश्वन्न भक्तः शङ्करात् परः॥ ११३
अहं सुदर्शनं शम्भुस्तेजसा सर्व्वतः समाः।
ब्रह्मा स्रष्टा च योगेन नास्माभिस्तेजसा समः॥११४
इत्येतत् कथितं सर्व्वं शङ्करस्य यशोऽमलम्।
तथाप्यस्य दर्पभङ्गः किं भूयः श्रोतुमिच्छसि॥ ११५

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे षट्त्रिंशोऽध्यायः॥ ३६॥

---

## सप्तत्रिंशोऽध्यायः।

राधिकोवाच।

एवम्भूतस्य च विभोः सर्व्वेशस्य महात्मनः।
न शस्तं कथमुच्छिष्टं ब्रूहि सन्देहभञ्जन॥ १

श्रीकृष्ण उवाच।

शृणु देवि प्रवक्ष्येऽहमितिहासं पुरातनम्।
पापेन्धनानां दहने ज्वलदग्निशिखोपमम्॥ २
सनत्कुमारो वैकुण्ठमेकदा च जगाम ह।
ददर्श भुक्तवन्तञ्च नाथं नारायणं द्विजः॥ ३
तुष्टाव गूढैः स्तोत्रैश्च प्रणम्य भक्तितो मुदा।
अवशेषं ददौ तस्मै सन्तुष्टो भक्तवत्सलः॥ ४
प्राप्तिमात्रेण तत्रैव भुक्तं तेनैव किञ्चन।
किञ्चिद्ररक्ष बन्धूनां भक्षणाय च दुर्लभम्॥ ५
सिद्धाश्रमे च यद्दत्तं गुरवे शूलपाणिने।
भक्त्युद्रेकाच्च तत् सर्व्वं भुक्तञ्च प्राप्तिमात्रतः॥ ६
भुक्त्वा सुदुर्लभं वस्तु ननर्त्त प्रेमविह्वलः।
पुलकाञ्चितसर्व्वाङ्गः साश्रुनेत्रो मुदान्वितः॥ ७
गायन् मम गुणान् भक्त्या सुकण्ठः पञ्चवक्त्रतः।
रागभेदेन तालेन तालमानेन सुन्दरम्॥ ८
पपात डमरुं हस्ताच्छृङ्गञ्च व्याघ्रचर्म्म च।
स्वयं निपत्य पश्चाच्च रुदन् मूर्च्छामवाप ह॥ ९
अतीवकमनीयैतद्रूपध्यानैकमानसः।
सहस्रदलमध्यस्थं मां पश्यन् हृत्सरोरुहे॥ १०
एतस्मिन्नन्तरे देवी दुर्गा दुर्गतिनाशिनी।
मुदाजगाम शीघ्रं तत्प्रसन्नवदनेक्षणा॥ ११
रुदन्तं मूर्च्छितं दृष्ट्वा निपतन्तञ्च भक्तितः।
प्रहस्य वार्त्तां पप्रच्छ कुमारं शूलपाणिनः॥ १२
सर्व्वं तां कथयामास कुमारः सम्पुटाञ्जलिः।
श्रुत्वा चुकोप सा देवी शिवं प्रस्फुरिताधरा॥ १३
तां शप्तुमुद्यतां देवीमुत्थाय च त्रिलोचनः।
बोधयामास विविधं तुष्टाव सम्पुटाञ्जलिः॥ १४
श्रुत्वा मनोहरं स्तोत्रं न शशाप शिवं शिवा।
दुष्टं चक्रे तदुच्छिष्टमभक्ष्यं विदुषामपि॥ १५
न लोकानां प्रभावश्च तपः सौभाग्यचेतसाम्।
ब्रह्माण्डे सर्व्वसंहर्त्ता चकम्पे पार्व्वतीभयात्॥ १६
उवाच तं जगन्माता नीतिसारं परं वचः।
गुणप्रसूः सकोपा च रक्तपङ्कजलोचना॥ १७

पार्व्वत्युवाच।

अहो तपःप्रभावश्च तेजसश्च न जीविनाम्।
स ब्रह्माण्डस्य संहर्त्ता चकम्पे शैलकन्यकाम्॥ १८
त्वं पोष्टा जगतां पाता ममैव च विशेषतः।
वक्ता वेदस्य वेदानां जनकश्च स्वयं विभुः॥ १९
मुक्तिप्रदाता भक्तानां दाता च सर्व्वसम्पदाम्।
लच्चेत् करोषि दुर्नीतिं को वा धर्म्मञ्च पाति वै॥ २०
सदा तवैव पाल्याहं पोष्या भक्ता च किङ्करी।
वञ्चिता कर्म्मदोषेण हरिनिर्म्माल्यभक्षणे॥ २१
किञ्चिच्छुचञ्च मूल्येन किञ्चिदस्तु च वायुना।
किञ्चित् प्रक्षालनेनैव सर्व्वं विष्णोर्निवेदनात्॥ २२
विष्णोर्निवेदितान्नेन यष्टव्याः सर्व्वदेवताः।
पितरोऽतिथयश्चैवमिति वेदेषु विश्रुतम्॥ २३
अनैवेद्यमभक्ष्यञ्च नैवेद्यमुदरेऽहरेः।
नैवेद्यञ्च हरेरेव हरितुल्यं करोत्यहो॥ २४
यदृच्छया तन्नैवेद्यं यो भुङ्क्ते साधुसङ्गतः।
षष्टिवर्षसहस्राणां प्राप्नोति तपसां फलम्॥ २५
यो निवेद्य हरिं भुङ्क्ते भक्त्या भक्तश्च नित्यशः।
किं वा तपस्या सुतरां हरेः स तेजसा समः॥ २६
श्रुतं पुरा त्वन्मुखतः पुष्करे मुनिसंसदि।
स्वयं वेदविधाता त्वं किमहं वक्तुमीश्वरी॥ २७
सुचिरञ्च तपस्तप्त्वा मया लब्धस्त्वमीश्वरः।
त्वया विष्णोः प्रसादेन वञ्चिताहं कथं प्रभो॥ २८
यतो न दत्तं नैवेद्यं विष्णोर्मह्यं त्वयाधुना।
अतो मत्तो गृहाणैतत् फलमेव महेश्वर॥ २९
अद्यप्रभृति ये लोका नैवेद्यं भुञ्जते तव।
ते जन्मैकं सारमेया भविष्यन्त्येव भारते॥ ३०
इत्युक्त्वा पार्व्वती मानाद्रुरोद पुरतो विभोः।
दृष्टिः पपात तत्कण्ठे नीलकण्ठो बभूव सः॥ ३१
तदा शिवः शिवां भक्त्या कृत्वा वक्षसि सादरम्।
तन्मानभङ्गं स्तोत्रेण विनयेन चकार ह॥ ३२
करेण चक्षुषोर्नीरं सम्मृज्य च पुनः पुनः।
बोधयामास विविधैर्नीतिवाक्यैर्मनोहरैः॥ ३३
परितुष्टा च सा देवी भर्त्तारं समुवच च ह।
कलेवरञ्च त्यक्ष्यामि नैवेद्यञ्च विना हरेः॥ ३४
बिभर्म्मि देहं सततं तव सौभाग्यवर्द्धिनम्।
कथं वहामि सौभाग्यरहितञ्च कलेवरम्॥ ३५
अपूर्व्वं तव नैवेद्यं जन्म-मृत्यु-जरापहम्।
कृतं दुष्टं यतस्तस्मात् पश्य देहं त्यजामि च॥ ३६
लिङ्गोपरि च यद्दत्तं तदेव ग्राह्यमीश्वर।
सुपवित्रं भवेत् तत् तद्विष्णोर्नैवेद्यमिश्रितम्॥ ३७

इत्येवमुक्त्वा सा देवी देहं त्यक्तुं समुद्यता।
तस्यौ हरस्तत्पुरतः स्तुत्वा च स्तोचकार ह ॥ ३८

शङ्कर उवाच।

ममापराधमखिलं चन्तुमर्हसि सुन्दरि।
मां भर्त्यं तपसा क्रीतं कृपां कुरु कृपामयि ॥ ३९
ब्रह्म-विष्णु-महेशानां वीजभूते सनातनि।
स्थिरा भव महादेवि चण्डिके जगदम्बिके ॥ ४०
अहो गोलोकनाथस्य गुणातीतस्य निर्गुणे।
सर्व्वशक्तिस्वरूपे च सदैव सहचारिणि ॥ ४१
साकारे च निराकारे नित्ये स्वेच्छामयि प्रिये।
कृपया तद्विभोरेव मम वचसि साम्प्रतम् ॥ ४२
सर्व्ववीजस्वरूपे च महामाये मनोहरे।
सर्व्वसिद्धिप्रदे देवि मुक्तिदे कृष्णभक्तिदे ॥ ४३
नैवेद्यं श्रीहरेः साचान्नाहं दातुमपि चमः।
तदाद्य मां परित्यज्य निर्गुणं व्रज निर्गुणे ॥ ४४
इत्येवमुक्त्वा पुरतस्तस्थौ च चन्द्रशेखरः।
बभूव सुप्रसन्ना सा प्रणनाम हरं परम् ॥ ३५
इत्येवं पार्व्वतीस्तोत्रं शङ्करेण कृतं पुरा।
यः पठेद्विपद्ग्रस्तः स भयादेव मुच्यते ॥ ४६
मित्रभेदो भवेद्दूरं तत्सम्प्रीतिर्भवेत् परा।
पार्व्वती परितुष्टा च न त्यजेत् तस्य मन्दिरम् ॥४७
इति श्रीब्रह्मवैवर्त्ते शिवकृतं पार्व्वतीस्तोत्रं समाप्तम्।

श्रीकृष्ण उवाच।

श्रुत्वा प्रतिज्ञां नाथस्य परितुष्टा बभूव सा।
जगाम स्वर्णदीं तूर्णं स्नानार्थं शङ्कराज्ञया ॥ ४८
स्नात्वा सम्पूज्य भक्त्या च सुरमिष्टञ्च निर्गुणम्।
चकार प्रस्तुतं शीघ्रं मिष्टान्नं व्यञ्जनानि च ॥ ४९
शिवः स्नात्वा च सम्पूज्य ब्रह्मज्योतिः सनातनम्।
तुष्टाव परया भक्त्या मामेव हृदयस्थितम् ॥ ५०
गत्वा सर्व्वमहं त्यक्त्वा तस्मै दत्त्वाभिवाञ्छितम्।
नैवेद्यं पार्व्वती लेभे तस्मूलं समागता ॥ ५१
भुक्त्वावशेषं सा देवी सह भर्त्रा मुदान्विता।
तुष्टाव शङ्करं भक्त्या प्रणनाम मुहुर्मुहुः ॥ ५२
इत्येवं कथितं सर्व्वं त्वया पृष्टं सुरेश्वरि।
अभिशप्तं शङ्करस्य निर्म्माल्यं येन हेतुना ॥ ५३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः।

श्रीकृष्ण उवाच।

दर्पभङ्गः श्रुतो देवि शङ्करस्य जगद्गुरोः।
अधुना श्रूयतां मत्तो दुर्गादर्पविमोचनम् ॥ १
तेजसा सर्व्वदेवानामाविर्भूय जगत्प्रसूः।
दधार कामिनीरूपं कमनीयं मनोहरम् ॥ २
निहत्य दानवेन्द्रांश्च ररच देवताकुलम्।
लेभे जन्म ततो देवी जठरे दचयोषितः ॥ ३
पिनाकपाणिं जग्राह सा देवी सुरसाधनम्।
शश्वत् परमभक्त्या च सिषिवे स्वामिनं सती ॥ ४
दचेण सार्द्धं देवेन बभूव शिवशत्रुता।
निरर्थकं विभेर्यागे पुरेव सुरसंसदि ॥ ५
दचश्चकार यज्ञञ्च तत आगत्य कोपतः।
सर्व्वांश्च ज्ञापयामास तत्रैव शङ्करं विना ॥ ६
सस्त्रीका देवताः सर्व्वा आजग्मुर्दचमन्दिरम्।
सगणः शङ्करः कोपान्नाजगामाभिमानतः ॥ ७
सती पतिञ्च मोहेन बोधयामास यत्नतः।
न तं चालयितुं शक्ता बभूव चञ्चला स्वयम् ॥ ८
आजगाम पितुर्गेहं दर्पात् तस्य विनाज्ञया।
तस्य शापेन तस्याश्च दर्पभङ्गो बभूव ह ॥ ९
न हि सम्भाषणं चक्रे वाक्यालेण पिता च ताम्।
श्रुत्वातिनिन्दां भर्त्तुश्च देहं तत्याज मानतः ॥ १०
एवं प्रिये निगदितं सतीदर्पविमोचनम्।
तस्या जन्मान्तरे नित्यं दर्पभङ्गश्च श्रूयताम् ॥ ११
लेभे जन्म सती शीघ्रं जठरे शैलयोषितः।
शिवस्तस्याश्रिताभस्म चास्थि जग्राह भक्तितः ॥ १२
चकार मालामस्थ्ना च भस्मना तनुलेपनम्।
स्मारं स्मारं सतीं प्रेम्णा भ्रामं भ्रामं पुनः पुनः ॥१३
सुषाव मेना तां देवीमतीव सुमनोहराम्।
सृष्टौ विधातुस्तस्याश्च नोपमास्ति कदाचन ॥ १४
गुणप्रसूर्गुणान् सर्व्वान् सर्व्वरूपं बिभर्त्ति सा।
सर्व्वाश्च देवपत्न्यस्तत्कलां नार्हन्ति षोडशीम् ॥१५
बभूव वर्द्धमाना सा शुक्ले चन्द्रकला यथा।
अतीव यौवनस्था च शैलगेहे दिने दिने ॥ १६
बभूवाकाशवाणी च तां सम्बोध्य जगत्प्रसूम्।
शिवे शिवञ्च तपसा कठोरेण लभेति च ॥ १७

विनेश्वरं न तपसा प्राप्ता हि गर्भसम्भवा।
प्रहस्य तस्थौ श्रुत्वेति सा च यौवनगर्व्विता॥ १८
मम जन्मान्तरीयाञ्च भस्मास्थि च विभर्त्ति यः।
स मां प्रौढ़ां कथं दृष्ट्वा न गृह्णात्यत्र जन्मनि॥ १९
यो विदग्धश्च ब्रह्माण्डं बभ्राम मम शोकतः।
स कथं मां न गृह्णाति दृष्ट्वा परमसुन्दरीम्॥ २०
दक्षयज्ञं यो बभञ्ज मम हेतोः कृपानिधिः।
स कथं मां न गृह्णाति पत्नीं जन्मनि जन्मनि॥ २१
या यस्य पत्नी यो यस्या भर्त्ता प्राक्तनतः पुरा।
दातुर्विश्वे तयोर्भेदो निषिक्तो नान्यथा भवेत्॥ २२
सर्व्वरूपगुणाधारं मत्वा स्वमभिमानतः।
न चकार तपः साध्वी न विज्ञाय तमीश्वरम्॥२३
सुन्दरीषु च सर्व्वासु मत्तो नास्त्येव सुन्दरी।
इदीति मत्वा गर्व्वेण न चकार तपः शिवा॥ २४
रूप-यौवन-वेशानां पुमान् प्राचीति योषिताम्।
शिवो मत्कृतिमात्रेण मां गृह्णाति विना तपः॥२५
इदीति मत्वा गिरिजा तस्थौ हिमगिरेर्गृहे।
शश्वत् सहचरीमध्ये क्रीड़ोन्मत्ता दिवानिशम्॥२६
एतस्मिन्नन्तरे तूर्णं दूतः शैलेन्द्रसंसदि।
उवाचागत्य मधुरं तत्पुरः सम्पुटाञ्जलिः॥ २७

दूत उवाच।

उत्तिष्ठोत्तिष्ठ शैलेन्द्र गच्छाद्यसवटान्तिकम्।
आजगाम महादेवः सगणो वृषवाहनः॥ २८
मधुपर्कादिकं दत्त्वा भक्तिनम्रात्मकन्धरः।
पूजनं कुरु शैलेन्द्र देवेन्द्रं तमतीन्द्रियम्॥ २९
सिद्धिस्वरूपं सिद्धेशं योगीन्द्राणां गुरोर्गुरुम्।
मृत्युञ्जयं कालकालं ब्रह्मज्योतिः सनातनम्॥ ३०
परमात्मस्वरूपञ्च सगुणं निर्गुणं विभुम्।
भक्तध्यानार्थममलं दधानं देहमीश्वरम्॥ ३१
शैलो दूतवचः श्रुत्वा समुत्तस्थौ मुदान्वितः।
मधुपर्कादिकं नीत्वा जगाम शङ्करान्तिकम्॥ ३२
देवी दूतवचः श्रुत्वा प्रसन्नवदनेक्षणा।
इदीति मेने मद्धेतोराजगाम महेश्वरः॥ ३३
चकार वेशमतुलं दधार वस्त्रमुत्तमम्।
रत्नेन्द्रसारालङ्कारं रत्नमालां मनोहराम्॥ ३४
पारिजातप्रसूनानां मालां चन्दनसंयुताम्।
चकार शङ्करार्थञ्च कृत्वा नाना मनोरथम्॥ ३५
रत्नसिंहासनस्था च ददर्श दर्पणे मुखम्।
कस्तूरीबिन्दुना सार्द्धं सिन्दूरबिन्दुभूषितम्॥ ३६
आरक्तनेत्रयुगलं निर्म्मलाञ्जनशोभितम्।
शरन्मध्याह्नकमलं यथालिपङ्क्तिवेष्टितम्॥ ३७
सुकोमलौष्ठयुगलं ताम्बूलरागसंयुतम्।
अतीव सुन्दरं रम्यं पक्वबिम्बफलं यथा॥ ३८
रत्नकुण्डलदीप्त्या च गण्डस्थलविराजितम्।
सूर्य्योदयेन ज्वलितं सुमेरुशिखरं यथा॥ ३९
अत्यनिर्व्वचनीयञ्च दन्तपङ्क्तिमनोहरम्।
यथा मुक्तासमूहश्च सजलो जलदागमे॥ ४०
गजमुक्तासमायुक्त-सुचारुनासिकोन्नतम्।
सुशोभितं यथा मेरुः स्वर्णदीजलधारया॥ ४१
मालतीमाल्यसंयुक्त-कवरीभारसुन्दरम्।
बकपङ्क्तिसुशोभाढ्य-नवीनजलदं यथा॥ ४२
तप्तकाञ्चनवर्णाभं चारु वक्षःस्थलोज्ज्वलम्।
रत्नेन्द्रसारहारात्तं स्वर्णदीजलधारया॥ ४३
चारुचम्पकवर्णाभं स्तनयुग्मं मनोहरम्।
बदरीफलतुल्यञ्च चारुपत्रकशोभितम्॥ ४४
मध्यं मनोहरं क्षीणं निम्ननाभिस्थलोज्ज्वलम्।
अतीव सुन्दरं रम्यमुदरं वर्त्तुलाकृतम्॥ ४५
रम्भास्तम्भविनिन्द्येक-मूरुयुग्मं मनोहरम्।
कामालयं सुकठिनं निगूढ़मंशुकेन च॥ ४६
स्थलपद्मप्रभामुष्ट-पदयुग्मं मनोहरम्।
रत्नपाशकसंयुक्तं स्निग्धालक्तविभूषितम्॥ ४७
दधतं रत्नमञ्जीरं राजहंसानुकारि च।
रत्नेन्द्रसाराभरणं निर्म्मितं विश्वकर्म्मणा॥ ४८
करं सुकोमलतरं सुन्दरं कनकप्रभम्।
रत्नकङ्कणकेयूर-शङ्खभूषणभूषितम्॥ ४९
बिभ्रत् सद्रत्नमुकुटं लीलाकमलमुज्ज्वलम्
रत्नाङ्गुरीयमतुलं दधतं सुमनोहरम्॥ ५
दृष्ट्वा सुरूपमतुलं दध्यौ शङ्करमीश्वरम्।
विशिश्य मनसा शश्वच्छम्भुश्चरणपङ्कजम्॥ ५१
पितरं मातरं बन्धुं साध्वीवर्गं सहोदरम्।
अन्तरे सा न सस्मार किञ्चिदेव शिवं विना॥५२
अथ शैलेश्वरस्तत्र ददर्श चन्द्रशेखरम्।
स्वर्णदीपुलिनाद्रम्यादागतात्यन्तरञ्जितम्॥ ५३
दधतं संस्कृतां मालां जपन्तं मम नामकम्।

तप्तस्वर्णप्रभामुष्ट-जटाराजिविराजितम् ॥ ५४
वृषभस्थं शूलहस्तं सर्पभूषणभूषितम् ।
शुद्धस्फटिकसङ्काशं व्याघ्रचर्म्मधरं परम् ॥ ५५
विभूतिभूषिताङ्गञ्च अस्थिमालं दिगम्बरम् ।
पञ्चवक्त्रं त्रिनयनं सूर्य्यकोटिसमप्रभम् ॥ ५६
ददर्श रुद्रान् परितो ज्वलतो ब्रह्मतेजसा ।
शिववामे महाकालं दक्षिणे नन्दिकेश्वरम् ॥ ५७
भूत-प्रेत-पिशाचांश्च कुष्माण्डान् ब्रह्मराक्षसान् ।
वेतालान् क्षेत्रपालांश्च भैरवान् भीमविक्रमान् ॥ ५८
सनकञ्च सनन्दञ्च कुमारञ्च सनातनम् ।
जैगीषव्यं देवलञ्च कणादं गौतमं तथा ॥ ५९
पिप्पलादमापिशाङ्गं वोढुं पञ्चशिखं कचम् ।
जावालिं करथं कण्वं लोमशं सूर्य्यवर्च्चसम् ॥ ६०
कात्यायनं पाणिनिञ्च शङ्खं दुर्व्वाससं ततः ।
शातातपं पारिभद्रमष्टावक्रं महाद्भुतम् ॥ ६१
एतान् पुरोगमान् नत्वा प्रणनाम शिवं गिरिः ।
मूर्द्ध्ना निपत्य भूमौ स दण्डवत् सम्पुटाञ्जलिः ॥ ६२
अथोत्थाय तथा भक्त्या धृत्वा तच्चरणाम्बुजम् ।
ननाम श्वदश्रुनेत्रः पुलकाञ्चितविग्रहः ॥ ६३
धर्म्मदत्तेन स्तोत्रेण तुष्टाव परमेश्वरम् ।
इष्टो ब्राह्मे दिनेऽतीते पुष्करे सूर्य्यपर्व्वणि ॥ ६४

हिमालय उवाच ।

त्वं ब्रह्मा सृष्टिकर्त्ता च त्वं विष्णुः परिपालकः ।
त्वं शिवः शिवदातान्ते सर्व्वसंहारकारकः ॥ ६५
त्वमीश्वरो गुणातीतो ज्योतीरूपः सनातनः ।
प्रकृतिः प्रकृतांशश्च प्राकृतः प्रकृतेः परः ॥ ६६
नानारूपविधाता त्वं भक्तानां ध्यानहेतवे ।
येषु रूपेषु यत्प्रीतिस्तद्रूपञ्च बिभर्षि च ॥ ६७
सूर्य्यस्त्वं सृष्टिजनक आधारः सर्व्वतेजसाम् ।
सोमस्त्वं शस्यपाता च सततं शीतरश्मिना ॥ ६८
वायुस्त्वं वरुणस्त्वञ्च त्वमग्निः सर्व्वदाहकः ।
इन्द्रस्त्वं देवराजश्च काले मृत्युर्यमस्तथा ॥ ६९
मृत्युञ्जयो मृत्युमृत्युः कालकालो यमान्तकः ।
वेदस्त्वं वेदकर्त्ता च वेदवेदाङ्गपारगः ॥ ७०
विदुषां जनकस्त्वञ्च विद्वांश्च विदुषां गुरुः ।
मन्त्रस्त्वं हि जपस्त्वञ्च तपस्त्वं तत्फलप्रदः ॥ ७१
वाक् त्वं वागधिदेवी त्वं तत्कर्त्ता तद्गुरुः स्वयम् ।
अहो सरस्वतीवीजं कस्त्वां स्तोतुमिहेश्वरः ॥ ७२
इत्येवमुक्त्वा शैलेन्द्रस्तस्थौ धृत्वा पदाम्बुजम् ।
तत्रोवास तं प्रबोध्य स चारुह्य वृषं शिवः ॥ ७३
स्तोत्रमेतन्महापुण्यं त्रिसन्ध्यं यः पठेन्नरः ।
मुच्यते सर्व्वपापेभ्यो भयेभ्यश्च भवार्णवे ७४
अपुत्रो लभते पुत्रं मासमेकं पठेद्यदि ।
भार्य्याहीनो लभेद्भार्य्यां सुशीलां सुमनोहराम् ॥ ७५
चिरकालहृतं वस्तु लभते सहसा ध्रुवम् ।
राज्यभ्रष्टो लभेद्राज्यं शङ्करस्य प्रसादतः ॥ ७२
कारागारे श्मशाने च शत्रुग्रस्तेऽतिसङ्कटे ।
गभीरेऽतिजलाकीर्णे भग्नपोते विषादने ॥ ७७
रणमध्ये महाभीते हिंस्रजन्तुसमन्विते ।
सर्व्वतो मुच्यते स्तुत्वा शङ्करस्य प्रसादतः ॥ ७८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशोऽध्यायः ।

श्रीकृष्ण उवाच ।

इति स्तुत्वा हिमगिरिवसतः शङ्करस्य च ।
उवास पुरतो दूरे लब्धाज्ञः सर्व्वसम्मतः ॥ १
मधुपर्कादिकं तस्मै प्रददौ भक्तिपूर्व्वकम् ।
मुनीन् सम्पूजयामास तत्र शङ्करपार्षदान् ॥ २
अद्रिणा च समागत्य मेनका च गणैः सह ।
ददर्श वटमूलस्थं शङ्करं चन्द्रशेखरम् ॥ ३
ईषद्धास्यप्रसन्नास्यं वसन्तं व्याघ्रचर्म्मणि ।
मध्ये मुनिगणानाञ्च ज्वलन्तं ब्रह्मतेजसा ॥ ४
यथाकाशे तारकाणां द्विजराजं विराजितम् ।
परमाह्लादकं रूपं कन्दर्पकोटिसन्निभम् ॥ ५
विहाय वार्द्धकावस्थां दधतं नवयौवनम् ।
अतीव सुन्दरं रम्यं चित्तचौरञ्च योषिताम् ॥ ६
कामं कामातुराणाञ्च सतीनाञ्च सुतं यथा ।
वैष्णवानां महाविष्णुं शैवानाञ्च सदाशिवम् ।
शक्तिस्वरूपं शाक्तानां सौराणां सूर्य्यरूपिणम् ॥ ७
कालस्वरूपं दुष्टानां शिष्टानां परिपालकम् ।
कालकालं यमयमं मृत्योर्मृत्युं भयानकम् ॥ ८

व्याघ्रचर्म्म चारुवस्त्रं बभूव भस्म चन्दनम्।
सर्पाः सुन्दरमाल्यानि कस्तूरी सा विषप्रभा॥ ९
जटा सुललिता चूड़ा चन्द्रस्तिलकचन्दनम्।
सुचार्व्वी मालतीमाला गङ्गाधारा मनोहरा॥ १०
अस्थिमाला रत्नमाला धुस्तूरं चारुचम्पकम्।
एकीभूतं पञ्चवक्त्रं नेत्रयुग्माब्जशोभितम्॥ ११
शरत्पार्व्वणचन्द्राभं प्रच्छाद्य दीप्तमुत्तमम्।
बन्धुजीवविनिन्द्येकमोष्ठाधरमनोहरम्॥ १२
श्वेताश्वेन्द्रो वृषेशश्च भूताद्या नर्त्तका इव।
सदा व्यतिक्रमं सर्व्वं महेशस्य महेश्वरि॥ १३
दृष्ट्वैवं शिवरूपञ्च मेना तुष्टा बभूव ह॥ १४
काश्चिन्निमेषरहिताः कामेन पुलकान्विताः।
अतिकामातुराः सद्यः प्रापुर्मूर्च्छाञ्च काश्चन॥ १५
काश्चिद्विनिन्द्य कान्तांश्च प्रशंसन्ति महेश्वरम्।
मनोरथेन मनसा स्त्रियः श्लिष्यन्ति काश्चन॥ १६
काश्चिन्मानसिकं कामात् कुर्व्वन्ति चुम्बनं मुदा।
ध्रुवं कामं करिष्यामो वयञ्च कामसागरे॥ १७
अस्माकमेवं भर्त्ता च परत्रैव यतो भवेत्।
इहैवैकं करिष्यामो वयं कान्तं रतौ रतम्।
कृत्वा तपस्यां सुचिरमिति जल्पन्ति काश्चन॥ १८
काश्चिद्दृष्ट्वा शिवं किञ्चिन्मुखमाच्छाद्य वाससा।
सस्मिता वक्रनयनाः पश्यन्त्येवं पुनः पुनः॥ १९
वयं गृहं न यास्यामो यास्यामः शिवसन्निधिम्।
शरत्सुधांशु वदनं द्रक्ष्यामोऽहर्निशं मुदा॥ २०
संसारं न करिष्यामः प्रवेक्ष्यामो हुताशनम्।
भविता नः शिवः स्वामीत्येवं कृत्वा हि कामनाम्॥ २१
अहो पुण्यवती दुर्गा श्लाघ्यं तज्जन्म भारते।
दुर्गां प्रस्थापयामासुः सेवायै शिवसन्निधिम्॥ २२
पार्व्वती सखिभिः सार्द्धं वेशं कृत्वा मनोहरम्।
भावानुरक्ता हावेन जगाम शिवसन्निधिम्॥ २३
दृष्ट्वा शिवा शिवं शान्तं प्रसन्नवदनेक्षणम्।
सप्तप्रदक्षिणां कृत्वा सस्मिता प्रणनाम सा॥ २४
अनन्यभाजं गुणिनममरं ज्ञानिनां वरम्।
सुन्दरं लभ भर्त्तारं सुन्दरीत्याशिषं ददौ॥ २५
भविता तव सौभाग्यं शुभे स्वामिनि सन्ततम्।
पुत्रस्ते भविता साध्वि नारायणसमो गुणैः॥ २६
भविता ते पुरा पूजा त्रैलोक्ये जगदम्बिके।
ब्रह्माण्डेषु च सर्व्वेषु सर्व्वेषाञ्च परा भव॥ २७
सप्तप्रदक्षिणीकृत्य यतो भक्त्या त्वया नताः।
सर्व्वजन्मनि तुष्टोऽहं तत्फलं लभ सुन्दरि॥ २८
तीर्थे कान्तेऽभीष्टदेवे गुरौ मन्त्रे तथौषधे।
आस्था च यादृशी यासां सिद्धिस्तासाञ्च तादृशी॥ २९
इत्युक्त्वा शङ्करस्तूर्णं ब्रह्मज्योतिःपरञ्च माम्।
दध्यौ योगासनं कृत्वा योगीशो व्याघ्रचर्म्मणि॥ ३०
प्रक्षाल्य चरणौ देवी पपौ तच्चरणोदकम्।
चकार मार्ज्जनं भक्त्या वह्निशौचेन वाससा॥ ३१
रत्नसिंहासनं रम्यं विश्वकर्म्मविनिर्म्मितम्।
अपूर्व्वकांस्यपात्रस्थं प्रददौ मधुरं मधु॥ ३२
अर्घ्यं मन्दाकिनी-तोयसंयुक्तं चरणे ददौ।
सुगन्धि चन्दनं चारु कस्तूरीकुङ्कुमान्वितम्॥ ३३
प्रददौ मालतीमालां गले गरलसुन्दरे।
भक्त्या पूजां चकाराथ पुष्पमुष्टिचतुष्टयैः॥ ३४
पीयूषपूर्णपात्रस्थं नैवेद्यं प्रददौ किल।
रत्नप्रदीपशतकं समन्ताद्धूपमुत्तमम्॥ ३५
त्रैलोक्यदुर्लभं वस्त्रं स्वर्णयज्ञोपवीतकम्।
सुगन्धि शीततोयञ्च पानार्थं पार्व्वती ददौ॥ ३६
अतीव सुन्दरं रम्यं रत्नसारेन्द्रभूषणम्।
दुर्लभां कामधेनुञ्च स्वर्णशृङ्गसमन्विताम्॥ ३७
स्नानीयं तीर्थतोयञ्च ताम्बूलञ्च मनोहरम्।
दत्त्वा षोड़शोपचारं प्रणनाम पुनः प्रभुम्॥ ३८
संपूज्य शूलिनं भक्त्या ययौ नित्यं पितुर्गृहम्।
शुश्रावाप्सरसां वक्त्राद्देवमिन्द्रो महेश्वरम्॥ ३९
श्रुत्वा वार्त्तां सुनासीरो ननर्त्त हर्षसंयुतः।
दूतद्वारा कामदेवमानिनाय त्वरान्वितः॥ ४०
इन्द्राज्ञया कामदेवः प्रजगामामरावतीम्।
तूर्णं प्रस्थापयामास तत्र यत्र शिवः शिवा॥ ४१
पञ्चशायकसंयुक्तो जगाम पञ्चशायकः।
प्रसन्नवदनः श्रीमान् यत्र शक्तियुतः शिवः॥ ४२
गत्वा ददर्श मदनः शिवायुक्तं शिवं प्रभुम्।
शान्तं त्रैलोक्यकान्तञ्च प्रसन्नवदनेक्षणम्॥ ४३
कामः स्थितोऽन्तरीक्षे च धृत्वा च सशरं धनुः।
चिक्षेपास्त्रं दुर्निवार्य्यममोघं शङ्करे मुदा॥ ४४
बभूवामोघमस्त्रञ्च मोघं तत् परमात्मनि।
आकाश इव निर्लक्ष्ये निर्लिप्ते सर्व्वसाक्षिणि॥ ४५

मोघीभूते च खास्त्रे च भयमापाथ मन्मथः।
चकम्पे पुरतः स्थित्वा दृष्ट्वा मृत्युञ्जयं विभुम्॥ ४६
सस्मार त्रिदशान् कामः शक्रादीन् भयविह्वलः।
आययुर्देवताः सर्व्वाः शम्भुं कोपेन कम्पितम्॥ ४७
चक्रुः स्तुतिञ्च स्तोत्रेण शङ्करं त्रिदशेश्वरम्।
कोपाग्निमुद्गिरन्तं तं कपाललोचनाद्धरो॥ ४८
स्तुतिं कुर्व्वत्सु देवेषु स वह्निः शम्भुसम्भवः।
जज्वालोर्द्ध्वशिखोद्दीप्तः प्रलयाग्निशिखोपमः॥ ४९
उत्पत्य गगने घूर्णन् निपत्य धरणीतले।
भ्रामं भ्रामञ्च परितः पपात मदनोपरि॥ ५०
बभूव भस्मसात् कामः चणेन हरकोपतः।
विषसा देवताः सर्व्वा नतवक्त्रा च पार्व्वती॥ ५१
विललाप बहुतरं हरस्य पुरतो रतिः।
तुष्टुवुर्देवताः सर्व्वाः कम्पिताश्चन्द्रशेखरम्॥ ५२
रतिमूचुः सुराः सर्व्वे रुरुदुश्च मुहुर्मुहुः।
किञ्चिद्भस्म गृहीत्वा च रक्ष मातर्भयं त्यज॥ ५३
वयं तं जीवयिष्यामो लभिष्यसि प्रियं पुनः।
हरकोपापनयने सुप्रसन्नदिनेऽपि च॥ ५४
दृष्ट्वा रतेर्विलापञ्च मूर्च्छां सम्प्राप पार्व्वती।
अतीन्द्रियं गुणातीतं तुष्टाव चन्द्रशेखरम्॥ ५५
रुदतीं पार्व्वतीं त्यक्त्वा स्वस्थानं प्रययौ शिवः।
सद्यो बभूव तत्रैव पार्व्वतीदर्पमोचनम्॥ ५६
रूपयौवनयोर्गर्व्वं तत्याज शैलकन्यका।
मुखं दर्शयितुं लज्जा बभूव च सखीगणान्॥ ५७
सुराश्च रतिमाश्वास्य सर्व्वे जग्मुः स्वमन्दिरम्।
प्रणम्य दण्डवद्रुद्रं शोकादुद्विग्नमानसाः॥ ५८
स्तुत्वा रुदित्वा शोकेन भयेन कामकामिनी।
कोपरक्तेक्षणं रुद्रं राधिके स्वालयं ययौ॥ ५९
न जगाम पितुर्गेहे पार्व्वती सा तु लज्जया।
आलिभिर्वार्य्यमाणा च जगाम तपसे वनम्॥ ६०
प्रजग्मुः सहचारिण्यस्तत्पश्चाच्छोकविह्वलाः।
मातृभिर्वार्य्यमाणा च स्वर्णदीतीरजं वनम्॥ ६१
सुचिरं तपसस्तप्त्वा सा सम्प्राप त्रिलोचनम्।
रतिः सम्प्राप मदनं शङ्करस्य वरेण च॥ ६२
इत्येवं कथितं सर्व्वं पार्व्वतीदर्पमोचणम्।
निगूढ़चरितं राधे किं भूयः श्रोतुमिच्छसि॥ ६३

इति ब्राह्मे एकोनचत्वारिंशोऽध्यायः॥३९॥

## चत्वारिंशोऽध्यायः।

राधिकोवाच।

अहो विचित्रं चरितमपूर्व्वं किं श्रुतं विभो।
सुन्दरं श्रुतिपीयूषं निगूढ़ं ज्ञानकारणम्॥ १
न विशेषं समासञ्च श्रुतं न व्यासमीप्सितम्।
अधुना श्रोतुमिच्छामि विस्तीर्णं कथय प्रभो॥ २
किं किं तपः कठोरञ्च चकार पार्व्वती शुचः।
कं कं वरं वा सम्प्राप कथमाप महेश्वरम्॥ ३
रतिः केन प्रकारेण जीवयामास मन्मथम्।
पार्व्वती-शिवयोः कृष्ण विवाहं वर्णय प्रभो॥ ४
तयो रहसि सम्भोगं पार्व्वतीतापमोचनम्।
कथ्यतां करुणासिन्धो दुःखिनीदुःखमोचनम्॥ ५
दम्पतिविरहोक्तिश्च कर्णज्वाला च योषितः।
श्रोतुं कौतूहलं कृष्ण पुनः सम्मिलनं तयोः॥६
अग्निज्वाला विषज्वालाः क्षमाः सोढुञ्च योषितः।
दम्पतिविरहज्वाला न श्रोतुञ्च क्षणं क्षमाः॥ ७
राधिकावचनं श्रुत्वा सस्मितश्चानताननः।
विस्तीर्णं वक्तुमारेभे हृदयेन विदूयता॥ ८
दम्पतिविरहोक्तिञ्च या राधा श्रोतुमक्षमा।
विच्छेदे शतवर्षीये किमस्या भविता मम॥ ९
इत्येवं मानसे कृत्वा मायेशो माययान्वितः।
कृपासिन्धुश्च कृपया कथां कथयितुमुद्यतः॥ १०

श्रीकृष्ण उवाच।

प्राणाधिके राधिकेऽयि श्रूयतां प्राणवल्लभे।
प्राणाधिदेवि प्राणेशि प्राणाधारे मनोहरे॥ ११
वटमूलाहृते रुद्रे पार्व्वती तपसे ययौ।
पुनः पुनः स्वमात्रा च पित्रा च विनिवारिता॥ १२
गत्वा सा स्वर्णदीतीरं स्नात्वा च शरणं गता।
संवेशे च मया दत्तं जजाप तन्मनुं मुदा॥ १३
वर्षमेकञ्च सम्पूर्णमनाहारा स्वभक्तितः।
जप्त्वा तस्य कठोरञ्च चकार जगदम्बिका॥ १४
ग्रीष्मे च परितो वह्निं प्रज्वलन्तं दिवानिशम्।
कृत्वा प्रतस्थौ तन्मध्ये सन्ततं जपती मनुम्॥ १५
शश्वत् श्मशाने वर्षासु कृत्वा योगासनं शिवा।
शिलावृष्ट्या च संसिक्ता बभूव जलधारया॥ १६
शीते जलान्तरे शश्वत् प्रतस्थौ भक्तिपूर्व्वकम्।

अनाहारा शरद्ग्रीष्मे नीहारेषु निराश्च च ॥ १७
एवं कृत्वा परं वर्षं न प्राप्ता शङ्करं सती।
शुचा कृत्वाग्निकुण्डञ्च प्रवेष्टुं सा समुद्यता ॥ १८
तामग्निकुण्डं विशतीं तपसातिकृशां सतीम्।
दृष्ट्वा शिवः कृपासिन्धुः कृपया चाजगाम ह ॥ १९
अतीव वामनो बालो विप्ररूपः स्वतेजसा।
प्रज्वलन् मनसा हृष्टो दण्डी छत्री जटाधरः ॥२०
शुक्लयज्ञोपवीती च शुक्लवासाश्च सस्मितः।
श्वेताब्जवीजमालाञ्च बिभ्रत् तिलकमुज्ज्वलम् ॥ २१
निर्जने बालकं दृष्ट्वा स्निग्धा सातिजहास च।
तत्तेजसातिप्रच्छन्ना तत्याज तपसः श्रमम् ॥ २२
को भवानिति पप्रच्छ तं शिशुं पुरतः स्थितम्।
मनसालिङ्गनं कर्तुमिच्छन्ती परमादरम् ॥ २३
श्रुत्वा शैलसुताप्रश्नं प्रहस्य परमेश्वरः।
उवाचातीव मधुरं कर्णपीयूषमीश्वरः ॥ २४

शङ्कर उवाच।

यः सोऽहमिच्छागामी च तपस्वी विप्रबालकः।
का त्वं कान्तेऽत्र कान्तारे तपश्चरसि सुन्दरि ॥ २५
वद कस्य कुले जाता कस्य कन्या च काभिधा।
तपसः फलदात्री त्वं कस्माद्धेतोस्तपस्तव ॥ २६
अहो वा तपसां राशिः स्वयं मूर्त्तिमती सती।
स्वयं तेजःस्वरूपा वा मूलप्रकृतिरीश्वरी।
विधाय भक्तध्यानार्थं विग्रहं भारते जनुः ॥ २७
किं वा त्रिलोकलक्ष्मीस्त्वं सम्पद्रूपा सनातनी।
रक्षां विधातुं जगतामागता धातुरन्तिके ॥ २८
किं वाम्बिका त्वं वेदानां स्वयं मूर्त्तिमती सती।
सावित्री भारते जन्म स्वेच्छया लब्धुमागता ॥२९
वागधिष्ठातृदेवी वा स्वयं साक्षात् सरस्वती।
सर्व्वविद्यां प्रकटितुं स्वेच्छया जन्म भारते ॥ ३०
एतासु मध्ये का वा त्वं नाहं तर्कितुमीश्वरः।
या सा भवसि कल्याणि परितुष्टा च मां भव ॥ ३१
सति त्वयि प्रसन्नायां प्रसन्नः परमेश्वरः।
पतिव्रतायां तुष्टायां तुष्टो नारायणः स्वयम् ॥ ३२
तुष्टे नारायणे देवे शश्वत् तुष्टं जगत्त्रयम्।
तरुमूलेषु सिक्तेषु शाखाः सिक्ता यथा प्रिये ॥ ३३
शिशोस्तद्वचनं श्रुत्वा प्रहस्य परमेश्वरी।
उवाच वचनं चारु कर्णपीयूषमीश्वरी ॥ ३४

पार्व्वत्युवाच।

नाहं वेदप्रसूर्लक्ष्मीर्वागधिष्ठातृदेवता।
जन्म मे भारते वर्षे साम्प्रतं शैलकन्यका ॥ ३५
पूर्व्वं जन्म दक्षगेहे सती शङ्करकामिणी।
योगेन त्यक्तदेहाहं तातेन भर्त्तृनिन्दया ॥ ३६
अत्र जन्मनि पुण्येन सम्प्राप्ते शङ्करे द्विज।
मां त्यक्त्वा भस्मसात् कृत्वा मन्मथं स जगाम ह ॥ ३७
प्रयाते शङ्करे तापाद्व्रीड़याहं पितुर्गृहात्।
आगता तपसे चित्तमदृदां स्वर्णदीतटे ॥ ३८
कृत्वा तपः कठोरञ्च सुचिरं प्राणवल्लभम्।
न प्राप्ताग्निं प्रविष्टुञ्च त्वाञ्च दृष्ट्वा क्षणं स्थिता ॥ ३९
गच्छ त्वं प्रविशाम्यग्नौ प्रलयाग्निशिखोपमे।
कृत्वा स्वकामनां विप्र हरप्राप्तिमनीषिताम् ॥ ४०
यत्र तत्र जन्म लब्ध्वा लभिष्यामि शिवं वरम्।
प्राणाधिकं प्रियं कान्तं विभुं जन्मनि जन्मनि ॥ ४१
सर्व्वा हि स्वप्रियं लब्धुं लभन्ति जन्म वाञ्छितम्।
तज्जन्म पतिलाभार्थं सर्व्वासाञ्च श्रुतौ श्रुतम् ॥ ४२
प्राक्तनो यो हि यद्भर्त्ता स तासां प्रतिजन्मनि।
या स्त्री येषां पूर्व्वजाया सा तज्जन्मनि जन्मनि ॥४३
यं देवमिह न प्राप्य कृत्वा घोरतरं तपः।
कृत्वाग्निकुण्डे काम्यञ्च लभिष्यामि परत्र तम् ॥ ४४
इत्युक्त्वा पार्व्वती वह्नौ तत्पुरः प्रविवेश ह।
निषिध्यमाना पुरतो ब्राह्मणेन पुनः पुनः ॥४५
वह्निप्रवेशं कुर्व्वत्याः पार्व्वत्याः परमेश्वरि।
बभूव तपसा सद्यो वह्निश्चन्दनवद्धुवम् ॥ ४६
क्षणं तदन्तरे स्थित्वा चोत्पतन्तीं शिवां शिवः।
पुनः पप्रच्छ सहसा वृन्दावनविनोदिनि ॥ ४७

महादेव उवाच।

अहो तपस्ते किं भद्रे न बुद्धिः किञ्चिदेव हि।
न दग्धो वह्निना देहो न च प्राप्तो मनीषितः ॥ ४८
शिवं कल्याणरूपञ्च भर्त्तारं कर्त्तुमिच्छसि।
अविग्रहं पतिं कृत्वा किं वा ते वाञ्छितं भवेत् ॥ ४९
संहर्त्तारञ्च भर्त्तारं यदीच्छसि शुचिस्मिते।
कान्तमिच्छति का वा स्त्री सर्व्वसंहारकारणम् ॥५०
मोहं वाञ्छसि चेद्देवि कृत्वा कान्तस्वरूपिणम्।
सर्व्वमुक्तिप्रदा त्वञ्च तपस्या विफला तव ॥ ५१
शिवश्च मङ्गले मोहे संहर्त्ता न च दृश्यते।

शिवशब्दस्य चान्यार्थो न हि वेदनिरूपितः ॥ ५२
तञ्च संहारकर्त्तारं यदि वाञ्छसि सुन्दरि।
लभिष्यस्येव रुद्रञ्च सर्व्वलोकभयङ्करम् ॥ ५३
न भविष्यति मोक्षस्ते स्वाभीष्टदेवसेवनम्।
हरिस्मृतिरमोघा च सर्व्वमङ्गलदा सदा ॥ ५४
शीघ्रं पितुर्गृहं गच्छ तत्र द्रक्ष्यसि शङ्करम्।
ममाशिषा सुतपसां फलेन च सुदुर्लभम् ॥ ५५
इत्युक्त्वा पार्व्वतीं विप्रस्तत्रैवान्तरधीयत।
दुर्गा ययौ पितुर्गेहं महादेवेति वादिनी ॥ ५६
पार्व्वत्यागमनं श्रुत्वा मेनका सा हिमालयः।
दिव्यं यानं पुरस्कृत्य प्रययौ हर्षविह्वलः ॥ ५७
संस्थाप्य मङ्गलघटान् राजवर्त्मनि राधिके।
चन्दनागुरु-कस्तूरी-फलशाखासमन्वितान् ॥ ५८
पट्टसूत्रसंनिबद्ध-रसालपल्लवान्वितान्।
परितः परितो रम्भा-स्तम्भवृन्दसमन्वितान् ॥ ५९
पतिपुत्रवतीयोषित्-समूहैर्दीपहस्तकैः।
पण्य-लाज-धान्य-दूर्व्वा-फल-पुष्पसमन्वितैः ॥ ६०
सपुत्रैर्ब्राह्मणैश्चैव मुनिभिर्ब्रह्मचारिभिः।
नटीभिर्नर्त्तकीभिश्च गजैरश्वैश्च शोभितैः ॥ ६१
पुरोहितैश्च संयुक्तैः कुर्व्वद्भिर्मङ्गलध्वनिम्।
सुचारुमालतीमाला-हस्तैः शस्तैः प्रशंसितैः ॥ ६२
नानाप्रकारवाद्यैश्च शङ्खध्वनिभिरन्वितैः।
सिन्दूररेणुभिश्चारु चन्दनद्रवपङ्क्तिलैः ॥ ६३
प्रविश्य नगरं दुर्गा ददर्श पितरौ पुरः।
सुप्रसन्नौ प्रधावन्तौ हर्षाश्रुपुलकान्वितौ ॥ ६४
प्रसन्नवदना देवी आशिभिः प्रणनाम तौ।
सम्पूज्याशिषं तौ च चक्रतुस्ताञ्च वक्षसि ॥ ६५
हे वत्सेऽम्बे समुच्चार्य्य रुदन्तौ प्रेमविह्वलौ।
तदा ताञ्च रथे कृत्वा जग्मतुर्निजमन्दिरम् ॥ ६६
स्त्रियो निर्म्मञ्छनं चक्रुर्विप्राश्च ययुराशिषम्।
ब्राह्मणेभ्यश्च वन्दिभ्यः पर्व्वतेन्द्रो धनं ददौ।
मङ्गलं कारयामास पाठयामास छन्दसाम् ॥ ६७
एवं स्वकन्यया सार्द्धं तस्थतुस्तौ स्वमन्दिरे।
सुखेन निवसन्तौ हि हर्षविह्वलमानसौ ॥ ६८
एकदा च तपः कर्त्तुं जगाम स्वर्णदीं गिरिः।
मेनका कन्यया सार्द्धमुवास प्राङ्गणे मुदा ॥ ६९
एतस्मिन्नन्तरे भिक्षुर्नर्त्तकश्च सुगायनः।
सहसैव आजगाम मेनकासन्निधिं मुदा ॥ ७०
शृङ्गवाद्यं वामहस्ते डमरुं दक्षिणे करे।
कृत्वा विभूतिगात्रोऽतिवृद्धोऽतीव जरातुरः ॥ ७१
पृष्ठकन्थो रक्तवासाः सुकण्ठोऽतिमनोहरः।
जगौ स मद्गुणाख्यानं कृत्वा नृत्यं मनोहरम्।
वादयामास शृङ्गञ्च चर्णां डमरुकं तथा ॥ ७२
आजन्मनागरा बाला बालिका हर्षविह्वलाः।
वृद्धा युवानो युवतीसमूहा वृद्धयोषितः ॥ ७३
श्रुत्वातिसुन्दरं गीतं सुतालस्वरसंयुतम्।
सहसा मुमुहुः सर्व्वे मेना मूर्च्छामवाप ह ॥ ७४
मूर्च्छां सम्प्राप्य सा दुर्गा ददर्श हृदि शङ्करम्।
त्रिशूलपट्टिशकरं व्याघ्रचर्म्मधरं परम् ॥ ७५
विभूतिभूषणं रम्यमस्थिमालं सुनिर्म्मलम्।
ईषद्धास्यप्रसन्नास्यं सुप्रसन्नं त्रिलोचनम् ॥ ७६
मालाहस्तं पञ्चवक्त्रं नागयज्ञोपवीतिनम्।
वरं वृणिष्वेत्युक्तवन्तं सुन्दरं चन्द्रशेखरम् ॥ ७७
हृदयस्थं हरं दृष्ट्वा मनसा तं ननाम सा।
वरं वव्रे मानसे सा त्वं पतिर्मे भवेति च।
वरं दत्त्वा शिवस्तस्यै चान्तर्द्धानं चकार सः ॥ ७८
न दृष्ट्वा हृदि तं दुर्गा सम्प्राप्य चेतनां पुनः।
ददर्श चक्षुरुन्मील्य भिक्षुकं गायनं पुनः ॥ ७९
नृत्यसङ्गीततः सा तु भिक्षुकस्य च मेनका।
दातुं ययौ सुरत्नानि स्वर्णपात्रस्थितानि च ॥ ८०
भिक्षां ययाचे भिक्षुस्तां दुर्गां कन्यां गृहीतवान्।
पुनश्च नर्त्तनं कर्त्तुमुद्यतः कौतुकेन च ॥ ८१
मेना तद्वचनं श्रुत्वा चुकोप विस्मयं ययौ।
भिक्षुकं भर्त्सयामास वहिष्कर्त्तुमुवाच तम् ॥ ८२
पत्नीं त्रिलोकनाथस्य शिवस्य परमात्मनः।
याचमानमिमां प्रकुर्व्वन्तं दूरं कुरु कुभाषिणम् ॥ ८३
एतस्मिन्नन्तरे तत्रा गिरिः स्वालयमाययौ।
ददर्श पुरतो भिक्षुं प्राङ्गणस्थं मनोहरम् ॥ ८४
कृत्वा नारायणार्च्चां तु गङ्गातीरे मनोहरे।
तन्मूर्त्तिध्यानविश्लेष-शोकादुद्विग्नमानसः ॥ ८५
श्रुत्वा मेनामुखाद्वार्त्तां जहास च चुकोप सः।
आज्ञां चकार स्वचरं वहिष्कर्त्तुञ्च भिक्षुकम् ॥ ८६
आकाशमिव दुःस्पर्शं ज्वलन्तं ब्रह्मतेजसा।
न शशाक वहिष्कर्त्तुं समीपं गन्तुमक्षमः ॥ ८७

ददर्श भिक्षुकं शैलः क्षणं चारुचतुर्भुजम्।
किरीटिनं कुण्डलिनं पीताम्बरधरं परम्॥ ८८
सुवेशं सुन्दरं श्याममीषद्धास्यं मनोहरम्।
चन्दनोक्षितसर्व्वाङ्गं भक्तानुग्रहकातरम्॥ ८९
यद्यत् पुष्पं प्रदत्तञ्च पूजाकाले गदाभृते।
गात्रे शिरसि तत् सर्व्वं भिक्षुकस्य ददर्श ह॥ ९०
धूपदीपौ च यद्दत्तौ नैवेद्यं वा मनोहरम्।
ददर्श शैलस्तत् सर्व्वं भिक्षुकस्य पुरःस्थितम्॥ ९१
क्षणं ददर्श द्विभुजं विनोदमुरलीकरम्।
गोपवेशं किशोरञ्च सस्मितं श्यामसुन्दरम्॥ ९२
मयूरपुच्छचूडञ्च रत्नालङ्कारभूषितम्।
चन्दनोक्षितसर्व्वाङ्गं वनमालाविभूषितम्॥ ९३
क्षणं ददर्श स्वच्छञ्च शङ्करं चन्द्रशेखरम्।
त्रिशूलपट्टिशकरं व्याघ्रचर्म्माम्बरं परम्॥ ९४
विभूतिगात्रममलमस्थिमालाविभूषितम्।
नागयज्ञोपवीतञ्च तप्तस्वर्णजटाधरम्॥ ९५
डमरुशृङ्गहस्तञ्च सुप्रशस्तं मनोहरम्।
प्रजपन्तं हरेर्नाम शुद्धस्फटिक-(क) मालया॥ ९६
क्षणं सूर्य्यस्वरूपञ्च ददर्श त्रिगुणात्मकम्।
ददर्श चातितीव्रञ्च ज्वलन्तं ब्रह्मतेजसा॥ ९७
क्षणमग्निस्वरूपञ्च ज्वलन्तमतितेजसा।
क्षणमाह्लादकं चारु-चन्द्ररूपं ददर्श ह॥ ९८
क्षणं तेजःस्वरूपञ्च निराकारं निरञ्जनम्।
निर्लिप्तञ्च निरीहञ्च परमात्मस्वरूपिणम्॥ ९९
एवं स्वेच्छामयं दृष्ट्वा नानारूपधरं परम्।
हर्षाश्रुपुलकः शैलो दण्डवत् प्रणनाम तम्॥ १००
भक्त्या प्रदक्षिणीकृत्य प्रणम्य च पुनः पुनः।
समुत्थाय हर्षयुक्तो ददर्श पुनरेव तम्॥ १०१
वास्तवं भिक्षुकं दृष्ट्वा शैलेन्द्रो विष्णुमायया।
विसस्मार च तत् सर्व्वं नानारूपप्रदर्शिनम्॥ १०२
भिक्षां ययाचे भिक्षुस्तं भिक्षास्थालीस्वपार्श्वकः।
रत्नाम्बरः शृङ्गवाद्य विचित्रडमरुं करे॥ १०३
आदातुमुत्सुको दुर्गां नान्यां भिक्षुः कदाचन।
न स्वीचकार शैलेन्द्रो मूर्च्छितो विष्णुमायया॥१०४
भिक्षुः किञ्चिन्न जग्राह तत्रैवान्तरधीयत।
तदा बभूव ज्ञानञ्च मेनका-शैलयोः प्रिये॥ १०५

(क) श्वेताश्वीनमालया इत्यपि पाठः क्वचित्।

अहो सृष्टिर्जगन्नाथ आवाभ्यां स्वप्नवञ्चिने।
आवां शिवो वञ्चयित्वा स्वस्थानं गतवान् विभुः॥१०६
तयोर्भक्तिं शिवे दृष्ट्वा सर्व्वे देवाश्च चिन्तिताः।
चक्रुः शक्रादयो युक्तिं सुमेरोरन्तिके वटे॥ १०७
एकान्तभक्त्या शैलश्चेत् कन्यां तस्मै प्रदास्यति।
ध्रुवं निर्व्वाणतां सद्यः सम्प्राप्नोत्येव भारते॥ १०८
अनन्तरत्नाधारश्चेत् पृथ्वीं त्यक्त्वा गमिष्यति।
रत्नगर्भाभिधा भूमिर्मिथ्यैव भविता ध्रुवम्॥ १०९
स्थावरत्वं परित्यज्य दिव्यं रूपं विधाय सः।
कन्यां शूलभृते दत्त्वा विष्णुलोकं गमिष्यति॥ ११०
नारायणस्य सारूप्यं लभिष्यत्येव लीलया।
सम्प्राप्य पार्श्वदत्वञ्च हरिदास्यं भविष्यति॥ १११
दशवापीसमा कन्या दीयते ब्राह्मणाय चेत्।
वेदाढ्याय पवित्राय चाप्रतिग्रहशालिने॥ ११२
सन्ध्याढ्याय वेदपाठ-कारिणे सत्यवादिने।
तस्मै प्रदत्ता कन्या च दशवापीफलप्रदा॥ ११३
त्रिसन्ध्याकारिणे सत्यवादिने गृहशालिने।
वेदाढ्याय च विप्राय दत्तार्द्धफलदायिनी॥ ११४
प्रतिग्रहगृहीताय सन्ध्याहीनाय नित्यशः।
मूर्खाय दत्ता कन्या च सा चार्द्धफलदायिनी॥११५
परदारगृहीताय याचकाय द्विजाय च।
शठाय सन्ध्याहीनाय वाप्येकफलदा सुता॥ ११६
सर्व्वसन्ध्या-स्वगायत्री-विहीनाय शठाय च।
विप्रोद्भवाय दत्ता या वाप्यर्द्धफलदा सुता॥ ११७
पापिने शूद्रजाताय विप्रचिह्नोद्भवाय च।
दत्ता चण्डालतुल्याय कन्या सा नरकप्रदा॥ ११८
विष्णुभक्ताय विदुषे विप्राय सत्यवादिने।
जितेन्द्रियाय दत्ता या त्रिंशद्वापीफलप्रदा॥ ११९
षष्टिवर्षसहस्राणि दिव्यं रूपं विधाय च।
एवम्भूताय दत्त्वा च मोदते विष्णुमन्दिरे॥ १२०
दत्त्वा कन्यां सुशीलाञ्च हराय हरये यथा।
नारायणस्वरूपश्च तावदेव श्रुतौ श्रुतः॥ १२१
विष्णुभक्तो यदा कन्यां ददाति विष्णुप्रीतये।
स लभेद्धरिदास्यञ्च ध्रुवं विप्रोद्भवाय च॥ १२२
इत्यालोच्य सुराः सर्व्वे कृत्वा च मन्त्रणां प्रिये।
गुरुं प्रस्थापितुं जग्मुर्हिमालयगृहं प्रति॥ १२३
गत्वा प्रणम्य स्वगुरुं सर्व्वे चक्रुर्निवेदनम्।

हिमालयगृहं गत्वा कुरु निन्दाञ्च शूलिनः ॥ १२४
पिनाकिनं विना दुर्गा वरं नान्यं वरिष्यति।
अनिच्छया सुतां दत्त्वा फलं तूर्णं लभिष्यति ॥१२५
कालेन नाधुना शैल इदानीन्तु वितिष्ठतु।
अनन्तरत्नाधारञ्च त्वमेव रच भारते ॥ १२६
देवानां वचनं श्रुत्वा प्रददौ कर्णयोः करौ।
न स्वीचकार स गुरुः स्मरन् नारायणेति च ॥ १२७
उवाच देववर्गांश्च संभर्त्स्य च पुनः पुनः।
वेदवेदाङ्गविख्याता महाभक्तौ हरौ हरे ॥ १२८
बृहस्पतिरुवाच।
श्रूयतां मद्वचः सत्यं हे देवाः स्वार्थसाधकाः।
नीतिसारञ्च वेदोक्तं परिणामसुखावहम् ॥ १२९
हर-केशवयोर्भक्तं ये च निन्दन्ति पापिनः।
भूदेवान् ब्राह्मणांश्चैव स्वगुरुञ्च पतिव्रताः ॥ १३०
यति-भिक्षु-ब्रह्मचारि-सृष्टिबीजान् सुरांस्तथा।
पच्यन्ते कालसूत्रे ते यावच्चन्द्रदिवाकरौ ॥ १३१
श्लेष्म-मूत्र-पुरीषेषु शेरते ते दिवानिशम्।
भक्षिताः कीटनिकरैः शब्दं कुर्व्वन्ति कातराः ॥ १३२
ये च निन्दन्ति ब्रह्माणं स्रष्टारं जगतां गुरुम्।
शिवां सुराणां प्रवरां दुर्गां लक्ष्मीं सरस्वतीम् ॥१३३
गीताञ्च तुलसीं गङ्गां वेदांश्च वेदमातरम्।
व्रतं तपस्यां पूजाञ्च मन्त्रं मन्त्रप्रदं गुरुम् ॥ १३४
ते पच्यन्तेऽन्धकूपे च आयुषोऽर्द्धं विधेरहो।
भक्षिताः सर्पसङ्घैश्च शब्दं कुर्व्वन्ति सन्ततम् ॥ १३५
ये निन्दन्ति हृषीकेशं देवसाम्यं विधाय च।
विष्णुभक्तिप्रदञ्चैव पुराणञ्च श्रुतिः परम् ॥ १३६
राधां तदङ्गजा गोपीर्ब्राह्मणांश्च सदर्च्चितान्।
ते पच्यन्तेऽवटोदे च विधातुरायुषा समम् ॥ १३७
अधोमुखा ऊर्द्ध्वजङ्घाः सर्पसङ्घैश्च वेष्टिताः।
भक्षिता विकृताकारैः कीटैः सर्व्वसमावृतैः ॥ १३८
अतीवकातरा भीताः शब्दं कुर्व्वन्ति सन्ततम्।
श्लेष्म-मूत्र-पुरीषाणि एवं भक्षन्ति चोभिताः ॥ १३९
उल्कां ददति रुष्टाश्च तन्मुखे यमकिङ्कराः।
शिरस्यं तर्ज्जनं कृत्वा कुर्व्वन्ति दण्डताडनम्।
कुर्व्वन्ति मूत्रपानञ्च प्रहारैस्त्रसिता भिया ॥ १४०
तदा कल्पान्तरे स्रष्टुः सृष्टेश्च प्रथमे पुनः।
तेषां भवेत् प्रतीकार इत्याह कमलोद्भवः ॥ १४१
कृत्वा च शिवनिन्दाञ्च यास्यामि नरकं सुराः।
इममेवोपकारञ्च कर्तुमिच्छथ पुत्रकाः ॥ १४२
ब्रह्मणा प्रेरितो दक्षो दत्त्वा शूलभृते सुताम्।
न प्राप मोक्षमैश्वर्य्यं सम्प्राप हरनिन्दकः ॥ १४३
अनिच्छया सुतां दत्त्वा तूर्णं पुण्यं ललाभ सः।
अहो विहाय सारूप्यं तुच्छं स्वर्गं ललाभ सः ॥१४४
कश्चिन्मध्ये च युष्माकं गच्छ शैलगृहं सुराः।
सम्पादयत्वभिमतं शैलेन्द्रस्य प्रयत्नतः ॥ १४५
अनिच्छया सुतां दत्त्वा सुखं तिष्ठतु भारते।
तस्मै भक्त्या सुतां दत्त्वा मोक्षं प्राप्स्यति निश्चितम् ॥१४६
पश्चात् सप्तर्षयः सर्व्वे गृहीत्वा तामरुन्धतीम्।
एवं तस्य गृहं गत्वा बोधयिष्यन्ति पर्व्वतम् ॥ १४७
विना पिनाकिणं दुर्गा वरं नान्यं वरिष्यति।
अनिच्छया सुतां तस्मै प्रदास्यति सुताज्ञया ॥ १४८
इत्येवं कथितं सर्व्वं देवा गच्छत मन्दिरम्।
इत्युक्त्वा वाक्पतिः शीघ्रं तपसे स्वर्णदीं गतः ॥ १४९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
चत्वारिंशोऽध्यायः ॥४०॥

---

## एकचत्वारिंशोऽध्यायः।

श्रीकृष्ण उवाच।
तदा देवाः समालोच्य जग्मुस्ते ब्रह्मणोऽन्तिकम्।
सर्व्वं निवेदनं चक्रुर्ब्रह्माणं जगतीपतिम् ॥ १
देवा ऊचुः।
तव सृष्टौ जगत्स्रष्टा रत्नाधारो हिमालयः।
स चेत् प्राप्स्यति मोक्षञ्च रत्नगर्भा हता मही ॥ २
सुतां शूलभृते दत्त्वा भक्त्या शैलेश्वरः स्वयम्।
नारायणस्य सारूप्यं सम्प्राप्स्यति न संशयः ॥ ३
त्वं तस्य निन्दनं कृत्वा विमतिं प्रतिपादय।
त्वया विना क्षमो नान्यो गच्छ शैलगृहं प्रभो ॥ ४
देवानां वचनं श्रुत्वा तानुवाच स्वयं विधिः।
वचनं नीतिसारञ्च कर्णपीयूषमुत्तमम् ॥ ५
ब्रह्मोवाच।
नाहं कर्त्तुं क्षमो वत्साः शिवनिन्दां सुदुष्कराम्।
सम्पत्तिनाशरूपाञ्च विपदां वीजरूपिणीम् ॥ ६

सुराः प्रस्थापय शिवं स्वात्मनिन्दां करोतु सः।
परनिन्दा विनाशाय स्वनिन्दा यशसे परम् ॥ ७
ब्रह्मणो वचनं श्रुत्वा तं प्रणम्य सुराः प्रिये।
शीघ्रं ययुस्ते कैलासं गत्वा च तुष्टुवुः शिवम् ॥ ८
सर्व्वं निवेदनं चक्रुः शङ्करं करुणामयम्।
स ययौ शैलमूलञ्च तानाश्वास्य विहस्य च ॥ ९
देवा मुमुदिरे सर्व्वे शीघ्रं गत्वा स्वमन्दिरम्।
दुष्टसिद्धिर्मुदे शश्वदसिद्धिर्दुःखरूपिणी ॥ १०
अथ शैलः सभामध्ये समुवास मुदान्वितः।
बन्धुवर्गैः परिवृतः पार्व्वतीसहितः स्वयम् ॥ ११
एतस्मिन्नन्तरे तत्र विप्ररूपी शिवः स्वयम्।
समाजगाम सहसा प्रसन्नवदनेक्षणः ॥ १२
दण्डी च्छत्री दिव्यवासा बिभ्रत् तिलकमुज्ज्वलम्।
करे स्फटिकमालाञ्च शालग्रामं गले दधत् ॥ १३
तञ्च दृष्ट्वा समुत्तस्थौ स्वासनाच्च हिमालयः।
ननाम दण्डवद्भूमौ भक्त्यातिथिमपूर्व्वकम् ॥ १४
पप्रच्छ कुशलं शैलो ब्राह्मणं को भवानिति।
उवाच सर्व्वं विप्रेन्द्रो गिरीन्द्रं सादरेण च ॥ १५
ब्राह्मण उवाच।
घाटकीं वृत्तिमाश्रित्य भ्रमामि धरणीतले।
मनोयायी सर्व्वयायी सर्व्वज्ञोऽहं गुरोर्वरात् ॥ १६
मया ज्ञातं शङ्कराय सुतां दातुं त्वमिच्छसि।
इमां पद्मासमां दिव्यामज्ञातकुलशालिने ॥ १७
निराश्रयायासङ्गायारूपाय निर्गुणाय च।
श्मशानगामिने सर्व्वभूतनाथाय योगिने ॥ १८
दिग्वाससेऽहिगात्राय विभूतिभूषणाय च।
व्यालग्राहिस्वरूपाय कालव्यालदयाय च ॥ १९
अज्ञातमत्यवेऽज्ञायानाथायाबन्धवे भवे।
तप्तस्वर्णजटाभार-धारिणे निर्द्धनाय च ॥ २०
अज्ञातवयसेऽतीव वृद्धाय चाविकारिणे।
सर्व्वाश्रयाय भ्रमिणे नागहाराय भिक्षवे ॥ २१
पर्व्वतेन्द्र युक्तिरियं नेयं योग्या कुतो भवेत्।
निबोध ज्ञानिनां श्रेष्ठ नारायणकलोद्भव ॥ २२
न पात्रमनुरूपं ते पार्व्वतीदानकर्म्मणि।
महाजनः स्मेरमुखः श्रुतिमात्राद्भविष्यति ॥ २३
त्वद्शैलाधिपस्त्वञ्च न तस्यैकोऽस्ति बान्धवः।
बान्धववान् मेनकां प्रश्नं कुरु शीघ्रं प्रयत्नतः ॥ २४
सर्व्वान् पृच्छ प्रयत्नेन हे बन्धो पार्व्वतीं विना।
रोगिणो नौषधं शश्वदपथ्यं रोचते सदा ॥ २५
इत्युक्त्वा ब्राह्मणः शीघ्रं स्नात्वा भुक्त्वा मुदान्वितः।
जगाम स्वालयं शान्तो वृन्दावनविनोदिनि ॥ २६
ब्राह्मणस्य वचः श्रुत्वा मेनोवाच हिमालयम्।
शोकेन साश्रुनयना हृदयेन विदूयता ॥ २७
मेनोवाच।
शृणु शैलेन्द्र मद्वाक्यं परिणामसुखावहम्।
पप्रच्छ शैलान् तस्मै च न दास्यामि सुतामहम् ॥ २८
त्यक्ष्यामि स्वालयं सर्व्वं भोक्ष्यामि विषमेव च।
गले बध्वाम्बिकां पश्च यास्यामि घोरकाननम् ॥ २९
गृहीत्वा पार्व्वतीं मेना गत्वा कोपालयं रुषा।
त्यक्ताहारा रुदन्ती सा चकार शयनं भुवि ॥ ३०
एतस्मिन्नन्तरे तत्र वशिष्ठो भ्रातृभिः सह।
आजगाम पुनर्युक्तास्तेषां पश्चादरुन्धती ॥ ३१
प्रणम्य शैलस्तान् सर्व्वान् स्वर्णसिंहासनं ददौ।
दत्त्वा षोड़शोपचारं पूजयामास भक्तितः ॥ ३२
ऋषयश्च सभामध्ये सुखमूषुः सुखासने।
जगामारुन्धती तूर्णं यत्र मेना च पार्व्वती ॥ ३३
गत्वा ददर्श मेनाञ्च शयानां शोकमूर्च्छिताम्।
उवाच मधुरं साध्वी सावधानं हितं वचः ॥ ३४
अरुन्धत्युवाच।
उत्तिष्ठ मेनके साध्वि त्वद्गृहेऽहमरुन्धती।
पितॄणां मानसीं कन्यां मां जानीहि विशेर्वधूम् ॥ ३५
अरुन्धतीरवं श्रुत्वा शीघ्रमुत्थाय मेनका।
उवास शिरसा नत्वा तां पद्मामिव तेजसा ॥ ३६
मेनोवाच।
अहोऽद्य किमिदं पुण्यमस्माकं पुण्यजन्मनाम्।
वधूर्जगद्विधेः पत्नी वशिष्ठस्य ममालये ॥ ३७
सम्भ्रमेणेदमेवोक्तं गृहं तेऽहञ्च किङ्करी।
ईश्वरी किङ्करीं द्रष्टुमागता बहुपुण्यतः ॥ ३८
पाद्यं दत्त्वा स्वर्णपीठे वासयामास तां सतीम्।
भोजयामास मिष्टान्नं बुभुजे कन्यया सह ॥ ३९
शिवस्य हेतोर्नीतिञ्च बोधयामास मेनकाम्।
अरुन्धती प्रसङ्गेन सम्बन्धयोजनानि च ॥ ३८ ॥ ४०
अथ शैलमृषीन्द्राश्च नीतिसारं परं वचः।
बोधयामासुः सम्बन्धयोजनाय प्रसङ्गतः ॥ ४१

ऋषय ऊचुः।

शैलेन्द्र श्रूयतां वाक्यमस्माकं शुभकारणम्।
शिवाय पार्व्वतीं देहि संहर्त्तुः श्वशुरो भव ॥ ४२
अयाचितारं देवेशं बोधयामास यत्नतः।
तारकाख्यविनाशाय ब्रह्मा सम्बन्धकर्म्मणि ॥ ४३
नेच्छुको दारसंयोगे शङ्करो योगिनां वरः।
विधेः प्रार्थनया देवस्तव कन्यां ग्रहीष्यति ॥ ४४
दुहितुस्ते तपस्यान्ते प्रतिज्ञाञ्च चकार सः।
हेतुद्वयेन योगीन्द्रो विवाहञ्च करिष्यति ॥ ४५
ऋषीणां वचनं श्रुत्वा प्रहस्य च हिमालयः।
उवाच किञ्चिद्भीतश्च परं विनयपूर्व्वकम् ॥ ४६

हिमालय उवाच।

शिवस्य राज्यसामग्रीं न हि पश्यामि काञ्चन।
किञ्चिदाश्रममैश्वर्य्यं किं वा स्वजनबान्धवम् ॥ ४७
न कन्यामतिनिर्लिप्त-योगिने दातुमर्हति।
यूयं वेदविधातुश्च पुत्रा वदत निश्चयम् ॥ ४८
नानुरूपाय पात्राय पिता कन्यां ददाति चेत्।
कामाल्लोभाद्भयान्मोहाच्छताब्दं नरकं व्रजेत् ॥ ४९
न हि दास्याम्यहं कन्यामिच्छया शूलपाणिने।
यद्विधानं भवेद्योग्यमृषयस्तद्विधीयताम् ॥ ५०
हिमालयवचः श्रुत्वा वशिष्ठो विधिनन्दनः।
वेदवेदाङ्गविज्ञाता वेदोक्तं वक्तुमुद्यतः ॥ ५१

वशिष्ठ उवाच।

वचनं त्रिविधं शैल लौकिके वैदिके तथा।
सर्व्वं जानाति सर्व्वज्ञो निर्म्मलज्ञानचक्षुषा ॥ ५२
असत्यमहितं पश्चात् साम्प्रतं श्रुतिसुन्दरम्।
सुबुद्धिः शत्रुर्वदति न हि तेषां कदाचन ॥ ५३
आपातप्रीतिजननं परिणामसुखावहम्।
दयालुर्धर्म्मशीलश्च बोधयत्येव बान्धवम् ॥ ५४
श्रुतिमात्रात् सुधातुल्यं सर्व्वकालसुखावहम्।
सत्यं सारं हितकरं वचसां श्रेष्ठमीप्सितम् ॥ ५५
एवञ्च त्रिविधं शैल नीतिशास्त्रनिरूपितम्।
कथ्यतां त्रिषु मध्ये किं वदामि वाक्यमीप्सितम् ॥ ५६
राज्यसम्पद्विहीनश्च शङ्करस्त्रिदशेश्वरः।
तत्त्वज्ञानसमुद्रेषु संनिमग्नैकमानसः ॥ ५७
आयाति भ्रमसम्पत्तौ विद्युत् श्रीव विनाशिनी।
सदानन्दस्येश्वरस्य स्वात्मारामस्य का स्पृहा ॥ ५८
गृही ददाति स्वसुतां राज्यसम्पत्तिशालिने।
कन्यकां दुःखिनीं दृष्ट्वा कन्याघाती भवेत् पिता ॥ ५९
को वदेच्छङ्करो दुःखी कुवेरो यस्य किङ्करः।
भ्रूभङ्गलीलया देवो नष्टुं स्रष्टुं क्षमो हि यः ॥ ६०
निर्गुणः परमात्मा च य ईशः प्रकृतेः परः।
सर्व्वेशः स च निर्लिप्तो लिप्तश्च सर्व्वजन्तुषु ॥ ६१
स एकः सृष्टिसंहारे स सर्व्वः सृष्टिकर्म्मणि।
निराकारश्च साकारो विभुः स्वेच्छामयः स्वयम् ॥ ६२
य ईशस्त्रिविधां मूर्त्तिं विधत्ते सृष्टिकर्म्मणि।
सृष्टिस्थित्यन्तजननीं ब्रह्म-विष्णु-शिवाभिधाम् ॥ ६३
ब्रह्मा च ब्रह्मलोकस्थो विष्णुः क्षीरोदवासकृत्।
शिवः कैलासवासी च सर्व्वाः कृष्णविभूतयः ॥ ६४
श्रीकृष्णश्च द्विधाभूतो द्विभुजश्च चतुर्भुजः।
चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम् ॥ ६५
तस्य देवस्य ते चांशा ब्रह्म-विष्णु-महेश्वराः।
केचिद्देवाः कलास्तस्य कलांशाश्चैव केचन ॥ ६६
कृष्णः सृष्ट्युन्मुखो भूत्वा प्रकृतिं तत्र निर्म्ममे।
निर्म्माय ताञ्च तद्योनौ वीर्य्याधानं चकार ह ॥ ६७
ततो डिम्बः समुद्भूतस्तन्मध्ये च महाविराट्।
महाविष्णुः स विज्ञेयः श्रीकृष्णषोड़शांशकः ॥ ६८
नाभिपद्मोद्भवो ब्रह्मा तस्यैव जलशायिनः।
भालोद्भवस्तस्य स्रष्टुः शङ्करश्चन्द्रशेखरः ॥ ६९
महाविष्णुवामपार्श्वात् सम्भूतो विष्णुरेव च।
सर्व्वे प्राकृतिकाः शैल ब्रह्म-विष्णु-शिवादयः ॥ ७०
धत्ते चतुर्व्विधां मूर्त्तिं प्रकृतिः कृष्णसम्भवा।
अंशेन लीलया सृष्टौ कलया बहुधा तथा ॥ ७१
कृष्णवामाङ्गसम्भूता राधा रासेश्वरी स्वयम्।
मुखोद्भवा स्वयं वाणी वागधिष्ठातृदेवता ॥ ७२
वक्षःस्थलोद्भवा लक्ष्मीः सर्व्वसम्पत्स्वरूपिणी ॥ ७३
शिवा तेजःसु देवानामाविर्भावं चकार ह।
निहत्य दानवान् सर्व्वान् देवेभ्यश्च श्रियं ददौ ॥ ७४
प्राप कल्पान्तरे जन्म जठरे दक्षयोषितः।
नाम्ना सती शिवं प्राप दक्षस्तस्मै ददौ च ताम् ॥ ७५
योगेन देहं तत्याज श्रुत्वा सा भर्त्तृनिन्दनम् ॥ ७६
पितॄणां मानसीं कन्या मेनका तव गेहिनी।
ललाभ जन्म तस्यां सा सती च जगदम्बिका ॥ ७७
शिवा शिवस्य पत्नीयं शैल जन्मनि जन्मनि।

कल्पे कल्पे बुद्धिरूपा ज्ञानिनां जननी परा ॥ ७८
जातिस्मरा च सर्व्वज्ञा सिद्धिदा सिद्धिरूपिणी।
अस्या अस्थि चिताभस्म भक्त्या धत्ते शिवः स्वयम् ७९
ददासि स्वेच्छया कन्यां देहि कन्यां शिवाय च।
अथवा सा स्वयं कान्त-स्थानं यास्यति द्रक्ष्यसि ॥ ८०
प्राक्तनाद्दुयस्य या कान्ता सा तं प्राप्नोति वल्लभम्।
प्रजापतेश्च निर्ब्बन्धं न कोऽपि खण्डितुं क्षमः ॥ ८१
विवाहे नोत्सुकः शम्भुः स्वात्मारामश्च तत्त्ववित्।
तुष्टुवुस्तं सुराः सर्व्वे तारकेण निपीड़िताः ॥ ८२
देवानां पीड़नं दृष्ट्वा ब्रह्मणा प्रार्थितो विभुः।
कृपया स्वीचकाराशु कृपालुर्देवसंसदि ॥ ८३
कृत्वा प्रतिज्ञां योगीन्द्र दृष्ट्वा क्लेशमसंख्यकम्।
दुहितुस्ते तपःस्थानमाजगाम हिजात्मजः ॥ ८४
तामाश्वास्य वरं दत्त्वा जगाम निजमन्दिरम्।
तच्छ्रुत्वा चाययुः सर्व्वे सुराः शक्रादयो मुदा ॥ ८५
नारायणश्च भगवान् ब्रह्मा धर्म्मश्च साम्प्रतम्।
ऋषयो मुनयः सर्व्वे गन्धर्व्वा यचराचराः ॥ ८६
तत्र सर्व्वैर्मुदा युक्तैः समालोचनकर्त्तृभिः।
प्रस्थापिता वयं शीघ्रमग्रगाश्चावरुन्धती ॥ ८७
तव प्रबोधने प्रीतिवर्द्धते मुदितैः सदा।
सम्मत्यशुभकार्य्येच्च सर्व्वकालसुखावहम् ॥ ८८
शिवां शिवाय शैलेन्द्र स्वेच्छया चेन्न दास्यसि।
भविता वा विवाहश्च भवितव्यबलेन च ॥ ८९
आगमिष्यति देवो यो नारायणसहायवान्।
रत्नसाररथे कृत्वा देवानां प्रवरं वरम् ॥ ९०
योगिनाञ्च वरेण्यं तं ज्ञानिनाञ्च गुरोर्गुरुम्।
आदिमध्यान्तरहितमविकारमजं परम् ॥ ९१
वरं ददौ शिवायै च शिवश्च तपसः स्थले।
न चेश्वरप्रतिज्ञानं विपरीताय कल्पते ॥ ९२
ब्रह्मादिस्तम्बपर्य्यन्तं सर्व्वं नश्वरमस्थिरम्।
अहो प्रतिज्ञा दुर्लङ्घ्या साधूनामविनाशिनी ॥ ९३
एको महेन्द्रः शैलानां पक्षांश्चिच्छेद लीलया।
पवनो लीलया मेरोः शृङ्गभङ्गं चकार ह ॥ ९४
के वा शैलेषु योद्धारः सुरैः सह हिमालय।
पतिष्यन्ति समुद्रेषु पवनैः प्रेरिताः क्षणात् ॥ ९५
एकार्थं यदि शैलेन्द्र सर्व्वसम्पद्विनश्यति।
सर्व्वान् रक्षति तद्दत्त्वा विना च शरणागतम् ॥ ९६
शरणागतरक्षार्थं प्राणांश्च दातुमर्हति।
पुत्र-दार-धनं सर्व्वमिति नीतिविदो विदुः ॥ ९७
दत्त्वा विप्राय स्वसुतामनरण्यो नृपेश्वरः।
ब्रह्मशापादिसुतांश्च ररक्ष सर्व्वसम्पदम् ॥ ९८
तमाशु बोधयामासुर्नीतिशास्त्रविदो जनाः।
ब्रह्मशापनिमग्नञ्च ब्रह्मस्वमतिकातरम् ॥ ९९
त्वमेवं शैलराजेन्द्र सुतां दत्त्वा शिवाय च।
रक्ष सर्व्वबन्धुवर्गान् वशे कुरु सुरानपि ॥ १००
वशिष्ठस्य वचः श्रुत्वा प्रहस्य पर्व्वतेश्वरः।
पप्रच्छ नृपवृत्तान्तं हृदयेन विदूयता ॥ १०१

हिमालय उवाच।

कस्य वंशोद्भवो ब्रह्मन्ननरण्यो नृपेश्वरः।
सुतां दत्त्वा च स कथं ररक्ष सर्व्वसम्पदम् ॥ १०२

वशिष्ठ उवाच।

मनुवंशोद्भवो राजा सोऽनरण्यो नृपेश्वरः।
चिरजीवी धर्म्मशीलो वैष्णवोऽतिजितेन्द्रियः ॥ १०३
स्वायम्भुवो मनुः पूर्व्वं ब्रह्मपुत्रोऽतिधार्म्मिकः।
राज्यं चकार धर्म्मेण युगानामेकसप्ततिम् ॥ १०४
ततो जगाम वैकुण्ठं सहितः शतरूपया।
सम्प्राप्य दास्यं सान्निध्ये हरिदासो बभूव सः ॥ १०५
मनुर्बभूव तत्पश्चात् स्वयं स्वारोचिषो महान्।
स्वारोचिषे गते शैल बभूव मनुरुत्तमः ॥ १०६
औत्तमे निगते धर्म्मी तामसो मनुरेव च।
ततो मनुर्बभूवात्र रैवतो ज्ञानिनां वरः ॥ १०७
चाक्षुषश्च ततो ज्ञेयो वैवस्वतश्च सप्तमः।
सावर्णिरष्टमो ज्ञेयः श्रीसूर्य्यतनयो महान्।
चैत्रवंशोद्भवो राजा पुरासीत् सुरथो भुवि ॥ १०८
नवमो दक्षसावर्णिर्ब्रह्मसावर्णिको दश।
एकादशो मनुश्रेष्ठो धर्म्मसावर्णिरुच्यते ॥ १०९
ततश्च रुद्रसावर्णिर्विष्णुभक्तो जितेन्द्रियः।
तत्परो देवसावर्णिरिन्द्रसावर्णिकस्ततः ॥ ११०
इत्येवं कथिता ब्रह्मो मनवश्च चतुर्द्दश।
एतेषु समतीतेषु बभूव ब्रह्मणो दिनम् ॥ १११
इन्द्रसावर्णिवृत्तान्तं सर्व्वं मत्तो निशामय।
मनूनां प्रवरो धर्म्मी शुद्धभक्तो गदाभृतः ॥ ११२
चकार राज्यं धर्म्मेण युगानामेकसप्ततिम्।
राज्यं दत्त्वा सुचन्द्राय जगाम तपसे हि सः ॥११३

सुचन्द्रस्य सुतः श्रीमान् श्रीनिकेतुर्महाबलः।
तस्य पुत्त्रो महायोगी पुरीषातस्तथैव च ॥ ११४
तस्य पुत्त्रोऽतितेजस्वी गोकामुख इति स्मृतः।
वृषश्रवाः सुतस्तस्य तत्पुत्त्रो भानुरेव च ॥ ११५
पुण्डरीकः सुतस्तस्य तत्पुत्त्रो जृम्भणस्तथा।
जम्भणस्य सुतः शृङ्गी तत्पुत्त्रो भीम एव च ॥ ११६
तत्पुत्त्रोऽपि यशश्चन्द्रो यशसा च शशी जितः।
तत्कीर्त्तिं निर्म्मलां सन्तो गायन्ति सततं सुराः ॥११७
तस्य पुत्त्रो वरेण्यश्च पुण्यारण्यश्च तत्सुतः।
तत्पुत्त्रो धार्म्मिकः श्रीमानधरारण्य एव च ॥ ११८
तत्पुत्त्रो मङ्गलारण्यस्तपस्वी ज्ञानिनां वरः।
अपुत्त्रको नृपश्रेष्ठस्तपसे पुष्करं गतः ॥ ११९
सुचिरञ्च तपस्तप्त्वा वरं लब्ध्वा महेश्वरात्।
सम्प्राप वैष्णवं पुत्त्रमनरण्यं जितेन्द्रियम् ॥ १२०
दत्त्वा तस्मै स्वराज्यञ्च जगाम तपसे वनम्।
अनरण्यो नृपश्रेष्ठः सप्तद्वीपमहीपतिः ॥ १२१
चकार शतयज्ञञ्च भृगुणा च पुरोधसा।
तुच्छं ज्ञात्वा स चेन्द्रत्वं न लेभे नश्वरं सुधीः ॥ १२२
लीलया च जितः शक्रो लीलया च जितो बलिः।
जिताश्च दानवेन्द्रा वै ज्वलता तेन तेजसा ॥ १२३
बभूवुः शतपुत्त्राश्च राज्ञस्तस्य हिमालय।
कन्यैका सुन्दरी रम्या पद्मा पद्मालयासमा ॥१२४
यावान् स्नेहः पुत्त्रशते कन्यायाञ्च ततोऽधिकः ॥१२५
प्राणाधिकाः प्रियतमा महिष्यः सर्व्वयोषिताम्।
नृपस्य पत्न्यः पञ्चाशत् सर्व्वाः सौभाग्यसंयुताः।
पतिव्रताः पुण्यवत्यो रूपिण्यः स्थिरयौवनाः ॥ १२६
सा कन्या यौवनस्था च बभूव पितृमन्दिरे।
वरं प्रस्थापयामास सर्व्वस्मै नृपतीश्वरः ॥ १२७
एकदा पिप्पलादश्च गन्तुं स्वाश्रममुत्सुकः।
तपःस्थाने निर्ज्जने च गन्धर्व्वं स ददर्श ह ॥ १२८
स्त्रीयुतं मग्नचित्तञ्च शृङ्गाररससागरे।
कामाद्दतीव मत्तञ्च न जानन्तं दिवानिशम् ॥ १२९
दृष्ट्वा तं मुनिशार्द्दूलः सकामश्च बभूव ह।
तपःसुमग्नचित्तश्च चिन्तयन् दारसंग्रहम् ॥ १३०
एकदा पुष्पभद्रायां स्नातुं गच्छन् मुनीश्वरः।
ददर्श पद्मां युवतीं पद्मामिव मनोहराम् ॥ १३१
केयं कन्येति पप्रच्छ समीपस्थान् जनान् मुनिः।
जना निवेदनं चक्रुः पद्मानरण्यकन्यका ॥ १३२
मुनिः स्नात्वाभीष्टदेवं सम्पूज्य राधिकेश्वरम्।
जगाम कामी भिक्षार्थमनरण्यसुतां गिरे ॥ १३३
राजा शीघ्रं मुनिं दृष्ट्वा प्रणनाम भयाकुलः।
मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः ॥ १३४
कामात् सर्व्वं गृहीत्वा च ययाचे कन्यकां मुनिः।
मौनी बभूव नृपतिः किञ्चिन्निर्व्वक्तुमक्षमः ॥ १३५
मुनिः पुनर्ययाचे तं कन्यां देहीति मे नृप।
अथवा भस्मसात् सर्व्वं करिष्यामि क्षणेन च ॥ १३६
सर्व्वे बभूवुराच्छन्ना गणाश्च तेजसा मुनेः।
रुरोद राजा सगणो दृष्ट्वा वृद्धं जरातुरम् ॥ १३७
महिष्यो रुरुदुः सर्व्वा इतिकर्त्तव्यमक्षमाः।
मूर्च्छां प्राप महाराज्ञी कन्यामाता शुचाकुला॥१३८
पण्डितो नीतिशास्त्रज्ञो बोधयामास भूपतिम्।
महिषीश्च नृपसुतान् कन्यकां नीतिमुत्तमाम् ॥१३९
अद्य वापि दिनान्ते वा दातव्या कन्यका नृप।
परत्र विप्रादन्यस्मै कस्मै वा दातुमर्हति ॥ १४०
सत्पात्रं ब्राह्मणादन्यं न पश्यामि जगत्त्रये।
सुतां दत्त्वा च मुनये रक्षस्व सर्व्वसम्पदम् ॥ १४१
राजन् कन्यानिमित्तेन सर्व्वसम्पद्विनश्यति।
सर्व्वं रक्षति तत् त्यक्त्वा विना तं शरणागतम् ॥ १४२
राजा प्राज्ञवचः श्रुत्वा विलप्य च मुहुर्म्मुहुः।
कन्यां सालङ्कृतां कृत्वा मुनीन्द्राय ददौ किल ॥ १४३
कान्तां गृहीत्वा स मुनिर्मुदितः स्वाश्रमं ययौ।
राजा सर्व्वान् परित्यज्य जगाम तपसे स च ॥ १४४
भर्त्तुश्च दुहितुः शोकात् प्राणांस्तत्याज सुन्दरी।
पात्रं पुत्त्राश्च भृत्याश्च मूर्च्छां प्रापुर्नृपं विना ॥ १४५
अनरण्यस्तपस्तप्त्वा चिन्तयन् राधिकेश्वरम्।
गोलोकनाथं संसेव्य गोलोकञ्च जगाम सः ॥ १४६
बभूव कीर्त्तिमान् राजा ज्येष्ठपुत्त्रो नृपस्य च।
पुत्त्रवत् पालयामास प्रजाः सर्व्वा महीधर ॥ १४७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

## द्विचत्वारिंशोऽध्यायः।

वशिष्ठ उवाच।

अथानरण्यकन्या सा सिषेवे भक्तितो मुनिम्।
कर्म्मणा मनसा वाचा लक्ष्मीर्नारायणं यथा॥ १
एकदा स्वर्णदीं स्नातुं गच्छन्तीं सस्मितां सतीम्।
ददर्श पथि धर्म्मश्च मायया नृपलिङ्गकः॥ २
चारुरत्नरथस्थश्च रत्नालङ्कारभूषितः।
नवीनयौवनः श्रीमान् कामदेवसमप्रभः॥ ३
दृष्ट्वा तां सुन्दरीं रम्यामुवाच मायया विभुः।
विज्ञातुमन्तरस्तत्त्वञ्च तस्याश्च मुनियोषितः॥ ४

धर्म्म उवाच।

अयि सुन्दरि लक्ष्मीव राजयोग्ये मनोहरे।
अतीवयौवनस्थे च कामिनि स्थिरयौवने॥ ५
जरातुरस्य वृद्धस्य समीपे त्वं न राजसे।
चन्दनागुरुसंलिप्ता राजसे राजवक्षसि॥ ६
विप्रं तपःसु निरतं सत्यक्तं मरणोन्मुखम्।
विहाय पश्य राजेन्द्रं रतिशूरं जरातुरम्॥ ७
प्राप्नोति सुन्दरी पुण्यात् सौन्दर्य्यं पूर्व्वजन्मनः।
सफलं तद्भवेत् सर्व्वं रसिकालिङ्गनेन च॥ ८
सहस्रसुन्दरीकान्तं कामशास्त्रविशारदम्।
किङ्करं कुरु मां कान्ते परित्यक्ष्यामि ता अपि॥९
निर्ज्जने निर्ज्जने रम्ये शैले शैले नदे नदे।
पुष्पोद्याने पुष्पिते च सुगन्धिपुष्पवायुना।
विहरिष्यामि कालेन कामिन्या च त्वया सह॥ १०
कामज्वरेण दग्धायाः शान्तिं कर्त्तुमहं क्षमः।
विहरस्व मया सार्द्धं जन्मेदं सफलं कुरु॥ ११
इत्येवमुक्तवन्तं तं स्वरथादवरुह्य च।
ग्रहीतुमुत्सुकं हस्ते तमुवाच पतिव्रता॥ १२

पद्मोवाच।

दूरं गच्छ गच्छ दूरं पापिष्ठ भूमिपाधम।
मां चेत् प्रेक्षसि कामेन सद्यो भस्म भविष्यसि॥ १३
पिप्पलादं मुनिश्रेष्ठं तपसा पूतविग्रहम्।
विहाय त्वां भजिष्यामि स्त्रीजितं रतिलम्पटम्॥ १४
स्त्रीजितस्पर्शमात्रेण सर्व्वं पुण्यं विनश्यति।
न भूमौ पातकी पापी न पापी स्त्रीजितात् परः॥१५
मां मातरञ्च स्त्रीभावं कृत्वा येन ब्रवीषि च।
भविष्यसि क्षयं तेन कामेन मम शापतः॥ १६
श्रुत्वा धर्म्मः सतीशापं नृपमूर्त्तिं विहाय च।
धृत्वा स्वमूर्त्तिं देवेशः कम्पमान उवाच ह॥ १७

धर्म्म उवाच।

मातर्जानीहि मां धर्म्मं धर्म्मज्ञानां गुरोर्गुरुम्।
परस्त्रीमातृबुद्धिञ्च कुर्व्वन्तं सन्ततं सति॥ १८
अहं तवान्तर्विज्ञातुमागतस्तव सन्निधिम्।
युष्माकञ्च मनो जाने तथापि दैवबाधितः॥ १९
कृतं मे दमनं साध्वि न विरुद्धं यथोचितम्।
शास्तिः समुत्पथस्थानामीश्वरेण विनिर्म्मिता॥२०
धर्म्मं स्वधर्म्मं विज्ञातुं कालं कलयितुं क्षमः।
विधातारं संविधातुं तस्मै कृष्णाय मे नमः॥ २१
संहर्त्तुं यः क्षमः काले संहर्त्तारं भवं विभुः।
स्रष्टारं लीलया स्रष्टुं तस्मै कृष्णाय मे नमः॥ २२
क्षमो यमं यः संहन्तुं मृत्योर्मरणकारणम्।
स्रष्टुं नष्टुञ्च तद्दैवं तस्मै कृष्णाय मे नमः॥ २३
शापं प्रदातुं सर्व्वांश्च सुख-दुःख-वरान् क्षमः।
सम्पदं विपदं यो हि तस्मै कृष्णाय मे नमः॥ २४
सत्त्वं विधातुं मित्रञ्च सम्प्रीतिं कलहं क्षमः।
स्रष्टं हर्त्तुञ्च यः सृष्टिं तस्मै कृष्णाय मे नमः॥ २५
येन शुक्लीकृतं क्षीरं जलं शैत्यं कृतं पुरा।
दाहो कृतो हुताशश्च तस्मै कृष्णाय मे नमः॥ २६
प्रकृतिर्निर्म्मिता येन महान् विष्णुश्च निर्म्मितः।
ब्रह्म-विष्णु-महेशाद्यास्तस्मै कृष्णाय मे नमः॥ २७
अतितेजःसमूहाय तेजोभ्यो बहुमूर्त्तये।
गुणश्रेष्ठनिर्गुणाय तस्मै कृष्णाय मे नमः॥ २८
सर्व्वस्मै सर्व्वबीजाय सर्व्वेषामन्तरात्मने।
सर्व्वबन्धुस्वरूपाय तस्मै कृष्णाय मे नमः॥ २९
इत्युक्त्वा पुरतस्तस्यास्तस्थौ धर्म्मो जगद्गुरुः।
सा साध्वी तञ्च विज्ञाय सहसोवाच पर्व्वत॥ ३०

पद्मोवाच।

त्वमेव धर्म्मः सर्व्वेषां साक्षी च सर्व्वकर्म्मणाम्।
सर्व्वान्तरेषु सर्व्वात्मा सर्व्वज्ञः सर्व्वतत्त्ववित्॥ ३१
कथं मनो मे विज्ञातुं विडम्बयसि किङ्करीम्।
यत् कृतं तत् कृतं ब्रह्मन् नापराधो बभूव मे॥ ३२
लब्ध शप्तो मयाऽज्ञानात् स्त्रीस्वभावात् क्रुधा विभो।
कावस्था च भवेत्तस्य चिन्तयामीति साम्प्रतम्॥ ३३

आकीशाद्री दिशः सर्व्वा यदि नश्यन्ति वायवः।
तथापि साध्वीशापस्तु न नश्यति कदाचन॥ ३४
त्वञ्च नष्टो भवसि चेत् सृष्टिनाशो भवेत् तदा।
इतिकर्त्तव्यतामूढ़ा तथापि त्वां वदाम्यहम्॥ ३५
सत्ये पूर्णश्चतुष्पादैः पौर्णमास्यां यथा शशी।
विराजसे देवराज सर्व्वकालं दिवानिशम्॥ ३६
पादह्वयश्च त्रेतायां भगवन् भविता तव।
पादोऽपरो द्वापरे च तृतीयश्च कलौ विभो॥ ३७
कलिशेषे शेषपादस्तवाच्छन्नो भविष्यति।
पुनः सत्ये समायाते परिपूर्णो भविष्यति॥ ३८
सत्ये सर्व्वव्यापकत्वं तदन्येषु च कुत्रचित्।
यत्र स्थानं तवाधारो वदामि श्रूयतां विभो॥ ३९
वैष्णवेषु च विप्रेषु यतिषु ब्रह्मचारिषु।
पतिव्रतासु प्रच्छेषु वानप्रस्थेषु भिक्षुषु॥ ४०
नृपेषु धर्म्मशीलेषु सत्सु सद्देश्यजातिषु।
द्विजसेविषु शूद्रेषु संसर्गसुस्थिरेषु च॥ ४१
एवं त्वं सततं पूर्णो धर्म्मराज विराजसे।
युगे युगे तवाधार एते पुण्यतमा जनाः॥ ४२
अश्वत्थ-वट-विल्वेषु तुलसी-चन्दनेषु च।
देवार्च्चेषु च पुण्येषु विद्यमानोऽसि साधुषु॥ ४३
देवालयेषु तीर्थेषु सतां शश्वद्गृहेषु च।
वेदवेदाङ्गश्रवण-स्थलेषु च सभासु च॥ ४४
श्रीकृष्णगुणनामोक्ति-श्रुतिगीतिस्थलेषु च।
व्रत-पूजा-तपो-न्याय-यज्ञ-सत्यस्थलेषु च॥ ४५
दीक्षा-परीक्षा-शपथ-गोष्ठ-गोष्पदभूमिषु।
गवां गृहेषु गोष्ठीषु विद्यमानो हि पश्यसि॥ ४६
क्षमता ते न भविता धर्म्म तेषु स्थलेषु च।
एतदन्येषु क्षमता यदगम्यञ्च तच्छृणु॥ ४७
पुंश्चलीषु तद्गृहेषु गृहेषु नरघातिनाम्।
नरघातिषु नीचेषु मूर्खेषु च खलेषु च॥ ४८
देवता-गुरु-विप्राणां पुण्यानां धनहारिषु।
असन्तरेषु धूर्त्तेषु चौरेषु रतिभूमिषु।
द्यूतक्रीड़ासु भूपाल-कलहानां स्थलेषु च॥ ४९
शालग्राम-साधु-तीर्थ-पुराणरहितेषु च।
दस्युग्रस्तेषु देशेषु हीनता ते च गर्व्विषु॥ ५०
असिजीवि-मसीजीवि-देवल-ग्रामयाजिषु।
वृषवाह-स्वर्णकार-जीवहिंसोपजीविषु॥ ५१
भर्त्तृनिन्दितनारीषु स्त्रीजितेषु च पुंसु च।
दीक्षा-सन्ध्या-विष्णुभक्ति-विहीनेषु द्विजेषु च॥ ५२
स्वाङ्गकन्याविक्रयिषु स्वयोषिद्विक्रयिष्वथ।
शालग्राम-सुर-ग्रन्थ-भूमिविक्रयिषु प्रभो॥ ५३
मित्रद्रोहि-कृतघ्नेषु सत्यविश्वासघातिषु।
शरणागतहीनेषु आश्रितघ्नजनेषु च॥ ५४
शश्वन्मिथ्योक्तिशीलेषु तथा सीमापहारिषु।
कामात् क्रोधात् तथा लोभान्मिथ्यासाक्षिप्रदायिषु॥ ५५
पुण्यकर्म्मविहीनेषु पुण्यकर्म्मविरोधिषु।
स्थानुमेतेषु निन्द्येषु नाधिकारस्तव प्रभो॥ ५६
ममापि वचनं सत्यं बभूव तव रक्षणम्।
यास्यामि पतिसेवायै गच्छ तात स्वमन्दिरम्॥ ५७
इत्येववादिनीं साध्वीमुवाच विधिनन्दनः।
प्रसन्नवदनः श्रीमानतीव विनयं वचः॥ ५८

धर्म्म उवाच।

धन्याऽसि पतिभक्ताऽसि स्वस्ति तेऽस्तु च सन्ततम्।
वरं गृहाण दास्यामि मत्परित्राणकारिणी॥ ५९
युवा भवतु भर्त्ता ते रतिशूरश्च कन्यके।
रूपवान् गुणवान् वाग्मी सततं स्थिरयौवनः॥ ६०
परमैश्वर्य्ययुक्ताऽसि त्वं भव स्थिरयौवना।
चिरजीवी भवतु स मार्कण्डेयात् परं पतिः॥ ६१
कुवेराद्धनवांश्चैव शक्रादैश्वर्य्यवानपि।
विष्णुभक्तः शिवसमः सिद्धस्तु कपिलात् परः॥ ६२
स्वामिसौभाग्यसंयुक्ता भव त्वं जीवनावधि।
गृहा भवन्तु ते साध्वि कुवेरभवनाधिकाः॥ ६३
माता त्वं हि सुपुत्राणां गुणिनां चिरजीविनाम्।
स्वभर्त्तुरधिकानाञ्च भविष्यसि न संशयः॥ ६४
इत्येवमुक्त्वा सन्तस्थौ धर्म्मराजस्तु पर्व्वत।
सती प्रदक्षिणीकृत्य प्रणम्य स्वगृहं ययौ॥ ६५
धर्म्मस्तामाशिषं युक्त्वा जगाम निजमन्दिरम्।
पतिव्रतां प्रशशंस प्रति संसदि संसदि॥ ६६
सा रेमे स्वामिना सार्द्धं यूना रहसि सन्ततम्।
पश्चाद्बभूवुस्तत्पुत्रास्तद्भर्त्तुरधिका गुणैः॥ ६७
शैलेन्द्र कथितं सर्व्वमितिहासं पुरातनम्।
दत्त्वानरण्यः स्वसुतां रक्ष सर्व्वसम्पदम्॥ ६८
त्वमेव कन्यकां दत्त्वा सर्व्वशामीश्वराय च।
रक्ष सर्व्वान् वस्तुवर्गानात्मनः सर्व्वसम्पदम्॥ ६९

सप्ताहे समतीते च दुर्लभेऽतिशुभक्षणे।
लग्नाधिपे च लग्नस्थे चन्द्रे स्वतनयान्विते ॥ ७०
मोदिते रोहिणीयुक्ते विशुद्धे चन्द्रतारके।
मार्गशीर्षे चन्द्रवारे सर्व्वदोषविवर्ज्जिते ॥ ७१
सर्व्वसद्ग्रहदृष्टेऽसद्ग्रहदृष्टिविवर्ज्जिते।
सदपत्यप्रदेऽतीव पतिसौभाग्यदायिनि ॥ ७२
अवैधव्यप्रदे सौख्य-प्रदे जन्मनि जन्मनि।
अत्यन्तप्रेमाविच्छेद-प्रदायिनि परात्परे।
कन्यां प्रदाय पात्राय त्वं कृती भव पर्व्वत ॥ ७३
जगदम्बां जगत्पित्रे मूलप्रकृतिमीश्वरीम्।
तेजःस्वरूपां सर्व्वेषां देवानां देवपूजिताम् ॥ ७४
आविर्भूतां पुरा कल्पे देवानां रक्षणाय च।
तेजोराशेः सुरौघाणां प्रज्वलन्तीं दिशो दश ॥ ७५
यस्याः स्वतेजसा दैत्याः केचिद्दग्धाः पलायिताः।
केचिद्बभूवुः शैलेन्द्र भस्मीभूताश्च भूतले ॥ ७६
बिलं प्रविविशुः केचिन्मूर्च्छां प्रापुश्च केचन।
केचिद्रणे रणं कृत्वा जग्मुः शरणमीश्वरीम् ॥ ७७
वस्त्राणि तत्यजुः केचित् स्तम्भिता अपि केचन।
केचिच्चिरं रणं कृत्वा ययुः स्वगमनामयम् ॥ ७८
निःशत्रवो बभूवुस्ते पुरा तस्याः प्रसादतः।
कृष्णाज्ञया सा कल्पान्ते दक्षकन्या बभूव ह ॥ ७९
दक्षश्च विधिवद्देवीं प्रददौ शूलपाणये।
देवेन मत्पितुर्यज्ञे सहसा सुरसंसदि।
बभूव कलहः शैल तेन शूलभृतो महान् ॥ ८०
ब्रह्माणञ्च नमस्कृत्य ययौ रुष्टस्त्रिलोचनः।
दक्षश्च सगणो रुष्टः प्रययौ स्वालयं तदा ॥ ८१
कोपात् सम्भृतसम्भारो दक्षो यज्ञं चकार ह।
न ददौ यज्ञभागञ्च मात्सर्याच्छूलपाणये ॥ ८२
दृष्ट्वा सती प्रकुपिता जनकं रक्तलोचना।
निर्भर्त्स्य च बहुतरं कोपेन च विदूयता।
यज्ञस्थानात् समुत्थाय जगाम मातुरन्तिकम् ॥ ८३
भविष्यं कथयामास त्रिकालज्ञा परात्परा।
यज्ञभङ्गादिकं सर्व्वं स्वपितुश्च पराभवम् ॥ ८४
पलायनञ्च देवानां यज्ञस्थानाद्गिरीश्वर।
मुनीनामृत्विजाञ्चैव पर्व्वतानां तथैव च ॥ ८५
जयं शङ्करसैन्यानां स्वात्मनो मृत्युरेव च।
शोकात् पर्य्यटनं भर्त्तुर्विरहातुरचेतसः ॥ ८६
निर्माणं नेत्ररसः प्रबोधञ्च जनार्द्दनात्।
मूर्त्तिभेदात् पुनः प्राप्तिं विहारं तस्य तत्समम् ॥ ८७
अपरं भवितव्यञ्च सर्व्वमुक्त्वा जगाम सा।
स्वमात्रा भगिनीभिश्च प्रतिषिद्धातिदुःखिता।
बभूवादृश्यना योगात् सर्व्वासां सिद्धयोगिनी ॥ ८८
गत्वा सा जाह्नवीतीरं स्नात्वा सम्पूज्य शङ्करम्।
कृत्वा तच्चरणाम्भोजं देहं तत्याज सुन्दरी ॥ ८९
गन्धमादनद्रोणीस्थं शरीरं प्रविवेश ह।
संजहार पुरा येन दैत्यानामखिलं कुलम् ॥ ९०
हाहाकारं प्रचक्रुश्च सुराः सर्व्वे सुविस्मिताः।
जग्मुः शङ्करसेनाश्च दक्षयज्ञं प्रणाश्य च ॥ ९१
पराभवञ्च सर्व्वेषां कृत्वा शोकतराः पराः।
सत्वरं सर्व्ववृत्तान्तं कथयामासुरीश्वरम् ॥ ९२
श्रुत्वा प्रवृत्तिं संहर्त्ता सर्व्वरुद्रगणैर्वृतः।
मूर्च्छां सम्प्राप शोकेन ज्ञानानन्दः परात्परः ॥ ९३
क्षणेन चेतनां प्राप्य समुत्थाय त्रिलोचनः।
जगाम स्वर्णदीतीरं यत्र देवीकलेवरम् ॥ ९४

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
सतीदेहत्यागो नाम द्विचत्वा-
रिंशोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशोऽध्यायः।

वशिष्ठ उवाच।

अथ दुर्गां महादेवः सतीमूर्त्तिं मनोहराम्।
अम्लानपद्मपत्राभां शयानां जाह्नवीतटे ॥ १
दधतीमक्षमालाञ्च प्रतप्तकाञ्चनप्रभाम्।
तेजसा प्रज्वलन्तीञ्च दधानां शुक्लवाससी ॥ २
दृष्ट्वा सतीशरीरञ्च प्रदग्धो विरहाग्निना।
तत्क्षणाच्छिर्मूर्त्तिमांश्चैन्मूर्च्छां प्राप तथापि च ॥ ३
कलत्रशोको बलवान् स्वात्मारामं परात्परम्।
बाधते वेदवीजन्तु योगीन्द्राणां गुरोर्गुरुम् ॥ ४
क्षणेन चेतनां प्राप्य तामुवाच त्रिलोचनः।
निरीक्ष्य वदनाम्भोजं स्थाणुः स्थाणुरिवापरः ॥ ५
साश्रुनेत्रोऽतिदीनश्च दीनानां शरणप्रदः।
दीनदैन्यापहारी च विललाप परं वचः ॥ ६

शङ्कर उवाच।

उत्तिष्ठोत्तिष्ठ सुभगे पतिप्राणेश्वरि प्रिये।
शङ्करोऽहं तव स्वामी पश्य मां निकटागतम्॥ ७
शिवं शिवप्रदं सर्व्वं सर्व्वरूपञ्च सिद्धिदम्।
सर्व्वात्मानञ्च सर्व्वेषां शवतुल्यं त्वया विना॥ ८
शक्तोऽहञ्च त्वया सार्द्धं सर्व्वशक्तिस्वरूपया।
शक्तिहीनः शवसमो निश्चेष्टः सर्व्वकर्म्मसु॥ ९
यश्च शक्तिं न जानाति शक्तिहीनश्च निन्दति।
तं त्यक्तुमुचितं विघ्ने कथं मां त्यजसि प्रिये।
स्वयं ब्रह्मा स्वयं विष्णुः साध्यभूता वयं तव॥ १०
सस्मितं सकटाक्षञ्च वद किञ्चित् सुधोपमम्।
मधुराभाषदृष्ट्या च मां दग्धं सेचनं कुरु॥ ११
मां दृष्ट्वा दूरतः शीघ्रं स्निग्धं वदसि सस्मितम्।
कथमद्यापि निश्चेष्टं विलपन्तं न भाषसे॥ १२
प्राणाधिके त्वमुत्तिष्ठ प्राणाधारे परात्परे।
जगदम्बे समुत्तिष्ठ जगदाधाररूपिणि॥ १३
दक्षकन्ये समुत्तिष्ठ रुदन्तं मां न पश्यसि।
परित्यज्य मम प्राणान् गन्तुं नार्हसि सुन्दरि॥ १४
पतिव्रते समुत्तिष्ठ कथं मां नाद्य सेवसे।
कथं करोषि विघ्नाय व्रतभङ्गं श्रुतिप्रसु॥ १५
इत्युक्त्वा मृतदेहञ्च प्रियाया विरहातुरः।
निधायोरसि संश्लिष्य चुचुम्ब च पुनः पुनः॥ १६
अधरे चाधरं दत्त्वा वक्षो वक्षसि शङ्करः।
पुनः पुनः समाश्लिष्य पुनर्मूर्च्छामवाप ह॥ १७
पुनः स चेतनां प्राप्य वेगादुत्थाय शोकतः।
दुद्राव च यथोन्मत्तो ज्ञानिनाञ्च गुरोर्गुरुः॥ १८
सप्तद्वीपं सप्तसिन्धुं लोकालोकञ्च काञ्चनीम्।
बभ्राम भ्रान्तवज्ज्ञानी पत्नीं कृत्वा स्ववक्षसि॥१९
शतशृङ्गगिरेः पार्श्वे जम्बूद्वीपे च भारते।
मुनिर्ज्जनेऽक्षयवट-मूलेषु सरितस्तटे॥ २०
सरोदोच्चैः स्वरं कृत्वा सति साध्वीत्युदीर्य्य च।
त्रिनेत्रनेत्रनीरेण सम्बभूव सरोवरः॥ २१
तन्नेत्रञ्च सरो नाम मुनीनां तपसः स्थलम्।
योजनद्वयविस्तीर्णं पुण्यतीर्थं मनोहरम्॥ २२
तत्र स्नात्वा पुनर्ज्जन्म नराणां न भवेद्धिरे।
शतजन्मकृतं पापं स्नानमात्रेण नश्यति।
त्यक्त्वा तां मानवीं मूर्त्तिं नरा यान्ति हरेः पदम्॥२३
तत्र सरोवरं त्यक्त्वा पुनर्बभ्राम मेदिनीम्।
पूर्णमब्दं महायोगी विरहातुरमानसः॥ २४
सतीगलितप्रत्यङ्गैरङ्गैश्च पर्व्वतेश्वर।
बभूव सिद्धपीठानां समूहो वाञ्छितप्रदः॥ २५
शेषाङ्गानां महादेवः संस्कारं वै विधाय च।
अस्थिमालां विनिर्म्माय चकार कण्ठभूषणम्॥ २६
नित्यं तद्भस्म भक्त्या च चकार गात्रलेपनम्।
सति प्राणेश्वरीत्युक्त्वा पुनर्मूर्च्छामवाप ह॥ २७
विसस्मार ब्रह्म परमात्मानमात्मसम्भवः।
आत्मारामः पूर्णकामो निश्चेष्टो विरहज्वरात्॥२८
तं शयानमस्तगिरेरस्यारे वटमूलके।
दृष्ट्वा देवाः समाजग्मुर्व्विस्मिताः शिवसन्निधिम्॥ २९
नारायणश्च भगवानीश्वरः सह पार्षदैः।
रत्नयानेनाजगाम पद्मार्च्चितपदाम्बुजः॥ ३०
रत्नालङ्कारभूषाढ्यः पीतवासाश्चतुर्भुजः।
ईषद्धास्यप्रसन्नास्यो वनमालाविभूषितः॥ ३१
धर्म्माधर्म्मश्च शेषश्च सुराः सर्व्वे महर्षयः।
तस्थुर्देवाश्च शिरसा लक्ष्मीकान्तं प्रणम्य ते॥ ३२
श्रीहरिः शङ्करमहो कृत्वा वक्षसि मूर्च्छितम्।
सरोद बोधयामास ज्ञानीशो ज्ञानिनां गुरुः॥ ३३

भगवानुवाच।

स्वात्माराम निबोधेदं मदीयं वचनं शिव।
हितमध्यात्मसारञ्च दुःखशोकनिकृन्तनम्॥ ३४
सर्व्वाध्यात्मविद्यमानं जीवं ज्ञानविधिं विधिम्।
तथापि बोधयामि त्वां सर्व्वज्ञं वेधसां विधिम्॥ ३५
बुधं बोधयितुं शक्तोऽबुधोऽपि प्राणसङ्कटे।
व्यवहारोऽस्ति लोकेषु सर्व्वः सर्व्वं परस्परम्॥३६
मायाश्रिता गुणाः सर्व्वे हेतवः सुख-दुःखयोः।
विष्णुमाया बलवती गुणयुक्तं प्रबाधते॥ ३७
दुःखं शोकं भयं शम्भो दुर्द्दिनोद्भवमीश्वर।
तत्रातीते कुतस्तानि सुदिने च समागते॥ ३८
हर्ष ऐश्वर्य्य दर्पश्च सन्ततं तत्र वर्त्तते।
सर्व्वाण्येतानि मश्नन्ति स्वप्नानिव विपश्चितः॥ ३९
शिवेत्येवं समाकर्ण्य हरिं किञ्चिदुवाच ह।
नेत्राण्युन्मीलनं कृत्वा त्रिनेत्रोऽश्रुधुतानि च॥ ४०

त्रिनेत्र उवाच।

कस्त्वं तेजःस्वरूपोऽसि को वेमे तव सन्निधौ।

किं नाम भवतश्चैषां कानि नामानि का सती ॥ ४१
कोऽहं को मे भवान् ब्रूते किं कं वा कुत आगतः ।
क्व यास्यामि क्व यास्यामि क्व गच्छन्त इमे वद ॥४२
हरिरित्येवमाकर्ण्य सरोद सगणो गिरिः ।
नेत्रनीरैस्त्रिनेत्रस्तं रुदन्तं प्रसिषेच सः ॥ ४३
हरि-त्रिनेत्रयोर्नेत्र-नीरपातेन तत्र वै ।
बभूव पयसां श्रेष्ठं तीर्थं भुवनपावनम् ॥ ४४
भारतेऽस्तगिरेः पश्चात् तत्राक्षयवटान्तिके ।
स्थलं बभूव तपसां मुक्तिबीजं तपस्विनाम् ॥ ४५
अथोवाच पुनः शीघ्रमध्यात्मञ्च हरं हरिः ।
शृण्वतां सर्व्वदेवानां मुनीनामूर्द्ध्वरेतसाम् ॥ ४६

भगवानुवाच ।

शृणु शङ्कर वक्ष्यामि ज्ञानानल सनातन ।
ज्ञानं ज्ञाननिधे शोकाद्विस्मृतोऽसि परात्पर ॥ ४७
सुदिनं दुर्द्दिनं शश्वद्भ्रमत्येवं भवे भव ।
सर्व्वेषां प्राकृतानाञ्च ते बीजे सुखदुःखयोः ॥ ४८
सुखाद्भवति हर्षश्च दर्पः शौर्य्यं प्रमत्तता ।
राग ऐश्वर्य्यकामौ च विद्वेषश्च निरन्तरम् ॥ ४९
दुःखात् शोकात् समुद्वेगो भयं नित्यं प्रवर्द्धते ।
हतान्येतानि सर्व्वाणि हते बीजे महेश्वर ॥ ५०
सुदिनं दुर्द्दिनञ्चैव सर्व्वं कर्म्मोद्भवं भव ।
तत् कर्म्म तपसां साध्यं कर्म्मणाञ्च शुभाशुभम् ॥ ५१
तपः स्वभावसाध्यञ्च स्वभावोऽभ्यासतो भवेत् ।
संसर्गसाध्योऽभ्यासश्च संसर्गः पुण्यतो भवेत् ॥ ५२
पुण्यबीजं मनश्चैव पापबीजञ्च चञ्चलम् ।
मनः शश्वो ममांशश्च सर्व्वेन्द्रियपुरःसरम् ॥ ५३
सर्व्वेषां जनकोऽहञ्च त्वञ्च ब्रह्मा प्रजापतिः ।
ब्रह्मैकं मूर्त्तिभेदस्तु गुणभेदेन सन्ततम् ॥ ५४
तद्ब्रह्म द्विविधं वस्तु सगुणं निर्गुणं शिव ।
मायाश्रितो यः सगुणो मायातीतश्च निर्गुणः ॥ ५५
स्वेच्छामयश्च भगवानिच्छया विकरोति वः ।
इच्छाशक्तिश्च प्रकृतिर्नित्या सर्व्वप्रसूः सदा ॥ ५६
केचिदेवं वदन्त्येवं ब्रह्म ज्योतिः सनातनम् ।
केचिद्वदन्ति द्विविधं ब्रह्म प्रकृतिपूर्व्वकम् ॥ ५७
शृणु ये च वदन्त्येकं प्रकृतिः पुरुषात् परम् ।
तस्माद्भवति तौ द्वौ च तद्ब्रह्म सर्व्वकारणम् ॥ ५८
अथवैकं परं ब्रह्म द्विविधं भवतीच्छया ।
इच्छाशक्तिश्च प्रकृतिः सर्व्वशक्तिप्रसूः सदा ॥ ५९
तत्रासक्तश्च सगुणः सशरीरी च प्राकृतः ।
निर्गुणस्तत्र निर्लिप्तोऽशरीरी च निरङ्कुशः ॥ ६०
स चात्मा भगवान् नित्यः सर्व्वाधारः सनातनः ।
सर्व्वेश्वरः सर्व्वसाक्षी सर्व्वत्रास्ति फलप्रदः ॥ ६१
शरीरं द्विविधं शम्भो नित्यं प्राकृतमेव च ।
नित्यं विनाशरहितं नश्वरं प्राकृतं सदा ॥ ६२
अहं त्वञ्चापि भगवानावयोर्नित्यविग्रहः ।
आवयोरंशभूता ये प्राकृता नष्टविग्रहाः ॥ ६३
सदा हर त्वदंशाश्च मदङ्गा विष्णुरूपिणः ।
ममाप्येव द्विधारूपं द्विभुजञ्च चतुर्भुजम् ॥ ६४
चतुर्भुजोऽहं वैकुण्ठे पद्मया पार्षदैः सह ।
गोलोके द्विभुजोऽहञ्च गोपीभिः सह राधया ॥ ६५
द्विविधं ये वदन्त्येवं द्वौ प्रधानौ च तन्मते ।
पुरुषश्च सदा नित्यो नित्या प्रकृतिरीश्वरी ॥ ६६
सदा तौ द्वौ च संश्लिष्टौ सर्व्वेषां पितरौ शिव ।
सशरीरौ निःशरीरौ स्वेच्छया सर्व्वरूपिणौ ॥६७
प्राधान्यञ्च यथा पुंसः प्रकृतेश्च तथा सदा ।
सतीमिच्छसि चेत् शम्भो प्रकृतेः स्तवनं कुरु ॥६८
यत् स्तोत्रञ्च मया दत्तं पुरा दुर्व्वाससे मुदा ।
तद्दिव्यं काण्वशाखोक्तं भज तेन जगत्प्रसूम् ॥ ६९
शोकनाशो भवतु ते शिवं शिव ममाशिषा ।
दूरं विरहहेतुश्च यातु स्त्रीविरहज्वरः ॥ ७०
इत्येवमुक्त्वा लक्ष्मीशो विरराम गिरीश्वर ।
स्तवनं कर्त्तुमारेभे प्रकृतेश्च महेश्वरः ॥ ७१
स्तुत्वा (क) नत्वा च श्रीकृष्णं ब्रह्माणं भक्तिसंयुतः ।
पुटाञ्जलियुतो भूत्वा पुलकाञ्चितविग्रहः ॥ ७२

महेश्वर उवाच ।

ब्राह्मि ब्रह्मस्वरूपे त्वं मां प्रसीद सनातनि ।
परमात्मस्वरूपे च परमानन्ददायिनि ॥ ७३
भद्रे भद्रप्रदे दुर्गे दुर्गघ्ने दुर्गनाशिनि ।
पीतस्वरूपेऽजीर्णे त्वं मां प्रसीद भवार्णवे ॥ ७४
सर्व्वस्वरूपे सर्व्वशे सर्व्वबीजस्वरूपिणि ।
सर्व्वाधारे सर्व्वविद्ये मां प्रसीद जयप्रदे ॥ ७५
सर्व्वमङ्गलरूपे च सर्व्वमङ्गलदायिनि ।
समस्तमङ्गलाधारे प्रसीद सर्व्वमङ्गले ॥ ७६

(क) स्तुत्वा इति पाठान्तरम् ।

निद्रे तन्द्रे क्षमे श्रद्धे तुष्टिपुष्टिस्वरूपिणि।
ह्रिये जये महामाये प्रसीद जगदम्बिके॥ ७७
शान्ते क्षान्ते च सर्व्वान्ते क्षुत्पिपासास्वरूपिणि।
लज्जे मेधे बुद्धिरूपे प्रसीद भक्तवत्सले॥ ७८
वेदस्वरूपे वेदानां कारणे वेददायिनि।
सर्व्ववेदाङ्गरूपे च वेदमातः प्रसीद मे॥ ७९
लक्ष्मीर्नारायणक्रोड़े स्रष्टुर्वक्षसि भारती।
मम क्रोड़े महामाये विष्णुमाये प्रसीद मे॥ ८०
कलाकाष्ठास्वरूपे च दिवारात्रिस्वरूपिणि।
परिणामप्रदे देवि प्रसीद दीनवत्सले॥ ८१
कारणे सर्व्वशक्तीनां कृष्णस्योरसि राधिके।
कृष्णप्राणाधिके भद्रे प्रसीद कृष्णपूजिते॥ ८२
यशःस्वरूपे यशसां कारणे च यशःप्रदे॥ ८३
सर्व्वदेवस्वरूपे च नारीरूपविधायिनि।
समस्तकामिनीरूपे कलांशेन प्रसीद मे॥ ८४
सर्व्वसम्पत्स्वरूपे च सर्व्वसम्पत्प्रदे शुभे।
प्रसीद परमानन्दे कारणे सर्व्वसम्पदाम्॥ ८५
यशस्विनां पूजिते च प्रसीद यशसां निधे।
आधारे सर्व्वजगतां रत्नाधारे वसुन्धरे।
चराचरस्वरूपे च प्रसीद मामवाचिरम्॥ ८६
योगस्वरूपे योगीशे योगदे योगकारणे।
योगाधिष्ठातृदेवीशे प्रसीद सिद्धयोगिनि॥ ८७
सर्व्वसिद्धिस्वरूपे च सर्व्वसिद्धिप्रदायिनि।
कारणे सर्व्वसिद्धीनां सिद्धेश्वरि प्रसीद मे॥ ८८
व्याख्याने सर्व्वशास्त्राणां मतभेदे महेश्वरि।
ज्ञानेऽज्ञाने यदुक्तं तत् क्षमस्व परमेश्वरि॥ ८९
केचिद्वदन्ति प्रकृतेः प्राधान्यं पुरुषस्य च।
केचित् तत्र मतद्वैधे व्याख्याभेदं विदुर्बुधाः॥ ९०
महाविष्णोर्नाभिदेशस्थितश्च कमलोद्भवम्।
मधुकैटभौ महादैत्यौ लीलया हन्तुमुद्यतौ॥ ९१
दृष्ट्वा स्तुतिं प्रकुर्व्वन्तं ब्रह्माणं रक्षितुं पुरा।
बोधयामास गोविन्दं विनाशहेतवे तयोः॥ ९२
नारायणस्त्वया शक्त्या जघान तौ महासुरौ।
सर्व्वेश्वरस्त्वया सार्द्धमनीशोऽहं त्वया विना॥ ९३
पुरा त्रिपुरसंग्रामे गगनात् पतिते मयि।
त्वया च विष्णुना सार्द्धं रक्षितोऽहं सुरेश्वरि॥ ९४
अधुना रक्ष मामीशे प्रदग्धं विरहाग्निना।
स्वात्मनो दर्शनं पुण्ये क्षीणोहि परमेश्वरि॥ ९५
इत्युक्त्वा विरतः शम्भुर्ददर्श गगनस्थिताम्।
रत्नसाररथस्थां तां देवीं दशभुजां मुदा॥ ९६
तप्तकाञ्चनवर्णाभां रत्नाभरणभूषिताम्।
ईषद्धास्यप्रसन्नास्यां जगतां मातरं सतीम्॥ ९७
दृष्ट्वा तां विरहाशक्तः पुनस्तुष्टाव सत्वरम्।
दुःखं निवेदयामास प्ररुदन् विरहोद्भवम्॥ ९८
दर्शयामासास्थिमालां स्वाङ्गस्थं भस्मभूषणम्।
दृष्ट्वा बहु परीहारं तोषयामास सुन्दरीम्॥ ९९
नारायणश्च ब्रह्मा च धर्म्मः शेषः सुरर्षयः।
शिवं रक्षेश्वरीत्युक्त्वा तुष्टुवुस्ते सनातनीम्॥ १००
बभूव परितुष्टा सा तेषां स्तोत्रेण तत्क्षणम्।
उवाच कृपया शम्भुं प्राणेशं प्राणवल्लभा॥ १०१

प्रकृतिरुवाच।

स्थिरो भव महादेव मम प्राणाधिक प्रभो।
भवानात्मा च योगीश स्वामी जन्मनि जन्मनि॥ १०२
अहं शैलेन्द्रवासिन्यां लब्ध्वा जन्म महेश्वर।
तव पत्नी भविष्यामि मुञ्च त्वं विरहज्वरम्॥ १०३
इत्युक्त्वा शिवमाश्वास्य अन्तर्द्धानं चकार सा।
सुरा जग्मुस्तमाश्वास्य लब्ध्वा नम्रात्मकन्धरम्॥ १०४
हर्षान्तरात्मा गिरिशः कैलासं तं जगाम ह।
ननर्त्त सगणस्तूर्णं सन्त्यज्य विरहज्वरम्॥ १०५
इदं शम्भुकृतं स्तोत्रं प्रकृत्या यः पठेन्नरः।
न भवेत् कामिनीभेदस्तस्य जन्मनि जन्मनि॥ १०६
इह लोके सुखं भुक्त्वा स याति शिवमन्दिरम्।
धर्म्मार्थ-काम-मोक्षांश्च लभते नात्र संशयः॥ १०७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे शङ्करविरह-शोकापनोदनं त्रिचत्वारिंशोऽध्यायः॥ ४३

## चतुश्चत्वारिंशोऽध्यायः।

श्रीकृष्ण उवाच।

वशिष्ठस्य वचः श्रुत्वा सगणोऽपि हिमालयः।
विस्मितो भार्य्यया सार्द्धं जहास पार्व्वती स्वयम्॥
अरुन्धती च तां मेनां बोधयामास कातराम्।
रुदतीञ्च निराहारां जहौ शोकं मुदा च सा॥ २१

अरुन्धतीं भोजयित्वा बुभुजे भोगमुत्तमम्।
सर्व्वं प्रहृष्टमनसा मङ्गलञ्च चकार ह ॥ ३
शैलः सम्भृतसम्भारो वशिष्ठस्याज्ञया प्रिये।
पत्रं प्रस्थापयामास नानास्थानं त्वरान्वितः ॥ ४
ततः प्रस्थापयामास शिवमङ्गलपत्रिकाम्।
नानाप्रकारद्रव्याणि वाद्यानि च चकार ह ॥ ५
तण्डुलानाञ्च शैलान् वै पृथुकानाञ्च सुन्दरि।
तैलानाञ्च घृतानाञ्च दध्नां वापीश्चकार ह ॥ ६
गुड़ानामासवानाञ्च क्षीराणाञ्च तथैव च।
अद्रौ हैयङ्गवीनानां नवनीनां परं मुदा ॥ ७
लड्डुकानां शर्कराणां स्वस्तिकानाञ्च यत्नतः।
यवचूर्णादिपिष्टानां घृतपक्वानि तानि च ॥ ८
नानाप्रकारवस्त्राणि वह्निशौचानि यानि च।
शशिरत्नप्रवालानि सुवर्णरजतानि च ॥ ९
द्रव्याण्येतानि शैलेन्द्रः कृत्वा तु विधिपूर्व्वकम्।
मङ्गलं कर्त्तुमारेभे तत्रैव मङ्गले दिने ॥ १०
संस्कारं कारयामासुः पार्व्वतीं पर्व्वतस्त्रियः।
स्नापयित्वा वस्त्रयुग्मं धारयामासुराशु ताः ॥ ११
कारयित्वा सुवेशञ्च रत्नभूषणभूषिताम्।
दर्पणं धारयामासुर्दूर्व्वाक्षतसमन्वितम् ॥ १२
दत्त्वा चालक्तकं चारु पादाङ्गुलिषु पादयोः।
गण्डे पत्रावलीं रम्यां नेत्रे कज्जलमुज्ज्वलम् ॥ १३
कबरीं कारयामासुर्मालतीमाल्यवेष्टिताम्।
पट्टसूत्रनिबद्धाञ्च वामवक्रां मनोहराम् ॥ १४
एतस्मिन्नन्तरे राधे समाजग्मुः सुरेश्वराः।
नीला त्रिनेत्रं तत्रैव रत्नयानस्थमीश्वरम् ॥ १५
शैलः सम्भृतसम्भारः सम्भाषां कर्त्तुमीश्वरान्।
शैलान् प्रस्थापयामास ब्राह्मणानपि पूजितान् ॥ १६
प्राङ्गणं कारयामास रम्भास्तम्भैः समन्वितम्।
पट्टसूत्रसन्निबद्ध-रसालपल्लवान्वितैः ॥१७
फलपल्लवसंयुक्तैः कलसैर्जलसम्भृतैः।
चन्दनागुरु-कस्तूरी-सुचारुकुङ्कुमान्वितैः।
मालतीमाल्यसंयुक्तैः संयुक्तं सुमनोहरम् ॥ १८
देवेश्वरान् पुरो दृष्ट्वा प्रणनाम हिमालयः।
रत्नसिंहासनं दातुं प्रेरयामास किङ्करान् ॥ १९
नारायणो हि भगवानुवास पार्षदैः सह।
स तु (क) रत्नरथात् तूर्णमवरुह्य चतुर्भुजः ॥ २०
चतुर्भुजैः पार्षदैश्च रत्नभूषणभूषितः।
रत्नमुष्टिनिबद्धैश्च सेवितः श्वेतचामरैः ॥ २१
ऋषिश्रेष्ठैः सुरश्रेष्ठैः पूज्यमानः स संसदि।
ईषद्धास्यप्रसन्नास्यो भक्तानुग्रहकातरः ॥ २२
उवास च तदभ्यासे ब्रह्मा देवगणैः सह।
ऋषयो मुनयश्चैव समूहमङ्गलस्थले ॥ २३
एतस्मिन्नन्तरे शम्भुरवरुह्य रथाद्द्रुतो।
रत्नालये समुत्तिष्ठन् ददर्श पर्व्वतालयम् ॥ २४
समाजग्मुः शिवं द्रष्टुं शैलेन्द्रनगरस्त्रियः।
वृद्धा बाला युवत्यश्च वस्त्राभरणभूषिताः ॥ २५
काश्चित् कज्जलहस्ताश्च वस्त्रहस्ताश्च काश्चन।
काश्चित् सिन्दूरहस्ताश्च काश्चित् कङ्कतिकाकराः॥२६
वेशार्द्धभूषिताः काश्चित् काश्चनैवार्द्धभूषणाः।
काश्चिन्निर्भूषिताः काश्चित् सर्व्वाभरणभूषिताः ॥२७
सर्व्वा आगत्य संतस्थुः सस्मिताः पर्व्वतालये ॥ २८
ऋषिकन्या देवकन्या नागकन्या मनोहराः।
गन्धर्व्वशैलकन्याश्च राजकन्याः समागताः ॥ २९
सर्व्वा अप्सरसो दिव्या रम्भाद्याः समुपस्थिताः।
मेना कन्यागणैः सार्द्धं ददर्श शङ्करं वरम् ॥ ३०
चारुचम्पकवर्णाभमेकवक्त्रं त्रिलोचनम्।
ईषद्धास्यप्रसन्नास्यं रत्नाभरणभूषितम् ॥ ३१
चन्दनागुरु-कस्तूरी-चारुकुङ्कुमभूषितम्।
मालतीमाल्यसंयुक्त-सद्रत्नमुकुटोज्ज्वलम् ॥ ३२
वह्निशौचेनातुलेनैवातिसूक्ष्मेण चारुणा।
अमूल्यवस्त्रयुग्मेण विचित्रेणातिभूषणम् ॥ ३३
रत्नदर्पणहस्तञ्च योगीन्द्राणां गुरोर्गुरुम्।
स्वेच्छामयं गुणातीतं ब्रह्मज्योतिः सनातनम् ॥ ३४
गुणभेदाद्रूपभेदं धृतवन्तमरूपकम्।
तारणं तं भवस्थानां सृष्टिस्थित्यन्तकारणम् ॥ ३५
सर्व्वाधारं सर्व्वबीजं सर्व्वेशं सर्व्वजीवनम्।
साक्षिरूपं निरीहञ्च परमात्मानमक्षरम्।
आद्यन्तमध्यरहितं सर्व्वाद्यं सर्व्वरूपकम् ॥ ३६
दृष्ट्वा जामातरं मेना जहौ शोकं मुदान्विता।
प्रशशंसुर्युवत्यश्च धन्यो धन्य इतीरिताः ॥ ३७
दुर्गा भाग्यवतीत्येवमूचुः काश्चन कन्यकाः।
न दृष्टो वर दुर्लभमस्माभिर्ध्यानगोचरे ॥ ३८

(क) विनतानन्दनात् तूर्णमित्यपि पाठान्तरम्।

काश्चिन्निमेषरहिता मूर्च्छामापुश्च काश्चन ।
निनिन्दुः स्वपतिं काश्चित् स्वेच्छां चक्रुश्च काश्चन ॥३९
काश्चिद्भावेन रुरुदुः पुलकाञ्चितविग्रहाः ।
कामेन काश्चित् कामिन्यो मौनीभूताश्च स्तम्भिताः ४०
जगुर्गन्धर्व्वप्रवरा ननृतुश्चाप्सरोगणाः ।
दृष्ट्वा शङ्कररूपञ्च प्रहृष्टाः सर्व्वदेवताः ॥ ४१
नानाप्रकारवाद्यानि चारूणि मधुराणि च ।
नानाप्रकारशिल्पेन वादयामासु (क) वादकाः ॥ ४२
एतस्मिन्नन्तरे दुर्गां शैलान्तःपुरचारिकाः ।
वह्निशुद्धांशुकां सद्रत्नासनस्थां रत्नभूषिताम् ।
हरप्रदक्षिणीभूतां कारयामासु पार्व्वतीम् ॥ ४३
ईश्वरीं ददृशुर्देवा निमेषरहिता मुदा ।
तप्तकाञ्चनवर्णाभां स्वाङ्गैश्चातिविभूषिताम् ॥ ४४
सुचारुकवरीभारां चारुपत्रकशोभिताम् ।
कस्तूरीबिन्दुभिः सार्द्धं सिन्दूरबिन्दुभूषिताम् ॥ ४५
चारुचन्दनचन्द्रेण नम्रभालस्थलोज्ज्वलाम् ।
रत्नेन्द्रसारहारेण वक्षःस्थलविभूषिताम् ॥ ४६
त्रिनेत्रदत्तनेत्रान्तामन्यवारितलोचनाम् ।
अतीषद्धास्ययुक्तास्यां सकटाक्षां मनोहराम् ॥ ४७
रत्नकेयूर-वलय-रत्नकङ्कणभूषिताम् ।
सद्रत्नकुण्डलाभ्याञ्च चारुगण्डस्थलोज्ज्वलाम् ॥ ४८
मणिसारप्रभामुष्ट-दन्तराजिविराजिताम् ।
पक्वबिम्बविनिन्द्यैक-सुन्दराधरभूषिताम् ॥ ४९
रत्नपाशकसंसक्तां क्वणन्मञ्जीररञ्जिताम् ।
अमूल्यातुलचित्राढ्य-वस्त्रयुग्मसुशोभिताम् ॥ ५०
रत्नदर्पणहस्ताञ्च क्रीड़ापद्मविघूर्णिताम् ।
चन्दनागुरु-कस्तूरी-कुङ्कुमेणाङ्गचर्च्चिताम् ॥ ५१
मुदिता ददृशुः सर्व्वे जगदाद्यां जगत्प्रसूम् ॥ ५२
त्रिनेत्रो नेत्रकोणेन तां ददर्श मुदान्वितः ।
सर्व्वसत्याकृतिं दृष्ट्वा विजहौ विरहज्वरम् ॥ ५३
शिवः सर्व्वं विसस्मार दुर्गासंन्यस्तमानसः ।
पुलकाञ्चितसर्व्वाङ्गो हर्षाश्रुयुक्तलोचनः ॥ ५४
एतस्मिन्नन्तरे शैलः प्रहृष्टः सपुरोहितः ।
तं वरं वरयामास वस्त्र-चन्दन-भूषणैः ॥ ५५
भक्त्या पाद्यादिभिर्माल्यैर्दिव्यगन्धमनोहरैः ।
ततः शीघ्रं वेदमन्त्रैः सम्प्रदानं चकार ताम् ॥ ५६
यौतुकानि ददौ तस्मै रत्नानि विविधानि च ।
चारुरत्नविकाराणि पात्राणि सुन्दराणि च ॥ ५७
गवां लक्षं गजेन्द्राणां सहस्राणि च राधिके ।
रत्नकम्बलयुक्तानि साङ्कुशानि मुदान्वितः ॥ ५८
त्रिंशल्लक्षं हयानाञ्च सज्जितानामकातरः ।
दासीनामनुरक्तानां लक्षं सद्रत्नभूषितम् ॥ ५९
शतं द्विजवटूनाञ्च पार्व्वतीभ्रातृतुल्यकम् ।
रथानाञ्च शतं रम्यं रत्नेन्द्रसारनिर्म्मितम् ॥ ६०
पार्व्वतीं वस्तुसहितां स्वस्तीत्युच्चार्य्य शङ्करः ।
जग्राहानन्दमनसा यत्नाच्छैलसमर्पिताम् ॥ ६१
हिमालयः सुतां दत्त्वा परिहारं चकार तम् ।
मध्यन्दिनोक्तस्तोत्रेण तुष्टाव सम्पुटाञ्जलिः ॥ ६२

हिमालय उवाच ।

प्रसीद दक्षयज्ञघ्न नरकार्णवतारक ।
सर्व्वात्मरूप सर्व्वेश परमानन्दविग्रह ॥ ६३
गुणार्णव गुणातीत गुणयुक्त गुणेश्वर ।
गुणबीज महाभाग प्रसीद गुणिनां वर ॥ ६४
योगाधार योगरूप योग-योगज्ञकारण ।
योगीश योगिनां बीज प्रसीद योगिनां वर ॥ ६५
प्रलय प्रलयाद्यैक भवप्रलयकारण ।
प्रलयान्त सृष्टिबीज प्रसीद परिपालक ॥ ६६
शिवस्वरूप शिवद शिवबीज शिवाश्रय ।
शिवभूत शिवप्राण प्रसीद परमाश्रय ॥ ६७
इत्येवं स्तवनं कृत्वा विरराम हिमालयः ।
प्रशशंसुः सुराः सर्व्वे मुनयश्च गिरीश्वरम् ॥ ६८
हिमालयकृतं स्तोत्रं संयतो यः पठेन्नरः ।
प्रददाति शिवस्तस्मै वाञ्छितं राधिके ध्रुवम् ॥ ६९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

## पञ्चचत्वारिंशोऽध्यायः ।

श्रीकृष्ण उवाच ।

अथ वेदविधानेन संस्थाप्य वह्निमीश्वरः ।
यज्ञं चकार तत्रैव वामे संस्थाप्य पार्व्वतीम् ॥ १
निर्वृत्ते विधिवद्यज्ञे विप्राय दक्षिणां ददौ ।
शिवः शतसुवर्णाञ्च वृन्दावनविनोदिनि ॥ २

(क) अत्र विसर्गलोप आर्षः, एवमन्यत्रापि ।

अथ प्रदीपमानीय शैलेन्द्रनगरस्त्रियः ।
निवृत्य मङ्गलं कर्म्म गृहं प्रापय्य दम्पती ॥ ३
कृत्वा जयध्वनिं प्रीत्या शुभनिर्म्मञ्छनादिकम् ।
सस्मिताः सकटाक्षाश्च पुलकाञ्चितविग्रहाः ॥ ४
वासगेहं समाविश्य ददृशु कामिनीगणम् ।
शङ्करो रूपवेशाढ्यं रत्नभूषणभूषितम् ॥ ५
चन्दनागुरु-कस्तूरी-कुङ्कुमाञ्चितविग्रहम् ।
ईषद्धास्यप्रसन्नास्यं सकटाक्षं मनोहरम् ॥ ६
अतीव सूक्ष्मवेशाढ्यं सिन्दूरबिन्दुभूषितम् ।
चारुचम्पकवर्णाभं सर्व्वावयवसुन्दरम् ।
नवीनयौवनस्थञ्च सन्ति स्त्रीणाञ्च षोडश ॥ ७
देवकन्या नागकन्या मुनिकन्या मनोहराः ।
या याः स्थितास्तत्र तासां संख्यां कर्त्तुञ्च कः क्षमः ८
ताभी रत्नासने दत्ते तत्रोवास शिवो मुदा ।
तमूचुः क्रमतो देव्यो मधुरोक्तिं सुधामिव ॥ ९

सरस्वत्युवाच ।

प्राप्ता सती महादेवाधुना प्राणाधिका मुदा ।
दृष्ट्वा प्रियास्यं चन्द्राभं सर्व्वावयव-(क)सुन्दरम् ॥१०
कालं गमय कालेश सदा संश्लेषपूर्व्वकम् ।
विश्लेषस्ते न भविता सर्व्वकालं ममाशिषा ॥ ११

लक्ष्मीरुवाच ।

लज्जां विहाय देवेश सतीं कृत्वा स्ववक्षसि ।
तिष्ठ तां प्रति का लज्जा प्राणा यान्ति यया विना १२

सावित्र्युवाच ।

भोजयित्वा सतीं शम्भो शीघ्रं भोजय मा खिद ।
तदाचम्य सकर्पूरं ताम्बूलं देहि भक्तितः ॥ १३

जाह्नव्युवाच ।

स्वर्णकङ्कतिकां धृत्वा केशान् मार्ज्जय योषितः ।
कामिन्या स्वामिसौभाग्यं सुखं नातः परं भवे ॥१४

रतिरुवाच ।

गृहीत्वा पार्व्वतीं देव सौभाग्यमतिदुर्लभम् ।
कथं मम प्राणनाथो निःस्वार्थं भस्मसात् कृतः ॥ १५
जीवयात्र विभो कामं कामव्यापारमात्मनि ।
कुरु दूरञ्च सन्तापं मम विश्लेषहेतुकम् ॥ १६
दम्पतीविरहक्लेशं सर्व्वं जानासि दयानिधे ।
तथापि मम कान्तश्च कोपेन भस्मसात् कृतः ॥ १७

इत्युक्त्वा कामभस्माथ ददौ सा ग्रन्थिबन्धितम् ।
स्वरोद पुरतः शम्भोर्नाथ नाथेत्युदीर्य्य च ॥ १८
हरिस्तद्रोदनं श्रुत्वा करुणामयसागरः ।
ब्रह्मा धर्म्मादिदेवाश्च ययुर्वासगृहं शिवः ॥ १९
दृष्ट्वा नारायणं धर्म्मं ब्रह्माणञ्च सुरानपि ।
जवेन पीठादुत्तस्थौ स्वाज्ञां कुर्व्वित्युवाच ह ॥ २०
शङ्करस्य वचः श्रुत्वा तमुवाच हरिः स्वयम् ।
कामं जीवय हे रुद्रेत्युक्त्वा शीघ्रं जगाम सः ॥ २१
जगुर्देव्यो बहुतरं वाक्यं विनयपूर्व्वकम् ।
सुधादृष्ट्या शूलभृतो भस्मनो निर्गतः स्मरः ॥ २२
दृष्ट्वा कामं रतिस्तञ्च प्रणनाम महेश्वरम् ।
तद्रूपञ्च तदाकारं सस्मितं सधनुःशरम् ॥ २३
प्रणम्य शङ्करं कामः स्तुतिं कृत्वा यथागमम् ।
बहिर्गत्वा हरिं देवान् प्रणम्य समुवास ह ॥ २४
कामं सम्भाष्य देवाश्च शुशुभुश्च तमाशिषम् ।
काले रक्षा विनाशस्य निषिकः केन वार्य्यते ॥ २५
अथ शैलः सुरान् सर्व्वान् नारायणपुरोगमान् ।
भोजयामास भक्त्या च शाययामास यत्नतः ॥ २६
अथ शम्भुर्वासगेहे वामे संस्थाप्य पार्व्वतीम् ।
मिष्टान्नं भोजयामास तया सह मुदान्वितः ॥ २७
भुक्तवन्तं शिवं तत्र देवमातादितिः स्वयम् ।
उवाच सस्मितं राधे सम्प्रीत्या सरसं वचः ॥ २८

अदितिरुवाच ।

भोजनान्ते सतीं शम्भो शौचार्थं जलमीश्वर ।
देहि शीघ्रं मम प्रीत्या दम्पत्योः प्रेम दुर्लभम् ॥२९

शच्युवाच ।

भवान् विलापं यद्धेतोः शवं कृत्वा स्ववक्षसि ।
यो बभ्राम भुवं मोहात् का लज्जा तां प्रति प्रियाम्३०

लोपामुद्रोवाच ।

व्यवहारोऽस्ति स्त्रीणाञ्च भुक्त्वा वासगृहे शिव ।
ताम्बूलञ्च प्रियां दत्त्वा शयनं कर्त्तुमर्हसि ॥ ३१

अरुन्धत्युवाच ।

मया दत्ता सती तुभ्यं मेना दातुमनीप्सिता ।
विविधं बोधयित्वेमां रतिञ्च कर्त्तुमर्हसि ॥ ३२

अहल्योवाच ।

वृद्धावस्थां परित्यज्य अतीव तरुणोऽधुना ।
तेन मेनानुमेने त्वां सुतामर्पितुमीश्वर ॥ ३३

(क) सन्तापं त्यज कामुक इति पाठान्तरं क्वचित् ।

तुलस्युवाच।
सती त्वया परित्यक्ता कामो दग्धः पुरा कृतः।
कथं तदा वशिष्ठश्च प्रभो प्रस्थापितोऽधुना॥ ३४
स्वाहोवाच।
स्थिरो भव महादेव स्त्रीणां वचसि साम्प्रतम्।
विवाहे व्यवहारोऽस्ति पुरन्ध्रीणां प्रगल्भता॥ ३५
रोहिण्युवाच।
कामं पूरय पार्व्वत्याः कामशास्त्रविशारद।
कुरु पारं स्वयं कामी कामिनीं कामसागरे॥ ३६
वसुन्धरोवाच।
जानासि भावं सर्व्वज्ञ कामार्त्तानाञ्च योषिताम्।
न च स्वं स्वामिनं शम्भो स्वामी स्वं पाति सन्ततम्॥३७
शतरूपोवाच।
भोगद्रव्यं विना भोगी न हि तुष्टः क्षुधातुरः।
येन तुष्टिर्भवेच्छम्भो तत् कर्त्तुमुचितं स्त्रियाः॥ ३८
संज्ञोवाच।
तूर्णं प्रस्थापय प्रीत्या पार्व्वत्या सह शङ्करम्।
रत्नप्रदीपं ताम्बूलं तल्पं निर्म्माय निर्ज्जने॥ ३९
श्रीकृष्ण उवाच।
स्त्रीणां तद्वचनं श्रुत्वा उवाच च शिवः स्वयम्।
निर्व्विकारश्च भगवान् योगीन्द्राणां गुरोर्गुरुः॥ ४०
शङ्कर उवाच।
देव्यो न ब्रूत वचनमेवम्भूतं ममान्तिके।
जगतां मातरः साध्व्यः पुत्रे चपलता कथम्॥ ४१
शङ्करस्य वचः श्रुत्वा लज्जिताः सुरयोषितः।
बभूवुः सम्भ्रमात् तूष्णीं चित्रपुत्तलिका यथा॥ ४२
भुक्त्वा मिष्टानि भगवानाचम्य च मुदान्वितः।
सकर्पूरञ्च ताम्बूलं बुभुजे भार्य्यया सह॥ ४३
रत्नसिंहासने शम्भुर्मनोहरे मनोहरे।
संनिधाय मुदा युक्तो ददर्श वासमन्दिरम्॥ ४४
रत्नप्रदीपशतकैर्ज्ज्वलद्भिर्ज्ज्वलितं श्रिया।
रत्नपात्रघटाकीर्णं मुक्तामाणिक्यभूषितम्॥ ४५
रत्नदर्पणशोभाढ्यं मण्डितं श्वेतचामरैः।
चन्दनागुरुसंयुक्त-पुष्पशय्यासमन्वितम्॥ ४६
नानाचित्रविचित्राढ्यं निर्म्मितं विश्वकर्म्मणा।
रत्नेन्द्रसाररचितं खचितं हीरकैर्वरैः॥ ४७
कुत्रचित् सुरनिर्म्माणं वैकुण्ठं सुमनोहरम्।
वृन्दावनं कुत्रचन कुत्रचिद्रासमण्डलम्॥ ४८
कैलासञ्च कुत्रचन कुत्रचिदिन्द्रमन्दिरम्।
दृष्ट्वाश्चर्य्यं महादेवः परितुष्टो बभूव ह॥ ४९
अथ प्रभातकालश्च बभूव प्राणवल्लभे।
नानाप्रकारवाद्यञ्च वादयामास वादकाः॥ ५०
सर्व्वेश्वराः समुत्तस्थुः सज्जीभूताः ससम्भ्रमाः।
स्ववाहनानि चारुह्य कैलासं गन्तुमुद्यताः॥ ५१
वासगेहं समागत्य धर्म्मो नारायणाज्ञया।
उवाच शङ्करं योगी योगिनां समयोचितम्॥ ५२
धर्म्म उवाच।
उत्तिष्ठोत्तिष्ठ भद्रं ते भवतु प्रमथाधिप।
पार्व्वत्या सह माहेन्द्रे यात्रां कुरु हरिं स्मरन्॥ ५३
दृष्ट्वा धर्म्मं वचः श्रुत्वा पार्व्वत्या सह शङ्करः।
यात्रां चकार माहेन्द्रे वृन्दावनविनोदिनि॥ ५४
यात्रां कुर्व्वति देवेशे पार्व्वत्या सह शङ्करे।
उच्चै रुरोद सा मेना तमुवाच कृपानिधिम्॥ ५५
मेनोवाच।
कृपानिधे कृपां कृत्वा मद्वत्सां पालयिष्यसि।
सहस्रदोषं भगवन्नाशुतोष क्षमिष्यसि॥ ५६
त्वत्पदाम्भोजभक्ता मे वत्सा जन्मनि जन्मनि।
स्वप्ने ज्ञाने स्मृतिर्नास्ति महादेवं प्रभुं विना॥ ५७
त्वद्भजनश्रुतिमात्रेण हर्षाश्रुपुलकाञ्चिता।
त्वन्निन्दया भवेन्मौना मृत्युञ्जय मृता इव॥ ५८
इत्युक्त्वा मेनका शीघ्रं समर्प्य च शिवां शिवे।
अत्युच्चै रोदनं कृत्वा मूर्च्छामाप तयोः पुरः॥ ५९
मूर्च्छां प्रापुर्देवपत्न्यः पार्व्वत्या रोदनेन च।
स्वयं रुरोद योगीन्द्रो देवाश्च विष्णुमायया॥ ६०
एतस्मिन्नन्तरे शीघ्रं तत्रागत्य हिमालयः।
उच्चै रुरोद मोहेन वत्सां कृत्वा स्ववक्षसि॥ ६१
क्व यासि वत्सेत्युच्चार्य्य शून्यं कृत्वा हिमालयम्।
स्मारं स्मारं त्वद्गुणौघं विदीर्णं मन्मनः स्फुटम्॥६२
इत्येवमुक्त्वा शैलेन्द्रः समर्प्य च शिवां शिवे।
सशैलः सह पुत्रैश्च रुरोदोच्चैर्मुहुर्मुहुः॥ ६३
नारायणश्च भगवानध्यात्मविद्यया स्वयम्।
सर्व्वान् प्रबोधयामास कृपया स कृपानिधिः॥ ६४
ननाम पार्व्वती भक्त्या मातरं पितरं गुरुम्।
मायया च महामाया रुरोदोच्चैर्मुहुर्मुहुः॥ ६५

पार्व्वतीरोदनेनैव सरुदुः सर्व्वयोषितः।
मुनयश्च सुराः सर्व्वे सस्त्रीकाः सगणा ध्रुवम् ॥ ६६
शीघ्रं ययुस्ते कैलासं देवा मानसयायिनः।
मुहूर्त्तार्द्धेन मुदिताः सम्प्रापुः शङ्करालयम् ॥६७
दृष्ट्वागतान् (क) देवपत्न्यो मुनिपत्न्यश्च सत्वरम्।
आययुर्दीपमानीय मुदा मङ्गलकर्म्मणि ॥ ६८
वायुपत्नी कुवेरस्य कामिनी शुक्रकामिणी।
तथा (ख) सुरगुरोः पत्नी पत्नी दुर्व्वाससस्तथा ॥६९
अत्रिभार्य्यानुसूया च चन्द्रपत्न्यस्तथैव च।
देवकन्या नागकन्या मुनिकन्याः सहस्रशः।
असंख्यं कामिनीसङ्घं संख्यां कर्त्तुञ्च कः क्षमः ॥ ७०
ताश्च प्रवेशयामासुर्दम्पती वासमन्दिरम्।
रत्नसिंहासने रम्ये वासयामासुरीश्वरम् ॥ ७१
सतीं तां दर्शयामास शिवः पूर्व्वालयं मुदा।
सति सरस्वती गेहाद्दुयहता तातमन्दिरम् ॥ ७२
अधुना शैलकन्या त्वं तत्र दक्षसुता पुरा।
जातिस्मरां स्मारयामि सत्यं स्मरसि चेदह ॥ ७३
शङ्करस्य वचः श्रुत्वा सस्मितोवाच सा सती।
सर्व्वं स्मरामि (ग) देवेश मौनीभूतो भवेति तम्॥७४
शिवः सम्भृतसम्भारो नानावस्तु मनोहरम्।
भोजयामास देवांश्च नारायणपुरोगमान् ॥ ७५
भुक्त्वा देवाः प्रजग्मुस्ते नानारत्नविभूषिताः।
सस्त्रीकाः सगणाः सर्व्वे प्रणम्य चन्द्रशेखरम् ॥ ७६
नारायणञ्च ब्रह्माणं ननाम शङ्करः स्वयम्।
तौ च तञ्च समाश्लिष्याशिषं दत्त्वा प्रजग्मतुः ॥ ७७
अथ शैलश्च मेना च मैनाकमाजुहाव ह।
शीघ्रमानय भद्रं ते पार्व्वतीशङ्करं सुत ॥ ७८
तयोः स वचनं श्रुत्वा शीघ्रं गत्वा शिवालयम्।
आजगाम समानीय पार्व्वतीपरमेश्वरौ ॥ ७९
पार्व्वत्यागमनं श्रुत्वा बालाश्च बालिकास्तथा।
वृद्धा युवत्यो या (घ) याश्च शैलाश्च दुद्रुवुर्मुदा ॥ ८०
मेना सुताभ्यां वध्वा च सह दुद्राव सस्मिता।
हिमालयश्च मुदितो दुद्रावानुव्रजन् सुताम् ॥ ८१

अवरुह्य रथाद्देवी मातरं पितरं गुरून्।
प्रणनाम प्रमुदिता निमग्नानन्दसागरे ॥ ८२
पार्व्वतीञ्च समाश्लिष्य मेनका हर्षविह्वला।
हिमालयश्च मुदितो गता प्राणा इवागता ॥ ८३
सुतां निधाय गेहे स्वे रत्नसिंहासनं ददौ।
शूलभृते गणेभ्यश्च मधुपर्क्कादिकं मुदा ॥ ८४
तस्थौ श्वशुरगेहे च सगणश्चन्द्रशेखरः।
नित्यं षोड़शोपचारैः पूजितः सह भार्य्यया ॥ ८५
इत्येवं कथितं राधे शङ्करोद्वाहमङ्गलम्।
शोकघ्नं हर्षजनकं किं भूयः श्रोतुमिच्छसि ॥ ८६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे पञ्च-चत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशोऽध्यायः।

राधिकोवाच।

सुचिरञ्च मृतं कामं शङ्करेण च जीवितम्।
रतिः पुनः प्रियं प्राप्य किं चकार मुदान्विता ॥ १
स्त्रीणां स्वस्वामिविच्छेदो मरणादतिदुष्करः।
पुनः सम्मिलनं तस्य सुखं परमदुर्लभम् ॥ २
शिवः सतीं तां सम्प्राप्य साङ्गे मङ्गलकर्म्मणि।
चिरप्रनष्टां विरहात् किं चकार मुदान्वितः ॥ ३
कलत्रविरहः पुंसां सर्व्वशोकात् सुदुष्करः।
पुनः सम्मिलनं तस्याः प्राणदानाधिकं सुखम् ॥ ४
रतिः पुंसो विरहिणी शिवः स्त्रीविरही चिरम्।
द्वयोर्द्वयोश्च सम्प्राप्तौ किं बभूव द्वयोः सुखम् ॥ ५
तदेव श्रोतुमिच्छामि परं कौतूहलं मम।
कृपया विदुषां श्रेष्ठ सत्यं संकथय प्रभो ॥ ६
मिलनं शक्ति-शिवयो रति-मन्मथयोस्तथा।
शोकापहं श्रुतवतां सर्व्वमङ्गलकारणम् ॥ ७

नारायण उवाच।

इत्युक्त्वा राधिका देवी सस्मिता विरराम ह।
कृष्णस्तद्वचनं श्रुत्वा सस्मितस्तामुवाच ह ॥ ८

श्रीकृष्ण उवाच।

मृतं कामं पुनः प्राप्य कामार्त्ता कामकामिनी।
स्वालयं तं समानीय चरोद्वाहगृहाद्दती ॥ ९

---

(क) दृष्ट्वागतमिति पाठान्तरम्।
(ख) तारा सुरगुरोरिति वा पाठः।
(ग) स्मरामि प्राणेश इति पाठान्तरम्।
(घ) जायाश्च इत्यपि पाठः।

भर्त्तुः सुवेशं विविधमालनशालिभिर्मुदा ।
कारयामास यत्नेन सा रती रमणोत्सुका ॥ १०
ज्ञात्वा कामस्तु तद्भावं कामशास्त्रविशारदः ।
रत्नयानं समारुह्य जगाम स्वालयादनम् ॥ ११
शैले शैलेऽतिरम्ये च नद्यां नद्यां नदे नदे ।
द्वीपे द्वीपे सिन्धुतटे पुष्पोद्याने मनोहरे ॥ १२
काञ्चनीभूमिनिकटे वटमूलेऽतिनिर्ज्जने ।
जलाब्धिपुलिनोर्द्धे च पुष्पिते पुष्पकानने ॥ १३
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते ।
सुगन्धिवायुनाकीर्णे दधता जलशीकरम् ॥ १४
चित्तेषु चेतनानाञ्च हरणं योषितामहो ।
कलामानप्रकारेण शृङ्गारञ्च चकार सः ॥ १५
पूर्णमब्दशतं दिव्यं स रेमे रामया सह ।
दिवानिशं न बुबुधे कामिनीहृतचेतनः ॥ १६
तस्थतुस्तौ च तत्रैव संसक्तौ सन्ततं मुदा ।
सुरतौ च न विरतौ रतिशास्त्रविशारदौ ॥ १७
पति-विच्छेदसन्तापं विजहौ सा रतिर्मुदा ।
प्राप्य रत्नमपह्नुतं कः क्षणं त्यक्तुमुत्सहेत् ॥ १८
इत्येवं कथितं सर्व्वं रतिसन्ताप(क)वारणम् ।
शृङ्गारं शक्तिशिवयोरतुलं शृणु राधिके ॥ १९
श्रुखतां कर्णपीयूषं परमाश्चर्यमीप्सितम् ।
सर्व्वसन्तापहरणं सुखदं पुण्यदं शुभम् ॥ २०
वसन् श्वशुरगेहे स पार्व्वत्या सह शङ्करः ।
तदनुज्ञां समादाय क्रीडार्थं प्रययौ वनम् ॥ २१
रत्नस्यन्दनमारुह्य रत्नसारपरिच्छदम् ।
रत्नसारेण खचितं रचितं विश्वकर्म्मणा ॥ २२
शतशृङ्गे (ख) सुवदने मलये गन्धमादने ।
नन्दने पुष्पभद्रे च पारिभद्रे च भद्रके ॥ २३
पुलिन्दे च कलिन्दे च पुण्ड्रे पिण्डारकेऽम्बके ।
वने वनेऽतिरम्ये च सागराणां तटे तटे ॥ २४
निकटेऽस्तगिरेः पार्श्वे वटमूले मनोहरे ।
चकार करुणां यत्र परित्यज्य सतीशवम् ॥ २५
नानास्थानेऽपि रहसि पशुपक्षिविवर्ज्जिते ।
यथा मनोरथं कामी स रेमे रामया सह ॥ २६
यत्र यत्र शवं नीत्वा बभ्राम धरणीतलम् ।
तं सर्व्वं दर्शयामास सतीं शम्भुर्मुदान्वितः ॥ २७
कृत्वा विहारं सुचिरं न पूर्णं मानसं तयोः ।
महाशृङ्गारमारेभे सहसाब्दं जगत्पिता ॥ २८
मायातीतो हि मायेशो मायासक्तः स्वमायया ।
न कालं बुबुधे योगी सुखेन कालकारकः ॥ २९
शक्ति-शक्तिमतोस्तत्र न बभूव परिश्रमः ।
जहतोः सर्व्वसन्तापमसह्यविरहोद्भवम् ॥ ३०
सुखसंसक्तमनसोः पुलकाञ्चितगात्रयोः ।
कामबाणमूर्च्छितयोः पुष्पशय्याशयानयोः ॥ ३१
नग्नयोः सुखसम्भोगाद्रतिशास्त्रातिविज्ञयोः ।
नखदन्तप्रहारैश्च क्षतविक्षतदेहयोः ॥ ३२
चन्दनागुरुकस्तूरी-सिन्दूरबिन्दुलिप्तयोः ।
निर्बन्धकेशकबरी-श्लथयोश्छिन्नमाल्ययोः ॥ ३३
रसनानां नूपुराणां कङ्कणानाञ्च सुन्दरि ।
वलयानां कुण्डलानां शब्दैः क्रीडां प्रकुर्व्वतोः ॥३४
पुष्पतल्पदलितयोर्वीर्य्योत्कर्षञ्च बिभ्रतोः ।
तेजसा समयोः शश्वत् क्रीडया कौतुकेन च ॥ ३५
भरेण विश्वम्भरयोर्भाराक्रान्ता वसुन्धरा ।
सा विदीर्णा चकम्पे च सशैल-वन-सागरा ॥ ३६
तयो (क) र्भरतरान्नम्रधरायाश्च भरेण च ।
भाराक्रान्तो हि शेषश्च तद्भारार्त्तो हि कच्छपः ॥३७
कच्छपस्य भरेणैव सर्व्वाधाराः समीरणाः ।
महाविकलयुक्ताश्च सर्व्वप्राणाश्च स्तम्भिताः ॥ ३८
स्तम्भितेषु समीरेषु त्रिलोका भयविह्वलाः ।
ब्रह्मादयः सुराः सर्व्वे वैकुण्ठं शरणं ययुः ॥ ३९
सर्व्वं निवेदनं चक्रुर्नारायणपदाम्बुजे ।
नारायणश्च भगवानुवाच कमलोद्भवम् ॥ ४०

नारायण उवाच ।

शृङ्गारभङ्गसमयो भविता नाधुना विधे ।
कालप्रयुक्तं कार्यञ्च सिद्धं तत्समयोचितम् ॥ ४१
पूर्णे वर्षसहस्रे च स्वेच्छया विरमिष्यति ।
शम्भोः सम्भोगमिष्टञ्च को भेदं कर्त्तुमीश्वरः ॥ ४२
स्त्रीपुंसो रतिविच्छेदसुपायेन करोति यः ।
तस्य स्त्रीपुत्त्रयोर्भेदो भवेज्जन्मनि जन्मनि ॥ ४३
यात्यन्ते कालसूत्रञ्च वर्षलक्षं स पातकी ।
भ्रष्टज्ञानो नष्टकीर्त्तिरलक्ष्मीको भवेदिह ॥ ४४

(क) सन्तापकारणमिति पाठस्तसाधुः ।
(ख) शतशृङ्गे सुवसने इति पाठान्तरम् ।
(क) तयोर्भव-भवान्योश्च इति पाठान्तरम् ।

रम्भायुक्तं शक्रमिमं चकार विरतिं रतौ।
महामुनीन्द्रो दुर्व्वासास्तत्स्त्रीभेदो बभूव ह ॥४५
पुना(क)रम्भां स सम्प्राप्य निषेव्य शूलपाणिनम्।
दिव्यं वर्षसहस्रञ्च विजहौ विरहज्वरम् ॥ ४६
घृताच्या सह संश्लिष्टं कामं वारितवान् गुरुः।
अक्षाराभ्यन्तरे चन्द्रस्तस्य पत्नीं जहार सः ॥ ४७
पुनः शिवं समाराध्य कृत्वा तारामयं रणम्।
तारां सगर्भां सम्प्राप्य विजहौ विरहज्वरम् ॥ ४८
रोहिणीसहितं चन्द्रं चकार विरतं रतौ।
महर्षिर्गौतमस्तस्य स्त्रीविच्छेदो बभूव ह ॥ ४९
पुनः शिवं समाराध्य शाप्याहल्याञ्च पुष्करे।
दिव्यं वर्षसहस्रञ्च विजहौ विरहज्वरम् ॥ ५०
मुनिं स्वभार्य्यासंसक्तं दिवसे निर्ज्जने वने।
विभाण्डकस्तु तं नीत्वा चकार विरतं युवा ॥ ५१
बभूव पुत्रविच्छेदस्तस्य कालान्तरे पुनः।
शिवं निषेव्य सम्प्राप्य पुत्रं तत्याज विक्लवम् ॥ ५२
हरिश्चन्द्रो हालिकञ्च वृषल्या सह संयुतम्।
वारयामास निश्चेष्टं निर्ज्जने तत्फलं शृणु ॥ ५३
भ्रष्टं स्त्रीपुत्रराज्येभ्यस्तं चकारावलीलया।
विश्वामित्रो महर्षिश्च ताड़यामास तं पुरा ॥ ५४
ततः शिवं समाराध्य दातारं सर्व्वसम्पदाम्।
सद्यो जगाम वैकुण्ठं सगणो मम मन्दिरम् ॥ ५५
अजामिलं द्विजश्रेष्ठं वृषल्या सह संयुतम्।
न भिया वारयामासुः सुरास्तत्रापि केचन ॥ ५६
निषण्णं कर्म्मभोगी च स मद्भक्तो मुमोह च (ख)।
मन्नामस्मृतिमात्रेण आजगाम ममालयम् ॥ ५७
सर्व्वं निषेकसाध्यञ्च निषेको बलवान् विधेः।
निषेकफलदाताहं निषेकः केन वार्य्यते ॥ ५८
दिव्यं वर्षसहस्रञ्च शम्भोः सम्भोगकर्म्म तत्।
निषेकफलदातुश्च निषेकफलसञ्चयम् ॥ ५९
पूर्णे वर्षसहस्रे च गत्वा तत्र सुरेश्वरः।
येन वीर्य्यं पतेद्भूमौ तत् करिष्यति निश्चितम् ॥ ६०
तत्र वीर्य्ये च भविता स्कन्दको भद्रकारकः।
सदा भद्रस्वरूपोऽहं भयं (ग) नास्ति मयि स्थिते॥६१

(क) पुनरन्यामिति पाठो बहुषु पुस्तकेषु दृश्यते।
(ख) मुहुर्म्मुहुरिति पाठान्तरम्।
(ग) भयं किं वो मयि स्थिते इति पाठान्तरम्।

अधुना त्वं गृहं गच्छ भगवान् स्वगणैः सह।
करोतु शम्भुः सम्भोगं पार्व्वत्या सह निर्ज्जने ॥ ६२
इत्युक्त्वा कमलाकान्तः शीघ्रं स्वान्तःपुरं ययौ।
स्वालयं प्रययुर्देवाः शिवस्तस्थौ रतौ रतः ॥ ६३

नारायण उवाच।

इत्युक्त्वा राधिकां कृष्णः सकटाक्षाञ्च सस्मिताम्।
जगाम चन्दन(क) वनं निर्ज्जने च तया सह ॥ ६४
अतीव निर्ज्जनं रम्यं वायुना सुरभीकृतम्।
पुष्पोद्यानैः समाकीर्णं तत्र क्रीड़ां चकार ह ॥ ६५
पुष्पतल्पसमाकीर्णे परपुष्टरुतश्रुते।
भ्रमरध्वनिसंयुक्ते कामिनीनां मनोहरे ॥ ६६
कृष्णसम्भोगमात्रेण सुखसंमूर्च्छिता च सा।
अतीव मुर्च्छितः कृष्णो राधाङ्गस्पर्शमात्रतः ॥ ६७
तस्थतुस्तत्र संसक्तौ राधारासेश्वरौ मुने।
अतीव रतिनिश्चेष्टौ किं भूयः श्रोतुमिच्छसि ॥ ६८
इत्येव मङ्गलं कर्म्म यः शृणोति समाहितः।
कदाचिदस्य विच्छेदो न भवेत् तस्य नारद ॥ ६९
महाशोकार्णवे मग्नो भेदे पुत्र-कलत्रयोः।
सद्भक्त्यानाञ्च बन्धूनां मासं श्रुत्वा लभेद्ध्रुवम् ॥ ७०

सूत उवाच।

इत्युक्त्वा धर्म्मपुत्रश्च विरराम महामुनिः।
पुनः सम्प्रष्टुमारेभे देवर्षिः कौतुकान्वितः ॥ ७१

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
सर्व्वमङ्गल वर्णनं नाम षट्-
चत्वारिंशोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशोऽध्यायः।

नारद उवाच।

अथ क्रीड़ान्तरे राधा किं पप्रच्छ हरिं विभुम्।
कां कथां कथयामास कथ्यतां करुणानिधे ॥ १

नारायण उवाच।

उत्थाय सुखसम्भोगाद्राधां कृत्वा पुरो हरिः।
उवास मलयद्रोण्यां वटमूले मनोहरे ॥ २
राधा तं परिपप्रच्छ सस्मितं सुमनोहरम्।
दर्पभङ्गं वचश्रुतो निगूढ़ं श्रुतिसुन्दरम् ॥ ३

(क) नन्दनवनमिति पाठः क्वचिद्दृश्यते।

राधिकोवाच ।

श्रुतं यशः शूलभृतो दर्पभङ्गश्च दैवतः ।
पार्व्वत्या दर्पभङ्गश्च विवाहश्च तयो रहः ॥४
अधुना श्रोतुमिच्छामि दर्पभङ्गं हरेहरे ।
शेषाणाञ्च क्रमेणैव वद व्यस्य जगद्गुरो ॥ ५

श्रीकृष्ण उवाच ।

दर्पभङ्गं सुरपतेस्त्रिषु लोकेषु विश्रुतम् ।
कर्णपीयूषमतुलं सुन्दरं शृणु सुन्दरि ॥ ६
पुरा शतमखो दर्पात् कृत्वा मखशतं मुदा ।
बभूव सर्व्वदेवानामध्यक्षः सम्पदा युतः ॥ ७
दिने दिने तदैश्वर्य्यं वर्द्धते तपसः फलात् ।
दीक्षां तं कारयामास सिद्धमन्त्रं बृहस्पतिः ॥ ८
स जजाप महामन्त्रं पुष्करे शतवत्सरम् ।
बभूव मन्त्रसिद्धेश्च परिपूर्णमनोरथः ॥ ९
ब्रह्मस्वरूपां प्रकृतिं सम्पश्यन्तो (क) न मन्यते ।
सा तं शशाप स्वगुरोः शापं लभेति कोपतः ॥ १०
एकदा प्रकृतेः शापाद्धतबुद्धिः स्वसंसदि ।
गुरुं दृष्ट्वा समुत्थाय न ननाम मदान्वितः ॥११
बृहस्पतिस्ततः कोपान्नोवास गृहमाययौ ।
न तस्थौ तारकाभ्यासे तपसे काननं ययौ ॥ १२
उवाच मनसा दीनो यातु सम्पद्धरेरिति ।
अथ शक्रो मतिं प्राप्य क्व गतोऽतो महीश्वरः ॥ १३
इत्युक्त्वा वेगतः पीठाज्जगाम तारकान्तिकम् ।
प्रणम्य मातरं भक्त्या नतस्कन्धः पुटाञ्जलिः ॥ १४
सर्व्वं निवेदनं कृत्वा सरोदोच्चैर्मुहुर्मुहुः ।
पुत्रस्य रोदनं दृष्ट्वा सरोद तारका भृशम् ॥ १५
वत्स गच्छ गृहं नैव गुरुं द्रक्ष्यसि साम्प्रतम् ।
दुर्द्दिनान्ते गुरुं प्राप्य पुनर्लक्ष्मीमवाप्स्यसि ॥ १६
अधुना कर्म्मणो भोगं भुङ्क्ष्व मूढ़ दुराशय ।
दुर्द्दिने स्वगुरो रोषः सुदिने गुरुतोषणम् ॥ १७
सुदिनं दुर्द्दिनं शक्र कारणं सुख-दुःखयोः ।
इत्युक्त्वा तारका देवी विरराम पतिव्रता ॥ १८
जगाम शक्रः स्नानार्थं स्वर्णदीं सुमनोहराम्॥ १९
ददर्श तत्र रुचिरामागच्छन्तीं नितम्बिनीम् ।
सस्मितां सकटाक्षां तामहल्यां गौतमप्रियाम् ॥ २०
दृष्ट्वा च विपुलां श्रोणीं स्तनयुग्मं मनोहरम् ।

(क) सोऽस्मान्मद इति पाठः क्वचिद्दृश्यते ।

तस्याः शक्रः स्मरं पश्यन् मुमोह काममोहितः ॥ २१
पुनः स चेतनां प्राप्य विहाय स्नानमीश्वरि ।
मूर्त्तिं विधाय तद्भर्त्तुस्तत्समीपं जगाम ह ॥ २२
गत्वा तत् स्निग्धवस्त्रान्तं समाकृष्य स्मरातुरः ।
चकार विविधं तत्र शृङ्गारं स्त्रीमनोहरम् ॥ २३
मूर्च्छां सम्प्राप्य कामेन तन्द्राञ्च मुनिकामिनी ।
निश्चेष्टा सुखसम्भोगान्निश्चेष्टस्त्रिदशाधिपः ॥ २४
एतस्मिन्नन्तरे तत्रा समागत्य मुनीश्वरः ।
ददर्श गेहे मिथुनं मैथुने च रतं प्रिये ॥ २५
दृष्ट्वा चुकोप स मुनिर्ज्ज्वलन्निव हुताशनः ।
विघ्नी न चातिरोषेण बभञ्ज सुरतिक्षणम् ॥ २६
शक्रः स चेतनां प्राप्य दृष्ट्वा च मुनिपुङ्गवम् ।
कालस्वरूपं रोषेण (क) दधार चरणाम्बुजम् ॥ २७
कोपरक्तास्यनयनो देवं पादानतं भिया ।
उवाच नीतं न च तं जघान शरणागतम् ॥ २८

गौतम उवाच ।

धिक् त्वामिन्द्र सुरश्रेष्ठ कश्यपात्मज पण्डित ।
प्रपौत्र जगतां स्रष्टुर्बुद्धिस्ते कथमीदृशी ॥ २९
मातामहः स्वयं दक्षोऽदितिर्माता पतिव्रता ।
कर्म्मसाध्यः स्वभावश्च कुलधर्म्मं प्रबाधते ॥ ३०
वेदं विज्ञाय ज्ञानी त्वं योनिलुब्धोऽसि कर्म्मणा ।
योनीनाञ्च सहस्रञ्च तव गात्रे भवत्विह ॥ ३१
योनिगन्धं समाप्नुहि पूर्णवर्षञ्च सन्ततम् ।
ततः सूर्य्यं समाराध्य योनिश्चक्षुर्भविष्यति ॥ ३२
मम प्राणेश्वरी दुष्टा येन मूढ़ त्वया कृता ।
मच्छापेन गुरोः कोपाद्भ्रष्टश्रीभव साम्प्रतम् ॥ ३३
गुरोरपेक्षया मूढ़ प्राणा नापहृतास्तव ।
तेजस्विनोऽतिबन्धोर्मे वस्तुभेदभिया सुर ॥ ३४
उत्तिष्ठोत्तिष्ठ देवेन्द्र गच्छ वत्स स्वमन्दिरम् ।
शुभाशुभञ्च यत्किञ्चित् सर्व्वं कर्म्मोद्भवं भवेत् (ख)३५
महामुनीन्द्रवचनाद्गत्वा शक्रश्च पुष्करम् ।
चकाराराधनं भक्त्या नैरुज्यं तदवाप ह ॥ ३६
पदानतामहल्यां तामुवाच मुनिपुङ्गवः ।
वनं गत्वा चिरं तिष्ठ विधाय मूर्त्तिमश्मनः ॥ ३७
अकामां चकमे शक्रः सर्व्वं जानाम्यहं प्रिये ।

(क) त्रासेन इति पाठान्तरम् ।
(ख) भवे इति वा पाठः ।

तथापि परभोग्या मे न च भोग्या व्रजाधमे ॥ ३८
परवीर्य्यं यदुदरं कामतोऽकामतोऽपि वा।
अहत्वे याति दैवेन तदुपायं निशामय ॥ ३९
अकामतो न दुष्टा सा प्रायश्चित्तेन शुध्यति।
कामभोगेन त्वाच्या सा कर्म्मभोगेण शुध्यति ॥ ४०
पितृपाके देवपाके पूजायां नाधिकारिणी।
षष्टिं वर्षसहस्राणि कालसूत्रं प्रयाति सा (क)॥४१
स्वामिनो वचनात् सा तु प्रणम्य स्वामिनं भिया।
कुर्व्वती नाथ नाथेति रुदती वनमाप ह ॥ ४२
षष्टिं वर्षसहस्राणि भुक्त्वा भोगं मुनिप्रिया।
श्रीरामचरणस्पर्शात्सद्यः पूता बभूव सा ॥ ४३
त्रैलोक्यमोहनं रूपं विधाय मुनिकामिनी।
जगाम गौतमाश्रमं मुनिः सम्प्राप सुन्दरीम् ॥ ४४
अथ शक्रस्य वृत्तान्तं परमं शृणु सुन्दरि।
पापघ्नं पुण्यबीजं तं संस्कृत्य (ख) कथयामि ते ॥४५
एकदा च गुरोः कोपात् प्रकृतेश्चैव हेलनात्।
ब्रह्महत्या वज्रभृतो बभूव हतचेतसः ॥ ४६
शक्रस्त्यक्तगुरुर्देवि (ग) त्रस्तो दैत्यनिपीड़ितः।
जगाम शरणं भीतो ब्रह्माणं जगतां गुरुम् ॥ ४७
तदाज्ञया विश्वरूपं चकार स पुरोहितम्।
बभूव तत्र विश्वस्तो देवाहुतिहतो हरिः ॥ ४८
दैत्यदौहित्रस्य भावं विज्ञाय च विचक्षणः।
प्रचिच्छेद शिरस्तस्य तीक्ष्णबाणेन लीलया ॥ ४९
विश्वरूपपिता त्वष्टा श्रुत्वा सद्यश्चुकोप ह।
इन्द्रशत्रुर्वर्द्धतामित्युक्त्वा यज्ञं चकार ह ॥ ५०
यज्ञकुण्डात् समुत्तस्थौ वृत्रो नाम महासुरः।
चकार निग्रहं कोपाद्देवानामवलीलया ॥ ५१
शक्रो महामुनेरस्थ्ना वज्रं कृत्वा सुदारुणम्।
जघान वृत्रं देवानां कण्टकं दैत्यमर्द्दनः ॥ ५२
ब्रह्महत्या सुनासीरं दुद्राव हतचेतनम्।
रक्तवस्त्रपरीधाना वृद्धास्त्रीवेशधारिणी ॥ ५३
सप्ततालीप्रमाणाशु शुष्ककण्ठौष्ठतालुकम्।
ईशाप्रमाणदशना महाभीतञ्च कातरम् ॥ ५४

धावन्तं परिधावन्ती बलिष्ठा हतचेतनम्।
खड्गहस्ता हतास्त्रं तं दयाहीना च मूर्च्छितम् ॥५५
इन्द्रो दृष्ट्वा च तां घोरां स्मारं स्मारं गुरोः पदम्।
विवेश मानससरो मृणालसूक्ष्मसूत्रतः ॥ ५६
तत्र गन्तुं न शक्ता सा ब्रह्मणः शापकारणात्।
सा तस्थौ वटशाखायां सरस्तटसन्निधौ ॥ ५७
अथात्र नहुषो भूपस्त्रिलोकेशो बभूव ह।
स ययाचे शचीं देवान् बलिष्ठो दुर्ब्बलानपि ॥ ५८
शची श्रुत्वा महाभीता तारकाशरणं ययौ।
तारा निर्भर्त्स्य स्वपतिं भृत्यपत्नीं ररक्ष च ॥ ५९
शचीमाश्वास्य स गुरुर्जगाम तत् सरो मुदा।
आजुहाव सुनासीरं कातरं हतचेतनम् ॥ ६०

बृहस्पतिरुवाच।

उत्तिष्ठोत्तिष्ठ हे वत्स भयं किं ते मयि स्थिते।
त्वदीश्वरं स्मरेणैव निशामय भयं त्यज ॥ ६१
बृहस्पतेः स्वरं ज्ञात्वा सर्व्वसिद्धेश्वरो हरिः।
सूक्ष्मरूपं परित्यज्य स्वरूपञ्च दधार सः ॥ ६२
उत्थाय सद्यः सम्भ्रान्तस्तं गुरुं सूर्य्यवर्च्चसम्।
दृष्ट्वा ननाम सम्प्रीत्या तं प्रीतं (क) त्यक्तकोपकम्॥६३
पदाम्बुजे निपतितं रुदन्तं भयविह्वलम्।
निधाय वक्षसि प्रेम्णा रुरोद प्रेमविह्वलः ॥ ६४
रुदन्तं वाक्पतिं तुष्टं तुष्टाव त्रिदशेश्वरः।
पुटाञ्जलिः पुलकितो भक्तिनम्रात्मकन्धरः ॥ ६५

इन्द्र उवाच।

क्षमस्व भगवन् दोषं कृपां कुरु कृपानिधे।
भृत्यापराधं सततं न गृह्णाति सदीश्वरः ॥ ६६
स्वभार्य्यासु स्वशिष्येषु स्वभृत्येषु सुतेषु च।
दुर्ब्बलः सबली वापि को दण्डं कर्त्तुमक्षमः ॥ ६७
त्रिषु कोटिषु देवेषु देवेकोऽहमपण्डितः।
त्वत्प्रसादात् सुरश्रेष्ठः कृपया वर्द्धितस्त्वया ॥ ६८
संहर्त्तुमीशस्त्वं सर्व्वमहं को वापि कीटवत्।
स्वयं विधातुः पौत्रश्च पुनः स्रष्टुं स्वयं क्षमः ॥ ६९
इति तस्य स्तवं श्रुत्वा परितुष्टो गुरुः स्वयम्।
उवाच वचनं प्रीत्या प्रसन्नवदनेक्षणः ॥ ७०

बृहस्पतिरुवाच।

स्थिरो भव महाभाग निश्चलां कमलां लभ।

(क) क्वचित् पुस्तके 'प्रयाति सा' इतः परं 'षष्टिं वर्षसहस्राणि क्षयं कृत्वा स्वकर्म्मणः' इत्यधिकः पाठो दृश्यते।
(ख) संयम्य इति पाठान्तरम्।
(ग) द्रवत्रस्तः इति वा पाठः।

(क) सम्प्रीतमिति पाठान्तरम्।

सम्प्राप्य परमैश्वर्य्यं पूर्व्वस्माच्च चतुर्गुणम् ॥ ७१
गच्छामरावतीं वत्स राज्यं कुरु पुरन्दर।
हतशत्रुर्मत्प्रसादाद्गत्वा पश्य शचीं सतीम् ॥ ७२
इत्येवमुक्त्वा स गुरुः शिष्यौ गन्तुमुद्यतः।
ददर्श पुरतो घोरां ब्रह्महत्यां सुदुःसहाम् ॥ ७३
दृष्ट्वा शक्री महाभीतस्तं गुरुं शरणं ययौ।
बृहस्पतिर्महाभीतः सस्मार मधुसूदनम् ॥ ७४
एतस्मिन्नन्तरे तत्र वाग्बभूवाशरीरिणी।
स्वल्पाक्षरा च बह्वर्था तां शुश्राव बृहस्पतिः ॥ ७५
संसारविजयं नाम सर्व्वाशुभविनाशनम्।
राधिकाकवचं दत्त्वा शिष्यं रक्षाधुनेति च ॥ ७६
तदा तत् कवचं दत्त्वा शिष्याय शिष्यवत्सलः।
चकार भस्मसात् ताञ्च हुङ्कारेणावलीलया ॥ ७७
तदा शिष्यं गृहीत्वा च गत्वाताममरावतीम्।
ददर्श छन्नभग्नाञ्च शत्रुणा च जगद्गुरुः ॥ ७८
भर्त्तुरागमनं श्रुत्वा शची संहृष्टमानसा।
प्रणम्य स्वगुरुं भक्त्या स्वकान्तं प्रणनाम सा ॥ ७९
श्रुत्वागमनमिन्द्रस्य समाजग्मुः सुराः प्रिये।
ऋषयो मुनयश्चैव हर्षगद्गदमानसाः ॥ ८०
त्वष्टारं योजयामास निर्म्मातुममरावतीम्।
पूर्णमब्दशतं शिल्पी निर्म्ममे रुचिरां पुरीम् ॥ ८१
नानारत्नविचित्राढ्यां मणिरत्नेन्द्रनिर्म्मिताम्।
मनोहरां निरुपमां न हि तुष्टस्तया हरिः ॥ ८२
विश्वकर्म्मा गृहं गन्तुं न शशाक विनाज्ञया।
परमोद्विग्नचित्तश्च ब्रह्माणं शरणं ययौ ॥ ८३
विज्ञाय तदभिप्रायं तमुवाच विधिः स्वयम्।
तव कर्म्मक्षयो देव तावत् श्वो भवितेति च ॥ ८४
श्रुत्वा तद्वचनं कारुः शीघ्रं प्रापामरावतीम्।
ब्रह्मा जगाम वैकुण्ठं प्रणम्योवाच मानसम् ॥ ८५
हरिर्ब्रह्माणमाश्वास्य प्रस्थाप्य स्वगृहञ्च तम्।
शिशुरूपं समास्थाय चाजगामामरावतीम् ॥ ८६
दण्डी छत्त्री शुक्लवासा बिभ्रत् तिलकमुज्ज्वलम्।
अतिखर्व्वः शुक्लदन्तः स्मितः सुमनोहरः ॥ ८७
वयसातिशिशुर्बुद्ध्या ज्ञानवृद्धादिचक्षणः।
स्वयं विधातुर्धाता च दाता च सर्व्वसम्पदाम् ॥ ८८
इन्द्रद्वारे समुत्तिष्ठन् द्वारपालमुवाच ह।
ब्रूहीन्द्रं ब्राह्मणो द्वारे शीघ्रं त्वां द्रष्टुमागतः ॥ ८९
इत्येवं वचनं श्रुत्वा द्वारी ज्ञातं चकार तम्।
स च शीघ्रं समागम्य ददर्श ब्राह्मणार्भकम् ॥ ९०
बालकानां बालिकानां समूहैः परिवेष्टितम्।
हसन्निश्चमहोल्लासाद्धात् स्मितं तेजसान्वितम् ॥ ९१
प्रणनाम हरिर्भक्त्या हरिञ्च शिशुरूपिणम्।
आशिषं युयुजे प्रीत्या तं हरिं भक्तवत्सलः ॥ ९२
मधुपर्कादिकं दत्त्वा शक्रः पूजां चकार तम्।
पप्रच्छागमनं कस्मादद्देति विप्रबालकम् ॥ ९३
इन्द्रस्य वचनं श्रुत्वा तमुवाच द्विजार्भकः।
मेघगम्भीरया वाचा वाचस्पतिगुरोर्गुरुः ॥ ९४
ब्राह्मण उवाच।
समागतोऽहं त्वां द्रष्टुं प्रष्टुं वचनमीप्सितम्।
चित्रं नगरनिर्म्माणं समाकर्ण्याद्भुतं हरे ॥ ९५
कतिवर्षञ्च निर्म्माणे भवान् सङ्कल्पितो यथा।
कतिचित्रं विश्वकर्म्मा निर्म्माणं वा करिष्यति ॥ ९६
एवम्भूतञ्च निर्म्माणं न केनेन्द्रेण निर्म्मितम्।
नैवंविधे सुनिर्म्माणे विश्वकर्म्मा परः क्षमः ॥ ९७
बालस्य वचनं श्रुत्वा जहास स सुरेश्वरः।
सम्पन्मदादिमत्तश्च पुनः पप्रच्छ बालकम् ॥ ९८
इन्द्र उवाच।
कतीन्द्राणां समूहश्च त्वया दृष्टः श्रुतोऽथवा।
विश्वकर्म्मा कतिविधस्तन्मे ब्रूहि शिशोऽधुना ॥ ९९
शक्रस्य वचनं श्रुत्वा प्रहस्य विप्रबालकः।
तमुवाच श्रुतिसुखं पीयूषसदृशं वचः ॥ १००
ब्राह्मण उवाच।
जानामि कश्यपं तात तव तातं प्रजापतिम्।
मुनिं मरीचिनामानं तत्तातञ्च तपोनिधिम् ॥ १०१
नाभिपद्मोद्भवं विष्णोस्तत्तातं विधिमीश्वरम्।
रक्षितारञ्च तं विष्णुं परं सत्त्वगुणान्वितम् ॥ १०२
एकार्णवञ्च प्रलयं सत्त्वशून्यं भयानकम्।
सृष्टिं कतिविधां शक्र कल्पं कतिविधं ध्रुवम् ॥ १०३
ब्रह्माण्डञ्च कतिविधं ब्रह्म-विष्णु-महेश्वरान्।
ब्रह्माण्डेषु कतिविधानिन्द्रान् को वक्तुमीश्वरः ॥ १०४
यदि संख्यास्ति रेणूनां धरायाश्च सुराधिप।
तथापि संख्या शक्राणां नास्त्येवेति विदुर्बुधाः ॥ १०५
शक्रस्यायुश्चाधिकारो युगानामेकसप्ततिः।
अष्टाविंशतिशक्राणां पतनेऽहर्निशं विधेः ॥ १०६

विश्वेरष्टोत्तरशत-मायुरेवं प्रमाणतः।
वत्सेन्द्राणाञ्च का संख्या नास्ति संख्या विधेरपि।
ब्रह्माण्डसंख्यां क्व यत्र ब्रह्म-विष्णु-महेश्वराः॥१०७
महाविष्णोर्लोमकूपोद्भवे तोये सुनिर्म्मले।
ब्रह्माण्डोऽस्ति यथा नौका भवतोये च कृत्रिमाः॥१०८
एवं लोम्नः प्रमाणेन ब्रह्माण्डाः सन्त्यसंख्यकाः।
ब्रह्माण्डेषु कतिविधाः सुराः सन्ति भवत्समाः॥ १०९
एतस्मिन्नन्तरे तत्र ददर्श पुरुषोत्तमः।
पिपीलिकासमूहञ्च व्यायतं धनुप्रागतम्॥ ११०
क्रमतस्तान् संनिरीक्ष्य जहासोच्चैर्द्विजार्भकः।
नोवाच किञ्चिन्मौनी च गभीरः सागरो यथा॥१११
दृष्ट्वा हास्यं विप्रवटोर्गाथाः शुल्लातिविस्मितः।
पप्रच्छ च पुनर्विप्रं शुष्ककण्ठोष्ठतालुकः॥ ११२

इन्द्र उवाच।

कथं हससि हे विप्र मां शीघ्रं कारणं वद।
त्वं वा को मायया च्छन्नः शिशुरूपी गुणार्णवः॥११३
इन्द्रस्य वचनं श्रुत्वा तमुवाच द्विजार्भकः।
आध्यात्मिकं नीतिसारं ज्ञानवीजपरं वचः॥ ११४

ब्राह्मण उवाच।

दृष्टः पिपीलिकासङ्घो हेतुरस्य निगूढ़कः।
मा मां पृच्छ शोकवीजं तवान्यज्ञानकारणम्॥११५
सांसारिकाणां संसारवृक्षमूलनिकृन्तनम्।
अज्ञानतमसाच्छन्न-ज्ञानदीपमनुत्तमम्॥ ११६
निगूढ़ं सर्व्ववेदेषु सिद्धानामतिदुर्लभम्।
योगिनां प्राणतुल्यञ्च मूढ़ाहङ्कारभञ्जनम्॥ ११७
इत्युक्त्वा तत्र संतस्थौ सस्मितो द्विजपुङ्गवः।
पुनः पप्रच्छ तं शक्रः शुष्ककण्ठोष्ठतालुकः॥ ११८

इन्द्र उवाच।

ब्रूहि विप्रवटो शीघ्रं ज्ञानदीपं पुरातनम्।
न जानामि शिशुः कस्त्वं ज्ञानराशिः स्वमूर्त्तिमान् ११९
इन्द्रस्य वचनं श्रुत्वा विप्ररूपी जनार्द्दनः।
ज्ञानं भाषितुमारेभे योगीन्द्राणां सुदुर्लभम्॥ १२०

ब्राह्मण उवाच।

दृष्टः पिपीलिकासङ्घ एकैकः क्रमशो मया।
सर्व्वे स्वकर्म्मणा शक्र शक्रभूताः सुरालये॥ १२१
अधुना कर्म्मणा सर्व्वे क्रमशो भूतजन्मनाम्।
अतीते कालसम्प्राप्ता भूता जातिः पिपीलिका॥१२२
कर्म्मणा जीविनो यान्ति वैकुण्ठञ्च निरामयम्।
कर्म्मणा ब्रह्मलोकञ्च शिवलोकञ्च कर्म्मणा॥ १२३
स्वर्गं स्वर्गसमस्थानं पातालञ्च स्वकर्म्मणा।
पतन्ति नरकं घोरमात्मदुःखैककारणम्॥ १२४
कर्म्मणा शूकरीगर्भं कर्म्मणा क्षुद्रजीविनाम्।
कर्म्मणा पशुपक्षीणां कर्म्मणा पक्षियोषिताम्॥१२५
कर्म्मणा कीटयोनिञ्च वृक्षत्वञ्च स्वकर्म्मणा।
कर्म्मणा ब्राह्मणत्वञ्च देवत्वापि स्वकर्म्मणा॥ १२६
स्वकर्म्मणा च शक्रत्वं ब्रह्मपुत्रः स्वकर्म्मणा।
स्वकर्म्मणा सुखी दुःखी सेव्यः सेवक एव च।
कर्म्मणा शिविकारोही राजेन्द्रश्च स्वकर्म्मणा॥ १२७
कर्म्मणा व्याधियुक्तश्च कर्म्मणैवातिसुन्दरः।
कर्म्मणा स्वाङ्गहीनश्च स्वाङ्गवृद्धिश्च कर्म्मणा॥१२८
विधाता कर्म्मसूत्रेण कर्म्मदाता च जीविनाम्।
कर्म्म स्वभावसाध्यञ्च स्वभावोऽभ्यासवीजकः॥ १२९
इत्येव कथितं सर्व्वमाध्यात्मिकपरं वचः।
सुखदं मोक्षदं सारं नरकार्णवतारणम्॥ १३०
संसारं स्वप्नवत् सर्व्वं देवेन्द्र सचराचरम्।
मृत्युश्च मस्तकस्थायी सर्व्वेषां कालयोजितः॥ १३१
जलबुद्बुदवत् सर्व्वं जीविनाञ्च शुभाशुभम्।
चक्रवत् तद्भ्रमत्येव नाविष्टस्तत्र पण्डितः॥ १३२
इत्येवमुक्त्वा विप्रश्च तत्र तस्थौ च संसदि।
विस्मितस्त्रिदशाध्यक्षो नात्मानं बहु मन्यते॥ १३३
एतस्मिन्नन्तरे शीघ्रमाजगाम मुनीश्वरः।
अतिवृद्धो महायोगी ज्ञानेन वयसा महान्॥ १३४
कृष्णाजिनजटाधारी बिभ्रत् तिलकमुज्ज्वलम्।
वक्षःस्थले लोमचक्रं बिभर्त्ति मस्तके कटम्॥ १३५
स्थिरं सर्व्वं मध्यदेशे किञ्चिदुत्पाटितं स्फुटम्।
समागत्य द्वयोर्मध्ये तस्थौ स्थाणुवदेव सः॥ १३६
महेन्द्रो ब्राह्मणं दृष्ट्वा प्रणनाम मुदान्वितः।
मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः॥ १३७
पप्रच्छ कुशलं विप्रं चकार विनयं परम्।
तुष्टावातिथिभावेन मुदा चादरपूर्व्वकम्॥ १३८
विप्रार्भकस्तेन सार्द्धं सम्भाषाञ्च चकार सः।
स्ववाञ्छितं परं प्राह सर्व्वं विनयपूर्व्वकम्॥ १३९

बालक उवाच।

कुतस्त्वमागतो विप्र किं नाम भवतो वद।

को वात्र गमने हेतुर्निवासः कुत्र तेऽधुना ॥ १४०
कथं कटो मस्तके ते लोमचक्रञ्च वक्षसि।
अत्युल्वणं मध्यदेशे किञ्चिदुत्पाटितं मुने ॥ १४१
साम्प्रतं कृपास्ति ते विप्र सर्व्वं संव्यस्य कथ्यताम्।
अत्यद्भुतमिदं सर्व्वं श्रोतुं कौतूहलं मम ॥ १४२
स शिशोर्वचनं श्रुत्वा तमुवाच महामुनिः।
सर्व्वं स्वकीयवृत्तान्तं शक्रस्य पुरतो मुदा ॥ १४३

मुनिरुवाच।

अल्पायुषा मया विप्र कुत्रापि न कृता गृहाः।
न विवाहश्चोपजीव्यं भिक्षोपजीविनाधुना ॥ १४४
लोमशेति च मन्नाम हेतुविप्रास्यदर्शनम्।
वर्षणातपशान्त्यर्थं मस्तकस्थः कटो मम ॥ १४५
वक्षःस्थलस्थितं लोम-चक्रं तत्कारणं शृणु।
सांसारिकाणां भयदं विवेकजननं परम् ॥ १४६
आयुःसंख्याप्रमाणं मे लोमचक्रञ्च वक्षसि।
शक्रैकपतने विप्र लोमैकोत्पाटनं मम ॥ १४७
उत्पाटितानि लोमानि तेन मध्ये स्थितानि च।
ब्रह्मणो हि परार्द्धेन मम मृत्युर्निरूपितः ॥ १४८
असंख्यविधयो ब्रह्मन् मरिष्यन्ति मृता अपि।
कलत्रेण च पुत्रेण गृहेण किं प्रयोजनम् ॥ १४९
ब्रह्मणः पतने चक्षुर्निमेषश्च हरेर्भवेत्।
तस्मात्पदाम्बुजं तुलं चिन्तयामि निरन्तरम् ॥ १५०
दुर्लभं श्रीहरेर्दास्यं भक्तिर्मुक्तिगरीयसी।
स्वप्नवत् सर्व्वमैश्वर्य्यं तद्भक्तिव्यवधायकम् ॥ १५१
इदं सद्गुरुणा दत्तं शम्भुना ज्ञानमुत्तमम्।
विना भक्तिं न गृह्णामि सालोक्यादि चतुष्टयम् ॥१५२
इत्येवमुक्त्वा स मुनिर्जगाम शिवसन्निधिम्।
शिशुरूपी हरिस्तत्रैवान्तर्द्धानं चकार ह ॥ १५३
इन्द्रस्तु स्वप्नवद्दृष्ट्वा बभूव तत्र विस्मितः।
तृष्णामात्रञ्च सम्पत्तौ नास्त्येव परमेश्वरि ॥ १५४
विश्वकर्म्माणमानीय प्रियमुक्त्वा शतक्रतुः।
दत्त्वा रत्नानि सम्पूज्य तं प्रस्थापितवान् गृहम्॥१५५
सर्व्वं विन्यस्य पुत्रे च वनं गन्तुं समुद्यतः।
शचीं राजश्रियं त्यक्त्वा विवेकी मोक्षकामुकः ॥ १५६
दृष्ट्वा विवेकिनं कान्तं हृदयेन विदूयता।
शची जगाम शोकार्त्ता सन्त्रस्ता शरणं गुरोः ॥१५७
सर्व्वं निवेदनं कृत्वा समानीय बृहस्पतिम्।
बोधयामास शक्रं तं नीतिशास्त्रेण कामिनी ॥१५८
गुरुः शास्त्रविशेषञ्च दम्पतीवशसंयुतम्।
विधाय च स्वयं प्रीत्या पाठयामास तं मुदा ॥ १५९
नीतिशास्त्रं बहुविधं बोधयामास वाक्पतिः।
स चकार तदा राज्यं वृन्दावनविनोदिनि ॥ १६०
इत्येवं कथितं सर्व्वं शक्रदर्पप्रमोचनम्।
साक्षाद्दृष्टौ दर्पभङ्गौ नन्दयज्ञे सुरेश्वरि ॥ १६१

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे सप्त-
चत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अष्टचत्वारिंशोऽध्यायः।

राधिकोवाच।

कथितो भवता मह्यं दर्पभङ्गः श्रुतो हरेः।
दर्पभङ्गं रवेश्चापि श्रोतुमिच्छामि तत्त्वतः ॥ १

श्रीकृष्ण उवाच।

एकदैवोदयं कृत्वा रविरस्तं जगाम ह।
माली सुमाली दैत्येन्द्रौ दीप्तिं कर्त्तुं समुद्यतौ।
महासम्पन्नदोन्मत्तौ शङ्करस्य वरेण च ॥ २
तयोश्च प्रभया रात्रिर्न भवेदिति सुन्दरि।
रुष्टः सूर्य्यः स्वशूलेन तौ जघानावलीलया ॥ ३
पतितौ सूर्य्यशूलेन मूर्च्छितौ धरणीतले ॥ ४
भक्तापायञ्च विज्ञाय शङ्करो भक्तवत्सलः।
आगत्य जीवयामास महाज्ञानेन तौ विभुः ॥ ५
तौ च नत्वा शिवं प्रीत्या जग्मतुर्निजमन्दिरम्।
दुद्राव च महादेवः सूर्य्यं हन्तुं रुषा ज्वलन् ॥ ६
दृष्ट्वा संहारकर्त्तारं जिघांसन्तं हरं रविः।
भिया पलायमानश्च ब्रह्माणं शरणं ययौ ॥ ७
दुद्राव च महादेवो ब्रह्मणो निलयं रुषा।
शूलहस्त्यर्थमुद्यम्य कालकालो विशेर्विधिः ॥ ८
दृष्ट्वा ब्रह्मा हरं रुष्टं तुष्टाव परमेश्वरम्।
चतुर्व्वक्त्रेण वेदोक्त-स्तोत्रेण जगतां पतिः ॥ ९

ब्रह्मोवाच।

प्रसीद दक्षयज्ञघ्न सूर्य्यं मच्छरणागतम्।
त्वयैव सृष्टः सृष्टेश्च समारम्भे जगद्गुरो ॥ १०
आशुतोष महाभाग प्रसीद भक्तवत्सल।

कृपया च कृपासिन्धो रक्ष रक्ष च भास्करम् ॥ ११
ब्रह्मस्वरूप भगवन् सृष्टि-स्थित्यन्तकारण।
स्वयं रविं विनिर्म्माय स्वयं संहर्त्तुमिच्छसि ॥ १२
अहं ब्रह्मा स्वयं शेषो धर्म्मः सूर्य्यो हुताशनः।
इन्द्रश्चन्द्रादयो देवास्त्वत्तो भीताः परात्पर ॥ १३
ऋषयो मुनयश्चैव त्वां निषेव्य तपोधनाः।
तपसां फलदाता त्वं तपस्त्वं तपसः परः ॥ १४
इत्येवमुक्त्वा ब्रह्मा तं सूर्य्यमानीय भक्तितः।
प्रीत्या समर्पयामास शङ्करे दीनवत्सले ॥ १५
शम्भुस्तमाशिषं कृत्वा विधिं नत्वा जगद्विधिः।
प्रसन्नवदनः श्रीमान् स्वालयं प्रययौ मुदा ॥ १६
इति धात्रा कृतं स्तोत्रं सङ्कटे यः पठेन्नरः।
भयात् प्रमुच्यते भीतो बद्धो मुच्येत बन्धनात् ॥ १७
राजद्वारे श्मशाने च मज्जपोते महार्णवे।
स्तोत्रस्मरणमात्रेण मुच्यते नात्र संशयः ॥ १८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## एकोनपञ्चाशोऽध्यायः।

श्रीकृष्ण उवाच।

सूर्य्यः प्रणम्य ब्रह्माणं मुदा युक्तस्तदाज्ञया।
चकार विषयं प्रीत्या तेजस्वी त्रिगुणात्मकः ॥ १
अथ वह्नेरुपाख्यानं सावधानं निशामय।
गोपनीयं पुराणेषु कर्णपीयूषमुत्तमम् ॥ २
त्रैलोक्यं भस्मसात् कर्त्तुमेकोऽग्निः स समुद्यतः।
शततालप्रमाणां तां शिखां कुर्व्वन् भयानकाम् ॥ ३
क्षुभितः कुपितश्चैव भृगोः शापस्य कारणात्।
स्वञ्च तेजस्विनं मत्वा तुच्छं मत्वान्यमात्मनः ॥ ४
एतस्मिन्नन्तरे विष्णुराजगामावलीलया।
वह्नेस्तां दाहिकां शक्तिं जहार तत्पुरःस्थितः ॥ ५
मायया शिशुरूपी च तमुवाच जनार्द्दनः।
सस्मितो विनयं कृत्वा भक्तिनम्रात्मकन्धरः ॥ ६

शिशुरुवाच।

कथं रुष्टोऽसि भगवन् भवान् मां कारणं वद।
त्रैलोक्यं भस्मसात् कर्त्तुमुद्यतोऽसि निरर्थकम् ॥ ७
त्वमेव भृगुणा शप्तो भृगोश्च दमनं कुरु।
एकापराधात् त्रैलोक्यं भस्म कर्त्तुं न चार्हसि ॥ ८
विश्वञ्च ब्रह्मणा सृष्टं तस्य पाता स्वयं हरिः।
संहर्त्ता भगवान् रुद्र एवमेव क्रमो भवेत् ॥ ९
त्वं कथं भस्मसात् कर्त्तुमीश्वरः शङ्करे स्थिते।
रक्षितारं हरिं जित्वा संहारं कुरु सत्वरम् ॥ १०
इत्युक्त्वा ब्राह्मणवटुः शरपत्रं पुरःस्थितम्।
अतिशुष्कं करे धृत्वा दग्धं कर्त्तुं ददौ तदा ॥ ११
दृष्ट्वा शुष्कोन्धनं वह्निर्लेलिहानो भयानकः।
स वव्रे शिखया विप्रं मेघेन शशिनं यथा ॥ १२
न च दग्धं शुष्कपत्रं लोमैकञ्च शिशोस्तथा।
दृष्ट्वा व्रीड़ायुतो वह्निस्तस्थौ हि शिशोः पुरः ॥१३
कृत्वा वह्नेर्दर्पभङ्गमन्तर्द्धानं चकार ह।
वह्निः स्वमूर्त्तिं संहृत्य स्वस्थानं भीतवद्ययौ ॥ १४
उक्तो वह्नेर्दर्पभङ्गः परं किं श्रोतुमिच्छसि।
नित्यनूतनमाख्यानं देवानां दर्पमोचनम् ॥ १५

राधिकोवाच।

शेषाणां दर्पभङ्गञ्च क्रमेण कथय प्रभो।
कथां पीयूषधारां तां श्रुत्वा तृप्नोति को भुवि ॥ १६

नारायण उवाच।

राधिकावचनं श्रुत्वा सस्मितो भगवान् पुनः।
कथां कथितुमारेभे श्रुतिरम्यां पुरातनीम् ॥ १७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे वह्निदर्पभङ्गो नामैकोनपञ्चाशोऽध्यायः ॥४९॥

---

## पञ्चाशोऽध्यायः।

श्रीकृष्ण उवाच।

दुर्व्वाससो दर्पभङ्गं कथयामि शृणु प्रिये।
महामुनेर्योगिनश्च रुद्रांशस्यातितेजसः ॥ १
एकदेवाम्बरीषश्च कृत्वा च द्वादशीव्रतम्।
पारणं कर्त्तुमारेभे भोजयित्वा द्विजान् बहून् ॥ २
एतस्मिन्नन्तरे तत्रैवाजगाम मुनिः स्वयम्।
तृष्णार्त्तश्च क्षुधार्त्तश्च विष्णुव्रतपरायणः।
मां भोजय महाभागेत्येवं स नृपमुक्तवान् ॥ ३

राजा भक्त्या ददौ तस्मै परमान्नं सुधोपमम् ॥ ४
सकेशं पायसं दृष्ट्वा राजानं शप्तुमुद्यतः।
जटां निकृत्य शिरसः स्थापयामास भूतले ॥ ५
जटामध्यात् समुद्भूतो ज्वलदग्निशिखोपमः।
सप्ततालप्रमाणश्च पुरुषः प्रलयान्तकः ॥ ६
नृपश्रेष्ठं सराज्यञ्च कोपेन हन्तुमुद्यतः।
भयेन कम्पिताः सर्व्वे शुष्ककण्ठोष्ठतालुकाः ॥ ७
सस्मार च महाभीतो राजा मम पदाम्बुजम्।
सर्व्वविघ्नस्योपशमः स्मृतिमात्राद्बभूव ह ॥ ८
एतस्मिन्नन्तरे चक्रं दुर्निवार्य्यं सुदर्शनम्।
तेजसा मम तुल्यञ्च कोटिसूर्य्यसमप्रभम् ॥ ९
आविर्ब्बभूव सहसा सभामध्येऽतिघूर्णितम्।
निकृत्य कृत्यापुरुषं दुद्राव मुनिपुङ्गवम् ॥ १०
सशैलसागरां पृथ्वीं काञ्चनीभूमिमुत्तमाम्।
भ्रामयित्वा महीं सर्व्वां पुनर्द्दुद्राव तं मुनिम् ॥ ११
धावन्तं मुक्तकेशं तं भीतं कातरमातुरम्।
तेजसाच्छाद्य सूर्य्यं तं दीप्तिं कुर्व्वदनुत्तमम् ॥ १२
कैलासं सप्तस्वर्गञ्च ब्रह्मलोकमनामयम्।
विप्रेन्द्रो भ्रमणं कृत्वा वैकुण्ठं शरणं ययौ ॥ १३
पादपद्मे पतन्तञ्च ददर्श विप्रपुङ्गवम्।
कृपया च कृपासिन्धुर्द्ददौ विप्राय निर्भयम् ॥ १४
नारायणवरेणैव बभूव विज्वरो द्विजः।
पुनर्ययौ हरिं स्तुत्वा नृपगेहं तदाज्ञया ॥ १५
राजा मुनीन्द्रं सम्प्राप्य भोजयामास पायसम्।
स्वयञ्च पारणं चक्रे सस्त्रीकः सहबान्धवः ॥ १६
राजानमाशिषं कृत्वा भुक्त्वा विप्रो गृहं ययौ।
मया नियोजितं चक्रं भक्तानां रक्षणाय च ॥ १७
नश्यन्ति सर्व्वे प्रलये न मे भक्ताः प्रणश्यति।
सर्व्वे देवा मम प्राणा भक्ताः प्राणाधिका मम ॥१८
लक्ष्मी लक्ष्मीर्महामाया सावित्री सा सरस्वती।
ब्रह्मा विष्णुरनन्तश्च धर्म्मश्च ब्राह्मणास्तथा ॥ १९
गोपाङ्गनाश्च गोपाश्च सर्व्वे प्रियतमा मम।
तेभ्यः पराः प्रिया भक्ताः प्रियो भक्तान्न कश्चन ॥२०
दत्त्वा सुदर्शनं चक्रं भक्तानां रक्षणाय च।
तथापि न प्रतीतिर्मे स्वयं द्रष्टुं प्रयामि तान् ॥ २१
दुर्व्वाससो दर्पभङ्गः श्रुतो मम सुरेश्वरि।
आज्ञापय महाभागे किं भूयः श्रोतुमिच्छसि ॥ २२

राधिकोवाच।

धन्वन्तरेर्दर्पभङ्गं कथयस्व जगद्गुरो।
पुराणे गोपनीयञ्च श्रोतुं कौतूहलं मम ॥ २३

नारायण उवाच।

राधिकावचनं श्रुत्वा जहास मधुसूदनः।
कथां कथितुमारेभे श्रुतिरम्यां पुरातनीम् ॥ २४

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-जन्मखण्डे नारायण-नारदसंवादे पञ्चाशोऽध्यायः ॥ ५० ॥

---

## एकपञ्चाशोऽध्यायः।

श्रीकृष्ण उवाच।

नारायणांशो भगवान् स्वयं धन्वन्तरिर्महान्।
पुरा समुद्रमथने समुत्तस्थौ महोदधेः ॥ १
सर्व्ववेदेषु निष्णातो मन्त्रतन्त्रविशारदः।
शिष्यो हि वैनतेयस्य शङ्करस्योपशिष्यकः ॥ २
शिष्यगणाञ्च सहस्रेण गन्तुं कैलासमीश्वरि।
ददर्श तक्षकं मार्गे लेलिहानं भयानकम् ॥ ३
लक्षनागैः परिवृतं शैलतुल्यं विषोल्बणम्।
भोक्तुं कोपात् समायान्तमेवं दृष्ट्वा जहास ह ॥ ४
दम्भी धन्वन्तरेः शिष्यो धृत्वा तक्षकमुल्बणम्।
मन्त्रेण जृम्भितं कृत्वा निर्व्विषञ्च चकार तम् ॥ ५
अमूल्यमणिरत्नञ्च जहार मस्तकस्थितम्।
करेण भ्रामयित्वा च प्रेरयामास दूरतः ॥ ६
निश्चेष्टस्तक्षकस्तस्थौ तत्र मार्गे यथा मृतः।
गणा निवेदनं चक्रुर्गत्वा वासुकिसन्निधौ ॥ ७
वासुकिस्तत् समाकर्ण्य प्रज्वलन्निव कोपतः।
सर्पान् प्रस्थापयामासासंख्यांश्चैव विषोल्बणान् ॥ ८
सर्पसेनाग्रणीनाञ्च मुख्यान् पञ्च विशारदान्।
द्रोण-कालीय-कर्कोट-पुण्डरीक-धनञ्जयान् ॥ ९
सर्व्वे नागाः समाजग्मुर्यत्र धन्वन्तरिः स्वयम्।
भयमापुः शिष्यगणा दृष्ट्वा नागानसंख्यकान् ॥ १०
नागनिश्वासवातेन सर्व्वे शिष्या मृता इव।
निश्चेष्टा ज्ञानरहिताः शेरते धरणीतले ॥ ११
धन्वन्तरिश्च भगवान् पीयूषवर्षणेन च।
जीवयामास शिष्यांश्च मन्त्रेण च गुरुं स्मरन् ॥ १२

चेतनं कारयित्वा च शिष्याणाञ्च जगद्गुरुः।
चकार जृम्भितं मन्त्रैः सर्पसङ्घं विषोल्बणम्॥ १३
सर्व्वे बभूवुर्निश्चेष्टा जृम्भितास्ते मृता इव।
कोऽपि नालं ततो देवि वार्त्तां दातुं गणेषु च॥ १४
वासुकिर्बुबुधे सर्व्वं सर्व्वज्ञः सर्व्वसङ्कटम्।
आजुहाव जगद्गौरीं भगिनीं ज्ञानरूपिणीम्॥ १५

वासुकिरुवाच।

मनसे त्वं समागच्छ नागान् रक्षातिसङ्कटात्।
जगत्त्रये महाभागे पूजा तव भविष्यति॥ १६
वासुकेर्वचनं श्रुत्वा प्रहस्योवाच कन्यका।
वाक्यं पीयूषतुल्यञ्च विनयावनता स्थिता॥ १७

मनसोवाच।

नागेन्द्र शृणु मद्वाक्यं यास्यामि समरं प्रति।
भद्राभद्रं देवसाध्यं करिष्यामि यथोचितम्॥ १८
तं शत्रुं संहरिष्यामि लीलया समरस्थले।
अहं यं संहरिष्यामि तं को रक्षितुमीश्वरः॥ १९
यदि ब्रह्मादयो देवाः समायान्ति रणस्थलम्।
तथापि तञ्च शत्रुञ्च प्रजेष्यामि न संशयः॥ २०
गुरुर्मे भगवान् शेषः सिद्धमन्त्रञ्च दत्तवान्।
नारायणस्य जगतामीशस्य परमाद्भुतम्।
बिभर्म्मि कवचं कण्ठे परं त्रैलोक्यमङ्गलम्॥ २१
संसारं भस्मसात् कृत्वा पुनः स्रष्टुमहं क्षमा॥ २२
शिष्याहं मन्त्रशास्त्रेषु शम्भोर्भगवतः पुरा।
महाज्ञानञ्च दत्तवान् स मह्यं कृपया विभुः॥ २३
शम्भोश्च शिष्यो गरुड़ो गणयामि न तं ध्रुवम्।
धन्वन्तरिस्तच्छिष्याणामेकः किं गणयामि तम्॥२४

नारायण उवाच।

इत्युक्त्वा सा जगामैका त्यक्त्वा नागगणान् रुषा।
प्रणम्य श्रीहरिं शम्भुं शेषञ्च हृष्टमानसा॥ २५
यत्र धन्वन्तरिर्देवः प्रसन्नवदनेक्षणा।
तत्राजगाम सा देवी कोपरक्तेक्षणा रुषा॥ २६
दृष्टिमात्रेण सर्पांश्च जीवयामास सुन्दरी।
विषदृष्ट्या शत्रुशिष्यान् निश्चेष्टांश्च चकार ह॥ २७
धन्वन्तरिश्च भगवान् मन्त्रशास्त्रविशारदः।
मन्त्रेण यत्नं कृतवान् नोत्थापयितुमीश्वरः॥ २८
दृष्ट्वा धन्वन्तरिं देवी प्रहस्योवाच सत्वरम्।
कटूक्तिमर्थयुक्ताञ्च साहङ्कारां सुरेश्वरी॥ २९

मनसोवाच।

मन्त्रार्थं मन्त्रशिल्पं वा मन्त्रभेदं महौषधम्।
वद जानासि किं सिद्धशिष्योऽसि गरुड़स्य च॥ ३०
अहञ्च वैनतेयश्च शिष्यौ शम्भोश्च विश्रुतौ।
स स्वल्पकालं सुचिरमहं धन्वन्तरे शृणु॥ ३१
इत्युक्त्वा सरसः पद्मं समानीय जगत्प्रसूः।
मन्त्रसम्वलितं कृत्वा प्रेरयामास कोपतः॥ ३२
दृष्ट्वागतं पद्मपुष्पं ज्वलदग्निशिखोपमम्।
धन्वन्तरिश्च निश्वासैर्भस्मसात् तु चकार ह॥ ३३
सर्पपाणां सम्मूढञ्च मनसा कोपविह्वला।
मन्त्रसम्वलितं कृत्वा प्रेरयामास सत्वरम्॥ ३४
तञ्च धन्वन्तरिर्दृष्ट्वा समन्त्रेणाङ्गुष्ठिना।
चकार निष्फलं भस्म तं प्रहस्यावलीलया॥ ३५
देवी जग्राह शक्तिञ्च ग्रीष्मसूर्य्यसमप्रभाम्।
मन्त्रसम्वलितां कृत्वा प्रेरयामास तं रिपुम्॥ ३६
दृष्ट्वा जाज्वल्यमानाञ्च शक्तिं धन्वन्तरिः स्वयम्।
विष्णुदत्तेन शूलेन समुच्छेद लीलया॥ ३७
ताञ्च शक्तिं वृथा दृष्ट्वा प्रजज्वालेश्वरी रुषा।
जग्राह नागपाशञ्च श्रेष्ठमव्यर्थमुल्बणम्॥ ३८
नागलक्षसमायुक्तं सिद्धमन्त्रेण मन्त्रितम्।
प्रेरयामास कोपेन कालान्तकसमप्रभम्॥ ३९
धन्वन्तरिर्नागपाशं दृष्ट्वा च सस्मितो मुदा।
सस्मार गरुड़ं तूर्णमाजगाम खगेश्वरः॥ ४०
सर्पास्त्रमागतं दृष्ट्वा गरुड़ो हरिवाहनः।
निधाय चञ्चुना शीघ्रं बुभुजे क्षुधितश्चिरम्॥ ४१
नागास्त्रं निष्फलं दृष्ट्वा कोपरक्तेक्षणा भृशम्।
जग्राह भस्ममुष्टिञ्च शिवदत्तां पुरा प्रिये॥ ४२
भस्ममुष्टिं मन्त्रपूतां दृष्ट्वा च प्रेरितां तया।
पक्षवातेन चिक्षेप शिष्यं पश्चादिशा च॥ ४३
निरस्तां भस्ममुष्टिञ्च दृष्ट्वा देवी चुकोप ह।
जग्राह शूलमव्यर्थं हन्तुं धन्वन्तरिं ततः॥ ४४
शिवदत्तञ्च शूलञ्च शतसूर्य्यसमप्रभम्।
अव्यर्थशूलं लोकेषु प्रलयाग्निसमप्रभम्॥ ४५
अथ ब्रह्मा ततः शम्भुराजगाम रणान्तिकम्।
धन्वन्तरेश्च रक्षार्थं सम्मानार्थं खगस्य च॥ ४६
दृष्ट्वा शम्भुं जगद्गौरी विरिञ्चिं जगतां पतिम्।
भक्त्या ननाम तावेव निःशङ्का शूलधारिणी॥ ४७

धन्वन्तरिश्च गरुड़ः प्रणनाम सुरेश्वरीं ।
तुष्टाव परया भक्त्या तौ च चक्रतुराशिषम् ॥ ४८
उवाच ब्रह्मा मधुरं हितं धन्वन्तरिं मुदा ।
पूजार्थं मनसायाश्च लोकानां हितकाम्यया ॥ ४९

ब्रह्मोवाच ।

धन्वन्तरे महाभाग सर्व्वशास्त्रविशारद ।
रणं ते मनसासार्द्धं न हि साम्यञ्च मे मतम् ॥५०
शिवदत्तेन शूलेन दुर्निवार्य्येण सर्व्वतः ।
त्रैलोक्यं भस्मसात् कर्त्तुं चक्षमेयं त्रिदशेश्वरी ॥ ५१
ध्यानं कौथुमशाखोक्तं कृत्वा भक्त्या समाहितः ।
दत्त्वा षोड़शोपचारं देव्याश्च कुरु पूजनम् ॥ ५२
आस्तिकोक्तेन स्तोत्रेण स्तवनं कर्त्तुमर्हसि ।
परितुष्टा च मनसा वरं तुभ्यं प्रदास्यति ॥ ५३
ब्रह्मणो वचनं श्रुत्वा चकारानुमतिं शिवः ।
वैनतेयश्च सम्प्रीत्या बोधयामास यत्नतः ॥ ५४
एषाञ्च वचनं श्रुत्वा स्नात्वा शुचिरलङ्कृतः ।
विधिं पुरोहितं कृत्वा पूजां कर्त्तुं समुद्यतः ॥ ५५

धन्वन्तरिरुवाच ।

इहागच्छ जगद्गौरि गृहाण मम पूजनम् ।
पूज्या त्वं त्रिषु लोकेषु परा कश्यपकन्यके ॥ ५६
त्वया जितं जगत् सर्व्वं देवि विष्णुस्वरूपया ।
तेन तेऽस्त्रप्रयोगश्च न कृतो रणभूमिषु ॥ ५७
इत्युक्त्वा संयतो भूत्वा भक्तिनम्रात्मकन्धरः ।
गृहीत्वा शुक्लकुसुमं ध्यानं कर्त्तुं समुद्यतः ॥ ५८
चारुचम्पकवर्णाभां सर्व्वाङ्गसुमनोहराम् ।
ईषद्धास्यप्रसन्नास्यां शोभितां सूक्ष्मवाससा ॥ ५९
कबरीभारशोभाढ्यां रत्नाभरणभूषिताम् ।
सर्व्वाभयप्रदां देवीं भक्तानुग्रहकातराम् ॥ ६०
सर्व्वविद्याप्रदां शान्तां सर्व्वविद्याविशारदाम् ।
नागेन्द्रवाहिणीं देवीं भजे नागेश्वरीं पराम् ॥ ६१
ध्यात्वेवं कुसुमं दत्त्वा नानाद्रव्यसमन्वितम् ।
दत्त्वा षोड़शोपचारं पूजयामास तां प्रिये ॥ ६२
स्तोत्रं चकार भक्त्या च पुलकाञ्चितविग्रहः ।
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ ६३

धन्वन्तरिरुवाच ।

नमः सिद्धिस्वरूपायै सिद्धिदायै नमो नमः ।
नमः कश्यपकन्यायै वरदायै नमो नमः ॥ ६४
नमः शङ्करकन्यायै शङ्करायै नमो नमः ।
नमस्ते नागवाहिन्यै नागेश्वर्य्यै नमो नमः ॥ ६५
नमो नागभगिन्यै च योगिन्यै च नमो नमः ।
नम आस्तीकजन्यै च जनन्यै जगतां पुनः ॥ ६६
नमो जरत्कारुनाम्न्यै जरत्कारुस्त्रियै नमः ।
नमश्चिरं तपस्विन्यै सुखदायै नमो नमः ॥ ६७
नमस्तपस्यारूपायै फलदायै नमो नमः ।
सुशीलायै च साध्व्यै च शान्तायै च नमो नमः ॥ ६८
इत्येवमुक्त्वा भक्त्या च प्रणनाम प्रयत्नतः ।
तुष्टा देवी वरं दत्त्वा सत्वरं स्वालयं ययौ ॥ ६९
ब्रह्म-रुद्र-वैनतेयाः समाजग्मुर्निजालयम् ।
धन्वन्तरिश्च भगवान् जगाम निजमन्दिरम् ।
ययुर्नागाः प्रहृष्टाश्च फणाराजिविराजिताः ॥ ७०
इत्येवं कथितः सर्व्वः स्तवराजः समुल्बणः ॥ ७१
विधिना मातरं भक्तिमास्तिकश्च चकार ह ।
तदा तुष्टा जगद्गौरी पुत्रं तं मुनिपुङ्गवम् ॥ ७२
इदं स्तोत्रं महापुण्यं भक्तियुक्तश्च यः पठेत् ।
वंशजानां नागभयं नास्ति तस्य न संशयः ॥ ७३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारद-संवादे धन्वन्तरि-दर्पभङ्ग-मनसाविजयो नामैक-पञ्चाशोऽध्यायः ॥ ५१ ॥

---

## द्विपञ्चाशोऽध्यायः ।

श्रीकृष्ण उवाच ।

सर्व्वेषाञ्च दर्पभङ्गः कथितश्च श्रुतस्त्वया ।
क्षुद्राणां महताञ्चैव कृत एव न संशयः ॥ १
अधुना च समुत्तिष्ठ गच्छ वृन्दावनं वनम् ।
गोपिका विरहार्त्ताश्च शीघ्रं पश्यामि सुन्दरि ॥ २

नारायण उवाच ।

इत्येवं वचनं श्रुत्वा मानिनी रसिकेश्वरी ।
उवाच कृष्णं नय मां न शक्ता गन्तुमीश्वर ॥ ३
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः ।
मामारुहेत्येवमुक्त्वा सोऽन्तर्द्धानं चकार ह ॥ ४
सा मनोयायिनी राधा कृत्वा च रोदनं क्षणम् ॥ ५
कुर्व्वतीर्नाथ नाथेति निराहारा रुषान्विताः ।

ताश्च दृष्ट्वा च सा राधा प्रेमविच्छेदकातराः ।
कथयामास वृत्तान्तं मलयभ्रमणादिकम् ॥ ६
ताभिः सार्द्धञ्च सा राधा रुरोद विरहातुरा ।
हा नाथ नाथेत्युच्चार्य्य विलप्य च मुहुर्मुहुः ॥ ७
विनिन्द्य कृष्णं कोपेन तर्ज्जयामास च क्षणम् ।
क्षणं शरीरसंत्यक्तुं कोपात् सर्व्वाः समुद्यताः ॥ ८
एतस्मिन्नन्तरे कृष्णस्तत्र चन्दनकानने ।
स्वात्मानं दर्शयामास राधिका-गोपिकागणम् ॥ ९
राधा गोपाङ्गनाभिश्च दृष्ट्वा प्राणेश्वरं मुदा ।
सस्मिता च प्रदुद्राव पुलकाञ्चितविग्रहा ॥ १०
तूर्णं कृष्णं समाश्लिष्य जहार मुरलीं रुषा ।
मालाञ्च पीतवसनं नग्नं कृत्वा च मानिनी ॥ ११
पुनः सन्धारयामास वस्त्रं मालां मनोहराम् ।
विनोदमुरलीं तुष्टा वृन्दावनविनोदिनी ॥ १२
चन्दनागुरु-कस्तूरी-कुङ्कुमाक्तं चकार तम् ।
मुहुर्म्मुहुर्मुखं वीक्ष्य चुचुम्ब परमादरम् ॥ १३
क्षणं तं तर्ज्जयामास क्षणं स्तोत्रं चकार ह ।
सकर्पूरञ्च ताम्बूलं क्षणं तस्मै ददौ मुदा ॥ १४
अथ गोपाङ्गनाः सर्व्वा रुरुदुः प्रेमविह्वलाः ।
सर्व्वं निवेदनं चक्रुः स्वदुःखं विरहज्वरम् ॥ १५
इहत्यागञ्च स्नानञ्च स्वाहारस्य विसर्ज्जनम् ।
वने वनेऽहर्निशञ्च शश्वद्भ्रमणमेव च ॥ १६
क्षणं तं भर्त्सयामासुः स्तोत्रं चक्रुः क्षणं मुदा ।
क्षणं ददुर्भूषणञ्च क्षणं तस्मै च चन्दनम् ॥ १७
काश्चिदूचुः प्राणचौरं पश्य रक्षेति सन्ततम् ।
एवं पुनर्न कर्त्तव्यमनेनेति च काश्चन ॥ १८
काश्चिदूचुरिमं मध्ये यूयं कुरुत सत्वरम् ।
निबध्य प्रेमपाशेन हृदये चेति काश्चन ॥ १९
काश्चिदूचुरिमं नास्ति प्रतीतिर्वा कदाचन ।
यत्नाच्चेतनाचौरञ्च पश्य पश्येति काश्चन ॥ २०
काश्चिदूचुर्निष्ठुरोऽयं नरघातीति कोपतः ।
न पुनर्व्विदतेमञ्च काश्चनेति च नारद ॥ २१
निर्ज्जनानि च रम्याणि यानि यानि वनानि च ।
बभ्रमुर्गोपिकास्तानि कृष्णेन सह कौतुकात् ॥ २२
एवं तं गोपिकाः सर्व्वा मध्ये कृत्वा सदीश्वरम् ।
ययुर्वनान्तरे यत्र सुरम्यं रासमण्डलम् ॥ २३
रासं गत्वा रत्नपीठे तस्थौ स रसिकेश्वरः ।
भाति ताभिर्यथाकाशे चन्द्रस्तारागणैः सह ॥ २४
नानामूर्त्तिं विधायात्र सह ताभिर्जनार्द्दनः ।
चकार च पुनः क्रीड़ां कामुकीनां मनोहराम् ॥ २५
स्वयं राधां करे धृत्वा पूर्व्वोक्तं रतिमन्दिरम् ।
विश्वकर्म्मविनिर्म्माणमारुरोह स्मरातुराम् ॥ २६
चन्दनागुरु-कस्तूरी-कुङ्कुमाक्ते सुवासिते ।
तत्र चम्पकतल्पे स सुष्वाप च तया सह ॥ २७
नानाप्रकारशृङ्गारं कामशास्त्रविशारदः ।
चकार कामी क्रीड़ाञ्च कामिन्या सह कौतुकी ॥ २८
बभूव सुरतिस्तत्र सुचिरञ्च तयोर्मुने ।
रतिनिष्णातयो रम्या विरतिर्नास्ति तत्क्षणम् ॥२९
एवं तौ तस्थतुस्तत्र राधाकृष्णौ रसोत्सुकौ ।
तस्थुस्ता गोपिकाभिश्च सुरतौ कृष्णमूर्त्तयः ॥ ३०

नारद उवाच ।

आदौ राधां समुच्चार्य्य पश्चात् कृष्णं विदुर्बुधाः ।
निमित्तमस्य मां भक्तं वद भक्तजनप्रिय ॥ ३१

नारायण उवाच ।

निमित्तमस्य त्रिविधं कथयामि निशामय ।
जगन्माता च प्रकृतिः पुरुषश्च जगत्पिता ।
गरीयसी त्रिजगतां माता शतगुणैः पितुः ॥ ३२
राधाकृष्णेति गौरीशेत्येवं शब्दः श्रुतौ श्रुतः ।
कृष्णराधेशगौरीति लोके न च कदा श्रुतः ॥ ३३
प्रसीद रोहिणीचन्द्र गृहाणार्घ्यमिदं मम ।
गृहाणार्घ्यं मया दत्तं संज्ञया सह भास्कर ॥ ३४
प्रसीद कमलाकान्त गृहाण मम पूजनम् ।
इति दृष्टं सामवेदे कौथुमे मुनिसत्तम ॥ ३५
राशब्दोच्चारणादेव स्फीतो भवति माधवः ।
धाशब्दोच्चारतः पश्चाद्धावत्येव ससम्भ्रमः ॥ ३६
आदौ पुरुषमुच्चार्य्य पश्चात् प्रकृतिमुच्चरेत् ।
स भवेन्मातृघाती च वेदातिक्रमणे मुने ॥ ३७
त्रैलोक्ये भारतं धन्यं पुण्यक्षेत्रञ्च पुण्यदम् ।
ततो वृन्दावनं पुण्यं राधापादाब्जरेणुना ॥ ३८
षष्टिं वर्षसहस्राणि तपस्तप्तञ्च वेधसा ।
राधिकाचरणाम्भोज-पादरेणूपलब्धये ॥ ३९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः।

नारद उवाच।

समतीते पूर्णमासे किं चकार जगत्पतिः।
रहस्यं किं बभूवाथ तद्भवान् वक्तुमर्हति॥ १

नारायण उवाच।

रासं निर्व्वर्त्त्य रासे च रासेश्वर्य्या समन्वितः।
स्वयं रासेश्वरस्तस्माद्यमुनापुलिनं ययौ॥ २
तत्र स्नात्वा जलं पीत्वा निर्म्मलं निर्म्मले जले।
सार्द्धं गोपाङ्गनाभिश्च जलक्रीड़ां चकार सः॥ ३
ततो जगाम भगवान् भाण्डीरं राधया सह।
गोपाङ्गनाश्च स्वगृहान् प्रययुर्विरहातुराः॥ ४
क्रीड़ां चकार रहसि भाण्डीरे मालतीवने।
मालतीपुष्पशय्यायां रम्यायां रमणोत्सुकः॥ ५
कृत्वा क्रीड़ाञ्च तत्रैव वासन्तीकाननं ययौ।
रेमे तत्रैव रासेशो वसन्ते सुमनोहरे॥ ६
तत्रैव रमणं कृत्वा ययौ चन्दनकाननम्।
चन्दनोक्षितसर्व्वाङ्गो गृहीत्वा चन्दनोक्षिताम्॥ ७
रम्ये चन्दनतल्पे च स्निग्धचन्दनपल्लवे।
पूर्णचन्द्रे समुदिते विजहार तया सह॥ ८
कृत्वा विहारं तत्रैव ययौ चम्पककाननम्।
रम्ये चम्पकतल्पे च चकार रतिमीश्वरः॥ ९
रतिं निर्व्वर्त्त्य तत्रैव ययौ पद्मवनं विभुः।
पद्मपत्रसमाकीर्णे तल्पेऽतिसुमनोहरे॥ १०
सार्द्धं तत्र पद्ममुख्या शीतेन पद्मवायुना।
चकार सुखसम्भोगं ययौ निद्रां तया सह॥ ११
विहाय निद्रां निद्रेशो ददर्श निद्रितां प्रियाम्।
शयानां पद्मतल्पे च सुखसम्भोगमात्रतः॥ १२
दृष्ट्वा मुखञ्च घर्म्मार्त्तं शरच्चन्द्रविनिन्दितम्।
अतिसंलुप्तसिन्दूरं लुप्तकज्जलमुज्ज्वलम्॥ १३
संलुप्ताधररागञ्च संलुप्तगण्डपत्रकम्।
विस्रस्तकबरीभारं नेत्रोत्पलनिमीलितम्॥ १४
रत्नकुण्डलयुग्मेनामूल्येन परिशोभितम्।
राजितं मौक्तिकेनैव गजराजोद्भवेन च॥ १५
प्रेम्णा स्वसूक्ष्मवस्त्रेण वह्निशुद्धेन माधवः।
चकार मार्ज्जनं भक्त्या तदङ्गं भक्तवत्सलः॥ १६
केशसम्मार्ज्जनं कृत्वा निर्म्माय कबरीं हरिः।
माधवीमालतीमालाजालेन परिशोभिताम्॥ १७
रक्तपट्टसूत्रबद्धां वामवक्रां मनोहराम्।
अतीववर्त्तुलाकारां कुन्दपुष्पसुशोभिताम्॥ १८
ददौ सिन्दूरतिलकमधश्चन्दनबिन्दुना।
कस्तूरीबिन्दुभिः सार्द्धं परितः परिशोभितम्॥ १९
चकार पत्रकं गण्ड-युग्मे चित्रविचित्रितम्।
प्रददौ कज्जलं भक्त्या नेत्रोत्पलसमुज्ज्वलम्॥ २०
चकाराधररागञ्च राधायाश्चानुरागतः।
कर्णभूषणयुग्मञ्च चकारातीवनिर्म्मलम्॥ २१
अमूल्यरत्नहारञ्च स्तनभारयुगोज्ज्वलम्।
ददौ कण्ठे च वैकुण्ठो मणिराजविराजितम्॥ २२
वह्निशुद्धं शुभं दिव्यममूल्यं विश्वरत्नतः।
वासयामास वसनं कस्तूरीकुङ्कुमात्तकम्॥ २३
प्रददौ पादयुगले रत्नमञ्जीररञ्जितम्।
चकारालक्तकं भक्त्या पादाङ्गुलिनखेषु च॥ २४
चकार सेवां सेव्यायाः सेव्यस्त्रिजगतां सताम्।
अहो सेवकसम्भक्त्या श्वेतेन चामरेण च॥ २५
सर्व्वभावविदां श्रेष्ठो बोधज्ञः कामशास्त्रवित्।
कामिनीं बोधयामास वासयामास वक्षसि॥ २६
प्रेम्णा च प्रददौ तस्यै सद्रत्नदर्पणं शुभम्।
सुवेशदर्शनार्थाय मुखचन्द्रस्य मार्ज्जनम्॥ २७
नानापुष्पविरचितामम्लानां चन्दनोक्षिताम्।
गले सौभाग्ययुक्तायाः सौभाग्येन ददौ हरिः॥२८
कस्तूरीकुङ्कुमात्तञ्च सुगन्धि चन्दनं ततः।
ददौ प्रियायाः सर्व्वाङ्गे प्रियः प्रेमभरेण च॥ २९
पारिजातस्य कुसुमं दत्तं रहसि ब्रह्मणा।
प्रददौ तत्प्रवर्य्यायै ललितायाञ्च नारद॥ ३०
कमलं निर्म्मलं दिव्यं सहस्रदलमुज्ज्वलम्।
शिवेन दत्तं रहसि ददौ तद्दक्षिणे करे॥ ३१
अतिसारं मणीन्द्राणां मणिरत्नञ्च कौस्तुभम्।
दत्तं रहसि धर्म्मेण तस्यै सुप्रीतये ददौ॥ ३२
अशनं रत्नपात्रस्थं दत्तं चन्द्रेण निर्ज्जने।
पानार्थं प्रददौ तस्यै कामोन्मादकरं परम्॥ ३३
मालती-माधवी-कुन्द-मन्दार-चम्पकादिकम्।
पुष्पं सद्रत्नपात्रस्थं तस्यै सुप्रीतये ददौ॥ ३४
सुदुर्लभञ्च ताम्बूलं कर्पूरादिसुसंस्कृतम्।
भक्षणं कारयामास समयज्ञश्च तां प्रियाम्॥ ३५

तद्दुर्लभञ्च विश्वेषु वाक्पतेः परिनिर्म्मितम् ।
अनुत्तममनूल्यञ्च वरुणेन रहःस्थले ॥ ३६
अतिसूक्ष्ममनौपम्यं दत्तं भक्त्या विराजितम् ।
वासयामास वसनं हृष्टो नन्नाञ्च कौतुकात् ॥ ३७
देवराजेन दत्तञ्च गजराजस्य मौक्तिकम् ।
नासिकाभूषणं चारु तस्यै सुप्रीतये ददौ ॥ ३८
एतस्मिन्नन्तरे तत्र सुशीलाद्याश्च गोपिकाः ।
षट्त्रिंशत् सहचर्य्यश्च राधायाः सुप्रतिष्ठिताः ॥ ३९
षट्त्रिंशत्कोटिगोपीभिः सार्द्धं प्रहृष्टमानसाः ।
आययुः पादचिह्नेन प्रियस्य वहतः प्रियाम् ॥ ४०
काश्चिच्चन्दनहस्ताश्च काश्चिच्चामरवाहिकाः ।
काश्चित् कुङ्कुमहस्ताश्च काश्चित्ताम्बूलवाहिकाः ॥४१
काश्चित् कस्तूरीहस्ताश्च मालाहस्ताश्च काश्चन ।
काश्चित् सिन्दूरहस्ताश्च काश्चित् कङ्कतिकाकराः ॥४२
काश्चिदलक्तककरा वस्त्रहस्ताश्च काश्चन ।
काश्चिद्भूषणहस्ताश्च काश्चिद्रासववाहिकाः ॥ ४३
करतालकराः काश्चित् काश्चिन्मृदङ्गवाहिकाः ।
स्वरयन्त्रकराः काश्चिद्वीणाहस्ताश्च काश्चन ॥ ४४
षट्त्रिंशद्रागरागिण्यो गोपिकारूपधारिकाः ।
गोलोकादागता याश्च भारतं राधया सह ॥ ४५
काश्चिज्जगुश्च ननृतुस्तत्रागत्य च काश्चन ।
काचिच्चकार सेवाञ्च राधायाः श्वेतचामरैः ॥ ४६
काचिच्चकार देव्याश्च पादसंवाहनं मुदा ।
काचिद्ददौ च ताम्बूलं भक्षणार्थं सुवासितम् ॥ ४७
एवं कौतुकयुक्तास्ताः पुण्ये वृन्दावने वने ।
प्रतस्थौ गोपिकासार्द्धं राधावक्षःस्थलस्थितः ॥ ४८
क्षणं पपौ च माध्वीकं प्रियया सह माधवः ।
क्षणं चखाद ताम्बूलं क्षणं निद्रां ययौ मुदा ॥ ४९
क्षणं चकार शृङ्गारं रत्ननिर्म्मितमन्दिरे ।
क्षणं जलविहारञ्च चकार यमुनाजले ॥ ५०
इत्येवं कथितं वत्स रासक्रीडां हरेरहो ।
स्वेच्छामयस्यात्मनश्च परिपूर्णतमस्य च ॥ ५१
निर्गुणस्य स्वतन्त्रस्य परस्य प्रकृतेः प्रभोः ।
ब्रह्म-विष्णु-शिवादीनामीश्वरस्य परस्य च ॥ ५२
कृष्णजन्मरहस्यञ्च बालक्रीडनमीप्सितम् ।
उक्तं किशोरचरितं किं भूयः श्रोतुमिच्छसि ॥५३

इति श्रीब्रह्मवैवर्त्ते त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशोऽध्यायः ।

नारद उवाच ।

अतःपरं किं रहस्यं बभूव मुनिसत्तम ।
कथं जगाम भगवान् मथुरां नन्दमन्दिरात् ॥ १
नन्दो दधार प्राणांश्च विच्छेदेन हरेः कथम् ।
गोपाङ्गना यशोदा वा कृष्णैकगतमानसा ॥ २
चक्षुर्निमेषविच्छेदाद्यया राधा न हि जीवति ।
कथं दधार सा देवी प्राणान् प्राणेश्वरं विना ॥ ३
ये ये तत्सङ्गिनो गोपाः शयनाशनभोगतः ।
कथं विसस्मरुस्ते च तादृशं बान्धवं व्रजे ॥ ४
श्रीकृष्णो मथुरां गत्वा किं किं कर्म्म चकार सः ।
स्वर्गारोहणपर्य्यन्तं तद्भवान् वक्तुमर्हति ॥ ५

नारायण उवाच ।

कंसः शङ्करयज्ञञ्च समारेभे धनुर्म्मखम् ।
जगाम तत्र भगवांस्तेन राज्ञा निमन्त्रितः ॥ ६
राजा प्रस्थापयामास तमक्रूरञ्च गोकुलम् ।
अक्रूरः प्रेषितो राज्ञा गत्वा च नन्दमन्दिरम् ॥ ७
श्रीकृष्णञ्च गृहीत्वा च सबलं मथुरां गतः ।
कृष्णश्च मथुरां गत्वा जघान नृपतिं मुने ॥ ८
जघान रजकञ्चैव चाणूरं मुष्टिकं गजम् ।
चकार पित्रोरुद्धारं बान्धवानाञ्च बन्धनात् ॥ ॥ ९
कुब्जया सह शृङ्गारं कृत्वा च कौतुकेन च ।
ताञ्च प्रस्थापयामास गोलोकं गोपिकापतिः ॥ १०
चकार कृपया कृष्णो मालाकारस्य मोक्षणम् ।
कृपया चोद्धवद्वारा बोधयामास गोपिकाः ॥ ११
तदोपनीतो भगवानवन्तीनगरं ययौ ।
चकार विद्याग्रहणं मुनेः सान्दीपनेर्गुरोः ॥ १२
ततो जित्वा जरासन्धं निहत्य यवनेश्वरम् ।
उग्रसेनञ्च नृपतिं चकार विधिपूर्व्वकम् ॥ १३
गत्वा समुद्रनिकटं निर्म्माय द्वारकां पुरीम् ।
जहार रुक्मिणीं देवीं जित्वा नृपतिसङ्घकम् ॥ १४
कालिन्दीं लक्षणां मैत्रां सत्यां जाम्बवतीं सतीम् ।
मित्रविन्दां नाग्नजितीं समुद्वाहं चकार सः ॥ १५
निहत्य नरकं भौमं रणेन दारुणेन च ।
पत्नीषोडशसाहस्रं विवाहञ्च चकार ह ॥ १६
जहार पारिजातञ्च जित्वा शक्रञ्च लीलया ।

चिच्छेद वाणहस्तांश्च जित्वा च चन्द्रशेखरम्॥ १७
पौत्रस्य मोचणं कृत्वा पुनरागत्य द्वारकाम्।
आत्मानं दर्शयामास लोकांश्च प्रतिमन्दिरे॥ १८
यागे च वसुदेवस्य तीर्थयात्राप्रसङ्गतः।
प्राणाधिष्ठातृदेवीञ्च ददर्श तत्र राधिकाम्॥ १९
पूर्णे च शतवर्षे च श्रीदाम्नः शापमोचणे।
पुनर्ययौ तया सार्द्धं पुण्यं वृन्दावनं वनम्॥ २०
पुनश्चतुर्द्दशाब्दन्तु तया सार्द्धं जगत्पतिः।
चकार वासं रासे च पुण्यक्षेत्रे च भारते॥ २१
पूर्णमेकादशाब्दञ्च निर्व्वस्य नन्दमन्दिरे।
मथुरायां द्वारकायां पूर्णमब्दशतं विभुः।
चकार भारहरणं पृथिव्याः पृथुविक्रमः॥ २२
पञ्चविंशतिवर्षञ्च शतवर्षाधिकं मुने।
तिष्ठन् जगाम गोलोकं पृथिव्याश्च पुरातनः॥ २३
यशोदायै च नन्दाय वृषभानाय धीमते।
राधामात्रे कलावत्यै ददौ सामीप्यमोचकम्॥ २४
सार्द्धं गोपीगणैर्गोपै राधिका च कुतूहलात्।
निबद्धा धर्म्मसेतुञ्च वेदोक्तञ्च युगे युगे॥ २५
इत्येवं कथितं सर्व्वं समासेन महामुने।
श्रीकृष्णचरितं रम्यं चतुर्व्वर्गफलप्रदम्॥ २६
ब्रह्मादिस्तम्बपर्य्यन्तं सर्व्वं नश्वरमेव च।
भज तं परमानन्दं सानन्दं नन्दनन्दनम्॥ २७
स्वेच्छामयं परंब्रह्म परमात्मानमीश्वरम्।
परमक्षरमव्यक्तं भक्तानुग्रहविग्रहम्॥ २८
सत्यं नित्यं स्वतन्त्रञ्च सर्व्वेशं प्रकृतेः परम्।
निर्गुणञ्च निरीहञ्च निराकारं निरञ्जनम्॥ २९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
चतुःपञ्चाशोऽध्यायः॥ ५४॥

---

## पञ्चपञ्चाशोऽध्यायः।

नारायण उवाच।

स एव भगवान् कृष्णः सर्व्वात्मा पुरुषात्परः।
दुराराध्योऽतिसाध्यश्च सर्व्वाराध्यः सुखप्रदः॥ १
निजभक्तातिसाध्यश्च भक्तस्याराध्य एव च।
शश्वद्दृश्यः स्वभक्तस्याभक्तस्यादृश्य एव च॥ २
दुर्ज्ञेयं तस्य चरितं कार्य्यं दुष्करमेव च।
ब्रह्मादयश्च मायया सर्व्वे मोहिताश्च दुरन्तया॥ ३
यद्भयाद्वाति वातोऽयं कूर्म्मो धत्ते निराश्रयः।
कूर्म्मोऽनन्तं विधत्ते च यद्भयेन निरन्तरम्॥ ४
बिभर्त्ति शेषो विश्वञ्च यद्भयेन च नारद।
सहस्रशीर्षा पुरुषः शिरस्यैकदेशतः॥ ५
सप्तसागरसंयुक्ता सप्तद्वीपा वसुन्धरा।
शैलकाननसंयुक्ता पातालाः सप्त एव च।
सप्त स्वर्गाश्च विविधा ब्रह्मलोकसमन्विताः॥ ६
एवं विश्वं त्रिभुवनं कृत्रिमं परिकीर्त्तितम्।
यद्भयेन विधात्रा च प्रतिसृष्टौ च निर्म्मितम्॥ ७
एवं विश्वान्यसंख्यानि लोम्नां कूपेमहान् विराट्।
यद्भयेन विधत्ते च यदंशो ध्यायते शिवम्॥ ८
विष्णुः पाति च संसारं यद्भयेन कृपानिधिः।
कालाग्निरुद्रो यद्भीतात् कालः संहरते प्रजाः॥ ९
मृत्युञ्जयो महादेवो यद्भयाज्जायते च यम्।
षड्गुणैरनुरागैश्च विरागी विरतः सदा॥ १०
यद्भयेन दहत्यग्निः सूर्य्यस्तपति यद्भयात्।
यद्भयाद्वर्षतीन्द्रश्च मृत्युश्चरति जन्तुषु॥ ११
यद्भयेन यमः शास्ता पापिनां धर्म्म एव च।
धत्ते च धरणी लोकान् यद्भयेन चराचरान्॥ १२
सूयते प्रकृतिः सृष्टौ यद्भयान्महदादिकम्।
दुर्ज्ञेयं तदभिप्रायं को वा जानाति पुत्रक॥ १३
यत्प्रभावं न जानन्ति ब्रह्म-विष्णु-शिवादयः।
कथं जानामि तच्चेष्टामहं वत्स सुमन्दधीः॥ १४
कथं जगाम मथुरां त्यक्त्वा वृन्दावनं वनम्।
कथं तत्याज गोपीश्च राधां प्राणाधिकां प्रियाम्।
यशोदां बान्धवादींश्च नन्दं वा नन्दनन्दनः॥ १५
दर्पहा दर्पदः सोऽपि सर्व्वेषां सर्व्वतः सदा।
बभञ्ज राधादर्पञ्च सुदाम्नः शापकारणम् (क)॥ १६
चकार दर्पभङ्गञ्च महाविष्णोः पुरा विभुः।
ब्रह्मणश्च तथा विष्णोः शेषस्य च शिवस्य च॥ १७
धर्म्मस्य च यमस्यापि मारस्य चन्द्रसूर्य्ययोः।

---

(क) कतिपयपुस्तकेषु सुदाम्नः शापकारणमित्य-नन्तरम्—"अन्येषां भावनाद्धेतोर्ब्रह्मप्राप्तिस्तथा भवेत्। एवं किञ्चिद्दिनकञ्च कुरुते कमलोद्भवः।" श्लोकोऽयमवलोक्यते किन्त्वसङ्गतत्वादस्माभिरनादृत एव।

गरुड़स्य च वह्नेश्च गुरोर्दुर्व्वाससस्तथा ॥ १८
द्वौवारिकस्य भक्तस्य जयस्य विजयस्य च।
सुराणामसुराणाञ्च भवतः कामशक्रयोः ॥ १९
लक्ष्मणस्यार्ज्जुनस्यापि वाणस्य च भृगोस्तथा।
सुमेरोश्च समुद्राणां वायोश्च वरुणस्य च ॥ २०
सरस्वत्याश्च दुर्गायाः पद्मायाश्च भुवस्तथा।
सावित्र्याश्चैव गङ्गाया मनसायास्तथैव च ॥ २१
प्राणाधिष्ठातृदेव्याश्च प्रियायाः प्राणतोऽपि च।
प्राणाधिकार्या राधाया अन्येषामपि का कथा ॥ २२
हृत्वा दर्पञ्च सर्व्वेषां प्रसादञ्च चकार सः।
कर्त्ता हर्त्ता पालयिता स्रष्टा स्रष्टुश्च सर्व्वतः ॥ २३
यं स्तोतुमीशो नालञ्च पञ्चवक्त्रेण शङ्करः।
स्तोतुं नालमनन्तश्च सहस्रवदनैरहो ॥ २४
स्तोतुं नालं स्वयं विष्णुर्विश्वव्यापी जनार्द्दनः।
महाविराड् न शक्तोऽपि यं स्तोतुं जगदीश्वरम्॥२५
कम्पिता यस्य पुरतः प्रकृतिः परमात्मनः।
सरस्वती जड़ीभूता यं स्तोतुं परमेश्वरम्।
महिमानं न जानन्ति वेदा यस्य च नारद ॥ २६
इत्येवं कथितो ब्रह्मन् प्रभावः परमात्मनः।
निर्गुणस्य च कृष्णस्य किं भूयः श्रोतुमिच्छसि ॥२७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारद-संवादे
श्रीकृष्णप्रभावकथनं नाम पञ्च-
पञ्चाशोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशोऽध्यायः।

नारद उवाच।

किमपूर्व्वं श्रुतं ब्रह्मन् रहस्यं परमाद्भुतम्।
अनन्तचरितं धन्यमनन्तस्याच्युतस्य च ॥ १
कथं विष्णुर्महाविष्णोर्दर्पभङ्गं चकार सः।
अन्येषां वा कथमहो तद्भवान् वक्तुमर्हति ॥ २
स्वतः श्रीकृष्णचरितमतीव मधुरं श्रुतौ।
अतीव मधुरं रम्यं काव्यं कविमुखात् ततः ॥ ३

नारायण उवाच।

महाविष्णोरहङ्कारो बभूव सहसेति च।
सर्व्वंमल्लोमकूपेषु विश्वान्येवाहमीश्वरः ॥४
संहारभैरवो भूत्वा तं जग्रास स लीलया।
स्थिते मूर्द्धावशेषे च प्रसादं तं चकार सः ॥ ५
सर्व्वात्मानं ध्यायमानं स्तुतं भीतं कृपानिधिः।
तच्छरीरं समुत्पन्नं पुनरेव चकार सः ॥ ६
ब्रह्मणः सहसा ब्रह्मन् अतिदर्पो बभूव ह।
अहं त्रिजगतां धाता कर्त्ताहमीश्वरः स्वयम् ॥ ७
मत्परः पूजितो नास्ति मत्परश्च जितेन्द्रियः।
इत्येवं मनसा कृत्वा बहुदर्पी बभूव सः ॥ ८
तं ब्रह्माणं समूहञ्च दर्शयामास तत्क्षणम्।
गोलोके स्वसमीपे च वसन्तं पुरतो विभोः ॥ ९
पञ्चवक्त्रञ्च षड्वक्त्रं दशवक्त्रं ततोऽधिकम्।
शतवक्त्रञ्च प्रत्येकं ब्रह्माण्डौघञ्च लीलया ॥ १०
त्यक्तुकामं स्वदेहञ्च व्रीड़या नतकन्धरम्।
पुनः प्रसादं कृपया तं चकार कृपानिधिः ॥ ११
कालेन मोहिनीद्वारा तमपूज्यं चकार सः।
स्वकन्यां दर्शयित्वा तं सकामञ्च चकार ह ॥ १२
पुनस्तद्दर्पभङ्गञ्च शिवद्वारा चकार सः।
तत्याज लज्जया देहं पुनर्देहं दधार सः ॥ १३
पुनश्चकार तं पूज्यं ब्रह्माणं ब्रह्मणः प्रभुः।
ज्ञानं ददौ महाज्ञानी ज्ञानानन्दः सनातनः ॥ १४
विष्णोर्बभूव गर्व्वश्च जगत्पाताहमीश्वरः।
तमात्मविस्मृतं कृष्णश्चकार रामजन्मनि ॥ १५
अहं विश्वं बिभर्म्मीति शेषदर्पो बभूव ह।
तद्दर्पं गरुड़द्वारा चूर्णीभूतं चकार सः ॥ १६
एकदा पूजितो नागैर्गरुड़ः कृष्णवाहनम्।
न पूजितश्च शेषेण स्वदर्पेण पुरा मुने ॥ १७
गरुड़ेन जितं क्रोधात् तमनन्तं मनस्विनम्।
चकार मोक्षणं तस्मात् श्रीकृष्णश्च कृपानिधिः ॥१८
स्वयं शिवः स्वदर्पाच्च न विवाहं चकार सः।
तं कृत्वा मायया मोहं कारयामास स्त्रीयुतम् ॥१९
पुनर्जहार तत्पत्नीं दक्षकन्यां महासतीम्।
वर्षं शुशोच तद्देहं क्रोड़े कृत्वा च शङ्करः ॥ २०
नाना स्थानञ्च बभ्राम रुदन् शोकाम्बुरुद्धकण्ठः।
जन्मान्तरे पुनः प्राप्य तां सतीं [illegible] महा ॥२१
विसस्मार च स्वज्ञानं दक्षशप्तः
पुनश्चाङ्गिरसद्वारा स्मारयाम
एकदा सरथः शम्भुः प्रेरित[illegible]पुरैः पुरा।

बाणस्य चोषाहरणे चिच्छेद च भुजान् विभुः।
भृगोश्च दहयज्ञे च दर्पभङ्गं चकार सः॥ ५९
परशुरामस्य रामस्य विवाहे पथि गच्छतः।
बभञ्ज दर्पं समरे रामद्वारा पुरा विभुः॥ ६०
सुमेरोः शृङ्गभङ्गञ्च वायुद्वारा चकार सः।
समुद्राणां दर्पभङ्गं चकारागस्त्यभक्षणात्॥ ६१
अकाले सृष्टिहरणे तत्पुत्रमरणे पुरा।
कोपयुक्तस्य वायोश्च दर्पभङ्गं चकार सः॥ ६२
उषाहरणयात्रायां द्वारकागमने हरेः।
बाणस्य च गवां हेतोर्वरुणञ्च शशाप सः॥ ६३
कलहे गङ्गया सार्द्धं वाण्या नारायणाग्रतः।
सरस्वतीञ्च तत्याज तस्या दर्पं बभञ्ज सः॥ ६४
दर्पयुक्ताञ्च गङ्गाञ्च त्यक्त्वा शम्भुर्हिमालये।
कामञ्च भस्मसात् कृत्वा तपसे च ययौ विभुः॥ ६५
लज्जामवाप सा देवी तस्या दर्पं बभञ्ज ह।
सा ययौ तपसे विष्णोः प्राप्तिहेतोः शिवस्य च॥ ६६
भारते सुचिरं तप्त्वा देवी विष्णोर्वरेण च।
चकार स्वामिनं शम्भुं भगवन्तं सनातनम्॥ ६७
महासौभाग्ययुक्ता सा बभूव शङ्करप्रिया।
विश्वेषु सर्व्वदेवीषु पूज्या वन्द्या स्तुता सुरैः॥ ६८
दर्पयुक्ता महालक्ष्मीर्बभूव सा महामुने।
पराभूता पुरा देवी जयेन विजयेन च॥ ६९
प्रविशन्ती विशोर्द्वारं दृष्ट्वा भक्ताय वाञ्छितम्।
निवारिता सा द्वाराच्च तेन दौवारिकेण वै॥ ७०
कृत्वा तत्र तिरस्कारं साभिमाना महासती।
स्मृत्वा हरेः पादपद्मं देहं त्यक्तं समुद्यता॥ ७१
तदा ब्रह्मा महेशश्च विष्णुर्धर्मश्च भास्करः।
महेन्द्रो वरुणश्चैव जगत्प्राणो हुताशनः॥ ७२
चन्द्रश्च कामदेवश्च वैश्रवणो धनेश्वरः।
ऋषयो मुनयश्चैव मनवो विघ्ननाशकाः॥ ७३
समाययू रुदन्तस्ते पद्मायाः पुरतः पुरा।
तुष्टवुश्च महालक्ष्मीं मूलप्रकृतिमीश्वरीम्॥ ७४

देवा ऊचुः।

क्षमस्व भगवत्यम्ब क्षमाशीले परात्परे।
शुद्धसत्त्वस्वरूपे च कोपादिपरिवर्ज्जिते॥ ७५
उपमे सर्व्वसाध्वीनां देवीनां देवपूजिते।
त्वया विना जगत्सर्व्वं मृततुल्यञ्च निष्फलम्॥ ७६
सर्व्वसम्पत्स्वरूपा त्वं सर्व्वेषां सर्व्वरूपिणी।
रासेश्वर्य्यधिदेवी त्वं त्वत्कलाः सर्व्वयोषितः॥ ७७
कैलासे पार्व्वती त्वञ्च क्षीरोदे सिन्धुकन्यका।
स्वर्गे च स्वर्गलक्ष्मीस्त्वं मर्त्त्यलक्ष्मीश्च भूतले॥ ७८
वैकुण्ठे च महालक्ष्मीर्देवदेवी सरस्वती।
गङ्गा च तुलसी त्वञ्च सावित्री ब्रह्मलोकतः॥ ७९
कृष्णप्राणाधिदेवी त्वं गोलोके राधिका स्वयम्।
रासे रासेश्वरी त्वञ्च वृन्दा वृन्दावने वने॥ ८०
कृष्णप्रिया त्वं भाण्डीरे चन्द्रा चन्दनकानने।
विरजा चम्पकवने शतशृङ्गे च सुन्दरी॥ ८१
पद्मावती पद्मवने मालती मालतीवने।
कुन्ददन्ती कुन्दवने सुशीला केतकीवने॥ ८२
कदम्बमाला त्वं देवी कदम्बकाननेऽपि च।
राजलक्ष्मी राजगेहे गृहलक्ष्मीर्गृहे गृहे॥ ८३
इत्युक्त्वा देवताः सर्व्वा मुनयो मनवस्तथा।
रुरुदुर्नम्रवदनाः शुष्ककण्ठौष्ठतालुकाः॥ ८४
इति लक्ष्मीस्तवं पुण्यं सर्व्वदेवैः कृतं शुभम्।
यः पठेत् प्रातरुत्थाय स वैश्वर्य्यं लभेद्ध्रुवम्॥ ८५
अभार्य्यो लभते भार्य्यां विनीतां सुदतीं सतीम्।
सुशीलां सुन्दरीं रम्यामतिसुन्दरवादिनीम्।
पुत्रपौत्रवतीं शुद्धां कुलजां कोमलां वराम्॥ ८६
अपुत्रो लभते पुत्रं वैष्णवं चिरजीविनम्।
परमैश्वर्य्ययुक्तञ्च विद्यावन्तं यशस्विनम्॥ ८७
भ्रष्टराज्यो लभेद्राज्यं भ्रष्टश्रीर्लभते श्रियम्।
हतबन्धुर्लभेद्बन्धुं धनभ्रष्टो धनं लभेत्॥ ८८
कीर्त्तिहीनो लभेत् कीर्त्तिं प्रतिष्ठाञ्च लभेद्ध्रुवम्।
प्रजावान् भूमिवान् वापि लक्ष्मीपुत्रो भवेद्ध्रुवम्॥ ८९
सर्व्वमङ्गलदं स्तोत्रं शोकसन्तापनाशनम्।
हर्षानन्दकरं शश्वद्धर्म्म-मोक्ष-सुहृत्प्रदम्॥ ९०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे षट्पञ्चाशोऽध्यायः॥ ५६॥

---

## सप्तपञ्चाशोऽध्यायः।

नारायण उवाच।

देवानां स्तवनं श्रुत्वा त्यक्त्वा च रोदनं सती।
उवाच सुप्रसन्ना तान् तेषां स्तोत्रेण नारद॥ १

महालक्ष्मीरुवाच।

त्यजामि देहं न क्रोधाद्वैराग्येण तु साम्प्रतम्।
इदं हृदि समालोच्य देवास्तत्श्रूयतामिति ॥ २
यस्मिन् सद्गुणे महति सर्व्वसाम्ये च निर्गुणे।
सर्व्वात्मनि सदानन्दे समता द्वयमेतयोः ॥ ३
भ्रूभङ्गलीलया लक्ष्मीलक्षं स्रष्टुमलञ्च यः।
भृत्ये स्त्रियां यत्समता किं कार्य्यं तस्य सेवया ॥ ४
तत्पत्नीनां प्रधानाहं निरस्ता हरिणाधुना।
तद्भृत्यभृत्यभृत्येन भक्तिपूर्णेन नेष्यिता ॥ ५
त्यक्ष्यामि जीवनमहमसौभाग्या च स्वामिनि।
वह्नौ च कामनां कृत्वा यथा भद्रं भवेत् परे ॥ ६
या स्त्री भर्त्तुरसौभाग्या सदाऽभाग्या च सर्व्वतः।
शयने भोजने तस्या न सुखं जीवनं वृथा ॥ ७
यस्या नास्ति प्रियप्रेम तस्या जन्म निरर्थकम्।
तत् किं पुत्रे धने रूपे सम्पत्तौ यौवनेऽथवा ॥ ८
यद्भक्तिर्नास्ति कान्ते च सर्व्वप्रियतमे परे।
साऽशुचिर्धर्म्महीना च सर्व्वकर्म्मविवर्ज्जिता ॥ ९
पतिर्बन्धुर्गतिर्भर्त्ता दैवतं गुरुरेव च।
सर्व्वस्माच्च परः स्वामी न गुरुः स्वामिनः परः ॥१०
पिता माता सुतो भ्राता क्लिष्टोदातुमिदं धनम्।
सर्व्वस्वदाता स्वामी च मूढ़ानां योषितां सुराः ॥११
काचिदेव हि जानाति महासाध्वी च स्वामिनम्।
अतिसद्वंशजाता च सुशीला कुलपालिका ॥ १२
असद्वंशप्रसूता या दुःशीला धर्म्मवर्ज्जिताः।
मुखदुष्टा योनिदुष्टाः पतिं निन्दन्ति कोपतः ॥१३
या स्त्री द्वेष्टि सर्व्वपरं पतिं विष्णुमयं गुरुम्।
कुम्भीपाकेन पच्येत यावदिन्द्राश्चतुर्द्दश ॥ १४
व्रतस्नानशनं दानं सत्यं पुण्यं तपश्चिरम्।
पतिभक्तिविहीनाया भस्मीभूतं निरर्थकम् ॥ १५
अतः किञ्चिन्न वक्ष्यामि निष्ठुरं पतिमीश्वरम्।
भृत्यापराधाद्दैवेन प्राणांस्त्यक्ष्यामि निश्चितम् ॥ १६
पतिदोषे महासाध्वी पतिं न निष्ठुरं वदेत्।
यदि सोढ़मशक्ता च प्राणांस्त्यजति धर्म्मतः ॥ १७
पतिसेवा व्रतं स्त्रीणां पतिसेवा परं तपः।
पतिसेवा परो धर्म्मः पतिसेवा सुरार्च्चनम् ॥ १८
पतिसेवा परं सत्यं दानं तीर्थानुतीर्थकम्।
सर्व्वदेवमयः स्वामी सर्व्ववेदमयः शुचिः।
सर्व्वपुण्यस्वरूपश्च पतिरूपी जनार्द्दनः ॥ १९
या सती भर्त्तुरुच्छिष्टं भुङ्क्ते पादोदकं सदा।
तस्या दर्शमुपस्पर्शं नित्यं वाञ्छन्ति देवताः ॥ २०
ततः सर्व्वाणि तीर्थानि पुनन्ति पापिनो क्षणात् ॥२१
इत्युक्त्वा च महासाध्वी रुरोद च मुहुर्मुहुः।
उवाच ब्रह्मा भीतश्च भक्तिनम्रात्मकन्धरः ॥ २२

ब्रह्मोवाच।

भविष्यति न भद्रञ्च जयस्य विजयस्य च।
त्वया न शप्तौ तौ मूढ़ौ प्रियापराधभीतया ॥ २३
सापराधञ्च धर्म्मिष्ठः क्षमया न शपेद्यदि।
सर्व्वनाशो भवेत् तस्य निश्चितं माचिरं सति ॥ २४
यदि शक्तुं न शक्तश्च न दण्डं कर्त्तुमीश्वरः।
सापराधे च पुरुषे धर्म्मो दण्डं करोति च ॥ २५
सर्व्वं क्षमस्व हे मातर्गच्छ गच्छ प्रियान्तिकम्।
मां तव स्वामिभक्तञ्च निरीक्ष्य सृष्टिकर्म्मणि ॥ २६

नारायण उवाच।

इत्युक्त्वा तां पुरस्कृत्य सार्द्धं देवैर्मुनीन्द्रकैः।
शीघ्रं जगाम वैकुण्ठं वैकुण्ठे स्तोतुमीश्वरम् ॥ २७
तत्र गत्वा जगन्नाथं तुष्टाव कमलासनः।
चतुर्व्वक्त्रैश्चतुर्व्वक्त्रश्चतुर्व्वेदविदां गुरुः ॥ २८
ब्रह्मणः स्तवनं श्रुत्वा दृष्ट्वा लक्ष्मीं पुरःसराम्।
रुदतीं नम्रवदनामुवाच कमलापतिः ॥ २९

भगवानुवाच।

सर्व्वं जानामि सर्व्वज्ञः सर्व्वात्मा सर्व्वपालकः।
सर्व्वशास्ता च सर्व्वादिः कारणं कमलोद्भव ॥ ३०
भक्ते कलत्रे बन्धौ च सर्व्वत्र समता मम।
विशेषतोऽपि मद्भक्तः कलत्रात् प्रिय एव च ॥ ३१
मद्भक्तौ तव पुत्रौ च द्वारपालौ दुरन्तरौ।
क्षम मामपराधञ्च तयोश्च भक्तिपूर्णयोः ॥ ३२
मद्भक्तिपूर्णो बलवानन्येभ्यो न बिभेति च।
रक्षितो मम चक्रेण भक्तिमाध्वीकदुर्म्मदः ॥ ३३
इत्युक्त्वा जगतां नाथो लक्ष्मीं कृत्वा स्ववक्षसि।
समानीय द्वारपालौ तावुवाचेदमेव च ॥ ३४
माभैर्वत्स सुखं तिष्ठ भयं किं ते मयि स्थिते।
मद्भक्तानाञ्च कः शास्ता गच्छ वत्सात्मनः पदम् ॥३५
इत्युक्त्वा भगवांस्तत्र विरराम महामुने।
ययुर्देवाश्च स्वस्थानं प्रणम्य जगदीश्वरम् ॥ ३६

नारायणवचः श्रुत्वा द्वारपाल उवाच तम्।
पुलकाञ्चितसर्व्वाङ्गो भक्तिनम्रात्मकन्धरः॥ ३९
जय उवाच।
नाहं बिभेमि देवांश्च लक्ष्मीं मुनिगणांस्तथा।
त्वदीयचरणाम्भोज-ध्यानैकतानमानसः॥ ३८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-जन्मखण्डे नारायण-नारदसंवादे लक्ष्मीवैराग्यमोचनं नाम सप्त-पञ्चाशोऽध्यायः॥ ५७॥

---

## अष्टपञ्चाशोऽध्यायः।

नारायण उवाच।
बभूव दर्पः पृथ्व्याश्च सर्व्वाधाराहमेव च।
पृथुद्वारा च तद्दर्पं जघान चैव तं प्रभुः॥ १
बभूव दर्पश्चादित्या देवमाताहमेव च।
काले चकार तस्याश्च स्वपुत्राणामदर्शनम्॥ २
बभूव दर्पो गङ्गाया अहं निर्व्वाणदेति च।
जह्नुद्वारा च तद्दर्पं जहार जगतीपतिः।
जहार मनसाद्दर्पं दुर्गाद्वारा पुरा मुने॥ ३
विरजोपगतं कृष्णं भर्त्सयामास कोपतः।
प्रविशन्तं रासगृहं गोपीभिर्विनिवारितम्॥ ४
दौवारिकाभिवतश्च ताड्यमानश्च दर्पतः।
निजभक्तेन श्रीदाम्ना राधा शप्ता बभूव ह॥ ५
दैवेन सहसा ध्वस्ता गोलोकादागता धराम्।
वृषभानस्त्रियां जाता कलावत्याश्च नारद॥ ६
कृष्णस्तदनुरोधेन कंसभीतिच्छलेन च।
समागतो नन्दगेहं तेनायं नन्दनन्दनः॥ ७
श्रीदाम्नः शापविच्छेद-पालनार्थं जगत्पतिः।
पुनर्जगाम मथुरामित्याह कमलोद्भवः॥ ८
अस्यापरमभिप्रायं को वा जानाति नारद।
कथं जातः समायातो मथुरायाश्च गोकुलम्॥ ९
इत्येवं कथितं सर्व्वमपरं श्रूयतामिति।
यथा जगाम मथुरां नन्दात् स नन्दनन्दनः॥ १०
शोकं नन्दो यशोदा च यथा सम्प्राप दैवतः।
यथा गोपाश्च गोप्यश्च गावो वृन्दावने वने॥ ११
वृन्दा या विरहे दुःखं प्राप वृन्दावने वने।
वने वने वा वन्यान्ते वन्या जानन्ति किञ्चन॥ १२
वनं वन्यं वन्यपदमपि त्यक्त्वा वने वने।
श्मशाने वाऽश्मशाने वा बभ्राम भामिनी मुने॥ १३
भामं त्यक्त्वा च भामेन चेतनाचेतना क्षणम्।
क्षणेन वञ्चिता सा च प्रार्थयन्ती पतिं क्षणम्॥ १४
क्षणं क्षणं सा श्वसिति चेतनं कुर्व्वती क्षणम्।
क्षणं विषण्णा तल्पे च क्षणमुत्थाय रोदिति॥ १५

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-जन्मखण्डे नारायण-नारदसंवादे अष्टपञ्चाशोऽध्यायः॥ ५८॥

---

## एकोनषष्टितमोऽध्यायः।

नारायण उवाच।
इत्येवं कथितं सर्व्वं सर्व्वेषां दर्पभञ्जनम्।
इन्द्रस्य दर्पभङ्गञ्च विस्तारेण निशामय॥ १
इन्द्रो दर्पात् सभायाञ्च रत्नसिंहासने वसन्।
नोत्तस्थौ स गुरुं दृष्ट्वा ब्रह्मिष्ठञ्च बृहस्पतिम्॥ २
गुरुर्जगामातिरुष्टः स्वापमानेन मत्सरः।
तथापि कृपया धर्म्मी स्नेहाच्च न शशाप तम्॥ ३
विना शापेन तद्दर्पश्चूर्णीभूतो बभूव ह।
धर्म्मी चेन्न शपेद्धर्मात् प्रेम्णा वा जातकिल्बिषम्।
तथापि तच्च फलति धर्म्मस्तं हन्ति नारद॥ ४
यो यं हिंस्रं सापराधं शपेत् कोपेन धार्म्मिकः।
विनाशः सापराधस्य धर्म्मो नष्टश्च धर्म्मिणः॥ ५
तेनाधर्म्मेण शक्रस्य ब्रह्महत्या बभूव ह।
भीतस्त्यक्त्वा स्वराज्यञ्च प्रययौ स सरोवरम्॥ ६
सरसः पद्मसूत्रे च निवासञ्च चकार सः।
गन्तुं न शक्ता हत्या च पुण्यं विष्णुसरोवरम्॥ ७
श्रेष्ठं भारतवर्षे च तपःस्थानं तपस्विनाम्।
तदेवं पुष्करं तीर्थं प्रवदन्ति पुराविदः॥ ८
राज्यभ्रष्टं हरिं दृष्ट्वा हरिभक्तो नराधिपः।
बलाज्जहार तं राज्यं नहुषो नाम धार्म्मिकः॥ ९
दृष्ट्वा शचीं वरारोहामनपत्याञ्च सुन्दरीम्।
स्वर्गगङ्गाञ्च गच्छन्तीं हृदयेन विदूयता॥ १०
नवयौवनसम्पन्नां रत्नालङ्कारभूषिताम्।
सुकोमलां तां सुदतीं सतीञ्च महासतीम्॥ ११

मूर्च्छां सम्प्राप राजेन्द्रः कामेन यौवनोद्धतः।
उवाच तत्पुरः स्थित्वा सुविनीतश्च दासवत् ॥ १२

नहुष उवाच।

धातुर्गतिर्विचित्राहो न बोध्या च सतामपि।
ईदृशी स्त्री भगाङ्गस्य लुब्धस्य परयोषिति ॥ १३
ईदृशी सुन्दरी यस्य परभार्य्यासु तन्मनः।
अस्या अग्रे च का रम्भा कोर्व्वशी का तिलोत्तमा॥१४
का वा मेना घृताची वा रत्नमाला कलावती।
कालिका सुन्दरी भद्रावती चम्पावती च का।
एताश्चाप्सरसश्चास्याः कलां नार्हन्ति षोड़शीम् ॥१५
इमां विहाय मूढ़ोऽन्यां कथं गच्छति मन्दधीः।
अस्माकं योषितोऽस्याश्च चेटीतुल्याथवा न वा ॥ १६
मां भजस्व वरारोहे सुप्रीता तव किङ्करम्।
यथा राधा च गोलोके कृष्णवक्षसि राजते ॥ १७
वैकुण्ठोरसि वैकुण्ठे यथा लक्ष्मीः सरस्वती।
ब्रह्मलोके च ब्रह्माणी यथैव ब्रह्मवक्षसि ॥ १८
यथा कैलासशिखरे शङ्करोरसि शङ्करी ॥ १९
सिन्धुकन्या मर्त्यलक्ष्मीः श्वेतद्वीपे मनोहरे।
क्षीरोदतीरनिलये सौभाग्या विष्णुवक्षसि ॥ २०
यथा मूर्त्तिर्महासाध्वी धर्म्मवक्षःस्थलस्थिता।
पातालक्ष्मीर्वाशन्ती यथैवानन्तवक्षसि ॥ २१
यथा पुष्टिर्गणेशे च देवसेना च कार्त्तिके।
वरुणे वरुणानीव यथा स्वाहा हुताशने ॥ २२
यथा रतिः कामदेवे यथा संज्ञा दिनेश्वरे।
वायोः पत्नी यथा वायौ यथा चन्द्रे च रोहिणी॥२३
यथादितिर्देवमाता तव श्वश्रूश्च कश्यपे।
यथा हिमालये मेना पितृकन्या च मानसी ॥ २४
लोपामुद्रा यथागस्त्ये यथा तारा बृहस्पतौ।
कर्द्दमे देवहूती च वशिष्ठेऽरुन्धती यथा ॥ २५
मनौ च शतरूपा च दमयन्ती नले यथा।
तथा त्वं भव सौभाग्यान्मम वक्षसि सुन्दरि ॥ २६
लीलया च सहस्रेन्द्रं क्षेप्तुं शक्तोऽहमीश्वरः।
नारी वाञ्छति जारञ्च स्वामिनो बलवत्तरम् ॥ २७
सुमेरुगिरिकूटे च दुर्गमेऽतिरहःस्थले।
अथवा मलये रम्ये रम्ये चन्दनवायुना ॥ २८
विस्यन्दके सुरसने किं वा नन्दनकानने।
निकटे शतशृङ्गस्य पुष्पभद्रानदीतटे ॥ २९
गोदावरीतीरनीर-समीपे शीतवायुना।
चम्पावतीनदीतीरे रम्ये चम्पककानने ॥ ३०
श्मशानेऽतिश्मशानेऽतिरम्येऽतिनिर्ज्जने वने।
शैले शैलेऽतिरहसि कन्दरे कन्दरे वरे ॥ ३१
द्वीपे द्वीपेऽतिदुर्गे च नद्यां नद्यां नदे नदे।
समुद्रपुलिने रम्ये सर्व्वजन्तुविवर्ज्जिते।
विदग्धाया विदग्धेन सङ्गमो निर्जने सुखम् ॥ ३२
पुष्पचन्दनशय्यायां पुष्पचन्दनचर्च्चितम्।
मां गृहीत्वा कुरु रतिं पुष्पचन्दनचर्च्चिता ॥ ३३
ब्रह्मणश्च वरे देवि जरा-मृत्युविवर्ज्जितम्।
मां कुरु स्वपतिं भद्रे नित्यं सुस्थिरयौवनम् ॥ ३४
सुवेशं सुन्दरं वीरं कामशास्त्रविशारदम्।
शरत्पार्व्वणचन्द्रास्यं चन्द्रवंशसमुद्भवम् ॥ ३५
स्वागतासुर्व्वशीमद्य त्यक्तवन्तश्च याचिताम्।
न मे स्पृहा परस्त्रीषु त्वां दृष्ट्वा लोलुपं मनः ॥ ३६
त्यक्ता मया स्वभार्य्याश्च रत्नभूषणभूषिताः।
अथवा रक्ष ताः सर्व्वा दासीः कृत्वा वरानने ॥ ३७
रत्नेन्द्रसारमालां ते दास्यामि वरुणस्य च।
निर्ज्जित्य वरुणं युद्धे ब्रह्मास्त्रेणातितेजसा ॥ ३८
वह्निशुद्धं वस्त्रयुग्मं जित्वा वह्निं सुदुर्ल्लभम्।
दास्याम्यद्यैव ते देवि नियोज्यं मां नियोजय ॥३९
मणीन्द्रसारनिर्म्माण-मकराकारकुण्डले।
दास्याम्यद्यादितेर्द्देव्या देवमातुश्च सुन्दरि ॥ ४०
करभूषणयुग्मञ्च अमूल्यरत्ननिर्म्मितम्।
दास्याम्यद्यैव रोहिण्याश्चन्द्रं जित्वातिदुर्ल्लभम्॥ ४१
यच्छशग्रस्तमतिकृत्यं ममैव पूर्व्वपूरुषम्।
विना युद्धेन भीतो मां कृपया वा प्रदास्यति ॥ ४२
अमूल्यरत्ननिर्म्माण-क्वणन्मञ्जीरयुग्मकम्।
दास्यामि तेऽद्य पार्व्वत्या भिक्षां कृत्वा महेश्वरम्॥४३
आशुतोषं स्तुतिवशं भक्तीशञ्च कृपामयम्।
सर्व्वसम्पत्प्रदातारं परं कल्पतरुं शुभे ॥ ४४
अमूल्यरत्ननिर्म्माण-केयूरयुगलं प्रिये।
दास्यामि तेऽद्य गङ्गाया युद्धं कृत्वा सुदुर्लभम् ॥ ४५
वङ्कलीयुगलं चारु सूर्य्यपत्न्या मनोहरम्।
रुद्ररत्नसारनिर्म्माणं दास्याम्यद्य सुशोभने ॥ ४६
अमूल्यरत्ननिर्म्माणं दर्पणञ्चातिनिर्म्मलम्।
दास्यामि ते कामपत्न्याः कामं जित्वा च लीलया॥४७

क्रीड़ाकमलमन्दारं कमलायाश्च सुन्दरि।
भिक्षां कृत्वा च दास्यामि कृत्वा च कमलापतेः ॥ ४८
अङ्गुरीयकरत्नानि विश्वेषु दुर्लभानि च।
सावित्र्याश्च प्रदास्यामि कृत्वा च ब्रह्मणस्तपः ॥ ४९
स्वयं गीतं प्रगायन्तीं मूर्च्छनाश्रुतिसंयुताम्।
वाणीवीणां प्रदास्यामि कृत्वा नारायणव्रतम् ॥ ५०
रत्नपाशकसङ्घञ्च विश्वकर्म्मविनिर्म्मितम्।
कुवेरपत्न्या दास्यामि पादाङ्गुलिविभूषणम् ॥ ५१
इत्येवमुक्त्वा नहुषः पपात तत्पदाम्बुजे।
उवाच तं शची वत्स राजमार्गगतं नृपम् ॥ ५२
उत्थाप्य तं करे धृत्वा शुष्ककण्ठौष्ठतालुका।
स्मारं स्मारं पदाम्भोजं महासाध्वी हरेर्गुरोः ॥५३
शच्युवाच।
शृणु वत्स महाराज हे तात भयभञ्जन।
भयत्राता च राजा च सर्व्वेषां पालकः पिता ॥ ५४
भ्रष्टश्रीश्च महेन्द्रोऽद्य लब्ध स्वर्गं नृपोऽधुना।
यो राजा स पिता पाता प्रजानामेव निश्चितम् ॥५५
गुरुपत्नी राजपत्नी देवपत्नी तथा वधूः।
पित्रोः स्वसा शिष्यपत्नी भृत्यपत्नी च मातुली ॥ ५६
पितृपत्नी भ्रातृपत्नी श्वश्रूश्च भगिनी सुता।
गर्भधात्रीष्टदेवी च पुंसां षोड़श मातरः ॥ ५७
त्वं नरो देवभार्य्याहं माता ते वेदसम्मता।
गच्छ वत्सादितिं रन्तुं यदि वेच्छसि मातरम् ॥५८
सर्व्वेषां निष्कृतिश्चास्ति न वत्स मातृगामिणाम्।
कुम्भीपाके ते पचन्ति यावद्वै ब्रह्मणो वयः ॥ ५९
ततो भवन्ति कृमयो वेश्यायोनिषु कल्पकान्।
ततो विट्कृमयस्तेऽपि भवन्ति कल्पसप्तसु ॥ ६०
भवन्ति ते ततः कल्पं व्रणानां कृमयः सुत।
ततश्च मूर्द्ध्नि कृमयः कल्पसप्त भवन्ति ते ॥ ६१
ततस्तल्पे च कृमयो भवति कल्पमेव च।
ततश्च कुष्ठिनश्छागा भवन्ति सप्तजन्मसु ॥ ६२
ततो विड्भोजिनः काका भवन्ति सप्तजन्मसु।
ततः श्वानो जन्मसप्त सप्तजन्मसु शूकराः ॥ ६३
ततः क्लीवपुमांसश्च प्रति जन्मसु जन्मसु।
नास्त्येव निष्कृतिस्तेषामित्याह कमलोद्भवः ॥ ६४
एवं विट्-चत्र-शूद्राणां ब्राह्मणीगमने नृप।
वेदे च निष्कृतिर्नास्ति चेत्याङ्गिरसभाषितम् ॥ ६५
स्वर्गसम्पत्तिभोगश्च सुखं संसारिणां ध्रुवम्।
मुमुक्षूणाञ्च मोक्षश्च तपश्चैव तपस्विनाम् ॥ ६६
ब्राह्मणानाञ्च ब्राह्मण्यं मुनीनां मौनमेव च।
विद्याभ्यासो वैदिकानां कवीनां काव्यवर्णनम् ॥६७
विष्णुदास्यं वैष्णवानां विष्णुभक्तिरसं परम्।
विष्णुभक्तिं विना नैव मुक्तिं वाञ्छन्ति वैष्णवाः ॥६८
नानामूत्रमलाढ्येषु दुर्गन्धिनिलयेषु च।
साधूनां किं सुखं साध्वी स्त्रीणां योनिषु मां वद॥ ६९
कुलप्रदीप राजेन्द्र राज्ञामतुलवन्तिनाम्।
लब्धञ्च भारते जन्म पुण्येन बहुजन्मनाम् ॥ ७०
पद्मानां चन्द्रवंशानां नृपाणां दीप्तिहेतवे।
त्वमाविरासीस्तेजस्वी ग्रीष्ममध्याह्नभास्करः ॥ ७१
सर्व्वेषामाश्रमाणाञ्च स्वधर्म्मश्च यशः परम्।
स्वधर्म्महीना नरके पतन्ति मूढ़चेतसः ॥ ७२
ब्राह्मणानां स्वधर्म्मश्च त्रिसन्ध्यमर्च्चनं हरेः।
तत्पादोदकनैवेद्य-भक्षणञ्च सुधाधिकम् ॥ ७३
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम्।
भवन्ति शूकराः सर्व्वे ब्राह्मणा यदि भुञ्जते ॥ ७४
आजीवं भुञ्जते विप्रा एकादश्यां न भुञ्जते।
कृष्णजन्मदिने चैव शिवरात्रौ सुनिश्चितम् ॥ ७५
तथा रामनवम्याञ्च यत्नतः पुण्यवासरे।
ब्राह्मणानां स्वधर्म्मश्च कथितो ब्रह्मणा नृप ॥ ७६
व्रतं पतिव्रतानाञ्च पतिसेवा परं तपः।
यथा पुत्त्रः परपतिरेष धर्म्मश्च योषिताम् ॥ ७७
पालयन्ति तथा भूपाः प्रजाः पुत्त्रानिवौरसान्।
प्रजाश्चियश्च पश्यन्ति राजानो मातरं यथा ॥ ७८
यज्ञं कुर्व्वन्ति विष्णोश्च सेवनं देव-विप्रयोः।
निवारणञ्च दुष्टानां शिष्टानां प्रतिपालनम्।
इति धर्म्मः क्षत्त्रियाणां कथितो ब्रह्मणा पुरा ॥७९
वाणिज्यञ्चैव वैश्यानां स्वधर्म्मो धर्म्मसञ्चयः।
शूद्राणां विप्रसेवा च परो धर्म्मो विधीयते ॥ ८०
सर्व्वन्यासो हरौ भूप धर्म्मः सन्न्यासिनां ध्रुवम्।
रक्तकवासा दण्डी च बिभर्त्ति मृत्कमण्डलुम् ॥८१
सर्व्वत्र समदर्शी च स्मरेन्नारायणं सदा।
करोति भ्रमणं नित्यं गेहे गेहे न तिष्ठति ॥ ८२
विद्यामन्त्रञ्च कस्मैचिन्न ददाति च दैवतः।
करोति नाश्रमं भिक्षुः करोति नान्यवासनाम् ॥ ८३

करोति नान्यसङ्गञ्च निर्म्मोहः सङ्गवर्ज्जितः।
न स्वादु भुङ्क्ते देवाच स्त्रीसुखं न हि पश्यति ॥ ८४
न वाञ्छितं भक्ष्यवस्तु याचते गृहिणं प्रति।
इति सन्न्यासिनां धर्म्ममित्याह कमलोद्भवः ॥ ८५
इति ते कथितं पुत्र गच्छ वत्स यथासुखम्।
इत्युक्त्वा च महेन्द्राणी विरराम च वर्त्मनि ॥ ८६
उवाच नहुषो राजा शचीं प्रणतकन्धरः ॥ ८७
नहुष उवाच।
त्वया यत् कथितं देवि सर्व्वं तत् तु विपर्य्ययम्।
यथार्थधर्म्मं वेदोक्तं निबोध कथयामि ते ॥ ८८
कर्म्मणां फलभोगश्च सर्व्वेषां सुरसुन्दरि ॥ ८९
नैव स्वर्गे न पाताले नान्यद्वीपे श्रुतौ श्रुतम्।
कृत्वा शुभाशुभं कर्म्म पुण्यक्षेत्रे च भारते।
अन्यत्र तत्फलं भुङ्क्ते कर्म्मी कर्म्मनिबन्धनात् ॥९०
हिमालयात्तु समुद्रं पुण्यक्षेत्रञ्च भारतम्।
श्रेष्ठं सर्व्वस्थलानाञ्च मुनीनाञ्च तपःस्थलम् ॥ ९१
लब्ध्वा जन्म तत्र जीवी वञ्चितो विष्णुमायया।
अश्वत् करोति विषयं विहाय सेवनं हरेः ॥ ९२
कृत्वा तत्र महत् पुण्यं स्वर्गं गच्छति पुण्यवान्।
गृहीत्वा स्वर्गकन्याश्च चिरं स्वर्गे प्रमोदते ॥ ९३
स्वर्गमागच्छति नरो विहाय मानवीं तनूम्।
स्वशरीरेणागतोऽहं मत्पुण्यं पश्य सुन्दरि ॥ ९४
अनेकजन्मपुण्येन चागत्य स्वर्गमीप्सितम्।
ततः किं केन पुण्येन दर्शनं मे त्वया सह ॥ ९५
न हि कर्म्मस्थलमिदं सभोगस्थलमेव च।
सारश्च सर्व्वभोगाणां वरस्त्रीभोग एव च ॥ ९६
भोगस्थले भोगवस्तु न हि त्यक्तुं प्रशस्यते।
भावानुरक्ता रसिका भोग्या त्वं भोगिनामिह ॥ ९७
द्रव्यमस्वामिकं भोग्यं सुखं त्यजति मन्दधीः।
अविरोधसुखत्यागी पशुरेव न संशयः ॥ ९८
गच्छ कान्ते गृहं मत्वा कुरु तल्पं मनोहरम्।
रमणीयञ्च रहसि परं रतिकरं वरम् ॥ ९९
त्यज दैन्यञ्च मनसो निश्चितं वरवर्णिनि।
वरानने मया सार्द्धं मोदस्व वरमन्दिरे ॥ १००
अमूल्यरत्नमालाञ्च मणिराजविराजिताम्।
भिक्षां कृत्वा च दास्यामि लक्ष्मीवक्षसिशोभिताम्॥१०१
मणिञ्चानन्तशिरसः सर्व्वेषामतिदुर्लभम्।
दुष्प्राप्यं त्रिषु लोकेषु तुभ्यं दास्यामि सुन्दरि ॥ १०२
मणिरत्नं कौस्तुभञ्च यन्नारायणवक्षसि।
भिक्षां कृत्वा तु दास्यामि कृत्वा नारायणव्रतम्॥१०३
चन्द्रशेखरमौलेश्च यदर्द्धचन्द्रभूषणम्।
जरामृत्युव्याधिहरं शम्भुक्रीड़ाकरं वरम् ॥१०४
अतीव विश्वे दुष्प्राप्यं विश्ववन्द्यञ्च सुन्दरम्।
विश्वनाथव्रतं कृत्वा तुभ्यं दास्यामि निश्चितम् ॥१०५
दास्यामि ते श्रीसूर्य्यस्य मणिश्रेष्ठं स्यमन्तकम्।
भक्त्या सूर्य्यव्रतं कृत्वा त्रिषु लोकेषु दुर्लभम् ॥१०६
अष्टौ भारान् सुवर्णञ्च यश्च नित्यं प्रसूयते।
जन्म-मृत्युहरञ्चैव परं क्रीड़ाकरं प्रिये ॥ १०७
अमूल्यरत्ननिर्म्माणं पात्ररत्नं मनोहरम्।
सततं मधुपूर्णञ्च दास्यामि मदनस्य च ॥ १०८
अमूल्यरत्ननिर्म्माणं सूर्य्यतुल्यञ्च तेजसा।
नानाचित्रविचित्राढ्यं निर्म्माणमीश्वरेच्छया ॥१०९
निर्म्मलं मण्डलाकारं मणिराजविराजितम्।
हस्तलक्षपरिमितं चतुरस्रञ्च सुन्दरम् ॥ ११०
पद्मापद्मासनं श्रेष्ठं श्रेष्ठं तस्याः सुदुर्लभम्।
ध्रुवं तुभ्यं प्रदास्यामि कृत्वा पद्मालयाव्रतम् ॥ १११
इत्येवमुक्त्वा नहुषः कृत्वा वर्त्मनिरोधनम्।
पुनः पपात चरणे महेन्द्राण्या मुहुर्म्मुहुः ॥ ११२
नृपस्य वचनं श्रुत्वा शुष्ककण्ठौष्ठतालुका।
तमुवाच महेन्द्राणी स्मारं स्मारं गुरुं हरिम् ॥११३
शच्युवाच।
अचेतनस्य मूढ़स्य कार्य्याकार्य्यमजानतः।
श्रोष्याम्यद्य कतिविधां कथां कामातुरस्य च ॥११४
मधुमत्तात् सुरामत्तात् काममत्तो विचेतनः।
मृत्युं न गणयेत् कामी कामेन हृतमानसः ॥ ११५
त्यज मामद्य हे मत्त मातृतुल्यां रजस्वलाम्।
ऋतोः प्रथमदिवसमद्य मद्यप मे ध्रुवम् ॥ ११६
प्रथमे दिवसे स्त्री च चाण्डाली सा रजस्वला।
द्वितीये दिवसे म्लेच्छा तृतीये रजकी स्मृता ॥ ११७
शुद्धा भर्त्तुश्चतुर्थेऽह्नि न शुद्धा देव-पैत्र्ययोः।
असच्छूद्रासमा सा च तद्दिने च परं प्रति ॥ ११८
प्रथमे दिवसे कान्तां यो हि गच्छेद्रजस्वलाम्।
ब्रह्महत्याचतुर्थञ्च लभते नात्र संशयः ॥ ११९
स पुमान् न हि कर्म्मार्हो दैवे पैत्र्ये च कर्म्मणि।

अधमः स च सर्व्वेषां निन्दितश्चाथशस्करः ॥ १२०
द्वितीये दिवसे नारीं यो व्रजेच्च रजस्वलाम् ।
कामतः परिपूर्णात्मा गोहत्यां लभते ध्रुवम् ॥ १२१
आजीवनं नाधिकारी पितृ-विप्र-सुरार्च्चने ।
अमनुष्योऽयशस्वी चाविद्योऽङ्गिरसभाषितम् ॥ १२२
तृतीये दिवसे जायां यो हि गच्छेद्रजस्वलाम् ।
स मूढ़ो भ्रूणहत्याञ्च लभते नात्र संशयः ।
पूर्व्ववत् पतितः सोऽपि न चार्हः सर्व्वकर्म्मसु ॥१२३
असच्छूद्रा चतुर्थेऽह्नि न गच्छेत् तां विचक्षणः॥१२४
यदि मां मातरं मूढ़ ग्रहीष्यसि बलेन च ।
ऋतोरतीते दिवसे गमनञ्च करिष्यसि ॥ १२५
शच्याश्च वचनं श्रुत्वा प्रहस्य नहुषस्तदा ।
उवाच मधुरं शान्तः शक्रकान्ताञ्च सुव्रताम् ॥ १२६

नहुष उवाच ।

देवपत्नी सदा शुद्धाधुना मां मानवं प्रति ।
शयने भोजने देवि नाशुद्धा मानवं प्रति ॥ १२७
रजस्वलायाः सम्भोगी कर्म्मक्षेत्रे च भारते ।
तयोक्ताञ्च भवेत् पापं न तु स्वर्गे च सुन्दरि ॥ १२८
कर्म्मक्षेत्रेऽपि तत् कर्म्म यद्वेदोक्तं शुभाशुभम् ।
न भवेद्वैष्णवानाञ्च ज्वलतां ब्रह्मतेजसा ॥ १२९
यथा प्रदीप्ते वह्नौ च शुष्काणि च तृणानि च ।
भवन्ति भस्मीभूतानि तथा पापानि वैष्णवे ॥ १३०
वह्नि-सूर्य्य-ब्राह्मणेभ्यस्तेजीयान् वैष्णवः सदा ।
रक्षितो विष्णुचक्रेण स्वतन्त्रो मत्तकुञ्जरः ॥ १३१
न विचारो न भोगश्च वैष्णवानां स्वकर्म्मणाम् ।
लिखितं सास्ति कौथुम्यां कुरु प्रश्नं बृहस्पतिम्॥१३२
अस्मांश्च सर्व्वे जानन्ति चन्द्रवंश्यांश्च वैष्णवान् ।
देवमन्यं न सेवन्ते चन्द्रवंश्या हरिं विना ॥ १३३
सत्त्वांशप्रभवो यो हि ब्राह्मणः क्षत्रियोऽथवा ।
विष्णुमन्त्रं न गृह्णाति वञ्चितो विष्णुमायया ॥ १३४
को वा मन्त्रश्च के देवा न हि शास्ता यमो मम ।
सर्व्वान् भेत्तुं समर्थोऽहं ब्रह्म-विष्णु-शिवं विना॥१३५
शय्यां कुरु गृहं गत्वा शीघ्रं यास्यामि ते गृहम् ।
ऋतुपापं मयि भवेत् तव किं गच्छ शोभने ॥ १३६
इत्युक्त्वा नहुषो राजा प्रफुल्लवदनेक्षणः ।
रत्नयानं समारुह्य ययौ नन्दनकाननम् ॥ १३७
न ययौ सा शची गेहं प्रजगाम गुरोर्गृहम् ।
गत्वा कुशासनस्थञ्च ददर्श च बृहस्पतिम् ॥ १३८
तारासेवितपादाब्जं ज्वलन्तं ब्रह्मतेजसा ।
जपमालाकरं शश्वज्जपन्तं कृष्णमीप्सितम् ॥ १३९
परमं परमानन्दं परमात्मानमीश्वरम् ।
निर्गुणञ्च निरीहञ्च स्वतन्त्रं प्रकृतेः परम् ॥ १४०
स्वेच्छामयं परंब्रह्म भक्तानुग्रहविग्रहम् ।
तमानन्दाश्रुनेत्रञ्च ननाम शिरसा भुवि ॥ १४१
रुदती साश्रुनेत्रा सा मज्जन्तं भक्तिसागरे ॥ १४२
शोकार्णवे निमज्जन्ती हृदयेन विदूयता ।
तुष्टाव भीता स्वगुरुं ब्रह्मिष्ठञ्च कृपानिधिम् ॥ १४३

शच्युवाच ।

रक्ष रक्ष महाभाग भीतां मां शरणागताम् ।
मदीश्वर त्वदासीञ्च निमग्नां शोकसागरे ॥ १४४
अनीश्वरश्चेश्वरो वा बलवान् वा सुदुर्ब्बलः ।
स्वशिष्यभार्य्यापुत्रांश्च शासितुञ्च सदा क्षमः ॥ १४५
दूरीभूतः स्वराज्याच्च स्वशिष्यश्च कृतस्त्वया ।
शान्तिर्बभूव दोषस्य चाधुनानुग्रहं कुरु ॥ १४६
अनाथां सर्व्वशून्यां मां शून्यांताममरावतीम् ।
सम्यच्छून्यमाश्रमं मे पश्य रक्ष कृपानिधे ॥ १४७
दस्युग्रस्ताञ्च मां रक्ष देशं किङ्करमानय ।
दत्त्वा चरणरेणुं त्वं शुभाशीर्व्वचनं कुरु ॥ १४८
सर्व्वेषाञ्च गुरूणाञ्च जन्मदाता परो गुरुः ।
पितुः शतगुणा माता पूज्या वन्द्या गरीयसी ॥१४९
विद्यादाता मन्त्रदाता ज्ञानदो हरिभक्तिदः ।
पूज्यो वन्द्यश्च सेव्यश्च मातुः शतगुणो गुरुः ॥ १५०
मन्त्राद्युद्गिरणेनैव गुरुरित्युच्यते बुधैः ।
अन्वितार्थो (क) गुरुरयमन्यश्चारोपितो गुरुः ॥१५१
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १५२
अदीक्षितस्य मूर्खस्य निष्कृतिर्नास्ति निश्चितम् ।
सर्व्वकर्म्मस्वनर्हस्य नरके तत्पशोः स्थितिः ॥ १५३
जन्मदातान्नदाता वा माताद्ये गुरवस्तथा ।
पारं कर्त्तुं न शक्तास्ते घोरसंसारसागरे ॥ १५४
विद्या-मन्त्र-ज्ञानदाता निपुणः पारकर्म्मणि ।
स शक्तः शिष्यमुद्धर्त्तुमीश्वरश्चेश्वरात् परः ॥ १५५
गुरुर्विष्णुर्गुरुर्ब्रह्मा गुरुर्देवो महेश्वरः ।

(क) अन्यो वन्द्य इति बहुपुस्तकीयोऽसङ्गतः पाठ ।

गुरुर्धर्म्मो गुरुः शेषः सर्व्वात्मा निर्गुणो गुरुः ॥१५६
सर्व्वतीर्थाश्रयश्चैव सर्व्वदेवाश्रयो गुरुः।
सर्व्ववेदस्वरूपश्च गुरुरूपी हरिः स्वयम् ॥ १५७
अभीष्टदेवे रुष्टे च गुरुः शक्तो हि रक्षितुम्।
गुरौ रुष्टेऽभीष्टदेवो न हि शक्तः स रक्षितुम् ॥१५८
सर्व्वे ग्रहाश्च यं रुष्टा यं रुष्टा देव-ब्राह्मणाः।
तमेव रुष्टो भवति गुरुरेव हि दैवतः ॥ १५९
न गुरोश्च प्रियश्चात्मा न गुरोश्च प्रियः सुतः।
धनं प्रियं न च गुरोर्न च भार्य्या प्रिया तथा ॥ १६०
न गुरोश्च प्रियो धर्म्मो न गुरोश्च परं तपः।
न गुरोश्च परं सत्यं न पुण्यञ्च गुरोः परम् ॥ १६१
गुरोः परो न शास्ता च न हि वन्धुर्गुरोः परः।
देवो राजा च शास्ता च शिष्याणाञ्च सदा गुरुः॥१६२
यावच्छक्तो दातुमन्नं तावच्छास्ता तदन्नदः।
गुरुः शास्ता च शिष्याणां प्रतिजन्मनि जन्मनि॥१६३
मन्त्रो विद्या गुरुर्द्देवः पूर्व्वलब्धो यथा पतिः।
प्रतिजन्मनिवन्धेन सर्व्वेषामुपरिस्थितः ॥ १६४
पिता गुरुश्च वन्द्यश्च यत्र जन्मनि जन्मदः।
गुरवोऽन्ये तथा माता गुरुश्च प्रतिजन्मनि ॥ १६५
विप्राणां त्वं वरिष्ठश्च गरिष्ठश्च तपस्विनाम्।
ब्रह्मिष्ठो ब्रह्मविद्ब्रह्मन् धर्म्मिष्ठः सर्व्वधर्म्मिणाम्॥१६६
तुष्टो भव मुनिश्रेष्ठ माञ्च शक्रञ्च साम्प्रतम्।
त्वयि तुष्टे सदा तुष्टा भवन्ति ग्रहदेवताः ॥ १६७
इत्युक्त्वा सा शची ब्रह्मन् पुनरुच्चै रुरोद च।
दृष्ट्वा तद्रोदनं तारा रुरोदोच्चैर्मुहुर्म्मुहुः ॥ १६८
पपात चरणे तारा रुरोद च पुनः पुनः।
अपराधं क्षमेत्युक्त्वा गुरुस्तुष्टोऽप्युवाच ताम् ॥ १६९

गुरुरुवाच।

उत्तिष्ठ तारे शच्याश्च सर्व्वं भद्रं भविष्यति।
सद्यः प्राप्स्यति भर्त्तारं महेन्द्रञ्च महाशिषा ॥ १७०
इत्युक्त्वा स गुरुस्तत्र विरराम च नारद।
पपात चरणे तारा पुनरेव रुरोद च ॥ १७१
गृहीत्वा च सतीं (क) तारां संस्थाप्य च स्ववक्षसि।
बोधयामास विविधमाध्यात्मिकमनुत्तमम् ॥ १७२
शचीकृतं गुरोः स्तोत्रं पूजाकाले च यः पठेत्।
गुरुश्चाभीष्टदेवश्च तं तुष्टः प्रतिजन्मनि ॥ १७३

(क) शचीमिति पाठः क्वाचित्कः।

ग्रहा देवा द्विजास्तञ्च परितुष्टाश्च सन्ततम्।
राजानो बान्धवाश्चैव सन्तुष्टाः सर्व्वतः सदा ॥ १७४
गुरुभक्तिं विष्णुभक्तिं वाञ्छितं लभते ध्रुवम्।
सदा हर्षो भवेत् तस्य न च शोकः कदाचन ॥ १७५
पुत्त्रार्थी लभते पुत्त्रं भार्य्यार्थी लभते प्रियाम्।
गुणवन्तं गुणवतीं सतीं पुत्त्रवतीं ध्रुवम् ॥ १७६
रोगार्त्तो मुच्यते रोगाद्बद्धो मुच्येत वन्धनात्।
असत्कीर्त्तिः सुयशा मूर्खो भवति पण्डितः ॥ १७७
कदाचिद्वन्धुविच्छेदो न भवेत् तस्य निश्चितम्।
नित्यं तद्वर्द्धते धर्म्मो विपुलं निर्म्मलं यशः ॥ १७८
लभते परमैश्वर्य्यं पुत्त्र-पौत्त्र-धनान्वितः।
इह सर्व्वसुखं भुक्त्वा यात्यन्ते श्रीहरेः पदम्।
न भवेत् तत्पुनर्ज्जन्म हरिदास्यं लभेद्ध्रुवम् ॥ १७९
शश्वत् पिवति शान्तश्च विष्णुभक्तिरसामृतम्।
जन्म-मृत्यु-जरा-व्याधि-शोकसन्तापनाशनम् ॥ १८०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे शचीकृत-
गुरुस्तवकथनं नामैकोनषष्टि-
तमोऽध्यायः ॥ ५९ ॥

---

## षष्टितमोऽध्यायः।

नारायण उवाच।

शचीस्तोत्रं समाकर्ण्य परितुष्टो बृहस्पतिः।
उवाच मधुरं शान्तः कान्तामिन्द्रस्य नारद ॥ १

बृहस्पतिरुवाच।

त्यज वत्से भयं सर्व्वं भयं किं ते मयि स्थिते।
यथा कचस्य पत्नी मे तथा त्वमसि शोभने ॥ २
यथा पुत्त्रस्तथा शिष्यो न भेदः पुत्त्र-शिष्ययोः
तर्पणे पिण्डदाने च पालने परिपोषणे ॥ ३
यथाग्निदाता पुत्त्रश्च तथा शिष्यश्च निश्चितम्।
इतीदं काण्वशाखायामुवाच कमलोद्भवः ॥ ४
पिता माता गुरुर्भार्य्या शिशुश्चानाथबान्धवाः।
एते पुंसां नित्यपोष्या इत्याह कमलोद्भवः ॥ ५
यश्चैतांश्च न पुष्णाति भस्मान्तं तस्य सूतकम्।
देवे पैत्र्ये न कर्म्मार्हः सोऽपीत्याह महेश्वरः ॥ ६
कुरुते नरवुद्धिञ्च मातरं पितरं गुरुम्।

अयशस्तस्य सर्व्वत्र विघ्न एव पदे पदे ॥ ७
सम्पन्नत्तो यः करोति स्वगुरोश्च पराभवम् ।
अचिरात् सर्व्वनाशश्च भवेत् तस्य सुनिश्चितम् ॥ ८
माञ्च दृष्ट्वा सभामध्ये नोत्तस्थौ पाकशासनः ।
तत्फलं बुभुजे साक्षात् सद्यः पश्य च साम्प्रतम् ॥ ९
करोमि मोचणं तस्य तव रक्षां सुनिश्चितम् ।
शासितुं रक्षितुं शक्तः स एव गुरुरुच्यते ॥ १०
न नश्यति सतीत्वञ्च त्वच्छुद्धायाश्च योषितः ।
यन्मानसे विकल्पश्च तस्य धर्म्मश्च नश्यति ॥ ११
भविष्यति प्रभावस्ते दुर्गायाश्च समः सति ।
लक्ष्मीसमा प्रतिष्ठा च यशस्तद्दयशसा समम् ॥ १२
सौभाग्यं राधिकातुल्यं तत्समं प्रेम भर्त्तरि ।
तत्तुल्यं गौरवं मान्यं प्रीतिः प्राधान्यमीश्वरे ॥ १३
रोहिण्याश्च समापेक्षा पूज्या च भारतीसमा ।
शुद्धा निरुपमा शश्वत् सावित्रीसदृशी सदा ॥ १४
एतस्मिन्नन्तरे तत्र आगतो नहुषाचरः ।
उवाच वचनं भीतो वाक्पतेर्गोचरे ततः ॥ १५

दूत उवाच ।

उत्तिष्ठ देवि शीघ्रञ्च गच्छ त्वं नहुषं प्रति ।
क्रीड़ां कर्त्तुञ्च रहसि रम्ये नन्दनकानने ॥ १६
दूतस्य वचनं श्रुत्वा तमुवाच बृहस्पतिः ।
कम्पितावयवः क्रोधाद्रक्तपङ्कजलोचनः ॥ १७

बृहस्पतिरुवाच ।

नहुषं वद गत्वा त्वं शचीञ्चेन्द्रीतुमिच्छति ।
अपूर्व्वयानमारुह्य निशायामागमिष्यति ॥ १८
सप्तर्षीणाञ्च स्कन्धे च दत्त्वा स्वशिबिकां शुभाम् ।
तामारुह्य सुवेशश्चागमनं कर्त्तुमर्हति ॥ १९ ॥
वाक्पतेर्वचनं श्रुत्वा गत्वोवाच नृपं तदा ।
दूतस्य वचनं श्रुत्वा प्रहस्योवाच किङ्करम् ॥ २०
गच्छ गच्छ त्वरन् गच्छ सप्तर्षीन् शीघ्रमानय ।
उपायञ्च करिष्यामि तैः सार्द्धं साम्प्रतं चर ॥ २१
नृपस्य वचनं श्रुत्वा गत्वा दूतस्तदन्तिकम् ।
उवाच सर्व्वान् तत्रैव यथोक्तं नहुषेण च ॥ २२
दूतस्य वचनं श्रुत्वा ययुः सप्तर्षयो मुदा ।
राजा दृष्ट्वा च तान् सर्व्वान् ननामोवाच सादरम् ॥ २३

नहुष उवाच ।

यूयञ्च ब्राह्मणाः पुत्रा ज्वलन्तो ब्रह्मतेजसा ।
ब्रह्मणः सदृशाः सर्व्वे सन्ततं भक्तवत्सलाः ॥ २४
नारायणपराः शश्वत् शुद्धसत्त्वस्वरूपिणः ।
मोहमात्सर्य्यहीनाश्च दर्पाहङ्कारवर्ज्जिताः ॥ २५
नारायणसमाः सर्व्वे तेजसा यशसा सदा ।
गुणिनः कृपया प्रेम्णा वरदानेन निश्चितम् ॥ २६
इत्युक्त्वा प्रणतो राजा तुष्टाव च रुरोद च ।
दृष्ट्वा तं कातरं भूपमूचुः परहितैषिणः ॥ २७

ऋषय ऊचुः ।

वरं वृणुष्व हे वत्स यत् ते मनसि वाञ्छितम् ।
सर्व्वं दातुं वयं शक्ता नासाध्यं नः कथञ्चन ॥ २८
इन्द्रत्वं वा मनुत्वं वा चिरायुर्वा ततः परम् ।
सप्तद्वीपेश्वरत्वं वाप्यतीवसुचिरं सुखम् ॥ २९
अथवा सर्व्वसिद्धत्वं सर्व्वैश्वर्य्यं सुदुर्लभम् ।
किमीप्सितं ते हे वत्स ब्रूहि नः साम्प्रतं मुदा ।
सर्व्वं तुभ्यं प्रदास्यैव यास्यामस्तपसे मुदा ॥ ३०
युगलक्षसमं यच्च क्षणं कृष्णार्च्चनं विना ।
तद्दिनं दुर्द्दिनं यत् तद्ध्यानसेवाविवर्ज्जितम् ॥ ३१
विना तत्सेवनं यो हि विषयान्यश्च वाञ्छति ।
विषमत्ति प्रणाशाय विहायामृतमीप्सितम् ॥ ३२
ब्रह्मा शिवश्च धर्म्मश्च विष्णुश्चापि महाविराट् ।
गणेशश्च दिनेशश्च शेषश्च सनकादयः ॥ ३३
एते यच्चरणाम्भोजं ध्यायन्तोऽहर्निशं मुदा ।
जन्म-मृत्यु-जरा-व्याधिहरं तन्निरता वयम् ॥ ३४
तेषाञ्च वचनं श्रुत्वा तानुवाच नृपेश्वरः ।
सलज्जितो नम्रवक्त्रो मायामोहितमानसः ॥ ३५

नहुष उवाच ।

सर्व्वं दातुं समर्थाश्च यूयञ्च भक्तवत्सलाः ।
अधुना देहि मां तूर्णं शचीदानमभीप्सितम् ॥ ३६
सप्तर्षिवाहनं कान्तं शचीच्छति मुदा सती ।
एतदेव मम वरं निष्पन्नं कुरु कामदाः ॥ ३७

नारायण उवाच ।

नहुषस्य वचः श्रुत्वा मुनयश्च परस्परम् ।
अत्युच्चैर्जहसुः सर्व्वे कौतुकेन च नारद ॥ ३८
राजानं मोहितं मत्वा वञ्चितं विष्णुमायया ।
चक्रुः प्रतिज्ञां तं वोढुं कृपया दीनवत्सलाः ॥ ३९
चक्रुः स्कन्धे तच्छिबिकां मुक्ता-माणिक्यभूषिताम् ।
राजा ययौ सुवेशश्च रत्नभूषणभूषितः ॥ ४०

दृष्ट्वा चातिविलम्बञ्च भक्षयामास तान् नृपः।
क्रुद्धः शशाप दुर्व्वासा अग्रगामी च वर्त्मनि ॥ ४१
महानजगरो भूत्वा पत वै मूढमानस।
दर्शनाद्धर्म्मपुत्रस्य तव मोक्षो भविष्यति ॥ ४२
रत्नयानेन वैकुण्ठं गत्वा वैकुण्ठसेवनम्।
करिष्यसि महाराज न कर्म्म निष्फलं भवेत् ॥ ४३
इत्युक्त्वा प्रययुः सर्व्वे प्रहस्य मुनिसत्तमाः।
राजा पतति तच्छापात् सर्पो भूत्वा महावने ॥ ४४
शची जगाम तच्छ्रुत्वा गुरुं गत्वामरावतीम्।
ययौ वृहस्पतिः शीघ्रं यत्रेन्द्रः पद्मतन्तुषु ॥ ४५
गत्वा सरोवराभ्याशमाजुहाव सुरेश्वरम्।
अतिप्रसन्नवदनः कृपया च कृपानिधिः ॥ ४६
वृहस्पतिरुवाच।
अयि वत्स समागच्छ भयं किं ते मयि स्थिते।
त्यज भीतिमिहागच्छ गुरुस्तेऽहं वृहस्पतिः ॥ ४७
स्वगुरोश्च स्वरं श्रुत्वा महेन्द्रो हृष्टमानसः।
रूपं विहाय सूक्ष्मञ्च स्वरूपेण समाययौ ॥ ४८
पपात दण्डवद्भूमौ भक्त्या चरणयोर्गुरोः।
तं रुदन्तं महाभीतं सुदोरसि चकार सः ॥ ४९
कारयित्वा सोमयागं प्रायश्चित्तार्थमेव च।
रत्नसिंहासने रम्ये वासयामास तं गुरुः ॥ ५०
प्रददौ परमैश्वर्य्यं पूर्व्वस्माच्च चतुर्गुणम्।
आगत्य सर्व्वे देवाश्च चक्रुः सेवां मुदान्विताः ॥ ५१
शची सम्प्राप भर्त्तारं महेन्द्रं त्रिदशेश्वरम्।
मन्दिरे पुष्पतल्पे च सुसुदे सा मुदान्विता ॥ ५२
इत्येवं कथितं वत्स महेन्द्रदर्पभञ्जनम्।
शचीसतीत्वरक्षा च किं भूयः श्रोतुमिच्छति ॥ ५३
नारद उवाच।
सोमयागविधानञ्च ब्रूहि मां मुनिसत्तम।
कथं तं कारयामास गुरुस्च किं फलं परम् ॥ ५४
नारायण उवाच।
ब्रह्महत्याप्रशमनं सोमयागफलं मुने।
वर्षं सोमलतापानं यजमानः करोति च ॥ ५५
वर्षमेकं फलं भुङ्क्ते वर्षमेकं जलं मुदा।
त्रैवार्षिकव्रतमिदं सर्व्वपापप्रणाशनम् ॥ ५६
यस्य त्रैवार्षिकं धान्यं निहितं भृत्यवृत्तये।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥ ५७
महाराजश्च देवो वा यागं कर्त्तुमलं मुने।
सर्व्वसाध्यो न यागोऽयं बह्वर्थो बहुदक्षिणः ॥ ५८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारद-
संवादे शक्रमोक्षकथनं नाम
षष्टितमोऽध्यायः ॥६०॥

## एकषष्टितमोऽध्यायः।

नारायण उवाच।
इति ते कथितं किञ्चिदिन्द्रस्य दर्पभञ्जनम्।
अपरं श्रूयतां ब्रह्मन् सावधानं निगूढकम् ॥ १
समुद्रमथनं कृत्वा पीत्वामृतरसं पुरा।
निर्ज्जित्य दैत्यसङ्घांश्च बहुदर्पो बभूव ह ॥ २
तदा कृष्णो बलिद्वारा शक्रदर्पं बभञ्ज ह।
भ्रष्टश्रियो बभूवुस्ते देवाः शक्रपुरोगमाः ॥ ३
तदा वृहस्पतेः स्तोत्राददितेश्च व्रतेन च।
जातश्च स्वांशकलयाप्यदित्यां वामनो विभुः ॥ ४
याच्ञां कृत्वा बलिं राज्यं तं ददौ च कृपानिधिः।
तस्मै ददौ महेन्द्राय देवेभ्यश्चापि सम्पदम् ॥ ५
बभूव शक्रदर्पश्च पुनः कल्पान्तरे परे।
विभुर्दुर्व्वाससो द्वारा जहार तां श्रियं मुने ॥ ६
पुनर्ददौ च कृपया कृपालुर्भक्तवत्सलः।
पुनः श्रीदुर्म्मदः सोऽपि जहार गौतमप्रियाम् ॥ ७
तदा गौतमशापेन भगाङ्गश्च बभूव सः।
सम्प्राप यातनामिन्द्रः स्वाङ्गवेदनया पुरा ॥ ८
तमुच्चैर्जहसुर्दृष्ट्वा ऋषयो मुनयस्तथा।
देवाः सुलज्जिताः सर्व्वे मृततुल्यो वृहस्पतिः ॥ ९
तदा सहस्रवर्षञ्च तपस्तप्त्वा रवेः पुरा।
रवेर्व्वरेण शक्रश्च सहस्राक्षो बभूव ह ॥ १०
कलङ्करूपमिन्द्रस्य तच्चक्षुर्निकरं परम्।
यथा चन्द्रे कलङ्कश्च तारकाहरणाद्‌ध्रवात् ॥ ११
नारद उवाच।
ब्रह्मन् केन प्रकारेण जहार गौतमप्रियाम्।
महासतीमहल्याञ्च पूज्यां भुवनपावनीम् ॥ १२
शुद्धाशयां महाभागां निर्म्मलां कमलाकलाम्।
एतद्वेदितुमिच्छामि वद वेदविदां वर ॥ १३

नारायण उवाच।

पुष्करे तीर्थयात्रायां सूर्य्यपर्व्वणि नारद।
तत्रागतामहल्याञ्च ददर्श पाकशासनः॥ १४
स्मितां सुदतीं शान्तां पीनश्रोणिपयोधराम्।
मूर्च्छामाप महेन्द्रश्च दृष्टिमात्रेण तत्क्षणम्॥ १५
तथा परदिने ताञ्च दृष्ट्वा मन्दाकिनीतटे।
एकाकिनीं सस्मिताञ्च स्नान्तीं नग्नां सुलज्जिताम्॥१६
दृष्ट्वा श्रोणीं स्तनयुगमतीव विपुलं हरिः।
मूर्च्छामवाप कामार्त्तो जहार चेतनां पुनः॥ १७
क्षणेन चेतनां प्राप्य गत्वा कामी तदन्तिकम्।
उवाच स्वच्छया वाचा विनयेन पतिव्रताम्॥ १८

महेन्द्र उवाच।

अहो गुणो रूपमहो अहो किं वा नवं वयः।
अहो किं वा मुखश्रीस्ते शरच्चन्द्रविनिन्दिता॥ १९
अहो कटाक्षः कुटिलः पुंसां चित्तविकर्षणम्।
किमहो लोचनं पद्म-प्रभामोचनमीप्सितम्॥ २०
गमनं रमणीयं ते गजखञ्जनगञ्जनम्।
अहो वाक्यं सुमधुरं पीयूषादपि दुर्लभम्॥ २१
किमहो विपुलश्रोणीं कामाधारां मनोहराम्।
कामदां कामुकायैव मुनिमानसमोहिनीम्।
अतीवकठिनां पीनां रम्भास्तम्भविडम्बिताम्॥ २२
अहो नितम्बयुगलं वर्त्तुलं चन्द्रबिम्बवत्॥ २३
श्रीयुक्तं श्रीफलयुग-तुल्यं ते स्तनयुग्मकम्।
अत्युन्नतं सुकठिनं त्रैलोक्यचित्तमोहनम्॥ २४
अहो किं वा तपस्तेपे गौतमश्च तपोधनः।
सम्प्राप तत्फलेनैव सुन्दरीं सुन्दरीवराम्॥ २५
निषेव्य प्रकृतिं दुर्गां विष्णुमायां सनातनीम्।
लक्ष्मीञ्च लक्ष्मीसदृशीमीदृशीं प्राप पद्मिनीम्॥ २६
सुकोमलां सुवलनां ललनां नलिनाननाम्।
शुद्धाञ्च सुदतीं श्यामां न्यग्रोधपरिमण्डलाम्॥ २७
लत्यालनञ्च जानाति कामशास्त्रविशारदः।
कामो वा कामुकश्चन्द्रः किं वा जानाति गौतमः॥२८
मां प्रशंसन्ति नित्यं ते कामशास्त्रविचक्षणाः।
उर्व्वश्याद्याश्चाप्सरसो मां प्रशंसन्ति सन्ततम्॥ २९
दासीं कृत्वा च दास्यामि शचीं तुभ्यं वरानने।
त्रैलोक्यलक्ष्मीं विपुलां गृहाण त्यज गौतमम्॥३०
अनभिज्ञं कामशास्त्रे दुर्ब्बलञ्च तपस्विनम्।
अरागहार्य्यं निष्कामं नारायणपरायणम्॥ ३१
अविदग्धो विधाता च योजनाविषये क्षमः।
ईदृशीं कामुकीं रम्यां ददाति च तपस्विने॥ ३२
इत्युक्त्वा कामुकः शक्रः पपात चरणे मुदा।
तमुवाच महासाध्वी वेदोक्तञ्च यथोचितम्॥ ३३

अहल्योवाच।

अभाग्याद्ब्रह्मणश्चापि मरीचेश्च तपस्विनः।
अभाग्यात् कश्यपस्यापि त्वं पुत्रः पापमानसः॥ ३४
किं तज्जपेन मनसा मौनेन च व्रतेन च।
सुरार्च्चनेन तीर्थेन स्त्रीभिर्यस्य मनो हृतम्॥ ३५
स्त्रीरूपं निर्म्मितं सृष्टौ मोहाय कामिनां मनः।
अन्यथा न भवेत् सृष्टिः स्रष्टा तेनेश्वराज्ञया॥ ३६
सर्व्वमायाकरण्डश्च धर्म्ममार्गार्गलं नृणाम्।
व्यवधानञ्च तपसां दोषाणामाश्रयः परः॥ ३७
कर्म्मबन्धनिबद्धानां निगडं कठिनं सुत।
प्रदीपरूपं कीटानां मीनानां वड़िशं यथा॥ ३८
विषकुम्भं दुग्धमुखमारम्भे मधुरोपमम्।
परिणामे दुःखबीजं सोपानं नरकस्य च॥ ३९
ऋषयः सनकाद्याश्च मोहाद्वं चक्षुरीप्सितम्।
परस्त्रीषु मनो येषां तेषां सर्व्वञ्च निष्फलम्॥ ४०
परस्त्रीसेवनं शक्र इहैव क्षयशङ्करम्।
परत्र नरकं घोरं ददाति कामुकाय च॥ ४१

नारायण उवाच।

इत्युक्त्वा च महासाध्वी विहायेन्द्रञ्च कामुकम्।
प्रययौ स्वगृहं तूर्णं गृहिणी गौतमस्य च॥ ४२
तत् सर्व्वं कथयामास गौतमाय तपस्विने।
तस्थौ प्रहस्य स मुनिर्महेन्द्रञ्च विचिन्त्य च॥ ४३
एकदा गौतमः शीघ्रं जगाम शङ्करालयम्।
शक्रो गौतमरूपेण तां सम्भोगं चकार सः॥ ४४
सर्व्वं ज्ञात्वा च सर्व्वज्ञो मन्दिरद्वारमाययौ।
निर्गच्छन्तं महेन्द्रञ्च ददर्श मुनिपुङ्गवः॥ ४५
नग्नामहल्यां रहसि पीनश्रोणीपयोधराम्।
मुनिः शशाप शक्रञ्च भगाङ्गश्च भवेति च॥ ४६
कोपाच्छशाप पत्नीञ्च सुदतीं भयविह्वलाम्।
त्वञ्च पाषाणरूपा च महारण्ये भवेति च॥ ४७
ययौ च स्वगृहं शक्रो लज्जैकतानमानसः।
उवाच मधुरं भीता स्वामिनं शोककर्षितम्॥ ४८

अहल्योवाच।
माञ्च दासीञ्च निर्द्दोषां कथं त्यजसि धार्म्मिक।
त्वञ्च वेदविदां श्रेष्ठो विचारं कुरु धर्म्मतः॥ ४९
गौतम उवाच।
त्वां जानामि मनःशुद्धां सुव्रताञ्च पतिव्रताम्।
त्यक्ष्यामि च तथापि त्वां परवीर्य्यञ्च बिभ्रतीम्॥५०
परभोग्या च या कान्ता साऽशुद्धा सर्व्वकर्म्मसु।
तां यो गच्छेन्महामूढ़ो नरकं तस्य कल्पकम्॥ ५१
अन्नं विष्ठा जलं मूत्रं परभोग्यायाश्च निश्चितम्।
उपस्पर्शेन तस्याश्च हन्ति पुण्यं पुराकृतम्॥ ५२
अनिच्छया च शृङ्गारे न स्त्री जारेण दुष्यति।
दुष्टा स्त्री निश्चितं साध्वि स्वेच्छाशृङ्गारकर्म्मणि॥५३
त्वं शक्रं स्वामिनं मत्वा सुखं भुक्त्वा रतिं गृहे।
पश्चाद्बभूव ते ज्ञानं मां दृष्ट्वा च निशामय॥ ५४
गच्छ गच्छ महारण्यं भव पाषाणरूपिणी।
रामपादाङ्गुलिस्पर्शात् सद्यःपूता भविष्यसि॥ ५५
मां सम्प्राप्स्यसि तत्पुण्यात् पुनरेवागमिष्यसि।
गच्छ कान्ते महारण्यमित्युक्त्वा तपसे ययौ॥ ५६
इत्येवं कथितं सर्व्वं महेन्द्रदर्पभञ्जनम्।
पुनः सम्प्राप्य लक्ष्मीञ्च विभोश्च कृपया मुने॥ ५७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-जन्मखण्डे नारायण-नारदसंवादे एकषष्टितमोऽध्यायः॥ ६१॥

---

## द्विषष्टितमोऽध्यायः।

नारद उवाच।
ब्रह्मन् केन प्रकारेण रामो दाशरथिः स्वयम्।
चकार मोचणं कुत्र युगे गौतमयोषितः॥ १
रामावतारं सुखदं समासेन मनोहरम्।
कथयस्व महाभाग श्रोतुं कौतूहलं मम॥ २
नारायण उवाच।
ब्रह्मणा प्रार्थितो विष्णुर्जातो दाशरथे गृहे।
कौशल्यायाञ्च भगवान् त्रेतायाञ्च सुदान्वितः॥ ३
कैकेय्यां भरतश्चैव रामतुल्यो गुणेन च।
लक्ष्मणश्चापि शत्रुघ्नः सुमित्रायां गुणार्णवः॥ ४
विश्वामित्रप्रेषितश्च श्रीरामश्च सलक्ष्मणः।
प्रययौ मिथिलां रम्यां सीताग्रहणहेतवे॥ ५
दृष्ट्वा पाषाणरूपाञ्च रामो वर्त्मनि कामिनीम्।
विश्वामित्रञ्च पप्रच्छ कारणं जगदीश्वरः॥ ६
रामस्य वचनं श्रुत्वा विश्वामित्रो महातपाः।
उवाच तत्र धर्म्मिष्ठो रहस्यं सर्व्वमेव च॥ ७
कारणं तन्मुखाच्छ्रुत्वा रामो भुवनपावनः।
पस्पर्श पादाङ्गुलिना सा बभूव च पद्मिनी॥ ८
सा राममाशिषं कृत्वा प्रययौ भर्त्तृमन्दिरम्।
शुभाशिषं वरं तस्मै भार्य्यां सम्प्राप्य गौतमः॥ ९
रामश्च मिथिलां गत्वा धनुर्भङ्गं शिवस्य च।
चकार पाणिग्रहणं सीतायाश्चैव नारद॥ १०
कृत्वा विवाहं राजेन्द्रो भृगुदर्पं निहत्य च।
अयोध्यां प्रययौ रम्यां क्रीड़ाकौतुकमङ्गलैः॥ ११
राजा पुत्रं नृपं कर्त्तुमियेष स तु सादरम्।
सप्ततीर्थोदकं पूर्णमानीय मुनिपुङ्गवान्॥ १२
कृताधिवासं श्रीरामं सर्व्वमङ्गलसंयुतम्।
दृष्ट्वा भरतमाता च कैकेयी शोकविह्वला॥ १३
वरयामास राजानं सर्व्वमङ्गीकृतं वरम्।
रामस्य वनवासञ्च राजत्वं भरतस्य च॥ १४
वरं दातुं महाराजो निमेषाच्छोकमोहितः।
धर्म्मसत्यभयेनैव रामोवाच नृपं सुधीः॥ १५
राम उवाच।
तड़ागशतदानेन यत् फलं लभते नरः।
ततोऽधिकञ्च लभते वापीदानेन निश्चितम्॥ १६
दशवापीप्रदानेन यत् पुण्यं लभते नरः।
ततोऽधिकञ्च लभते पुण्यं कन्याप्रदानतः॥ १७
दशकन्याप्रदानेन यत् फलं लभते नरः।
ततोऽधिकञ्च लभते यज्ञेकेन नराधिपः॥ १८
शतयज्ञेन यत् पुण्यं लभते पुण्यकृज्जनः।
ततोऽधिकञ्च लभते पुत्रास्यदर्शनेन च॥ १९
दर्शने शतपुत्राणां यत् फलं लभते नरः।
तत् पुण्यं लभते नूनं पुण्यवान् सत्यपालनात्॥ २०
न हि सत्यात् परो धर्म्मो नानृतात् पातकं परम्।
न हि गङ्गासमं तीर्थं न देवः केशवात् परः॥ २१
नास्ति धर्म्मात् परो बन्धुर्नास्ति धर्म्मात् परं धनम्।
धर्म्मात् परः प्रियः को वा स्वधर्म्मं रक्ष यत्नतः॥२२
स्वधर्म्मं रक्षिते तात शश्वत् सर्व्वत्र मङ्गलम्।

यशस्यं सुप्रतिष्ठा च प्रतापः पूजनं परम् ॥ २३
चतुर्द्दशाब्दं धर्म्मेण त्यक्त्वा गृहसुखं भ्रमन्।
वनवासं करिष्यामि सत्यस्य पालनाय ते ॥ २४
कृत्वा सत्यञ्च शपथमिच्छयाऽनिच्छयाथवा।
न कुर्य्यात् पालनं यो हि भस्मान्तं तस्य सूतकम्॥२५
कुम्भीपाके स पचति यावच्चन्द्रदिवाकरौ।
ततो मूको भवेत् कुष्ठी मानवः सप्तजन्मसु ॥ २६
इत्येवमुक्त्वा श्रीरामो विधाय वल्कलं जटाम्।
प्रययौ च महारण्ये सीतया लक्ष्मणेन च ॥ २७
पुत्रशोकान्महाराजस्तत्याज स्वतनुं मुने।
पालनाय पितुः सत्यं रामो बभ्राम कानने ॥ २८
कालान्तरे महारण्ये भगिनी रावणस्य च।
भ्रमन्ती कानने घोरे भ्रात्रा सार्द्धं स्वकौतुकात् ॥२९
ददर्श रामं कुलटा कामार्त्ता राक्षसी तदा।
पुलकाञ्चितसर्व्वाङ्गी मूर्च्छां प्राप स्मरेण च ॥ ३०
श्रीरामनिकटं गत्वा सस्मितोवाच कामुकी।
शश्वद्द्यौवनसंयुक्तातिप्रौढ़ा कामदुर्म्मदा ॥ ३१

शूर्पणखोवाच।

हे राम हे घनश्याम रूपधाम गुणान्वित।
भावानुरक्तां वनितां मां गृहाण सुनिर्जने ॥ ३२
श्रुत्वा शूर्पणखावाक्यं धर्म्मं संस्मृत्य धार्म्मिकः।
उवाच मधुरं वाक्यं शापभीतश्च नारद ॥ ३३

श्रीराम उवाच।

अहो मातः सभार्य्योऽहमभार्य्यं गच्छ मेऽनुजम्।
भजेत् प्रियजनं दुःखमितरं न सुखालयम् ॥ ३४
रामस्य वचनं श्रुत्वा प्रययौ लक्ष्मणं मुदा।
ददर्श लक्ष्मणं शान्तं कान्तञ्च लक्षणान्वितम् ॥ ३५
मां भजस्व महाभागेत्युवाच च पुनः पुनः।
लक्ष्मणस्तद्वचः श्रुत्वा तामुवाच कुतूहलात् ॥ ३६

लक्ष्मण उवाच।

विहाय रामं सर्व्वेशं हे मूढ़े दासमिच्छसि।
सीतादासी च मत्पत्नी सीतादासोऽहमेव च ॥ ३७
भविष्यसीशपत्नी त्वं गच्छ रामं महीश्वरम्।
तव पुत्रो भविष्यामि सीतायाश्च यथा सति ॥ ३८

नारायण उवाच।

लक्ष्मणस्य वचः श्रुत्वा कामेन हृतमानसा।
उवाच लक्ष्मणं मूढ़ा शुष्ककण्ठोष्ठतालुका ॥ ३९

शूर्पणखोवाच।

यदि त्यजसि मां मूढ़ कामात् स्वयमुपस्थिताम्।
युवयोश्च विपत्तिश्च भविष्यति न संशयः ॥ ४०
ब्रह्मा च मोहिनीं त्यक्त्वा विश्वेऽपूज्यो बभूव ह।
रम्भाशापेन दक्षश्च छागमुण्डो बभूव सः ॥ ४१
सर्व्वैर्द्यशोर्व्वशीशापादुयज्ञभागविवर्ज्जितः।
रूपहीनः कुवेरश्च मेनाशापेन लक्ष्मण ॥ ४२
कामी घृताचीशापेन बभूव भस्मसाद्द्विवात्।
बलिर्मदालसाशापाद्भ्रष्टराज्यो बभूव सः ॥ ४३
शापेन मिश्रकेश्याश्च हृतभार्य्यो बृहस्पतिः।
मम शापात् तथा रामो हृतभार्य्यो भविष्यति ॥ ४४
कामातुरां यौवनस्थां भार्य्यां स्वयमुपस्थिताम्।
न त्यजेद्धर्म्मभीरुश्च श्रुतं माध्यन्दिने पुरा।
इह त्यक्त्वा विपद्ग्रस्तः परत्र नरकं व्रजेत् ॥ ४५
श्रुत्वा शूर्पणखावाक्यमर्द्धचन्द्रेण लक्ष्मणः।
चिच्छेद नासिकां तस्याः क्षुरधारेण लीलया ॥ ४६
तस्या भ्राता च युयुधे बलवान् खरदूषणः।
ससैन्यो लक्ष्मणास्त्रेण स जगाम यमालयम् ॥ ४७
चतुर्द्दशसहस्रञ्च राक्षसं खरदूषणम्।
मृतं दृष्ट्वा शूर्पणखा भर्त्सयामास रावणम् ॥ ४८
सर्व्वं निवेदनं कृत्वा जगाम पुष्करं पुरा।
ब्रह्मणश्च वरं प्राप कृत्वा च दुष्करं तपः ॥ ४९
उवाच तां कृशां दृष्ट्वा निराहारां तपस्विनीम्।
सर्व्वज्ञस्तन्मनो मत्वा कृपासिन्धुश्च नारद ॥ ५०

ब्रह्मोवाच।

अप्राप्य रामं दुष्प्राप्यं करोषि दुष्करं तपः।
जितेन्द्रियाणां प्रवरं लक्ष्मणं सर्व्वलक्षणम् ॥ ५१
ब्रह्म-विष्णु-शिवादीनामीश्वरं प्रकृतेः परम्।
जन्मान्तरे च भर्त्तारं लभिष्यसि वरानने ॥ ५२
इत्येवमुक्त्वा ब्रह्मा च जगाम स्वालयं मुदा।
देहं तत्याज सा वह्नौ सा च कुब्जा बभूव ह ॥ ५३
अथ शूर्पणखावाक्यात् कोपात् कम्पितविग्रहः।
जहार मायया सीतां मायावी राक्षसेश्वरः ॥ ५४
सीतां न दृष्ट्वा रामश्च मूर्च्छां प्राप चिरं मुने।
चेतनां कारयामास भ्राता चाध्यात्मिकेन च ॥ ५५
ततो बभ्राम गहनं शैलञ्च कन्दरं नदम्।
स चाहर्निशंशोकान्मुनीनामाश्रमं मुने ॥ ५६

चिरमन्वेषणं कृत्वा न दृष्टा जानकीं विभुः ।
चकार मित्रतां रामः सुग्रीवेण प्रभुः स्वयम्(क) ॥५७
निहत्य वालिनं रामो ददौ राज्यञ्च लीलया ।
सुग्रीवाय च मित्राय स्वीकारपालनाय वै ॥ ५८
दूतान् प्रस्थापयामास सर्व्वत्र वानरेश्वरः ।
तस्थौ सुग्रीवभवने श्रीरामश्च सलक्ष्मणः ॥ ५९
हनूमते वरं दत्त्वा रम्यं रत्नाङ्गुरीयकम् ।
सीतायै शुभसन्देशं प्राणधारणकारणम् ॥ ६०
तञ्च प्रस्थापयामास दक्षिणां दिशमीश्वरः ।
सुप्रीत्यालिङ्गनं दत्त्वा पदरेणून् सुदुर्लभान् ॥ ६१
हनूमान् प्रययौ लङ्कां सीतान्वेषणहेतवे ।
रामादधीतसन्देशो वली रुद्रकलोद्भवः ॥ ६२
अशोककानने सीतां ददर्श शोककर्शिताम् ।
निराहारामतिकृशां दग्धां चन्द्रकलामिव ॥ ६३
सन्ततं राम रामेति जपन्तीं भक्तिपूर्व्वकम् ।
बिभ्रतीञ्च जटाभारं तप्तकाञ्चनसन्निभाम् ॥ ६४
ध्यायमानां पादपद्मं श्रीरामस्य दिवानिशम् ।
शुद्धाशयां सुशीलाञ्च सुव्रताञ्च पतिव्रताम् ॥ ६५
महालक्ष्मीलक्ष्मयुक्तां प्रज्वलन्तीं स्वतेजसा ।
पुण्यदां सर्व्वतीर्थानां दृष्ट्वा भुवनपावनीम् ॥ ६६
प्रणम्य मातरं दृष्ट्वा रुदतीं वायुनन्दनः ।
रत्नाङ्गुरीयं रामस्य ददौ तस्यै मुदान्वितः ॥ ६७
रुरोद धर्म्मी तां दृष्ट्वा धृत्वा च चरणाम्बुजम् ।
उवाच रामसन्देशं सीताजीवनरक्षणम् ॥ ६८

हनुमानुवाच ।

पारेसमुद्रं श्रीरामः सन्नद्धश्च सलक्ष्मणः ।
बभूव राममित्रञ्च सुग्रीवो बलवान् कपिः ॥ ६९
रामश्च वालिनं हत्वा राज्यं निष्कण्टकं ददौ ।
सुग्रीवाय च मित्राय तद्भार्य्यां वालिना हृताम्॥७०
सुग्रीवश्च तवोद्धारं स्वीचकार च धर्म्मतः ।
वानराश्च ययुः सर्व्वे तवान्वेषणकारणम् ॥ ७१
प्राप्य मङ्गलवार्त्ताञ्च मत्तो राजीवलोचनः ।
गभीरं सागरं बद्ध्वा चाचिरेणागमिष्यति ॥ ७२
निहत्य रावणं पापं सपुत्त्रञ्च सबान्धवम् ।
करिष्यत्यचिरेणैव हे मातस्तव मोक्षणम् ॥ ७३
अद्य रत्नमयीं लङ्कां निःशङ्कस्त्वत्प्रसादतः ।
भस्मीभूतां करिष्यामि मातः पश्य च सस्मितम् ॥
मर्कटीडिम्बतुल्याञ्च लङ्कां पश्यामि सुव्रते ।
मूत्रतुल्यं समुद्रञ्च शरावमिव भूतलम् ॥ ७५
पिपीलिकासङ्घमिव ससैन्यं रावणं तथा ।
संहर्त्तुञ्च समर्थोऽहं मुहूर्त्तार्द्धेन लीलया ॥ ७६
रामप्रतिज्ञारक्षार्थं न हनिष्यामि साम्प्रतम् ।
सुस्था भव महाभागे त्यज भीतिं महीश्वरि ॥ ७
वानरस्य वचः श्रुत्वा रुदित्वोच्चैर्मुहुर्म्मुहुः ।
उवाच वचनं भीता सीता रामपतिव्रता ॥ ७८

सीतोवाच ।

अयि जीवति मे रामो मच्छोकार्णवदारुणात् ।
अयि मे कुशली नाथः कौशल्यानन्दनः प्रभुः ॥ ७९
कीदृशश्च कृशाङ्गश्च जानकीजीवनोऽधुना ।
किं वाहारश्च किं भुङ्क्ते मम प्राणाधिकप्रियः ॥ ८०
अयि पारेसमुद्रञ्च सत्यं सीतापतिः स्वयम् ।
अयि सत्यं स सन्नद्धो न शोकेन हतः प्रभुः ॥ ८१
अयि स्मरति मां पापां स्वामिनो दुःखरूपिणीम् ।
मदर्थं कति दुःखं वा सम्प्राप स महीश्वरः ॥ ८२
हारो नारोपितः कण्ठे पुरा व्यवहितो रतौ ।
अधुनैवावयोर्मध्ये समुद्रः शतयोजनः ॥ ८३
अयि द्रक्ष्यामि तं रामं करुणासागरं प्रभुम् ।
शान्तं कान्तं नितान्तञ्च धर्म्मिष्ठं धर्म्मकर्म्मणा ॥ ८४
अयि सेवां करिष्यामि पादपद्मं पुनः प्रभोः ।
पतिसेवाविहीनाया मूढ़ाया जीवनं वृथा ॥ ८५
अयि मे धर्म्मपुत्त्रश्च सत्यं जीवति लक्ष्मणः ।
मच्छोकसागरे मग्नो भग्नदर्पो मया विना ॥ ८६
वीराणां प्रवरो धर्म्मी देवकल्पश्च देवरः ।
अयि सत्यं स सन्नद्धो मत्प्रभोरनुजः सदा ॥ ८७
अयि द्रक्ष्यामि सत्यं तं लक्ष्मणं धर्म्मलक्षणम् ।
प्राणानामधिकं प्रेम्णा धन्यं पुण्यस्वरूपिणम् ॥ ८८
इत्येवं वचनं श्रुत्वा दत्त्वा प्रत्युत्तरं शुभम् ।
भस्मीभूताञ्च तां लङ्कां चकार लीलया मुने ॥ ८९
पुनः प्रबोधं तस्यै च दत्त्वा वायुसुतः कपिः ।
प्रययौ लीलया वेगाद्यत्र राजीवलोचनः ॥ ९०
सर्व्वं तत् कथयामास वृत्तान्तं मातुरेव सः ।
सीतामङ्गलवृत्तान्तं श्रुत्वा रामो रुरोद च ॥ ९१
रुरोदोच्चैर्लक्ष्मणश्च सुग्रीवश्चापि नारद ।

(क) ततः परमिति च पाठः ।

वानरा ससृदुः सर्व्वे महाबलपराक्रमाः ॥ ८२
निबध्य सेतुं लङ्काञ्च प्रययौ रघुनन्दनः।
ससैन्यः सानुजः शीघ्रं सन्नद्धश्चैव नारद ॥ ८३
निहत्य रावणं रामो रणं कृत्वा सबान्धवम्।
चकार मोचणं ब्रह्मन् सीतायाश्च शुभक्षणे ॥ ८४
कृत्वा पुण्यकयाने च सीतां सत्यपरायणः।
अयोध्यां प्रययौ शीघ्रं क्रीड़ाकौतुकमङ्गलैः ॥ ८५
क्रीड़ां चकार भगवान् सीतां कृत्वा च वक्षसि।
विजहौ विरहज्वालां सीता रामश्च तत्क्षणम् ॥८६
सप्तद्वीपेश्वरो रामो बभूव पृथिवीतले।
बभूव निखिला पृथ्वी साधिव्याधिविवर्ज्जिता ॥ ८७
बभूवतू रामपुत्त्रौ धार्म्मिकौ च कुशीलवौ।
तयोश्च पुत्त्रैः पौत्त्रैश्च सूर्य्यवंशोद्भवा नृपाः ॥ ८८
इति ते कथितं वत्स श्रीरामचरितं शुभम्।
सुखदं मोक्षदं सारं पारपोतो भवार्णवे ॥ ८९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे श्रीराम-
चरिते द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

## त्रिषष्टितमोऽध्यायः।

नारायण उवाच।

अथ कंसो विचिन्त्यैवं (क) दृष्ट्वा दुःस्वप्नमेव च।
समुद्विग्नो महाभीतो निराहारो निरुत्सवः ॥ १
पात्रमित्रं बन्धुगणं बान्धवञ्च पुरोहितम्।
समानीय सभामध्ये तानुवाच सुदुःखितः ॥ २

कंस उवाच।

मया दृष्टो निशाशेषे यो दुःस्वप्नो भयप्रदः।
निबोधत बुधाः सर्व्वे बान्धवाश्च पुरोहिताः ॥ ३
बिभ्रती चोड्रपुष्पाणां मालां सा रक्तचन्दनम्।
रक्ताम्बरं तीक्ष्णखड्गं खर्परञ्च भयानकम् ॥ ४
प्रकुर्व्वत्याट्टाट्टहासञ्च लोलजिह्वा भयङ्करी।
अतीव वृद्धा कृष्णाङ्गी नगरे मम नृत्यति ॥ ५
मुक्तकेशी च्छिन्ननासा कृष्णा कृष्णाम्बरापि वा।
विधवा सा महाशूद्री मामालिङ्गितुमिच्छति ॥ ६
मलिनं चैलखण्डञ्च बिभ्रती रूक्षमूर्द्धजान्।
ददाति चूर्णतिलकं कपाले मम वक्षसि ॥ ७
कृष्णावर्णानि पत्राणि च्छिन्नभग्नानि सत्यक।
पतन्ति कृत्वा शब्दांश्च शश्वत् तालफलानि च ॥ ८
कुचैलो विकृताकारो म्लेच्छो हि रूक्षमूर्द्धजः।
ददाति मह्यमञ्जल्यां छन्नभग्नकपर्द्दकान् ॥ ९
महारुष्टा च द्विव्या स्त्री पतिपुत्त्रवती सती।
बभञ्ज पूर्णकुम्भञ्च मामभिशप्य पुनः पुनः ॥ १०
अम्लानामोड्रमालाञ्च रक्तचन्दनचर्च्चिताम्।
ददाति मह्यं विप्रश्च महारुष्टोऽभिशप्य च ॥ ११
क्षणमङ्गारवृष्टिश्च भस्मवृष्टिः क्षणं क्षणम्।
क्षणं क्षणं रक्तवृष्टिर्भवेच्च नगरे मम ॥ १२
वानरं वायसं श्वानं भल्लूकं शूकरं खरम्।
पश्यामि विकृताकारं शब्दं कुर्व्वन्तमुल्बणम् ॥ १३
पश्यामि शुष्ककाष्ठानां राशिमङ्गारकज्जलम्।
अरुणोदयवेलायां कपर्च्छिन्ननखानि च ॥ १४
पीतवस्त्रपरीधाना शुक्लचन्दनचर्च्चिता।
बिभ्रती मालतीमालां रत्नभूषणभूषिता ॥ १५
क्रीड़ाकमलहस्ता सा सिन्दूरबिन्दुशोभिता।
कृत्वाभिशापं मां रुष्टा याति मन्मन्दिरात् सती ॥१६
पाशहस्तांश्च पुरुषान् मुक्तकेशान् भयङ्करान्।
अतिरुक्षांश्च पश्यामि विशतो नगरं मम ॥ १७
नग्ना नारीर्मुक्तकेशीर्नृत्यन्तीश्च गृहे गृहे।
अतीवविकृताकाराः पश्यामि सस्मिताः सदा ॥ १८
छिन्ननासा च विधवा महाशूद्री दिगम्बरी।
सा तैलाभ्यञ्चितं माञ्च करोत्यतिभयङ्करी ॥ १९
निर्व्वाणाङ्गारयुक्ताश्च भस्मपूर्णा भयङ्कराः।
अतिप्रभातसमये चिताः पश्यामि सस्मितः ॥ २०
पश्यामि च विवाहञ्च नृत्यगीतमहोत्सवम्।
रक्तवस्त्रपरीधानान् पुरुषान् मुक्तमूर्द्धजान् ॥ २१
रक्तं वमन्तं पुरुषं नृत्यन्तं नग्नमुल्बणम्।
धावन्तञ्च शयानञ्च पश्यामि सस्मितं सदा ॥ २२
राहुग्रस्तञ्च गगने मण्डलं चन्द्रसूर्य्ययोः।
एककाले च पश्यामि सर्व्वग्रासञ्च बान्धवाः ॥ २३
उल्कापातं धूमकेतुं भूकम्पं राष्ट्रविप्लवम्।
झञ्झावातं महोत्पातं पश्यामि च पुरोहित ॥ २४
वायुना घूर्णमानांश्च चिन्नस्कन्धान् महीरुहान्।
पतितान् पर्व्वतांश्चैव पश्यामि पृथिवीतले ॥ २५

(क) दुःस्वप्नमित्यनेनान्वयः, एवं वक्ष्यमाणमित्यर्थः।

पुरुषं छिन्नशिरसं नृत्यन्तं नग्नमुत्कृतम्।
मुण्डमालाकरं घोरं पश्यामि च गृहे गृहे॥ २६
दग्धं सर्व्वाश्रमं भस्मपूर्णमङ्गारसङ्कुलम्।
हाहाकारञ्च कुर्व्वन्तं सर्व्वं पश्यामि सर्व्वतः॥ २७
इत्येवमुक्त्वा राजा स विरराम सभातले।
श्रुत्वा स्वप्नं बान्धवाश्च नतवक्त्रा निशश्वसुः॥ २८
जहार चेतनां सद्यः सत्यकश्च पुरोहितः।
मत्वा विनाशं कंसस्य यजमानस्य नारद॥ २९
रुरोद नारीवर्गश्च पिता माता च शोकतः।
मेने विनाशकालञ्च सद्यः स्वयमुपस्थितम्॥ ३०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे कंसदुःस्वप्न-कथनं नाम त्रिषष्टितमोऽध्यायः॥६३॥

---

## चतुःषष्टितमोऽध्यायः।

नारायण उवाच।

सर्व्वं श्रुत्वा परामर्षं सत्यकश्च पुरोहितः।
बुद्धिमान् शुक्रशिष्यश्च तमुवाच हितं मुने॥ १

सत्यक उवाच।

भयं त्यज महाभाग भयं किं ते मयि स्थिते।
कुरु यज्ञं महेशस्य सर्व्वारिष्टविनाशनम्॥ २
यागो धनुर्म्मखो नाम बह्वर्थो बहुदक्षिणः।
दुःस्वप्नानां नाशकरः शत्रुभीतिविनाशकः॥ ३
आध्यात्मिकमाधिदैवमाधिभौतिकमुत्कटम्।
एषां त्रिविधोत्पातानां खण्डनो भूतिवर्द्धनः॥ ४
यागे समाप्ते शम्भुश्च जरा-मृत्युहरं वरम्।
ददाति साक्षाद्भूत्वैव दाता च सर्व्वसम्पदाम्॥ ५
चकारेमञ्च यज्ञञ्च पुरा बाणो महाबलः।
नन्दी च परशुरामश्च भल्लश्च बलिनां वरः॥ ६
पुरा ददौ धनुरिदं शिवो नन्दीश्वराय च।
यागेन भूत्वा सिद्धः स ददौ बाणाय शम्भि कः॥ ७
कृत्वा यागं महासिद्धो ददौ रामाय पुष्करे।
तुभ्यं ददौ परशुरामः कृपया च कृपानिधिः॥ ८
सहस्रहस्तप्रमितं दैर्घ्येऽतिकठिनं नृप।
दशहस्तं प्रशस्ते च शङ्करेच्छाविनिर्म्मितम्॥ ९
पाशुपतं पशुपतिर्युयोजानेन दुर्व्वहम्।
सर्व्वं भङ्क्तुं न शक्ताश्च देवं नारायणं विना॥ १०
यागे च धनुषः पूजा शङ्करस्य तु शङ्करे।
कुरु शीघ्रं शुभाहञ्च सर्व्वान् कुरु निमन्त्रणम्॥ ११
अस्मिन् यागे धनुर्भङ्गो भवेद्‌यदि नराधिप।
विनाशो यजमानस्य भविष्यति न संशयः॥ १२
भग्ने धनुषि यागश्च भग्नो भवति निश्चितम्।
फलं ददाति को वात्र चानिष्पन्ने च कर्म्मणि॥ १३
ब्रह्मा च धनुषो मूले मध्ये नारायणः स्वयम्।
अग्रे चोग्रप्रतापश्च महादेवो महामतिः॥ १४
धनुश्च निर्व्विकारञ्च सद्रत्नखचितं वरम्।
ग्रीष्ममध्याह्नमार्त्तण्ड-प्रभाप्रच्छन्नकारणम्॥ १५
अशक्ताश्च नमयितुमनन्तश्च महाबलः।
सूर्य्यश्च कार्त्तिकेयश्च का कथान्यस्य भूमिप॥ १६
त्रिपुरारिः पुराऽनेन जघान त्रिपुरं मुदा।
निर्भयं कुरु स्वच्छन्दं मङ्गलार्हं महोत्सवम्॥ १७
सत्यकस्य वचः श्रुत्वा चन्द्रवंशविवर्द्धनः।
उवाच कंसः सर्व्वांशैः सन्ततं तं हितैषिणम्॥ १८

कंस उवाच।

वसुदेवगृहे जज्ञे महद्धी कुलनाशनः।
स्वच्छन्दं नन्दगेहे च वर्द्धते नन्दनन्दनः॥ १९
मद्बन्धुवर्गान् शूरांश्च मन्त्रणासु विशारदान्।
भगिनीं पूतनां पूतां जघान बालको बली॥ २०
गोवर्द्धनं दधारैककरेण बलवर्द्धनः।
महेन्द्रस्य च शूरस्य चकार च पराभवम्॥ २१
ब्रह्माणं दर्शयामास ब्रह्मरूपं चराचरम्।
निवहं बालवत्सानां चकार कृत्रिमं मुदा॥ २२
तमेव बलिनं हन्तुं मन्त्रणां कुरु सत्यक।
मम शत्रुर्विना तेन नास्तीह धरणीतले।
न हि स्वर्गे न पाताले त्रिषु लोकेषु निश्चितम्॥२३
सन्ति सन्तश्च राजानः सर्व्वत्र मम बान्धवाः॥ २४
महातपस्वी ब्रह्मा च तपस्वी शङ्करः स्वयम्।
विष्णुः सर्व्वत्र सर्व्वात्मा समदर्शी सनातनः॥ २५
नन्दपुत्त्रं निहत्याहं त्रिषु लोकेषु पूजितः।
सार्व्वभौमो भविष्यामि सप्तद्वीपाधिपो महान्॥२६
स्वर्गं निर्ज्जित्य शक्रञ्च दुर्व्वलं दैत्यनिर्ज्जितम्।
भविष्यामि महेन्द्रश्च तत्र निर्ज्जित्य भास्करम्॥ २७
यज्ञांशस्तत्र चन्द्रश्च ममैव पूर्व्वपूरुषम्।

वायुं कुबेरं वरुणं यमं जेष्यामि निश्चितम् ॥ २८
गच्छ नन्दव्रजं शीघ्रं नन्दञ्च नन्दनन्दनम् ।
तद्भ्रातरञ्च बलिनं बलमानय साम्प्रतम् ॥ २९
कंसस्य वचनं श्रुत्वा तमुवाच स सत्यकः ।
हितं सत्यं नीतिसारं परं सामयिकं तथा ॥ ३०

सत्यक उवाच ।

अक्रूरमुद्धवं वापि वसुदेवमथापि वा ।
प्रस्थापय महाभाग नन्दव्रजमभीप्सितम् ॥ ३१
सत्यकस्य वचः श्रुत्वा वसन्तं तत्र संसदि ।
स्वर्णसिंहासनस्थञ्च वसुदेवमुवाच सः ॥ ३२

राजेन्द्र उवाच ।

तत्त्वज्ञो नीतिशास्त्राणां त्वमुपायविशारदः ।
व्रज नन्दव्रजं बन्धो वसुदेव सुतालयम् ॥ ३३
वृषभानञ्च नन्दञ्च बलञ्च नन्दनन्दनम् ।
शीघ्रमानय यच्चोऽत्र सर्व्वं गोकुलवासिनम् ॥ ३४
गृहीत्वा पत्रिकां दूता गच्छन्तु च चतुर्द्दिशम् ।
नृपान् सुनिगणान् सर्व्वान् कर्त्तुं विज्ञापनं मुदा॥३५
नृपस्य वचनं श्रुत्वा शुष्ककण्ठौष्ठतालुकः ।
उवाच सदयं ब्रह्मन् हृदयेन विदूयता ॥ ३६

वसुदेव उवाच ।

न युक्तमत्र राजेन्द्र गमनं मम साम्प्रतम् ।
विज्ञापितुं नन्दव्रजं नन्दं वा नन्दनन्दनम् ॥ ३७
यद्यायातो नन्दपुत्रो यागे तेऽथ महोत्सवे ।
अवश्यं तद्विरोधश्च भविष्यति सह त्वया ॥ ३८
तमहञ्च समानीय कारयिष्यामि संयुगम् ।
इति मे न हि भद्रञ्च विपत्तस्य तवापि च ॥ ३९
पित्रानीतो मृतः कृष्ण इति सर्व्वो वदिष्यति ।
वसुदेवः सुतद्वारा जघान नृपमेव वा ॥ ४०
द्वयोरेकतरस्यापि सद्योमृत्युर्भविष्यति ।
पतिष्यन्ति च शूराश्च नास्ति युद्धं निरामिषम् ॥ ४१
वसुदेववचः श्रुत्वा रक्तपङ्कजलोचनः ।
खड्गं गृहीत्वा तं हन्तुं प्रययौ नृपतीश्वरः ॥ ४२
हाहेति कृत्वा पुत्रञ्च वारयामास तत्क्षणम् ।
उग्रसेनो महाराजमतीवबलवान् सुने ।
स्पपीठाद्वसुदेवश्च कोपाविष्टो गृहं ययौ ॥ ४३
अक्रूरं प्रेरयामास गन्तुं नन्दव्रजं नृपः ।
दूतान् प्रस्थापयामास शीघ्रं प्रतिदिशं तदा ॥ ४४
आययुर्मुनयः सर्व्वे नृपाश्च सपरिच्छदाः ।
दिक्पालाश्च सुराः सर्व्वे ब्राह्मणाश्च तपस्विनः ॥४५
सनकश्च सनन्दश्च वोढुः पञ्चशिखस्तथा ।
सनत्कुमारो भगवान् प्रज्वलन् ब्रह्मतेजसा ॥ ४६
कपिलश्चासुरिः पैलः सुमन्तुश्च सनातनः ।
पुलहश्च पुलस्त्यश्च भृगुश्च क्रतुरङ्गिराः ॥ ४७
मरीचिः कश्यपश्चैव दक्षोऽत्रिश्च्यवनस्तथा ।
भारद्वाजश्च व्यासश्च गौतमश्च पराशरः ॥ ४८
प्रचेताश्च वशिष्ठश्च सम्वर्त्तश्च बृहस्पतिः ।
कात्यायनो याज्ञवल्क्योऽप्युतथ्यः सौभरिस्तथा ॥ ४९
पर्व्वतो देवलश्चैव जैगीषव्यश्च जैमिनिः ।
विश्वामित्रश्च सुतपाः शाकल्यः शाकटायनः ॥ ५०
जाजलिर्लाङ्गलिश्चैवापिशलिश्च शिलालिकः ।
आस्तीकश्च जरत्कारुस्तथा कल्याणमित्रकः ॥ ५१
दुर्व्वासा वामदेवश्च ऋष्यशृङ्गो विभाण्डकः ।
कविः पथः कणादश्च कौशिकः पाणिनिस्तथा ॥५२
कौत्सोऽघमर्षणश्चैव वाल्मीकिर्लोमशस्तथा ।
मार्कण्डेयो मृकण्डुश्च पर्शुरामश्च साङ्कृतिः ॥ ५३
अगस्त्यश्च तथावाञ्च तथान्ये मुनयो मुने ।
सशिष्याश्च सपुत्राश्च ब्राह्मणाश्च तपस्विनः ॥ ५४
जरासन्धो दन्तवक्रो दाम्भिको द्रविडाधिपः ।
शिशुपालो भीष्मकश्च भगदत्तश्च मुद्गलः ॥ ५५
धृतराष्ट्रो धूमकेशो धूमकेतुश्च सम्बरः ।
शल्यः सत्राजितः शङ्कुर्नृपाश्चान्ये महाबलाः ॥ ५६
भीष्मो द्रोणः कृपाचार्य्यो ह्यश्वत्थामा महाबलः ।
भूरिश्रवाश्च शाल्वश्च कैकेयः कोशलस्तथा ॥ ५७
सर्व्वान् सम्भाषयामास महाराजो यथोचितम् ।
सत्यको यज्ञदिवसं चकार च शुभक्षणम् ॥ ५८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे कंसयज्ञ-कथनं नाम चतुःषष्टितमोऽध्यायः ॥६४

## पञ्चषष्टितमोऽध्यायः ।

नारायण उवाच ।

कंसस्य वचनं श्रुत्वा सोऽक्रूरो धर्म्मिणां वरः ।
उवाच चोद्धवं शान्तं शान्तः प्रहृष्टमानसः ॥ १

अक्रूर उवाच ।

सुप्रभाताद्य रजनी बभूव मे शुभं दिनम् ।
तुष्टाश्च गुरवो विप्रा देवा मामिति निश्चितम् ॥ २
कोटिजन्मार्ज्जितं पुण्यं मम स्वयमुपस्थितम् ।
बभूव मे समुत्पन्नं यद्वयत् कर्म्म शुभाशुभम् ॥ ३
चिच्छेद बन्धनिगड़ं मम बद्धस्य कर्म्मिणः ।
कारागाराच्च संसारान्मुक्तो यामि हरेः पदम् ॥ ४
सुहृदर्थीकृतोऽहञ्च कंसेन विदुषा रुषा ।
वरेण तुल्यो दैवस्य क्रोधो मम बभूव ह ॥ ५
व्रजराजं समुद्धर्त्तुं व्रजं यास्यामि साम्प्रतम् ।
द्रक्ष्यामि परमं पूज्यं भक्ति-मुक्तिप्रदायिनम् ॥ ६
नवीनजलदश्यामं नीलेन्दीवरलोचनम् ।
पीतवस्त्रधटीयुक्त-कटिदेशराजितम् ॥ ७
धूलिधूसरिताङ्गं वा किं वा चन्दनचर्च्चितम् ।
अथवा नवनीताक्तमङ्गं द्रक्ष्यामि सस्मितम् ॥ ८
किं वा विनोदमुरलीं वादयन्तं मनोहरम् ।
किं वा गवां समूहञ्च चालयन्तमितस्ततः ॥ ९
किं वा वसन्तं गच्छन्तं शयानं वा सुनिश्चितम् ।
निर्द्देशं कीदृशञ्चाद्य स्वदृष्ट्या च शुभक्षणे ॥ १०
ध्यायन्ते यत्पादपद्मं ब्रह्म-विष्णु-शिवादयः ।
न हि जानाति यस्यान्तमनन्तोऽनन्तविग्रहः ॥ ११
यत्प्रभावं न जानन्ति देवाः सन्तश्च सन्ततः ।
यस्य स्तोत्रे जड़ीभूता भीता देवी सरस्वती ॥ १२
दासी नियुक्ता यद्दास्ये महालक्ष्मीश्च लज्जिता ।
गङ्गा यस्य पदाम्भोजान्निःसृता सत्त्वरूपिणी ॥ १३
जन्म-मृत्यु-जरा-व्याधिहरा त्रिभुवनात् परा ।
दर्शनस्पर्शनेनैव नृणां पातकनाशिनी ॥ १४
ध्यायते यत्पदाम्भोजं दुर्गा दुर्गविनाशिनी ।
त्रैलोक्यजननी देवी मूलप्रकृतिरीश्वरी ॥ १५
लोम्नां कूपेषु विश्वानि महाविष्णोश्च यस्य च ।
असंख्यानि विचित्राणि स्थूलात् स्थूलतरस्य च ॥ १६
स च यत्षोड़शांशश्च यस्य सर्व्वेश्वरस्य च ।
तं द्रष्टुं यामि हे बन्धो मायामानुषरूपिणम् ॥ १७
सर्व्वं सर्व्वान्तरात्मानं सर्व्वज्ञं प्रकृतेः परम् ।
ब्रह्मज्योतिःस्वरूपञ्च भक्तानुग्रहविग्रहम् ॥ १८
निगुणञ्च निरीहञ्च निरानन्दं निराश्रयम् ।
परमञ्च परानन्दं सानन्दं नन्दनन्दनम् ॥ १९
स्वेच्छामयं सर्व्वपरं सर्व्वबीजं सनातनम् ।
वदन्ति योगिनः शश्वद्ध्यायन्तेऽहर्निशं शिवः
मन्वन्तरसहस्रञ्च निराहारः कृशोदरः ।
पद्मे पाद्मस्तपस्तेपे पुरा पाद्मेति यत्कृते ॥ २१
पुनः कुरु तपस्याञ्च तदा द्रक्ष्यसि मामिति ।
सकृच्छब्दञ्च शुश्राव न ददर्श तथापि तम् ॥ २२
तावत् कालं पुनस्तप्त्वा वरं प्राप ददर्श तम् ।
ईदृशं परमेशञ्च द्रक्ष्याम्यद्य तमुद्धव ॥ २३
पुरा शम्भुस्तपस्तेपे यावद्वै ब्रह्मणो वयः ।
ज्योतिर्मण्डलमध्ये च गोलोके तं ददर्श सः ॥
सर्व्वतत्त्वं सर्व्वसिद्धममरत्वं वरं परम् ।
सम्प्राप तत्पदाम्भोजे भक्तिञ्च निर्म्मलां पराम् ।
चकारात्मसमं तञ्च यो भर्त्ता भक्तवत्सलः ।
ईदृशं परमेशञ्च द्रक्ष्याम्यद्य तमुद्धव ॥ २६
सहस्रशक्रपातान्तं निराहारः कृशोदरः ।
यस्यानन्तस्तपस्तेपे भक्त्या च परमात्मनः ॥ २७
तदा चात्मसमं ज्ञानं ददौ तस्मै स ईश्वरः ।
ईदृशं परमेशञ्च द्रक्ष्याम्यद्य तमुद्धव ॥ २८
सहस्रेन्द्रनिपातान्तं धर्म्मस्तेपे च यत्तपः ।
तदा बभूव साक्षी स धर्म्मिणां सर्व्वकर्म्मणाम् ॥
शास्ता च फलदाता च तत्प्रसादान्नृणामिह ।
सर्व्वेशमीदृशमहो द्रक्ष्याम्यद्य तमुद्धव ॥ ३०
अहोऽष्टाविंशतीन्द्राणां पतने तद्दिवानिशम् ।
एवंक्रमैश्च मासाब्दैः शताब्दं ब्रह्मणो वयः ॥ ३१
अहो यस्य निमेषेण ब्रह्मणः पतनं भवेत् ।
ईदृशं परमात्मानं द्रक्ष्याम्यद्य तमुद्धव ॥ ३२
नास्ति भूरजसां संख्या यथैव ब्रह्मणां तथा ।
तथैव बन्धो विश्वानां तदाधारो महान् विराट् ॥ ३३
विश्वे विश्वे च प्रत्येकं ब्रह्म-विष्णु-शिवादयः ।
मुनयो मनवः सिद्धा मानवाद्याश्चराचराः ॥ ३४
यत्षोड़शांशः स विराट् सृष्टो नष्टश्च लीलया ।
ईदृशं सर्व्वशास्तारं द्रक्ष्याम्यद्य तमुद्धव ॥ ३५

नारायण उवाच ।

इत्येवमुक्त्वाऽक्रूरश्च पुलकाञ्चितविग्रहः ।
मूर्च्छां प्राप साश्रुनेत्रो दध्यौ तच्चरणाम्बुजम् ॥ ३६
बभूव भक्तिपूर्णश्च स्मारं स्मारं पदाम्बुजम् ।
परिपूर्णतमस्यापि कृष्णस्य परमात्मनः ॥ ३७

उद्धवश्च समाश्लिष्य प्रशशंस पुनः पुनः।
स च शीघ्रं ययौ गेहमक्रूरोऽपि स्वमन्दिरम् ॥ ३८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे अक्रूर-हर्ष-कथनं नाम पञ्चषष्टितमोऽध्यायः ॥६५॥

---

## षट्षष्टितमोऽध्यायः।

नारायण उवाच।

अथ रासेश्वरीयुक्तो रासे रासेश्वरः स्वयम्।
स च रेमे तया सार्द्धमतीव रमणोत्सुकः ॥ १
सुखसम्भोगमात्रेण ययौ निद्राञ्च राधिका।
दृष्ट्वा स्वप्नं समुत्थाय दीनोवाच प्रियं दिने ॥ २

राधिकोवाच।

अयि स्वामिन्निहागच्छ त्वां करोमि स्ववक्षसि।
परिणामे विधाता मे न जाने किं करिष्यति ॥ ३
इत्युक्त्वा सा महाभागा प्रियं कृत्वा स्ववक्षसि।
दुःस्वप्नं कथयामास हृदयेन विदूयता ॥ ४

राधिकोवाच।

रत्नसिंहासनेऽहञ्च रत्नचित्रञ्च बिभ्रती।
तदातपत्रं जग्राह रुष्टो विप्रश्च मे प्रभो ॥ ५
सागरे कज्जलाकारे महाघोरे च दुस्तरे।
गभीरे प्रेरयामास मामेव दुर्ब्बलां स च ॥ ६
तत्र स्रोतसि शोकार्त्ता भ्रमामि च मुहुर्म्मुहुः।
महोर्म्मीणाञ्च वेगेन व्याकुला नक्रसङ्कुलैः ॥ ७
त्राहि त्राहीति हे नाथ त्वां वदामि पुनः पुनः।
त्वां न दृष्ट्वा महाभीता करोमि प्रार्थनां स्मरम् ॥ ८
कृष्ण तत्र निमज्जन्ती पश्यामि चन्द्रमण्डलम्।
निपतन्तञ्च गगनाच्छतखण्डञ्च भूतले ॥ ९
क्षणान्तरे च पश्यामि गगनात् सूर्य्यमण्डलम्।
बभूव च चतुःखण्डं निपत्य धरणीतले ॥ १०
एककाले च गगने मण्डलं चन्द्र-सूर्य्ययोः।
अतीवकज्जलाकारं सर्व्वग्रस्तञ्च राहुणा ॥ ११
क्षणान्ते च प्रपश्यामि ब्राह्मणी दीप्तिमानिति।
मत्क्रोड़स्थं सुधाकुम्भं बभञ्ज च रुषेति च ॥ १२
क्षणान्तरे च पश्यामि महारुष्टञ्च ब्राह्मणम्।
गृहीला च व्रजन्तञ्च चक्षुषोः पुरुषं मम ॥ १३
क्रीड़ाकमलदण्डञ्च हस्तस्थं मम प्रभो।
सहसा खण्डखण्डञ्च बभूव केन हेतुना ॥ १४
हस्ताद्ध्वस्तञ्च सहसा सद्रत्नसारदर्पणः।
निर्म्मलः कज्जलाकार खण्डखण्डो बभूव ह ॥ १५
हारो मे रत्नसाराणां छिन्नो भूत्वा च वक्षसः।
अतीव मलिनं पद्मं पपात धरणीतले ॥ १६
सौधपुत्तलिकाः सर्व्वा नृत्यन्ति च हसन्ति च।
आस्फोटयन्ति गायन्ति-रुदन्ति च क्षणं क्षणम् ॥ १७
कृष्णवर्णं हद्धचक्रं खे भ्रमन्तं मुहुर्म्मुहुः।
निपतन्तञ्चोत्पतन्तं पश्यामि च भयङ्करम् ॥ १८
प्राणाधिदेवः पुरुषो निःसृत्याभ्यन्तरान्मम।
राधे विदायं देहीति त्वत्तो यामीत्युवाच सः ॥ १९
कृष्णवर्णा च प्रतिमा मामाश्लिष्यति चुम्बति।
कृष्णवस्त्रपरीधाना चेति पश्यामि साम्प्रतम् ॥ २०
इतीदं विपरीतञ्च दृष्ट्वा च प्राणवल्लभ।
नृत्यन्ति दक्षिणाङ्गानि प्राणा आन्दोलयन्ति च ॥ २१
रुदन्ति शोकाः कर्षन्ति समुद्विग्नञ्च मानसम्।
किमिदं किमिदं नाथ वद वेदविदां वर ॥ २२
इत्युक्त्वा राधिका देवी शुष्ककण्ठोष्ठतालुका।
पपात तत्पदाम्भोजे भीता सा शोकविह्वला ॥ २३
श्रुत्वा स्वप्नं जगन्नाथो देवीं कृत्वा स्ववक्षसि।
आध्यात्मिकेन योगेन बोधयामास तत्क्षणम् ॥ २४
तत्याज शोकं सा देवी ज्ञानं सम्प्राप्य निर्म्मलम्।
शान्तञ्च भगवन्तञ्च कृत्वा कान्तं स्ववक्षसि ॥ २५

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे राधाशोकाप-नोदनं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

## सप्तषष्टितमोऽध्यायः।

नारायण उवाच।

विरहव्याकुलां दृष्ट्वा कामिनीं काममोहनः।
कृत्वा वक्षसि तां कृष्णो ययौ क्रीड़ासरोवरम् ॥ १
राजराजेश्वरी राधा कृष्णवक्षसि राजते।
सौदामिनीव जलदे नवीने गगने मुने ॥ २
रेमे स रामया सार्द्धं कृपया च कृपानिधिः।
द्वयोर्द्वयोर्यथा स्वर्णमणी मारकती मुने ॥ ३

रत्ननिर्म्माणपर्य्यङ्के रत्नेन्द्रसारमन्दिरे।
रत्नप्रदीपे ज्वलति रत्नभूषणभूषितः॥ ४
रत्नभूषाभूषितया रेमे रत्नेन कौतुकात्।
रसरत्नाकरे रम्ये निमग्नो रसिकेश्वरः॥ ५
रासे रासेश्वरी राधा रासेश्वरमुवाच ह।
सुरतेर्विरतौ सत्यां विरते न मनोरथे॥ ६

राधिकोवाच।

प्रफुल्लाहं त्वया शीघ्र मृता म्लाना च त्वां विना।
यथा महौषधिर्म्लाना प्रभाते भाति भास्करे॥ ७
नक्तं दीपशिखेवाहं त्वया सार्द्धञ्च त्वां विना।
दिने दिने यथा क्षीणा कृष्णपक्षे विधोः कला॥ ८
तव वक्षसि मे दीप्तिः पूर्णचन्द्रप्रभासमा।
सद्योमृता त्वया त्यक्ता दर्शे चन्द्रकला यथा॥ ९
ज्वलदग्निशिखेवाहं घृताक्तया त्वया सह।
त्वदर्ज्जिताहो निर्व्वाणा शिशिरे पद्मिनी यथा॥१०
चिन्ताजराज्वरग्रस्ता मत्तस्त्वयि गतेऽप्यहम्।
अस्तं गते रवौ चन्द्रे ध्वान्तग्रस्ता धरा यथा॥ ११
भ्रष्टो वेशस्त्वां विना मे रूपयौवनचेतनम्।
तारावली परिभ्रष्टा सूरसूतोदये यथा॥ १२
त्वमेवात्मा च सर्व्वेषां मम नाथो विशेषतः।
तनुर्यथात्मना त्यक्ता तथाहञ्च त्वया विना॥ १३
पञ्चप्राणात्मकस्त्वं मे मृताहञ्च त्वया विना।
यथा दृष्टिश्च गोलान्तर्दृष्टिपुत्तलिकां विना॥ १४
स्थलं यथा चिन्नयुक्तं त्वया सार्द्धमहं तथा।
असंस्कृता त्वया हीना तृणाच्छन्ना यथा मही॥१५
त्वया सार्द्धमहं कृष्ण चित्रयुक्तेव मृण्मयी।
त्वां विना जलधौताहं मृण्मयी मृण्मयीव च॥ १६
गोपाङ्गनानां शोभा च त्वया रासेश्वरेण च।
हारे स्वर्णविकारे च श्वेतेन मणिना सह॥ १७
व्रजराज त्वया सार्द्धं राजन्ते राजराजयः।
यथा चन्द्रेण नभसि ताराराजिर्विराजते॥ १८
त्वया शोभा यशोदाया नन्दस्य नन्दनन्दन।
यथा शाखाफलस्कन्धैस्तरुराजिर्विराजते॥ १९
त्वया सार्द्धं गोकुलेश शोभा गोकुलवासिनाम्।
यथा शोभा लोकराजी राजेन्द्रेण विराजते॥ २०
रासस्यापि च रासेश त्वया शोभा मनोहरा।
राजते देवराजेन यथा स्वर्गेऽमरावती॥ २१

वृन्दावनस्य वृक्षाणां त्वञ्च शोभा पतिर्गतिः॥ २
अन्येषाञ्च बलानाञ्च बलवान् केशरी यथा।
तथा त्वं बलवान् श्रेष्ठो वृन्दावननिवासिनाम्॥२
त्वया विना यशोदा च निमग्ना शोकसागरे।
न प्राप्य वत्सं सुरभी क्रोशन्ती व्याकुला यथा॥
आन्दोलयन्ति नन्दस्य प्राणा दुग्धञ्च मानसम्।
त्वया विना तप्तपात्रे यथा धान्यसमूहकः॥ २५
इत्युक्त्वा परमप्रेम्णा सा पपात हरेः पदे।
पुनराध्यात्मिकेनैव बोधयामास तां विभुः॥ २६
आध्यात्मिको महायोगः शोकच्छेदनकारणम्।
यथा पर्शुश्च वृक्षाणां तीक्ष्णधारश्च नारद॥ २७

नारद उवाच।

आध्यात्मिकं महायोगं वद वेदविदां वर।
शोकच्छेदञ्च लोकानां श्रोतुं कौतूहलं मम॥ २

नारायण उवाच।

आध्यात्मिको महायोगो न ज्ञातो योगिनामपि
स च नानाप्रकारश्च सर्व्वं वेत्ति हरिः स्वयम्॥ २
किञ्चिदाध्यात्मिकानाञ्च गोलोके राधिकेश्वरः।
सुप्रीतः कथयामास त्रिपुरारिं पुरा मुने॥ ३०
सहस्रेन्द्रनिपातान्तं तपः कुर्व्वन्तमीश्वरम्।
श्रेष्ठं श्रेष्ठं वैष्णवानां वरिष्ठञ्च तपस्विनाम्॥ ३१
पुष्करे दुष्करं तप्त्वा पाद्मे पाद्मञ्च पाद्मज।
दृष्ट्वा तं सादरं कृष्ण उवाच किञ्चिदेव तम्॥ ३
शतेन्द्रपातपर्य्यन्तं कठोरेण कृशोदरम्।
निश्चेष्टमस्थिसारञ्च कृपया च कृपानिधिः॥ ३३
सिंहक्षेत्रे पुरा धर्म्मं मत्तातं कर्म्मिणां वरम्।
चतुर्द्दशेन्द्रावच्छिन्नं तपस्तप्त्वा कृशोदरम्।
पपाठाध्यात्मिकं किञ्चित् कृपया च कृपानिधिः
किञ्चिच्छतेन्द्रावच्छिन्नं मां तपन्तमुवाच सः।
किञ्चित् सनत्कुमारञ्च तपन्तं सुचिरं परम्॥ ३
सुतपन्तमनन्तञ्च किञ्चिचोवाच नारद॥ ३६
चिरं तपन्तं कपिलं हिमशैले तपस्विनम्।
पुष्करे भास्करं किञ्चित्तपन्तं दुष्करं तपः॥ ३
उवाच किञ्चित् प्रह्लादं किञ्चिद्दुर्व्वाससं भृगुम्
एवं निगूढं भक्ताञ्च कृपया भक्तवत्सलः॥ ३८
क्रीड़ासरोवरे रम्ये यदुवाच कृपानिधिः।
शोकार्त्तां राधिकां तच्च कथयामि निशामय।

विरसां (क) रसिकां दृष्ट्वा वासयित्वा च वक्षसि ।
उवाचाध्यात्मिकं किञ्चिद्योगिनीं योगिनां गुरुः ॥४०

श्रीकृष्ण उवाच ।

जातिस्मरे स्मरात्मानं कथं विस्मरसि प्रिये ।
सर्व्वं गोलोकवृत्तान्तं श्रीदाम्नः शापमेव च ॥ ४१
शापात् किञ्चिद्दिनं दीने त्वद्विच्छेदो मया सह ।
भविष्यति महाभागे मिलनं पुनरावयोः ॥ ४२
पुनरेवं गमिष्यामि गोलोकं तं निजालयम् ।
गत्वा गोपाङ्गनाभिश्च गोपैर्गोलोकवासिभिः ॥४३
अधुनाध्यात्मिकं किञ्चित् त्वां वदामि निशामय ।
शोकघ्नं हर्षदं सारं सुखदं मानसस्य च ॥ ४४
अहं सर्व्वान्तरात्मा च निर्लिप्तः सर्व्वकर्म्मसु ।
विद्यमानश्च सर्व्वेषु सर्व्वत्रादृष्ट एव च ॥ ४५
वायुश्चरति सर्व्वत्र यथैव सर्व्वजन्तुषु ।
न च लिप्तस्तथैवाहं साक्षी च सर्व्वकर्म्मणाम् ॥ ४६
जीवो मत्प्रतिबिम्बश्च सर्व्वत्र सर्व्वजीविषु ।
भोक्ता शुभाशुभानाञ्च कर्त्ता च कर्म्मणां सदा ॥ ४७
यथा जलघटेष्वेव मण्डलं चन्द्रसूर्य्ययोः ।
भग्नेषु तेषु संश्लिष्टं तयोरेव तथा मयि ॥ ४८
अहं दृष्टश्च सर्व्वेषामदृष्टश्चापि जीविनाम् ।
जीवरूपेण दृष्टोऽहमदृष्टश्चात्मरूपतः ॥ ४९
सगुणोऽहं शरीरी च निराकारश्च निर्गुणः ।
अधिष्ठितोऽहं सर्व्वत्र सर्व्वद्रव्येषु सन्ततम् ॥ ५०
अहं सर्व्वाणि द्रव्याणि नश्वराणि च सुन्दरि ।
आविर्भावाधिकाः कुत्र कुत्रचिन्न्यूनमेव च ॥ ५१
ममांशाः केऽपि देवाश्च केचिद्देवाः कलास्तथा ।
केचित् कलाः कलांशांशास्तदंशांशाश्च केचन ॥ ५२
मदंशा प्रकृतिः सूक्ष्मा सा च मूर्त्त्या च पञ्चधा ।
सरस्वती च कमला दुर्गा त्वञ्चापि वेदसूः ॥ ५३
सर्व्वे देवाः प्राकृतिका यावन्तो मूर्त्तिधारिणः ।
अहमात्मा नित्यदेही भक्तध्यानानुरोधतः ॥ ५४
ये ये प्राकृतिका राधे ते नष्टाः प्राकृते लये ।
अहमेवासमेवाग्रे पश्चादप्यहमेव च ॥ ५५
यथाहञ्च तथा त्वञ्च यथा धावल्यदुग्धयोः ।
भेदः कदापि न भवेन्निश्चितञ्च तथावयोः ॥ ५६
अहं महान् विराट् सृष्टौ विश्वानि यस्य लोमसु ।
अंशा त्वं तत्र महती स्वांशेन तस्य कामिनी ॥ ५७
अहं क्षुद्रविराट् सृष्टौ विश्वं यन्नाभिमात्रतः ।
अहं विष्णुः कृत्तिवासाः (क)सर्व्वं मे चांशतः सति॥५८
तस्य श्रीस्त्वञ्च वृहती स्वांशेन शुभगा सदा ।
तस्य विश्वे च प्रत्येकं ब्रह्म-विष्णु-शिवादयः ॥ ५९
ब्रह्म-विष्णु-शिवा अंशाश्चान्ये चापि च मण्डलाः ।
मत्कलांशांशकलया सर्व्वे देवि चराचराः ॥ ६०
वैकुण्ठे त्वं महालक्ष्मीरहञ्चापि चतुर्भुजः ।
स च विश्वाद्बहिश्चोर्द्ध्वं यथा गोलोक एव च ॥ ६१
सरस्वती त्वं तत्रैव सावित्री ब्रह्मणः प्रिया ।
शिवलोके शिवा त्वञ्च मूलप्रकृतिरीश्वरी ।
विनाश्य दुर्गं दुर्गा च सर्व्वदुर्गतिनाशिनी ॥ ६२
सा एव दक्षकन्या च सा एव शैलकन्यका ।
कैलासे पार्व्वती तेन सौभाग्या शिवगेहिनी ॥ ६३
स्वांशेन त्वं सिन्धुकन्या क्षीरोदे विष्णुवक्षसि ॥ ६४
अहं स्वांशेन सृष्टौ च ब्रह्म-विष्णु-महेश्वराः ।
त्वञ्च लक्ष्मीः शिवा धात्री सावित्री च पृथक् पृथक्॥६५
गोलोके च स्वयं राधा रासे रासेश्वरी सदा ।
वृन्दा वृन्दावने पुण्ये विरजा विरजातटे ॥ ६६
सा त्वं श्रीदामशापेन भारतं पुण्यमागता ।
पूतं कर्त्तुं भारतञ्च वृन्दारण्यञ्च सुन्दरि ॥ ६७
त्वत्कलांशांशकलया विश्वेषु सर्व्वयोषितः ।
या योषित् सा च भवती यः पुमान् सोऽहमेव च॥६८
अहञ्च कलया वह्निस्त्वं स्वाहा दाहिका प्रिया ।
त्वया सह समर्थोऽहं नालं दग्धुञ्च त्वां विना ॥ ६९
अहं दीप्तिमतां सूर्य्यः कलया त्वं प्रभात्मिका ।
सङ्गता च त्वया भामे त्वां विनाहं न दीप्तिमान् ॥७०
अहञ्च कलया चन्द्रस्त्वञ्च शोभा च रोहिणी ।
मनोहरस्त्वया सार्द्धं त्वां विना च न सुन्दरि(ख)॥७१
अहमिन्द्रश्च कलया स्वर्गलक्ष्मीश्च त्वं सति ।
त्वया सार्द्धं देवराजो हतश्रीश्च त्वया विना ॥ ७२
अहं धर्म्मश्च कलया त्वञ्च मूर्त्तिश्च धर्म्मिणो ।
नाहं शक्तो धर्म्मकृत्ये त्वाञ्च धर्म्मक्रियां विना ॥ ७३
अहं यज्ञश्च कलया त्वञ्च स्वांशेन दक्षिणा ।
त्वया सार्द्धञ्च फलदोऽप्यसमर्थस्त्वया विना ॥ ७४

(क) विवशामिति क्वचित् पाठः ।

(क) अहं विष्णोर्लोमकूपे इति च पाठः ।
(ख) सुन्दर इति च पाठः ।

कलया पितृलोकोऽहं स्वांशेन त्वं स्वधा सति।
त्वयाहं कव्यदाने च सदा नाहं त्वया विना॥ ७५
त्वञ्च सम्पत्स्वरूपाहमीश्वरश्च त्वया सह।
लक्ष्मीयुक्तास्त्वया लक्ष्या निःश्रीकश्चापि त्वां विना॥७६
अहं पुमांस्त्वं प्रकृतिर्न स्रष्टाहं त्वया विना।
यथा नालं कुलालश्च घटं कर्त्तुं मृदा विना॥ ७७
अहं शेषश्च कलया स्वांशेन त्वं वसुन्धरा।
त्वां शस्यरत्नाधाराञ्च बिभर्म्मि मूर्द्ध्नि सुन्दरि॥ ७८
त्वञ्च शान्तिश्च कान्तिश्च मूर्त्तिर्मूर्त्तिमती सति।
तुष्टिः पुष्टिः क्षमा लज्जा क्षुत् तृष्णा च परा दया॥७९
निद्रा शुद्धा च तन्द्रा च मूर्च्छा च सन्ततिः क्रिया।
मुक्तिरूपा भक्तिरूपा देहिनां दुःखरूपिणी॥ ८०
ममाधारा सदा त्वञ्च तवात्माहं परस्परम्।
यथा त्वञ्च तथाहञ्च समौ प्रकृतिपूरुषौ।
न हि सृष्टिर्भवेद्देवि द्वयोरेकतरं विना॥ ८१
इत्युक्त्वा परमात्मा च राधां प्राणाधिकां प्रियाम्।
कृत्वा वक्षसि सुप्रीतो बोधयामास नारद॥ ८२
स च क्रीड़ानियुक्तश्च बभूव रत्नमन्दिरे।
तया च राधया सार्द्धं कामुक्या सह कामुकः॥ ८३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म
खण्डे नारायण-नारदसंवादे राधाकृष्ण
संवादे आध्यात्मिकयोगकथनं नाम-
सप्तषष्टितमोऽध्यायः॥ ६७॥

---

## अष्टषष्टितमोऽध्यायः।

नारायण उवाच।

कृत्वा क्रीड़ां समुत्थाय पुष्पतल्पात् पुरातनः।
निद्रितां प्राणसदृशीं बोधयामास तत्क्षणम्॥ १
वस्त्राञ्चलेन संस्कृत्य कृत्वा तन्निर्म्मलं मुखम्।
उवाच मधुरं वाक्यं शान्त्या च मधुसूदनः॥ २

श्रीकृष्ण उवाच।

अयि तिष्ठ क्षणं रासे रासेश्वरि शुचिस्मिते।
व्रज वृन्दावनं वापि व्रजं व्रज व्रजेश्वरि॥ ३
रासाधिष्ठातृदेवी त्वं रासे वासं कुरु क्षणम्।
ग्रामे ग्रामे यथा सन्ति सर्व्वत्र ग्रामदेवताः॥ ४
प्रियालिनिवहैः सार्द्धं क्षणं चन्दनकाननम्।
ह वा चम्पकवनं गच्छ वा तिष्ठ सुन्दरि॥ ५
क्षणं गृहञ्च यास्यामि विशिष्टं कार्य्यमस्ति मे।
विदायं देहि सम्प्रीत्या क्षणं मां प्राणवल्लभे॥ ६
प्राणाधिष्ठातृदेवी त्वं प्राणाश्च त्वयि सन्ति मे।
प्राणी विहाय प्राणांश्च कुत्र स्थातुं क्षमः प्रिये॥ ७
त्वयि मे मानसं शश्वत् त्वं मे संसारवासना।
त्वत्तो मम प्रिया नास्ति त्वमेव शङ्करात् प्रिया॥ ८
प्राणा मे शङ्करः सत्यं त्वञ्च प्राणाधिका सति।
इत्युक्त्वा तां समाश्लिष्य भगवान् गन्तुमुद्यतः॥ ९
अक्रूरागमनं ज्ञात्वा सर्व्वज्ञः सर्व्वसाधनः।
आत्मा पाता च सर्व्वेषां सर्व्वोपकारकारकः॥१०
दृष्ट्वा तमेव गच्छन्तमुत्कण्ठाभिन्नमानसम्।
उवाच राधिका देवी हृदयेन विदूयता॥ ११

राधिकोवाच।

हे नाथ रमणश्रेष्ठ श्रेष्ठस्त्वं प्रेयसां मम।
हे कृष्ण हे रमानाथ व्रजेश मा व्रजं व्रज॥ १२
अधुना त्वां प्राणनाथ पश्यामि भिन्नमानसम्।
गतं तव मयि प्रेम गतं सौभाग्यमेव च॥ १३
क्व यासि मां विनिक्षिप्य गभीरे शोकसागरे।
विरहव्याकुलां दीनां त्वय्येव शरणं गताम्॥ १४
न यास्यामि पुनर्गेहं यास्यामि काननान्तरम्।
कृष्ण कृष्णेति कृष्णेति गायं गायं दिवानिशम्॥१५
न यास्याम्यथवारण्यं यास्यामि कामसागरम्।
तत्र त्वां कामनां कृत्वा त्यक्ष्यामि च कलेवरम्॥ १६
यथा कालो यथात्मा च यथा चन्द्रो यथा रविः।
तथा त्वं यासि मत्पार्श्वं निबद्धो वसनाञ्चले॥ १७
अधुना यासि नैराश्यं कृत्वा मे दीनवत्सल।
न युक्तं हि परित्यक्तुं दीनां मां शरणागताम्॥१८
ध्यायन्ते यत्पादपद्मं ब्रह्म-विष्णु-शिवादयः।
तं मायया गोपवेशं कथं जानामि मन्दधीः॥ १९
कृतं यदेव दुर्नीतमपराधसहस्रकम्।
यदुक्तं पतिभावेन चाभिमानेन तत् क्षम॥ २०
चूर्णीभूतश्च मद्दर्पो दूरीभूतो मनोरथः।
विज्ञातमात्मसौभाग्यं किमन्यत् कथयामि ते॥ २१
ज्ञात्वा गर्गमुखाच्छ्रुत्वा मोहिता तव मायया।
त्वाञ्च वक्तुं न शक्नोमि प्रेम्णा वा भक्तिभावतः॥ २२
यासि चेन्मां परित्यज्य सकलङ्को भविष्यसि।

त्वत्पुत्रपौत्रा नश्यन्ति ब्रह्मकोपानलेन च ॥ २३
क्षणं युगशतं मन्ये त्वां विना प्राणवल्लभम् ।
कथं शताब्दं त्वां त्यक्त्वा बिभर्म्मि जीवनं प्रभो ॥ २४
नारायण उवाच ।
इत्युक्त्वा राधिका शोकात् पपात धरणीतले ।
मूर्च्छां सम्प्राप सहसा जहार चेतनां मुने ॥ २५
कृष्णस्तां मूर्च्छितां दृष्ट्वा कृपया च कृपानिधिः ।
चेतनां कारयित्वा च वासयामास वक्षसि ॥ २६
बोधयामास विविधं योगैः शोकविखण्डनैः ।
तथापि शोकं त्यक्तुञ्च न शशाक सुचिस्मिता ॥ २७
सामान्यवस्तुविश्लेषो नृणां शोकाय केवलम् ।
देहात्मनोश्च विच्छेदः सुखाय कस्य कल्पते ॥ २८
न ययौ तत्र दिवसे व्रजराजो व्रजं प्रति ।
क्रीड़ासरोवराद्राशं प्रययौ राधया सह ॥ २९
तत्र गत्वा पुनः क्रीड़ां चकार च तया सह ।
विजहौ विरहज्वालां रासे रासेश्वरी मुदा ॥ ३०
राधा सा स्वामिना सार्द्धं पुष्पचन्दनचर्च्चिता ।
पुष्पचन्दनतल्पे च तस्थौ रहसि नारद ॥ ३१
इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे
नारायण-नारदसंवादे राधाशोकविमोचनं
नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

## एकोनसप्ततितमोऽध्यायः ।

नारद उवाच ।
अतः परं किं रहस्यं राधा-केशवयोर्वद ।
निगूढ़तत्त्वमस्पष्टं तन्मे व्याख्यातुमर्हसि ॥ १
नारायण उवाच ।
शृणु नारद वक्ष्यामि रहस्यं परमाद्भुतम् ।
गोपनीयञ्च वेदेषु पुराणेषु पुराविदाम् ॥ २
पुनः सकामो भगवान् कृष्णः स्वेच्छामयो विभुः ।
रेमे स रामया सार्द्धं विदग्धश्च विदग्धया ॥ ३
चतुःषष्टिकलासक्ता यथा कान्ता कलावती ।
कामशास्त्रेषु निपुणा विदग्धा रसिकेश्वरी ॥ ४
शृङ्गारलीलानिपुणा शश्वत्कामा च कामुकी ।
सुन्दरी सुन्दरीष्वेव शश्वत्सुस्थिरयौवना ॥ ५
पितॄणां मानसी कन्या धन्या मान्या च मानिनी ।
शम्भोः शिष्या ज्ञानयुता शतकल्पान्तजीविनी ॥ ६
वेदवेदाङ्गनिपुणा योगनीतिविशारदा ।
नानारूपधरा साध्वी प्रसिद्धा सिद्धयोगिनी ॥ ७
तत्कान्या राधिका देवी मातृतुल्या च कामुकी ।
चकार नानाभावं सा सुशीला स्वामिनं प्रति ॥ ८
चतुःषष्टिकलामानं शृङ्गारञ्च चकार सः ।
तया विशिष्टया सार्द्धं रासे रासरसोत्सुकः ॥ ९
तां नखाग्रक्षतश्रोणीं नखक्षतपयोधराम् ।
लुप्तचन्दनसिन्दूरां कवरीशिथिलां सतीम् ॥ १०
सुखसम्भोगमग्नाञ्च नग्नाञ्च सुखमूर्च्छिताम् ।
पुलकाञ्चितसर्व्वाङ्गीं निद्रादेवी समाययौ ॥ ११
दृष्ट्वा तां निद्रितां कृष्णः कृपया च कृपानिधिः ।
ससौद मायया मायी मायेशो लोकशिक्षया ॥ १२
कृत्वा वक्षसि राधाञ्च चुचुम्ब च पुनः पुनः ।
स्नातञ्च नेत्रसलिलैः प्राणाधिष्ठातृदेवताम् ॥ १३
प्राणाधिकप्रियतमां धारयामास वाससी ।
वह्निशुद्धेऽतिसूक्ष्मे चात्यमूल्ये विश्वदुर्लभे ॥ १४
कवरीं रचयामास ददौ कुङ्कुमचन्दनम् ।
तद्गात्रे च गले हारममूल्यरत्ननिर्म्मितम् ॥ १५
सिन्दूरञ्च ददौ तस्याः सीमन्ताधःस्थलोज्ज्वले ।
दाड़िम्बकुसुमाकारं युक्तं चन्दनबिन्दुभिः ॥ १६
चकार पत्रकं गण्डे नानाचित्रविचित्रकम् ।
ददौ तत्पादपद्मे च रत्नमञ्जीररञ्जितम् ।
पादाङ्गुलिनखाग्रे च सिन्दूरालक्तकं ददौ ॥ १७
नानासुवेशज्वलितां तां निद्राकुलितां विभुः ।
पुनश्चकार मोहेन गाढ़ालिङ्गनमीप्सितम् ॥ १८
पुनश्च चुम्बनं कृत्वा निवेश्य च स्ववक्षसि ।
सुष्वाप जगतां स्वामी कान्ताविरहकातरः ॥ १९
एतस्मिन्नेव काले तु ब्रह्मा लोकपितामहः ।
शिव-शेषादिभिर्द्देवै र्मुनीन्द्रैः सार्द्धमाययौ ॥ २०
आगत्य नत्वा शिरसा तुष्टाव सम्पुटाञ्जलिः ।
सामवेदोक्तस्तोत्रेण परिपूर्णतमं विभुम् ॥ २१
ब्रह्मोवाच ।
जय जय जगदीश वन्दितचरण निर्गुण निराकार साकार स्वेच्छामय भक्तानुग्रहनित्यविग्रह गोपवेश मायया मायेश सुवेश सुशील शान्त सर्व्वकान्त दान्त नितान्तज्ञानानन्द परात्परतर प्रकृतेः

परं सर्व्वान्तरात्मस्वरूप निर्लिप्त साक्षिस्वरूप व्यक्ताव्यक्त निरञ्जन भारावतारण करुणागमन शोक-सन्ताप-जरा-मृत्यु-भयादिहरण शरणपञ्जर भक्तानुग्रहकातर भक्तवत्सल भक्तसञ्चितधन ओँ नमोऽस्तु ते ॥ २२ ॥
सर्व्वाधिष्ठातृदेवायेत्युक्त्वा प्रणम्य च पुनः पुनः।
उत्थाय च संमूर्च्छितो बभूव देवसंसदि (क)॥ २३
इति ब्रह्मकृतं स्तोत्रं यः शृणोति समाहितः।
तत्सर्व्वाभीष्टसिद्धिश्च भवत्येव न संशयः ॥ २४
अपुत्त्रो लभते पुत्त्रं प्रियाहीनो लभेत् प्रियाम्।
निर्द्धनो लभते सत्यं परिपूर्णतमं धनम् ॥ २५
इह लोके सुखं भुक्त्वा चान्ते दास्यं लभेद्धरेः।
अचलां भक्तिमाप्नोति मुक्तेरपि सुदुर्लभाम् ॥ २६
इति श्रीब्रह्मवैवर्त्ते ब्रह्मकृतं श्रीकृष्णस्तोत्रम्।
नारायण उवाच।
स्तुत्वा च जगतां धाता प्रणम्य च पुनः पुनः।
शनैः शनैः समुत्थाय भक्त्या पुनरुवाच सः ॥ २७
ब्रह्मोवाच।
उत्तिष्ठ देवदेवेश परमानन्दकारण।
नन्दनन्दन सानन्द नित्यानन्द नमोऽस्तु ते ॥ २८
व्रज नन्दालयं नाथ त्यज वृन्दावनं वनम्।
स्मर श्रीदामशापञ्च शतवर्षनिबन्धनम् ॥ २९
भक्तशापानुरोधेन शतवर्षं प्रियां त्यज।
पुनरेनाञ्च सम्प्राप्य गोलोकञ्च गमिष्यसि ॥ ३०
गत्वा पितृगृहं देव पश्चादक्रूरं समागतम्।
पितृव्यमतिथिं मान्यं धन्यं वैष्णवमीश्वर ॥ ३१
तेन सार्द्धं मधुपुरीं भगवन् गच्छ साम्प्रतम्।
कुरु शम्भोर्धनुर्भङ्गं सर्व्वं वैरिगणं हरे ॥ ३२
हन कंसं दुरात्मानं तातं बोधय मातरम्।
निर्म्माणं द्वारकायाश्च भारावतारणं भुवः ॥ ३३
दह वाराणसीं शम्भोः शक्रस्य दमनं विभो।
शिवस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनम् ॥ ३४
रुक्मिणीहरणं नाथ घातनं नरकस्य च।
षोड़शानां सहस्रञ्च स्त्रीणां पाणिग्रहं कुरु ॥ ३५
त्यज प्रियां प्राणसमां व्रजराज व्रजं व्रज।
उत्तिष्ठोत्तिष्ठ भद्रं ते यावद्राधा न जाग्रती ॥ ३६

(क) श्लोकेऽत्र च्छन्दोभङ्ग आर्षत्वाददोषायैव।

इत्येवमुक्त्वा ब्रह्मा च सेन्द्रैर्देवगणैः सह।
जगाम ब्रह्मलोकञ्च शेषश्च शङ्करस्तथा ॥ ३७
पुष्प-चन्दनवृष्टिञ्च कृष्णस्योपरि देवताः।
चक्रुः प्रीत्या च भक्त्या च वाग्बभूवाशरीरिणी ॥३८
वध कंसं वधार्हञ्च स्वपित्रोर्मोचनं कुरु।
हरं कुरु भुवो भारं नारदेत्येवमेव च ॥ ३९
इत्येवमेव श्रुत्वा च भगवान् भूतभावनः।
राधां भगवतीं त्यक्त्वा समुत्तस्थौ शनैः शनैः ॥ ४०
ययौ हरिः कियद्दूरं निरीक्ष्य च पुनः पुनः।
क्षणं तस्थौ चन्दनानां वने राससमीपतः ॥ ४१
विहाय निद्रां सा राधा समुत्तस्थौ स्वतल्पतः।
न निरीक्ष्य हरिं शान्तं कान्तञ्च प्राणवल्लभम् ॥ ४२
हा नाथ रमणश्रेष्ठ प्राणेश प्राणवल्लभ।
प्राणचौर प्रियतम क्व गतोऽसीत्युवाच ह ॥ ४३
क्षणमन्वेषणं कृत्वा बभ्राम मालतीवनम्।
उवास क्षणमुत्तस्थौ क्षणं सुष्वाप भूतले ॥ ४४
रुरोद क्षणमत्युच्चैर्विललाप मुहुर्मुहुः।
आगच्छागच्छ हे नाथ चेवमुक्त्वा पुनः पुनः ॥ ४५
मूर्च्छां सम्प्राप सन्तापात् सन्तप्ता विरहानलैः।
भूतले च तृणाच्छन्ने पपात च मृता यथा ॥ ४६
आययुस्तत्र गोप्यश्च ब्रह्मन् शतसहस्रशः।
काश्चिच्चामरहस्ता च गृहीत्वा चन्दनद्रवम् ॥ ४७
तासां मध्ये प्रियाली या कृत्वा राधां स्ववक्षसि।
मृतामिव प्रियां दृष्ट्वा रुरोद प्रेमविह्वला ॥ ४८
सजलं पङ्कजदलं पङ्कोपरि निधाय च।
स्थापयामास तां राधां निश्चेष्टाञ्च मृतामिव ॥ ४९
गोपीभिः सेवितां तत्र रुचिरैः श्वेतचामरैः।
चन्दनद्रवयुक्ताञ्च स्निग्धरश्म्यान्वितां सतीम्।
ददर्श कृष्णस्तत्रैत्य तामेव प्राणवल्लभाम् ॥ ५०
निवारितश्च गोपीभिर्वलिष्ठाभिश्च नारद।
यथा नीतः सापराधी दण्डग्री राजभटादिभिः॥ ५१
चकार राधां क्रोड़े च समागत्य कृपानिधिः।
चेतनां कारयामास बोधयामास बोधनैः ॥ ५२
सम्प्राप्य चेतनां देवी ददर्श प्राणवल्लभम्।
बभूव सुस्थिरा देवी तत्याज विरहज्वरम् ॥ ५३
चकार कान्तं सा कान्ता गाढ़ालिङ्गनमीप्सितम् ॥५४
नानाप्रकारशृङ्गारं चकार मधुसूदनः।

उवास रत्नतल्पे च राधां कृत्वा स्ववक्षसि ॥ ५५
राधासखी रत्नमाला विदग्धा च (क) सुपूजिता।
उवाच मधुरं वाक्यं नीतिसारमनुत्तमम् ॥ ५६

रत्नमालोवाच।

शृणु कृष्ण प्रवक्ष्यामि परिणामसुखावहम्।
हितं तथ्यं नीतिसारं दम्पत्योः प्रीतिकारणम् ॥ ५७
सम्मतं कामशास्त्रेषु नीतौ वेद-पुराणयोः।
लौकिकव्यवहारेषु प्रशंस्यं सुयशस्करम् ॥ ५८
नारीणाञ्च पिता माता प्रियो भ्राता च बन्धुषु।
ततः प्रियश्च पुत्त्रश्च पुत्त्रादेव प्रियः पतिः ॥ ५९
शतपुत्त्रात् परः स्वामी साध्वीनां साधुसम्मतः।
रसिकानां विदग्धानां न हि भर्त्तुः परः प्रियः ॥ ६०
यदि भर्त्ता विदग्धश्च विदग्धानां सुखावहः।
अन्यथा विषतुल्यश्च विषमश्चेत् खलः खलु ॥ ६१
संसारे च (ख) कृते चेत् सा दम्पत्योः प्रीतिरेव च।
परस्परञ्च समता प्रेमसौभाग्यमीप्सितम् ॥ ६२
दम्पत्योः समता नास्ति यत्र यत्र हि मन्दिरे।
अलक्ष्मीस्तत्र तत्रैव विफलं जीवनं तयोः ॥ ६३
सुस्वामिनां विभेदश्च परं दुःखञ्च योषिताम्।
शोक-सन्तापवीजञ्च जीविते मरणाधिकम् ॥ ६४
स्वप्ने जागरणे चापि पतिः प्राणाश्च योषिताम्।
पतिरेव गतिः स्त्रीणामिह लोके परत्र च ॥ ६५
अस्मात् त्वयि गते नाथे मूर्च्छां सम्प्राप राधिका।
पपात सहसा भूमौ तृणाच्छन्ने च भूतले ॥ ६६
मया दत्तं मुखेऽस्या हि शीतलं जलमुत्तमम्।
तदा श्वासो वभूवास्याश्चेतनञ्चाल्पमेव च ॥ ६७
क्षणं रोदिति सन्तप्ता मूर्च्छां प्राप्नोति तत्क्षणम् ६८
राधिकायाः शरीरञ्च सन्तप्तं विरहानलैः।
दग्धलौहयष्टिसममस्पृश्यमनलोपमम् ॥ ६९
स्वप्ने जागरणे रात्रौ दिवसे च गृहे वने।
जले स्थले चान्तरीक्षेऽप्युदये चन्द्र-सूर्ययोः ॥ ७०
नास्ति भेदश्च राधाया मृततुल्या जड़ाकृतिः।
शश्वत् पश्यति ध्यानस्था सर्व्वं विष्णुमयं जगत् ॥ ७१
स्निग्धपङ्के पङ्कजानां सजलानि दलानि च।
निपात्य तत्कृते तल्पे सुष्वाप विरहातुरा ॥ ७२

(क) विदग्धासु इति क्वचित् पाठः।
(ख) संसारे चाम्रतवत् सा इति क्वचित्।

सेविता सा प्रियालीभिः सततं श्वेतचामरैः।
चन्दनद्रवसंयुक्ता स्निग्धवस्त्रसमन्विता ॥ ७३
राधाङ्गस्पर्शमात्रेण पङ्कं सम्प्राप शुष्कताम्।
स्निग्धानि पद्मपत्राणि बभूवुर्भस्मसात् क्षणम् ॥ ७४
चन्दनं शुष्कतां प्राप वर्णाश्मकसन्निभः।
वभूव कज्जलाकारः केशः स्वर्णनिभो हरे ॥ ७५
सिन्दूरबिन्दू रुचिरः श्यामिकां प्राप तत्क्षणम्।
वेशो विलासो लीला च दूरीभूता बभूव ह ॥ ७६
विचार्य्य मनसा कृष्ण यत् तत् समुचितं कुरु।
न भवेत् कामिनीहत्या येन नीतिविशारद ॥ ७७
रत्नमालावचः श्रुत्वा प्रहस्योवाच माधवः।
हितं तथ्यं नीतिसारं परिणामसुखावहम् ॥ ७८

श्रीभगवानुवाच।

ईशो यद्यपि शक्तोऽहं निषेकं खण्डितुं प्रिये।
तथापि लङ्घनञ्चात्र नियतेन करोम्यहम् ॥ ७९
ब्रह्माण्डेषु च सर्व्वेषु मर्य्यादा स्थापिता मया।
तया कर्म्म प्रकुर्व्वन्ति मुनयश्च सुरा नराः ॥ ८०
श्रीदामशापाद्विच्छेदः शतवर्षमनीप्सितम्।
भविष्यत्येव दम्पत्योरावयोरेव सुन्दरि ॥ ८१
भेदो जागरणेऽस्याश्च मया सह सुमध्यमे।
संश्लेषः सततं स्वप्ने मद्वरेण भविष्यति ॥ ८२
आध्यात्मिको मया दत्तः शोकच्छेदो भविष्यति।
राधां बोधय भद्रं ते यास्यामि नन्दमन्दिरम् ॥ ८३
इत्युक्त्वा जगतां नाथो ययौ नन्दालयं प्रति।
राधिकां बोधयामासुरालीसङ्घाश्च नारद ॥ ८४
गत्वा गृहञ्च पितरं ननाम मातरं तथा।
उवास मातृक्रोड़े च नवनीतं (क) चखाद सः (ख)।
मातृदत्तञ्च ताम्बूलं स च तस्यै ददौ मुदा ॥ ८५

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे एकोन
सप्ततितमोऽध्यायः ॥ ६९ ॥

(क) लीलाटञ्च चखाद सः इति वा पाठः।
(ख) क्वचित् पुस्तके "चखाद सः" इत्यनन्तरम्—
मातृदत्तञ्च ताम्बूलं चखाद शीतलं जलम्।
उवास तत्र जगतां नाथो मातृसमीपतः।
सर्व्वैर्गोपसमूहैश्च सेवितः श्वेतचामरैः।
माल्य-चन्दन-ताम्बूलं ते च तस्मै ददुर्मुदा।
ईदृक्पाठान्तोऽध्यायसमाप्तिर्दृश्यते।

## सप्ततितमोऽध्यायः।

नारायण उवाच।

अथाक्रूरः स्वभवनं गत्वा कंसेन प्रेरितः।
चकार शयनं तल्पे भुक्त्वा मिष्टान्नमुत्तमम्॥ १
सकर्पूरञ्च ताम्बूलं चखाद वासितं जलम्।
जगाम निद्रां सुखतः सुखसम्भोगमाश्रतः॥ २
ततो ददर्श सुस्वप्नं पुराणश्रुतिसम्मतम्।
निशावशेषसमये वाध्यादिपरिवर्ज्जितः॥ ३
अरोगी बहुकेशश्च वस्त्रयुग्मसमन्वितः।
सुतल्पशायी सुस्निग्धश्चिन्ता-शोकविवर्ज्जितः॥ ४
किशोरवयसं श्यामं द्विभुजं मुरलीकरम्।
पीतवस्त्रपरीधानं वनमालाविभूषितम्॥ ५
चन्दनोक्षितसर्व्वाङ्गं मालतीमाल्यशोभितम्।
भूषितं भूषणार्हञ्च सद्रत्नमणिभूषणैः॥ ६
मयूरपुच्छचूड़ञ्च सस्मितं पद्मलोचनम्।
एवम्भूतं द्विजशिशुं ददर्श प्रथमे मुने॥ ७
ततो ददर्श रुचिरां पतिपुत्त्रवतीं सतीम्।
पीतवस्त्रपरीधानां रत्नभूषणभूषिताम्॥ ८
ज्वलत्प्रदीपहस्ताञ्च शुक्लधान्यकरां वराम्।
शरच्चन्द्रनिभास्याञ्च सस्मितां वरदां शुभाम्॥ ९
ततो ददश विप्रञ्च प्रकुर्व्वन्तं शुभाशिषम्।
श्वेतपद्मं राजहंसं तुरङ्गञ्च सरोवरम्॥ १०
ददर्श चित्रितं चारु फलितं पुष्पितं शुभम्।
आम्र-निम्ब-नारिकेल-गुवाक-कदलीतरुम्॥ ११
दशन्तं (क) श्वेतसर्पञ्च स्वात्मानं पर्व्वतस्थितम्।
वृक्षस्थञ्च गजस्थञ्च तरिस्थं तुरगस्थितम्॥ १२
वीणां वादितवन्तञ्च भुक्तवन्तञ्च पायसम्।
दधि-क्षीरयुतान्नञ्च पद्मपत्रस्थमीप्सितम्।
शुक्लधान्य-पुष्पकरं चर्णं चन्दनचर्चितम्॥ १३
ततो ददर्श रजतं मणिशुभ्रञ्च काञ्चनम्।
मुक्तामाणिक्यरत्नञ्च पूर्णकुम्भं घनं जलम्॥ १४
सुरभीञ्च सवत्साञ्च वृषभेन्द्रं मयूरकम्।
शुक्लञ्च सारसं शङ्खचिल्लं खञ्जनमेव च॥ १५
ताम्बूलं पुष्पमाल्यञ्च ज्वलदग्निं सुरार्च्चनम्।
पार्व्वतीप्रतिमां कृष्णप्रतिमां शिवलिङ्गकम्॥ १६
विप्रबालाञ्च बालञ्च सुपक्वफलितां कृषिम्।
देवस्थलीञ्च राजेन्द्रं सिंहं व्याघ्रं गुरुं सुरम्॥ १७
दृष्ट्वा स्वप्नं समुत्तस्थौ चकाराह्निकमीप्सितम्।
उद्धवं कथयामास सर्व्ववृत्तान्तमेव च॥ १८
उद्धवाज्ञां समादाय कृत्वा गुरु-सुरार्च्चनम्।
यात्रां चकार श्रीकृष्णं ध्यात्वा मनसि नारद॥ १९
ददर्श वर्त्मन्येवञ्च मङ्गलार्हं शुभप्रदम्।
वाञ्छाफलप्रदं रम्यं पुरो मङ्गलसूचकम्॥ २०
वामे शव-शिवां पूर्णकुम्भं नकुलचाषकम्।
पतिपुत्त्रवतीं साध्वीं दिव्याभरणभूषिताम्॥ २१
शुक्लपुष्पञ्च माल्यञ्च धान्यञ्च खञ्जनं शुभम्।
दक्षिणे ज्वलनञ्चैव विप्रञ्च वृषभं गजम्॥ २२
वत्सप्रयुक्तां धेनुञ्च श्वेताश्वं राजहंसकम्।
वेश्याञ्च पुष्पमाल्यञ्च पताका-दधि-पायसम्॥ २३
मणिं सुवर्णं रजतं मुक्तामाणिक्यमीप्सितम्।
सद्योमांसं चन्दनञ्च माध्वीकं घृतमुत्तमम्॥ २४
कृष्णसारं फलं लाजान् सिद्धार्थं दर्पणं तथा।
विचित्रितं विमानञ्च सुदीप्तां प्रतिमां शुभाम्॥ २५
शुक्लोत्पलं पद्मवनं शङ्खचिल्लं चकोरकम्।
मार्ज्जारं पर्व्वतं मेघं मयूर-शुक-सारसम्॥ २६
शङ्ख-कोकिल-वाद्यानां ध्वनिं शुश्राव मङ्गलम्।
विचित्रं कृष्णसङ्गीतं हरिशब्दं जयध्वनिम्॥ २७
एवम्भूतं शुभं दृष्ट्वा श्रुत्वा प्रहृष्टमानसः।
प्रविवेश हरिं स्मृत्वा पुण्यं वृन्दावनं वनम्॥ २८
ददर्श पुरतो रम्यं रासमण्डलमीप्सितम्।
चन्दनागुरुकस्तूरी-पुष्पचन्दनवायुना॥ २९
वासितं मङ्गलघटै रम्भास्तम्भविराजितम्।
आम्रपल्लवसङ्घैश्च पट्टसूत्रविचित्रितैः॥ ३०
शोभितैः परितः शश्वत् पद्मरागविनिन्दितैः (क)।
शोभितं शोभनाढ्यञ्च त्रिकोटिरत्नमन्दिरैः॥ ३१
रम्यैः कुञ्जकुटीरैश्च राजितं शतकोटिभिः।
रासं वृन्दावनं दृष्ट्वा कियद्दूरं ययौ च सः॥ ३२
ददर्श पुरतो रम्यं नन्दव्रजमनुत्तमम्।
परं वैकुण्ठसङ्काशं वैकुण्ठनिलयं शुभम्॥ ३३
रत्नसोपानसंयुक्तं रत्नस्तम्भैर्विराजितम्।
नानाचित्रविचित्राढ्यं सद्रत्नवलयान्वितम्।

(क) श्वसन्तं इति पाठान्तरम्।

(क) पद्मरागविनिर्म्मितमिति वा पाठः।

खचितं मणिसारेण रचितं विश्वकर्म्मणा ॥ ३४
द्वारिदिष्टेन मार्गेण राजद्वारं विवेश सः ।
पताकारत्नजालाढ्यं मुक्तामाणिक्यभूषितम् ॥ ३५
रत्नदर्पणशोभाढ्यं रत्नचित्रविचित्रितम् ।
रत्नवीथीविरचितं मङ्गल्यं मङ्गलैर्घटैः ॥ ३६
अथ नन्दोऽतिशाह्लादो वृषभान्वादिभिर्युतः ।
सहितो राम-कृष्णाभ्यां जगामानुव्रजाय वै ॥ ३७
अक्रूरागमनं श्रुत्वा कृत्वा वेश्मां पुरःसराम् ।
पूर्णकुम्भं गजेन्द्रञ्च कृत्वाग्र शुक्लधान्यकम् ॥ ३८
कृष्णां गां मधुपर्कञ्च पाद्यं रत्नासनादिकम् ।
गृहीत्वा सादरः शान्तः सस्मितो विनतस्तथा ॥ ३९
आनन्दयुक्तो नन्दश्च सगणः सहबालकः ॥ ४०
दृष्ट्वाऽक्रूरं महाभागं तूर्णमालिङ्गनं ददौ ।
प्रणेमुः शिरसा सर्व्वे गोपा जगद्गुराशिषम् ॥ ४१
परस्परञ्च संयोगो बभूव गुणवान् मुने ।
क्रोड़े चकाराक्रूरश्च कृष्णं रामं क्रमेण च ॥ ४२
चुचुम्ब गण्डयुगले पुलकाञ्चितविग्रहः ।
साश्रुनेत्रोऽतिशाह्लादः कृतार्थः सिद्धवाञ्छितः ॥ ४३
ददर्श कृष्णं द्विभुजं क्षणं श्यामलसुन्दरम् ।
पीतवस्त्रपरीधानं मालतीमाल्यभूषितम् ॥ ४४
चन्दनोच्चितसर्व्वाङ्गं परं वंशीधरं वरम् ।
स्तुतं ब्रह्मेश-शेषाद्यैर्मुनीन्द्रैः सनकादिभिः ।
वीक्षितं गोपकन्याभिः परिपूर्णतमं विभुम् ॥ ४५
क्षणं ददर्श क्रोड़स्थं सस्मितञ्च चतुर्भुजम् ।
लक्ष्मी-सरस्वतीयुक्तं वनमालाविभूषितम् ॥ ४६
सुनन्द-नन्द-कुमुदैः पार्षदैः परिसेवितम् ।
सेवितं सिद्धसङ्घैश्च वेदमन्त्रैः परात्परम् ॥ ४७
क्षणं ददर्श तं देवं पञ्चवक्त्रं त्रिलोचनम् ।
शुद्धस्फटिकसङ्काशं नागराजैर्विराजितम् ॥ ४८
दिगम्बरं परं ब्रह्म भस्माङ्गञ्च जटाजुषम् ।
जपमालाकरं ध्याननिष्ठं श्रेष्ठञ्च योगिनाम् ॥ ४९
क्षणं चतुर्म्मुखं ध्याननिष्ठं श्रेष्ठं मनीषिणाम् ।
क्षणं धर्म्मस्वरूपञ्च शेषरूपं क्षणं क्षणम् ॥ ५०
क्षणं भास्कररूपञ्च चन्द्ररूपं द्विजात्मकम् ।
क्षणं प्रकृतिरूपञ्च तेजोरूपं सनातनम् ॥ ५१
क्षणं परमशोभाढ्यं कोटिकन्दर्पनिन्दितम् ।
कामिनीकमनीयञ्च कामुकं कामसंयुतम् ॥ ५२
एवम्भूतं विभुं दृष्ट्वा स्थापयामास वक्षसि ।
रत्नसिंहासने रम्ये नन्ददत्ते च नारद ॥ ५३
कृत्वा प्रदक्षिणं भक्त्या पुलकाञ्चितविग्रहः ।
प्रणम्य शिरसा भूमौ तुष्टाव पुरुषोत्तमम् ॥ ५४

अक्रूर उवाच ।

नमः कारणरूपाय परमात्मस्वरूपिणे ।
सर्व्वेषामपि विश्वेषामीश्वराय नमो नमः ॥ ५५
पराय प्रकृतेरीशपरात्परतराय च ।
निर्गुणाय निरीहाय नीरूपाय स्वरूपिणे ॥ ५६
सर्व्वदेवस्वरूपाय सर्व्वदेवेश्वराय च ।
सर्व्वदेवाधिदेवाय विश्वादिभूतरूपिणे ॥ ५७
असंख्येषु च विश्वेषु ब्रह्म-विष्णु-शिवात्मकः ।
स्वरूपायादिवीजाय तदीश विश्वरूपिणे ॥ ५८
नमो गोपाङ्गनेशाय गणेशेश्वररूपिणे ।
नमः सुरगणेशाय राधेशाय नमो नमः ॥ ५९
राधारमणरूपाय राधारूपधराय च ।
राधाराध्याय राधायाः प्राणाधिकपराय च ॥ ६०
राधाधाराय राधाधि-देवप्रियतमाय च ।
राधाप्राणाधिदेवाय विश्वरूपाय ते नमः ॥ ६१
वेदस्तुताय वेदाङ्ग-रूपिणे वेदरूपिणे ।
वेदाधिष्ठातृदेवाय वेदवीजाय ते नमः ॥ ६२
यस्य लोमसु विश्वानि चासंख्यानि च नित्यशः ।
महाविष्णोरीश्वराय विश्वेशाय नमो नमः ॥ ६३
स्वयं प्रकृतिरूपाय प्राकृताय नमो नमः ।
प्रकृतीश्वररूपाय प्रधानपुरुषाय च ॥ ६४
इत्येवं स्तवनं कृत्वा मूर्च्छामाप सभातले ।
पपात सहसा भूमौ पुनरीशं ददर्श सः ॥ ६५
वहिःस्थं हृदयस्थञ्च परमात्मानमीश्वरम् ।
परितः श्यामरूपञ्च विश्वस्थं विश्वमेव च ॥ ६६
अक्रूरं मूर्च्छितं दृष्ट्वा नन्दः सादरपूर्व्वकम् ।
रत्नसिंहासने रम्ये वासयामास नारद ॥ ६७
पप्रच्छ सर्व्ववृत्तान्तं किञ्चिद्दृष्टमिति त्वया ।
मिष्टान्नं भोजयामास कुशलञ्च पुनः पुनः ॥ ६८
अक्रूरः कथयामास कंसवृत्तान्तमीप्सितम् ।
स्वपित्रोर्मोक्षणार्थञ्च गमनं रामकृष्णयोः ॥ ६९
इत्यक्रूरकृतं स्तोत्रं यः पठेत् सुसमाहितः ।
अपुत्रो लभते पुत्रमभार्य्यो लभते प्रियाम् ॥ ७०

अधनो धनमाप्नोति निर्भूमिरतुलां महीम् ।
हतप्रजः प्रजां लेभे प्रतिष्ठाह्यप्रतिष्ठितः ।
यशः प्राप्नोति विपुलमयशस्वी च लीलया ॥ ७१

इति श्रीब्रह्मवैवर्त्तेऽक्रूरकृतं श्रीकृष्णस्तोत्रम् ।

नारायण उवाच ।

अथ सुष्वाप गन्तुं स परं प्रहृष्टमानसः ।
रम्ये चम्पकतल्पे च कृष्णं कृत्वा स्ववक्षसि ॥ ७२
प्रातरुत्थाय सहसा कृत्वाह्निकमनुत्तमम् ।
स्वरथे स्थापयामास रामकृष्णं जगत्पतिम् ॥ ७३
गव्यं पञ्चप्रकारञ्च नानाद्रव्यं सुदुर्लभम् ।
वृषभानञ्च नन्दञ्च सुनन्दं चन्द्रभानकम् ॥ ७४
नानाप्रकारवाद्यञ्च मृदङ्गमुरजादिकम् ।
पटहं पणवञ्चैव ढक्कां दुन्दुभिमानकम् ॥ ७५
सज्जां सन्नहनीं कांस्यं पटमर्द्दनमण्डवीम् ।
वादयामास सानन्दं नन्दगोपो व्रजेश्वरः ॥ ७६
श्रुत्वा वाद्यञ्च गोप्यश्च गमनं रामकृष्णयोः ।
दृष्ट्वा कृष्णं रथस्थञ्च आययुः कोपपीड़िताः ॥ ७७
कृष्णेन वारिताः सर्व्वाः प्रेरिता राधया द्विज ।
बभञ्जुरीश्वररथं पदाघातेन लीलया ॥ ७८
तत्र सर्व्वेषु गोपेषु हाहाकारकृतेषु च ।
प्रययुर्बलवत्यश्च कृष्णं कृत्वा स्ववक्षसि ॥ ७९
काचित् क्रूरं तमक्रूरं भर्त्सयामास कोपतः ।
काश्चिद्बद्ध्वा च वस्त्रेण चाक्रूरं प्रययुस्ततः ॥ ८०
काचित् तं ताड़यामास कङ्कणेन करेण च ।
तद्वस्त्रं हारयामास कृत्वा विवसनं मुने ॥ ८१
हतविक्षतसर्व्वाङ्गं दृष्ट्वाऽक्रूरञ्च माधवः ।
जगाम राधामूलञ्च बोधयामास तां पुनः ॥ ८२
आध्यात्मिकेन नीतेन विनयेन च सादरम् ।
अक्रूरं मोचयास बोधयामास तां विभुः ॥ ८३
आकाशात् पतितं दिव्यमिन्द्रप्रस्थापितं रथम् ।
विचित्रवस्त्रसंयुक्तं ददर्श पुरतो विभुः ॥ ८४
खचितं मणिराजेन रचितं विश्वकर्म्मणा ।
तं दृष्ट्वा मातृभवनमाजगाम जगत्पतिः ॥ ८५
भुक्त्वा पीत्वा सुखं सुप्त्वा गमने च सबान्धवः ।
तस्थौ मुनीन्द्र-देवेन्द्र-ब्रह्मेश-शेषवन्दितः ॥ ८६
सुषुपुर्गोपिकाः सर्व्वाः परं प्रहृष्टमानसाः ।
पुष्पतल्पेऽतिरम्ये च राधया सह नारद ॥ ८७
सर्व्वे सानन्दयुक्ताश्च जना गोकुलवासिनः ।
केचिद्वीणाश्च ननृतुः केचित् सङ्गीततत्पराः ॥ ८८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे गोपीविषयः सप्ततितमोऽध्यायः ॥७०॥

---

## एकसप्ततितमोऽध्यायः ।

नारायण उवाच ।

राधिकायाञ्च सुप्तायां सुप्तासु गोपिकासु च ।
पुष्पचन्दनतल्पे च वायुना सुरभीकृते ॥ १
तृतीयप्रहरेऽतीते निशायाश्च शुभक्षणे ।
शुभचन्द्रस्य योगे चामृतयोगसमन्विते ॥ २
सौम्यस्वामियुते लग्ने सौरग्रहविलोकने ।
पापग्रहसमासक्त-दृष्टदोषविवर्ज्जिते ॥ ३
यशोदां बोधयामास कारयामास मङ्गलम् ।
बन्धूनावासयामास समुत्थाय हरिः स्वयम् ॥ ४
वाद्यं निषेधयामास राधिकाभयभीतवत् ।
स्वतन्त्रो विश्वकर्त्ता च पाता भर्त्ताऽस्वतन्त्रवत् ॥ ५
प्रक्षाल्य पादयुगलं धृत्वा धौते च वाससी ।
उवास संस्कृते स्थाने विलिप्ते चन्दनादिना ॥ ६
फलपल्लवसंयुक्तं संस्कृतं चन्दनादिभिः ।
वामे कृत्वा पूर्णकुम्भं वह्निं विप्रं स्वदक्षिणे ।
पतिपुत्रवतीं दीपं दर्पणं पुरतस्तथा ॥ ७
दूर्व्वाकाण्डञ्च सुस्निग्धं पुष्पं धान्यं सितं शुभम् ।
गुरुदत्तं गृहीत्वा च प्रददौ मस्तकोपरि ॥ ८
घृतं ददर्श माध्वीकं रजतं काञ्चनं दधि ।
चन्दनं लेपनं कृत्वा पुष्पमालां गले ददौ ॥ ९
गुरुवर्गं ब्राह्मणञ्च वन्दयामास भक्तितः ॥ १०
शङ्खध्वनिं वेदपाठं सङ्गीतमङ्गलाष्टकम् ।
विप्राशीर्व्वचनं रम्यं शुश्राव परमादरम् ॥ ११
ध्यात्वा मङ्गलरूपञ्च सर्व्वत्र मङ्गलप्रदम् ।
चिक्षेप दक्षिणपदं सुन्दरं स्वात्मविग्रहम् ॥ १२
विधृत्य नासिकावामभागं मध्यमया विभुः ।
विसृज्य वायुमिष्टञ्च नासादक्षिणरन्ध्रतः ॥ १३
ततो ययौ नन्दनन्दो नन्दस्य प्राङ्गणं वरम् ।
सानन्दः परमानन्दो नित्यानन्दः सनातनः ॥ १४

नित्योऽनित्यो नित्यबीज-स्वरूपो नित्यविग्रहः ।
नित्याङ्गभूतो नित्येशो नित्यकृत्यविशारदः ॥ १५
नित्यनूतनरूपश्च नित्यनूतनयौवनः ।
नित्यनूतनवेशश्च वयसा तिव्यनूतनः ॥ १६
नित्यनूतनसम्भाषो यत्प्रेम नित्यनूतनम् ।
नित्यनूतनसम्प्राप्तिः सौभाग्यं नित्यनूतनम् ॥ १७
सुधारसपरं मिष्टं यद्वाक्यं नित्यनूतनम् ।
नित्यनूतनभक्तश्च यत्पदं नित्यनूतनम् ॥ १८
स्मारं स्मारं प्राङ्गणेऽस्मिन् मायेशो मायया युतः ।
अतीव रम्ये सुस्निग्धे बभूव गमनोन्मुखः ॥ १९
रम्भास्तम्भसमूहैश्च रसालपल्लवान्वितैः ।
पट्टसूत्रनिबद्धैश्च सुन्दरैश्च समन्विते ॥ २०
पद्मरागेण खचिते रचिते विश्वकर्म्मणा ।
कस्तूरीकुङ्कुमाक्तैश्च चन्दनैश्च सुसंस्कृते ॥ २१
तत्र तस्थौ चर्णं कृष्णः सहाक्रूरः सबान्धवः ।
यशोदया समाश्लिष्टो वामपार्श्वेन मायया ॥ २२
नन्देनानन्दयुक्तेन श्लिष्टो दक्षिणपार्श्वतः ।
सम्भाषितो बान्धवैश्च पित्रा मात्रा च चुम्बितः ॥२३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायणनारदसंवादे यात्रामङ्गलं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

## द्विसप्ततितमोऽध्यायः ।

नारायण उवाच ।

अथ कृष्णो गुरुं नत्वा निर्गम्य शिविरान्मुने ।
आरुह्य स्वर्गयानञ्च शुभां मधुपुरीं ययौ ॥ १
विवेश मथुरां रम्यां सहाक्रूरगणैः समम् ।
निर्ज्जित्य शक्रनगरीं शोभायुक्तां मनोहराम् ॥ २
रत्नश्रेष्ठेन खचितां रचितां विश्वकर्म्मणा ।
अमूल्यरत्नकलसैः राजितैश्च विराजिताम् ॥ ३
राजमार्गशतैर्वेष्टैर्वेष्टितां रुचिरैर्वरैः ।
चन्द्राकारैश्चन्द्रसारैर्मणिभिः परिसंस्कृतैः ॥ ४
विचित्रैर्मणिसारैश्च वीथीशतविनिर्म्मितैः ।
शोभितां वणिजां श्रेष्ठैः पण्यवस्तुसमन्वितैः ॥ ५
सरोवरसहस्रैश्च परितः परिशोभिताम् ।
शुद्धस्फटिकसङ्काशैः पद्मरागविराजितैः ॥ ६
रत्नालङ्कारभूषाढ्यैः शोभितां पद्मिनीगणैः ।
स्थिरयौवनसंयुक्तैर्निमेषरहितैः परैः ॥ ७
सहसैरूर्द्ध्ववदनैः कृष्णदर्शनलालसैः ।
भ्रूभङ्गलीलालोलैश्च शश्वच्चञ्चललोचनैः ॥ ८
शश्वत्क्षामसमायुक्तैः पीनश्रोणिपयोधरैः ।
कोमलाङ्गैर्मध्यकृशैः रतिवासविशारदैः ॥ ९
रत्ननिर्म्माणयानानां कोटिभिः परिशोभिताम् ।
भूषणैर्भूषिताभिश्च चित्रिताभिश्च चित्रकैः ॥ १०
नानाप्रकारशोभायुक्तां पुष्पोद्यानत्रिकोटिभिः ।
नानापुष्पैः पुष्पिताभिर्युक्ताभिर्मधुसूदनैः ॥ ११
माधुर्य्यमधुसंसक्तैर्मधुलुब्धैर्मदान्वितैः ।
माध्वीकमदमत्तैश्च युक्तैर्मधुकरीचयैः ॥ १२
नानाप्रकारदुर्गैश्च दुर्गम्यां वैरिणां वरैः ।
रक्षितां रक्षकैः शश्वद्रक्षकाणां (क) विशारदैः ॥१३
त्रिकोट्यट्टालिकाभिश्च संसक्तां सुमनोहराम् ।
रचिताभिश्च सद्रत्नैर्विचित्रैर्विश्वकर्म्मणा ॥ १४
एवम्भूताञ्च मथुरां दृष्ट्वा कमललोचनः ।
ददर्श पथि कुब्जां तां वृद्धामतिजरातुराम् ॥ १५
यान्तीं दण्डसहायेनैवातिनम्रां चलद्वलिम् ।
रूक्षितां विकृताकारां बिभ्रतीं चन्दनद्रवम् ॥ १६
कस्तूरी-कुङ्कुमाक्तञ्च स्वर्णपात्रेण नारद ।
सुगन्धिमकरन्देन गन्धाढ्यं सुमनोहरम् ॥ १७
सा दृष्ट्वा सस्मिता वृद्धा श्रीकान्तं शान्तमीश्वरम् ।
श्रीयुतं श्रीनिवासं तं श्रीबीजं श्रीनिकेतनम् ॥ १८
प्रणम्य सहसा मूर्द्ध्ना भक्तिनम्रा पुटाञ्जलिः ।
प्रददौ चन्दनं तस्य गात्रे श्यामलसुन्दरे ॥ १९
गात्रेषु तरुणानाञ्च स्वर्णपात्रकरा वरा ।
कृत्वा प्रदक्षिणं कृष्णं प्रणनाम पुनः पुनः ॥ २०
श्रीकृष्णदृष्टिमात्रेण श्रीयुता सा बभूव ह ।
सहसा श्रीसमा रम्या रूपेण यौवनेन च ॥ २१
वह्निशुद्धांशुकवसना रत्नभूषणभूषणा ।
यथा द्वादशवर्षीया कन्या धन्या मनोहरा ॥ २२
बिम्बोष्ठी सस्मिता श्यामा तप्तकाञ्चनसन्निभा ।
सुश्रोणी सुदती बिल्व-फलतुल्यपयोधरा ॥ २३
अमूल्यरत्ननिर्म्माण-हारसारविराजिता ।
गजेन्द्रराजगमना रत्नमञ्जीररञ्जिता ॥ २४

(क) रक्षाशास्त्रविशारदैरिति पाठान्तरम् ।

बिभ्रती कबरीभारं मालतीमाल्यवेष्टितम्।
वह्नितं वामभागेन रुचिरं वर्त्तुलाकृतम्॥ २५
सिन्दूरबिन्दुं दधती दाड़िम्बकुसुमाकृतम्।
कस्तूरीबिन्दुमुपरि सार्द्धं चन्दनबिन्दुभिः॥ २६
रत्नदर्पणहस्ता च प्रशस्ता रतिकर्म्मसु।
श्रीकृष्णं रमयामास लीललोचनकोणतः॥ २७
श्रीकृष्णस्तां समाश्वास्य ययौ स्थानान्तरं परम्।
कृतार्थरूपा सा श्रीव ययौ स्वभवनं सती॥ २८
सा ददर्श स्वभवनं यथा पद्मालयालयम्।
रत्नशय्याविरचितं सद्रत्नसारनिर्म्मितम्॥ २९
रत्नप्रदीपराजीभी राजितामिश्च राजितम्।
रत्नदर्पणराजैश्च राजितं परितस्ततः॥ ३०
सिन्दूरवस्त्रताम्बूल-श्वेतचामरमाल्यकम्।
बिभ्रतीभिश्च दासीभिर्वेष्टितं दाससङ्घकैः॥ ३१
तत्र गत्वा च भुक्त्वा च मिष्टान्नं सुमनोहरम्।
सुष्वाप रत्नपर्य्यङ्के सा दासीभिश्च सेविता॥ ३२
सकर्पूरञ्च ताम्बूलं कस्तूरीकुङ्कुमान्वितम्।
चन्दनं स्थापयामास स्वतल्पे हरये सती॥ ३३
मालतीमाल्ययुगलं कर्पूरादिसुवासितम्।
शीतलं सलिलं स्वादु मिष्टान्नं स्वसमीपतः॥ ३४
कर्म्मणा मनसा वाचा चिन्तयन्ती हरेः पदम्।
हरेरागमनञ्चापि मुखचन्द्रं मनोहरम्॥ ३५
जगत् कृष्णमयं पश्यत् पश्यन्ती कामुकी मुने।
कोटिकन्दर्पलीलाभं कामासक्ता च कामुकम्॥ ३६
ततो ददर्श श्रीकृष्णो मालाकारं मनोहरम्।
मालासमूहं बिभ्रन्तं गच्छन्तं राजमन्दिरम्॥ ३७
सोऽपि दृष्ट्वा च श्रीकान्तं प्रणम्य शिरसा भुवि।
ददौ माल्यसमूहञ्च कृष्णाय परमात्मने॥ ३८
कृष्णस्तस्मै वरं दत्त्वा स्वदास्यमतिदुर्लभम्।
माल्यं गृहीत्वा प्रययौ राजमार्गं (क) नवं नवम्॥३९
ततो ददर्श रजकं बिभ्रन्तं वस्त्रपुञ्जकम्।
अहङ्कृतं बलिष्ठञ्च सन्ततं यौवनोद्धतम्॥ ४०
वस्त्रं ययाचे तं कृष्णो विनयेन महामुने।
स तस्मै न ददौ वस्त्रं तमुवाच च निष्ठुरम्॥ ४१

रजक उवाच।

गोरक्षकाणां योग्यं न वस्त्रमेतत् सुदुर्लभम्।
राजयोग्यन्तु हे मूढ़ हे गोपजनवल्लभ॥ ४२
गृहीत्वा गोपकन्याश्च कन्यालोलुप लम्पट।
यद्विहारः कृतस्तत्र वृन्दारण्येऽप्यराजके॥ ४३
न च एतादृशं कर्म्म राज्ञः कंसस्य वर्त्मनि।
विद्यमानोऽत्र राजेन्द्रः शास्ता दुष्टस्य तत्क्षणम्॥४४
रजकस्य वचः श्रुत्वा जहास मधुसूदनः।
जहास बलदेवश्च सोऽक्रूरो गोपवर्गकः॥ ४५
तं निहत्य चपेटेन जग्राह वस्त्रपुञ्जकम्।
वस्त्रं स धारयामास श्रीकृष्णः सद्गुणस्तथा॥ ४६
रत्नयानेन गोलोकं पार्षदैर्वेष्टितेन च।
ययौ रजकराजश्च धृत्वा दिव्यकलेवरम्॥ ४७
शश्वद्यौवनयुक्तञ्च जरामृत्युहरं वरम्।
पीतवस्त्रसमायुक्तं सस्मितं श्यामसुन्दरम्॥ ४८
बभूव सोऽपि गोलोके पार्षदेषु च पार्षदः।
कृष्णस्यागमनं तत्र सस्मार सततं वशी॥ ४९
अस्तं गतो दिनकरोऽप्यक्रूरः स्वगृहं ययौ।
कृष्णस्यानुमतिं प्राप्य कृष्णोऽपि कस्यचिद्गृहम्॥ ५०
वैष्णवस्य कुविन्दस्य तस्मिन् न्यस्तधनस्य च।
सानन्दो नन्दसहितो बलदेवो बलैर्युतः॥ ५१
स भक्तः पूजयामास प्रणम्य श्रीनिकेतनम्।
तस्मै ददौ स्वदास्यञ्च वरं ब्रह्मादिदुर्लभम्॥ ५२
पर्य्यङ्के सुषुपुः सर्व्वे भुक्त्वा मिष्टान्नमुत्तमम्।
निद्राञ्च लेभे सा कुब्जा निद्रेशोऽभिययौ मुदा॥ ५३
गत्वा ददर्श कुब्जां तां रत्नतल्पे च निद्रिताम्।
दासीगणैः परिवृतां सुन्दरीं कमलामिव॥ ५४
बोधयामास तां कृष्णो न दासीश्चापि निद्रिताः।
तामुवाच जगन्नाथो जगन्नाथप्रियां शुभाम्॥ ५५

श्रीभगवानुवाच।

त्यज निद्रां महाभागे शृङ्गारं देहि सुन्दरि।
पुरा शूर्पणखा त्वं हि भगिनी रावणस्य च॥ ५६
तपःप्रभावान्मां कान्तं भज श्रीकृष्णजन्मनि।
रामजन्मनि यद्धेतोस्त्वया कान्ते तपः कृतम्॥ ५७
अधुना सुखसम्भोगं कृत्वा गच्छ ममालयम्।
सुदुर्लभञ्च गोलोकं जरामृत्युहरं परम्॥ ५८
इत्युक्त्वा श्रीनिवासश्च कृत्वा तामेव वक्षसि।
नग्नां चकार शृङ्गारं चुम्बनञ्चापि कामुकीम्॥ ५९
सा सस्मिता च श्रीकृष्णं नवसङ्गम सङ्गता।

(क) वरं वरः इति क्वचित्।

चुचुम्ब गण्डे क्रोड़े तं चकार कमला यथा ॥ ६०
सुरतेविरतिर्नास्ति दम्पती रतिपण्डितौ।
नानाप्रकारसुरतिर्बभूव तत्र नारद ॥ ६१
स्तन-श्रोणियुगं तस्या विचतञ्च चकार च।
भगवान् नखरैस्तीक्ष्णैर्दशनैरधरं वरम् ॥ ६२
निशान्तसमये वीर्य्याधानं चकार सः।
सुखसम्भोगभोगेन मूर्च्छामाप च सुन्दरी ॥ ६३
तदवस्था च सा भद्रा कृष्णवक्षःस्थलस्थिता।
बुबुधे न दिवारात्रं स्वर्गं मर्त्त्यं स्थलं जलम् ॥ ६४
सुप्रभाता च रजनी बभूव रजनीपतिः।
पत्युर्व्यतिक्रमेणैव लज्जयैव मलीमसः ॥ ६५
अथाजगाम गोलोकाद्रथं रत्नविनिर्म्मितम्।
जगाम तेन तं लोकं धृत्वा दिव्यकलेवरम् ॥ ६६
वह्निशुद्धांशुकाधानं रत्नभूषणभूषितम्।
प्रतप्तकाञ्चनाभासं नित्यं जन्मादिवर्ज्जितम् ॥ ६७
सा बभूव च तत्रैव गोपी चन्द्रमुखी मुने।
गोप्यः कतिविधास्तस्या बभूवुः परिचारिकाः ॥ ६८
भगवानपि तत्रैव चणं स्थित्वा तु मन्दिरम्।
जगाम यत्र नन्दश्च सानन्दो नन्दनन्दनः ॥ ६९
अथ कंसो निशायाञ्च निद्रायां भयविह्वलः।
ददर्श दुःखी दुःस्वप्नमात्मनो मृत्युसूचकम् ॥ ७०
ददर्श सूर्य्यं भूमिष्ठं चतुःखण्डं नभश्च्युतम्।
दशखण्डं चन्द्रबिम्बं भूमिष्ठं खच्युतं मुने ॥ ७१
पुरुषान् विकृताकारान् वज्रहस्तान् ददर्श च।
विधवां शूद्रपत्नीञ्च नग्नाञ्च छिन्ननासिकाम् ॥ ७२
हसन्तीं चूर्णतिलकां श्वेतवस्त्रञ्च मूर्द्धजम्।
खड्गखर्परहस्ताञ्च लोलजिह्वाञ्च बिभ्रतीम् ॥ ७३
ओड्रमालासमायुक्तां गर्द्दभं महिषं वृषम्।
शूकरं भल्लुकं काकं गृध्रं कङ्कञ्च वानरम् ॥ ७४
विरजं कुक्कुरं नक्रं शृगालं भस्मपुच्छकम्।
अस्थिराशिं तालफलं केशं कार्पाससमुत्करम् ॥ ७५
निर्व्वाणाङ्गारसुल्काञ्च शवं मर्त्त्यं चिताश्रितम्।
कुलालतैलकाराणां चक्रं वक्रं कपर्द्दकम् ॥ ७६
श्मशानदग्धकाष्ठञ्च शुष्ककाष्ठं तृणं कुशम्।
गच्छन्तञ्च कबन्धञ्च सदण्डं मृतमस्तकम् ॥ ७७
दग्धं स्थानं भस्मयुतं तड़ागं जलवर्ज्जितम्।
दग्धमत्स्यञ्च लौहञ्च निर्व्वाणं दग्धकाननम्।
गलत्कुष्ठञ्च वृषलं नग्नञ्च मुक्तमूर्द्धजम् ॥ ७८
अतीव रुष्टं विप्रञ्च शपन्तं गुरुमीदृशम्।
अतीव रुष्टं भिक्षुञ्च योगिनं वैष्णवं नरम् ॥ ७९
एवं दृष्ट्वा समुत्थाय कथयामास मातरम्।
पितरं भ्रातरं पत्नीं रुदतीं प्रेमविह्वलाम् ॥ ८०
मञ्चकं कारयामास स्थापयामास हस्तिनम्।
मल्लं सैन्यञ्च योद्धारं कारयामास मङ्गलम् ॥ ८१
सभाञ्च कारयामास पुरश्च स्वस्त्ययनं शिवम्।
यत्नेन योजयामास यागे युक्तं पुरोहितम् ॥ ८२
उवास मञ्चके रम्ये धृत्वा खड्गं विलक्षणम्।
रणे नियोजयामास योद्धारं युद्धकोविदम् ॥ ८३
वासयामास राजेन्द्रान् ब्राह्मणांश्च मुनीश्वरान्।
ब्राह्मणांश्च सुहृद्वर्गान् धर्म्मिष्ठान् रणकोविदान् ॥ ८४
अथाजगाम गोविन्दो रामेण सह नारद।
महेशस्य धनुर्गेहं बभञ्ज तत्र लीलया ॥ ८५
शब्देन तस्य मथुरा बधिरा च बभूव ह।
विषादं प्राप कंसश्च सुदञ्च देवकी वसुः ॥ ८६
उपस्थितः सभामध्ये गजं मल्लं निहत्य च ॥ ८७
योगी ददर्श तं देवं परमात्मानमीश्वरम्।
यथा हृत्पद्ममध्यस्थं तादृशं बहिरेव च ॥ ८८
राजेन्द्ररूपं राजानः शास्तारं दण्डधारिणम्।
पिता माता दुग्धमुखं स्तनान्धं बालकं यथा ॥ ८९
कामिनीकोटिकन्दर्प-लीलालावण्यधारिणम्।
कंसश्च कालपुरुषं वैरिणं तस्य बान्धवाः ॥ ९०
नमस्कृत्य मुनीन् विप्रान् पितरं मातरं गुरुम्।
जगाम मञ्चकाभ्यासं हस्ते कृत्वा सुदर्शनम् ॥ ९१
राजा ददर्श विश्वञ्च सर्व्वं कृष्णमयं परम्।
पुरतो रत्नयानञ्च हीराहारविभूषितम् ॥ ९२
दृष्ट्वा भक्तं भक्तबन्धुः कृपया च कृपानिधिः।
आकृष्य मञ्चकात् कंसं जघान लीलया मुने ॥ ९३
ययौ विष्णुपदं स्फीतो दिव्यरूपं विधाय च।
तेजो विवेश परमं कृष्णपादाम्बुजे मुने ॥ ९४
निर्व्वर्त्त्य तस्य सत्कारं ब्राह्मणेभ्यो धनं ददौ।
ददौ राज्यं राजछत्रमुग्रसेनाय धीमते ॥ ९५
स बभूव नृपेन्द्रश्च चन्द्रवंशसमुद्भवः।
विललाप कंसमाता पत्नीवर्गश्च तत्पिता ॥ ९६
बान्धवो मातृवर्गश्च भगिनी भ्रातृकामिनी।

दर्शनं देहि राजेन्द्र समुत्तिष्ठ नृपासने ॥ ९७
राज्यं रक्ष धनं रक्ष बान्धवं बलमेव च।
क्व यासि बान्धवान् हित्वा लमनाथान् महाबल॥९८
ब्रह्मादिस्तम्बपर्यन्तमसंख्यं विश्वमेव च।
सर्व्वं चराचराधारं यः सृजत्येव लीलया ॥ ९९
ब्रह्मेश-शेष-धर्म्माश्च दिनेशश्च गणेश्वरः।
मुनीन्द्रवर्गौ देवेन्द्रो ध्यायन्ते यमहर्निशम् ॥ १००
देवाः स्तुवन्ति यं कृष्णं स्तौति भीता सरस्वती।
स्तौति यं प्रकृतिः कृष्णं (क) प्रकृतं प्रकृतेः परम्॥१०१
स्वेच्छामयं निरीहञ्च निर्गुणञ्च निरञ्जनम्।
परात्परतरं ब्रह्म परमात्मानमीश्वरम् ॥ १०२
नित्यं ज्योतिःस्वरूपञ्च भक्तानुग्रहविग्रहम्।
नित्यानन्दञ्च नित्यञ्च नित्यविग्रहमक्षरम् ॥ १०३
सोऽवतीर्णो हि भगवान् भारावतारणाय च।
गोपालबालवेशश्च मायेशो मायया विभुः ॥ १०४
स्वयं हन्ति च सर्व्वेशो रक्षिता तस्य कः पुमान्।
स्वयं रक्षति सर्व्वात्मा तस्य हन्ता न कोऽपि च॥१०५
इत्येवमुक्त्वा सर्व्वेश्च विरराम महामुने।
ब्राह्मणान् भोजयामास तेभ्यः सर्व्वधनं ददौ ॥१०६
भगवानपि सर्व्वात्मा जगाम पितुरन्तिकम्।
छित्त्वा च लौहनिगड़ं तयोर्मोक्षं चकार सः ॥ १०७
ननाम दण्डवद्भूमौ मातरं पितरं तथा।
तुष्टाव भक्त्या देवेशो भक्तिनम्रात्मकन्धरः ॥ १०८
श्रीभगवानुवाच।
पितरं मातरं विद्यामन्त्रदं गुरुमेव च।
यो न पुष्णाति मूढ़श्च यावज्जीवञ्च सोऽशुचिः ॥ १०९
सर्व्वेषामपि पूज्यानां पिता वन्द्यो महान् गुरुः।
पितुः शतगुणैर्माता गर्भधारणपोषणात् ॥ ११०
माता च पृथिवीरूपा सर्व्वेभ्यश्च हितैषिणी।
नास्ति मातुः परो बन्धुः सर्व्वेषां जगतीतले ॥ १११
विद्यामन्त्रप्रदः सत्यं मातुः परतरो गुरुः।
न हि तस्मात् परः कोऽपि वन्द्यः पूज्यश्च दैवतम्॥११२
इत्येवमुक्त्वा कृष्णश्च बलभद्रो ननाम च।
माता चकार तौ क्रोड़े पिता च सादरं मुने ॥ ११३
मिष्टान्नं पायसं तौ च भोजयामास सादरम्।
नन्दश्च भोजयामास गोपालान् परमादरम् ॥ ११४

(क) प्रकृतिर्ह्येषा इति क्वचित्।

मङ्गलं कारयामास भोजयामास ब्राह्मणान्।
वस्त्रवस्तुसमूहञ्च ब्राह्मणेभ्यो ददौ मुदा ॥ ११५

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-जन्मखण्डे नारायण-नारदसंवादे कंस-हनन-वसुदेव-देवकी-मोक्षणं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

## त्रिसप्ततितमोऽध्यायः।

नारायण उवाच।
अथ कृष्णश्च सानन्दं नन्दं तं पितरं बलः।
बोधयामास शोकार्त्तं दिव्यैराध्यात्मिकादिभिः ॥ १
उच्चै रुदन्तं निश्चेष्टं पुत्रविच्छेदकातरम्।
गत्वा (क) तस्मै मुनिश्रेष्ठ इत्युवाच जगत्पतिः ॥ २
श्रीभगवानुवाच।
निबोध नन्द सानन्दं त्यज शोकं मुदं लभ।
ज्ञानं गृहाण मद्दत्तं यद्दत्तं ब्रह्मणे पुरा ॥ ३
यद्दत्तञ्चैव शेषाय गणेशाय स्मराय च।
दिनेशाय मुनीशाय योगीशाय च पुष्करे ॥ ४
कः कस्य पुत्रः कस्तातः का माता कस्यचित् कुतः।
आयान्ति यान्ति संसारं सर्व्वे च कृतकर्म्मणा ॥ ५
कर्म्मानुसाराज्जन्तुश्च जायते स्थानभेदतः।
कर्म्मणा कोऽपि धातुश्च कोऽपीन्द्राणां नृपस्त्रियाम्॥६
द्विजपत्न्यां क्षत्रियायां वैश्यायां शूद्रयोनिषु।
तिर्य्यग्योनिषु कश्चिच्च कश्चित् पश्वादियोनिषु ॥ ७
ममैव मायया सर्व्वे सानन्दा विषयेषु च।
देहत्यागे विषण्णाश्च विच्छेदे बान्धवस्य च ॥ ८
प्रजाभूमिधनादीनां विच्छेदे मरणाधिके।
नित्यं भवति मूढ़श्च न च विद्वान् शुचा शुतः ॥ ९
मद्भक्तो भक्तियुक्तश्च मद्याजी विजितेन्द्रियः।
मन्मन्त्रोपासकश्चैव मत्सेवानिरतः शुचिः ॥ १०
मद्भयाद्वाति वातोऽयं रविर्भाति च नित्यशः।
भाति चन्द्रो महेन्द्रश्च कालभेदे च वर्षति ॥ ११
वह्निर्दहति मृत्युश्च चरत्येव हि जन्तुषु।
बिभर्त्ति वृक्षः कालेन पुष्पाणि च फलानि च ॥ १२
निराधारश्च वायुश्च वाय्वाधारश्च कच्छपः।

(क) दत्त्वा तस्मै इति क्वचित्।

शेषश्च कच्छपाधारः शेषाधाराश्च पर्व्वताः ॥ १३
तदाधाराश्च पातालाः सप्त एव च पण्डित।
निश्चलञ्च जलं तस्मात् जलस्था च वसुन्धरा ॥ १४
सप्त स्वर्गा धराधारा ज्योतिश्चक्रं ग्रहाश्रयम्।
निराधारश्च वैकुण्ठो ब्रह्माण्डानां परो वरः ॥ १५
तत्परश्चापि गोलोकः पञ्चाशत्कोटियोजनात्।
ऊर्द्ध्वं निराश्रयश्चापि रत्नसारविनिर्म्मितः ॥ १६
सप्तद्वारः सप्तसारः परिखासप्तसंयुतः।
लक्षप्राकारयुक्तश्च नद्या विरजया युतः ॥ १७
वेष्टितो रत्नशैलेन शतशृङ्गेण चारुणा।
योजनायुतमानञ्च यस्यैकशृङ्गमुज्ज्वलम् ॥ १८
शतकोटियोजनस्य शैलस्य तत्र एव च।
दैर्घ्यं तस्य शतगुणं प्रस्थे च लक्षयोजनम् ॥ १९
योजनायुतविस्तीर्णस्तत्रैव रासमण्डलः।
अमूल्यरत्ननिर्म्माणो वर्त्तुलश्चन्द्रविम्बवत् ॥ २०
पारिजातवनेनैव पुष्पितेन च वेष्टितः।
कल्पवृक्षसहस्रेण पुष्पोद्यानशतेन च।
नानाविधैः पुष्पवृक्षैः पुष्पितेन च चारुणा ॥ २१
त्रिकोटिरत्नभवनैर्गोपीलक्षैश्च रक्षितः।
रत्नप्रदीपयुक्तैश्च रत्नकुम्भसमन्वितः ॥ २२
नानाभोगसमायुक्तो मधुवापीशतैर्युतः।
पीयूषवापीयुक्तश्च काममभोगसमन्वितः ॥ २३
गोलोके गृहसंख्यानिवर्णने वा विशारदः।
न कोऽपि वेदो विद्वान् वा वेदविद्वान् व्रजेश्वर॥२४
अमूल्यरत्ननिर्म्माणाभरणानां त्रिकोटिभिः।
शोभितं सुन्दरं रम्यं राधाशिविरमुत्तमम् ॥ २५
अमूल्यरत्नकलसैरुज्ज्वलं रत्नदर्पणैः।
अमूल्यरत्नस्तम्भानां राजिभिश्च विराजितम् ॥ २६
नानाचित्रविचित्रैश्च चित्रितं श्वेतचामरैः।
माणिक्यमुक्तासंसक्त-हीराहारसमन्वितम् ॥ २७
रत्नप्रदीपसंसक्तं रत्नसोपानशोभितम्।
अमूल्यरत्नपात्रैश्च तल्पराजिविराजितम् ॥ २८
अमूल्यरत्नप्राकारैस्त्रिभिश्चित्रविचित्रितैः।
तिसृभिः परिखाभिश्च त्रिभिर्द्वारैश्च दुर्गमैः ॥ २९
युक्तं षोड़शकक्षाभिः प्रतिद्वारेषु चान्तरम्।
गोपीषोड़शलक्षैश्च संनियुक्तैरितस्ततः ॥ ३०
वह्निशुद्धांशुकाधाने रत्नभूषणभूषितः।
तप्तकाञ्चनवर्णाभिः शतचन्द्रसमप्रभैः।
राधिकाकिङ्करीवर्गैर्युक्तमभ्यन्तरं वरम् ॥ ३१
अमूल्यरत्ननिर्म्माणं प्राङ्गणं सुमनोहरम्।
अमूल्यरत्नस्तम्भानां समूहैश्च सुशोभितम् ॥ ३२
रत्नमङ्गलकुम्भैश्च फलपल्लवसंयुतैः।
संयुतं रत्नवेदीभिर्मुक्तायुक्ताभिरीप्सितम् ॥ ३३
अमूल्यरत्नमुकुरैः शोभितं सुन्दरैर्वरैः।
अमूल्यरत्ननिर्म्माणाभरणानां वरैर्वरम् ॥ ३४
रत्नसिंहासनस्था च गोपीलक्षैश्च सेविता।
कोटिपूर्णेन्दुशोभाढ्या श्वेतचम्पकसन्निभा ॥३५
अमूल्यरत्ननिर्म्माण-भूषणैश्च विभूषिता।
अमूल्यरत्नवसना बिभ्रती रत्नदर्पणम्।
रत्नपद्मञ्च रुचिरं सव्यदक्षिणहस्ततः ॥ ३६
दाड़िम्बकुसुमाकारं सिन्दूरं सुमनोहरम्।
सुशोभितं मृगमदैरिष्टैश्चन्दनबिन्दुभिः ॥ ३७
दधती कवरीभारं मालतीमाल्यमण्डितम्।
वह्निमं वामभागेन मुनीन्द्राणां मनोहरम् ॥ ३८
एवम्भूता तत्र राधा गोपीभिः परिसेविता।
श्वेतचामरहस्ताभिस्तत्तुल्याभिश्च सर्व्वतः ॥ ३९
अमूल्यरत्ननिर्म्माणैर्भूषिताभिश्च भूषणैः।
प्राणाधिष्ठातृदेवी सा देवीनां प्रवरा वरा ॥ ४०
सा च श्रीदामशापेन वृषभानसुताधुना।
शताब्दिको हि विच्छेदो भविष्यति मया सह ॥४१
तेन भारावतरणं करिष्यामि भुवः पितः।
तदा यास्यामि गोलोकं तया सार्द्धं व्रजं व्रज ॥४२
त्वया यशोदया चापि गोपैर्गोपीभिरेव च।
वृषभानेन तत्पत्न्या कलावत्या च बान्धवैः॥ ४३
एवञ्च नन्द सानन्दं यशोदां कथयिष्यसि।
त्यज शोकं महाभाग व्रजैः सार्द्धं व्रजं व्रज ॥ ४४
अहमात्मा च साक्षी च निर्लिप्तः सर्व्वजीविषु।
जीवो मत्प्रतिविम्बश्च इत्येव सर्व्वसम्मतः ॥ ४५
प्रकृतिर्मद्विकारा वा साप्यहं प्रकृतिः स्वयम्।
यथा दुग्धे च धावल्यं न तयोर्भेद एव च। ४६
यथा जलं तथा शैत्यं यथा वह्नौ च दाहिका।
यथाकाशस्तथा शब्दो भूमौ गन्धो यथा नृप ॥४७
यथा शोभा च चन्द्रे च यथा दिनकरे प्रभा।
यथा जीवस्तथात्माहं तथैव राधया सह ॥ ४८

त्यज त्वं गोपिकाबुद्धिं राधायां मयि पुत्रताम्।
अहं सर्व्वस्य प्रभवः सा च प्रकृतिरीश्वरी ॥ ४९
श्रूयतां नन्द सानन्दं मद्विभूतिं सुखावहाम्।
पुरा या कथिता तात ब्रह्मणेऽव्यक्तजन्मने ॥ ५०
कृष्णोऽहं देवतानाञ्च गोलोके द्विभुजः स्वयम्।
चतुर्भुजोऽहं वैकुण्ठे शिवलोके शिवः स्वयम् ॥ ५१
ब्रह्मलोके च ब्रह्माहं सूर्य्यस्तेजस्विनामहम्।
पवित्राणामहं वह्निर्जलमेव द्रवेषु च ॥ ५२
इन्द्रियाणां मनश्चास्मि समीरः शीघ्रगामिनाम्।
यमोऽहं दण्डकर्तृणां कालः कलयतामहम् ॥ ५३
अक्षराणामकारोऽस्मि साम्नाञ्च साम एव च।
इन्द्रश्चतुर्द्दशेन्द्रेषु कुबेरो धनिनामहम् ॥ ५४
ईशानोऽहं दिगीशानां व्यापकानां नभस्तथा।
सर्व्वान्तरात्मा जीवेषु ब्राह्मणश्चाश्रमेषु च ॥ ५५
धनानाञ्च रत्नमहममूल्यं सर्व्वदुर्लभम्।
तैजसानां सुवर्णोऽहं मणीनां कौस्तुभः स्वयम् ॥५६
शालग्रामस्तथार्च्चानां पत्राणां तुलसीति च।
पुष्पाणां पारिजातोऽहं तीर्थानां पुष्करः स्वयम्॥५७
वैष्णवानां कुमारोऽहं योगीन्द्राणां गणेश्वरः।
सेनापतीनां स्कन्दोऽहं लक्ष्मणोऽहं धनुष्मताम् ॥ ५८
राजेन्द्राणाञ्च रामोऽहं नक्षत्राणामहं शशी।
मासानां मार्गशीर्षोऽहमृतूनामस्मि माधवः ॥ ५९
वारेष्वादित्यवारोऽहं तिथिष्वेकादशीति च।
सहिष्णूनाञ्च पृथिवी माताहं बान्धवेषु च ॥ ६०
अमृतं भक्ष्यवस्तूनां गव्येष्वाज्यमहं तथा।
कल्पवृक्षश्च वृक्षाणां सुरभी कामधेनुषु ॥ ६१
गङ्गाहं सरितां मध्ये कृतपापविनाशिनी।
वाणीति पण्डितानाञ्च मन्त्राणां प्रणवस्तथा ॥६२
विद्यासु वीजरूपोऽहं शस्यानां धान्यमेव च।
अश्वत्थः फलिनामेव गुरूणां मन्त्रदः स्वयम् ॥ ६३
कश्यपश्च प्रजेशानां गरुड़ः पक्षिणां तथा।
अनन्तोऽहञ्च सर्पाणां नराणाञ्च नराधिपः ॥ ६४
ब्रह्मर्षीणां भृगुरहं देवर्षीणाञ्च नारदः।
राजर्षीणाञ्च जनको महर्षीणां शुकः स्वयम् ॥६५
गन्धर्व्वाणां चित्ररथः सिद्धानां कपिलो मुनिः।
बृहस्पतिर्बुद्धिमतां कवीनां शुक्र एव च ॥ ६६
ग्रहाणाञ्च शनिरहं विश्वकर्म्मा च शिल्पिनाम्।
मृगाणाञ्च मृगेन्द्रोऽहं वृषाणां शिववाहनम् ॥ ६७
ऐरावतो गजेन्द्राणां गायत्री च्छन्दसामहम्।
वेदाश्च सर्व्वशास्त्राणां वरुणो यादसामहम् ॥ ६८
उर्व्वश्यप्सरसामेव समुद्राणां जलार्णवः।
सुमेरुः पर्व्वतानाञ्च रत्नवत्सु हिमालयः ॥ ६९
दुर्गा च प्रकृतीनाञ्च देवीनां कमलालया।
शतरूपा च नारीणां मत्प्रियाणाञ्च राधिका ॥ ७०
साध्वीनामपि सावित्री वेदमाता च निश्चितम्।
प्रह्लादश्चास्मि दैत्यानां बलिष्ठानां बलिः स्वयम् ॥७१
नारायणर्षिर्भगवान् ज्ञानिनां मध्य एव च।
हनूमान् वानराणाञ्च पाण्डवानां धनञ्जयः ॥ ७२
मनसा नागकन्यानां वसूनां द्रोण एव च।
द्रोणो जलधराणाञ्च वर्षाणां भारतं तथा ॥ ७३
कामिनां कामदेवोऽहं रम्भा च कामुकीषु च।
गोलोकश्चास्मि लोकानामुत्तमः सर्व्वतः परः ॥ ७४
मातृकासु शान्तिरहं रतिश्च सुन्दरीषु च।
धर्म्मोऽहं साक्षिणां मध्ये सन्ध्या च वासरेषु च ॥७५
दवेष्वहञ्च माहेन्द्रो राक्षसेषु विभीषणः।
कालाग्निरुद्रो रुद्राणां संहारो भैरवेषु च ॥ ७६
नन्द शैवेष्वहं नन्दी वृन्दारण्यं वनेषु च।
शङ्खेषु पाञ्चजन्योऽहमङ्गेष्वपि च मस्तकः ॥ ७७
परं पुराणशास्त्रेषु चाहं भागवतं वरम्।
भारतञ्चेतिहासेषु पञ्चरात्रेषु कापिलम् ॥ ७८
स्वायम्भुवो मनूनाञ्च मुनीनां व्यासदेवकः।
स्वधाहं पितृपत्नीषु स्वाहा वह्निप्रियासु च ॥ ७९
यज्ञानां राजसूयोऽहं यज्ञपत्नीषु दक्षिणा।
शस्त्रास्त्रज्ञेषु रामोऽहं जमदग्निसुतो महान् ॥ ८०
पौराणिकेषु सूतोऽहं नीतिवित्स्वङ्गिरा मुनिः।
विष्णुव्रतं व्रतानाञ्च बलानां दैवमेव च ॥ ८१
ओषधीनामहं दूर्व्वा तृणानां कुश एव च।
धर्म्मकर्म्मसु सत्यञ्च स्नेहपात्रेषु पुत्रकः ॥ ८२
अहं व्याधिश्च शत्रूणां ज्वरो व्याधिष्वहं तथा।
मद्भक्तिश्चापि भक्ताख्यं वरेषु च वरः स्मृतः ॥ ८३
आश्रमाणां गृहस्थोऽहं सन्न्यासी च विवेकिनाम्।
सुदर्शनञ्च शस्त्राणां कुशलञ्च शुभाशिषाम् ॥ ८४
ऐश्वर्य्याणां महाज्ञानं वैराग्यञ्च सुखेष्वहम्।
मिष्टवाक्यं प्रीतिदेषु दानेषु चात्मदानकम् ॥ ८५

अश्वत्थेषु धर्म्मकर्म्म कर्म्मणाञ्च मदर्च्चनम्।
कठोरेषु तपस्याहं फलेषु मोक्ष एव च ॥ ८६
अष्टसिद्धिषु प्राकाम्यमहं काशी पुरीषु च।
नगरेषु तथा काञ्ची स देशो यत्र वैष्णवः ॥ ८७
सर्व्वाधारेषु स्थूलेषु अहमेव महान् विराट्।
परमाणुरहं विश्वे महासूक्ष्मेषु नित्यशः ॥ ८८
वैद्यानामश्विनीपुत्रावौषधेषु रसायनः।
धन्वन्तरिर्मन्त्रविदां विषादिक्षयकारिणाम् ॥ ८९
रागाणां मेघमल्लारः कामोदस्तत्प्रियासु च।
मत्पार्षदेषु श्रीदामा मद्वन्धुष्वहमुद्धवः ॥ ९०
पशुजन्तुषु गौश्चाहं चन्दनं काननेषु च ॥ ९१
तीर्थभूतश्च पूतेषु निःशङ्केषु च वैष्णवः।
न वैष्णवात् परः प्राणी मन्मन्त्रोपासकश्च यः ॥ ९२
वृक्षेष्वङ्कुररूपोऽहमाकारः सर्व्ववस्तुषु।
अहञ्च सर्व्वभूतेषु मयि सर्व्वे सुसन्तताः ॥ ९३
यथा वृक्षः फलान्येव फलेषु चाङ्कुरं तरोः।
सर्व्वकारणरूपोऽहं न च मत्कारणं परम् ॥ ९४
सर्व्वेशोऽहं न मे पाती ह्यहं कार्य्यञ्च कारणम्।
सर्व्वेशं सर्व्ववीजं मां प्रवदन्ति मनीषिणः ॥ ९५
मन्मायामोहितजना मां न जानन्ति पापिनः।
पापग्रस्तेन दुर्बुद्ध्या विधिना वञ्चितेन च ॥ ९६
स्वात्माहं सर्व्वजन्तूनां स्वात्माहं नाहतः स्वयम्॥९७
यत्राहं शक्तयस्तत्र क्षुत्पिपासादयस्तथा।
यत्र मयि गते यान्ति नरदेहे यथानुगाः ॥ ९८
हे व्रजेश नन्द तात ज्ञानं ज्ञात्वा व्रजं व्रज।
कथयिष्यसि तां राधां यशोदां ज्ञानमेव च ॥ ९९
ज्ञात्वा ज्ञानं व्रजेशश्च जगाम स्वानुगैः सह।
गत्वा च कथयामास ते द्वे च योषितां वरे ॥ १००
ते च सर्व्वे जहुः शोकं महाज्ञानेन नारद।
कृष्णो यद्यपि निर्लिप्तो मायेशो मायया रतः ॥१०१
यशोदया प्रेरितश्च पुनरागत्य माधवम्।
तुष्टाव परमानन्दं नन्दश्च नन्दनन्दनम् ॥ १०२
सामवेदोक्तस्तोत्रेण यद्दत्तं ब्रह्मणा पुरा।
पुत्रस्य पुरतः स्थित्वा रुरोद च पुनः पुनः ॥ १०३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायणनारदसंवादे नन्दादिशोक-
प्रमोचनं त्रिसप्ततितमोऽध्यायः ॥७३॥

## चतुःसप्ततितमोऽध्यायः।

नारायण उवाच।

श्रीकृष्णः परमानन्दः परिपूर्णतमः प्रभुः।
परमात्मा च परमो भक्तानुग्रहतत्परः ॥ १
भुवो भारावतीर्णश्च निर्गुणः प्रकृतेः परः।
परात्परस्तु भगवान् ब्रह्मेश-शेषवन्दितः ॥ २
तुष्टो नन्दस्तवं श्रुत्वा तमुवाच जगत्पतिः।
आगच्छन्तं गोकुलाच्च विरहज्वरकातरम् ॥ ३

श्रीभगवानुवाच।

गच्छ नन्दव्रजं नन्द त्यज शोकं भ्रमं भुवि।
शृणु सत्यं परं ज्ञानं शोकग्रन्थिनिकृन्तनम् ॥ ४
वायुश्च भूमिराकाश आपस्तेजश्च पञ्चमम्।
उक्तं श्रुतिगणैरेतत् पञ्चभूतञ्च निश्चितम् ॥ ५
सर्व्वेषां जीविनां तात देहश्च पाञ्चभौतिकः।
मिथ्याभ्रमः कृत्रिमश्च स्वपरो माययान्वितः ॥ ६
देहं त्यजन्ति सर्व्वेषां पञ्च भूतानि नित्यशः।
मायासङ्केतरूपं तदभिधानं भ्रमात्मकम् ॥ ७
को वा कस्य सुतस्तातः का स्त्री कस्य पतिस्तु वा।
कर्म्मणां भ्रमणं शश्वत् सर्व्वेषां भूरिजन्मनि(क) ॥ ८
कर्म्मणा जायते जन्तुः कर्म्मणैव विलीयते।
सुखं दुःखं भयं शोकं कर्म्मणैव प्रपद्यते ॥ ९
केषां वा जन्म स्वर्गेषु केषां वा ब्रह्मणो गृहे।
केषां विप्रेषु क्षत्रेषु केषां वा वैश्य-शूद्रयोः ॥ १०
अतिनीचेषु केषां वा केषां कृमिषु विट्सु च।
पशु-पक्षिषु केषां वा केषां वा क्षुद्रजन्तुषु ॥ ११
पुनः पुनर्भ्रमन्त्येव सर्व्वे तात स्वकर्म्मणा।
करोति कर्म्म निर्म्मूलं मद्भक्तो मत्प्रियः सदा ॥१२
सत्यं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम्।
पञ्चविंशत्सहस्राणां युगान्ते निधनं मनोः ॥ १३
मनोः समं महेन्द्रस्य परमायुर्विनिर्म्मितम्।
चतुर्द्दशेन्द्रावच्छिन्ने ब्रह्मणो दिनमुच्यते ॥ १४
एवंपरिमिता रात्रिः कालविद्भिर्विनिर्म्मिता।
एवंपरिमितो मासो वर्षञ्च परिनिश्चितम् ॥ १५
ब्रह्मणश्च वषशतं परमायुर्निरूपितम्।
निमेषमात्रं भगवन् ब्रह्मणो निधने मम ॥ १६

(क) भुवि जन्मनि इति पाठान्तरम्।

ब्रह्मादितृणपर्य्यन्तं सर्व्वं मिथ्यैव निश्चितम्।
सत्योऽहं परमात्मा च भक्तानुग्रहविग्रहः॥ १७
मन्मन्त्रोपासकः सद्यस्त्यक्त्वा देहं धरासु च।
यास्यत्येव हि गोलोकं छित्त्वा कर्म्म पुरातनम्॥ १८
असंख्यब्रह्मणः पाते न भवेत् तस्य पातनम्।
गृह्णाति नित्यदेहं स जन्म-मृत्यु-जरापहम्॥ १९
। नन्द मम भक्तानामशुभं विद्यते क्वचित्।
नित्यं सुदर्शनं तांश्च परिरक्षति सर्व्वतः॥ २०
मत्तो हि बलवान् भक्तश्चिन्तितोऽहं न चिन्तितः।
अहं स्वामी च तस्यैव न मे स्वामी पिता प्रसूः॥२१
पुत्रबुद्धिं परित्यज्य भज मां ब्रह्मरूपिणम्।
छित्त्वा च कर्म्मनिगडं गोलोकं तद्व्रज स्वयम्॥ २२
कथयस्व यशोदाञ्च गोपं गोपीगणं व्रज।
तैश्च सर्व्वैर्जनैः सार्कं व्रज स्वमन्दिरं व्रज॥ २३
इत्येवमुक्त्वा भगवान् विरराम च संसदि।
पप्रच्छ पुनरेवं तं नन्दश्चानन्दसंप्लुतः॥ २४

नन्द उवाच।

वद सांसारिकं ज्ञानं येन यास्यामि त्वत्पदम्।
मूढोऽहं परमानन्द श्रुतीनां जनको भवान्॥ २५
नन्दस्य वचनं श्रुत्वा सर्व्वज्ञो भगवान् स्वयम्।
आह्निकं कथयामास श्रुतिभिर्न स्तुतञ्च यत्(क)॥ २६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे भगवन्नन्दसंवादे चतुःसप्ततितमोऽध्यायः॥ ७४॥

---

## पञ्चसप्ततितमोऽध्यायः।

श्रीभगवानुवाच।

शृणु नन्द प्रवक्ष्यामि ज्ञानञ्च परमाद्भुतम्।
सुगोपनीयं वेदेषु पुराणेषु च दुर्लभम्॥ १
न विश्वासो हि नारीषु सन्ततं कुलटासु च।
मोक्षमार्गार्गलास्वेव भ्रममायास्वभूषु च॥ २
हरिभक्तिरसादीनां विरुद्धसंयुतासु च।
वीजरूपासु नाशानां प्रमदासु व्रजेश्वर॥ ३
नित्यञ्च प्रातरुत्थाय रात्रिवासो विहाय च।
अभीष्टदेवं हृत्पद्मे ब्रह्मरन्ध्रे गुरुं परम्॥ ४
विचिन्त्य मनसा प्रातःकृत्यं कृत्वा च निश्चितम्।
स्नानं करोति सुप्रज्ञो निर्म्मलेषु जलेषु च॥ ५
न सङ्कल्पञ्च कुरुते भक्तः कर्म्मनिकृन्तनः॥ ६
स्नात्वा हरिं स्मरेत् सन्ध्यां कृत्वा याति गृहं प्रति।
प्रक्षाल्य पादौ प्रविशेत् पिधाय धौतवाससी॥ ७
पूजयेत् परमात्मानं मामेव मुक्तिकारणम्।
शालग्रामे मणौ यन्त्रे प्रतिमायां जलेऽपि वा॥ ८
तथा विप्रे गवि च वा गुरुष्वेव विशेषतः।
घटेऽष्टदलपद्मे च पात्रे चन्दननिर्म्मिते॥ ९
आवाहनञ्च सर्व्वत्र शालग्रामे जले न च।
मन्त्रानुरूपध्यानेन ध्यात्वा मां पूजयेद्व्रती॥ १०
षोडशोपचारद्रव्यं दद्यान्मूलेन भक्तितः॥ ११
श्रीदामानं सुदामानं वसुदामानमेव च।
वीरभानं शूरभानं गोपान् पञ्च प्रपूजयेत्॥ १२
सुनन्द-नन्द-कुमुदं पार्षदं मे सुदर्शनम्।
लक्ष्मीं सरस्वतीं दुर्गां राधां गङ्गां वसुन्धराम्॥१३
गुरुञ्च तुलसीं शम्भुं कार्त्तिकेयं विनायकम्।
नवग्रहांश्च दिक्पालान् परितः पूजयेत् सुधीः॥ १४
देवषट्कञ्च सम्पूज्य सर्व्वादौ विघ्ननाशकम् (क)।
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्।
श्रुतौविनिर्म्मितान् देवान् मोक्षदान् कर्म्मकृन्तनान्१५
गणेशं विघ्ननाशाय सूर्य्यं व्याधिविनाशने।
वह्निं प्राप्तिनिमित्तेन स्वान्ते शुद्धो भवेद्ध्रुवम्॥ १६
विष्णुं मोक्षनिमित्तेन ज्ञानलाभाय शङ्करम्।
बुद्धिमुक्तिनिमित्तेन पार्व्वतीं पूजयेत् सुधीः॥ १७
पुष्पाञ्जलित्रयं दत्त्वा स्वस्तोत्रं कवचं पठेत्।
गुरुं प्रणम्य सम्पूज्य तत्पश्चात् प्रणमेत् सुरम्॥१८
कृत्वाह्निकञ्च सम्पूज्य यथासुखसुदीरितम्।
समाचरेत् स्वकर्म्माणि वेदोक्तां स्वात्मशुद्धये॥ १९
विष्ठां न पश्येत् प्राज्ञश्च व्याधिवीजस्वरूपिणीम्।
मूत्रञ्च व्याधिवीजञ्च परं नरककारणम्॥ २०
लिङ्गं योनिं पाप-दुःख-व्याधि-दारिद्र्यदायिनीम्।
जरं मुखं स्तनं स्त्रीणां कटाक्षं हास्यमेव च।
विनाशवीजं रूपञ्च विपदां कारणं सदा॥ २१
दिवाभोगञ्च स्वस्त्रीणामालापं परिवर्ज्जयेत्।
रोगाणां कारणञ्चैव चक्षुषोः कर्णयोस्तथा॥ २२

(क) श्रुतिभिः सुस्तुतञ्च यदिति क्वचित्

(क) विघ्नविघ्नत इति वा पाठः।

एकतारञ्च गगनं न पश्येत् तु रुजां भयात्।
दैवाद्दृष्ट्वा हरिं स्मृत्वा सप्तधा नारद जपेत्॥ २३
अस्तकाले रविं चन्द्रं न पश्येद्व्याधिकारणम्।(क)
मध्याह्नस्थं घनच्छन्नं केवलं व्याधिकारणम्॥ २४
जलस्थञ्च रविं चन्द्रं दृष्ट्वा शोकं लभेन्नरः।
वस्त्रविच्छेदहेतुश्च न पश्येत् परमैथुनम्॥ २५
एकत्र शयनं स्नानं भोजनं वसतिं तथा (ख)।
न कुर्य्यात् पापिना सार्द्धं सर्व्वनाशस्य कारणम्॥२६
आलापाद्गात्रसंस्पर्शात् शयनासनभोजनात्।
सञ्चरति ध्रुवं पापं तैलविन्दुरिवाम्भसा॥ २७
हिंस्रजन्तुसमीपञ्च न गच्छेद्दुःखकारणम्।
खलेन सार्द्धं मिलनं न कुर्य्याच्छोककारणम्॥ २८
ब्राह्मणानां गवीनाञ्च वैष्णवानां विशेषतः।
न कुर्य्याद्धिंसनं हानिं सर्व्वनाशस्य कारणम्॥ २९
देव-देवल-विप्राणां वैष्णवानां तथैव च।
वृत्तिं धनञ्च न हरेत् सर्व्वनाशस्य कारणम्॥ ३०
स्वदत्तां परदत्तां वा ब्रह्मवित्तं हरेत् तु यः।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः॥ ३१
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः।
श्वापदः शतजन्मानि शतजन्मानि गण्डकः॥ ३२
घोटकः शतजन्मानि कुम्भीरः सप्तजन्मसु।
पुंश्चलीनां योनिकीटः शतजन्मसु निश्चितम्॥ ३३
व्रणकीटश्च तासाञ्च शतजन्मसु नारद (ग)।
गोधिका सप्तजन्मानि गर्द्दभः सप्तजन्मसु॥ ३४
सप्त जन्मानि मार्ज्जारो नकुलस्त्रिषु जन्मसु।
क्रूरः सर्पश्च शार्द्दूलो महिषः सप्तजन्मसु॥ ३५
मेटकः शतजन्मानि छागलः सप्तजन्मसु।
भल्लूकः शतजन्मानि शृगालो लक्षजन्मसु॥ ३६
ततो जलौका भवति ब्रह्मस्वहरणाच्चिरम्।
कुम्भीपाकेन पच्यन्ते पापिनो ब्रह्मणः शतम्॥ ३७
दक्षिणां विप्रमुद्दिश्य तत्कालं चेन्न दीयते।
एकरात्रव्यतीते तु तद्दानं द्विगुणं भवेत्॥ ३८
मासे शतगुणं प्रोक्तं द्विमासे तु सहस्रकम्।
संवत्सरव्यतीते तु स दाता नरकं व्रजेत्॥ ३९
दाता न दीयते मूर्खो ग्रहीता च न याचते।
उभौ च नरकं यातो दाता व्याधियुतो भवेत्॥४०
विप्राणां हिंसनं कृत्वा वंशहानिं लभेद्ध्रुवम्।
धनं लक्ष्मीं परित्यज्य भिक्षुकश्च भवेद्व्रज॥ ४१
देवञ्च ब्राह्मणं दृष्ट्वा न नमेद्यो लभेच्छुचम्।
न कुर्य्याद्गुरुभक्तिं यो लभते रौरवं ध्रुवम्॥ ४२
या स्त्री मूढ़ा दुराचारा स्वपतिं हरिरूपिणम्।
न पश्येत् तर्ज्जनं कृत्वा कुम्भीपाकं व्रजेद्ध्रुवम्॥ ४३
वाक्तर्ज्जनाद्भवेत् काकी हिंसनाच्छूकरी भवेत्।
सर्पी भवति कोपेन दग्धे च गर्द्दभी भवेत्॥ ४४
कुक्कुरी च कुवाक्येनाप्यन्या च विषदंशनात्।
पतिव्रता च वैकुण्ठं पत्या सह व्रजेद्ध्रुवम्॥ ४५
शिवं दुर्गां गणपतिं सूर्य्यं विप्रञ्च वैष्णवम्।
विष्णुं निन्दति यो मूढ़ो स महारौरवं व्रजेत्॥ ४६
मातरं पितरं पुत्रं सतीं भार्य्यां गुरुं तथा।
अनाथां भगिनीं कन्यां न दत्त्वा नरकं व्रजेत्॥ ४७
विप्रभक्तिविहीनाश्च क्षत्रविट्शूद्रयोनिजाः।
हरिभक्तिविहीनाश्च पच्यन्ते नरके ध्रुवम्।
पतिभक्तिविहीनाश्च युवत्यश्च नराधमाः॥ ४८
शालग्रामजलं विष्णुप्रसादं ये च भुञ्जते।
तीर्थं पुनन्ति ते विप्राः शतं पुंसां वसुन्धराम्॥ ४९
पितृदेवान् समभ्यर्च्च्य खादन् मांसं द्विजः शुचिः।
यो भक्षति वृथामांसं स महारौरवं व्रजेत्॥ ५०
मत्स्यांश्च कामतो जग्ध्वा चोपवासं वसेद्द्विजः।
प्रायश्चित्तं ततः कुर्य्याद्व्रतं चान्द्रायणं चरेत्॥ ५१
कामतो ब्राह्मणो मत्स्यं भुङ्क्ते यो ज्ञानदुर्ब्बलः।
सोऽशुचिः सततं नन्द हन्ति पुण्यं पुराकृतम्॥ ५२
विष्णोरुच्छिष्टभोजी यो मत्स्यं मांसं न खादति।
पदे पदेऽश्वमेधस्य लभते निश्चितं फलम्॥ ५३
एकादशीं ये कुर्व्वन्ति कृष्णजन्माष्टमीव्रतम्।
शतजन्मकृतात् पापान्मुच्यन्ते नात्र संशयः॥ ५४
यद्बाल्ये यच्च कौमारे वार्द्धक्ये यच्च यौवने।
भस्मीभूतानि कुर्व्वन्ति पातकानि कृतानि च॥ ५५
एकादशीदिने भुङ्क्ते कृष्णजन्माष्टमीव्रते।
त्रैलोक्यजनितं पापं सोऽपि भुङ्क्ते न संशयः॥ ५६

(क) न पश्येद्व्याधिकारणमित्यनन्तरं क्वचित् पुस्तके 'खण्डं समुदितं चन्द्रं सूर्य्यञ्च व्याधिकारणम्' इत्यधिकपाठो विद्यते।
(ख) शयनं स्नानं भोजनञ्च गतिं तथा इति पाठान्तरम्।
(ग) अत्र नारद इति सम्बोधनं लिपिप्रमाद एव।

आतुरे नियमो न स्यादतिवृद्धे च बालके ।
अंशस्य द्विगुणं दत्त्वा ब्राह्मणाय शुचिर्भवेत् ॥ ५७
यो भुङ्क्ते शिवरात्रौ च श्रीरामनवमीदिने ।
उपवासे समर्थश्च स महारौरवं व्रजेत् ॥ ५८
कुहू-पूर्णेन्दु संक्रान्त्यां चतुर्द्दश्यष्टमीषु च ।
नरश्चाण्डालयोनिः स्यात् स्त्री-तैल-मांससेवनात्॥५९
मत्स्यं मांसं मसूरञ्च कांस्यपात्रे च भोजनम् ।
आर्द्रकं रक्तशाकञ्च रवौ च परिवर्ज्जयेत् ।
अन्यथा नरकं याति कुम्भीपाकं न संशयः ॥ ६०
रजस्वलान्नं वेश्यान्नमवीरान्नं व्रजेश्वर ।
यो भुङ्क्ते ब्राह्मणो देवाद्विड्भोजी स भवेद्ध्रुवम् ॥६१
यदन्ना कुरुते कर्म्म न तस्य फलभाग्भवेत् ।
स भवेदशुचिर्नित्यं भस्मान्तं तस्य सूतकम् ॥ ६२
नारी वेश्याप्यभिज्ञेया चतुःपुरुषगामिणी ।
पाके च पितृदेवानामधिकारो भवेन्न हि ॥ ६३
यद्ग्रामयाजिनामन्नं शूद्रश्राद्धान्नभोजिनाम् ।
भुक्त्वा च नरकं याति यावच्चन्द्रदिवाकरौ ॥ ६४
शूद्राणां श्राद्धदिवसे तदन्नं भुञ्जते द्विजाः ।
कुम्भीपाके च पच्यन्ते यावद्वै ब्रह्मणः शतम् ॥ ६५
यः शूद्रेणाभ्यनुज्ञातो भुङ्क्ते श्राद्धदिनेऽन्यतः ।
सुरापीती स विज्ञेयः सर्व्वधर्म्मबहिष्कृतः ॥ ६६
असिजीवी मसीजीवी देवलो वृषवाहकः ।
शूद्राणां शवदाही च यो हि शूद्रापतिर्द्विजः ।
स शूद्रवद्बहिष्कार्य्यः सर्व्वस्माद्द्विजकर्म्मणः (क) ॥६७
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु ।
यदन्ना कुरुते कर्म्म न तस्य फलभाग्भवेत् ॥ ६८
विष्णुपूजाविहीनश्च विप्रश्चण्डालवद्भवेत् ।
वामामन्त्रोपासकश्च ब्राह्मणो नरकं व्रजेत् ॥ ६९
नदीगर्भे च गर्त्ते च वृक्षमूले जलान्तिके ।
देवान्तिके शस्यभूमौ पुरीषं नोत्सृजेद्बुधः ॥ ७०
वल्मीकमूषिकोत्खातां मृदमन्तर्ज्जलां तथा ।
शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम् ॥ ७१
अन्तःप्राण्यवपन्नाञ्च हलोत्खातां व्रजेश्वर ।
आलवालोत्थिताञ्चैव शस्यक्षेत्रोत्थितां तथा ॥ ७२
वृक्षमूलोत्थितां नन्द नदीगर्भोत्थितां तथा ।
परित्यजेन्मृदस्त्वेताः सकलाः शौचसाधने ॥ ७३

(क) तदन्नं विट्समं सताम् । इति पाठान्तरम् ।

कुष्माण्डघातिका या स्त्री दीपनिर्व्वापणः पुमान्
सप्तजन्म भवेद्रोगी दरिद्री जन्मजन्मनि ॥ ७४
प्रदीपं शिवलिङ्गञ्च शालग्रामं मणिं तथा ।
प्रतिमां यज्ञसूत्रञ्च सुवर्णं शङ्खमेव च ॥ ७५
हीरकञ्च तथा मुक्तां गोमूत्रं गोमयं घृतम् ।
शालग्रामशिलातोयं भूमौ त्यक्त्वा व्रजेदधः ॥ ७६
दरिद्रः कृपणः कुष्ठी वंशहीनोऽप्यभार्य्यकः ।
भूमिहीनः प्रजाहीनो बन्धुहीनश्च कुत्सितः ॥ ७७
अन्धः पङ्गुर्व्वधिरश्च खञ्जश्चैवाङ्गहीनकः ।
भवेत् क्रमेण पापी सोऽप्येतान् भूमौ त्यजेत्तु यः॥७८
दिवसे सन्ध्ययोर्निद्रां स्त्रीसम्भोगं करोति यः ।
सप्तजन्म भवेद्रोगी दरिद्रः सप्तजन्मसु ॥ ७९
उदिते जगतां नाथे यः कुर्य्याद्दन्तधावनम् ।
स पापिष्ठः कथं ब्रूते पूजयामि जनार्द्दनम् ॥ ८०
मृत्स्ना-गोशकृत्पिण्डैस्तथा वालुकयापि वा ।
कृत्वा लिङ्गं सकृत्पूज्य वसेत् कल्पशतं दिवि ॥ ८१
सहस्रपूजनात् सोऽपि लभते वाञ्छितं फलम् ।
लक्षञ्च पूजयेद्यस्तु शिवत्वं लभते ध्रुवम् ॥ ८२
जीवन्मुक्तो भवेद्विप्रो लिङ्गमभ्यर्च्चयेत् तु यः ।
शिवपूजाविहीनश्च ब्राह्मणो नरकं व्रजेत् ॥ ८३
मत्पूजितं प्रियतरं शिवं निन्दन्ति ये जनाः ।
पच्यन्ते निरये तावद्यावद्वै ब्रह्मणः शतम् ॥ ८४
पूजिते शिवलिङ्गे च यदि स्यात् केश-वालुका ।
स महान्धो वालुकया केशेन यवनो भवेत् ॥ ८५
छिद्रे दरिद्रः कृपणो व्याधिः स्यात् कुत्सिते तथा ।
सर्व्वनिर्म्माणहीने स जायते नीचयोनिषु ॥ ८६
सर्व्वेषु प्रियपात्रेषु ब्राह्मणश्च मम प्रियः ।
ब्राह्मणाच्च प्रिया लक्ष्मीः सन्ततं वक्षसि स्थिता॥८७
ततोऽधिका प्रिया राधा प्रिया भक्तास्ततोऽधिकाः ।
ततोऽधिकः शङ्करो मे नास्ति मे शङ्करात् प्रियः॥८८
महादेव महादेव महादेवेति वादिनः ।
पश्चाद्यामि च सन्त्रस्तो नामश्रवणलोभतः ॥ ८९
मनो मे भक्तिमूलञ्च प्राणा राधात्मका ध्रुवम् ।
आत्मा मे शङ्करस्थानं शिवः प्राणाधिकश्च मे ॥ ९०
आद्या नारायणी शक्तिः सृष्टि-स्थित्यन्तकारिणी ।
करोमि च यया सृष्टिं यया ब्रह्मादिदेवताः ॥ ९१
यया जयति विश्वञ्च यया सृष्टिः प्रजायते ।

यया विना जगन्नास्ति मया दत्ता शिवाय सा ॥९२
दया निद्रा क्षुधा तृप्तिस्तृष्णा श्रद्धा-क्षमा धृतिः ।
तुष्टिः पुष्टिस्तथा शान्तिर्लज्जाधिदेवता हि सा ॥९३
वैकुण्ठे सा महासाध्वी गोलोके राधिका सती ।
मर्त्यलक्ष्मीश्च क्षीरोदे दक्षकन्या सती च सा ॥ ९४
सा दुर्गा मेनकाकन्या दैन्यदुर्गतिनाशिनी ।
स्वर्गलक्ष्मीश्च दुर्गा सा शक्रादीनां गृहे गृहे ॥ ९५
सा वाणी सा च सावित्री विप्राधिष्ठातृदेवता ।
वह्नौ सा दाहिका शक्तिः प्रभाशक्तिश्च भास्करे ॥९६
शोभाशक्तिः पूर्णचन्द्रे जले शक्तिश्च शीतला ।
शस्यप्रसूता शक्तिश्च धारणा च धरासु सा ॥ ९७
ब्रह्मण्यशक्तिर्विप्रेषु देवशक्तिः सुरेषु सा ।
तपस्विनां तपस्या सा गृहिणां गृहदेवता ॥ ९८
मुक्तिशक्तिश्च मुक्तानामाशा सांसारिकस्य सा ।
मद्भक्तानां भक्तिशक्तिर्मयि भक्तिप्रदा सदा ॥ ९९
नृपाणां राजलक्ष्मीश्च वणिजां लभ्यरूपिणी ।
पारे संसारसिन्धूनां त्रयीतत्त्वावतारिणी ॥ १००
सत्सु सद्बुद्धिरूपा सा मेधाशक्तिस्वरूपिणी ।
व्याख्याशक्तिः श्रुतौ शास्त्रे दातृशक्तिश्च दातृषु ॥१०१
क्षत्रादीनां विप्रभक्तिः पतिभक्तिः सतीषु च ।
एवंरूपा च या शक्तिर्मया दत्ता शिवाय सा ॥ १०२
एवं ते कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि ।
प्रश्नं करोषि यद्‌यन्मां तत् सर्व्वं कथयामि ते ॥१०३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे भगवन्नन्द-
संवादे पञ्चसप्ततितमोऽध्यायः ॥७५॥

---

## षट्सप्ततितमोऽध्यायः ।

नन्द उवाच ।

येषाञ्च दर्शने पुण्यं पापञ्च यस्य दर्शने ।
तत् सर्व्वं वद सर्व्वेश श्रोतुं कौतूहलं मम ॥ १

श्रीभगवानुवाच ।

सुब्राह्मणानां तीर्थानां वैष्णवानाञ्च दर्शने ।
देवता प्रतिमानाञ्च तीर्थस्नायी भवेन्नरः ॥ २
सूर्य्यस्य दर्शने भक्त्या सतीनां दर्शने तथा ।
सन्न्यासिनां यतीनाञ्च तथैव ब्रह्मचारिणाम् ॥ ३
भक्त्या गवाञ्च वह्नीनां गुरूणाञ्च विशेषतः ।
गजेन्द्राणाञ्च सिंहानां श्वेताश्वानां तथैव च ॥ ४
शुकानाञ्च पिकानाञ्च खञ्जनानां तथैव च ।
मयूराणाञ्च हंसानां चाषाणां शङ्खपक्षिणाम् ॥ ५
वत्सप्रयुक्तधेनूनामश्वत्थानां तथैव च ।
पतिपुत्त्रवतीनाञ्च नारीणां तीर्थयायिनाम् ॥ ६
प्रदीपानां सुवर्णानां मणीनाञ्च विशेषतः ।
मुक्तानां हीरकाणाञ्च माणिक्यानां महाशय ॥ ७
तुलसीशुक्लपुष्पाणां दर्शनं पापनाशनम् ।
फलानि शुक्ल-धान्यानि दधि-घृत-मधूनि च ॥ ८
पूर्णकुम्भञ्च लाजांश्च राजेन्द्रं दर्पणं जलम् ।
मालाञ्च शुक्लपुष्पाणां दृष्ट्वा पुण्यं लभेन्नरः ॥९
गोरोचनाञ्च कर्पूरं रजतञ्च सरोवरम् ।
पुष्पोद्यानं पुष्पितञ्च दृष्ट्वा पुण्यं लभेन्नरः ॥ १०
शुक्लपक्षस्य चन्द्रञ्च पीयूषं चन्दनं तथा ।
कस्तूरीं कुङ्कुमं दृष्ट्वा नन्द पुण्यं लभेन्नरः ॥ ११
पताकामक्षयवटं तरुं देवार्पितं शुभम् ।
देवालयं देवखातं दृष्ट्वा पुण्यं लभेन्नरः ॥ १२
देवाश्रितं शुभघटं सुगन्धपवनं तथा ।
शङ्खञ्च दुन्दुभिं दृष्ट्वा सद्यः पुण्यं लभेन्नरः ॥ १३
शुक्तिं प्रवालं रुद्राक्षं स्फटिकं कुशमूलकम् ।
गङ्गामृदं कुशं ताम्रं दृष्ट्वा पुण्यं लभेन्नरः ॥ १४
पुराणपुस्तकं शुद्धं सबीजं विष्णुयन्त्रकम् ।
स्निग्धदूर्व्वाक्षतं रत्नं दृष्ट्वा पुण्यं लभेन्नरः ॥ १५
तपस्विनां (क) स्निग्धमन्त्रं समुद्रं कृष्णसारकम् ।
यज्ञं महोत्सवं दृष्ट्वा स पुण्यं लभते नरः ॥ १६
गोमूत्रं गोमयं दुग्धं गोधूलिं गोष्ठ-गोष्पदम् ।
पक्वशस्यान्वितं क्षेत्रं दृष्ट्वा पुण्यं लभेन्नरः ॥ १७
रुचिरां पद्मिनीं श्यामां न्यग्रोधपरिमण्डलाम् ।
सुवेशिकां सुवसनां दिव्यभूषणभूषिताम् ॥ १८
वेश्यां क्षेमङ्करीं गन्धं सदूर्व्वाक्षततण्डुलम् ।
सिद्धान्नं परमान्नञ्च दृष्ट्वा पुण्यं लभेन्नरः ॥ १९
कार्त्तिक्यां पूर्णिमायाञ्च राधिकाप्रतिमां शुभाम् ।
सम्पूज्य दृष्ट्वा नत्वा च करोति जन्मखण्डनम् ॥ २०
चिङ्कुलायां तथाष्टम्यामिषे मासि सिते शुभे ।
श्रीदुर्गाप्रतिमां दृष्ट्वा करोति जन्मखण्डनम् ॥ २१

(क) तपस्विनं स्निग्धयन्त्रमिति पाठान्तरम् ।

शिवरात्रौ च काश्याञ्च विश्वनाथस्य दर्शनम्।
कृत्वोपवासं पूजाञ्च करोति जन्मखण्डनम्॥ २२
जन्माष्टमीदिने भक्त्या दृष्ट्वा मां विन्ध्यमाधवम्।
प्रणम्य पूजां कृत्वा च करोति जन्मखण्डनम्॥ २३
पौषे मासि कुहूरात्रौ यत्र तत्र स्थले नरः।
पद्मायाः प्रतिमां दृष्ट्वा करोति जन्मखण्डनम्।
सप्तजन्म भवेत् तस्य पुत्त्रः पौत्त्रो धनेश्वरः॥ २४
उपोष्यैकादशीं स्नात्वा प्रभाते द्वादशीदिने।
दृष्ट्वा काश्यामन्नपूर्णां करोति जन्मखण्डनम्॥ २५
चैत्रे मासि चतुर्द्दश्यां कामरूपे सुपुण्यदे।
दृष्ट्वा नत्वा भद्रकालीं करोति जन्मखण्डनम्॥ २६
अयोध्यायाञ्च रामं मां श्रीरामनवमीदिने।
सम्पूज्य नत्वा दृष्ट्वा च करोति जन्मखण्डनम्॥२७
दत्त्वा विष्णुपदे पिण्डं विष्णुं यश्च प्रपूजयेत्।
पितॄणां स्वात्मनश्चैव करोति जन्मखण्डनम्॥ २८
प्रयागे मुण्डनं कृत्वा दानञ्च कुरुते यदि।
उपोष्य नैमिषारण्ये करोति जन्मखण्डनम्॥ २९
उपोष्य पुष्करे स्नात्वा किं वा बदरिकाश्रमे।
सम्पूज्य दृष्ट्वा मामेव करोति जन्मखण्डनम्॥ ३०
सिद्धं कृत्वा तु बदरं भुङ्क्ते बदरकानने।
दृष्ट्वा मत्प्रतिमां नन्द करोति जन्मखण्डनम्॥ ३१
दोलायमानं गोविन्दं पुण्ये वृन्दावने च माम्।
दृष्ट्वा सम्पूज्य नत्वा च करोत् जन्म[illegible]ण्डनम्॥ ३२
[illegible] मञ्चस्थं मामेव मधुसूदनम्।
सम्पूज्य नत्वा भक्ताश्च करोति जन्मखण्डनम्॥ ३३
रथस्थञ्च जगन्नाथं कलौ द्रक्ष्यति यो नरः।
सम्पूज्य नत्वा भक्ताश्च करोति जन्मखण्डनम्॥ ३४
उत्तरायणसंक्रान्त्यां प्रयागे स्नानमाचरेत्।
सम्पूज्य नत्वा मामेव करोतु जन्मखण्डनम्॥ ३५
कार्त्तिकीपूर्णिमायाञ्च दृष्ट्वा मत्प्रतिमां शुभाम्।
उपोष्य पूजां कृत्वा च करोति जन्मखण्डनम्॥ ३६
चन्द्रभागासमीपे च साध्यञ्च मां नयेच्छनैः।
राधया सह मां दृष्ट्वा करोति जन्मखण्डनम्॥ ३७
रामेश्वरं सेतुबन्धे आषाढीपूर्णिमादिने।
उपोष्य दृष्ट्वा सम्पूज्य करोति जन्मनः क्षयम्॥ ३८
स्वर्गविद्याधरी रात्रौ नृत्यन्ती च मुहुर्मुहुः।
प्रणामं कर्त्तुमीशं तं समायाति विभीषणः।
गायन्ति किन्नरा रात्रौ गन्धर्व्वाश्च मनोहरम्॥३९
दीननाथं दिनकरं कोणार्के (क) चोत्तरायणे।
उपोष्य दृष्ट्वा सम्पूज्य करोति जन्मनः क्षयम्॥ ४०
कृमिगोष्ठे सुवत्सने कलविङ्के युगन्धरे।
विश्वन्दके राजकोष्ठे नन्दके पुष्पभद्रके॥ ४१
पार्व्वतीप्रतिमां दृष्ट्वा कार्त्तिकेयं गणेश्वरम्।
नन्दिनं शङ्करं दृष्ट्वा करोति जन्मनः क्षयम्॥ ४२
उपोष्य प्रातः सम्पूज्य दृष्ट्वा नत्वा तु मां ततः।
पारणञ्च दधि प्राश्य करोति जन्मनः क्षयम्॥ ४३
त्रिकूटे मणिभद्रे च पश्चिमोदधिसन्निधौ।
समुपोष्य दधि प्राश्य मां दृष्ट्वा मुक्तिमाप्नुयात्॥ ४४
प्रतिमासु मदीयासु पार्व्वतीप्रतिमासु च।
जीवं संन्यस्य सम्पूज्य करो[illegible]न्मनः क्षयम्॥ ४५
शिवदुर्गालयं दत्त्वा मदीयञ्च विशेषतः।
शिवसंस्थापनं कृत्वा करोति जन्मनः क्षयम्॥ ४६
पुष्पोद्यानञ्च संयूपं (ख) सेतुं खातं सरोवरम्।
विप्रसंस्थापनं कृत्वा करोति जन्मनः क्षयम्॥ ४७
न च वेदाः पुराणानि ब्रह्मसंस्थापनं फलम्।
जानन्ति सन्तो मुनयः सुरा ब्रह्मादयः पितः॥ ४८
गण्यन्ते पांशवो भूमौ गण्यन्ते वृष्टिबिन्दवः।
न गण्यन्ते विधात्रापि विप्रसंस्थापनं फलम्॥ ४९
[illegible] जीवन्मुक्तो भवेन्नरः।
अचलां श्रियमाप्नोति परे मुक्तिचतुष्टयम्॥ ५०
मद्दास्यभक्तिं स लभेद्वैकुण्ठे मोदते चिरम्।
न हि पातो भवेत् तस्य यथा मे परमात्मनः॥ ५१
कुमारीमष्टवर्षीयां सुविप्राय ददाति यः।
सम्पूज्य सर्व्वाभरणां दुर्गादानफलं लभेत्॥ ५२
सर्व्वं स्वर्गं समालोक्य ब्रह्मलोकेषु पूजितः।
लभते मम दास्यञ्च वैकुण्ठे मोदते चिरम्॥ ५३
विवाहदर्शने कोटि-स्वर्णदानफलं लभेत्।
अन्ते स्वर्गं प्रयात्येवमिहैव निश्चलां श्रियम्॥ ५४
सुब्राह्मणमनाथञ्चेद्दरिद्रञ्च सुपण्डितम्।
दृष्ट्वा ददौ तद्विवाहं स मोक्षं लभते ध्रुवम्॥ ५५
यश्छत्त्रपादुकादानं शालग्राम उपोषितः।
करोति भक्त्या पुण्याहे पृथ्वीदानफलं लभेत्॥ ५६

(क) कोणार्के इति च क्वचित्।
(ख) पुष्पोद्यानञ्च शङ्कुञ्च इति पाठान्तरम्।

गजदानेन तल्लोम-मानवर्षं श्रुतौ श्रुतम्।
चतुर्गुणं गजेन्द्रस्य मोदते मम मन्दिरे॥ ५७
गजार्द्धं श्वेततुरगे तदर्द्धञ्चेतरे पितः।
गजतुल्यं कृष्णगवां दाने च तत्फलं लभेत्॥ ५८
तत्तुल्यं धेनुदानेन अर्द्धं सामान्यगोस्तथा।
स लभेत प्रसूतानां पृथ्वीदानफलं भुवः॥ ५९
भूमिदाने रेणुवर्षं स्यानञ्च मत्पदे पितः।
ज्ञानदाने महापुण्यं वैकुण्ठे मोदते चिरम्॥ ६०
श्रियं लभेत् स्वर्णदाने राजतं रजते तथा।
अन्नदाने फलं नाहं कथं जानामि न श्रुतिः॥ ६१
लभते सर्व्वदानस्य फलं ब्राह्मणभोजने।
अन्नदानात् परं दानं न भूतं न भविष्यति॥ ६२
नात्र पात्रपरीक्षा स्यान्न कालनियमः क्वचित्।
अन्नदाने शुभं पुण्यं दातुः पातञ्च पातकी॥ ६३
अन्नदानञ्च धन्यं स्याद्भूमौ वैकुण्ठगामिता।
वस्त्रदाने सूत्रमान-वर्षञ्च मोदते चिरम्॥ ६४
सुरम्ये चन्द्रलोके च वारुणे च तथैव च।
कृत्वा लौहप्रदीपार्हं स्वर्णवर्त्तिसमन्वितम्।
दत्त्वा घृतप्रदीपञ्च हरये परमात्मने॥ ६५
अन्धकारमयग्रन्थं यमदूतं यमं तथा।
न हि पश्यति दाता च प्रयाति मम मन्दिरम्॥६६
ब्राह्मणाय च दत्त्वैव न याति यमयातनाम्।
दिव्यं वर्षसहस्रञ्च मोदते ब्रह्ममन्दिरे॥ ६७
आसने लभते स्वर्गं वस्तु-पात्रानुरूपतः।
उत्तमे लक्षवर्षञ्च तदर्द्धं चेतरे व्रज॥ ६८
ताम्बूलेन लभेद्भोगं स्वर्गे वर्षशतं व्रज।
माल्यदाने प्रियं स्वर्गं वस्तुपात्रानुरूपतः॥ ६९
फलदानफलं स्वर्गं लभते नात्र संशयः॥ ७०
सामान्यशय्यादानेन स्वर्गं वर्षशतं व्रजेत्।
चतुर्गुणं प्रकृष्टायां गुणलक्षं विलक्षणे॥ ७१
अनाथाय सुविप्राय यदि गेहं प्रदीयते।
तद्रेणुमानवर्षञ्च ब्रह्मलोके महीयते॥ ७२
दृष्ट्वा बुभुक्षितं विप्रमन्नं तस्मै प्रदीयते।
अचलां श्रियमाप्नोति पुत्रपौत्रविवर्द्धनीम्॥ ७३
व्रजनाथ व्रजं गत्वा व्रजभूमौ व्रजाधुना।
व्रज भोजय विप्रांश्च व्रज स्वर्गं व्रजं व्रज॥ ७४
गोकुले गोकुले वत्स वत्स वत्स निराकुले।
व्याकुलानां गोकुलानां सङ्कुले च व्रजे व्रजेः॥ ७५
एतत् ते कथितं नन्द सानन्दं पुण्यवर्द्धनम्।
सुस्वप्नदर्शनं पुण्यं यदि नीचं न वक्ति च॥ ७६
काश्यपं दुर्गतं नीचं मतुमत्स्यानिनं स्त्रियम्।
त्यक्त्वा रात्रिञ्च दिवसे वक्ति विप्रं सुपण्डितम्॥७७
देवालये च दिव्यं वाप्यश्वत्थं तुलसीवटम्।
उक्त्वा तद्द्विगुणां पुण्यमप्रकाश्यं चतुर्गुणम्॥ ७८
सुस्वप्नदर्शने प्राज्ञो गङ्गास्नानफलं लभेत्।
अर्थञ्च विपुलं पुत्रं भार्य्यां भूमिं लभेत् प्रजाम्॥७९
मोक्षञ्च परमैश्वर्य्यं लभते सर्व्ववाञ्छितम्।
इत्येवं कथितं तात किं भूयः श्रोतुमिच्छसि॥ ८०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायणनारदसंवादे भगवन्नन्द-संवादे षट्सप्ततितमोऽध्यायः॥७६॥

---

## सप्तसप्ततितमोऽध्यायः।

नन्द उवाच।

केन स्वप्नेन किं पुण्यं केन मुख्यो भवेत् सुखम्।
कोऽपि कोऽपि च सुस्वप्नस्तत् सर्व्वं कथय प्रभो॥ १

श्रीभगवानुवाच।

वेदेषु सामवेदश्च प्रशस्तः सर्व्वकर्म्मसु।
तत्रैव काण्वशाखायां पुण्यकाण्डे मनोहरे॥ २
सुव्यक्तो यश्च सुस्वप्नः संवत्पुण्यफलप्रदः।
तत् सर्व्वं लिखितं तात कथयामि निशामय॥ ३
स्वप्नाध्यायं प्रवक्ष्यामि बहुपुण्यफलप्रदम्।
स्वप्नाध्यायं नरः श्रुत्वा गङ्गास्नानफलं लभेत्॥ ४
स्वप्नस्तु प्रथमे यामे संवत्सरफलप्रदः।
द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्तृतीयके॥ ५
चतुर्थे चार्द्धमासेन स्वप्नः स्वात्मफलप्रदः।
दशाहे फलदः स्वप्नो प्यरुणोदयदर्शने।
प्रातःस्वप्नश्च फलदस्तत्क्षणं यदि बोधितः॥ ६
दिने मनसि यद्वृत्तं तत् सर्व्वञ्च लभेद्ध्रुवम्।
चिन्ताव्याधिसमायुक्तो नरः स्वप्नञ्च पश्यति॥ ७
तत् सर्व्वं निष्फलं तात प्रयात्येव न संशयः॥ ८
जड़ो मूत्रपुरीषेण पीड़ितश्च भयाकुलः।
दिगम्बरो मुक्तकेशो न लभेत् स्वप्नजं फलम्॥ ९

दृष्ट्वा स्वप्नञ्च निद्रालुर्यदि निद्रां प्रयाति च ।
विमूढ़ो वक्ति चेद्रात्रौ न लभेत् स्वप्नजं फलम् ॥ १०
उक्ता काश्यपगोत्रे च विपत्तिं लभते ध्रुवम् ।
दुर्गते दुर्गतिं याति नीचे व्याधिं प्रयाति च ॥ ११
भक्तो भयञ्च लभते मूर्खे च कलहं लभेत् ।
कामिन्यां धनहानिः स्याद्रात्रौ चौरभयं भवेत् ॥१२
निद्रायां लभते शोकं पण्डिते वाञ्छितं फलम् ।
न प्रकाश्यश्च सुस्वप्नः पण्डिते काश्यपे व्रज ॥ १३
गवाञ्च कुञ्जराणाञ्च हयानाञ्च व्रजेश्वर ।
प्रासादानाञ्च शैलानां वृक्षाणाञ्च तथैव च ॥ १४
आरोहणञ्च धनदं भोजनं रोदनं तथा ।
प्रतिग्रह्य तथा वीणां शस्याढ्यां भूमिमालभेत् ॥ १५
शस्त्रास्त्रेण यदा विद्धो व्रणेन क्रिमिणा तथा ।
विष्ठया रुधिरेणैव संयुतोऽप्यर्थमालभेत् ॥ १६
स्वप्नेऽप्यगम्यागमने भार्य्यालाभं करोति च ।
मूत्रसिक्तं पिवेच्छुक्रं नरकञ्च विशत्यपि ॥ १७
नगरं प्रविशेद्रक्तं समुद्रं वा सुधां पिवेत् ।
शुभवार्त्तामवाप्नोति विपुलञ्चार्थमालभेत् ॥ १८
गजं नृपं सुवर्णञ्च वृषभं धेनुमेव च ।
दीपमन्नं फलं पुष्पं कन्यां (क) पुत्रं रथं ध्वजम् ।
कुटुम्बं लभते दृष्ट्वा कीर्त्तिञ्च विपुलां श्रियम् ॥ १९
पूर्णकुम्भं द्विजं वह्निं पुष्पताम्बूलमन्दिरम् ।
शुक्लधान्यं नटं वेश्यां दृष्ट्वा श्रियमवाप्नुयात् ॥ २०
गोक्षीरञ्च घृतं दृष्ट्वा चार्थं पुण्यं धनं लभेत् ॥ २१
पायसं पद्मपत्रे च दधि दुग्धं घृतं मधु ।
मिष्टान्नं स्वस्तिकं भुक्त्वा ध्रुवं राजा भविष्यति ॥ २२
पक्षिणां मानुषाणाञ्च भुङ्क्ते मांसं नरो यदि ।
बह्वर्थं शुभवार्त्ताञ्च लभते वाञ्छितं फलम् ॥ २३
छत्रं वा पादुकां वापि लब्ध्वाऽध्वानञ्च गच्छति ।
असिञ्च निर्म्मलं तीक्ष्णं तत् तथैव भविष्यति ॥ २४
शैलया सन्तरेद्यो हि स प्रधानो भविष्यति ।
दृष्ट्वा च फलिनं वृक्षं धनमाप्नोति निश्चितम् ॥ २५
सर्पेण भक्षितो यो हि चार्थलाभश्च तद्भवेत् ।
स्वप्ने सूर्य्यं विधुं दृष्ट्वा मुच्यते व्याधिबन्धनात् ॥ २६
वड़वां कुक्कुटीं क्रौञ्चीं दृष्ट्वा भार्य्यां लभेद्ध्रुवम् ।
स्वप्ने यो निगड़ैर्बद्धः प्रतिष्ठां पुत्रमालभेत् ॥ २७

दध्यन्नं पायसं भुङ्क्ते पद्मपत्रे नदीतटे ।
विशीर्णपद्मपत्रे च सोऽपि राजा भविष्यति ॥ २८
जलौकसो वृश्चिकञ्च सर्पञ्च यदि पश्यति ।
धनं पुत्रञ्च विजयं प्रतिष्ठां वा लभेदिति ॥ २९
शृङ्गिभिर्दंष्ट्रिभिः कोलैर्वानरैः पीड़ितो यदि ।
निश्चितञ्च भवेद्राजा धनञ्च विपुलं लभेत् ॥ ३०
मत्स्यं मांसं मौक्तिकञ्च शङ्ख-चन्दन-हीरकम् ।
यस्तु पश्यति स्वप्नान्ते विपुलं धनमालभेत् । ३१
सुराञ्च रुधिरं स्वर्णं विष्ठां दृष्ट्वा धनं लभेत् ।
प्रतिमां शिवलिङ्गञ्च लभेद्दृष्ट्वा जयं धनम् ॥ ३२
फलिनं पुष्पितं विल्वमाम्रं दृष्ट्वा लभेद्धनम् ।
दृष्ट्वा च ज्वलदग्निञ्च धनं बुद्धिं श्रियं लभेत् ।
आमलकं (क) धात्रीफलं उत्पलञ्च धनागमम् ॥३३
देवताश्च द्विजा गावः पितरो लिङ्गिनस्तथा ।
मिथो यद्वदति स्वप्ने तत् तथैव भविष्यति ॥ ३४
शुक्लाम्बरधरा नार्य्यः शुक्लमाल्यानुलेपनाः ।
समाश्लिष्यन्ति यं स्वप्ने तस्य श्रीः सर्व्वतः सुखम् ॥३५
पीताम्बरधरां नारीं पीतमाल्यानुलेपनाम् ।
उपगूहति यः स्वप्ने कल्याणं तस्य जायते ॥ ३६
सर्व्वाणि शुक्लानि प्रशंसितानि
भस्मास्थिकार्पासविवर्ज्जितानि ॥ ३७
दिव्या स्त्री सस्मिता विप्रा रत्नभूषणभूषिता ।
यस्य मन्दिरमायाति स श्रियं लभते ध्रुवम् ॥ ३८
स्वप्ने च ब्राह्मणो देवो ब्राह्मणी देवकन्यका ।
फलं ददाति यस्मै च तस्य पुत्रो भविष्यति ॥ ३९
यं स्वप्ने ब्राह्मणो नन्द करोति च शुभाशिषम् ।
पदे पदे सुखं तस्य सम्मानं गौरवं भवेत् ॥ ४०
अकस्माद्यदि तु स्वप्ने लभते सुरभीं सतीम् ।
भूमिलाभो भवेत् तस्य भार्य्या चापि पतिव्रता ॥ ४१
करेण कृत्वा हस्ती यं मस्तके स्थापयेद्यदि ।
राज्यलाभो भवेत् तस्य निश्चितञ्च श्रुतौ श्रुतम् ॥४२
स्वप्ने तु ब्राह्मणस्तुष्टः समाश्लिष्यति यं व्रज ।
तीर्थस्नायी भवेत् सोऽपि निश्चितञ्च श्रियान्वितः ॥४३
स्वप्ने ददाति पुष्पञ्च यस्मै पुण्यवते द्विजः ।
जययुक्तो भवेत् सोऽपि यशस्वी च धनी सुखी ॥ ४४
स्वप्ने दृष्ट्वा च तीर्थानि सौध-रत्न-गृहाणि च ।

(क) कन्यां छत्रं रथध्वजमिति पाठान्तरम् ।

(क) आम्रातकं धात्रीफलमिति च क्वचित् ।

जययुक्तश्च धनवान् तीर्थस्नायी भवेन्नरः ॥ ४५
स्वप्ने तु पूर्णकलसं कश्चित् कस्मै ददाति वा।
पुत्रलाभो भवेत् तस्य सम्पत्तिं वाऽन्यां लभेत् ॥ ४६
हस्ते कृत्वा तु कुड़वमाढ़कं वापि सुन्दरी।
यस्य मन्दिरमायाति स लक्ष्मीं लभते ध्रुवम् ॥ ४७
दिव्या स्त्री यद्गृहं गत्वा पुरीषं विसृजेद्व्रज।
अर्थलाभो भवेत् तस्य दारिद्र्यञ्च प्रयाति च ॥ ४८
यस्य गेहं समायाति भार्य्यया सह ब्राह्मणः।
पार्व्वत्या सह शम्भुर्वा लक्ष्म्या नारायणोऽथवा ॥ ४९
ब्राह्मणो ब्राह्मणी वापि स्वप्ने यस्मै ददाति वा।
धान्यं पुष्पाञ्जलिं वापि तस्य श्रीः सर्व्वतः सुखी॥५०
मुक्ताहारं पुष्पमाल्यं चन्दनञ्च लभेद्व्रज।
स्वप्ने ददाति विप्रश्च तस्य श्रीः सर्व्वतः सुखी ॥ ५१
गोरोचनां पताकां वा हरिद्रामिक्षुदण्डकम्।
स्निग्धान्नञ्च लभेत् स्वप्ने तस्य श्रीः सर्व्वतः सुखी ॥५२
ब्राह्मणो ब्राह्मणी वापि ददाति यस्य मस्तके।
छत्रं वा शुक्लमाल्यं वा स च राजा भविष्यति ॥ ५३
स्वप्ने रथस्थः पुरुषः शुक्लमाल्यानुलेपनः।
तत्रस्थो दधि भुङ्क्ते च पायसं वा नृपो भवेत् ॥ ५४
स्वप्ने ददाति विप्रश्च ब्राह्मणी वा सुधां दधि।
प्रशस्तपात्रं यस्मै वा सोऽपि राजा भवेद्ध्रुवम् ॥ ५५
कुमारी चाष्टवर्षीया रत्नभूषणभूषिता।
यस्य तुष्टा भवेत् स्वप्ने तस्य तुष्टा च पार्व्वती ॥ ५६
यशस्वी धनवान् भूमि-प्रजावान् पण्डितो भवेत्।
किं वा महाधनाढ्योऽपि किं वा राजा भवेद्ध्रुवम्॥५७
शुक्लपीताम्बरधरा रत्नभूषणभूषिता।
यस्य तुष्टा भवेत् स्वप्ने स भवेत् कविपण्डितः ॥ ५८
ददाति पुस्तकं स्वप्ने यस्मै पुण्यवते च सा।
स भवेद्विश्वविख्यातः कवीन्द्रः पण्डितेश्वरः ॥ ५९
यं पाठयति सा स्वप्ने मातेव स्वसुतं यथा।
सरस्वतीसुतः सोऽपि तत्परो नास्ति पण्डितः ॥ ६०
ब्राह्मणः पाठयेद्यञ्च पितेव यत्नपूर्व्वकम्।
ददाति पुस्तकं प्रीत्या स च तत्सदृशो भवेत् ॥६१
प्राप्नोति पुस्तकं स्वप्ने पथि वा यत्र तत्र वा।
स पण्डितो यशस्वी च विख्यातश्च महीतले ॥ ६२
स्वप्ने यस्मै महामन्त्रं विप्रा विप्रो ददाति चेत्।
स भवेत् पुरुषः प्राज्ञो धनवान् गुणवान् सुधीः ॥६३

स्वप्ने ददाति मन्त्रं वा प्रतिमां वा शिलामयीम्।
यस्मै ददाति विप्रश्च मन्त्रसिद्धिश्च तद्भवेत् ॥ ६४
विप्रा-विप्रसमूहञ्च दृष्ट्वा नलाभिषं लभेत्।
राजेन्द्रः स भवेद्वापि किं वा स कविपण्डितः ॥ ६५
शुक्लमाल्ययुतां भूमिं यस्मै विप्रः समुत्सृजेत्।
स्वप्ने च परितुष्टश्च स भवेत् पृथिवीपतिः ॥ ६६
स्वप्ने विप्रो रथे कृत्वा नानास्वर्गं प्रदर्शयेत्।
चिरजीवी भवेदायुर्धनवृद्धिर्भवेद्ध्रुवम् ॥ ६७
विप्रा विप्रश्च सन्तुष्टो यस्मै कन्यां ददाति च।
स्वप्ने स च भवेन्नित्यं धनाढ्यो भूपतिः स्वयम् ॥ ६८
स्वप्ने सरोवरं दृष्ट्वा समुद्रं वा नदीं नदम्।
शुक्लाहिं शुक्लशैलञ्च दृष्ट्वा श्रियमवाप्नुयात् ॥ ६९
यः पश्यति मृतं स्वप्ने स भवेच्चिरजीवनः।
अरोगी रोगिणं दुःखी सुखिनञ्च सुखी भवेत् ॥७०
दीव्या स्त्री यं प्रवदति मम स्वामी भवान् भव।
स्वप्ने दृष्ट्वा च जागर्त्ति स च राजा भवेद्ध्रुवम् ॥ ७१
स्वप्ने च बालिकां दृष्ट्वा लब्ध्वा स्फाटिकमालिकाम्।
इन्द्रचापं शुक्लघनं सुप्रतिष्ठां लभेद्ध्रुवम् ॥ ७२
स्वप्ने विप्रो वदति यं मम दासो भवेति च।
हरिदासस्य तद्भक्तिं लब्ध्वा स वैष्णवो भवेत् ॥ ७३
स्वप्ने विप्रो हरिः शम्भुर्ब्राह्मणी कमला शिवा।
शुक्ला स्त्री वेदमाता च जाह्नवी वा सरस्वती ॥ ७४
गोपालिकावेशधरा बालिका राधिका मम।
बालश्च बालगोपालः स्वप्नविद्भिः प्रकाशितः ॥ ७५
एतत् ते कथितं नन्द सुस्वप्नः पुण्यहेतुकः।
श्रोतुमिच्छसि किं वा त्वं किं भूयः कथयामि ते॥७६

इति श्रीब्रह्मवैवर्त्ते महापुराणे सुस्वप्नदर्शनम्।

नन्द उवाच।

श्रीकृष्ण जगतां नाथ सुस्वप्नश्च श्रुतो मया।
वेदसारो नीतिसारो लौकिको वैदिकस्तथा ॥ ७७
अधुना श्रोतुमिच्छामि पापं येषाञ्च दर्शने।
यस्मिन् कर्म्मणि वा वत्स तन्मां कथितुमर्हसि ॥ ७८
वचनं वेदशास्त्रोक्तं वेदानुयायिनस्तथा।
श्रोतुमिच्छन्ति सन्तप्ता लोकास्त्वन्मुखतस्तथा ॥ ७९
वेदानां जनकस्त्वञ्च वैदिकानां सतामपि।
ब्रह्मादीनां सुराणाञ्च मुनीनां जगतामपि ॥ ८०
श्रुतं यत् त्वन्मुखाम्भोजात् प्रमाणं वचनामृतम्।

तेन देहोऽभिषिक्तो मे वत्स विच्छेददाहनः ॥ ८१
स्वप्ने यच्चरणाम्भोजं सर्व्वकामफलप्रदम्।
ब्रह्मादयो न पश्यन्ति तदद्य दृष्टिगोचरम् ॥ ८२
अतः परं त्वत्पदाब्जं क्व पश्यामि च पातकी।
मलमूत्रधरो देहो निबद्धोऽयं स्वकर्म्मणा ॥ ८३
ईदृशञ्च दिनं वत्स कदा मम भविष्यति।
त्वया ब्रह्मादिनाथेन संवादो मम पापिनः ॥ ८४
कृपां कुरु कृपानाथ मम दोषं क्षमस्व च।
वत्सबुद्ध्या च दुर्नीतं यद्यत् कृतमिहेश्वर ॥ ८५
ब्रह्मेश-शेष-मुनयो ध्यायन्ते यत्पदाम्बुजम्।
सरस्वती श्रुतियस्य स्तवने जड़तां व्रजेत् ॥ ८६

नारायण उवाच।

इत्येवमुक्त्वा नन्दश्च निरानन्दः शुचाकुलः।
मूर्च्छामाप रुदित्वा च पुत्रविच्छेदविह्वलः ॥८७
सन्त्रस्तो भगवान् कृष्णो बोधयामास यत्नतः।
परमाध्यात्मिकं ज्ञानं ददौ तस्मै जगत्पतिः ॥ ८८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारद-संवादे भगवन्नन्द-संवादे सप्तसप्ततितमोऽध्यायः ॥७७॥

---

## अष्टसप्ततितमोऽध्यायः।

श्रीभगवानुवाच।

हे नन्द जनकश्रेष्ठ श्रेष्ठ सर्व्वजनेश्वर।
चेतनां कुरु कल्याण ज्ञानञ्च परमं शृणु ॥ १
परमाध्यात्मिकं ज्ञानं ज्ञानिनाञ्च सुदुर्लभम्।
वेदशास्त्रे गोपनीयं तुभ्यमेव ददाम्यहम् ॥ २
निबोध श्रूयतां नन्द सानन्दः सुसमाहितः।
जन्म-मृत्यु-जरा-व्याधिर्यदभ्यासान्न जायते ॥ ३
स्थिरो भव महाराज व्रजनाथ व्रजं व्रज।
ज्ञानं लब्ध्वा सदानन्दः शोक-मोहविवर्ज्जितः ॥ ४
जलबुद्बुदवत् सर्व्वः संसारः सचराचरः।
प्रभाते स्वप्नवन्मिथ्या मोहकारणमेव च ॥ ५
मिथ्याकृत्रिमनिर्म्माण-देहश्च पाञ्चभौतिकः।
मायया सत्यबुद्ध्या च प्रतीतिं जायते नरः ॥ ६
लोभ-मोह-काम-क्रोधैर्वेष्टितः सर्व्वकर्म्मसु।
मायया मोहितः शश्वज्ज्ञानहीनश्च दुर्बलः ॥ ७
निद्रा-तन्द्रा-क्षुत्पिपासा-क्षमा-श्रद्धा-दयादिभिः।
लज्जा-धृति-शान्ति-पुष्टि-तुष्टिभिश्चापि वेष्टितः ॥ ८
मनो-बुद्धि-चेतनाभिः प्राणज्ञानात्मभिः सह।
संसक्ताः सर्व्वदेवैश्च यथा वृक्षश्च वायसैः ॥ ९
अहमात्मा च सर्व्वेशः शश्वज्ज्ञानात्मकः स्मृतः।
मनो ब्रह्मा च प्रकृतिर्बुद्धिरूपा सनातनी ॥ १०
प्राणा विष्णुश्चेतना सा पद्मा च अधिदेवता।
मयि स्थिते स्थिताः सर्व्वे गतास्तेऽपि गते मयि ॥ ११
अस्माभिश्च विना देहः सद्यः पतति निश्चितम्।
पञ्चभूतं विलीनञ्च पञ्चभूतेषु तत्क्षणम् ॥ १२
नाम सङ्केतरूपञ्च निष्फलं मोहकारणम्।
शोकमज्ञानिनां तात ज्ञानिनां नास्ति किञ्चन ॥१३
निद्रादयः शक्तयश्च ताः सर्व्वाः प्रकृतेः कलाः।
लोभादयो ह्यधर्म्मांशास्तथाहङ्कारपञ्चमाः ॥ १४
ते ब्रह्म-विष्णु-रुद्रांशा गुणाः सत्त्वादयस्त्रयः।
ज्ञानात्मकः शिवो ज्योतिरहमात्मा च निर्गुणः ॥१५
यदा विश्रामी प्रकृतौ तदाहं सगुणः स्मृतः।
सगुणा विषया विष्णु-ब्रह्म-रुद्रादयः स्मृताः ॥ १६
धर्म्मो मदंशो विषयी शेषः सूर्य्यः कलानिधिः ॥१७
एवं सर्व्वे मत्कलांशा मुनि-मन्वादयः सुराः।
सर्व्वदेहे प्रविष्टोऽहं न लिप्तः सर्व्वकर्म्मसु ॥ १८
जीवन्मुक्ताश्च मद्भक्ता जन्म-मृत्यु-जराहराः।
सर्व्वसिद्धेश्वरः श्रीमान् कीर्त्तिमान् पण्डितःकविः१९
चतुस्त्रिंशद्विधं सिद्धं सर्व्वकर्म्मोपकारकम्।
तमुपैति स्वयं सिद्धं भक्तास्तं नैव वाञ्छति ॥ २०
द्वाविंशतिविधं सिद्धं सर्व्वसाधनकारणम्।
मन्मुखात्श्रूयतां नन्द सिद्धमन्त्रं गृहाण च ॥ २१
अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा।
ईशित्वञ्च वशित्वञ्च तथा कामावशायिता ॥ २२
दूरश्रवणमेवेति द्वार-कायप्रवेशनम्।
मनोयायित्वमेवेति सर्व्वज्ञत्वमभीप्सितम् ॥ २३
वह्निस्तम्भं जलस्तम्भं चिरजीवित्वमेव च।
वायुस्तम्भं क्षुत्पिपासा निद्रास्तम्भनमेव च ॥ २४
वायव्यूहञ्च वाक्सिद्धिं मृतानयनमीप्सितम्।
सृष्टीनां करणञ्चैव प्राणाकर्षणमेव च ॥ २५
प्राणानाञ्च प्रदानञ्च लोभादीनाञ्च स्तम्भनम्।
इन्द्रियाणां स्तम्भनञ्च बुद्धिस्तम्भनमेव च ॥ २६

ओं सर्व्वेश्वराय सर्व्वविघ्नविनाशिने
मधुसूदनाय स्वाहा।
इत्येवमेव मन्त्रस्य सर्व्वेषां कल्पपादपः ॥ २७
सामवेदे च कथितः सिद्धानां सर्व्वसिद्धिदः।
अनेन योगिनः सिद्धा मुनीन्द्राश्च सुरास्तथा ॥ २८
शतलक्षजपेनैव मन्त्रसिद्धिर्भवेत् सताम्।
यदि नारायणक्षेत्रे हविष्यान्नरतो जपेत् ॥ २९
गत्वा कुरु जपं तात काशीं तां मणिकर्णिकाम् ॥३०
शृणु नारायणक्षेत्रं जलाद्धस्तचतुष्टयम्।
अत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥ ३१
स्थानेनात्र मृते लोके मुक्तिर्भवति तस्य वै।
अजानेनापि मन्त्रेण जीवन्मुक्तो भवेन्नरः ॥ ३२
व्रजं कुरु पवित्रञ्च व्रजनाथ व्रजं व्रज।
पापं यद्दर्शने तात कथयामि निशामय ॥ ३३
दुःस्वप्नं पापबीजञ्च केवलं विघ्नकारणम्।
गोघ्नं ब्रह्मघ्नं वापि कृतघ्नं कुटिलं तथा ॥ ३४
देवघ्नं पितृमातृघ्नं पापं विश्वासघातिनम्।
मिथ्यासाक्ष्यप्रदातारं पापञ्चातिथिवञ्चकम् ॥ ३५
ग्रामयाजिनमेवेति देवविप्रस्वहारिणम्।
अश्वत्थघातिनं दुष्टं शिव-विष्णुविनिन्दकम् ॥ ३६
अदीक्षितमनाचारं सन्ध्याहीनं द्विजं तथा।
देवलं वृषवाहञ्च शूद्राणां सूपकारकम् ॥ ३७
शवदाहिनञ्च शूद्राणां शूद्रश्राद्धान्नभोजिनम्।
अवीरां छिन्ननासाञ्च देव-ब्राह्मणनिन्दकम् ॥ ३८
पतिभक्तिविहीनाञ्च विष्णुभक्तिविहीनकम्।
शूद्राणां विधवाञ्चैव चण्डालं व्यभिचारिणीम् ॥ ३९
अश्वत्थोपयुतं दुष्टमृणग्रस्तञ्च जारजम्।
चौरं मिथ्यावादिनञ्च शरणागतदायिनम् ॥ ४०
मांसापहारिणञ्चैव ब्राह्मणं वृषलीपतिम्।
ब्राह्मणीगामिनं शूद्रं द्विजं वार्द्धुषिकं तथा।
अगम्यागामिनं दुष्टं चतुर्व्वर्णनराधमम् ॥ ४१
माता सपत्नीमाता च श्वश्रूश्च भगिनी सुता।
गुरुपत्नी पुत्रपत्नी सोदरस्य प्रिया सती ॥ ४२
मातृष्वसा पितृष्वसा भागिनेयप्रिया तथा।
मातुलानी नवोढ़ा च पितृव्यस्त्री रजस्वला ॥ ४३
पितृमातृप्रसूश्चैव चागम्याष्टादश स्मृताः।
कीर्त्तिताः सामवेदे च परिपाल्याः सतां व्रज ॥ ४४
एतान् दृष्ट्वा च स्पृष्ट्वा च ब्रह्महा च भवेन्नरः।
तस्माद्देवादिमान् दृष्ट्वा सूर्य्यं दृष्ट्वा हरिं स्मरेत् ॥४५
कामतो यदि पश्यन्ति तत्तुल्यास्ते भवन्ति हि।
तस्मात् सन्तो न पश्यन्ति पापभीता व्रजेश्वर ॥४६
राहुग्रस्तं रविं सोमं न पश्यन्ति विपश्चितः।
सप्त-जन्माष्ट-रिपुष्फाङ्कद्वयमस्थे निशाकरे ॥ ४७
जन्मर्क्षे निधने चापि चतुर्थे हि कलानिधौ।
सर्व्वेषामप्यदृश्यश्च कथितश्चन्द्रभास्करः ॥ ४८
नष्टचन्द्रो न दृश्यश्च भाद्रे मासि सितासिते।
चतुर्थ्यामुदितोऽशुद्धः परित्यक्तो मनीषिभिः ॥ ४९
चन्द्रस्तारापहरणं कलङ्कमतिदुष्करम्।
तस्मै ददाति हे नन्द कामतो यश्च पश्यति ॥ ५०
अकामतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत्।
तदा शुद्धो भवेत् सद्यो निष्कलङ्को महीतले ॥ ५१
सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥ ५२
इति मन्त्रेण पूतञ्च जलं साधुः पिबेद्ध्रुवम्।
इत्येवं कथितं सर्व्वमपरं कथयामि ते ॥ ५३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे भगवन्नन्द-संवादे अष्टसप्ततितमोऽध्यायः ॥७८॥

---

## एकोनाशीतितमोऽध्यायः।

नन्द उवाच।

राहुग्रस्तः कथं सूर्य्यश्चन्द्रो वापि जगत्प्रभो।
नष्टचन्द्रः कथं भाद्रे चतुर्थ्याञ्च सितासिते ॥ १
वेदानां जनकस्त्वञ्च कं पृच्छामि त्वया विना।
वेदे पुराणे गोप्यञ्चेदिदं वचनमीप्सितम् ॥ २

श्रीभगवानुवाच।

अकथ्यं वचनञ्चेदं निषिद्धं वैदिकैरपि।
क्षमस्व नन्द भद्रं ते प्रश्नमन्यं कुरुष्व माम् ॥ ३
विश्वस्तं वचनं तात न प्रकाश्यं मनीषिभिः।
न प्रकाश्यञ्च भवति सतां छिद्रञ्च दैवतः ॥ ४

नन्द उवाच।

कथयस्व जगन्नाथ न भक्तो वञ्चनां कुरु।
अदृश्यौ चापि देवेशौ राहुग्रस्तौ च पुष्पदौ ॥ ५

श्रीभगवानुवाच ।

शृणु नन्द प्रवक्ष्यामि कथामेतां पुरातनीम् ।
यां श्रुत्वा निष्कलङ्कश्च तीर्थस्नायी भवेन्नरः ॥ ६
सर्व्वं पातकिनं दृष्ट्वा यत् पापं लभते नरः ।
आख्यानश्रवणेनैव भस्मीभूतं भविष्यति ॥ ७
एकदा जमदग्निश्च महान् कौतूहलान्वितः ।
रेणुकासहितस्तुष्टो जगाम नर्म्मदातटम् ॥ ८
निर्ज्जने नर्म्मदातीरे विजहार तया सह ।
नवोढ़या च सुन्दर्य्या नवयौवनयुक्तया ॥ ९
सुवेशया सस्मितया रत्नभूषणयुक्तया ।
नम्रया स्तनभारेण श्रोणीभारेण जाड्यया ॥ १०
सुन्दरीणामतुलया श्वेतचम्पकवर्णया ।
सुपूर्णचन्द्राननया कटाक्षयुतया तथा ॥ ११
अतीव सूक्ष्माम्बरया कामवाणार्त्तया व्रज ।
पुलकाञ्चितसर्व्वाङ्ग्या सम्भोगेनापि मूर्च्छया ॥ १२
पुंस्कोकिलयुते रम्ये शब्दिते सुमधुव्रते ।
सुगन्धवायुसंयुक्ते पुष्पतल्पान्विते शुभे ॥ १३
चन्दनोक्षितसर्व्वाङ्गं वक्षमाल्यधरं मुनिम् ।
महारासरसाढ्यं तमुवाच भास्करः स्वयम् ॥ १४
वेदकर्त्तुः प्रपौत्रस्त्वं ब्रह्मणश्च जगत्पतेः ।
चतुर्व्वेदविधेयेषु सुनिष्णातः सदा शुचिः ॥ १५
वेदाङ्गकर्त्ता धर्म्मज्ञः श्रेष्ठो वेदविदां वरः ।
महातपस्वी तेजस्वी ब्रह्मचारी च सुव्रती ॥ १६
शुभदिनोक्तं शास्त्रञ्च पठित्वान्यश्च पण्डितः ।
वेदप्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विपर्य्ययः ॥ १७
धर्म्मं त्यजसि धर्म्मज्ञो ह्यधर्म्मेण रतः स्वयम् ।
दिवामैथुनदोषञ्च वक्ति वेदे विशेषतः ।
अहञ्च कर्म्मणां साक्षी तेन त्वां कथयामि तु ॥ १८
सूर्य्यस्य वचनं श्रुत्वा तत्याज मैथुनं द्विजः ।
दृष्ट्वा पुरो विप्ररूपं सूर्य्यं तेजस्विनं सुरम् ॥ १९
उवाच सूर्य्यं रक्तास्यः कोपलज्जासमन्वितः ।
रेणुका लज्जिता तत्र पिधाय वाससी सती ॥ २०

जमदग्निरुवाच ।

को भवान् पण्डितम्मन्यो न त्वदन्योऽस्ति पण्डितः ।
अहं भृगोर्भगवतः शिष्यस्त्वं कश्यपस्य च ॥ २१
चतुर्व्वेदांश्च जानामि धर्म्माधर्म्मनिरूपणे ।
वेदप्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विपर्य्ययः ॥ २२
अज्ञानी पुरुषः शश्वच्छङ्कितश्च स्वकर्म्मणा ।
तेजीयसां न दोषाय वह्नेः सर्व्वभुजो यथा ॥ २३
अन्ये भवांश्च धर्म्मश्च साक्षी सर्व्वः स्वकर्म्मणाम् ।
फलदाता च शास्ता च न मे त्वन्तु त्वयः सदा ॥ २४
न वष्णवानां शास्तारो यूयमस्माकमेव च ॥ २५
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
हरेः सुदर्शनं चक्रं शश्वद्रक्षति वैष्णवान् ॥ २६
नारायणश्च भगवान् स्वयं ब्रह्मा च शङ्करः ।
शास्ता यमश्च नास्माकं यूयं नापि दिवाकर ॥ २७
राजपुत्त्रो यथास्थाने वयं स्वच्छन्दगामिनः ।
शक्तोऽहं भस्मसात् कर्त्तुं यमं सर्व्वसुरांस्तथा ।
महेन्द्रप्रभृतीन् सूर्य्य क्षणेनैवावलीलया ॥ २८
कस्त्वं धर्म्मप्रवक्ता मे याहि स्वस्थानमेव च ।
मम शास्ता च भगवान् श्रीकृष्णः प्रकृतेः परः ॥ २९
अद्य मे निर्ज्जने स्थाने रसभङ्गस्त्वया कृतः ।
मम शापात् पापदृष्टो राहुग्रस्तो भविष्यसि ॥ ३०
दृष्ट्वा त्वां ये घनाः सर्व्वे दूरीभूता भवन्ति ते ।
त्वामाच्छन्नं करिष्यन्ति वायुना प्रेरितास्तथा ॥ ३१
स्वतेजसा भवान् गर्व्वी हततेजा भविष्यसि ।
मेघाच्छन्नः स्वल्पतेजा राहुग्रस्तो भवान् भव ॥ ३२
ब्राह्मणस्य वचः श्रुत्वा भगवान् भास्करः स्वयम् ।
त्रस्तः पुटाञ्जलिर्भूत्वा तुष्टाव मुनिपुङ्गवम् ॥ ३३

भास्कर उवाच ।

अवध्या ब्राह्मणाः सर्व्वे धन्या मान्याः पुरस्कृताः ।
नारायणश्च भगवान् शम्भुर्ब्रह्मा स्वयं प्रभुः ॥ ३४
गणेशश्चापि शेषश्च धर्म्मश्चापि सनातनः ।
स्तुवन्ति ब्राह्मणं सर्व्वे विप्ररूपी जनार्द्दनः ॥ ३५
विप्रदत्तश्च यो ब्रह्मन् वयमस्मन्मुखे द्विजः ।
कृताशनश्च विमुखाः सुराः सर्व्वे द्विजो वरम् ॥ ३६
क्षमस्व वैष्णवः शुद्धः स्वधर्म्मञ्च समाचर ।
वैष्णवानां कुतः कोपो हृदि येषां जनार्द्दनः ॥ ३७
अस्माभिः पूजिता विप्रा युष्माभिः पूजिताः सुराः ।
परस्परस्नेहपावच्छेदमाचरणं द्विज ॥ ३८
अहमेव त्वया शप्तो मया शप्तो भवान् भव ।
अन्यथा मां वदन्त्येवं सूर्य्यं निस्तेजसं जनाः ॥ ३९
पराभूतः क्षत्रियेण भविष्यसि द्विजेश्वर ।
मरणं क्षत्रियास्त्रेण भवतश्च भविष्यति ॥ ४०

सूर्य्यस्य वचनं श्रुत्वा चुकोप ब्राह्मणः पुनः ।
तं शशापेति रक्तास्यः शम्भुना च जितो भवान् ॥ ४१
उभयोः कलहं ज्ञात्वा कश्यपेन सह व्रज ।
आजगाम स्वयं ब्रह्मा विधाता जगतामपि ॥ ४२
आगत्य ब्रह्मा सन्त्रस्तं (क) बोधयामास भास्करम् ।
मुनिश्रेष्ठञ्च धर्म्मज्ञं धर्म्मज्ञानां गुरोर्गुरुः ॥ ४३

ब्रह्मोवाच ।

क्षमस्व भास्कर त्वञ्च साक्षान्नारायणो भवान् ।
युष्माकं परिपाल्यश्चाप्यवध्यो ब्राह्मणः सदा ॥ ४४
अहं करोमि भवतो विप्रशापान्तमुल्बणम् ।
अत्राहमागतस्त्वत्तः प्रेरितो भृगुणा ततः ॥ ४५
स्तुतोऽहं प्रेरितश्चापि कश्यपेन मरीचिना ।
शान्तो भव सुरश्रेष्ठ साक्षी त्वं सर्व्वकर्म्मणाम् ॥ ४६
कुत्रचिद्दिवसे ब्रह्मन् शीघ्रत्वं कुत्रचित् क्षणम् ।
भविष्यसि घनाच्छन्नः सद्यो मुक्तो भविष्यसि ॥४७
न्यूनातिरिक्ते वर्षे वा राहुग्रस्तो भविष्यसि ।
तत्राऽदृश्यश्च केषाञ्चित् पुण्यदृश्यो हि कस्यचित् ॥४८
अन्यथा सर्व्वकालेन पुण्यदृश्यो भवान् भुवि ।
त्वां दृष्ट्वा च नमस्कृत्य सर्व्वे निष्पापिणो जनाः ॥ ४९
जन्म-सप्ताष्ट-रिप्फाङ्क-चतुर्थे दशमे विधौ ।
जन्मर्क्षनिधने नृणामदृश्यस्त्वं भविष्यसि ॥ ५०
अस्तकाले घनाच्छन्ने मध्याह्नस्थे जलेऽपि वा ।
अर्द्धोदिते च काले च पापदृश्यो भविष्यसि ॥ ५१
भार्य्यादुःखनिमित्तेन भार्य्यया हेतुभूतया ।
श्वशुरेण श्यालकेन हततेजा भविष्यसि ॥ ५२
अन्यथा तव तेजश्च संज्ञा सहितुमक्षमा ।
मालि-सुमालियुद्धे च शम्भुना त्वं पराजितः ॥ ५३
इत्येवमुक्त्वा सूर्य्यञ्च बोधयामास ब्राह्मणम् ।
नम्रं शापपराभूतं लज्जितं कोपितं व्रज ॥ ५४
हे विप्र स्वगृहं गच्छ गच्छ वत्स यथासुखम् ।
त्वत्तेजसा क्षणेनैव भस्मीभूतं भवेज्जगत् ॥ ५५
सूर्य्यस्त्वत्परिपाल्यश्च भवान् सूर्य्यस्य नित्यशः ।
परस्परञ्च सम्पूज्यः सम्बन्धः पोष्यपोषकः ॥ ५६
हर्य्यंशेन क्षत्रियेण कार्त्तवीर्य्यार्ज्जुनेन च ।
भविष्यसि न सन्देहः पराभूतो द्विजो मृतः ।
पुरा ते शातनं सर्व्वं कदाचिन्न हि खण्डनम् ॥ ५७
नारायणश्च स्वांशेन तव पुत्रो भविष्यति ।
त्रिःसप्तकृत्वो जगतीं निःक्षत्राञ्च करिष्यति ॥ ५८
मृत्युस्ते यशसो वीजं भविष्यति महीतले ।
इत्येवमुक्त्वा ब्रह्मा च ययौ गेहं व्रजेश्वर ॥ ५९
प्रययौ जमदग्निश्च भास्करश्च स्वमन्दिरम् ॥ ६०
इत्येवं कथितं तात स्वाख्यानं पुण्यकारणम् ।
राहुग्रस्तो भास्करश्चाप्यदृश्यो येन हेतुना ॥ ६१
चतुर्थ्यामुदितश्चन्द्रो भाद्रे मासि सितासिते ।
अदृश्यो नष्टरूपश्च श्रूयतां येन हेतुना ॥ ६२
राहुग्रस्तो कलङ्की वा पुरा शप्तः समापितः ।
सर्व्वां त्वां कथयिष्यामि कथामेतां पुरातनीम् ॥ ६३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे भगवन्नन्द-
संवादे सूर्य्यग्रहणकथनं नामैको-
नाशीतितमोऽध्यायः ॥७९॥

---

## अशीतितमोऽध्यायः ।

श्रीकृष्ण उवाच ।

पुरा तारा गुरोः पत्नी नवयौवनसंयुता ।
रत्नभूषणभूषाढ्या वरसूक्ष्माम्बरा सती ॥ १
सुश्रोणी सस्मिता रम्या सुन्दरी सुमनोहरा ।
अतीववक्रवरीरम्या मालतीमाल्यभूषिता ॥ २
सिन्दूरबिन्दुना साकं चारुचन्दनबिन्दुभिः ।
कस्तूरीबिन्दुनाधश्च भालमध्यस्थलोज्ज्वला ॥ ३
रत्नेन्द्रसारनिर्म्माण-क्वणन्मञ्जीररञ्जिता ।
सुवक्रलोचना श्यामा सुचारुकज्जलोज्ज्वला ॥ ४
सुचारुसारमुक्ताभ-दन्तपङ्क्तिमनोहरा ।
रत्नकुण्डलयुग्मेन चारुगण्डस्थलोज्ज्वला ॥ ५
कामिनीष्वतुला बाला गजेन्द्रमन्दगामिनी ।
सुकोमला चन्द्रमुखी कामाधारा च कामुकी ॥ ६
स्वर्गमन्दाकिनीतीरे स्नाता स्निग्धाम्बरावला ।
ध्यायन्ती गुरुपादं सा स्वगृहं गमनोन्मुखी ॥ ७
दृष्ट्वा तस्याश्च सर्व्वाङ्गमनङ्गवाणपीड़ितः ।
भाद्रे चतुर्थ्यां चन्द्रश्च जहार चेतनं व्रज ॥ ८
ज्ञानं क्षणेन सम्प्राप्य रथस्थो रसिको वली ।
रथमारोहयामास करे धृत्वा च तारकाम् ॥ ९

(क) ब्रह्मसन्त्रस्तं इति पाठान्तरम् ।

कामोन्मत्तः कामुकीं तां समाश्लिष्य चुचुम्ब सः।
शृङ्गारं कर्त्तुमुद्यन्तं तमुवाच गुरुप्रिया। १०
तारकोवाच।
त्यज मां त्यज मां चन्द्र सुरेषु कुलपांशुल।
गुरुपत्नीं ब्राह्मणीञ्च पातिव्रत्यपरायणाम्॥ ११
गुरुपत्नीषङ्गमने ब्रह्महत्याशतं भवेत्॥ १२
गुरुपत्नी विप्रपत्नी यदि सा च पतिव्रता।
ब्रह्महत्यासहस्रञ्च तस्याः सङ्गमने लभेत्॥ १३
पुत्रस्त्वं तव माताहं धैर्य्यं कुरु सुरेश्वर।
धिक् त्वां श्रुत्वा सुरगुरुर्भस्मीभूतं करिष्यति॥ १४
पुत्राधिकश्च शिष्यश्च प्रियो मत्स्वामिनो भवान्।
स्वधर्म्मं रक्ष पापिष्ठ मामेव मातरं त्यज।
दास्यामि स्त्रीवधं तुभ्यं यदि मां संग्रहीष्यसि॥ १५
विलङ्घ्य तारावचनं ताञ्च सम्भोक्तुमुद्यतम्।
शशाप तारा कोपेन निष्कामा सा पतिव्रता॥ १६
राहुग्रस्तो धनग्रस्तः पापदृष्टो भवान् भव।
कलङ्की यक्ष्मणा ग्रस्तो भविष्यसि न संशयः॥ १७
चन्द्रार्थन्तु तदा तूर्णं कामदेवं शशाप सा।
तेजस्विना केनचित् त्वं भस्मीभूतो भविष्यसि॥ १८
चन्द्रस्तारां गृहीत्वा च क्वापि रमणं व्रज।
क्रोड़े निधाय प्रययौ रुदतीं तां शुचान्विताम्॥१९
निर्ज्जने निर्ज्जने रम्ये शैले शैले मनोरमे।
सरो-नद-नदीनाञ्च तीरे तीरे मनोहरे॥ २०
मधुव्रत-पिकोत्तोन पुष्पोद्याने सुपुष्पिते।
रम्यायां पुष्पशय्यायां स रेमे रामया सह॥ २१
चन्दनोक्षितसर्व्वाङ्गो मधुपानरतः सुरः।
सुखसम्भोगसंयुक्तो बुबुधे न दिवानिशम्॥ २२
मलये मलयारण्ये मलयानिलसंयुते।
स्यन्दने चन्दनवने पश्चिमोदधिसन्निधौ॥ २३
त्रिकूटे वटमूले च तत्र चन्द्रसरोवरे।
सुचारुशतपत्राणां पत्रे चन्दनचर्च्चिते॥ २४
सुचारुचम्पकोद्याने चम्पकानिलपूजिते।
क्षीरोद-काञ्चनीभूमौ क्रौञ्च-काञ्चनपर्व्वते॥ २५
रत्नशैले मणिमये मणिमन्दिरसुन्दरे।
माणिक्यमुक्तासारेण हीराहारेण शोभिते॥ २६
सुचारुवस्त्रचित्राढ्ये श्वेतचामरदर्पणैः।
भूषिते रत्नदीपैश्च देवक्रीड़ाप्रियस्थले॥ २७
वारुणीं मदिरां पीत्वा वरुणानीसमन्वितः।
वरुणो रमते यत्र तत्र रेमे तया सह॥ २८
पावने पवनोद्याने पारिजातानिलेन च।
सुगन्धामोदिते रत्न-मालातीरे च निर्म्मले॥ २९
अग्निशैले कल्पवृक्षवने वह्निप्रियाश्रमे।
पपौ च कामधेनूनां क्षीरं क्षीरोदधेस्तटे॥ ३०
वह्निशुद्धांशुकयुगं वह्निस्तस्मै ददौ मुदा।
वरुणो रत्नमालाञ्च रत्नछत्रं समीरणः॥ ३१
तत्र दृष्ट्वाऽसुरगुरुं बलिगेहात् समागतम्।
प्रणम्य सर्व्वमुक्त्वा च चन्द्रस्तं शरणं ययौ॥ ३२
शुक्रस्तं बोधयामास वचनं नीतियुक्तितः।
निरपेक्षो मुनिश्रेष्ठो वेदवेदाङ्गपारगः॥ ३३
शुक्र उवाच।
शृणु वत्स प्रवक्ष्यामि गुरवे देहि तारकाम्।
शम्भोश्च गुरुपुत्राय पौत्राय ब्रह्मणश्च वै॥ ३४
पूजिताय सुराणाञ्च देवास्तस्मै रताः सुत।
प्रियाय तत्प्रियां दत्त्वा शीघ्रं तं शरणं व्रज॥ ३५
गुरुपत्नीं मातृपरां त्यज मद्वचनाद्विधो।
गुरुपापक्षमोपायो निवृत्तिस्तु महाफला॥ ३६
सतीनां गुरुपत्नीनां ग्रहणेन बलेन च।
ब्रह्महत्यासहस्राणां पातकं लभते जनः॥ ३७
कुम्भीपाके पच्यते च यावद्वै ब्रह्मणः शतम्॥ ३८
साम्यं नारायणस्थाने तृणपर्व्वतयोः सुर।
कस्त्वं वत्स हरेः स्थाने कर्म्मभोगोऽस्ति ब्रह्मणः।
नारायणाश्रिताः सर्व्वे जीविनस्त्रिविधा भवे॥ ३९
इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे भगवन्नन्दसंवादे ताराहरणे
अशीतितमोऽध्यायः॥ ८०॥

---

## एकाशीतितमोऽध्यायः।

श्रीकृष्ण उवाच।
एतस्मिन्नन्तरे शुक्रः सुरसेनां ददर्श सः।
आकाशमार्गादायान्तीं रणशस्त्रास्त्रधारिणीम्॥१
पताकानां त्रिकोटीश्च शतकोटीमहारथान्।
लक्षकोटीर्गजेन्द्राणां गजानाञ्च चतुर्गुणम्॥ २
अश्वानां तच्छतगुणं समूहञ्च सुदारुणम्।

पदातीनां समूहञ्च तुरगाणाञ्च षड्गुणम् ॥ ३
दुन्दुभीवाद्यभाण्डानां पञ्चलक्षं तथैव च ।
पटहानां त्रिलक्षञ्च डिण्डिमानां हि लक्षकम् ॥४
ऐरावतमहेन्द्रञ्च श्वेताश्वधर्म्ममेव च ।
कुबेरं वरुणं वह्निं रथस्थं पवनं तथा ॥ ५
अहिषस्थं यमञ्चैव स्यन्दनस्थं दिवाकरम् ।
ईशानञ्च गजेन्द्रस्थमनन्तं नागवाहनम् ॥ ६
आदित्यांश्च वसून् रुद्रान् सिद्धगन्धर्व्वकिन्नरान् ।
जीवन्मुक्तमुनीनाञ्च समूहं सूर्य्यवर्च्चसम् ॥ ७
तान् दृष्ट्वा निर्भयः शुक्रः समाश्वास्य निशाकरम् ।
सुराणां द्विगुणं सैन्यमाजुहाव व्रजेश्वर ॥ ८
रत्नमालानदीतीरे ऊतामनप्रियाश्रमे ।
तत्र तस्थौ दैत्यसैन्यं पुण्ये क्षीरोदधेस्तटे ॥ ९
एतस्मिन्नन्तरे शुक्रः समीपे सरसस्तटे ।
पुण्याश्रमेऽक्षयवटे सुरसैन्यात् समागतम् ॥ १०
ददर्श वृषभस्थञ्च शङ्करं सर्व्वशङ्करम् ।
त्रिशूलपट्टिशधरं व्याघ्रचर्म्माम्बरं वरम् ॥ ११
तेजःस्वरूपं परमं भक्तानुग्रहविग्रहम् ।
सर्व्वसम्पत्प्रदातारं सर्व्वज्ञं सर्व्वकारणम् ॥ १२
सर्व्वेश्वरं सर्व्वपूज्यं सर्व्वरूपं सनातनम् ।
शरणागतदीनार्त्त-परित्राणपरायणम् ॥ १३
सस्मितं परमानन्दं ज्वलन्तं ब्रह्मतेजसा ।
सन्त्रस्तः सहसोत्थाय प्रणनाम पदाम्बुजे ॥ १४
ददौ शुभाशिषं तस्मै सुप्रसन्नः परात्परः ।
रत्नसिंहासने तञ्च वासयामास सादरम् ॥ १५
अथ तत्रान्तरे विप्रः सुवसन्तं (क) ददर्श सः ।
शान्तं स्वयं विधातारं रत्नस्यन्दनसुन्दरैः ॥ १६
वह्निशुद्धांशुकाधानं रत्नमालाविभूषितम् ।
प्रसन्नं सस्मितं सिद्धं जगतामीश्वरं परम् ॥ १७
कर्म्मणां फलदातारं तपोरूपं तपस्विनाम् ।
वेदानां जनकं वेदप्रसूकान्तं मनोहरम् ॥ १८
पुटाञ्जलिस्तदा तत्र प्रणनाम सुरेश्वरम् ।
रत्नसिंहासने रम्ये वासयामास भक्तितः ॥ १९
पूजां चकार भक्त्या च तयोश्च चरणाम्बुजम् ।
नोचितं कुशलप्रश्नं तयोः कल्याणमेव च ॥ २०
विधाता जगतां नन्द शुक्राचार्य्यं पुरःस्थितम् ।
मुनिं तं कथयामास यत्नतः शम्भुसम्मतः ॥ २१

ब्रह्मोवाच ।

शुक्र शृणु प्रवक्ष्यामि दुर्नीतं शशिनः सुत ।
लज्जाकरं त्रिजगतां कर्म्म वेदवहिष्कृतम् ॥ २२
स्नात्वा गृहोन्मुखीं तारां गुरुपत्नीं पतिव्रताम् ।
गृहीत्वा शरणापन्नस्त्वयि पापश्च साम्प्रतम् ॥२३
प्रस्तुतं देवसैन्यञ्च पश्य वत्स रणोद्यतम् ।
अहं शम्भुस्त्वत्समीपं तदर्थञ्च समागतः ॥ २४

शम्भुरुवाच ।

चन्द्रमानय हे विप्र यद्यात्मशिवमिच्छसि ।
संहरिष्ये शिवस्तस्य त्रिशूलेन च पापिनः ॥ २५
अन्यथा संहरिष्यामि सर्व्वं दैत्यं क्षणेन च ।
मयि रुष्टे रक्षिता को दैत्यानाञ्च भवेद्द्विज ॥ २६
सद्यः पाशुपतेनैव चाव्यर्थास्त्रेण साम्प्रतम् ।
सुराणां रिपुवर्गञ्च हनिष्याम्यवलीलया ॥ २७
दुर्व्वाससो मदंशस्य गुरुश्च सोऽङ्गिरा मुनिः ।
परस्पराच्च सम्बन्धाद्गुरुपुत्रो गुरुर्मम ॥ २८
बृहस्पतिश्च तेजस्वी तं भस्मीकर्त्तुमीश्वरः ।
न चकार कृपालुस्तन्नियशिष्येण हेतुना ॥ २९
उतथ्यपत्नीं दृष्ट्वा स पुरा रेमे स्वकामतः ।
उतथ्यशापात् तस्यैव परभोग्या (क) प्रिया सती ॥३०
पत्नीं मद्गुरुपुत्रस्य देहि तारां मनोहराम् ।
मद्वैरिणञ्च चन्द्रञ्च भ्रातृभार्य्यापहारिणम् ॥ ३१
शरणागतदीनार्त्तं न हि रक्षेद्व्यदीश्वरः ।
पच्यते निरये तावद्यावदिन्द्राश्चतुर्द्दश ॥ ३२
अत्र तन्नियतं नास्ति पापिष्ठे शरणागते ।
पापी यं शरणं याति स च पापी न संशयः ॥ ३३
देहि तं विप्रशार्द्दूल पापिनं मातृगामिणम् ।
वह्निस्तमानय त्वञ्च साध्वीतारासमन्वितम् ॥ ३४

शुक्र उवाच ।

सुराणामसुराणाञ्च सर्व्वेषां जगतामपि ।
त्वमेव शास्ता भगवन् तव साम्यं सुरेऽसुरे ॥ ३५
कृत्वा सुराणां साहाय्यं कथं दैत्यान् हनिष्यसि ।
संहर्त्तुः सर्व्वजगतां दैत्यघ्ने किञ्च पौरुषम् ॥ ३६
त्वं ज्योतिः परमं ब्रह्म सगुणो निर्गुणः स्वयम् ।
गुणभेदान्मूर्त्तिभेदो ब्रह्मविष्णुशिवात्मकः ॥ ३७

(क) पुरतस्तस्मिति क्वचित् ।

(क) परशस्ता इति पाठान्तरम् ।

बलिद्वारे गदापाणिः स्वयमेव भवान् प्रभो।
स्वयं प्रदत्ता शक्राय तस्माच्छौरवलीलया॥ ३८
क्षमस्व भगवन् शम्भो हर क्रोधञ्च संहर।
किं पौरुषञ्च भवतो ब्राह्मणस्यापि हिंसया॥ ३९
अहं जीवच्छरीरेण न दास्यामि निशाकरम्।
शरणागतदीनार्त्तं लज्जितं पापसंयुतम्॥ ४०
अहञ्च त्वत्पदाम्भोजे शरणं यामि शङ्कर।
यथोचितं कुरु विभो जगत् सर्व्वं तवैव च॥ ४१
शुक्रस्य वचनं श्रुत्वा प्रसन्नो भगवान् शिवः।
इत्युवाच निशानाथं समानय शुभं भवेत्॥ ४२
एतस्मिन्नन्तरे ब्रह्मा बोधयित्वा कविं विभुः।
समानीय निशानाथं तारकासहितं व्रज।
शम्भोश्च चरणाम्भोजे चकार च समर्पणम्॥ ४३
शम्भुस्तं प्रीतियुक्तश्च वासयामास वक्षसि।
दत्त्वा तस्मै पादरेणुं निष्पापञ्च चकार सः।
दत्त्वा तन्मस्तके हस्तं कृपालुरभयं ददौ॥ ४४
क्षीरोदे स्नापयित्वा च प्रायश्चित्तेन शङ्करः।
चकार चन्द्रं निष्पापं ब्रह्मणा सहितः शुचिम्॥ ४५
योगेन चन्द्रं योगीन्द्रो द्विखण्डं तं चकार सः।
ररक्षार्द्धं ललाटे च सोऽप्यर्द्धं ब्रह्मणः पुरः॥ ४६
अतएव महादेवो बभूव चन्द्रशेखरः।
शरणागतदीनार्त्तः मया चापि समर्पितम्॥ ४७
मृगाङ्को लज्जितस्तत्र कलङ्की देवसंसदि।
लज्जया च स्वयोगेन देहत्यागं चकार सः॥ ४८
तच्छरीरञ्च क्षीरोदे ब्रह्मणा च समर्पितम्।
रुरोदात्रिश्च कृपया शुचा क्षीरोदधेस्तटे॥ ४९
अत्रेश्चक्षुर्जलं तस्य पपात च जले व्रज।
तस्माद्बभूव चन्द्रश्च निष्पापो देवसंसदि॥ ५०
ब्रह्मा च भगवान् शम्भुरभिषिकं चकार तम्।
उवाच तं महादेवो निर्भयं देवसंसदि॥ ५१

महादेव उवाच।

स्वस्थानं गच्छ पुत्र त्वं कुरु स्वविषयं मुदा।
पश्चाच्छ्वशुरशापेन यक्ष्मग्रस्तो भविष्यसि॥ ५२
व्यर्थं पतिव्रताशापं कर्त्तुमीशश्च को भुवि।
महाशिषा यक्ष्मणश्च प्रतीकारो भविष्यति॥ ५३
यस्माद्भाद्रे चतुर्थ्यान्तु गुरुपत्नी कृता हृता।
तस्मात् तस्मिन् दिने वत्स पापदृश्यो युगे युगे॥ ५४
नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम्॥ ५५
देहत्यागेन ते वत्स कर्म्मभोगो न नश्यति।
प्रायश्चित्तान्न सन्देहस्त्वमेव भविष्यति॥ ५६
तारापहरणं वत्स कलङ्कश्चन्द्रमण्डले।
मृगाङ्कितविलग्नश्च भविष्यसि युगे युगे॥ ५७
शृणु वक्ष्यामि ते वत्से (क) तारके च पतिव्रते।
सत्यं ब्रूहि कस्य गर्भं त्यक्त्वा शुद्धा भव प्रिये॥ ५८
अकामतो बलात् साध्वी न स्त्री जारेण दुष्यति।
कामतो नरकं याति यावच्चन्द्रदिवाकरौ॥ ५९
उवाच तारा ब्रह्माणं गर्भश्चन्द्रस्य लज्जितम्।
जहसुर्देवताः सर्व्वाः शम्भुश्च मुनिसङ्घकः॥ ६०
ददौ ताराञ्च गुरवे लज्जिताय व्रजेश्वर।
बृहस्पतिर्ययौ गेहं गृहीत्वा च पतिव्रताम्॥ ६१
तया प्रसूतं पुत्रञ्च सुन्दरं कनकप्रभम्।
गृहीत्वा च ययौ चन्द्रो नमस्कृत्य विधिं शिवम्॥ ६२
ययुर्देवाश्च मुनयः शम्भुश्च कमलोद्भवः।
प्रययौ स्वगृहं शुक्रो दैत्ययुक्तो मुदान्वितः॥ ६३
एतत् ते नन्द कथितमाख्यानं पुण्यदं शुभम्।
एतच्छ्रुत्वा तु निष्पापो निष्कलङ्को नरो भवेत्॥ ६४
धन्यं यशस्यमायुष्यं सर्व्वसम्पत्करं परम्।
शोकापनोदनं हर्ष-करं सर्व्वत्र मङ्गलम्॥ ६५
त्यज शोकं सदानन्द गृहं व्रज व्रजेश्वर।
ब्रूहि सर्व्वं यशोदाश्च मत्प्रसूं गोपिकागणम्॥ ६६
बोधयिष्यसि सर्व्वांस्ताः स्त्रीजातिः शोकसंयुता।
मदीयदत्तज्ञानेन हर्षयुक्तः सदा भव॥ ६७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-जन्मखण्डे नारायण-नारदसंवादे भगवन्नन्दसंवादे ताराहरणं नामैकाशीतितमोऽध्यायः॥८१

---

## द्व्यशीतितमोऽध्यायः।

नन्द उवाच।

श्रुतं सर्व्वं महाभाग दुःस्वप्नं कथय प्रभो।
उवाच तत्र भगवान् श्रूयतामिति तद्वचः॥ १

---

(क) शृणु वाक्यमिहागच्छेति पाठान्तरम्।

श्रीभगवानुवाच ।
स्वप्ने हसति यो हर्षाद्विवाहं यदि पश्यति ।
नर्त्तनं गीतमिष्टञ्च विपत्तिस्तस्य निश्चितम् ॥ २
दन्ता यस्य विपीड्यन्ते विचरन्तञ्च पश्यति ।
धनहानिर्भवेत् तस्य पीड़ा चापि शरीरजा ॥ ३
अभ्यङ्गितस्तु तैलेन यो गच्छेद्दक्षिणां दिशम् ।
खरोष्ट्रमहिषारूढ़ो मृत्युस्तस्य न संशयः ॥ ४
स्वप्ने चूर्णं जवापुष्पमशोकं करवीरकम् ।
विपत्तिस्तस्य तैलञ्च लवणं यदि पश्यति ॥ ५
नग्नां कृष्णां छिन्ननासां शूद्रस्य विधवां तथा ।
कपर्द्दकं तालफलं दृष्ट्वा शोकमवाप्नुयात् ॥ ६
स्वप्ने रुष्टं ब्राह्मणञ्च ब्राह्मणीं कोपसंयुताम् ।
विपत्तिश्च भवेत् तस्य लक्ष्मीर्याति गृहाद्ध्रुवम् ॥ ७
वनपुष्पं रक्तवर्णं पलाशञ्च सुपुष्पितम् ।
कार्पासं शुक्लवस्त्रञ्च दृष्ट्वा दुःखमवाप्नुयात् ॥ ८
गायन्तीञ्च हसन्तीञ्च कृष्णाम्बरधरां स्त्रियम् ।
दृष्ट्वा कृष्णाञ्च विधवां नरो मृत्युमवाप्नुयात् ॥ ९
देवता यत्र नृत्यन्ति गायन्ति च हसन्ति च ।
आस्फोटयन्ति धावन्ति तस्य देशो विनश्यति ॥ १०
वान्तं मूत्रं पुरीषञ्च रौप्यं रौप्यं सुवर्णकम् ।
प्रत्यक्षमथवा स्वप्ने जीवितं दशमासिकम् ॥ ११
कृष्णाम्बरधरां नारीं कृष्णमाल्यानुलेपनाम् ।
उपगूहति यः स्वप्ने तस्य मृत्युर्भविष्यति ॥ १२
मृतं वत्सञ्च मुण्डञ्च मृगस्य च नरस्य वा ।
यः प्राप्नोत्यस्थिमालाञ्च विपत्तिस्तस्य निश्चितम् ॥ १३
अभ्यङ्गितन्तु हविषा क्षीरेण मधुनापि वा ।
तक्रेणापि गुड़ेनैव पीड़ा तस्य विनिश्चितम् ॥ १४
रथं खरोष्ट्रसंयुक्तमेकाकी योऽधिरोहति ।
तत्रस्थोऽपि च जागर्त्ति मृत्युरेव न संशयः ॥ १५
रक्ताम्बरधरां नारीं रक्तमाल्यानुलेपनाम् ।
उपगूहति यः स्वप्ने व्याधिस्तस्य विनिश्चितम् ॥ १६
पतितं नृखकेशञ्च निर्व्वाणाङ्गारमेव च ।
भस्मपूर्णां चितां दृष्ट्वा लभते मृत्युमेव च ॥ १७
श्मशानतृणकाष्ठञ्च तृणानि लौहमेव च ।
मसीञ्च किञ्चित्कृष्णां वा दृष्ट्वा दुःखं लभेद्ध्रुवम् ॥१८
पादुकाफलकं रक्त-पुष्पमाल्यं भयानकम् ।
माषं मसूरं मुद्गं वा दृष्ट्वा सद्यो व्रणं भवेत् ॥ १९
कङ्कञ्च शकुनं काकं भल्लूकं वानरं गदम् ।
पूयं गात्रमलं स्वप्ने केवलं व्याधिकारणम् ॥ २०
भग्नभाण्डं क्षतं शूद्रं गलत्कुष्ठञ्च रोगिणम् ।
रक्ताम्बरञ्च जटिलं शूकरं महिषं खरम् ॥ २१
अन्धकारं महाघोरं मृतजीवं भयङ्करम् ।
दृष्ट्वा स्वप्ने योनिलिङ्गं विपत्तिं लभते ध्रुवम् ॥ २२
कुवेशरूपं म्लेच्छञ्च यमदूतं भयङ्करम् ।
पाशहस्तं पाशशस्त्रं दृष्ट्वा मृत्युं लभेन्नरः ॥ २३
ब्राह्मणो ब्राह्मणी बाला बालको वा सुतः सुता ।
विदायं कुरुते कोपाद्दृष्ट्वा दुःखमवाप्नुयात् ॥ २४
कृष्णपुष्पञ्च तन्माल्यं सैन्यं शस्त्रास्त्रधारिणम् ।
म्लेच्छाञ्च विकृताकारां दृष्ट्वा मृत्युं लभेद्ध्रुवम् ॥ २५
वाद्यञ्च (क) नर्त्तनं गीतं गायनं रक्तवाससम् ।
मृदङ्गवाद्यमानन्दं दृष्ट्वा दुःखं लभेद्ध्रुवम् ॥ २६
प्राणत्यक्तं मृतं दृष्ट्वा मृत्युञ्च लभते ध्रुवम् ।
मत्स्यादि धारयेद्यो हि तद्भ्रातुर्मरणं ध्रुवम्॥२७
छिन्नं वापि कबन्धं वा विकृतं मुक्तकेशिनम् ।
दिग्नृत्यञ्च कुर्व्वन्तं दृष्ट्वा मृत्युं लभेन्नरः ॥ २८
मृतो वापि मृता वापि कृष्णो म्लेच्छो भयानकः ।
अवगूहति यं स्वप्ने तस्य मृत्युर्विनिश्चितम् ॥ २९
यस्य दन्ताश्च भग्नाश्च केशाश्चापि पतन्ति च ।
धनहानिर्भवेत् तस्य पीड़ा वा तच्छरीरजा ॥ ३०
उपद्रवन्ति यं स्वप्ने शृङ्गिणो दंष्ट्रिणोऽपि वा ।
बालकामा नराश्चैव(ख) तस्य राजकुलाद्भयम् ॥३१
छिन्न वृक्षं पतन्तञ्च शिलावृष्टिं तुषं क्षुरम् ।
रक्ताङ्गारं भस्मवृष्टिं दृष्ट्वा दुःखमवाप्नुयात् ॥ ३२
रथ-गेह-वृक्ष-शैल-गो-हस्ति-तुरगाम्बरात् ।
भूमौ पतति यः स्वप्ने विपत्तिस्तस्य निश्चितम् ॥ ३३
उच्चैः पतन्ति गर्त्तेषु भस्माङ्गारचितेषु च ।
क्षारकुण्डेषु चूर्णेषु मृत्युस्तेषां न संशयः ॥ ३४
बलाद्धरति दृष्टश्च छत्रञ्च यस्य मस्तकात् ।
पितुर्नाशो भवेत् तस्य गुरोर्वापि नृपस्य च ॥ ३५
सुरभी यस्य गेहाच्च याति त्रस्ता सवत्सिका ।
प्रयाति पापिनस्तस्य लक्ष्मीरपि वसुन्धरा ॥ ३६
पाशेन कृत्वा बद्धञ्च यं गृहीत्वा प्रयाति च ।

(क) वाद्याञ्च नर्त्तनमिति पाठान्तरम् ।
(ख) बालका मानवाश्चैवेति पाठान्तरम् ।

यमदूताश्च वा म्लेच्छास्तस्य मृत्युर्विनिश्चितम् ॥ ३७
गणको ब्राह्मणो वापि ब्राह्मणी वा गुरुस्तथा ।
यदि रुष्टः शपति यं विपत्तिस्तस्य निश्चितम् ॥ ३८
विरोधिनश्च काकाश्च कुक्कुरा भल्लुकास्तथा ।
यतन्त्यागत्य यद्गात्रे तस्य मृत्युर्न संशयः ॥ ३९
महिषा भल्लुका उष्ट्राः शूकरा गर्द्दभास्तथा ।
रुष्टा धावन्ति यं स्वप्ने स रोगी निश्चितं भवेत् ॥४०
रक्तचन्दनकाष्ठानि घृताक्तानि च शो जुहेत् ।
गायत्र्याश्च सहस्रेण तेन शान्तिर्विधीयते ॥ ४१
सहस्रधा जपेद्यो ऽहि भक्त्या मां मधुसूदनम् ।
निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत् ४२
अच्युतं केशवं विष्णुं हरिं सत्यं जनार्द्दनम् ।
हंसं नारायणञ्चैव एतन्नामाष्टकं शुभम् ॥ ४३
शुचिः पूर्व्वमुखः प्राज्ञो दशकृत्वश्च यो जपेत् ।
निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्॥४४
विष्णुं नारायणं कृष्णं माधवं मधुसूदनम् ।
हरिं नरहरिं रामं गोविन्दं दधिवामनम् ॥ ४५
शुचिः पूर्व्वमुखो भूत्वा भक्तिश्रद्धायुतो जपेत् ।
निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्४६
भक्त्या चैतानि भद्राणि दश नामानि यो जपेत् ।
शतकृत्वो भक्तियुक्तो जप्त्वाऽरोगश्च रोगतः ॥ ४७
लक्षधा हि जपेद्यो हि बन्धनान्मुच्यते ध्रुवम् ।
जप्त्वा च दशलक्षञ्च महावन्ध्या प्रसूयते ।
हविष्याशी यतः शुद्धो दरिद्रो धनवान् भवेत् ॥ ४८
शतलक्षञ्च जप्त्वा च जीवन्मुक्तो भवेन्नरः ।
शुद्धो नारायणक्षेत्रे सर्व्वसिद्धिं लभेन्नरः ॥ ४९
शिवं दुर्गां गणपतिं कार्त्तिकेयं गणेश्वरम् ।
धर्म्मं गङ्गाञ्च तुलसीं राधां लक्ष्मीं सरस्वतीम् ॥५०
नामान्येतानि भद्राणि जले स्नात्वा च यो जपेत् ।
वाञ्छितञ्च लभेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत् ॥५१

ओँ ह्रीँ श्रीँ क्लीँ पूर्व्वं दुर्गतिनाशिन्यै
महामायायै स्वाहा ।

कल्पवृक्षो हि लोकानां मन्त्रः सप्तदशाक्षरः ॥ ५२
शुचिश्च दशधा जप्त्वा दुःस्वप्नः सुस्वप्नो भवेत् ॥ ५३
शतलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ।
सिद्धमन्त्रश्च लभते सर्व्वसिद्धिञ्च वाञ्छितम् ॥ ५४
नमो मृत्युञ्जयायेति स्वाहान्तं लक्षधा जपेत् ।
दृष्ट्वा च मरणं स्वप्ने शतायुश्च भवेन्नरः ॥ ५५
पूर्व्वोत्तरमुखो भूत्वा स्वप्नं प्राज्ञे प्रकाशयेत् ॥ ५६
काश्यपे दुर्गते नीचे देव-ब्राह्मणनिन्दके ।
मूर्खे चैवानभिज्ञे च न च स्वप्नं प्रकाशयेत् ॥ ५७
अश्वत्थे गणके विप्रे पितृदेवार्च्चनेषु च ।
आर्य्ये च वैष्णवे मित्रे दिवा स्वप्नं प्रकाशयेत् ॥ ५८
इति ते पुण्यमाख्यानं कथितं पापनाशनम् ।
धन्यं यशस्यमायुष्यं किं भूयः श्रोतुमिच्छसि ॥ ५९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे भगव-
न्नन्दसंवादे दुःस्वप्नकथनं नाम
द्व्यशीतितमोऽध्यायः ॥८२॥

---

## त्र्यशीतितमोऽध्यायः ।

नन्द उवाच ।

वेदानां कारणं त्वञ्च ब्रह्मादीनाञ्च पुत्रक ।
सर्व्वं कथय भद्रं ते कं पृच्छामि त्वया विना ॥ १
विप्राणां यो हि धर्म्मश्च क्षत्रविट्शूद्रकर्म्मणाम् ।
सन्न्यासिनाञ्च यो धर्म्मो यतीनां ब्रह्मचारिणाम् ॥२
विप्राणां विधवास्त्रीणां वैष्णवानां सतामपि ।
पतिव्रतानां स्त्रीणाञ्च तत् सर्व्वं वक्तुमर्हसि ॥ ३
गृहिणां गृहिणीनाञ्च शिष्याणाञ्च विशेषतः ।
पुत्राणाञ्चापि कन्यानां पितरं मातरं प्रति ॥ ४
स्त्रीजातिश्च कतिविधा भक्ताः कतिविधः प्रभो ।
ब्रह्माण्डञ्च कतिविधं वद नश्च किमाकृतम् ।
किं नित्यं कृत्रिमं किञ्चिद्ब्रूहि सर्व्वं क्रमेण च ॥ ५

श्रीभगवानुवाच ।

सन्ध्यापूतः सदा विप्रः कुरुते मम सेवनम् ।
नित्यं भुङ्क्ते मत्प्रसादमनिवेद्यमभक्ष्यकम् ॥ ६
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम् ।
विष्णुप्रसादभोजी च जीवन्मुक्तश्च ब्राह्मणः ॥ ७
नित्यं तपस्यानिरतः शुचिः शान्तश्च शास्त्रवित् ।
व्रततीर्थाश्रितो धर्म्मी नानाध्ययनसंयुतः ॥ ८
विष्णुमन्त्रं गृहीत्वा च कृत्वा च गुरुसेवनम् ।
गृहीत्वा तदनुज्ञाञ्च पश्चाद्भवति स गृही ॥ ९
दक्षिणां नित्यपूजानां गुरवे च निवेदयेत् ।

गुरूणां पोषणं नित्यं कर्त्तव्यं नात्र संशयः ॥ १०
सर्व्वेषामपि वन्द्यानां पिता एव महागुरुः।
पितुः शतगुणैर्माता मातुः शतगुणैः सुरः ॥ ११
मन्त्रदस्तन्त्रदश्चैव सुराणाञ्च चतुर्गुणः।
नारायणश्च भगवान् गुरुः प्रत्यक्ष एव च ॥ १२
उद्देशे दीयते तस्मै सुरायेति श्रुतौ श्रुतम्।
प्रत्यक्षभोक्ता स गुरुः स्वयं देही जनार्द्दनः ॥ १३
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुरेव स्वयं शिवः।
गुरौ च सर्व्वदेवाश्च तिष्ठन्ति सततं मुदा ॥ १४
गुरौ तुष्टे हरिस्तुष्टो यस्मिंस्तुष्टे च देवताः।
गुरुः पुत्रसमस्नेहं शिष्येषु च करिष्यति।
लभते ब्रह्महत्याञ्च भुङ्क्ते कृत्वा च नाशिषम् ॥ १५
स्वधर्म्मनिरतो विप्रो ब्राह्मणश्च सदा शुचिः।
विष्णुसेवी सदा विप्रस्तदन्योऽप्यशुचिः सदा ॥ १६
ब्राह्मणो वृषवाहश्च ब्राह्मणः सूपकारकः।
ब्राह्मणो देवलश्चैव सन्ध्याहीनश्च दुर्ब्बलः ॥ १७
ब्राह्मणश्च दिवाशायी शूद्रश्राद्धान्नभोजकः।
शूद्राणां शवदाही च ते च शूद्रसमा द्विजाः ॥ १८
शालग्राममहायन्त्रं कृत्वा पूजां विधानतः।
भुङ्क्ते नैवेद्यशेषञ्च तत्पादोदकमेव च ॥ १९
हरेः पादोदकं पीत्वा तीर्थस्नायी भवेन्नरः।
मुच्यते सर्व्वपापेभ्यो विष्णुलोकं स गच्छति ॥ २०
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः।
शालग्रामशिलातोयैर्योऽभिषिकं समाचरेत् ॥ २१
गङ्गाजलाद्दशगुणं शालग्रामजलं व्रज।
नित्यं भुङ्क्ते च यो विप्रो जीवन्मुक्तः सुरैः समः ॥ २२
विप्राणां नित्यकृत्यञ्च विष्णोर्नैवेद्यभोजनम्।
यत्नेन पूजनं तस्य तत्पादोदकभक्षणम् ॥ २३
नित्यं त्रिसन्ध्यं कुरुते भक्त्या च मम पूजनम्।
एकादश्यां न भुङ्क्ते च ममैव जन्मवासरे ॥ २४
शिवरात्रौ च हे तात श्रीरामनवमीदिने।
न च भुङ्क्ते व्रती यो हि जीवन्मुक्तो हि स द्विजः२५
पृथिव्यां यानि तीर्थानि तस्य पादे च तानि च।
विप्रपादोदकं पीत्वा तीर्थस्नायी भवेन्नरः ॥ २६
विप्रपादोदकं पीत्वा यावत् तिष्ठति मेदिनी।
तावत् पुष्करपात्रेषु पिबन्ति पितरो जलम् ॥ २७
विष्णुप्रसादभोजी च पवित्रं कुरुते महीम्।
तीर्थानि च नरांश्चैव जीवन्मुक्तो हि स द्विजः ॥२८
सर्व्वतीर्थेषु स स्नातो व्रतानाञ्च फलं लभेत्।
पदे पदेऽश्वमेधस्य लभते निश्चितं फलम् ॥ २९
वह्निवायुसमः पूतस्तेजसा भास्करोपमः।
यमलोकं यमदूतं स स्वप्नेऽपि न पश्यति ॥ ३०
वैकुण्ठे मोदते सोऽपि पार्षदो हरिणा सह।
न भवेत् तस्य पातो हि विप्रस्य हरिसेविनः ॥ ३१
विष्णुमन्त्रोपासकश्च स एव वैष्णवो द्विजः।
ब्राह्मणो वैष्णवः शाक्तो न हि तस्मात् परः पुमान्॥३२
वेदोक्तो वा पुराणोक्तस्तन्त्रोक्तो वा मनुः शुचिः।
विचारतो गृहीत्वा तं शैवः शाक्तश्च वैष्णवः ॥ ३३
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशत्ययम्।
तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥ ३४
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः।
भित्त्वा ब्रह्माण्डमखिलं यास्यत्येव हरेः पदम् ॥३५
पूर्व्वान् सप्त परान् सप्त सप्त मातामहादिकान्।
सोदरानुद्धरेद्भक्तः प्रसूञ्च तत्प्रसूं तथा ॥ ३६
मन्त्रग्रहणमात्रेण फलमेतद्व्रजेश्वर।
पुरश्चरणसम्पर्कात् पुरुषाणां शतं शतम् ॥ ३७
जपेन्नारायणक्षेत्रे पुरश्चरणपूर्व्वकम्।
पुरुषाणां सहस्रञ्च लीलयात्मानमुद्धरेत् ॥ ३८
ऐकान्तिको वैष्णवश्च पुंसां लक्षं समुद्धरेत्।
क्रिया विष्णुपदे यस्य सकलाश्च वह्निस्कृताः ॥ ३९
द्विजाः सुराः प्राणतुल्या भक्तः प्राणात् परः प्रियः।
विश्वेषु प्रियपात्रेषु न मे भक्तात् परः प्रियः ॥ ४०
तेजीयांसं गुरुं दृष्ट्वा सर्व्वत्र रक्षितुं क्षमम्।
करोति मन्त्रग्रहणं तस्माद्धृष्टो विचक्षणः ॥ ४१
वयोहीनाज्ज्ञानहीनाद्विद्याहीनात् तथैव च।
जातिहीनाद्गुरोर्मन्त्रं न गृह्णीयात् कदाचन ॥ ४२
मूर्खाद्दाश्रमहीनाच्च पितुः सन्यासिनस्तथा।
व्याधिनो वंशहीनाच्च भार्य्याहीनात् तथैव च।
मन्त्रच्छिप्रात् तथा मन्त्रं न गृह्णीयात् कदाचन ॥४३
विष्णुमन्त्रं न गृह्णीयाद्विष्णुभक्तिविहीनतः।
न च शैवान्न शाक्ताच्च गृह्णीयाद्वैष्णवाद्द्विजात् ॥४४
वयोहीनात् तथाल्पायुर्ज्ञानहीनादपण्डितः।
विद्याहीनाद्भवेन्मूढो जातिहीनात् क्षयो भवेत् ॥ ४५
मूर्खान्मूर्खो भवेत् सद्यो दुःखी चाश्रमहीनतः।

यशोहानिः पितुश्चैव मृत्युः सन्न्यासिनस्तथा ॥ ४६
व्याधिनो व्याधियुक्तश्च निर्व्वंशो वंशहीनतः ।
भार्य्याहीनोऽपि स्त्रीहीनान्नाद्विप्राद्गुरोः समः ॥४७
विष्णुभक्तिविहीनाच्च भक्तिहीनो भवेन्नरः ।
शैवाच्छाक्ताद्गृहीत्वा च हरेर्भक्तिर्न वर्द्धते ॥ ४८
ब्राह्मणो वैष्णवः शुद्धः पक्वान्नं दातुमीश्वरः ।
पक्वान्नं हरये दातुमक्षमश्चेतरो जनः ॥ ४९
श्रोत्रियोच्चरणाद्धोमाच्छालग्रामशिलार्च्चनात् ।
भक्ष्यं पक्वान्नदानाच्च विप्रादन्यो व्रजेदधः ॥ ५०
उदासीनाद्दुराचारादन्नं न गृह्णीयात् सुधीः ।
दैवाद्यदि च गृह्णीयाद्धनहीनो भवेद्ध्रुवम् ॥ ५१
ब्राह्मणानां सदा भक्ष्यं हविष्यान्नं निरामिषम् ।
आमिषस्य परित्यागात् सूर्य्यवत् तेजसा भवेत् ॥५२
नित्यं नूतनभाण्डेन कर्त्तव्यः पाक एव च ।
अथवा पञ्चपर्य्यन्तं ततस्त्याज्यं मनीषिभिः ॥ ५३
स्थानं सुसंस्कृतं कृत्वा पाकं निर्व्वर्त्त्य पूतकः ।
स्थाने परिष्कृते विप्रो दत्त्वा भक्ष्यञ्च भक्षितः ॥ ५४
तदा निवेद्य भुङ्क्ते च दत्त्वा विप्राय सादरम् ।
अनिवेद्यञ्च भुक्त्वा च सुरापीती भवेद्द्विजः ॥ ५५
चन्द्रसूर्य्योपरागे चाशौचे मृतक-जातयोः ।
स्पृष्टे चाशुचिना सद्यः पाकभाण्डं परित्यजेत् ॥ ५६
भ्रष्टद्रव्यं तथान्नञ्च धृत्वा धौते च वाससी ।
पादप्रक्षालनं कृत्वा भुङ्क्ते स्थाने परिष्कृते॥ ५७
द्विर्भोजनं न कर्त्तव्यं स्थिते सूर्य्ये द्विजातिभिः ।
निष्फलं तद्भवेत् कर्म्म भुक्त्वा च नरकं व्रजेत् ॥ ५८
यात्रां युद्धं नदीपारं पुनर्भोजनमैथुनम् ।
वर्ज्जयेच्छ्राद्धदिवसे हविष्याशी च संयमे ॥ ५९
द्विजाय विष्णुभक्ताय पात्रं दद्याद्वधाय च ।
वृषलीपतये चैव न दद्याच्छूद्रयाजिने ॥ ६०
सन्ध्याहीनाय दुष्टाय वृषवाहाय यत्नतः ।
शुक्रविक्रयिणे चैव देवलाय कदाचन ॥ ६१
प्रदाय पात्रमेतेभ्यो ब्राह्मणो नरकं व्रजेत् ।
पात्रं भुक्त्वा तद्दिवसे मैथुनान्नरकं व्रजेत् ॥ ६२
सर्व्वेभ्यः पातकी तात कन्याविक्रयकारकः ।
मूल्यं गृहीत्वा यो दद्यात् स महारौरवं व्रजेत् ॥६३
कन्यालोमप्रमाणं तद्वर्षञ्च पितृभिः सह ।
कुम्भीपाके च पच्येत पुत्रैश्चापि पुरोहितैः ॥ ६४

तस्मात् कन्यां सुपात्राय दानं कुर्य्याद्विचक्षणः ।
शूद्रवद्ब्राह्मणेभ्यश्च नैव तद्वंशजाय च ॥ ६५
विप्र-वैष्णवयोर्धर्म्मः कथितश्च व्रजेश्वर ।
यदुक्तञ्च पुराणेषु चतुर्भिः श्रुतिभिस्तथा ॥ ६६
द्विजार्च्चनं क्षत्रियाणां तथा नारायणार्च्चनम् ।
राज्यानां पालनञ्चैव रणे निर्भयता तथा ॥ ६७
नित्यं दानं ब्राह्मणेभ्यः शरणागतरक्षणम् ।
पुत्रतुल्यं प्रजानाञ्च दुःखिनां परिपालनम् ॥ ६८
शस्त्रास्त्राणाञ्च नैपुण्यं रणे सौन्दर्य्यमेव च ।
तपश्च धर्म्मकृत्यञ्च यत्नतः कुरुते सदा ॥ ६९
पण्डितं नीतिशास्त्रज्ञं नित्यञ्च परिपालयेत् ।
नियोजयेत् सभामध्ये नित्यं सद्भिश्च संयुतः ॥ ७०
हस्त्यश्व-रथ-पादातं सेनाङ्गञ्च चतुष्टयम् ।
पालयेद्यत्नतो नित्यं यशस्वी च प्रतापवान् ॥ ७१
रणे निमन्त्रितश्चैव याने न विमुखो भवेत् ।
रणे यो वा त्यजेत् प्राणांस्तस्य स्वर्गो यशस्करः ७२
वैश्यानामपि वाणिज्यं कृषिश्च पशुपालनम् ।
विप्रदेवार्च्चनं दानं तपस्या व्रतसेवनम् ॥ ७३
विप्राणामर्च्चनं नित्यं शूद्रधर्म्मो विधीयते ।
तद्द्वेषी तद्धनग्राही शूद्रश्चाण्डालतां व्रजेत् ॥ ७४
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः ।
श्वापदः शतजन्मानि शूद्रो विप्रधनापहा ॥ ७५
यः शूद्रो ब्राह्मणीगामी मातृगामी स पातकी ।
कुम्भीपाके पच्यते स यावद्वै ब्रह्मणः शतम् ॥ ७६
कुम्भीपाके तप्ततैले भुक्तः सर्पैरहर्निशम् ।
शब्दञ्च विकृताकारं कुरुते यमताड़नात् ॥ ७७
ततश्चाण्डालयोनिः स्यात् सप्तजन्मसु पातकी ।
सप्तजन्मसु सर्पश्च जलौका सप्तजन्मसु ॥ ७८
जन्मकोटिसहस्रञ्च विष्ठायां जायते कृमिः ।
पुंश्चलीनां योनिकीटः स भवेत् सप्तजन्मसु ॥ ७९
गवां व्रणकृमिः स्याच्च पातकी सप्तजन्मसु ।
योनौ योनौ भ्रमत्येव न पुनर्जायते नरः ॥ ८०
सन्न्यासिनाञ्च यो धर्म्मो मन्मुखाच्च निशामय ।
दण्डग्रहणमात्रेण नरो नारायणो भवेत् ॥ ८१
पूर्व्वकर्म्माणि दग्ध्वा च परकर्म्म निकृन्तनम् ।
कुरुते चिन्तयेन्माञ्च यायात् तु मम मन्दिरम् ॥८२
सन्न्यासिनः पदस्पर्शात् सद्यःपूता वसुन्धरा ।

सद्यःपूतानि तीर्थानि वैष्णवस्य यथा व्रज ॥ ८३
सन्न्यासिनश्च स्पर्शेन निष्पापो जायते नरः।
भुक्त्वा सन्न्यासिनं लोकश्चाश्वमेधफलं लभेत् ॥ ८४
नत्वा च कामतो दृष्ट्वा राजसूयफलं लभेत्।
फलं सन्न्यासिनां तुल्यं यतीनां ब्रह्मचारिणाम् ॥८५
संन्यासी याति सायाह्ने क्षुधितो गृहिणां गृहम्।
सदन्नं वा कदन्नं वा तद्दत्तं नैव वर्ज्जयेत् ॥ ८६
न याचते च मिष्टान्नं न कुर्य्यात् कोपमेव च।
न धनग्रहणं कुर्य्यादिकवाणा निरीहितः ॥ ८७
शीतग्रीष्मे समानश्च लोभमोहविवर्ज्जितः।
तत्र स्थितैकरात्रञ्च प्रातरन्यस्थलं व्रजेत् ॥ ८८
यानमारोहणं कृत्वा गृहीत्वा गृहिणो धनम्।
गृहं कृत्वा गृहीव स्यात् स्वधर्म्मात् पतितो भवेत् ८९
कृत्वा च कृषिवाणिज्यं कुवृत्तिं कुरुते च यः।
स सन्न्यासी दुराचारः स्वधर्म्मात् पतितो भवेत्॥९०
अशुभञ्च शुभं वापि अकर्म्म कुरुते यदि।
वहिष्कृतः स्वधर्म्माच्चाप्युपहास्यश्च तद्भवेत् ॥ ९१
ब्राह्मणी पतिहीना या भवेन्निष्कामिणी सदा।
एवमुक्तं दिनान्ते सा हविष्यान्नरता सदा ॥ ९२
न धत्ते दिव्यवस्त्रञ्च गन्धद्रव्यं सुतैलकम्।
स्रजञ्च चन्दनञ्चैव शङ्खसिन्दूरभूषणम्।
त्यक्त्वा मलिनवस्त्रा स्यान्नित्यं नारायणं स्मरेत् ॥९३
नारायणस्य सेवाञ्च कुरुते नित्यमेव च।
तन्नामोच्चारणं शश्वत् कुरुतेऽनन्यभक्तितः ॥ ९४
पुत्रतुल्यञ्च पुरुषं सदा पश्यति धर्म्मतः।
मिष्टान्नं न च भुङ्क्ते सा न कुर्य्याद्विभवं व्रज ॥ ९५
एकादश्यां न भोक्तव्यं कृष्णजन्माष्टमीदिने।
श्रीरामस्य नवम्याञ्च शिवरात्रौ पवित्रया ॥ ९६
अघोरायाञ्च प्रेतायां चन्द्रसूर्य्योपरागयोः।
भ्रष्टद्रव्यं परित्याज्यं भुज्यतेऽपरमेव च ॥ ९७
ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम्।
सन्न्यासिनाञ्च गोमांस-सुरातुल्यं श्रुतौ श्रुतम् ॥ ९८
रक्तशाकं मसूरञ्च जम्बीरं पर्णमेव च।
अलाबु वर्त्तुलाकारं वर्ज्जनीयञ्च तैरपि ॥ ९९
पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम्।
यानमारोहणं कृत्वा विधवा नरकं व्रजेत् ॥ १००
न कुर्य्यात् केशसंस्कारं गात्रसंस्कारमेव च।
केशशेषी जटारूपा तत्चीरं लर्थकं विना ॥ १०१
तैलाभ्यङ्गं न कुर्व्वीत न हि पश्यति दर्पणम्।
मुखञ्च परपुंसाञ्च यात्रां नृत्यं महोत्सवम् ॥ १०२
नर्त्तकं गायनञ्चैव सुवेशपुरुषं शुभम्।
शृणुयाच्च सदा धर्म्मं सामवेदनिरूपितम् ॥ १०३
परमार्थं परञ्चैव निबोध कथयामि ते।
अध्यापनमध्ययनं शिष्याणां परिपालनम्।
गुरूणां सेवनं नित्यं द्विजदेवार्च्चनं तथा ॥ १०४
सिद्धान्तशास्त्रे नैपुण्यं भावनञ्चात्मतोषणम्।
व्याख्यानं परिशुद्धञ्च ग्रन्थाभ्यासञ्च सन्ततम् ॥ १०५
व्यवस्थापरिशुद्ध्यर्थं विचारो वेदसम्मतः।
शास्त्रार्थाचरणञ्चैव कर्त्तव्यं स्वयमेव च ॥ १०६
वेदाङ्गिकेषु नैपुण्यं वेदाचरणमीप्सितम्।
वेदोक्तभक्षणञ्चैव पवित्राचरणं सदा ॥ १०७
पतिव्रतानां यद्धर्म्मं तन्निबोध व्रजेश्वर।
नित्यं भर्त्तुर्य्युत्सुकया तत्पादोदकमीप्सितम्
भक्तिभावेन सततं भोक्तव्यं तदनुज्ञया ॥ १०८
व्रतं तपस्यां देवार्च्चां परित्यज्य प्रयत्नतः।
कुर्य्याच्चरणसेवाञ्च स्तवनं परितोषणम् ॥ १०९
तदाज्ञारहितं कर्म्म न कुर्य्याद्दैवतः सती।
नारायणात् परं कान्तं ध्यायते सततं सती ॥ ११०
परपुंसां मुखञ्चैव सुवेशं पुरुषं परम्।
यात्रामहोत्सवं नृत्यं नर्त्तनं गायनं व्रज।
परक्रीडाञ्च सुरतं न हि पश्यति सुव्रता ॥ १११
यद्भक्ष्यं स्वामिनां नित्यं तद्देवमपि योषिताम्।
न हि त्यजेद्धि तत्सङ्गं क्षणमेव च सुव्रता ॥ ११२
उत्तरेणोत्तरं दद्यात् स्वामिनश्च पतिव्रता।
न कोपं कुरुते शुद्धा ताड़नञ्चापि कोपतः ॥ ११३
क्षुधितं भोजयेत्कान्तं दद्यात् पानञ्च तोषणे।
न बोधयेत् तु निद्रालुं प्रेरयत्येव कर्म्मसु ॥ ११४
पुत्राणाञ्च शतगुणं स्नेहं कुर्य्यात् पतिं सती।
पतिर्बन्धुर्गतिर्भर्त्ता दैवतं कुलयोषितः ॥ ११५
शुभदृष्ट्या सुधातुल्यं कान्तं पश्यति सुन्दरी।
सस्मितं वदनं कृत्वा भक्तिभावेन यत्नतः ॥ ११६
पुरुषाणां सहस्रञ्च सती स्त्री च समुद्धरेत्।
पतिः पतिव्रतानाञ्च मुच्यते सर्व्वपातकात् ॥ ११७
नास्ति तेषां कर्म्मभोगः सतीनां व्रज तेजसा।

तया सार्द्धञ्च निष्कर्म्मी(क) मोदते हरिमन्दिरे ॥११८
पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि।
तेजश्च सर्व्वदेवानां मुनीनाञ्च सतीषु च ॥ ११९
तपस्विनां तपः सर्व्वं व्रतिनां यत् फलं व्रज।
दाने फलं यद्दातॄणां तत् सर्व्वं तासु सन्ततम् ॥ १२०
स्वयं नारायणः शम्भुर्विधाता जगतामपि।
सुराः सर्व्वे च मुनयो भीतास्ताभ्यश्च सन्ततम् ॥१२१
सतीनां पादरजसा सद्यःपूता वसुन्धरा।
पतिव्रतां नमस्कृत्य मुच्यते पातकान्नरः ॥ १२२
त्रैलोक्यं भस्मसात् कर्त्तुं क्षणेनैव पतिव्रता।
स्वतेजसा समर्था सा महापुण्यवती सदा ॥ १२३
सतीनाञ्च पतिः साध्वीपुत्त्रो निःशङ्क एव च।
न हि तस्य भयं किञ्चिद्देवेभ्यश्च यमादपि ॥ १२४
शतजन्म-पुण्यवतां गेहे जाता पतिव्रता।
पतिव्रताप्रसूः पूता जीवन्मुक्तः पिता तथा ॥ १२५
सती स्त्री प्रातरुत्थाय त्यक्त्वा च रात्रिवाससी।
भर्त्तारञ्च नमस्कृत्य करोति स्तवनं मुदा ॥ १२६
गृहकार्य्यं ततः कृत्वा स्नात्वा धौते च वाससी।
गृहीत्वा शुक्लपुष्पञ्च भक्तितः पूजयेत् पतिम् ॥ १२७
स्नापयित्वा च पूतेन जलेन निर्म्मलेन च।
तस्मै दत्त्वा धौतवस्त्रं तत्पादौ क्षालयेन्मुदा ॥ १२८
आसने वासयित्वा च दत्त्वा भाले च चन्दनम्।
सर्व्वाङ्गलेपनं कृत्वा दत्त्वा माल्यं गलेऽपि च ॥ १२९
सामवेदोक्तमन्त्रेण भोगद्रव्यैः सुधोपमैः।
सम्पूज्य भक्तितः कान्तं स्तुत्वा च प्रणमेन्मुदा ॥ १३०
ओं नमः कान्ताय शान्ते च सर्व्वदेवाश्रयाय स्वाहा।
इत्यनेनैव मन्त्रेण दत्त्वा पुष्पञ्च चन्दनम्।
पाद्यार्घ्यधूपदीपांश्च वस्त्रनैवेद्यमुत्तमम् ॥ १३१
जलं सुवासितं शुद्धं ताम्बूलञ्च सुसंस्कृतम्।
दत्त्वा स्तोत्रञ्च प्रपठेत् यत् कृतं पूर्व्वमेव च ॥ १३२
नमः कान्ताय शान्ते च शिवचन्द्रस्वरूपिणे।
नमः शान्ताय दान्ताय सर्व्वदेवाश्रयाय च ॥ १३३
नमो ब्रह्मस्वरूपाय सतीप्राणपराय च।
नमस्याय च पूज्याय हृदाधाराय ते नमः ॥ १३४
पञ्चप्राणाधिदेवाय चक्षुषस्तारकाय च।
ज्ञानाधाराय पत्नीनां परमानन्ददायिने ॥ १३५

(क) निष्कामीति च क्वचित्।

पतिर्ब्रह्मा पतिर्विष्णुः पतिरेव महेश्वरः।
पतिश्च निर्गुणाधारो ब्रह्मरूपो नमोऽस्तु ते ॥ १३६
क्षमस्व भगवन् दोषं ज्ञानाज्ञानकृतञ्च यत्।
पत्नीबन्धो दयासिन्धो दासीदोषं क्षमस्व च ॥१३७
इदं स्तोत्रं महापुण्यं सृष्ट्यादौ पद्मया कृतम्।
सरस्वत्या च धरया गङ्गया च पुरा व्रज ॥ १३८
सावित्र्या च कृतं पूर्व्वं ब्रह्मणे चापि नित्यशः।
पार्व्वत्या च कृतं भक्त्या कैलासे शङ्कराय च ॥ १३९
मुनीनाञ्च सुराणाञ्च पत्नीभिश्च कृतं पुरा।
पतिव्रतानां सर्व्वासां स्तोत्रमेतच्छुभावहम् ॥ १४०
इदं स्तोत्रं महापुण्यं या शृणोति पतिव्रता।
नरो वापि च नारी वा लभते सर्व्ववाञ्छितम् ॥१४१
अपुत्त्रो लभते पुत्त्रं निर्द्धनो लभते धनम्।
रोगी च मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ १४२
पतिव्रता च स्तुत्वा च तीर्थस्नानफलं लभेत्।
फलञ्च सर्व्वतपसां व्रतानाञ्च व्रजेश्वर ॥ १४३
इदं स्तुत्वा सती भक्त्या भुङ्क्ते सा तदनुज्ञया।
उक्तः पतिव्रताधर्म्मो गृहिणां श्रूयतां व्रज ॥ १४४

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे भगवन्नन्द-संवादे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

## चतुरशीतितमोऽध्यायः।

श्रीभगवानुवाच।

द्विजदेवार्च्चनञ्चैव करोति सततं गृही।
स्वधर्म्माचरणञ्चैव चातुर्व्वर्ण्यञ्च नित्यशः ॥ १
कुर्व्वन्ति गृहिणामाशां सर्व्वदेवादयस्तथा।
अकृत्वाऽतिथिपूजाञ्च गृहस्थश्च सदाऽशुचिः ॥ २
पितरः सर्व्वकाले च तिथिकाले च देवताः।
सर्व्वे गृहस्थमायान्ति निपानमिव धेनवः ॥ ३
समायाति प्रयत्नेन सायाह्ने क्षुधितोऽतिथिः।
पूजां लब्ध्वाशिषं कृत्वा प्रयाति गृहिणो गृहात् ॥४
अकृत्वाऽतिथिपूजाञ्च गृही भवति पातकी।
त्रैलोक्यजनितं पापं लभते नात्र संशयः ॥ ५
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते।
पितरस्तस्य देवाश्च वह्नयश्च तथैव च।

निराशाः प्रतिगच्छन्ति अतिथेरप्रतिग्रहात् ॥ ६
स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः।
तुल्यदोषो भवत्येभिर्यस्यातिथिरनर्च्चितः ॥ ७
स्वात्मनः पातकं दत्त्वा पुण्यमादाय गच्छति।
तस्मात् कृत्वा सर्व्वसेवां देवादींश्च शुभाशयः।
पोष्याणां भरणं कृत्वा पश्चाद्भुङ्क्ते स्वधर्म्मवित् ॥ ८
यस्य माता गृहे नास्ति भार्य्या च पुंश्चली तथा।
अरण्यं तेन गन्तव्यं यथा रण्यं तथा गृहम् ॥ ९
पतिं द्वेष्टि सदा दुष्टा विषतुल्यञ्च पश्यति।
ददाति तस्मै नाहारं भर्त्सनं कुरुते सदा ॥ १०
पूजितं मुनितुल्यञ्च सा च पापीयसी परम्।
सततं तृणवन्मत्वा न्यक्कारं कुरुते सदा ॥ ११
दुर्व्वाक्यवह्निना दग्धो मृततुल्यश्च जीवति।
यावज्जीवनपर्य्यन्तं सम्प्राप्य दुष्टवंशजाम् ॥ १२
गृहिणीनां सदाचारः श्रूयतां यः श्रुतौ श्रुतः।
गृहिणी पतिभक्ता च देवब्राह्मणपूजिता ॥ १३
सा शुद्धा प्रातरुत्थाय नमस्कृत्य पतिं सुरम्।
प्राङ्गणे मण्डलं दद्याद्गोमयेन जलेन च ॥ १४
गृहकृत्यञ्च कृत्वा च स्नात्वा गत्वा गृहं सती।
सुरं विप्रं पतिं नत्वा पूजयेद्गृहदेवताम् ॥ १५
गृहकृत्यं सुनिर्व्वाह्य भोजयित्वा पतिं सती।
अतिथिं पूजयित्वा च स्वयं भुङ्क्ते सुखं सती ॥ १६
पुत्त्रैश्च पूजितस्तातः शिष्यैश्च पूजितो गुरुः।
आज्ञया कुरुते कर्म्म पुत्त्रः शिष्यश्च भृत्यवत् ॥ १७
न प्रेरयेद्गुरुं तातं पुत्त्रः शिष्यश्च कर्म्मसु।
पित्रे च गुरवे नित्यं सर्व्वस्वञ्च समर्पयेत् ॥ १८
न कुर्य्यान्नरबुद्धिञ्च गुरौ पितरि सन्ततम्।
कृत्वा च नरबुद्धिं स ब्रह्महत्यां लभेद्ध्रुवम् ॥ १९
मातरं पूजयेद्भक्त्या पितुश्चाप्यधिकं तथा।
मातुः परं गुरुञ्चैव पूजयेद्भक्तियोगतः ॥ २०
पिता माता गुरुर्भार्य्या शिष्यः पुत्त्रः सदाऽधमः।
अनाथा भगिनी कन्या नित्यं पोष्या गुरुप्रिया ॥२१
एवञ्च कथितं तात सर्व्वेषां धर्म्ममुत्तमम्।
स्त्रीजातिर्वाऽस्तवी शुद्धा ताश्च सर्व्वाः पतिव्रताः॥२२
सर्व्वा जातिरेकविधा आदौ सृष्टा च ब्रह्मणा।
ताः सर्व्वाः प्रकृतेरंशाः पवित्राः पण्डिताधिकाः॥ २३
केदारकन्याशापेन यदा धर्म्मः क्षयं गतः।
तदा कोपेन धात्रा च कृत्या स्त्री च विनिर्म्मिता ॥२४
कृत्या स्त्री त्रिविधा जातिर्ब्रह्मणा निर्म्मिता पुरा।
उत्तमा प्रथमा सा च मध्यमा चाधमा व्रज ॥ २५
उत्तमा पतिभक्ता सा किञ्चिद्धर्म्मसमन्विता।
प्राणान्तेऽपि न कुरुते तं जारमयशस्करम्॥ २६
पूजयेत् सा यथा कान्तं तथा देवद्विजातिथिम्।
व्रतानि चोपवासांश्च कुरुते सर्व्वपूजनम् ॥ २७
गुरुणा रक्षिता यत्नाज्जारञ्च न भजेद्भयात्।
सा कृत्रिमा मध्यमा च यथा किञ्चित् पतिं भजेत्॥२८
स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः।
तेन हे नन्द तासाञ्च सतीत्वमुपजायते ॥ २९
अधमा परमा दुष्टाऽत्यन्तासद्वंशजा तथा।
अधर्म्मशीला दुःशीला दुर्म्मुखा कलहान्विता ॥ ३०
पतिं भर्त्सयते नित्यं जारञ्च सेवयेत् सदा।
दुःखं ददाति कान्ताय विषतुल्यञ्च पश्यति ॥ ३१
जारद्वारसुपायेन हन्ति कान्तं मनोहरम्।
धर्म्मिष्ठञ्च वरिष्ठञ्च गरिष्ठञ्च महीतले ॥ ३२
कामदेवसमञ्चापि जारं पश्यति कामतः।
शुभदृष्ट्या कटाक्षेण शश्वत् पापीयसी सदा ॥ ३३
सुवेशं पुरुषं दृष्ट्वा युवानं रतिशूरकम्।
योनिः क्लिद्यति तासाञ्च कामुकीनां निरन्तरम् ॥३४
ददाति भर्त्त्रे नाहारं विषोक्तिं वक्ति सन्ततम्।
अधर्म्मं चिन्तयेत् शश्वज्जारञ्च परमं सदा ॥ ३५
गुरुभिर्भर्त्सिता सा च रक्षिता च शतेन च।
तथापि जारं कुरुते नापि साध्या नृपेरपि ॥ ३६
नास्ति तस्याः प्रियं किञ्चित् सर्व्वं कार्य्यवशेन च।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥ ३७
विद्युन्नाशा जले रेखा तस्याः प्रीतिस्तथैव च।
अधर्म्मयुक्ता सततं कपटं वक्ति निश्चितम् ॥ ३८
व्रते तपसि धर्म्मे च न मनो गृहकर्म्मणि।
न गुरौ न च देवेषु जारे स्निग्धञ्च चञ्चलम् ॥ ३९
स्त्रीजातित्रिविधानाञ्च कथा च कथिता मया।
भक्तानां त्रिविधानाञ्च लक्षणं श्रूयतामिति ॥ ४०
तृणशय्यारतो भक्तो मन्नामगुणकीर्त्तिषु।
मनो निवेशयेत् त्यक्त्वा संसारसुखकारणम् ॥ ४१
ध्यायते मत्पदाब्जञ्च पूजयेद्भक्तिभावतः।
श्रीहेतुः किं तस्य देवः सङ्कल्परहितस्य च ॥ ४२

सर्व्वसिद्धिं न वाञ्छन्ति तेऽणिमादिकमीप्सितम् ।
ब्रह्मत्वममरत्वं वा सुरत्वं सुखकारणम् ।
दास्यं विना न वाञ्छन्ति सालोक्यादिचतुष्टयम् ॥४३
नैव निर्व्वाणमुक्तिञ्च सुधापानमभीप्सितम् ।
वाञ्छन्ति निश्चलां भक्तिमदीयामतुलामपि ॥ ४४
स्त्री-पुंविभेदो नास्त्येवं सर्व्वजीवेष्वभिन्नता ।
तेषां सिद्धेश्वराणाञ्च प्रवराणां व्रजेश्वर ॥ ४५
क्षुत्पिपासादिकं निद्रां लोभमोहादिकं रिपुम् ।
त्यक्त्वा दिवानिशं माञ्च ध्यायते च दिगम्बरः॥ ४६
स भक्तोत्तमो नन्द श्रूयतां मध्यमादिकम् ॥ ४७
नासक्तः कर्म्मसु गृही पूर्व्वप्राक्तनतः शुचिः ।
करोति सततञ्चैव पूर्व्वकर्म्मनिकृन्तनम् ॥ ४८
न करोत्यपरं यत्नात् सङ्कल्परहितश्च सः ।
सर्व्वं कृष्णस्य यत्किञ्चिन्नाहं कर्त्ता च कर्म्मणः ।
कर्म्मणा मनसा वाचा सततं चिन्तयेदिति ॥ ४९
न्यूनभक्तश्च तन्न्यूनः स च प्राकृतिकः श्रुतौ ।
यमं वा यमदूतं वा स्वप्ने स च न पश्यति ॥ ५०
पुरुषाणां सहस्रञ्च पूर्व्वभक्तः समुद्धरेत् ।
पुंसां शतं मध्यमश्च तच्चतुर्थञ्च प्राकृतः ॥ ५१
भक्ताश्च त्रिविधस्तात कथितश्च तवाज्ञया ।
ब्रह्माण्डरचनाख्यानं श्रूयतां सावधानतः ॥ ५२
ब्रह्माण्डरचनार्थञ्च भक्ता जानन्ति यत्नतः ।
मुनयश्च सुराः सन्तः किञ्चिज्जानन्ति दुःखतः ॥ ५३
जानामि विश्वसर्व्वार्थं ब्रह्मानन्तो महेश्वरः ।
धर्म्मः सनत्कुमारश्च नर-नारायणावृषी ॥ ५४
कपिलश्च गणेशश्च दुर्गा लक्ष्मीः सरस्वती ।
देवाश्च देवमाता च सर्व्वज्ञा राधिका स्वयम् ॥ ५५
एते जानन्ति विश्वार्थं नान्यो जानाति कश्चन ।
विश्वस्यार्थञ्च (क) सुधियः सर्व्वं विज्ञातुमक्षमाः॥५६
नित्याकाशो यथात्मा च तथा नित्या दिशो दश ।
यथा नित्या च प्रकृतिस्तथैव विश्वगोलकः ।
गोलोकश्च यथा नित्यस्तथा वैकुण्ठ एव च ॥ ५७
एकदा मयि गोलोके रासे नृत्यं प्रकुर्व्वति । (ख)
आविर्भूता च वामाङ्गाद्बाला षोड़शवार्षिकी ।

(क) वैषम्यार्थञ्च इति क्वचित् ।
(ख) "एकस्यापि च गोलोके रासो नित्यं मम व्रज ।" इति पाठान्तरम् ।

श्वेतचम्पकवर्णाभा शरच्चन्द्रसमप्रभा ॥ ५८
अतीव सुन्दरी रामा रमणीनां परात्परा ।
ईषद्धास्यप्रसन्नास्या कोमलाङ्गी मनोहरा ॥ ५९
वह्निशुद्धांशुकाधाना रत्नाभरणभूषिता ।
यथा जलदपङ्क्तिश्च बलाकाभिर्विभूषिता ॥ ६०
सिन्दूरबिन्दुना चारु-चन्द्रचन्दनबिन्दुभिः ।
कस्तूरीबिन्दुभिः सार्द्धं सीमन्ताधःस्थलोज्ज्वला ।
रत्नकुण्डलयुग्मेन गण्डस्थलसमुज्ज्वला ॥ ६१
कुङ्कुमारक्तकस्तूरी-चारुचन्दनपत्रकैः ।
विचित्रैश्च सुचित्रैश्च सुकपोलस्थलोज्ज्वला ॥ ६२
खगेन्द्रचञ्चुविजित-नासा चार्व्वी सुशोभिता ।
गजेन्द्रगण्डनिर्म्मुक्त-मुक्ताभूषणभूषिता ॥ ६३
मुक्तया (क) विमुक्तमुक्ताभ-दन्तपङ्क्तिमनोहरा ।
वनिता ललितातीव-पक्वबिम्बाधरा वरा ॥ ६४
शश्वत्पूर्णेन्दुनिन्द्यास्या पद्मनिन्दितलोचना ।
कृष्णसारनिभोद्भिन्न-सुचारुकज्जलोज्ज्वला ॥ ६५
अमूल्यरत्ननिर्म्माण-केयूरकङ्कणोज्ज्वला ।
मणीन्द्रसारराजीभिः शङ्खयुग्मकरोज्ज्वला ॥ ६६
रत्नाङ्गुरीयकैरेभिरम्ताङ्गुलिभूषिता ।
रत्नेन्द्रसारराजेन क्वणन्मञ्जीररञ्जिता ॥ ६७
रत्नपाषकराजीभिः पादाङ्गुलिविराजिता ।
सुन्दरालक्तरागेण चरणाधःस्थलोज्ज्वला ॥ ६८
गजेन्द्रगामिणी वामा कामिनी वामलोचना ।
मां ददर्श कटाक्षेण रमणी रमणोत्सुका ॥ ६९
रासे सम्भूय वामा सा दधाव पुरतो मम ।
तेन राधा समाख्याता पुराविद्भिः प्रपूजिता ॥ ७०
प्रकृष्टा प्रकृतिश्चास्यास्तेन प्रकृतिरीश्वरी ।
शक्ता स्यात् सर्व्वकार्य्येषु तेन शक्तिः प्रकीर्त्तिता॥७१
सर्व्वाधारा सर्व्वरूपा मङ्गलार्हा च सर्व्वतः ।
सर्व्वमङ्गलदक्षा सा तेन स्यात् सर्व्वमङ्गला ॥ ७२
वैकुण्ठे सा महालक्ष्मीर्मूर्त्तिभेदे सरस्वती ।
प्रसूय वेदान् विदिता वेदमाता च सा सदा ॥ ७३
सावित्री सा च गायत्री धात्री त्रिजगतामपि ।
पुरा संहृत्य दुर्गञ्च सा दुर्गा च प्रकीर्त्तिता ॥ ७४
तेजःसु सर्व्वदेवानामाविर्भूता पुरा सती ।
तेनाद्या प्रकृतिर्ज्ञेया सर्व्वासुरविमर्द्दिनी ॥ ७५

(क) रक्ताः इति पाठान्तरम् ।

सर्व्वानन्दा च सानन्दा दुःखदारिद्र्यनाशिनी।
शत्रूणां भयदात्री च भक्तानां भयहारिणी॥ ७६
दक्षकन्या सती सा च शैलजा तेन पार्व्वती।
सर्व्वाधारस्वरूपा सा कलया सा वसुन्धरा॥ ७७
कलया तुलसी गङ्गा कलया सर्व्वयोषितः।
सृष्टिं करोमि च मया तया शक्त्या पुनः पुनः॥ ७८
दृष्ट्वा तां रासमध्यस्थां मम क्रीड़ा तया सह।
बभूव सुचिरं तात यावद्वै ब्रह्मणः शतम्।
अत्यद्भुतं कौतुकञ्च महाशृङ्गारमीप्सितम्॥ ७९
तयोर्द्वयोर्घर्म्मराशिः सुस्राव रासमण्डले।
तस्मान्मनोहरं जज्ञे निम्नाकारसरोवरम्॥ ८०
पपात घर्म्मधाराधो वेगेन विश्वगोलके।
बभूव जलपूर्णञ्च ब्रह्माण्डानाञ्च गोलकम्॥ ८१
जलपूर्णं पुरा सर्व्वं सृष्टिशून्यं व्रजेश्वर॥ ८२
शृङ्गारान्ते च तस्याञ्च वीर्य्याधानं मया कृतम्।
दधार गर्भं सा राधा यावद्वै ब्रह्मणः शतम्॥ ८३
सुषाव सा तदन्ते च डिम्बं तत्परमाद्भुतम्।
चुकोप देवी तं दृष्ट्वा रुरोद विषादा सा॥ ८४
पादेन प्रेरयामास तदधो विश्वगोलके।
स पपात जले जातः सर्व्वाधारो महान् विराट्॥ ८५
दृष्ट्वापत्यं जलस्थञ्च मया शप्ता च सा पुरा।
अनपत्या च सा राधा मच्छापेन पुरा विभो॥ ८६
तेनाप्रसूताः श्रीमती दुर्गा लक्ष्मीः सरस्वती।
चतस्रः पूर्णरूपा साप्रसूताश्च सुनिश्चितम्॥ ८७
देव्योऽन्याश्चापि कामिन्यो नाप्रसूता व्रजेश्वर।
कलया प्रभवो यासां कलांशांशेन वा व्रज॥ ८८
जज्ञे महाविराट् तेन डिम्बेन कलयाश्रयः।
अमृताङ्गुष्ठपीयूषं मया दत्तं पपौ च सः॥ ८९
जले स्थावररूपश्च स शेते निजकर्म्मणः।
उपाधानं जलं तल्पं तस्य योगबलेन च॥ ९०
तस्य लोम्नाञ्च कूपानि जलपूर्णानि सन्ततम्।
प्रत्येकं क्रमतस्तेषु शेते क्षुद्रविराट् पुनः॥ ९१
सहस्रपत्रं कमलं जज्ञे क्षुद्रस्य नाभितः।
तत्र जज्ञे स्वतो ब्रह्मा तेनायं कमलोद्भवः॥ ९२
तत्राविर्भूय स विधिश्चिन्ताव्यग्रो बभूव ह।
कस्माद्देहः क्व माता मे पिता वा क्व च बान्धवः॥ ९३
दिव्यं त्रिलक्षवर्षञ्च बभ्राम कमलान्तरे।

ततो दृष्ट्वे पद्मलक्षं सस्मार तपसा च माम्॥ ९४
तदा मया दत्तमन्त्रं जजाप कमलान्तरे।
दिव्यवर्षसप्तलक्षं नियतं संयतः शुचिः॥ ९५
तदा भक्तो वरं लब्ध्वा स्रष्टा सृष्टिं चकार सः।
मायया प्रतिब्रह्माण्डे ब्रह्म-विष्णु-शिवात्मकाः॥ ९६
दिक्पाला द्वादशादित्या रुद्राश्चैकादशापि वा।
नवग्रहाष्टौ वसवो देवाः कोटित्रयस्तथा॥ ९७
ब्राह्मण-क्षत्र-विट्-शूद्रा यक्ष-गन्धर्व्व-किन्नराः।
भूतादयो राक्षसाश्चाप्येवं सर्व्वं चराचरम्।
विश्वे विश्वे विनिर्म्माणाः स्वर्गाः सप्त क्रमेण वै॥ ९८
सप्तसागरसंयुक्ता सप्तद्वीपा वसुन्धरा।
काञ्चनीभूमिसंयुक्ता तमोयुक्तास्थलं ततः॥ ९९
पातालाश्च तथा सप्त ब्रह्माण्डमेभिरेव च।
विश्वे विश्वे चन्द्रसूर्य्यौ पुण्यञ्चैवञ्च भारतम्।
तीर्थान्येतानि सर्व्वत्र गङ्गादीनि व्रजेश्वर॥ १००
यावन्ति रोमकूपाणि महाविष्णोः क्रमेण च।
विश्वान्येतानि तावन्ति ह्यसंख्यानि पितश्चैवम्॥ १०१
विश्वेषामूर्द्ध्वभागे च वैकुण्ठश्च निराश्रयः।
मदिच्छया विनिर्म्माणो वेदाः कथितुमक्षमाः॥ १०२
कुयोगिनामदृष्टश्चाप्यभक्तानाञ्च निश्चितम्।
तस्मादुपरि गोलोकः पञ्चाशत्कोटियोजने॥ १०३
वायुना धार्य्यमाणश्च विचित्रपरमाश्रयः।
अतीवरम्यनिर्म्माणो नित्यरूपी मदिच्छया॥ १०४
शतशृङ्गेण शैलेन पुण्यवृन्दावनेन च।
स रासमण्डलेनापि नद्या विरजया वृतः॥ १०५
कोटियोजनविस्तीर्णा प्रस्थेन विरजा व्रज।
दैर्घ्यं तस्य दशगुणा परितः परमा शुभा॥ १०६
अमूल्यरत्ननिर्म्माणं तत्रापि प्रतिमन्दिरम्।
मनोहरञ्च प्राकारमदृष्टं विश्वकर्म्मणा॥ १०७
गोपीभिर्गोपनिकरैर्वेष्टितं कामधेनुभिः।
कल्पवृक्षैः पारिजातैरसंख्यैश्च सरोवरैः।
पुष्पोद्यानैः कोटिभिश्च संवृतं रासमण्डलम्॥ १०८
वेष्टितं वेष्टितैर्गोपीमन्दिरैः शतकोटिभिः।
रत्नप्रदीपयुक्तैश्च पुष्पतल्पसमन्वितैः॥ १०९
सुगन्धिचन्दनामोदैः कस्तूरीकुङ्कुमान्वितैः।
क्रीड़ोपयुक्तैर्भोगैश्च ताम्बूलैर्वासितैर्जलैः॥ ११०
रक्षके रक्षितं शश्वद्राधादासीत्रिकोटिभिः।

अमूल्यरत्नाभरणैर्वह्निशुद्धांशुकैरपि ॥ १११
लक्षमत्तगजेन्द्राणां वेष्टितञ्च बलैः क्रमात्।
नवयौवनसम्पन्नैं रूपैर्निरुपमैरपि ॥ ११२
रम्यञ्च वर्त्तुलाकारं चन्द्रबिम्बं यथा व्रज।
अमूल्यरत्नखचितं दशयोजनविस्तृतम् ॥ ११३
कस्तूरीकुङ्कुमै रम्यैः सुगन्धिचन्दनार्च्चितम्।
आवृतं मङ्गलघटैः फलपल्लवसंयुतैः ॥ ११४
दधिलाजैश्च पूर्णैश्च स्निग्धदूर्व्वाङ्कुरैः फलैः।
श्रीरामकदलीस्तम्भैरसंख्यैश्च मनोहरैः ॥ ११५
पट्टसूत्रनिबद्धैश्च स्निग्धचन्दनपल्लवैः।
चन्दनासक्तमाल्यैश्च भूषणैश्च विभूषितम् ॥ ११६
अमूल्यरत्नरचितं शतशृङ्गं मनोहरम्।
कोटियोजनमूर्द्धञ्च दैर्घ्यं शतगुणोत्तरम् ॥ ११७
शैलस्य परिमितं पञ्चाशत्कोटियोजनम्।
अतीवकमनीयञ्च वेदेऽनिर्व्वचनीयकम् ॥ ११८
प्राकारमिव तस्यापि गोलोकस्य मनोहरम्।
परितो वेष्टितं रम्यं हीराहारसमन्वितम् ॥ ११९
तत्र वृन्दावनं रम्यं युक्तं चन्दनपादपैः।
कल्पवृक्षैश्च रम्यैश्च मन्दारैः कामधेनुभिः ॥ १२०
शोभितं शोभनाढ्यञ्च पुष्पोद्यानैर्मनोहरैः।
क्रीड़ासरोवरै रम्यैः सुरम्यै रतिमन्दिरैः ॥ १२१
अतीव रम्यं रहसि वासयोग्यस्थलान्वितम्।
रक्षितं रक्षकै रम्यैरसंख्यैर्गोपिकागणैः ॥ १२२
परितो वर्त्तुलाकारं द्विलक्षयोजनं वनम्।
षट्पदध्वनिसंयुक्तं पुंस्कोकिलरुतान्वितम् ॥ १२३
तत्राक्षयवटो रम्यो रहस्येव सुविस्तृतः।
सहस्रयोजनोर्द्ध्वश्च परितश्च चतुर्गुणः ॥ १२४
गोपीनां कल्पवृक्षश्च सर्व्ववाञ्छाफलप्रदः।
क्रीड़ान्वितैरावृतश्च राधादासीत्रिलक्षकैः ॥ १२५
विरजातीरनीराणां वायुना शीतलेन च।
पुष्पान्वितेन मान्द्येन पवित्रश्च सुगन्धिना ॥ १२६
दासीगणैरसंख्यैश्च वृन्दावनविनोदिनी।
तत्र क्रीड़ति राधा सा मम प्राणाधिदेवता ॥ १२७
सेयं श्रीदामशापेन वृषभानसुताऽधुना।
ब्रह्मादिदेवैः सिद्धेन्द्रैर्मुनीन्द्रैः पूजिता व्रज ॥ १२८
सिद्धैर्गणैर्वैर्बुधा ज्ञानैर्योगैश्च विद्यया।
तात सर्व्वप्रकारेण वन्द्या मत्सदृशी प्रिया ॥ १२९
इत्येवं कथितं नन्द ब्रह्माण्डानाञ्च वर्णनम्।
यथोचितं परिमितं किं भूयः श्रोतुमिच्छसि ॥ १३०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे भगवन्नन्द-
संवादे चतुरशीतितमोऽध्यायः ॥८४॥

## पञ्चाशीतितमोऽध्यायः।

नन्द उवाच।

वर्णानाञ्च चतुर्णाञ्च भक्ष्याभक्ष्यञ्च साम्प्रतम्।
विपाकं कर्म्मणाञ्चैव सर्व्वेषां प्राणिनामपि ॥ १
कथयस्व महाभाग कारणानाञ्च कारणम्।
लक्षोऽन्यं (क) कञ्च पृच्छामि नितान्तं सन्तमीश्वरर

श्रीभगवानुवाच।

भक्ष्याभक्ष्यं चतुर्णाञ्च वर्णानाञ्च यथोचितम्।
वेदोक्तं श्रूयतां तात सावधानं निशामय ॥ २
ताम्रपात्रे पयःपानं गव्यं स्निग्धान्नमेव च।
भ्रष्टादिकं मधु गुड़ं नारिकेलोदकं तथा।
फलमूलञ्च यत् किञ्चिदभक्ष्यं मुनिरब्रवीत् ॥ ४
दग्धान्नं तप्तसौवीरमभक्ष्यं ब्राह्मणे मतम् ॥ ५
नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु।
गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥ ६
ताम्रपात्रे पयःपानमुच्छिष्टे घृतभोजनम्।
दुग्धं लवणसंयुक्तं सद्योगोमांसभक्षणम् ॥ ७
अभक्ष्यं मधुमिश्रञ्च घृतं तैलं गुड़ं तथा।
आर्द्रकं गुड़संसक्तमभक्ष्यं श्रुतिसम्मतम् ॥ ८
शीतशेषजलञ्चैव माघे च मूलकं तथा।
उपोदकीञ्च शयने सदा प्राज्ञः परित्यजेत् ॥ ९
द्विर्भोजनञ्च दिवसे सन्ध्ययोर्भोजनं तथा।
भक्ष्यञ्च रात्रिशेषे च ध्रुवं प्राज्ञः परित्यजेत् ॥ १०
पानीयं पायसं चूर्णं घृतं लवणमेव च।
स्वस्तिकं नवनीतञ्च क्षीरं तक्रं तथा मधु ॥ ११
हस्तादस्तगृहीतञ्च सद्यो गोमांसभक्षणम्।
कर्पूरं रौप्यपात्रस्थमभक्ष्यं श्रुतिसम्मतम् ॥ १२
परिवेशनकारी च भोक्तारं स्पृशते यदि।
अभक्ष्यञ्च तदन्नञ्च सर्व्वेषामेव सम्मतम् ॥ १३

(क) लक्षुत्रमिति च पाठः क्वचित्।

नकुलानां गण्डकानां महिषाणाञ्च पक्षिणाम्।
सर्पाणां शूकराणाञ्च गर्द्दभानां विशेषतः॥ १४
मार्ज्जाराणां शृगालानां कुक्कुराणां व्रजेश्वर।
व्याघ्राणामपि सिंहानां त्याज्यं मांसं नृणां सदा १५
जलौकसाञ्च नक्राणां गोधिकानां तथैव च।
मण्डूकानां कर्कटीनां कञ्चुकानाञ्च निश्चितम्॥१६
गवाञ्च चमरीणाञ्च कलौ मांसमभक्ष्यकम्।
हस्तिनां घोटकानाञ्च नृणामेव च रक्षणम्॥ १७
दंशश्च मशकश्चैव मक्षिका च पिपीलिका।
अन्येषाञ्च निषिद्धानां लोके वेदे व्रजेश्वर॥ १८
वानराणां भल्लुकानां शरभाणां तथैव च।
निषिद्धं मृगनाभीनां गर्द्दभानाञ्च मांसकम्॥ १९
अभक्ष्यं महिषाणाञ्च दुग्धं दधि घृतं तथा।
स्वस्तिकञ्च तथा तक्रं विप्राणां नवनीतकम्॥ २०
मांसमुच्चैःश्रवसकं तस्य दुग्धादिकं तथा।
वर्णानाञ्च चतुर्णाञ्चाप्यभक्ष्यञ्च श्रुतौ श्रुतम्॥ २१
अभक्ष्यमार्द्रकञ्चैव सर्व्वेषाञ्च रवेर्दिने।
पर्य्युषितजलञ्चान्नं विप्राणां दुग्धमेव च॥ २२
वर्णानाञ्च चतुर्णामप्यवीरान्नस्य भक्षणम्।
तदन्नञ्च सुरातुल्यं गोमांसाधिकमेव च॥ २३
अवीरान्नञ्च यो भुङ्क्ते ब्राह्मणो ज्ञानदुर्व्वलः।
तिढदेवार्च्चनं तस्य निष्फलं मनुरब्रवीत्॥ २४
ब्राह्मणानां वैष्णवानामभक्ष्यं मत्स्यमेव च।
इतरेषामभक्ष्यञ्च पञ्चपर्व्वसु निश्चितम्॥ २५
पितृदेवावशेषे च भक्ष्ये मांसे न दूषणम्।
पञ्चपर्व्वसु त्याज्यञ्च सर्व्वेषां मनुरब्रवीत्॥ २६
असंस्कृतञ्च लवणं तैलञ्चाभक्ष्यमेव च।
भक्ष्यं पवित्रं सर्व्वेषां व्यञ्जने वह्निसंस्कृतम्॥ २७
एकहस्ते घृतं तोयमभक्ष्यं सर्व्वसम्मतम्।
आविलं कृमियुक्तञ्च परिशुद्धञ्च निर्म्मलम्॥ २८
अभक्ष्यं ब्राह्मणानाञ्च वैष्णवानां विशेषतः।
अनिवेद्यं हरेरेव यतीनां ब्रह्मचारिणाम्॥ २९
पिपीलिकामिश्रितञ्च मधु गव्यं गुड़स्तथा।
यत् किञ्चिद्वस्तु वा तात न भक्ष्यञ्च श्रुतौ श्रुतम्॥ ३०
पक्षिभक्ष्यं कीटभक्ष्यं शुष्कं पक्वफलं तथा।
काकभक्ष्यमभक्ष्यञ्च सर्व्वेषां द्रव्यमेव च॥ ३१
घृतपक्वं तैलपक्वं मिष्टान्नं शूद्रसंस्कृतम्।
अभक्ष्यं ब्राह्मणानाञ्च शूद्रभृष्टं चिपीटकम्॥ ३२
सर्व्वेषामशुचीनाञ्च जलमन्नं परित्यजेत्।
अशौचान्तात् परदिने शुद्धमेव न संशयः॥ ३३
विपाकं कर्म्मणामेव दुष्कारं श्रुतिसम्मतम्।
भक्ष्याभक्ष्यञ्च कथितं यथाज्ञानं व्रजेश्वर (क)॥ ३४
क्रमाच्चतुर्षु वेदेषु चोक्तं मतचतुष्टयम्।
सर्व्वेषां सारभूतञ्च कथयामि पितः शृणु॥ ३५
नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम्॥ ३६
तीर्थानाञ्च सुराणाञ्च सहायेन नृणामपि।
किञ्चिद्भवति साहाय्यं कायव्यूहेन यत्नतः॥ ३७
प्रायश्चित्तानि चीर्णानि निश्चितं मत्पराङ्मुखम्।
न निष्पुनन्ति हे तात सुराकुम्भमिवापगा॥ ३८
प्रायश्चित्तेन पुण्येन न हि शुध्यन्ति मानवाः।
सर्व्वारम्भेण वैश्येन्द्र दानेन योगतोऽपि वा॥ ३९
शुभाशुभञ्च यत् कर्म्म विना भोगान्न च क्षयम्।
भोगेन शुद्धिमाप्नोति ततो मुक्तिर्भवेन्नृणाम्॥ ४०
न नष्टं दुष्कृतं कर्म्म सुकृतेन च कर्म्मणा।
न नष्टं सुकृतं कर्म्म कृतेन दुष्कृतेन च॥ ४१
यज्ञेन तपसा वापि व्रतेनानशनेन च।
तीर्थस्नानेन दानेन जपेन नियमेन च॥ ४२
भुवः प्रदक्षिणेनैव पुराणश्रवणेन च।
उपदेशेन पुण्येन पूजया गुरु-देवयोः।
स्वधर्म्माचरणेनैवातिथीनां पूजनेन च॥ ४३
कर्म्मणा न हि मोक्षञ्च तदेव मम सेवया॥ ४४
स्वर्गञ्च सुकृतेनैव नरकं दुष्कृतेन च।
व्याधिर्जन्म च योनौ च कुत्सितायां ततः शुचिः॥ ४५
गोघ्नो यो ब्राह्मणानाञ्च कामतश्चोपपातकी।
दन्दशूकञ्च प्राप्नोति गोलोमसमवर्षकम्॥ ४६
सर्पेण भक्षितस्तत्र ज्वालया गरलस्य च।
तृषितो व्याधितश्चैव निराहारः कृशोदरः॥ ४७
ततः कुण्डात् समुत्थाय गौर्भवेल्लोमवर्षकम्।
ततः कुष्ठी च चाण्डालो वर्षलक्षं ततो नरः॥ ४८
तदा भवेद्ब्राह्मणश्च कुष्ठयुक्तो हि कर्म्मणा।
भोजयित्वा विप्रलक्षं निर्व्याधिश्च भवेच्छुचिः॥ ४९
अकामतस्तदर्द्धञ्च क्षत्रियस्यापि कामतः।

(क, इतःपरं भगवानुवाच। इति प्रमादिकः पाठः क्वचित्।

अकामतस्तदर्द्धञ्च तदर्द्धञ्च विशस्तथा ॥ ॥ ५०
तदर्द्धं शूद्रगोघ्नश्च भुङ्क्ते पापं न संशयः।
प्रायश्चित्तेन शुद्धश्च भुङ्क्ते शेषञ्च किञ्चन।
अनुकल्पे चतुर्थञ्च पापं भुङ्क्ते न संशयः॥ ५१
चतुर्गुणञ्च गोघ्नानां ब्राह्मणानाञ्च पातकी।
भुङ्क्ते पापञ्च ब्रह्मघ्नो ब्राह्मणश्चेतरेऽपि वा॥ ५२
क्रमेणानेन बोध्यञ्च कामतोऽकामतोऽपि वा।
प्रायश्चित्तं जन्म कर्म्म व्याधिरेव न संशयः॥ ५३
गोघ्नो भवति गौश्चापि यावद्वर्षञ्च निश्चितम्।
चतुर्गुणञ्च तेषाञ्च ब्रह्मघ्नो विट्क्रिमिर्भवेत्॥ ५४
ततो म्लेच्छश्च भवति तावद्वर्षचतुर्गुणम्।
ततश्चान्धो भवेद्विप्रः पूर्व्वेषाञ्च चतुर्गुणम्॥ ५५
ब्राह्मणानां चतुर्लक्षं भोजयित्वा शुचिर्भवेत्।
चक्षुष्मांश्च यशस्वी च भवेत् सोऽप्यतिपातकात्॥ ५६
स्त्रीघ्नश्चतुर्णां वर्णानां वेदे सोऽप्यतिपातकी।
कालसूत्रञ्च प्राप्नोति स्त्रीलोमसमवर्षकम्॥ ५७
भक्षितः क्रिमिणा तत्र निराहारो व्यथायुतः।
ततो भवति कोलश्च (क) तावद्वर्षञ्च पातकी॥ ५८
ततः पापी भवेच्छूद्रो यक्ष्मग्रस्तः स्वकर्म्मणः।
वर्षाणां शतकञ्चैव विप्रलक्षञ्च भोजयेत्॥ ५९
ततः शुद्धो ब्राह्मणश्च विद्वांस्तपसि संयतः।
किञ्चिद्भुङ्क्ते कालशेषं स्वर्णदानाच्छुचिर्भवेत्॥ ६०
गर्भघ्नश्च महापापी सम्प्राप्नोति सूचीमुखम्।
वर्षाणां शतकञ्चैव सूक्ष्मशस्त्रेण पीड़ितः॥ ६१
वर्षाणां शतकञ्चैव घोटकश्च भवेद्ध्रुवम्।
ततः पापी भवेद्वैश्यो दद्रुयुक्तो हि कर्म्मणा॥ ६२
पञ्चाशद्वर्षपर्य्यन्तं स्वर्णदानाद्भवेच्छुचिः।
ततः सत्कुलजातोऽपि निर्व्याधिर्ब्राह्मणः शुचिः॥ ६३
ब्राह्मणः क्षत्रियघ्नश्च क्षत्रियो वैश्यघातकः।
तप्तशूलञ्च प्राप्नोति वर्षाणाञ्च सहस्रकम्॥ ६४
ताड़ितो तप्तलौहेन चार्त्तनादं करोति च।
ततो भवेन्मत्तगजो वर्षाणां शतकं तथा॥ ६५
ततो रक्तविकारी च शूद्रो वर्षशतं तथा।
गजदानेन मुक्तश्च व्याधितश्च ततो द्विजः॥ ६६
वैश्यघ्नश्चापि वैश्यश्च शूद्रघ्नो वैश्य एव च।
वैश्यघ्नश्चापि शूद्रश्च समपापं लभेद्ध्रुवम्॥ ६७

(क) लोकश्च इति क्वचित्।

क्रिमिकुण्डञ्च प्राप्नोति वर्षाणां शतकं तथा।
क्रिमिभिर्भक्षिता दुःखी किरातश्च भवेत् ततः।
वर्षाणां शतकञ्चैव क्रिमिव्याधिसमन्वितः॥ ६८
शूद्रघ्नो ब्राह्मणश्चैव कामतोऽकामतोऽपि वा।
सावित्रीलक्षजप्येन तदर्द्धेन शुचिर्भवेत्॥ ६९
चतुर्व्वर्णः कुक्कुरघ्नो ह्यभिशप्तश्च शम्भुना।
वर्षाणां शतकञ्चैव प्राप्नोति रौरवं नरः॥ ७०
ततो भवेत् कुक्कुरश्च वर्षाणामपि षोड़श।
ततः शुद्धो भवेद्विप्रो भक्षितः कुक्कुरेण च।
गङ्गास्नानेन दानेन स्वर्णस्यापि भवेच्छुचिः॥ ७१
मार्ज्जारघ्नश्चतुर्व्वर्णो गङ्गास्नानाद्भवेच्छुचिः।
विप्राय लवणं दत्त्वा षट्पलञ्च प्रमुच्यते॥ ७२
हत्वा सर्पं चतुर्व्वर्णो मम पादेन चिह्नितम्।
ब्रह्महत्याचतुर्थञ्च पातकञ्च लभेद्ध्रुवम्॥ ७३
असिपत्रञ्च नरकं वर्षाणां शतकं तथा।
प्राप्नोति यातनायुक्तो विच्छिन्नस्तीक्ष्णधारतः॥ ७४
ततो भवति सर्पश्च डुण्डुभो वर्षपञ्चकम्।
नरेण ताड़ितो दुःखी मृतो भवति पीड़ितः॥ ७५
ततो भवेन्नरः पापाज्ज्वरयुक्तो हि दुर्ब्बलः।
वर्षाणां पञ्चकेनैव मृतो भवति कर्म्मणा॥ ७६
अश्वघ्नश्च गजघ्नश्च चतुर्व्वर्णश्च पातकी।
वर्षाणां दशकं पापी मूत्रकुण्डं प्रयाति च॥ ७७
ततो भवति हस्ती वा घोटको वा व्रजेश्वर।
यावद्विंशतिवर्षञ्च ततः शूद्रो भवेद्ध्रुवम्॥ ७८
अहङ्कृतो व्याधियुक्तो रौप्यदानेन मुच्यते।
ब्राह्मणानाञ्च शतकं भोजयित्वा शुचिर्भवेत्॥ ७९
क्षुद्रजन्तुवधेनैव क्षुद्रजन्तुर्भवेन्नरः।
वर्षाणां शतकञ्चैव क्षुद्रव्याधी भवेत् ततः॥ ८०
कृपा कार्य्या सतां शश्वद्धिंस्रेषु च जन्तुषु।
हिंसायां न हि दोषश्च हिंस्राणाञ्च व्रजेश्वर॥ ८१
अश्वत्थघ्नश्चतुर्व्वर्णो ब्रह्महत्याचतुर्थकम्।
पापञ्च लभते तात चासिपत्रं लभेद्ध्रुवम्॥ ८२
स तीक्ष्णेनापि शस्त्रेण विच्छिन्नश्च दिवानिशम्।
वर्षाणां शतकञ्चैव भुङ्क्ते परमयातनाम्॥ ८३
ततो भवति वृक्षश्च शाल्मलिर्वर्षलक्षकम्।
ततो भवति शूद्रश्च च्छिन्नाङ्गो व्याधिसंयुतः॥ ८४
यावज्जीवनपर्य्यन्तं ततो विप्रो भवेद्ध्रुवम्।

व्रणव्याधिसमायुक्तो मुच्यते स्वर्णदानतः ॥ ८५
नररक्तञ्च यो भुङ्क्ते खण्डज्ञानी च पुक्कसः ।
जलौका च भवेत् सोऽपि जले च सप्तजन्मसु ॥ ८६
ततो भवेत् पुक्कसश्च वर्षाणां शतकं व्रज ।
ततो व्याधी भवेद्विप्रो मुच्यते स्वर्णदानतः ॥ ८७
मिथ्यासाक्ष्यप्रदाता च कृतघ्नोऽतिकृतघ्नकः ।
विश्वासघाती मित्रघ्नो विप्राणां धनहारकः ॥ ८८
शूद्रश्राद्धान्नभोजी च शूद्राणां शववाहकः ।
शूद्राणां सूपकारश्च वृषवाहनपातकी ॥ ८९
धावको देवलश्चापि चैतेऽतिपापिनस्तथा ।
कुम्भीपाकं प्रयात्येव वर्षाणाञ्च सहस्रकम् ॥ ९०
तत्रैव तप्ततैलेन सन्तप्तश्च दिवानिशम् ।
भक्षितो व्याधितश्चैव सर्पाकारेण जन्तुना ॥ ९१
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः ।
श्वापदो शतजन्मानि शूद्रो रोगी भवेत् ततः ॥ ९२
मन्दाग्निज्वरसंयुक्तः पञ्चाशद्वर्षकं तथा ।
सुवर्णानां पलशतं दत्त्वा शुद्धिर्भवेद्ध्रुवम् ॥ ९३
चतुर्व्वर्णो वस्त्रहारी गव्यहारी च मानवः ।
रौप्यमुक्तापहारी च शुभ्रद्रव्यापहारकः ॥ ९४
वर्षाणाञ्च सहस्रञ्च वकजातिर्भवेद्ध्रुवम् ।
मूत्रकुण्डञ्च सम्भुक्त्वा वर्षाणां शतकं तथा ॥ ९५
ततो भवेच्छूद्रजातिर्वर्षाणां शतकं व्रज ।
कुष्ठव्याधिसमायुक्तो गलितश्चैव पातकी ॥ ९६
ततो भवेद्ब्राह्मणश्चाप्यधिकाङ्गोऽपि जन्मनि ।
पुनर्जन्म द्विजो भूत्वा मुच्यते विप्रभोजनात् ॥ ९७
गन्धद्रव्यापहारी च पशुयोनिर्भवेद्ध्रुवम् ।
यस्याण्डकोषो गन्धाक्तः कस्तूरी यस्य नाम च ॥९८
सप्तजन्म मृगो भूत्वा ततो भवति गन्धकः ।
जन्मैकञ्च ततः शूद्रो गलत्कुष्ठी च जन्मनि ॥ ९९
ततो रोगावशेषेण संयुतो ब्राह्मणः क्रमः ।
स्वर्णषट्पलदानेन मुच्यते नात्र संशयः ॥ १००
धान्यापहारी दुःखी च कृपणः सप्तजन्मसु ।
विट्कुण्डञ्च वर्षशतं सम्प्राप्य मुच्यते भिया ॥ १०१
स्वर्णापहारी कुष्ठी च मानवः पतितो भवेत् ।
स्वर्णदानप्रतिग्राही विट्कुण्डञ्च प्रयाति च ॥ १०२
तत्र वर्षशतं भुक्त्वा पुरीषञ्च दिवानिशम् ।
ततो व्याधी भवेच्छूद्रो रक्तदोषेण संयुतः ॥ १०३
तज्जन्म पातकं भुक्त्वा ब्राह्मणश्च पुनर्भवेत् ।
व्याधिशेषावशुक्तश्च मुच्यते स्वर्णदानतः ॥ १०४
अगम्यानाञ्च गामी च पूर्व्वोक्तं रौरवं व्रजेत् ।
कुम्भीपाकं महाघोरं वर्षाणाञ्चाप्यसंख्यकम् ॥ १०५
ततो भवेत् पुंश्चलीनां योनीनाञ्च कृमिस्तथा ।
वर्षाणाञ्च सहस्रञ्च विट्कृमिर्लक्षवर्षकम् ॥ १०६
पशुयोनिर्भवेत् तस्मात् तस्माच्च क्षुद्रजन्तवः ।
ततो भवेन्म्लेच्छजातिस्ततः शूद्रोऽधमस्तथा ॥ १०७
ततो भवति विप्रश्च व्याधियुक्तो नपुंसकः ।
पुनश्च ब्राह्मणो भूत्वा तीर्थपर्य्यटनेन च ॥ १०८
क्रमेण शुद्धो भवति वंशहीनश्च पातकात् ।
भोजयित्वा विप्रलक्षं पुत्रञ्च लभते शुचिः ॥ १०९
मानवः क्रोधयुक्तश्च गर्द्दभः सप्तजन्मसु ।
मानवः कलहाविष्टः सप्तजन्मसु वायसः ॥ ११०
शालग्रामप्रतिग्राही कालसूत्रं व्रजेद्ध्रुवम् ।
वर्षाणां शतकञ्चैव खञ्जरीटो भवेत् ततः ॥ १११
लौहचौरश्च निर्व्वंशो मसीचौरश्च कोकिलः ।
शुकोऽप्यन्नचौरश्च मिष्टचौरः कृमिर्भवेत् ।
विप्रद्वेषी गुरुद्वेषी शिरसाच्च कृमिर्भवेत् ॥ ११२
पुंश्चली कामिनी तात भुक्त्वा च रौरवं चिरम् ।
ततो वृथाकृमिश्चैव वर्षाणां शतकं तथा ॥ ११३
ततोऽपि विधवा चैव वन्ध्या च सप्तजन्मसु ।
अस्पृश्यजातिहीना च छिन्ननासा भवेत् क्रमात् ११४
रक्तद्रव्यापहारी च रक्तदोषान्वितो भवेत् ।
आचारहीनो यवनः खञ्जो हीनश्च(क)हिंसकः॥११५
अदीक्षितो वह्वरश्च दुष्टदर्शी च काणकः ।
अहङ्कारी वर्णहीनो बधिरो देवनिन्दकः ॥११६
वाक्यहर्त्ता च मूकश्च हिंसकः केशहीनकः ॥
मिथ्यावादी श्मश्रुहीनो दुर्व्वाक् च दन्तहीनकः॥११७
जिह्वाहीनः सत्यहारी दुष्टोऽप्यङ्गुलहीनकः ।
ग्रन्थापहारी मूर्खश्च व्याधियुक्तो भवेद्ध्रुवम् ॥ ११८
अश्वग्राही च तच्चौरो लालासूत्रं व्रजेदिति ।
वर्षाणाञ्च शतं स्थित्वा घोटकश्च भवेद्ध्रुवम् ॥ ११९
गजचौरो गजग्राही विट्कुण्डे च सहस्रकम् ।
स्थित्वा वर्षं भवेद्धस्ती तत्पश्चाद्वृषलो भवेत् ॥ १२०
अयज्ञे छागहन्ता च छागचौरः प्रतिग्राही ।

(क) खञ्जो भवति हिंसक इति क्वचित् ।

पूयकुण्डे वर्षशतं स्थित्वा च्छागलतां व्रजेत् ॥१२१
छागश्च वर्षपर्य्यन्तं तदा भवति मानवः।
मलुशस्त्रेन च्छिन्नश्च तदा मुक्तो भवेद्दिजः॥ १२२
दत्तापहारी वाग्दानं कृत्वापहरते पुनः।
स भवेन्म्लेच्छयोनौ च भुक्त्वा च नरकं चिरम् ॥१२३
एकाकी मिष्टमश्नाति कालसूत्रं व्रजेद्ध्रुवम्।
तत्र वर्षशतं स्थित्वा प्रेतो वर्षसहस्रकम् ॥ १२४
तदा भवति जन्मैकं मक्षिका च पिपीलिका।
जन्मैकं भ्रमरश्चैव जन्मैकं मधुमक्षिका ॥ १२५
जन्मैकं मत्कुणश्चैव जन्मैकं दंश एव च।
जन्मैकं मशकश्चैव जन्मैकं पुत्तिका स्मृता॥ १२६
जन्मैकं तल्पकीटश्च तदा शूद्रो भवेद्ध्रुवम्।
असद्बुद्धिर्व्याधियुक्तस्तदा मुक्तो भवेद्दिजः॥ १२७
तैलचौरस्तैलकीटो मूर्द्धिकीटस्त्रिजन्मकम्।
तदा भवेत् स्वर्णकारी जन्मैकं दुष्टमानसः॥ १२८
विप्रैकलिपिकर्त्ता च भव्यदातुर्धनं हरेत्।
तमःकुण्डे वर्षशतं स्थित्वा स्वर्णवणिग्भवेत्।
जन्मैकञ्च दुराचारी जन्मैकं करणो भवेत् ॥ १२९
कायस्थेनोदरस्थेन मातुर्मांसं न खादितम्।
तत्र नास्ति कृपा तस्य दन्ताभावेन केवलम् ॥ १३०
स्वर्णकारः स्वर्णवणिक् कायस्थश्च व्रजेश्वर।
नरेषु मध्ये ते धूर्त्ताः कृपाहीना महीतले॥ १३१
हृदयं क्षुरधाराभं तेषाञ्च नास्ति शादरम्।
शतेषु सज्जनः सोऽपि कायस्थो नेतरौ च तौ ॥१३२
सुबुद्धिः शिवयुक्तश्च शास्त्रज्ञो धर्म्ममानसः।
न विश्वसेत् तेषु तात स्वात्मकल्याणहेतवे॥ १३३
सीमापहारी दुष्टश्च भूमिचौरश्च हिंसकः।
भूमिदानापहारी च कालसूत्रं व्रजेद्ध्रुवम् ॥ १३४
षष्टिं वर्षसहस्राणि क्षुत्पिपासार्द्दितः स्थितः।
ततोऽपि तानि वर्षाणि विष्ठायां जायते कृमिः॥१३५
ततो भवेदसच्छूद्रो जन्मैकञ्च ततः शुचिः।
तस्माजज्ज्ञानैः सावधानो भवेत् प्राज्ञश्च यत्नतः॥१३६
रक्तवस्त्रापहारी च जन्मैकं रक्तकीटकः।
पीतवस्त्रापहारी च जन्मैकं पीतकीटकः।
ततः शूद्रश्च जन्मैकं ततो विप्रो भवेच्छुचिः॥ १३७
त्रिसन्ध्याहीनो विप्रश्च प्रातःस्नायी च यो नरः(क)।

सन्ध्यास्नायी दिवास्नायी यज्ञसूत्रापहारकः॥ १३८
अशुद्धसन्ध्याकारी च वेदवेदाङ्गनिन्दकः।
तन्निरुद्धः स्वर्गमार्गस्त्रिजन्म पतितो द्विजः॥ १३९
यः शूद्रो ब्राह्मणीगामी कुम्भीपाकं व्रजेद्ध्रुवम्।
वर्षाणाञ्च त्रिलक्षञ्च पच्यते तत्र पीड़ितः॥ १४०
दिवानिशं प्रदग्धश्च तप्ततैले च दारुणे।
ततो भवेद्दुर्योनिकीटः पुंश्चलीनाञ्च पातकी॥ १४१
षष्टिवर्षसहस्राणि चाहारस्तस्य तन्मलम्।
ततो भवति चाण्डालो जन्मलक्षं क्रमेण च॥ १४२
ततः शूद्रो गलत्कुष्ठी जन्मैकञ्च ततः शुचिः।
सोऽपि विप्रो व्याधिशेषात् तीर्थपर्य्यटनाच्छुचिः॥१४३
असच्छूद्रश्च भवति सोऽस्थाने सुरपूजने॥ १४४
दत्त्वा देवाय नैवेद्यमपवित्रञ्च मानवः।
सकेशं पार्थिवं लिङ्गं सम्पूज्य यवनो भवेत् ॥ १४५
शार्करेण भवेदन्धः कुत्सितेन च कुत्सितः।
अङ्गहीने दरिद्रश्च व्याधियुक्तश्च मानवः॥ १४६
अश्रद्धया च निर्म्माणे निर्म्माणसदृशं फलम्।
मृत्स्ना-गोमयकृतिपिण्डैस्तथा वालुकयापि वा।
कृत्वा लिङ्गं सकृत्पूज्य वसेत् कल्पायुतं दिवि॥ १४७
ततो भवति विप्रश्च महाप्राज्ञश्च भूमिवान्।
राजा भवेद्भारते च लिङ्गानां शतपूजनात् ॥ १४८
सहस्रपूजनात् सोऽपि लभते निश्चितं फलम्।
स्थित्वा च सुचिरं स्वर्गे राजेन्द्रो भारते भवेत् ॥१४९
अयुते च तदीशश्च लक्षे च पृथिवीश्वरः।
पूजने चातिभक्त्या चाप्यतिरिक्तं फलं लभेत् ॥ १५०
तीर्थस्नानेन दानेन विप्राणां भोजनेन च।
नारायणार्च्चया चैव विप्रजातिश्च कर्म्मणा॥ १५१
अतिरिक्तेन तपसा पण्डितो ब्राह्मणो भवेत् ॥ १५२
पण्डितो ब्राह्मणश्चैव वैष्णवश्च जितेन्द्रियः।
अनेकजन्मपुण्येन जायते भारते भुवि॥ १५३
तस्याङ्घ्रिस्पर्शनेनैव सद्यःपूता वसुन्धरा।
तीर्थीकुर्व्वन्ति तीर्थानि जीवन्मुक्ताश्च वैष्णवाः।
स्वपुंसाञ्च सहस्रञ्च पुनातीति श्रुतौ श्रुतम्॥१५४
पापेन वैद्यजन्मैव दुश्चिकित्सोऽपि ब्राह्मणः।
दुश्चिकित्सस्तथा वैद्यो व्यालग्राही त्रिजन्मसु॥१५५
अतिक्रूरो दुराचारी द्वेष्टा च सुर-विप्रयोः।
स भवेत् कुटिलव्यालो वर्षाणाञ्च सहस्रकम्॥ १५६

(क) प्रातःस्नायी न यो नर इति क्वचित्।

पुंश्चलीलम्पटानाञ्च दूती या कामुकी व्रज।
कालसूत्रे वर्षशतं स्थित्वा च गोधिका भवेत् ॥१५७
जन्मैकं गोधिका भूत्वा हरिणश्च त्रिजन्मसु।
जन्मैकं महिषश्चैव जन्मैकं भल्लुको भवेत्।
जन्मैकं गण्डकश्चैव शृगालश्च त्रिजन्मसु ॥ १५८
परकीयतड़ागञ्च दृष्ट्वा शस्यं ददाति च।
स भवेन्नक्रजातिश्च कच्छपश्च त्रिजन्मसु ॥ १५९
मीनमांसञ्च यो भुङ्क्ते मत्स्यलुब्धश्च ब्राह्मणः।
भुङ्क्ते मांसमदत्तञ्च स मीनश्च मृगो भवेत् ॥ १६०
वर्षाणाञ्च सहस्रञ्च तात भुक्त्वा च किल्बिषम्।
कर्म्मभोगाच्छुचिर्भूत्वा स पुनर्ब्राह्मणो भवेत् ॥१६१
एकादशीविहीनश्च ब्राह्मणः पतितो भवेत्।
भक्ष्यस्य द्विगुणं दत्त्वा तेन पापेन मुच्यते ॥ १६२
मम जन्मदिने चैव यो भुङ्क्ते मानवोऽधमः।
त्रैलोक्यजनितं पापं स भुङ्क्ते च न संशयः।
भुक्त्वा च नरकं सर्व्वं पश्चाच्चाण्डालतां व्रजेत् ॥१६३
एवञ्च शिवरात्रौ च श्रीरामनवमीदिने ॥ १६४
उपवासासमर्थश्च हविष्यान्नं समाचरेत्।
ततोऽशक्तो दुर्ब्बलश्च भोजयेद्ब्राह्मणान् पितः ॥ १६५
कृत्वा महोत्सवं पुण्यं मदीयं पातकाच्छुचिः।
तस्माद्दृयत्नेन कर्त्तव्यं नामसङ्कीर्त्तनं मम ॥ १६६
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः।
श्वापदं सप्तजन्मानि कुत्राञ्च निंशि भोजनात् ॥१६७
अदीक्षितो द्विजश्चैव शङ्खचिल्लः शुको भवेत्।
अनुदाहो द्विजश्चैव राजहंसो भवेद्ध्रुवम् ॥ १६८
चित्रवस्त्रापहारी च मयूरश्च त्रिजन्मसु।
दरिद्रो व्याधियुक्तश्च बधिरश्चापि कुब्जकः ॥ १६९
स्त्री-तैल-मत्स्य-मांसानि वर्ज्जयेत् पञ्चपर्व्वसु।
सेवते यो महामूढ़ो वज्रदंष्ट्रं व्रजेद्ध्रुवम् ॥ १७०
पातकी दुःखितस्तत्र वर्षाणाञ्च सहस्रकम्।
ततो म्लेच्छश्च भवति चाण्डालः सप्तजन्मसु ॥ १७१
व्याधियुक्तस्ततः शूद्रो ब्राह्मणश्च ततः शुचिः।
तस्माद्दृयत्नान्न भोक्तव्यं भारते धर्म्मभीरुणा ॥ १७२
ब्राह्मणञ्च सुरं दृष्ट्वा न नमेद्यो नराधमः।
यावज्जीवनपर्य्यन्तमशुचिर्यवनो भवेत् ॥ १७३
अभ्युत्थानं न कुरुते दृष्ट्वागतञ्च ब्राह्मणम्।
स भवेद्दृजातिश्च सप्तजन्मसु निश्चितम् ॥ १७४
अवक्ताता धनाढ्यश्च चातकः सप्तजन्मसु।
शिवद्वेषी कुक्कुरश्च देवलः सप्तजन्मसु ॥ १७५
पितृदेवार्च्चनं हन्ति वेदोक्तं ज्ञानदुर्ब्बलः।
स याति नरकं पापी वर्षाणाञ्च सहस्रकम् ॥ १७६
ततश्च रौरवं भुक्त्वा तीर्थकाकस्त्रिजन्मसु।
त्रिजन्मसु शृगालः स तीर्थे भुङ्क्ते शवं व्रज ॥ १७७
त्रिजन्मसु भवेत् सोऽपि तीर्थेषु शवरक्षकः।
शवानां करमाधत्ते कर्म्मणा कृतपातकी ॥ १७८
नित्यं सुरार्च्चनं कृत्वा दाम्भिको ज्ञानदुर्ब्बलः।
गुरुञ्च नार्च्चयेद्भक्त्या तस्मै नान्नं ददाति यः ॥ १७९
स भवेद्देवलो दुःखी देवशापेन पातकी।
पूजाफलं न लभते देवद्रोही सुदारुणः ॥ १८०
दीपनिर्व्वाणकर्त्ता च खद्योतः सप्तजन्मसु।
कुष्माण्डच्छेदिका नारी शङ्खचिल्लस्त्रिजन्मसु ॥ १८१
रोगी दरिद्रः कृपणः सप्तजन्मसु निश्चितम्।
त्रिजन्मनि भवेदन्धः कौशश्मश्रुविहीनकः ॥ १८२
उक्तः कौथुमशाखायां सामवेदे सुनिश्चितम्।
दीपानिर्व्वापणेदोषःकुष्माण्डच्छेदने तथा (क) १८३
अतीव मत्स्यलुब्धश्चाप्यनिवेद्यञ्च खादति।
स भवेन्मत्स्यरङ्गश्च मार्ज्जारः सप्तजन्मसु ॥ १८४
गोधूमहर्त्ता कपोतश्च मालाहर्त्ता विहङ्गमः।
चटको धान्यचौरश्च मांसचौरश्च कुञ्जरः।
कवित्वहर्त्ता विदुषां मण्डूकः सप्तजन्मसु ॥ १८५
असत्कविर्ग्रामविप्रो नकुलः सप्तजन्मसु।
ज्येष्ठी भवेच्च जन्मैकं कृकलासस्त्रिजन्मसु ॥ १८६
दुर्व्वाक् पुमान् वृश्चिकश्च करटः सप्तजन्मसु ॥ १८७
जन्मैकं वल्लश्चैव ततो वृहत्पिपीलिका।
ततः शूद्रश्च वैश्यश्च क्षत्रियो ब्राह्मणस्तथा ॥ १८८
कन्याविक्रयकारी च चतुर्व्वर्णो हि मानवः।
सद्यः प्रयाति तामिस्रं यावच्चन्द्रदिवाकरौ ॥ १८९
ततो व्याधश्च भवति मांसविक्रयकारकः।
ततो व्याधी भवेत् पश्चाद्व्यो यथा पूर्व्वजन्मनि॥१९०
महाचक्री च कुटिलो धर्म्महीनश्च मानवः।

(क) "तथा" इत्यनन्तरं क्वचित् पुस्तके
"कुष्माण्डच्छेदिका नारी दीपनिर्व्वापकः पुमान्।
सप्तजन्म भवेद्रोगी दरिद्रः सप्तजन्मसु ॥"
श्लोकोऽयमितिरिक्तो दृश्यते।

जन्मैकं तैलकारश्च कुम्भकारस्तथैव च ॥ १९१
मिथ्याकलङ्कवक्ता च देवब्राह्मणनिन्दकः।
स भवेच्चूर्णकारश्च रजकः सप्तजन्मसु ॥ १९२
ब्राह्मण-क्षत्र-विट्-शूद्राः कुत्सिताः शौचवर्ज्जिताः।
जन्म तेषां म्लेच्छयोनौ वर्षाणाञ्च सहस्रकम् ॥ १९३
अतीवकामिनीलुब्धः कामुकः स्त्रीरतः सदा।
यक्ष्मग्रस्तो भवेत् सद्यः परत्रापि नपुंसकः ॥ १९४
कामतो योषितां श्रोणीं स्तनास्यं यश्च पश्यति।
स भवेद्दृष्टिहीनश्च परत्रापि नपुंसकः ॥ १९५
विप्रोऽभिचारकर्त्ता च हिंसको ज्ञानदुर्बलः।
याल्येवमन्धतामिस्रं वर्षाणामयुतं व्रज ॥ १९६
तदा भवति दैवज्ञोऽप्यग्रदानीं च दुर्म्मतिः।
ततः शूद्रो भवेद्विप्रो भोगेन कर्म्मणस्तथा ॥ १९७
शास्त्रज्ञाता च दैवज्ञो मिथ्या वदति लोभतः।
स भवेच्च चिरं ज्येष्ठी वानरः सप्तजन्मसु ॥ १९८
अनेकजन्मतपसा भारते ब्राह्मणो भवेत्।
सुबुद्धिरतिधर्म्मिष्ठो धर्म्महीनश्च पातकी ॥ १९९
स्वधर्म्मनिरतो विप्रः पवनाच्च हुताशनात्।
पवित्रश्चापि तेजस्वी तस्माद्धीतः सुरः सदा ॥ २००
नदीषु च यथा गङ्गा तीर्थेषु पुष्करो यथा।
पुरीषु च यथा काशी यथा ज्ञानिषु शङ्करः ॥ २०१
शास्त्रेषु च यथा वेदा यथाश्वत्थश्च पादपे।
मम पूजा तपस्यासु व्रतेष्वनशनं तथा ॥ २०२
तथा जातिषु सर्व्वासु ब्राह्मणः श्रेष्ठ एव च।
विप्रपादेषु तीर्थानि पुण्यानि च व्रतानि च ॥ २०३
विप्रपादरजः शुद्धं पापव्याधिविमर्द्दनम्।
शुभाशीर्व्वचनं तेषां सर्व्वकल्याणकारणम् ॥ २०४
एष ते कथितस्तात विपाकः कर्म्मणामहो।
यथा श्रुतं तथा ज्ञानं तदा शेषं निशामय ॥ २०५
श्रुत्वा कर्म्मविपाकञ्च वाचकाय सुवर्णकम्।
दद्यात् तस्मै च रौप्यञ्च वस्त्रं ताम्बूलमेव च ॥ २०६
सुवर्णशतकं दद्यात् सद्यो देही च गोकुलम्।
रौप्यं वस्त्रञ्च ताम्बूलं मत्प्रीत्या ब्राह्मणाय च ॥ २०७

इति श्रीब्रह्मवैवर्त्त-महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे भगवन्नन्द-संवादे पञ्चाशीतितमोऽध्यायः ॥८५॥

---

## षडशीतितमोऽध्यायः।

नन्द उवाच।

केदारकन्याप्रस्तावात् कथितं कर्म्मकीर्त्तनम्।
कृत्वाख्यानां प्रसङ्गेन तद्व्यासेन वद प्रभो ॥ १
केदारकन्या सा का वा को वा केदारभूपतिः।
कस्य वंशे च तज्जन्म तन्मे व्याख्यातुमर्हसि ॥ २

श्रीभगवानुवाच।

पुरादौ ब्रह्मणः पुत्रो मनुः स्वायम्भुवस्तथा।
तस्य स्त्री शतरूपा च धन्या मान्या च योषिताम् ॥ ३
प्रियव्रतोत्तानपादौ तयोः पुत्रौ बभूवतुः।
उत्तानपादपुत्रश्च ध्रुव एव महाशयः ॥ ४
तस्य पुत्रो वत्सरार्णः केदारश्च तदात्मजः।
सप्तद्वीपपतिः श्रीमान् केदारो वैष्णवः स्वयम् ॥ ५
तस्य रक्षानिमित्तेन तत्सभायां सुदर्शनम्।
नवलक्षं गवां शुद्धं स्वर्णशृङ्गविभूषितम् ॥ ६
वह्निशुद्धानि वस्त्राणि दत्तानि वरुणेन च।
सुवर्णानां तथा लक्षमुर्व्वराञ्च वसुन्धराम् ॥ ७
मणिं रत्नञ्च मुक्ताञ्च हीरकं परमं तथा।
माणिक्यमश्वरत्नानां लक्षं लक्षञ्च हस्तिनाम् ॥ ८
रौप्यं प्रवालं मिष्टान्नं शतधान्याचलं वरम्।
नित्यं नित्यं ब्राह्मणेभ्यः प्रददौ रत्नभूषणम् ॥ ९
शतलक्षं ब्राह्मणानां भोजयामास नित्यशः।
जलभाजनपात्राणि सुवर्णानां ददौ नृपः ॥ १०
सुवर्णानां यज्ञसूत्रमङ्गुरीयकमुत्तमम्।
आसनं स्वर्णरत्नानां ब्राह्मणेभ्यो ददौ मुदा ॥ ११
ब्राह्मणानाञ्च लक्षञ्च सूपकारं नृपस्य च।
ब्राह्मणानां द्विलक्षञ्च परिवेशनकारकम् ॥ १२
घृतकुल्या मधुकुल्या दधिकुल्या मनोहरा।
गुड़कुल्या दुग्धकुल्या नित्यं प्रार्थनमीप्सितम् ॥ १३
प्रातरारभ्य सन्ध्यान्तं विप्राणां भोजनं तथा।
दुःखिनां भिक्षुकाणाञ्च धनदानं यथोचितम् ॥ १४
फलमूलाशनो राजा वैष्णवश्च जितेन्द्रियः।
सर्व्वं मदर्पणं कृत्वा जपेन्माञ्च दिवानिशम् ॥ १५
एकदा सूपकारश्च तमुवाच नृपेश्वरम्।
विप्राणां भोजनायैव गवां लक्षमुपस्थितम् ॥ १६
भुञ्जते ब्राह्मणाश्चाद्य रूक्षमन्नं वद प्रभो।

कुर्व्वन्तु भक्षणं ते वै सूपशाकादिना नृप ॥ १७
चतुर्योजनपर्य्यन्तमधिकारं नृपस्य च ।
यो राजा तद्धतगुणः स एव मण्डलेश्वरः ॥ १८
तद्दादशगुणो राजा राजेन्द्रः परिकीर्त्तितः ।
राजेन्द्राणां पञ्चलक्षं नित्यं केदारसंसदि ॥ १९
अमूल्यरत्नं माणिक्यं मुक्तां हीरां मणीश्वरम् ।
गजरत्नमश्वरत्नं केदाराय करं ददौ ॥ २०
कमला कलया जाता यज्ञकुण्डसमुद्भवा ।
वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता ॥ २१
कामुकी कामिनीश्रेष्ठा कन्या कमललोचना ।
कन्यास्मि ते महाराजेत्युवाच नृपतिञ्च सा ॥ २२
राजा सम्पूज्य तां भक्त्या तस्थौ पत्नीं समर्प्य च ।
सा विज्ञाय प्रसूं तातं कृत्वा च विनयं मुदा ।
ययौ पुण्यवनं रम्यं तपसे यमुनान्तिकम् ॥ २३
तत्तपस्यावनं यस्मात् तस्माद्वृन्दावनं स्मृतम् ॥ २४
तपसा वरयामास मां वरञ्च वरं वरम् ।
ब्रह्मा ददौ वरं तस्यै पश्चात् कृष्णं लभिष्यसि ॥ २५
सा चैकदा नदीतीरे वसन्ते सस्मिता सती ।
शयाना पुष्पशय्यायां रत्नाभरणभूषिता ॥ २६
ब्रह्मा परीक्षितुं ताञ्च साध्वीञ्च सुमनोहराम् ।
धर्म्मं प्रस्थापयामास सुवेशं सुमनोहरम् ॥ २७
ददर्श कन्या रहसि युवानं पुरुषं परम् ।
चन्दनोक्षितसर्व्वाङ्गं रत्नाभरणभूषितम् ॥ २८
सस्मितं कामुकं रम्यं रमणीनाञ्च वाञ्छितम् ।
यथा षोड़शवर्षीयं कुमारं कनकप्रभम् ॥ २९
कोटिकन्दर्पलीलाभं पीताम्बरधरं वरम् ।
शरत्पार्व्वणचन्द्रास्यं शरत्पद्मसुलोचनम् ॥ ३०
दृष्ट्वा तञ्च समुत्थाय वासयामास सन्निधौ ।
पूजां चकार भक्त्या च फलमूलं ददौ मुदा ।
सुवासितं जलं दत्त्वा प्रणनाम मुदान्विता ॥ ३१
पूजां गृहीत्वा मुदितः सादरं तामुवाच ह ।
विप्ररूपी च भगवान् प्रज्वलन् ब्रह्मतेजसा ।
कामुकीनाञ्च काम्यञ्च सतीनां दुष्करं (क) व्रज ॥ ३२

धर्म्म उवाच ।

भवती कस्य कन्या वा किं नाम ते मनोहरे ।
किं करोषि रहस्येव तन्मां कथितुमर्हसि ॥ ३३
कस्य हेतोस्तपस्या ते किं वा वाञ्छसि सुन्दरि ।
वरं वृणुष्व भद्रं ते यत् ते मनसि वाञ्छितम् ॥ ३४

वृन्दोवाच ।

विप्र केदारकन्याहं वृन्दा वृन्दावनस्थिता ।
तपः करोमि रहसि चिन्तयामि हरिं पतिम् ॥ ३५
यदि दातुं समर्थोऽसि देहि मे वाञ्छितं वरम् ।
असमर्थोऽसि गच्छ त्वं किं ते प्रश्नेन ब्राह्मण ॥ ३६

धर्म्म उवाच ।

निरीहमवितर्क्यञ्च परमात्मानमीश्वरम् ।
निर्गुणञ्च निराकारं भक्तानुग्रहविग्रहम् ॥ ३७
का क्षमा तं पतिं कर्त्तुं विना लक्ष्मीं सरस्वतीम् ।
चतुर्भुजस्य द्वे भार्य्ये हरेर्वैकुण्ठशायिनः ॥ ३८
गोलोके द्विभुजस्यापि श्रीवंशीवदनस्य च ।
किशोरगोपवेशस्य परिपूर्णतमस्य च ॥ ३९
तस्य भार्य्या स्वयं राधा महालक्ष्मीः परात्परा ।
ब्रह्मस्वरूपा परमा परमात्मानमीश्वरम् ॥ ४०
भजते सततं शान्तं सुरम्यं श्यामसुन्दरम् ।
कोटिकन्दर्पसौन्दर्य्यनिन्दितं सुकलेवरम् ॥ ४१
अमूल्यरत्नाभरणं सत्यञ्च नित्यविग्रहम् ।
पीताम्बरधरं रम्यं दातारं सर्व्वसम्पदाम् ॥ ४२
श्रीकृष्णश्च द्विधारूपो द्विभुजश्च चतुर्भुजः ।
चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम् ॥ ४३
यन्निमेषो भवेद्वृन्दे ब्रह्मणः पतनेन च ।
पञ्चविंशल्लक्षकेण युगेनेन्द्रस्य पातनम् ॥ ४४
चतुर्द्दशेन्द्रावच्छिन्न-कालेन ब्रह्मणो दिनम् ।
तावतीति निशा तस्य विधातुर्जगतामपि ॥ ४५
एवं त्रिंशद्दिने मासं द्विषट्के मासि वार्षिकम् ।
एवं शतायुस्तस्यैव निबोध बोधतत्परे ॥ ४६
यावज्जीवनपर्य्यन्तं सेवन्ते सनकादयः ।
कल्पानां कोटिकोटिञ्च तत्र साध्यश्च यो विभुः ॥ ४७
सहस्रवक्त्रः शेषश्च सेवते च जपेत् सदा ।
दिवानिशञ्च यं भक्त्या कल्पकोटिशतं शतम् ।
तत्र साध्यो हितकरो दुराराध्यः परात्परः ॥ ४८
ब्रह्मा ब्रह्मस्वरूपं तं भजेज्जन्मनि जन्मनि ।
वक्त्रैश्चतुर्भिः सततं स्तौति नित्यं सनातनम् ।
वेदानिर्व्वचनीयश्च वेदानां जनको विधिः ॥ ४९
विधाता फलदाता च दाता च सर्व्वसम्पदाम् ।

(क) वृन्द इति शेषः ।

तत्र साध्वी हि भगवान् दुराराध्यः परात्परः ॥ ५०
शिवदाता शिवाधारः परमानन्दविग्रहः।
ज्ञानानन्दस्वरूपश्च योगिनाञ्च गुरोर्गुरुः ॥ ५१
मृत्युञ्जयश्च भगवान् कालकालोऽन्तकान्तकः।
संहारकर्त्ता जगतां कलया रुद्ररूपतः ॥ ५२
स स्तौति पञ्चवक्त्रेण कोऽन्योऽन्यस्यापि का कथा।
तत्परश्च प्रियो नास्ति वृन्दे भगवतः शृणु ॥ ५३
सर्व्वशक्तिस्वरूपा सा दुर्गा दुर्गतिनाशिनी।
ब्रह्मस्वरूपा परमा मूलप्रकृतिरीश्वरी ॥ ५४
नारायणी विष्णुमाया वैष्णवी सा सनातनी।
यन्मायया जगद्भ्रान्तमनित्यं भ्रमते सदा।
सा स्तौति भक्त्या यं देवं वृन्देऽप्यङ्ग दिवानिशम्॥५५
स्तौति भक्त्या स्वशक्त्या च गजवक्त्रः षडाननः।
ध्यायते यं गणेशश्च सर्व्वादौ यस्य पूजनम् ॥ ५६
भगवान् सर्व्वदेवेशो ज्ञानिनाञ्च गुरोर्गुरुः।
सिद्धेन्द्रेषु च देवेन्द्रे योगीन्द्रे ज्ञानिनां गुरौ।
न गणेशात् परो विद्वान् गणेशश्च सुराधिपः ॥ ५७
सरस्वती च यं स्तोतुमशक्ता परमेश्वरी।
दिवानिशं पादपद्मं भक्त्या पद्मा निषेवते ॥ ५८
यत्कटाक्षाज्जगत् सर्व्वं परिपूर्णतमं शिवम्।
यद्भयाद्वाति वातोऽयं सूर्य्यस्तपति यद्भयात् ॥ ५९
वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति जन्तुषु।
पृथिवी सेवया यस्य सर्व्वाधारा वसुन्धरा ॥ ६०
समुद्रा निश्चलाः शैला यस्य भीताश्च सुन्दरि।
तीर्थसारा च सा गङ्गा पवित्रा मुक्तिदायिनी।
जगतां पावनी देवी यस्य पादाब्जसेवया ॥ ६१
पवित्रा तुलसी देवी स्मरणाद्यस्य सेवनात्।
नव ग्रहाश्च दिक्पाला भीता यस्य प्रतापतः ॥ ६२
ब्रह्माण्डेषु च सर्व्वेषु ब्रह्म-विष्णु-शिवात्मकाः।
अन्ये ये ये सुरेशाश्च शेषाद्या मुनयस्तथा ॥ ६३
केचित् कलानुरूपाश्चांशस्वरूपाश्च केचन।
केचित् कलांशाः कृष्णस्य केचिच्च परमात्मनः ॥ ६४
पतिमिच्छसि कल्याणि प्रकृतेः परमीश्वरम्।
गोलोके राधिकासाध्यो नान्येषाञ्च कदाचन ॥ ६५
मां भजस्व महाभागे नृपाणामीश्वरं पतिम्।
बलवन्तञ्च देवेभ्यो दैत्येभ्यश्च वरानने ॥ ६६
सुखानि यानि कल्याणि त्रिषु लोकेषु सन्ति वै।
भुङ्क्ष्व तान्येव सर्व्वाणि मत्प्रसादान्न संशयः ॥ ६७
सप्तसागरपारे च काञ्चनी रुचिरा रवे।
देवानां क्रीड़नार्थाय विधात्रा निर्म्मिता पुरा।
तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ६८
महेन्द्रस्य प्रियवनं पुष्पोद्यानसमन्वितम्।
तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ६९
गच्छ स्वर्णमयीं लङ्कां नानारत्नविभूषिताम्।
तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ७०
सुमेरुगह्वरं वापि क्षीरोदं वा मनोहरम्।
तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ७१
सत्यलोकं ब्रह्मलोकं रम्यं शश्वद्रहःस्थलम्।
तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ७२
मलये निलयं रम्यं रत्नेन्द्रसारनिर्म्मितम्।
सुगन्धयुक्तं सततं शुद्धचन्दनवायुना ॥ ७३
मालती यूथिका रम्या केतकीमालती तथा।
चारुचम्पकपुष्पाणां गन्धेन सुमनोहरम् ॥ ७४
पिकानां भ्रमराणाञ्च मधुरध्वनिसंयुतम्।
तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ७५
इन्द्रस्य वरुणस्यैव वायोरपि यमस्य च।
धनेश्वरस्य वह्नेश्च धर्म्मस्य शशिनस्तथा ॥ ७६
सुरम्यं लोकमेतेषां मध्ये देवि यथेच्छसि।
तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ७७
रत्नद्वीपं मणिद्वीपं रम्यं चन्द्रसरोवरम्।
तत्रैव गच्छ भद्रं ते रम रामे मया सह ॥ ७८

श्रीभगवानुवाच।

इत्येवमुक्त्वा सम्भोक्तुं गच्छन्तं तं छलेन च।
न वास्तवं परीक्षार्थं सतीत्वं बोधितुं व्रज ॥ ७९
उवाच सा नृपसुता कोपरक्तास्यलोचना।
हितं सत्यं वेदयुक्तं धर्म्मार्थञ्च यशस्करम् ॥ ८०

वृन्दोवाच।

यथेष्टं कुरु महाभाग श्रेष्ठो जातिषु ब्राह्मणः।
ब्राह्मणानां तपो मूलं सत्यं वेदो व्रतं धृतिः ॥ ८१
परस्त्रीसहसम्भोगः स्वभावसाध्यधर्म्मिणाम्।
अधर्म्मो नैव ते विप्र दुष्टोऽभद्राणि पश्यति।
ततः सपत्नान् जयति समूलस्तो विनश्यति ॥ ८२
पतिव्रतानां गमने बलात्कारेण निश्चितम्।
मातृगामी भवेत् सद्यो ब्रह्महत्याफलं लभेत् ॥ ८३

कुम्भीपाके पच्यते च यावच्चन्द्रदिवाकरौ।
प्रदग्धस्तप्ततैलेषु न मृतः सूक्ष्मदेहतः॥ ८४
ताडितो यमदूतैश्च लौहदण्डेन मूर्द्धनि।
क्षणं सुखं चिरं दुःखं सर्व्वनाशस्य कारणम्॥ ८५
अगम्यागमनं दुःखं धर्म्मिष्ठो नैव वाञ्छति।
क्षमस्व गच्छ भद्रं ते ब्राह्मण ज्ञानदुर्ब्बल॥ ८६
यथा दीपशिखां दृष्ट्वा कीटः पतति निश्चितम्।
मिष्टं दृष्ट्वा वडिशाग्रे लुब्धमीनो मृतो यथा॥ ८७
यथा विषार्त्तं भक्ष्यञ्च भुङ्क्ते लोभाद्बुभुक्षितः।
गृह्णाति दृष्ट्वा दुष्टश्च विषकुम्भं पयोमुखम्॥ ८८
तथा दृष्ट्वा परस्त्रीणां मुखपद्मं मनोहरम्।
विनाशबीजं मोहेन भ्रान्तो भवति लम्पटः॥ ८९
मुखञ्च रुचिरं स्त्रीणां श्रोणीयुग्मं स्तनं तथा।
कामाधारं नाशबीजमधर्म्मस्थलमेव च॥ ९०
मर्गं नरककुण्डञ्च लालामूत्रसमन्वितम्।
दुर्गन्धयुक्तं पापञ्च यमदण्डस्य कारणम्॥ ९१
यथा लिङ्गं विशत्येव पापयोनौ च योषिताम्।
तथा पुमान् विशत्येव रौरवे च युगे युगे॥ ९२
रहस्यञ्चापदं दृष्ट्वा मां त्वं धर्षितुमिच्छसि।
अत्रैव सर्व्वदेवाश्च लोकपालाश्च ब्राह्मण॥ ९३
जाज्वल्यमानो धर्म्मश्च साक्षी शास्ता च कर्म्मणाम्।
यमस्य दण्डकर्त्ता च स्थापितो हरिणा स्वयम्॥ ९४
स्वयं कृष्णश्च सर्व्वात्मा ज्ञानरूपो महेश्वरः।
दुर्गा बुद्धिर्मनो ब्रह्मा चेन्द्रियाणि सुरास्तथा।
सर्व्वप्राणिषु तिष्ठन्ति साक्षिणः कर्म्मणां द्विज॥ ९५
क्व गुप्तं क्व रहस्यं वा ब्राह्मण ज्ञानदुर्ब्बल।
क्षमस्व गच्छ भद्रं ते अवध्याश्च द्विजातयः॥ ९६
शक्ताहं भस्मसात् कर्त्तुं गच्छ वत्स यथासुखम्।
तपस्यासु मम गतमष्टोत्तरशतं युगम्॥ ९७
नास्ति गोत्रं मत्पितुश्च न माता न पिता मम।
सर्व्वान्तरात्मा भगवान् कृष्णो रक्षति मां द्विज॥ ९८
कृष्णेन स्थापितो धर्म्मो माञ्च रक्षति नित्यशः।
आदित्याश्च तथा चन्द्रः पवनश्च हुताशनः।
ब्रह्मा शम्भुर्भगवती दुर्गा रक्षति मां सदा॥ ९९
येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः।
मयूराश्चित्रिता येन स मे रक्षां करिष्यति॥ १००
अनाथबालवृद्धानां रक्षिताः सर्व्वदेवताः।
नारीबुद्ध्या न मां धर्ष सर्व्वत्र सर्व्वदेवताः॥ १०१
मां मातरं परित्यज्य गच्छ वत्स यथासुखम्॥ १०२

श्रीभगवानुवाच।

इत्येवमुक्त्वा सा देवी तस्थौ तत्र यथा धरा।
आगच्छन्तञ्च सम्भोत्तुं न यान्तं बोधनेन च।
शशापेति च सा कोपाद्ब्रह्मबन्धो क्षयी भव॥ १०३
क्षयी भव दुराचार हे पापिष्ठ क्षयी भव।
पुनः शप्तुं स्वयं सूर्य्यो वारयामास यत्नतः॥ १०४
एतस्मिन्नन्तरे तात तत्रैव जगदीश्वराः।
आजग्मुरतिसन्त्रस्ता ब्रह्म-विष्णु-शिवादयः॥ १०५
धर्म्मं दृष्ट्वा कलारूपं रुरुदुश्चित्रिदशेश्वराः।
कृत्वा क्रोडेऽतीव भयं कुत्वा भीतं यथा शिशुम्।
निश्चेष्टं मलिनं दग्धं सतीकोपाग्निना व्रज॥ १०६

विष्णुरुवाच।

क्षमस्व वन्दे मद्भक्ते जन्म-मृत्यु-जराहरे।
धर्म्मं जीवय मद्भक्तं रक्ष धर्म्मं पतिव्रते॥ १०७

ब्रह्मोवाच।

ध्वान्तपूर्णं जगत् सर्व्वं विना धर्म्माद्बभूव ह।
कम्पितौ चन्द्रसूर्य्यौ च शेषश्चापि वसुन्धरा॥ १०८

महादेव उवाच।

प्रनष्टञ्च जगत् सर्व्वं विना धर्म्मेण सुन्दरि।
धर्म्मं जीवय भद्रं ते स्वस्ति तेऽस्तु वरानने॥ १०९

सूर्य्य उवाच।

वरं वृणुष्व भद्रं ते यत् ते मनसि वाञ्छितम्।
धर्म्मं जीवय भद्रं ते रक्ष सृष्टिं पतिव्रते॥ ११०

अनन्त उवाच।

धर्म्मं करोषि तपसा कथं धर्म्मं विहंसि च।
धर्म्मं जीवय धर्म्मज्ञे सर्व्वधर्म्मो भवेत् तव॥ १११

चन्द्र उवाच।

द्विजरूपधरो धर्म्मस्त्वां परीक्षितुमागतः।
ब्रह्मणा प्रेरितश्चैव निर्द्दोषश्च विहिंसितः॥ ११२

महेन्द्र उवाच।

तपसोपार्ज्जितो धर्म्मो धर्म्मेण च फलं नृणाम्।
कथं फलञ्च तपसां यदि धर्म्मः क्षयं गतः॥ ११३

वरुण उवाच।

धर्म्मं जीवय धर्म्मिष्ठे धर्म्मं रक्ष सनातनम्।
निष्फलं कर्म्मिणां कर्म्म विना धर्म्मेण धार्म्मिके॥ ११४

पवन उवाच।
जगत् पूतं कुरु शुभे धर्म्मं जीवय साम्प्रतम्।
धर्म्मे प्रनष्टे तपसां तव धर्म्मो विनश्यति ॥ ११५
वह्निरुवाच।
स्वधर्म्मोपार्ज्जनं कर्त्तुमागतासि च भारतम्।
विधिं स्थं धर्म्ममत्वाला पुनर्जीवय सुन्दरि ॥ ११६
यम उवाच।
कर्म्मिणां वेद कर्म्माणि चाहं विश्वे वरानने।
धर्म्मानुसारात् फलदो धर्म्मं जीवय सत्वरम् ॥११७
देवानां वचनं श्रुत्वा समुत्थाय पतिव्रता।
नमस्कृत्य सुरेशांश्च तानुवाच तपस्विनी ॥ ११८
वृन्दोवाच।
अहं देवा न जानामि धर्म्मं ब्राह्मणरूपिणम्।
अतः च्यो मया कोपाच्छ्रां परीक्षितुमागतः ॥ ११९
जीवयामि ध्रुवं धर्म्मं युष्माकञ्च प्रसादतः।
इत्येवमुक्त्वा सा वृन्दा चेत्युवाच व्रजेश्वर ॥ १२०
तपः सत्यं यदि मम सत्यञ्च विष्णुपूजनम्।
तेन पुण्येन सद्योऽयं द्विजो भवतु विज्वरः ॥ १२१
यदि मेऽनशनं सत्यं व्रतं सत्यं तपः शुचिः।
तेन पुण्येन सत्येन द्विजो भवतु विज्वरः ॥ १२२
यदि नारायणः सत्यः सर्व्वात्मा नित्यविग्रहः।
ज्ञानात्मकः शिवः सत्यो द्विजो भवतु विज्वरः ॥१२३
ब्रह्मा सत्यश्च ते देवाः प्रकृतिः परमा यदि।
यज्ञः सत्यस्तपः सत्यं द्विजो भवतु विज्वरः ॥ १२४
इत्येवमुक्त्वा सा वृन्दा धर्म्मं क्रोड़े चकार सा।
तं दृष्ट्वा च कलारूपं रुरोद कृपया सती ॥ १२५
एतस्मिन्नन्तरे मूर्त्तिर्धर्म्मभार्य्या शुचाकुला।
निपत्य विष्णुपादे च शिरसा चेत्युवाच सा ॥ १२६
मूर्त्तिरुवाच।
हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु।
तूर्णं जीवय कान्तं मे जगन्नाथ कृपामय ॥ १२७
पतिहीना च या नारी पापिनी सा भवार्णवे।
यथास्यं चक्षुविरतं प्राणहीना यथा तनुः ॥ १२८
मितं ददाति हि पिता मितं भ्राता मितं सुतः।
मितं वसुमितं माता सर्व्वं दाता पतिः स्वयम् ॥१२९
इत्येवमुक्त्वा सा देवी तत्र तस्थौ रुरोद ह।
उवाच वृन्दां भगवान् सर्व्वात्मा प्रकृतेः परः १३०

श्रीभगवानुवाच।
त्वयायुस्तपसा लब्धं यावदायुश्च ब्रह्मणः।
तदेव देहि धर्म्माय गोलोकं गच्छ सुन्दरि ॥ १३१
त्वमनेन च तपसा पश्चान्माञ्च लभिष्यसि।
पश्चाद्गोकुलमागत्य वाराहे च वरानने।
वृषभानुसुता त्वञ्च राधाच्छाया भविष्यसि ॥१३२
मत्कलांशश्च रायाणस्त्वां विवाहाद्ग्रहीष्यति।
मां लभिष्यसि रासे च गोपीभी राधया सह ॥१३३
राधा श्रीदामशापेन वृषभानसुता यदा।
सा एव वास्तवी राधा त्वञ्च च्छायास्वरूपिणी॥१३४
विवाहकाले रायाणस्त्वाञ्च च्छायां ग्रहीष्यति।
त्वां दत्त्वा वास्तवी राधा सान्तर्द्धाना भविष्यति१३५
राधां कृत्वा च तां मूढ़ा विज्ञास्यन्ति च गोकुले१३६
स्वप्ने राधापदाम्भोजं न हि पश्यन्ति वल्लवाः।
स्वयं राधा मम क्रोड़े च्छाया रायाणकामिनी॥१३७
विष्णोश्च वचनं श्रुत्वा ददावायुश्च सुन्दरी।
उत्तस्थौ च पूर्णधर्म्मस्तप्तकाञ्चनसन्निभः ॥ १३८
पूर्व्वस्मात् सुन्दरः श्रीमान् प्रणनाम हरिं हरम्।
ब्रह्माणं जगतां नाथं प्रकृतिञ्च परात्पराम् ॥ १३९
वृन्दोवाच।
देवाः शृणुत मद्वाक्यं दुर्लङ्घ्यं सावधानतः।
न हि मिथ्या भवेद्वाक्यं मदीयञ्च निशामय ॥ १४०
क्षयो भवतु वाक्यञ्च मयोक्तं कोपभीतया।
वारत्रयं पुनर्वक्तुं वारयामास भास्करः ॥ १४१
सत्ये च परिपूर्णोऽयं यथा पूर्व्वं यथाऽधुना।
त्रिपादश्चापि त्रेतायां द्विपादो द्वापरे तथा ॥ १४२
एकपादश्च धर्म्मोऽयं कलेश्च प्रथमे हरे।
शेषे कलाषोड़शांशः पुनः सत्ये यथा पुरा ॥ १४३
त्रिर्निर्गतं मम मुखात् च्यस्तेन ततः क्रमात्।
पुनस्तौ च मनसि वारयामास भास्करः ॥ १४४
तेनैव हेतुनायञ्च कलिशेषे कलामयः।
तथा मम स्थितो दुर्गे कलिशेषे तथा ध्रुवम् ॥ १४५
एतस्मिन्नन्तरे नन्द ददृशुर्देवता रथम्।
गोलोकादागतं वेगादतीव सुन्दरं शुभम् ॥ १४६
अमूल्यरत्ननिर्म्माणं हीराहारपरिष्कृतम्।
मणि-माणिक्य-मुक्ताभिर्वस्त्रैश्च श्वेतचामरैः।
विभूषितं भूषणैश्च रुचिरै रत्नदर्पणैः ॥ १४७

नत्वा हरिं हरं ब्रह्मा ब्रह्माणं सर्व्वदेवताः ॥ १४८
समारुह्य रथं दृष्ट्वा गोलोकञ्च जगाम सा।
देवा जग्मुश्च स्वस्थानं किं भूयः श्रोतुमिच्छसि ॥१४९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे षड्शीतितमोऽध्यायः ॥ ८६ ॥

---

## सप्ताशीतितमोऽध्यायः।

नन्द उवाच।

त्वां ज्ञातुं न हि शक्ताश्च वेदा वेदविदः प्रभो।
सुरा ब्रह्मेश-शेषाद्या मुनिसिद्धादयस्तथा ॥ १
को भवानिति विज्ञातुं परं कौतूहलं मम।
तत् सर्व्वं स्वात्म्य-याथार्थ्यं निर्ज्जने कथय प्रभो ॥ २

नारायण उवाच।

एतस्मिन्नन्तरे तत्र कृष्णं द्रष्टुं मुनीश्वराः।
आजग्मुः सहसा वत्स ज्वलन्तो ब्रह्मतेजसा ॥ ३
पुलहश्च पुलस्त्यश्च क्रतुश्च भृगुरङ्गिराः।
प्रचेताश्च वशिष्ठश्च दुर्व्वासाः कण्व एव च ॥ ४
कात्यायनः पाणिनिश्च कणादो गोतमस्तथा।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥ ५
कपिलश्चासुरिश्चैव वोढ़ः पञ्चशिखस्तथा।
विश्वामित्रो वाल्मिकिश्च कश्यपश्च पराशरः ॥ ६
विभाण्डको मरीचिश्च शुक्रोऽत्रिश्च वृहस्पतिः।
गार्गश्चापि तथा वात्स्यो व्यासश्च जैमिनिस्तथा ॥ ७
मितवाग्ऋष्यशृङ्गश्च याज्ञवल्क्यः शुकस्तथा।
सौभरिः शुक्लजटिलो भरद्वाजः सुभद्रकः ॥ ८
मार्कण्डेयो लोमशश्च नकाख्यश्च विकङ्कणः।
अष्टावक्रः शतानन्दो वामदेवश्च भार्गवः ॥ ९
सम्वर्त्तश्चाप्युतथ्यश्च नरोऽहञ्चापि नारद।
जावालिः पर्शुरामश्चाप्यगस्त्यः पौल एव च ॥ १०
सुधामन्युर्गौरमुखोऽप्युपमन्युः श्रुतश्रवाः।
मैत्रेयश्च्यवनश्चैव कश्यः कर एव च ॥ ११
तान् दृष्ट्वा सहसोत्थाय नमस्कृत्य पुटाञ्जलिः।
सिंहासनेषु रम्येषु वासयामास सादरम् ॥ १२
पूजयामास विधिवत् कुशलप्रश्नपूर्व्वकम्।
परस्परञ्च सम्भाष्य मध्ये कृष्ण उवाच सः ॥ १३
एतस्मिन्नन्तरे कृष्णस्तेजोराशिं ददर्श सः।
ददृशुस्ते च मुनयोऽप्याकाशे च समुज्ज्वलम् ॥ १४
तेजसोऽभ्यन्तरे वत्स कुमारं कनकप्रभम्।
यथैव पञ्चवर्षीयं नग्नं बालकमीप्सितम् ॥ १५
आविर्ब्बभूव सहसा सभामध्ये च नारद।
उत्तिष्ठमानाः सहसा तं दृष्ट्वा मुनिपुङ्गवाः।
प्रणेमुर्मुनयः सर्व्वे शौरिश्च प्रणनाम तम् ॥ १६
स सर्व्वमाशिषं कृत्वा समुवास च संसदि।
उवाच तांश्च शौरिञ्च भगवन्तं सनातनम्।
सस्मितं स्निग्धनेत्रञ्च कृपायुक्तश्च सादरम् ॥ १७

सनत्कुमार उवाच।

भद्रं वो मुनयः शश्वत् तपसां फलमीप्सितम्।
कृष्णस्य कुशलप्रश्नं शिववीजस्य निष्फलम् ॥ १८
साम्प्रतं कुशलं वस्य दर्शनं परमात्मनः।
भक्तानुरोधाद्देहस्य परस्य प्रकृतेरपि ॥ १९
निर्गुणस्य निरीहस्य सर्व्ववीजस्य तेजसः।
भारावतारणायैव चाविर्भूतस्य साम्प्रतम् ॥ २०

श्रीकृष्ण उवाच।

शरीरधारिणश्चापि कुशलप्रश्नमीप्सितम्।
तत् कथं कुशलप्रश्नं मयि विप्र न विद्यते ॥ २१

सनत्कुमार उवाच।

शरीरे प्राकृते नाथ सन्ततञ्च शुभाशुभम्।
नित्यदेहे क्षेमवीजे शिवप्रश्नमनर्थकम् ॥ २२

श्रीकृष्ण उवाच।

यो यो विग्रहधारी च स च प्राकृतिकः स्मृतः।
देही न विद्यते विप्र तां नित्यां प्रकृतिं विना ॥ २३

सनत्कुमार उवाच।

रक्तविन्दूद्भवा देहास्ते च प्राकृतिकाः स्मृताः।
कथं प्रकृतिनाथस्य वीजस्य प्राकृतं वपुः ॥ २४
सर्व्ववीजस्य सर्व्वादिर्भवांश्च भगवान् स्वयम्।
सर्व्वेशामवताराणां प्रधानं वीजमव्ययम् ॥ २५
कृत्वा वदन्ति देवाश्च नित्यं नित्यं सनातनम्।
ज्योतिःस्वरूपं परमं परमात्मानमीश्वरम् ॥ २६
मायया सगुणञ्चैव भाविशं निर्गुणं परम्।
प्रवदन्ति च वेदाङ्गास्तथा वेदविदः प्रभो ॥ २७

श्रीकृष्ण उवाच।

साम्प्रतं वासुदेवोऽहं रक्तवीर्य्याश्रितं वपुः।
कथं न प्राकृतो विप्र शिवप्रश्नमभीप्सितम् ॥ २८

सनत्कुमार उवाच।

वासुः सर्व्वनिवासश्च विश्वानि यस्य लोमसु।
तस्य देवः परं ब्रह्म वासुदेव इतीरितः॥ २९
वासुदेवेति तन्नाम वेदेषु च चतुर्षु च।
पुराणेष्वितिहासेषु वार्त्तादिषु च दृश्यते॥ ३०
रत्नावीर्य्याश्रितो देवः क्व ते,वेदैर्निरूपितः।
साक्षिणो मुनयश्चात्र धर्म्मः सर्व्वत्र एव च।
साक्षिणो मम वेदाश्च रविचन्द्रौ च साम्प्रतम्॥ ३१

भृगुरुवाच।

सत्यं वदसि विप्रेन्द्र त्वमेव वैष्णवाग्रणीः।
स्वागतं कुशलं स्वस्ति किं निमित्तमिहागतः॥ ३२

सनत्कुमार उवाच।

श्रूयतां मुनयः सर्व्वे श्रूयतां कृष्ण साम्प्रतम्।
अहो येन निमित्तेन चातिशीघ्रमिहागतः॥ ३३

श्रीकृष्ण उवाच।

भगवन् सर्व्वधर्म्मज्ञ किं निमित्तमिहागतः।
सर्व्वं जानामि सर्व्वज्ञस्त्वमेव विदुषां वरः॥ ३४

सनत्कुमार उवाच।

धन्योऽसि भगवंस्त्वञ्च मान्योऽसि जगतामपि।
सर्व्वेश्वरेश्वरोऽसि त्वं त्वत्परो नास्ति विश्वतः॥ ३५

श्रीकृष्ण उवाच।

यज्ञानाञ्च व्रतानाञ्च तपस्यानां द्विजेश्वर।
सततं फलदाताहं दक्षिणाभिः सहेति च॥ ३६
इति श्रुत्वा कुमारश्च जवेन प्रययौ च ते।
मत्वाश्चर्य्यञ्च वचनं धारयामासुरीप्सितम्॥ ३७

ऋषय ऊचुः।

हे सिद्धेन्द्र महाभाग कुमार करुणामय।
का सङ्केतकथा प्रोक्ता भगवन् कृष्णसन्निधौ॥ ३८
किं कुत्र दृष्टमाश्चर्य्यं श्रुतं किं वापि कुत्रचित्।
अतीव कृत्वा विस्तीर्णमस्माकं वक्तुमर्हसि॥ ३९
एतस्मिन्नन्तरे ब्रह्मा पार्व्वत्या सह शङ्करः।
अनन्तश्चापि धर्म्मश्च श्रीसूर्य्यश्च निशाकरः।
आदित्या वसवो रुद्रा दिक्पालाद्याश्च देवताः॥ ४०
श्रीकृष्णः सहसोत्थाय सम्भाष्य च पृथक् पृथक्।
मधुपर्क्कादिकं दत्त्वा पूजयामास भक्तितः॥ ४१
प्रणेमुरृषयः सर्व्वे शेषं शम्भुं विधिं शिवाम्।
परस्परञ्च सम्भाषा बभूव द्विज-देवयोः॥ ४२

सनत्कुमार उवाच।

अहं गतश्च गोलोके न दृष्टो राधिकापतिः।
ततो गतश्च वैकुण्ठं तत्र नास्ति चतुर्भुजः॥ ४३
ततो गतश्च क्षीरोदं तत्र नास्ति हरिः स्वयम्।
परिश्रान्तो विषण्णश्च स्नातः क्षीरोदधेस्तटे॥ ४४
विस्तीर्णबालुकामध्ये कच्छपः शतयोजनः।
भीतश्च कम्पितस्तत्र दृष्टो दुःखी च शुष्कितः॥ ४५
निःसारितो राघवेण मीनेन च महात्मना।
धन्योऽसीति मयोक्तश्च नाहं धन्य उवाच सः॥ ४६
क्षीरोदसागरो धन्यो जन्तवो यत्र मद्विधाः।
मत्तो महत्तरायापि ह्यसंख्याश्च महामुने॥ ४७
भवान् धन्योऽसि क्षीरोद तेनोक्तं नाहमेव च।
धन्या वसुन्धरा देवी यत्रैव सप्तसागराः॥ ४८
धन्यासि वसुधेत्युक्ता नाहमेवेत्युवाच सा।
धन्योऽनन्तो ममाधारः कृष्णांशो नागराड्विभुः॥ ४९
सहस्रमूर्द्ध्नां मध्येऽहं मूर्द्ध्नि शूर्पे च सर्षपः॥ ५०
धन्योऽसि शेष इत्युक्तो धन्यो नाहमुवाच सः।
धन्यो हि देवपवनो यः सदा धरते च माम्॥ ५१
धन्योऽसीत्युक्तः पवनो धन्यो नाहमुवाच सः।
धन्यश्च भगवान् ब्रह्मा विधाता जगतामपि॥ ५२
धन्योऽसि तत्र धाता च धन्यो नाहमुवाच सः।
धन्यो महेश्वरो देवो योगीन्द्राणां गुरोर्गुरुः॥ ५३
सर्व्वाराध्यः सर्व्वपूज्यो धर्म्मरूपः सनातनः।
कालकालश्च संहर्त्ता स्वयं मृत्युञ्जयः प्रभुः॥ ५४
धन्योऽसीत्युक्तः शम्भुश्च धन्यो नाहमुवाच सः।
सर्व्वादौ पूजनं यस्य ज्ञानिनाञ्च गुरोर्गुरुः॥ ५५
धन्यो गणेश्वरो देवो देवानां प्रवरो वरः।
सिद्धेन्द्रेषु मुनीन्द्रेषु सुरेन्द्रेषु श्रुतौ श्रुतम्॥ ५६
योगीन्द्रेषु च प्राज्ञेषु न गणेशात् परः पुमान्।
निम्नगासु यथा गङ्गा तीर्थेषु पुष्करो यथा।
पुरीषु च यथा काशी तथा देवे गणेश्वरः॥ ५७
देवेषु धन्यो मान्योऽसीत्युक्तो गणपतिर्मया।
नाहं धन्यो मुनिश्रेष्ठ स्मितश्चेत्युवाच ह॥ ५८
धन्या वेदाश्च चत्वारः कर्म्मैव यद्व्यवस्थया।
वेदप्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विपर्य्ययः॥ ५९
वेदो नारायणः साक्षादयं पूज्या व्यवस्थया।
तस्मात् सर्व्वाणि शास्त्राणि पुराणानि च सन्ति वै॥ ६०

यस्माद्धन्याश्च ते वेदा गच्छ तत्र मुनीश्वर।
यूयं धन्याश्च मान्याश्चेत्युक्ता वेदा मया ततः॥ ६१
ऊचुस्ते न वयं धन्या यज्ञस्तद्वश्च साम्प्रतम्।
वयं व्यवस्थाकर्त्तारो यज्ञोऽयं फलदः स्वयम्॥ ६२
तस्माद्धन्यः स एवापि गच्छ गच्छ महामुने।
धन्योऽसि यज्ञसङ्घोऽसीत्युक्तस्तत्र मया विभो॥ ६३
ऊचुस्ते न वयं धन्या धन्यं कर्म्म शुभं मुने॥ ६४
शुभकर्म्मासि धन्यं त्वं नाहं धन्यमुवाच तत्।
कर्म्मणां फलदो धाता कर्म्महेतुश्च साम्प्रतम्॥ ६५
धातुर्विधाता भगवान् सर्व्वादिः सर्व्वकारकः।
श्रीकृष्णः परमात्मा च धन्यो मान्यश्च निश्चितम्॥६६
धर्म्मालयं ततो गत्वा न दृष्ट्वा जगदीश्वरम्।
मथुरामागतो द्रष्टुं परिपूर्णतमं प्रभुम्॥ ६७
यज्ञानां तपसाञ्चैव व्रतानां शुभकर्म्मणाम्।
ईश्वरं फलदातारं परमात्मानमेव च॥ ६८
कारणं कारणानाञ्च ब्रह्मादीनां पुरःसरम्।
धन्योऽसीति मयोक्तश्च दक्षिणाभिः सहेति च॥६९
उक्तो भगवताप्यत्र कथितं सर्व्वकारणम्।
दक्षिणाभिश्च फलदो हतो यज्ञस्त्वदक्षिणः॥ ७०
दक्षिणा विप्रमुद्दिश्य तत्कालं तु न दीयते।
एकरात्रे व्यतीते तु तद्दानं द्विगुणं भवेत्॥ ७१
मासे शतगुणं प्रोक्तं द्विमासे तु सहस्रकम्।
संवत्सरव्यतीते तु स दाता नरकं व्रजेत्॥ ७२
वर्षाणाञ्च सहस्रञ्च मूत्रकुण्डे निपत्य च।
ततश्चाण्डालतां याति व्याधियुक्तश्च पातकी॥ ७३
दाता न दीयते दानं ग्रहीता चेन्न याचते।
तावुभौ नरकं प्राप्तौ वर्षाणाञ्च सहस्रकम्॥ ७४
यजमानश्च चाण्डालो ब्राह्मणस्तत्पुरोहितः।
व्याधियुक्तौ तावुभौ च पापिनौ कर्म्मणः फलात्॥७५
सर्व्वे देवाश्च मुनयो जहसुर्विस्मयं ययुः।
विस्मयञ्च ययौ नन्दस्तत्याज पुत्त्रभावकम्॥ ७६
रुरोद च सभामध्ये लज्जाहीनः शुचाकुलः।
त्यज मोहमितीत्युक्त्वा बोधयामास पार्व्वती॥ ७७

नन्द उवाच।

अमूल्यं रत्नमाणिक्यं यथा कुवणिजां गृहे।
स्थितं तेन च देवेश तथाहं वञ्चितः प्रभो॥ ७८
ममापराधं भगवन् क्षमस्व प्रकृतेः पर।
पुनर्न यास्यामि गृहं गोकुलं यमुनातटम्॥ ७९
वृन्दावनं तथा रासं क्रीडावासं गदाग्रज।
वत्सवृन्दञ्च यशोदाया गोपिकान्तिकमेव च॥ ८०
किं ब्रवीमि यशोदाञ्च श्रेयसीं राधिकामपि।
प्रेमपात्रञ्च बालौघं वद भोः कथयामि किम्॥ ८१
इत्युक्त्वा च सभामध्ये मूर्च्छां सम्प्राप नारद।
क्रोडे कृत्वा जगन्नाथो बोधयामास तत्क्षणम्॥ ८२

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे
नारायण-नारदसंवादे भगवन्नन्दसंवादे
सप्ताशीतितमोऽध्यायः॥८७॥

---

## अष्टाशीतितमोऽध्यायः।

श्रीकृष्ण उवाच।

चेतनं कुरु हे तात हे तात चेतनं कुरु।
जलबुद्बुदवत् सर्व्वं संसारं सचराचरम्॥ १
त्यज मोहं महाभाग मायां स्तौहि परात्पराम्।
ब्रह्मस्वरूपां परमां सर्व्वमोहनिकृन्तनीम्।
मुक्तिप्रदां महाभागां विष्णुमायां सनातनीम्॥ २
त्रिपुरस्य वधे घोरे महायुद्धे भयाकुले।
येन स्तोत्रेण शम्भुश्च तस्या दैत्यं जघान सः॥ ३
स्तोत्रराजं प्रदास्यामि सर्व्वमोहनिकृन्तनम्।
सर्व्ववाञ्छाप्रदं नन्द श्रूयतामत्र संसदि॥ ४

नन्द उवाच।

सर्व्वविघ्नविनाशाय दुःखप्रशमनाय च।
विभूतये च यशसे नृणां वाञ्छितसिद्धये॥ ५
स्तोत्रमेकं महादेव्या जगन्मातुर्जगत्प्रभो।
परं दुर्गतिनाशिन्या गोपनीयं सुदुर्लभम्॥ ६
देहि मह्यं विनीताय भक्ताय भक्तवत्सल।
वेदानां जनकस्त्वञ्च निर्गुणश्च परात्परः॥ ७

श्रीभगवानुवाच।

शृणु वक्ष्यामि वैश्येन्द्र स्तोत्रं यत् परमाद्भुतम्।
सर्व्वविघ्नविनाशार्थं मोहपाशनिकृन्तनम्॥ ८
रथे शस्त्रं परित्यज्य (क) शङ्करेण पुरा कृतम्।
नारायणोपदेशेन प्रेरितेन च ब्रह्मणा॥ ९
शत्रुग्रस्तं शिवं दृष्ट्वा स ब्रह्माणमुवाच ह।

(क) रथस्थेन विभुना इति च पाठः।

उवाच शङ्करं ब्रह्मा रणस्थं पतितं रथे ॥ १०
स्मर शङ्कर शान्त्यर्थं दुर्गां दुर्गतिनाशिनीम्।
मूलप्रकृतिमाद्यां तां स्तुहि ब्रह्मस्वरूपिणीम् ॥ ११
हरिणा प्रेरितोऽहञ्च त्वां वदामि सुरेश्वर।
विना शक्तिसहायेन को वा कं जेतुमीश्वरः ॥ १२
ब्रह्मणश्च वचः श्रुत्वा दुर्गां सस्मार शङ्करः।
प्राञ्जलिः प्रणतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ १३
स्नातः पादौ च प्रक्षाल्य धृत्वा धौते च वाससी।
आचान्तः कुशहस्तश्च शुचिर्विष्णुञ्च संस्मरन् ॥ १४

महादेव उवाच।

रक्ष रक्ष महादेवि दुर्गे दुर्गतिनाशिनि।
मां भक्तमनुरक्तञ्च शत्रुग्रस्तं कृपामयि ॥१५
विष्णुमाये महाभागे नारायणि सनातनि।
ब्रह्मस्वरूपे परमे नित्यानन्दस्वरूपिणि ॥ १६
त्वञ्च ब्रह्मादिदेवानामम्बिका जगदम्बिके।
त्वं साकारा च गुणतो निराकारा च निर्गुणात् ॥१७
मायया पुरुषस्त्वञ्च मायया प्रकृतिः स्वयम्।
तयोः परं ब्रह्मरूपं त्वं बिभर्षि सनातनि ॥ १८
वेदानां जननी त्वञ्च सावित्री च परात्परा ॥ १९
वैकुण्ठे च महालक्ष्मीः सर्व्वसम्पत्स्वरूपिणी।
मर्त्त्यलक्ष्मीश्च क्षीरोदे कामिनी शेषशायिनः ॥ २०
स्वर्गे च स्वर्गलक्ष्मीस्त्वं राजलक्ष्मीश्च भूतले।
नागादिलक्ष्मीः पाताले गृहेषु गृहदेवता ॥ २१
सर्व्वसस्य स्वरूपा त्वं सर्व्वैश्वर्य्यविधायिनी।
वागधिष्ठातृदेवी त्वं ब्रह्मणश्च सरस्वती ॥ २२
प्राणानामधिदेवी त्वं कृष्णस्य परमात्मनः।
गोलोके च स्वयं राधा श्रीकृष्णस्यैव वक्षसि ॥ २३
गोलोकाधिष्ठातृदेवी वृन्दा वृन्दावने वने।
श्रीरासमण्डले रम्या वृन्दावनविनोदिनी ॥ २४
शतशृङ्गाधिदेवी त्वं नाम्ना चित्रावलीति च।
दक्षकन्या कुत्र कल्पे कुत्र कल्पे च शैलजा ॥ २५
देवमाताऽदितिस्त्वञ्च सर्व्वाधारा वसुन्धरा।
त्वमेव गङ्गा तुलसी त्वञ्च स्वाहा स्वधा सती ॥ २६
त्वमेवांशांशकलया सर्व्वदेवादियोषितः।
स्त्रीरूपा चापि पुरुषो देवि त्वञ्च नपुंसकम् ॥ २७
वृक्षाणां वीजरूपा त्वं सृष्टेश्चाङ्कुररूपिणी।
वह्नौ च दाहिका शक्तिर्जले शैत्यस्वरूपिणी ॥ २८
सूर्य्ये तेजःस्वरूपा च प्रभारूपा च सन्ततम्।
शोभास्वरूपा चन्द्रे च पद्मसङ्घे च निश्चितम् ॥ २९
सृष्टौ सृष्टिस्वरूपा च पालने परिपालिका।
महामारी च संहारे जले च जलरूपिणी ॥ ३०
सर्व्वशक्तिस्वरूपा त्वं सर्व्वसम्पत्प्रदायिनी।
वेदैरनिर्व्वचनीया त्वं न त्वां जानाति कश्चन ॥ ३१
सहस्रवक्त्रस्त्वां स्तोतुं न च शक्तः सुरेश्वरि।
वेदा न शक्ताः को विद्वान् न च शक्ता सरस्वती ॥
स्वयं विधाता शक्तश्च न च विष्णुः सनातनः ॥ ३२
किं स्तौमि पञ्चवक्त्रेण रणत्रस्तो महेश्वरि।
कृपां कुरु महामाये मम शत्रुक्षयं कुरु ॥ ३३
इत्युक्त्वा च सकरुणं रथस्थे पतिते रथे।
आविर्ब्बभूव सा दुर्गा सूर्य्यकोटिसमप्रभा ॥ ३४
नारायणेन कृपया प्रेरिता परमात्मना।
शिवस्य पुरतः शीघ्रं शिवाय च जयाय च ॥ ३५
इत्युक्त्वा च महादेवी माया शक्त्याऽसुरं वध।
वरं वृणुष्व भद्रं ते यत् ते मनसि वाञ्छितम्।
भवान् वरः सुराणाञ्च जयं तुभ्यं ददाम्यहम् ॥ ३६

महादेव उवाच।

हयो भवतु देवेन्द्र इति मे वरमीश्वरि।
देहीति वाञ्छितं दुर्गे परमाद्ये सनातनि ॥ ३७

भगवत्युवाच।

हरिं स्मर महाभाग जय दैत्यं जगद्गुरो।
स्वयं विधाता भगवान् स एव(क)ज्योतिरीश्वरः॥३८
एतस्मिन्नन्तरे विष्णुर्वृषरूपो बभूव सः।
दधार कलया शूली शूलपाणे रथं विभुः ॥ ३९
ऊर्द्ध्वचक्रमधोऽशञ्च प्रकृतञ्च चकार सः।
शिवः शस्त्रं गृहीत्वा च ध्यात्वा विष्णुं सुरेश्वरीम्॥४०
जघान त्रिपुरं शीघ्रं स पपात महीतले ॥ ४१
तुष्टुवुः शङ्करं देवाश्चक्रुश्च पुष्पवर्षणम्।
दुर्गा तस्मै ददौ शूलं पिनाकं विष्णुरेव च ॥ ४२
ब्रह्मा शुभाशिषश्चैव मुनयश्चापि हर्षिताः।
ननृतुर्देवताः सर्व्वा जगुर्गन्धर्व्वकिन्नराः ॥ ४३
एतत् ते कथितं तात स्तवराजमनुत्तमम्।
विघ्ननिघ्नकरं शीघ्रं शत्रुसंहारकारणम् ॥ ४४
परमैश्वर्य्यजनकं सुखदं शुभदं परम्।

(क) त्वमेव इति क्वचित्।

निर्व्वाणमोक्षदञ्चैव हरिभक्तिप्रदं ध्रुवम्॥ ४५
गोलोकवासदञ्चैव हरिदास्यप्रदं तथा।
लोभ-मोह-काम-क्रोध-कर्म्ममूलनिकृन्तनम्॥ ४६
बल-बुद्धिकरञ्चैव जन्म-मृत्युविनाशनम्।
धन-पुत्त्र-प्रिया-भूमि-सर्व्वसम्पत्प्रदं नृणाम्॥ ४७
शोक-दुःखहरञ्चैव सर्व्वसिद्धिप्रदं वरम्।
स्तोत्त्रराजप्रपठनाद्बन्ध्या प्रसूयते॥ ४८
बन्धनान्मुच्यते दुःखी भयान्मुच्येत निश्चितम्।
रोगाद्विमुच्यते रोगी दरिद्रश्च धनी भवेत्।
दावाग्निमध्येन मृतो मग्नः पोते महार्णवे॥ ४९
दस्युग्रस्तो रिपुग्रस्तो हिंस्रजन्तुसमन्वितः।
स्तोत्त्रेणानेन वैश्येन्द्र कल्याणं लभते नरः॥ ५०
तैजसानां यथा रत्नमाश्रमाणां द्विजो यथा।
नदीनाञ्च यथा गङ्गा मन्त्राणां प्रणवो यथा॥ ५१
तुलसी सर्व्वपत्राणां धराणाञ्च वसुन्धरा।
पुष्पाणां पारिजातञ्च काष्ठानां चन्दनं यथा॥ ५२
विष्णुपूजा च तपसां व्रतेष्वेकादशी यथा।
ज्ञानिनाञ्च यथा शम्भुः सिद्धानाञ्च गणेश्वरः॥ ५३
देवानाञ्च यथा विष्णुर्वेदाः शास्त्रेषु तत्त्वतः।
देवीनाञ्च यथा दुर्गा शान्तानां कमला यथा॥ ५४
सरस्वती च विदुषां राधिका सुन्दरीषु च।
तथा स्तोत्त्रेष्विदं स्तोत्रं स्तोत्रं नातः परं व्रज॥ ५५
पुरा दत्तं ब्रह्मणे च पुष्करे सूर्य्यपर्व्वणि॥ ५६
दैत्यग्रस्ताय भीताय सर्व्वदुर्गहरं परम्।
शिवाय शत्रुग्रस्ताय ददौ ब्रह्मा शराश्रया॥ ५७
शिवश्च सनकादिभ्यः पुरा दुर्व्वाससे ददौ।
सनत्कुमारो भगवान् कृपया गौतमाय च॥ ५८
पुलहाय पुलस्त्याय ददौ चाङ्गिरसे मुदा।
तथा चन्द्राय सूर्य्याय सूर्य्यश्चापि यमाय च।
यमश्च चित्रगुप्ताय कृपया च पुरा ददौ॥ ५९
नित्यं पठिष्यसि स्तोत्रं गोलोकगमनाय वै॥ ६०
साक्षात् स्तुतिं कुरु विभो तामेव पार्व्वतीमिह।
यस्मै कस्मै न दातव्यं पापिने गोपनं कुरु॥ ६१
नारायणस्य भक्ताय शान्ताय विदुषे तथा।
सर्व्वज्ञाय च विप्राय प्रदातव्यं प्रयत्नतः॥ ६२
विप्राय वृषवाहाय वृषलीपतये तथा।
शूद्राणां सूपकाराय शूद्रश्राद्धान्नभोजिने।
कन्याविक्रयिणे चैव ब्राह्मणाय विशेषतः॥ ६३
सर्व्वसिद्धिञ्च लभते सिद्धस्तोत्रो भवेद्बुधः।
शतलक्षजपेनैव सिद्धस्तोत्रो भवेन्नरः॥ ६४
अग्निस्तम्भं जलस्तम्भं भूस्तम्भं मनसस्तथा।
अश्वमेधसहस्राच्च पृथिव्याश्च प्रदक्षिणात्।
स्नानाच्च सर्व्वतीर्थानां स्तोत्रमेतच्च पुण्यदम्॥ ६५
दत्तं तुभ्यं मया तात मम प्राणसमं व्रज।
स्तवनं कुरु पार्व्वत्याश्चेदानीं मम संसदि॥ ६६
श्रीकृष्णस्य वचः श्रुत्वा नन्दस्तुष्टाव पार्व्वतीम्।
स्तोत्त्रेणानेन विप्रेन्द्र सर्व्वसम्पत्प्रदायिनीम्॥ ६७
वरं तस्मै ददौ दुर्गा गोलोकवासमीप्सितम्।
दुर्लभं परमं ज्ञानं वेदे यन्न श्रुतं मुने॥ ६८
राजेन्द्रत्वं गोकुलेषु विष्णुभक्तिं सुदुर्लभाम्।
तद्दास्यञ्चापि परतो महत्त्वं सिद्धमेव च॥ ६९
वरं दत्त्वा ययौ दुर्गा सम्भाष्य शम्भुना सह।
जग्मुर्देवाश्च मुनयः स्तुत्वा च नन्दनन्दनम्॥ ७०
उवाच नन्दं श्रीकृष्णो व्रज नन्द व्रजान्वितः।
प्रहृष्टस्त्यक्तमोहश्च बोधेन दुर्लभेन च॥ ७१

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे भगवन्नन्दसंवादेऽष्टाशीतितमोऽध्यायः॥८८॥

---

## एकोननवतितमोऽध्यायः।

श्रीकृष्ण उवाच।

गच्छ गच्छ गृहं नन्द व्रजराज व्रजं व्रज।
सर्व्वतत्त्वं त्वया ज्ञातं दृष्टाश्च मुनयः सुराः॥ १
श्रुतञ्च धर्म्मोपाख्यानमाख्यातञ्च सुदुर्लभम्।
दुर्गायाः स्तोत्त्रराजञ्च जन्मपाशनिकृन्तनम्॥ २
स्थितं यत् ते निवासे च हर्षेण च सुखेन च।
यत् कृतं बाल्यभावेन चापराधञ्च तत् क्षम॥ ३
यत् सुखं न कृतं तात पित्रोश्च नृपमन्दिरे।
कृतं सुखं परञ्चैव स्वर्गादपि सुदुर्लभम्॥ ४
मदीयं प्रियवाक्यञ्च प्रकृतं विनयं नय।
परिहारं बहुतरं यशोदां गोपिकागणम्॥ ५
बालकानां समूहञ्च राधिकाञ्च विशेषतः।
एकत्र च स्थितं तेषु बन्धुवर्गेषु कर्म्मणा॥ ६

इहैवापि सुखं भुक्त्वा गच्छ गोलोकमन्ततः।
सार्द्धं यशोदया तात रोहिण्या गोपिकागणैः॥ ७
गोपानां बालकैः सार्द्धं वृषभानेन गोपकैः।
राधामात्रा कलावत्या राधया सह यास्यसि॥ ८
रथानां शतलक्षञ्च गोलोकादागतं पितः।
अमूल्यरत्ननिर्म्माणं हीराहारपरिष्कृतम्॥ ९
मणि-माणिक्य-मुक्तानां मालाजालविभूषितम्।
वह्निशुद्धांशुकै रम्यैराच्छन्नं पीतवर्णकैः॥ १०
पार्षदप्रवरै रम्यैर्वेष्टितं श्वेतचामरैः।
षड्लक्षणै रम्यैर्गोपिकाभिश्च गोपकैः॥ ११
वेष्टितञ्च तदाहञ्च कौतुकाद्‌यास्यसि ध्रुवम्।
त्यक्त्वा च पार्थिवं देहं दिव्यं देहं विधाय च॥ १२
अयोनिसम्भवा मेना राधामाता कलावती।
आसत्येव हि तेनैव नित्यदेहेन निश्चितम्॥ १३
पितॄणां मानसी कन्या धन्या मेना कलावती।
धन्या च सीतामाता च दुर्गामाता च मेनका॥ १४
अयोनिसम्भवा दुर्गा तारा सीता च सुन्दरी।
अयोनिसम्भवास्ताश्च धन्या मेना कलावती॥ १५
इत्येवं कथितं तात गोपनीयं सुदुर्लभम्।
वरं प्रदत्तं तुभ्यञ्च मया च दुर्गया तथा॥ १६
श्रीकृष्णस्य वचः श्रुत्वा प्रत्युवाच व्रजेश्वरः।
पुनरेव जगन्नाथं तद्भक्तो भक्तवत्सलम्॥ १७

नन्द उवाच।

युगानाञ्च चतुर्णाञ्च यं यं धर्म्मं सनातनम्।
क्रमेण कृष्ण विस्तीर्णं कृत्वा मां कथय प्रभो॥ १८
कलिशेषे भवेद्‌यद्‌यद्‌गुणदोषं कलेस्तथा।
का गतिर्वा पृथिव्याश्च धर्म्मस्य प्राणिनां तथा॥ १९
नन्दस्य वचनं श्रुत्वा कृष्णः कमललोचनः।
कथां कथितुमारेभे विचित्रां मधुरान्विताम्॥ २०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे एकोननवतितमोऽध्यायः॥ ८९॥

---

## नवतितमोऽध्यायः।

श्रीभगवानुवाच।

शृणु नन्द प्रवक्ष्यामि सानन्दमानसं तथा।
कथां सुरम्यां मधुरां पुराणेषु परिष्कृताम्॥ १
परिपूर्णतमो धर्म्मो धार्म्मिकाश्च कृते युगे।
परिपूर्णतमं सत्यं परिपूर्णतमा दया॥ २
अतीव प्रचरद्रूपा वेदाश्चत्वार एव च।
वेदाङ्गाश्चापि विविधाश्चेतिहासाश्च संहिताः॥ ३
पुराणानि सुरम्याणि पञ्चरात्राणि पञ्च च।
रुचिराणि सुभद्राणि धर्म्मतत्त्वानि यानि च॥ ४
विप्रा वेदविदः सर्व्वे पुण्यवन्तस्तपस्विनः।
नारायणं ते ध्यायन्ते तन्मन्त्रञ्च जपन्ति च॥ ५
ब्राह्मणाः क्षत्त्रिया वैश्याश्चतुर्व्वर्णाश्च वैष्णवाः।
शूद्रा ब्राह्मणभक्ताश्च सत्यधर्म्मपरायणाः॥ ६
राजानो धार्म्मिकाश्चैव प्रजापालनतत्पराः।
गृह्णन्त्येव प्रजानाञ्च षोड़शांशं करं नृपः॥ ७
करशून्याश्च विप्राश्च पूज्याः स्वच्छन्दगामिनः।
सन्ततं सर्व्वशस्याढ्या रत्नाधारा वसुन्धरा॥ ८
गुरुभक्ताश्च शिष्याश्च पितृरक्ताः सुतास्तथा।
योषितः पतिभक्ताश्च पतिव्रतपरायणाः॥ ९
ऋतौ सम्भोगिनः सर्व्वे न स्त्रीलुब्धा न लम्पटाः।
न भयं दस्युचौर्य्याणां न तत्र पारदारिकाः॥ १०
तरवः पूर्णफलिनः पूर्णक्षीराश्च धेनवः।
बलवन्तो जनाः सर्व्वे दीर्घाः सौन्दर्य्यसंयुताः॥ ११
लक्षवर्षायुषः केचित् पुण्यवन्तो ह्यरोगिणः।
यथा विप्रा विष्णुभक्तास्त्रिवर्णा विप्रसेविनः॥ १२
जलपूर्णा नदा नद्यः सन्ततं कन्दरास्तथा।
तीर्थपूताश्चतुर्व्वर्णास्तपःपूता द्विजातयः॥ १३
मनःपूता हि निखिला खलहीनं जगत् तथा।
सत्कीर्त्तिपरिपूर्णञ्च यशस्यं मङ्गलान्वितम्॥ १४
पितरः पर्व्वकालेषु तिथिकालेषु देवताः।
सर्व्वकालेष्वतिथयः पूजिताश्च गृहे गृहे॥ १५
त्रिवर्णा विप्रभक्ताश्च विप्रभोजनतत्पराः।
ब्राह्मणस्य मुखं क्षेत्रमनूषरमकण्टकम्।
नारायणोत्कीर्त्तने च हर्षयुक्तास्तदुत्सवे॥ १६
न वेदानां द्विजानाञ्च विदुषां तत्र निन्दकाः॥ १७
नात्मप्रशंसकाः केचित् सर्व्वे परगुणोत्सुकाः।
न शत्रवो जनानाञ्च सर्व्वे सर्व्वहितैषिणः॥ १८
पुरुषा योषितश्चापि न हि मूर्खाश्च पण्डिताः।
न दुःखिता जनाः सत्ये सर्व्वेषां रत्नमन्दिरम्॥ १९
मणि-माणिक्य-मुक्तौघ-रत्न-स्वर्णसमन्वितम्।

न भिक्षुका न रोगार्त्ताः शोकहीनाश्च हर्षिताः ॥२०
नास्ति भूषणहीनश्च ना वा नार्य्यश्च काश्चन।
न कोपिता न धूर्त्ताश्च न क्षुधार्त्ता न कुत्सिताः॥२१
जराहीनाः प्राणिनश्च शश्वद्दृयौवनसंयुताः।
आधि-व्याधिविहीनाश्च(क) निर्व्विकाराश्च देहिनः२२
अद्भुताश्च सत्ययुगे धर्म्मः सत्यदयाधिकम्।
पादहीनश्च त्रेतायां सत्यार्द्धं द्वापरेऽपि च ॥ २३
धर्म्मैकपाच प्रथमे कलेश्चातिकृशोऽवलः।
दुष्टानां दस्युचौर्य्याणामङ्कुरः प्रभवेद्व्रज ॥ २४
अधर्म्मनिरताः केचिद्भीताः सङ्गोपिनस्तथा।
भीता गुप्ताश्च पुंश्चल्यो भीताश्च पारदारिकाः ॥ २५
धर्म्मिष्ठानां भये शश्वदधर्म्मिष्ठाश्च कम्पिताः।
अल्पधर्म्मरता भूपाः स्वल्पवेदरता द्विजाः।
तधर्म्मरताः केचित् सर्व्वे स्वच्छन्दगामिनः ॥ २६
यावत् तिष्ठन्ति तीर्थानि यावत् तिष्ठति माधवः(ख)।
यावत् तिष्ठन्ति ग्रामाणां देवाः शास्त्राणि पूजनम्।
तावत् किञ्चित् तपः सत्यं स्वर्गोधर्म्मांश्च एव च ॥२७
कलेर्द्दोषनिषेधस्तात गुण एको महानपि।
मानसं सम्भवेत् पुण्यं सुकृतं न हि दुष्कृतम् ॥ २८
तीर्थादिके गते तात नष्टो धर्म्मांश एव च।
कलाक्षपश्च धर्म्मश्च यथा कृष्णे निशाकरः ॥ २९
नन्द उवाच।
तीर्थान्येतानि सर्व्वाणि तिष्ठन्त्येव कियद्दिनम्।
माधवो ग्राम्यदेवाश्च शास्त्राण्येतानि वत्सक ॥ ३०
श्रीभगवानुवाच।
कलेर्दशसहस्राणि हरिस्तिष्ठति मेदिनीम्।
देवानां प्रतिमा पूजा शास्त्राणि च पुराणकम् ॥ ३१
तदर्द्धमपि तीर्थानि गङ्गादीनि सुनिश्चितम्।
तदर्द्धं ग्रामदेवाश्च वेदाश्च विदुषामपि ॥ ३२
अधर्म्मः परिपूर्णश्च तदन्ते च कलौ पितः।
एकवर्णा भविष्यन्ति वर्णाश्चत्वार एव च ॥ ३३
न मन्त्रपूत उद्वाहो न हि सत्यं न च क्षमाः।
स्त्रीजीवनिरतो नित्यं ग्राम्यधर्म्मप्रधानतः ॥ ३४
न यज्ञसूत्रं तिलकं ब्राह्मणानाञ्च नित्यशः।
सन्ध्याशास्त्रविहीनाश्च विप्रवंशाः श्रुतादपि ॥ ३५

(क) आधिव्याधिविहीनाश्चेति पाठान्तरं क्वचित्।
(ख) यावत् तिष्ठन्ति माधवः इति पाठान्तरम्।

सर्व्वैः सार्द्धञ्च सर्व्वेषां भक्षणं नियमच्युतम्।
अभक्ष्यभक्ष्यलोलाश्च चतुर्व्वर्णाश्च लम्पटाः ॥ ३६
नारीषु न सती कापि पुंश्चली च गृहे गृहे।
करोति तज्जनं कान्तं भृत्यतुल्यञ्च कल्पितम् ॥ ३७
जाराय दत्त्वा मिष्टान्नं ताम्बूलं वस्त्रचन्दनम्।
न ददात्येव स्वाहारं स्वामिने दुःखिने पितः ॥ ३८
पुत्त्रेण भत्सितस्तातः शिष्येण भर्त्सितो गुरुः।
प्रजाभिस्ताड़ितो भूपो भूपेन ताड़िताः प्रजाः ॥३९
दस्यु-चौरैश्च दुष्टैश्च शिष्टाश्च परिपीड़िताः।
वनं यास्यन्ति खेदेन जनाश्च करपीड़िताः ॥ ४०
शस्यहीना च वसुधा क्षीरहीनाश्च धेनवः।
स्वल्पक्षीरे घृतं नास्ति नवनीतञ्च नित्यशः ॥ ४१
सत्यहीना जनाः सर्व्वे नित्यं मिथ्या वदन्ति च।
सन्ध्या-शौच-शास्त्रहीना ब्राह्मणा वृषवाहकाः ॥ ४२
सूपकाराश्च शूद्राणां शूद्राणां शवदाहकाः।
शूद्रस्त्रीनिरताः शश्वच्छूद्रा विप्रवधूरताः ॥ ४३
खादन्ति यस्य विप्रस्य भक्ष्यं यत् परिचारकाः।
मातुः परं तस्य पत्नीं शूद्रा गच्छन्ति लम्पटाः ॥ ४४
भृत्यश्च हत्वा राजानं स्वयं राजा भविष्यति।
नारी हत्वा पतिं कामाद्भजेज्जारञ्च कौतुकात् ॥ ४५
पुत्त्रश्च पितरं हत्वा स्वयं भूपो भविष्यति।
राजानश्चापि म्लेच्छाश्च यवना धर्म्मनिन्दिताः ॥ ४६
सत्कीर्त्तिमपि साधूनां कुर्व्वन्त्युन्मूलनं मुदा।
सर्व्वे स्वच्छन्दनिरताः शिश्नोदरपरायणाः।
वञ्चका व्याधियुक्ताश्च कुत्सिताश्च कुचैलकाः ॥ ४७
विष्णुमन्त्रविलिप्ताश्च मिथ्यामन्त्रप्रचारकाः।
जातिहीनाश्च गुरवो वयोहीनाश्च निन्दकाः।
देवानाञ्च द्विजातीनामतिथीनाञ्च नित्यशः ॥ ४८
पूजा नास्ति गुरूणाञ्च पित्रोश्च पूजनं स्त्रियः।
स्त्रीबन्धूनां गौरवञ्च स्त्रीणाञ्च सततं पितः ॥ ४९
चौरः सत्कुलजातश्च ब्रह्म-देवस्वहारकः।
मानवं घ्नन्ति लोभेन युगधर्म्मेण कौतुकात् ॥ ५०
देवायतनहीनञ्च जगत् सर्व्वं भयाकुलम्।
अराजकञ्च दुर्नीतं सततं कलिदोषतः ॥ ५१
बुभुक्षिताः कुचैलाश्च दरिद्रा व्याधिता नराः।
कपर्द्दकघटाध्यक्षो राजेन्द्रो हि घटेश्वरः ॥ ५२
वृद्धाङ्गुष्ठसमा लोका वृक्षाः शाकसमास्तथा ॥ ५३

तालानां नारिकेलानां पनसानां तथैव च।
फलानि सर्षपाणीव तत् क्षुद्रञ्च ततः परम् ॥ ५४
जलभोजनपात्रेण शस्येन वाससा तथा।
विहीनं मन्दिरं सर्व्वं गृहिणामपरिष्कृतम्।
शश्वत्तेन परिवृतं दीपहीनं तमोयुतम् ॥ ५५
हिंस्रजन्तुभयाद्भीता जनाः सर्व्वे च पापिनः।
सर्व्वे च कलहाविष्टाः पुंश्चल्यः कलहप्रियाः ॥ ५६
रूपवत्यो न कामिन्यो न नराश्चापि रूपिणः ॥ ५७
नद्यो नदाः कन्दराश्च तड़ागाश्च सरोवराः।
जलपद्मविहीनाश्च जलहीना घटास्तथा ॥ ५८
अपत्यहीना नार्य्यश्च कामुक्यो जारसंयुताः ॥ ५९
अश्वत्थच्छेदिनः सर्व्वे वृक्षहीना वसुन्धरा।
फलहीनाश्च तरवः शाखास्कन्धविहीनकाः ॥ ६०
फलानि स्वादहीनानि चान्नानि च जलानि च।
मानवाः कटुवक्तारो निर्द्दया धर्म्मवर्ज्जिताः ॥ ६१
तदन्ते द्वादशादित्याः संहरिष्यन्ति मानवान्।
सर्व्वान् जन्तूंश्च तापेन वज्रवृष्ट्या व्रजेश्वर ॥ ६२
अवशिष्टा च पृथिवी कथामात्रावशेषिता।
कलौ गते च पृथिवी व्यहं वर्षं गते तथा।
पुनः सत्यं प्रविष्टञ्च भविष्यति क्रमेण वै ॥ ६३
इत्येवं कथितं सर्व्वं गच्छ तात व्रजं सुखम्।
अहं दुग्धमुखो बालः पुत्त्रस्ते कथयामि किम्॥ ६४
नवनीतं घृतं दुग्धं दधि तक्रं परिष्कृतम्।
स्वस्तिकं शुभकर्म्मार्हं मिष्टान्नञ्च सुधोपमम् ॥ ६५
मिष्टद्रव्यञ्च यत् किञ्चित् पितृदेवनिमित्तकम्।
भुक्तं बलाच्च तत् सर्व्वं बालानां रोदनं बलम् ॥ ६६
तत् क्षमस्वापराधं मे बालदोषः पदे पदे।
त्वं पिता तव पुत्त्रोऽहं यशोदा जननी मम।
अहोयं परिहारञ्च यशोदां रोहिणीं वद ॥ ६७
कुमारास्याच्छुतं सर्व्वं योऽहमित्येवमीप्सितम्।
कीर्त्तयिष्यसि तत् सर्व्वं सर्व्वगोकुलवासिनः ॥ ६८
कालः करोति संसर्गं बन्धूनां बन्धुभिः समम्।
कालः करोति विच्छेदं विरोधं प्रीतिमेव च ॥ ६९
कालः सृष्टिञ्च कुरुते कालश्च परिपालनम्।
कालः हरति आनन्दं कालः संहरते प्रजाः ॥ ७०
सुखं दुःखं भयं शोकं जरा मृत्युञ्च जन्म च।
सर्व्वं कर्म्मानुरोधेन काल एव करोति च।
सर्व्वं कालकृतं तात विस्मयं न व्रजं व्रज ॥ ७१
कुतस्त्वं गोकुले वैश्यो नन्दो वैश्याधिपो नृपः।
वसुदेवसुतोऽहञ्च मथुरायामहो कुतः ॥ ७२
पित्रा मे कंसभीतेन न्यस्तो हे च समर्पितः।
पितुः परः पिता त्वञ्च माता मातुः परापि सा ॥७३
मया दत्तेन ज्ञानेन पार्व्वत्या च व्रजेश्वर।
त्यज मोहं महाभाग गच्छ तात सुखं गृहम् ॥ ७४
नन्द उवाच।
स्मर वृन्दावनं तात रम्यं पुण्यमहोत्सवम्।
गोकुलं गोकुलं रम्यं सुन्दरं यमुनातटम् ॥ ७५
रमणीनां सुरम्यञ्च ललितं रासमण्डलम्।
गोपालिका गोपबालान् यशोदां रोहिणीं प्रसूम्॥७६
प्राणाधिकां राधिकाञ्च किं न स्मरसि पुत्त्रक।
वारमेकं स्वल्पमिमं गोकुलं गच्छ वत्सक ॥ ७७
इत्येवमुक्त्वा नन्दश्च क्रोड़े कृष्णं चकार सः।
नेत्राम्बुना च पूर्णेन तं सिषेच शुचान्वितः ॥ ७८
चुचुम्ब तद्गण्डयुग्मं कृत्वा वक्षसि मोहतः।
सानन्दः परमानन्दो भगवांस्तमुवाच ह ॥ ७९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे भगवन्नन्दसंवादे भगवद्वाक्ये युगधर्म्मकथनं नाम नवतितमोऽध्यायः ॥ ९० ॥

---

## एकनवतितमोऽध्यायः।

श्रीभगवानुवाच।
निर्विकेण परिष्वङ्गो प्रभेदस्तेन वा भवेत्।
क्षणेन दर्शनं तेन निषिक्तः केन वार्य्यते ॥ १
गमनागमनार्थस्याप्युद्धवः कथयिष्यति।
प्रस्थापयामि तं शीघ्रं विज्ञास्यसि ततः पितः ॥ २
यशोदां रोहिणीञ्चैव गोपिका गोपबालकान्।
प्राणाधिकां राधिकां तां गत्वा सम्बोधयिष्यसि ॥३
एतस्मिन्नन्तरे तत्र वसुदेवश्च देवकी।
बलदेवश्चोद्धवश्च तथाक्रूरश्च सत्वरम् ॥ ४
वसुदेव उवाच।
नन्द त्वं बालकाज्ज्ञानी सद्बन्धुश्च सखा मम।
त्यज मोहं गृहं गच्छ वत्सस्तेऽयं यथा मम ॥ ५

दूरीभूता गोकुलाच्च मथुरा नास्ति बान्धव।
महोत्सवे सदानन्दे नन्द द्रक्ष्यसि पुत्रकम्॥ ६
देवक्युवाच।
यथायमावयोः पुत्रस्तथैव भवतो ध्रुवम्।
अलसः केन हे नन्द शुचा देहो हि लक्ष्यते॥ ७
शुक्लादप्यन्दं सबलः स्थितस्ते मन्दिरं सुखम्।
अर्थं स्वल्पदिनेनैव शोकग्रस्तो भविष्यसि॥ ८
तिष्ठ पुत्रेण सार्द्धञ्च मथुरायां कियद्दिनम्।
पूर्णचन्द्राननं पश्य जन्मनः फलदं कुरु॥ ९
श्रीभगवानुवाच।
गच्छोद्धव सुखं भद्रं भविष्यति तव प्रियम्।
अद्यापि गोकुलं गत्वा यशोदां रोहिणीं प्रसूम्॥ १०
गोपबालसमूहञ्च राधिकां गोपिकागणम्।
प्रबोधयाध्यात्मिकेन मद्व्रतेन शुचच्छिदा॥ ११
नन्दस्तिष्ठतु सानन्दं यशातुराद्यवाधुना।
नन्दस्थितिं मदिनयं यशोदां कथयिष्यसि॥ १२
इत्येवमुक्त्वा श्रीकृष्णः पित्रा मात्रा बलेन च।
अक्रूरेण समं तूर्णं ययौ स्वाभ्यन्तरं गृहम्॥ १३
उद्धवो रजनीं स्थित्वा मथुरायाञ्च नारद।
प्रभाते प्रययौ शीघ्रं रम्यं वृन्दावनं वनम्॥ १४

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे एक-नवतितमोऽध्यायः॥ ९१॥

---

## द्विनवतितमोऽध्यायः।

नारायण उवाच।

श्रीकृष्णप्रेरितो दूतः प्रणम्य च गणेश्वरम्।
स्मरन् नारायणं शम्भुं दुर्गां लक्ष्मीं सरस्वतीम्॥ १
गङ्गाञ्च मनसा ध्यात्वा दिगीशं तं महेश्वरम्।
प्रजगामोद्धवश्चैव दृष्ट्वा मङ्गलसूचकम्॥ २
शुश्रुवुदुन्दुभी-घण्टानादं शङ्खध्वनिं तथा।
हरिशब्दञ्च सङ्गीतं ब्राह्मणानां शुभाशिषम्॥ ३
पतिपुत्रवतीं साध्वीं प्रदीपमाल्यदर्पणम्।
परिपूर्णतमं कुम्भं दधि-लाज-फलानि च॥ ४
दूर्वाङ्कुरं शुक्लधान्यं रजतं काञ्चनं मधु।
ब्राह्मणानां समूहञ्च कृष्णसारं वृषं घृतम्॥ ५
सद्योमांसं गजेन्द्रञ्च नृपेन्द्रं श्वेतघोटकम्।
पताकां नकुलं चाषं शुक्लपुष्पञ्च चन्दनम्॥ ६
दृष्ट्वैवं पथि कल्याणं प्राप वृन्दावनं वनम्।
ददर्श पुरतो वृक्षं भाण्डीरे वटमक्षयम्॥ ७
स्निग्धपर्णं रक्तवर्णं पुण्यदं तीर्थमीप्सितम्॥ ८
सुवेशान् बालकांश्चैव रत्नभूषणभूषितान्।
वदतो बलकृष्णेति रुदतश्च शुचान्वितान्॥ ९
तानाश्वास्य ययौ दूरं प्रविश्य नगरं मुदा।
ददर्श नन्दशिबिरं रचितं विश्वकर्म्मणा॥ १०
मणिरत्नविनिर्म्माणं मुक्तामाणिक्यहीरकैः।
परिच्छन्नं मनोरम्यं सद्रत्नकलसान्वितम्॥ ११
द्वारं चित्रविचित्राढ्यं दृष्ट्वा च प्रविवेश सः।
अवरुह्य रथात् तूर्णं तस्थौ तत्राङ्गणे मुदा॥ १२
यशोदा रोहिणी शीघ्रं पप्रच्छ कुशलं परम्।
आसनञ्च जलं गाञ्च मधुपर्कं ददौ मुदा॥ १३
क्व नन्दः क्व बलः कृष्णः सत्यं तत् कथयोद्धव।
उद्धवः कथयामास सर्व्वं भद्रं क्रमेण च॥ १४
सार्द्धञ्च बलकृष्णाभ्यां नन्दः सानन्दपूर्व्वकम्।
आयास्यति विलम्बेन कृष्णोपनयनावधि॥ १५
युष्माकं कुशलं तत्त्वं विज्ञाय विधिपूर्व्वकम्।
अहं यास्यामि मथुरां यशोदे शृणु साम्प्रतम्॥ १६
श्रुत्वा मङ्गलवार्त्ताञ्च यशोदा रोहिणी मुदा।
ब्राह्मणाय ददौ रत्नं सुवर्णं वस्त्रमीप्सितम्॥ १७
उद्धवं भोजयामास मिष्टान्नञ्च सुधोपमम्।
मणिश्रेष्ठञ्च रत्नञ्च ददौ तस्मै च हीरकम्॥ १८
वाद्यञ्च वादयामास भद्रं नानाविधं तथा।
ब्राह्मणान् भोजयामास कारयामास मङ्गलम्॥ १९
वेदांश्च पाठयामास परं सानन्दपूर्व्वकम्।
शङ्करं पूजयामास विप्रद्वारा परं विभुम्॥ २०
नानोपहारैर्नैवेद्यैः पुष्पधूपप्रदीपकैः।
चन्दनैर्वस्त्रताम्बूलैर्मधु-गव्य-घृतादिभिः॥ २१
भवानीं पूजयामास श्रीवृन्दारण्यदेवताम्।
षोडशोपचारद्रव्यैर्बलिभिर्विविधैर्मुने॥ २२
महिषाणां शतं शुद्धं छागलानां सहस्रकम्।
मेषाणामयुतं शुक्लं शुद्धमायातिपञ्चकम्॥ २३
ब्राह्मणेभ्यः स्वर्णखण्डं धेनूनाञ्च शतं तथा।
प्रददौ दक्षिणां तूर्णं कृष्णकल्याणहेतवे।

उद्धवं पूजयामास सादरञ्च पुनः पुनः ॥ २४
समाश्वास्य यशोदाञ्च रोहिणीं गोपबालकान्।
त्यक्त्वा गोपालिकाः सर्व्वाः प्रययौ रासमण्डलम् ॥ २५
ददर्श रासं रुचिरं चन्द्रमण्डलवर्त्तुलम्।
श्रीरामकदलीस्तम्भ-शतकैरुपशोभितम् ॥ २६
युक्तं स्निग्धरसालानां चन्दनानाञ्च पल्लवैः।
पट्टसूत्रनिबद्धैश्च श्रीयुक्तमाल्यजालकैः ॥ २७
दधिलाजफलैः पट्टैः पुष्पैर्दूर्व्वाङ्कुरैरपि।
चन्दनागुरुकस्तूरी-कुङ्कुमैः परिसंस्कृतम् ॥ २८
वेष्टितं रचितं यत्नाद्गोपिकानां त्रिकोटिभिः।
त्रिलक्षैः सुन्दरै रम्यैः संयुक्तं रतिमन्दिरैः ॥ २९
लक्षगोपैः परिवृतं कृष्णागमनशङ्कितैः ॥ ३०
यमुनां दक्षिणं कृत्वा प्रययौ मालतीवनम्।
चन्दनानां चम्पकानां यूथिकानां तथैव च ॥ ३१
केतकी-माधवीनाञ्च वनं कृत्वा प्रदक्षिणम्।
वकुलानां रङ्गणानामशोकानाञ्च काननम् ॥ ३२
मल्लिकानां पलाशानां शिरीषाणां तथैव च।
धात्रीणां काञ्चनानाञ्च कर्णिकानां वनं तथा ॥ ३३
नागेश्वराणां विपिनं लवङ्गानां तथैव च।
वनञ्च शालतालानां हिन्तालानां वनं तथा ॥ ३४
पनसानां रसालानां लाङ्गलीनां मनोहरम्।
मन्दारकाननं रम्यं वामं कृत्वा च काननम् ॥ ३५
दृष्ट्वा कुन्दवनं रम्यं सम्प्राप मधुकाननम्।
पुंस्कोकिलानां शब्देन मधुरेण समन्वितम् ॥ ३६
मधुव्रतसमूहानां मधुरध्वनिकूजितम्।
वन्यवृक्षैः परिवृतं माध्वीकाधारमीप्सितम् ॥ ३७
पुष्पाणाञ्चैव वातेन परितः सुरभीकृतम्।
तं दृष्ट्वा राजमार्गेण यथोक्तेन च साम्प्रतम् ॥ ३८
ययौ शीघ्रं निरुद्विग्नं रहस्यं वदरीवनम्।
श्रीफलानाञ्च निम्बानां नागरङ्गवनं तथा।
धन्यानां करवीराणां तुलसीवाञ्च काननम् ॥ ३९
दृष्ट्वा रक्तिमवर्णाञ्च सुपक्वफलमीप्सितम्।
तदेव वामतः कृत्वा विवेश कदलीवनम् ॥ ४०
अतीव निर्ज्जने रम्ये ददर्श राधिकाश्रमम्।
मणीन्द्राणाञ्च प्राकार-परिखादुर्गवेष्टितम् ॥ ४१
अगम्यं रिपूणाञ्च मित्राणां सुगमं सुखम्।
गोप्यसङ्केतमार्गैश्च रक्षकैः परिरक्षितम् ॥ ४२
नानाचित्रविचित्राढ्यं निर्म्मितं विश्वकर्म्मणा।
मणीन्द्रमुक्तामाणिक्य-हीराहारोज्ज्वलं परम् ॥ ४३
रत्नेन्द्रसाररचितं रत्नस्तम्भैः सुशोभनम्।
रत्नसोपानसंसक्त-मन्दिरौघमनोहरम् ॥ ४४
अमूल्यरत्नरचितं कलसैः परिशोभितम्।
वह्निशुद्धांशुकाभिश्च पताकाभिः परिष्कृतम् ॥ ४५
सद्रत्नदर्पणोत्कृष्टं चर्च्चितं श्वेतचामरैः।
ददर्श सिंहद्वारञ्च युक्तं रत्नकवाटकम् ॥ ४६
द्वारोपरि विचित्रञ्च रम्यं वृन्दावनं वनम्।
कदम्बकाननं रम्यं तदस्त्रहरणादिकम् ॥ ४७
विश्वकर्म्मविरचितं सुरम्यं रासमण्डलम्।
नानाकुञ्जकुटीरञ्च गोप-गोपीसमन्वितम् ॥ ४८
रक्षितं गोपिकालक्षैर्वेत्रहस्तैर्मनोहरैः।
स्वच्छन्दचरणैः शश्वद्भीतैर्वलिभिर्मुदा ॥ ४९
तद्द्वारं पुरतो दृष्ट्वा विलङ्घ्य च जगाम सः।
द्वितीयद्वारमूलङ्घ्य तस्मादुत्तममीप्सितम् ॥ ५०
द्वारं चतुर्थं सम्प्राप्य सर्व्वस्माच्च विलक्षणम्।
ततश्चात् पञ्चमं गत्वा ददर्श चित्रमुत्तमम्।
षष्ठद्वारञ्च प्रययौ सर्व्वतो रुचिरं परम् ॥ ५१
रामरावणयोर्युद्धं भित्तिचित्रं मनोहरम्।
दशावतारं विष्णोश्च कृत्रिमं रासमण्डलम् ॥ ५२
यमुनाजलकेलिञ्च रचितं विश्वकर्म्मणा।
गोपिकानां सहस्रेण षष्ठद्वारञ्च रक्षितम् ॥ ५३
रत्नेन्द्रसारनिर्म्माण-भूषणैर्भूषितेन च।
सद्रत्नदण्डहस्तेन हीरकैर्भूषितेन च।
मणीन्द्रमुक्तामाणिक्य-सारहारान्वितेन च ॥ ५४
माधवी तत्प्रधाना सा पप्रच्छ साम्प्रतं शिवम्।
ददौ प्रत्युत्तरं सर्व्वं क्रमेण च स उद्धवः ॥ ५५
सा माधवी महाहृष्टा तत्र संस्थाप्य तं मुदा।
गत्वा विज्ञापयामास राधाप्रियसखीगणम् ॥ ५६
श्रुत्वा मङ्गलवार्त्ताञ्च राधाप्रियसखीगणाः।
कृत्वा शङ्खध्वनिं घण्टा-मृदङ्ग-पणवस्वनम् ॥ ५७
कृत्वा निर्म्मञ्छनं शीघ्रमुद्धवं प्रियमीप्सितम्।
हृष्टः प्रवेशयामास राधाभ्यन्तरमुत्तमम् ॥ ५८
अमूल्यरत्ननिर्म्माणं गत्वा मन्दिरमुत्तमम्।
ददर्श पुरतो राधां शुद्धां चन्द्रकलोपमाम् ॥ ५९
सपङ्कपद्मपत्रे च शयानां शोकमूर्च्छिताम्।

रुदतीं रक्तवदनां क्लिष्टाञ्च त्यक्तभूषणाम् ॥ ६०
निश्चेष्टाञ्च निराहारां सुवर्णवर्णकुन्तलाम्।
शुष्किताधरकण्ठाञ्च किञ्चिन्निश्वासंयुताम् ॥ ६१
प्रणनाम च तां दृष्ट्वा भक्तिनम्रात्मकन्धरः।
पुलकाञ्चितसर्व्वाङ्गो भक्त्या भक्तः स उद्धवः ॥ ६२

उद्धव उवाच।

वन्दे राधापदाम्भोजं ब्रह्मादिसुरवन्दितम्।
यत्कीर्त्तिकीर्त्तनेनैव पुनाति भुवनत्रयम् ॥ ६३
नमो गोलोकवासिन्यै राधिकायै नमो नमः।
शतशृङ्गनिवासिन्य चन्द्रावत्यै नमो नमः ॥ ६४
रासमण्डलवासिन्यै रासेश्वर्य्यै नमो नमः।
विरजातीरवासिन्य वृन्दायै च नमो नमः ॥ ६५
वृन्दावनविलासिन्यै कृष्णायै च नमो नमः।
नमः कृष्णप्रियायै च शान्तायै च नमो नमः ॥ ६६
कृष्णवक्षःस्थितायै च तत्प्रियायै नमो नमः।
नमो वैकुण्ठवासिन्यै महालक्ष्म्यै नमो नमः ॥ ६७
विद्याधिष्ठातृदेव्यै च सरस्वत्यै नमो नमः।
सर्व्वैश्वर्य्याधिदेव्यै च कमलायै नमो नमः ॥ ६८
पद्मनाभप्रियायै च पद्मायै च नमो नमः।
महाविष्णोश्च मात्रे च परायायै नमो नमः ॥ ६९
नमः सिन्धुसुतायै च मर्त्यलक्ष्म्यै नमो नमः।
नारायणप्रियायै च नारायण्यै नमो नमः ॥ ७०
नमोऽस्तु विष्णुमायायै वैष्णव्यै च नमो नमः।
महामायास्वरूपायै सम्पदायै नमो नमः ॥ ७१
नमः कल्याणरूपायै शुभदायै नमो नमः।
मात्रे चतुर्णां वेदानां सावित्र्यै च नमो नमः ॥ ७२
नमोऽस्तु बुद्धिरूपायै ज्ञानदायै नमो नमः।
तेजःसु सर्व्वदेवानां पुरा कृतयुगे सदा।
अधिष्ठानकृतायै च प्रकृत्यै च नमो नमः ॥ ७३
नमो दुर्गविनाशिन्यै दुर्गादेव्यै नमो नमः।
नमस्त्रिपुरहारिण्यै त्रिपुरायै नमो नमः ॥ ७४
सुन्दरीषु च रम्यायै सुन्दर्य्यै च नमो नमः।
शुद्धसत्त्वस्वरूपायै सगुणायै नमो नमः ॥ ७५
नमो ब्रह्मस्वरूपायै निर्गुणायै नमो नमः।
नमो दक्षसुतायै च नमः सत्यै नमो नमः ॥ ७६
नमः शैलसुतायै च पार्व्वत्यै च नमो नमः।
नमो नमस्तपस्विन्यै उमायै च नमो नमः ॥ ७७
निराहारस्वरूपिण्यै अपर्णायै नमो नमः।
गौरीलोकनिवासिन्यै नमो गौर्य्यै नमो नमः ॥ ७८
नमः कैलासवासिन्यै माहेश्वर्य्यै नमो नमः।
निद्रायै च दयायै च श्रद्धायै च नमो नमः ॥ ७९
तृष्णायै क्षुत्स्वरूपायै भ्रान्त्यै कान्त्यै नमो नमः।
नमः सृष्टिस्वरूपायै स्थितिकर्त्र्यै नमो नमः ॥ ८०
भद्रायै चाभयायै च मुक्तिदायै नमो नमः।
नमः स्वधायै स्वाहायै शान्त्यै कान्त्य नमो नमः॥८१
नमस्तुष्ट्यै च पुष्ट्यै च दयायै च नमो नमः।
नमो निद्रास्वरूपायै श्रद्धायै च नमो नमः ॥ ८२
क्षुत्पिपासास्वरूपायै लज्जायै च नमो नमः।
नमो धृत्यै क्षमायै च चेतनायै नमो नमः ॥ ८३
सर्व्वशक्तिस्वरूपिण्यै सर्व्वमात्रे नमो नमः।
वह्नौ दाहस्वरूपिण्यै भद्रायै च नमो नमः।
शोभायै पूर्णचन्द्रस्य शरत्पद्मे नमो नमः ॥ ८४
नास्ति भेदो यथा देवि दुग्ध-धावल्ययोः सदा।
यथैव गन्ध-भूम्योश्च यथैवं जल-शैत्ययोः ॥ ८५
यथैव शब्द-नभसोर्ज्योतिः-सूर्य्यमसोर्यथा।
लोके वेदे पुराणे च राधा-माधवयोस्तथा ॥ ८६
चेतनं कुरु कल्याणि देहि मामुत्तरं सति।
इत्युक्त्वा चोद्धवस्तत्र प्रणनाम पुनः पुनः ॥ ८७
इत्युद्धवकृतं स्तोत्रं यः पठेद्भक्तिपूर्व्वकम्।
इह लोके सुखं भुक्त्वा यात्यन्ते हरिमन्दिरम् ॥ ८८
न भवेद्बन्धुविच्छेदो रोगः शोकः सुदारुणः।
प्रोषितस्त्री लभेत् कान्तं भार्य्याभेदी लभेत्प्रियाम्॥८९
अपुत्रो लभते पुत्रं निर्द्धनो लभते धनम्।
निर्भूमिर्लभते भूमिं प्रजाहीनो लभेत् प्रजाम् ॥ ९०
रोगाद्विमुच्यते रोगी बद्धो मुच्येत बन्धनात्।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः।
अस्पष्टकीर्त्तिः सुयशा मूर्खो भवति पण्डितः ॥ ९१

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-जन्मखण्डे नारायण-नारद-संवादे राधास्तोत्रकथनं नाम द्विनवति-तमोऽध्यायः ॥ ९२ ॥

---

## त्रिनवतितमोऽध्यायः।

नारायण उवाच।

उद्धवस्तवनं श्रुत्वा चेतनं प्राप्य राधिका।
विलोक्य कृष्णाकारञ्च तमुवाच शुचान्विता॥ १

राधिकोवाच।

किं नाम भवतो वत्स केन वा प्रेरितो भवान्।
आगतो वा कुत इति ब्रूहि मां केन हेतुना॥ २
कृष्णाकृतिस्त्वं सर्व्वाङ्गे मन्ये त्वां कृष्णपार्षदम्।
कृष्णस्य कुशलं ब्रूहि बलदेवस्य साम्प्रतम्॥ ३
नन्दस्तिष्ठति तत्रैव हेतुना केन तद्वद।
समायास्यति गोविन्दो रम्यं वृन्दावनं वनम्॥ ४
पुनर्द्रक्ष्यामि तस्यैव पूर्णचन्द्रनिभं मुखम्।
पुनः क्रीड़ां करिष्यामि तेनाहं रासमण्डले॥ ५
जले च विहरिष्यामि सखीभिः सह वा पुनः।
श्रीनन्दनन्दनाङ्गे च पुनर्दास्यामि चन्दनम्॥ ६

उद्धव उवाच।

उद्धवेत्यभिधानं मे क्षत्रियोऽहं वरानने।
प्रेषितः शुभवार्त्तार्थं कृष्णेन परमात्मना॥ ७
तवान्तिकं समायातः पार्षदोऽहं हरेरपि।
कृष्णस्य बलदेवस्य शिवं नन्दस्य साम्प्रतम्॥ ८

राधिकोवाच।

अस्ति तद्यमुनाकूलं सुगन्धपवनोऽस्ति सः।
तस्य केलिकदम्बानां मूलमस्त्येव साम्प्रतम्॥ ९
पुण्यं वृन्दावनं रम्यं तद्विद्यमानमीप्सितम्।
पुंस्कोकिलानां विहरं मधुपानञ्च सुन्दरम्॥ १०
दुरन्तश्चाप्यतः सोऽस्ति पापिष्ठो मन्मथस्तथा।
ते च रत्नप्रदीपाश्च ज्वलन्ति रासमण्डले॥ ११
मणीन्द्रसारनिर्म्माणमस्त्येव रतिमन्दिरम्।
गोपाङ्गनागणोऽस्त्येवं पूर्णचन्द्रोऽस्ति शोभितः॥ १२
सुगन्धिपुष्परचित तल्पं चन्दनचर्च्चितम्।
ताम्बूलं रतिभोगार्हं कर्पूरादिसुसंस्कृतम्॥ १३
सुगन्धिमालतीमाल्यं श्वेतचामरदर्पणम्।
मुक्तामाणिक्यसंसक्त-हीराहारमनोहरम्॥ १४
कस्तूरीकुङ्कुमाक्तञ्च पात्रपूर्णञ्च चन्दनम्।
स्नानोपकरणं रम्यं रम्यं क्रीड़ासरोवरम्॥ १५
सुगन्धिपुष्पोद्यानं तत् पद्मश्रेणीमनोहरम्।
अस्त्येवं सर्व्वविभवः प्राणनाथः कुतो मम॥ १६
हा कृष्ण हा रमानाथ क्वासि मे प्राणवल्लभ।
कापराधोऽस्ति दास्याश्च दासीदोषः पदे पदे॥ १७
इत्येवमुक्त्वा सा देवी पुनर्मूर्च्छामवाप स च।
चेतनां कारयामास पुनरेव स उद्धवः॥ १८
तां दृष्ट्वा परमाश्चर्य्यं मेने क्षत्रियपुङ्गवः।
सखीभिः सप्तभिः शश्वत् सेवितां श्वेतचामरैः॥
गोपीनाञ्च त्रिलक्षैश्च सुप्रियैः परिषेविताम्।
दिवानिशं वेष्टिताञ्च गोपीनां शतकोटिभिः॥ २०
काचित् कज्जलहस्ता च काचिन्माल्यधरा परा।
काचित् सिन्दूरहस्ता च काचिद्गोरोचनाकरा॥ २१
काचिच्चन्दनपात्रञ्च हस्ते कृत्वा च तिष्ठति।
काचिद्दर्पणहस्ता च काचित् कुङ्कुमवाहिका॥ २२
कस्तूरीपात्रमिष्टञ्च काचिद्वहति तत्र वै।
काचिच्चम्पकपात्रञ्च करे धृत्वा च तिष्ठति॥ २३
मधुभिर्मधुरैः पूर्णं पात्रं धृत्वा शुचान्विता।
काचित् सुगन्धतैलञ्च गृहीत्वा परितिष्ठति॥ २४
काचिद्वहति ताम्बूलं कर्पूरादिसुवासितम्।
काचिद्वासितमिष्टञ्च जलं धृत्वा च तिष्ठति॥ २५
क्रीड़ापुत्तलिकां काचिच्चित्राढ्यां परिरक्षति।
काचिद्वहति गेन्दूकं काचिच्च रत्नभूषणम्॥ २६
वह्निशुद्धांशुकं काचिदमूल्यं परिरक्षति।
काचिद्भक्ष्योपहारञ्च गृहीत्वा परितिष्ठति॥ २७
काचिच्च केशवेशार्थं करोति माल्यमीप्सितम्।
काचित् कङ्कतिकां धृत्वा पुरतः परितिष्ठति॥ २८
काचिद्व्यावकहस्ता च काचिद्वात्रीव संयुता।
दूरतोऽपि वहत्येवं भीता च परितिष्ठति॥ २९
काचिद्गीता भिया स्तौति काचिद्रोदिति शोकतः।
काचित् तां बोधयत्येवं विदग्धा विरहातुराम्॥ ३०
काचिदुत्तप्तस्वर्णाभा स्निग्धतल्पे मनोहरे।
स्थापयेद्वाहदूरार्थं स्निग्धपद्मदले सुने॥ ३१
एवम्भूताञ्च तां दृष्ट्वा चोवाच पुनरुद्धवः।
सुप्रियं कर्णमधुरं विनाय न च भीतवत्॥ ३२

उद्धव उवाच।

जाने त्वां देवदेवीनां सुस्निग्धां सिद्धयोगिनाम्।
सर्व्वशक्तिस्वरूपाञ्च मूलप्रकृतिमीश्वरीम्॥ ३३
श्रीदामशापाद्दरणीं प्राप्तां गोलोकवासिनीम्।

कृष्णप्राणाधिदेवीञ्च तद्वचःस्थलवासिनीम् ॥ ३४
शृणु देवि प्रवक्ष्यामि शुभवार्त्तामभीप्सिताम्।
सुस्थिरं सखीभिः सार्द्धं हृदयस्निग्धकारिणीम् ॥३५
दुःखदावाग्निदग्धायाः सुधावर्षणरूपिणीम्।
विरहव्याधियुक्तायाः रसायनसमां शुभाम् ॥ ३६
तत्र तिष्ठति नन्दोऽयमानन्दो मुदितः सदा।
निमन्त्रितश्च वसुना कृष्णोपनयनावधि ॥ ३७
गृहीत्वा सबलं कृष्णं शार्ङ्गे मङ्गलकर्म्मणि।
स नन्दः परमानन्दो मुदायास्यति गोकुलम् ॥ ३८
आगत्य कृष्णो मुदितः प्रणम्य मातरं पुनः।
गन्तमायास्यति मुदा पुण्यं वृन्दावनं वनम् ॥ ३९
अचिराद्द्रक्ष्यसि सति श्रीकृष्णमुखपङ्कजम्।
सर्व्वं विरहदुःखञ्च सन्त्यक्ष्यसि च साम्प्रतम् ॥ ४०
सुस्थिरा भव मातस्त्वं त्यज शोकं सुदारुणम्।
वह्निशुद्धांशुकं रम्यं परिधाय प्रहर्षिता।
अमूल्यरत्ननिर्म्माण-भूषणग्रहणं कुरु ॥ ४१
गृहाण चन्दनं स्निग्धं कस्तूरीकुङ्कुमान्वितम्।
कुरुष्व केशसंस्कारं मालतीमाल्यभूषितम् ॥ ४२
सुवेशं कुरु कल्याणि गण्डे च चित्रपत्रकम् ॥ ४३
सिन्दूरविन्दुं सीमन्ते कस्तूरीचन्दनान्वितम्।
अलक्तकञ्च चरणं युक्तं यावकभूषणैः ॥ ४४
कुरुष्वोत्तिष्ठ उत्तिष्ठ रत्नसिंहासने वरे।
सपङ्कपङ्कजं तल्पं त्यज सार्द्धं शुचा सति ॥ ४५
भुङ्क्ष्व कृष्णेन मनसा विशुद्धं मधुरं मधु।
संस्कृतं वासितं तोयं ताम्बूलञ्च सुवासितम् ॥ ४६
रत्नेन्द्रसारनिर्म्माण-पर्य्यङ्के सुमनोहरे।
वह्निशुद्धांशुकाक्ते च मालतीमाल्यभूषिते ॥ ४७
सुगन्धियुक्ते कस्तूरी-जाति-चम्पक-चन्दनैः।
परितो मालतीमाल्य-हीराहारविभूषिते ॥ ४८
मणीन्द्र-मुक्ता-माणिक्य-सुन्दरैश्च परिष्कृते।
सुपुष्पमाल्योपधाने मङ्गलार्हे मुदान्विता ॥ ४९
शयनं कुरु देवेशि गोपीभिः सेविता सदा।
करोतु सेवनं शश्वत् प्रियाली श्वेतचामरैः ॥ ५०
पदारविन्दसेवाञ्च गोपी भक्ता मनोहरे।
सद्रत्नसारनिर्म्माण-दर्पणं पश्य निर्म्मलम् ॥ ५१
इत्येवमुक्त्वा स मुने पुरस्तूष्णीं बभूव ह।
प्रणम्य पादपद्मं तद्ब्रह्मादिसुरवन्दितम् ॥ ५२

उद्धवस्य वचः श्रुत्वा सस्मिता राधिका सती।
यौतुकञ्च ददौ तस्मै रत्नसाराङ्गुरीयकम् ॥ ५३
अमूल्यं सुन्दरं रम्यं विश्वकर्म्मविनिर्म्मितम्।
सुखदृश्यं पीतवर्णं सुदीप्तं सुप्रदीपवत्।
कृष्णाय वह्निना दत्तमपूर्व्वं रासमण्डले ॥ ५४
मणिकुण्डलयुग्मञ्चैवामूल्यरत्ननिर्म्मितम्।
अमूल्यरत्ननिर्म्माणं सर्व्वं भूषणमीप्सितम् ॥ ५५
वह्निशुद्धांशुकयुगं रत्ननिर्म्माणयानकम्।
हीरासारविनिर्म्माण-हारञ्च सुमनोहरम्।
यत् प्रदत्तं कुबेरेण कृष्णाय परमात्मने ॥ ५६
रत्नेन्द्रसारनिर्म्माणं क्रीड़ापद्मं मनोहरम्।
पुरा दत्तञ्च यत् प्रीत्या कृष्णाय वरुणेन च ॥ ५७
श्रीसूर्य्येण च यद्दत्तं श्रीकृष्णाय स्यमन्तकम्।
प्रदत्तं कौस्तुभं तस्मै यद्दत्तं हरिणा पुरा ॥ ५८
यद्दत्तञ्च महेन्द्रेण रत्नसिंहासनं वरम्।
तत् प्रदत्तं मुदा देव्या तस्मै प्रीत्या च राधया ॥ ५९
मणीन्द्रसारनिर्म्माणं छत्रं रत्नमनोहरम्।
मुक्ता-माणिक्यसारेण हीराहारेण संयुतम् ॥ ६०
विचित्ररत्नपद्मेन विचित्रं चारुणा सदा।
शोभितं परितश्चान्यै रत्ननिर्म्माणदर्पणैः ॥ ६१
यद्दत्तं ब्रह्मणा प्रीत्या हरये रासमण्डले।
सुप्रीत्या राधया तत्र प्रदत्तमुद्धवाय च ॥ ६२
जपमाल्यं संस्कृतञ्च यद्दत्तं शम्भुना पुरा।
तदेव दत्तं तस्मै चाप्यमूल्यं पुण्यदं शुभम्।
जन्म-मृत्यु-जरा-व्याधि-हरञ्चातिमनोहरम् ॥ ६३
चन्द्रकान्तमणिं रम्यं चन्द्रदत्तं परिष्कृतम्।
चन्द्रावली ददौ तस्मै सुदीप्तं पूर्णचन्द्रवत् ॥ ६४
विशुद्धमधुपूर्णञ्च मधुपात्रं यदक्षयम्।
धर्म्मेण यत् प्रदत्तञ्च तद्दत्तं प्रियया हरेः ॥ ६५
जलभोजनपात्रञ्च शुद्धस्वर्णविनिर्म्मितम्।
मिष्टान्नं परमान्नञ्च ददौ सुस्वादु पिष्टकम् ॥ ६६
भोजनं कारयित्वा च कर्पूरादिसुवासितम्।
ताम्बूलञ्च ददौ शीघ्रं माल्यं सुस्निग्धचन्दनम् ॥ ६७
शुभाशिषञ्च प्रददौ वाञ्छितं प्रवरं वरम्।
ज्ञानं कृष्णेन दत्तञ्च गोलोके रासमण्डले ॥ ६८
पुरुषाणां शतं यावन्निश्चलां कमलां ददौ।
विद्यां यशस्करीं शुद्धां यशः कीर्त्तिं सुनिर्म्मलाम् ॥ ६९

सर्व्वसिद्धिं हरेर्दास्यं हरिभक्तिञ्च निश्चलाम् ।
पार्षदप्रवरत्वञ्च पार्षदेति हरेरिति ॥ ७०
वरं प्रसादं दत्त्वा च समुत्थाय मुदान्विता ।
वह्निशुद्धांशुके धृत्वा चामूल्यरत्नभूषणम् ॥ ७१
हीराहारं रत्नमालां परिधाय मनोहराम् ।
सिन्दूरं कज्जलं पुष्प-माल्यं सुस्निग्धचन्दनम् ॥ ७२
रत्नसिंहासने रम्ये समुवास च सस्मिता ।
सेविता परितो हृष्टा सखीभिः श्वेतचामरैः ॥ ७३
नानाप्रकाराभरणं रत्नं नानाविधं मुने ।
गोप्यश्च प्रददुस्तस्यै श्रुत्वा वाक्यं सुमङ्गलम् ॥ ७४
उवाच मधुरं रम्यं रत्नसिंहासनस्थिता ।
रत्नसिंहासनस्थं तं पूजिता पूजितं मुदा ॥ ७५
वेष्टिता हर्षनिरता गोपीनां शतकोटिभिः ।
तप्तकाञ्चनवर्णाभा शतचन्द्रसमप्रभा ॥ ७६

राधिकोवाच ।

सत्यमायास्यति हरिः सत्यं निष्कपटं वद ।
वद तत् स्वभयं त्यक्त्वा सत्यं ब्रूहि सुसंसदि ॥ ७७
वरं कूपशताद्वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात् पुत्रः सत्यं पुत्रशतात् किल ॥ ७८
न हि सत्यात् परो धर्म्मो नानृतात् पातकं परम् ।
न हि मातुः परो वन्धुर्न गुरुर्मन्त्रदात् परः ॥ ७९

उद्धव उवाच ।

सत्यमायास्यति हरिः सत्यं द्रक्ष्यसि सुन्दरि ।
ध्रुवं त्यक्ष्यसि सन्तापं दृष्ट्वा चन्द्रमुखं हरेः ॥ ८०
मद्दर्शनान्महाभागे गतस्ते विरहज्वरः ।
नानाभोगसुखं भुक्त्वा त्यज चिन्तां दुरत्ययाम् ॥ ८१
अहं प्रस्थापयिष्यामि गत्वा मधुपुरीं हरिम् ।
विधाय तत्प्रबोधञ्च कार्य्यमन्यत् करिष्यति ॥ ८२
विदायं कुरु मे मातर्यास्यामि हरिमन्दिरम् ।
सर्व्वं तं कथयिष्यामि त्वद्वृत्तान्तं यथोचितम् ॥ ८३

राधिकोवाच ।

गमिष्यसि यदा वत्स मथुरां सुमनोहराम् ।
मां विस्मृतो न भवसि विरहज्वरकातराम् ॥ ८४
शृणु दुःखकथां काञ्चित् तिष्ठ वत्स स्थिरो भव ।
कथयिष्यसि मद्वार्त्तां ध्रुवं प्रस्थापयिष्यसि ॥ ८५
नारीणां मनसो वार्त्तां को वा जानाति पण्डितः ।
किञ्चिच्छास्त्रानुसारेण प्रकरोति निरूपणम् ॥ ८६
वेदा वक्तुं न शक्ताश्च शास्त्राणि किं वदन्ति हि ।
कथयिष्यामि तां पुत्र सर्व्वञ्च यदि वक्ष्यसि ॥ ८७
गेहे वने न भेदो मे पश्वादिषु तथा नृषु ।
किं वा जलं स्थलं किं वा स्वप्नज्ञानं दिवानिशम् ॥ ८८
आत्मानञ्च न जानामि चोदयं चन्द्र-सूर्य्ययोः ।
क्षणं प्राप्य हरेर्वार्त्तां चेतनां मे बभूव ह ॥ ८९
कृष्णाकृतिञ्च पश्यामि शृणोमि मुरलिध्वनिम् ।
कुललज्जाभयं त्यक्त्वा चिन्तयामि हरेः पदम् ॥ ९०
सम्प्राप्य सर्व्वजगतामीश्वरं प्रकृतेः परम् ।
न ज्ञातं मायया तस्य ज्ञातो गोपपतिर्मम ॥ ९१
ध्यायन्ते यत्पदाम्भोजं वेदा ब्रह्मादयः सुराः ।
स भर्त्सितो मया कोपाद्धृदि सम्यगिदं मम ॥ ९२
तत्पदाम्भोजसेवाभिर्गुणप्रस्तावतोऽपि वा ।
तद्भक्त्या यः क्षणो नीतो ध्यानेन पूजयाथवा ॥ ९३
तत्रापि मङ्गलं सर्व्वं हृष्ट आयुर्व्यवस्थितम् ।
विघ्नश्च हृदि सन्तापस्तद्विच्छेदे सदोद्धव ॥ ९४
क्रीडाप्रीतिर्न भविता तादृशी वा पुनर्मम ।
तादृग्वा प्रेमसौभाग्यं निर्ज्जने नवसङ्गमः ॥ ९५
वृन्दावनं न यास्यामि तत्सङ्गे पुनरुद्धव ।
चन्दनं वा न दास्यामि नन्दनन्दनवक्षसि ।
मालां तस्मै न दास्यामि न द्रक्ष्यामि मुखाम्बुजम् ॥ ९६
मालतीनां केतकीनां चम्पकानाञ्च काननम् ।
पुनरेव न यास्यामि सुन्दरं रासमण्डलम् ॥ ९७
हरिसङ्गे न यास्यामि रम्यं चन्दनकाननम् ।
माधवीनां वनं रम्यं रहस्यं मधुकाननम् ॥ ९८
पुनर्न विहरिष्यामि निर्ज्जने यमुनाजले ।
कृष्णेन सार्द्धं सखीभिरथ क्रीडासरोवरे ॥ ९९
पुनरेव न यास्यामि मलयं रत्नमन्दिरम् ।
श्रीखण्डकाननं रम्यं स्वच्छं चन्द्रसरोवरम् ॥ १००
विस्यन्दनं सुवदनं नन्दकं पुष्पभद्रकम् ।
भद्रकं हरिणा सार्द्धं न यास्यामि पुनः पुनः ॥ १०१
क्व सा रम्या विकसिता माधवे माधवीलता ।
क्व गता माधवी रात्रिः क्व मधुः क्वापि माधवः ॥ १०२
इत्येवमुक्त्वा सा राधा ध्यात्वा कृष्णपदाम्बुजम् ।
पुनर्मूर्च्छाञ्च सम्प्राप रुदित्वा च शुचान्विता ॥ १०३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## चतुर्नवतितमोऽध्यायः।

नारायण उवाच।

उद्धवो विस्मयं प्राप्य भयञ्च विपुलं मुने।
चेतनां कारयामास तामुवाच मृतामिव ॥ १
तद्भक्तिं समभिज्ञाय स्वात्मानं भक्तसंज्ञकम्।
तुच्छं मेने जगत् सर्व्वं दृष्ट्वा भाग्यवतीं सतीम् ॥ २

उद्धव उवाच।

चेतनां कुरु कल्याणि जगन्मातर्नमोऽस्तु ते।
स्वमेव प्राप्तानं सर्व्वं कृष्णं द्रक्ष्यसि साम्प्रतम् ॥ ३
त्वत्तो विश्वं पवित्रञ्च त्वत्पादरजसा मही।
सुपवित्रा सदुद्धारा पुण्यवत्यश्च गोपिकाः ॥ ४
लोकास्त्वामेव गास्यन्ति सङ्गीतैर्मङ्गलान्वितैः।
त्वत्सुकीर्त्तिञ्च वेदाश्च सनकाद्याश्च सन्ततम् ॥ ५
कृतपापहरां रम्यां तीर्थपूताञ्च निर्म्मलाम्।
हरिभक्तिप्रदां भद्रां सर्व्वविघ्नविनाशिनीम् ॥ ६
त्वमेव राधा त्वं कृष्णस्त्वं कृता प्रकृतिः परा।
राधा-माधवयोर्भेदो न पुराणे श्रुतौ तथा ॥ ७
राधिकां मूर्च्छितां दृष्ट्वा पश्चात् कृत्वा तमुद्धवम्।
उवाच माधवी गोपी राधायाः पुरतः स्थिता ॥ ८

माधव्युवाच।

किं वा स्मरसि कृष्णस्य रूपं वा वेशमुत्तमम्।
किं सुखं विभवं किं वा गौरवं वाप्यनुत्तमम् ॥ ९
किं वा तद्वीर्य्यमैश्वर्य्यं शौर्य्यं वा दुरतिक्रमम्।
किं वा सिद्धं प्रसिद्धं वा किं वा तस्य गुणोत्तमम्॥१०
कुतो वा कुत आयातः पुनरेव कुतो गतः।
बालको गोपवेशश्च न हि राजात्मजः पुमान् ॥ ११
त्वं किं स्मरसि कल्याणि गोपालं नन्दनन्दनम्।
आत्मानं रक्ष यत्नेन कः प्रियः स्वात्मनः परः ॥ १२

मालत्युवाच।

धिक् त्वां राधेऽतिनिर्लज्जां तवैव जीवनं वृथा।
जगती युवतीनाञ्च करोषि स्वयशःक्षयम् ॥ १३
यत्नेन चक्षुषोर्वारि सखि संवरणं कुरु।
अन्तरे पतिभावञ्च सङ्गोप्य भावनं कुरु ॥ १४
न हि जातिश्च शत्रूणां मित्राणाञ्च सुरेश्वरि।
शत्रुः कार्य्यवशेनैव मित्रञ्च कर्म्मणा भवेत्।
स्वकार्य्यमुद्धरेत् प्राज्ञः कार्य्यध्वंसेन मूर्खता ॥ १५
कः कस्य वल्लभो राधे कः कस्याप्रिय एव वा।
कार्य्यञ्च समयं ज्ञात्वा सन्तः कुर्व्वन्ति सन्ततम् ॥ १६
शत्रुर्धनापहा नृणां प्राणहर्त्ता ततः परः।
कटुवक्ता दुःखदाता शत्रूणां लक्षणं शृणु ॥ १७
स्वकुलात् त्वां वहिष्कृत्य विसृज्य शोकसागरे।
स्वच्छीला चेतनां प्राणान् निष्ठुरो दारुणो गतः ॥१८
त्वं किं स्मरसि हे मूढ़े (क) त्यज शोकं सुदारुणम्।
आत्मानं रक्ष यत्नेन कः प्रियः स्वात्मनः परः ॥ १९

पद्मावत्युवाच।

भवत्या कथितं सर्व्वं यमुनाजलसन्निधौ।
अरसस्य रतीभूतं नारीणां न सुखं प्रिये ॥ २०
विद्युच्छटा जले रेखा खलानां प्रीतिरेव च।
न नीतिर्नीतिशास्त्रेषु स्वविश्वासः खलेषु च ॥ २१
यदा त्वं यमुनाकूले मुखं वीक्ष्य हरेरहो।
सस्मितं सकटाक्षञ्च पुनः कृत्वास्यगोपनम् ॥ २२
पुनः पुनस्तं संवीक्ष्य त्वया त्यक्तञ्च चेतनम्।
गृहकार्य्यं गुरुभयं सखीनां वचनं शुभम् ॥ २३
सन्ततं ध्यायसे कृष्णं नाहारं जीवनं तथा।
क्व कृष्णो मथुरायाञ्च क्वापि त्वं कदलीवने ॥ २४
सद्यो यदि त्यजेः प्राणान् नाविर्भवति सोऽधुना।
काले द्रक्ष्यसि स्वात्मानं यदि रक्षसि सुन्दरि ॥ २५

चन्द्रमुख्युवाच।

प्राप्तानेन शुभं सर्व्वं सुखञ्च विभवश्चिरम्।
दुःखं शोकः प्राप्तानेन विपत् सम्पच्च साम्प्रतम् ॥ २६
भारते पुण्यभूमौ च सर्व्वेषामीप्सिते वरे।
लेभे पतिं हरिपरं तपसा प्रकृतिः परम् ॥ २७
तथापि प्रदहेन्नालं कामवाणेन साम्प्रतम्।
अस्याः शत्रुः कथं चन्द्रो मधुर्वा मधुमाधवौ ॥ २८
शङ्करेण प्रदग्धोऽभूत् पुनरेव स मन्मथः।
चन्द्रं ग्रसति राहुश्च पुनश्चोद्गमनं तथा ॥ २९
मधुश्च मित्रशोकेन प्राणांस्त्यक्त्वा ययौ यमम्।
सुधासिन्धुश्च द्वन्द्वयों विषसिन्धुश्च मां प्रति ॥ ३०
सुवेशश्च ज्वलद्वह्निश्चन्दनं तद्वृताङ्गतिः।
सन्ततं प्रदहेन्नालं सुगन्धश्च समीरणः ॥ ३१
त्यक्ताहारा मम सखी पश्य श्वसिति जीवति।
प्रशंसां कुरु कृष्णस्य मूढ़े न कुरु निन्दनम् ॥ ३२

(क) मुग्धे इत्यपि पाठः क्वचित्।

तन्नामस्मृतिमात्रेण तद्गुणश्रवणेन च।
तदात्मिका च शुभया सहसा चेतना भवेत्॥ ३३

अम्बिकोवाच।

त्वं किं माधवि जानासि कृष्णमात्मानमीश्वरम्।
यं तं ब्रह्मादयो देवा वेदाश्चत्वार एव च॥ ३४
ध्यायन्ति सन्ततं सन्तः पादपद्मं सुरेप्सितम्।
पद्मा सरस्वती दुर्गा सोऽनन्तोऽपि महेश्वरः॥ ३५
यं न जानन्ति सिद्धेन्द्रा मुनीन्द्रा मनवस्तथा।
सर्व्वात्मनः कुतो रूपं निर्गुणस्य कुतो गुणाः॥ ३६
सत्यमुक्तञ्च सत्यस्य यद्यदेव यथोचितम्।
अन्ते भारावतरणे पृथिव्याश्च मनोहरम्।
सुखमाह्लादकं रम्यं भक्तानुग्रहविग्रहम्॥ ३७
किमनिर्व्वचनीयञ्च रूपं जनमनोहरम्।
कोटिकन्दर्पलावण्य-लीलाधाम शुभाश्रयम्॥ ३८
यत्पादपद्ममधुरमधु मन्दाकिनीजलम्।
दधे शिरसि भक्त्या च सर्व्वेशः शङ्करः परः॥ ३९
शश्वत् करोति वैरागी तीर्थकीर्त्तेश्च कीर्त्तनम्।
हर्षो नृत्यति भक्त्या च पञ्चवक्त्रेण गायति॥ ४०
आहारं भूषणं वस्त्रं परित्यज्य दिगम्बरः।
ब्रह्मज्योतिःस्वरूपञ्च ध्यात्वा शुभ्रं सुनिर्म्मलम्॥ ४१
ब्रह्मा च तपसा जन्म न यात्येव हि सेवया।
शेषः सनत्कुमारश्च सिद्धसङ्घश्च योगवित्॥ ४२

सुशीलोवाच।

निर्म्मञ्छनार्हं न भवेत् तस्य कामशतं शतम्।
चन्द्रोऽश्विनीकुमारो वा रूपेषु केन गण्यते॥ ४३
असंख्येषु च विश्वेषु ब्रह्म-विष्णु-शिवादयः।
मुनयो मनवः सिद्धा भक्ताः सन्तश्च सन्ततम्।
ध्यायन्ते यत्पदाम्भोजं निर्गुणस्यात्मनश्च वै॥ ४४
वेदाः स्तोतुं न शक्ताश्च यमीशञ्च सरस्वती।
जड़ीभूता च भीता च स्तवने न क्षमा भवेत्॥ ४५
सहस्रवक्त्रः स्तवने कम्पितश्च निरन्तरम्।
वेदानां जनको ब्रह्मा यस्य स्तोत्रे न हीश्वरः॥ ४६
तं सत्यं नित्यमीशञ्च माधवी परिनिन्दति।
अपवित्रा सभा भूता गोपीनां जीवनं वृथा।
तासु पुण्यवती राधा ध्यायते तं दिवानिशम्॥ ४७
यन्नामस्मृतिमात्रेण कोटिजन्मार्ज्जितं सखि।
कृतपापं भयं शोकः प्रणश्यति न संशयः॥ ४८

रत्नमालोवाच।

दधार वामहस्तेन शैलं गोवर्द्धनं हरिः।
ततः किं तद्यशः शौर्य्यं जगतां जनकस्य च॥ ४९
शैलानाञ्च सहस्रं यो भङ्क्तुं शक्तश्च दैत्यराट्।
लीलामात्रेण तेषाञ्च लक्षं हन्तुं क्षमो हरिः॥ ५०
यदंशकलया जातः शूकरो विष्णुरीश्वरः।
वसुधां दशनाग्रेण चोद्दधार च लीलया॥ ५१
शैलानाञ्च सहस्राणि यत्र सन्ति महीतले।
दैत्येशानामसंख्याश्च वीराः शूरास्तथैव च॥ ५२
तेनैव कर्म्मणा तस्य न शौर्य्यं न च पौरुषम्।
न यशश्च प्रशंसा वा सखि सर्व्वान्तरात्मनः॥ ५३

पारिजातोवाच।

सप्तद्वीपा च वसुधा सशैलवनसागरा।
काञ्चनीभूमिसहिता सर्व्वाधारा मनोहरा॥ ५४
सप्त स्वर्गाश्च विविधा ब्रह्मलोकावधि प्रिये।
विचित्राः सुन्दराश्चैव पातालानाञ्च सप्तभिः॥ ५५
एतैः परिमितं विश्वं ब्रह्माण्डं ब्रह्मणा कृतम्।
महाविष्णोर्लोमकूपे तदेवञ्चाणुवत् स्थितम्॥ ५६
तस्य यावन्ति लोमानि तानि विश्वानि सन्ति च।
स एव षोड़शांशश्च कृष्णस्य परमात्मनः॥ ५७
तस्यैव किं यशः शौर्य्यं महिमानमनुत्तमम्।
यत्स्तरी गोपकन्या च किं वा जानाति माधवी॥ ५८

माधव्युवाच।

मया यदुक्तं न ज्ञात्वा मूढ़ा जल्पन्ति गोपिकाः।
उद्धव शृणु महाक्यं यन्मया कथितं शुभम्॥ ५९
स्वेच्छया सगुणो विष्णुः स्वेच्छया निर्गुणो भवेत्।
भुवो भारावतरणे गोपवेशः शिशुविभुः॥ ६०
यदि वेदाः पुराणानि सिद्धाः सन्तश्च सन्ततम्।
ब्रह्मेश-शेष-भक्ताश्च न जानन्ति यमीश्वरम्।
तं किं जानामि मूढ़ाहं घस्मरी गोपकन्यका॥ ६१
तथापि मद्वचः सत्यं श्रूयतां वत्स तत्त्वणम्।
किमनिर्व्वचनीयस्य वर्त्तते तद्विशेषणम्॥ ६२
निर्गुणस्य च विष्णोश्च देहहीनस्य स्वात्मनः।
वर्त्तते च किमाख्येयं तस्य रूपादिकञ्च किम्॥ ६३
मां निन्दति महामूढ़ा न बुद्धा वचनं मम।
एषा जानाति किं मूढ़ा तं सत्यं प्रकृतेः परम्॥ ६४
ज्योतिःस्वरूपं परमं परमात्मानमीश्वरम्।

तमनिर्व्वचनीयञ्च भक्तानुग्रहविग्रहम् ॥ ६५
यत्पादपद्मं पद्मा सा त्रैलोक्यजननी परा।
सेवते कम्पिता भीता दासीव सततं भिया ॥ ६६
विष्णुमाया च प्रकृतिर्मूलरूपा सनातनी।
ब्रह्मस्वरूपा परमा भीता दक्षिणपार्श्वतः ॥ ६७
सरस्वती जड़ीभूता भीता च परमेश्वरी।
स्तोतुं न शक्ता वेदाः किं स्तुवन्ति परमेश्वरम् ॥६८

नारायण उवाच।

तासां तद्वचनं श्रुत्वा चोद्धवो भक्तिविह्वलः।
पुलकाञ्चितसर्व्वाङ्गो रुरोद च पपात च ॥ ६९
मूर्च्छां सम्प्राप भक्त्या च ध्यात्वा तं परमेश्वरम्।
तुच्छं मेने स आत्मानं गोपीभक्त्याप्युवाच सः ॥७०

उद्धव उवाच।

धन्यं प्रशस्यं द्वीपानां जम्बूद्वीपं मनोहरम्।
यत्र भारतवर्षञ्च पुण्यदं शुभदं तथा ॥ ७१
वणिजाञ्च पुण्यकृतां वाणिज्यस्थलमीप्सितम्।
अत्र कृत्वा सुपुण्यञ्च भुङ्क्तेऽन्यत्र शुभं फलम् ॥ ७२
धन्यं भारतवर्षञ्च पुण्यदं शुभदं वरम्।
गोपीपादाब्जरजसा पूतं परमनिर्म्मलम् ॥ ७३
ततोऽपि गोपिका धन्या मान्या योषित्सु भारते।
नित्यं पश्यन्ति राधायाः पादपद्मं सुपुण्यदम् ॥ ७४
षष्टिं वर्षसहस्राणि तपस्तप्तञ्च ब्रह्मणा।
राधिकापादपद्मस्य रेणूनामुपलब्धये ॥ ७५
गोलोकवासिनी राधा कृष्णप्राणाधिका परा।
तत्र श्रीदामशापेन वृकभानुसुताऽधुना ॥ ७६
ये ये भक्ताश्च कृष्णस्य देवा ब्रह्मादयस्तथा।
राधायाश्चापिगोपीनां कलां नार्हन्ति षोड़शीम् ७७
कृष्णभक्तिं विजानाति योगीन्द्रश्च महेश्वरः।
राधा गोप्यश्च गोपाश्च गोलोकवासिनश्च ये ॥ ७८
किञ्चित् सनत्कुमारश्च ब्रह्मा चेद्विषयी तथा।
किञ्चिदेव विजानन्ति सिद्धा भक्ताश्च निश्चितम् ॥ ७९
धन्योऽहं कृतकृत्योऽहमागतो गोकुलं यतः।
गोपिकाभ्यो गुरुभ्यश्च हरिभक्तिं लभेऽचलाम् ॥ ८०
मथुराञ्च न यास्यामि तीर्थकीर्त्तिश्च कीर्त्तनम्।
श्रोष्यामि किङ्करो भूत्वा गोपीनां जन्मजन्मनि ॥८१
न हि गोपीपरो भक्तो हरेश्च परमात्मनः।
यादृशीं लेभिरे गोप्यो भक्तिं नान्ये च तादृशीम् ॥८२

कलावत्युवाच।

पितॄणां मानसी कन्या धन्या मेना कलावती।
वयं तिस्रो भगिन्यश्च भ्रमामः पृथिवीतले ॥ ८३
धन्या जनकपत्नी च सीतामाता पतिव्रता।
अयोनिसम्भवा सीता धन्या चायोनिसम्भवा ॥ ८४
हिमालयप्रिया मेना दुर्गामाता च सुव्रता।
अयोनिसम्भवा दुर्गा मेनका च तपस्विनी ॥ ८५
वृकभानप्रियाहञ्च राधामाताप्ययोनिजा।
अयोनिसम्भवा राधा अहञ्चायोनिसम्भवा ॥ ८६
राधा श्रीदामशापेन वृकभानसुता भुवि।
सनत्कुमारशापेन वयमेव महीतले ॥ ८७
क्षीरोदसागरं रम्यं श्वेतद्वीपं मनोहरम्।
तिस्रो भगिन्यो भक्त्या च विष्णुं द्रष्टुं गता वयम् ॥८८
अभ्युत्थानादि न कृतं कोपात्तस्मान् शशाप सः।
सनत्कुमारो भगवान् योगीन्द्राणां गुरोर्गुरुः ॥ ८९

सनत्कुमार उवाच।

मूढ़ास्तिष्ठत भूमौ च पुनः स्वर्गं न यास्यथ।
मर्त्यप्राणिप्रिया भूत्वा चाहङ्कारेण हेतुना ॥ ९०
पुनर्वरञ्च प्रत्येकं ददौ तुष्टो द्विजेश्वरः।
विष्णोरंशस्य शैलस्य हिमाधारस्य कामिनी।
ज्येष्ठा भवतु तत्कन्या भविष्यत्येव पार्व्वती ॥ ९१
धन्या प्रियाप्यु भवतु योगिनो जनकस्य च।
तस्य कन्या महालक्ष्मीः सीता देवी भविष्यति ॥९२
वृकभानस्य वैश्यस्य योगिनां प्रवरस्य च।
दुर्व्वाससश्च शिष्यस्य कनिष्ठा च कलावती।
भविष्यति प्रिया साध्वी द्वापरान्ते च गोकुले ॥ ९३
कलावतीसुता राधा देवी गोलोकवासिनी।
श्रीदामगोपशापेन भविष्यति न संशयः ॥ ९४
ईशो ब्रह्मेशशेषाणां भारावतरणेन च।
आगमिष्यति पृथ्वीञ्च पुण्यक्षेत्रञ्च भारतम् ॥ ९५
कलावती वृकभानः कौतुकात् कन्यया सह।
जीवन्मुक्तश्च गोलोकं गमिष्यति न संशयः ॥ ९६
धन्या च सीतया सार्द्धं वैकुण्ठञ्च गमिष्यति।
मेनका योगिनी सिद्धा पार्व्वत्या च (क)वरेण च ॥९७
तेन देहेन वैकुण्ठं गमिष्यति क्रमेण च।
कल्पान्ते विष्णुलोके च लक्ष्मीवन्मोदते चिरम् ॥ ९८

(क) पार्व्वत्याश्चेति पाठान्तरम्।

विना विपत्त्या महिमा केषां कुत्र भविष्यति।
कस्मिंश्चिद्गते दुःखे प्रभवेद्दुर्लभं सुखम्॥ ९९
पुरा पितॄणां कन्याश्च स्वर्गभोगविलासकाः।
लक्ष्मीसमा वरेणापि विप्रस्य विष्णुदर्शनात्॥ १००
कर्मिन्दयश्चाप्यस्माकं बभूव विष्णुदर्शनात्।
दुःखेन तेन तीव्रेण कुमारस्यापि दर्शनम्॥ १०१
श्रुतं तत्र कुमारास्याज्ज्ञानं परमदुर्लभम्।
ब्रह्म-विष्णु-शिवादीनां सिद्धानां जगतामपि॥ १०२
ईश्वरः परमात्मा च श्रीकृष्णः प्रकृतेः परः।
निर्गुणश्च निरीहश्च परः स्वेच्छामयो वरः॥ १०३
तुलस्युवाच।
प्राणा विष्णुश्च विषयी मनो ब्रह्मा च चेतना।
प्रकृतिर्बुद्धिरूपा च सर्व्वशक्त्यधिदेवता॥ १०४
ज्ञानस्वरूपः शम्भुश्च स्वयं धर्म्मश्च पूरुषः।
निर्गुणः परमात्मा च तद्ब्रह्म प्रकृतेः परः॥ १०५
स एव कृष्णः साक्षी च कर्म्मणां जीविनामपि।
भोक्ता च सुखदुःखानां जीवस्तत्प्रतिबिम्बकः॥१०६
चक्षुषोश्चन्द्रसूर्य्यौ च जिह्वायाश्च सरस्वती।
वसुन्धरा त्वचि सदा वाह्वोस्ते लोकपालकाः॥१०७
आत्मनश्चापि ते सर्व्वे परिचारकरूपिणः।
आत्मन्येवाश्रयन्ते च सर्व्वे गच्छन्ति जीविनः।
यथा संसदि संसारे सर्व्वे देवाः शिवानुगाः॥ १०८
तस्मात् सर्व्वान्तरात्मानं भजन्ति सततं (क) सदा।
सन्तश्च परया भक्त्या ध्यायन्ते योगिनो मुदा॥१०९
कस्मिंश्चित् कर्म्मणां साक्षी कुतः कर्म्म च गोपनम्।
अन्तर्यामी च कृष्णश्च प्रचारं कुरुते मुदा॥ ११०
कालिकोवाच।
नरा बालाश्च वृद्धाश्च युवानस्त्रिविधास्तथा।
देवादयश्च ये सिद्धाः सर्व्वे जानन्ति तं परम्॥ १११
साम्प्रतं मूर्च्छितां राधां युक्त्या बोधयितुं बुध।
अत्र युक्तिः प्रधाना च तां प्रबोधय चोद्धव॥ ११२
उद्धव उवाच।
चेतनं कुरु कल्याणि जगन्मातर्निबोध माम्।
उद्धवं कृष्णभक्तस्य किङ्करस्यापि किङ्करम्॥ ११३
प्रसादं कुरु मातर्मां यास्यामि मथुरां पुनः।
न स्वतन्त्रः पराधीनो योषा दारुमयी यथा॥११४
यथा वृषौ वशीभूतौ वृषवाहस्य सन्ततम्।
तथा मातर्जगत् सर्व्वं जगन्नाथस्य निश्चितम्॥११५
इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे राधोद्धव-
संवादे चतुर्नवतितमोऽध्यायः॥९४॥

---

## पञ्चनवतितमोऽध्यायः।

नारायण उवाच।
उद्धवस्य वचः श्रुत्वा चेतनं प्राप्य राधिका।
सा चोवास समुत्थाय रत्नसिंहासने वरे॥ १
उवाच मधुरं देवी हृदयेन विदूयता।
गोपीभिः सप्तभिर्भक्त्या सेविता श्वेतचामरैः॥ २
राधिकोवाच।
मथुरां गच्छ वत्स त्वं मात्रेदिस्मरणं सदा।
अतोऽप्यधर्म्मो नास्त्येव भवतां भवसागरे॥ ३
मदीयं वचनं सर्व्वं गत्वा कथय साम्प्रतम्।
श्रीकृष्णं परमानन्दं शीघ्रमानय मत्प्रभुम्॥ ४
योषिज्जन्मनि योषित्सु सम्प्राप्य तादृशं पतिम्।
भेदो बभूव कस्या वा मदन्या कापि दुःखिनी॥ ५
किं ददासि प्रबोधं मे नास्ति मे बोधनोचितम्।
निष्फलं देहिनां देहो विनात्मानं सदोद्धव॥ ६
सम्प्रीत्या सह सौभाग्यं गौरवं नित्यनूतनम्।
अतीव दुर्लभं प्रेम रहस्यं नवसङ्गमम्॥ ७
स्मरामि मनसा शश्वन्नान्यो मनसि वर्त्तते।
रात्रौ निद्रां परित्यज्य स्मरणं शोकवर्द्धनम्॥ ८
मामुद्धर ध्रुवं वत्स निमग्नां शोकसागरे।
जीवाभयप्रदानेन तीर्थस्नानफलं नृणाम्॥ ९
बोधयितुं न शक्नोमि दुर्निवारञ्च मानसम्।
चिन्तयेच्चरणाम्भोजं कृष्णस्य परमात्मनः॥ १०
तद्गुणं महिमानञ्च प्रीतिञ्च प्रेमसागरम्।
स्मारं स्मारञ्च सौभाग्यं मनो मे न स्थितं चलम्॥ ११
जगतां युवतीनाञ्च कासां वा दुःखमीदृशम्।
श्रीकृष्णभेददुःखञ्च को वा जानाति मां विना॥ १२
किञ्चिज्जानाति सीता साध्यहञ्च विधिबोधितम्।
मत्परा दुःखिनी नास्ति कामिनीषु जगत्त्रये॥ १३
का वा याति प्रतीतिं मे श्रुत्वा च मानसीं व्यथाम्।

(क) सम्यक् ततं सर्व्वथाप्यिणमित्यर्थः।

कासां वा मत्समं दुःखं युवतीनां सुतोद्धव ॥ १४
राधिकासदृशी स्त्रीषु न भूता न भविष्यति ।
दुःखिनी विरहोन्मत्ता सुखसौभाग्यवर्ज्जिता ॥ १५
सम्प्राप्य कल्पवृक्षञ्च पतिञ्च जगतां पतिम् ।
वञ्चिताहं विधात्रा च निर्द्दयेन च पापिनी ॥ १६
जीवनं सफलं जन्म सुस्निग्धं चक्षुषा मनः ।
यत्पादपद्मनखेन्दु-रूपविम्बप्रदर्शनात् ॥ १७
यन्नामश्रुतिमात्रेण पञ्च प्राणाः प्रहर्षिताः ।
स्मृतिमात्रात् प्रफुल्लैस्तैरात्मा सुस्निग्ध एव च ॥ १८
यस्योपस्पर्शसुरतौ यशस्त्रिभुवनेष्वपि ।
कया वा सम्पदा वत्स विस्मरामि तमीश्वरम् ॥ १९
त्रैलोक्यविजयं रूपं गुणमेव बिभर्त्ति यः ।
न निर्म्मितो यो विधिना तेनैव निर्म्मितो विधिः ॥ २०
तं विधेश्च विधातारं दातारं सर्व्वसम्पदाम् ।
कल्पवृक्षात् परं शान्तं लक्ष्मीकान्तं मनोहरम् ॥ २१
सर्व्वेशं सर्व्वबीजञ्च परमात्मानमीश्वरम् ।
कया वा सम्पदा तात विस्मरामि च तं पतिम् ॥ २२
यस्य निर्म्मञ्छनार्हश्च न चन्द्रो न च मन्मथः ।
नैवाश्विनीकुमारश्च गुणसाम्यो न विश्वतः ॥ २३
ध्यायन्ते यत्पदाम्भोजं ब्रह्मेशशेषसंज्ञकाः ।
कया वा सम्पदा तात विस्मरामि च तं प्रभुम् ॥ २४
स्वप्ने पश्यन्ति ये रूपमतुलञ्च मनोहरम् ।
तेऽपि सर्व्वं परित्यज्य ध्यायन्ते तमहर्निशम् ॥ २५
गुणेन शैलः (क) सलिलं शुष्ककाष्ठं द्रवेदिति ।
मत्तद्वचो मुकुलितस्तम्भितश्च समीरणः ॥ २६
सूर्य्यश्च जलधिश्चैव स्थगितो भक्तिभावतः ।
कया वा सम्पदा पुत्र विस्मरामि च तं प्रियम् ॥ २७
यद्भयाद्वाति वातोऽयं सूर्य्यस्तपति यद्भयात् ।
वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति जन्तुषु ॥ २८
यद्भयात् फलिनो वृक्षाः पुष्पिताः समयेऽपि च ।
समुद्राः स्वात्मविषये ब्रह्माद्य मुनयः सुराः ॥ २९
कालस्य कालः संहर्त्तुः संहर्त्ता स्रष्टुरीश्वरः ।
स्वाधीनश्च स्वतन्त्रश्च स्वयमेवात्मसंज्ञकः ॥ ३०
कया वा सम्पदा भक्त विस्मरामि च तं प्रभुम् ।
प्रबोधो नास्ति तद्भेदे येन मां बोधयेद्बुधः ॥ ३१
माञ्च बोधयितुं शक्ता न सावित्री सरस्वती ।

(क) गुणेन चैवं सलिलमिति पाठः क्वचित् ।

न वेदा न च वेदाङ्गाः के वा सन्तश्च के सुराः ॥ ३२
सहस्रवक्त्रोऽनन्तश्च वेदानां जनको विधिः ।
न शम्भुन गणेशश्च योगीन्द्राणां गुरोर्गुरुः ॥ ३३
स्थितेगतिश्चिन्तनीया मार्गशून्ये कुतो गतिः ॥ ३४
कालसाध्यञ्च सर्व्वञ्च सुख-दुःखं शुभाशुभम् ।
दुर्निवारः स कालश्च कालसाध्यं जगत् सुत ॥ ३५
उत्तिष्ठ मथुरां गच्छ सुखं वत्स मनोहरम् ।
व्रजवासं परित्यज्य भवांश्च गमनोन्मुखः ॥ ३६
सुचिरं कृष्णविच्छेदो दुःखाय च सुखाय च ।
पश्य चन्द्रमुखं तस्य जन्म-मृत्यु-जराहरम् ॥ ३७
राधिकावचनं श्रुत्वा रुरोद भृशमुद्धवः ।
रुदतीं राधिकां दृष्ट्वा बन्धुविच्छेदकातराम् ॥ ३८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे राधोद्धव-
संवादे पञ्चनवतितमोऽध्यायः ॥ ९५॥

---

## षण्णवतितमोऽध्यायः ।

नारायण उवाच ।

श्रीकृष्णस्मरणं कृत्वा गमनोन्मुखमुद्धवम् ।
नतं राधापदाम्भोजे शिरसा पुलकान्वितम् ॥ १
उवाच माधवी गोपी रुदती प्रेमविह्वला ।
भक्तं रुदन्तमुच्चैश्च राधाविच्छेदकातरम् ॥ २

माधव्युवाच ।

उद्धव शृणु वक्ष्यामि क्षणं तिष्ठ यथोचितम् ।
निगूढ़ं परमं ज्ञानं यत् ते मनसि वाञ्छितम् ॥ ३
सुदुर्लभं पुराणेषु वेदेषु गोपनीयकम् ।
प्रश्नं कुरु महाभाग राधिकां त्रिजगत्प्रसूम् ॥ ४
इत्युक्त्वा तत्र गोपी सा समुवास सुसंसदि ।
उवाच मधुरं शान्तामुद्धवश्चापि राधिकाम् ॥ ५

उद्धव उवाच ।

एकाकी भवमायाति यात्येकाकी पुनः पुनः ।
प्राणी कर्म्मानुरोधेन स्वकर्म्मफलभुक् पुमान् ॥ ६
कर्म्मणा जायते जन्तुः कर्म्मणैव प्रलीयते ।
सुखं दुःखं भयं शोकं कर्म्मणैव प्रपद्यते ॥ ७
जन्तुर्भोगावशेषेण भोगं भुङ्क्ते भवेषु च ।
पुनश्च कर्म्मणो भोगात् समायाति च याति च ॥ ८

रत्नादिकञ्च यत् किञ्चिन्मह्यं दत्तं त्वया सति ।
मया सार्द्धं न यात्येव तेन मे किं प्रयोजनम् ॥ ९
भवाब्धितारणे देवि भवती रमणीवरा ।
कर्णधारः स्वयं कृष्णः सर्व्वेषां पारकारकः ॥ १०
किञ्चिज्ज्ञानं देहि मह्यं भवाब्धिपारकारणम् ।
प्राप्य प्रसादं यास्यामि मथुरां कृष्णमूलकम् ॥ ११
यां यां कालगतिं मातः सुराणाञ्च नृणामपि ।
पितृणां ब्रह्मलोकस्य तदूर्द्धस्य च तां वद ॥ १२
तामेव दुस्तरां घोरां तीर्त्वा यामि हरेः पदम् ।
एवम्भूतमुपायञ्च देहि मे कमलालये ॥ १३
दूरतो यत्पदाम्भोजं ध्यायन्ते च दिवानिशम् ।
देवा ब्रह्मेशशेषाद्यास्त्वं तद्वक्षःस्थलस्थिता ॥ १४
उद्धवस्य वचः श्रुत्वा जहास कमलालया ।
वाससा नेत्रनीरञ्च संमार्ज्य तमुवाच सा ॥ १५
माधवीवचनेनैव करोषि प्रश्नमुद्धव ।
स्त्रीजातिरबला लोला किं वा ज्ञानं ददामि ते॥१६
शुद्धां कालगतिं वत्स जानाति भगवान् हरिः ।
ब्रह्मा महेशः शेषश्च वेदाश्चत्वार एव च ।
किञ्चिद्वेदानुसारेण सन्तो जानन्ति पुत्रक ॥ १७
श्रुता या कृष्णवक्त्रेण गोलोके रासमण्डले ।
गोलोके चापि वैकुण्ठे ब्रह्मलोके च साम्प्रतम् ।
या च दृष्टा कालगतिस्तामेव कथयामि ते ॥ १८
नृणां पितृणां देवानां ब्रह्मलोकादिकस्य च ।
वह्निर्लोकस्य ब्रह्माण्डात् पातालानाञ्च निश्चितम्॥१९
दुरत्ययां कालगतिं येनोपायेन पण्डिताः ।
निस्तरन्ति बुधश्रेष्ठ कथयामि निशामय ॥ २०

राधिकोवाच ।

भजन्ति जगतां नाथं कालकालं जगद्गुरुम् ।
निर्गुणञ्च निरीहञ्च परमात्मानमीश्वरम् ॥ २१
सद्यः पतति देहोऽयं विना येन सदात्मना ।
तं निषेव्य कालगतिं तरन्त्येव हि केवलम् ॥ २२
आयुर्हरति सर्व्वेषां प्राणिनां रविरेव सः ।
श्रीहरेः शुद्धभक्तानां सतां पुण्यवतां विना ॥ २३
विधेर्मानसिकान् पुत्रान् चतुरः पश्य पुत्रक ।
सनकादीन् भागवतान् येषाञ्च सुस्थिरं वयः ॥ २४
सदाद्यान् वयसा नित्यान् ज्ञानिनाञ्च गुरोर्गुरून् ।
बालाननुपनीतांश्च पञ्चवर्षशिशून् यथा ॥ २५
अत्यन्तरमहाक्षीणान् वर्जितांश्च दिगम्बरान् ।
श्रीकृष्णध्यानपूतांश्च तीर्थपूतांश्च वैष्णवान् ॥ २६
वेदवेदाङ्गशास्त्राणां चिन्ताहीनान् प्रफुल्लितान् ।
भक्त्या दिवानिशं शश्वद्धरिभावनतत्परान् ॥ २७
बाह्यपूजाविहीनांश्च पूजामानसिकांस्तथा ।
मृत्युञ्जयान् महाभागान् कालव्यालजितांस्तथा॥२८
सनकञ्च सनन्दञ्च तृतीयञ्च सनातनम् ।
परं सनत्कुमारञ्च ये स्मरन्ति च नित्यशः ॥ २९
तीर्थस्नानफलं लब्ध्वा कृतपापात् प्रमुच्यते ।
हरिभक्तिर्भवेत् तेषां हरिदास्यं लभन्ति ते ॥ ३०
मृकण्डोर्बालकं पश्य कर्म्मणा च द्विजोत्तमम् ।
दशवर्षायुषं तीव्रं ज्वलन्तं ब्रह्मतेजसा ।
हरिसेवनतः पश्चात् सप्तकल्पान्तजीवनम् ॥ ३१
वोढं पञ्चशिखं पश्य लोमशञ्चासुरिं तथा ।
सर्व्वकर्म्मविहीनञ्च हरिसेवनतत्परम् ।
शतकल्पायुषञ्चैव ध्यायमानं हरेः पदम् ॥ ३२
जमदग्नेः सुतं पश्य रामं तं चिरजीविनम् ।
हनूमन्तं बलिं व्यासमश्वत्थामानमेव च ॥ ३३
विभीषणं कृपं विप्रं जाम्बवन्तञ्च भल्लुकम् ।
हरिभावनया चैते शुद्धाः सुचिरजीविनः ॥ ३४
सिद्धेन्द्रेषु मुनीन्द्रेषु नरेष्वन्येषु चोद्धव ।
हरिभावनशुद्धाश्च सर्व्वे ते चिरजीविनः ॥ ३५
प्रह्लादं पश्य दैत्येषु हिरण्यकशिपोः सुतम् ।
हरिद्विषो दुरन्तस्य हरिभावनतत्परम् ॥ ३६
चिरायुषं कालजितं पश्यान्यच्चाप्यसंख्यकम् ॥ ३७
अनेकजन्मतपसा लब्ध्वा जन्म च भारते ।
ये हरिं तं न सेवन्ते ते मूढ़ाः कृतपापिनः ॥ ३८
वासुदेवं परित्यज्य विषये निरतो जनः ।
त्यक्त्वामृतं मूढ़बुद्धिर्विषं भुङ्क्ते निजेच्छया ॥ ३९
कस्य स्त्री कस्य वा पुत्रः कस्य वा बान्धवस्तथा ।
कः कस्य बन्धुर्विपदि श्रीकृष्णेन विना भुवि ॥ ४०
तस्मात् सन्तः सदा कृष्णं भजन्त्येव दिवानिशम् ।
जन्म-मृत्यु-जरा-व्याधिहरं सर्व्वपरात्परम् ॥ ४१
कालस्य तरणोपायं भजनं परमात्मनः ।
श्रीनन्दनन्दनस्यैव परिपूर्णतमस्य च ॥ ४२
शृणु कालगतिं वत्स मदीयज्ञानगोचराम् ।
नराणाञ्च सुराणाञ्च पितृणाञ्चापि ब्रह्मणः ॥ ४३

नागानां राक्षसादीनां तत्परेषाञ्च पुत्रक।
कथयामि निश्चितार्थान् (क) सावधानं निशामय॥४४
सर्व्वस्माच्च परः स्थूलः सर्व्वाधारो महान् विराट्।
यस्य लोमसु विश्वानि चासंख्यानि च तानि च॥४५
सर्व्वस्माच्च परं सूक्ष्मं परमाणुं निशामय।
कालारम्भात्मकं सर्व्वस्यानूहं परमीप्सितम्॥४६
परमाणुद्वयेनाणुस्त्रसरेणुस्तु तत्त्रयः।
त्रसरेणुत्रिकेणापि त्रुटिरुक्ता मणीषिभिः॥४७
वेधस्त्रुटिशतेनैव त्रिवेधेन लवस्तथा।
त्रिलवेन निमेषश्च त्रिनिमेषेण च क्षणः॥४८
काष्ठा पञ्चक्षणेनैव लघुश्च दशकाष्ठया।
लघुपञ्चदशो दण्डस्तत्प्रमाणं निशामय॥४९
द्वादशार्द्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः।
स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थजलप्लुतम्॥५०
दण्डद्वये मुहूर्त्तश्च षष्टिदण्डात्मिका तिथिः।
तदष्टभागः प्रहरः प्रमाणञ्च निरूपितम्॥५१
चतुर्भिः प्रहरै रात्रिश्चतुर्भिर्दिनमेव च।
तिथिपञ्चदशेनैव पक्षमानं प्रकीर्त्तितम्॥५२
पक्षद्वयेन मासः स्याच्छुक्लकृष्णाभिधेन च।
ऋतुर्मासद्वयेनैव तत्षट्केनैव वत्सरः॥५३
वसन्तो ग्रीष्मवर्षाश्च शरद्धेमन्तशीतकम्।
वर्षाः पञ्चविधा ज्ञेयाः कालविद्भिर्निरूपिताः॥५४
संवत्सरः परिवत्सर इद्वावत्सर एव च।
अनुवत्सरोदावत्सराविति कालविदो विदुः॥५५
अब्दो द्विषट्कमासैश्च तन्नामानि शृणुष्व।
वैशाखो ज्यैष्ठ आषाढ़ः श्रावणो भाद्र एव च॥५६
आश्विनः कार्त्तिको मार्गः पौषो माघस्तु फाल्गुनः।
चैत्रस्तु चरमो ज्ञेयो वर्षशेषो निरूपितः॥५७
वसन्तश्चैत्र-वैशाख-मासयुग्मेन कीर्त्तितः।
ज्यैष्ठाषाढ़द्वयेनैव ग्रीष्मस्तु परिकीर्त्तितः॥५८
वर्षाः श्रावणभाद्रेण चाश्विने कार्त्तिके शरत्।
मार्गे पौषे च हेमन्तः शिशिरो माघफाल्गुने॥५९
अब्दस्तु चायने द्वे चैवोत्तरे दक्षिणायने॥६०
माघादिषट्कैर्विमितमुत्तरायणमीप्सितम्।
श्रावणादिमासषट्कं दक्षिणायनमेव च॥६१
माघादाषाढ़पर्य्यन्तं दिनं द्वन्द्वं क्रमेण वै।
नक्तं द्वन्द्वं श्रावणाच्च पौषपर्य्यन्तमेव च॥६२
प्रतिपत्पूर्णिमान्तश्च शुक्लपक्षः प्रकीर्त्तितः।
पूर्णिमायाः प्रतिपदश्चामावास्यान्त एव च।
कृष्णपक्षस्तु विज्ञेयो वेदविद्भिर्निरूपितः॥६३
द्वितीया च तृतीया च चतुर्थी पञ्चमी तथा।
षष्ठी च सप्तमी चैव ह्यष्टमी नवमी तथा॥६४
दशम्येकादशी चापि द्वादशी च त्रयोदशी।
चतुर्द्दशी कुहूर्यावदिदन्तु गणनं स्मृतम्॥६५
अश्विनी भरणी चापि कृत्तिका रोहिणी तथा।
मृगशीर्षस्तथार्द्रा च नक्षत्रञ्च पुनर्व्वसुः॥६६
पुष्याश्लेषा मघा चैव पूर्व्वा चोत्तरफल्गुनी।
हस्ता चित्रा तथा स्वातिविशाखा चानुराधिका॥६७
ज्येष्ठा मूला तथा ज्ञेया पूर्व्वाषाढ़ोत्तरा तथा।
श्रवणाप्यभिजिच्चैव धनिष्ठा च प्रकीर्त्तिता॥६८
ततः शतभिषा ज्ञेया पूर्व्वभाद्रपदस्तथा।
तथोत्तरस्तु विज्ञेयो रेवती चरमा स्मृता॥६९
अष्टाविंशतिनक्षत्रं कलत्रं शशिनोद्भव।
क्रमेण ताभिः सार्द्धञ्च चन्द्रस्तिष्ठति नित्यशः॥७०
सप्तविंशतिनक्षत्रं कलत्रञ्च श्रुतौ श्रुतम्।
अभिजिच्छ्रवणाच्छाया तेनाष्टाविंशतिः स्मृताः॥७१
एकदा च मधौ चन्द्रः श्रवणारामया सह।
रेमे दिवानिशं नित्यं दृष्ट्वा चित्रा चुकोप सा॥७२
छायां दत्त्वा च चन्द्राय ययौ तातान्तिकं भिया।
ततः पितरमानीय सा प्रचक्रे विभागकम्॥७३
बभूव तेन नक्षत्रमभिजिन्नामकं पुरा।
एतच्छ्रुतं कृष्णमुखाच्छ्वतशृङ्गे च पर्व्वते॥७४
नक्षत्रं कथितं वत्स तिथीनामिति नित्यशः।
योगञ्च करणञ्चैव मदेकत्र (क) निशामय॥७५
विष्कुम्भः प्रीतिरायुष्मान् सौभाग्यः शोभनस्तथा।
अतिगण्डः सुकर्म्मा च धृतिः शूलस्तथैव च॥७६
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा।
वज्रश्चासृग्व्यतीपातो वरीयान् परिघः शिवः॥७७
सिद्धः साध्यः शुभः शुक्रो ब्रह्मेन्द्रो वैधृतिस्तथा।
कीर्त्तितस्तु योगगणः करणं श्रूयतामिति॥७८
ववश्च वालवश्चैव कौलवस्तैतिलस्तथा।
गरश्च वणिजश्चापि विष्टिश्च शकुनिस्तथा।

(क) कथयामि निगढ़ार्थमिति वा पाठः क्वचित्।

(क) मदेकत्रेणेति क्वचित् पुस्तके पाठः।

चतुर्थ्याञ्चापि नागश्च किन्तुघ्न इति कीर्त्तितम्॥ ७९
नराणाञ्चापि मासेन पितॄणाञ्च दिवानिशम्।
शुक्ले तेषां दिनञ्चापि कृष्णे नक्तं प्रकीर्त्तितम्॥ ८०
वत्सरेण नराणान्तु सुराणाञ्च दिवानिशम्।
दिनं तेषामुत्तरे च नक्तञ्च दक्षिणायने॥ ८१
मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः।
मनोरायुःपरिमितं शक्रस्यायुः प्रकीर्त्तितम्॥ ८२
पञ्चविंशत्सहस्रञ्च तथा पञ्चशतं परम्।
युगानां षष्टिमधिकं नराणाञ्च प्रकीर्त्तितम्॥ ८३
कालेन तेन शक्रस्य पतनञ्च मनोस्तथा।
चतुर्द्दशेन्द्रावच्छिन्न-कालेन ब्रह्मणो दिनम्॥ ८४
एतेनैव च तद्युक्तामुक्तं धातुर्दिवानिशम्।
एवं तेषां निपातेन बोद्धव्यं तद्दिवानिशम्॥ ८५
तत्र सूर्य्यगतिर्नास्ति शक्रपातानुसारतः।
दिवानिशञ्च जानन्ति ब्रह्मलोकनिवासिनः॥ ८६
एवं त्रिंशद्दिनेनैव धातुर्मासः प्रकीर्त्तितः।
अब्दो द्वादशभिर्मासैर्वर्षं तस्य शतायुषः॥ ८७
ब्रह्मणः पतनेनैव निमेषः श्रीहरेरपि।
धातुः पातानुसारेण वैकुण्ठे च दिवानिशम्॥ ८८
तत्र सूर्य्यगतिर्नास्ति चैवं गोलकतः स्मृतम्।
वैकुण्ठवासिनः सर्व्वे तेन जानन्त्यहर्निशम्॥ ८९
चन्द्रस्यापि ग्रहाणाञ्च गतिर्नास्तीति तत्र वै।
चक्रं नैव भ्रमत्येव राशीनामिच्छया हरेः॥ ९०
दिनञ्च तेजसा दीप्तं कृष्णस्य परमात्मनः।
नक्तं तेजोविहीनञ्च हरौ च मन्दिरं गते॥ ९१
एवं कालगतिस्तत्र विष्णुलोकेऽस्ति सन्ततम्।
कालस्वरूपो भगवान् परमात्मा निराकृतिः॥ ९२
चन्द्र-सूर्य्यगतिर्नास्ति पातालेषु च सप्तसु।
तद्वासिनश्च जानन्ति सङ्केतेन दिवानिशम्॥ ९३
दिने च मूर्द्ध्नि नागानां मणिर्ज्ज्वलति नित्यशः।
सन्ध्यायां दीप्तिहीनश्च रात्रिश्च तमसावृता॥ ९४
कालं तन्नीप्रमाणेन जानन्ति तन्निवासिनः।
यथा भुवि तथा तत्र परिमाणं प्रकीर्त्तितम्॥ ९५
कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम्।
दिव्यैर्द्वादशसाहस्रैर्वत्सरैश्चापि तानि च॥ ९६
अष्टौ शतान्यप्यधिकं सहस्राणां चतुष्टयम्।
दिव्यैर्वर्षैः कृतयुगं कालविद्भिर्निरूपितम्॥ ९७
अष्टाविंशल्लक्षसहस्राण्यप्यधिकं परिमाणकम्।
लक्षाणाञ्च सप्तदश नृमाणं परिकीर्त्तितम्॥ ९८
अधिकं षट्शतान्येव सहस्राणां त्रयं तथा।
दिव्यैर्वर्षैश्च त्रेतेति वत्स कालविदो विदुः॥ ९९
षण्णवतिसहस्राणि लक्षैर्द्वादशभिः सह।
नृणां वर्षैश्च त्रेतेति कालविद्भिः प्रकीर्त्तितम्॥ १००
चतुष्टयं शतानाञ्चाप्यधिकं द्विसहस्रकम्।
वर्षं दिव्यं द्वापरञ्च कालज्ञैः परिकीर्त्तितम्॥ १०१
चतुःषष्टिसहस्राणि लक्षरष्टभिरेव च।
नृणां वर्षैर्द्वापरञ्च कालज्ञैः परिकीर्त्तितम्॥ १०२
अधिकं द्विशतञ्चैव दिव्यं वर्षसहस्रकम्।
एवमेतत् कलियुगं वत्स प्राज्ञैः प्रकीर्त्तितम्॥ १०३
द्वात्रिंशच्च सहस्राणि चतुर्लक्षं नृमाणकम्।
वर्षञ्चेति कलियुगं चकार कालकोविदः॥ १०४
लक्षैस्त्रिचत्वारिंशद्भिः सह विंशत्सहस्रकैः।
नृमाणवर्षैः कालज्ञैर्व्यक्तमेव चतुर्युगम्॥ १०५
इत्येवं कथितं वत्स कालसंख्यानिरूपणम्।
यथाश्रुतं यथाज्ञानं गच्छ वत्स हरेः पदम्॥१०६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे राधोद्धव-संवादे षण्णवतितमोऽध्यायः॥ ९६॥

---

## सप्तनवतितमोऽध्यायः।

### नारायण उवाच।

गच्छन्तमुद्धवं दृष्ट्वा सन्त्रस्ता श्रीहरेः प्रिया।
समुत्थायासनाच्छीघ्रं हृदयेन विदूयता॥ १
गोपीभिः सहिता शीघ्रं समुद्विग्ना महासती।
ददौ शुभाशिषं तस्मै तस्य मूर्द्ध्नि करं यथा॥ २
स्निग्धं दूर्व्वाक्षतं शुक्लधान्यं पुष्पञ्च मङ्गलम्।
प्रेरयामास लाजांश्च फलं पर्णं तथा दधि॥ ३
दर्पणं दर्शयामास पूर्णकुम्भं सपल्लवम्।
संफलं गन्धसिन्दूर-कस्तूरीचन्दनान्वितम्॥ ४
पुष्पमाल्यं प्रदीपञ्च मणिरत्नं द्विजोत्तमम्।
पतिपुत्त्रवतीं साध्वीं काञ्चनं रजतं तथा॥ ५
तमुवाच महालक्ष्मीरुचितं सत्यञ्च मङ्गलम्।
सन्नीप्य साश्रु नेत्रञ्च पतितं दुःखिते हृदि॥ ६

राधिकोवाच।

शुभं भवतु भागस्ते कल्याणमस्तु सन्ततम्।
ज्ञानं लभ हरेः स्थानात् कृष्णस्य सुप्रियो भव ॥७
कृष्णे भक्तिः कृष्णदास्यं वरेषु च वरं वरम्।
श्रेष्ठापञ्चविधामुक्तेर्हरिभक्तिर्गरीयसी ॥ ८
ब्रह्मत्वादपि देवत्वादिन्द्रत्वादमरादपि।
अमृतात् सिद्धिलाभाच्च हरिदास्यं सुदुर्लभम् ॥९
अनेकजन्मतपसा सम्भूय भारते द्विज।
हरिभक्तिं यदि लभेत् तस्य जन्म सुदुर्लभम् ॥ १०
सफलं जीवनं तस्य कुर्व्वतः कर्म्मणः क्षयम्।
पितॄणाञ्च सहस्राणां स्वस्य मातुश्च निश्चितम् ॥ ११
मातामहानां पुंसाञ्च मतानां सोदरस्य च।
बान्धवस्यापि पत्न्याश्च गुरूणां शिष्य-भृत्ययोः ॥ १२
तत् कर्म्म शोभनं वत्स यच्च कृष्णे समर्पणम्।
तत् कर्म्म शोभनं शुद्धं कृष्णसन्तोषणं यतः ॥ १३
सङ्कल्पसाधनं कर्म्म सम्प्रीतिविधिपूर्व्वकम्।
तदेवं मङ्गलं धन्यं परिणामसुखावहम् ॥ १४
तद्व्रतं तत् तपः सत्यं तद्भक्तिः पूजनं तथा।
तद्बुद्धिश्चमनश्चनं केवलं दास्यकारणम् ॥ १५
समस्तपृथिवीदानं प्रादक्षिण्यं भुवस्तथा।
समस्ततीर्थस्नानञ्च समस्तञ्च व्रतं तपः ॥ १६
समस्तयज्ञकरणं सर्व्वदानफलं तथा।
समस्तवेदवेदाङ्ग-पठनं पाठनं तथा ॥ १७
भीतस्य रक्षणञ्चैव ज्ञानदानं सुदुर्लभम्।
अतिथीनां पूजनञ्च शरणागतरक्षणम् ॥ १८
सर्व्वदेवार्च्चनञ्चैव वन्दनं जपनं मनोः।
भोजनं विप्रदेवानां पुरश्चरणपूर्व्वकम् ॥ १९
गुरुशुश्रूषणञ्चैव पित्रोर्भक्तिश्च पूजनम्।
सर्व्वं श्रीकृष्णदास्यस्य कलां नार्हति षोड़शीम् ॥ २०
तस्मादुद्धव यत्नेन भज कृष्णं परात्परम्।
निर्गुणञ्च निरीहञ्च परमात्मानमीश्वरम् ॥ २१
नित्यं सत्यं परं ब्रह्म प्रकृतेः परमीप्सितम्।
परिपूर्णतमं शुद्धं भक्तानुग्रहविग्रहम् ॥ २२
कर्म्मिणां कर्म्मणां साक्ष्यप्रदं निर्लिप्तमेव च।
ज्योतिःस्वरूपं परमं कारणानाञ्च कारणम् ॥ २३
सर्व्वस्वरूपं सर्व्वेशं सर्व्वसम्पत्प्रदं शुभम्।
भक्तिदं दास्यदं स्वस्य निजसम्पत्पदप्रदम् ॥ २४
विरुद्धञ्च ज्ञातिबुद्धिञ्च मात्सर्य्यमशुभप्रदम्।
भज तं परमानन्दं सानन्दं नन्दनन्दनम् ॥ २५
वेदे कुथुमशाखायां तस्य नाम्नां सहस्रकम्।
नन्दनन्दननामोक्तं क्रतौ विघ्नं सुदुर्लभम् ॥ २६
उद्धवः सर्व्वमाकर्ण्य परमं विस्मयं ययौ।
ज्ञानं सम्प्राप्य पूर्णञ्च परिपूर्णो बभूव सः ॥ २७
स्ववस्त्रञ्च गले बद्धा दण्डवत् प्रणनाम ताम्।
मूर्द्ध्नः केशैश्च तत्पादं निबध्य च पुनः पुनः ॥ २८
पुलकाञ्चितसर्व्वाङ्गः साश्रुनेत्रश्च भक्तितः।
तद्विच्छेदशुचा प्रेम्णा रुरोदोच्चैश्च नारद ॥ २९
रुरोद राधा तत्प्रेम्णा रुरोद वल्लवीगणः।
उद्धवस्य गले धृत्वा स्नापयामास चोद्धवम् ॥ ३०
उद्धवं मूर्च्छितं दृष्ट्वा जृम्भितं त्यक्तचेतनम्।
उत्थापयामास शीघ्रं राधिका हृष्टमानसा ॥ ३१
चेतनां कारयामास जलं दत्त्वा मुखाम्बुजे।
शुभाशिषञ्च प्रददौ वत्स जीवेति नारद ॥ ३२
उद्धवश्चेतनां प्राप्य तामुवाच सुसंसदि।
रुदतीनाञ्च गोपीनां पुरतः परमार्थदाम् ॥ ३३

उद्धव उवाच।

धन्यं यशस्यं द्वीपानां जम्बूद्वीपं सुदुर्लभम्।
यत्र भारतवर्षन्तु सर्व्वेषामीप्सितं परम् ॥ ३४
अहो भारतवर्षेषु पुण्यं वृन्दावनं वनम्।
राधापादाब्जसंसर्ग-रजःपूतं सुरेप्सितम् ॥ ३५
धन्या मान्या च पृथिवी त्रिषु लोकेषु पूजिता।
राधायास्तीर्थपूतायाः पादाब्जरजसा वरा ॥ ३६
षष्टिं वर्षसहस्राणि दिव्यानि पुष्करे पुरा।
ब्रह्मणा च तपस्तप्तं वेदोक्तं भक्तिपूर्व्वकम् ॥ ३७
गोलोके राधिकाकृष्णदर्शनार्थं मनोरथात्।
गोलोके राधिकाकृष्णो न दृष्टः स्वप्नतस्तथा ॥ ३८
श्रुता तेनाकाशवाणी नित्यरूपाशरीरिणी।
वाराहे भारते वर्षे पुण्ये वृन्दावने वने ॥ ३९
रासोत्सवे महारम्ये तत्रैव रासमण्डले।
द्रक्ष्यसीति च देवानां मध्ये सुख्यो न संशयः ॥ ४०
तच्छ्रुत्वा विरतो ब्रह्मा तपसः स्वगृहं गतः।
कृष्णो दृष्टश्च हृष्टश्च परिपूर्णमनोरथः ॥ ४१
गोपानां गोपिकानाञ्च सफलं जन्म जीवनम्।
नित्यं पश्यन्ति ते पादपद्मं ब्रह्मादिदुर्लभम् ॥ ४२

मानिनीं राधिकां सर्व्वे सदा सेवन्ति नित्यशः ।
योगीन्द्राश्च मुनीन्द्राश्च सिद्धेन्द्रा वैष्णवास्तथा ॥ ४३
सतीं पुण्यवतीं तीर्थपूतां शुद्धां सुदुर्लभाम् ।
सुलभं यत्पदाम्भोजं ब्रह्मादीनां सुदुर्लभम् ॥ ४४
यत्पादपद्मनखरं कृतं यावरसाङ्कितम् ।
सर्व्वेश्वरेश्वरेणैव कृष्णेन परमात्मना ॥ ४५
चकार यस्याः पूजाञ्च स्तोत्रराजं सुदुर्लभम् ।
स्वतल्पे स्वयं कृष्णो गोलोके रासमण्डले ॥ ४६
पारिजातप्रसूनानामञ्जलिं गन्धचन्दनम् ।
ददौ दूर्व्वाक्षतं स्निग्धं यस्याः पादारविन्दयोः ॥ ४७
त्रिंशत्सहस्रकोटीनां गोपीनामीश्वरी च या ।
तत्षट्त्रिंशत्सखीनाञ्च ईश्वरी राधिकाभिधा ॥ ४८
ये वा द्विषन्ति निन्दन्ति पापिनश्च हसन्ति च ।
कृष्णप्राणाधिकां देवा देवीञ्च राधिकां वराम् ॥ ४९
ब्रह्महत्याशतं ते च लभन्ते नात्र संशयः ।
तत्पापेन च पच्यन्ते कुम्भीपाके च रौरवे ॥ ५०
तप्ततैले महाघोरे ध्वान्ते कीटे च यन्त्रके ।
चतुर्द्दशेन्द्रावच्छिन्नं पितृभिः सप्तभिः सह ॥ ५१
ततः परञ्च जायन्ते जन्मैकं कोलयोनितः ।
दिव्यवर्षसहस्रञ्च विष्ठाकीटाश्च शापतः ॥ ५२
पुंश्चलीनां योनिकीटास्तद्रक्तमलभक्षणाः ।
जलकीटाश्च तन्मानवर्षञ्च पूयभक्षकाः ॥ ५३
वेदे च काण्वशाखायामित्याह कमलोद्भवः ॥ ५४
इत्युक्तवन्तं तं यान्तमुवाच राधिका पुनः ।
रुदन्तञ्च रुदन्ती सा कृष्णविच्छेदकातरा ॥ ५५

राधिकोवाच ।

गच्छ वत्स मधुपुरीं सर्व्वं बोधय माधवम् ।
यथा पश्यामि गोविन्दं प्रयत्नेन तथा कुरु ॥ ५६
निष्फलञ्च गतं जन्म गच्छ मिथ्यादुराशया ।
आशा हि परमं दुःखं नैराश्यं परमं सुखम् ॥ ५७
आशया पिङ्गला वेश्या कृत्वा च जन्म निष्फलम् ।
पश्चाद्विचिन्त्य गोविन्दं जीवन्मुक्ता बभूव सा ॥ ५८
इत्युक्त्वा राधिका तत्र रुरोद च भृशं मुहुः ।
प्रणम्य रुदतीं ताञ्च यशोदाभवनं ययौ ॥ ५९
अथोद्धवे गते राधा मूर्च्छां सम्प्राप नारद ।
तत्याज चेतनं स्वञ्च बभूव ध्यानतत्परा ॥ ६०
अङ्कस्थे पङ्कजदले सजले शयने मुने ।
गोप्यस्तां स्थापयामासुः साश्रुनेत्रोत्पलाकुलाः ॥ ६१
तत्स्पर्शमात्राच्छयनं भस्मीभूतं बभूव ह ॥ ६२
पुनः स्निग्धस्थले स्निग्धनिचोले चन्दनाङ्किते ।
पुनस्तां स्थापयामासुर्विरहज्वरकातराम् ॥ ६३
सहसा शुष्कतां प्राप सुगन्धिचन्दनोदकम् ।
निमेषेण शतयुगं तद्बभूवोद्धवं विना ॥ ६४
हाहोद्धवोद्धव हरिं शीघ्रं गत्वा वदेति च ।
समानय हरिं शीघ्रं मत्प्राणेश्वरमित्यपि ॥ ६५
इत्युक्तवन्तीं सहसा सन्ततं हृतचेतनाम् ।
सस्रुर्गोपिकाः सर्व्वा राधां कृत्वा स्ववक्षसि ।
चेतनं कारयामासुर्बोधयामासुरीप्सितम् ॥ ६६
इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे
राधास्तोत्रं सप्तनवतितमोऽध्यायः ॥९७॥

---

## अष्टनवतितमोऽध्यायः ।

नारायण उवाच ।

अथोद्धवो यशोदाञ्च प्रणम्य प्रययौ मुदा ।
खर्ज्जूरकाननं वामे कृत्वा च यमुनां ययौ ॥ १
स्नात्वा भुक्त्वा च तत्रैव जगाम मथुरां पुनः ।
ददर्श वटमूले च गोविन्दं रहसि स्थितम् ॥ २
प्रफुल्लोऽप्युद्धवं दृष्ट्वा सस्मितस्तमुवाच सः ।
रुदन्तं शोकदग्धञ्च साश्रुनेत्रञ्च कातरम् ॥ ३

श्रीभगवानुवाच ।

आगच्छोद्धव कल्याणं राधा जीवति जीवति ।
कल्याणयुक्ता गोप्यश्च जीवन्ति विरहज्वरात् ॥ ४
शुभं गोपशिशूनाञ्च वत्सानाञ्च गवामपि ।
माता मे पुत्त्रविरहाद्यशोदा कीदृशीव सा ॥ ५
वद बन्धो कीदृशी सा त्वां दृष्ट्वा किमुवाच ह ।
त्वयोक्ता जननी किं वा पुनः सा किमुवाच ह ॥ ६
दृष्टं तद्यमुनाकूलं पुण्यं वृन्दावनं वनम् ।
निर्ज्जनोपवनौघैश्च सुरम्यं रासमण्डलम् ॥ ७
रम्यं कुञ्जकुटीरौघं रम्यं क्रीड़ासरोवरम् ।
पुष्पोद्यानं विकसितं सङ्कुलञ्च मधुव्रतैः ॥ ८
भाण्डीरे च वटो दृष्टः सुस्निग्धो बालकान्वितः ।
दृष्टो गोष्ठो गवां दृष्टं गोकुलं गोकुलं व्रतम् ॥ ९
यदि जीवति राधा सा त्वां दृष्ट्वा किमुवाच सा ।

ततं सर्व्वं वद हे बन्धो आन्दोलयति मे मनः ॥ १०
किमूचुर्गोपिकाः सर्व्वाः किमूचुर्गोपबालकाः ।
गोपाश्च वृद्धाः किं वोचुर्वयस्या जनकस्य मे ॥ ११
बलदेवस्य जननी किमूचे रोहिणी सती ।
किमूचुरपरास्तास्तावत्सुवल्लभ वल्लवाः ॥ १२
किं भुक्तं किमपूर्व्वं वा दत्तं मात्रा च राधया ।
कीदृग्वाक्यं सुमधुरं सम्भाषा कीदृशीति वा ॥१३
गोपानां गोपिकानां वा शिशूनां मातुरेव च ।
राधायाश्चापि कीदृग्वा मयि प्रेमानुरागकम् ॥ १४
माञ्च स्मरति माता मे माञ्च स्मरति रोहिणी ।
माञ्च स्मरति सा राधा मत्प्रेमविरहाकुला ॥ १५
माञ्च स्मरन्ति गोप्यश्च गोपाश्च गोपबालकाः ।
भाण्डीरे वटमूले च बालाः क्रीड़न्ति मां विना ॥१६
दत्तमन्नं ब्राह्मणीभिर्यत्र भुक्तं सुधोपमम् ।
प्रमुदा बालकैः सार्द्धं तद्दृष्टं पदमीप्सितम् ॥ १७
इन्द्रयागस्थलं दृष्टं दृष्टं गोवर्द्धनं वरम् ।
ब्रह्मणा च हृता गावो यत्र तद्दृष्टमुत्तमम् ॥ १८
श्रीकृष्णस्य वचः श्रुत्वा शोकार्त्तं मधुरान्वितम् ।
उद्धवः समुवाचेदं भगवन्तं सनातनम् ॥ १९

उद्धव उवाच ।

यद्यदुक्तं त्वया नाम सर्व्वं दृष्टं यथेप्सितम् ।
सफलं जीवनं जन्म कृतमत्रैव भारते ॥ २०
दृष्टं भारतसारञ्च पुण्यं वृन्दावनं वनम् ।
तत्सारं व्रजभूमौ च सुरम्यं रासमण्डलम् ॥ २१
तत्सारभूता गोलोकवासिन्यो गोपिका वराः ।
दृष्टा तत्सारभूता च राधा रासेश्वरी परा ॥ २२
कदलीवनमध्ये च निर्ज्जने सुन्दरे स्थले ।
पङ्कस्थे पङ्कजदले सजले चन्दनार्च्चिते ॥ २३
शयनेऽतिविलासे च रत्नभूषणवर्ज्जिता ।
अतीव मलिना क्षीणाच्छादिता शुक्लवाससा ॥ २४
सखीभिः सेविता तत्र सन्ततं श्वेतचामरैः ।
कृशोदरी निराहारा क्षणं श्वसिति न क्षणम् ॥ २५
क्षणं जीवति किञ्चिद्वा विरहज्वरपीड़िता ।
किं वा जलं स्थलं किं वा नक्तं किं वा दिनं हरे॥२६
नरं पशुं न जानाति किं परं किमु बान्धवम् ।
बाह्यज्ञानविरहिता ध्यायमाना पदं तव ॥ २७
त्रैलोक्ये चायशो भावि तन्मत्युवशसम्भवम् ।
स्त्रीहत्यां नैव वाञ्छन्ति ज्ञानहीनाश्च दस्यवः ॥२८
गच्छ शीघ्रं जगन्नाथ कदलीवनमीप्सितम् ।
वह्निभूता न जगतां सा राधा त्वत्परायणा ॥ २९
अतीव भक्त्या न त्याज्या प्रभुता रहिता सदा ।
न हि राधापरा भक्ता न भूता न भविष्यति ॥ ३०
मन्मथः शङ्कराद्भीतो भवांश्च तत्पुरःसरः ।
भवद्विधं पतिं प्राप्य कामदग्धा च राधिका ॥ ३१
तस्मात् सर्व्वपरं कस्मै तच्च केनापि वार्थ्यते ।
मधुर्दहति चन्द्रश्च सन्ततं किरणेन च ।
शश्वत् सुगन्धवायुश्चाप्यनाथा सर्व्वपीड़िता ॥ ३२
तप्तकाञ्चनवर्णाभा साधुना कज्जलोपमा ।
सुवर्णवर्णकेशी च वासोवेशविवर्ज्जिता ॥ ३३
स्वयं विधाता त्वद्भक्तः सुराणां प्रभवो विभुः ।
त्वद्भक्तः शङ्करो देवो योगीन्द्राणां गुरोर्गुरुः ॥ ३४
सनत्कुमारस्त्वद्भक्तो गणेशो ज्ञानिनां गुरुः ।
मुनीन्द्राश्च कतिविधास्त्वद्भक्ता धरणीतले ॥ ३५
त्वद्भक्ता यादृशी राधा न भक्तास्तादृशोऽपरः ।
ध्यायते यादृशी राधा स्वयं लक्ष्मीर्न तादृशी ॥ ३६
हरिरायाति इत्येवं राधाग्रे स्वीकृतं मया ।
शीघ्रं गच्छ महाभाग तदेव सार्थकं कुरु ॥ ३७
उद्धवस्य वचः श्रुत्वा जहासोवाच माधवः ।
वेदोक्तं कथयामास स हितं सत्यसुव्रतम् ॥ ३८

श्रीभगवानुवाच ।

स्त्रीषु नर्म्मविवाहेषु वृत्त्यर्थे प्राणसङ्कटे ।
गवामर्थे ब्राह्मणार्थे नानृतं स्याज्जुगुप्सितम् ॥ ३९
त्वया स्वीकारहीनेन कृतस्त्वं नरकः कुतः ।
गोलोकं याति मद्भक्तो नरकं न हि पश्यति ॥ ४०
त्वदङ्गीकारं सफलं करिष्यामि तथापि च ।
यास्यामि स्वप्ने तन्मूलं गोपीनां मातुरेव च ॥ ४१
इत्याकर्ण्य ययौ गेहमुद्धवश्च महायशाः ।
हरिर्जगाम स्वप्ने च गोकुलं विरहाकुलम् ॥ ४२
स्वप्ने राधां समाश्वास्य दत्त्वा ज्ञानं सुदुर्लभम् ।
सन्तोष्य क्रीड़यित्वा च गोपिकाश्च यथोचितम् ॥ ४३
बोधयित्वा यशोदाञ्च स्तनं पीत्वा च निद्रिताम् ।
गोपान् गोपशिशूंश्चैव बोधयित्वा ययौ पुनः ॥ ४४
इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे अष्टनवतितमोऽध्यायः ॥ ९८ ॥

## नवनवतितमोऽध्यायः।

नारायण उवाच।

एतस्मिन्नन्तरे गर्गो वसुदेवाश्रमं ययौ।
दण्डी छत्री च जटिलो दीप्तश्च ब्रह्मतेजसा॥ १
शुक्लयज्ञोपवीती च तपस्वी संयतः सदा।
शुक्लदन्तः शुक्लवासा यदोः कुलपुरोहितः॥ २
तं दृष्ट्वा सहसोत्थाय देवकी प्रणनाम च।
वसुदेवश्च भक्त्या च रत्नसिंहासनं ददौ॥ ३
मधुपर्कं कामधेनुं वह्निशुद्धांशुकं तथा।
दत्त्वा गन्धपुष्पमालां पूजयामास भक्तितः॥ ४
मिष्टान्नं परमान्नञ्च पिष्टकं मधुरं मधु।
भोजयामास यत्नेन ताम्बूलं वासितं ददौ॥ ५
प्रणम्य कृष्णं मनसा सदाणञ्च विलोक्य सः।
उवाच वसुदेवञ्च देवकीञ्च पतिव्रताम्॥ ६

गर्ग उवाच।

वसुदेव निबोधेदं सबलं पश्य पुत्रकम्।
उपनीतोचितं शुद्धं वयसा साम्प्रतं वरम्॥ ७

वसुदेव उवाच।

शुभक्षणं कुरु गुरो यदूनां पूज्यदैवत।
उपनीतोचितं शुद्धं प्रशस्यञ्च सतामपि॥ ८

गर्ग उवाच।

सर्व्वेभ्यो बान्धवेभ्योऽपि देह्यामन्त्रणपत्रिकाम्।
सम्भारं कुरु यत्नेन वसुदेव वसूपम॥ ९
परश्वः शुभमेवापि उपनेतुं समीप्सितम्।
दिनं सतामभिमतं विशुद्धं चन्द्रतारयोः॥ १०
गर्गस्य वचनं श्रुत्वा वसुदेवो वसूपमः।
प्रस्थापयामास सर्व्वान् बन्धून् मङ्गलपत्रिकाम्॥ ११
घृतकुल्यां दुग्धकुल्यां दधिकुल्यां मनोहराम्।
मधुकुल्यां गुड़कुल्यां प्रचकार रसान्वितः॥ १२
राशिं नानोपहाराणां मणिरत्नं सुवर्णकम्।
नानालङ्कारवस्त्रञ्च मुक्तामाणिक्यहीरकम्॥ १३
श्रीकृष्णो देववर्गांश्च मुनीन्द्रसिद्धपुङ्गवान्।
सस्मार मनसा भक्त्या भक्तांश्च भक्तवत्सलः॥ १४
शुभे दिने च सम्प्राप्ते ते च सर्व्वे समाययुः।
मुनीन्द्रा बान्धवा देवा राजानो बहवस्तथा॥ १५
देवकन्या नागकन्या राजकन्याश्च सर्व्वशः।
विद्याधराश्च गन्धर्व्वाश्चाययुर्वाद्यभाण्डकाः॥ १६
ब्राह्मणा भिक्षुका भट्टा यतयो ब्रह्मचारिणः।
सन्न्यासिनश्चावधूता योगिनश्च समाययुः॥ १७
स्त्रीबान्धवाः स्वबन्धूनां वर्गा मातामहस्य च।
बन्धूनां बान्धवाः सर्व्वे आययुः शुभकर्म्मणि॥ १८
भीष्मो द्रोणश्च कर्णश्चाप्यश्वत्थामा कृपो द्विजः
सपुत्त्रो धृतराष्ट्रश्च सभार्य्यश्च समाययौ॥ १९
कुन्ती सपुत्त्रा विधवा हर्षशोकसमप्लुता।
नानादेशोद्भवा योग्या राजानो राजपुत्रकाः॥ २०
अत्रिर्वशिष्ठश्च्यवनो भरद्वाजो महातपाः।
याज्ञवल्क्यश्च भीमश्च गर्गो गार्ग्यो महातपाः॥ २१
जैगीषव्यो वत्सपुत्त्रो धर्म्मश्च देवलो मुनिः।
पुलहश्च पुलस्त्यश्च पिप्पलादश्च सौभरिः॥ २२
सनकश्च सनन्दश्च तृतीयश्च सनातनः।
सनत्कुमारो भगवान् वोढ़ः पञ्चशिखस्तथा॥ २३
दुर्व्वासाश्चाङ्गिरा व्यासो व्यासपुत्त्रः शुकस्तथा।
कुशिकः कौशिको राम ऋष्यशृङ्गो विभाण्डकः॥ २४
शृङ्गी च वामदेवश्च गौतमश्च गुणार्णवः।
क्रतुर्मरीचिश्चारुणिश्च शुक्राचार्य्यो बृहस्पतिः॥ २५
अष्टावक्रो वामनश्च पारिभद्रश्च वाल्मिकिः।
पैलो वैशम्पायनश्चापि प्रचेताः पुरजित् तथा॥ २६
भृगुर्मरीचिर्मधुजित् कश्यपश्च प्रजापतिः।
अदितिर्देवमाता च दितिर्दैत्यप्रसूस्तथा॥ २७
सुमन्तुश्च सुभानुश्च कण्वः कात्यायनस्तथा।
पाणिनिः पारिजातश्च पारिपालश्च पुङ्गवः॥ २८
मार्कण्डेयो लोमशश्च कपिलश्च पराशरः।
सम्वर्त्तश्चाप्युतथ्यश्च नरोऽहञ्चापि नारद॥ २९
विश्वामित्रः शतानन्दो जाजलिस्तैत्तिरिस्तथा (क)
सान्दीपनिश्च ब्रह्मांशो योगिनां ज्ञानिनां गुरुः॥३०
उपमन्युर्गौरमुखो मैत्रेयश्च श्रुतश्रवाः।
कचः काचश्च कण्वो भरद्वाजश्च धर्म्मवित्॥ ३१
सशिष्या मुनयः सर्व्वे वसुदेवाश्रमं ययुः।
वसुदेवश्च तान् दृष्ट्वा ववन्दे दण्डवद्भुवि॥ ३२
अथास्मिन्नन्तरे ब्रह्मा सस्मितो हंसवाहनः।
रत्ननिर्म्माणयानेन पार्व्वत्या सह शङ्करः॥ ३३
नन्दी स्वयं महाकालो वीरभद्रः सुभद्रकः।

(क) तत्तिरिस्तथेति पाठान्तरं क्वचित् पुस्तके।

मणिभद्रः पारिभद्रः कार्त्तिकेयो गणेश्वरः ॥ ३४
गजेन्द्रेण महेन्द्रश्च धर्म्मश्चन्द्रो रविस्तथा।
कुवेरो वरुणश्चैव पवनो वह्निरेव च ॥ ३५
यमः संयमनीनाथो जयन्तो नलकूवरः।
सर्व्वे ग्रहाश्च वसवो रुद्राश्च सगणास्तथा ॥ ३६
आदित्याश्च तथा शेषो नानादेवाः समाययुः।
वसुदेवश्च भक्त्या च ववन्दे शिरसा भुवि ॥ ३७
तुष्टाव परया भक्त्या देवेन्द्रांश्च तथा सुरान्।
भक्तिनम्रात्ममूर्द्धा च पुलकाञ्चितविग्रहः ॥ ३८

वसुदेव उवाच।

परं ब्रह्म परं धाम परमेशः परात्परः।
स्वयं विधाता मद्गेहे जगतां परिपालकः ॥ ३९
वेदानां जनकः स्रष्टा सृष्टिहेतुः सनातनः।
सुराणाञ्च मुनीन्द्राणां सिद्धेन्द्राणां गुरोर्गुरुः ॥ ४०
शम्भुश्च शिवया सार्द्धं योगीन्द्राणां गुरोर्गुरुः।
स्वप्ने यत्पादपद्मञ्च चर्णं द्रष्टुं सुदुर्लभम् ॥ ४१
शिवस्मरणमात्रेण सर्व्वा निष्टाः पलायिताः।
सर्व्वसङ्कटसुत्तीर्य्य कल्याणं लभते नरः ॥ ४२
सर्व्वाग्रे पूजनं यस्य देवानामग्रणीः परः।
घटेषु मङ्गलं मन्त्राद्भक्त्या चावाहनेन च ॥ ४३
स्वयं गणेशो भगवान् स साक्षाद्विघ्ननायकः।
कार्त्तिकेयश्च भगवान् देवादीनाञ्च पूजितः।
देवानां प्रवरा पूज्या महालक्ष्मीः परात्परा ॥ ४४
मद्गेहे पार्व्वती माता जगतामादिरूपिणी।
सर्व्वशक्तिस्वरूपा च मूलप्रकृतिरीश्वरी ॥ ४५
परापराणां परमा परं ब्रह्मस्वरूपिणी।
यस्याश्चां सुसमाराध्य वाञ्छितं लभते नरः ॥ ४६
शरत्काले च भक्त्या च सा साक्षान्मम मन्दिरे।
सर्व्वैर्देवैश्च सहिता सगणा भक्तवत्सला।
कृपामयी च कृपया चाविर्भूता च भारते ॥ ४७
धन्योऽहं कृतकृत्योऽहं सफलं जीवनं मम।
आगतासि यतो दुर्गे परमाद्या च मद्गृहम् ॥ ४८
एवं सर्व्वांश्च तुष्टाव क्रमेण च पृथक् पृथक्।
सुरान् मुनीन् मानवांश्च गले बद्धाञ्जलिः मुदा ॥ ४९
प्रत्येकं वासयामास रत्नसिंहासनेर्वरे।
पूजयामास विधिवत् क्रमेण च पृथक् पृथक् ॥ ५०
प्रत्येकं वरयामास ब्रह्मादींश्च सुरानपि।
मुनिवर्गान् ब्राह्मणांश्च भक्त्या गर्गं पुरोहितम् ॥ ५१
रत्नैः प्रवालैर्मणिभिर्मुक्ता-माणिक्य-हीरकैः।
भूषणैर्वसनैश्चैव माल्यैश्च गन्धचन्दनैः ॥ ५२
रत्नसिंहासने रम्ये सर्व्वेषां मध्यदेशतः।
गणेशं वासयामास पूजार्थं शुभकर्म्मणि ॥ ५३
सप्ततीर्थोदकेनैव सुवर्णकलसेन च।
पुष्पचन्दनयुक्तेन शीतेन वासितेन च ॥ ५४
स्वर्गगङ्गाजलेनैव पुष्करोदकपुष्यतः।
पञ्चामृतेन शुद्धेन पञ्चगव्येन भक्तितः ॥ ५५
हेरम्बं पूजयामास समुद्रोदेन मन्त्रतः।
वरयामास माल्येन पारिजातस्य नारद ॥ ५६
रत्नेन्द्रभूषणेनैव वह्निशुद्धांशुवाससा।
गन्धचन्दनपुष्पैश्च रत्नमाल्याङ्गुरीयकैः ॥ ५७
तुष्टाव पार्व्वतीपुत्रं सर्व्वदेवाधिपं शुभम्।
विघ्ननिघ्नकरं शान्तं भगवन्तं सनातनम् ॥ ५८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे नवनवति-
तमोऽध्यायः ॥ ९९ ॥

---

## शततमोऽध्यायः।

नारायण उवाच।

अथादितिर्दितिश्चैव देवकी रोहिणी रतिः।
सरस्वती च सावित्री यशोदा च पतिव्रता ॥ १
लोपामुद्रारुन्धती चैवाहल्या तारका तथा।
ययुस्ताः पार्व्वतीं द्रष्टुं वेगेन मन्दिरादपि ॥ २
परस्परञ्च सम्भाष्य समाश्लिष्य पुनः पुनः।
प्रणम्य वेशयामासुर्मन्दिरं रत्नशोभितम् ॥ ३
रत्नसिंहासने रम्ये वासयामासुरीश्वरीम्।
वरयामास माल्येन वाससा रत्नभूषणैः ॥ ४
पारिजातस्य पुष्पञ्च शक्रानीतं मनोहरम्।
ददौ तत्पादपद्मे च देवकी भक्तिपूर्व्वकम् ॥ ५
सिन्दूरबिन्दुं सीमन्ते भाले चन्दनबिन्दुकम्।
कस्तूरी-कुङ्कुमेन्दुञ्च प्रददौ परितस्तयोः ॥ ६
मिष्टान्नं भोजयामास शीततोयं सुवासितम्।
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम् ॥ ७
अलक्तकञ्च प्रददौ नखेषु पादपद्मयोः।

कुङ्कुमस्यापि रागञ्च सिषिवे श्वेतचामरैः ॥ ८
सम्पूज्य पार्व्वतीं देवीं मुनिपत्नीः क्रमेण च।
पूजयामास विधिवत् पतिपुत्त्रवती सती ॥ ९
राजकन्या देवकन्या नागकन्या मनोहराः।
मुनिकन्या बन्धुकन्याः पूजयामास सुव्रता ॥ १०
वाद्यं नानाविधं रम्यं वादयामास कौतुकात्।
मङ्गलं कारयामास भोजयामास ब्राह्मणान् ॥ ११
भवानीं पूजयामास मथुराग्रामदेवताम्।
द्रव्यैः षोड्शोपचारैः षष्ठीं मङ्गलचण्डिकाम् ॥ १२
पुण्यं स्वस्त्ययनं शुद्धं कारयामास मङ्गलम्।
वेदांश्च पाठयामास वसुदेवस्य वल्लभा ॥ १३
स्वर्गगङ्गाजलेनैव सुवर्णकलसेन च।
स्नापयामास सबलं श्रीकृष्णं पुत्त्रवत्सला ॥ १४
वस्त्र-चन्दन-माल्यैश्च तयोर्वेषं चकार सा।
रत्नेन्द्रसारनिर्म्माण-भूषणैश्च मनोहरैः ॥ १५
क्षात्रभूषणभूषाढ्यः सबलः कृष्ण एव च।
आययौ च सभां देव-मुनीन्द्राणाञ्च नारद ॥ १६
दृष्ट्वा तं जगतीनाथमुत्तस्थौ प्रजवेन च।
स्वयं विधाता शम्भुश्च शेषो धर्म्मश्च भास्करः ॥ १७
देवाश्च मुनयश्चैव कार्त्तिकश्च गणेश्वरः।
पृथक् पृथक् क्रमेणैव तुष्टाव परमेश्वरम् ॥ १८

ब्रह्मोवाच।

आद्योऽनिर्व्वचनीयोऽसि भक्तानुग्रहविग्रहः।
वेदानिर्व्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः ॥ १९

महादेव उवाच।

निरीहं त्वां निराकारं परमात्मानमीश्वरम्।
देहेषु देहिनां शश्वत् स्थितं निर्लिप्तमेव च ॥ २०
कर्म्मिणां कर्म्मणां शुद्धं साक्षिणं साध्वदं विभुम्।
किं स्तौमि रूपशून्यञ्च गुणशून्यञ्च निर्गुणम् ॥ २१

अनन्त उवाच।

किं वा जानाम्यहं नाथ त्वामनन्तमनीश्वरम्।
अनन्तकोटिब्रह्माण्ड-करणं दुःखवारणम् ॥ २२
महाविष्णोश्च लोम्नाञ्च विवरेषु जलेषु च।
सन्ति विश्वान्यसंख्यानि चित्राणि कृत्रिमाणि च ॥२३
सन्ति सन्तश्च देवास्र ब्रह्म-विष्णु-शिवात्मकाः।
त्वदंशाः प्रतिविश्वेषु तीर्थानि भारतं तथा ॥ २४
ब्रह्माण्डैकस्थितोऽहञ्च सूक्ष्मनागस्वरूपकः।
स्थापितश्च त्वया कूर्म्मे गजेन्द्रे मशको यथा ॥ २५
परमाणुपरं सूक्ष्मं विश्वेषु नास्ति कुत्रचित्।
महाविष्णोः परं स्थूलः समो नास्ति च कुत्रचित् ॥२६
महाविष्णोः परस्त्वञ्च त्वत्परो नास्ति कश्चन।
स्थूलात् स्थूलतमो देवः सूक्ष्मात् सूक्ष्मतमोभवान् ॥२७
आधारश्च महाविष्णोर्जलरूपो भवान् स्वयम्।
जलाधारो गोलकश्च त्वञ्च स्थावररूपधृक् ॥ २८
सर्व्वाधारे महावायुः श्वासनिश्वासरूपकः।
भक्तानुग्रहदेहस्य नित्यस्य भवतो विभो ॥ २९
वक्तेवक्तरैर्नाथ त्वया दत्तैः पुरैव च।
स्तोतुमिच्छामि तद्योग्यं न दत्तं ज्ञानमीश्वर ॥ ३०

देवा ऊचुः।

त्वामनन्तं यदि स्तोतुं देवोऽनन्तो न हीश्वरः।
न हि स्वयं विधाता च न हि ज्ञानात्मकः शिवः।
सरस्वती जडीभूता किं कुर्म्मः स्तवनं वयम् ॥ ३१

मुनीन्द्रा ऊचुः।

वेदाः स्तोतुं न शक्ताश्चेत् त्वां वेदाज्ञातमीश्वरम्।
वयं वेदविदः सन्तः किं कुर्म्मः स्तवनं तव ॥ ३२
इदं स्तोत्रं महापुण्यं देवैश्च मुनिभिः कृतम्।
यः पठेत् संयतः शुद्धः पूजाकाले च भक्तितः ॥ ३३
इह लोके सुखं भुक्त्वा लब्ध्वा ज्ञानं निरञ्जनात्।
रत्नयानं समारुह्य गोलोकं स च गच्छति ॥ ३४

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे श्रीरामकृष्णोपनयन-प्रस्तावे शततमोऽध्यायः ॥ १०० ॥

---

## एकाधिकशततमोऽध्यायः।

नारायण उवाच।

सम्भूय देवमुनयो विविशुर्न हि मानसे।
ददृशुः प्राङ्गणे कृष्णं शोभितं पीतवाससा ॥ १
यथा सौदामिनीयुक्तं नवीनं जलदं मुने।
वकपङ्क्तियुतञ्चैव मालतीमालया तथा ॥ २
कपाले मण्डलाकार-कस्तूरीयुक्तचन्दनम्।
सकलङ्कमृगाङ्कञ्च शोभितं जलदे यथा ॥ ३
द्विभुजं श्यामलं शान्तं राधाकान्तं मनोहरम्।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहविग्रहम् ॥ ४

रत्नकेयूरवलय-रत्नमञ्जीररञ्जितम्।
वसन्तं पितुरुत्सङ्गे बलेन सहितं परम् ॥ ५
अथ मङ्गलकाले च शुभलग्ने मनोरमे।
संवीक्षिते ग्रहैः शान्तैर्जामित्रलग्नाधिपे स्थिते ॥ ६
असद्ग्रहैरदृष्टे च सद्ग्रहद्वीक्षते एव च।
शुभकर्म्मसमारब्धं स्वस्तिवाचनपूर्व्वकम्।
चकार वसुदेवश्चाप्याज्ञया सुरविप्रयोः ॥ ७
दत्त्वा सुवर्णशतकं ब्राह्मणाय च सादरम् ॥ ८
देवेन्द्रांश्च मुनीन्द्रांश्च नमस्कृत्य पुरोहितम्।
गणेशञ्च दिनेशञ्च वह्निं पुत्रं शिवं शिवाम् ॥ ९
सम्पूज्य देवषट्कञ्च साक्षाच्च देवसंसदि।
द्रव्यैः षोड़शोपचारैः संयुतो भक्तिपूर्व्वकम्।
पुत्राधिवासनं चक्रे वेदमन्त्रेण संसदि ॥ १०
सम्पूज्य नानादेवांश्च दिक्पालांश्च नवग्रहान्।
दत्त्वा पञ्चोपचारञ्च भक्त्या षोड़शमातृकाः ॥ ११
दत्त्वा च वसुधाराञ्च सप्तवारान् घृतेन तु।
वेदिराजं वसुं नत्वा सम्पूज्य प्रययौ पुनः ॥ १२
वृद्धिश्राद्धं सुनिर्वाप्य यत् किञ्चिद्वैदिकं तथा।
यज्ञं कृत्वा च वेदोक्तं यज्ञसूत्रं ददौ मुदा ॥ १३
बलदेवाग्रजायैव कृष्णाय परमात्मने।
गायत्रीञ्च ददौ ताभ्यां मुनिः सान्दीपनिस्तथा ॥ १४
भिक्षां ददौ च प्रथमे पार्व्वती परमादरात्।
अमूल्यरत्नपात्रस्थं मुक्ता-माणिक्य-हीरकम् ॥ १५
हीरासारविनिर्म्माणं पित्रा दत्तञ्च हारकम्।
शुभाशिषञ्च प्रददौ शुक्लपुष्पेण दूर्व्वया ॥ १६
ततोऽदितिर्दितिश्चैव मुनिपत्न्यश्च देवकी।
यशोदा रोहिणी कृष्णा सावित्री च सरस्वती।
प्रत्येकं प्रददौ भिक्षां मणिकाञ्चनसंयुताम् ॥ १७
इन्द्राणी वरुणानी च पवनानी च रोहिणी।
कुबेरपत्नी स्वाहा च रतिः कामस्य कामिनी ॥ १८
स्वाहा स्वधा च वसुधा संज्ञा सूर्य्यस्य कामिनी।
प्रत्येकं प्रददौ भिक्षां रत्नभूषणभूषिताम् ॥ १९
देवकन्या नागकन्या राजकन्या पतिव्रता।
कामिन्यो बान्धवानाञ्च सस्मिताः स्निग्धलोचनाः ॥ २०
भिक्षां गृहीत्वा भगवान् सबलो भक्तिपूर्व्वकम्।
किञ्चिद्ददौ च गर्गाय किञ्चित् स्वगुरवे तथा ॥ २१
वैदिकं कर्म्म निर्व्वाप्य गर्गाय दक्षिणां ददौ।
देवांश्च भोजयामास ब्राह्मणानपि सादरम् ॥ २२
ये ये समाययुर्यज्ञे ते ते दत्त्वा शुभाशिषम्।
कृष्णाय बलदेवाय प्रहृष्टाः प्रययुर्गृहम् ॥ २३
नन्दः सभार्य्यो निर्व्वाप्य शुभकर्म्म सुतस्य च।
क्रोड़े कृत्वा बलं कृष्णं चुचुम्ब वदनं तयोः ॥ २४
उच्चै रुरोद नन्दश्च यशोदा च पतिव्रता।
श्रीकृष्णस्तं समाश्वास्य बोधयामास यत्नतः ॥ २५

श्रीकृष्ण उवाच।

सानन्दं गच्छ हे मातर्यशोदे तात सत्वरम्।
त्वमेव माता पोष्ट्री त्वं पिता च परमार्थतः ॥ २६
अवन्तीनगरं तात यास्यामि सबलोऽधुना।
मुनेः सान्दीपनेः स्थानं पठितुं वेदमीप्सितम् ॥ २७
तत आगत्य सुचिरं काले भवति दर्शनम्।
कालः करोति संयोगं स च भेदं करोति च ॥ २८
सर्व्वं कालकृतं मातर्भेदः सम्मेलनं नृणाम्।
सुखदुःखञ्च हर्षश्च शोकश्च मङ्गलालयम् ॥ २९
मया दत्तञ्च तत्त्वञ्च योगिनामपि दुर्लभम्।
सर्व्वं नन्दश्च सानन्दं त्वामेव कथयिष्यति ॥ ३०
इत्युक्त्वा जगतां नाथो वसुदेवसभां ययौ।
तदाज्ञया क्षणं प्राप्य ययौ सान्दीपनेर्गृहम् ॥ ३१
वसुदेवं देवकीञ्च सम्भाष्य विनयेन च।
नन्दः सभार्य्यः प्रययौ हृदयेन विदूयता ॥ ३२
मणिं मुक्तां सुवर्णञ्च माणिक्यं हीरकं तथा।
वह्निशुद्धांशुकं रम्यं नन्दाय देवकी ददौ ॥ ३३
श्वेताश्वञ्च गजेन्द्रञ्च सुवर्णरथमुत्तमम्।
नन्दाय कृष्णः प्रददौ वसुदेवश्च सादरम् ॥ ३४
तयोरनुव्रजं विप्रा देवकीप्रमुखाः स्त्रियः।
वसुदेवस्तथाक्रूरोऽप्युद्धवश्च ययौ मुदा ॥ ३५
कालिन्दीनिकटं गत्वा ते सर्व्वे रुरुदुः शुचा।
परस्परञ्च सम्भाष्य ते सर्व्वे स्वालयं ययुः ॥ ३६
कुन्ती सपुत्रा विधवा वसुदेवाज्ञया मुने।
नानारत्नं मणिं प्राप्य प्रययौ स्वालयं मुदा ॥ ३७
वसुदेवो देवकी च पुत्रकल्याणहेतवे।
नानारत्नं मणिं वस्त्रं सुवर्णं रजतं तथा ॥ ३८
मुक्ता-माणिक्यभारञ्च मिष्टान्नञ्च सुधोपमम्।
भट्टेभ्यो ब्राह्मणेभ्यश्च प्रददौ सादरं मुदा ॥ ३९
महोत्सवं वेदपाठं हरेर्नामकमङ्गलम्।

विप्राणां भोजनञ्चैव कारयामास यत्नतः ॥ ४०
ज्ञातीनां बान्धवानाञ्च पुरस्कारं यथोचितम् ।
चकार मणि-माणिक्य-मुक्ता-वस्त्रैर्मनोहरैः ॥ ४१

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारद-संवादे एका-धिकशततमोऽध्यायः ॥ १०१ ॥

---

## द्व्यधिकशततमोऽध्यायः ।

नारायण उवाच ।

कृष्णः सान्दीपनेर्गेहं गत्वा च सबलो मुदा ।
ननमस्कार स्वगुरुं गुरुपत्नीं पतिव्रताम् ॥ १
शुभाशिषं गृहीत्वा च दत्त्वा रत्नं मणिं हरिः ।
गुरवे तस्य भार्य्यायै तमुवाच यथोचितम् ॥ २

श्रीकृष्ण उवाच ।

लब्धो विद्यां लभिष्यामि वाञ्छितां वाञ्छितं मम ।
कृत्वा शुभक्षणं विप्र मां पाठय यथोचितम् ॥ ३
ओमित्युक्त्वा मुनिश्रेष्ठः पूजयामास तं मुदा ।
मधुपर्कप्राशनेन गोपीवस्त्रेण चन्दनैः ॥ ४
मिष्टान्नं भोजयामास-ताम्बूलञ्च सुवासितम् ।
सुप्रियं कथयामास तुष्टाव परमेश्वरम् ॥ ५

सान्दीपनिरुवाच ।

परंब्रह्म परं धाम परमीश परात्पर ।
परापराणां परम परमात्मन् प्रसीद मे ॥ ६
पुराणः पुरुषः श्रेष्ठः प्रेष्ठो ज्येष्ठः सतां प्रभुः ।
पुनर्जन्म यतो नास्ति प्रसीद पुरुषोत्तम ॥ ७
हे निर्गुण निर्व्विकार निरीह प्रकृतेः पर ।
स्वेच्छामय स्वयंज्योतिर्निर्लिप्तैक निरङ्कुश ॥ ८
भक्तैकनाथ भक्तेश भक्तानुग्रहविग्रह ।
भक्तवाञ्छाकल्पतरो भक्तानां प्राणवल्लभ ॥ ९

सान्दीपनिपत्न्युवाच ।

मायया बालरूपोऽसि ब्रह्मेशशेषवन्दित ।
मायया भुवि भूपाल भुवो भारहराय च ॥ १०
योगिनो यं वदन्त्येवं ब्रह्मज्योतिः सनातनम् ।
ध्यायन्ते भक्तनिवहा ज्योतिरभ्यन्तरे मुदा ॥ ११
द्विभुजं मुरलीहस्तं सुन्दरं श्यामरूपकम्
चन्दनोक्षितसर्व्वाङ्गं सस्मितं भक्तवत्सलम् ॥ १२
पीताम्बरधरं देवं वनमालाविभूषितम् ।
नीलापाङ्गतरङ्गैश्च निन्दितानङ्गमूर्च्छितम् ॥ १३
अलक्ताभरणं तद्वत् पादपद्मसुशोभनम् ।
कौस्तुभोद्भासिताङ्गञ्च दिव्यमूर्त्तिमनोहरम् ॥ १४
ईषद्धास्यं प्रसन्नञ्च सुवेशं प्रस्तुतं सुरैः ।
देवदेवं जगन्नाथं त्रैलोक्यमोहनं वरम् ॥ १५
कोटिकन्दर्पलीलाभं कमनीयमनीश्वरम् ।
अमूल्यरत्ननिर्म्माण-भूषणौघेन भूषितम् ।
वरं वरेण्यं वरदं वरदानामभीप्सितम् ॥ १६
चतुर्णामपि वेदानां कारणानाञ्च कारण ।
पाठार्थं मन्निवस्थानमागतोऽसि च मायया ॥ १७
पाठस्ते लोकशिक्षार्थं रमणं गमनं वनम् ।
आत्मारामस्य च विभोः परिपूर्णतमस्य च ॥ १८
अद्य मे सफलं जन्म सफलं जीवनं मम ।
पतिव्रतञ्च सफलं सफलञ्च तपोव्रतम् ।
तीर्थस्नानञ्च सफलं सफलं समुपोषणम् ॥ १९
मद्गृहस्तः सफलो दत्तं येनान्नमीप्सितम् ।
मद्गृहमस्तीर्थपरस्तीर्थदेवपदाङ्कितः ॥ २०
त्वत्पादरजसा पूतं गृहप्राङ्गणमुत्तमम् ।
त्वत्पादपद्मदृष्ट्या चैवावयोजन्मखण्डनम्
तावद्दुःखञ्च शोकश्च तावद्रोगश्च रोगतः ।
तावज्जन्मानि कर्म्माणि क्षुत्पिपासादिकानि च ।
यावत् त्वत्पादपद्मस्य भजनं नास्ति दर्शनम् ॥
हे कालकाल भगवन् स्रष्टुः संहर्त्तुरीश्वर ।
कृपां कुरु कृपानाथ मायामोहनिकृन्तन ॥ २३
इत्युक्त्वा साश्रुनेत्रा सा क्रोडे कृत्वा हरिं पुनः ।
स्वस्तनं पाययामास प्रेम्णा च देवकी यथा ॥ २४

श्रीकृष्ण उवाच ।

मातस्त्वं मां कथं स्तौषि बालं दुग्धमुखं सुतम् ।
गच्छ गोलोकमिष्टञ्च स्वामिना सह साम्प्रतम् ॥२५
त्यक्त्वा प्राकृतिकं मिथ्या नश्वरञ्च कलेवरम् ।
विधाय निर्म्मलं देहं जन्म-मृत्यु-जरापहम् ॥ २६
इत्युक्त्वा चतुरो वेदान् गृहीत्वा मुनिपुङ्गवात् ।
मासेन परया भक्त्या दत्त्वा पुत्रं मृतं पुरा ॥ २७
रत्नानाञ्च त्रिलक्षञ्च मणीनां पञ्चलक्षकम् ।
हीरकाणां चतुर्लक्षं मुक्तानां पञ्चलक्षकम् ॥ २८
माणिक्यानां त्रिलक्षञ्च वस्त्रं त्रैलोक्यदुर्लभम् ।

हारञ्च दुर्गया दत्तं हस्तरत्नाङ्गुरीयकम्।
दशकोटि सुवर्णानां गुरवे दक्षिणां ददौ ॥ २९
अमूल्यरत्ननिर्म्माणं नारीसर्व्वाङ्गभूषणम्।
गुरुप्रियायै प्रददौ वह्निशुद्धांशुकं परम् ॥ ३०
मुनिदत्त्वा च पुत्राय तत् सर्व्वञ्च स्त्रिया सह।
सद्रत्नरथमारुह्य ययौ गोलोकमुत्तमम् ॥ ३१
तमद्भुतं हरिं दृष्ट्वा प्रययौ स्वालयं मुदा।
एवं ब्रह्मण्यदेवस्य चरितं शृणु नारद ॥ ३२
इदं स्तोत्रं महापुण्यं यः पठेद्भक्तिपूर्व्वकम्।
श्रीकृष्णे निश्चलां भक्तिं लभते नात्र संशयः ॥ ३३
असृष्टकीर्त्तिः सुयशा मूर्खो भवति पण्डितः।
इह लोके सुखं प्राप्य यात्यन्ते श्रीहरेः पदम्।
तत्र नित्यं हरेर्दास्यं लभते नात्र संशयः ॥ ३४

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे मुनिपत्नीस्तोत्रं नाम द्व्यधिकशततमोऽध्यायः ॥१०२॥

---

## त्र्यधिकशततमोऽध्यायः।

नारायण उवाच।

अथागत्य मधुपुरीं प्रणम्य पितरं प्रसूम्।
सबलो वटमूले च सस्मार गरुड़ं हरिः ॥ १
सादरं लवणोदञ्च विश्वकर्म्माणमीप्सितम्।
सुदर्शनञ्च चक्रञ्च गदां कौमोदकीं तथा।
पाञ्चजन्यञ्च शङ्खञ्च वैकुण्ठं तमभीप्सितम् ॥ २
तत्याज गोपवेशञ्च नृपवेशं दधार सः।
एतस्मिन्नन्तरे चक्रमाजगाम हरेः पुरः ॥ ३
यरं सुदर्शनं नाम सूर्य्यकोटिसमप्रभम्।
तेजसा हरिणा तुल्यं परं वैरिविमर्द्दनम्।
अव्यर्थमस्त्रमस्त्राणां प्रवरं परमं परम् ॥ ४
रत्नयानं पुरस्कृत्य गरुड़ो हरिसन्निधिम्।
विश्वकर्म्मा समियाय जलधिः कम्पितस्तथा ॥ ५
हरिं प्रणेमुस्ते सर्व्वे मूर्द्ध्ना च भक्तिपूर्व्वकम्।
स्मितः सादरं यत्नात् तानुवाच क्रमाद्विभुः ॥ ६

श्रीकृष्ण उवाच।

हे समुद्र महाभाग स्थलञ्च शतयोजनम्।
देहि मे नगरार्थञ्च पश्चाद्दास्यामि निश्चितम् ॥ ७
नगरं कुरु हे कारो त्रिषु लोकेषु दुर्लभम्।
रमणीयञ्च सर्व्वेषां कमनीयञ्च योषिताम् ॥ ८
वाञ्छितञ्चापि भक्तानां वकुण्ठसदृशं परम्।
स्वर्गाणां सर्व्वेषामपि वरं परममीप्सितम् ॥ ९
दिवानिशं खगश्रेष्ठ सन्निधौ विश्वकर्म्मणः।
स्थितिं कुरु महाभाग यावन्निर्म्माति द्वारकाम् ॥१०
दिवानिशञ्च मत्पार्श्वे चक्रश्रेष्ठ स्थितिं कुरु।
ओमित्युक्त्वा ययुस्ते वै सर्व्वे चक्रं विना मुने ॥ ११
कंसस्य पितरं भद्रमुग्रसेनं महाबलम्।
नृपं चकार नगरे क्षत्रियाणां सतामपि ॥ १२
विजित्य च जरासन्धं निहत्य यवनं तथा।
उपायेन महाभागो यादवेन्द्रपुरस्कृतः ॥ १३
उवाच विश्वकर्म्मा तं जगतामीश्वरं परम्।
भक्त्या पुलकितः शान्तः साश्रुनेत्रः पुटाञ्जलिः ॥१४

विश्वकर्म्मोवाच।

द्वारकां तां किमाकारां करोमि जगतां प्रभो।
कथयस्व महाभाग निर्म्माणक्रममीश्वर ॥ १५

श्रीभगवानुवाच।

शतयोजनपर्य्यन्तं नगरं सुमनोहरम्।
पद्मरागैर्मरकतैरिन्द्रनीलैरनुत्तमैः ॥ १६
रुचकैः पारिभद्रैश्च कलङ्कैश्च स्यमन्तकैः।
गन्धकैर्नीलिमैश्चैव चन्द्रकान्तादिभिस्तथा ॥ १७
सूर्य्यकान्तादिभिश्चैव शुद्धैश्च स्फाटिकाञ्चितैः।
हरिद्वर्णैश्च मणिभिः श्यामैर्गौरसुखैश्चयैः ॥ १८
गोरोचनाभैः पीतैश्च दाड़िम्ववीजरूपकैः।
पद्मवीजनिभैश्चैव नीलैः कमलवर्णकैः ॥ १९
मणिभिः कज्जलाकारैरुज्ज्वलैश्च परिष्कृतैः।
श्वेतचम्पकवर्णाभैस्तप्तकाञ्चनसन्निभैः ॥ २०
स्वणमूल्यशतगुणैरीषद्रक्तैः सुशोभनैः।
गरिष्ठैश्च वरिष्ठैश्च मणिश्रेष्ठैश्च पूजितैः।
यथाविधानं यद्योग्यं यत्र यद्युक्तमीप्सितम् ॥२१
मणीनां हरणञ्चैव यक्षसङ्घा हिमालयात्।
दिवानिशं करिष्यन्ति यावन्निर्म्माणपूरकम् (क) ॥२२
यक्षैश्च सप्तभिर्लक्षैः कुवेरप्रेरितैरपि।
वेतालक्षैः कुष्माण्ड-लक्षैः शङ्करयोजितैः ॥ २३
दानवैर्ब्रह्मरक्षोभिः शैलकन्यानियोजितैः।

---

(क) निर्म्माणपूर्व्वकमिति पाठान्तरम्।

क्षुद्र दिव्यञ्च पत्नीनां सहस्राणाञ्च षोड़श।
अन्यपत्नीजनस्यापि चाष्टाधिकशतस्य च ॥ २४
शिविरं परिखायुक्तमुच्चैःप्राकारवेष्टितम्।
युक्तं द्वादशभिर्द्वारैः सिंहद्वारपुरस्कृतम् ॥ २५
युक्तं चित्रैर्विचित्रैश्च कृत्रिमैश्च कपाटकैः।
निषिद्धवृक्षरहितं प्रसिद्धैश्च पुरस्कृतम्।
सुलक्षणं चन्द्रवेधं प्राङ्गणञ्च तथैव च ॥ २६
यदूनामाश्रमं दिव्यं किङ्कराणां तथैव च।
सर्व्वप्रसिद्धनिलयमुग्रसेनस्य भूभृतः।
आश्रमं सर्व्वतोभद्रं वसुदेवस्य मत्पितुः ॥ २७

विश्वकर्म्मोवाच।

के ते वृक्षाः प्रशस्ताश्च निषिद्धाश्चापि केचन।
भद्राभद्रप्रदाश्चापि तान् वदस्व जगद्गुरो ॥ २८
केषामस्ति नियुक्तानां शिविरे च शुभाशुभम्।
दिशि कुत्र जलं भद्रमभद्रञ्च वद प्रभो ॥ २९
भद्रप्रदश्च को वृक्षो दिशि कुत्र प्रवर्त्तते।
किं प्रमाणं गृहाणाञ्च प्राङ्गणानां जगद्गुरो ॥ ३०
मङ्गलं कुसुमोद्यानं दिशि कुत्र तरोस्तथा।
प्राकार परिखाणाञ्च किं प्रमाणं सुरेश्वर ॥ ३१
द्वाराणाञ्च गृहाणाञ्च प्राकाराणां प्रमाणकम्।
कस्य कस्य तरोः काष्ठं प्रशस्तं शिविरे विभो।
अमङ्गलं वा केषाञ्च सर्व्वं मां वक्तुमर्हसि ॥ ३२

श्रीभगवानुवाच।

आश्रमे नारिकेलञ्च दक्षिणाञ्च धनप्रदम्।
शिविरस्य यदीशाने पूर्व्वे पुत्रप्रदस्तरुः।
सर्व्वत्र मङ्गलाढ्यश्च तरुराजो मनोहरः ॥ ३३
रसालवृक्षः पूर्व्वस्मिन् नृणां सम्पत्प्रदस्तथा।
शुभप्रदश्च सर्व्वत्र सुरकारी निशामय ॥ ३४
निम्बश्च पनसश्चैव जम्बीरो बदरी तथा।
प्रजाप्रदश्च पूर्व्वस्मिन् दक्षिणे धनदस्तथा।
सम्पत्प्रदश्च सर्व्वत्र यतो हि वर्द्धते गृही ॥ ३५
जम्बूवृक्षश्च दाड़िम्बः कदल्याम्रातकस्तथा।
बन्धुप्रदश्च पूर्व्वस्मिन् दक्षिणे मित्रदस्तथा।
सर्व्वत्र शुभदश्चैव धनपुत्रशुभप्रदः ॥ ३६
हषप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा।
ईशाने सुखदश्चैव सर्व्वत्रैव निशामय ॥ ३७
सर्व्वत्र चम्पकः शुद्धो भुवि भद्रप्रदस्तथा।
अलाबुश्चापि कुष्माण्डो मालयश्च शुकाशुकः।
खर्ज्जूरी कर्कटी चापि शिविरे मङ्गलप्रदा ॥ ३८
वास्तूकः कारवेल्लश्च वार्त्ताकुश्च शुभप्रदा।
लताफलञ्च शुभदं सर्व्वं सर्व्वत्र निश्चितम् ॥ ३९
प्रशस्तं कथितं कारो निषिद्धञ्च निशामय।
वन्यवृक्षो निषिद्धश्च शिविरे नगरेऽपि च ॥ ४०
वटो निषिद्धः शिविरे नित्यं चौरभयं ततः।
नगरे च प्रसिद्धश्च दर्शनात् पुण्यदस्तथा ॥ ४१
निषिद्धः शाल्मलिश्चैव शिविरे नगरे पुरि।
दुःखप्रदश्च सततं भूमिपानां सतामपि।
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ॥ ४२
वाट्यामतिनिषिद्धश्च सततं दुःखदस्तथा।
हे कारो तिन्तिड़ीवृक्षो यत्नात् तं परिवर्ज्जय ॥ ४३
शालेन धनहानिः स्यात् प्रजाहानिर्भवेद्ध्रुवम्।
शिविरेऽतिनिषिद्धश्च नगरे किञ्चिदेव च ॥ ४४
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च।
कार्पासः सर्षपश्चैव मसुरादिकमेव च ॥ ४५
शुभदौ यवगोधूमौ नगरे शिविरे तथा।
वृक्षश्च चणकादीनां धान्यञ्च मङ्गलप्रदम् ॥ ४६
ग्रामेषु नगरे वापि शिविरे च तथैव च।
द्रुतवृक्षश्च शुभदः सर्व्वमङ्गलदस्तथा ॥ ४७
अशोकश्च शिरीषश्च कदम्बश्च शुभप्रदः।
कच्चो हरिद्रा शुभदा शुभदं चार्द्रकं तथा ॥ ४८
हरीतकी च शुभदा ग्रामेषु नगरेषु च।
न वाट्यां भद्रदा नित्यं तथा चामलकी ध्रुवम् ॥ ४९
गजानामस्ति शुभदमश्वानाञ्च तथैव च।
कल्याणमुच्चैःश्रवसां वास्तौ स्थापनकारिणाम्।
न शुभप्रदमन्येषामुच्छन्नकारणं परम् ॥ ५०
वानराणां नराणाञ्च गर्द्दभानां गवामपि।
कुक्कुराणां शृगालानां मार्ज्जाराणामभद्रकम्।
भेटकानां शूकराणां सर्व्वेषाञ्चाशुभप्रदम् ॥ ५१
ईशाने चापि पूर्व्वस्मिन् पश्चिमे च तथोत्तरे।
शिविरस्य जलं भद्रमन्यत्राशुभमेव च ॥ ५२
दीर्घप्रस्थे समानञ्च न कुर्य्यान्मन्दिरं बुधः।
चतुरस्रे गृहे कारो दक्षिणां धननाशनम् ॥ ५३
प्रस्थे हस्तद्वयात् पूर्य्यं दीर्घं हस्तत्रयं तथा।
दीर्घप्रस्थः परिमितो नैवाङ्केणापि सङ्गतः।

शून्येन रहितं भद्रं शून्यं शून्यप्रदं नृणाम् ॥ ५४
दक्षिणां शुभदं द्वारं प्राकारस्य गृहस्य च ।
न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम् ॥ ५५
चतुरस्रं चन्द्रवेधं शिविरं मङ्गलप्रदम् ।
अभद्रं सूर्य्यवेधं प्राङ्गणञ्च तथैव च ॥ ५६
शिविराभ्यन्तरे भद्रा स्थापिता तुलसी नृणाम् ।
धनपुत्रप्रदात्री च पुण्यदा हरिभक्तिदा ।
प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत् ॥ ५७
मालती यूथिका कुन्द-माधवी केतकी तथा ।
नागेश्वरं मल्लिका च काञ्चनं वकुलं शुभम् ॥ ५८
अपराजिता च शुभदा तेषामुद्यानमीप्सितम् ।
पूर्व्वे च दक्षिणे चैव शुभदं नात्र संशयः ॥ ५९
ऊर्द्धं षोड़शहस्तेभ्यो नैव कुर्य्याद्गृहं गृही ।
ऊर्द्धं विंशतिहस्तेभ्यः प्राकारो न शुभप्रदः ॥ ६०
सूत्रधारं तैलकारं स्वर्णकारञ्च हीरकम् ।
वाटीमूले ग्राममध्ये न कुर्य्यात् स्थापनं बुधः ॥ ६१
ब्राह्मणं क्षत्त्रियं वैश्यं सच्छूद्रं गणकं शुभम् ।
भट्टं वैद्यं पुष्पकारं स्थापयेच्छिविरान्तिके ॥ ६२
अस्त्रे च परिखामानं शतहस्तं प्रशस्तकम् ।
परितः शिविराणाञ्च गभीरं शतहस्तकम् (क) ॥ ६३
सङ्केतपूर्व्वकञ्चैव परिखाद्वारमीप्सितम् ।
शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च ॥ ६४
शाल्मलीनां तिन्तिड़ीनां हिन्तालानां तथैव च ।
निम्बानां सिन्धुवाराणां डुम्बूरीणामभद्रकम् ॥ ६५
धुस्तूराणां वटानाञ्च एरण्डानामवाञ्छितम् ।
एतेषामतिरिक्तानां शिविरे काष्ठमीप्सितम् ॥ ६६
वृक्षञ्च वज्रहतकं दूरतो वर्ज्जयेद्बुधः ।
पुत्रदारधनं हन्यादित्याह कमलोद्भवः ॥ ६७
कथितं लोकशिक्षार्थं कुरु काष्ठं विना पुरीम् ।
शुभक्षणञ्चाप्यधुना गच्छ वत्स यथासुखम् ॥ ६८
विश्वकर्म्मा हरिं नत्वा जगाम पक्षिणा सह ।
समुद्रस्य समीपञ्च वटमूलं मनोहरम् ॥ ६९
सुष्वाप तत्र नक्तञ्च कारुश्च पक्षिणा सह ।
स्वप्ने द्वारवतीं रम्यां ददर्श गरुड़स्तथा ॥ ७०
यत् किञ्चित् कथितः कारुः कृष्णेन परमात्मना ।
तदेव लक्षणं सर्व्वं ददर्श नगरे मुने ॥ ७१

(क) दशहस्तकमित्यपि पाठः ।

कारुं हसन्ति स्वप्ने च सर्व्वे ते शिल्पकारिणः ।
गरुड़ं गरुड़श्चान्ये बलवन्तश्च पक्षिणः ॥ ७२
बुद्धा ददर्श गरुड़ो विश्वकर्म्मा च लज्जितः ।
अतीव द्वारकां रम्यां शतयोजनविस्तृताम् ॥ ७३
ब्रह्मादीनाञ्च नगरं विजित्य च विराजिताम् ।
तेजसाच्छादितां सूर्य्यं रत्नानाञ्च परिष्कृताम् ॥ ७४

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
द्वारकानिर्म्माणं नाम त्र्यधिक-
शततमोऽध्यायः ॥ १०३ ॥

---

## चतुरधिकशततमोऽध्यायः ।

नारायण उवाच ।

एतस्मिन्नन्तरे ब्रह्मा भवान्या च भवः स्वयम् ।
अनन्तश्चापि धर्म्मश्च भास्करश्च हुताशनः ॥ १
कुवेरो वरुणश्चैव पवनश्च यमस्तथा ।
महेन्द्रश्चापि चन्द्रश्च रुद्राश्चैकादशैव ते ॥ २
अन्ये देवाश्च मुनयो वसवः सप्त एव च ।
आदित्याश्चापि दैत्याश्च गन्धर्व्वाः किन्नरास्तथा ।
आययुर्द्वारकां द्रष्टुं श्रीकृष्णञ्च वलं तथा ॥ ३
आगच्छन्तश्च सहसा वटमूलं मनोहरम् ।
दृष्ट्वा च देवताः सर्व्वास्तुष्टुवुः पुरुषोत्तमम् ॥ ४
आकाशाच्च विमानाच्च सम्प्राप्य वटमूलकम् ।
ददृशुर्द्वारकां रम्यामतीव सुमनोहराम् ॥ ५
मुक्ता-माणिक्य-हीरेण रत्नराजिविराजिताम् ।
परितश्चतुरस्राञ्च शतयोजनसम्मिताम् ॥ ६
सप्तभिः परिखाभिश्च गभीराभिश्च वेष्टिताम् ।
प्राकारैर्नवभिर्युक्तां लक्षैः क्रीड़ासरोवरैः ॥ ७
मनोहरैः सपद्मैश्च सहितैश्च मधुव्रतैः ।
शोभितां सर्व्वतो भद्रां पुष्पोद्यानविलक्षकैः ॥ ८
प्रफुल्लपुष्पैः परमैः सर्व्वत्र सुरभीकृताम् ।
आमोदिताञ्च शीतेन गन्धचन्दनवायुना ॥ ९
तरुभिर्नारिकेलानां शोभितां शतकोटिभिः ।
चतुर्गुणैर्गुवाकानां गुप्तामाम्रमहीरुहैः ॥ १०
परीतां पनसानाञ्च वृक्षैराम्रसमैर्गुणैः ॥ ११
सुशोभिताञ्च तालानां द्रुमैराम्रसमैर्गुणैः ।

अश्वत्थैर्वदरीभिश्च विल्वैरास्रातकैर्वटैः॥ १२
शाल्मलीभिश्च जम्बूभिः कदम्बैश्चापि मण्डिताम्।
वंशैश्च तिन्तिडीभिश्च चम्पकैश्चन्दनैस्तथा॥ १३
नागेश्वरैर्नागरङ्गैर्जम्बीरैर्दाडिमैर्युताम्।
हरीतकीभिर्धात्रीभिस्तरुभिः परितः स्रुताम्॥ १४
शालैः प्रियालैर्हिन्तालैः शिरीषैः सप्तपर्णकैः।
अन्यैर्नानाद्रुमैरिष्टैरिष्टां युक्तां परिष्कृताम्॥ १५
असंख्यैर्मन्दिरै रम्यैरत्युच्चैरपि संस्कृताम्।
रत्नेन्द्रसारनिर्म्माणैर्मुक्तामणिविभूषितैः॥ १६
माणिक्यहीरकैश्चित्रैः सद्रत्नकलसान्वितैः।
मणिभिर्निर्म्मितैरिष्टैः सोपाननिकरैर्वरैः॥ १७
कपाटैः कठिनैर्दार्व्यैर्रगलैः कीलकैर्युतैः।
हरिन्मणीनां स्तम्भानां कदम्बैरपि संयुतैः॥ १८
रत्नचित्रैर्विचित्रैश्च सुचित्रैः सुपरिष्कृतैः।
दर्पणैः सूक्ष्मवस्त्रैश्च शोभितैः श्वेतचामरैः॥ १९
प्राङ्गणैः पद्मरागाद्यैरिन्द्रनीलपरिष्कृतैः।
वीथिभी रत्नखचितै राजमार्गैः समन्विताम्॥ २०
ग्रीष्ममध्याह्नसूर्य्याभां ज्वलितां रत्नतेजसा।
गवाक्षलक्षैः संयुक्तां वाजिशालैः परिष्कृतैः॥ २१
दृष्ट्वा च द्वारकां दिव्यां ते देवा विस्मयं ययुः।
प्रसन्नवदनो देवो लाङ्गली भगवानजः॥ २२
सस्मार यदुवंशानां समूहमुग्रसेनकम्।
वसुदेवं देवकीञ्च पाण्डवांश्च समात्मकान्॥ २३
नन्दं यशोदां गोपालान् राजेन्द्रमुनिपुङ्गवान्।
गन्धर्व्वान् किन्नरांश्चैव ब्रह्मन्नप्सरसां गणान्॥ २४
विद्याधरीः किन्नरीश्च वाद्यभाण्डं तथैव च।
गायनान् नर्त्तकांश्चैव चित्रान् भण्डरतांस्तथा॥ २५
एतस्मिन्नन्तरे तत्र वसुदेवश्च देवकी।
राजा महोग्रसेनश्च सहितो यदुपुङ्गवैः॥ २६
नन्दो यशोदा गोपाश्च जनन्या सह पाण्डवाः।
गन्धर्व्वाः किन्नराश्चैव विद्याधर्य्यश्च नारद॥ २७
किन्नर्य्यश्चापि नर्त्तक्यो गायना वाद्यभाण्डकाः।
भिक्षुकाश्च भण्डरता भट्टाश्च गणकास्तथा॥ २८
नानादेशोद्भवा भूपा वैश्याश्चान्ये च मानवाः।
सन्न्यासिनश्च यतयोऽवधूता ब्रह्मचारिणः॥ २९
आययुर्मुनयः सर्व्वे सशिष्याः सिद्धपुङ्गवाः।
सनकश्च सनन्दश्च तृतीयश्च सनातनः॥ ३०
सनत्कुमारो भगवान् ज्ञानिनाञ्च गुरोर्गुरुः।
शिष्यैस्त्रिकोटिभिः सार्द्धं पञ्चवर्षो दिगम्बरः॥ ३१
शिष्यैस्त्रिलक्षैः सहितो दुर्व्वासा भगवानजः।
लक्षशिष्यैः कश्यपश्च वाल्मीकिश्च त्रिलक्षकैः॥ ३२
लक्षैः शिष्यैर्गौतमश्च कोटिभिश्च बृहस्पतिः।
शुक्रस्त्रिकोटिभिः सार्द्धं भरद्वाजस्त्रिलक्षकैः॥ ३३
शिष्यैस्त्रिकोटिभिः सार्द्धमङ्गिरा भगवानजः।
शिष्यैः सार्द्धं कोटिभिश्च प्रचेता भगवांस्तथा॥ ३४
त्रिलक्षश्च पुलस्त्यश्चाप्यगस्त्यः कोटिभिः सह।
लक्षैः शिष्यैश्च पुलहः क्रतुर्लक्षैस्तथैव च॥ ३५
अत्रिस्त्रिकोटिभिः शिष्यैर्भृगुश्च पञ्चकोटिभिः।
त्रिकोटिभिर्मरीचिश्च शतानन्दः सहस्रकैः॥ ३६
सार्द्धं त्रिकोटिभिः शिष्यैर्ऋष्यशृङ्गो विभाण्डकः।
पाणिनिः कोटिभिः शिष्यैर्लक्षैः कात्यायनस्तथा॥ ३७
याज्ञवल्क्यः सहस्रैश्च व्यासः शिष्यैस्त्रिकोटिभिः।
त्रिकोटिभिः शुकश्चैव चतुर्भिश्च पराशरः॥ ३८
त्रिकोटिभिः कणादश्च च्यवनश्च त्रिकोटिभिः।
शिष्यैर्लक्षैश्च सहितो गर्गः कुलपुरोहितः॥ ३९
गालवश्च सहस्रैस्तु सहस्रैः सौभरिस्तथा।
त्रिकोटिभिर्लोमशश्च मार्कण्डेयस्त्रिकोटिभिः॥ ४०
कोटिभिर्वामदेवश्च जैगीषव्यस्त्रिकोटिभिः।
सान्दीपनिर्देवलश्च ऋष्यशृङ्गश्च त्रिकोटिभिः।
वोढुः शिष्यैः कोटिभिश्च लक्षैः पञ्चशिखस्तथा॥ ४१
अहं नारायणर्षिश्च नरोऽमम सहोदरः।
शिष्यैस्त्रिकोटिभिः सार्द्धं विश्वामित्रश्च कोटिभिः॥४२
त्रिकोटिभिजरत्कारुरास्तीकश्च त्रिकोटिभिः।
त्रिकोटिभिः पर्शुरामो वात्स्यो लक्षैश्च शिष्यकैः॥ ४३
दक्षस्त्रिलक्षैः शिष्यैश्च कपिलः पञ्चकोटिभिः।
सम्वर्त्तश्च त्रिलक्षैश्चाप्युतथ्यश्च तथैव च॥ ४४
सहस्रैर्जैमिनिश्चैव पैलो लक्षैस्तथैव च॥ ४५
सुमन्तुश्च सहस्रैश्च वैशम्पायन एव च।
शिष्यैर्लक्षैः समेतश्च व्यासशिष्यपुरोगमः॥ ४६
लक्षैः शिष्यैस्तथा शृङ्गी चोपमन्युस्तथैव च।
सहस्रैश्च गौरमुखः कचो लक्षैर्गुरोः सुतः॥ ४७
अश्वत्थामा तथा द्रोणः कृपाचार्य्यः सशिष्यकः।
भीष्मः कर्णश्च शकुनी राजा दुर्य्योधनस्तथा।
नृपस्य भ्रातरः सर्व्वे चान्ये भूपाः समाययुः॥ ४८

ते सर्व्वे तुष्टुवुः कृष्णं परमात्मानमीश्वरम्।
शुभाशिषञ्च प्रददू राजानो मुनिपुङ्गवाः॥ ४९
उग्रसेनं सभामध्ये तं राजेन्द्रमुवाच सः।
भगवान् सस्मितः शान्तो भक्त्या चापि जगद्गुरुः॥ ५०

श्रीभगवानुवाच।

शुभकर्म्मणि निष्पन्ने यास्यन्ति ये समागताः।
शिव-ब्रह्मादयो देवा मुनयश्च तथैव च।
भगवन् यादवैः सार्द्धं प्रविश्य द्वारकां पुरीम्॥ ५१
मत्पित्रा मातृभिः सार्द्धं माहेन्द्रे च त्वयि नृप।
अपरे यदवोऽन्ये च यास्यन्ति मथुरापुरीम्।
श्रुत्वेति विरसो राजा तमुवाच भयाकुलः॥ ५२

उग्रसेन उवाच।

वासुदेव न यास्यामि भूमिं तां पैतृकीं त्यजन्।
सर्व्वतीर्थपरां शुद्धां दैवे कर्म्मणि पैतृके॥ ५३
मारके भूमिदेशे च पितॄणां निर्व्वपेत् तु यः।
तद्भूमिस्वामी पितृभिः श्राद्धकर्म्मणि हन्यते॥ ५४
पितॄणां निष्फलं श्राद्धं देवानामपि पूजनम्।
किञ्चित् फलप्रदञ्चैव सम्पूर्णं पैतृके स्थले॥ ५५
पुत्र-पौत्र-कलत्रेभ्यः प्राणेभ्यः प्रेयसी सदा।
दुर्लभा पैतृकी भूमिः पितुर्मातुर्गरीयसी॥ ५६
तत्समञ्च पवित्रञ्च दैवे कर्म्मणि पैतृके।
क्रीड़ा च तद्गते दानं परदत्तमशुद्धकम्॥ ५७
म्रियते पैतृकीभूम्यां तीर्थतुल्यं फलं लभेत्।
गङ्गाजलसमं भूतं पितृखातोदकं हरे॥ ५८
तत्र स्नात्वा जले पूते गङ्गास्नानफलं लभेत्।
पितॄणां तर्पणं तत्र पवित्रं देवपूजनम्॥ ५९
पैतृकी जन्मभूमिश्चेत् फलं तद्द्विगुणं भवेत्।
पैतृकीभूमितुल्या न दानभूमिः सतामपि॥ ६०

श्रीवासुदेव उवाच।

भोगान्ते वचनं किं वा निरीक्षः केन वार्य्यते।
पैतृकी तीर्थतुल्या सा किं तीर्थं द्वारकापरम्॥ ६१
सर्व्वतीर्थपरा श्रेष्ठा द्वारका बहुपुण्यदा।
यस्यां प्रवेशमात्रेण नराणां जन्मखण्डनम्॥ ६२
दानं तद्द्वारकायाञ्च श्राद्धञ्च देवपूजनम्।
चतुर्गुणञ्च तीर्थानां गङ्गादीनाञ्च भूमिप॥ ६३
गच्छ ब्रह्मादिभिः सार्द्धं मुनिभिर्यादवैः सह।
राजेन्द्रभवनं तत्र गृहाण सादरं पुनः॥ ६४
करोति शश्वन्व्यक्कारं महेन्द्रस्यामरावतीम्।
निवस त्वं सुधर्म्मायां माहेन्द्रे च त्वयि नृप॥ ६५
जम्बूद्वीपस्थिता भूपा राजेन्द्रमण्डलेश्वराः।
करं दास्यन्ति तुभ्यञ्च महेन्द्राय सुरा यथा॥ ६६
भूयाञ्जितः कुवेरश्च धनेन धनसम्पदा।
तेजसा भास्करश्चापि महेन्द्रः सम्पदा तथा॥ ६७
देवा जिता रणेनैव पुण्येन मुनयो जिताः।
तपस्विनश्च तपसा व्रतिनश्च व्रतेन च॥ ६८
उग्रसेनसमो राजा न भूतो न भविष्यति।
सभायां यस्य भगवान् बलदेवो महाबलः॥ ६९
विश्वञ्च यस्य शिरसां सहस्राणां नरेश्वर।
एकस्मिन् शिरसि न्यस्तं शूर्पे च सर्षपो यथा॥ ७०
न ह्यनन्तसमो देवो बले च बलवत्तरः।
यद्गुणानाञ्च नास्त्यन्तोऽप्यनन्तं तं विदुर्बुधाः॥ ७१
वसवोऽष्टौ महाभागा रुद्राश्च शङ्करं विना।
बलिनो द्वादशादित्या महेन्द्रश्च सुरैः समम्।
न समर्था भवं जेतुमुग्रसेनं नृपेश्वरम्॥ ७२
कृष्णस्य वचनं श्रुत्वा प्रसन्नवदनो नृपः।
प्रययौ यादवैः सार्द्धं महेन्द्रभवनात् परम्।
स्वालयं द्वारकामध्ये ज्वलन्तं मणितेजसा॥ ७३
सहस्रैर्द्वारपालैश्च शूलिभिर्दण्डहस्तकैः।
नियुक्तै रक्षितद्वारं ददर्श मानवेश्वरः॥ ७४
अभ्यन्तरे च शिविरं द्वारेभ्यः षड्भ्य एव च।
मन्दिराणाञ्च शतकै रत्नानां परिभूषितम्॥ ७५
कोटिं मत्तगजेन्द्राणां ददर्श गजमन्दिरे।
चतुर्गुणं गजौघञ्च गजानां षड्गुणं तथा॥ ७६
महाबलञ्च तुरगं सूर्य्याश्वञ्च हसन्ति ये।
गजेन्द्रराजं सर्व्वेषां वाहनानामधीश्वरम्॥ ७७
हसत्यैरावतं शश्वन्महेन्द्रस्य च नारद।
अत्युच्चैरुच्चैःश्रवसां ददर्श कोटिमीप्सिताम्॥ ७८
खराणां दशकोटिञ्च पादातं षड्गुणं ततः।
निर्म्माणं रत्नसाराणां रथानां पञ्चलक्षकम्॥ ७९
पञ्चलक्षं सारथीनां तत्राश्वं षड्गुणं ततः।
अश्ववारं तत्समञ्च सुधर्म्माञ्च स तामपि॥ ८०
ददर्शाभ्यन्तरे रम्ये देवैश्च मुनिभिर्युताम्।
वह्निशुद्धांशुके रम्यैर्भूषितां रत्नकम्बलैः॥ ८१
रत्नसिंहासने रम्यैः कोटिभिश्च विभूषिताम्।

अमूल्यरत्ननिर्म्माण-वीथीनां तेजसोज्ज्वलाम् ॥ ८२
वेष्टिताञ्च महाभीतैः किङ्करैः शतकोटिभिः।
प्रविवेश सभां रम्यां श्रुत्वा शङ्खध्वनिं शुभम्।
वाद्यञ्च दुन्दुभीनाञ्च मुनीनां वेदमन्त्रकम् ॥ ८३
दृष्ट्वा नृपं समुत्तस्थौ वेगेन सबलो हरिः।
ब्रह्मा महेश्वरश्चैव शेषश्च देवपुङ्गवः ॥ ८४
समुत्तस्थुः सुराः सर्व्वे मुनयश्च महाव्रताः।
राजेन्द्राश्चापि सिद्धेन्द्रा वसुदेवपुरोगमाः ॥ ८५
रत्नसिंहासने रम्ये चोग्रसेनो महाबलः।
समुवास च माहेन्द्रे मुनीनामाज्ञया हरेः।
देवानाञ्च गुरूणाञ्च गर्गस्यापि तथैव च ॥ ८६
सप्ततीर्थोदकेनैव पूर्णकुम्भेन नारद।
चकार वेदमन्त्रैश्च नृपस्याप्यभिषेचनम् ॥ ८७
तस्मै वस्त्रयुगं दत्तं वह्निशुद्धं मनोहरम्।
वरुणेन पुरा दत्तं कृष्णेन परमात्मना ॥ ८८
माल्यञ्च पारिजातानां चन्दनं रत्नभूषणम्।
रत्नच्छत्रं ददौ तस्मै बलदेवो महाबलः ॥ ८९
ब्रह्मा कमण्डलुञ्चैव शूलञ्चापि महेश्वरः।
पार्व्वती रत्नमालाञ्च हारञ्च मालती सती ॥ ९०
अन्ये देवाश्च मुनयो राजेन्द्राः सिद्धपुङ्गवाः।
यौतुकञ्च ददुस्तस्मै क्रमेण च पृथक् पृथक् ॥ ९१
वसुदेवो ददौ तस्मै शुभदं श्वेतचामरम्।
पवनेन पुरा दत्तं कृष्णाय परमात्मने ॥ ९२
नन्दो ददौ च सुरभीं कामधेनुञ्च पूजिताम्।
यशोदा देवकी तस्मै रत्नश्रेष्ठं ददौ मुने ॥ ९३
सप्तभिः किङ्करैश्चापि सेवितः श्वेतचामरैः।
दधार च्छत्रमक्रूरो भक्त्या चैवाज्ञया हरेः ॥ ९४
रत्नसिंहासने रम्ये ददर्श रत्नदर्पणम्।
अतीवपुण्यराज्यञ्च हरिणा च पुरस्कृतः ॥ ९५
चक्रुः स्तुतिं तं भट्टाश्च भिक्षुका ब्राह्मणास्तथा।
ददुः शुभाशिषं तस्मै देवाश्च मुनयस्तथा ॥ ९६
ब्राह्मणेभ्यो ददौ राजा रत्नकोटिञ्च भक्तितः।
भट्टेभ्यो रत्नशतकं भिक्षुकेभ्यस्तथैव च ॥ ९७
अभिषिच्य नृपेन्द्रञ्च देवांश्च मुनिपुङ्गवान्।
सम्पूज्य ब्राह्मणांश्चैव भट्टं भिक्षुं द्विजं गुरुम्।
स्वालयञ्च ययुः सर्व्वे यादवाश्च मुदान्विताः ॥ ९८
ये ये हरेः पार्षदाश्च ते सर्व्वे स्वालयं ययुः ॥ ९९
प्रभात आययुः सर्व्वे सुधर्म्माञ्च शुभां हरेः।
नमस्कृत्य नृपेन्द्रं तमूषुः सर्व्वे च संसदि ॥ १००

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे द्वारकाप्रवेशे चतुरधिक-
शततमोऽध्यायः ॥ १०४ ॥

---

## पञ्चाधिकशततमोऽध्यायः।

नारायण उवाच।

अथ वैदर्भराजेन्द्रो महाबलपराक्रमः।
विदर्भदेशे पुण्यात्मा सत्यशीलश्च भीष्मकः ॥ १
राजा नारायणांशश्च दाता च सर्व्वसम्पदाम्।
धर्म्मिष्ठश्च गरिष्ठश्च वरिष्ठश्चापि भूभृताम् ॥ २
तस्य कन्या महालक्ष्मी रुक्मिणी योषितां वरा।
अतीव सुन्दरी रम्या रामा रामासु पूजिता ॥ ३
नवयौवनसम्पन्ना रत्नाभरणभूषिता।
तप्तकाञ्चनवर्णाभा तेजसा ज्वलिता सती ॥ ४
शुद्धसत्त्वस्वरूपा सा सत्यशीला पतिव्रता।
शान्ता दान्ता नितान्तञ्चाप्यनन्यगुणशालिनी ॥ ५
इन्द्राणी वरुणानी च चन्द्रनारी च रोहिणी।
कुवेरपत्नी सूर्य्यस्त्री स्वाहा शान्ती रतिः कला ॥ ६
अन्या च रमणी या च श्रेष्ठा च सुमनोहरा।
रुक्मिणीभीष्मकन्यायाः कलां नार्हति षोड़शीम् ॥ ७
तां दृष्ट्वा राजराजेन्द्रो बालक्रीड़ावतीं पराम्।
बालां सुशोभां भासन्तीं यथाब्देषु विधोःकलाम् ॥ ८
शरत्पूर्णेन्दुशोभाढ्यां शरत्कमललोचनाम्।
विवाहयोग्यां युवतीं लज्जानम्राननां शुभाम् ॥ ९
सहसा चिन्तितो धर्म्मी धर्म्मशीलश्च सुव्रतः।
सुतां पप्रच्छ पुत्रांश्च ब्राह्मणांश्च पुरोहितम् ॥ १०

भीष्मक उवाच।

कं वृणोमि सुतार्थञ्च वराहं प्रवरं वरम्।
मुनिपुत्रं देवपुत्रं राजेन्द्रसुतमीप्सितम् ॥ ११
विवाहयोग्या कन्या मे वर्द्धमाना मनोहरा।
शीघ्रं पश्य वरं योग्यं नवयौवनसंयुतम् ॥ १२
धर्म्मशीलं सत्यसन्धं नारायणपरायणम्।
वेदवेदाङ्गविज्ञञ्च पण्डितं सुन्दरं शुभम् ॥ १३
शान्तं दान्तं क्षमाशीलं गुणिनं चिरजीविनम्।

महाकुलप्रसूतञ्च सर्व्वत्रैव प्रतिष्ठितम् ॥ १४
करोमि राजपुत्रञ्चेद्रणशास्त्रविशारदम् ।
महारथं प्रतापाढ्यं रणमूर्द्धि च सुस्थिरम् ॥ १५
करोमि देवपुत्रञ्चेद्देवं गुणयुतं तथा ।
करोमि मुनिपुत्रञ्चेच्चतुर्व्वेदविशारदम् ।
न्यायदृक्कं विचारज्ञं सिद्धान्तेषु नितान्तकौ ॥ १६
नृपेन्द्रवचनं श्रुत्वा तमुवाच मुनेः सुतः ।
गौतमस्य शतानन्दो वेदवेदाङ्गपारगः ॥ १७
आप्तः प्रतप्ता विप्रश्च धर्म्मी कुलपुरोहितः ।
पृथिव्यां सर्व्वतत्त्वज्ञो निष्णातः सर्व्वकर्म्मसु ॥ १८

शतानन्द उवाच ।

राजेन्द्र त्वञ्च धर्म्मज्ञः सर्व्वशास्त्रविशारदः ।
पूर्व्वाख्यानञ्च वेदोक्तं कथयामि निशामय ॥ १९
भुवो भारावतरणे स्वयं नारायणो भुवि ।
वसुदेवसुतः श्रीमान् परिपूर्णतमः प्रभुः ॥ २०
विधातुश्च विधाता च ब्रह्मेशशेषवन्दितः ।
ज्योतिःस्वरूपः परमो भक्तानुग्रहविग्रहः ॥ २१
परमात्मा च सर्व्वेषां प्राणिनां प्रकृतेः परः ।
निर्लिप्तश्च निरीहश्च साक्षी च सर्व्वकर्म्मणाम् ॥ २२
राजेन्द्र तस्मै कन्याञ्च परिपूर्णतमाय च ।
दत्त्वा यास्यसि गोलोकं पितृभिः शतकैः सह ॥ २३
लभ सारूप्यमुक्तिञ्च कन्यां दत्त्वा परत्र च ।
इहैव सर्व्वपूज्यश्च भव विश्वगुरोर्गुरुः ॥ २४
सर्व्वस्वं दक्षिणां दत्त्वा महालक्ष्मीञ्च रुक्मिणीम् ।
समर्पणं कुरु विभो कुरुष्व जन्मखण्डनम् ॥ २५
विधात्रा लिखितो राजन् सम्बन्धः सर्व्वसम्मतः ।
द्वारकानगरे कृष्णं शीघ्रं प्रस्थापय द्विजम् ॥ २६
कृत्वा शुभक्षणं पूर्णं सर्व्वेषामपि सम्मतम् ।
आनीय परमात्मानं भक्तानुग्रहविग्रहम् ॥ २७
ध्यानानुरोधहेतोश्च नित्यं देहमनुत्तमम् ।
दृष्टिमात्रात् कुरु नृप स्वजन्म-कर्म्मखण्डनम् ॥ २८
यं न जानन्ति चत्वारो वेदाः सन्तश्च देवताः ।
सिद्धेन्द्राश्च मुनीन्द्राश्च देवा ब्रह्मादयस्तथा ।
ध्यायन्ते ध्यानपूताश्च योगिनो न विदन्ति यम् ॥२९
सरस्वती जड़ीभूता वेदाः शास्त्राणि यानि च ।
सहस्रवक्त्रः शेषश्च पञ्चवक्त्रः स्वयं शिवः ॥ ३०
चतुर्म्मुखो जगद्धाता कुमारः कार्त्तिकस्तथा ।
ऋषयो मुनयश्चैव भक्ताः परमवैष्णवाः ॥ ३१
असमाः स्तवने यस्य ध्यानासाध्यश्च योगिनाम् ।
बालकोऽहं महाराज तद्गुणं कथयामि किम् ॥ ३२
शतानन्दवचः श्रुत्वा प्रफुल्लवदनो नृपः ।
आलिङ्गनं ददौ तस्मै समुत्थाय जवेन च ॥ ३३
नानारत्नं सुवर्णञ्च वस्त्रञ्च रत्नभूषितम् ।
ददौ तस्मै प्रदानञ्च प्रसादसुमुखो नृपः ॥ ३४
गजेन्द्रं तुरगश्रेष्ठं रथञ्च मणिनिर्म्मितम् ।
रत्नसिंहासनं रम्यं धनञ्च विपुलं तथा ॥ ३५
भूमिञ्च सर्व्वशस्याढ्यां शश्वद्वृत्तिकरीं शुभाम् ।
अकृष्टसाध्यां पूज्याञ्च ग्रामं सर्व्वप्रशंसितम् ॥ ३६
एतस्मिन्नन्तरे रुक्मी चुकोप नृपनन्दनः ।
कम्पितो धर्म्मयुक्तश्च रक्तास्यो रक्तलोचनः ॥ ३७
उवाच पितरं विप्रं सभायामस्थिरस्तथा ।
उत्थाय तिष्ठन् पुरतः सर्व्वेषाञ्च सभासदाम् ॥ ३८

रुक्मिरुवाच ।

शृणु राजेन्द्र वचनं हितं तथ्यं प्रशंसितम् ।
त्यज वाक्यं भिक्षुकाणां विप्राणां लोभिनामहो ॥ ३९
नर्त्तकानाञ्च वेश्यानां भट्टानामर्थिनामपि ।
कायस्थानाञ्च भिक्षूणामसत्यं वचनं सदा ॥ ४०
घटकानां नाटकानां स्त्रीलुब्धानाञ्च कामिनाम् ।
दरिद्राणाञ्च मूर्खाणां स्तुतिपूर्व्वं वचः सदा ॥ ४१
निहत्य कालयवनं राजेन्द्रं परतो धिया ।
उपायेन महाराज लब्धं कृष्णेन तद्धनम् ॥ ४२
द्वारकायां धनी कृष्णो यवनस्य धनेन च ।
जरासन्धभयेनैव समुद्राभ्यन्तरे गृही ॥ ४३
जरासन्धशतञ्चैव क्षणेनैव च लीलया ।
क्षमोऽहं हन्तुमेकाकी रामश्चान्यस्य का कथा ॥ ४४
दुर्व्वाससश्च शिष्योऽहं रणशास्त्रविशारदः ।
श्रवं पाशुपतेनैव विश्वं संहर्त्तुमीश्वरः ॥ ४५
मत्समः पर्शुरामश्च शिशुपालश्च मत्समः ।
सखा च बलवान् शूरः स्वर्गं जेतुं स च क्षमः ।
महेन्द्रं सगणं जेतुमहमीशः क्षणेन च ॥ ४६
जित्वा युद्धे जरासन्धं दुर्व्वलं योजितं नृप ।
अहङ्कारयुतः कृष्णो वीरत्वं (क) मन्यते धिया ॥४७
यद्यायास्यति मद्ग्रामं विवाहं कर्त्तुमीप्सितम् ।

(क) वीरं स्वमित्यपि पाठः ।

एवं प्रस्थापयिष्यामि क्षणेन यममन्दिरम्॥ ४८
अहो नन्दस्य वैश्यस्य तस्मै गोरक्षकाय च।
साक्षाज्जाराय गोपीनां गोपालोच्छिष्टभोजिने॥४९
करोषि कन्यां स्वीकारं देवयोग्याञ्च रुक्मिणीम्।
दातुमिच्छसि वाक्येन भिक्षुकस्य द्विजस्य च॥ ५०
धनलुब्धस्य भ्रान्तस्य कृच्छ्रात् प्राप्तधनस्य च।
राजेन्द्र बुद्धिहीनोऽसि वचनात् पङ्कलस्य च॥ ५१
मा राजपुत्रो मा शूरो मा कुलीनश्च मा शुचिः।
मा दाता मा धनाढ्यश्च मा योग्यो मा जितेन्द्रियः॥५२
कन्यां देहि सुपात्राय शिशुपालाय भूमिप।
बलेन रुद्रतुल्याय राजेन्द्रतनयाय च॥ ५३
निमन्त्रणं कुरु नृप नानादेशोद्भवान् नृपान्।
बान्धवांश्च मुनीन्द्रांश्च पत्रद्वारा त्वरान्वितः॥ ५४
अङ्गं कलिङ्गं मगधं सौराष्ट्रं वदनं (क) गुरुम्।
राढ़ं वारेन्द्रं वङ्गञ्च गुर्ज्जराटञ्च पेटरम्॥ ५५
महाराष्ट्रं विराटञ्च मङ्गलञ्च (ख) सुवङ्गकम्।
अलुकं भल्लकं खर्व्वं दुर्गं प्रस्थापय द्विजम्॥ ५६
घृतकुल्यासहस्रञ्च मधुकुल्यासहस्रकम्।
दधिकुल्यासहस्रञ्च दुग्धकुल्यासहस्रकम्॥ ५७
तैलकुल्यापञ्चशतं गुड़कुल्याद्विलक्षकम्।
शर्कराणां राशिशतं मिष्टान्नानां चतुर्गुणम्॥ ५८
यवगोधूमचूर्णानां पिष्टराशिशतं ततः।
पृथुकानां राशिलक्षमन्नानां तच्चतुर्गुणम्॥ ५९
गवां लक्षं छेदनञ्च हरिणानां द्विलक्षकम्।
चतुर्लक्षं शशानाञ्च कूर्म्माणाञ्च तथा कुरु॥ ६०
दशलक्षं छागलानामवीनां तच्चतुर्गुणम्।
सर्व्वेषि ग्रामदेव्यै च बलिं देहि च भक्तितः॥ ६१
एतेषां मांसपक्वञ्च भोजनार्थञ्च कारय।
परिपूर्णं व्यञ्जनानां सामग्रीं कुरु भूमिप॥ ६२
अथ श्रुत्वा च तद्वाक्यं राजेन्द्रः सपुरोहितः।
चकार मन्त्रणां तूर्णं निर्ज्जने मन्त्रिणा सह॥ ६३
द्विजं प्रस्थापयामास द्वारकां योग्यमीप्सितम्।
कृत्वा च शुभलग्नञ्च सर्व्वग्राममभिवाञ्छितम्॥ ६४
राजा सम्भृतसम्भारो बभूव सत्वरं मुदा।
निमन्त्रणञ्च सर्व्वत्र चकार च सुताज्ञया॥ ६५

विप्रः सुधर्म्मां सम्प्राप्तो नृपैर्द्देवैश्च वेष्टिताम्।
प्रददौ पत्रिकां भद्रामुग्रसेनाय भूभृते॥ ६६
प्रफुल्लवदनो राजा श्रुत्वा पत्रं सुमङ्गलम्।
सुवर्णानां सहस्रञ्च ब्राह्मणेभ्यो ददौ मुदा॥ ६७
दुन्दुभिं वादयामास द्वारकायाञ्च सर्व्वतः।
देवानन्यान् नृपांश्चैव ज्ञातिवर्गांश्च बान्धवान्।
भट्टांश्च भिक्षुकांश्चैव भोजयामास सादरम्॥ ६८
श्रीकृष्णस्य सुवेशञ्च कारयामास भूपतिः।
अतीव रम्यमतुलं त्रिषु लोकेषु दुर्लभम्॥ ६९
यात्राञ्च कारयामास जगतां प्रवरं वरम्।
वेदमन्त्रेण रम्येण माहेन्द्रे सुमनोहरे॥ ७०
आदौ ब्रह्मा रथस्थश्च सावित्र्या सहितो ययौ।
रथस्थश्च महाहृष्टो भवान्या च भवः स्वयम्॥ ७१
शेषश्चापि दिनेशश्च गणेशश्चापि कार्त्तिकः।
महेन्द्रश्च तथा चन्द्रो वरुणः पवनस्तथा।
कुबेरश्च यमोऽग्निश्च ईशानोऽपि ययौ मुदा॥ ७२
देवानाञ्च त्रिकोट्यश्च मुनीनां षष्टिकोटयः।
राजेन्द्राणां त्रिलक्षञ्च श्वेतच्छत्रसमन्वितम्॥ ७३
उग्रसेनो बभौ राजा नक्षत्रेषु यथा शशी।
ययौ प्रसन्नवदनः कुण्डिनाभिमुखो बली॥ ७४
रत्ननिर्म्माणयानेन बलदेवो महाबलः।
वसुदेवश्चोद्धवश्च नन्दोऽक्रूरश्च सात्यकिः॥ ७५
गोपाला यादवेन्द्राश्च चन्द्रवंश्याश्च ते ययुः।
धृतराष्ट्रसुताः सर्व्वे दुर्य्योधनपुरोगमाः॥ ७६
युधिष्ठिरस्तथा भीमः फाल्गुनो नकुलस्तथा।
सहदेवश्च यानैश्च प्रययुः पञ्च पाण्डवाः॥ ७७
भीष्मो द्रोणोऽपि कर्णश्चाप्यश्वत्थामा महाबलः।
कृपाचार्य्यश्च शकुनिः शल्यश्च प्रययौ मुदा॥ ७८
भट्टानाञ्च त्रिकोट्यश्च विप्राणां शतकोटयः।
सन्न्यासिनां सहस्रञ्च यतीनां ब्रह्मचारिणाम्॥ ७९
द्विसहस्रं जितक्रोधा अवधूतास्तथैव च।
उत्पलानां सहस्रञ्च सहस्रं पुष्पकारिणाम्॥ ८०
नानाशिल्पकरश्चैव विचित्रं चित्रमेव च।
लक्षञ्च वाद्यभाण्डानां नर्त्तकानाञ्च लक्षकम्।
गन्धर्व्वाणां गायनानां लक्षमेव तु नारद॥ ८१
तत्र कल्ये भवानेव गन्धर्व्वश्चोपबर्हणः।
पञ्चाशत्कामिनीभिश्च त्वमेव तेषु मध्यगः॥ ८२

(क) वल्कलमित्यपि पाठः।
(ख) सुङ्गलञ्चेति पाठान्तरम्।

विद्याधरीणां लक्षञ्च लक्षमप्सरसां तथा।
किन्नरीणां त्रिलक्षञ्च गन्धर्व्वीणाञ्च लक्षकम् ॥ ८३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
रुक्मिण्युद्वाहे पञ्चाधिकशत-
तमोऽध्यायः ॥१०५॥

---

## षड़धिकशततमोऽध्यायः

नारायण उवाच।

एतस्मिन्नन्तरे राजा ककुद्मांश्च महाबलः।
वरार्थं कन्यकायाश्च ब्रह्मलोकात् समागतः ॥ १
प्रददौ रेवतीं कन्यां शश्वत्सुस्थिरयौवनाम्।
अमूल्यरत्नभूषाढ्यां त्रिषु लोकेषु दुर्लभाम्।
वराय वलदेवाय सम्प्रदानेन कौतुकात् ॥ २
वयो यस्या गतं सत्यं युगानां सप्तविंशतिः।
दत्त्वा कन्यां विधानेन मुनिदेवेन्द्रसंसदि ॥ ३
गजेन्द्राणां त्रिलक्षञ्च जामात्रे यौतुकं ददौ।
दशलक्षं तुरङ्गाणां रथानां लक्षमेव च ॥ ४
रत्नालङ्कारयुक्तानां दासीनाञ्चापि लक्षकम्।
मणिलक्षं रत्नलक्षं स्वर्णकोटिञ्च सादरम्।
वह्निशुद्धांशुकं रम्यं मुक्ता-माणिक्य-हीरकम् ॥ ५
दत्त्वा कन्याञ्च राजेन्द्रो बलाय बलशालिने।
रत्नेन्द्रसारयानेन तैः सार्द्धं कुण्डिनं ययौ ॥ ६
अथान्तरे च निर्व्विघ्ने साङ्गे मङ्गलकर्म्मणि।
रेवतीं वेशयामास योषितां कमला कलाम् ॥ ७
देवकी रोहिणी रम्या यशोदा नन्दगेहिनी।
अदितिश्च दितिः शान्तिर्जयं कृत्वा च मन्दिरम् ॥ ८
ब्राह्मणान् भोजयामास ददौ तेभ्यो धनं मुदा।
मङ्गलं कारयामास वसुदेवस्य वल्लभा ॥ ९
अथ देवाश्च मुनयो राजेन्द्राः कटकैः सह।
सम्प्रापुर्लीलामात्रेण कुण्डिनं नगरं मुदा ॥ १०
ददृशुर्नगरं सर्व्वं अतीव सुमनोहरम्।
सप्तभिः परिखाभिश्च गभीराभिश्च वेष्टितम् ॥ ११
प्राकारैः सप्तभिर्युक्तं द्वाराणां शतकैस्तथा।
नानारत्नैश्च मणिभिर्निर्म्मितं विश्वकर्म्मणा ॥ १२
नगरस्य वहिर्द्वारं ददृशुर्वरयात्रिणः।
रक्षितं रक्षकैः सार्द्धं चतुर्भिश्च महारथैः ॥ १३
रुक्मिश्च शिशुपालश्च दन्तवक्रो महाबली।
शाल्वो मायाविनां श्रेष्ठो युद्धशास्त्रविशारदः ॥ १४
नानाशस्त्रैस्तथास्त्रैश्च रथस्थश्च रणोन्मुखः।
विलोक्य कृष्णसैन्यञ्च चुकोप नृपनन्दनः ॥ १५
उवाच निष्ठुरं वाक्यं श्रुतितीक्ष्णं सुदुष्करम्।
उपहस्य मुनीन्द्रांश्च देवांश्च नृपपुङ्गवान् ॥ १६

रुक्मिरुवाच।

अहो कालकृतं कर्म्म देवञ्च केन वार्य्यते।
किं वाहं कथयिष्यामि देवेन्द्राणाञ्च संसदि ॥ १७
अहीतुं रुक्मिणीं कन्यां देवयोग्यां मनोहराम्।
आयाति देवैर्मुनिभिर्नन्दस्य पशुरक्षकः ॥ १८
साक्षाज्जारश्च गोपीनां गोपालोच्छिष्टभोजकः (क)।
जातेश्च निर्णयो नास्ति भक्ष्य-मैथुनयोस्तथा ॥ १९
किन्नु राजेन्द्रपुत्रश्च किन्नु वा मुनिपुङ्गवः।
वासुदेवः क्षत्रियश्च भक्षणं वैश्यमन्दिरे ॥ २०
शिशुकाले च स्त्रीहत्या कृतानेन दुरात्मना।
कुब्जा मृता च सम्भोगाद्धासि रजको मृतः ॥ २१
राजेन्द्रस्य वधे दुष्टो ब्रह्महत्यां लभेद्ध्रुवम्।
मथुरायाञ्च धर्म्मिष्ठः सद्यः कंसो निपातितः ॥ २२

शाल्व उवाच।

यदुक्तं रुक्मिणा देवाः किमसत्यञ्च तत्र वै।
को वायं रुक्मिणीभर्त्ता नन्दस्य पशुरक्षकः ॥ २३

शिशुपाल उवाच।

अहो भुवि किमाश्चर्य्यं देवा ब्रह्मादयस्तथा।
मुनीन्द्रा ब्रह्मणः पुत्राश्चाययुर्मानवाज्ञया ॥ २४

दन्तवक्र उवाच।

सततं ब्राह्मणा लुब्धा देवाश्च भक्तवत्सलाः।
आययुर्ब्रह्मपुत्राश्च नन्दपुत्राज्ञया कथम् ॥ २५
तेषाञ्च वचनं श्रुत्वा चुकोप देवसङ्घकः।
मुनिराजेन्द्रसङ्घश्च लाङ्गली यादवस्तथा ॥ २६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे नारायण-नारदसंवादे
रुक्मिण्युद्वाहे षड़धिकशत-
तमोऽध्यायः ॥१०६॥

---

(क) गोपोच्छिष्टान्नभोजक इत्यपि क्वचित् पाठः।

## सप्ताधिकशततमोऽध्यायः।

नारायण उवाच।

अथ कोपपरीतश्च बलदेवो महाबलः।
हलेन रुक्मियानञ्च बभञ्ज मुनिपुङ्गव॥ १
घोटकान् सारथिञ्चैव निहत्य जगतां पतिः।
भूमिष्ठञ्चापि पापिष्ठं रुक्मिं हन्तुं जगाम सः॥ २
रुक्मिश्च शरजालेन वारयामास लीलया।
नागास्त्रं योजयामास बद्धुं हलिनमीश्वरम्॥ ३
नागास्त्रं गारुडेनैव सञ्जहार हली स्वयम्।
जग्राह कोपाद्रुक्मी च परं पाशुपतं मुने।
अव्यर्थं वैरिमर्द्दञ्च शतसूर्य्यसमप्रभम्॥ ४
अभितो हलिना रुक्मी जृम्भणास्त्रेण जृम्भितः।
भूमिष्ठः स्थाणुवद्रुक्मी निद्रास्त्रेणैव निद्रितः॥ ५
शाल्वस्तं निद्रितं दृष्ट्वा शतवाणं मुमोच तम्।
शलवृष्टिं शिलावृष्टिं जलवृष्टिं चकार सः।
ज्वलदङ्गारवृष्टिञ्च शरवृष्टिं क्षणेन च॥ ६
वलाचास्त्रेण सर्व्वाणि वारयामास लाङ्गली।
हलेन तद्रथं चूर्णं चकार रणमध्यतः॥ ७
घोटकान् सारथिञ्चैव जघान चावलीलया।
कोपाकुले न तं हन्तुं वागवभूवाशरीरिणी॥ ८
त्यज शाल्वं कृष्णवध्यं तव किं पौरुषं रणे।
यस्य मूर्द्ध्नि च ब्रह्माण्डं शूर्पे च सर्षपं यथा॥ ९
तच्छ्रुत्वा वलदेवश्च हलेन तस्य मस्तकम्।
चकार तूर्णं व्यथितं पपात रणमूर्द्धनि॥ १०
शाल्वस्य पतनं दृष्ट्वा शिशुपालो महाबलः।
चकार शरवृष्टिञ्च जलवृष्टिं यथा भुवि॥ ११
हली तस्य रथं चूर्णं चकार लाङ्गलेन च।
अर्द्धचन्द्रेण तद्बाणान् वारयामास लीलया॥ १२
तं हन्तुं शङ्करः साक्षान्निषेधञ्च चकार तम्।
कृष्णवध्यं त्यज बल पार्षदप्रवरं हरेः॥ १३
दन्तवक्रस्य दन्तञ्च बभञ्ज स हलेन च।
प्रवर्त्तमानं युद्धेन ते सर्व्वे जहसुश्च तम्॥ १४
बलस्य विक्रमं दृष्ट्वा सर्व्वे वीराः पलायिताः।
चक्रुः प्रवेशनं सर्व्वे कुण्डिनं वरयात्रिणः॥ १५
एतस्मिन्नन्तरे तत्र शतानन्दो महामुनिः।
कोटिभिर्मुनिभिः सार्द्धमाजगाम हरेः पुरः॥ १६
वरं प्रवेशयामास शतद्वारञ्च दुर्गमम्।
अगम्यञ्चापि शत्रूणां मित्राणाञ्च सुखप्रदम्॥ १७
देवकन्या नागकन्या राजकन्यास्तथैव च।
मुनिकन्या वरं द्रष्टुं सज्जिताश्च समाययुः॥ १८
ददृशुर्योषितः सर्व्वा निमेषरहितेन च।
प्रसन्नं कारयामास सज्जितश्चन्द्रशेखरः॥ १९
रत्नेन्द्रसारनिर्म्माण-रथस्थं परमेश्वरम्।
सर्व्वेषां परमात्मानं भक्तानुग्रहविग्रहम्॥ २०
नवीनजलदश्यामं शोभितं पीतवाससा।
चन्दनोचितसर्व्वाङ्गं वनमालाविभूषितम्॥ २१
रत्नकेयूरवलय-रत्नमालागलोज्ज्वलम्।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम्॥ २२
रत्नेन्द्रसारनिर्म्माण-क्वणन्मञ्जीररञ्जितम्।
सस्मितं मुरलीहस्तं पश्यन्तं रत्नदर्पणम्॥ २३
सप्तभिः पार्षदैर्गोपैः सेवितं श्वेतचामरैः।
नवयौवनसम्पन्नं शरत्कमललोचनम्॥ २४
शरत्पूर्णेन्दुनिन्दास्यं भक्तानुग्रहकातरम्।
कोटिकन्दर्पसौन्दर्य्यं सत्यं नित्यं सनातनम्॥ २५
तीर्थपूतं कीर्त्तिपूतं ब्रह्मेशशेषवन्दितम्।
परमाह्लादकं रूपं कोटिचन्द्रसमप्रभम्॥ २६
ध्यानासाध्यं दुराराध्यं परमं प्रकृतेः परम्।
दूर्व्वयाः पट्टसूत्रञ्च साररत्नेन्द्रदर्पणम्॥ २७
दधानं कार्त्तुकासाध्यं कदल्यस्फुटमञ्जरीम्।
चूडां त्रिवङ्किमाकारां मालतीमाल्यभूषिताम्।
पुष्पं नारीप्रदत्तञ्च मुकुटं मस्तकोज्ज्वलम्॥ २८
दृष्ट्वा वरं युवत्यश्च मूर्च्छां सम्प्रापुरीश्वरम्।
रुक्मिणीजीवनं धन्यं श्लाघ्यमित्यूचुरीप्सितम्॥ २९
जामातरं सा ददृशे राज्ञी भीष्मककामिणी।
निमेषरहिता तुष्टा प्रसन्नवदनेक्षणा॥ ३०
राजा प्रसन्नवदनः सपात्रः सपुरोहितः।
समागत्य सुरान् विप्रान् भूपांश्च प्रणनाम सः॥ ३१
ददौ योग्याश्रमं तेभ्यो भक्ष्यपूर्णं सुधोपमम्।
दिवानिशञ्चाप्युवाच दीयतां दीयतामिति॥ ३२
सुखं निनाय रजनीं देवैश्च बान्धवैः सह।
वसुदेवः प्रभाते च प्रातःकृत्यं चकार सः॥ ३३
स्नात्वा सन्ध्यादिकं कृत्वा धृत्वा धौते च वाससी।
चकार वेदमन्त्रेण शुभाधिवासनं हरेः॥ ३४

सम्पूज्य मातृकाः सर्व्वाः साध्वाश्च सर्व्वदेवताः।
प्रदाय वसुधाराञ्च वृद्धिश्राद्धादिकं शुचिः॥ ३५
ब्राह्मणं भोजयामास देवांश्च बान्धवांस्तथा।
वाद्यञ्च वादयामास कारयामास मङ्गलम्॥ ३६
सुवेशं कारयामास वरस्यातिप्रशंसितम्।
रज्जञ्च कारयामास द्रयानं-सुशोभितम्॥ ३७
एवं राजा भीष्मकश्च विवाहार्हञ्च मङ्गलम्।
पुरोहितैर्वेदमन्त्रैः सर्व्वकर्म्म चकार सः॥ ३८
मणिरत्नं धनञ्चापि मुक्ता-माणिक्य-हीरकम्।
भक्ष्यद्रव्यञ्च वस्त्रञ्चाप्युपहारमनुत्तमम्॥ ३९
भट्टेभ्यो ब्राह्मणेभ्योऽपि भिक्षुकेभ्यो ददौ मुदा।
वाद्यञ्च वादयामास कारयामास मङ्गलम्॥ ४०
सुवेशं कारयामास रुक्मिण्याश्च मनोहरम्।
राज्ञीभिर्मुनिपत्नीभिर्विधानञ्च यथोचितम्॥ ४१
ततः शुभक्षणे प्राप्ते माहेन्द्रे परमोदये।
विवाहोचितलग्ने च लग्नाधिपतिसंयुते॥ ४२
सद्ग्रहेक्षणशुद्धे चाप्यसतां दृष्टिवर्ज्जिते।
शुभक्षणे शुभर्क्षे च विशुद्धे चन्द्रतारयोः॥ ४३
वेधदोषादिरहिते शलाकादिविवर्ज्जिते।
दम्पत्योमङ्गलार्हे च परिणामसुखप्रदे॥ ४४
एवम्भूते च समये भीष्मकप्राङ्गणं हरिः।
आजगाम सुरैः सार्द्धं मुनिविप्रपुरोहितैः॥ ४५
ज्ञातिभिर्बान्धवैः सार्द्धं पित्रा मात्रा नृपैस्तथा।
गोपालकैः पार्षदैश्च वयस्यैश्च मनोहरैः॥ ४६
भट्टैश्च गणकैश्चैव ज्योतिःशास्त्रविशारदैः।
वाद्यैर्नानाविधैश्चैव नर्त्तकैर्गायनैः सह॥ ४७
नानाशिल्पकरैश्चैव मालाकारैस्तथोत्पलैः।
विद्याधर्य्यप्सरोभिश्च किन्नरीभिश्च सत्वरम्॥ ४८
स्थलञ्च ददृशुर्देवा मुनयश्च नृपेश्वराः।
सर्व्वे समागता ये च विवाहदर्शनोत्सुकाः॥ ४९
रम्भास्तम्भसहस्रैश्च पट्टसूत्रपरिष्कृतैः।
चम्पकानां चन्दनानां रसालानाञ्च पल्लवैः॥ ५०
माल्यैर्नानाविधैश्चैव पीतरक्तासितान्वितैः।
परितो मङ्गलघटैः फलपल्लवसंयुतैः॥ ५१
कस्तूरीचन्दनाक्तैश्च कुङ्कुमेन विराजितैः।
पर्णैर्लाजैः फलैः पुष्पैर्दूर्व्वाभिरुपशोभितैः॥ ५२
मुनिभिर्ब्राह्मणैश्चैव राजेन्द्रैरपि वेष्टितम्।
रत्नेन्द्रसारनिर्म्माण-वेदीयुक्तं मनोहरम्॥ ५३
चर्च्चितं चन्दनक्षित्यैः कस्तूरीकुङ्कुमान्वितैः।
सुगन्धशीतमन्दैश्च पवनैः सुरभीकृतम्॥ ५४
रत्नानाञ्च सहस्रैश्च ज्वलितं ज्वलद्दीपकैः।
नानाप्रकारधूपैश्च गन्धद्रव्यैः सुवासितम्॥ ५५
चित्रैर्विचित्रैर्विविधैः शिल्पिनां पुष्पकारिणाम्।
परीतं परितश्चैव शोभनार्हैः सुशोभितम्॥ ५६
गन्धर्व्वाणाञ्च सङ्गीतैमधुरैर्माधुरीकृतम्।
विद्याधरीणां वृन्दैश्च नर्त्तकानाञ्च शिल्पिनाम्॥ ५७
तत्र निश्चेष्टचित्तैश्च जनराजिविराजितम्।
शुभहारैर्गवाक्षैश्च युवतीभिश्च वीक्षितम्॥ ५८
मङ्गलेन घटेनैव विदुषा च पुरोधसा।
कुशहस्तेन भूपेन भूषितं दानवस्तुना॥ ५९
दृष्ट्वा च प्राङ्गणं राज्ञो देवा ब्रह्मादयस्तथा।
अवरुह्य रथात् तूर्णं तिष्ठन्ति प्राङ्गणे मुदा॥ ६०
राजेन्द्रा यादवेन्द्राश्च मुनयः सनकादयः।
श्रीकृष्णश्चापि भगवान् पार्षदप्रवरैः सह॥ ६१
तान् दृष्ट्वा सहसोत्थाय जवेन भीष्मकस्तथा।
मूर्द्ध्ना ववन्दे देवांश्च मुनीन्द्रांश्च नृपांस्तथा॥ ६२
रत्नसिंहासनेष्वेव सुरम्येषु पृथक् पृथक्।
क्रमतो वासयामास सम्पूज्य सादरेण च॥ ६३
राजा तुष्टाव भक्त्या च तान् सर्व्वान् भक्तिपूर्व्वकम्।
वसुदेवं वासुदेवं साश्रुनेत्रः पुटाञ्जलिः॥ ६४

भीष्मक उवाच।

अद्य मे सफलं जन्म जीवितञ्च सुजीवितम्।
बभूव जन्मकोटीनां कर्म्ममूलनिकृन्तनम्॥ ६५
स्वयं विधाता जगतां प्रदाता सर्व्वसम्पदाम्।
स्वप्ने यत्पादपद्मञ्च द्रष्टुं नैव क्षमः प्रभो॥ ६६
तपसां फलदाता च स स्रष्टा प्राङ्गणे मम।
आत्मारामेषु पूर्णेषु शुभाप्रश्नमनीप्सितम्॥ ६७
योगीन्द्रैरपि सिद्धेन्द्रैः सुरेन्द्रैश्च मुनीन्द्रकैः।
ध्यानादृष्टश्च यो देवः स शिवः प्राङ्गणे मम॥ ६८
कालस्य कालो भगवान् मृत्योर्मृत्युश्च यः प्रभुः।
मृत्युञ्जयश्च सर्व्वेशो नराणां दृष्टिगोचरः॥ ६९
यस्य मूर्द्ध्नां सहस्रेषु मूर्द्ध्नि विश्वं चराचरम्।
नास्यान्तः सर्व्वदेवेषु सोऽयं वै प्राङ्गणे मम।
सर्व्वकामप्रदो यो हि प्रत्यक्षः प्राङ्गणे मम॥ ७०

ब्रह्मपुत्राश्च पौत्राश्च प्रपौत्राश्चापि वंशजाः।
ते सर्व्वे मद्गृहे ऽद्यैव ज्वलन्तो ब्रह्मतेजसा ॥ ७१
सर्व्वकामप्रणीयो हि सर्व्वाग्रे यस्य पूजनम्।
श्रेष्ठो देवगणानाञ्च स गणेशो ममाङ्गणे ॥ ७२
मुनीनां वैष्णवानाञ्च प्रवरो ज्ञानिनां गुरुः।
सनत्कुमारो भगवान् प्रत्यक्षः प्राङ्गणे मम ॥ ७३
अहो कल्पान्तपर्य्यन्तं तीर्थपूतो ममाश्रमः।
येषां पादोदकैस्तीर्थं विशुद्धं ते गृहे मम ॥ ७४
पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे।
सागरे यानि तीर्थानि विप्रपादेषु तानि च ॥ ७५
विप्रपादोदकं पीत्वा यावत् तिष्ठति मेदिनी।
तावत् पुष्करपात्रेषु पिबन्ति पितरो जलम् ॥ ७६
विप्रपादोदकं पीत्वा दत्त्वा विप्राय दक्षिणाम्।
स्नानानां सर्व्वतीर्थानां फलमाप्नोति निश्चितम् ॥ ७७
निकृन्तनञ्च विपदां व्याधिनिर्म्मूलकारणम्।
शुभदं सुखदं सारं विप्रपादोदकं नृणाम् ॥ ७८
न गङ्गासदृशं तीर्थं न देवो माधवात् परः।
भक्तो सनत्कुमारान्न न हि कल्पतरोस्तरुः ॥ ७९
न पुष्पं पारिजाताच्च न व्रतं हरिवासरात्।
पूजने न हि पूतञ्च पत्रञ्च तुलसीपरम् ॥ ८०
न देवी प्रकृतेश्चापि नाधारः पवनात् परः।
न हि स्थूलो महाविष्णोर्न सूक्ष्मं परमाणुतः ॥ ८१
न ब्राह्मणात् परः पूतो नाश्रमश्च न तीर्थकम्।
न देवः केशवात् कोऽपि चेत्याह कमलोद्भवः ॥ ८२
ब्रह्म-विष्णु-शिवादीनां प्रकृतेश्च परः प्रभुः।
ध्यानासाध्यो दुराराध्यो योगिनामपि निश्चितम् ॥ ८३
निर्गुणश्च निराकारो भक्तानुग्रहविग्रहः।
स एव चक्षुषोर्नृणां साक्षाद्देवो हि मद्गृहे ॥ ८४
देवैर्ब्रह्मेशशेषैश्च ध्यातं यत्पादपद्मकम्।
अनेशेन गणेशेन दिनेशेनापि दुर्लभम् ॥ ८५
इत्युक्त्वा भीष्मकः कृष्णं समानीय स्वयं पुरः।
तुष्टाव सामवेदोक्तस्तोत्रेण परमेश्वरम् ॥ ८६

भीष्मक उवाच।

सर्व्वान्तरात्मा सर्व्वेषां साक्षी निर्लिप्त एव च।
कर्म्मिणां कर्म्मणामीशः कारणानाञ्च कारणम् ॥ ८७
केचिद्वदन्ति त्वामेकं ज्योतीरूपं सनातनम्।
केचिच्च परमात्मानं जीववत् प्रतिबिम्बकम् ॥ ८८
केचित् प्राकृतिकं जीवं सगुणं भ्रान्तबुद्धयः।
ज्योतिरभ्यन्तरे नित्यदेहरूपं सनातनम्।
कस्मात् तेजः प्रभवति साकारमीश्वरं विना ॥ ८९
एवं स्तुत्वा स आचान्तः स्मरन् विष्णुञ्च नारद।
पाद्यं पद्मार्च्चिते पाद-पद्मे चार्घ्यं ददौ मुदा ॥ ९०
अर्घ्यञ्च प्रददौ तत्र पुष्पदूर्व्वाक्षतान्वितम्।
मधुपर्कञ्च सुरभिं सर्व्वाङ्गे गन्धचन्दनम् ॥ ९१
यत् प्रदत्तं महेन्द्रेण शुभकर्म्मणि यौतुकम्।
पारिजातस्य माल्यञ्च जामातुश्च गले ददौ ॥ ९२
कुबेरेण च यद्दत्तममूल्यरत्नभूषणम्।
चकार वरणं तस्य स राजा भक्तिपूर्व्वकम् ॥ ९३
वह्निशुद्धांशुकयुगं यद्दत्तं वह्निना पुरा।
ददौ तदेव कृष्णाय परिपूर्णतमाय च ॥ ९४
ज्वलितं रत्नमुकुटं यद्दत्तं विश्वकर्म्मणा।
ददौ तन्मस्तके राजा कृष्णस्य परमात्मनः ॥ ९५
धूपं रत्नप्रदीपञ्च नैवेद्यं सुमनोहरम्।
नानाप्रकारं पुष्पञ्च रत्नसिंहासनं ददौ ॥ ९६
सप्ततीर्थोदकञ्चैव पुनराचमनीयकम्।
ताम्बूलञ्च परं रम्यं कर्पूरादिसुवासितम् ॥ ९७
शय्यां रतिकरीं रम्यां पानार्थं वासितं जलम्।
कृत्वा च पूजनं राजा परीहारं चकार तम्।
पुटाञ्जलिस्ततो राजा तस्मै पुष्पाञ्जलिं ददौ ॥ ९८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे रुक्मिण्युद्वाहे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

## अष्टाधिकशततमोऽध्यायः।

नारायण उवाच।

एतस्मिन्नन्तरे देवी महालक्ष्मीश्च रुक्मिणी।
आजगाम सभामध्ये मुनिदेवादिभिर्युते ॥ १
रत्नसिंहासनस्था च रत्नालङ्कारभूषिता।
अग्निशुद्धांशुकाधाना कबरीभारभूषिता ॥ २
पश्यन्ती सस्मिता साध्वी अमूल्यरत्नदर्पणम्।
कस्तूरीबिन्दुभिर्युक्ता स्निग्धचन्दनचर्च्चिता।
सिन्दूरबिन्दुना शश्वद्भालमध्यस्थलोज्ज्वला ॥ ३
तप्तकाञ्चनवर्णाभा शतचन्द्रसमप्रभा।

चन्दनोक्षितसर्व्वाङ्गा मालतीमाल्यशोभिता।
सप्तभिर्नृपपुत्रैश्च समानीता च बालकैः॥ ४
देवेन्द्राश्च मुनीन्द्राश्च सिद्धेन्द्रा नृपपुङ्गवाः।
ददृशू रुक्मिणीं देवीं महालक्ष्मीं पतिव्रताम्॥ ५
सप्तप्रदक्षिणं कृत्वा प्रणम्य स्वपतिं सती।
सिषिच शीततोयेन स्निग्धचन्दनपल्लवैः॥ ६
तां सिषिच जगत्कान्तः कान्तां शान्ताञ्च सस्मिताम्।
ददर्श कान्तः कान्ताञ्च कान्ता कान्तं शुभक्षणे॥७
अथ देवी पितुः क्रोड़े समुवास शुभानना।
लज्जया नम्रवदना ज्वलन्ती च स्वतेजसा॥ ८
राजा देवेश्वरीं तस्मै परिपूर्णतमाय च।
प्रददौ सम्प्रदानेन वेदमन्त्रेण नारद॥ ९
वसुदेवाज्ञया कृष्णः स्वस्तीत्युक्त्वा स्थितो मुदा।
जग्राह देवीं देवश्च भवानीञ्च भवो यथा॥ १०
सुवर्णानां पञ्चलक्षं कृष्णाय परमात्मने।
दक्षिणाञ्च ददौ राजा परिपूर्णतमाय च॥ ११
शुभकर्म्मणि निष्पन्ने कृत्वा कन्याञ्च वक्षसि।
रुरोद राजा मोहेन मुनिदेवेन्द्रसंसदि॥ १२
परिहारेण वचसा कृत्वा तस्मै समर्पणम्।
सिषिच कन्यां धन्याञ्च नेत्रयुग्मजलेन च॥ १३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे रुक्मिण्युद्वाहे रुक्मिणीसम्प्रदानं नामाष्टाधिकशततमोऽध्यायः॥ १०८॥

---

## नवाधिकशततमोऽध्यायः।

नारायण उवाच।

एतस्मिन्नन्तरे राज्ञी रुक्मिणीजननी शुभा।
पतिपुत्रवतीभिश्च साध्वीभिः सहिता मुदा॥ १
आगत्य मङ्गलं कृत्वा तत्र निर्म्मञ्छनादिकम्।
दम्पती वेशयामास रत्ननिर्म्माणमन्दिरम्॥ २
नानाचित्रविचित्राढ्यं हीराहारेण भूषितम्।
मुक्ता-माणिक्यरत्नेन सुदीप्तं दर्पणेन च॥ ३
ददर्श कृष्णस्तत्रैव दुर्गां दुर्गतिनाशिनीम्।
सरस्वतीञ्च सावित्रीं रतिञ्च रोहिणीं सतीम्॥ ४
देवपत्नीं राजपत्नीं मुनिपत्नीं पतिव्रताम्।
रत्नसिंहासनस्थाञ्च रत्नभूषणभूषिताम्॥ ५
उत्तस्थुस्ताश्च दृष्ट्वा च श्रीकृष्णं जगतीपतिम्।
रत्नसिंहासने रम्ये वासयामास तं मुदा॥ ६
स्तुतिं चक्रुर्देवपत्न्यो मुनिपत्न्यश्च माधवम्।
पुटाञ्जलियुतास्तत्र क्रमेण च पृथक् पृथक्॥ ७
भोजयामास राज्ञी च वरेण सह कन्यकाम्।
सकर्पूरं सताम्बूलं प्रददौ वासितं जलम्॥ ८
दुर्गा कृष्णाय प्रददौ तत्र मङ्गलपत्रिकाम्।
सर्व्वासामाज्ञया देवी पठेति तमुवाच सा॥ ९
पपाठ पत्रिकां कृष्णो देवीसंसदि सम्मतः।
लक्ष्मीः सरस्वती दुर्गा सावित्री राधिका सती॥१०
तुलसी पृथिवी गङ्गारुन्धती यमुनादितिः।
शतरूपा च सीता च देवहूतिश्च मेनका॥ ११
देव्यश्चैता दम्पतीनां कुर्व्वन्तु मङ्गलं परम्।
पपाठ चेति कृष्णश्च शुश्रुवुर्जहसुश्च ताः॥ १२

पार्व्वत्युवाच।

रुक्मिणीं रुक्मिणीकान्त त्वां पश्यन्तीञ्च सस्मिताम्।
पश्य प्रौढ़ां रूपवतीं सुन्दरीं नवयौवनाम्॥ १३

शच्युवाच।

तव योग्या च युवती रत्नभूषणभूषिता।
त्वां प्रार्थयन्ती सुचिरमनन्यामनीश्वरम्॥ १४

सावित्र्युवाच।

यथा वरस्तथा कन्या विधिना योजिता पुरा।
विदग्धाया विदग्धेन सर्व्वत्र सङ्गमः शुभः॥ १५

रतिरुवाच।

ईश्वरेण परीहासं का वा कर्त्तुं क्षमा भुवि।
ध्यानासाध्यो दुराराध्यो वरमन्यान्यमीश्वर॥ १६
सत्यं ब्रूहि जगन्नाथ कामिनीनाञ्च संसदि।
कीदृशी राधिका रम्या रुक्मिणी वापि कीदृशी॥१७

सरस्वत्युवाच।

राधायां यादृशी प्रीती रुक्मिण्यां नैव तादृशी।
सा सङ्गिनी पूर्व्वकाले सर्व्वक्रीड़ासु रङ्गिणी(क)॥१८
प्राणाधिष्ठातृदेवी सा पञ्चप्राणाधिका सती।
रुक्मिणी कमला साक्षात् सम्पदामधिदेवता।
सर्व्वशक्तिस्वरूपा च कृष्णस्य परमात्मनः॥ १९
बुद्धेरप्यधिका देवी दुर्गा नारायणी परा।
वेदाधिष्ठातृदेवी त्वं सावित्री वेदमातृका।

(क) वर्द्धिनीति पाठान्तरम्।

विद्याधिदेवताश्च ततोऽन्या सकला कला ॥ २०
न ब्रह्मणि शिवे शेषे गणेशे च दिनेश्वरे ।
न भक्तेषु न पद्मायां न शिवायाञ्च सा मयि ।
प्रसादो यादृशस्तस्यामेतेषु च न तादृशः ॥ २१
त्रैलोक्ये पृथिवी धन्या सुपुण्यं भारतं यतः ।
तत्र वृन्दावनं धन्यं राधापादाब्जचिह्नितम् ॥ २२
सर्व्वासामपि देवीनां राधा पुण्यवती सती ।
राधापादाब्जनखरे ददौ स्निग्धमलक्तकम् ।
अयमेवमिति श्रुत्वा जहसुः सर्व्वयोषितः ॥ २३
ध्यायन्ते दूरतः सर्व्वा राधा वक्षःस्थलस्थिता ।
तस्माद्राधां नमस्कृत्य तुलनामाप्स्यते किल ॥ २४
सरस्वतीवचः श्रुत्वा सावित्री पार्व्वती रतिः ।
अन्याश्च योषितः सर्व्वाः साधु साध्वित्युवाच ह ॥२५
लोपामुद्रानुसूया चाप्यहल्यारुन्धती तथा ।
सर्व्वास्ता मुनिपत्न्यश्च रभसं चक्रुरीश्वरम् ॥ २६
अथ देवांश्च भूपांश्च मुनीन्द्रांश्चापि भीष्मकः ।
पूजयामास विधिना भोजयामास सादरम् ॥ २७
खाद्यतां खाद्यतां लोका दीयतां दीयतामिति ।
शब्दो बभूव नगरे वाद्यसङ्गीतमङ्गलैः ॥ २८
अथ प्रभाते ब्रह्मेश-शेषाद्यास्त्रिदशास्तथा ।
यानमारोहणं भूपाश्चक्रिरे च त्वरान्विताः ॥ २९
राजा महोग्रसेनश्च वसुदेवस्त्वरान्वितः ।
कारयामास यात्राञ्च श्रीकृष्णं रुक्मिणीं सतीम् ॥३०
सुभद्रा रुक्मिणीमाता कन्यां कृत्वा स्ववक्षसि ।
रुरोदोच्चैस्तत्सखीभिर्बान्धवैरित्युवाच सा ॥ ३१

सुभद्रोवाच ।

क्व यासि मां परित्यज्य वत्से मातरमीश्वरि ।
कथं जीवामि त्वां त्यक्त्वा कथं त्वं वापि जीवसि ॥३२
महालक्ष्मीर्मम गृहात् कन्यारूपा च मायया ।
वसुदेवालयं यासि वासुदेवप्रिया सति ।
इत्युक्त्वा कन्यकां शोकात् सिषिच नेत्रजैर्जलैः ॥ ३३
भीष्मकः साश्रुनेत्रश्च कन्यां कृष्णे समर्प्य च ।
तत्र कृत्वा परीहारं रुरोदोच्चैरतीव सः ॥ ३४
रुरोद रुक्मिणी देवी श्रीकृष्णश्चापि मायया ।
रथमारोहयामास वसुदेवः सुतं वधूम् ॥ ३५
एतस्मिन्नन्तरे राजा जामात्रे यौतुकं ददौ ।
गजेन्द्राणां सहस्रञ्च षड्गुणञ्च तुरङ्गमम् ॥ ३६
दासीनाञ्च सहस्रञ्च किङ्कराणां शतं शतम् ।
रत्नानाञ्च सहस्रञ्च अमूल्यरत्नभूषणम् ॥ ३७
स्वर्णानां परिशुद्धानां पञ्चलक्षञ्च सादरम् ।
तोयभोजनपात्राणि कृतानि विश्वकर्म्मणा ॥ ३८
सौवर्णानि च रम्याणि सुरभीं प्रददौ मुदा ।
धेनूं दुग्धवतीनाञ्च सवत्सानां सहस्रकम् ।
अमूल्यानि च रम्याणि वह्निशुद्धांशुकानि च ॥ ३९
वसुदेवश्चोग्रसेनो देवैश्च मुनिभिः सह ।
प्रहृष्टवदनः शीघ्रं द्वारकाभिमुखं ययौ ॥ ४०
प्रविश्य स्वपुरं रम्यां कारयामास मङ्गलम् ।
वाद्यञ्च वादयामास सुन्दरं सुमनोहरम् ॥ ४१
देवकी रोहिणी रम्या यशोदा नन्दगेहिनी ।
अदितिश्च दितिश्चैव तथैवोद्धवकामिनी ॥ ४२
श्रीकृष्णं रुक्मिणीं रम्यां विलोक्य च पुनः पुनः ।
गृहं प्रवेशयामास कारयामास मङ्गलम् ॥ ४३
चतुर्व्विधं भोजयित्वा देवांश्च मुनिपुङ्गवान् ।
नृपांश्च बान्धवांश्चैव परीहारं चकार सः ॥ ४४
भट्टेभ्यो ब्राह्मणेभ्योऽपि ददौ रत्नादिकं मुदा ।
तांश्चापि भोजयामास परितुष्टान् प्रशंसितान् ॥४५
एवं भुक्त्वा धनं लब्ध्वा ययुः सर्व्वे गृहं मुदा ।
मङ्गलं कारयामास वसुदेवस्य वल्लभा ॥ ४६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे रुक्मिण्युद्वाहे नवाधिकशततमोऽध्यायः ॥ १०९ ॥

---

## दशाधिकशततमोऽध्यायः ।

नारायण उवाच ।

आगतेषु गतेष्वेवं साङ्गे मङ्गलकर्म्मणि ।
नन्दो यशोदया सार्द्धं पुत्राभ्यासं समाययौ ॥ १

यशोदोवाच ।

ज्ञानञ्च भवता दत्तं पित्रे नन्दाय माधव ।
माञ्चापि मातरं वत्स कृपां कुरु कृपानिधे ॥ २
मामुद्धर महाभाग घोरोद्धरणकारण ।
भवाब्धितरणे भीमे भीताञ्च पतितामपि ॥ ३
मायामयी सा प्रकृतिर्भवाब्धितरणे तरिः ।
त्वमेककर्णधारश्च भक्तोत्तीर्णे कृपामय ॥ ४

यशोदावचनं श्रुत्वा जहास पुरुषोत्तमः।
उवाच मातरं भक्त्या ज्ञानिनाञ्च गुरोर्गुरुः॥ ५

श्रीभगवानुवाच।

ज्ञानं योगात्मकं मातर्ज्ञानञ्च विषयात्मकम्।
ज्ञानं सिद्धात्मकं श्रेष्ठं महास्यकारणं शुभम्॥ ६
ज्ञानं पञ्चविधं प्रोक्तं सर्व्ववेदेषु सम्मतम्।
भक्त्यात्मकं सर्व्वपरं तेषाञ्च लक्षणं शृणु॥ ७
क्षुत्पिपासादिकानाञ्च खण्डनं स्वान्तशोधनम्।
नाड़ीनां शोधनञ्चैव चक्राणामपि भेदनम्॥ ८
शक्तिकुण्डलिनीयुक्तामीश्वरं चिन्तयेत् ततः।
इन्द्रियाणाञ्च दमनं लोभादीनाञ्च वर्ज्जनम्॥ ९
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम्।
विशुद्धञ्च तदाज्ञाख्यं चक्रषट्कं प्रकीर्त्तितम्॥ १०
नारीणामपि दुर्ब्बोधं मूर्खाणाञ्च विशेषतः।
ज्ञानं योगात्मकं साध्वि सिद्धानां साध्यमीप्सितम्॥ ११
जन्तूनामपि सर्व्वेषां ज्ञानं स्वविषये तथा।
यतः सर्व्वे विजानन्ति स्वेच्छया च मदीयया॥ १२
सिद्धात्मकञ्च सिद्धानां नियुक्तं सर्व्वकर्म्मसु।
चतुस्त्रिंशत् सुसिद्धानां साधनं बोधनं तथा॥ १३
ज्ञानं मोक्षात्मकं शुद्धं परं निर्व्वाणकारणम्।
निवृत्तिमार्गमारूढ़ं भक्तास्तं नैव वाञ्छति॥ १४
भक्त्यात्मकञ्च यज्ज्ञानं तुभ्यं राधा प्रदास्यति।
तस्याञ्च मानुषं भावं त्यक्त्वा ज्ञानं करिष्यसि॥ १५
नन्दाय दत्तं यज्ज्ञानं तच्च तुभ्यं प्रदास्यति।
गच्छ नन्दव्रजं मातर्नन्देन सह सादरम्॥ १६
इत्युक्त्वा विनयं कृत्वा जगाम स्वान्तरं हरिः।
नन्दो यशोदया सार्द्धं प्रययौ कदलीवनम्॥ १७
ददर्श राधां तत्रैव निद्रितां त्यक्तभूषणाम्।
दधानां शुक्लवस्त्रञ्च निराहारां कृशोदरीम्॥ १८
पद्मस्थे पङ्कजदले सजले चन्दनाचिते।
शयानां शुष्कितौष्ठीञ्च साश्रुनेत्राञ्च मूर्च्छिताम्॥१९
ध्यायमानां पदाम्भोजं कृष्णस्य परमात्मनः।
वाह्यज्ञानपरित्यक्तां तन्निविष्टैकमानसाम्॥ २०
पश्यन्तीं सस्मितं कान्तं पश्यन्तीं तन्मुखाम्बुजम्।
रुदतीञ्च हसन्तीञ्च स्वप्ने कान्तसमीपतः॥ २१
सखीभिः परितः शश्वत् सेवितां श्वेतचामरैः।
दिवानिशं रक्षिताञ्च गोपीभिः शतकोटिभिः॥ २२
सावधानपराभिश्च वेत्रहस्ताभिरीश्वरीम्।
सप्तद्वारेषु युक्ताभिः परितः प्राङ्गणेषु च॥ २३
तां दृष्ट्वा विस्मयं प्राप सभार्य्यो नन्द एव च।
ननाम परया भक्त्या दण्डवत् प्रणिपत्य च॥ २४
निद्रां त्यक्त्वा च सहसा बुबुधे सेश्वरेच्छया।
क्षणेन चेतनं प्राप विषयज्ञानवर्ज्जितम्॥ २५
पुरतो दम्पती दृष्ट्वा पप्रच्छ सादरं सती।
उवाच मधुरञ्चैव तत्रैव सखीसंसदि॥ २६

राधिकोवाच।

कस्त्वञ्चात्र समायातो ब्रूहि वा किं प्रयोजनम्।
न च मे विषयज्ञानं न जानामि नरं पशुम्॥ २७
किं जलं वा स्थलं किं वा नक्तं किं वा दिनं शृणु।
स्त्रियं पुमांसं क्लीवं वा नाहं जानामि भेदकम्॥ २८
राधिकावचनं श्रुत्वा नन्दश्च विस्मयं ययौ।
भीता यशोदा निकटं गोपीसम्भाषिता ययौ॥ २९
उवास निकटे तस्याः समुवाच प्रियं वचः।
उवास तत्र नन्दश्च गोपीदत्तासने मुदा॥ ३०

यशोदोवाच।

चेतनं कुरु राधे त्वमात्मानं रक्ष यत्नतः।
द्रक्ष्यसि प्राणनाथञ्च सम्प्राप्ते मङ्गले दिने॥ ३१
त्वत्तो विश्वं पवित्रञ्च मङ्गलञ्च सुरेश्वरि।
गोप्यश्च पुण्यवत्यश्च शश्वत्पादाब्जसेवया॥ ३२
लोका गास्यन्ति त्वत्कीर्त्तिं तीर्थपूतां सुमङ्गलाम्।
सन्तो वेदाश्च चत्वारः पुराणानि पुरातनीम्॥ ३३
अहं यशोदा नन्दोऽयं बुद्धिरूपे निबोध माम्।
वृकभानुसुता त्वञ्च स्वं निशामय सुव्रते॥ ३४
द्वारकानगराद्भद्रे श्रीकृष्णसन्निधानतः।
तवान्तिकमागताहं प्रेरिता हरिणा सति॥ ३५
शृणु मङ्गलवार्त्ताञ्च मङ्गलञ्च गदाभृतः।
आराद्द्रक्ष्यसि श्रीकृष्णं हे देवि चेतनं कुरु॥ ३६
भक्त्यात्मकं परं ज्ञानं देहि मह्यञ्च साम्प्रतम्।
त्वद्गृहं सुपदेशेन त्वत्समीपं समागतौ॥ ३७
पश्चाद्दास्यति हरिस्त्वां मुहूर्त्तं वरानने।
भविष्यत्यचिरेणैव श्रीदाम्नः शापमोक्षणम्॥ ३८

नारायण उवाच।

यशोदावचनं श्रुत्वा वार्त्तां प्राप गदाभृतः।
श्रीकृष्णनामस्मरणाद्दूरीभूतममङ्गलम्॥ ३९

सम्प्राप्य चेतनां राधा सम्भाष्य कृष्णमातरम्।
उवाच मधुरं शान्ता लौकिकीं भक्तिमुत्तमाम्॥ ४०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे राधायशोदा-संवादे दशाधिक-
शततमोऽध्यायः॥ ११०॥

---

## एकादशाधिकशततमोऽध्यायः।

राधिकोवाच।

ज्ञानात्मकश्च परमो ब्रह्मेशशेषपूजितः।
ज्ञानञ्च न ददौ तुभ्यं तन्मूलं शोषिता सति॥ १
तेनैव वर्त्मना नेतुं भावार्थं बोधयामि किम्।
वेदाः सन्तश्च भावार्थं नैव जानन्ति तस्य च॥ २
स्त्रीजातिरबला मूढ़ा वस्तुतोऽज्ञानतत्परा।
ततस्तद्विरहेणैव सततं हतचेतना॥ ३
किं वाहं कथयिष्यामि विरहज्वरकातरा।
किं वा विश्वास्यति सती भवती कृष्णमातृका॥ ४
ज्ञानं भगवता दत्तं नन्दाय च यदुत्तमम्।
तन्निबोध परं ब्रह्म हरिणोक्तञ्च साम्प्रतम्॥ ५
किमहं कथयिष्यामि ज्ञानपञ्चविधेषु च।
भक्त्यात्मकं सर्व्वपरं निबोध कथयामि ते॥ ६
श्रीकृष्णस्य वरेणापि असाधुरपि निर्भयः।
गोलोके चापि पतनं सम्भवेच्च कुयोगिनः॥ ७
तस्मात् सर्व्वं परित्यज्य भजस्व परमेश्वरम्।
पुत्त्रबुद्धिं परित्यज्य ब्रह्मरूपं निशामय॥ ८
यशोदे भवती सर्व्वं परित्यज्य च नश्वरम्।
गत्वा वृन्दावनं शुद्धं पुण्यदेवञ्च भारतम्॥ ९
कृत्वा त्रिकालस्नानञ्च निर्म्मले यमुनाजले।
कृत्वाष्टदलपद्मञ्च स्निग्धेन चन्दनेन च॥ १०
ध्यानेन गर्गदत्तेन शुद्धेन मनुना सति।
सम्पूज्य परमानन्दं सानन्दं व्रज तत्पदम्॥ ११
कृत्वा निकृन्तनं कर्म्म पितृभिः शतकैः सह।
वैष्णवेन सहालापं कुरुष्व सततं सति॥ १२
वरं हुतवहज्वालां भक्तो वाञ्छति पिञ्जरम्।
वरञ्च कण्टके वासं वरञ्च विषभक्षणम्॥ १३
हरिभक्तिविहीनानां न सङ्गं नाशकारणम्।
स्वयं नष्टो भक्तिहीनो बुद्धिभेदं करोति च॥ १४
अङ्कुरो भक्तिवृक्षस्य भक्तसङ्गेन वर्द्धते।
परं हरिकथालाप-पीयूषसेचनेन च॥ १५
अभक्तालापदीप्ताग्नि-ज्वालायाः कलयापि च।
अङ्कुरं शुष्कतां याति पुनः सेकेन वर्द्धते॥ १६
तस्मादभक्तसङ्गञ्च सावधानं परित्यज।
यथा दृष्ट्वा कालसर्पं नरो भीतः पलायते॥ १७
यशोदे च प्रयत्नेन आत्मनः पुत्त्रमीश्वरम्।
भजस्व परया भक्त्या परमात्मानमीश्वरम्॥ १८
राम नारायणानन्त मुकुन्द मधुसूदन।
कृष्ण केशव कंसारे हरे वैकुण्ठ वामन॥ १९
इत्येकादश नामानि पठेद्वा पाठयेदिति।
जन्मकोटिसहस्राणां पातकादेव मुच्यते॥ २०
राशब्दो विश्ववचनो मश्चापीश्वरवाचकः।
विश्वानामीश्वरो यो हि तेन रामः प्रकीर्त्तितः॥२१
रमते रमया सार्द्धं तेन रामं विदुर्बुधाः।
रमाणां रमणस्थानं रामं नामविदो विदुः॥ २२
राश्चेति लक्ष्मीवचनो मश्चापीश्वरवाचकः।
लक्ष्मीपतिं गतिं रामं प्रवदन्ति मनीषिणः॥ २३
नाम्नां सहस्रं दिव्यानां स्मरणे यत् फलं भवेत्।
तत् फलं लभते नूनं रामोच्चारणमात्रतः॥ २४
सारूप्यमुक्तिवचनो नारेति च विदुर्बुधाः।
यो देवोऽप्ययनं तस्य स च नारायणः स्मृतः॥ २५
नाराश्च कृतपापाश्चाप्ययनं गमनं स्मृतम्।
यतो हि गमनं तेषां सोऽयं नारायणः स्मृतः॥ २६
सकृन्नारायणेत्युक्त्वा पुमान् कल्पशतत्रयम्।
गङ्गादिसर्व्वतीर्थेषु स्नातो भवति निश्चितम्॥ २७
नारञ्च मोक्षणं पुण्यमयनं ज्ञानमीप्सितम्।
तयोर्ज्ञानं भवेद्यस्मात् सोऽयं नारायणः प्रभुः॥२८
नास्त्यन्तो यस्य वेदेषु पुराणेषु चतुर्षु च।
शास्त्रेष्वन्येषु योगेषु तेनानन्तं विदुर्बुधाः॥ २९
मुकुमव्ययमान्तञ्च निर्व्वाणमोक्षवाचकम्।
तद्ददाति च यो देवो मुकुन्दस्तेन कीर्त्तितः॥ ३०
मुकुं भक्तिरसप्रेम-वचनं वेदसम्मतम्।
यस्तद्ददाति भक्तेभ्यो मुकुन्दस्तेन कीर्त्तितः॥ ३१
सूदनं मधुदैत्यस्य यस्मात् स मधुसूदनः।
इति सन्तो वदन्तीशं वेदभिन्नार्थमीप्सितम्॥ ३२
मधु क्लीबे च माध्वीके कृतकर्म्मशुभाशुभे।

भक्तानां कर्म्मणाञ्चैव सूदनं मधुसूदनः ॥ ३३
परिणामाशुभं कर्म्म भ्रान्तानां मधुरं मधु।
करोति सूदनं यो हि स एव मधुसूदनः ॥ ३४
कृषिरुत्कृष्टवचनो णश्च सद्भक्तिवाचकः।
श्चापि दातृवचनः कृष्णं तेन विदुर्बुधाः ॥ ३५
कृषिश्च परमानन्दे णश्च तद्दास्यकर्म्मणि।
तयोर्द्दाता तयोर्द्देवस्तेन कृष्णः प्रकीर्त्तितः ॥ ३६
पूर्व्वजन्मार्ज्जिते पापे (क) कृषिः क्लेशे च वर्त्तते।
भक्तानां णश्च निर्व्वाणे तेन कृष्णः प्रकीर्त्तितः ॥ ३७
सहस्रनाम्नां दिव्यानां त्रिरावृत्त्या च यत् फलम्।
एकावृत्त्या तु कृष्णस्य तत् फलं लभते नरः ॥ ३८
कृष्णनाम्नः परं नाम न भूतं न भविष्यति।
सर्व्वेभ्यश्च परं नाम कृष्णेति वैदिका विदुः ॥ ३९
कृष्ण कृष्णेति हे गोपि यस्तं स्मरति नित्यशः।
जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् ॥ ४०
कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते।
भस्मीभवन्ति सद्यस्तन्महापातककोटयः ॥ ४१
अश्वमेधसहस्रेभ्यः फलं कृष्णजपस्य च।
वरं तेभ्यः पुनर्जन्म नातो भक्तः पुनर्भवः ॥ ४२
सर्व्वेषामपि यज्ञानां लक्षाणि च व्रतानि च।
तीर्थस्नानानि सर्व्वाणि तपांस्यनशनानि च ॥ ४३
वेदपाठसहस्राणि प्रादक्षिण्यं भुवः शतम्।
कृष्णनामजपस्यास्य कलां नार्हन्ति षोड़शीम् ॥ ४४
तेषां भोगाद्भवेत् स्वर्गफलञ्च सुचिरं नृणाम्।
स्वर्गादवश्यं ध्वंसश्च जपकर्त्तुर्हरेः पदम् ॥ ४५
के जले सर्व्वदेहेऽपि शयनं यस्य चात्मनः।
वदन्ति वैदिकाः सर्व्वे तं देवं केशवं परम् ॥ ४६
कंसश्च पतिते विघ्ने रोगे शोके च दानवे।
तेषामरिर्निहन्ता यः स कंसारिः प्रकीर्त्तितः ॥ ४७
रुद्ररूपेण संहर्त्ता विश्वानामपि नित्यशः।
भक्तानां पातकानाञ्च हरिस्तेन प्रकीर्त्तितः ॥ ४८
कुण्ठं जड़ञ्च विश्वौघं विशिष्टञ्च करोति या।
विकुण्ठां प्रकृतिं वेदाश्चलाश्च वदन्ति ताम् ॥ ४९
गुणाश्रयेण भगवांस्तस्यां जातः स्वसृष्टये।
परिपूर्णतमं तेन वैकुण्ठञ्च विदुर्बुधाः ॥ ५०
वामो विपत्तौ नञ्छेदे सावादेरेषु वर्त्तते।
सुराणां विपदां छेत्ता वामनस्तेन कीर्त्तितः ॥ ५१
एवं नाम्नाञ्च सर्व्वेषां व्युत्पत्तिश्च श्रुतौ श्रुता।
यथागमञ्च कथितं सर्व्वं जानाति माधवः ॥ ५२

यशोदोवाच।

किमपूर्व्वं श्रुतं राधे भवती च सरस्वती।
चतुर्णामपि वेदानां प्रसूस्त्वञ्च सनातनी ॥ ५३
तेनोक्ता लक्ष्म हरिणा नेयं राधेति आत्मधीः।
धन्या भगवती मान्या सौभाग्यात् सर्व्वतः परा ॥ ५४
वासुदेवश्च गोविन्दो मुरारिर्माधवस्तथा।
नाम्नां चतुर्णां व्युत्पत्तिं वद चान्यस्य तिष्ठतु ॥ ५५

राधिकोवाच।

वासुः सर्व्वनिवासश्च विश्वानि यस्य लोमसु।
तस्य देवः परंब्रह्म वासुदेव इति स्मृतः ॥ ५६
गाञ्च विश्वसमूहञ्च विन्दते योऽवलीलया।
ज्ञानसिन्धुसमूहञ्च गोविन्दस्तेन कीर्त्तितः ॥ ५७
मुरः क्लेशे च सन्ताप कर्म्मभोगे च कर्म्मणाम्।
दैत्यभेदे हरिस्तेषां मुरारिस्तेन कीर्त्तितः ॥ ५८
मा च ब्रह्मस्वरूपा या मूलप्रकृतिरीश्वरी।
नारायणीति विख्याता विष्णुमाया सनातनी ॥ ५९
महालक्ष्मीस्वरूपा च वेदमाता सरस्वती।
राधा वसुन्धरा गङ्गा तासां स्वामी च माधवः ॥ ६०

ब्रह्मेशशेषादिभिरेव वन्द्यं
ध्यानैरसाध्यं सनकादिभिश्च।
वेदैः पुराणैर्निरूपितञ्च
भजस्व भक्त्या नवनीतचौरम् ॥ ६१
क्व चापि दुग्धं क्व दधि घृतं वा
नवोद्धृतं वा क्व च तक्रमीप्सितम्।
तेषां क्व चौरो भवती क्व चापि
क्व बन्धनं ते तरुमूलमध्ये ॥ ६२
न योगिभिः सिद्धगणैर्मुनीन्द्रै-
र्न भक्तसङ्घैर्भवपाद्मशेषैः।
योगेन बध्यो न हि रक्षितुं क्षमैः
कथं स बद्धस्तरुमूलमध्यतः ॥ ६३
प्रेम्णा स्वभक्त्या स्तवनेन पूजया
भजस्व पूतं तपसा च भारते।
हृत्पद्ममध्ये स्थितमीश्वरं परं
ध्यानेन यत्नेन च सन्ततं सति ॥ ६४

(क) कोटिजन्मार्ज्जिते पापे इत्यपि पाठः।

वरं वृणुष्व भद्रं ते यत् ते मनसि वाञ्छितम् ।
सर्व्वं दास्यामि भवतीं ज्ञानिनामपि दुर्लभम् ॥ ६५
यशोदोवाच ।
हरौ च निश्चला भक्तिस्त्वद्दास्यं वाञ्छितं मम ।
तव नाम्नश्च व्युत्पत्तिं का वा त्वं वक्तुमर्हसि ॥ ६६
राधिकोवाच ।
भवेद्भक्तिर्निश्चला ते हरेर्दास्यञ्च दुर्लभम् ।
लभस्व मद्वरेणापि कथयामि स्वनिर्णयम् ॥ ६७
पुरा नन्देन दृष्टाहं भाण्डीरे वटमूलके ।
मया च कथितो नन्दो विशुद्धश्च व्रजेश्वरः ॥ ६८
अहमेव स्वयं राधा छाया रायाणकामिनी ।
रायाणः श्रीहरेरंशः पार्षदप्रवरो महान् ॥ ६९
राधवक्त्रस्य महाविष्णुर्विश्वानि यस्य लोमसु ।
विश्वप्राणिषु विश्वेषु धा धात्रीमातृवाचकः ॥ ७०
धात्रीमाताहमेतेषां मूलप्रकृतिरीश्वरी ।
तेन राधा समाख्याता हरिणा च पुरा बुधैः ॥ ७१
अहं श्रीदामशापेन वृषभानसुताधुना ।
शतवर्षञ्च विच्छेदो हरिणा सह साम्प्रतम् ॥ ७२
वृषभानश्च कृष्णस्य पार्षदप्रवरो महान् ।
पितॄणां मानसी कन्या मम माता कलावती ॥ ७३
अयोनिसम्भवाहञ्च मम माता च भारते ।
पुनः सार्द्धञ्च युष्माभिर्यास्यामि श्रीहरेः पदम् ॥ ७४
इति ते कथितं सर्व्वं व्रजं व्रज व्रजेश्वरि ।
व्रजेश्वरेण सहिता स्वामिना ज्ञानिना सति ॥ ७५
ममाधुना च भवती ध्यानस्य विघ्नदायिका ।
ध्यानभङ्गे महान् दोषो नराणामपि सुन्दरि ॥ ७६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे राधा-यशोदासंवादे एकादशा-
धिकशततमोऽध्यायः ॥ १११ ॥

---

## द्वादशाधिकशततमोऽध्यायः ।

नारायण उवाच ।
वासुदेवो द्वारकायां वसुदेवाज्ञया मुने ।
शयने रत्नरचितं रुक्मिणीमन्दिरं वरम् ॥ १
शुद्धस्फटिकसङ्काशममूल्यरत्ननिर्म्मितम् ।
पुरतः परितो रम्यं नानाचित्रेण चित्रितम् ॥ २
अमूल्यरत्नकलसं श्वेतचामरदर्पणैः ।
वह्निशुद्धांशुकैः शुद्धैः परितः परिशोभितम् ॥ ३
ददर्श रुक्मिणीं देवीमतीव नवयौवनाम् ।
रत्नपर्य्यङ्कमारुह्य शयानां सस्मितां मुदा ॥ ४
प्रौढाञ्च नवोढ़ां तां नवसङ्गमलज्जिताम् ।
अमूल्यरत्ननिर्म्माण-भूषणेन विभूषिताम् ॥ ५
रत्नदर्पणहस्ताञ्च सिन्दूरबिन्दुशोभिताम् ।
सुचारुकवरीभारां मालतीमाल्यभूषिताम् ॥ ६
दृष्ट्वा कान्तं भीष्मकन्या सहसा प्रणनाम सा ।
शुभक्षणे च शुभया स रेमे रामया सह ॥ ७
सुखसम्भोगमात्रेण मूर्च्छामाप मुदा सती ।
तस्मिन् जज्ञे कामदेवो भस्मीभूतश्च शम्भुना ॥ ८
स शम्बरं निहत्यैव ततः प्राप रतिं सतीम् ।
रतिर्म्मायावती नाम्ना सङ्केतेन सुरस्य च ।
छाया दत्ता च शयने गृहिणी शम्बरालये ॥ ९
नारद उवाच ।
जहार शम्बरं कामी दैत्यं केन प्रकारतः ।
कथयस्व महाभाग विस्तरेण शुभां कथाम् ॥ १०
नारायण उवाच ।
समतीते च सप्ताहे रुक्मिणीसूतिकागृहात् ।
गृहीत्वा बालकं दैत्यो जगाम स्वालयं ततः ॥ ११
अपुत्रकश्च दैत्येशः पुत्रं प्राप्य प्रहर्षितः ।
मायावत्यै ददौ हृष्टो हृष्टा मायावती सती ॥ १२
अतीव पालनेनैव वर्द्धयामास बालकम् ।
सरस्वती तां रहसि कथयामास निर्ज्जने ॥ १३
सरस्वत्युवाच ।
शिवकोपानले पूर्व्वं भस्मीभूतः पतिस्तव ।
स चायं रुक्मिणीपुत्रो दैत्येनैव समाहृतः ॥ १४
माययापि च मायेशो रुक्मिणीसूतिकागृहात् ।
समानीय ददौ तुभ्यं पतिस्तेऽयं न चात्मजः ॥ १५
कामञ्च कथयामास जगन्माता च सा सती ।
तव पत्नी रतिश्चेयं रमस्व रामया सह ॥ १६
त्वमेव रुक्मिणीपुत्रो नास्य दैत्यस्य मन्मथ ।
कुररीव सती नित्यं रुदिता सा त्वया विना ॥ १७
इत्युक्त्वा च ययौ वाणी ब्रह्माणी ब्रह्मणः पदम् ।
स रेमे निर्ज्जने नित्यं रामया सह सुन्दरः ॥ १८
एकदा मन्मथं दैत्यो ददर्श रहसि स्थितम् ।

शृङ्गारं रामया सार्द्धं कुर्व्वन्तं कौतुकेन च ॥ १९
स्मितं संस्मितायाश्च मध्यवक्षःस्थलस्थितम्।
रतिं ददर्श कामेन मूर्च्छितां सुरतोत्सुकाम् ॥ २०
दृष्ट्वा चुकोप दैत्यश्च जग्राह खड्गमुत्तमम्।
उवाच खड्गहस्तश्च कामदेवं रतिं सतीम् ॥ २१
शम्बर उवाच।
धिक् त्वां महाज्ञामुकञ्च मूर्खं पण्डितमानिनम्।
महापातकिनां श्रेष्ठमन्त्यं मातृगामिनम् ॥ २२
धिक् त्वां पुंश्चलीमुख्यां कामुकीं हतचेतनाम्।
पुत्रं गृहीत्वा रहसि करोषि सुरते रतिम् ॥ २३
इत्येवमुक्त्वा खड्गञ्च चिक्षेप मदनोपरि।
बभञ्ज खड्गः सहसा कामाङ्गस्पर्शनेन च ॥ २४
रतिकेशञ्च जग्राह शम्बरो रक्तलोचनः।
पुनर्गृहीत्वा खड्गञ्च तामेव हन्तुमुद्यतः ॥ २५
जिघांसन्तं रतिं दैत्यं प्रेरयामास मन्मथः।
पपात दूरतो ब्रह्मन् मूर्च्छितः खाङ्गपीड़ितः ॥ २६
पुनश्च चेतनां प्राप्य कोपेन प्रज्वलन्निव।
शिवदत्तञ्च शूलञ्च जग्राह निर्भरेण च ॥ २७
शतसूर्य्यप्रभं शूलं प्रलयाग्निसमं मुने।
दृष्ट्वाजग्मुश्च देवाश्च ब्रह्मेशशेषसंज्ञकाः ॥ २८
पवनः कथयामास कर्णे कामस्य यत्नतः।
स्मर स्मर महामायां दुर्गां दुर्गतिनाशिनीम् ॥ २९
पवनस्य वचः श्रुत्वा दुर्गां सस्मार मन्मथः।
शूलं बभूव कामाङ्गे रम्यं माल्यं मनोहरम् ॥ ३०
ब्रह्मास्त्रेण च तं दैत्यं जघान मन्मथो मुदा।
रतिं गृहीत्वा यानेन जगाम द्वारकापुरीम् ॥ ३१
प्रययुर्देवताः सर्व्वाः स्तुत्वा च पार्व्वतीं शिवम्।
रुक्मिणी मङ्गलं कृत्वा जग्राह च सुतं रतिम् ॥ ३२
उत्सवं कारयामास परं स्वस्त्ययनं हरिः।
ब्राह्मणां भोजयामास पूजयामास पार्व्वतीम् ॥ ३३
अथ कृष्णः क्रमेणैव वेदोक्ते मङ्गले दिने।
सप्तानां रमणीनाञ्च पाणिं जग्राह नारद ॥ ३४
कालिन्दीं सत्यभामाञ्च सत्यां नाग्नजितीं सतीम्।
जाम्बवतीं लक्ष्मणाञ्च समुद्वाहं चकार सः ॥ ३५
ताभिः सार्द्धं क्रमेणैव स रेमे च पृथक् पृथक्।
एकस्यां दश पुत्राश्च कन्यकैका क्रमेण च ॥ ३६
निहत्य नरकं दैत्यं सपुत्रञ्च नृपेश्वरम्।
बलवन्तं सुरं दैत्यं जघान रणमूर्द्धनि ॥ ३७
ददर्श कन्यास्तत्रस्थाः सहस्राणाञ्च षोड़श।
शताधिका वयःस्थाश्च शश्वत्सुस्थिरयौवनाः ॥ ३८
प्रफुल्लवदनाः सर्व्वा रत्नभूषणभूषिताः।
शुभक्षणे च तासाञ्च पाणिं जग्राह माधवः ॥ ३९
ताभिः सार्द्धं स रेमे च क्रमेण च शुभक्षणे।
एकस्यां दशपुत्राश्च कन्यकैका क्रमेण च ॥ ४०
हरेरेतान्यपत्यानि बभूवुश्च पृथक् पृथक् ॥ ४१
एकदा द्वारकां रम्यां दुर्व्वासा मुनिपुङ्गवः।
शिष्टैस्त्रिकोटिभिः सार्द्धमाजगामावलीलया ॥ ४२
राजा महोग्रसेनश्च सामात्यः सपुरोहितः।
वसुदेवो वासुदेवोऽप्यक्रूरश्चोद्धवस्तथा ॥ ४३
नीत्वा षोड़शोपचारं प्रणेमुर्मुनिपुङ्गवम्।
शुभाशिषञ्च प्रददौ तेभ्यो ब्रह्मन् पृथक् पृथक् ॥ ४४
एकानंशाञ्च कन्यां तां ददौ तस्मै शुभक्षणे।
मुक्ता-माणिक्य-हीरञ्च रत्नञ्च यौतुकं ददौ ॥ ४५
स रेमे रामया सार्द्धं माहेन्द्रे रत्नमन्दिरे।
रत्नेन्द्रसारनिर्म्माणं ददौ तस्मै शुभाश्रमम् ॥ ४६
एकदा स मुनिश्रेष्ठः समालोच्य स्वचेतसा।
तासाञ्च रमणीनाञ्च प्रत्येकं मन्दिरं ययौ ॥ ४७
कृष्णं ददर्श सर्व्वत्र परिपूर्णतमं प्रभुम्।
कुत्रचिद्भुक्तवन्तं तं विक्रीड़न्तञ्च कुत्रचित् ॥ ४८
शयानं कुत्रचिद्रम्ये पर्य्यङ्के रत्ननिर्म्मिते।
श्रुतवन्तं पुराणञ्च श्रद्धया कुत्रचिद्विभुः ॥ ४९
महोत्सवे नियुक्तञ्च कुत्रचित् प्राङ्गणे शुभे।
ताम्बूलं भुक्तवन्तञ्च भक्त्या दत्तञ्च सत्यया ॥ ५०
कुत्रचित् सेवितं तल्पे रुक्मिण्या श्वेतचामरैः।
कालिन्द्या सेवितपदं शयानं कुत्रचिन्मुदा ॥ ५१
सर्व्वत्र समसम्भाषां चकार भगवान् मुनिम्।
विस्मयं प्रययौ विप्रो दृष्ट्वा तत् परमाद्भुतम् ॥ ५२
तुष्टाव जगतीनाथं रुक्मिणीमन्दिरे पुनः।
वसन्तं तं सुधर्म्मायां सतां संसदि सुन्दरम् ॥ ५३
दुर्व्वासा उवाच।
जय जय जगतां नाथ जितसर्व्व जनार्द्दन सर्व्वार्थैक सर्व्वेश सर्व्वबीज पुरातन निर्गुण निरीह निर्लिप्त निरञ्जन निराकार भक्तानुग्रहविग्रह सत्य-स्वरूप सनातन नित्य-स्वरूप नित्यनूतन।

अज्ञेश-शेष-धनेशवन्दित-पादपद्म ब्रह्मज्योतिर-
निर्व्वचनीय वेदातीतगुणरूपमहाकाशसमानीय
परमात्मन् नमोऽस्तु ते ॥ ५४ ॥
इत्येवमुक्त्वा स ऋषिर्हरेरनुमतेन च।
प्रणम्य तस्थौ विप्रेन्द्रस्तथैव पुरतो हरेः ॥ ५५
तमुवाच जगन्नाथो हितं सत्यं पुरातनम्।
ज्ञानञ्च वेदविहितं सर्व्वेषाञ्च सतां मतम् ॥ ५६

श्रीभगवानुवाच।

मा भैविप्र शिवांशस्त्वं किं न जानासि ज्ञानतः।
अहं सर्व्वस्य प्रभवो मत्तः सर्व्वं प्रवर्त्तते ॥ ५७
अहमात्मा च सर्व्वेषां शवाः सर्व्वे मया विना।
प्राणिदेहान्नयि गते यान्त्येव सर्व्वशक्तयः ॥ ५८
जातावप्येक एवाहं व्यक्ताविव पृथक् पृथक्।
यो भुङ्क्ते तस्य तृप्तिः स्यान्नान्येषाञ्च कदाचन ॥ ५९
पृथग्जीवादिसर्व्वेषां प्रतिमानाञ्च प्राणिनाम्।
परिपूर्णतमोऽहञ्च गोलोके रासमण्डले।
श्रीदामशापाद्राधा सा मां द्रष्टुमक्षमाधुना ॥ ६०
सर्व्वत्रैवांशरूपेण कलया च तदंशतः।
रुक्मिणीमन्दिरे चांशोऽप्यन्यासां मन्दिरे कला ॥६१
अत्रापि कुत्रचिच्चांशः कुत्रचिच्च कलाकला।
कलाकलांशः कुत्रापि प्रतिमासु च देहिषु ॥ ६२
इत्युक्त्वा जगतां नाथो गृहस्याभ्यन्तरं ययौ।
दुर्व्वासाश्च प्रियां त्यक्त्वा श्रीहरेस्तपसे गतः ॥ ६३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे द्वादशाधिकशततमोऽध्यायः ॥११२॥

---

## त्रयोदशाधिकशततमोऽध्यायः।

नारायण उवाच।

शिष्यश्चापि दुर्व्वासास्त्यक्त्वा च द्वारकां पुरीम्।
कैलासं प्रययौ भक्त्या शङ्करं द्रष्टुमीश्वरम् ॥ १
गत्वा मुनिश्च कैलासं प्रणनाम शिवं शिवाम्।
तुष्टाव परया भक्त्या सशिष्यः प्रयतः शुचिः ॥ २
तत् सर्व्वं कथयामास वृत्तान्तं श्रीहरेरपि।
आत्मनस्तपसस्तत्त्वं स्ववैराग्यञ्च चेतसः ॥ ३
मुनेश्च वचनं श्रुत्वा प्रहस्य पार्व्वती सती।
तमुवाच हितं सत्यं साक्षाच्छङ्करसन्निधौ ॥ ४

पार्व्वत्युवाच।

धर्म्मतत्त्वं न जानासि धर्म्मिष्ठं मन्यसे स्वकम्।
अनपत्यां परित्यज्य क्व यासि तपसे मुने ॥ ५
अनपत्याञ्च युवतीं कुलजाञ्च पतिव्रताम्।
त्यक्त्वा भवेद्धुवः सन्न्यासी ब्रह्मचारी यतीति वा ॥६
वाणिज्ये वा प्रवासे वा चिरं दूरं प्रयाति यः।
तीर्थे वा तपसे वापि मोक्षार्थं जन्म खण्डितुम् ॥ ७
न मोक्षस्तस्य भवति धर्म्मसंस्खलनं ध्रुवम्।
अभिशापेन गमनं नरकञ्च परत्र च।
इहैव च यशो नास्ति इत्याह कमलोद्भवः ॥ ८
द्वारकां गच्छ हे विप्र स्वधर्म्मं रक्ष साम्प्रतम्।
एकानंशां मदंशाञ्च धर्म्मतः परिपालय ॥ ९
पाद्मपद्मार्च्चितं पादपद्मं सर्व्वसुदुर्लभम्।
सन्ततं शम्भुना ध्यातं मुनीन्द्रैः सनकादिभिः ॥ १०
परित्यज्य सुरतरोः कृष्णस्य परमात्मनः।
क्व यासि तपसे वत्स सुधां त्यक्त्वा मनो विषे ॥ ११
श्रीकृष्णपादपद्मञ्च स्वप्ने पश्यति यो मुने।
शतजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥ १२
यद्बाल्ये यच्च कौमारे वार्द्धक्ये यच्च यौवने।
कामतोऽकामतो वापि भस्मीभूतञ्च पातकम् ॥ १३
साक्षाद्दृष्टो भारते वर्षे श्रीकृष्णचरणाम्बुजम्।
दृष्ट्वा सद्यो भवेत् पूतो जीवन्मुक्तो भवेद्ध्रुवम्।
कोटिजन्मार्ज्जितात् सद्यः कृतपापाद्विमुच्यते ॥ १४
सर्व्वाण्येव हि तीर्थानि यतः पूतानि नित्यशः।
तद्व्रतं तत् तपः सत्यं तत् पुण्यं तच्च पूजनम् ॥ १५
सफलं कृष्णसम्बन्धि स्वजन्मखण्डनं यतः।
कृष्णभक्तिविहीनश्च ब्राह्मणः श्वपचाधमः।
तत्सङ्गाच्च सदालापाद्भक्तिः प्रणश्यति ॥ १६
कृष्णस्योच्छिष्टभोजी यः कृष्णभक्तश्च ब्राह्मणः।
अग्निः-पवनात् पूतः पूतं कर्त्तुं जगत् क्षमः ॥ १७
श्रीकृष्णञ्च परित्यज्य क्व यासि तपसे द्विज।
तपसां फलमाप्नोति श्रीकृष्णस्मरणेन च ॥ १८
यतो भक्तिश्च न भवेच्छ्रीकृष्णे परमात्मनि।
स गुरुः परमो वैरी करोति जन्मनिष्फलम् ॥ १९
पार्व्वतीवचनं श्रुत्वा शङ्करः प्रेमविह्वलः।
पुलकाञ्चितसर्व्वाङ्गस्तुष्टाव परमेश्वरीम् ॥ २०
दुर्व्वासाः प्रणतिं कृत्वा शिव-दुर्गापदाम्बुजे।

आरं आरं कृष्णपादं पुनश्च द्वारकां ययौ ॥ २१
तत्र गत्वा हरिं दृष्ट्वा तुष्टाव पुरुषोत्तमम्।
शुकानं आलयं गत्वा स च रेमे तया सह ॥ २२
कृष्णो युधिष्ठिराह्वानात् प्रययौ हस्तिनापुरम्।
कुन्तीं सम्भाष्य भ्रातॄंश्च नृपांश्च प्रमुदान्वितः ॥ २३
उपायेन जरासन्धं निहत्य भ्रात्मेव च।
कारयामास यज्ञञ्च विधिबोधितदक्षिणम्।
मुनीन्द्रैश्च नृपेन्द्रैश्च राजसूयमभीप्सितम् ॥ २४
शिशुपालं दन्तवक्रं तत्र यज्ञे जघान सः।
अतीव निन्दां कुर्व्वन्तं सभायां सुर-भूपयोः ॥ २५
पपात तच्छरीरञ्च जीवो गत्वा हरेः पदम्।
न दृष्ट्वा तत्र सर्व्वेशं तुष्टावागत्य माधवम् ॥ २६

शिशुपाल उवाच।

वेदानां जनकोऽसि त्वं वेदाङ्गानाञ्च माधव।
सुराणामसुराणाञ्च प्राकृतानाञ्च देहिनाम् ॥ २७
सृष्ट्वा विधाय सृष्टिञ्च कल्पभेदे करोषि च।
मायया च स्वयं ब्रह्मा शङ्करः शेष एव च ॥ २८
मनवो मुनयश्चापि वेदाश्च सृष्टिपालकाः।
कलांशेनापि कलया दिक्पालाश्च ग्रहादयः ॥ २९
स्वयं पुमान् स्वयं स्त्री च स्वयमेव नपुंसकम्।
कारणञ्च स्वयं कार्य्यं जन्यश्च जनकः स्वयम् ॥ ३०
यद्यन्नस्य गुणा दोषा यन्निर्णश्च श्रुतौ श्रुतम्।
सर्व्वं यन्त्वा भवान् यन्त्री त्वयि सर्व्वं प्रतिष्ठितम् ॥३१
क्षमापराधं मूढस्य स्तोत्रेण विस्मयं ययुः।
परिपूर्णतमं कृत्वा मेनिरे कृष्णमीश्वरम् ॥ ३२
कारयित्वा राजसूयं भोजयामास ब्राह्मणान्।
कुरु-पाण्डवयुद्धञ्च कारयामास भेदतः ॥ ३३
भुवो भारावतरणं चकार स कृपानिधिः।
पुनर्ययौ द्वारकाञ्च चिरं स्थित्वा नृपाज्ञया ॥ ३४
विप्राया मृतवत्साया जीवयामास पुत्रकान्।
मृतस्थानात् समानीय तन्मात्रे प्रददौ सुतान् ॥ ३५
तद्दृष्ट्वा देवकी तुष्टा ययाचे मृतपुत्रकान्।
मृतस्थानात् समानीय ददौ मात्रे सहोदरान् ॥३५
सद्यो जहार दारिद्र्यं सुदाम्नो ब्राह्मणस्य च।
समागतस्य स्वर्गद्वारकां शरणार्थिनः ॥ ३७
तस्मै ददौ राजलक्ष्मीं निश्चलां सप्तपौरुषीम्।
पृथुकस्य कणां भुक्त्वा भक्तस्य भक्तवत्सलः ॥ ३८
बभूव तस्य राज्यञ्च यथेन्द्रस्यामरावती।
यथा धनेश्वरो देवो धनाढ्यः स बभूव ह ॥ ३९
निश्चलां हरिभक्तिञ्च ददौ दास्यं सुदुर्लभम्।
अविनाशिनि गोलोके यथेष्टं पदमुत्तमम् ॥ ४०
जहार पारिजातञ्च गन्धाहङ्कारमेव च।
सत्याञ्च कारयामास पुण्यकं व्रतमीप्सितम् ॥ ४१
तत्र व्रते कुमाराय आत्मानं दक्षिणां ददौ।
ब्राह्मणान् भोजयामास तेभ्यो रत्नं ददौ मुदा ॥४२
सत्यभामाभिमानञ्च वर्द्धयामास सर्व्वतः।
रुक्मिण्या अपि सौभाग्यमन्यासाञ्च नवं नवम् ॥ ४३
वैष्णवानां सुराणाञ्च विप्राणामपि पूजनम्।
वर्द्धयामास सर्व्वत्र नित्यं नैमित्तिकं मुने ॥ ४४
परमाध्यात्मिकं ज्ञानमुद्धवाय ददौ प्रभुः।
अर्ज्जुनं कथयामास कोटिहोमान्वितं शुभम् ॥ ४५
नानाप्रकारनैवेद्यैर्धूपदीपैर्मनोहरैः।
ब्राह्मणान् भोजयामास पार्व्वतीप्रीतये तथा ॥ ४६
रैवते पर्व्वते रम्ये चामूल्यरत्नमन्दिरे।
गणेशं पूजयामास देवानामीश्वरं परम् ॥ ४७
लड्डुकानां तिलानाञ्च सुस्वादु सुमनोहरम्।
परिपुष्टं पञ्चलक्षं नैवेद्यञ्च ददौ मुदा ॥ ४८
लड्डुकं स्वस्तिकानाञ्च सप्तलक्षं सुधोपमम्।
गणेश्वराय प्रददौ शर्कराशतराशिकम् ॥ ४९
पक्वरम्भाफलानाञ्च दशलक्षमपूर्व्वकम्।
मिष्टान्नं पायसं रम्यं सुस्वादु स्वस्तिपिष्टकम् ॥ ५०
घृतकं नवनीतञ्च दधि दुग्धं सुधामधु।
धूपं दीपं पारिजातपुष्पञ्च माल्यमीप्सितम्।
सुगन्धिचन्दनं गन्धं वह्निशुद्धांशुकं ददौ ॥ ५१
यज्ञञ्च कारयामास कोटिहोमान्वितं शुभम्।
ब्राह्मणं भोजयामास तुष्टाव स गणेश्वरम्।
वाद्यं दशविधञ्चैव वादयामास तत्र वै ॥ ५२
सूर्य्यञ्च पूजयामास शाम्बकुष्ठक्षयाय च।
हविष्यं कारयामास तञ्च शाम्बं समातरम् ॥ ५३
परिपूर्णं वत्सरञ्चाप्युपहारैरनुत्तमैः।
वरं ददौ च शाम्बाय स्तोत्रञ्च भास्करः स्वयम् ॥५४

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे त्रयोदशाधिकशततमोऽध्यायः ॥११३॥

---

## चतुर्द्दशाधिकशततमोऽध्यायः।

नारायण उवाच।

कृष्णपुत्रश्च प्रद्युम्नो महाबलपराक्रमः।
तत्पुत्रोऽप्यनिरुद्धश्च विधातुरंश एव च॥ १
एकदा सोऽनिरुद्धश्च नवयौवनसंयुतः।
सुप्तो रहसि पर्य्यङ्के पुष्पचन्दनचर्च्चिते॥ २
स्वप्ने ददर्श युवतीं पुष्पोद्याने सुपुष्पिते।
सुगन्धिपुष्पतल्पे च स्निग्धचन्दनचर्च्चिते॥ ३
शयानां सस्मितां रम्यां नवयौवनसंयुताम्।
अमूल्यरत्ननिर्म्माण-भूषणेन विभूषिताम्॥ ४
चारुकेयूर-वलय-शङ्ख-कङ्कणशोभिताम्।
मणिकुण्डलयुग्मेन गण्डस्थलविराजिताम्॥ ५
अतीव सूक्ष्मवसनां कस्तूरीरञ्जिताम्।
पक्वबिम्बाधरौष्ठीञ्च शरत्कमललोचनाम्॥ ६
दाड़िम्बकुसुमाकार-सिन्दूरबिन्दुभूषिताम्।
श्रीरामकदलीस्तम्भ-निन्दितोरुस्थलोज्ज्वलाम्॥ ७
अत्युच्चैर्वर्त्तुलाकार-स्तनयुग्मविभूषिताम्।
नितम्बभारनम्राञ्च कामवाणप्रपीड़िताम्॥ ८
कामुकीं कमनीयाञ्च पश्यन्तीं वक्रचक्षुषा।
कुङ्कुमालक्तरक्ताति-पादपद्मविराजिताम्।
वायुप्रेरणवस्त्रेण व्यक्तगुप्तस्थलोज्ज्वलाम्॥ ९
तां दृष्ट्वा कामपुत्त्रश्च कामोन्मथितमानसः।
उवाच मधुरं मत्तः काममत्तां सुकोमलाम्॥ १०
चारुचम्पकवर्णाभां कामेन पुलकान्विताम्।
अतिप्रौढ़ां नवोढ़ाञ्च शृङ्गारेच्छासुचञ्चलाम्॥ ११

अनिरुद्ध उवाच।

किं देवी किञ्च गान्धर्वी का त्वं कामिनि कानने।
कस्य स्त्री कस्य कन्या वा कं वा वाञ्छसि सुन्दरि१२
त्रैलोक्यातुलसौन्दर्य्या मुनिमानसमोहिता।
न बिभेषि कथं ब्रूहि स्वयमेकाकिनी च माम्॥१३
अहं त्रैलोक्यनाथस्य पौत्रः कामात्मजोऽधुना।
कान्तेऽहमनिरुद्धश्च नवीनयौवनोन्नतः॥ १४
कमनीयश्च कामी च कामशास्त्रविशारदः।
कामुकी कामनापूर्णां कर्त्तुमेवेश्वरः स्वयम्॥ १५
मां भजस्व सुशीले त्वं सुवेशञ्च सुशीलकम्।
रतिशूरं रतिरस-प्राज्ञं रतिरसप्रियम्।
रतिपुत्त्रं सुरतिषु प्रमत्तं रसिकं प्रिये॥ १६
युवानं व्याधिहीनञ्च कामुकं कामुकीच्छति।
विदग्धा सुविदग्धञ्च कान्तमायाति कामदम्।
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत्॥ १७
प्रच्छाद्य लोचनास्यञ्च नवसङ्गमलज्जिता।
विलोकयन्ती वक्राक्षि-कोणेन तमुवाच सा॥ १८

कामिन्युवाच।

कामुकः कामपुत्त्रोऽसि कामेन व्याकुलोऽधुना।
भवांश्चेत् कामुकीयोग्यो न कामश्चिन्तितः कथम्॥१९
पौत्रस्त्रैलोक्यनाथस्य सुतः सम्भावितस्य च।
स्वयोग्यां योग्यपुत्त्रोऽसि विवाहं न कथं कुरु॥ २०
विवाहिता यत्नपत्नी सा च पुण्यवती सती।
निश्चला सततं साध्या रङ्गिणी सङ्गिनी सदा॥ २१
भयप्रीतिदानसाध्या गुप्तपत्नी च निश्चला।
नैमित्तिका न नित्या सा सा च वेदविगर्हिता॥ २२
परं नरकसोपानं परत्रेहायशस्करा।
साधुस्त्वं न हि रतो वंशजो वैष्णवो यदि॥ २३
यदि पूर्व्वं भवेद्भ्रान्तो निवृत्तः साधुसङ्गतः।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥ २४
प्रायश्चित्ती पुनर्लिप्तो निवृत्तपातकी यदि।
उपहास्यो भुवि भवेत् सर्व्वं कुञ्जरशौचवत्॥ २५
सुशीला सुन्दरी शान्ता धर्म्मपत्नी प्रशंसिता।
पतिव्रता सुसाध्या सा शश्वत्सुप्रियवादिनी।
कोमलाङ्गी विदग्धा च श्यामा रतिसुखप्रदा॥ २६
एवम्भूतां परित्यज्य वैष्णवस्तपसे व्रजेत्।
सा चेत् परिणता साध्वी शान्ता पुत्त्रवती सदा।
अन्यथा च वृथा सर्व्वं तपसः स्खलनं भवेत्॥ २७
असाधुश्च परं क्रूरः परनारीं प्रयाति च।
स याति नरकं घोरं पितृभिः सप्तभिः सह॥ २८
अहन्तूषा वाणकन्या वाणः शङ्करकिङ्करः।
वाणस्त्रैलोक्यविजयी शङ्करो जगतां पतिः॥ २९
न स्वतन्त्रा पराधीना त्रिषु लोकेषु कामिनी।
पुंश्चली या स्वतन्त्रा सा प्यशंसप्रसूतिका॥ ३०
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्त्रश्च स्थविरे काले न स्वतन्त्रा पतिव्रता॥ ३१
पिता ददाति कन्यां तां योग्याय च वराय च।
कन्या वरं न याचेत धर्म्म एष सनातनः॥ ३२

त्वञ्च योग्योऽसि योग्याहं मामिच्छसि यदि प्रभो।
वाणां प्रार्थय शम्भुं वाप्यथवा पार्व्वतीं सतीम् ॥ ३३
इत्युक्त्वा सुन्दरी साध्वी सान्तर्द्धाना बभूव ह।
निद्रां तत्याज सहसा कामी कामात्मजो मुने ॥ ३४
बुद्ध्वा स्वप्नं स विज्ञाय कामेन व्यथितातुरः।
बभूव व्याकुलोऽशान्तो न दृष्ट्वा प्राणवल्लभाम् ॥ ३५
त्यक्त्वाहारमनिद्रश्च प्रमत्तश्च कृशोदरः।
क्षणं तिष्ठति शेते च क्षणं हसति रोदिति ॥ ३६
पुत्रं दृष्ट्वा च रुदती देवकी रुक्मिणी रतिः।
अन्याश्च योषितः सर्व्वाः कथयामासुरीश्वरम् ॥३७
तासाञ्च वचनं श्रुत्वा प्रहस्य मधुसूदनः।
उवाच सर्व्वतत्त्वज्ञः कृष्णश्च पूर्णमानसः ॥ ३८

श्रीभगवानुवाच।

कामातुरा वाणकन्या रतिं दृष्ट्वा शिवेशयोः।
वरं सम्प्राप दुर्गाया व्याकुला मदनास्त्रतः ॥ ३९
स्वप्नञ्च दर्शयामास सानिरुद्धञ्च पार्व्वती।
मम पौत्रं प्रमत्तञ्च चकार कौतुकेन च ॥ ४०
तत्पुत्रीञ्च प्रमत्तां तां करोमि स्वप्नतोऽधुना।
स्वच्छन्दं तिष्ठतु चिरं नास्ति चिन्ता मनोव्यथा ॥ ४१
इति कृष्णः समाश्वास्य सर्व्वात्मा सर्व्वसिद्धिवित्।
स्वप्नञ्च दर्शयामास वाणपुत्रीञ्च कामुकीम् ॥ ४२
सुप्ता सुतल्पे बाला सा पुष्पचन्दनचर्च्चिते।
नवयौवनसंयुक्ता रत्नभूषणभूषिता।
शयाना रत्नपर्य्यङ्के ददर्श स्वप्नमीप्सितम् ॥ ४३
अतीव निर्ज्जने देशे रत्ननिर्म्माणमन्दिरे।
नवीननीरदश्याममतीवनवयौवनम् ॥ ४४
कोटिकन्दर्पलीलाभं स्मितं सुमनोहरम्।
रत्नकेयूर-वलय-रत्नमञ्जीररञ्जितम् ॥ ४५
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम्।
चन्दनोक्षितसर्व्वाङ्गं भूषितं पीतवाससा ॥ ४६
सुचारुमालतीमाल्य-वक्षःस्थलसमुज्ज्वलम्।
शयानं रत्नपर्य्यङ्के पुष्पचन्दनचर्च्चिते ॥ ४७
तं दृष्ट्वा सहसा साध्वी तन्मूलं प्रययौ मुदा।
उवाच मधुरं साध्वी ह्रदयेन विदूयता।
कामात्मजप्रिया कान्ता कामवाणप्रपीड़िता ॥ ४८

ऊषोवाच।

अरुणं कामुक भद्रं ते मां भजस्व स्मरातुराम्।
अतिप्रौढ़ां नवोढ़ाञ्च नवसङ्गमलालसाम् ॥ ४९
तवानुरक्तां भक्ताञ्च गान्धर्व्वेण समुद्वह।
विवाहाष्टप्रकारेषु गान्धर्व्वः सुलभो नृणाम् ॥ ५
अनुरक्तां प्रियां प्राप्य त्यजेद्यः कपटी पुमान्
तस्माद्याति महालक्ष्मीः शापं दत्त्वा सुदारुणम्

पुमानुवाच।

अहं कृष्णस्य पौत्रश्च कामदेवात्मजः स्वयम्।
कथं गृह्णामि त्वां कान्ते तयोरनुमतिं विना ॥ ५
इत्येवमुक्त्वा स पुमानन्तर्द्धानं चकार ह।
कामेन व्याकुला कान्ता न दृष्ट्वा कान्तमीप्सितम्
निद्रां त्यक्त्वा समुत्थाय तल्पादेव मनोहरात्।
विषादाद् सखीमध्ये प्रमत्ता रुदती भृशम् ॥ ५६
पप्रच्छ तां वराणीनां किं किमित्येवमीप्सितम्।
उवाच बोधयामास चित्रलेखा सुयोगिनी ॥ ५

चित्रलेखोवाच।

चेतनं कुरु कल्याणि कस्मात् ते भीतमुल्वणम्।
स्वयं शम्भुः शिवा साक्षाद्दुर्लङ्घ्ये नगरे सति ॥
शिवस्मरणमात्रेण सर्व्वानिष्टं पलायते।
शिवं भवति सर्व्वत्र शिव एव शिवालयः ॥ ५७
ध्यानाद्दुर्गतिनाशिन्याः सर्व्वं दुर्गं विनश्यति।
ददाति मङ्गलं तस्मै सर्व्वमङ्गलमङ्गला ॥ ५८
चित्रलेखावचः श्रुत्वा किञ्चिन्नोवाच सुन्दरी।
त्यक्त्वाहारञ्च निद्राञ्च पुरुषं चिन्तयेत् सदा ॥ ५
चित्रलेखा सखी गत्वा वाणमाह च तत्प्रियाम्।
दुर्गाञ्च शङ्करं स्कन्दं गणेशं योगिनां गुरुम् ॥ ६
चित्रलेखावचः श्रुत्वा रुरोदोच्चैर्भृशं सती।
वाणश्च शङ्कराभ्याशे विषादात् प्रमूर्च्छितः।
जहास शङ्करो दुर्गा कार्त्तिकेयो गणेश्वरः ॥ ६

गणेश्वर उवाच।

यो ददाति ध्रुवं दुःखमन्यस्मै दम्भमोहितः।
सूक्ष्मधर्म्मविचारेण स विन्दति चतुर्गुणम् ॥ ६२
शिवेशयोश्च क्रीड़ाञ्च दृष्ट्वा कामविमोहिता।
वरं तस्यै ददौ दुर्गा वरमेव सुदुर्लभम् ॥ ६३
स्वप्ने गत्वा स्वयं देवी मत्तं कृत्वा स्मरात्मजम्।
अधुना वामपार्श्वे च शम्भोस्तिष्ठति मूकवत् ॥ ६
सर्व्वं ज्ञाता च सर्व्वज्ञो भगवान् हरिरीश्वरः
स्वप्ने सुवेशं पुरुषं दर्शयामास कन्यकाम् ॥ ६५

सुवेशं पुरुषं दृष्ट्वा युवानं युवती सती ।
मनसेच्छा भवेत् तस्या धर्म्मभीता निवर्त्तते ॥ ६६
सुवेशं पुरुषं दृष्ट्वा पुंश्चली पापवंशजा ।
त्यजेन्निद्रां तथाहारं पतिं पुत्त्रं धनं गृहम् ॥ ६७
चेतनां गृहकार्य्यञ्च कुललज्जां कुलद्वयम् ।
युवानं रतिशूरञ्चाप्यतिनीचं न हि त्यजेत् ॥ ६८
त्यजेज्जातिञ्च धर्म्मञ्च प्राणांश्च परिणामतः ।
तस्मात् प्राहुः प्रयत्नेन प्राणेभ्यो युवतीं सदा ।
परिरक्षेच्च सततं मायायुक्तां न विश्वसेत् ॥ ६९
हृदयं क्षुरधाराभं नारीणां मधुरं वचः ।
तासां मनो न जानन्ति सन्तो वेदाश्च वेदिकाः ॥७०
प्रयातु द्वारकां सद्यश्चित्रलेखा सुयोगिनी ।
अनिरुद्धं समाकृष्य प्रमत्तमवलीलया ॥ ७१
इति श्रुत्वा महादेवो गणेशं तमुवाच सः ।
न शृणोति यथा बाणः शुभकार्य्यं तथा कुरु ॥ ७२
चित्रलेखा ययौ तूर्णं द्वारकाभवनं हरेः ।
सर्व्वेषामपि दुर्लङ्घ्यं लीलया प्रविवेश सा ॥ ७३
निद्रितञ्चानिरुद्धञ्च समाहृत्य च योगतः ।
रथमारोपयामास अप्सरा बालकं मुदा ॥ ७४
सा मनोयायिनी भद्रा गृहीत्वा बालकं मुने ।
मुहूर्त्तात् शोणितपुरं कृत्वा शङ्खध्वनिं ययौ ॥ ७५
अथाश्रमाभ्यन्तरे च रुरुदुः सर्व्वयोषितः ।
अरे बाल अरे वत्स क्व गतः प्राणवल्लभः ॥ ७६
कृष्णश्च ताः समाश्वास्य सर्व्वज्ञः सर्व्वतत्त्ववित् ।
शाम्ब-काम-बलैः सार्द्धं कृष्णः सात्यकिना तथा ॥७७
गृहीत्वा गरुडं वीरं रथमारुह्य सत्वरम् ।
सुदर्शनं पाञ्चजन्यं पद्मं कौमोदकीं गदाम् ॥ ७८
प्रस्थाद्बयास्यति देवेशो नगरं शोणितं तथा ।
स्वगणैः शङ्करेणैव पार्व्वत्या परिरक्षितम् ॥ ७९
तामूषां निद्रितां दृष्ट्वा निराहारां कृशोदरीम् ।
शीघ्रञ्च बोधयामास सखीभिः परिरक्षिताम् ॥ ८०
ऊषां कृत्वा च सुस्नातां रत्नभूषणभूषिताम् ।
रम्यैर्माल्यैश्चन्दनैश्च सिन्दूरपत्रकैः शुभैः ॥ ८१
द्वयोः सम्भाषणं तत्र माहेन्द्रे च शुभक्षणे ।
कारयामास गुप्तञ्च सखीनां सम्मतेन च ॥ ८२
पतिव्रता पतिं दृष्ट्वा सा रेमे विरहज्वरा ।
गान्धर्व्वेण विवाहेन तामुवाह स्मरात्मजः ॥ ८३
रतिर्बभूव सुचिरमुभयोः सुखकारणम् ।
दिवानिशं न बुबुधे स्मरपुत्त्रः स्मरातुरः ॥ ८४
ऊषा कामातुरा प्रौढ़ा नवोढ़ा नवसङ्गमात् ।
मूर्च्छां सम्प्राप पुंसश्च स्पर्शमात्रेण कामुकी ॥ ८५
एवं नित्यञ्च रहसि सङ्गमः सुमनोहरः ।
बभूव सुचिरं विप्र राजा शुश्राव रक्षकात् ॥ ८६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे बाणयुद्धे ऊषानिरुद्धविवाहो नाम चतुर्द्दशाधिकशततमोऽध्यायः ॥११४॥

---

## पञ्चदशाधिकशततमोऽध्यायः ।

नारायण उवाच ।

अथ भीता रक्षकास्ते तमूचुर्बाणमीश्वरम् ।
स्कन्दं गणेशं दुर्गाञ्च दण्डवत् प्रणिपत्य च ॥ १

रक्षका ऊचुः ।

अहो कष्टञ्च कालोऽयमतीव दुरतिक्रमः ।
स्वतन्त्रा बालिका प्रौढ़ा पतिमिच्छति साम्प्रतम् ॥ २
असङ्गसङ्गमो नाथ साधूनां दुःखकारणम् ।
संसर्गजा गुणा दोषा भवन्ति सततं नृणाम् ॥ ३
चित्रलेखा स्वयं दूती समानीय वरं परम् ।
रणशूरं महावीरं नृपेन्द्रञ्च महारथम् ॥ ४
युवानं व्याधिहीनञ्च कन्दर्पादतिसुन्दरम् ।
सम्भोगं कारयामास बुबुधे न दिवानिशम् ॥ ५
साम्प्रतं तव कन्या साप्यूषा गर्भवती सती ।
कुलजा कुलयोश्चैव तप्ताङ्गारस्वरूपिणी ॥ ६
दौहित्रो वापि दौहित्री बभूव साम्प्रतं तव ।
कन्यां पश्य महाप्रौढ़ां नागरीं नागरान्विताम् ॥७
नखविक्षतसर्व्वाङ्गीं वराधीनाञ्च चञ्चलाम् ।
पुंसश्च सङ्गिनीं शश्वद्रहस्ये रतिसङ्गिनीम् ।
सस्मितां सकटाक्षाञ्च चञ्चलेक्षणवीक्षिताम् ॥ ८
एवं श्रुत्वा लज्जितश्च बाणस्तत्र चुकोप सः ।
युद्धाय च मतिं चक्रे वारितः शम्भुना भृशम् ॥ ९
वारितश्च गणेशेन स्कन्देन शिवया तथा ।
भैरव्या भद्रकाल्या च योगिनीभिश्च सन्ततम् ॥ १०
अष्टभिर्भैरवैश्चैव रुद्रैरेकादशात्मकैः ।

भूतैः प्रेतैश्च कुष्माण्डैर्वेतालैर्ब्रह्मराक्षसैः ॥ ११
योगीन्द्रैरपि सिद्धेन्द्रैरुग्रचण्डादिभिस्तथा ।
कोट्टव्या ग्रामदेव्या च यथा मात्रा हिताय च ॥१२
उवाच शङ्करो वाणं मूढं पण्डितमानिनम् ।
हितं सत्यं नीतियुक्तं परिणामसुखावहम् ॥ १३

महादेव उवाच ।

शृणु वाण प्रवक्ष्यामि कथामेतां पुरातनीम् ।
भुवो भारावतरणे भारते स्वयमीश्वरः ॥ १४
वासुदेव इति ख्यातः कथ्यते तेन कोविदैः ।
धातुर्विधाता भगवांश्चक्रपाणिः स्वयं विभुः ॥ १५
ब्रह्म-विष्णु-शिवादीनामीश्वरः प्रकृतेः परः ।
निर्गुणश्च निरीहश्च भक्तानुग्रहविग्रहः ॥ १६
परंब्रह्म परं धाम परमात्मा च देहिनाम् ।
यस्मिन् गते गतो जीवः संग्रामस्तेन सम्भवेत् ॥ १७
अस्त्राविद्धो महाकाशो यथा मूढ दिशस्तथा ।
तथात्मा च निराकारो देही च ध्यानहेतुना ॥ १८
तस्य पौत्रोऽनिरुद्धश्च महाबलपराक्रमः ।
त्रलोक्यमपि संहर्त्तुं क्षणेन च क्षमः स्वयम् ॥ १९
सर्व्वे देवाश्च दैत्याश्च बलवन्तो महारथाः ।
ते सर्व्वे चानिरुद्धस्य कलां नार्हन्ति षोड़शीम् ॥ २०
द्वयोरेव समं वित्तं द्वयोरेव समं बलम् ।
तयोर्विवादो मैत्री च न तु पुष्ट-विपुष्टयोः ॥ २१
बलिः पिता ते दैत्यानां सारभूतो महारथः ।
क्षणेन येन नीतश्च सुतलं स हरेः कला ॥ २२
सर्व्वे चांशकलाः पुंसः परिपूर्णतमस्य च ।
वृन्दावनेश्वरस्यापि कृष्णस्य परमात्मनः ॥ २३

पार्व्वत्युवाच ।

ध्यायते ध्याननिष्ठश्च हृत्पद्मे च दिवानिशम् ।
ब्रह्मा महेशः शेषश्च भगवन्तं सनातनम् ॥ २४
दिनेशश्च गणेशश्च योगीन्द्राणां गुरोर्गुरुः ।
ध्यायते परमात्मानं भगवन्तं सनातनम् ॥ २५
सनत्कुमारः कपिलो नरो नारायणस्तथा ।
ध्यायन्ते हृदयाम्भोजे भगवन्तं सनातनम् ॥ २६
मनवश्च मुनीन्द्राश्च सिद्धेन्द्रा योगिनां वराः ।
ध्यानासाध्यञ्च ध्यायन्ते भगवन्तं सनातनम् ॥ २७
सर्व्वाद्यं सर्व्ववीजञ्च सर्व्वेषाञ्च परात्परम् ।
ध्यायन्ते ज्ञानिनः सर्व्वे भगवन्तं सनातनम् ॥ २८

गणेश्वर उवाच ।

अभाग्यञ्च बलेश्चापि वैष्णवस्य महात्मनः ।
मूढ़ो यदीदृशः पुत्रः प्रह्लादस्यापि धीमतः ॥ २९

स्कन्द उवाच ।

अयि भ्रातर्न श्रुता च हिरण्यकशिपोः कथा ।
हिरण्याक्षस्य च मध्वोः कैटभस्य महात्मनः ॥ ३०
पूर्व्वजास्तेऽपि ते दैत्या महाबलपराक्रमाः ।
क्षणेन विष्णुना नीता लीलया यमसादनम् ॥ ३१
भगवान् यस्य संहर्त्ता स्वयं नारायणः प्रभुः ।
तस्य को रक्षिता भ्रातर्निवर्त्तस्व शुभाय च ॥ ३२
तेषाञ्च वचनं श्रुत्वा तानुवाचासुरेश्वरः ।
कोपरक्तास्यनयनो धनुष्पाणिर्यथान्तकः ॥ ३३

वाण उवाच ।

शृणु मातः प्रवक्ष्यामि शृणु तात महेश्वर ।
शृणु भ्रातर्गणपते शृणु भ्रातश्च कार्त्तिक ॥ ३४
शुभाशुभं प्राक्तनेन प्राणिनां कर्म्मिणां तथा ।
कृतकर्म्मातिरिक्तञ्च कार्य्यं केषाञ्च वर्त्तते ॥ ३५
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ३६
यस्माच्च यस्य निर्व्वाणं विधात्रा लिखितं पुरा ।
तदेव नित्यं सत्यञ्च निषेकः केन वार्य्यते ॥ ३७
संग्रामे कातरो यो हि निष्फलं तस्य जीवनम् ।
जयी यशश्च लभते मृतः स्वर्गञ्च गच्छति ॥ ३८
प्रविश्य कन्यां गृह्णाति नगरं शिवरक्षितम् ।
पार्व्वत्या च गणेशेन स्कन्देन बलिना तथा ॥ ३९
धिक्चाञ्च धिक्शमैश्वर्य्यं धिग्वीर्य्यं जीवनञ्च धिक् ।
को वा गृह्णाति कन्याञ्च कस्यैवं रक्षितस्य च ॥ ४०
सगर्भा तव कन्येति सभायां रक्षको वदेत् ।
इति मे वज्रतुल्यञ्च श्रुतं कटु परं वचः ॥ ४१
रणेऽनिरुद्धं हत्वा च घातयिष्यामि कन्यकाम् ।
अन्यथा ज्वलदग्नौ च त्यक्ष्यामि च कलेवरम् ॥ ४२

कोट्टव्युवाच ।

शृणु वत्स प्रवक्ष्यामि माताहं तेऽपि धर्म्मतः ।
दुरन्तेनापि पुत्रेण पित्रोर्दुःखं पदे पदे ॥ ४३
कन्या परगृहीता साध्यन्यस्मै दातुमक्षमः ।
श्रीकृष्णस्यापि पौत्राय प्रद्युम्नस्य सुताय च ॥ ४४
अनिरुद्धाय महते स्वेच्छया देहि कन्यकाम् ।

भूतोऽसि भारते वर्षे सप्तभिः पितृभिः सह ॥ ४५
कौतुकं देहि सर्व्वस्वं यशसे महसे भुवि।
अन्यथा रणमध्ये च त्वां हनिष्यति माधवः।
सुदर्शनेन चक्रेण को वा त्वां रक्षितुं क्षमः ॥ ४६
कोट्टवीवचनं श्रुत्वा चुकोप दैत्यपुङ्गवः।
प्रययौ रथमारुह्य यत्र पौत्रो हरेर्मुने ॥ ४७
स्कन्दः सेनापतिर्भूत्वा प्रययौ शङ्कराज्ञया।
बाणस्स्वस्त्ययनं चक्रे गणेशश्च स्वयं शिवः ॥ ४८
बाणं शुभाशिषं चक्रे पार्व्वती कोट्टवी तथा।
अष्टौ च भैरवाश्चैव रुद्राश्चैकादशैव ते ॥ ४९
सर्व्वे चाज्ञाय हन्तारो बभूवुः शस्त्रपाणयः।
एतस्मिन्नन्तरे दूतोऽप्यनिरुद्धमुवाच ह।
पार्व्वत्या प्रेरितश्चैव बाणपत्न्या च सत्वरम् ॥ ५०

दूत उवाच।

अनिरुद्धोत्तिष्ठ ते भद्रं पार्व्वतीवचनं शृणु।
भव सान्नाहिको वत्स कुरु युद्धं वहिर्भव ॥ ५१
भीतोषा रुदती तत्र सस्मार पार्व्वतीं सतीम्।
रक्ष रक्ष महामाये मन्मार्गेश्वरमीप्सितम् ॥ ५२
अभयेऽप्यभयं देहि संग्रामे घोरदारुणे।
त्वमेव जगतां माता स्नेहस्ते सर्व्वतः समः ॥ ५३
अथानिरुद्धः सन्नाही शस्त्रपाणिर्बभूव ह।
उषादत्तं रथं प्राप्य चकारारोहणं मुदा ॥ ५४
वहिः सम्भूय शिविराद्ददर्श बाणमीश्वरम्।
सान्नाहिकं शस्त्रपाणिं रक्तास्यलोचनं परम् ॥ ५५
दृष्ट्वानिरुद्धं बाणश्च तमुवाच रुषान्वितः।
घोरसंग्राममध्ये च विशोत्तिं प्रज्वलन्निव ॥ ५६

बाण उवाच।

अयि वीर महादुष्ट नीतिशास्त्रविवर्ज्जित।
चन्द्रवंशकुलाङ्गार पुण्यचैत्रेऽयशस्कर ॥ ५७
पिता ते शम्बरं हत्वा जग्राह तस्य कामिनीम्।
ततो जातो भवानेव निबोध स्वकुलक्रमम् ॥ ५८
पितामहो वासुदेवो मथुरायाञ्च क्षत्रियः।
गोकुले वैश्यजातिश्च नाम्ना च नन्दनन्दनः ॥ ५९
वृन्दावने च गोपश्च नन्दस्य पशुरक्षकः।
साचाञ्जारश्च गोपीनां दुष्टः परमलम्पटः ॥ ६०
जघान पूतनां सद्यो नारीघाती ह्यधार्म्मिकः।
आगत्य मथुरां कुब्जां जघान मैथुनेन च ॥ ६१
दुर्ब्बलं नरकं हत्वा स्त्रीसमूहं मनोहरम्।
जग्राह योनिलुब्धश्च सपुत्त्रमतिनिष्ठुरः ॥ ६२
भीष्मकं मानवं जित्वा तत्पुत्त्रञ्चापि दुर्ब्बलम्।
जग्राह कन्यकां तस्य दैवयोग्याञ्च रुक्मिणीम् ॥६३
सत्राजितः सूर्य्यभक्तो दैवात् प्राप मणीश्वरम्।
घातयित्वा ह्युपायेन जग्राह मणि-कन्यकाम् ॥ ६४
कुरु-पाण्डवयुद्धञ्च कारयित्वा च दारुणम्।
सञ्जहार भुवो भूप-समूहमतिदारुणम् ॥ ६५
युधिष्ठिरस्य यज्ञे च शिशुपालं जघान सः।
दन्तवक्रञ्च शाल्वञ्च जरासन्धञ्च दारुणः ॥ ६६
उपायाद्यवनं हत्वा तत्सर्व्वस्वं जहार सः।
दुर्ब्बलो राजभीतेन समुद्रं शरणं गतः ॥ ६७
जित्वा च भ्रातरं शक्रं भार्य्याया वचनेन च।
जग्राह पारिजातञ्च पुष्पञ्च स्वर्गदुर्लभम् ॥ ६८
कंसं निहत्याधर्म्मिष्ठो भ्रातरं मातुरेव च।
जग्राह तस्य सर्व्वस्वं परं किं कथयामि ते ॥ ६९
जित्वा च भल्लुकं युद्धे जग्राह तस्य कन्यकाम्।
तत्पितुर्भगिनी कुन्ती चतुर्णां कामिनी भुवि ॥ ७०
द्रौपदी भ्रातृपत्नी च पञ्चानां कामिनी तथा।
गोष्ठी ते योनिलुब्धश्च शश्वत् परमलम्पटः ॥ ७१
तज्ज्येष्ठो बलदेवश्च शश्वत् पिबति वारुणीम्।
यमुनां भ्रातृपत्नीञ्च करोत्याह्वानमीप्सितम् ॥ ७२
जहार भगिनीं तस्य कौन्तेयः शक्रनन्दनः।
सुभद्रां मातुलसुतां संनिबोध कुलक्रमम् ॥ ७३
बाणस्य वचनं श्रुत्वा चुकोप कामनन्दनः।
उवाच परमार्थञ्च योग्यं प्रत्युत्तरं मुने ॥ ७४

अनिरुद्ध उवाच।

पिता मे कामदेवश्च ब्रह्मपुत्त्रः पुरा शुचिः।
तस्यास्त्रेण वशीभूतं त्रैलोक्यं सततं शृणु ॥ ७५
शिवकोपानलेनैव भस्मीभूतः स्वकर्म्मतः।
कृष्णस्य पुत्त्रोऽप्यधुना सर्व्वेषां परमात्मनः ॥ ७६
पतिव्रता रतिर्माता पतिशोकेन साम्प्रतम्।
शम्बरस्य गृहे तस्थौ हृता तेन बलेन च ॥ ७७
छायां मायावतीं दत्त्वा मायया शयनेन च।
रतिः स्वधर्म्मं संरक्ष्य धर्म्मसाक्षी च तद्गृहे ॥ ७८
निहत्य शम्बरं भर्त्तुं गृहीत्वा स्वप्रियां सतीम्।
आजगाम द्वारकाञ्च चन्द्रसूर्य्यौ च साक्षिणौ ॥ ७९

पितामहं वासुदेवं त्वं किं जानासि मूढ़वत्।
यञ्च सन्तो न जानन्ति वेदाश्चत्वार एव च॥ ८०
वासुः सर्व्वनिवासश्च विश्वानि यस्य लोमसु।
तस्य देवः परंब्रह्म वासुदेव इति स्मृतः॥ ८१
शङ्करं पृच्छ साक्षाच्च यस्य भृत्योऽधुना भवान्।
कृष्णभृत्यस्य च बलेः पुत्त्रोऽसि किं दुरात्मकः॥ ८२
गोकुले वैश्यपुत्त्रं तं ब्रूहि त्वं ज्ञानदुर्ब्बलः।
भोजनं वेदविहितं शश्वत् क्षत्रिय-वैश्ययोः॥ ८३
द्रोणः प्रजापतिश्रेष्ठो धरा तस्य प्रिया सती।
पुत्रञ्च तपसा लेभे परमात्मानमीश्वरम्॥ ८४
द्रोणो नन्दो वैश्यराजो यशोदा सा धरा सती।
वृकभानुसुता राधा श्रीदाम्नः शापदारुणात्॥ ८५
त्रिंशत्कोटिञ्च गोपीनां गृहीत्वा भर्त्तुराज्ञया।
पुण्यञ्च भारतं क्षेत्रं गोलोकादाजगाम सा॥ ८६
ताभिः सार्द्धं स रेमे च स्वपत्नीभिर्मुदान्वितः।
पाणिं जग्राह राधायाः स्वयं ब्रह्मा पुरोहितः॥८७
गोपकोटिश्च गोलोकादाजगाम मुदान्वितः।
तेजसा हरितुल्यास्ते पार्षदप्रवरा हरेः॥ ८८
गोरक्षणं हरेरेव गोपवेशस्य चात्मनः।
गोपानां शिशुशिक्षार्थं मायेशस्यापि मायया॥ ८९
पूतना बलिकन्या च भगिनी च तवासुर।
दृष्ट्वा च वामनं भक्त्या चकार पुत्रमानसम्॥ ९०
एवम्भूतो यदि मम पुत्त्रो भवति साम्प्रतम्।
स्तनं ददामि तनयं कृत्वा वक्षसि सुन्दरम्॥ ९१
तस्या मानसपूर्णञ्च चकार भगवान् प्रभुः।
स्तनं दत्त्वा च गोलोकं ययौ सा रत्नयानतः॥ ९२
कुब्जा सा भगिनी पूर्व्वं रावणस्य दुरात्मनः।
श्रीरामं चकमे कामात् नाम्ना शूर्पणखा सती॥ ९३
नासां चिच्छेद तस्याश्च लक्ष्मणो धार्म्मिकेश्वरः।
तपसा च वरं लेभे ब्रह्मणः प्रियमीश्वरम्॥ ९४
तेन पुण्येन तं लब्ध्वा गोलोकं सा जगाम ह।
गोपी बभूव गोलोके कृष्णस्यालिङ्गनेन च॥ ९५
नरको हरिवध्यश्च स्वपूर्व्वप्राक्तनेन च।
पाणिं जग्राह कन्यानां साक्षिणौ अग्नि-भास्करौ॥९६
भीष्मकन्या महालक्ष्मीः श्रीकृष्णस्य प्रिया सती।
वैकुण्ठादागता-साध्वी ब्रह्मणोऽनुमतेन च॥ ९७
सत्राजितस्य कन्या सा सत्यभामा वसुन्धरा।
ददौ कृष्णाय राजा स तं मणिं यौतुकेन च॥ ९८
भुवो भारावतरण-हेतुना गमनं हरेः।
सञ्जहार भुवो भारं कुरु-पाण्डवयुद्धतः॥ ९९
शिशुपालो दन्तवक्रो जयो विजय एव च।
द्वारिणौ द्वारषट्के च वैकुण्ठे श्रीहरेरपि।
कुमारशापात् पतितौ व्याप्तजन्मत्रयं ध्रुवम्॥ १००
हिरण्यकशिपुश्चैव तवैव पूर्व्वपूरुषः।
तस्य भ्राता हिरण्याक्षस्तेनैव वरुणो जितः॥१०१
हरिर्नृसिंहरूपेण तं जघानावलीलया।
शूकरेण हतोऽन्यश्च पूर्व्वजन्मकथां शृणु॥ १०२
द्वितीये जन्मनि पुरा रावणः कुम्भकर्णकः।
श्रीरामेण हतौ तौ द्वौ शेषजन्म कलौ तयोः॥ १०३
श्रीकृष्णेन हतौ तौ द्वौ धर्म्मपुत्त्रक्रतौ तथा।
जरासन्धश्च शाल्वश्च दुरात्मा कंस एव च।
प्राक्तनात् तस्य वध्यस्ते भुवो भारजिहीर्षया॥१०४
मान्धातृसुतवध्यश्च यवनश्चापि प्राक्तनात्।
लक्ष्मीश्वरस्य कृष्णस्य धनेन किं प्रयोजनम्॥ १०५
प्रतिज्ञया च सत्यायाः पुण्यकव्रतकारणात्।
पारिजातं समानीय चकार स्वात्मनो व्रतम्॥ १०६
स्वयं जाम्बवती देवी दुर्गांशा भल्लुकात्मजा।
पाणिं जग्राह तस्याश्च तपसा भारते हरिः॥ १०७
कुन्त्याश्च क्षेत्रजाः पुत्राः केवलं भर्त्तुराज्ञया।
कलौ निषिद्धं त्रियुगे प्रसिद्धं परपैतृकम्॥ १०८
युधिष्ठिरो धर्म्मपुत्त्रो भीमश्च पवनात्मजः।
महेन्द्रपुत्त्रो धर्म्मिष्ठः फाल्गुनो विजयी भुवि।
यस्मै पाशुपतं शम्भुः प्रददौ च स्वयं मुदा॥ १०९
अश्वमेधं गवालम्भं सन्न्यासं परपैतृकम्।
देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्ज्जयेत्॥ ११०
द्रौपद्याः पञ्च भर्त्तारः शङ्करस्य वरेण च।
बलदेवः पुण्यमधु पूतं पिबति नित्यशः॥ १११
चकार यमुनाह्वानं स्नानार्थं धार्म्मिकः शुचिः।
सुभद्राञ्च ददौ कृष्णः फाल्गुनाय महात्मने॥ ११२
कन्यकां मातुलानाञ्च दाक्षिणात्यः परिग्रहेत्।
देशेष्वन्येषु दोषोऽयमित्याह कमलोद्भवः॥ ११३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे वाणानिरुद्धसंवादे वाणयुद्धे पञ्च-दशाधिकशततमोऽध्यायः॥११५॥

## षोड़शाधिकशततमोऽध्यायः ।

बाण उवाच ।

अनिरुद्ध बुधोऽसि त्वं त्वयोक्तं सत्यमेव च ।
अधुना चैवमुक्तञ्च सर्व्वं बुद्धञ्च चेतसा ॥ १
त्वयोक्तं शङ्करवरात् पञ्चानां स्वामिनां प्रिया ।
द्रौपदी च महाभागा तन्मे व्याख्यातुमर्हसि ॥ २
शम्बरेण हृता पूर्व्वं तव माता कथं रतिः ।
देवैरपि कथं दत्ता देवास्तेन जिताः कथम् ॥ ३

अनिरुद्ध उवाच ।

एकदा रघुनाथश्च सीतया लक्ष्मणेन च ।
स्नातः सरसि तत्रस्थो रम्ये पञ्चवटीवने ॥ ४
उवाच सीतां हेमन्ते जलं सुस्वादु निर्म्मलम् ।
तथान्नव्यञ्जनं रम्यं सर्व्वं वस्तु सुशीतलम् ॥ ५
फलञ्च वण्टनं चक्रे सीतायै प्रददौ पुरः ।
ततो ददौ लक्ष्मणाय पश्चाद्भुङ्क्ते स्वयं विभुः ॥ ६
लक्ष्मणस्तद्गृहीत्वा च नैव भुङ्क्ते फलं जलम् ।
मेघनादवधार्थाय सीताहरणकारणात् ॥ ७
निद्रां न याति नो भुङ्क्ते वर्षाणाञ्च चतुर्द्दश ।
स एव पुरुषो योगी निहन्तुं रावणात्मजम् ॥ ८
एतस्मिन्नन्तरे रामं द्रष्टुं कमललोचनम् ।
भविष्यत् कथयामास श्रुतिकट्वनलो वचः ॥ ९

वह्निरुवाच ।

शृणु राम महाभाग सीतासङ्गोपनं कुरु ।
सप्ताहाभ्यन्तरे चैव रावणो दुष्टराक्षसः ॥ १०
दुर्निवार्य्यः प्राक्तनेन जानकीञ्च हरिष्यति ।
विधात्रा लिखितं कर्म्म प्राक्तनं केन वार्य्यते ।
वेदैश्चतुर्भिः कथितं न च दैवात् परं बलम् ॥ ११

श्रीराम उवाच ।

सीतां गृहीत्वा त्वं गच्छ छायात्रैव तु तिष्ठतु ।
कालनवर्ज्जनं कर्म्म सर्व्वेषाञ्च जुगुप्सितम् ॥ १२
सीतां गृहीत्वा प्रययौ सदतीञ्च हुताशनः ।
सीतायाः सदृशी छाया तस्थौ श्रीरामसन्निधौ ॥१३
सा च छाया हृता पूर्व्वं रावणेनावलीलया ।
समुद्दधार तां रामो निहत्य तं सबान्धवम् ॥ १४
वह्नौ परीक्षाकाले च छाया वह्नौ विवेश सा ।
अग्निश्छायाञ्च संरक्ष्य ददौ रामाय जानकीम् ॥ १५
रामस्ताञ्च गृहीत्वा च प्रययौ स्वाश्रमं मुदा ।
छाया तस्थौ वह्निपार्श्वे हृदयेन विदूयता ॥ १६
सा च छाया तपश्चक्रे नारायणसरोवरे ।
तपश्चकार दिव्यञ्च शतवर्षञ्च शूलिनः ॥ १७
वरं वृणुष्व भद्रं त उवाच शङ्करश्च ताम् ।
उवाच सा शिवं व्यग्रा भर्त्तुर्दुःखेन दुःखिता ॥ १८
पतिं देहि पञ्चधा सा वरं वव्रे त्रिलोचनम् ।
सर्व्वसम्पत्प्रदस्तुष्टस्तस्यै शर्व्वो वरं ददौ ॥ १९

महादेव उवाच ।

साध्वि त्वं पञ्चधा ब्रूहि पतिं देहीति व्याकुला ।
पञ्चेन्द्राश्च हरेरंशा भविष्यन्ति प्रियास्तव ॥ २०
ते च सर्व्वे च पञ्चेन्द्राश्चाधुना पञ्च पाण्डवाः ।
सा च छाया द्रौपदी च यज्ञकुण्डसमुद्भवा ॥ २१
कृते युगे वेदवती त्रेतायां जनकात्मजा ।
द्वापरे द्रौपदी छाया तेन कृष्णा त्रिहायणी ॥ २२
वैष्णवी कृष्णभक्ता च तेन कृष्णा प्रकीर्त्तिता ।
स्वर्गलक्ष्मीर्महेन्द्राणां सा च पश्चाद्भविष्यति ॥ २३
राजा ददौ फाल्गुनाय कन्यायाश्च स्वयम्वरे ।
पप्रच्छ मातरं धीरो वस्तु प्राप्तं मयाधुना ॥ २४
तमुवाच स्वयं माता गृहाण भ्रातृभिः सह ।
शम्भोर्वरेण पूर्व्वञ्च परत्र मातुराज्ञया ॥ २५
द्रौपद्याः स्वामिनस्तेन हेतुना पञ्च पाण्डवाः ।
चतुर्द्दशानामिन्द्राणां पञ्चेन्द्राः पञ्च पाण्डवाः ॥ २६
शङ्करेणाभिशप्ता सा मन्मात्रा भर्त्सितेन च ।
मत्ताते भस्मसाद्भूते हरकोपानलेन च ॥ २७
हे रते त्वं मया शप्ता दैत्यग्रस्ता भवाधुना ।
विजित्य देवान् सेन्द्रांश्च शम्बरस्तां हरिष्यति ॥२८
पुनस्तुतो वरं प्रादात् स्वतीर्थं तेन यास्यसि ।
छायां दत्त्वा तिष्ठ गेहे यावज्जीवति ते पतिः ॥२९
इति ते कथितं सर्व्वमितिहासं पुरातनम् ।
देवानां गुप्तचरितं शृणु दैत्येन्द्र साम्प्रतम् ॥ ३०
एतस्मिन्नन्तरे तत्र सुभद्रश्च महाबलः ।
कुम्भाण्डभ्राता बलवान् बाणसेनापतीश्वरः ॥ ३१
निभत्स्य बाणं समरे शस्त्रपाणिमहारथः ।
श्रीकृष्णपौत्रं शूलञ्च चिक्षेप प्रलयाग्निवत् ।
अर्द्धचन्द्रेण तच्छूलं चिच्छेद कामपुत्रकः ॥ ३२
शक्तिं चिक्षेप भद्रश्च शतसूर्य्यसमप्रभाम् ।

वैष्णवास्त्रेण चिच्छेद तां शक्तिं कामपुत्रकः ॥३३
नारायणास्त्रं चिक्षेप सुभद्रो रणमूर्द्धनि।
प्रणम्य शेते निर्भीको मदनस्य सुतो बली॥ ३४
ऊर्द्धमस्त्रञ्च बभ्राम शतसूर्य्यसमप्रभम्।
प्रलीनमस्त्रमाकाशे विश्वसंहारकारणम्॥ ३५
अस्त्रे गते सोऽनिरुद्धो गृहीत्वा च महागदाम्।
अवभज्य भद्ररथं जघानाश्वांश्च सारथिम्।
जघान तं सुभद्रञ्च लीलया रणमूर्द्धनि॥ ३६
हते सुभद्रे बाणश्च महाबलपराक्रमः।
बाणानां शतकञ्चापि चिक्षेप रणमूर्द्धनि।
कामात्मजोऽग्निबाणेन बाणौघं प्रददाह सः॥ ३७
बाणश्चिक्षेप ब्रह्मास्त्रं सृष्टिसंहारकारणम्।
दृष्ट्वा कामात्मजः शीघ्रं सबीजमन्त्रपूर्व्वकम्।
ब्रह्मास्त्रेणैव ब्रह्मास्त्रं सञ्जहारावलीलया॥ ३८
बाणः पाशुपतं क्षिप्रं समारेभे च कोपतः।
निषिद्धश्च गणेशेन स्कन्देन शम्भुना तथा॥ ३९
तद्दृष्ट्वा सोऽनिरुद्धस्तं धनुर्बाणौघसंयुतम्।
चकार जर्ज्जं युद्धे च शीघ्रास्त्रञ्च महारथम्॥ ४०
यतो बभूव बाणश्च निश्चेष्टो रणमूर्द्धनि।
पुनश्चिक्षेप निद्रास्त्रं निद्रितं तं चकार सः॥ ४१
बाणं तं निद्रितं दृष्ट्वा गृहीत्वा खड्गमुत्तमम्।
बाणं हन्तुं समुद्यन्तं वारयामास कार्त्तिकः॥ ४२
स्कन्दश्च शतबाणेन वारयामास लीलया।
अनिरुद्धं महाभागं बलवन्तं धनुर्द्धरम्॥ ४३
अनिरुद्धश्च सहसा तथा शक्त्या दुरत्यया।
बभञ्ज कार्त्तिकरथं रत्नेन्द्रसारनिर्म्मितम्॥ ४४
गदया कार्त्तिकः क्रुद्धोऽप्यनिरुद्धरथं मुदा।
बभञ्ज लीलया तत्र क्षणेन रणमूर्द्धनि॥ ४५
अनिरुद्धोऽर्द्धचन्द्रेण क्षुरधारेण लीलया।
चिच्छेद कार्त्तिकधनुर्भल्लास्त्रञ्च नियोजितम्॥ ४६
जघान कार्त्तिकस्तञ्च गदया च दुरत्यया।
गदां जग्राह तद्धस्ताद्बलेन मदनात्मजः॥ ४७
शूलं गृहीत्वा सहसा तमेव हन्तुमुद्यतम्।
अनिरुद्धश्च कोपेन प्रेरयामास दूरतः॥ ४८
कार्त्तिकः पुनरागत्य गृहीत्वा कामपुत्रकम्।
गृहीत्वा च करेणैव पातयामास भूतले॥ ४९
अनिरुद्धो गृहीत्वा च समुत्तस्थौ महाबलः।
तयोर्विरोधं पूतञ्च प्रचकार गणेश्वरः॥ ५०
कार्त्तिकः प्रययौ शीघ्रमूषागेहं सुरात्मजः।
सर्व्वं निवेदितुं शम्भुं प्रययौ स गणेश्वरः॥ ५१

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे बाणयुद्धे-
षोड़शाधिकशततमोऽध्यायः॥११६॥

---

## सप्तदशाधिकशततमोऽध्यायः।

नारायण उवाच।

गणेशस्तु शिवस्थानं गत्वा नत्वा महेश्वरम्।
सर्व्वं विज्ञापयामास क्रमेण च पृथक् पृथक्॥ १
बाणानिरुद्धयोर्युद्धं सुभद्रनिधनं तथा।
स्कन्दानिरुद्धयोर्युद्धमनिरुद्धस्य विक्रमम्॥ २
गणेशवचनं श्रुत्वा प्रहस्य भगवान् भवः।
उवाच स्निग्धया वाचा सुगुप्तं वेदसम्मतम्॥ ३

महादेव उवाच।

गणेश्वर महाभाग श्रूयतां वचनं मम।
हितं तथ्यं नीतिसारं परिणामसुखावहम्॥ ४
असंख्यविश्वसङ्घञ्च सर्व्वं कृष्णात्मकं सुत।
कृष्णं जानीहि यत् कार्य्यं कारणानाञ्च कारणम्॥५
ब्रह्मादितृणपर्य्यन्तं मिथ्या सर्व्वं गणेश्वर।
निबोध सत्यं कृष्णञ्च भगवन्तं सनातनम्॥ ६
गोलोके द्विभुजं शान्तं राधाकान्तं मनोहरम्।
शिशुवेशं गोपवेशं परिपूर्णतमं विभुम्॥ ७
गोपीभिर्गोपनिकरैः सहितं कामधेनुभिः।
प्राप्य वृन्दावने रम्ये सुन्दरे रासमण्डले॥ ८
चरन्तं मुरलीहस्तं ब्रह्मेशशेषवन्दितम्।
शतशृङ्गे च शैले च वटमूले निराकुले॥ ९
गोष्ठे भाण्डीरनिकटे निर्म्मले विरजातटे।
नवीननीरदश्यामं शोभितं पीतवाससा।
यथा नवघनौघञ्च सौदामिन्या विराजितम्॥ १०
आविर्भावाश्च यावन्तो गोलोके रासमण्डले।
तावन्तो गोकुले रम्ये पुण्ये वृन्दावने वने॥ ११
सर्व्वे चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।
परिपूर्णतमो रामो ब्रह्मशापात् स्वविस्मृतः।
तस्य पौत्रोऽनिरुद्धश्च महाबलपराक्रमः॥ १२

मया प्रस्थापितः स्कन्दो महायुद्धे सुदारुणे।
ततो बाणश्च संग्रामे तेन स्कन्देन रक्षितः॥ १३
स्कन्दानिरुद्धयोर्युद्धं बभञ्जिथ गणेश्वर।
अष्टौ च भैरवाः सर्व्वे रुद्राश्चैकादशैव ते॥ १४
अष्टौ च वसवश्चैव देवाः शक्रादयस्तथा।
तथैव द्वादशादित्याः सर्व्वे दैत्यासुरास्तथा॥ १५
देवानामग्रणीः स्कन्दो बाणश्च सगणस्तथा।
सर्व्वे ते चानिरुद्धं तं संग्रामे जेतुमक्षमाः॥ १६
अनिरुद्धः स्वयं ब्रह्मा प्रद्युम्नः काम एव च।
बलदेवः स्वयं शेषः कृष्णश्च प्रकृतेः परः॥ १७
एतत् ते कथितं सर्व्वं बाणं रक्ष गणेश्वर।
भवान् शुभस्वरूपश्च विघ्नखण्डनकारकः॥ १८
आराद्यायास्यति हरिर्गृहीत्वा च सुदर्शनम्।
अव्यर्थमस्त्रप्रवरं सूर्य्यकोटिसमप्रभम्॥ १९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे बाणयुद्धे सप्तदशाधिकशततमोऽध्यायः॥११७

---

## अष्टादशाधिकशततमोऽध्यायः।

नारायण उवाच।

गणेशं बोधयित्वा तु शम्भुरभ्यन्तरं ययौ।
तत्र सिंहासने रम्ये दुर्गां दुर्गतिनाशिनी॥ १
भैरवी भद्रकाली च उग्रचण्डा च कोट्टवी।
ताः समुत्थाय सहसा प्रणेमुर्जगदीश्वरम्॥ २
तत्राययौ गणेशश्च कार्त्तिकेयश्च वीर्य्यवान्।
बाणश्च वीरभद्रश्च स्वयं नन्दी सनन्दकः।
महाकालो महामन्त्री अथाष्टौ भैरवास्तथा॥ ३
एतस्मिन्नन्तरे तत्र मणिभद्रः समाययौ।
सिंहद्वारे स्वयं द्वारी तमीश्वरमुवाच सः॥ ४

मणिभद्र उवाच।

असंख्यानि च सैन्यानि यादवानां महेश्वर।
बलदेवश्च प्रद्युम्नः शाम्बश्च सात्यकिस्तथा॥ ५
राजा महोग्रसेनश्च भीमश्च स्वयमर्ज्जुनः।
अक्रूरश्चोद्धवश्चैव जयन्तः शक्रनन्दनः॥ ६
रत्नेन्द्रसारनिर्म्माणे रथेन्द्रे सुमनोहरे।
विधेर्विधाता भगवान् श्रीकृष्णः परमेश्वरः॥ ७
सप्तभिः पार्षदैर्गोपैः सेवितः श्वेतचामरैः।
कन्दर्पकोटिलीलाभो वनमालाविभूषितः॥ ८
दधार चक्रमतुलं सूर्य्यकोटिसमप्रभम्।
गदां कौमोदकीं शूलमव्यर्थं संनिधाय च।
रथमध्ये महाखड्गं विश्वसंहारकारणम्॥ ९
महारथानाञ्च लक्षे रथानाञ्च त्रिकोटिभिः।
त्रिकोटिभिर्गजेन्द्राणां मल्लानाञ्च त्रिकोटिभिः॥१०
शतकोटिभिरश्वानां चर्म्मिणाञ्च चतुर्गुणैः।
खड्गिनां तत्त्रिगुणैर्द्विगुणैस्तद्धनुष्मताम्॥ ११
एभिः सार्द्धञ्च त्वरितमाययौ शोणितं पुरम्।
परितो वेष्टयामास लङ्कां दाशरथिर्यथा॥ १२
सहस्रतालमानाञ्च ज्वलदग्निशिखोज्ज्वलाम्।
ऊर्द्ध्वे च परिखामेतां दुर्लङ्घ्यामसुरैः सुरैः॥ १३
स्वगगङ्गाम्बुराशीनां समूहैर्वृष्टिभिस्तथा।
पक्षीन्द्रो गरुड़ः साद्यानिर्व्वाणञ्च चकार सः॥१०
मणीन्द्रसारनिर्म्माण-प्राकारनिवहं परम्।
बभञ्ज लक्षमल्लानां बलदेवश्च लाङ्गलैः॥ १५
उद्यानानां त्रिलक्षाणां चकारोत्पाटनं प्रभुः।
प्रविवेश महाद्वारं द्वारपालान् निहत्य च॥ १६
एवं श्रुत्वा महादेवश्चोवाच सुरसंसदि।
पार्व्वतीं भद्रकालीञ्च स्कन्दं गणपतिं तथा॥ १७
अष्टौ च भैरवांश्चैव रुद्रांश्च वीरभद्रकम्।
महाकालं नन्दिनञ्च सर्व्वान् सेनापतीनथ॥ १८
गोलोकनाथो भगवांश्चक्रपाणिः समागतः।
विश्वौघं भङ्क्तुमीशो यः क्षणेन नगरञ्च किम्॥ १९
सर्व्वोपायैश्च सर्व्वे ते बाणरक्षां करोतु च।
बाणो गच्छतु संग्रामं स्तुत्वा लम्बोदरं परम्॥ २०
बाणस्य दक्षिणे स्कन्दः पुरतश्च गणेश्वरः।
वामे च भैरवा रुद्राः स्वयं नन्दी महारथः॥ २१
महाकालो वीरभद्रो ये चान्ये सैनिकास्तथा।
ऊर्द्ध्वे दुर्गा भद्रकाली चोग्रचण्डा च कोट्टवी॥ २२
बाणं रक्ष महाभागे दुर्गे दुर्गतिनाशिनि।
कृष्णस्य भवती शक्तिस्तेन नारायणीति च॥ २३
विष्णुमाये जगन्मातः सर्व्वमङ्गलमङ्गले।
अव्यर्थाच्चक्रशाराच्च रक्ष बाणं सुदर्शनात्॥ २४
बाणः प्रियो मे सर्व्वेभ्यो गणेशात् कार्त्तिकादपि॥
बाणमूर्द्ध्नि करं देहि पादाब्जरजसा सह॥ २५

शिवस्य वचनं श्रुत्वा दुर्गा दुर्गतिनाशिनी।
प्रहस्योवाच मधुरं यथार्थं समयोचितम् ॥ २६
पार्व्वत्युवाच।
मणिरत्नादिकं यद्द्रव्यमुक्ता-माणिक्य-हीरकम्।
सर्व्वस्वं कन्यकाभूषां रत्नभूषणभूषिताम् ॥ २७
रत्नभूषणभूपाव्यमणिरत्नं वरं परम्।
पुरस्कृत्य देहि बाण कृष्णाय परमात्मने।
राज्यं कुरुष्व निर्व्विघ्नं किं युद्धमात्मना सह ॥ २८
यस्मिन् गते गताः प्राणाः स जीवश्चेन्द्रियैः सह।
शक्तिश्चाहं मनो ब्रह्मा स्वयं ज्ञानात्मकः शिवः ॥२९
सद्यः पतति देहश्च शिवं त्यक्त्वा शवो भवेत्।
को वा तिष्ठति संग्रामे चक्रस्य तेजसा शिव ॥ ३०
गात्माकाशो बाणविद्धो युद्धं किं वात्मना सह।
परमात्मा च सर्व्वेषां भक्तानुग्रहविग्रहः ॥ ३१
नित्यः सत्यो हि कृष्णश्च परिपूर्णतमः प्रभुः।
गणेशः कार्त्तिकेयश्च भवानपि तयोः परः।
किञ्चदेषु प्रियो बाणो न हि कृष्णात् परः प्रियः॥३२
वैकुण्ठेऽहं महालक्ष्मीर्गोलोके राधिका स्वयम्।
शिवाहं शिवलोके च ब्रह्मलोके सरस्वती ॥ ३३
अहं निहत्य दैत्यांश्च दक्षकन्या सती पुरा।
त्वन्निन्दया पुरा त्यक्त्वा सा चाहं शैलकन्यका ॥ ३४
रक्तवीजस्य युद्धे च काली च मूर्त्तिभेदतः।
सावित्री वेदमाताऽहं सीता जनककन्यका।
रुक्मिणी द्वारवत्याञ्च भारते भीष्मकन्यका ॥ ३५
श्रीदामशापतो देवाद्वृषभानुसुताऽधुना।
धर्म्मपत्नी च कृष्णस्य मुख्ये वृन्दावने वने ॥ ३६
भगवन्तञ्च सर्व्वज्ञं त्वां शिवञ्च सनातनम्।
किं वाहं कथयामीति कर्त्तव्यं समयोचितम् ॥ ३७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे हर-गौरीसंवादे बाणयुद्धे अष्टा-दशाधिकशततमोऽध्यायः ॥ ११८ ॥

---

## एकोनविंशत्यधिकशततमोऽध्यायः।

नारायण उवाच।
पार्व्वतीवचनं श्रुत्वा गणेशश्च शिवः स्वयम्।
कार्त्तिकेयश्च काली च तां प्रशंसां चकार ह ॥ १
उवाच भगवान् शम्भुर्जगतां मातरं पराम्।
ज्योतिःस्वरूपां परमां मूलप्रकृतिमीश्वरीम् ॥ २
महादेव उवाच।
त्वया यदुक्तं देवेशि सर्व्वं वेदोक्तमीप्सितम्।
अशुक्तामुपहास्यञ्च समरं परमात्मना ॥ ३
बाणो ददातु कन्यां तांभूषां भूषणभूषिताम्।
शामक्लस्यं यशस्यञ्च शुभदं सर्व्वकर्म्मसु ॥ ४
न ददाति यदा बाणो हिरण्यकशिपोः प्रजः।
युद्धे पराङ्मुखो भीतो भविष्यत्ययमक्षरः ॥ ५
बाणो गच्छतु सन्नाही रणशास्त्रविशारदः।
पश्चाच्च गमनं कुर्म्मो वयं साह्लाहिकाः शिवे ॥ ६
उवाच बाणं तां दातुं स च न स्वीचकार ह।
दुर्गा तं बोधयामास न बुबोध च तद्वचः ॥ ७
एतस्मिन्नन्तरे तात्र सभामेव मनोहराम्।
आजगाम महाधर्म्मी बलिश्च वैष्णवाग्रणीः।
रथं रत्नेन्द्रनिर्म्माणं समारुह्य महाबलः ॥ ८
प्रतप्तैः सप्तभिर्दैत्यैः सेवितः श्वेतचामरैः।
दैत्येन्द्राणां सप्तलक्षैरावृतः परमास्त्रवित् ॥ ९
अवरुह्य रथात् तूर्णं गणेशं तं शिवं शिवाम्।
प्रणम्य कार्त्तिकेयञ्च स उवास च संसदि ॥ १०
उत्तस्थुरारात् तं दृष्ट्वा ते सर्व्वे शङ्करं विना।
तमुवाच महादेवः सम्भाष्य प्रियभाषणम्।
भगवांश्चोत्तरं भद्रं प्रदाता सर्व्वसम्पदाम् ॥ ११
महादेव उवाच।
अयं हि परमो लाभो वैष्णवानां समागमः।
तीर्थान्यपि च पूतानि वैष्णवस्पर्शमात्रतः ॥ १२
सर्व्वेषामाश्रमाणाञ्च पूजितो ब्राह्मणः शुचिः।
ततोऽधिकः पूजितोऽपि ब्राह्मणो यदि वैष्णवः ॥१३
न हि पूतञ्च पश्यामि वैष्णवब्राह्मणात् परम्।
स पूतः पवनादेव स पूतश्च हुताशनात् ॥ १४
तीर्थेभ्योऽपि च सर्व्वेभ्यो बिभेति च ततः सुरः।
न हि पापानि तद्देहे वह्नौ शुष्कतृणानि वत् ॥ १५
बलिरुवाच।
कथं स्तौषि जगन्नाथ भृत्यमस्तव्यमीश्वर।
प्रदत्तं परमैश्वर्यं त्वया नार्थ सुदुर्लभम् ॥ १६
अधुना स्थापितो देवात् सर्व्वाधः सुतलेऽपि च।
इन्द्राय दत्तमैश्वर्य्यं मत्तो भक्तात् सुरेश्वर ॥ १७

त्वया वामनरूपेण सर्व्वरूपोऽसि सर्व्वतः।
बाणं बोधय भद्रं च मम प्राणात्मजं परम्।
आत्मना सह युद्धञ्च वेदेष्वपि विगर्हितम्॥ १८
इत्युक्त्वा च शिवं नत्वा दत्त्वा पुत्राय चाशिषम्।
प्रययौ यत्र भगवान् परमात्मा नराकृतिः (क)॥१९
दृष्ट्वा कृष्णं चक्रहस्तं सूर्य्यकोटिसमप्रभम्।
भक्त्या प्रदक्षिणं कृत्वा शिरसा प्रणनाम तम्॥ २०
सामवेदोक्तस्तोत्रेण तुष्टाव परमेश्वरम्।
पुलकाञ्चितसर्व्वाङ्गः साश्रुनेत्रोऽतिविह्वलः॥ २१
ध्यायमानश्च नित्यं यं हृत्पद्मे सुमनोहरम्।
शुक्रेण दत्तं मन्त्रञ्च जप्त्वा चैकादशाक्षरम्॥ २२

बलिरुवाच।

अदित्या प्रार्थनेनैव मात्रा देव्या व्रतेन च।
पुरा वामनरूपेण त्वयाहं वञ्चितः प्रभो॥ २३
सम्पद्रूपा महालक्ष्मीर्दत्ता भक्ताय भक्तितः।
शक्राय मत्तो भक्ताच्च भ्रात्रे पुण्यवते ध्रुवम्॥ २४
अधुना मम पुत्रोऽयं वाणः शङ्करकिङ्करः।
आराच्च रक्षितः सोऽपि तेनैव भक्तबन्धुना॥ २५
परिपुष्टश्च पार्व्वत्या यथा मात्रा स्वसुतस्तथा।
गृहीतवांश्च तत्कन्यां बलेन युवतीं सतीम्॥ २६
समुद्यतश्च तं हन्तुं कार्त्तिकेनापि वारितः।
आगतोऽसि पुनर्हन्तुं पौत्रस्य दमनेऽक्षमः॥ २७
सर्व्वात्मनश्च सर्व्वत्र समभावः श्रुतौ श्रुतः।
करोषि जगतां नाथ कथमेवं व्यतिक्रमम्॥ २८
त्वया च निहतो यो हि तस्य को रक्षिता भुवि।
सुदर्शनस्य तेजो हि सूर्य्यकोटिसमप्रभम्।
केषां सुराणामस्त्रेण तदेव च निवारितम्॥ २९
यथा सुदर्शनञ्चैवमस्त्राणां प्रवरं वरम्।
तथा भवांश्च देवानां सर्व्वेषामीश्वरः परः।
यथा भवांस्तथाप्त्वं ते विधाता वेधसामपि॥ ३०
विष्णुः सत्त्वगुणाधारः शिवः सत्त्वाश्रयस्तथा।
स्वयं विधाता रजसः सृष्टिकर्त्ता पितामहः॥ ३१
कालाग्निरुद्रो भगवान् विश्वसंहारकारकः।
तमसश्चाश्रयः सोऽपि रुद्राणां प्रवरो महान्॥ ३२
स एव शङ्करांशश्चाप्यन्ये रुद्राश्च तत्कलाः।
भवांश्च निर्गुणस्तेषां प्रकृतेश्च परस्तथा॥ ३३
सर्व्वेषां परमात्मा च प्राणा विष्णुस्वरूपिणः।
मानसञ्च स्वयं ब्रह्मा स्वयं ज्ञानात्मकः शिवः॥ ३४
प्रवरा सर्व्वशक्तीनां बुद्धिः प्रकृतिरीश्वरी।
आत्मनः प्रतिबिम्बस्ते जीवः सर्व्वेषु देहिषु॥ ३५
जीवः स्वकर्म्मणां भोगी कर्म्मी साक्षी भवांस्तथा।
सर्व्वे यान्ति त्वयि गते नरदेवे यथानुगाः॥ ३६
सद्यः पतति देहश्च शवोऽस्पृश्यस्त्वया विना।
बुद्धाः सन्तो न जानन्ति वञ्चितास्तव मायया।
त्वां भजन्त्येव ये सन्तो मायामेतां तरन्ति ते॥ ३७
त्रिगुणा प्रकृतिर्दुर्गा वैष्णवी च सनातनी।
परा नारायणीशानी तव माया दुरत्यया॥ ३८
त्वदंशाः प्रतिविश्वेषु ब्रह्म-विष्णु-शिवात्मकाः।
सर्व्वेषामपि विश्वेषामाश्रयो यो महान् विराट्।
स शेते च जले योगाद्विश्वेषां गोलके तथा॥ ३९
स एव वासुभगवांस्तस्य देवो भवान् परः।
वासुदेव इति ख्यातः पुराविद्भिः प्रकीर्त्तितः॥ ४०
त्वमेव कलया सूर्य्यस्त्वमेव कलया शशी।
कलया च हुताशश्च कलया पवनः स्वयम्॥ ४१
कलया वरुणश्चैव कुवेरश्च यमस्तथा।
कलया च महेन्द्रश्च कलया धर्म्म एव च॥ ४२
त्वमेव कलया शेष ईशानो निरृतिस्तथा।
मुनयो मनवश्चैव ग्रहाश्च फलदायकाः।
कलाकलायाश्चांशेन सर्व्वे जीवाश्चराचराः॥ ४३
त्वं ब्रह्म परमं ज्योतिर्ध्यायन्ते योगिनः सदा।
त्वामाद्रियन्ते भक्तास्ते ध्यायन्ते च तदन्तरे॥ ४४
नवीनजलदश्यामं पीतकौषयवाससम्।
ईषद्धास्यप्रसन्नास्यं भक्तेशं भक्तवत्सलम्॥ ४५
चन्दनोक्षितसर्व्वाङ्गं द्विभुजं मुरलीधरम्।
मयूरपुच्छचूड़ञ्च मालतीमाल्यभूषितम्॥ ४६
अमूल्यरत्ननिर्म्माण-केयूरवलयान्वितम्।
मणिकुण्डलयुग्मेन गण्डस्थलविराजितम्॥ ४७
रत्नसाराङ्गुरीयञ्च क्वणन्मञ्जीररञ्जितम्।
कोटिकन्दर्पलीलाभं शरत्कमललोचनम्॥ ४८
शरत्पूर्णेन्दुनिन्द्यास्यं चन्द्रकोटिसमप्रभम्।
वीक्षितं सस्मिताभिश्च गोपीनां कोटिकोटिभिः॥४९
वयस्यैः पार्षदैर्गोपैः सेवितं श्वेतचामरैः।
गोपबालकवेशञ्च राधावक्षःस्थलस्थितम्॥ ५०

(क) निराकृतिरिति च पाठः।

ध्यानासाध्यं दुराराध्यं ब्रह्मेश-शेषवन्दितम्।
सिद्धेन्द्रैश्च मुनीन्द्रैश्च योगीन्द्रैः प्रणतैः स्तुतम्॥ ५१
वेदानिर्व्वचनीयञ्च परं स्वेच्छामयं विभुम्।
स्थूलात् स्थूलतमं रूपं सूक्ष्मात् सूक्ष्मतमं परम्॥५२
सत्यं नित्यं प्रशस्तञ्च प्रकृतेः परमीश्वरम्।
निर्लिप्तञ्च निरीहञ्च भगवन्तं सनातनम्॥ ५३
एवं ध्यात्वा च ते पूताः स्निग्धदूर्व्वाचितं जलम्।
पाद्यमर्घ्यान्वितं पादपद्मे च दातुमुत्सुकाः॥ ५४
वेदाः स्तोतुमशक्तास्त्वामशक्ता या सरस्वती।
शेषः स्तोतुमशक्तश्च स्वयम्भुः शम्भुरीश्वरम्॥ ५५
गणेशश्च दिनेशश्च महेन्द्रश्चन्द्र एव च।
स्तोतुं नालं धनेशश्च किमन्ये जड़बुद्धयः॥ ५६
गुणातीतमनूहञ्च किं स्तौमि निर्गुणं परम्।
न पण्डितोऽहमसुरो न शूरः चन्तुमर्हति॥ ५७
बलेस्तु स्तवनं श्रुत्वा तमुवाच जगत्प्रभुः।
परिपूर्णतमः श्रीमान् भक्तश्च भक्तवत्सलः॥ ५८

श्रीभगवानुवाच।

मा भैर्वत्स गृहं गच्छ सुतलं रचितं मया।
मद्वरेण प्रसादेन लत्पुत्रोऽप्यजरामरः॥ ५९
दर्पहानिं करिष्यामि तस्य मूर्खस्य दर्पिणः।
प्रह्लादाय वरो दत्तो भक्ताय च तपस्विने॥ ६०
मयाऽवध्यश्च लद्वंशश्चेति प्रीतेन चेतसा।
तव पुत्राय दास्यामि ज्ञानं मृत्युञ्जयं परम्॥ ६१
त्वया कृतमिदं स्तोत्रं सामवेदोक्तमीप्सितम्।
पुरा सनत्कुमाराय प्रदत्तं ब्रह्मणा तथा॥ ६२
सिद्धाश्रमे पुण्यतीर्थे प्रशस्ते सूर्य्यपर्व्वणि।
गौतमाय प्रदत्तञ्च स्वर्गमन्दाकिनीतटे॥ ६३
शङ्करेण च शिष्याय भक्ताय च दयालुना।
ब्रह्मणे च मया दत्तं शिवाय विरजातटे॥ ६४
भृगवे च पुरा दत्तं कुमारेण च धीमता।
तच्च दास्यामि वाणाय वाणस्तोष्यत्यनेन माम्॥६५
इदं स्तोत्रं महापुण्यमुपदिश्य गुरोर्मुखात्।
व्रतस्य पूजितस्यापि वस्त्रभूषणचन्दनैः॥ ६६
सुस्नातो यः पठेन्नित्यं पूजाकाले च भक्तितः।
कोटिजन्मार्ज्जितात् पापान्मुच्यते नात्र संशयः॥ ६७
विपदां खण्डनं स्तोत्रं कारणं सर्व्वसम्पदाम्।
वारणं दुःखशोकानां भवाब्धिघोरतारणम्॥ ६८
खण्डनं गर्भवासानां जरामृत्युहरं परम्।
बन्धनानाञ्च रोगाणां खण्डनं भक्तमण्डनम्॥ ६९
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः।
व्रती व्रतेषु सर्व्वेषु तपस्वी च तपःसु च॥ ७०
स सत्यं सर्व्वदानानां फलञ्च लभते ध्रुवम्।
लक्षधा स्तोत्रपाठेन स्तोत्रसिद्धिर्भवेन्नृणाम्॥ ७१
सर्व्वसिद्धिञ्च लभते सिद्धस्तोत्रो भवेद्यदि।
इह लोके देवतुल्योऽप्यन्ते याति हरेः पदम्॥ ७२
इत्येवमुक्त्वा कृष्णश्च तत्र तस्थौ जगत्पतिः।
बलिश्च नाथं नत्वा च प्रफुल्लः स्वगृहं ययौ॥ ७३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारद-संवादे वाणयुद्धे बलिकृतस्तोत्रं नामैकोनविंशत्यधिकशततमोऽध्यायः॥११९॥

---

## विंशत्यधिकशततमोऽध्यायः।

नारायण उवाच।

अथ कृष्णश्च भगवानुद्धवेन बलेन च।
दूतं प्रस्थापयामास विधाय मन्त्रणां शुभाम्॥ १
शिवो गणपतिर्यत्र दुर्गा दुर्गतिनाशिनी।
कार्त्तिकेयो भद्रकाली चोग्रचण्डा च कोट्टवी॥ २
आगत्य नत्वा दूतश्च गणेशञ्च शिवं शिवाम्।
मानवः सोऽपि पूज्यांश्च समुवाच यथोचितम्॥ ३

दूत उवाच।

वाणमाह्वयते कृष्णः संग्रामार्थं महेश्वर।
अथानिरुद्धमूषाञ्च गृहीत्वा शरणं व्रज॥ ४
रणे निमन्त्रितो यो हि न याति भयकातरः।
परत्र नरकं याति सप्तभिः पितृभिः सह॥ ५
दूतस्य वचनं श्रुत्वा सभामध्ये यथोचितम्।
उवाच पार्व्वती देवी स्वयं शङ्करसन्निधौ॥ ६

पार्व्वत्युवाच।

गच्छ वाण महाभाग गृहीत्वा वरकन्यकाम्।
सर्व्वस्वं यौतुकं दत्त्वा श्रीकृष्णं शरणं व्रज॥ ७
सर्व्वेशामीश्वरं वीजं दातारं सर्व्वसम्पदाम्।
वरं वरेण्यं शरणं कृपालुं भक्तवत्सलम्॥ ८
पार्व्वतीवचनं श्रुत्वा तामूचुस्ते सुरेश्वराः।

प्रमथेशः सभामध्ये धन्यासीत्येवमेव च ॥ ९
कोपाविष्टश्च बाणोऽयमुत्तस्थौ सहसासुरः।
सान्नाहिकी धनुष्पाणिः प्रणम्य शङ्करं ययौ ॥ १०
सर्व्वैर्निषिध्यमानश्च कम्पितो रक्तलोचनः।
सान्नाहिकाश्च दैत्यानां त्रिकोट्यश्च महाबलाः ॥ ११
कुष्माण्डः कूपकर्णश्च निकुम्भः कुम्भ एव च।
सेनापतीश्वराश्चेति ययुः सान्नाहिकास्तथा ॥ १२
उन्मत्तभैरवश्चैव संहारभैरवस्तथा।
असिताङ्गो भैरवश्च रुरुभैरव एव च ॥ १३
महाभैरवसंज्ञश्च कालभैरवसंज्ञकः।
प्रचण्डभैरवश्चैव क्रोधभैरव एव च ॥ १४
प्रययुः शक्तिभिः सार्द्धं सर्व्वे सान्नाहिकाश्च ते।
कालाग्निरुद्रो भगवान् रुद्रैः सान्नाहिको ययौ ॥१५
उग्रचण्डा प्रचण्डा च चण्डिका चण्डनायिका।
चण्डेश्वरी च चामुण्डा चण्डी चण्डकपालिका।
अष्टौ च नायिकाः सर्व्वाः प्रययुः खर्परान्विताः ॥१६
कोट्टवी रत्नयानस्था शोणितग्रामदेवता।
प्रययौ सा प्रफुल्लास्या खड्गखर्परधारिणी ॥ १७
इन्द्राणी वैष्णवी शान्ता ब्रह्माणी ब्रह्मवादिनी।
कौमारी नारसिंही च वाराही विकटाकृती ॥ १८
माहेश्वरी महामाया भैरवी भीमरूपिणी।
अष्टौ च शक्तयः सर्व्वा रथस्थाः प्रययुर्मुदा ॥ १९
रत्नेन्द्रसारयानस्था प्रययौ भद्रकालिका।
रक्तवर्णत्रिनयना जिह्वाललनभीषणा।
शूलशक्तिगदाहस्ता खड्गखर्परधारिणी ॥ २०
प्रययौ शूलहस्तश्च वृषभस्थो महेश्वरः।
स्कन्दश्च रत्नयानस्थः शस्त्रपाणिधनुर्द्धरः।
एवञ्च प्रययुः सर्व्वे गणेशं पार्व्वतीं विना ॥ २१
एभिर्युक्तं महादेवं दृष्ट्वा च भद्रकालिकाम्।
प्रचक्रे चक्रपाणिश्च सम्भाषाञ्च यथोचिताम् ॥ २२
बाणः शङ्खध्वनिं कृत्वा प्रणम्य पार्व्वतीश्वरम्।
धनुर्दधार सगुणं दिव्यास्त्रेण नियोजितम् ॥ २३
भूमौ समुद्यतं बाणं दृष्ट्वा च सात्यकीश्वरः।
निषिध्यमानस्तैः सर्व्वैः सन्नाही प्रययौ मुदा ॥ २४
बाणश्चिक्षेप दिव्यास्त्रं मच्छन्नं नाम नारद।
अव्यर्थं ग्रीष्ममध्याह्न मार्त्तण्डाभं सुतीक्ष्णकम् ॥२५
दृष्ट्वास्त्रं सात्यकिः साक्षात् किञ्चिन्नम्रो बभूव सः।

वैमान् दग्ध्वा च प्रययौ नभोमध्यं सुदारुणम् ॥२६
वह्निं चिक्षेप बाणश्च सात्यकिर्वारुणेन च।
प्रज्वलन्तं तालमानं निर्व्वाणञ्च चकार सः ॥ २७
चिक्षेप वारुणं बाणः प्रचण्डो घोरमुज्ज्वलम्।
चिच्छेद सात्यकिश्चैव पार्ज्जन्येनावलीलया ॥२८
नारायणास्त्रं चिक्षेप बाणश्च रणमूर्द्धनि।
सात्यकिर्दण्डवद्भूमौ पपातार्ज्जुनशिक्षया ॥ २९
माहेश्वरं प्रचिक्षेप बाणः शस्त्रविदां वरः।
सात्यकिर्वैष्णवास्त्रेण प्रचिच्छेदावलीलया ॥ ३०
ब्रह्मास्त्रञ्चापि चिक्षेप बाणश्च रणमूर्द्धनि।
क्षणं चकार निर्व्वाणं ब्रह्मास्त्रेण च सात्यकिः ॥३१
नागास्त्रञ्च प्रचिक्षेप बाणो बाणविशारदः।
सात्यकिर्गारुडेनैव संजहार क्षणेन च ॥ ३२
जग्राह शूलमव्यर्थं शङ्करस्य सुदारुणम्।
तुष्टाव सात्यकिर्दुर्गां गले माल्यं बभूव ह ॥ ३३
जग्राह धनुषा बाणो बाणं पाशुपतं तथा।
बाणं सबाणं जृम्भञ्च सात्यकिश्च चकार ह ॥ ३४
बाणं तं जृम्भितं दृष्ट्वा कार्त्तिकेयो महाबलः।
अर्द्धचन्द्रञ्च चिक्षेप कामश्चिच्छेद लीलया ॥ ३५
गदां चिक्षेप स्कन्दश्च शतसूर्य्यसमप्रभाम्।
वैष्णवास्त्रेण कामश्च शतखण्डं चकार सः ॥ ३६
स्कन्दः शक्तिञ्च चिक्षेप प्रलयाग्निसमप्रभाम्।
कामो नारायणास्त्रेण निर्व्वाणञ्च चकार ताम् ॥३७
ब्रह्मास्त्रञ्च प्रचिक्षेप कार्त्तिको रणमूर्द्धनि।
ब्रह्मास्त्रेणापि कामश्च निर्व्वाणञ्च चकार सः ॥३८
नारायणास्त्रं स्कन्दश्च चिक्षेप त्वरया तु सः।
पपात दण्डवद्भूमौ प्रद्युम्नः कृष्णशिक्षया ॥ ३९
जग्राह कार्त्तिकः कोपाद्दिव्यं पाशुपतं मुदा।
निद्रास्त्रेणापि मदनो निद्रितञ्च चकार तम् ॥ ४०
कार्त्तिकं निद्रितं दृष्ट्वा बाणञ्च जृम्भितं तथा।
कोपात् कामञ्च सरथं जग्रास भद्रकालिका ॥ ४१
क्रोडे कृत्वा च बाणञ्च स्कन्दञ्च जगतां प्रसूः।
रणस्थलाच्च प्रययौ यत्रैव पार्व्वती सती।
कार्त्तिकं बोधयामास बाणं सुस्थं चकार सा ॥ ४२
सहसा सरथः कामो नासारन्ध्रेण वर्त्मना।
बहिर्बभूव सन्त्रस्तो प्रययौ च रणस्थलम् ॥ ४३
दृष्ट्वा कामञ्च सरथं जहसुर्यादवास्तथा।

सर्व्वे शैवाश्च वित्रेसुः शुष्ककण्ठा भयाकुलाः ॥ ४४
अथ बाणः पुनः क्रुद्धो रथमारुह्य कोपतः।
कार्त्तिकेयश्च भगवान् युद्धाय पुनरागतः ॥ ४५
बाणः पञ्च शरांश्चैव चिक्षेप रणमूर्द्धनि।
अर्द्धचन्द्रेण चिच्छेद बलदेवो महाबलः ॥ ४६
रथं बभञ्ज बाणस्य लाङ्गलेन च लाङ्गली।
जघान सूतमश्वांश्च मुषलेनावलीलया ॥ ४७
छित्तुमुद्यमकुर्व्वन्तं हलिनञ्च महाबलम्।
कालाग्निरुद्रो भगवान् वारयामास लीलया ॥ ४८
रथं कालाग्निरुद्रस्य बभञ्ज लाङ्गली रुषा।
हलेन सूतमश्वांश्च जघान रणमूर्द्धनि ॥ ४९
कालाग्निरुद्रः कोपेन चिक्षेप ज्वरमुल्बणम्।
बभूवुर्यादवाः सर्व्वे ज्वराक्रान्ता हरिं विना ॥ ५०
तं दृष्ट्वा भगवान् कृष्णःससर्ज्ज वैष्णवं ज्वरम्।
तं चिक्षेप ज्वरं हन्तुं माहेशं रणमूर्द्धनि ॥ ५१
बभूव ज्वरयोर्युद्धं मुहूर्त्तमतिदारुणम्।
वैष्णवज्वरनिष्क्रान्तो रणमूर्द्ध्नि पपात सः।
परं बभूव निश्चेष्टस्तुष्टाव माधवं पुनः ॥ ५२

ज्वर उवाच।

प्राणान् रक्ष जगन्नाथ भक्तानुग्रहविग्रह।
त्वमात्मा पुरुषः पूर्णः सर्व्वत्र समता तव ॥ ५३
ज्वरस्य वचनं श्रुत्वा संजहार स्वकं ज्वरम्।
माहेश्वरो ज्वरो भीतो रणादेव हि निर्ययौ ॥ ५४
बाणश्च पुनरागत्य बाणानाञ्च सहस्रकम्।
चिक्षेप मन्त्रपूतञ्च प्रलयाग्निशिखोपमम्।
फाल्गुनः शरजालेन वारयामास लीलया ॥ ५५
चिक्षेप शक्तिं बाणश्च तीक्ष्णां सूर्य्यसमप्रभाम्।
चिच्छेद लीलया ताञ्च सव्यसाची महाबलः ॥ ५६
स जग्राह पाशुपतं शतसूर्य्यसमप्रभम्।
अव्यर्थमतिघोरञ्च विश्वसंहारकारणम् ॥ ५७
तं दृष्ट्वा चक्रपाणिश्च चक्रं चिक्षेप दारुणम्।
हस्तानाञ्च सहस्रञ्च सपाशुपतमुल्बणम्।
चिच्छेद रथमध्ये च पपाताचलसङ्कवत् ॥ ५८
अस्त्रं पाशुपतञ्चैव ययौ पशुपतेः करम्।
अव्यर्थं दारुणं लोके प्रलयाग्निशिखोपमम् ॥ ५९
बाणरक्तसमूहेन बभूव च महाह्रदः।
बाणः पपात निश्चेष्टो व्यथितो हतचेतनः ॥ ६०
तत्राजगाम भगवान् महादेवो जगद्गुरुः।
क्रोडे गृहीत्वा बाणन्तु रोदनं कुरुते ... 

Correction: line reads:
क्रोडोद्गत्य मोहेन वाणं कृत्वा स्ववक्षसि ॥ ६१
शिवाश्रुपतनेनैव सम्बभूव सरोवरः।
चेतनं कारयामास करुणासागरः प्रभुः ॥ ६२
बाणं गृहीत्वा प्रययौ यत्र देवो जनार्द्दनः।
पादपद्मार्च्चिते पादपद्मे बाणं समर्प्य च ॥ ६३
तुष्टाव जगतां नाथं भक्तेशं चन्द्रशेखरः।
बलिना च स्तुतं येन वेदोक्तेन च तेन च ॥ ६४
हरिर्मृत्युञ्जयं ज्ञानं ददौ बाणाय धीमते।
करपद्मं ददौ गात्रे तं चकाराजरामरम्।
बाणः स्तोत्रेण तुष्टाव भक्त्या बलिकृतेन च ॥ ६५
वरं कन्यां समानीय रत्नभूषणभूषिताम्।
प्रददौ हरये भक्त्या तत्रैव देवसंसदि ॥ ६६
गजेन्द्राणां पञ्चलक्षमश्वानान्तु चतुर्गुणम्।
दासीनाञ्च सहस्रञ्च रत्नभूषणभूषितम् ॥ ६७
सहस्रं कामधेनूनां वत्सयुक्ताञ्च सर्व्वदम्।
माणिक्यानाञ्च मुक्तानां रत्नानां शतलक्षकम् ॥ ६८
मणीन्द्राणां हीरकाणां शतलक्षं मनोहरम्।
जलभोजनपात्राणि सुवर्णनिर्म्मितानि च ॥ ६९
सहस्राणि ददौ तस्मै भक्तिनम्रात्मकन्धरः।
वराणि सूक्ष्मवस्त्राणि वह्निशुद्धांशुकानि च ॥ ७०
ददौ सर्व्वाणि बाणश्च स्वभक्त्या शङ्कराज्ञया।
ताम्बूलानां मधूनाञ्च पूर्णपात्राणि नारद।
सहस्राणि ददौ भक्त्या वराणि विविधानि च ॥ ७१
कन्यां समर्पयामास पादपद्मे हरेरपि।
रुरोदोच्चैः स्वभक्त्या च परीहारं चकार सः ॥ ७२
कृष्णस्तस्मै वरं दत्त्वा वेदोक्तञ्च शुभाशिषम्।
शङ्करानुमतेनैव प्रययौ द्वारकां पुरीम् ॥ ७३
गत्वा कन्यां नवोढां तां बाणस्यापि महात्मनः।
रुक्मिण्यै प्रददौ शीघ्रं देवक्यै च हरिः स्वयम् ॥ ७४
महोत्सवं मङ्गलञ्च कारयामास यत्नतः।
ब्राह्मणं भोजयामास ब्राह्मणेभ्यो धनं ददौ ॥ ७५

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्म-खण्डे नारायण-नारदसंवादे
बाणयुद्धं नाम विंशत्यधिक-
शततमोऽध्यायः॥१२०॥

## एकविंशत्यधिकशततमोऽध्यायः।

नारायण उवाच।

अथ कृष्णः सुधर्म्मायां निवसन् सगणस्तथा।
तत्राजगाम विप्रश्च प्रज्वलन् ब्रह्मतेजसा॥ १
आगत्य दृष्ट्वा तुष्टाव भक्त्या च पुरुषोत्तमम्।
उवाच मधुरं शान्तो भीतो विनयपूर्व्वकम्॥ २

ब्राह्मण उवाच।

शृगालो वासुदेवश्च राजेशो मण्डलेश्वरः।
त्वामुवाच स यद्वाक्यं सावधानं निशामय॥ ३

शृगाल उवाच।

वैकुण्ठे वासुदेवोऽहं देवेशश्च चतुर्भुजः।
लक्ष्मीपतिश्च जगतां धाता धातुश्च पालकः॥ ४
ब्रह्मणा प्रार्थितोऽहञ्च भारावतारणाय च।
भुवो भारतवर्षे च तदर्थं गमनं मम॥ ५
वसुदेवसुतः कृष्णः क्षत्रियश्चाप्यहङ्कृतः।
आत्मानं वक्ति विष्णुञ्च मायावी च प्रतारकः॥ ६
जनं जनेन निर्ज्जित्य दुर्ब्बलं बलिना सह।
योधयित्वा महाधूर्त्तो घातयामास भूपतीन्॥ ७
दुर्य्योधनं जरासन्धं भूपमन्यञ्च दुर्ब्बलम्।
भीमेन घातयामास बलिना तेन भूतले॥ ८
द्रोणं भीष्मञ्च कर्णञ्च यं यमन्यञ्च भूतले।
बलीयसार्ज्जुनेनैव घातयामास मायया॥ ९
यं यमन्यं दुर्ब्बलञ्च प्रसिद्धमप्रसिद्धकम्।
प्रसिद्धेन बलवता घातयामास मायया॥ १०
शिशुपालं दन्तवक्रं कंसञ्च चिररोगिणम्।
भगदत्तं नरकञ्चैव दुर्ब्बलं नरकं मुरम्॥ ११
स्वयं जघान सङ्केतान्छलेन सहसा वत।
न धर्म्मयुद्धे कपटी स च बालादधार्म्मिकः॥ १२
जघान पूतनां कुब्जां स्त्रीघाती वस्त्रहेतुना।
जघान रजकं शिष्टमशिष्टश्च प्रतारकः॥ १३
हिरण्यकशिपुं दैत्यं हिरण्याक्षं महाबलम्।
मधुञ्च कटभञ्चैव हलाहं स्रष्टिरक्षकः॥ १४
अहमेव स्वयं ब्रह्मा अहमेव स्वयं शिवः।
अहं विष्णुश्च जगतां पाता दुष्टापहारकः॥
अंशेन कलया सर्व्वे मनवो मुनयस्तथा॥ १५
स्वयं नारायणोऽहञ्च निर्गुणः प्रकृतेः परः।
लज्जया कृपया चैव मित्रबुद्ध्या क्षमा कृता॥ १६
यद्गतं तद्गतं भद्रं युद्धं कुरु मया सह।
शृणोमि दूतद्वारेण क्षत्रीवोचैरहङ्कृतम्॥ १७
उचितं दमनं तस्याप्युच्छ्रितानां निपातनम्।
राज्ञाञ्च परमो धर्म्मोऽप्यहंशास्ता तवाधुना॥ १८
शङ्खं चक्रं गदां पद्मं गृहीत्वा च चतुर्भुजः।
द्वारकां तां गमिष्यामि युद्धाय सगणः स्वयम्॥ १९
युद्धं कुरु यदीच्छास्ति मा माञ्च शरणं व्रज।
यदि नायास्यसि मम शरणं शरणागतः।
भस्मीभूतां करिष्यामि द्वारकाञ्च क्षणेन च॥ २०
सबलञ्च सपुत्रं त्वां सगणञ्च सबान्धवम्।
क्षणेन हन्मि चैकोऽहमसहायोऽवलीलया॥ २१
तपस्विनञ्च रुद्रंञ्च जित्वा युद्धे च शङ्करम्।
शक्रं भगाङ्गं जित्वा च रोगिणं ब्रह्मशापतः॥ २२
मत्तोऽसि वीरमात्मानं मन्यसीश्वरमेव च।
स्त्रीजितोऽसि वृथार्थञ्च पारिजातस्य हेतुना॥ २३
लम्पटो योनिलुब्धश्च राधाधीनश्च गोकुले।
अधुना किङ्करसमः सत्यादीनाञ्च योषिताम्॥ २४
इत्येवमुक्त्वा विप्रश्च तूष्णीम्भूय स्थितो मुने।
श्रीकृष्णः सगणः श्रुत्वा भृशमुच्चैर्जहास सः॥ २५
भोजयित्वा च सम्पूज्य ब्राह्मणञ्च चतुर्व्विधम्।
निनाय रजनीं दुःखाद्दह्यमानरुज्ज्वरात्॥ २६
प्रभाते रथमारुह्य सगणः सत्वरं मुदा।
लीलामात्रेण प्रययौ शृगालो नृपतिर्यथा॥ २७
श्रुत्वा शृगालो वार्त्तां तां कृत्रिमश्च चतुर्भुजः।
आजगाम हरेः स्थानं युद्धाय सगणः स्वयम्॥ २८
कृष्णश्चक्रे च सम्भाषां मित्रबुद्ध्या च लौकिकीम्।
आश्लेषं मधुरालापं स्निग्धनेत्रश्च सस्मितः॥ २९
राजा निमन्त्रणं चक्रे कृष्णो न स्वीचकार तत्।
उवाच कृष्णं भीतश्च त्यक्तदम्भश्च दर्शनात्॥ ३०

शृगाल उवाच।

चक्रेण मच्छिरश्छित्वा सुशीघ्रं द्वारकां व्रज।
पापः पततु देहोऽयमखिलेश्वर मे तथा॥ ३१
अहं सुभद्रो द्वारी ते जयश्च विजयो यथा।
सर्व्वं जानासि सर्व्वज्ञ मा विलम्बं कुरु प्रभो॥ ३२
लक्ष्मीशापेन दुष्टोऽहं कालः पूर्णो बभूव मे।
शतवर्षेण शापान्तो यास्यामि भुवनं तव॥ ३३

श्रीकृष्ण उवाच।

युद्धं मां मित्र प्रहर पश्चाद्युद्धं करोम्यहम्।
सर्व्वं जानामि वैकुण्ठं गच्छ वत्स यथासुखम्॥ ३४
शृगालो द्रुम वाणांश्च चिक्षेप माधवं प्रति।
ते प्रणम्य ययुः शीघ्रमाकाशं कालरूपिणः॥ ३५
गदां चिक्षेप राजा स प्रलयाग्निशिखोपमाम्।
कृष्णाङ्गस्पर्शमात्रेण बभञ्ज सा यथा तथा॥ ३६
शूलं चिक्षेप मुषलं शक्तिञ्च परशुं तथा।
कृष्णाङ्गस्पर्शमात्रेण बभञ्ज च क्षणेन च॥ ३७
धनुश्चिक्षेप खड्गञ्च कालरूपं सुदारुणम्।
कृष्णाङ्गस्पर्शमात्रेण बभञ्ज च क्षणेन च॥ ३८
दृष्ट्वा निरस्त्रं राजानमित्युवाच कृपानिधिः।
गृहं गत्वा सुतीक्ष्णञ्च मित्रास्त्रमानयेति च॥ ३९

शृगाल उवाच।

आत्मा त्वं सर्व्वविदश्च किं युद्धमात्मना सह।
मामुद्धर भवाब्धेश्च लभेयोद्धारकारणम्॥ ४०
भवाब्धिविषयं नाथ विषमञ्च विषाधिकम्।
छिन्धि निगड़मायां मे मोहजालं स्वकर्म्मणः॥ ४१
कर्म्मणामीश्वरस्त्वञ्च विधाता धातुरेव च।
दाता शुभफलानाञ्च प्रदाता सर्व्वसम्पदाम्॥ ४२
कारणं प्राक्तनानाञ्च तेषाञ्च खण्डने क्षमः।
यामीत्यहञ्च वैकुण्ठं तवैव द्वारपमम्।
त्यक्त्वा च नश्वरं देहं प्राकृतं पाञ्चभौतिकम्॥ ४३
मित्रस्य स्तवनं श्रुत्वा वचनञ्च सुधोपमम्।
करोद् समरे तत्र कृपया च कृपानिधिः॥ ४४
बभूव तत्र सहसा कृष्णनेत्राश्रुविन्दुना।
दिव्यं विन्दुसरो नाम तीर्थानां प्रवरं परम्॥ ४५
तत्तोयस्पर्शमात्रेण जीवन्मुक्तो भवेन्नरः।
सप्तजन्मार्ज्जितात् पापान्मुच्यते नात्र संशयः॥ ४६

श्रीभगवानुवाच।

कथमेतादृशी बुद्धिर्मित्र ते निर्म्मलं मनः।
दूतद्वारा कथं श्रुत्वा निष्ठुरं दारुणं वचः॥ ४७

शृगाल उवाच।

एवमुक्तो मया त्वञ्च तेन क्रोधादिहागतः।
अन्यथा दुर्लभं नाथ स्वप्नेऽपि तव दर्शनम्॥ ४८
एतस्मिन्नन्तरे योगाद्देहं त्यक्त्वा च प्राकृतम्।
दृष्ट्वा कृष्णञ्च यानेन वैकुण्ठं प्रययौ मुदा॥ ४९
सप्ततालप्रमाणञ्च ज्योतिस्तस्य महोज्ज्वलम्।
पाद्मपद्मार्च्चितं पाद-पद्मं नत्वा जगाम तत्॥ ५०
श्रीकृष्णः सगणः शीघ्रं दृष्ट्वा च परमाद्भुतम्।
प्रफुल्लवदनः श्रीमान् द्वारकाभिमुखं ययौ॥ ५१
गत्वा च द्वारकां कृष्णो नत्वा च पितरं प्रसूम्।
गत्वा च रुक्मिणीगेहं पुष्पचन्दनवासितम्॥ ५२
पुष्पतल्पे च नत्वा च स च रेमे तया सह।
मूर्च्छां सम्प्राप भैष्मी च कृष्णं कृत्वा स्ववक्षसि॥५३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे शृगालमोक्षणं नामैक-विंशत्यधिकशततमोऽध्यायः॥१२१॥

---

## द्वाविंशत्यधिकशततमोऽध्यायः।

नारद उवाच।

सर्व्वासां रमणीनाञ्च कृष्णेन परमात्मना।
समुद्वाहश्च कथितस्त्वया भगवता मुदा॥ १
स्यमन्तकस्य च मणेरुपाख्यानमभीप्सितम्।
तन्न श्रुतं महाभाग तन्मां व्याख्यातुमर्हसि॥ २

श्रीभगवानुवाच।

भाद्रशुक्लचतुर्थ्याञ्च तारकां हृतवान् शशी।
तां तत्याज स कृष्णायां गुरुस्ताञ्च गृहीतवान्॥ ३
गुरुणा भर्त्सिता तारा सगर्भा लज्जिता सती।
शशाप लज्जया कोपाच्चन्द्रं कामातुरं पुरा॥ ४

तारकोवाच।

भव शापकलङ्की त्वं यस्त्वां पश्यति दैवभृत्।
त्वामेव दृष्ट्वा पापी च स कलङ्की भविष्यति॥ ५
इति श्रुत्वा च चन्द्रश्च नारायणसरोवरे।
नारायणतपस्तप्त्वा मुमोच कृतपातकात्॥ ६
तपःक्लिष्टञ्च तं दृष्ट्वा भगवान् पुरुषोत्तमः।
तमुवाच महाभीतं कृपया च कृपानिधिः॥ ७

श्रीभगवानुवाच।

मुक्तो भव कलङ्की त्वं सर्व्वकालं कलानिधे।
शापस्त्वं तारकाया भाद्रे मासि सितासिते॥ ८
चतुर्थ्यामुदितं चन्द्रं यस्तु पश्यति कामतः।
तं याति त्वत्कलङ्कश्च स कलङ्की भविष्यति॥ ९
हरिणा दीयते तालो भाद्रे मासि सितासिते।

चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥ १०
स्वयं दृष्ट्वा स्ववाक्यञ्च पालनं कर्त्तुमर्हति।
भाद्रे चन्द्रं चतुर्थ्यान्तु स कलङ्की बभूव ह ॥ ११
कलङ्की येन रूपेण तद्वक्ष्यामि निशामय।
स मुमोच कलङ्काच्च लोकशिक्षार्थमीश्वरः ॥ १२
सत्राजितः सूर्य्यभक्तस्तपस्तप्त्वा च पुष्करे।
स्यमन्तकं मणिश्रेष्ठं सम्प्राप भास्करादपि ॥ १३
अष्टौ भारान् सुवर्णानां प्रसूते नित्यमेव च।
विष्णोर्मणावधिष्ठानं महापूते च पुण्यदे ॥ १४
सत्राजितः सत्यभामां दत्त्वा कृष्णाय भक्तितः।
यौतुकार्थं मणिं दातुमुद्यते महते महान् ॥ १५
तं निषिध्य प्रसेनश्च दुर्म्मतिः कालपीड़ितः।
मणिं गृहीत्वा प्रययौ पुण्यां वाराणसीं पुरीम् ॥१६
तं निहत्य पथि वने सिंहस्तु स्वबलेन च।
मणिं जग्राह रुचिरं सूत्रबद्धं गले ददौ ॥ १७
कलिङ्गराजपुत्रश्च ब्रह्मशापात् सुदारुणात्।
विप्रो नाम्युत्थितस्तेन पशुयोनिं जगाम सः ॥ १८
निहत्य सिंहं गहने भल्लुको जाम्बवान् बली।
मणिं गृहीत्वा प्रययौ स्वपुरं रत्ननिर्म्मितम् ॥ १९
ऊचुः सर्व्वे द्वारकायां मणिं जग्राह केशवः।
तस्य बुद्धिं न जानीमः केनोपायेन वेत्ति च ॥ २०
इति श्रुत्वा च भगवान् कलङ्कक्लान्तनाय च।
प्रययौ काननं घोरं चौरचिह्नेन वर्त्मना ॥ २१
मृतं प्रसेनं दृष्ट्वा च दुःखी सिंहं ददर्श सः।
मणिशून्यं हयं दृष्ट्वा विषसाद च माधवः ॥ २२
सर्व्वं ज्ञात्वा च सर्व्वज्ञो भल्लूकभवनं ययौ।
रुदन्तं बालकं तत्र धात्रीक्रोड़े ददर्श सः ॥ २३
बालकं बोधयामास धात्री च करुणान्विता।
मणिं गृहाण बालेति तव ह्येष स्यमन्तकः ॥ २४
सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥ २५
इति धात्र्युक्तसुश्लोकं यश्च स्नात्वा जलं पिबेत्।
दैवदृष्टनष्टचन्द्र-दोषादेव प्रमुच्यते ॥ २६
कामतो यदि पश्यन्ति दाम्भिका वेदनिन्दकाः।
कलङ्किनो भवन्त्येवमित्याह कमलोद्भवः ॥ २७
कृष्णो धात्रीवचः श्रुत्वा मणिं जग्राह बालकात्।
धात्री गत्वा च भल्लूकं कथयामास कोपतः ॥ २८
जाम्बवांश्च समागत्य तुष्टाव प्रणिपत्य सः।
कन्यां जाम्बवतीं तस्मै यौतुकार्थं मणिं ददौ ॥ २९
द्वारकां मणिमानीय दर्शयामास यादवान्।
प्रभुश्च सर्व्वतः शुद्धो निष्कलङ्को बभूव सः ॥ ३०
एतत् ते कथितं वत्स मण्यर्थ्याख्यानमुत्तमम्।
अध्यायश्रवणादेव निष्कलङ्को भवेन्नरः ॥ ३१
यच्छ्रुतं धर्म्मवक्त्रेण तदुक्तञ्च यथागमम्।
सुदुर्लभमुपाख्यानं किं भूयः श्रोतुमिच्छसि ॥ ३२

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे नारायण-नारदसंवादे मणिहरणं द्वाविंशत्यधिकशततमोऽध्यायः ॥१२२॥

---

## त्रयोविंशत्यधिकशततमोऽध्यायः।

नारद उवाच।

गणेशपूजनाख्यानं पुराणेषु सुदुर्लभम्।
श्रुतं तद्ब्रह्मणो वक्त्रात् सामान्यञ्च समासतः ॥ १
महिमानं गणपतेः सर्व्वपूज्येश्वरस्य च।
व्यासेन श्रोतुमिच्छामि योगीन्द्राणां गुरोर्गुरोः ॥२
सिद्धाश्रमे महापूजा त्रैलोक्यस्थैः कृता पुरा।
राधामाधवयोर्यत्र पुनः सम्मेलनं पुरा ॥ ३
अतीते वर्षशतके श्रीदाम्नः शापमोक्षणे।
आदौ चकार पूजाञ्च सा च राधा कथं मुने ॥ ४
स्थितेषु च सुरेन्द्रेषु ब्रह्म-विष्णु-शिवादिषु।
सिद्धेन्द्रेषु मुनीन्द्रेषु कुमारादिषु योगिषु ॥ ५
नागेन्द्रे च स्थिते शेषे नागेषु च महत्सु च।
राजेन्द्रेषु च भूमौ च वलिष्ठेष्वसुरेषु च ॥ ६
गन्धर्व्वेषु च रक्षःसु चान्येषु बलवत्सु च।
विस्तरेण महाभाग तन्मां व्याख्यातुमर्हसि ॥ ७

नारायण उवाच।

त्रैलोक्ये पृथिवी धन्या मान्या पुण्यवती सती।
तत्र भारतवर्षञ्च कर्म्मणां फलदं शुभम् ॥ ८
धन्यं यशस्यं पूज्यञ्च पुण्यक्षेत्रे च भारते।
सिद्धाश्रमं महापुण्यं क्षेत्रं मोक्षप्रदं शुभम् ॥ ९
सनत्कुमारो भगवान् तत्र सिद्धो बभूव ह।
स्वयं विधाता तत्रैव तप्त्वा सिद्धो बभूव ह।
योगीन्द्राश्च मुनीन्द्राश्च सिद्धेन्द्राः कपिलादयः ॥१०

शतक्रतुं महेन्द्रश्च तत्र कृत्वा बभूव ह।
तेन सिद्धाश्रमं नाम सर्व्वेषामपि दुर्लभम् ॥ ११
अधिष्ठानं गणेशस्य तत्रैव सततं मुने।
अनूह्यरत्ननिर्म्माण-गणेशप्रतिमां शुभाम् ॥ १२
वैशाखीपूर्णिमायाञ्च पूजां कुर्व्वन्ति देवताः।
नागाश्च मानवाश्चैव दैत्या गन्धर्व्वराक्षसाः ॥ १३
सिद्धेन्द्राश्च मुनीन्द्राश्च योगीन्द्राः सनकादयः।
तत्राजगाम शम्भुश्च पार्व्वत्या सह शङ्करः ॥ १४
सगणः कार्त्तिकेयश्च स्वयं ब्रह्मा प्रजापतिः।
तत्राजगाम शेषश्च नागेन्द्रैः सह सत्वरम् ॥ १५
तत्राजग्मुः सुराः सर्व्वे मनवो मुनयस्तथा।
आजग्मुस्ते नृपाः सर्व्वे पूजार्थं हृष्टमानसाः ॥ १६
आययौ भगवान् कृष्णो द्वारकावासिभिः सह।
आजगाम तथा नन्दः सार्द्धं गोकुलवासिभिः ॥ १७
गोपीविंशतिकोटीभिर्गोलोकवासिभिस्तथा।
गजेन्द्रकोटितुल्याभिर्व्वलिष्ठाभिः सहालिभिः ॥ १८
आययौ सुन्दरी राधा कृष्णप्राणाधिदेवता।
रासेश्वरी सुरसिका शतवर्षे गते सती ॥ १९
सुस्नाता सुदती शुद्धा धृत्वा धौते च वाससी।
संयता सा निराहारा गत्वा च मणिमण्डपम् ॥ २०
सुप्रक्षालितपादाब्जा कान्ता भुवनपावनी।
श्रीकृष्णप्रीतिकामञ्च सुसङ्कल्पं विधाय च ॥ २१
गङ्गोदकेन हेरम्बं स्नापयामास भक्तितः।
ध्यानञ्च सामवेदोक्तं चकार शुक्लपुष्पतः ॥ २२
माता चतुर्णां वेदानां वसोश्च जगतामपि।
बुद्धिरूपा भगवती ज्ञानानां जननी परा।
ध्यानासाध्यं स्वपुत्रं तं परं ध्यानं चकार सा ॥ २३
खर्व्वं लम्बोदरं स्थूलं ज्वलन्तं ब्रह्मतेजसा।
गजवक्त्रं वह्निवर्णमेकदन्तमनन्तकम् ॥ २४
सिद्धानां योगिनामेव ज्ञानिनाञ्च गुरोर्गुरुम्।
ध्यातं मुनीन्द्रैर्देवेन्द्रैर्ब्रह्मेशशेषसंज्ञकैः ॥ २५
सिद्धेन्द्रैर्मुनिभिः सद्भिर्भगवन्तं सनातनम्।
ब्रह्मस्वरूपं परमं मङ्गलं मङ्गलालयम् ॥ २६
सर्व्वविघ्नहरं शान्तं दातारं सर्व्वसम्पदाम्।
भवाब्धिमायापोतेन कर्णधारञ्च कर्म्मिणाम् ॥ २७
शरणागतदीनार्त्त-परित्राणपरायणम्।
ध्यायेच्च ध्यानासाध्यं तं भक्तेशं भक्तवत्सलम् ॥ २८

इति ध्यात्वा स्वशिरसि दत्त्वा पुष्पञ्च सा सती।
सर्व्वाङ्गशोधनं न्यासं वेदोक्तञ्च चकार सा ॥ २९
पुनर्ध्यात्वा च ध्यानेन तेनैव शुभदायिना।
ददौ पुष्पं पादपद्मे राधा लम्बोदरस्य च ॥ ३०
सुप्रतीर्थोदकेनैव शीतेन वासितेन च।
ददौ पाद्यं पादपद्मे तैः पद्मादिभिरर्च्चिते ॥ ३१
दूर्व्वाक्षतैः शुक्लपुष्पैः सुगन्धिचन्दनोदकैः।
अर्घ्यं ददौ तत्पदाब्जे स्वयं गोलोकवासिनी ॥ ३२
सचन्दनं स्निग्धमाल्यं पारिजातस्य सुन्दरम्।
ददौ गले गणेशस्य स्वयं रासेश्वरी मुदा ॥ ३३
कस्तूरीकुङ्कुमाक्तञ्च सुगन्धिस्निग्धचन्दनम्।
सर्व्वाङ्गे प्रददौ तस्य वृन्दावनविनोदिनी ॥ ३४
सुगन्धि शुक्लपुष्पञ्च सुगन्धिचन्दनाचितम्।
ददौ तस्य पदाम्भोजे महापद्मालया सती ॥ ३५
सुगन्धयुक्तं धूपञ्च पूतैर्वस्तुभिरन्वितम्।
ददौ कृष्णप्रिया तस्मै जगतामीश्वराय च ॥ ३६
दीप्तं घृतप्रदीपञ्च ध्वान्तविध्वंसकारणम्।
तस्मै ददौ सुरेशाय परमाद्या सनातनी ॥ ३७
नैवेद्यं विविधं रम्यं सुस्वादु सुमनोहरम्।
चर्व्व्य-चोष्य-लेह्य-पेयं सुधातुल्यं चतुर्व्विधम् ॥ ३८
फलानि च सुपक्वानि त्रैलोक्यदुर्लभानि च।
मधुराणि च स्थूलानि ग्राम्यारण्यानि नारद ॥ ३९
तानि लब्धान्यसंख्यानि तिलानां लड्डुकानि च।
लड्डुकानि सुपक्वानि स्वादूनि सुरसानि च ॥ ४०
यवगोधूमचूर्णानां पक्वानि पिष्टकानि च।
घृताक्तानि च रम्याणि शर्करासहितानि च ॥ ४१
स्वस्तिकानां लड्डुकानि स्थलानि सुन्दराणि च।
भृष्टद्रव्यञ्च विविधमक्षतं शर्करान्वितम् ॥ ४२
घृतकुल्यां दुग्धकुल्यां मधुकुल्यां मनोहराम्।
गुडस्य दध्नः कुल्याञ्च पायसानां तथैव च ॥ ४३
पिष्टकानां स्वस्तिकानां रम्याणां राशिमेव च।
मिष्टव्यञ्जनयुक्तानि शाल्यन्नानि शुभानि च।
ददौ तस्मै सुरेशाय कृष्णप्राणाधिदेवता ॥ ४४
अमूल्यरत्ननिर्म्माणं रम्यं सिंहासनं परम्।
ददौ विघ्नविनाशाय विरजातटवासिनी ॥ ४५
सूक्ष्मं वस्त्रयुगं रम्यममूल्यं वह्निशुद्धकम्।
ददौ शिवात्मजायैव शतशृङ्गनिवासिनी ॥ ४६

विशुद्धघर्षिषा युक्तं निर्म्मलं मधुरं मधु।
मधुपर्कं ददौ तस्मै वृन्दावननिवासिनी ॥ ४७
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम्।
सर्व्वसम्मप्रदाले च वृषभानुसुता ददौ ॥ ४८
सप्ततीर्थोदकं शुद्धं सुशीतञ्च सुवासितम्।
पानार्थञ्च जलं तस्मै ददौ गोपीश्वरी मुदा ॥ ४९
अमूल्यं दुर्लभञ्चैव विशुद्धं श्वेतचामरम्।
ददौ तस्मै परेशाय मूलप्रकृतिरीश्वरी ॥ ५०
अमूल्यरत्ननिर्म्माणं मुक्ता-माणिक्य-हीरकैः।
परिष्कृतं सुतल्पञ्च पुष्पचन्दनचर्चितम् ॥ ५१
सितसूक्ष्मांशुकेनैव परितश्च परिष्कृतम्।
ददौ शिवात्मजायैव कृष्णवक्षःस्थलस्थिता ॥ ५२
दत्त्वा च कामधेनुञ्च सवत्सां वाञ्छितप्रदाम्।
कृत्वातीव परीहारं वृन्दा पुष्पाञ्जलिं ददौ ॥ ५३
दिव्येन मूलमनुना सबीजेनोज्ज्वलेन च।
ददौ षोड़शोपचारं कालिन्दीकूलवासिनी ॥ ५४
ओं गं गौं गणपतये विघ्नविनाशिने स्वाहा।
इत्येवमेवेति तदा मन्त्रञ्च षोड़शाक्षरम्।
सा जजाप सहस्रञ्च परं कल्पतरुं परम् ॥ ५५
तुष्टाव परया भक्त्या भक्तिनम्रात्मकन्धरा।
साश्रुनेत्रा पुलकिता स्तोत्रेण कौथुमेन च ॥ ५६

राधिकोवाच।

परंब्रह्म परंधाम परेशं परमीश्वरम्।
विघ्ननिघ्नकरं शान्तं त्वां नमामि गजाननम् ॥ ५७
सुरासुरेन्द्रैः सिद्धेन्द्रैः स्तुतं स्तौमि परात्परम्।
सुरपद्मदिनेशञ्च गणेशं मङ्गलालयम् ॥ ५८
इदं स्तोत्रं महापुण्यं विघ्नशोकहरं परम्।
यः पठेत् प्रातरुत्थाय सर्व्वविघ्नात् प्रमुच्यते ॥ ५९

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे गणेशपूजनं नाम त्रयोविंशत्य-
धिकशततमोऽध्यायः ॥१२३॥

---

## चतुर्व्विंशत्यधिकशततमोऽध्यायः।

नारायण उवाच।

राधा सम्पूज्य विधिना स्तुत्वा लम्बोदरं सती।
अमूल्यरत्ननिर्म्माणं सर्व्वाङ्गभूषणं ददौ ॥ १
राधायाः स्तवनं श्रुत्वा पूजां दृष्ट्वा च वस्तु च।
उवाच मधुरं शान्तः शान्तां त्रैलोक्यमातरम् ॥ २

गणेश उवाच।

तव पूजा जगन्मातर्लोकशिक्षाकरी शुभे।
ब्रह्मस्वरूपा भवती कृष्णवक्षःस्थलस्थिता ॥ ३
यत्पादपद्ममतुलं ध्यायन्ते ते सुदुर्लभम्।
सुरा ब्रह्मेशशेषाद्या मुनीन्द्राः सनकादयः ॥ ४
जीवन्मुक्ताश्च भक्ताश्च सिद्धेन्द्राः कपिलादयः।
तस्य प्राणाधिदेवी त्वं प्रिया प्राणाधिका परा ॥ ५
वामाङ्गनिर्म्मिता राधा दक्षिणाङ्गश्च माधवः।
महालक्ष्मीर्जगन्माता तव वामाङ्गनिर्म्मिता ॥ ६
वसोः सर्व्वनिवासस्य प्रसूस्त्वं परमेश्वरी।
वेदानां जगतामेव मूलप्रकृतिरीश्वरी ॥ ७
सर्व्वाः प्रकृतिका मातः सृष्ट्याद्यास्त्वद्विभूतयः।
विश्वानि कार्य्यरूपाणि त्वञ्च कारणरूपिणी ॥ ८
प्रलये ब्रह्मणः पाते तन्निमेषो हरेरपि।
आदौ राधां समुच्चार्य्य पश्चात् कृष्णं परात्परम् ॥९
स एव पण्डितो योगी गोलोकं याति लीलया।
व्यतिक्रमे महापापी ब्रह्महत्यां लभेद्ध्रुवम् ॥ १०
जगतां भवती माता परमात्मा पिता हरिः।
पितुरेव गुरुर्माता पूज्या वन्द्या परात्परा ॥ ११
भजते देवमन्यं वा कृष्णं वा सर्व्वकारणम्।
पुण्यक्षेत्रे महामूढ़ो यदि निन्दति राधिकाम् ॥ १२
वंशहानिर्भवेत् तस्य दुःखं शोकं इहैव च।
पचते निरये घोरे यावच्चन्द्रदिवाकरौ ॥ १३
गुरुश्च ज्ञानोद्गिरणाज्ज्ञानं स्यान्मन्त्रतन्त्रयोः।
स च मन्त्रश्च तत् तन्त्रं भक्तिः स्याद्युवयोर्यतः ॥१४
निषेव्य मन्त्रं देवानां जीवो जन्मनि जन्मनि।
भक्तिर्भवति दुर्गायाः पादपद्मे सुदुर्लभे ॥ १५
निषेव्य मन्त्रं तस्याश्च भक्त्या जन्मनि जन्मनि।
तदा प्राप्नोति शम्भोश्च ज्ञानानन्दं सनातनम् ॥ १६
निषेव्य मन्त्रं शम्भोश्च जगतां कारणस्य च।
तदा प्राप्नोति युवयोः पादपद्मं सुदुर्लभम् ॥ १७
युवयोः पादपद्मञ्च दुर्लभं प्राप्य पुण्यवान्।
क्षणार्द्धंषोड़शांशञ्च न हि मुञ्चति दैवतः ॥ १८
भक्त्या च युवयोर्मन्त्रं गृहीत्वा वैष्णवादपि।
स्तवं वा कवचं वापि कर्म्ममूलनिकृन्तनम् ॥ १९

यो जपेत् परया भक्त्या पुण्यक्षेत्रे च भारते।
पुरश्चरणं सहस्रञ्च स्वात्मना सार्द्धमुद्धरेत् ॥ २०
गुरुमभ्यर्च्य विधिवद्वस्त्रालङ्कारचन्दनैः।
कवचं धारयेद्यो हि विष्णुतुल्यो भवेद्ध्रुवम् ॥ २१
यद्दत्तं वस्तु मे मातस्तत् सर्व्वं सार्थकं कुरु।
देहि विप्राय मत्प्रीत्या तदा भोक्ष्यामि साम्प्रतम्॥२२
देवे देयानि द्रव्याणि देवे देया च दक्षिणा।
तत् सर्व्वं ब्राह्मणे दद्यात् तदनन्ताय कल्पते ॥ २३
ब्राह्मणानां मुखं राधे देवानां मुखमुख्यकम्।
विप्रभुक्तञ्च यद्द्रव्यं प्राप्नुवन्त्येव देवताः ॥ २४
विप्रांश्च भोजयामास तत् सर्व्वं राधिका सती।
बभूव तत्क्षणादेव प्रीतो लम्बोदरो मुने ॥ २५
एतस्मिन्नन्तरे चैव ब्रह्मेशशेषसंज्ञकाः।
आययुर्वटमूलञ्च देवपूजार्थमेव च ॥ २६
तत्र गत्वा शिवचरो देवान् देवीरुवाच सः।
श्रीकृष्णं पुण्यकपतेश्च भयभीतश्च रक्षकः ॥ २७

रक्षक उवाच।

गणेशं पूजयामास सर्व्वादौ च शुभक्षणे।
वृषभानुसुता राधा प्रकृत्य स्वस्तिवाचनम् ॥ २८
रक्षिता सा बलवती गोपीभिश्शतकोटिभिः।
वारितोऽहं बलिष्ठाभिर्युष्मांश्च कथयामि तत् ॥ २९
सर्व्वादौ पूजयेद्यो हि सोऽनन्तं फलमाप्नुयात्।
मध्ये मध्यविधं पुण्यं शेषे स्वल्पमिति स्मृतम् ॥ ३०
देवेन्द्रेषु मुनीन्द्रेषु देवस्त्रीषु स्थितासु च।
गोपीभिश्च रक्षितया राधया पूजितः पुरः ॥ ३१
दूतवाक्यं समाकर्ण्य जहसुः सर्व्वदेवताः।
मुनयो मनवश्चैव राजानो देवयोषितः ॥ ३२
रुक्मिण्याद्या रमण्यश्च यादव्यो विस्मयं ययुः।
सरस्वती च सावित्री पार्व्वती परमेश्वरी ॥ ३३
रोहिणी न सती संज्ञा स्वाहाद्याः सर्व्वयोषितः।
मुदिताः प्रययुः सर्व्वा मुनिपत्न्यः पतिव्रताः ॥ ३४
मुनयो मनवः सर्व्वे देवाश्चापि नृपास्तथा।
श्रीकृष्णः स्वगणैः सार्द्धं ये चान्ये प्रययुर्मुदा ॥ ३५
ते सर्व्वे विविधैर्द्रव्यैः पूजां चक्रुः शुभक्षणे।
बलिष्ठा दुर्बलाश्चैव क्रमेण च पृथक् पृथक् ॥ ३६
लड्डुकानाञ्च राशीनां शतकोटिर्बभूव ह।
शर्कराणां तदर्द्धञ्च स्वस्तिकानां तथैव च ॥ ३७
अन्नानां भृष्टवस्तूनां शतकोटिर्बभूव ह।
असंख्यानि फलान्येव स्वादूनि मधुराणि च ॥ ३८
मधुकुल्या दुग्धकुल्या दध्नः कुल्या घृतस्य च।
बभूवुः शतसंख्याश्च त्रैलोक्यानाञ्च पूजिते ॥ ३९
पूजां कृत्वा तु ते सर्व्वे सम्भूयुश्च सुखासने।
पार्व्वती परमप्रीत्या राधास्थानं समाययौ ॥ ४०
सा राधा पार्व्वतीं दृष्ट्वा समुत्थाय जवेन च।
यथायोग्यञ्च सम्भाषां चकार सादरं मुदा ॥ ४१
आश्लेषणं चुम्बनञ्च बभूव च परस्परम्।
उवाच मधुरं दुर्गा राधां कृत्वा स्ववक्षसि ॥ ४२

पार्व्वत्युवाच।

किं वा प्रश्नं करिष्यामि त्वां राधां मङ्गलालयाम्।
गता ते विरहज्वाला श्रीदाम्नः शापमोक्षणे ॥ ४३
सततं मन्मनः प्राणास्त्वय्येव मयि ते तथा।
न ह्येवमावयोर्भेदः शक्ति-पूरुषयोर्यथा ॥ ४४
ये त्वां निन्दन्ति मद्भक्तास्त्वद्भक्ताश्चापि मामपि।
कुम्भीपाके च पच्यन्ते यावच्चन्द्रदिवाकरौ ॥ ४५
राधा-माधवयोर्भेदं ये कुर्व्वन्ति नराधमाः।
वंशहानिर्भवेत् तेषां पच्यन्ते नरके चिरम् ॥ ४६
यान्ति शूकरयोनिञ्च पितृभिः शतकैः सह।
षष्टिं वर्षसहस्राणि विष्ठायां कृमयस्तथा ॥ ४७
त्वयैव पूजितः पुत्त्रो न मया च गणेश्वरः।
सर्व्वादौ सर्व्वपूज्योऽयं यथा तव तथा मम ॥ ४८
यावज्जीवनपर्य्यन्तं न विच्छेदो भविष्यति।
राधा-माधवयोर्देवि दुग्ध-धावल्ययोर्यथा ॥ ४९
सिद्धाश्रमे तथा तीर्थे पुण्यक्षेत्रे च भारते।
निर्व्विघ्नं लभ गोविन्दं सम्पूज्य विघ्नखण्डनम् ॥ ५०
रासेश्वरी त्वं रसिका श्रीकृष्णो रसिकेश्वरः।
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत् ॥ ५१
श्रीदाम्नः शापनिर्म्मुक्ता शतवर्षान्तरे सति।
तुरुष्व मद्देशाद्य कृष्णेन सह सङ्गमम् ॥ ५२
ममाज्ञया तूणतया सुवेशं कुरु सुन्दरि।
सुदुर्लभः कामिनीनां सत्पुंसा सह सङ्गमः ॥ ५३
चक्रुः सुवेशं राधायाः प्रियाल्यश्च शिवाज्ञया।
रत्नसिंहासने रम्ये वासयामासुरीश्वरीम् ॥ ५४
पुरतो रत्नमाला सा रत्नमालां गले ददौ।
पद्मा पद्ममुखं द्रष्टुं सद्रत्नदर्पणं ददौ ॥ ५५

राधाया दक्षिणे हस्ते क्रीडापद्मं मनोहरम्।
ददौ पद्ममुखी पाद-पद्मयुग्मेऽप्यलक्तकम्॥ ५६
प्रददौ सुन्दरी गोपी सिन्दूरं सुन्दरं वरम्।
चन्दनेन समायुक्तं सीमन्ताधःस्थलोज्ज्वलम्॥ ५७
सुचारुकवरीं रम्यां चकार मालती सती।
मनोहरां मुनीनाञ्च मालतीमाल्यभूषिताम्॥ ५८
कस्तूरीकुङ्कुमाक्तञ्च चारुचन्दनपत्रकम्।
स्तनयुग्मे सुकठिने चकार चन्दना सती॥ ५९
चारुचम्पकपुष्पाणां मालां गन्धमनोहराम्।
कलावती ददौ तस्यै प्रफुल्लां नवमल्लिकाम्॥ ६०
रतिः सुरसिका गोपी रत्नभूषणभूषिताम्।
तां चकारातिरसिकां वरां रतिरसोत्सुकाम्॥ ६१
शरत्पद्मदलाभञ्च लोचनं कज्जलोज्ज्वलम्।
कृत्वा ददौ सुललितं वस्त्रञ्च ललिता सती॥ ६२
महेन्द्रेण प्रदत्तञ्च पारिजातप्रसूनकम्।
सुगन्धयुक्तं तस्याश्च पारिजाता करे ददौ॥ ६३
सुशीलं मधुरोक्तञ्च भर्त्तुः पार्श्वे यथोचितम्।
शिक्षां चकार नीतञ्च सुशीला गोपिका सती॥ ६४
वीणाञ्च प्रौढ़शकलां विपत्तौ विस्मृता तया।
स्मरणं कारयामास राधां माता कलावती॥ ६५
शृङ्गारविषयोक्तञ्च वचनञ्च सुधोपमम्।
स्मरणं कारयामास भगिनी च सुधामुखी॥ ६६
कमलानां चम्पकानां दलै चन्दनचर्च्चिते।
चकार रतितल्पञ्च कमला च सुकोमलम्॥ ६७
चारुचम्पकपुष्पञ्च कृष्णार्थं पुटकस्थितम्।
चकार चन्दनाक्तञ्च स्वयं चम्पावती सती॥ ६८
पुष्पं कैलिकदम्बानां स्तवकञ्च मनोहरम्।
कदम्बमाला कृष्णार्थं विद्यमानं चकार सा॥ ६९
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम्।
कृष्णप्रिया च कृष्णार्थं चकार वासितं जलम्॥ ७०
एतस्मिन्नन्तरे सर्व्वमाश्रमं सजलस्थलम्।
गोरोचनाभञ्च ददृशुर्मुनयः सुराः॥ ७१
ते सर्व्वे विस्मयं गत्वा पप्रच्छुः कृष्णमीश्वरम्।
उवाच भगवांस्तांश्च सर्व्वज्ञः सर्व्वकारणम्॥ ७२

श्रीभगवानुवाच।

अभिशप्ता च श्रीदाम्ना शश्वच्छोभा च राधिका।
स्वं ध्यानं विसस्मार मद्विच्छेदज्वरातुरा॥ ७३
विमुक्तावधशतके ध्यानं सस्मार सा सती।
सिद्धाश्रमञ्च पीताभं रासेश्वर्य्याश्च तेजसा॥ ७४
परमाह्लादकं तेजश्चन्द्रकोटिसमप्रभम्।
सुखदृश्यञ्च सुखदं चक्षुषां प्राणिनामपि॥ ७५
तच्छ्रुत्वा परमाश्चर्य्यं मुनयो मनवस्तथा।
देवाश्च सर्व्वे देवास्ते ब्रह्मेशानादयस्तथा॥ ७६
अवेन गत्वा तत् स्थानं भक्तिनम्रात्मकन्धराः।
सर्व्वे जनास्ते ददृशुस्त्रैलोक्यस्थाश्च राधिकाम्॥ ७७
श्वेतचम्पकवर्णाभामतुलां सुमनोहराम्।
मोहिनीं मानसानाञ्च मुनीनामूर्द्ध्वरेतसाम्॥ ७८
सुकेशीं सुन्दरीं श्यामां न्यग्रोधपरिमण्डलाम्।
नितम्बकठिनश्रोणी-स्तनयुग्मोन्नतानताम्॥ ७९
कोटीन्दुनिन्दितास्यां तां सस्मितां सुदतीं सतीम्।
कज्जलोज्ज्वलरूपाञ्च शरत्कमललोचनाम्॥ ८०
महालक्ष्मीं वीजरूपां परमाद्यां सनातनीम्।
परमात्मस्वरूपस्य प्राणाधिष्ठातृदेवताम्॥ ८१
स्तुताञ्च पूजिताञ्चैव पराञ्च परमात्मना।
ब्रह्मस्वरूपां निर्लिप्तां नित्यरूपाञ्च निर्गुणाम्॥ ८२
विश्वावरोधां प्रकृतिं भक्तानुग्रहविग्रहाम्।
सत्यस्वरूपां शुद्धाञ्च पूतां पतितपावनीम्॥ ८३
सुतीर्थपूतां सत्कीर्त्ति-विधात्रीं वेधसामपि।
महत्प्रियाञ्च महतीं महाविष्णोश्च मातरम्॥ ८४
रासेश्वरेश्वरीं रम्यां रसिकां रसिकेश्वरीम्।
वह्निशुद्धांशुकाधानां स्वेच्छारूपां शुभालयाम्॥ ८५
गोपीभिः सप्तभिः शश्वत् सेवितां श्वेतचामरैः।
चतुर्भिश्च प्रियालीभिः पादपद्मोपसेविताम्॥ ८६
अमूल्यरत्ननिर्म्माण-भूषणैश्चैव विभूषिताम्।
चारुकुण्डलयुग्मेन श्रुतिगण्डस्थलोज्ज्वलाम्॥ ८७
पक्वविम्बफलौष्ठाञ्च वनमालाविभूषिताम्॥ ८८
दधानां कवरीं रम्यां मालतीमाल्यभूषिताम्।
सिन्दूरबिन्दुना सार्द्धं स्निग्धचन्दनबिन्दुभिः॥ ८९
कस्तूरीकज्जलाङ्केन सीमन्ताधःस्थलोज्ज्वलाम्।
सुनासां गजमुक्ताढ्यां खगेन्द्रचञ्चुनिर्म्मिताम्॥ ९०
कुङ्कुमारक्तकस्तूरी-स्निग्धचन्दनचित्रितम्।
दधानां सुकपोलञ्च कोमलाङ्गीं सुकामुकीम्॥ ९१
गजेन्द्रगामिणीं रामां कमनीयां सुकामिनीम्।
कामास्त्रजयरूपाञ्च कामकल्पालयां वराम्॥ ९२

क्रीड़ाकमलमम्लानं पारिजातप्रसूनकम्।
अमूल्यरत्ननिर्म्माणं दधानां दर्पणोज्ज्वलम्॥ ९३
नानाचित्रविचित्राढ्य-रत्नसिंहासनस्थिताम्।
ब्रह्मपद्मार्च्चितं पादपद्मञ्च मङ्गलालयम्॥ ९४
हृत्पद्मे ध्यायमानां तां कृष्णस्य परमात्मनः।
कर्म्मणा मनसा वाचा स्वप्ने जागरणेऽपि च॥ ९५
तत्प्रीतिं प्रेमसौभाग्यं स्मरन्तीं नित्यनूतनम्।
आवानुरक्तसंसक्तां शुद्धभक्तां पतिव्रताम्॥ ९६
धन्यां मान्यां गौरवार्हां शश्वद्धर्षःस्थलस्थिताम्।
वृषभानुसुतां ख्यातां पुण्यक्षेत्रे च भारते॥ ९७
गोपीश्वरीं गुप्तरूपां सिद्धिदां सिद्धिरूपिणीम्।
ध्यानासाध्यां दुराराध्यां वन्दे सद्भक्तवन्दिताम्॥ ९८
ध्यानेनानेन ये राधां ध्यायन्ते ध्यानतत्पराः।
इहैव जीवन्मुक्तास्ते परत्र कृष्णपार्षदाः॥ ९९
दृष्ट्वा ब्रह्मा च सर्व्वादौ तुष्टाव परमेश्वरीम्।
स्वयं विधाता जगतां मातरं वेधसामपि॥ १००

ब्रह्मोवाच।

षष्टिं वर्षसहस्राणि दिव्यानि परमेश्वरि।
पुष्करे च तपस्तप्तं पुण्यक्षेत्रे च भारते॥ १०१
त्वत्पादपद्ममधुर-मधुलुब्धेन चेतसा।
मधुव्रतेन लोलेन प्रेरितेन मया सति।
तथापि न मया लब्धं त्वत्पादपद्ममीप्सितम्॥ १०२
न दृष्टमपि स्वप्नेऽपि प्राह वागशरीरिणी।
वाराहे भारते वर्षे पुण्ये वृन्दावने वने।
सिद्धाश्रमे गणेशस्य पादपद्मञ्च द्रक्ष्यसि॥ १०३
राधा-माधवयोर्दास्यं कुतो विषयिणस्तव।
निवर्त्तस्व-महाभाग वरमेतत् सुदुर्लभम्॥ १०४
इति श्रुत्वा निवृत्तोऽहं तपसो भग्नमानसः।
परिपूर्णं तदधुना वाञ्छितं तपसः फलम्॥ १०५

महादेव उवाच।

मात्पद्मार्च्चितं पादपद्मं यस्य सुदुर्लभम्।
ध्यायन्ते ध्याननिष्ठाश्च शश्वद्ब्रह्मादयः सुराः॥१०६
मुनयो मनवश्चैव सिद्धाः सन्तश्च योगिनः।
द्रष्टुं नैव क्षमाः स्वप्ने भवती तस्य वक्षसि॥ १०७

अनन्त उवाच।

वेदाश्च वेदमाता च पुराणानि च सुव्रते।
अहं सरस्वती सन्तः स्तोतुं नालञ्च सन्ततम्॥ १०८
अस्माकं स्तवने यस्य भ्रमङ्गश्च सुदुर्लभः।
तवैव भजने भीतश्चावयोरन्तरं हरिः॥ १०९
एवं देवाश्च देव्यश्चाप्यन्ये ये च समागताः।
प्रणतास्तुष्टुवुः सर्व्वे मुनिमन्वादयस्तथा॥ ११०
लज्जया नम्रवक्त्राश्च रुक्मिण्याद्याश्च योषितः।
मलीमसञ्च चक्रुस्ताः ख्यासेन रत्नदर्पणम्॥ १११
शतशुल्का सत्यभामा निराहारा कृशोदरी।
मनसोऽप्यभिमानञ्च सर्व्वं तत्याज नारद॥ ११२

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे सिद्धाश्रम-तीर्थ-यात्राप्रसङ्गे ब्रह्मेश-शेषादिकृते राधिकास्तोत्रे चतुर्व्विंशत्य-धिकशततमोऽध्यायः॥१२४॥

---

## पञ्चविंशत्यधिकशततमोऽध्यायः।

नारद उवाच।

गणेशपूजनादेव राधास्तोत्रात् परं प्रभो।
बभूव किं रहस्यं वा तन्मे व्याख्यातुमर्हसि॥ १

नारायण उवाच।

गणेशपूजने तीर्थे ये देवाश्च समाययुः।
मुनयश्चापि योगीन्द्रा वसन्तो वटमूलके॥ २
वसुदेवो देवकी च परमादरपूर्व्वकम्।
पप्रच्छ शश्वं ब्रह्माणमनन्तं मुनिपुङ्गवम्॥ ३

वसुदेव उवाच।

केनोपायेन देवेश हे सिद्धा मुनिपुङ्गवाः।
भवेद्भवाब्धितरणे आवयोरुत्तमा गतिः॥ ४
शीघ्रं वद महाभागा दीनयोर्दीनबान्धवाः।
भवाब्धितरणे तथां तत्र यूयञ्च नाविकाः॥ ५
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः।
यद्रूपाणि पुण्यानि व्रतान्यनशनानि च॥ ६
तपांसि नानादानानि विप्रदेवार्च्चनानि च।
चिरं पुनन्ति सर्व्वाणि दर्शनादेव वैष्णवाः॥ ७
सताञ्च विष्णुभक्तानां रजसां स्पर्शमात्रतः।
पूतानां पादपद्मानां सद्यःपूता वसुन्धरा॥ ८
तीर्थानि च पवित्राणि समुद्राः पर्व्वतास्तथा।
सुरा दर्शनमिच्छन्ति पातकेन्धनपावकम्॥ ९
सोऽज्ञानी नैव बुबुधे ज्ञानञ्च ज्ञानिना सह।

अस्मात्स्वरूपञ्च दधि-दुग्धं रसं यथा ॥ १०
तथा कृष्णस्य तातोऽहं सङ्गी च चिरमेव च।
तथैव देवकी माता ज्ञानिनाञ्च गुरोर्गुरुः ॥ ११
वसुदेववचः श्रुत्वा प्रहस्य शङ्करः स्वयम्।
चतुर्णामपि वेदानामुवाच जनको गुरुः ॥ १२

महादेव उवाच।

सन्निकर्षो ज्ञानिनाञ्च ज्ञानेऽनादरकारणम्।
याति गङ्गाम्भसा पूतस्तीर्थान्यन्यानि सिद्धये ॥ १३
वासुदेवस्य तातोऽयं वसुदेवश्च पण्डितः।
ज्ञानिनः कश्यपस्यांशो वासोऽस्तातस्य चात्मनः।
पृच्छति ज्ञानमस्यांश्च कृष्णाच्चः पुत्रबुद्धितः ॥ १४
अहो दुर्गा मोहवती ज्ञानिनामपि मोहिनी।
विष्णुमाया दुराराध्या न साध्या जगतामपि ॥ १५
वयञ्च मोहिताः शश्वद्वेदानां जनकास्तया।
ब्रह्मा चापि परिज्ञाता (क) मोहितस्तस्य मायया।
ध्यायते यत्पदाम्भोजं तपसा जीवनावधि ॥ १६
इन्द्रेषु दशलक्षेष्वप्यधिकाष्टशतेषु च।
पातेषु ब्रह्मणः पाते निमेषो माधवस्य च ॥ १७
अद्य तेनेन्द्रयुद्धञ्च पारिजातस्य हेतुना।
पारिजाततरुं दत्त्वा मया शक्रश्च रक्षितः ॥ १८
यज्ज्ञानं ज्ञानिनामेव तत्त्वं वा विषयात्मकम्।
न हि किञ्चित् तदज्ञानां तत्साध्यानां सदैव हि ॥१९
प्राणिनामात्मनोऽज्ञानामस्माकं ज्ञानमस्ति च।
तदूर्द्ध्वं तत्समं नैव कृष्णं पृच्छ शुभाशुभम् ॥ २०
ब्रह्मणश्च चतुर्यामान् कल्पं कालविदो विदुः।
सप्तकल्पान्तजीवी च मार्कण्डेयो महामुनिः ॥ २१
अष्टानवतिशक्रेषु पातेषु पतनं मुनेः।
ततः प्राप्तं हरेर्दास्यं मुनिना तपसः फलात् ॥ २२
प्रलये ब्रह्मणः पाते पतनं लोमशस्य च।
दिक्पालानां ग्रहाणाञ्च तदायुश्चिरजीविनाम् ॥२३
अन्येषामपि देवानां मुनीनामूर्द्ध्वरेतसाम्।
तदेवायुश्च सिद्धानां माञ्च मृत्युञ्जयं विना ॥ २४
प्रलये च विधेः पाते शिवलोकेऽप्यहं शिवः।
ब्रह्मभालोद्भवः शम्भुः सर्व्वादिसर्गभाषणम् ॥ २५
कृष्णवामांशसम्भूता यथा राधा तथैव ते।
तथैव दुर्गा लक्ष्मीश्च सावित्री च सरस्वती ॥ २६

(क) परीच्छातेति पाठः प्रामादिक एव।

आदित्यश्चादितेः पुत्रः कायव्यूहेन द्वादश।
तथैव च महेन्द्रश्च कायव्यूहाच्चतुर्द्दश।
तथैव वसवश्चाष्टौ रुद्राश्चैकादशैव ते ॥ २७
मनुपाते चेन्द्रपातो विषयात् पतनं भवेत्।
सममायुश्च सर्व्वेषां निधनं प्रलयेऽपि च ॥ २८
प्रलये दर्शयामास ब्रह्माण्डे च जलप्लुते।
ब्रह्माणञ्च स्वलोकञ्च स्वात्मानं शक्तिभिश्च माम् ॥२९
सर्व्वेषां मूलरूपश्च सर्व्वेशः कृष्ण एव च।
भज पुत्रं राजसूये यज्ञेशं यज्ञकारणम् ॥ ३०
विधिवद्दक्षिणां दत्त्वा भवाब्धिं तर यादव।
मुक्तिस्ते नास्ति निर्व्वाणं विषयी कश्यपो भवान्।
न ते दास्यं भक्तधनमदितिर्देवकी तथा ॥ ३१
व्रज स्वर्गं भोगवीजं स्वस्थानं मम वालयम्।
सालोक्यमुक्तिर्दास्यञ्च यशोदानन्दयोर्ध्रुवम् ॥ ३२
इति ते कथितं सर्व्वं यज्ञं कुरु यथासुखम्।
परिपूर्णं कर्म्म कृत्वा यामः स्वं भवनं वयम् ॥ ३३
शिवस्य वचनं श्रुत्वा संयतश्च शुभक्षणे।
तत्र सभ्य तदम्भारो राजसूयं चकार सः ॥ ३४
वसुदेवस्य हव्य ञ्च साक्षाच्च जगृहुः सुराः।
यत्र साक्षाच्च यज्ञेशो यज्ञोऽयं दक्षिणासह ॥ ३५
पूर्णाहुतिं दत्तवन्तं वसुदेवमुवाच सः।
सनत्कुमारो भगवान् वासुदेवाज्ञया मुने ॥ ३६

सनत्कुमार उवाच।

सर्व्वस्वं दक्षिणां देहि तूर्णं लक्ष्मीपतेः पितः।
सार्थकं कुरु कर्म्मेदं वेदोक्तं वचनं शृणु ॥ ३७
दक्षिणां विष्णुमुद्दिश्य तत्काले चेन्न दीयते।
मुहूर्त्ते तु व्यतीते सा दक्षिणा द्विगुणा भवेत् ॥ ३८
वासरे च वह्निभूते भवेत् सापि चतुर्गुणा।
त्रिरात्रे समतीते तु षड्गुणा सा भवेद्ध्रुवम् ॥ ३९
पक्षान्ते तु शतगुणा मासान्ते तच्चतुर्गुणा।
षण्मासेऽप्यधिके न्यूने सा सहस्र गुणा तथा ॥ ४०
वर्षान्ते सा लक्षगुणा ब्राह्मणानाञ्च यादव।
उभौ च नरकं यातः कर्म्मकर्त्तृ-पुरोहितौ ॥ ४१
वसुदेवश्च तच्छ्रुत्वा सर्व्वस्वमुत्ससर्ज्ज सः।
श्रकातरश्च सहसा वासुदेवाज्ञया तथा ॥ ४२
अमूल्यानाञ्च रत्नानां दशकोटिमनुत्तमाम्।
ददौ गर्गाय सर्व्वादौ स्वयं लक्ष्मीपतेः पिता ॥ ४३

शतकोटिं मणीन्द्राणां स्वर्णानाञ्च चतुर्गुणम् ।
माणिक्यानाञ्च मुक्तानां हीरकाणां तथैव च ॥ ४४
रौप्यं प्रवालं परमं स्वर्णपात्राणि यानि च ।
स्वस्त्रीणाञ्च स्वबन्धूनाममूल्यरत्नभूषणम् ॥ ४५
श्वेतचामरलक्षञ्च लक्षञ्च रत्नदर्पणम् ।
कामधेनुगणं सर्व्वं शतकोटिं गवामपि ॥ ४६
शतकोटिं गजेन्द्राणामश्वानां तच्चतुर्गुणम् ।
यद्दत्तं दानवानाञ्च राज्ञां राज्ञोऽनुमोदनात् ॥ ४७
ग्रामाणां शतलक्षञ्च समस्यं फलितं तदम् ।
धान्यञ्च नानालक्षञ्च शाल्यन्नानां तथैव च ॥ ४८
पायसं पिष्टकञ्चैव मिष्टान्नञ्च सुधोपमम् ।
स्वस्तिकानां तिलानाञ्च रम्याणि लड्डुकानि च ॥ ४९
शर्कराराशिलक्षञ्च मिश्रकाणां तथैव च ।
दुग्धानां मधुदध्नाञ्च गुडानां हविषामपि ।
कुल्यानां शतकं दत्त्वा परीहारं चकार सः ॥ ५०
सकर्पूरञ्च ताम्बूलं सुशीतं वासितं जलम् ।
सुगन्धि चन्दनञ्चैव पारिजातस्य मालिकाम् ॥ ५१
आसनानि च रम्याणि वह्निशुद्धांशुकानि च ।
रत्ननिर्म्माणतल्पानि पुष्पाणि च फलानि च ॥ ५२
ददौ ब्राह्मणेभ्यश्च प्रफुल्लवदनेक्षणः ।
देवांश्च भोजयामास ब्राह्मणांश्च सुखैः शुभैः ॥ ५३
देवाश्च मुनयो रात्रौ सरामाश्चाभिरेमिरे ।
प्रभाते प्रययुः सर्व्वे श्रीकृष्णानुमतेन च ॥ ५४
यादवाः प्रययुः सर्व्वे द्वारकां कृष्णपालिताम् ।
अमूल्यरत्नपूर्णाञ्च रुक्मिणीदर्शनेन च ॥ ५५

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे सिद्धाश्रमतीर्थयात्राप्रसङ्गे वसुदेवस्नानालम्भनं नाम पञ्चविंशत्यधिकशततमोऽध्यायः ॥१२५॥

---

## षड्विंशत्यधिकशततमोऽध्यायः ।

नारायण उवाच ।

गणेशपूजनं कृत्वा माधवो यादवैः सह ।
देवैर्मुनिभिरन्यैश्च देवीभिः सह नारद ॥ १
अंशेन देवो देवीभिः रुक्मिण्यादिभिरेव च ।
प्रययौ द्वारकां रम्यां तस्थौ सिद्धाश्रमे स्वयम् ॥ २
कृत्वा सुप्रीतिसम्भाषां सार्द्धं गोकुलवासिभिः ।
गोपैः सुहृद्भिरन्याभिर्म्मात्रा गोप्या यशोदया ॥ ३
उवाच मातरं तातं सुनीतञ्च यथोचितम् ।
गोपांश्च गोकुलस्थांश्च बन्धुवर्गांश्च साम्प्रतम् ॥ ४

श्रीभगवानुवाच ।

गच्छ नन्दव्रजं नन्द हे तात प्राणवल्लभ ।
मातर्यशोदे त्वमपि परमार्य्ये यशस्विनि ॥ ५
भुक्त्वा कालावशेषञ्च गच्छ गोलोकमुत्तमम् ।
सालोक्यमुक्तिं दास्यामि सार्द्धं गोकुलवासिभिः ॥ ६
इत्युक्त्वा भगवान् कृष्णः पित्रोरनुमतेन च ।
जगाम राधिकास्थानं नन्दस्य गोकुलं तथा ॥ ७
ददर्श राधां रुचिरां मुक्ताधाराञ्च सस्मिताम् ।
यथा द्वादशवर्षीयां शश्वत्सुस्थिरयौवनाम् ॥ ८
रत्नोच्चैरासनस्थाञ्च गोपीत्रिशतकोटिभिः ।
आवृतां वेत्रहस्ताभिः सस्मिताभिश्च साम्प्रतम् ॥ ९
दृष्ट्वा च दूरतो राधा श्रीकृष्णं प्राणवल्लभम् ।
शिशुवेशं सुवेशञ्च सुन्दरेशञ्च सस्मितम् ॥ १०
नवीनजलदश्यामं पीतकौशेयवाससम् ।
चन्दनोक्षितसर्व्वाङ्गं रत्नभूषणभूषितम् ॥ ११
मयूरपुच्छचूडञ्च मालतीमाल्यशोभितम् ।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहविग्रहम् ॥ १२
क्रीड़ाकमलमम्लानं धृतवन्तं मनोहरम् ।
मुरलीहस्तविन्यस्तं सुप्रशस्तञ्च दर्पणम् ॥ १३
जवेन च समुत्थाय गोपीभिः सह सादरम् ।
प्रणम्य परया भक्त्या तुष्टाव परमेश्वरम् ॥ १४

राधिकोवाच ।

अद्य मे सफलं जन्म जीवितञ्च सुजीवितम् ।
यद्दृष्ट्वा मुखचन्द्रं ते सुस्निग्धं लोचनं मम ॥ १५
पञ्च प्राणाश्च स्निग्धाश्च परमात्मा च सुप्रिय ।
उभयोर्हर्षवीजञ्च दुर्लभं बन्धुदर्शनम् ॥ १६
शोकार्णवे निमग्नाहं प्रदग्धा विरहानलैः ।
त्वां दृष्ट्वामृतदृष्ट्या च सुसिक्ताद्य सुशीतला ॥ १७
शिवा शिवप्रदाऽहञ्च शिववीज त्वया सह ।
शवस्वरूपा निश्चेष्टाप्यस्पृष्टा च त्वया विना ॥ १८
त्वयि तिष्ठति देहे च देही श्रीमान् शुचिः स्वयम् ।
सर्व्वशक्तिस्वरूपश्च शवरूपो गते त्वयि ॥ १९
स्त्रीपुंसोर्विरहो नाथ सामान्यश्च सुदारुणः ।

आत्मेव शक्तिभिः प्राणा विच्छेदे परमात्मनः ॥ २०
इत्युक्त्वा राधिका देवी परमात्मानमीश्वरम् ।
स्वासने वासयामास कृत्वा पादार्चनं मुदा ॥ २१
रत्नसिंहासने श्रीमानुवास राधया सह ।
गोपीभिः सप्तभिः शश्वत् सेवितः श्वेतचामरैः ॥ २२
चन्दना सा ददौ गात्रे सुगन्धि चन्दनं हरेः ।
सस्मिता रत्नमाला सा रत्नमालां गले ददौ ॥ २३
पाद्मपद्मार्च्चिते पाद-पद्मे पद्मावती सती ।
अर्घ्यं ददौ सा यत्नेन दूर्व्वापुष्पञ्च चन्दनम् ॥ २४
मालती मालतीमाल्यं चूडायाञ्च हरेर्ददौ ।
चम्पापुष्पस्य पुटकं ददौ चम्पावती सती ॥ २५
अर्घ्यं दत्त्वा पारिजाता पारिजातं ददौ मुदा ।
सकर्पूरञ्च ताम्बूलं वासितं शीतलं जलम् ॥ २६
ददौ कदम्बमाला सा कदम्बमालिकां शुभाम् ।
क्रीड़ाकमलमम्लानममूल्यरत्नदर्पणम् ॥ २७
ददौ हस्ते हरेरेव कमला सा सुकोमला ।
वरुणेन पुरा दत्तं वस्त्रयुग्मञ्च सुन्दरम् ॥ २८
साक्षाद्गोरोचनाभञ्च सुन्दरी हरये ददौ ।
मधुपात्रं मधुस्तस्मै मधुरं मधुपूर्णकम् ॥ २९
सुधापूर्णं सुधापात्रं ददौ भक्त्या सुधामुखी ।
चकार पुष्पशय्याञ्च गोप्यश्चन्दनचर्च्चिताम् ।
अम्लानमालतीपुष्प-मालाजालविभूषिताम् ॥ ३०
रत्नेन्द्रसारनिर्म्माण-मन्दिरे सुमनोहरे ।
मणीन्द्र-मुक्ता-माणिक्य-हीराहारविभूषिते ॥ ३१
कस्तूरीकुङ्कुमाक्तेन वायुना सुरभीकृते ।
रत्नप्रदीपशतकैर्ज्ज्वलद्भिश्च सुदीपिते ॥ ३२
धूपिते सन्ततं धूपैर्नानावस्तुसमन्विते ।
वसन्तसमयोन्मत्त-पुंस्कोकिलकलान्विते ॥ ३३
मधुपुष्पसमायुक्ते मधुव्रतरुतश्रुते ।
नानाचित्रविचित्राढ्ये रतिवस्तुसमन्विते ॥ ३४
कृत्वा शय्यां रतिकरीं ययुर्गोप्यश्च सस्मिताः ।
दृष्ट्वा रहसि तल्पञ्च सुरम्यञ्च मनोहरम् ॥ ३५
नानाप्रकारहास्यञ्च परीहासं सरोचितम् ।
द्वयोर्बभूव तल्पे च मदनातुरयोस्तथा ॥ ३६
आत्मं ददौ च कृष्णाय ताम्बूलञ्च सुवासितम् ।
कस्तूरी-कुङ्कुमाक्तञ्च चन्दनं श्यामवक्षसि ॥ ३७
चारुचम्पकपुष्पञ्च चूड़ायां प्रददौ सती ।
सहस्रदलसंयुक्तं क्रीड़ापद्मं करे ददौ ॥ ३८
प्रक्षिप्य मुरलीं हस्तात् प्रददौ रत्नदर्पणम् ।
पारिजातस्य कुसुममम्लानं पुरतो ददौ ॥ ३९
उवाच मधुरं राधा रहस्यं मधुरं वचः ।
सस्मिता सस्मितं शान्तं कान्तं कान्ता मनोहरम् ॥४०
निष्फलं मङ्गलप्रश्नं मङ्गले मङ्गलालये ।
सर्व्वमङ्गलबीजे-च माङ्गल्ये मङ्गलप्रदे ॥ ४१
तथापि कुशलप्रश्नं साम्प्रतं समयोचितम् ।
लौकिकव्यवहारोऽपि वेदेभ्यो बलवांस्तथा ॥ ४२
कुशलं रुक्मिणीकान्त सत्यभामेश साम्प्रतम् ।
महेन्द्रेण समं युद्धं लीलया च यदाज्ञया ॥ ४३
पारिजाततरुं स्वर्गादुत्पाट्य चामरावतीम् ।
गत्वा विजित्य देवांश्च तस्यै दत्त मिति श्रुतम् ॥ ४४
पुण्यकञ्च कृतं तेन पारिजातेन सुव्रतम् ।
त्वामेव साध्यं कान्तञ्च सम्पूर्णां दक्षिणां ददौ ॥ ४५
ब्रह्मेशशेषासाध्यस्त्वं तया साध्यः कृतः कथम् ।
सर्व्वाभ्यः कामिनीभ्यश्च सत्यभामां विशेषि च ॥ ४६
रुक्मिण्यां प्रेमसौभाग्यमतिरिक्तञ्च गौरवम् ।
भयं मानश्च धन्यायां सत्यायां सततं श्रुतम् ॥ ४७
सत्यं जाम्बवतीकान्त वद माञ्च सुनिश्चितम् ।
तासु सर्व्वासु कान्तासु कस्यां ते प्रेम चाधिकम् ॥४८
शृङ्गारे सर्व्वभावे च तासु का रसिका परा ।
त्वयि स्निग्धा विदग्धा या तासु धन्यातिसुव्रता ॥४९
सा स्त्री भावानुरक्ता या भार्य्या प्रति पतिः स्वयम् ।
प्रेमातिरिक्तं स्त्रीपुंसोस्त्रैलोक्येषु सुदुर्लभम् ॥ ५०
रसिका स्त्री विजानाति सती गुणवती पतिम् ।
गुणज्ञं रसिकं शूरं सुशीलं सुरतौ सदा ॥ ५१
दूराद्धावति पद्मार्थं मधुलोभान्मधुव्रतः ।
भेकस्तन्न हि जानाति तन्मूर्द्ध्नि पादमुत्सृजेत् ॥ ५२
यन्त्री जानाति सङ्गीत-रसं यन्त्रश्च नैव च ।
दुग्धस्वादं विदग्धाश्च न दर्व्वी नैव भाजनम् ॥ ५३
परिपक्वफलास्वादं जानन्ति भोगिनः सुखम् ।
एकत्रावस्थिताः शश्वन्न किञ्चित् फलिनो यथा ॥ ५४
सुशीतलजलास्वादं विजानाति कृषीबलः ।
न च वापी न च घटश्चैकत्र स्थितौ यथा ॥ ५५
भोगिनो हि विजानन्ति शालिस्वादुरसं परम् ।
एकत्रावस्थितश्चेत् तु न क्षेत्रं भाजनं यथा ॥ ५६

बुबुधे चन्दनाघ्राणं चन्दनाघ्राणभोगवित्।
न गर्द्दभो भारवाही न तस्य पाविका यथा॥ ५७
यं न जानन्ति वेदाश्च ब्रह्मेशानादयः सुराः।
योगिनो मुनयः सिद्धास्तं किं जानन्ति योषितः॥५८
सौभाग्यं गौरवं प्रेम दुर्लभं नित्यनूतनम्।
योषितां मत् परं नैव(क)चूर्णीभूतं क्षणेन च॥ ५९
अत्युच्छ्रितो निपतनं प्राप्नोत्येव ध्रुवं प्रभो।
आराद्विपत्तिवीजञ्च वैष्णवानां विहिंसनम्॥ ६०
श्रीदामा च मया शप्तस्त्वद्भक्तो भक्तवत्सल।
एतादृशी विपत्तिर्मे पुत्रश्रीदामशापतः॥ ६१
ईश्वरः कस्य वा बाध्योऽप्रियो वापि प्रियस्तथा।
सन्ततं भक्तिसाध्यश्च यो भक्तश्च तदीश्वरः॥ ६२
वेदाश्च वैदिकाः सन्तः पुराणानि वदन्ति च।
राधाया माधवः साध्यो भगवानिति(ख)निष्फलम्॥ ६३
जित्वा च सगणं शम्भुं वाणस्य भुजकृन्तनम्।
कृत्वा च रुक्मिणीपौत्रः समानीतः सभार्य्यकः॥ ६४
अहो त्वयि समायाते रुक्मिणी किमुवाच ते।
प्रेम स्थितं समानं ते किं ववर्द्ध च गौरवम्॥ ६५
कुरु-पाण्डवयुद्धेन कुरवो निहतास्त्वया।
पाण्डवार्थे तथा भूपा रचिताः परमात्मना॥ ६६
साक्षान्महेन्द्रजातस्य कौन्तेयस्यार्ज्जुनस्य च।
राजमण्डलमध्यस्थो भवानेव हि सारथिः॥ ६७
तेन भक्तेन शुद्धेन भीष्मेण च महात्मना।
लज्जितेनं किमुक्तं ते महतीषु सभासु च॥ ६८
देवैरपि कथं दृष्टं ब्रह्मेशशेषसंज्ञकैः।
भक्तश्रेष्ठैर्मतैः सर्व्वैन चोक्तं किं तदेव च॥ ६९
यस्यानिर्व्वचनीयश्च वेदेषु च चतुर्षु च।
पुराणेष्वितिहासेषु प्रकृतेः पर ईश्वरः॥ ७०
निर्गुणश्च निरीहश्च निर्लिप्तः सर्व्वकर्म्मणाम्।
कर्म्मिणां साक्षिरूपश्च भक्तानुग्रहविग्रहः॥ ७१
परंब्रह्म परंज्योतिः परमेशः परात्परः।
परमात्मा च सर्व्वेषां स्तुतेनैव रथे स्थितम्॥ ७२
त्वया कुब्जा च सम्भुक्ता वृद्धा चन्त्रियकामिणी।
अपुत्रिणी चाधिकाङ्गी यूनास्पृश्या च प्राक्तनात्॥७३
त्वया च निहतः कंसो मातुलः केन हेतुना।

(क) मत् परस्यैव इति क्वाचित्कः पाठः।
(ख) भवानेव हि इति क्वचित् पाठः।

आयास्यामीति कृत्वा च गतं न पुनरागतम्॥ ७४
निहत्य यादवान् सर्व्वान् विभज्य द्वारकापुरीम्।
त्वां निबध्य समानेतुमीश्वरी वारिता जनैः॥ ७५
इत्युक्त्वा राधिका देवी भृशमुच्चै रुरोद सा।
मूर्च्छां सम्प्राप सहसा निर्निश्वासा बभूव ह॥७६
गोप्यो गवाक्षजालस्थाः शुश्रुवुर्ददृशुस्तथा।
दृष्ट्वा तामाययुः सर्व्वा ऊचू राधा मृतेति च॥७७
उच्चैस्ता रुरुदुः सर्व्वाः क्रोड़े कृत्वा च राधिकाम्।
ऊचुस्ता रक्ष रक्षेति हरे नरहरे प्रभो॥ ७८
गोप्य ऊचुः।
किं कृतं किं कृतं कृष्ण त्वया राधा मृता च नः।
राधां जीवय भद्रं ते यास्यामः काननं वयम्।
अन्यथा स्त्रीवधं तुभ्यं दास्यामः सर्व्वयोषितः॥७९
गोपीनां वचनं श्रुत्वा राधिकायाश्च माधवः।
उवाच जीवयामास सुधादृष्ट्या च नारद॥ ८०
उत्तस्थौ राधिका देवी रुदती मानिनी सती।
गोप्यस्तां बोधयामासुः क्रोड़े कृत्वा पुनः पुनः॥८१
श्रीकृष्ण उवाच।
शृणु राधे प्रवक्ष्यामि ज्ञानमाध्यात्मिकं परम्।
यच्छ्रुत्वा बालिको मूर्खः सद्यो भवति पण्डितः॥ ८२
आत्माहं जगतां स्वामी किं रुक्मिण्यादियोषिताम्।
कार्य्यकारणरूपोऽहं व्यक्तो राधे पृथक् पृथक्॥ ८३
एकात्माहञ्च विश्वेषां आत्मा ज्योतिर्म्मयः स्वयम्।
सर्व्वप्राणिषु युक्तो वाप्याब्रह्मादितृणादिषु॥ ८४
एकस्मिंश्च भुक्तवति न तुष्टोऽन्यो जनस्तथा।
मय्यात्मनि गतेऽप्येको मृतोऽप्यन्यश्च जीवति॥ ८५
आत्माहं कृष्णरूपश्च परिपूर्णतमः स्वयम्।
गोलोके गोकुले पुण्य-क्षेत्रे वृन्दावने वने॥ ८६
द्विभुजो गोपवेशश्च त्वया राधापतिः शिशुः।
गोपालैर्गोपिकाभिश्च सहितः कामधेनुभिः॥ ८७
चतुर्भुजोऽहं वैकुण्ठे द्विधारूपः सनातनः।
लक्ष्मी-सरस्वतीकान्तः सन्ततं शान्तविग्रहः॥ ८८
यन्मानसी सिन्धुकन्या मर्त्यलक्ष्मीपतिर्भुवि।
श्वेतद्वीपे च क्षीरोदे तत्रापि च चतुर्भुजः॥ ८९
अहं नारायणर्षिश्च धर्म्मपुत्रः सनातनः।
धर्म्मवक्ता च धर्म्मिष्ठो धर्म्मवर्त्मप्रवर्त्तकः॥ ९०
शान्तिर्लक्ष्मीस्वरूपा च धर्म्मिष्ठा सा पतिव्रता।

अत्र तस्याः पतिरहं पुण्यक्षेत्रे च भारते ॥ ९१
सिद्धेशः सिद्धिदः साक्षात् कपिलोऽहं सतीपतिः।
नानारूपधरोऽहञ्च व्यक्तिभेदेन सुन्दरि ॥ ९२
अहं चतुर्भुजांशश्च द्वारवत्यां रुक्मिणीपतिः।
अहं क्षीरोदशायी च सत्यभामागृहे शुभे ॥ ९३
अन्यासां मन्दिरेऽहञ्च कायव्यूहात् पृथक् पृथक्।
अहं नारायणर्षिश्च फाल्गुनस्य च सारथिः ॥ ९४
स नरर्षिर्धर्म्मपुत्त्रो मदंशो बलवान् भुवि।
तपसाराधितस्तेन सारथ्येऽहञ्च पुष्करे ॥ ९५
यथा त्वं राधिका देवी गोलोके गोकुले तथा।
वैकुण्ठे च महालक्ष्मीर्भवती च सरस्वती ॥ ९६
भवती मर्त्यलक्ष्मीश्च क्षीरोदशायिनः प्रिया।
धर्म्मपुत्त्रवधूस्त्वञ्च शान्तिलक्ष्मीस्वरूपिणी ॥ ९७
कपिलस्य प्रिया कान्ते भारते भवती सती।
द्वारवत्यां महालक्ष्मीभवती रुक्मिणी सती ॥ ९८
सीता त्वं मिथिलायाञ्च त्वच्छाया द्रौपदी सती।
पञ्चानां पाण्डवानाञ्च भवती कमला प्रिया ॥ ९९
रावणेन हृता त्वञ्च त्वं नारायणकामिनी।
नानारूपा यथा त्वञ्च स्वांशेन कलया तथा ॥१००
परिपूर्णतमोऽहञ्च परमात्मा परात्परः।
दिवानिशञ्च त्वत्पार्श्वे पुण्ये वृन्दावने वने ॥ १०१
राधे त्वया न दृष्टोऽहं श्रीदाम्नः शापकारणात्।
मया दृष्टा च भवती सततं प्राणवल्लभा ॥ १०२
अंशेन रुक्मिणीस्थाने कलयान्यसमीपतः।
अन्याः सर्व्वास्त्वत्कलांशास्त्वञ्च प्राणाधिका मम १०३
पुरुषेषु प्रियः शम्भुर्नास्ति तस्मात् परो मम।
त्वत्परा नास्ति योषित्सु प्रिया मम परात्परा ॥१०४
इति ते कथितं सर्व्वमाध्यात्मिकमिदं सति।
राधे सर्व्वापराधं मे क्षमस्व परमेश्वरि ॥ १०५
श्रीकृष्णवचनं श्रुत्वा परितुष्टा च राधिका।
परितुष्टाश्च गोप्यश्च प्रणेमुः परमेश्वरम् ॥ १०६

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायण-नारदसंवादे राधा-कृष्णसंवादे षड्विंशत्यधिक-शततमोऽध्यायः ॥ १२६ ॥

---

## सप्तविंशत्यधिकशततमोऽध्यायः।

नारायण उवाच।

श्रीकृष्णवचनं श्रुत्वा प्रहृष्टा गोपिका मुदा।
मन्दिरं प्रययुः सर्व्वाः प्रणम्य राधिकाप्रभुम् ॥ १
राधा शृङ्गारभावञ्च कलाषोड़शपूर्व्वकम्।
चकार सस्मिता साध्वी वक्रचञ्चललोचना ॥ २
दत्त्वा च चन्दनं माल्यं स्वामिने पुनरेव च।
रहस्यञ्च परीहासं पुनरेव चकार सा ॥ ३
आकृष्य राधिकां कृष्णः समानीय स्ववक्षसि।
ओष्ठाधरं कपोलञ्च गण्डयुग्मं चुचुम्ब च ॥ ४
राधा चचुम्ब कृष्णस्य मुखचन्द्रं मनोहरम्।
चकार कृष्णं प्राणेशं बाहुभ्याञ्च स्ववक्षसि ॥ ५
शृङ्गारं षोड़शविधं कामशास्त्रोक्तमीप्सितम्।
स्त्रीपुंसोस्तोषजननं चकार भगवान् विभुः ॥ ६
नखविक्षतसर्व्वाङ्गा दशनेनाधरक्षता।
पुलकाञ्चितदेहा सा तन्द्रिता वामनस्तना ॥ ७
मूर्च्छिता सुखसम्भोगाद्विनम्रा हतचेतना।
श्वासमात्रावशेषा च निद्रामुद्रितलोचना ॥ ८
रतिशूरा कोमलाङ्गी कान्तवक्षःस्थलस्थिता।
शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे सा सुखशीतला ॥ ९
शृङ्गारकाले सुखदा सान्द्रश्रोणीपयोधरा।
नितम्बभारनम्रा च प्रत्यङ्गसुखदायिका ॥ १०
उवाच परमा सा च परमेशं परात्परम्।
बाहुश्रोणीयुगाभ्याञ्च निबध्य च पुनः पुनः ॥ ११

राधिकोवाच।

रासं गच्छ महाभाग पुण्यं वृन्दावनं वनम्।
तत्र क्रीड़ां करिष्यामि जलेन च स्थलेन च ॥ १२
पुनर्यास्यामि मलयं सुन्दरं मणिमन्दिरम्।
अपरं यद्रहस्यं वा जन्मना न श्रुतं मया।
तत्तद्यामि त्वया सार्द्धमिति मे लालसा परा ॥१३
परस्परैकालापेन प्रययौ रजनी शुभा।
अरुणोदयकालेऽपि न त्यजेन्माधवं सती ॥ १४
माधवः प्रीतिवचसा बोधयामास साधनात्।
प्रातःकृत्यं ततः कृत्वा आरुरोह रथं हरिः।
गोपीभी राधया सार्द्धं शरत्कमललोचनः ॥ १५
योजनायतविस्तीर्णं रत्नैस्त्रिशतकोटिभिः।

मणीन्द्रसारनिर्म्माणैर्ज्वलद्भिरुपशोभितम् ॥ १६
गोलोकादागतं तत्र मनोयायि-मनोहरम् ।
सहस्रचक्रसंयुक्तं सहस्राश्वैः प्रचालितम् ॥ १७
मणिस्तम्भैस्त्रिकोटीभी रत्नराजिविराजितम् ।
मुक्तामाणिक्य-परमैर्हीराहारैः सुशोभितम् ॥ १८
नानाचित्रैर्विचित्रैश्च श्वेतचामरदर्पणैः ।
वह्निशुद्धांशुकैर्दीप्तैर्माल्याजालैर्विभूषितम् ॥ १९
रत्ननिर्म्माणतल्पैश्च पुष्पचन्दनचर्च्चितैः ।
समानरूपवेशैश्च गोपीलक्षैः समावृतम् ॥ २०
रथेन तेन भगवान् पुनर्वृन्दावनं ययौ ।
तत्र गत्वा निशाकाले विजहार जले स्थले ॥ २१
शृङ्गारं सुचिरं कृत्वा वनेषूपवनेषु च ।
राधिकां दर्शयामास यथा सर्व्वञ्च नूतनम् ॥ २२
विस्यन्दके सुरसने महेन्द्रनन्दने वने ।
सुमेरुशिखरे रम्ये पर्व्वते गन्धमादने ॥ २३
सुभद्रे पुष्पभद्रे च नारायणसरोवरे ।
पवनस्यैव निलये मलये च सुरालये ॥ २४
त्रिकूटे भद्रकूटे च पञ्चकूटे सुकुकुटे ।
देवानां कमनीयायां काञ्चन्याञ्च तथैव च ॥ २५
समुद्रे च समुद्रे च द्वीपे द्वीपे मनोहरे ।
खर्व्वरे प्रवरे रम्ये पुण्ये चन्द्रसरोवरे ।
सुपार्श्वे मणिपार्श्वे च स रेमे राधया सह ॥ २६
शीघ्रञ्च पुनरागत्य जम्बूद्वीपञ्च पुण्यदम् ।
द्वारकां दर्शयामास पर्व्वतं रैवतं तथा ॥ २७
गोकुलं पुनरागत्य गोपकुलकसङ्कुलम् ।
तत्र दृष्ट्वा च भाण्डीरं पुण्यं वृन्दावनं ययौ ॥ २८
श्रीकृष्णागमनं श्रुत्वा यशोदा नन्द एव च ।
गोपा गोप्यश्च वृद्धाश्चाप्यश्रुनेत्रा निराकुलाः ॥ २९
वारणेन्द्रं पुरस्कृत्य वेश्याञ्च नटनर्त्तकम् ।
पतिपुत्रवतीं साध्वीं ब्राह्मणं ब्राह्मणीं तथा ॥ ३०
यथा च देवा वह्निं च द्रष्टुं नन्दञ्च मातरम् ।
आययौ बालरूपश्च राधया सह माधवः ॥ ३१
मातुः क्रोड़मारुरोह प्रहस्य मधुसूदनः ।
नन्दो यशोदया सार्द्धं चुचुम्ब मुखपङ्कजम् ॥ ३२
आश्लिष्य भृशसुचैश्च सिषिच नेत्रजैर्जलैः ।
स्वयञ्च भगवान् कृष्णो यशोदायाः स्तनं पपौ ॥ ३३
तादृशं ददृशुः सर्व्वे यादृशो मथुरां ययौ ।
मुरलीहस्तविन्यस्तं रत्नभूषणभूषितम् ॥ ३४
यथैकादशवर्षीयं शोभितं पीतवाससा ।
मयूरपुच्छचूड़ञ्च मालतीमाल्यमण्डितम् ॥ ३५
मन्दिरं वेशयामास राधया सह माधवम् ।
यशोदा मङ्गलं कृत्वा भोजयामास ब्राह्मणम् ॥ ३६
पूजां चकार गोपीनां मुनीनाञ्च यथा च नः ।
मणिरत्नप्रवालञ्च-सुवर्णं परमं तथा ॥ ३७
मुक्ता-माणिक्य-हीरञ्च ब्राह्मणेभ्यो ददौ मुदा ।
गजरत्नं गवां रत्नमश्वरत्नं मनोहरम् ॥ ३८
आसनानि च पात्राणि भूषणानि तथैव च ।
धान्यान्यपि च शस्यानि वस्त्राणि च तथा ददौ ॥ ३९
अपूर्व्वं दर्शयामास राधया सह माधवम् ।
गोपीगणञ्च मिष्टान्नं सादरञ्चापि नारद ॥ ४०
दुन्दुभिं वादयामास कारयामास मङ्गलम् ।
देवांश्च पूजयामास सानन्दञ्च महोत्सवम् ॥ ४१

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे पुनर्वृन्दा-
वनमहोत्सवे यशोदानन्दजननं
नाम सप्तविंशत्यधिकशत-
तमोऽध्यायः॥१२७॥

---

## अष्टाविंशत्यधिकशततमोऽध्यायः ।

नारायण उवाच ।

श्रीकृष्णश्च समाह्वानं गोपानाञ्च चकार सः ।
भाण्डीरे वटमूले च तत्र स्वयमुवास ह ॥ १
पुरान्नञ्च ददौ तस्मै यत्रैव ब्राह्मणीगणः ।
उवास राधिका देवी वामपार्श्वे हरेरपि ॥ २
दक्षिणे नन्दगोपश्च यशोदासहितस्तथा ।
तद्दक्षिणे वृकभानस्तद्वामे सा कलावती ॥ ३
अन्ये गोपाश्च गोप्यश्च बान्धवाः सुहृदस्तथा ।
तानुवाच स गोविन्दो यथार्थ्यं समयोचितम् ॥ ४

श्रीभगवानुवाच ।

शृणु नन्द प्रवक्ष्यामि साम्प्रतं समयोचितम् ।
सत्यञ्च परमार्थञ्च परलोकसुखावहम् ॥ ५
आब्रह्मस्तम्बपर्य्यन्तं भ्रमं सर्व्वं निशामय ।
विद्युद्दीप्तिर्जले रेखा यथा तोयस्य बुद्बुदः ॥ ६

अथुरायां सर्व्वसुक्तं नावशेषञ्च किञ्चन ।
अशोदां बोधयामास राधिका कदलीवने ॥ ७
तदैव सत्यं परमं भ्रमध्वान्तप्रदीपकम् ।
विहाय मिथ्यामायाञ्च स्मर तत् परमं पदम् ॥ ८
जन्म-मृत्यु-जरा-व्याधिहरं हर्षकरं परम् ।
शोकसन्तापहरणं कर्म्ममूलनिकृन्तनम् ॥ ९
मामेव परमं ब्रह्म भगवन्तं सनातनम् ।
ध्यायं ध्यायं पुत्त्रबुद्धिं त्यक्त्वा लभ परं पदम् ।
गोलोकं गच्छ शीघ्रञ्च सार्द्धं गोकुलवासिभिः ॥ १०
आरात् कलेरागमनं कर्म्ममूलनिकृन्तनम् ।
स्त्रीपुंसोर्नियमो नास्ति जातीनाञ्च तथैव च ॥ ११
विप्रसन्ध्यादिकं नास्ति चिह्नं यज्ञोपवीतकम् ।
यज्ञसूत्रञ्च तिलकः शेषे लुप्तः सुनिश्चितम् ॥ १२
दिवा व्यवायनिरतं विरतं धर्म्मकर्म्मणि ।
यज्ञानाञ्च व्रतानाञ्च तपसां लुप्तमेव च ॥ १३
केदारकन्याशापेन धर्म्मोऽस्त्येके हि केवलम् ।
स्वच्छन्दगामिनीस्त्रीणां पतिश्च सततं वशे ॥ १४
ताड़येत् सततं तञ्च भर्त्सयेच्च दिवानिशम् ।
प्राधान्यं स्त्रीकुटुम्बानां स्त्रीणाञ्च सततं व्रज ॥ १५
स्वामी च भक्तस्तासाञ्च पराभूतो निरन्तरम् ।
कलौ च योषितः सर्व्वा जारसेवासु तत्पराः ॥ १६
शतपुत्त्रसमस्नेहो जारेषु योषितां कलौ ।
सस्मिता सकटाक्षा साऽमृतदृष्ट्या निरन्तरम् ॥ १७
जारं पश्यति कामेन विषदृष्ट्या पतिं सदा ।
सततं गौरवं तासां स्नेहश्च जारबान्धवे ॥ १८
पत्ये करप्रहारञ्च नित्यं नित्यं करोति च ।
ददाति तस्मै भक्ष्यञ्च यथा भृत्याय कोपतः ॥ १९
मिष्टान्नं श्रद्धया भक्त्या जाराय प्रददाति च ।
वेशयुक्ता च सततं जारसेवनतत्परा ॥ २०
प्राणा बन्धुर्गतिश्चात्मा कलौ जारश्च योषिताम् ।
लुप्ता चातिथिसेवा च प्रलुप्तं विष्णुसेवनम् ॥ २१
पितॄणामर्च्चनञ्चैव देवानाञ्च तथैव च ।
विष्णु-वैष्णवयोर्द्वेषी सततं मानवो भवेत् ॥ २२
रामहन्त्रोपासकाश्च चतुर्व्वर्णाश्च तत्पराः ।
शालग्रामञ्च तुलसीं कुशगङ्गोदकं तथा ।
न स्पृशेन्मानवो धूर्त्तो स्लेच्छाचाररतः सदा ॥ २३
कारणं कारणानाञ्च सर्व्वेशं सर्व्ववीजकम् ।
सुखमोक्षप्रदं शश्वद्दातारं सर्व्वसम्पदाम् ॥ २४
त्यक्त्वा मां परया भक्त्या क्षुद्रसम्पत्प्रदायिनम् ।
वेदमन्त्रं राममन्त्रं जपेद्विप्रश्च मायया ॥ २५
सनातनी विष्णुमाया वञ्चितञ्च करिष्यति ।
ममाज्ञया भगवती जगताञ्च दुरत्यया ॥ २६
कलेर्दशसहस्राणि मदर्च्चा भुवि तिष्ठति ।
यदर्द्धानि च वर्षाणि गङ्गा भुवनपावनी ॥ २७
तुलसी विष्णुभक्ताश्च यावद्गङ्गादिकीर्त्तनम् ।
पुराणानि च स्वल्पानि तावदेव महीतले ॥ २८
ममार्च्चाकीर्त्तनं नास्ति तदन्ते च कलौ व्रज ।
एकवर्णा भविष्यन्ति वर्णाश्चत्वार एव च ॥ २९
भविष्यन्ति नरा नार्य्यो ह्रस्वाङ्गुष्ठप्रमाणकाः ।
वृद्धाः षोड़शवर्षीयाः पलिताश्च जरातुराः ॥ ३०
सर्व्वे वनं गमिष्यन्ति दुर्भिक्षकरपीड़िताः ।
तत्र दुःखं प्रदास्यन्ति किराता बलिनः शठाः ॥ ३१
पित्रोः सेवा गुरोः सेवा सेवा च देवविप्रयोः ।
विवर्ज्जिता नराः सर्व्वे चातिथीनां तथैव च ॥ ३२
शस्यहीना भवेत् पृथ्वी साऽनावृष्ट्या निरन्तरम् ।
फलहीनोऽपि वृक्षश्च जलहीना सरित् तथा ॥ ३३
वेदहीनो ब्राह्मणश्च बलहीनश्च भूपतिः ।
जातिहीना जनाः सर्व्वे म्लेच्छो भूपो भविष्यति ॥ ३४
भृत्यवत् ताड़येत् तातं पुत्त्रः शिष्यस्तथा गुरुम् ।
कान्तञ्च ताड़येत् कान्ता लुब्धकुक्कुरवद्गृही ॥ ३५
नश्यन्ति सकला लोकाः कलौ शेषे च पापिनः ।
सूर्य्याणामातपात् केचित् जलौघेनापि केचन ॥ ३६
हे वैश्येन्द्र प्रतिकलौ प्रणश्यति वसुन्धरा ।
पुनः सृष्टौ भवेत् सर्व्वं सत्यं वीजं निरन्तरम् ॥ ३७
एतस्मिन्नन्तरे विप्र रथमेकं मनोहरम् ।
चतुर्योजनविस्तीर्णमूर्द्ध्वं च पञ्चयोजनम् ॥ ३८
शुद्धस्फटिकसङ्काशं रत्नेन्द्रसारनिर्म्मितम् ।
अम्लानपारिजातानां मालाजालविभूषितम् ॥ ३९
मणीनां कौस्तुभानाञ्च भूषणेन विभूषितम् ।
अमूल्यरत्नकलसं हीराहारविलम्बितम् ॥ ४०
मनोहरैः परिष्वक्तं सहस्रकोटिमन्दिरैः ।
सहस्रहयचक्राञ्च सहस्रहयघोटकम् ॥ ४१
सूक्ष्मवस्त्राच्छादितञ्च गोपीकोटिभिरावृतम् ।
गोलोकादागतं तूर्णं ददृशुः सहसा व्रजाः ॥ ४२

कृष्णाज्ञया तमारुह्य ययुर्गोलोकमुत्तमम्।
राधा कलावती देवी धन्या चायोनिसम्भवा॥ ४३
गोलोकादागता गोप्यश्चायोनिसम्भवाश्च ताः।
गोपपत्न्यश्च ताः सर्व्वाः स्वशरीरेण नारद॥ ४४
सर्व्वं त्यक्त्वा शरीराणि नश्वराणि सुनिश्चितम्।
गोलोकञ्च ययौ राधा सार्द्धं गोलोकवासिभिः।
ददर्श विरजातीरं नानारत्नविभूषितम्॥ ४५
तदुत्तीर्य्य ययौ विप्र शतशृङ्गञ्च पर्व्वतम्।
नानामणिगणाकीर्णं रासमण्डलमण्डितम्॥ ४६
ततो ययौ कियद्दूरं पुण्यं वृन्दावनं वनम्।
आददर्शाक्षयवटमूर्द्ध्वं त्रिशतयोजनम्॥ ४७
शतयोजनविस्तीर्णं शाखाकोटिसमावृतम्।
रक्तवर्णैः फलैश्चैव स्थूलैरपि विभूषितम्॥ ४८
गोपीकोटिसहस्रैश्च सार्द्धं वृन्दा मनोहरा।
अनुव्रजं सादरञ्च सज्जिता सा समाययौ॥ ४९
अवरुह्य रथात् तूर्णं राधां सा प्रणनाम च।
रासेश्वरीं तां सम्भाष्य प्रविवेश स्वमालयम्॥ ५०
रत्नसिंहासने रम्ये हीराहारसमन्विते।
वृन्दा तां वासयामास पादसेवनतत्परा॥ ५१
सप्तभिश्च सखीभिश्च सेवितां श्वेतचामरैः।
आययुर्गोपिकाः सर्व्वा द्रष्टुं तां परमेश्वरीम्॥५२
नन्दादीनां प्रकल्पेत राधा वासं पृथक् पृथक्।
परमानन्दरूपा सा परमानन्दपूर्व्वकम्।
स्ववेश्मनि महारम्ये प्रतस्थे गोपीभिः सह॥ ५३

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे राधागोलोकगमनं नामाष्टाविंशत्यधिकशततमोऽध्यायः॥ १२८॥

---

## एकोनत्रिंशदधिकशततमोऽध्यायः।

नारायण उवाच।

श्रीकृष्णो भगवांस्तत्र परिपूर्णतमः प्रभुः।
दृष्ट्वा सालोक्यमोक्षञ्च सद्यो गोकुलवासिनाम्॥ १
उवास पञ्चभिर्गोपैर्भाण्डीरे वटमूलके।
ददर्श गोकुलं सर्व्वं गोकुलं व्याकुलं तथा॥ २
अवध्वस्तञ्च व्यस्तञ्च शून्यं वृन्दावनं वनम्।
योगेनामृतदृष्ट्या च कृपया च कृपानिधिः॥ ३
गोपीभिश्च तथा गोपैः परिपूर्णं चकार सः।
उवाच मधुरं वाक्यं हितं नीतञ्च दुर्लभम्॥ ४

श्रीभगवानुवाच।

हे गोपगण हे बन्धो सुखं तिष्ठ स्थिरो भव।
रमणं प्रियया सार्द्धं कुरु वृन्दावने वने॥ ५
सर्व्वः शतायुषा पूर्णो भव सुस्थिरयौवनः।
लक्ष्मीं परम्परीणां त्वं पुत्त्रपौत्त्रीणतां नय॥ ६
प्रणम्य ते ययुः सर्व्वे पुण्यं वृन्दावनं वनम्।
स्त्रीभिर्युवतिभिः सार्द्धं सुरम्यं रासमण्डलम्॥ ७
तदाप्रभृति कृष्णस्य पुण्ये वृन्दावने वने।
अधिष्ठानञ्च सततं यावच्चन्द्रदिवाकरौ॥ ८
तत्राजगाम भाण्डीरं विधाता जगतामपि।
स्वयं शेषश्च धर्म्मश्च भवान्या च भवः स्वयम्॥ ९
सूर्य्यश्चापि महेन्द्रश्च चन्द्रश्चापि हुताशनः।
कुवेरो वरुणश्चैव पवनश्च यमस्तथा॥ १०
ईशानश्चापि देवाश्च वसवोऽष्टौ तथैव च।
सर्व्वे ग्रहाश्च रुद्राश्च मुनयो मनवस्तथा॥ ११
त्वरिताश्चाययुः सर्व्वे यत्रास्ते भगवान् प्रभुः।
प्रणम्य दण्डवद्भूमौ तमुवाच विधिः स्वयम्॥ १२

ब्रह्मोवाच।

परिपूर्णतम ब्रह्म-स्वरूप नित्यविग्रह।
ज्योतिःस्वरूप परम नमोऽस्तु प्रकृतेः पर॥ १३
सुनिर्लिप्त निराकार साकार ध्यानहेतुना।
स्वेच्छामय परंधाम परमात्मन् नमोऽस्तु ते॥१४
सर्व्वकार्य्यस्वरूपेश कारणानाञ्च कारणं।
ब्रह्मेश-शेष-देवेश-दिनेशेश नमोऽस्तु ते॥ १५
सरस्वतीश पद्मेश पार्व्वतीश परात्पर।
हे सावित्रीश राधेश रासेश्वर नमोऽस्तु ते॥ १६
सर्व्वेषामादिभूतस्त्वं सर्व्वः सर्व्वेश्वरस्तथा।
सर्व्वपाता च संहर्त्ता सृष्टिरूप नमोऽस्तु ते॥ १७
त्वत्पादपद्मरजसा धन्या पूता वसुन्धरा।
शून्यरूपा त्वयि गते हे नाथ परमं पदम्॥ १८
यत् पञ्चविंशत्यधिकं वर्षाणां शतकं गतम्।
त्यक्त्वेमां स्वपदं यासि रुदतीं विरहातुराम्॥ १९

महादेव उवाच।

ब्रह्मणा प्रार्थितस्त्वञ्च समागत्य वसुन्धराम्।
भूभारहरणं कृत्वा प्रयासि स्वपदं विभो॥ २०

अद्यैवेयं पृथिवी धन्या सद्यःपूता पदाङ्किता।
वयञ्च मुनयो धन्याः साक्षाद्दृष्ट्वा पदाम्बुजम्॥ २१
ध्यानासाध्यो दुराराध्यो मुनीनामूर्द्ध्वरेतसाम्।
अस्माकमपि यश्चेशः सोऽधुना चाक्षुषो भुवि॥ २२
वासुः सर्व्वनिवासश्च विश्वानि यस्य लोमसु।
देवस्तस्य महाविष्णोर्वासुदेवो महीतले॥ २३
सुचिरं तपसा लब्धं सिद्धेन्द्राणां सुदुर्लभम्।
अत्यादपद्ममतुलं चाक्षुषं सर्व्वजीविनाम्॥ २४
अनन्त उवाच।
त्वमनन्तोऽसि भगवन् नाहं ते च कलांशकः।
विश्वकस्थे क्षुद्रकूर्म्मे मशकोऽहं गजे यथा॥ २५
असंख्यशेषाः कूर्म्माश्च ब्रह्म-विष्णु-शिवात्मकाः।
असंख्यानि च विश्वानि तेषामीशः स्वयं भवान्॥२६
अस्माकमीदृशं नाथ सुदिनं क्व भविष्यति।
स्वप्नादृष्टश्च य ईशः स दृष्टः सर्व्वजीविनाम्॥ २७
नाथ प्रयासि गोलोकं पूतां कृत्वा वसुन्धराम्।
रुदतीं तामनाथाञ्च निमग्नां शोकसागरे॥ २८
देवा ऊचुः।
वेदाः स्तोतुं न शक्ता यं ब्रह्मेशानादयस्तथा।
तमेव स्तवनं किं वा वयं कुर्म्मो नमोऽस्तु ते॥ २९
इत्येवमुक्त्वा देवास्ते प्रययुर्द्वारकां पुरीम्।
तत्रस्थं भगवन्तञ्च द्रष्टुं शीघ्रं मुदान्विताः॥ ३०
अथ ते पञ्च गोपाला ययुर्गोलोकमुत्तमम्।
पृथिवी कम्पिता भीता चलन्तः सप्त सागराः॥ ३१
हतश्रियं द्वारकाञ्च मुक्त्वा च ब्रह्मशापतः।
मूर्त्तिं कदम्बमूलस्थां विवेश राधिकेश्वरः॥ ३२
ते सर्व्वे चेरकायुद्धे निपेतुर्यादवास्तथा।
चितामारुह्य देव्यश्च प्रययुः स्वामिभिः सह॥ ३३
अर्ज्जुनः स्वपुरं गत्वा तमुवाच युधिष्ठिरम्।
स राजा भ्रातृभिः सार्द्धं ययौ स्वर्गञ्च भार्य्यया॥ ३४
दृष्ट्वा कदम्बमूलस्थं तिष्ठन्तं परमेश्वरम्।
देवा ब्रह्मादयस्ते च प्रणेमुर्भक्तिपूर्व्वकम्॥ ३५
तुष्टुवुः परमात्मानं देवं नारायणं प्रभुम्।
श्यामं किशोरवयसं भूषितं रत्नभूषणैः॥ ३६
वह्निशुद्धांशुकाधानं शोभितं वनमालया।
अतीव सुन्दरं शान्तं लक्ष्मीकान्तं मनोहरम्॥ ३७
व्याधास्त्रसंयुतं पाद-पद्मं पाद्मादिवन्दितम्।
दृष्ट्वा ब्रह्मादिदेवांस्तानभयं स्मितं ददौ॥ ३८
पृथिवीं तां समाश्वास्य रुदतीं प्रेमविह्वलाम्।
व्याधं प्रस्थापयामास परं स्वपदमुत्तमम्॥ ३९
बलस्य तेजः शेषे च विवेश परमाद्भुतम्।
प्रद्युम्नस्य च कामे चैवानिरुद्धस्य ब्रह्मणि॥ ४०
अयोनिसम्भवा देवी महालक्ष्मीश्च रुक्मिणी।
वैकुण्ठं प्रययौ साक्षात् स्वशरीरेण नारद॥ ४१
सत्यभामा पृथिव्याञ्च विवेश कमलाकला।
स्वयं जाम्बवती देवी पार्व्वत्यां विश्वमातरि॥४२
या या देव्यश्च यासाञ्चांशस्वरूपाश्च भूतले।
तस्यां तस्यां प्रविविशुस्ता एव च पृथक् पृथक्॥ ४३
शाम्बस्य तेजः स्कन्दे च विवेश परमाद्भुतम्।
कश्यपे वसुदेवस्याप्यदित्यां देवकी तथा॥ ४४
रुक्मिणीमन्दिरं त्यक्त्वा समस्तां द्वारकां पुरीम्।
स जग्राह समुद्रश्च प्रफुल्लवदनेक्षणः॥ ४५
लवणोदः समागत्य तुष्टाव पुरुषोत्तमम्।
रुरोद तद्वियोगेन साश्रुनेत्रश्च विह्वलः॥ ४६
गङ्गा सरस्वती पद्मा-वती च यमुना तथा।
गोदावरी स्वर्णरेखा कावेरी नर्म्मदा मुने॥ ४७
शरावती बाहुदा च कृतमाला च पुण्यदा।
समाययुश्च ताः सर्व्वाः प्रणेमुः परमेश्वरम्॥ ४८
उवाच जाह्नवी देवी रुदती परमेश्वरम्।
साश्रुनेत्रातिदीना सा विरहज्वरकातरा॥ ४९
भागीरथ्युवाच।
हे नाथ रमणश्रेष्ठ यासि गोलोकमुत्तमम्।
अस्माकं का गतिर्नाथ भविष्यति कलौ युगे॥ ५०
श्रीभगवानुवाच।
कलेः पञ्च सहस्राणि वर्षाणि तिष्ठ भूतले।
पापानि पापिनो यानि तुभ्यं दास्यन्ति स्नानतः॥५१
मन्मन्त्रोपासकस्पर्शाद्भस्मीभूतानि तत्क्षणात्।
भविष्यन्ति दर्शनाच्च स्नानादेव हि जाह्नवि॥५२
हरेर्नामानि यत्रैव पुराणानि भवन्ति हि।
तत्र गत्वा सावधानमाभिः सार्द्धञ्च श्रोष्यसि॥ ५३
पुराणश्रवणाच्चैव हरेर्नामानुकीर्त्तनात्।
भस्मीभूतानि पापानि भविष्यन्ति क्षणेन च॥ ५४
यानि कानि च पापानि ब्रह्महत्यादिकानि च।
भस्मीभूतानि तान्येव वैष्णवालिङ्गनेन च॥ ५५

तृणानि शुष्ककाष्ठानि दहन्ति पावको यथा ।
तथा हि वैष्णवालापे पापानि पापिनामपि ॥ ५६
पृथिव्यां यानि तीर्थानि पुण्यान्यपि च जाह्नवि ।
मद्भक्तानां शरीरेषु सन्ति पूतेषु सन्ततम् ॥ ५७
मद्भक्तपादरजसा सद्यःपूता वसुन्धरा ।
सद्यःपूतानि तीर्थानि सद्यःपूतं जगत् तथा ॥ ५८
मन्मन्त्रोपासका विप्रा ये मदुच्छिष्टभोजिनः ।
मामेव नित्यं ध्यायन्ते ते मत्प्राणाधिकाः प्रियाः ॥५९
तदुपस्पर्शमात्रेण पूतो वायुश्च पावकः ।
कलेर्दश सहस्राणि मद्भक्ताः सन्ति भूतले ॥ ६०
एकवर्णा भविष्यन्ति मद्भक्तेषु गतेषु च ।
मद्भक्तशून्या पृथ्वी सा कलिग्रस्ता भविष्यति ॥ ६१
एतस्मिन्नन्तरे तत्र कृष्णदेहाद्विनिर्गतः ।
चतुर्भुजश्च पुरुषः शतचन्द्रसमप्रभः ॥ ६२
शङ्ख-चक्र-गदा-पद्मधरः श्रीवत्सलाञ्छनः ।
सुन्दरं रथमारुह्य क्षीरोदं स जगाम ह ॥ ६३
सिन्धुकन्या च प्रययौ स्वयं मूर्त्तिमती सती ।
श्रीकृष्णमनसा जाता मर्त्त्यलक्ष्मीर्मनोहरा ॥ ६४
श्वेतद्वीपं गते विष्णौ जगत्पालनकर्त्तरि ।
शुद्धसत्त्वस्वरूपे च द्विधारूपो बभूव सः ॥ ६५
दक्षिणाङ्गश्च द्विभुजो गोपबालकरूपकः ।
नवीनजलदश्यामः शोभितः पीतवाससा ॥ ६६
श्रीवंशीवदनः श्रीमान् सस्मितः पद्मलोचनः ।
शतकोटीन्दुसौन्दर्य्यं शतकोटिस्मरप्रभाम् ॥ ६७
दधानः परमानन्दः परिपूर्णतमः प्रभुः ।
परंब्रह्म परंधामस्वरूपो निर्गुणः स्वयम् ॥ ६८
परमात्मा च सर्व्वेषां भक्तानुग्रहविग्रहः ।
नित्यदेही च भगवान् पुरुषः प्रकृतेः परः ॥ ६९
योगिनो यं वदन्त्येव ज्योतीरूपं सनातनम् ।
ज्योतिरभ्यन्तरे नित्य-रूपं भक्ता वदन्ति यम् ॥७०
वेदा वदन्ति सत्यं यं नित्यमाद्यं विचक्षणाः ।
यं वदन्ति सुराः सर्व्वे परं स्वेच्छामयं विभुम् ॥७१
सिद्धेन्द्रा मुनयः सर्व्वे सर्व्वरूपं वदन्ति यम् ।
यमनिर्व्वचनीयञ्च योगीन्द्रः शङ्करो वदेत् ॥ ७२
स्वयं विधाता प्रवदेत् कारणानाञ्च कारणम् ।
शेषो वदेदनन्तं यं नवधारूपमीश्वरम् ॥ ७३
दर्शनानाञ्च षण्णाञ्च षड्विधं रूपमीप्सितम् ।
वैष्णवानामेकरूपं वेदानामेकमेव च ।
पुराणानामेकरूपं तस्मान्नवविधं स्मृतम् ॥ ७४
न्यायोऽनिर्व्वचनीयञ्च यं मतं शङ्करो वदेत् ।
नित्यं वैशेषिकाश्चाद्यं तं वदन्ति विचक्षणाः ॥ ७५
सांख्यो वदति तं वेदं ज्योतीरूपं सनातनम् ।
मीमांसा सर्व्वरूपञ्च वेदान्तः सर्व्वकारणम् ॥ ७६
पातञ्जलोऽप्यनन्तञ्च वेदाः सत्यस्वरूपकम् ।
स्वेच्छारूपं पुराणञ्च भक्ताश्च नित्यविग्रहम् ॥ ७७
स्वयं गोलोकनाथश्च राधेशो नन्दनन्दनः ।
गोकुले गोपवेशश्च पुण्ये वृन्दावने वने ॥ ७८
चतुर्भुजश्च वामांशो महालक्ष्मीपतिः स्वयम् ।
नारायणश्च भगवान् यन्नाम मुक्तिकारणम् ॥ ७९
सकृन्नारायणेत्युक्त्वा पुमान् कल्पशतत्रयम् ।
गङ्गादि-सर्व्वतीर्थेषु स्नातो भवति नारद ॥ ८०
सुनन्द-नन्द-कुमुदैः पार्षदैः परिवारितः ।
शङ्ख-चक्र-गदा-पद्मधरः श्रीवत्सलाञ्छनः ॥ ८१
कौस्तुभेन मणीन्द्रेण भूषितो वनमालया ।
देवैः स्तुतश्च यानेन वैकुण्ठं स्वपदं ययौ ॥ ८२
गते वैकुण्ठनाथे च राधेशश्च स्वयं प्रभुः ।
चकार वंशीशब्दञ्च त्रैलोक्यमोहनं परम् ॥ ८३
मूर्च्छां प्रापुश्च देवास्ते मुनयश्चापि नारद ।
अचेतना बभूवुश्च मायया पार्व्वतीं विना ॥ ८४
उवाच पार्व्वती देवी भगवन्तं सनातनम् ।
विष्णुमाया भगवती सर्व्वरूपा सनातनी ॥ ८५
परब्रह्मस्वरूपा या परमात्मस्वरूपिणी ।
सगुणा निर्गुणा सा च परा स्वेच्छामयी सती ॥८६

पार्व्वत्युवाच ।

एकाहं राधिकारूपा गोलोके रासमण्डले ।
रासशून्यञ्च गोलोकं परिपूर्णं कुरु प्रभो ॥ ८७
गच्छ त्वं रथमारुह्य मुक्तामालाविभूषितम् ।
परिपूर्णतमाहञ्च तव वक्षःस्थलस्थिता ॥ ८८
तवाज्ञया महालक्ष्मीरहं वैकुण्ठवासिनी ।
सरस्वती च तत्रैव वामपार्श्वे हरेरपि ॥ ८९
तवाहं मनसा जाता सिन्धुकन्या तवाज्ञया ।
सावित्री वेदमाताहं कलया विधिसन्निधौ ॥ ९०
तेजःसु सर्व्वदेवानां पुरा सत्ये तवाज्ञया ।
अधिष्ठानं कृतं तत्र धृतं दिव्यं शरीरकम् ॥ ९१

शुम्भादयश्च दैत्याश्च निहताश्चावलीलया।
दुर्गं निहत्य दुर्गाहं त्रिपुरा त्रिपुरे वधे॥ ९२
निहत्य रक्तवीजञ्च रक्तवीजविनाशिनी।
तवाज्ञया दक्षकन्या सती सत्यस्वरूपिणी॥ ९३
योगेन त्यक्त्वा देहञ्च शैलजाहं तवाज्ञया।
त्वया दत्ता शङ्कराय गोलोके रासमण्डले॥ ९४
विष्णुभक्तिरहं तेन विष्णुमाया च वैष्णवी।
नारायणस्य मायाहं तेन नारायणी स्मृता॥ ९५
कृष्णप्राणाधिकाहञ्च प्राणाधिष्ठातृदेवता।
महाविष्णोश्च वासोश्च जननी राधिका स्वयम्॥ ९६
तवाज्ञया पञ्चधाहं पञ्चप्रकृतिरूपिणी।
कलाकलांशयाहञ्च देवपत्न्यो गृहे गृहे॥ ९७
शीघ्रं गच्छ महाभाग तत्राहं विरहातुरा।
गोपीभिः सहिता वासं भ्रमन्ती परितः सदा॥ ९८
पार्व्वतीवचनं श्रुत्वा प्रहस्य रसिकेश्वरः।
रत्नयानं समारुह्य ययौ गोलोकमुत्तमम्॥ ९९
पार्व्वती बोधयामास स्वयं देवगणं तथा।
मायावंशीरवच्छन्नं विष्णुमाया सनातनी॥ १००
कृत्वा ते हरिशब्दञ्च स्वगृहं विस्मयं ययुः।
शिवेन सार्द्धं दुर्गा सा प्रहृष्टा स्वपुरं ययौ॥ १०१
अथ कृष्णं समायान्तं राधा गोपीगणैः सह।
अनुव्रजं ययौ हृष्टा सर्व्वज्ञा प्राणवल्लभम्॥ १०२
दृष्ट्वा समीपमायान्तमवरुह्य रथात् सती।
प्रणनाम जगन्नाथं शिरसा भक्तिभिः सह॥ १०३
गोपा गोप्यश्च मुदिताः प्रफुल्लवदनेक्षणाः।
दुन्दुभिं वादयामासुरीश्वरागमनोत्सुकाः॥ १०४
विरजाञ्च समुत्तीर्य्य दृष्ट्वा राधां जगत्पतिः।
अवरुह्य रथात् तूर्णं गृहीत्वा राधिकाकरम्॥ १०५
शतशृङ्गञ्च बभ्राम सुरम्यं रासमण्डलम्।
दृष्ट्वाक्षयवटं पुण्यं रम्यं वृन्दावनं ययौ॥ १०६
तुलसीकाननं दृष्ट्वा प्रययौ मालतीवनम्।
वामे कृत्वा कुन्दवनं माधवीकाननं तथा॥ १०७
चकार दक्षिणे कृष्णश्चम्पकारण्यमीप्सितम्।
चकार पश्चात् तूर्णञ्च चारुचन्दनकाननम्॥ १०८
ददर्श पुरतो रम्यं राधिकाभवनं परम्।
उवास राधया सार्द्धं रत्नसिंहासने वरे॥ १०९
सकर्पूरञ्च ताम्बूलं बुभुजे वासितं जलम्।
सुष्वाप पुष्पतल्पे च सुगन्धिचन्दनार्च्चिते।
स रेमे रामया सार्द्धं निमग्नो रससागरे॥ ११०
इत्येवं कथितं सर्व्वं धर्म्मवक्त्राच्च यच्छ्रुतम्।
गोलोकारोहणं रम्यं किं भूयः श्रोतुमिच्छसि॥ १११

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-
खण्डे नारायण-नारदसंवादे गोलोका-
रोहणं नामैकोनत्रिंशदधिक-
शततमोऽध्यायः॥ १२९॥

---

## त्रिंशदधिकशततमोऽध्यायः।

नारद उवाच।

सर्व्वं श्रुतं महाभाग नावशेषमभीप्सितम्।
किमपूर्व्वं पुराणञ्च ब्रह्मवैवर्त्तमिष्टदम्॥ १
अधुना किं करिष्यामि तन्मां ब्रूहि जगद्गुरो।
आज्ञां कुरु तपस्याञ्च कर्त्तुं यामि हिमालयम्॥ २

नारायण उवाच।

उपवर्हणगन्धर्व्वः पञ्चाशत्कामिनीपतिः।
जन्मान्तरे भवानासीदधुना ब्रह्मपुत्त्रकः॥ ३
वाल्केका च सती रम्या तपसा शङ्करं परम्।
आराध्य च वरं लेभे वाञ्छितं नारदं प्रति॥ ४
सा च सृञ्जयकन्या च स्वर्णग्रीवा महोदरा।
तां विवाहं कुरुष्वेति शङ्कराज्ञा कथं वृथा॥ ५
सुन्दरीं सुन्दरीष्वेव कोमलां कमलाकलाम्।
पतिव्रतां महाभागां रम्यां सुप्रियवादिनीम्॥ ६
कामुकीं कमनीयाञ्च शश्वत्सुस्थिरयौवनाम्।
विधात्रा लिखितं कर्म्म प्राक्तनं केन वार्य्यते॥ ७
माभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम्॥ ८

सूत उवाच।

नारायणवचः श्रुत्वा हृदयेन विदूयता।
प्रणम्य प्रययौ शीघ्रं नारदः सृञ्जयालयम्॥ ९

शौनक उवाच।

अहो सूत महाभाग श्रुतं किं परमाद्भुतम्।
किमपूर्व्वं रहस्यञ्च सरसञ्च पुरातनम्॥ १०
अधुना श्रोतुमिच्छामि विवाहं नारदस्य च।
अतीन्द्रियस्य च मुनेर्ब्रह्मपुत्त्रस्य साम्प्रतम्॥ ११

सूत उवाच।

नारदोऽनूढरूपश्च दृष्ट्वा सृञ्जयकन्यकाम्।
तपस्विनीं महाभागां विष्णुव्रतपरायणाम्॥ १२
ययौ ब्रह्मसभां रम्यां सर्व्वदेवैः समावृताम्।
प्रणम्य पितरं शान्तः सर्व्वतत्त्वमुवाच तम्॥ १३
ब्रह्मा प्रहृष्टवदनः श्रुत्वा वार्त्तां शुभावहाम्।
स तु वाग्यतपुत्रञ्च(क) सम्प्राप्य जगतां पतिः॥१४
रत्ननिर्म्माणयानेन सार्द्धं देवैः शुभक्षणे।
पुत्रं कृत्वा च पुरतो ययौ सृञ्जयमन्दिरम्॥ १५
तच्छ्रुत्वा सृञ्जयो राजा रत्नभूषणभूषिताम्।
गृहीत्वा कन्यकां रम्यां नारदाय ददौ मुदा॥ १६
सर्व्वस्वं दक्षिणां दत्त्वा मणिमुक्तादिकं तथा।
पुटाञ्जलिपुटो भूत्वा प्रतीहारं चकार सः॥ १७
कन्यां समर्प्य ब्रह्माणं राजा च योगिनां वरः।
सरोद भृशमुच्चैश्च वत्से वत्स इतीरितम्॥ १८
क्व यासि त्यक्त्वा मद्गेहं शून्यं कमललोचने।
अहं यामि वनं घोरं त्वां त्यक्त्वा जीवितो मृतः॥१९
प्रणम्य पितरं कन्या रुदन्तं मातरं तथा।
रुदन्तीं तां रुदन्ती साप्यारुरोह रथं विधेः॥२०
गृहीत्वा च सभार्य्यं तं पुत्रं धाता मुदान्वितः।
प्रययौ ब्रह्मलोकञ्च देवेन्द्रैर्मुनिभिः सह॥ २१
ब्राह्मणान् भोजयामास साङ्गे मङ्गलकर्म्मणि।
देवानपि च सिद्धांश्च वादयामास दुन्दुभिम्॥ २२
नारदस्तु मुनिश्रेष्ठो बाधितः पूर्व्वकर्म्मणा।
यस्य यत् प्राक्तनं विप्र तत् केन विनिवार्य्यते॥ २३
सुरम्ये पुष्पतल्पे च सुगन्धिचन्दनार्च्चिते।
स रेमे रामया सार्द्धं बुबुधे न दिवानिशम्॥ २४
एवं कृत्वा विहारञ्च विरतो मुनिसत्तमः।
उवास ब्रह्मलोके स वटमूले मनोहरे॥ २५
तत्राजगाम नग्नश्च प्रज्वलन् ब्रह्मतेजसा।
सनत्कुमारो भगवान् साक्षाच्च बालको यथा॥ २६
स्रष्टेः पूर्व्वञ्च वयसा तथैवं पञ्चहायनः।
अचूड़ोऽनुपवीतश्च वेदसन्ध्याविहीनकः॥ २७
कृष्णेति मन्त्रं जपति यस्य नारायणो गुरुः।
अनन्तकल्पकालञ्च भ्रातृभिश्च त्रिभिः सह॥ २८
वैष्णवानामग्रणीर्यो ज्ञानिनाञ्च गुरोर्गुरुः।
आराद्दृष्ट्वा नारदस्तं भ्रातरञ्च सतां वरम्॥ २९
सहसा शिरसा भूमौ दण्डवत् प्रणनाम तम्।
उवाच नारदं बालः प्रहस्य परमार्थकम्॥ ३०

सनत्कुमार उवाच।

अयि भ्रातः किं करोषि कुशलं युवतीपते।
स्त्रीपुंसोर्वर्द्धते प्रेम नित्यं तन्नित्यनूतनम्॥ ३१
परमात्मध्यानशून्यं भक्तिद्वारकपाटकम्।
मोक्षमार्गव्यवहितं चिरं बन्धनकारणम्॥ ३२
गर्भवासस्य वीजञ्च परं नरककारणम्।
पीयूषबुद्ध्या गरलं भुङ्क्ते पापी नराधमः॥ ३३
परं नारायणं त्यक्त्वा यस्यापि विषये मनः।
स वञ्चितो मायया चामृतं त्यक्त्वा विषं भजेत्॥ ३४
सर्व्वेषां कर्म्मभोगोऽस्ति कर्म्मिणामीश्वरं विना।
वयं विधातुः पुत्राश्च अस्माकमपि देहिनाम्॥ ३५
यदि ते नास्ति भोगश्च कथं गन्धर्व्वजन्म च।
कथं दासीसुतत्वञ्च मुक्तश्च मुक्तसङ्गतः॥ ३६
निर्गच्छ तपसे भ्रातस्त्यज मायामयीं प्रियाम्।
सुपुण्ये भारते वर्षे तपसा भज माधवम्॥ ३७
स्थिते नारायणे स्वामिं परे स्वपददातरि।
विषयी विषयासक्तो वञ्चितो मायया ध्रुवम्॥ ३८
गृहाण मम मन्त्रञ्च कृष्ण इत्यक्षरद्वयम्।
सर्व्वेषामेव मन्त्राणां सारात्सारं परात्परम्॥ ३९
सर्व्वेषु च पुराणेषु वेदेषु च चतुर्षु च।
धर्म्मशास्त्रेषु नास्त्येव कृष्णमन्त्रात् परो मनुः॥ ४०
नारायणेन दत्तो मे पुष्करे सूर्य्यपर्व्वणि।
असंख्यकल्पं जप्त्वाहं भ्रमामि सर्व्वपूजितः॥ ४१

सूत उवाच।

इत्युक्त्वा स्नापयित्वा तं ददौ तस्मै परं मनुम्।
दिवानिशं स जपति पूतया मणिमालया॥ ४२
तस्मै शुभाशिषं दत्त्वा मन्त्रञ्च वैष्णवाग्रणीः।
गोलोकं प्रययौ द्रष्टुं भगवन्तं सनातनम्॥ ४३
नारदस्तु मनुं प्राप्य सर्व्वसिद्धिकरं परम्।
श्रीकृष्णे निश्चलाभक्तिप्रदं कर्म्मनिकृन्तनम्।
त्यक्त्वा मायामयीं भार्य्यां भारतं तपसे ययौ॥ ४४
कृतमालानदीतीरे ददर्श शङ्करं परम्।
दृष्ट्वा च सहसा मूर्द्ध्ना प्रणनाम शिवं मुनिः।
तमुवाच जगन्नाथो भक्तञ्च भक्तवत्सलः॥ ४५

(क) स वाग्यतः स्वपुत्रञ्चेति पाठान्तरम्।

महादेव उवाच।

अहो नारद दृष्ट्वा त्वां प्रसन्नोऽहं सुचेतसा।
भक्तानां दर्शनं तत्र वाञ्छितं तच्छरीरिणाम्॥ ४६
अयं हि परमो लाभो देहिनां भक्तसङ्गमः।
स स्नातः सर्व्वतीर्थेषु यो ददर्श च वैष्णवम्॥ ४७
त्वया प्राप्तो महामन्त्रः सर्व्वतन्त्रसुदुर्लभः।
मया दत्तो गणेशाय स्कन्दाय स्वात्मजाय च॥ ४८
मह्यं दत्तश्च गोलोके कृष्णेन रासमण्डले।
ब्रह्मणे चापि धर्म्माय धर्म्मो नारायणर्षये॥ ४९
ब्रह्मा सनत्कुमाराय तुभ्यं दत्तश्च तेन वै।
मन्त्रग्रहणमात्रेण जनो नारायणो भवेत्॥ ५०
विचारणञ्च नास्त्यत्र कालाकालं शुभाशुभम्।
प्रह्लादजपेनैव पुरश्चरणमस्य च॥ ५१
ध्यानञ्च सामवेदोक्तं तेन ध्यायेच्च वैष्णवः।
ध्यानञ्च पापदहनं कर्म्ममूलनिकृन्तनम्॥ ५२
कृष्णं नवघनश्यामं किशोरं पीतवाससम्।
शतकोटीन्दुसौन्दर्य्यं दधानमतुलं परम्॥ ५३
कोटिकन्दर्पलावण्य-लीलाधाम मनोहरम्।
भूषितं भूषणैर्दिव्यैरमूल्यरत्ननिर्म्मितैः॥ ५४
चन्दनोक्षितसर्व्वाङ्गं कौस्तुभेन विराजितम्।
मयूरपुच्छचूडञ्च मालतीमाल्यमण्डितम्॥ ५५
ईषद्धास्यप्रसन्नास्यं नित्योपास्यं शिवादिभिः।
ध्यानासाध्यं दुराराध्यं निर्गुणं प्रकृतेः परम्॥ ५६
सर्व्वेषां परमात्मानं भक्तानुग्रहविग्रहम्।
वेदानिर्व्वचनीयं तं वरं सर्व्वेश्वरं भजेत्॥ ५७
ध्यानेनानेन तं ध्यात्वा भगवन्तं सनातनम्।
अज त्वं परमं ब्रह्म सत्यं सत्यं परात्परम्॥ ५८
इत्युक्त्वा स्वपदं शम्भुर्जगाम परमेश्वरः।
तं प्रणम्य जगन्नाथं नारदस्तपसे ययौ॥ ५९
नारदः श्रीहरिं स्मृत्वा योगी त्यक्त्वा कलेवरम्।
विलीनः पादपद्मे च पाद्मपद्मार्च्चिते हरेः॥ ६०

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे सौति-शौनकसंवादे नारदप्रकरणं नाम त्रिंशदधिकशततमोऽध्यायः॥ १३०॥

---

## एकत्रिंशदधिकशततमोऽध्यायः।

शौनक उवाच।

अत्यपूर्व्वमुपाख्यानं श्रुतं किं परमाद्भुतम्।
सुगोप्यञ्च सुगोप्यञ्च रम्यं रम्यं नवं नवम्॥
किमनिर्व्वचनीयञ्च कमनीयं मनोहरम्॥ १
सुदुर्लभा कथा प्रोक्ता पुराणेषु पुरातनी।
एवम्भूतञ्च सुदिनं कदास्माकं भविष्यति।
तज्जन्म सफलं धन्यं यत्र वैष्णवसङ्गमः॥ २
गर्भवासोच्छेदनञ्च कर्म्ममूलनिकृन्तनम्।
हरिदास्यप्रदं शुद्धं भक्तानां भक्तिवर्द्धनम्॥ ३
असाधुसङ्गदुर्बुद्धि-पापोन्मूलनकारणम्।
गणेशजन्मोपाख्यानं किमपूर्व्वं श्रुतं परम्॥ ४
तुलसी-राधिकाख्यानं किमपूर्व्वं श्रुतं परम्।
अन्यद्यद्यद्गोपनीयं व्यक्तमव्यक्तमीप्सितम्।
सर्व्वं श्रुतं महाभाग परिपूर्णं मनो मम॥ ५
अधुना श्रोतुमिच्छामि वह्नेरुत्पत्तिमीप्सिताम्।
स्वर्णस्य च महाभाग तन्मां व्याख्यातुमर्हसि॥ ६

सूत उवाच।

सामग्रीकरणं सृष्टेर्जलमेव हुताशनः।
यथैव प्रकृतिर्नित्या महानेव तथैव च॥ ७
यथा दिशो महाकाशो यथैवं सृष्टिगोलकः।
प्रकृतेर्महतस्तस्माद्यथाहङ्कार एव च॥ ८
यथैव रूपतन्मात्रं रसतन्मात्रमेव च।
यथैव शब्दतन्मात्रं तथैव च हुताशनः।
तथापि तत्समुत्पत्तिं कथयामि निशामय॥ ९
एकदा सृष्टिकाले च ब्रह्मानन्त-महेश्वराः।
श्वेतद्वीपे ययुः सर्व्वे द्रष्टुं विष्णुं जगत्पतिम्॥ १०
परस्परञ्च सम्भाषां कृत्वा सिंहासनेषु च।
ऊषुः सर्व्वे सभामध्ये सुरम्ये पुरतो हरेः॥ ११
विष्णुगात्रोद्भवास्तत्र कामिन्यः कमलाकलाः।
तत्र नृत्यन्ति गायन्ति विष्णुगाथाश्च सुन्दरम्॥ १२
तासाञ्च कठिनां श्रोणीं कठिनं स्तनमण्डलम्।
सस्मितं मुखपद्मञ्च दृष्ट्वा ब्रह्मा सकामुकः॥ १३
मनो निवारणं कर्त्तुं न शशाक पितामहः।
वीर्य्यं पपात चक्षुद्रात् लज्जया वाससा भुवि॥ १४
तद्वीर्य्यं वस्त्रसहितं प्रतप्तं कामतापतः।

क्षीरोदे प्रेरयामास सङ्गीते विरते द्विज ॥ १५
जलादुत्थाय पुरुषः प्रज्वलन् ब्रह्मतेजसा।
उवास ब्रह्मणः क्रोड़े लज्जितस्य च संसदि ॥ १६
एतस्मिन्नन्तरे रुष्टो जलादुत्थाय सत्वरः।
प्रणम्य वरुणो देवान् बालं नेतुं समुद्यतः ॥ १७
बालो दधार ब्रह्माणं कण्ठश्चाश्च भयाद्रुदन्।
किञ्चिन्नोवाच जगतां विधाता लज्जया द्विज ॥ १८
बालकस्य करं धृत्वा चकार कर्षणं रुषा।
वरुणश्च सभामध्ये तं चिक्षेप प्रजापतिः ॥ १९
पपात दूरतो देवो वरुणो दुर्ब्बलस्ततः।
मूर्च्छां सम्प्राप मृतवत् कोपदृष्ट्या विधेरहो ॥ २०
चेतनं कारयामासाम्रतदृष्ट्या च शङ्करः।
सम्प्राप्य चेतनां तत्र तमुवाच जलेश्वरः ॥ २१

वरुण उवाच।

बालो जले समुद्भूतो मम पुत्त्रोऽयमीप्सितम्।
अहं गृहीत्वा यास्यामि ब्रह्मा मां ताड़येत् कथम् ॥ २२

ब्रह्मोवाच।

बालकः शरणापन्नो मम विष्णो महेश्वर।
कथं त्यक्ष्यामि भीतञ्च रुदन्तं शरणागतम् ॥ २३
शरणागतञ्च दीनार्त्तं यो न रक्षेदप्रष्ठितः।
पच्यते नरके तावद्यावच्चन्द्रदिवाकरौ ॥ २४
उभयोर्वचनं श्रुत्वा प्रहस्य मधुसूदनः।
उवाच तत्र सर्व्वज्ञः सर्व्वेशश्च यथोचितम् ॥ २५

श्रीभगवानुवाच।

दृष्ट्वा सुकामिनीश्रोणीं ... वीर्य्यं धातुः पपात यत्।
लज्जया प्रेरयामास क्षीरोदे निर्म्मले जले ॥ २६
ततो बभूव बालश्च धर्म्मतो विधिपुत्त्रकः।
क्षेत्रजश्च सुतः शास्त्रे वरुणस्यापि गौणतः ॥ २७

महादेव उवाच।

यो विद्यायोनिसम्बन्धो वेदेषु च निरूपितः।
शिष्ये पुत्त्रे च समता चेति वेदविदो विदुः ॥ २८
मन्त्रं ददातु वरुणो विद्याञ्च बालकाय च।
पुत्त्रो विधातुर्वह्निश्च शिष्यश्च वरुणस्य च ॥ २९
विष्णुर्ददातु बालाय दाहिकां शक्तिमुत्तमाम्।
सर्व्वदग्धो हुताशश्च निर्व्वाणो वरुणेन च ॥ ३०
विष्णुश्च दाहिकां शक्तिं ददौ तस्मै शिवाज्ञया।
मन्त्रं विद्याञ्च वरुणो रत्नमालां मनोहराम् ॥ ३१
क्रोड़े कृत्वा च तं बालं चुचुम्ब मायया सुरः।
ब्रह्मणे च ददौ साक्षाद्विष्णुशङ्करयोरपि ॥ ३२
प्रणम्य विष्णुं ब्रह्मा च ययौ शम्भुः स्वमन्दिरम्।
अग्न्युत्पत्तिश्च कथिता स्वर्णोत्पत्तिं निशामय ॥ ३३
एकदा सर्व्वदेवाश्च सम्भूष्य स्वर्गसंसदि।
तत्र गत्वा च नृत्यन्ति गायन्त्यप्सरसोऽङ्गनाः ॥ ३४
विलोक्य रम्भां सुश्रोणीं सकामो वह्निदेव च।
पपात वीर्य्यं वस्त्राद लज्जया वाससा तथा ॥ ३५
तत्रस्थः स्वर्णपुञ्जश्च वस्त्रं छित्वा ज्वलत्प्रभः।
क्षणेन वर्द्धयामास स सुमेरुर्बभूव ह ॥ ३६
हिरण्यरेतसं वह्निं प्रवदन्ति मनीषिणः।
इति ते कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि ॥ ३७

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्ण-
जन्मखण्डे सौति-शौनकसंवादे वह्नि-
सुवर्णोत्पत्तिर्नामैकत्रिंशदधिक-
शततमोऽध्यायः ॥ १३१ ॥

---

## द्वात्रिंशदधिकशततमोऽध्यायः।

शौनक उवाच।

श्रुतं सर्व्वं नावशेषं धर्म्मश्च सूत त... ।
कथयस्व महाभाग ... पुराणं पुनरेव च ॥ १
एवं ... पुराणञ्च जन्मनैव न हि श्रुतम्।
न दृष्टं न श्रुतं तात त्वादृशं वाचकं तथा ॥ २

सूत उवाच।

श्रूयतां भो महाभाग सावधानञ्च संयतम्।
अध्यायश्रवणेनैव पुराणफलमालभेत्। ॥ ३
ब्रह्मखण्डे च कथितं परंब्रह्मनिरूपणम्।
तदनिर्व्वचनीयञ्च तेषामपि यथागमम्।
साकारञ्च निराकारं सगुणं निर्गुणं पृथक् ॥ ४
तेषामेव यथाशक्ति तथैव ध्यानमेव च।
गोलोकादिवर्णनञ्च क्रमेण च पृथक् पृथक् ॥ ५
तत्रोपयुक्तोपाख्यानं यद्यत् प्रासङ्गिकं द्विज।
जातीनां निर्णयश्चैव सङ्कराणां तथैव च ॥ ६
यद्यद्विशिष्टोपाख्यानं तत् तत्प्रश्नानुरोधतः।
राधा-माधवयोः क्रीड़ा महाविष्णोः समुद्भवः ॥ ७
निरूपणञ्च विश्वेशां समासेन द्विजोत्तम।

ब्रह्म-नारदयोश्चैव संवादः परमार्थतः ॥ ८
विवेको नारदस्यैव मुनीन्द्रस्य तथैव च ।
आज्ञया ब्रह्मणश्चैव नरनारायणाश्रमम् ॥ ९
गमनं नारदस्यैव तेन सार्द्धञ्च दर्शनम् ।
तयोः सम्भाषणञ्चैव नारदात्मनिवेदनम् ॥ १०
एतदेव ब्रह्मखण्डं प्रशेषोक्तं द्विजोत्तम ।
श्रूयतां प्रकृतेः खण्डं सुधाखण्डसमं मुने ॥ ११
प्रकृतेर्लक्षणं प्रोक्तं प्रकृतीनाञ्च वर्णनम् ।
उपाख्यानञ्च तासाञ्च वर्णनं पूजनादिकम् ॥ १२
लक्ष्मीः सरस्वती दुर्गा सावित्री राधिका तथा ।
एतासां चरितञ्चैवमन्यासाञ्च पृथक् पृथक् ॥ १३
उपाख्यानं महालक्ष्म्याः सरस्वत्यास्तथैव च ।
दुर्गायाः समुपाख्यानं परमाद्भुतमेव च ।
महायुद्धञ्च सम्बाधे महेश-शङ्खचूड़योः ॥ १४
तुलसी-कृष्णसंवादस्तयोः सम्भोग एव च ।
निधनं शङ्खचूड़स्य श्रीदाम्नः शापमोचनम् ॥ १५
यद्प्राप्तिः सुराणाञ्च विपदां खण्डनं तथा ।
जीविनां मोक्षवीजञ्च गङ्गोपाख्यानमीप्सितम् ॥१६
तथैव मनसाख्यानं परं हर्षविवर्द्धनम् ।
स्वाहा-स्वधाख्यानमेवमन्यासाञ्च निरूपणम् ॥ १७
यद्यत्प्राशङ्किकाख्यानं बहुप्रश्नानुरोधतः ।
प्रोक्तं तत् प्रकृतेः खण्डं खण्डं गणपतेः शृणु ॥ १८
सुगोप्यं तत् पुराणेषु रम्यं रम्यं नवं नवम् ।
सुदुर्लभमुपाख्यानं श्रोतृप्रीतिकरं परम् ॥ १९
प्रोक्ता क्रीड़ा च परमा पार्व्वती-परमेशयोः ।
स्कन्दोत्पत्तिः प्रथमतः क्रीड़ाभङ्गस्तयोस्तथा ॥ २०
पार्व्वतीतोषणञ्चैवमभिमानविमोक्षणम् ।
पुण्यकञ्च व्रतं विष्णोर्द्दिव्याश्चरितमीप्सितम् ॥ २१
आविर्भावो गणेशस्य कृपया शिवमन्दिरे ।
दर्शनं पुत्रवक्त्रस्य पार्व्वती-परमेशयोः ॥ २२
वरदानं हरेरेव सुव्रतां पार्व्वतीं प्रति ।
परमानन्दरूपञ्च शिवगेहे महोत्सवम् ॥ २३
देवाद्या ददृशुः सर्व्वे बालं नित्यमजं विभुम् ।
सत्यस्वरूपं परमं परंब्रह्मस्वरूपिणम् ॥ २४
सर्व्वविघ्नहरं शान्तं दातारं सर्व्वसम्पदाम् ।
तपसां जप-यज्ञानां व्रतानां फलदं प्रभुम् ॥ २५
अतीव कमनीयञ्च रमणीयञ्च योषिताम् ।
प्राणाधिकप्रियतमं पार्व्वती-परमेशयोः ॥ २६
परमात्मस्वरूपञ्च भगवन्तं सनातनम् ।
सर्व्वेशं सर्व्ववीजञ्च साक्षान्नारायणात्मकम् ॥ २७
यद्दर्शनाच्च स्तवनात् प्रणामात् पूजनात् तथा ।
ध्यानाच्च ध्याननिष्ठानां जन्मकोव्यघनाशनम् ॥ २८
कार्त्तिकोद्धरणं प्रोक्तं तस्याभिषिक्त एव च ।
गणेशपूजनञ्चैवं सर्व्वविघ्नविनाशनम् ॥ २९
जमदग्नेश्च युद्धञ्च कार्त्तवीर्य्यार्ज्जुनेन च ।
सुरभीहरणञ्चैव निधनञ्च मुनेस्तथा ॥ ३०
पतिव्रतारेणुकायाश्चितारोहणमेव च ।
प्रतिज्ञानं भृगोश्चैव दारुणञ्च सुदुष्करम् ॥ ३१
निःक्षत्रीकरणञ्चैवमेकविंशविधं द्विज ।
संवादज्ञानलाभश्च गणेशपर्शुरामयोः ॥ ३२
तयोर्युद्धं दारुणञ्च हेरम्बदन्तभञ्जनम् ।
दुर्गायाश्च विलापश्च अभिशापो भृगुं प्रति ॥ ३३
स्मरणे पर्शुरामस्याप्याविर्भावो हरेरपि ।
पार्व्वतीं बोधयामास स्वयं नारायणः प्रभुः ॥ ३४
वर्णनं शिवलोकस्य परमाश्चर्य्यमीप्सितम् ।
प्रदत्तं पर्शुरामाय महास्त्रं शङ्करेण च ॥ ३५
मन्त्रश्च कवचञ्चैव कृष्णस्य परमात्मनः ।
वरदानञ्चाभयञ्च प्रदाता सर्व्वसम्पदाम् ॥ ३६
त्रिःसप्तकृत्वो भूपानां निधनञ्च चकार सः ।
कृतञ्च भृगुणा विप्र भुवश्च भारमोचणम् ।
प्रश्नानुरोधक्रमतोऽपूर्व्वोपाख्यानमेव च ॥ ३७
प्रोक्तं गणपतेः खण्डं समासेन द्विजोत्तम ।
श्रीकृष्णजन्मखण्डञ्च श्रूयतां सावधानतः ॥ ३८
जन्म-मृत्यु-जरा-व्याधिहरं मोक्षकरं परम् ।
हरिदास्यप्रदं शुद्धं सुश्राव्यञ्च सुधोपमम् ॥ ३९
अथापूर्व्वमुपाख्यानं रम्यं रम्यं नवं नवम् ।
न श्रुतं जन्मना यद्यत् स्वादु स्वादु पदे पदे ॥ ४०
प्रदीपः सर्व्वतत्त्वानां भवाब्धितारणं परम् ।
कर्म्मोपभोगरोगाणां मर्द्दनञ्च रसायनम् ॥ ४१
श्रीकृष्णचरणाम्भोज-प्राप्तिसोपानकारणम् ।
जीवनं वैष्णवानाञ्च जगतां पावनं परम् ॥ ४२
प्रथमे नारदप्रश्नं मुनिं नारायणं प्रति ।
प्रत्युत्तरं महर्षेश्च वचनं नारदं प्रति ॥ ४३
विष्णु-वैष्णवयोश्चैव सुप्रशंसानिरूपणम् ।

श्रीदाम-राधाकलह-वर्णनं दारुणं द्विज ॥ ४४
तयोः शापप्रकथनं गोलोकभेदकारणम् ।
विरजावासतनुत्यागः कथितः परमाद्भुतः ॥ ४५
नद्या जन्मप्रकथनं गोपीनां वर्जनं तथा ।
कृष्ण-नद्योर्म्मैथुनञ्च तत्सुतानाञ्च जन्म तत् ॥ ४६
प्रोक्तञ्च परमाख्यानं ततस्तेषां विसर्जनम् ।
ब्रह्मणा प्रार्थितस्यैव हरेर्जन्म महीतले ॥ ४७
प्रोक्तञ्च जन्मखण्डे च परमाद्भुतमेव च ।
आविर्भावो हरेरेव वसुदेवस्य मन्दिरे ॥ ४८
कंसासुरभयेनैव गोकुले गमनं हरेः ।
वृषभानुसुता राधा श्रीदाम्नः शापहेतुना ॥ ४९
बालक्रीडावर्णनञ्च गोकुले परमात्मनः ।
दैत्यादिनिधनञ्चैव कीर्त्तितं हरिणा तथा ॥ ५०
गर्गस्यागमनं प्रोक्तं शुभान्नप्राशनं हरेः ।
निधनं पूतनायाश्च सद्यःशकटभञ्जनम् ॥ ५१
श्रीकृष्णबन्धमोक्षश्च यमलार्ज्जुनभञ्जनम् ।
त्रैलोक्यदर्शनं वक्त्रे गोवत्सहरणं तथा ॥ ५२
कृत्वा गोवत्सनिर्म्माणं ब्रह्मणः स्तवनं हरेः ।
सहसा गोकुलं त्यक्त्वा पुण्यं वृन्दावनं वनम् ॥ ५३
भयाज्जगाम नन्दश्च सार्द्धञ्च नन्दनेन च ।
वृन्दावनस्य निर्म्माणं प्रोक्तञ्च परमाद्भुतम् ॥ ५४
सर्व्वैश्च बालकैः सार्द्धं तत्र संक्रीडनं हरेः ।
ब्राह्मणीनाञ्च सदन्नभोजनं कथितं हरेः ॥ ५५
वरदानञ्च ताभ्यश्च प्राक्तनेन निरूपितम् ।
स्नगीणां वसनञ्चैव वस्त्रापहरणं तथा ॥ ५६
वरदानञ्च गोपीनां कृष्णेनैव कृतं द्विज ।
कात्यायनीव्रतं प्रोक्तं श्रीदुर्गापूजनं तथा ॥ ५७
पार्व्वत्या च वरो दत्तो गोपीभ्यो यमुनातटे ।
तालानां भक्षणं प्रोक्तं यज्ञयागविमर्द्दनम् ॥ ५८
राधया सह कृष्णस्य विवाहोन्मीलनं तथा ।
गोपीक्रीडा च सम्प्रोक्ता कृष्णक्रोडे च राधिका ॥ ५९
छायाविधानं गेहे च सम्प्रोक्तं मायया हरेः ।
शृङ्गारं षोडशविधं कृत्वा तं रासमण्डले ॥ ६०
अन्तर्द्धानं हरेरेव राधया सह कानने ।
मलयागमनञ्चैव तया सार्द्धं द्विजोत्तम ॥ ६१
राधा-माधवयोश्चैव संवादस्तत्र निश्चितः ।
वैवर्ण्यमपि गोपीनां प्रोक्तं नानाविधं मुने ॥ ६२

पुनरागमनञ्चैव पुण्यं वृन्दावनं वनम् ।
श्रीकृष्णदर्शनञ्चैव गोपीनां हर्षवर्द्धनम् ।
नानाप्रकारक्रीडा च प्रोक्ता तस्य जले स्थले ॥ ६३
गोपीनामपि सौभाग्यं राधायाश्च विशेषतः ।
प्रोक्तं व्यासेन सौन्दर्य्यं रम्यं रम्यं नवं नवम् ॥ ६४
नभःस्थितानां देवानां दर्शनं प्रोक्तमेव च ।
मनसः स्खलनञ्चैव देवीनां रासमण्डले ॥ ६५
मथुरागमनं प्रोक्तं निधनं रजकस्य च ।
कुब्जया सह सम्भोगस्तस्या मोक्षणमेव च ॥ ६६
प्रसादनं कुविन्दस्य मालाकारस्य मोक्षणम् ।
धनुषो भञ्जनं मल्लोर्हस्तिनो निधनं तथा ॥ ६७
सभाप्रवेशनं प्रोक्तं तद्बन्धूनां विलापनम् ।
सत्कारं तस्य विधिवद् राजकं तत्पितुस्तथा ॥ ६८
विलापनञ्च नन्दस्य स्तवनं परमाद्भुतम् ।
प्रोक्तस्तयोश्च संवादो निर्ज्जने तातपुत्रयोः ॥ ६९
परमाध्यात्मिकं दत्तं नन्दाय जगतां पतिः ।
मुनीनां गमनञ्चैव धन्योपाख्यानमुत्तमम् ॥ ७०
कथितं सुकुमारेण प्रोक्तमेव सुदुर्लभम् ।
उद्धवागमनञ्चैव राधाध्यानञ्च निर्ज्जनम् ॥ ७१
ध्यानं तयोश्च संवादे प्रोक्तमेव शुभावहम् ।
यज्ञोपवीतं कृष्णस्य विद्यादानं गुरोर्गृहे ॥ ७२
मृतपुत्रप्रदानञ्च प्रोक्तं तद्गुरवे पुरा ।
जरासन्धस्य दमनं निधनं यवनस्य च ॥ ७३
प्रोक्तं द्वारकनिर्म्माणं विश्वकारोर्दमस्तथा ।
द्वारकागमनं प्रोक्तमुग्रसेनविलापनम् ॥ ७४
रुक्मिणीहरणञ्चैव पारिजातस्य स्वर्गतः ।
कुरु-पाण्डवयुद्धे च भुवश्च भारमोचनम् ॥ ७५
उषाया हरणं प्रोक्तं बाणस्य भुजकृन्तनम् ।
बलेश स्तवनं प्रोक्तमनिरुद्धस्य विक्रमः ॥ ७६
राधा-यशोदासंवादः प्रोक्तः परमदुर्लभः ।
मोक्षणञ्च सृगालस्य प्रोक्तञ्च परमाद्भुतम् ॥ ७७
तीर्थयात्राप्रसङ्गेन गणेशपूजनं तथा ।
दर्शनं राधिकासार्द्धं कृष्णस्य परमात्मनः ॥ ७८
राधाया दर्शनं देव्या राधातेजःप्रकाशनम् ।
राधाया रमणं तीर्थे भ्रमणं रहसि स्मृतम् ॥ ७९
निधनं यदुवंशानां ब्रह्मशापेन शौनक ।
मोक्षणं पाण्डवानाञ्च स्वपदं गमनं हरेः ॥ ८०

विवाहो नारदस्यैवोत्पत्तिवह्नि-सुवर्णयोः।
प्रोक्तं सर्व्वं महाभाग पुनरेव समासतः॥ ८१
चतुःखण्डं पुराणञ्च ब्रह्मवैवर्त्तमेव च।
अतः परं मुनिश्रेष्ठ किं भूयः श्रोतुमिच्छसि॥ ८२

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे सौति-शौनकसंवादे ब्रह्मादिखण्डचतु-ष्टयानुक्रमणिकं नाम द्वात्रिंशद-धिकशततमोऽध्यायः॥१३२॥

---

## अथ त्रिंशदधिकशततमोऽध्यायः।

शौनक उवाच।

अद्य मे सफलं जन्म जीवितञ्च सुजीवितम्।
यत्फलं ब्रह्मवैवर्त्तं निर्व्विघ्नं मोक्षकारणम्॥ १
अभयं देहि हे वत्स हे तात मह्यमेव च।
तदा निवेदनं किञ्चिदस्तीति च करोम्यहम्॥ २

सूत उवाच।

त्यज भीतिं महाभाग प्रश्नं कुरु यदीच्छसि।
सर्व्वं ते कथयिष्यामि यद्यद्गोप्यं मनोहरम्॥ ३

शौनक उवाच।

अधुना श्रोतुमिच्छामि पुराणानाञ्च लक्षणम्।
संख्यानमपि तेषाञ्च फलमस्यैव पुत्रक॥ ४

सूत उवाच।

विस्तराणि पुराणानि चेतिहासांश्च शौनक।
संहितापञ्चरात्राणि कथयामि यथागमम्॥ ५
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं विप्र पुराणं पञ्चलक्षणम्॥ ६
एतदुपपुराणानां लक्षणञ्च विदुर्बुधाः।
महताञ्च पुराणानां लक्षणं कथयामि ते॥ ७
सृष्टिश्चापि विसृष्टिश्च स्थितिस्तासाञ्च पालनम्।
कर्म्मणां वासना वार्त्ता मनूनाञ्च क्रमेण च॥ ८
वर्णनं प्रलयानाञ्च मोक्षस्य च निरूपणम्।
उत्कीर्त्तनं हरेरेव देवानाञ्च पृथक् पृथक्॥ ९
लक्षणञ्च दशविधं महतां परिकीर्त्तितम्।
संख्यानञ्च पुराणानां निबोध कथयामि ते॥ १०
अत्रं ब्रह्मपुराणञ्च सहस्राणां दशैव तु।
पञ्चोनषष्टिसाहस्रं पाद्ममेव प्रकीर्त्तितम्॥ ११
त्रयोविंशतिसाहस्रं वैष्णवञ्च विदुर्बुधाः।
चतुर्व्विंशतिसाहस्रं शैवमेव निरूपितम्॥ १२
ग्रन्थाष्टादशसाहस्रं श्रीमद्भागवतं विदुः।
पञ्चविंशतिसाहस्रं नारदीयं प्रकीर्त्तितम्॥ १३
मार्कण्डं नवसाहस्रं पुराणं पण्डिता विदुः।
चतुःशताधिकं पञ्चदशसाहस्रमेव च॥ १४
परमग्निपुराणञ्च रुचिरं परिकीर्त्तितम्।
चतुर्द्दशसहस्राणि परं पञ्चशताधिकम्।
पुराणप्रवरञ्चैव भविष्यं परिकीर्त्तितम्॥ १५
अष्टादशसहस्रञ्च ब्रह्मवैवर्त्तमीप्सितम्।
सर्व्वेषाञ्च पुराणानां सारमेव विदुर्बुधाः॥ १६
एकादशसहस्रञ्च परं लिङ्गपुराणकम्।
चतुर्व्विंशतिसाहस्रं वाराहं परिकीर्त्तितम्॥ १७
एकाशीतिसहस्रञ्च परमेव शताधिकम्।
वरं स्कन्दपुराणञ्च सद्भिरेव निरूपितम्॥ १८
वामनं दशसाहस्रं कौर्म्मं सप्तदशैव तु।
मात्स्यं चतुर्द्दशं प्रोक्तं पुराणं पण्डितैस्तथा॥ १९
ऊनविंशतिसाहस्रं गारुडं परिकीर्त्तितम्।
परं द्वादशसाहस्रं ब्रह्माण्डं परिकीर्त्तितम्॥ २०
एवं पुराणसंख्यानं चतुर्लक्षमुदाहृतम्।
अष्टादशपुराणानां नाम चैतद्विदुर्बुधाः॥ २१
एवञ्चोपपुराणानामष्टादश प्रकीर्त्तिताः।
इतिहासो भारतञ्च वाल्मीकिकाव्यमेव च॥ २२
पञ्चकं पञ्चरात्राणां कृष्णमाहात्म्यपूर्व्वकम्।
वाशिष्ठं नारदीयञ्च कापिलं गौतमीयकम्॥ २३
परं सनत्कुमारीयं पञ्चरात्रञ्च पञ्चकम्।
पञ्चमी संहितानाञ्च कृष्णभक्तिसमन्विता॥ २४
ब्रह्मणश्च शिवस्यापि प्रह्लादस्य तथैव च।
गौतमस्य कुमारस्य संहिताः परिकीर्त्तिताः॥ २५
इति ते कथितं सर्व्वं क्रमेण च पृथक् पृथक्।
अस्यैवं विपुलं शास्त्रं समाप्ति च यथागमम्॥ २६
उवाचेदं पुराणञ्च गोलोके रासमण्डले।
श्रीकृष्णो भगवान् साक्षाद्ब्रह्माणञ्च स्वभक्तकम्॥२
ब्रह्मा धर्म्मञ्च धर्म्मिष्ठं धर्म्मो नारायणं मुनिम्।
नारायणो नारदञ्च नारदो माञ्च भक्तकम्॥ २८
अहं त्वाञ्च मुनिश्रेष्ठं वरिष्ठं कथयामि तत्।
सुदुर्लभं पुराणञ्च ब्रह्मवैवर्त्तमीप्सितम्॥ २९

श्रोत्तं तत्र च विश्वौघं जीविनां परमात्मकम्।
तद्ब्रह्म साक्षिरूपञ्च कर्म्मिणामेव कर्म्मणाम्॥ ३०
तद्ब्रह्म विवृतं यत्र तद्विभूतिरनुत्तमा।
तेनेदं ब्रह्मवैवर्त्तमित्येवञ्च विदुर्बुधाः॥ ३१
सुपुण्यदं पुराणञ्च मङ्गलं मङ्गलप्रदम्।
सुगोप्यञ्च रहस्यञ्च यत्र रम्यं नवं नवम्॥ ३२
हरिभक्तिप्रदञ्चैव दुर्लभं हरिदास्यदम्।
सुखदं मोक्षदं सारं शोकसन्तापनाशनम्॥ ३३
सरित्सु च यथा गङ्गा सद्योमुक्तिप्रदा शुभा।
तीर्थानां पुष्करं शुद्धं यथा काशी पुरीषु च॥ ३४
वर्षेषु भारतं वर्षं सद्यो मुक्तिप्रदं शुभम्।
यथा सुमेरुः शैलेषु पारिजातश्च पुष्पतः॥ ३५
पत्रेषु तुलसीपत्रं व्रतेष्वेकादशीव्रतम्।
वृक्षेषु कल्पवृक्षश्च श्रीकृष्णश्च सुरेश्वरः॥ ३६
ज्ञानीन्द्रेषु महायोगी योगीन्द्रेषु गणेश्वरः।
सिद्धेन्द्रेष्वेव कपिलः सूर्य्यस्तेजस्विनां यथा॥ ३७
सनत्कुमारो भगवान् वैष्णवेषु यथाग्रणीः।
नृपेषु च यथा रामो लक्ष्मणश्च धनुष्मताम्॥ ३८
देवीषु च यथा दुर्गा महापुण्यवती सती।
प्राणाधिका यथा राधा कृष्णस्य प्रेयसीषु च॥ ३९
ईश्वरीषु यथा लक्ष्मीः पण्डितेषु सरस्वती।
तथा सर्व्वपुराणेषु ब्रह्मवैवर्त्तमेव च॥ ४०
ततो विशिष्टं सुखदं मधुरञ्च सुपुण्यदम्।
सन्देहभञ्जनञ्चैव पुराणं परिकीर्त्तितम्॥ ४१
इह लोके च सुखदं सुप्रदं सर्व्वसम्पदाम्।
शुभदं पुण्यदञ्चैव विघ्ननिघ्नकरं परम्॥ ४२
हरिदास्यप्रदञ्चैव परलोके महत्पदम्।
यज्ञानामपि तीर्थानां व्रतानां तपसां तथा॥ ४३
भूरिप्रदक्षिणस्यापि फलं नास्य समानकम्।
चतुर्णामपि वेदानां पाठादपि वरं फलम्॥ ४४
शृणोतीदं पुराणञ्च संयतश्चेदपुत्रकः।
गुणवन्तञ्च विद्वांसं वैष्णवं पुत्रमालभेत्॥ ४५
शृणोति दुर्भगा चेत्तु सौभाग्यं स्वामिनो लभेत्।
मृतवत्सा काकवन्ध्या महावन्ध्या च पापिनी।
पुराणश्रवणाल्लेभे पुत्रञ्च चिरजीविनम्॥ ४६
अस्पष्टकीर्त्तिः सुयशा मूर्खो भवति पण्डितः।
रोगार्त्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्॥ ४७
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः।
अरण्ये प्रान्तरे भीतो दावाग्नौ मुच्यते ध्रुवम्॥ ४८
आन्ध्यं कुष्ठञ्च दारिद्र्यं रोगं शोकञ्च दारुणम्।
पुराणश्रवणादेव नैव जानाति पुण्यवान्॥ ४९
श्लोकार्द्धं श्लोकपादं वा यः शृणोति सुसंयतः।
गोलक्षदानपुण्यञ्च लभते नात्र संशयः॥ ५०
चतुःखण्डं पुराणञ्च शुद्धकाले जितेन्द्रियः।
सङ्कल्पतो यः शृणोति भक्त्या दत्त्वा च दक्षिणाम्॥५१
यद्बाल्ये यच्च कौमारे वार्द्धक्ये यच्च यौवने।
कोटिजन्मार्ज्जितात् पापान्मुच्यते नात्र संशयः॥५२
रत्ननिर्म्माणयानेन धृत्वा श्रीकृष्णरूपकम्।
नित्यं गत्वा च गोलोकं कृष्णदास्यं लभेद्ध्रुवम्॥ ५३
असंख्यब्रह्मपातेन न भवेत् तस्य पातनम्।
सामीप्यपार्श्वगो भूत्वा सेवाञ्च कुरुते चिरम्॥ ५४
श्रुत्वा च ब्रह्मखण्डञ्च सुस्नातः संयतः शुचिः।
पायसं पिष्टकञ्चैव फलं ताम्बूलमेव च॥ ५५
भोजयित्वा वाचकञ्च तस्मै दद्यात् सुवर्णकम्।
चन्दनं शुभ्रमाल्यञ्च सूक्ष्मवस्त्रं मनोहरम्।
निवेद्य वासुदेवञ्च वाचकाय च दीयते॥ ५६
श्रुत्वा च प्रकृतेः खण्डं सुश्राव्यञ्च सुधोपमम्।
भोजयित्वा च दध्यन्नं तस्मै दद्याच्च काञ्चनम्।
सवत्सा सुरभी रम्या दीयते भक्तिपूर्व्वकम्॥ ५७
श्रुत्वा गणपतेः खण्डं विघ्ननाशाय संयतः।
स्वर्णं यज्ञोपवीतञ्च श्वेताश्व-च्छत्र-माल्यकम्॥ ५८
प्रदीयते वाचकाय स्वस्तिकं तिललड्डुकम्।
परिपक्वफलान्येव कालदेशोद्भवानि च॥ ५९
श्रीकृष्णजन्मखण्डञ्च श्रुत्वा भक्ताश्च भक्तितः।
वाचकाय प्रदद्याच्च वरं रत्नाङ्गुरीयकम्।
सूक्ष्मवस्त्रञ्च माल्यञ्च स्वर्णकुण्डलमुत्तमम्॥ ६०
सर्व्वस्वं दक्षिणां दत्त्वा स्तवनं कुरुते ध्रुवम्।
शतकं ब्राह्मणानाञ्च भोजयेत् परमादरम्॥ ६१
श्रीकृष्णभक्तियुक्ताश्च पुराणं यः शृणोति च।
भक्तिं कृष्णे च लभते हन्ति पापं पुराकृतम्॥ ६२
एतत् ते कथितं सर्व्वं यच्छ्रुतं गुरुवक्त्रतः।
विदायं देहि विप्रेन्द्र यामि नारायणाश्रमम्॥ ६३
दृष्ट्वा विप्रसमूहञ्च नमस्कर्त्तुं समागतः।
कथितं ब्रह्मवैवर्त्तं भवतामाज्ञया परम्॥ ६४

कायेन मनसा वाचा परं भक्त्या दिवानिशम्।
अज सत्यं परंब्रह्म राधेशं त्रिगुणात् परम्॥ ६५
नमोऽस्तु ब्राह्मणेभ्यश्च कृष्णाय परमात्मने।
शिवाय ब्रह्मणे नित्यं गणेशाय नमो नमः॥ ६६
नमो देव्यै सरस्वत्यै पुराणगुरवे नमः।
सर्व्वविघ्नविनाशिन्यै दुर्गादेव्यै नमो नमः॥ ६७
युष्माकं पादपद्मानि दृष्ट्वा पुण्यानि शौनक।
अथ सिद्धाश्रमं यामि यत्र देवो गणेश्वरः॥ ६८

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्म-खण्डे सौति-शौनकसंवादे त्रयस्त्रिंश-दधिकशततमोऽध्यायः॥ १३३॥

---

इति श्रीकृष्णजन्मखण्डं समाप्तम्।

---

समाप्तञ्चेदं ब्रह्मवैवर्त्तपुराणम्।

---

॥ श्रीः॥

# ब्रह्मवैवर्त्तपुराणम् ।

## ब्रह्मखण्डम् ।

### प्रथमोऽध्यायः ।

ओं नमो भगवते वासुदेवाय ।

ओं नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

गणेशब्रह्मेश(क)सुरेशशेषाः
सुराश्च सर्व्वे मनवो मुनीन्द्राः ।
सरस्वतीश्रीगिरिजादिका य
नमन्ति देव्यः प्रणमामि तं विभुम् ॥ १

स्थूलात् स्थूलतमतनुं दधतं विराजं (ख)
विश्वानि लोमविवरेषु महान्ति यस्य । (ग)
स्वांशुन्मुखः स्वकलयापि ससर्ज्ज सूक्ष्मां
नित्यां समेत्य सदसत्तमजं भजामि ॥ २

ध्यायन्ते ध्याननिष्ठाः सुरनरमनवो
योगिनो योगरूढ़ाः
सन्तः स्वप्नेऽपि सन्तं कति कति जनिभि-
र्यं न पश्यन्ति तप्ताः ।

ध्याये स्वेच्छामयं तं त्रिगुणपरमहो
निर्व्विकार निरीहं
भक्तध्यानैकहेतोर्निरुपमरुचिरं
श्यामरूपं दधानम् ॥ ३

वन्दे कृष्णं गुणातीतं परं ब्रह्माच्युतं यतः ।
आविर्ब्बभूवुः प्रकृतिब्रह्मविष्णुशिवादयः ॥ ४

अमृतपरमपूर्व्वं भारतीकामधेनुं
श्रुतिगणकृतवत्सो व्यासदेवो दुदोह ।
अतिरुचिरपुराणं ब्रह्मवैवर्त्तमेतत्
पिवत पिवत मुग्धा दुग्धमत्यन्तमिष्टम् ॥ ५

भारते नैमिषारण्ये ऋषयः शौनकादयः ।
नित्यां नैमित्तिकीं कृत्वा क्रियामूषुः कुशासने ॥ ६

एतस्मिन्नन्तरे सौतिमागच्छन्तं यदृच्छया ।
प्रणतं सुविनीतं तं विलोक्य ददुरासनम् ॥ ७

तं सम्पूज्यातिथिं भक्त्या शौनको मुनिपुङ्गवः ।
सम्पृच्छ्य कुशलं शान्तं शान्तः पौराणिकं मुदा ॥ ८

वात्यायासविनिर्म्मुक्तं वसन्तं सुस्थिरासने ।
सस्मितं सर्व्वतत्त्वज्ञं पुराणानां पुराणवित् ॥ ९

परं कृष्णकथोपेतं पुराणं श्रुतिसुन्दरम् ।
मङ्गल्यं मङ्गलार्हञ्च मङ्गलं मङ्गलायनम् ॥ १०

सर्व्वमङ्गलवीजञ्च सर्व्वदा मङ्गलप्रदम् ।
सर्व्वामङ्गलविघ्नञ्च सर्व्वसम्पत्करं परम् ॥ ११

---

(क) गणेशब्रह्मेशेति अकारात् पूर्व्वं लघुत्वमार्षम् ।

(ख) स्थूलादित्यादि-पादस्थाने "स्थूलात् स्थूलतमं तत्त्वं दधतं सुविराजितम्" इत्यनुष्टुभेन छन्दसा ग्रथितं पादद्वयं विश्वानीत्यादि वसन्ततिलकीयञ्च पादद्वयं क्वचित् पुस्तके पठ्यते । उल्लिखितपाठे आर्षत्वेन न छन्दोभङ्गः ।

(ग) "ब्रह्मेशविष्णुसुरदानवसिद्धपूर्णविश्वानि लोमविवरेषु महान्ति यस्य" इत्यपि पाठः ।

हरिभक्तिप्रदं शश्वत्सुखदं मोक्षदं भवे।
तत्त्वज्ञानप्रदं दारपुत्रपौत्रविवर्द्धनम् ॥ १२
पप्रच्छ सुविनीतश्च विनीतो मुनिसंसदि।
यथाकाशे तारकाणां द्विजराजो विराजते।
तथा विराजमानं तं सूतजं मुनिमण्डले (क) ॥१३
शौनक उवाच।
प्रस्थानं भवतः कुत्र कुत आयासि ते शिवम्।
किमस्माकं पुण्यदिनं मन्ये त्वद्दर्शनेन च ॥ १४
वयमेव कलौ भीता विशिष्टज्ञानवर्ज्जिताः।
मुमुक्षवो भवे मग्नास्तद्धेतुस्त्वमिहागतः ॥ १५
भवान् साधुर्म्महाभागः पुराणेषु पुराणवित्।
सर्व्वेषु च,पुराणेषु निष्णोऽतीव कृपानिधिः ॥ १६
श्रीकृष्णे निश्चला भक्तिर्यतो भवति शाश्वती।
तत् कथ्यतां महाभाग पुराणं ज्ञानवर्द्धनम् ॥ १७
गरीयसी च या माया कर्म्ममूलनिकृन्तनी।
संसारसन्निवद्धानां निगडच्छेदकर्त्तनी ॥ १८
भवदावाग्निदग्धानां पीयूषवृष्टिवर्षिणी।
सा सदानन्ददा सौते शश्वच्चेतसि जीविनाम् ॥ १९
यत्रादौ सर्व्ववीजञ्च परं ब्रह्म निरूपितम्।
तस्य सृष्ट्युन्मुखस्यापि सृष्टेरुत्कीर्त्तनं परम् ॥ २०
साकारं वा निराकारं परमात्मस्वरूपकम्।
किमाकारञ्च तद्ब्रह्म किं ध्यानं किञ्च भावनम् ॥२१
ध्यायन्ति वैष्णवाः किं वा किं वा सन्तश्च योगिनः।
मतं प्रधानं केषां वा गूढं वेदे निरूपितम् ॥ २२
प्रकृतेश्च किमाकारो यत्र वत्स निरूपितः।
गुणानां लक्षणं यत्र महाज्ञानस्य निश्चयः ॥ २३
गोलोकवर्णनं यत्र यत्र वैकुण्ठवर्णनम्।
वर्णनं शिवलोकस्य यत्रान्यत् स्वर्गवर्णनम् ॥ २४
अंशानाञ्च कलानाञ्च यत्र सौते निरूपणम्।
के प्राकृताः का प्रकृतिः क आत्मा प्रकृतेः परः ॥ २५
निगूढं जन्म येषां वा देवानां देवयोषिताम्।
समुत्पत्तिः समुद्राणां शैलानां सरितामपि ॥ २६
के वांशाः प्रकृतेश्चापि कलाः का वा भवन्ति हि।
तासाञ्च चरितं ध्यानं पूजास्तोत्रादिकं शुभम् ॥ २७
दुर्गासरस्वतीलक्ष्मीसावित्रीणाञ्च वर्णनम्।

(क) शेषार्द्धं बहुषु पुस्तकेषु नास्ति।

यत्रैव राधिकाख्यानं सत्यापूर्व्वसुधोपमम् (क) ॥२८
जीवकर्म्मविपाकश्च नरकाणाञ्च वर्णनम्।
कर्म्मणां खण्डनं यत्र यत्र तेभ्यो विमोक्षणम् ॥ २९
येषाञ्च जीविनां यद्यत् स्थानं यत्र शुभाशुभम्।
जीविनां कर्म्मणो यस्माद्यासु यासु च योनिषु ॥ ३०
जीविनां कर्म्मणो यस्माद्यो यो रोगो भविष्यति।
मोक्षणं कर्म्मणो यस्मात् तेषाञ्च तन्निरूपणम् ॥ ३१
मनसा तुलसी काली गङ्गा पृथ्वी वसुन्धरा।
आसां यत्र शुभाख्यानमन्यासाञ्चापि यत्र वै ॥ ३२
शालग्रामशिलानाञ्च दानवानाञ्च निर्णयः। (ख)
गणेश्वरस्य चरितं यत्र तज्जन्म कर्म्म च ॥ ३३
कवचस्तोत्रमन्त्राणां गूढानां यत्र वर्णनम्।
यदपूर्व्वमुपाख्यानमश्रुतं परमाद्भुतम्।
कृत्वा मनसि तत् सर्व्वं साम्प्रतं वक्तुमर्हसि ॥ ३४
यत्र जन्मभूमौ विप्रपुण्यक्षेत्रे च भारते।
परिपूर्णतमस्यापि कृष्णस्य परमात्मनः ॥ ३५
जन्म कस्य गृहे लब्धं पुण्ये पुण्यवतो मुने।
सुतं प्रसूता का धन्या मान्या पुण्यवती सती ॥ ३६
आविर्ब्बभूव तद्गेहाज्जगतः केन हेतुना।
गत्वा किं कृतवांस्तत्र कथं वा पुनरागतः ॥ ३७
भारावतरणं केन प्रार्थितो गोश्चकार सः।
विधाय कं वा सेतुं स गोलोकं गतवान् पुरा ॥ ३८
इतीदमन्यदाख्यानं पुराणं दुर्लभं तथा।
दुर्व्विज्ञेयं मुनीनाञ्च मनोनिर्म्मलकारणम् ॥ ३९
अज्ञानाद्यन्मया पृष्टमपृष्टं वा शुभाशुभम्।
सद्यो वैराग्यजननं तन्मे व्याख्यातुमर्हसि ॥ ४०
शिष्यपृष्टमपृष्टं वा व्याख्यानं कुरुते च यः।
स सद्गुरुः सतां श्रेष्ठो योग्यायोग्ये च यः समः ॥ ४१
सौतिरुवाच।
सर्व्वं कुशलमस्माकं त्वत्पादपद्मदर्शनात्।
सिद्धक्षेत्रादागतोऽहं यामि नारायणाश्रमम् ॥ ४२
दृष्ट्वा विप्रसमूहञ्च नमस्कर्त्तुमिहागतः।

(क) सत्यं पूर्व्वसुधोपममिति बहुपुस्तकसम्मतः पाठः।
पूर्व्वसुधोपममित्यस्य नवीनाम्रततुल्यमित्यर्थः।
(ख) इतः परम्—
अपूर्व्वं यत्र वा सौते धर्म्माधर्म्मनिरूपणम्।
इत्येतत् पद्यार्द्धमधिकं क्वचिल्लभ्यते।

दृष्टञ्च नैमिषारण्यं पुण्यदञ्चापि भारते ॥ ४३
देवं विप्रं गुरुं दृष्ट्वा न नमेद्यः ससंभ्रमात्।
कालसूत्रं व्रजति स यावच्चन्द्रदिवाकरौ ॥ ४४
हरिर्ब्राह्मणरूपेण सश्वद्भ्रमति भारते।
सुकृती प्रणमेत् पुण्यं ब्राह्मणं हरिरूपिणम् ॥४५
भगवन् यत्त्वया पूर्व्वं ज्ञातं सर्व्वमभीप्सितम्।
सारभूतं पुराणेषु ब्रह्मवैवर्त्तमुत्तमम् ॥ ४६
पुराणोपपुराणानां वेदानां भ्रमभञ्जनम्।
हरिभक्तिप्रदं सर्व्वतत्त्वज्ञानविवर्द्धनम् ॥ ४७
कामिनां कामदञ्चेदं मुमुक्षूणाञ्च मोक्षदम्।
भक्तिप्रदं वैष्णवानां कल्पवृक्षस्वरूपकम् ॥ ४८
ब्रह्मखण्डे ब्रह्मवीजं परब्रह्मनिरूपणम्।
ध्यायन्ते योगिनः सन्तो वैष्णवा यत् परात्परम् ॥४९
वैष्णवा योगिनः सन्तो न च भिन्नाश्च शौनक।
अज्ञानपरिपाकेण भवन्ति योगिनः क्रमात् ॥ ५०
सन्तो भवन्ति यत्सङ्गाद्‌योगी योगेश्वयोगिनः (क)।
प्रकृतेर्लक्षणं तत्र कलांशानां निरूपणम् ॥५१
कीर्त्तिरुत्कीर्त्तनं तासां प्रभावश्च निरूपितः।
सुकृतीनां दुष्कृतीनां यद्‌यत् स्थानं शुभाशुभम् ॥५२
वर्णनं नरकाणाञ्च रोगाणां मोक्षणं ततः।
ततो गणेशखण्डे च तज्जन्मपरिकीर्त्तनम् ॥ ५३
अतीवापूर्व्वचरितं श्रुतिवेदसुदुर्लभम्।
गणेशभृगुसंवादः सर्व्वतत्त्वनिरूपणम् ॥५४
निगूढकवचं स्तोत्रं मन्त्रतन्त्रनिरूपणम्।
श्रीकृष्णजन्मखण्डञ्च कीर्त्तितञ्च ततः परम् ॥ ५५
भारते पुण्यक्षेत्रे च श्रीकृष्णजन्मकर्म्म च।
भुवो भारावतरणं क्रीडाकौतुकमङ्गलम् ॥५६
सतां सेतुविधानञ्च जन्मखण्डनिरूपणम्।
इदं ते कथितं विप्र पुराणप्रवरं वरम् ॥ ५७
चतुःखण्डपरिमितं सर्व्वधर्म्मनिरूपितम्।
सर्व्वेषामीप्सिततमं सर्व्वेषां पूर्व्वकारणम् ॥५८
ब्रह्मवैवर्त्तकं नाम सर्व्वाभीष्टफलप्रदम्।
सारभूतं पुराणेषु केवलं देवसम्मतम् ॥५९
विवृतं ब्रह्म कार्त्स्न्येन कृष्णेन यत्र शौनक।

(क) योगी योगेश्वयोगिनः इति पाठान्तरम्। अस्मिंश्च पाठे यत्सङ्गात् योगिनो भवन्ति, अत्र स योगी निरूपित इत्यर्थः।

ब्रह्मवैवर्त्तकं तेन प्रवदन्ति पुराविदः ॥ ६०
इदं पुराणसूत्रञ्च पुरा दत्तञ्च ब्रह्मणे।
निरामये च गोलोके कृष्णेन परमात्मना ॥६१
महातीर्थे पुष्करे च दत्तं धर्म्माय ब्रह्मणा।
धर्म्मेणेदं स्वपुत्राय प्रीत्या नारायणाय च ॥ ६२
नारायणोऽयं भगवान् प्रददौ नारदाय च।
नारदो व्यासदेवाय प्रददौ जाह्नवीतटे ॥ ६३
व्यासः पुराणसूत्रं तत् संव्यस्य विपुलं महत्।
मह्यं ददौ सिद्धक्षेत्रे पुण्यदे सुमनोहरम् ॥ ६४
यदिदं कथितं ब्रह्मंस्तत् समग्रं निशामय।
अष्टादशसहस्रन्तु व्यासेनेदं पुराणकम् ॥ ६५
पुराणकाव्यश्रवणे यत् फलं लभते नरः।
तत् फलं लभते नूनमध्यायश्रवणेन च ॥ ६६

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे
सौति-शौनकसंवादेऽनुक्रमणिका नाम
प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः।

शौनक उवाच।

किमपूर्व्वं श्रुतं सौते परमाद्भुतमीप्सितम्।
सर्व्वं कथय संव्यस्य ब्रह्मखण्डमनुत्तमम् ॥ १

सौतिरुवाच।

वन्दे गुरोः पादपद्मं व्यासस्यामिततेजसः।
हरिं देवान् द्विजान्नत्वा धर्म्मान् वक्ष्ये सनातनान् ॥२
यत् श्रुतं व्यासवक्त्रेण ब्रह्मखण्डमनुत्तमम्।
अज्ञानान्धतमोध्वंसज्ञानवर्त्मप्रदीपकम्।
ज्योतिःसमूहं प्रलये पुरासीत् केवलं द्विज ॥ ३
सूर्य्यकोटिप्रभं नित्यमसंख्यं विश्वव्यापकम्।
स्वेच्छामयस्य च विभोस्तज्ज्योतिरुज्ज्वलं महत् ॥४
ज्योतिरभ्यन्तरे लोकत्रयमेव मनोहरम्। (क)
अदृश्यं योगिभिः स्वप्ने दृश्यं गम्यञ्च वैष्णवैः ॥ ५

(क) एतदग्रे—
तेषामुपरि गोलोकं नित्यमीश्वरवद्द्विज।
त्रिकोटियोजनायामविस्तीर्णं मण्डलाकृति।
तेजःस्वरूपं सुमहद्रत्नभूमिमयं परम् ॥
इत्ययं सार्द्धः श्लोकः क्वचिदधिकोऽधिगम्यते।

योगेन धृतमीशेन चान्तरीक्षस्थितं परम्।
आधिव्याधिजरामृत्युशोकभीतिविवर्ज्जितम्॥ ६
सद्रत्नरचितासंख्यमन्दिरैः परिशोभितम्।
लये कृष्णायुतं स्रष्टौ गोपगोपीभिरावृतम्॥ ७
तदधो दक्षिणे सव्ये पञ्चाशत्कोटियोजनात्।
वैकुण्ठं शिवलोकञ्च तत्समं सुमनोहरम्॥ ८
कोटियोजनविस्तीर्णं वैकुण्ठं मण्डलाकृतम्।
लये शून्यञ्च स्रष्टौ च लक्ष्मीनारायणान्वितम्॥ ९
गोलोकाभ्यन्तरे ज्योतिः सर्व्वतेजोगुणान्वितम्।
चतुर्भुजैः पार्षदैश्च जरामृत्युविवर्ज्जितैः॥ १०
सव्ये च शिवलोकञ्च कोटियोजनविस्तृतम्।
लये शून्यञ्च स्रष्टौ च सपार्षदशिवान्वितम्॥ ११
गोलोकाभ्यन्तरे ज्योतिरतीव सुमनोहरम्। (क)
नवीननीरदश्यामं रक्तपङ्कजलोचनम्॥ १२
शारदीयपार्व्वणेन्दुशोभामुष्टशुभाननम्।
कोटिकन्दर्पलावण्यं लीलाधाम मनोहरम्॥ १३
द्विभुजं मुरलीहस्तं सस्मितं पीतवाससम्।
सद्रत्नभूषणौघेन भूषितं भक्तवत्सलम्॥ १४
चन्दनोक्षितसर्व्वाङ्गं कस्तूरीकुङ्कुमान्वितम्।
श्रीवत्सवक्षःसम्भ्राजत् कौस्तुभेन विराजितम्॥ १५
सद्रत्नसाररचितं किरीटमुकुटोज्ज्वलम्।
रत्नसिंहासनस्थञ्च वनमालाविभूषितम्॥ १६
तदेव परमं ब्रह्म भगवन्तं सनातनम्।
स्वेच्छामयं सर्व्वबीजं सर्व्वाधारं परात्परम्॥ १७
किशोरवयसं शान्तं गोपवेशविधायिनम्।
कोटिपूर्णेन्दुशोभाढ्यं भक्तानुग्रहकारकम्॥ १८
निरीहं निर्व्विकारञ्च परिपूर्णतमं विभुम्।
रासमण्डलमध्यस्थं शान्तं रासेश्वरं परम्॥ १९
मङ्गल्यं मङ्गलार्हञ्च मङ्गलं मङ्गलप्रदम्।
परमानन्दबीजञ्च सत्यमक्षरमव्ययम्॥ २०
सर्व्वसिद्धीश्वरं सर्व्वसिद्धिरूपञ्च सिद्धिदम्।
प्रकृतेः परमीशानं निर्गुणं नित्यविग्रहम्॥ २१
आद्यं पुरुषमव्यक्तं पुरुहूतं पुरुष्टुतम्। (क)
सत्यं स्वतन्त्रमेकञ्च परमात्मस्वरूपकम्॥ २२
ध्यायन्ते वैष्णवाः शान्ताः शान्तं तत् परमायणम्।
एकं रूपं परं बिभ्रद् (ख) भगवानेक एव सः॥ २३
दिशश्च नभसा सार्द्धं शून्यं विश्वं ददर्श ह॥ २४

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-
शौनकसंवादे परब्रह्मनिरूपणं नाम
द्वितीयोऽध्यायः॥ २॥

---

## तृतीयोऽध्यायः।

सौतिरुवाच।

दृष्ट्वा शून्यमयं विश्वमलोकञ्च भयङ्करम्।
निर्ज्जन्तु निर्ज्जलं घोरं निर्व्वातं तमसावृतम्॥ १
वृक्षशैलसमुद्रादिविहीनं विकृताकृतम्।
निर्म्मूर्त्तिकञ्च निर्व्वातं निःशस्यं निस्तृणं द्विज॥ २
आलोक्य मनसा सर्व्वमेक एवासहायवान्।
स्वेच्छया स्रष्टुमारेभे सृष्टिं स्वेच्छामयः प्रभुः॥ ३
आविर्ब्बभूवुः सर्व्वादौ पुंसो दक्षिणपार्श्वतः। (ग)
भवकारणरूपाश्च मूर्त्तिमन्तस्त्रयो गुणाः॥ ४
ततो महानहङ्कारः पञ्चतन्मात्रमेव च।
रूपरसगन्धस्पर्शशब्दाश्चैवेतिसंज्ञकम् (घ)॥ ५
आविर्ब्बभूव तत्पश्चात् स्वयं नारायणः प्रभुः।
श्यामो युवा पीतवासा वनमाली चतुर्भुजः॥ ६
शङ्खचक्रगदापद्मधरः स्मेरमुखाम्बुजः।
रत्नभूषणभूषाढ्यः शार्ङ्गी कौस्तुभभूषणः॥ ७
श्रीवत्सवक्षाः श्रीवासः श्रीनिधिः श्रीविभावनः।
शारदेन्दुप्रभामुष्टमुखेन्दुः सुमनोहरः॥ ८
कामदेवप्रभामुष्टरूपलावण्यसुन्दरः।

---

(क) अतोऽनन्तरं —
परमाह्लादकं शश्वत् परमानन्दकारणम्।
ध्यायन्ते योगिनः शश्वद्योगेन ज्ञानचक्षुषा॥ १
तदेवानन्दजनकं निराकारं परात्परम्।
तज्ज्योतिरन्तरे रूपमतीव सुमनोहरम्॥ २
इत्येतत् पद्यद्वयमधिकं क्वचित् पुस्तके दृष्टमपि बहुस्खल-स्थलान्नान्तर्मूलं निवेशितम्।

(क) पुरुहुतमिति पाठान्तरम्।
(ख) परिभ्रमन्निति पाठे तु छन्दोभङ्ग आपतेत् सोढ़व्य एव।
(ग) आविर्ब्बभूवुः सर्व्वेऽस्येति क्वचित् पाठः।
(घ) * * तन्मात्र एव च। * * संज्ञकाः इति बहुषु पुस्तकेषु पठ्यते। वचनवैपरीत्यमार्षम्।

श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः ॥ ९
नारायण उवाच ।
वरं वरेण्यं वरदं वरार्हं वरकारणम् ।
कारणं कारणानाञ्च कर्म्म तत्कर्म्मकारणम् ॥ १०
तपसः फलदं शश्वत्तपस्विनाञ्च तापसम् ।
वन्दे नवघनश्यामं स्वात्मारामं मनोरमम् ॥ ११
निष्कामं कामरूपञ्च कामदं कामकारणम् ।
सर्व्वं सर्व्वेश्वरं सर्व्वबीजरूपमनुत्तमम् ॥ १२
वेदरूपं वेदबीजं वेदोक्तफलदं फलम् ।
वेदाङ्गतद्विधानञ्च सर्व्ववेदविदां वरम् ॥ १३
इत्युक्त्वा भक्तियुक्तश्च स उवास तदाज्ञया ।
रत्नसिंहासने रम्ये पुरतः परमात्मनः ॥ १४
नारायणकृतं स्तोत्रं यः पठेत् सुसमाहितः ।
त्रिसन्ध्यञ्च पठेन्नित्यं पापं तस्य न विद्यते ॥ १५
पुत्रार्थी लभते पुत्रं भार्य्याहीनो लभेत् प्रियाम् ।
भ्रष्टराज्यो लभेद्राज्यं धनभ्रष्टो धनं लभेत् ॥ १६
कारागारविपद्ग्रस्तः स्तोत्रेण मुच्यते ध्रुवम् ।
रोगात् प्रमुच्यते रोगी वर्षं श्रुत्वा तु संयतः ॥ १७
इति ब्रह्मवैवर्त्ते नारायणकृतं श्रीकृष्णस्तोत्रम् ।
सौतिरुवाच ।
आविर्ब्बभूव तत्पश्चादात्मनो वामपार्श्वतः ।
शुद्धस्फटिकसङ्काशः पञ्चवक्त्रो दिगम्बरः ॥ १८
तप्तकाञ्चनवर्णाभजटाभारधरो वरः ।
ईषद्धास्यप्रसन्नास्यस्त्रिनेत्रश्चन्द्रशेखरः ॥ १९
त्रिशूलपट्टिशधरो जपमालाकरः परः ।
ज्ञानानन्दो महाज्ञानी महाज्ञानप्रदः परः ॥ २०
चन्द्रवृन्दप्रभामुष्टसुखदृश्यो मनोहरः ।
वैष्णवानाञ्च प्रवरः प्रज्वलन् ब्रह्मतेजसा ॥ २१
श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः ।
पुलकाङ्कितसर्व्वाङ्गः साश्रुनेत्रः सगद्गदः ॥ २२
श्रीमहादेव उवाच ।
जयस्वरूपं जयदं जयेशं जयकारणम् ।
प्रवरं जयदानाञ्च वन्दे तमपराजितम् ॥ २३
विश्वं विश्वेश्वरेशञ्च विश्वेशं विश्वकारणम् ।
विश्वाधारञ्च विश्वस्थं कारणानाञ्च कारणम् ॥२४
विश्वरक्षाकारणञ्च विश्वघ्नं विश्वजं परम् ।
फलबीजं फलाधारं फलञ्च तत्फलप्रदम् ॥ २५
तेजःस्वरूपं तेजोदं सर्व्वतेजस्विनां वरम् ।
इत्येवमुक्त्वा तं नत्वा रत्नसिंहासने वरे ॥ २६
नारायणञ्च संभाष्य स उवास तदासने ॥ २७
इति शम्भुकृतं स्तोत्रं यो जनः संयतः पठेत् ।
सर्व्वसिद्धिर्भवेत्तस्य विजयश्च पदे पदे ॥ २८
सन्ततिर्वर्द्धते मित्रं धनमैश्वर्य्यमेव च ।
शत्रुसैन्यं क्षयं याति दुःखानि दुरितानि च ॥ २९
इति ब्रह्मवैवर्त्ते शिवकृतं श्रीकृष्णस्तोत्रम् ।
सौतिरुवाच ।
आविर्ब्बभूव तत्पश्चात् कृष्णस्य नाभिपङ्कजात् ।
महातपस्वी वृद्धश्च कमण्डलुधरो वरः ॥ ३०
शुक्लवासाः शुक्लदन्तः शुक्लकेशश्चतुर्भुजः ।
योगीशः शिल्पिनामीशः सर्व्वेषां जनको गुरुः ॥ ३१
तपसां फलदाता च प्रदाता सर्व्वसम्पदाम् ।
स्रष्टा विधाता कर्त्ता च हर्त्ता च सर्व्वकर्म्मणः ॥ ३२
धाता चतुर्णां वेदानां ज्ञाता वेदप्रसूः पतिः ।
शान्तः सरस्वतीकान्तः सुशीलश्च कृपानिधिः ॥ ३३
श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः ।
पुलकाङ्कितसर्व्वाङ्गो भक्तिनम्रात्मकन्धरः ॥ ३४
ब्रह्मोवाच ।
कृष्णं वन्दे गुणातीतं गोविन्दमेकमक्षरम् ।
अव्यक्तमव्ययं व्यक्तं गोपवेशविधायिनम् ॥ ३५
किशोरवयसं शान्तं गोपीकान्तं मनोहरम् ।
नवीननीरदश्यामं कोटिकन्दर्पसुन्दरम् ॥ ३६
वृन्दावनवनाभ्यर्णे रासमण्डलसंस्थितम् ।
रासेश्वरं रासवासं रासोल्लाससमुत्सुकम् ॥ ३७
इत्येवमुक्त्वा तं नत्वा रत्नसिंहासने वरे ।
नारायणेशौ संभाष्य स उवास तदाज्ञया ॥ ३८
इति ब्रह्मकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ।
पापानि तस्य नश्यन्ति दुःस्वप्नः सुस्वप्नो भवेत् ॥ ३९
भक्तिर्भवति गोविन्दे श्रीपुत्रपौत्रवर्द्धिनी ।
अकीर्त्तिः क्षयमाप्नोति सत्कीर्त्तिर्वर्द्धते चिरम् ॥ ४०
इति ब्रह्मवैवर्त्ते ब्रह्मकृतं श्रीकृष्णस्तोत्रम् ।
सौतिरुवाच ।
आविर्ब्बभूव तत्पश्चाद्वक्षसः परमात्मनः ।
सस्मितः पुरुषः कश्चित् शुक्लवर्णो जटाधरः ॥ ४१
सर्व्वसाक्षी च सर्व्वज्ञः सर्व्वेषां सर्व्वकर्म्मणाम् ।

शमः सर्व्वत्र सदयो हिंसाकोपविवर्ज्जितः॥ ४२
धर्म्मज्ञानयुतो धर्म्मी धर्म्मिष्ठो धर्म्मदो भवे।
स एव कर्म्मिणां धर्म्मः परमात्मानमीश्वरम्।
श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं कृताञ्जलिः॥ ४३

श्रीधर्म्म उवाच।

कृष्णं विष्णुं वासुदेवं परमात्मानमीश्वरम्।
गोविन्दं परमानन्दमेकमक्षरमच्युतम्॥ ४४
गोपेश्वरञ्च गोपीशं गोपं गोरक्षकं विभुम्।
गवामीशञ्च गोष्ठस्थं गोवत्सपुच्छधारिणम्॥ ४५
गोगोपगोपीमध्यस्थं प्रधानं पुरुषोत्तमम्।
वन्दे नवघनश्यामं रासवासं मनोहरम्॥ ४६
इत्युच्चार्य्य समुत्तिष्ठन् रत्नसिंहासने वरे।
ब्रह्मविष्णुमहेशांस्तान् संभाष्य स उवास ह॥ ४७
चतुर्व्विंशतिनामानि धर्म्मवक्त्रोद्गतानि च।
यः पठेत् प्रातरुत्थाय स सुखी सर्व्वतो जयी॥ ४८
मृत्युकाले हरेर्नाम तस्य साध्यं भवेद्ध्रुवम्।
स यात्यन्ते हरेः स्थानं हरिदास्यं लभेद्ध्रुवम्॥४९
नित्यं धर्म्मः संघटते नाधर्म्मे तत्र भीर्भवेत्।
चतुर्व्वेदफलं तस्य शश्वत् करतले भवेत्॥ ५०
तं दृष्ट्वा सर्व्वपापानि पलायन्ते भयेन च।
भयानि चैव दुःखानि वैनतेयमिवोरगाः॥ ५१

इति ब्रह्मवैवर्त्ते धर्म्मकृतं श्रीकृष्णस्तोत्रम्।

सौतिरुवाच।

आविर्ब्बभूव कन्यैका धर्म्मस्य वामपार्श्वतः।
मूर्त्तिर्मूर्त्तिमयी साक्षाद्द्वितीया कमलालया॥ ५२
आविर्ब्बभूव तत्पश्चान्मुखतः परमात्मनः।
एका देवी शुक्लवर्णा वीणापुस्तकधारिणी॥ ५३
कोटिपूर्णेन्दुशोभाढ्या शरत्पङ्कजलोचना।
वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता॥ ५४
सस्मिता सुदती श्यामा सुन्दरीणाञ्च सुन्दरी।
स्रष्टी श्रुतीनां शास्त्राणां विदुषां जननी परा॥५५
वागधिष्ठातृदेवी सा कवीनामिष्टदेवता।
शुद्धसत्त्वस्वरूपा च शान्तरूपा सरस्वती॥ ५६
गोविन्दपुरतः स्थित्वा जगौ प्रथमतः सुखम्।
तन्नामगुणकीर्त्तीश्च वीणया सा ननर्त्त च॥ ५७
कृतानि यानि कर्म्माणि कल्पे कल्पे युगे युगे।
तानि सर्व्वाणि हरिणा तुष्टाव तं पुटाञ्जलिः॥५८

सरस्वत्युवाच।

रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम्।
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम्॥ ५९
रासेश्वरं रासकरं वरं रासेश्वरीश्वरम्।
रासाधिष्ठातृदेवञ्च वन्दे रासविनोदिनम्॥ ६०
रासायासपरिश्रान्तं रासवासविहारिणम्।
रासोत्सुकानां गोपीनां कान्तं शान्तं मनोहरम्॥६१
प्रणम्य तं यामीत्युक्त्वा प्रहृष्टवदना सती।
उवास सा सकामा च रत्नसिंहासने वरे॥ ६२
इति वाणीकृतं स्तोत्रं प्रातरुत्थाय यः पठेत्।
बुद्धिमान् बलवान् सोऽपि विद्यावान् पुत्त्रवान् सदा॥६३

इति ब्रह्मवैवर्त्ते सरस्वतीकृतं श्रीकृष्णस्तोत्रम्।

सौतिरुवाच।

आविर्ब्बभूव मनसः कृष्णस्य परमात्मनः।
एका देवी गौरवर्णा रत्नालङ्कारभूषिता॥ ६४
पीतवस्त्रपरीधाना सस्मिता नवयौवना।
सर्व्वैश्वर्य्याधिदेवी सा सर्व्वसम्पत्फलप्रदा॥ ६५
स्वर्गेषु स्वर्गलक्ष्मीश्च राजलक्ष्मीश्च राजसु।
सा हरेः पुरतः स्थित्वा परमात्मानमीश्वरम्।
तुष्टाव प्रणता साध्वी भक्तिनम्रात्मकन्धरा॥६६

महालक्ष्मीरुवाच।

सत्यस्वरूपं सत्येशं सत्यबीजं सनातनम्।
सत्याधारञ्च सत्यज्ञं सत्यमूलं नमाम्यहम्॥ ६७
इत्युक्त्वा श्रीहरिं नत्वा सा चोवास सुखासने।
तप्तकाञ्चनवर्णाभा भासयन्ती दिशस्त्विषा॥ ६८
आविर्ब्बभूव तत्पश्चाद्बुद्धेश्च परमात्मनः।
सर्व्वाधिष्ठातृदेवी सा मूलप्रकृतिरीश्वरी॥ ६९
निद्रातृष्णाक्षुत्पिपासादयाश्रद्धाक्षमादिकाः।
तासाञ्च सर्व्वशक्तीनामीशाधिष्ठातृदेवता॥७०
भयङ्करी शतभुजा दुर्गा दुर्गार्त्तिनाशिनी।
आत्मनः शक्तिरूपा सा जगतां जननी परा॥ ७१
त्रिशूलशक्तिशार्ङ्गञ्च धनुःखड्गशराणि च।
शङ्खचक्रगदापद्ममक्षमालाकमण्डलू॥ ७२
वज्रमङ्कुशपाशञ्च भुशुण्डीदण्डतोमरम्।
नारायणास्त्रं ब्रह्मास्त्रं रौद्रं पाशुपतन्तथा॥ ७३
पार्ज्जन्यं वह्निगान्धर्व्वं वारुणं बिभ्रती सती।
श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं मुदान्विता॥ ७४

प्रकृतिरुवाच।

अहं प्रकृतिरीशानां सर्व्वेषां सर्व्वरूपिणी।
सर्व्वशक्तिस्वरूपा च मया च शक्तिमज्जगत्॥७५
त्वया सृष्टिर्न स्वतन्त्रा त्वमेव जगतां पतिः।
पतिः पिता च स्रष्टा च संहर्त्ता च पुनर्विधिः॥७६
स्रष्टुः स्रष्टा च संहर्तुः संहर्त्ता वेधसां विधिः।
परमानन्दरूपं त्वां वन्दे सानन्दपूर्व्वकम्॥७७
चक्षुर्निमेषमात्रेण ब्रह्मणः पतनं भवेत्।
तस्य प्रभावमतुलं वर्णितुं कः क्षमो विभोः॥७८
भ्रूभङ्गलीलामात्रेण विष्णुकोटिं सृजेत्तु यः।
चराचरांश्च विश्वेषु देवान् ब्रह्मपुरोगमान्॥७९
मद्विधाः कतिधा देवीः स्रष्टुं शक्ताश्च लीलया।
परिपूर्णतमं पूज्यं वन्दे सानन्दपूर्व्वकम्॥८०
महान्विराड् यत्कलांशोविश्वासंख्याश्रयोविभोः(क)
वन्दे सानन्दपूर्व्वं तं परमात्मानमीश्वरम्॥८१(ख)
यञ्च स्तोतुमशक्ता वै ब्रह्मविष्णुशिवादयः।
देवा अहञ्च वाणी च वन्दे तं प्रकृतेः परम्॥८२
देवाश्च विदुषां श्रेष्ठाः स्तोतुं शक्ता न लक्षितुम्।
निर्लक्ष्यं कः क्षमः स्तोतुं तं निरीहं नमाम्यहम्॥८३
इत्येवमुक्त्वा सा दुर्गा रत्नसिंहासने वरे।
उवास नत्वा श्रीकृष्णं तुष्टुवुस्तं सुरेश्वराः॥८४
इति दुर्गाकृतं स्तोत्रं कृष्णस्य परमात्मनः।
यः पठेदर्च्चनाकाले स जयी सर्व्वतः सुखी॥८५
दुर्गा तस्य गृहं त्यक्त्वा नैव याति कदाचन।
भवाब्धौ यशसायाति यात्यन्ते श्रीहरेः पुरः॥८६

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-शौनकसंवादे दुर्गाकृतं श्रीकृष्णस्तोत्रं समाप्तञ्च तृतीयोऽध्यायः॥३॥

---

(क) यत् इति लुप्तषष्ठीकमव्ययपदम्। विश्वासंख्या-श्रयः असंख्यविश्वाश्रय इत्यर्थः। विश्वासंख्येति परनिपात आर्षः।

(ख) सानन्दपूर्व्वमित्यस्य आनन्दपूर्व्वकं सानन्दञ्च इत्यर्थः। सिद्धिश्चार्षी। एवमन्यत्र।

## चतुर्थोऽध्यायः।

सौतिरुवाच।

आविर्ब्बभूव पश्चात्तु कृष्णस्य रसनाग्रतः।
शुद्धस्फटिकसङ्काशा देवी चैका मनोहरा॥१
शुक्लवस्त्रपरीधाना सर्व्वालङ्कारभूषिता।
बिभ्रती जपमालाञ्च सा सावित्री प्रकीर्त्तिता॥२
तुष्टाव पुरतः स्थित्वा परं ब्रह्म सनातनम्।
पुटाञ्जलिपरा साध्वी भक्तिनम्रात्मकन्धरा॥३

सावित्र्युवाच।

नमामि सर्व्ववीजं त्वां ब्रह्मवीजं सनातनम्।
परात् परतरं श्यामं निर्व्विकारं निरञ्जनम्॥४
इत्युक्त्वा सस्मिता देवी रत्नसिंहासने वरे।
उवास श्रीहरिं नत्वा पुनरेव श्रुतिप्रसूः॥५
आविर्ब्बभूव तत्पश्चात् कृष्णस्य परमात्मनः।
मानसाच्च पुमानेकस्तप्तकाञ्चनसन्निभः॥६
मनो मथ्नाति सर्व्वेषां पञ्चवाणेन कामिनाम्।
तन्नाम मन्मथस्तेन प्रवदन्ति मनीषिणः॥७
तस्य पुंसो वामपार्श्वात् कामस्य कामिनी वरा।
बभूवातीव ललिता सर्व्वेषां मोहकारिणी॥८
रतिर्ब्बभूव सर्व्वेषां तां दृष्ट्वा सस्मितां सतीम्।
रतीति तेन तन्नाम प्रवदन्ति मनीषिणः॥९
हरिं स्तुत्वा तया सार्द्धम् उवास स हरेः पुरः।
रत्नसिंहासने रम्ये पञ्चवाणो धनुर्द्धरः॥१०
मारणं स्तम्भनञ्चैव जृम्भणं शोषणं तथा।
उन्मादनं पञ्चवाणः पञ्च वाणान् विभर्त्ति सः॥११
वाणांश्चिक्षेप सर्व्वांश्च कामो वाणपरीक्षया।
सद्यः सर्व्वे सकामाश्च बभूवुरीश्वरेच्छया॥१२
रतिं दृष्ट्वा ब्रह्मणश्च रेतःपातो बभूव ह।
तत्र तस्थौ महायोगी वस्त्रेणाच्छाद्य लज्जया॥१३
वस्त्रं दग्ध्वा समुत्तस्थौ ज्वलदग्निः सुरेश्वरः।
कोटितालप्रमाणश्च शिखश्च समुज्ज्वलः॥१४
कृष्णस्तदहनं दृष्ट्वा सस्मेरापः सलीलया।
निश्वासवायुना सार्द्धं सुखविन्दुं समुद्गिरन्॥१५
विश्वौघं प्लावयामास सुखविन्दुजलं द्विज।
तस्य किञ्चिज्जलकणं वह्निं शान्तं चकार ह॥१६
ततःप्रभृति तेनाग्निस्तोयान्निर्व्वाणतां व्रजेत्।

आविर्भूतः पुमानेकस्ततस्तद्दधिदेवता ॥ १७
जलस्थो तज्जलादेकः पुमान् स वरुणः स्मृतः।
जलाधिष्ठातृदेवोऽसौ सर्व्वेषां यादसां पतिः ॥ १८
आविर्बभूव कन्यैका तद्धर्मवामपार्श्वतः।
स्वाहा च वह्निपत्नीं तां प्रवदन्ति मनीषिणः ॥१९
जलेशस्य वामपार्श्वात् कन्या चैका बभूव ह।
वरुणानीति विख्याता वरुणस्य प्रिया सती ॥२०
बभूव पवनः श्रीमान् विष्णोर्निश्वासवायुना।
स च प्राणश्च सर्व्वेषां निश्वासस्तत्तनूद्भवः ॥२१
तस्य वायोर्व्वामपार्श्वात् कन्या चैका बभूव ह।
वायोः पत्नी सा च देवी वायवी परिकीर्त्तिता ॥२२
कृष्णस्य कामवाणेन रेतःपातो बभूव ह।
जले तद्रेचनं चक्रे लज्जया सुरसंसदि ॥२३
सहस्रवत्सरान्ते तत् डिम्बरूपं बभूव ह।
ततो महान् विराड् जज्ञे विश्वौघाधार एव सः ॥२४
यस्यैकलोमविवरे विश्वस्य च व्यवस्थितिः।
स्थूलात् स्थूलतमः सोऽपि महान्नान्यस्ततः परम् ॥२५
स एव षोड़शांशोऽपि कृष्णस्य परमात्मनः।
महान् विष्णुः स विज्ञेयः सर्व्वाधारः सनातनः ॥२६
महार्णवे शयानः स पद्मपत्रं यथा जले।
बभूवतुस्तौ दैत्यौ द्वौ तस्य कर्णमलोद्भवौ ॥२७
तौ जलाच्च समुत्थाय ब्रह्माणं हन्तुमुद्यतौ।
नारायणश्च भगवान् जघ्नतौ तौ जघान ह ॥२८
बभूव मेदिनी कृत्स्ना कार्त्स्न्येन मेदसा तयोः।
तत्रैव सन्ति विश्वानि सा च देवी वसुन्धरा ॥२९

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे
सौतिशौनकसंवादे सृष्टिनिरूपणे
चतुर्थोऽध्यायः ॥४॥

—o—

## पञ्चमोऽध्यायः।

शौनक उवाच।

गोगोपगोप्यो गोलोके किं नित्याः किं नु कल्पिताः।
मम सन्देहभेदार्थं तन्मे व्याख्यातुमर्हसि ॥१

सौतिरुवाच।

सर्व्वादिसृष्टौ-ताः सृष्टाः प्रलये प्रलये स्थिताः।
सर्व्वादिसृष्टिकथनं यन्मया कथितं द्विज ॥ २
सर्व्वादिसृष्टौ सृष्टौ च नारायणमहेश्वरौ।
प्रलये प्रलये व्यक्तौ स्थितौ तौ प्रकृतिश्च सा ॥३
सर्व्वादौ ब्रह्मकल्पस्य चरितं कथितं द्विज।
वाराहपाद्मकल्पौ द्वौ कथयिष्यामि शोष्यसि ॥४
ब्राह्मवाराहपाद्माश्च कल्पाश्च त्रिविधा मुने।
यथा युगानि चत्वारि क्रमेण कथितानि च ॥५
सत्यत्रेताद्वापरञ्च कलिश्चेति चतुर्युगम्।
त्रिशतैश्च षष्ट्यधिकैर्युगैर्दिव्यं युगं स्मृतम् ॥६
मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः।
चतुर्द्दशसु मनुषु गतेषु ब्रह्मणो दिनम् ॥ ७
त्रिशतैश्च षष्ट्यधिकैर्द्दिनैर्वषञ्च ब्रह्मणः।
अष्टोत्तरं वर्षशतं विधेरायुर्निरूपितम् ॥८
एतन्निमेषकालस्तु कृष्णस्य परमात्मनः।
ब्रह्मणश्चायुषा कल्पः कालविद्भिर्निरूपितः ॥९
क्षुद्रकल्पा बहुतरास्ते संवर्त्तादयः स्मृताः।
सप्तकल्पान्तजीवी च मार्कण्डेयश्च तन्मतः ॥१०
ब्रह्मणश्च दिनेनैव स कल्पः परिकीर्त्तितः।
विधेश्च सप्तदिवसे मुनेरायुर्निरूपितम् ॥११
ब्राह्मवाराहपाद्माश्च त्रयः कल्पा निरूपिताः।
कल्पत्रये यथासृष्टि कथयामि निशामय ॥१२
ब्राह्मे च मेदिनीं सृष्ट्वा स्रष्टा सृष्टिं चकार सः।
मधुकैटभयोश्चैव मेदसा चाज्ञया प्रभोः ॥१३
वाराहे तां समुद्धृत्य लुप्तां मग्नां रसातलात्।
विष्णोर्वराहरूपस्य द्वारा चातिप्रयत्नतः ॥ १४
पाद्मे विष्णोर्नाभिपद्मे स्रष्टा सृष्टिं विनिर्ममे।
त्रिलोकीं ब्रह्मलोकान्तां नित्यलोकत्रयं विना ॥१५
एतत्तु कालसंख्यानमुक्तं सृष्टिनिरूपणे।
किञ्चिन्निरूपणं सृष्टेः किं भूयः श्रोतुमिच्छसि ॥१६

शौनक उवाच।

अतः परन्तु गोलोके गोलोकेशो महान् विभुः।
एतान् सृष्ट्वा किं चकार तन्मे व्याख्यातुमर्हसि ॥१७

सौतिरुवाच।

एतान् सृष्ट्वा जगामासौ सुरम्यं रासमण्डलम्।
एतैः समेतो भगवानतीवकमनीयकम् ॥१८
रम्याणां कल्पवृक्षाणां मध्येऽतीव मनोहरम्।
सुविस्तीर्णञ्च सुषमं सुस्निग्धं मण्डलाकृतम् ॥१९
चन्दनागुरुकस्तूरीकुङ्कुमैश्च सुसंस्कृतम्।

दधिलाजशुक्लधान्यदूर्व्वापर्णपरिप्लुतम् ॥२०
पट्टसूत्रग्रन्थियुक्तानवचन्दनपल्लवैः ।
संयुक्तरम्भास्तम्भानां समूहैः परिवेष्टितम् ॥२१
सद्रत्नसारनिर्म्माणमण्डपानां त्रिकोटिभिः ।
रत्नप्रदीपज्वलितैः पुष्पधूपाधिवासितैः ॥२२
शृङ्गारार्हभोगवस्तुसमूहपरिवेष्टितैः ।
अतीव ललिताकल्पतल्पयुक्तैः सुशोभितम् ॥२३
तत्र गत्वा च तैः सार्द्धं समुवास जगत्पतिः ।
दृष्ट्वा रासं विस्मितास्ते बभूवुर्मुनिसत्तम ॥२४
आविर्बभूव कन्यैका कृष्णस्य वामपार्श्वतः ।
धावित्वा पुष्पमानीय ददावर्घ्यं प्रभोः पदे ॥२५
रासे सम्भूय गोलोके सा दधाव हरेः पुरः ।
तेन राधा समाख्याता पुराविद्भिर्द्विजोत्तम ॥२६
प्राणाधिष्ठातृदेवी सा कृष्णस्य परमात्मनः ।
आविर्बभूव प्राणेभ्यः प्राणेभ्योऽपि गरीयसी ॥२७
देवी षोडशवर्षीया नवयौवनसंयुता ।
वह्निशुद्धांशुकाधाना सस्मिता सुमनोहरा ॥२८
सुकोमलाङ्गी ललिता सुन्दरीषु च सुन्दरी ।
बृहन्नितम्बभारार्त्ता पीनश्रोणीपयोधरा ॥२९
बन्धुजीवजितारक्तसुन्दरोष्ठाधरा वरा ।
मुक्तापंक्तिजिता चारुदन्तपंक्त्या मनोहरा ॥३०
शरत्पार्व्वणकोटीन्दु-शोभामुष्टशुभानना ।
चारुसीमन्तिनी चारुशरत्पङ्कजलोचना ॥३१
खगेन्द्रचञ्चुविजितचारुनासा मनोहरा ।
स्वर्णगण्डूकविजिते गण्डयुग्मे च बिभ्रती ॥३२
दधती चारुकर्णौ च रत्नाभरणभूषिते ।
चन्दनागुरुकस्तूरीयुक्तकुङ्कुमबिन्दुभिः ॥३३
सिन्दूरबिन्दुसंयुक्तसुकपोला मनोहरा ।
सुसंस्कृतं केशपाशं मालतीमाल्यभूषितम् ॥३४
सुगन्धकवरीभारं सुन्दरं दधती सती ।
स्थलपद्मप्रभामुष्टं पादयुग्मञ्च बिभ्रती ॥३५
गमनं कुर्व्वती सा च हंसखञ्जनगञ्जनम् ।
सद्रत्नसारनिर्म्माणां वनमालां मनोहराम् ॥३६
हारं हीरकनिर्म्माणं रत्नकेयूरकङ्कणम् ।
सद्रत्नसारनिर्म्माणं पाशकं सुमनोहरम् ॥३७
अमूल्यरत्ननिर्म्माणं क्वणन्मञ्जीररञ्जितम् ।
नानाप्रकारचित्राढ्यं सुन्दरं परिबिभ्रती ॥३८

सा च सम्भाष्य गोविन्दं रत्नसिंहासने वरे ।
उवास सस्मिता भर्त्तुः पश्यन्ती मुखपङ्कजम् ॥३९
तस्याश्च लोमकूपेभ्यः सद्यो गोपाङ्गनागणाः ।
आविर्बभूव रूपेण वेशेनैव च तत्समः ॥४०
लक्षकोटिपरिमितः शश्वत् सुस्थिरयौवनः ।
संख्याविद्भिश्च संख्यातो गोलोके गोपिकागणः ॥४१
कृष्णस्य लोमकूपेभ्यः सद्यो गोपगणो मुने ।
आविर्बभूव रूपेण वेशेनैव च तत्समः ॥४२
त्रिंशत्कोटिपरिमितः कमनीयो मनोहरः ।
संख्याविद्भिश्च संख्यातो बल्लवानां गणः श्रुतौ ॥४३
कृष्णस्य लोमकूपेभ्यः सद्यश्चाविर्बभूव ह ।
नानावर्णो गोगणश्च शश्वत्सुस्थिरयौवनः ॥४४
बलीवर्द्दाः सुरभ्यश्च वत्सा नानाविधाः शुभाः ।
अतीव ललिताः श्यामा बह्वश्च कामधेनवः ॥ ४५
तेषामेकं बलीवर्द्दं कोटिसिंहसमं बले ।
शिवाय प्रददौ कृष्णो वाहनाय मनोहरम् ॥ ४६
कृष्णाङ्घ्रिनखरन्ध्रेभ्यो हंसपंक्तिर्मनोहरा ।
आविर्बभूव सहसा स्त्रीपुंवत्ससमन्विता ॥ ४७
तेषामेकं राजहंसं महाबलपराक्रमम् ।
वाहनाय ददौ कृष्णो ब्रह्मणे च तपस्विने ॥ ४८
वामकर्णस्य विवरात् कृष्णस्य परमात्मनः ।
गणः श्वेततुरङ्गाणामाविर्भूतो मनोहरः ॥ ४९
तेषामेकञ्च श्वेताश्वं धर्म्माय वाहनाय च ।
ददौ गोपाङ्गनेशश्च संप्रीत्या सुरसंसदि ॥ ५०
दक्षकर्णस्य विवरात् पुंसश्च सुरसंसदि ।
आविर्भूता सिंहपंक्तिर्महाबलपराक्रमा ॥ ५१
तेषामेकं ददौ कृष्णः प्रकृत्यै परमादरम् ।
अमूल्यवरमाल्यञ्च वरं यदभिवाञ्छितम् ॥ ५२
कृष्णो योगेन योगीन्द्रश्चकार रथपञ्चकम् ।
शुद्धरत्नेन्द्रनिर्म्माणं मनोयायि मनोहरम् ॥ ५३
लक्षयोजनमूर्द्ध्वं च प्रस्थे च शतयोजनम् ।
लक्षचक्रं वायुवहं लक्षक्रीड़ागृहान्वितम् ॥ ५४
शृङ्गारार्हभोगवस्तु-तल्पासंख्यसमन्वितम् ।
रत्नप्रदीपलक्षाणां वाजिभिश्च विराजितम् ॥ ५५
नानाचित्रविचित्राढ्यं सद्रत्नकलसोज्ज्वलम् ।
रत्नदर्पणभूषाढ्यं शोभितं श्वेतचामरैः ॥ ५६
वह्निशुद्धांशुकैश्चित्रैर्म्मालाजालैर्विभूषितम् ।

मणीन्द्रमुक्तामाणिक्यहीराहारविराजितम्॥ ५७
आरक्तवर्णरत्नेन्द्रसारनिर्म्माणकृत्रिमैः।
पङ्कजानामसंख्यैश्च सुन्दरैश्च सुशोभितम्॥ ५८
ददौ नारायणायैकं तेषां मध्ये द्विजोत्तम।
एकं दत्त्वा राधिकायै ररक्ष शेषमात्मने॥ ५९
आविर्ब्बभूव कृष्णस्य गुह्यदेशात्ततः परम्।
पिङ्गलश्च पुमानेकः पिङ्गलैश्च गणैः सह॥ ६०
आविर्भूता यतो गुह्यात् तेन ते गुह्यकाः स्मृताः।
यः पुमान् स कुवेरश्च धनेशो गुह्यकेश्वरः॥ ६१
बभूव कन्यका चैका कुवेरवामपार्श्वतः।
कुवेरपत्नी सा देवी सुन्दरीणां मनोरमा॥ ६२
भूतप्रेतपिशाचाश्च कुष्माण्डब्रह्मराक्षसाः।
वेताला विकृतास्तस्याविर्भूता गुह्यदेशतः॥ ६३
शङ्खचक्रगदापद्मधारिणो वनमालिनः।
पीतवस्त्रपरीधानाः सर्व्वे श्यामचतुर्भुजाः॥ ६४
किरीटिनः कुण्डलिनो रत्नभूषणभूषिताः।
आविर्भूताः पार्षदाश्च कृष्णस्य मुखतो मुने॥ ६५
चतुर्भुजान् पार्षदांश्च ददौ नारायणाय च।
गुह्यकान् गुह्यकेशाय भूतादीन् शङ्कराय च॥ ६६
द्विभुजाः श्यामवर्णाश्च जपमालाकरा वराः।
ध्यायन्तश्चरणाम्भोजं कृष्णस्य सन्ततं सदा॥ ६७
दास्ये नियुक्ता दासाश्चैवार्घ्यमादाय यत्नतः।
आविर्भूता वैष्णवाश्च सर्व्वे कृष्णपरायणाः॥ ६८
पुलकाङ्कितसर्व्वाङ्गाः साश्रुनेत्राः सगद्गदाः।
आविर्भूताः पादपद्मात् पादपद्मैकमानसाः॥ ६९
आविर्ब्बभूवुः कृष्णस्य दक्षनेत्राद्भयङ्कराः।
त्रिशूलपट्टिशधरास्त्रिनेत्राश्चन्द्रशेखराः॥ ७०
दिगम्बरा महाकाया ज्वलदग्निशिखोपमाः।
ते भैरवा महाभागाः शिवतुल्याश्च तेजसा॥ ७१
रुरुसंहारकालाख्या असितक्रोधभीषणाः।
महाभैरवखट्वाङ्गाविश्यष्टौ भैरवाः स्मृताः॥ ७२
आविर्ब्बभूव कृष्णस्य वामनेत्राद्भयङ्करः।
त्रिशूलपट्टिशव्याघ्रचर्म्माम्बरगदाधरः॥ ७३
दिगम्बरो महाकायस्त्रिनेत्रश्चन्द्रशेखरः।
स ईशानो महाभागो दिक्पालानामधीश्वरः॥ ७४
डाकिन्यश्चैव योगिन्यः क्षेत्रपालाः सहस्रशः।
आविर्ब्बभूवुः कृष्णस्य नासिकाविवरोदरात्॥ ७५
सुरास्त्रिकोटिसंख्याता दिव्यमूर्त्तिधरा वराः।
आविर्ब्बभूवुः सहसा पुंसश्च पृष्ठदेशतः॥ ७६

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे
सौति-शौनकसंवादे सृष्टिनिरूपणे
पञ्चमोऽध्यायः॥ ५॥

---

## षष्ठोऽध्यायः।

सौतिरुवाच।

अथ कृष्णो महालक्ष्मीं सादरञ्च सरस्वतीम्।
नारायणाय प्रददौ रत्नेन्द्रमालया सह॥ १
सावित्रीं ब्रह्मणे प्रादान्मूर्त्तिं धर्म्माय सादरम्।
रतिं कामाय रूपाढ्यां कुवेराय मनोरमाम्॥ २
अन्याश्च या या अन्येभ्यो याश्च येभ्यः समुद्भवाः।
तस्मै तस्मै ददौ कृष्णस्तां तां रूपवतीं सतीम्॥ ३
ततः शङ्करमाहूय सर्व्वेशो योगिनां गुरुम्।
उवाच प्रियमित्येवं गृहाण सिंहवाहिनीम्॥ ४
श्रीकृष्णस्य वचः श्रुत्वा प्रहस्य नीललोहितः।
उवाच भीतः प्रणतः प्राणेशं प्रभुमच्युतम्॥ ५

श्रीशङ्कर उवाच।

अधुनाहं न गृह्णामि प्रकृतिं प्राकृतो यथा।
त्वद्भक्त्येकव्यवहितां दास्यमार्गविरोधिनीम्॥ ६
तत्त्वज्ञानसमाच्छन्नां योगद्वारकपाटिकाम्।
मुक्तीच्छाध्वंसरूपाञ्च सकामां कामवर्द्धिनीम्॥ ७
तपस्याच्छन्नरूपाञ्च महामोहकरण्डिकाम्।
भवकारागृहे घोरे दृढां निगड़रूपिणीम्॥ ८ (क)
शश्वद्विबुद्धिजननीं सद्बुद्धिच्छेदकारिणीम्।
शश्वद्विभोगसाराञ्च(ख)विषयेच्छाविवर्द्धिनीम्॥ ९
नेच्छामि गृहिणीं नाथ वरं देहि मदीप्सितम्।
यस्य यद्वाञ्छितं तस्मै तद्ददाति सदीश्वरः॥ १०
त्वद्भक्तिविषये दास्ये लालसा वर्द्धतेऽनिशम्।
तृप्तिर्न जायते नामजपने पादसेवने॥ ११
त्वन्नाम पञ्चवक्त्रेण गुणञ्च मङ्गलालयम्।
स्वप्ने जागरणे शश्वद्गायन् गायन् भ्रमाम्यहम्॥ १२

---

(क) एष श्लोकः क्वचित् पुस्तके नास्ति।
(ख) * * साध्वी चेति क्वाचित्कः पाठः।

आकल्पकोटिकोटिञ्च त्वद्रूपध्यानतत्परम्।
भोगेच्छाविषये नैव योगी तपसि मन्मनः॥ १३
त्वत्सेवने पूजने च वन्दने नामकीर्त्तने।
सदोल्लसितमेषाञ्च विरतौ विरतिं लभेत्॥ १४
स्मरणं कीर्त्तनं नामगुणयोः श्रवणं जपः।
तच्चारुरूपध्यानं त्वत्पादसेवाभिवन्दनम्॥ १५
समर्पणञ्चात्मनश्च नित्यं नैवेद्यभोजनम्।
वरं वरेश देहीदं नवधाभक्तिलक्षणम्॥ १६
सार्ष्टि-सालोक्य-सारूप्य-सामीप्य-साम्य-लीनताम्।
वदन्ति षड्विधां मुक्तिं मुक्ता मुक्तविदो विभो॥ १७
अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा।
ईशित्वञ्च वशित्वञ्च सर्व्वकामावसायिता॥ १८
सर्व्वज्ञ दूरश्रवणं परकायप्रवेशनम्।
वाक्सिद्धिः कल्पवृक्षत्वं स्रष्टुं संहर्त्तुमीशता॥ १९
अमरत्वञ्च सर्व्वाग्र्यं सिद्धयोऽष्टादश स्मृताः।
योगास्तपांसि सर्व्वाणि दानानि च व्रतानि च॥ २०
यशः कीर्त्तिर्व्वचः सत्यं धर्म्माण्यनशनानि च।
भ्रमणं सर्व्वतीर्थेषु स्नानमन्यसुरार्च्चनम्॥ २१
सुरार्च्चादर्शनं सप्तद्वीपसप्तप्रदक्षिणम्।
स्नानं सर्व्वसमुद्रेषु सर्व्वस्वर्गप्रदर्शनम्॥ २२
ब्रह्मत्वञ्चैव रुद्रत्वं विष्णुत्वञ्च परं पदम्।
अतोऽनिर्व्वचनीयानि वाञ्छनीयानि सन्ति वा॥ २३
सर्व्वाण्येतानि सर्व्वेश कथितानि च यानि च।
तव भक्तिकलांशस्य कलां नार्हन्ति षोड़शीम्॥ २४
शर्व्वस्य वचनं श्रुत्वा कृष्णस्तं योगिनां गुरुम्।
प्रहस्योवाच वचनं सत्यं सर्व्वसुखप्रदम्॥ २५

श्रीभगवानुवाच।

मत्सेवां कुरु सर्व्वेश शर्व्व सर्व्वविदां वर।
कल्पकोटिशतं यावत् पूर्णं शश्वदहर्निशम्॥ २६
वरस्तपस्विनां त्वञ्च सिद्धानां योगिनां तथा।
ज्ञानिनां वैष्णवानाञ्च सुराणाञ्च सुरेश्वर॥ २७
अमरत्वं लभ भव भव (क) मृत्युञ्जयो महान्।
सर्व्वसिद्धिञ्च वेदांश्च सर्व्वज्ञत्वञ्च मद्वरात्॥ २८
असंख्यब्रह्मणां पातं लीलया वत्स द्रक्ष्यसि।
अद्यप्रभृति ज्ञानेन तेजसा वयसा शिव॥ २९
पराक्रमेण यशसा महसा मत्समो भव।
प्राणानामधिकस्त्वञ्च न भक्तस्त्वत्परो मम॥ ३०
त्वत्परो नास्ति मे प्रेयांस्त्वं मदीयात्मनः परः।
ये त्वां निन्दन्ति पापिष्ठा ज्ञानहीना विचेतनाः॥ ३१
पच्यन्ते कालसूत्रे च यावच्चन्द्रदिवाकरौ।
कल्पकोटिशतान्ते च ग्रहीष्यसि शिवां शिव॥ ३२
ममाव्यर्थञ्च वचनं पालनं कर्त्तुमर्हसि।
त्वन्मुखान्निर्गतं वाक्यं करोमि नाधुनेति च॥ ३३
मद्वाक्यञ्च स्ववाक्यञ्च पालनं तत् करिष्यसि।
गृहीत्वा प्रकृतिं शम्भो दिव्यं वर्षसहस्रकम्॥ ३४
सुखं सुमहत् शृङ्गारं करिष्यसि न संशयः।
न केवलं तपस्वी त्वमीश्वरो मत्समो महान्॥ ३५
काले गृही तपस्वी च योगी स्वेच्छामयो हि यः।
दुःखञ्च दारसंयोगे यत्त्वया कथितं शिव॥ ३६
कुस्त्री ददाति दुःखञ्च स्वामिने न पतिव्रता।
कुले महति या जाता कुलजा कुलपालिका॥ ३७
करोति पालनं स्नेहात् सत्पुत्रस्य समं (क) पतिम्।
पतिर्बन्धुर्गतिर्भर्त्ता दैवतं कुलयोषितः॥ ३८
पतितोऽपतितो वापि कृपणश्चेश्वरोऽथवा।
असत्कुलप्रसूता याः पित्रोर्दुःशीलमिश्रिताः॥ ३९
ध्रुवं ताः परभोग्याश्च पतिं निन्दन्ति सन्ततम्।
आवयोरतिरिक्तञ्च या पश्यति पतिं सती॥ ४०
गोलोके स्वामिना सार्द्धं कोटिकल्पं प्रमोदते।
भविता सा शिवा शैवी प्रकृतिर्व्वैष्णवी शिव॥ ४१
मदाज्ञया च तां साध्वीं ग्रहीष्यसि भवाय च।
प्रकृत्या योनिसंयुक्तं त्वल्लिङ्गं तीर्थमत्कृतम्॥ ४२
तीर्थे सहस्रं संपूज्य भक्त्या पञ्चोपचारतः।
सदक्षिणं संयतो यः पवित्रश्च जितेन्द्रियः॥ ४३
कोटिकल्पञ्च गोलोके मोदते च मया सह।
लक्षं तीर्थे पूजयेद्यो विधिवत् साधुदक्षिणम्॥ ४४
न च्युतिस्तस्य गोलोकात् स भवेदावयोः समः।
मृद्भस्मगोशकृत्पिण्डे तीर्थे वालुकयापि वा॥ ४५
कृत्वा लिङ्गं सकृत् पूज्य वसेत् कल्पायुतं दिवि।
प्रजावान् भूमिमान् विद्वान् पुत्रवान् धनवांस्तथा॥ ४६
ज्ञानवान् मुक्तिमान् साधुः शिवलिङ्गार्च्चनाद्भवेत्।

(क) लभ लभ भवेति पाठान्तरम्।

(क) शश्वत् पुत्रसममिति क्वचित् पाठः।

शिवलिङ्गार्च्चनस्थानमतीर्थं तीर्थमेव तत्।
भवेत्तत्र मृतः पापी शिवलोकं स गच्छति ॥ ४७
महादेव महादेव महादेवेतिवादिनः।
पश्चाद्यामि महात्रस्तो नामश्रवणलोभतः ॥ ४८
शिवेति शब्दमुच्चार्य्य प्राणांस्त्यजति यो नरः।
कोटिजन्मार्ज्जितात् पापान्मुक्तो मुक्तिं प्रयाति सः॥४९
शिवं कल्याणवचनं कल्याणं मुक्तिवाचकम्।
यतस्तत् प्रभवेत्तेन स शिवः परिकीर्त्तितः ॥ ५०
विच्छेदे धनबन्धूनां निमग्नः शोकसागरे।
शिवेति शब्दमुच्चार्य्य लभेत् सर्व्वशिवं नरः ॥ ५१
पापघ्ने वर्त्तते शिश्च वश्च मुक्तिप्रदे तथा।
पापघ्नो मोक्षदो नृणां शिवस्तेन प्रकीर्त्तितः ॥ ५२
शिवेति च शिवं नाम यस्य वाचि प्रवर्त्तते।
कोटिजन्मार्ज्जितं पापं तस्य नश्यति निश्चितम् ॥५३
इत्युक्त्वा शूलिने कृष्णो दत्त्वा कल्पतरुं मनुम्।
तत्त्वज्ञानं मृत्युजयमुवाच सिंहवाहिनीम् ॥ ५४

श्रीभगवानुवाच।

अधुना तिष्ठ वत्से त्वं गोलोके मम सन्निधौ।
काले भजिष्यसि शिवं शिवदञ्च शिवायनम् ॥ ५५
तेजःसु सर्व्वदेवानामाविर्भूय वरानने।
संहत्य दैत्यान् सर्व्वांश्च भविता सर्व्वपूजिता ॥ ५६
ततः कल्पविशेषे च सत्ये सत्ययुगे सति।
भविता दक्षकन्या त्वं सुशीला शम्भुगेहिनी ॥ ५७
ततः शरीरं संत्यज्य यज्ञे भर्त्तुश्च निन्दया।
मेनायां शैलभार्य्यायां भविता पार्व्वतीति च ॥ ५८
दिव्यं वर्षसहस्रञ्च विहरिष्यसि शम्भुना।
पूर्णं ततः सर्व्वकालमभेदत्वं लभिष्यसि ॥ ५९
काले सर्व्वेषु विश्वेषु महापूजा च पूजिते।
भविता प्रतिवर्षे च शारदीया सुरेश्वरि ॥ ६०
ग्रामेषु नगरेष्वेव पूजिता ग्रामदेवता।
भवती भवितेत्येवं नामभेदेन चारुणा ॥ ६१
मदाज्ञया शिवकृतैस्तन्त्रैर्नानाविधैरपि।
पूजाविधिं विधास्यामि कवचं स्तोत्रसंयुतम् ॥ ६२
भविष्यन्ति महान्तश्च तवैव परिचारकाः।
धर्म्मार्थकाममोक्षाणां सिद्धाश्च फलभागिनः ॥ ६३
ये त्वां मातर्भजिष्यन्ति पुण्यक्षेत्रे च भारते।
तेषां यशश्च कीर्त्तिश्च धर्म्मैश्वर्य्यञ्च वर्द्धते ॥ ६४
इत्युक्त्वा प्रकृतिं तस्यै मन्त्रमेकादशाक्षरम्।
दत्त्वा सकामबीजञ्च मन्त्रराजमनुत्तमम् ॥ ६५
चकार विधिना ध्यानं भक्तां भक्तानुकम्पया।
श्रीमायाकामबीजाढ्यं ददौ मन्त्रं दशाक्षरम् ॥६६
सृष्ट्यौपयोगिकीं शक्तिं सर्व्वसिद्धिञ्च कामदाम्।
यद्विशिष्टं कृष्णतत्त्वज्ञानं तस्यै ददौ विभुः ॥ ६७
त्रयोदशाक्षरं मन्त्रं दत्त्वा तस्यै जगत्पतिः।
कवचं स्तोत्रसहितं शङ्कराय तथा द्विज ॥ ६८
दत्त्वा धर्म्माय तं मन्त्रं सिद्धिज्ञानं तदेव च।
कामाय वह्नये चैव कुवेराय च वायवे ॥ ६९
एवं कुवेरादिभ्यस्तु दत्त्वा मन्त्रादिकं परम्।
विधिश्चोवाच सृष्ट्यर्थं विधातुर्व्विधिरेव सः ॥ ७०

श्रीभगवानुवाच।

मदीयञ्च तपः कृत्वा दिव्यं वर्षसहस्रकम्।
सृष्टिं कुरु महाभाग विधे नानाविधां पराम् ॥ ७१
इत्युक्त्वा ब्रह्मणे कृष्णो ददौ मालां मनोरमाम्।
जगाम सार्द्धं गोपीभिर्गोपैर्वृन्दावनं तथा ॥ ७२

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-
शौनक-संवादे सृष्टिनिरूपणं नाम
षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः।

सौतिरुवाच।

तदा ब्रह्मा तपः कृत्वा सिद्धिं प्राप्य यथेप्सिताम्।
ससृजे पृथिवीमादौ मधुकैटभमेदसा ॥ १
ससृजे पर्व्वतानष्टौ प्रधानान् सुमनोहरान्।
क्षुद्रानसंख्यान् किं ब्रूमः प्रधानाख्यां निशामय ॥२
सुमेरुञ्चैव कैलासं मलयञ्च हिमालयम्।
उदयञ्च तथाऽस्तञ्च सुवेलं गन्धमादनम् ॥ ३
समुद्रान् ससृजे सप्त नदान् कतिविधा नदीः।
वृक्षांश्च ग्रामनगरान् समुद्राख्यां निशामय ॥ ४
लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवान्।
लक्षयोजनमानेन द्विगुणांश्च परात् परान् ॥ ५
सप्त द्वीपांश्च तद्भूमिमण्डले कमलाकृते।
उपद्वीपांस्तथा सप्त सीमशैलांश्च सप्त च ॥ ६
निबोध विप्र द्वीपाख्यां पुरा या विधिना कृता।

जम्बूशाकक्कुशप्लक्षक्रौञ्चन्यग्रोधपौष्करान् ॥ ७
मेरोरष्टसु शृङ्गेषु ससृजेऽष्टौ पुरीः प्रभुः।
अष्टानां लोकपालानां विहाराय मनोहराः ॥ ८
मूलेऽनन्तस्य नगरीं निर्म्माय जगतां पतिः।
ऊर्द्धं स्वर्गांश्च सप्तैव तेषामाख्यां निशामय ॥ ९
भूर्लोकञ्च भुवर्लोकं स्वर्लोकं सुमनोहरम्।
जनलोकं तपोलोकं सत्यलोकञ्च शौनक ॥ १०
शृङ्गमूर्ध्नि ब्रह्मलोकं जरादिपरिवर्ज्जितम्।
तदूर्द्ध्वं ध्रुवलोकञ्च सर्व्वतः सुमनोहरम् ॥ ११
तदधः सप्त पातालान् निर्म्ममे जगदीश्वरः।
स्वर्गातिरिक्तभोगाढ्यानधोऽधः क्रमतो मुने ॥ १२
अतलं वितलञ्चैव सुतलञ्च तलातलम्।
महातलञ्च पातालं रसातलमधस्ततः ॥ १३
सप्तद्वीपैः सप्तस्वर्गैः सप्तपातालसंज्ञकैः।
एभिर्लोकैश्च ब्रह्माण्डं ब्रह्माधिकारमेव च ॥ १४
एवञ्चासङ्ख्यब्रह्माण्डं सर्व्वं कृत्रिममेव च।
महाविष्णोश्च लोम्नाञ्च विवरेषु च शौनक ॥ १५
प्रतिविश्वेषु दिक्पाला ब्रह्मविष्णुमहेश्वराः।
सुरा नरादयः सर्व्वे सन्ति कृष्णस्य मायया ॥ १६
ब्रह्माण्डगणनां कर्त्तुं न क्षमो जगतां पतिः।
न शङ्करो न धर्म्मश्च न च विष्णुश्च के सुराः ॥ १७
संख्यातुमीश्वरः शक्तो न संख्यातुं तथापि सः।
विश्वाकाशदिशाञ्चैव सर्व्वतो यद्यपि क्षमः ॥ १८
कृत्रिमाणि च विश्वानि विश्वस्थानि च यानि च।
अनित्यानि च विप्रेन्द्र स्वप्नवन्नश्वराणि च ॥ १९
वैकुण्ठः शिवलोकश्च गोलोकश्च तयोः परः।
नित्यो विश्वबहिर्भूतश्चात्माकाशदिशो यथा ॥ २०

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-
शौनक-संवादे सृष्टिनिरूपणं नाम
सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः।

सौतिरुवाच।

ब्रह्मा विश्वं विनिर्म्माय सावित्र्यां वरयोषिति।
चकार वीर्य्याधानञ्च कामुक्यां कामुको यथा ॥ १
सा दिव्यं शतवर्षञ्च धृत्वा गर्भं सुदुःसहम्।
सुप्रसूता च सुषुवे चतुर्व्वेदान् मनोहरान् ॥ २
विविधान् शास्त्रसङ्घांश्च तर्कव्याकरणादिकान्।
षट्त्रिंशत्संख्यका दिव्या रागिणीः सुमनोहराः॥३
षड्रागान् सुन्दरांश्चैव नानातालसमन्वितान्।
सत्यत्रेताद्वापरांश्च कलिञ्च कलहप्रियम् ॥ ४ ॥
वर्षं मासमृतुञ्चैव तिथिं दण्डक्षणादिकम्।
दिनं रात्रिञ्च वारांश्च सन्ध्यामूषसमेव च ॥ ५
पुष्टिञ्च देवसेनाञ्च मेधाञ्च विजयां जयाम्।
षट् कृत्तिकाश्च योगांश्च करणांश्च तपोधन ॥ ६
देवसेना महाषष्ठी कार्त्तिकेयप्रिया सती।
मातृकासु प्रधाना सा बालानामिष्टदेवता ॥ ७
ब्राह्मं पाद्मञ्च वाराहं कल्पत्रयमिदं स्मृतम्।
नित्यं नैमित्तिकञ्चैव द्विपरार्द्धञ्च प्राकृतम् ॥ ८
चतुर्व्विधञ्च प्रलयं कालञ्च मृत्युकन्यकाम्।
सर्व्वान् व्याधिगणांश्चैव सा प्रसूय स्तनं ददौ ॥ ९
अथ धातुः पृष्ठदेशादधर्म्मः समजायत।
अलक्ष्मीस्तद्वामपार्श्वाद्बभूव तस्य कामिनी ॥ १०
नाभिदेशाद्विश्वकर्म्मा बभूव शिल्पिनां गुरुः।
महान्तो वसवोऽष्टौ च महाबलपराक्रमाः ॥ ११
अथ धातुश्च मनस आविर्भूताः कुमारकाः।
चत्वारः पञ्चवर्षीया ज्वलन्तो ब्रह्मतेजसा ॥ १२
सनकश्च सनन्दश्च तृतीयश्च सनातनः।
सनत्कुमारो भगवांश्चतुर्थो ज्ञानिनां वरः ॥ १३
आविर्ब्बभूव मुखतः कुमारः कनकप्रभः।
दिव्यरूपधरः श्रीमान् सस्त्रीकः सुन्दरो युवा ॥ १४
क्षत्रियाणां वीजरूपो नाम्ना स्वायम्भुवो मनुः।
या स्त्री सा शतरूपा च रूपाढ्या कमलाकला ॥ १५
सस्त्रीकश्च मनुस्तस्थौ धात्राज्ञापरिपालकः।
स्वयं विधाता पुत्रांश्च तानुवाच प्रहर्षितान् ॥ १६
सृष्टिं कर्त्तुं महाभागो महाभागवतान् द्विज।
जग्मुस्ते च नहीत्युक्त्वा तप्तुं कृष्णपरायणाः ॥ १७
चुकोप हेतुना तेन विधाता जगतां पतिः।
कोपासक्तस्य च विधेर्ज्वलतो ब्रह्मतेजसा ॥ १८
आविर्भूता ललाटाच्च रुद्रा एकादश प्रभो।
कालाग्निरुद्रः संहर्त्ता तेषामेकः प्रकीर्त्तितः ॥ १९
सर्व्वेषामेव विश्वानां स एव तामसः स्मृतः।
राजसश्च स्वयं ब्रह्मा शिवो विष्णुश्च सात्त्विकौ ॥ २०

गोलोकनाथः कृष्णश्च निर्गुणः प्रकृतेः परः ।
परमाज्ञानिनो मूर्खा वदन्ति तामसं शिवम् ॥ २१
शुद्धसत्त्वस्वरूपञ्च निर्म्मलं वैष्णवाग्रणीम् ।
शृणु नामानि रुद्राणां वेदोक्तानि च यानि च ॥ २२
महान् महात्मा मतिमान् भीषणश्च भयङ्करः ।
ऋतु(क)ध्वजश्चोर्द्ध्वकेशः पिङ्गलाक्षो रुचिः शुचिः ॥२३
पुलस्त्यो दक्षकर्णाच्च पुलहो वामकर्णतः ।
दक्षनेत्रात्तथाऽत्रिश्च वामनेत्रात् क्रतुः स्वयम् ॥२४
अरणी(ख)नासिकारन्ध्रादङ्गिराश्च मुखाद्रुचिः ।
भृगुश्च वामपार्श्वाच्च दक्षो दक्षिणपार्श्वतः ॥ २५
छायायाः कर्द्दमो जातो नाभेः पञ्चशिखस्तथा ।
वक्षसश्चैव वोढुश्च कण्ठदेशाच्च नारदः ॥ २६
मरीचिः स्कन्धदेशाच्चैवापान्तरतमा गलात् ।
वशिष्ठो रसनादेशात् प्रचेता अधरोष्ठतः ॥ २७
हंसी(ग) च वामकुक्षेश्च दक्षकुक्षेर्यतिः (घ) स्वयम् ।
सृष्टिं विधातुं स विधिश्चकाराज्ञां सुतान् प्रति ।
पितुर्व्वाक्यं समाकर्ण्य तमुवाच स नारदः ॥ २८

नारद उवाच ।

पूर्व्वमानय मज्ज्येष्ठान् सनकादीन् पितामह ।
कारयित्वा दारयुक्तानस्मान् वद जगत्पते ॥ २९
पित्रा ते तपसे युक्ताः संसाराय वयं कथम् ।
अहो हन्त प्रभोर्बुद्धिर्व्विपरीताय कल्पते ॥ ३०
कस्मै पुत्राय पीयूषात् परं दत्तं तपोऽधुना ।
कस्मै ददासि विषयं विषमञ्च विषाधिकम् ॥ ३१
अतीव निम्ने घोरे च भवाब्धौ यः पतेत् पितः ।
निष्कृतिस्तस्य नास्तीति कोटिकल्पे गतेऽपि च ॥ ३२
निस्तारवीजं सर्व्वेषां वीजञ्च पुरुषोत्तमम् ।
सर्व्वदं भक्तिदं दास्यप्रदं सत्यं कृपामयम् ॥ ३३
भक्तैकशरणं भक्तवत्सलं स्वच्छमेव च ।
भक्तप्रियं भक्तनाथं भक्तानुग्रहकारकम् ॥ ३४
भक्ताराध्यं भक्तसाध्यं विहाय परमेश्वरम् ।
मनो दधाति को मूढ़ो विषये नाशकारणे ॥ ३५

(क) शतेति पाठान्तरम् ।

(ख) अरणिरिति क्वचित् पाठः । अरुणिरिति क्वचित् पाठः । आरुणिरिति च क्वचित् पाठः । एवं सर्व्वत्र ।

(ग) हंसः इति क्वचित् पाठः । हंसिरिति च क्वचित् पाठः । एवं सर्व्वत्र ।

(घ) यती इति क्वचित् पाठः ।

विहाय कृष्णसेवाञ्च पीयूषादधिकां प्रियाम् ।
को मूढ़ो विषमश्नाति विषमं विषयाभिधम् ॥ ३६
स्वप्नवन्नश्वरं तुच्छमसत्यं नाशकारणम् ।
यथा दीपशिखाग्रञ्च कीटानां सुमनोहरम् ॥ ३७
यथा वड़िशमांसञ्च मत्स्यापातसुखप्रदम् ।
तथा विषयिणां तात विषयं मृत्युकारणम् ॥ ३८
इत्युक्त्वा नारदस्तत्र विरराम विधेः पुरः ।
तस्थौ तातं नमस्कृत्य ज्वलदग्निशिखोपमः ॥ ३९
ब्रह्मा कोपपरीतश्च शशाप तनयं द्विज ।
उवाच कम्पिताङ्गश्च रक्तास्यः स्फुरिताधरः ॥ ४०

ब्रह्मोवाच ।

भविता ज्ञानलोपस्ते मच्छापेन च नारद ।
क्रीड़ामृगस्त्वं साध्यश्च योषिल्लुब्धश्च लम्पटः ॥ ४१
स्थिरयौवनयुक्तानां रूपाढ्यानां मनोहरः ।
पञ्चाशत्कामिनीनाञ्च भर्त्ता च प्राणवल्लभः ॥ ४२
शृङ्गारशास्त्रवेत्ता च महाशृङ्गारलोलुपः ।
नानाप्रकारशृङ्गारनिपुणानां गुरोर्गुरुः ॥ ४३
गन्धर्व्वाणाञ्च प्रवरः सुस्वरश्च सुगायनः ।
वीणावादनसन्दर्भनिष्णातः स्थिरयौवनः ॥ ४४
प्राज्ञो मधुरवाक् शान्तः सुशीलः सुन्दरः सुधीः ।
भविष्यसि न सन्देहो नामतश्चोपवर्हणः ॥ ४५
ताभिर्दिव्यं लक्षयुगं विहृत्य निर्ज्जने वने ।
पुनर्म्मदीयशापेन दासीपुत्त्रश्च तत्परः ॥ ४६
वत्स वैष्णवसंसर्गाद्वैष्णवोच्छिष्टभोजनात् ।
पुनः कृष्णप्रसादेन भविष्यसि ममात्मजः ॥ ४७
ज्ञानं दास्यामि ते दिव्यं पुनरेव पुरातनम् ।
अधुना भव नष्टस्त्वं (क) मत्सुतो निपत ध्रुवम् ॥४८
ब्रह्मेत्युक्त्वा सुतं विप्र विरराम जगत्पतिः ।
रुरोद नारदस्तत्र तमुवाच पुटाञ्जलिः (ख) ॥ ४९

नारद उवाच ।

क्रोधं संहर संहर्त्तस्तात तात जगद्गुरो । (ग)
स्रष्टुस्तपस्विनश्चाहो क्रोधोऽयं मय्यनाकरः ॥ ५०
शपेत् परित्यजेत् विद्वान् पुत्रमुत्पथगामिनम् ।

(क) नग्नस्त्वमित्यपि पाठः ।

(ख) तातमुवाच संपुटाञ्जलिरित्यपि पाठः ।

(ग) इतः परं स्रष्टुरित्यादि चरणाष्टकं क्वचित् पुस्तके नास्ति ।

तपस्विनं सुतं शप्तुं कथमर्हसि पण्डित ॥ ५१
जनिर्भवतु मे ब्रह्मन् यासु यासु च योनिषु ।
न जहातु हरेर्भक्तिर्मामेवं देहि मे वरम् ॥ ५२
पुत्रश्चेज्जगतां धातुर्नास्ति भक्तिर्हरेः पदे ।
शूकरादतिरिक्तश्च सोऽधमो भारते भुवि ॥ ५३
जातिस्मरो हरेर्भक्तियुक्तः शूकरयोनिषु ।
जनिर्लभेत् सप्रसवो(क) गोलोकं याति कर्म्मणा ॥५४
गोविन्दचरणाम्भोजभक्तिमाध्वीकमीप्सितम् ।
पिवतां वैष्णवादीनां स्पर्शपूता वसुन्धरा ॥ ५५
तीर्थानि स्पर्शमिच्छन्ति वैष्णवानां पितामह ।
पापानां पापिदत्तानां क्षालनायात्मनामपि ॥ ५६
मन्त्रोपदेशमात्रेण नरा मुक्ताश्च भारते ।
परेश्च कोटिपुरुषैः पूर्व्वैः सार्द्धं हरेर्गृहे ॥ ५७
कोटिजन्मार्ज्जितात् पापान्मन्त्रग्रहणमात्रतः ।
मुक्ताः शुध्यन्ति यत्पूर्व्वं कर्म्म निर्मूलयन्ति च ॥५८
पुत्रान् दारांश्च शिष्यांश्च सेवकान् बान्धवांस्तथा ।
यो दर्शयति सन्मार्गं सद्गतिस्तं लभेद्ध्रुवम् ॥ ५९
यो दर्शयत्यसन्मार्गं शिष्यैर्व्विश्वासितो गुरुः ।
कुम्भीपाके स्थितिस्तस्य यावच्चन्द्रदिवाकरौ ॥ ६०
स किंगुरुः स किंतातः स किंस्वामी स किंसुतः ।
यः श्रीकृष्णपदाम्भोजे भक्तिं दातुमनीश्वरः ॥ ६१
शप्तो निरपराधेन त्वयाहं चतुरानन ।
मया शप्तुं त्वमुचितो घ्नन्तं घ्नन्त्यपि पण्डिताः ॥ ६२
कवचस्तोत्रपूजाभिः सहितस्ते मनुर्म्मनो ।
लुप्तो भवतु मच्छापात् प्रतिविश्वेषु निश्चितम् ॥ ६३
अपूज्यो भव विश्वेषु यावत् कल्पत्रयं पितः ।
गतेषु त्रिषु कल्पेषु पूज्यपूज्यो भविष्यसि ॥ ६४
अधुना यज्ञभागस्ते व्रतादिष्वपि सुव्रत ।
पूजनञ्चास्तु नामैकं वन्द्यो भव सुरादिभिः ॥ ६५
इत्युक्त्वा नारदस्तत्र विरराम पितुः पुरः ।
तस्थौ सभायां स विधिर्हृदयेन विदूयता ॥ ६६
उपबर्हणगन्धर्व्वो नारदस्तेन हेतुना ।
दासीपुत्रश्च शापेन पितुरेव च शौनक ॥ ६७
ततः पुनर्नारदश्च स बभूव महानृषिः ।
ज्ञानं प्राप च यद्ब्रह्मात् कथयिष्यामि नाधुना ॥६८
इति ब्रह्म-नारदशापोपलम्भनं नाम अष्टमोऽध्यायः ॥८

(क) सप्रवरः इत्यपि पाठः ।

## नवमोऽध्यायः ।

सौतिरुवाच ।

अथ ब्रह्मा स्वपुत्रांस्तानादिदेश च सृष्टये ।
सृष्टिं प्रचक्रुस्ते सर्व्वे विप्रेन्द्र नारदं विना ॥ १
मरीचेर्म्मनसो जातः कश्यपश्च प्रजापतिः ।
अत्रेर्नेत्रमलाच्चन्द्रः क्षीरोदे च बभूव ह ॥ २
प्रचेतसोऽपि मनसो गौतमश्च बभूव ह ।
पुलस्त्यमानसः पुत्रो मैत्रावरुण एव च ॥ ३
मनोश्च शतरूपायां तिस्रः कन्याः प्रजज्ञिरे ।
आकूतिर्द्देवहूतिश्च प्रसूतिस्ताः पतिव्रताः ॥ ४
प्रियव्रतोत्तानपादौ द्वौ च पुत्रौ मनोहरौ ।
उत्तानपादतनयो ध्रुवः परमधार्म्मिकः ॥ ५
आकूतिं रुचये प्रादाद्दक्षाय च प्रसूतिकाम् ।
देवहूतिं कर्द्दमाय यत्पुत्रः कपिलः स्वयम् ॥ ६
प्रसूत्यां दक्षवीजेन षष्टिकन्याः प्रजज्ञिरे ।
अष्टौ धर्म्माय प्रददौ रुद्रायैकादश स्मृताः ॥ ७
शिवायैकां सतीं प्रादात् कश्यपाय त्रयोदश ।
सप्तविंशतिकन्याश्च दक्षश्चन्द्राय दत्तवान् ॥ ८
नामानि धर्म्मपत्नीनां मत्तो विप्र निशामय ।
शान्तिः पुष्टिर्धृतिस्तुष्टिः क्षमा श्रद्धा मतिः स्मृतिः ॥९
शान्तेः पुत्रश्च सन्तोषः पुष्टेः पुत्रो महानभूत् ।
धृतेर्धैर्य्यञ्च तुष्टेश्च हर्षदर्पौ सुतौ स्मृतौ ॥ १०
क्षमापुत्रः सहिष्णुश्च श्रद्धापुत्रश्च धार्म्मिकः ।
मतेर्ज्ञानाभिधः पुत्रः स्मृतेर्ज्जातिस्मरो महान् ॥ ११
पूर्व्वपत्न्याश्च मूर्त्तेश्च नरनारायणावृषी ।
बभूवुरेते धर्म्मिष्ठा धर्म्मपुत्राश्च शौनक ॥ १२
नामानि रुद्रपत्नीनां सावधानं निबोध मे ।
कला कलावती काष्ठा कालिका कलहप्रिया ॥ १३
कन्दली भीषणा रास्ना प्रम्लोचा भूषणा शुकी ।
एतासां बहवः पुत्रा बभूवुः शिवपार्षदाः ॥ १४
सा सती स्वामिनिन्दायां तनुं तत्याज यज्ञतः ।
पुनर्भूत्वा शैलपुत्री लेभे च शङ्करं पतिम् ॥ १५
कश्यपस्य प्रियाणाञ्च नामानि शृणु धार्म्मिक ।
अदितिर्द्देवमाता या दैत्यमाता दितिस्तथा ॥ १६
सर्पमाता तथा कद्रुर्व्विनता पक्षिसूस्तथा ।
सुरभिश्च गवां माता महिषाणाञ्च निश्चितम् ॥ १७

सारमेयादिजन्तूनां सरमा सुप्रसूयदाम्।
दनुः प्रसूर्द्दानवानामन्यायेत्येवमादिकाः ॥ १८
इन्द्रश्च द्वादशादित्या उपेन्द्राद्याः सुरा मुने।
कथितास्त्वादितेः पुत्रा महाबलपराक्रमाः ॥ १९
इन्द्रपुत्रो जयन्तश्च ब्रह्मन् शच्यामजायत।
आदित्यस्य सवर्णायां कन्यायां विश्वकर्म्मणः ॥ २०
शनैश्चरयमौ पुत्रौ कालिन्दी कन्यका तथा।
उपेन्द्रवीर्य्यात् पृथ्व्यान्तु मङ्गलः समजायत ॥ २१
शौनक उवाच।
कथं सौते स चोपेन्द्रान्मङ्गलः समजायत।
वसुन्धरायां बलवान् तन्मे व्याख्यातुमर्हसि ॥ २२
सौतिरुवाच।
उपेन्द्ररूपमालोक्य कामार्त्ता च वसुन्धरा।
विधाय सुन्दरीवेशमहता प्रौढ़यौवना ॥ २३
मलये निर्ज्जने रम्ये चारुचन्दनपल्लवे।
चन्दनोक्षितसर्व्वाङ्गं रत्नभूषणभूषितम् ॥ २४
तं सुशीलं शयानञ्च शान्तं सस्मितमीप्सितम्।
सस्मिता तस्य तल्पे च सहसा समुपस्थिता ॥ २५
सुरम्यां मालतीमालां ददौ तस्मै वरानना।
सुगन्धि चन्दनं चारु कस्तूरीकुङ्कुमान्वितम् ॥ २६
उपेन्द्रस्तन्मनो ज्ञात्वा कामी मन्मथपीड़ितम्।
नानाप्रकारशृङ्गारं चकार च तया सह ॥ २७
तदङ्गसङ्गसंसक्ता मूर्च्छां प्राप सती तदा।
मृतेव निद्रितेवासौ वीजाधानं कृते हरौ ॥ २८
तां विलम्नाञ्च सुश्रोणीं सुखसम्भोगमूर्च्छिताम्।
दृढ़मुक्तनितम्बाञ्च सस्मितां विपुलस्तनीम् ॥ २९
हर्षं वक्षसि कृत्वा तां तदोष्ठञ्च चुचुम्ब ह।
विहाय तत्र रहसि जगाम पुरुषोत्तमः ॥३०
उर्व्वशी पथि गच्छन्ती बोधयामास तां मुने।
सा च पप्रच्छ वृत्तान्तं कथयामास भूश्च ताम् ॥३१
वीर्य्यं संवरणं कर्त्तुं सा चाशक्ता च दुर्ब्बला।
प्रवालस्याकरे न्यस्ता वीर्य्यन्यासं चकार सा ॥ ३२
तेन प्रवालवर्णश्च कुमारः समपद्यत।
तेजसा सूर्य्यसदृशो नारायणसुतो महान् ॥३३
मङ्गलस्य प्रिया मेधा तस्यां घण्टेश्वरो महान्।
व्रणदातेति तेजस्वी विष्णुतुल्यो बभूव ह ॥३४
दितेर्हिरण्यकशिपुर्हिरण्याक्षो महाबलौ।
कन्या च सिंहिका विप्र सैंहिकेयश्च तत्सुतः ॥३५
निर्ऋतिः सिंहिका सा च तेन राहुश्च नैर्ऋतः।
शूकरेण हिरण्याक्षोऽप्यनपत्यो मृतो युवा ॥३६
हिरण्यकशिपोः पुत्रः प्रह्लादो वैष्णवाग्रणीः।
विरोचनश्च तत्पुत्रस्तत्पुत्रश्च बलिः स्वयम् ॥ ३७
बलेः पुत्रो महायोगी वाणः शङ्करकिङ्करः।
दितेर्व्वंशश्च कथितः कद्रुवंशं निबोध मे ॥ ३८
अनन्तं वासुकिञ्चैव कालियञ्च धनञ्जयम्।
कर्कोटकं तक्षकञ्च पद्ममैरावतं तथा ॥ ३९
महापद्मञ्च शङ्कुञ्च शङ्खं संवरणन्तथा। (क)
धृतराष्ट्रञ्च दुर्द्धर्षं दुर्ज्जयं दुर्म्मुखं बलम् ॥ ४०
गोक्षं गोकामुखञ्चैव विरूपादींश्च शौनक।
एतेषां प्रवराश्चैव यावत्यः सर्पजातयः ॥ ४१
कन्यका मनसादेवी कमलांशसमुद्भवा।
तपस्विनीनां प्रवरा महातेजस्विनी शुभा ॥ ४२
यत्पतिश्च जरत्कारुर्नारायणकलोद्भवः।
आस्तीकस्तनयो यस्या विष्णुतुल्यश्च तेजसा ॥ ४३
एतेषां नाममात्रेण नास्ति नागभयं नृणाम्।
कद्रुवंशो निगदितो विनतायाश्च श्रूयताम् ॥ ४४
वैनतेयारुणौ पुत्रौ विष्णुतुल्यपराक्रमौ।
तदुद्भभूवुः क्रमेणैव यावत्यः पक्षिजातयः ॥ ४५
गावश्च महिषाश्चैव सुरभिप्रभवा मुने।
सर्व्वे वै सारमेयाश्च बभूवुः सरमासुताः ॥ ४६
दानवाश्च दनोर्व्वंशा अन्यासामन्यजातयः।
उक्तः कश्यपवंशश्च चन्द्राख्यानं निबोध मे ॥ ४७
नामानि चन्द्रपत्नीनां सावधानं निशामय।
अत्यपूर्व्वञ्च चरितं पुराणेषु पुरातनम् ॥४८
अश्विनी भरणी चैव कृत्तिका रोहिणी तथा।
मृगशीर्षा तथार्द्रा च पूज्या साध्वी पुनर्व्वसुः ॥४९
पुष्याश्लेषा मघा पूर्व्वफल्गुन्युत्तरफल्गुनी।
हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका ॥५०
ज्येष्ठा मूला तथा पूर्व्वाषाढ़ा चैवोत्तरा स्मृता।
श्रवणा च धनिष्ठा च तथा शतभिषा शुभा ॥५१
पूर्व्वोत्तरभाद्रपदा रेवत्यन्ता विधुप्रियाः।
तासां मध्ये च सुभगा रोहिणी रसिका वरा ॥५२

(क) इत्यर्द्धं क्वचित् पुस्तके नास्ति।

सन्ततं रसभावेन चकार शशिनं वशम्।
रोहिण्युपगतश्चन्द्रो न यात्यन्याश्च कामिनीम्॥५३
सर्व्वा भगिन्यः पितरं कथयामासुरादृताः।
सपत्नीकृतसन्तापं प्राणनाशकरं परम्॥५४
दक्षः प्रकुपितश्चन्द्रं शशाप मन्त्रपूर्व्वकम्।
द्रुतं श्वशुरशापेन यक्ष्मग्रस्तो बभूव सः॥५५
दिने दिने यक्ष्मणा स क्षीयमाणश्च दुःखितः।
वपुरर्द्धं क्षीयमाणे शङ्करं शरणं ययौ॥५६
दृष्ट्वा चन्द्रं शङ्करश्च क्लेशितं शरणागतम्।
करुणासागरस्तस्मै कृपया चाभयं ददौ॥५७
निर्म्मुक्तं यक्ष्मणा कृत्वा स्वकपाले स्थलं ददौ।
अमरो निर्भयो भूत्वा स तस्थौ शिवशेखरे॥ ५८
तं शिवः शेखरे कृत्वा बभूव चन्द्रशेखरः।
नास्ति देवेषु लोकेषु शिवात् शरणपञ्जरः॥ ५९
दक्षकन्याः पतिं युक्तं दृष्ट्वा च रुरुदुः पुनः।
आजग्मुः शरणं तात दक्षं तेजस्विनां वरम्॥ ६०
उच्चैश्च रुरुदुर्गत्वा निघ्नत्योऽङ्गं पुनः पुनः।
तमूचुः कातरं दीना दीननाथं विधेः सुतम्॥ ६१

दक्षकन्या ऊचुः।

स्वामिसौभाग्यलाभाय लमुक्तोऽस्माभिरेव च।
सौभाग्यमस्तु नस्तात गतः स्वामी गुणान्वितः॥६२
स्थिते चक्षुषि हे तात दृष्टं ध्वान्तमयं जगत्। (क)
विज्ञातमधुना स्त्रीणां पतिरेव हि लोचनम्॥ ६३
पतिरेव गतिः स्त्रीणां पतिः प्राणाश्च सम्पदः।
धर्म्मार्थकाममोक्षाणां हेतुः सेतुर्भवार्णवे॥ ६४
पतिर्नारायणः स्त्रीणां व्रतं धर्म्मः सनातनः।
सर्व्वं कर्म्म वृथा तासां स्वामिनां विमुखाश्च याः॥६५
स्नानञ्च सर्व्वतीर्थेषु सर्व्वयज्ञेषु दक्षिणा।
सर्व्वदानानि पुण्यानि व्रतानि नियमानि च॥ ६६
देवार्च्चनञ्चानशनं सर्व्वाणि च तपांसि च।
स्वामिनः पादसेवायाः कलां नार्हन्ति षोड़शीम्॥६७
सर्व्वेषां बान्धवानाञ्च प्रियः पुत्रश्च योषिताम्।
स एव स्वामिनोऽंशश्च शतपुत्रात् परः पतिः॥ ६८
असद्वंशप्रसूता या सा द्वेष्टि स्वामिनं सदा।
यस्या मनश्चलं दुष्टं सन्ततं परपूरुषे॥ ६९

पतितं रोगिणं दुष्टं निर्धनं गुणहीनकम्।
युवानञ्चैव वृद्धं वा भजेत्तं न त्यजेत् सती॥ ७०
सगुणं निर्गुणं वापि या द्वेष्टि सन्त्यजेत् पतिम्।
पच्यते कालसूत्रे सा यावच्चन्द्रदिवाकरौ॥ ७१
कीटैः शकुनतुल्यैश्च भक्षिता सा दिवानिशम्।
भुङ्क्ते मृतवसामांसं पिबेन्मूत्रञ्च तृष्णया॥ ७२
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः।
श्वापदः शतजन्मानि सा भवेद्वन्धुहा ततः॥ ७३
ततो मानवजन्मानि लभेच्चेत् पूर्व्वकर्म्मणः।
विधवा धनहीना च रोगयुक्ता भवेद्ध्रुवम्॥ ७४
देहि नः कान्तदानञ्च कामपूरं विधेः सुत।
विधात्रा सदृशस्त्वञ्च पुनः स्रष्टुं क्षमो जगत्॥ ७५
कन्यानां वचनं श्रुत्वा दक्षः शङ्करसन्निधिम्।
जगाम शम्भुस्तं दृष्ट्वा समुत्थाय ननाम च॥ ७६
दक्षस्तस्याशिषं कृत्वा समुवाच कृपानिधिम्।
तत्याज कोपं दुर्द्धर्षं दृष्ट्वा च प्रणतं शिवम्॥ ७७

दक्ष उवाच।

देहि जामातरं शम्भो मदीयं प्राणवल्लभम्।
मत्सुतानाञ्च प्राणानां परमेव प्रियं पतिम्॥ ७८
न चेद्ददासि जामातर्मम जामातरं विधुम्।
दास्यामि दारुणं शापं तुभ्यं त्वं केन मुच्यसे॥ ७९
दक्षस्य वचनं श्रुत्वा तमुवाच कृपानिधिः।
सुधाधिकञ्च वचनं ब्रह्मन् शरणपञ्जरः॥ ८०

शिव उवाच।

करोषि भस्मसाच्चेन्मां ददासि शापमेव च।
नाहं दातुं समर्थश्च चन्द्रञ्च शरणागतम्॥ ८१
शिवस्य वचनं श्रुत्वा दक्षस्तं शप्तुमुद्यतः।
शिवः सस्मार गोविन्दं विपन्मोक्षणकारकम्॥ ८२
एतस्मिन्नन्तरे कृष्णो वृद्धब्राह्मणरूपधृक्।
समाययौ तयोर्म्मूलं तौ तं ननमतुः क्रमात्॥ ८३
दत्त्वा शुभाशिषं तौ स ब्रह्मज्योतिः सनातनः।
उवाच शङ्करं व्यग्रं तमःप्रध्वंसको द्विजः॥ ८४

श्रीभगवानुवाच।

न चात्मनः प्रियः कश्चित् शर्व्व सर्व्वेषु बन्धुषु।
आत्मानं रक्ष दक्षाय देहि चन्द्रं सुरेश्वर॥ ८५
तपस्विनां वरः शान्तस्त्वमेव वैष्णवाग्रणीः।
समः सर्व्वेषु जीवेषु हिंसाक्रोधविवर्ज्जितः॥ ८६

(क) इतः परं विज्ञातमित्यादिकाः सार्द्धद्वादश श्लोकाः केषुचित् पुस्तकेषु न सन्ति।

दक्षः क्रोधी च दुर्द्धर्षस्तेजस्वी ब्रह्मणः सुतः ।
शिष्टो बिभेति दुर्द्धर्षं न दुर्द्धर्षश्च कश्चन ॥८७
नारायणवचः श्रुत्वा प्रहस्य शङ्करः स्वयम् ।
उवाच नीतिसारञ्च नीतिवीजं परात्परम् ॥ ८८

शङ्कर उवाच ।

तपो दास्यामि तेजश्च सर्व्वसिद्धिञ्च सम्पदम् ।
प्राणांश्च न समर्थोऽहं प्रदातुं शरणागतम् ॥ ८९
यो ददाति भयेनैव प्रपन्नं शरणागतम् ।
तञ्च धर्म्मः परित्यज्य याति शप्त्वा सुदारुणम् ॥ ९०
सर्व्वं त्यक्तुं समर्थोऽहं न स्वधर्म्मं जगत्प्रभो ।
यः स्वधर्म्मविहीनश्च स च सर्व्वबहिष्कृतः ॥ ९१
यश्च धर्म्मं सदा रक्षेत् धर्म्मस्तं परिरक्षति ।
धर्म्मं वेदेश्वर(क) त्वञ्च किं मां ब्रूहि स्वमायया ॥९२
त्वं सर्व्वपाता स्रष्टा च हन्ता च परिणामतः ।
त्वयि भक्तिर्दृढा यस्य तस्य कस्माद्भयं भवेत् ॥ ९३
शङ्करस्य वचः श्रुत्वा भगवान् सर्व्वभाववित् ।
चन्द्रं चन्द्राद्विनिष्कृष्य दक्षाय प्रददौ हरिः ॥ ९४
प्रतस्थावर्द्धचन्द्रश्च निर्व्याधिः शिवशेखरे ।
निजग्राह परं चन्द्रं विष्णुदत्तं प्रजापतिः ॥ ९५
यक्ष्मग्रस्तञ्च तं दृष्ट्वा दक्षस्तुष्टाव माधवम् ।
पक्षे पूर्णं क्षतं पक्षे तं चकार हरिः स्वयम् ॥ ९६
कृष्णस्तेभ्यो वरं दत्त्वा जगाम स्वालयं द्विज ।
दक्षश्चन्द्रं गृहीत्वा च कन्याभ्यः प्रददौ पुनः ॥ ९७
चन्द्रस्ताश्च परिप्राप्य विजहार दिवानिशम् ।
समं ददर्श ताः सर्व्वास्तत्प्रभृत्येव कम्पितः ॥ ९८
इत्येवं कथितं सर्व्वं किञ्चित् सृष्टिक्रमं मुने ।
श्रुतञ्च गुरुवक्त्रेण पुष्करे मुनिसंसदि ॥ ९९

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-शौनक-संवादे नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

सौतिरुवाच ।

भृगोः पुत्रश्च च्यवनः शुक्रश्च ज्ञानिनां वरः ।
क्रतोरपि क्रिया भार्य्या वालिखिल्यानसूयत ॥ १
त्रयः पुत्राश्चाङ्गिरसो बभूवुर्म्मुनिसत्तमाः ।
वृहस्पतिरुतथ्यश्च सम्बरश्चापि (क) शौनक ॥ २
वशिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः ।
पराशरसुतः श्रीमान् कृष्णद्वैपायनो हरिः ॥ ३
व्यासपुत्रः शिवांशश्च शुकश्च ज्ञानिनां वरः ।
विश्रवाश्च पुलस्त्यस्य यस्य पुत्रो धनेश्वरः ॥ ४

शौनक उवाच ।

अहो पुराणविदुषामतीव दुर्गमं वचः ।
न बुद्धं वचनं किञ्चिद्धनेशजन्मपूर्व्वकम् ॥ ५
अधुना कथितं जन्म धनेशस्येश्वरादिदम् ।
पुनर्भिन्नक्रमं जन्म ब्रवीषि कथमेव माम् ॥ ६

सौतिरुवाच ।

बभूवुरेते दिक्पालाः पुरा च परमेश्वरात् ।
पुनश्च ब्रह्मशापेन स च विश्रवसः सुतः ॥ ७
गुरवे दक्षिणां दातुमुतथ्यश्च धनेश्वरम् ।
ययाचे कोटिस्वर्णञ्च यत्नतश्च प्रचेतसे ॥ ८
धनेशो विरसो भूत्वा तस्मै तद्दातुमुद्यतः ।
चकार भस्मसात् विप्र पुनर्ज्जन्म ललाभ सः ॥ ९
तेन विश्रवसः पुत्रः कुवेरश्च धनाधिपः ।
रावणः कुम्भकर्णश्च धार्म्मिकश्च विभीषणः ॥ १०
पुलहस्य सुतो वात्स्यः शाण्डिल्यश्च रुचेः सुतः ।
सावर्णिर्गौतमाज्जज्ञे मुनिप्रवर एव सः ॥ ११
काश्यपः कश्यपाज्जातो भरद्वाजो वृहस्पतेः ।
स्वयं वात्स्यश्च पुलहात् सावर्णिर्गौतमात्तथा ॥ १२
शाण्डिल्यश्च रुचेः पुत्रो मुनिस्तेजस्विनां वरः ।
बभूवुः पञ्चगोत्राश्च एतेषां प्रवरा भवे ॥ १३
बभूवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः ।
ताः स्थिता देशभेदेषु गोत्रशून्याश्च शौनक ॥१४
चन्द्रादित्यमनूनाञ्च प्रवराः क्षत्रियाः स्मृताः ।
ब्रह्मणो बाहुदेशाच्चैवान्याः क्षत्रियजातयः ॥१५
ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः ।
तासां सङ्करजातेन बभूवुर्व्वर्णसङ्कराः ॥१६
गोपनापितभिल्लाश्च तथा मोदककूवरौ ।
ताम्बूलिस्वर्णकारौ च तथा वणिजजातयः ॥१७
इत्येवमाद्या विप्रेन्द्र सत्शूद्राः परिकीर्त्तिताः ।
शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः ॥१८
विश्वकर्म्मा च शूद्रायां वीर्य्याधानं चकार सः ।

---

(क) धर्म्मवेदेश्वरः इति वा पाठः ।

(क) सम्वर्त्तश्चातिशोभनः इत्यपि पाठः ।

ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः ॥१९
मालाकार-कर्मकार-शङ्खकार-कुविन्दकाः ।
कुम्भकारः कांसकारः षड़ेते शिल्पिनां वराः ॥२०
सूत्रधारश्चित्रकारः स्वर्णकारस्तथैव च ।
पतितास्ते ब्रह्मशापादयाज्या वर्णसङ्कराः ॥ २१
शौनक उवाच ।
कथं देवो विश्वकर्म्मा वीर्य्याधानं चकार सः ।
शूद्रायामधमायाञ्च कथं ते पतितास्त्रयः ॥ २२
कथं तेषु ब्रह्मशापो बभूव केन हेतुना ।
हे पुराणविदां श्रेष्ठ तन्नः शंसितुमर्हसि ॥ २३
सौतिरुवाच ।
घृताची कामतः कामं वेशं चक्रे मनोहरम् ।
तां ददर्श विश्वकर्म्मा गच्छन्तीं पुष्करे पथि ॥ २४
आगच्छन् रविलोकाच्च प्रसादोत्फुल्लमानसः ।
तां ययाचे स शृङ्गारं कामेन हृतचेतनः ॥ २५
रत्नालङ्कारभूषाढ्यां सर्व्वावयवकोमलाम् ।
यथा षोड़शवर्षीयां शश्वत्सुस्थिरयौवनाम् ॥ २६
बृहन्नितम्बभारार्त्तां मुनिमानसमोहिनीम् ।
अतिवेगकटाक्षेण लोलां कामातिपीड़िताम् ॥ २७
तत्श्रोणिं कठिनां दृष्ट्वा वायुनांशुकसंहृताम् ।
अतीवोच्चैः स्तनयुगं कठिनं वर्त्तुलाकृति ॥ २८
सस्मितं चारु वक्त्रञ्च शरचन्द्रविनिन्दकम् ।
पक्वबिम्बफलारक्तामोष्ठाधरमनोहरम् ॥ २९
सिन्दूरबिन्दुसंयुक्तं कस्तूरीबिन्दुभिः सह ।
कपालमुज्ज्वलं शश्वत् कपोलं मणिकुण्डलम् ॥३०
तमुवाच प्रियां शान्तां कामशास्त्रविशारदः ।
कामाग्निवर्द्धनोद्योगि वचनं श्रुतिसुन्दरम् ॥ ३१
विश्वकर्म्मोवाच ।
अयि क्व यासि ललिते मम प्राणाधिके प्रिये ।
मम प्राणांश्चापहृत्य स्थिरा भव क्षणं शुभे ॥ ३२
तवैवान्वेषणं कृत्वा भ्रमामि जगतीतलम् ।
स्वप्राणांस्त्यक्तुमिष्टोऽहं त्वां न दृष्ट्वा हुताशने ॥ ३३
त्वं यासीति कामलोकं श्रुत्वा रम्भामुखेऽधुना ।
आगच्छन्नहमेवात्र चास्मिन् वर्त्मन्यवस्थितः ॥ ३४
अहो सरस्वतीतीरे पुष्पोद्याने मनोहरे ।
सुगन्धिमन्दशीतेन वायुना सुरभीकृते ॥ ३५
रम कान्ते मया सार्द्धं यूना कान्तेन शोभने ।
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत् ॥ ३६
स्थिरयौवनसंयुक्ता त्वमेव चिरजीविनी ।
कामुकी कोमलाङ्गी च सुन्दरीषु च सुन्दरी ॥ ३७
मृत्युञ्जयवरेणैव मृत्युकन्या जिता मया ।
कुबेरभवनं कृत्वा धनं लब्धं कुबेरतः ॥ ३८
रत्नमाला च वरुणाद्वायोः स्त्रीरत्नभूषणम् ।
वह्निशुद्धं वस्त्रयुगं वह्नेः प्राप्तञ्च वेतनात् ॥ ३९
कामशास्त्रं कामदेवाद्योषिद्रञ्जनकारणम् ।
शृङ्गारशिल्पं यत्किञ्चिल्लब्धं चन्द्राच्च दुर्लभम् ॥ ४०
रत्नमालां वस्त्रयुग्मं सर्व्वाणि भूषणानि च ।
तुभ्यं दातुं हृदि कृतं प्राप्तं तत्क्षण एव च ॥ ४१
गृहे तान्येव संस्थाप्य चागतोऽन्वेषणे तव ।
विरामे सुखसम्भोगे तुभ्यं दास्यामि साम्प्रतम् ॥४२
कामुकस्य वचः श्रुत्वा घृताची सस्मिता मुने ।
ददौ प्रत्युत्तरं शीघ्रं नीतियुक्तं मनोहरम् ॥ ४३ ॥
घृताच्युवाच ।
त्वया यदुक्तं भद्रं तत् स्वीकारोऽधुनापि च ।
किन्तु सामयिकं वाक्यं ब्रविष्यामि स्मरातुर ॥ ४४
कामदेवालयं यामि कृत्वा वेशञ्च तत्कृते ।
यद्दिने यत्कृते यामो वयं तेषाञ्च योषितः ॥ ४५
अद्याहं कामपत्नी च गुरुपत्नी तवाधुना ।
त्वयोक्तमधुनेदञ्च पठितं कामदेवतः ॥ ४६
विद्यादाता मन्त्रदाता गुरुर्लक्षगुणैः पितुः ।
मातुः सहस्रगुणतो नास्त्यन्यस्तत्समो गुरुः ॥ ४७
गुरोः शतगुणैः पूज्या गुरुपत्नी श्रुतौ श्रुता ।
पितुः शतगुणैः पूज्या यथा माता विचक्षण ॥ ४८
मात्रा सहितशृङ्गारे यावान् दोषः श्रुतौ श्रुतः ।
ततो लक्षगुणो दोषो गुरुपत्नीसमागमे ॥ ४९
मातरित्येवशब्देन याञ्च सम्भाषते नरः ।
सा मातृतुल्या सत्येन धर्म्मः साक्षी सतामपि ॥ ५०
तया सहितशृङ्गारे कालसूत्रं प्रयाति सः ।
तत्र घोरे वसत्येव यावच्चन्द्रदिवाकरौ ॥ ५१
मात्रा सहितशृङ्गारे ततो दोषश्चतुर्गुणः ।
सार्द्धञ्च गुरुपत्न्या च लक्षगुण एव च ॥ ५२
कुम्भीपाके पतत्येव यावद्वै ब्रह्मणो वयः ।
प्रायश्चित्तं पापिनश्च तस्य नैव श्रुतौ श्रुतम् ॥ ५३
—आकारं कुलालस्य तीक्ष्णधारञ्च खड्गवत् ।

वसामूत्रपुरीषञ्च परिपूर्णं सुदुस्तरम्॥ ५४
मूत्रवत्कृमिसंयुक्तं तप्तमग्निसमद्रवम्।
पापिनां तद्विहारश्च कुम्भीपाकं प्रकीर्त्तितम्॥ ५५
यावान् दोषो हि पुंसाञ्च गुरुपत्नीसमागमे।
तावांश्च गुरुपत्न्याश्च तत्रैव कामुकी यदि॥ ५६
अद्य यास्यामि कामस्य मन्दिरं तस्य कामिनी।
वेशं कृत्वागमिष्यामि त्वत्कृतेऽहं दिनान्तरे॥ ५७
घृताचीवचनं श्रुत्वा विश्वकर्म्मा रुरोष ताम्।
शशाप शूद्रयोनिञ्च प्रजेति जगतीतले॥ ५८
घृताची तद्वचः श्रुत्वा तं शशाप सुदारुणम्।
लभ जन्म भवे त्वञ्च स्वर्गभ्रष्टो भवेति च॥ ५९
घृताचीत्येवमुक्त्वा च जगाम काममन्दिरम्।
कामेन सुरतं कृत्वा कथयामास तां कथाम्॥ ६०
सा भारते च कामोत्तया गोपस्य मदनस्य च।
पत्न्यां प्रयागे नगरे लेलाभ जन्म शौनक॥ ६१
जातिस्मरा तत्प्रसूता बभूव च तपस्विनी।
वरं न वव्रे धर्मिष्ठा तपस्यायां मनो दधौ॥ ६२
तपश्चकार तपसा तप्तकाञ्चनसन्निभा।
दिव्यञ्च शतवर्षं सा गङ्गातीरे मनोरमे॥ ६३
वीर्य्येण सुरकारोश्च नव पुत्रान् प्रसूय सा।
पुनः स्वर्लोकं गत्वा च सा घृताची बभूव ह॥ ६४

शौनक उवाच।

कथं वीर्य्यं सा दधार सुरकारोस्तपस्विनी।
पुत्रान्नव प्रसूता च कुत्र वा कति वा दिनात्॥ ६५

सौतिरुवाच।

विश्वकर्म्मा तु तच्छापं समाकर्ण्य रुषान्वितः।
जगाम ब्रह्मणः स्थानं शोकेन हृतचेतनः॥ ६६
नत्वा स्तुत्वा च ब्रह्माणं कथयामास तां कथाम्।
ललाभ जन्म ब्राह्मण्यां पृथिव्यामाज्ञया विधेः॥ ६७
स एव ब्राह्मणो भूत्वा भुवि कारुर्बभूव ह।
नृपाणाञ्च गृहस्थानां नानाशिल्पं चकार ह॥ ६८
शिल्पञ्च कारयामास सर्व्वांश्च सर्वतः सदा।
विचित्रं विविधं शिल्पमाश्चर्यं सुमनोहरम्॥ ६९
एकदा तु प्रयागे च शिल्पं कृत्वा नृपस्य च।
स्नातुं जगाम गङ्गाञ्च ददर्श तत्र कामिनीम्॥ ७०
घृताचीं नवरूपाञ्च (क) युवतिं तां तपस्विनीम्।
जातिस्मरां तां बुबुधे स च जातिस्मरो द्विज॥ ७१
दृष्ट्वा सकामः सहसा बभूव हृतचेतनः।
उवाच मधुरं शान्तः शान्तां ताञ्च तपस्विनीम्॥ ७२

ब्राह्मण उवाच।

अहोऽधुना त्वमत्रैव घृताचि सुमनोहरे।
मा मां स्मरसि रम्भोरु विश्वकर्म्माऽहमेव च॥ ७३
शापमोक्षं करिष्यामि भज मां तव सुन्दरि।
त्वत्कृतेऽतिदग्धश्चैव मनो मे स च मन्मथः॥ ७४
द्विजस्य वचनं श्रुत्वा घृताची नवरूपिणी (ख)।
उवाच मधुरं शान्ता नीतियुक्तं परं वचः॥ ७५

गोपिकोवाच।

तद्दिने कामकान्ताहमधुना च तपस्विनी।
कथं दास्यामि शृङ्गारं गङ्गातीरे च भारते॥ ७६
विश्वकर्म्मन्निदं पुण्यं कर्म्मक्षेत्रञ्च भारतम्।
अत्र यत् क्रियते कर्म्म भोगोऽन्यत्र शुभाशुभम्॥ ७७
धर्म्मी मोक्षकृते जन्म संलभ्य तपसः फलात्।
निबद्धः कुरुते कर्म्म मोहितो विष्णुमायया॥ ७८
माया नारायणीशानां परितुष्टा च यं भवेत्।
तस्मै ददाति श्रीकृष्णभक्तिं तन्मन्त्रमीप्सितम्॥ ७९
यो मूढो विषयासक्तो लब्धजन्मा च भारते।
विहाय कृष्णं सर्व्वेशं स मुग्धो विष्णुमायया॥ ८०
सर्व्वं स्मरामि देवाहमहो जातिस्मरा पुरा।
घृताची सुरवेश्याहमधुना गोपकन्यका॥ ८१
तपः करोमि मोक्षार्थं गङ्गातीरे सुपुण्यदे(ख)।
नात्र स्थलञ्च क्रीड़ायाः स्थिरस्त्वं भव कामुक॥ ८२
अन्यत्र कृतपापञ्च गङ्गायाञ्च विनश्यति।
गङ्गातीरे कृतं पापं सद्यो लक्षगुणं भवेत्॥ ८३
तत्तु नारायणक्षेत्रे तपसा च विनश्यति।
यद्येवं कामतः कृत्वा निवृत्तश्च भवेत् पुनः॥ ८४
घृताचीवचनं श्रुत्वा विश्वकर्म्मा नराकृतिः।
जगाम तां गृहीत्वा च मलयं चन्दनालयम्॥ ८५
रम्यायां मलयद्रोण्यां पुष्पतल्पे मनोरमे।
पुष्पचन्दनवातेन सन्ततं सुरभीकृते॥ ८६
चकार सुखसम्भोगं तया सह सुनिर्ज्जने।
पूर्णं द्वादशवर्षञ्च बुबुधे न दिवानिशम्॥ ८७

(क) नररूपाश्च इति वा पाठः।

(क) नररूपिणी इत्यपि पाठः।
(ख) सुखप्रदे इति पाठान्तरम्।

बभूव गर्भः कामिन्याः परिपूर्णः सुदुर्व्वहः ।
सा सुषाव च तत्रैव पुत्रान्नव (क) मनोहरान् ॥८८
कृतशिक्षितशिल्पांश्च ज्ञानयुक्तांश्च शौनक ।
पूर्व्वप्राक्तनतो योग्यान् बलयुक्तान् विचक्षणान् ॥८९
मालाकार-कर्म्मकांश्च शङ्खकार-कुविन्दकान् ।
कुम्भकार-सूत्रधार-स्वर्णचित्रकरांस्तथा ॥९०
तौ च तेभ्यो वरं दत्त्वा तान् संस्थाप्य महीतले ।
मानवीं तनुमुत्सृज्य जग्मतुर्निजमन्दिरम् ॥ ९१
स्वर्णकारः स्वर्णचौर्य्याद्द्ब्राह्मणानां द्विजोत्तम ।
बभूव पतितः सद्यो ब्रह्मशापेन कर्म्मणा ॥९२
सूत्रधारो द्विजानाञ्च शापेन पतितो भुवि ।
शीघ्रञ्च यज्ञकाष्ठानि न ददौ तेन हेतुना ॥९३
व्यतिक्रमेण चित्राणां सद्यश्चित्रकरस्तथा ।
पतितो ब्रह्मशापेन ब्राह्मणानाञ्च कोपतः ॥९४
कश्चिद्वणिग्विशेषश्च संसर्गात् स्वर्णकारिणः ।
स्वर्णचौर्य्यादिदोषेण पतितो ब्रह्मशापतः ॥ ९५
कुलटायाञ्च शूद्रायां चित्रकारस्य वीर्य्यतः ।
बभूवाट्टालिकाकारः पतितो जारदोषतः ॥९६
अट्टालिकाकारवीजात् कुम्भकारस्य योषिति ।
बभूव कोटकः सद्यः पतितो गृहकारकः ॥९७
कुम्भकारस्य वीजेन सद्यः कोटकयोषिति ।
बभूव तैलकारश्च कुटिलः पतितो भुवि ॥ ९८
सद्यः क्षत्रियवीजेन राजपुत्रस्य योषिति ।
बभूव तीवरश्चैव पतितो जारदोषतः ॥ ९९
तीवरस्य तु वीजेन तैलकारस्य योषिति ।
बभूव पतितो दस्युर्लेटश्च परिकीर्त्तितः ॥ १००
लेटस्तीवरकन्यायां जनयामास षण्नरान् ।
माल्लमल्लं मातरञ्च भड्डं कोलं कलन्दरम् ॥१०१
ब्राह्मण्यां शूद्रवीर्य्येण पतितो जारदोषतः ।
सद्यो बभूव चण्डालः सर्व्वस्मादधमोऽशुचिः ॥१०२
तीवरेण च चाण्डाल्यां चर्म्मकारो बभूव ह ।
चर्म्मकार्य्याञ्च चण्डालान्मांसच्छेदो बभूव ह ॥१०३
मांसच्छेद्यां तीवरेण कोंचश्च परिकीर्त्तितः ।
कोंचस्त्रियान्तु कैवर्त्तात् कर्त्तारः परिकीर्त्तितः॥१०४
सद्यश्चण्डालकन्यायां लेटवीर्य्येण शौनक ।
बभूवतुस्तौ द्वौ पुत्रौ दुष्टौ हड्डि-डमौ(क)तथा१०५
क्रमेण हड्डिकन्यायां सद्यश्चण्डालवीर्य्यतः ।
बभूवुः पञ्च पुत्राश्च दुष्टा वनचराश्च ते ॥ १०६
लेटात् तीवरकन्यायां गङ्गातीरे च शौनक ।
बभूव सद्यो यो बालो गङ्गापुत्रः प्रकीर्त्तितः ॥१०७
गङ्गापुत्रस्य कन्यायां वीर्य्येण वेशधारिणः ।
बभूव वेशधारी च पुत्रो युङ्गी प्रकीर्त्तितः ॥ १०८(ख)
वैश्यात् तीवरकन्यायां सद्यः शुण्डी बभूव ह ।
शुण्डियोषिति वैश्यात्तु पौण्ड्रकश्च बभूव ह ॥ १०९
क्षत्रात् करणकन्यायां राजपुत्रो बभूव ह ।
राजपुत्र्यान्तु करणादागरीति प्रकीर्त्तितः ॥ ११०
क्षत्रवीर्य्येण वैश्यायां कैवर्त्तः परिकीर्त्तितः ।
कलौ तीवरसंसर्गाद्धीवरः पतितो भुवि ॥ १११
तीवर्य्यां धीवरात् पुत्रो बभूव रजकः स्मृतः ।
रजक्यां तीवराच्चैव कोयालीति (ग) बभूव ह॥ ११२
नापिताद्गोपकन्यायां सर्वस्वी तस्य योषिति ।
क्षत्राद्बभूव व्याधश्च बलवान् मृगहिंसकः ॥ ११३
तीवरात् शुण्डिकन्यायां बभूवुः सप्त पुत्रकाः ।
ते कलौ हड्डिसंसर्गाद्द बभूवुर्द्दस्यवः सदा ॥ ११४
ब्राह्मण्यामृषिवीर्य्येण ऋतोः प्रथमवासरे ।
कुत्सितश्चोदरे जातः कूदरस्तेन कीर्त्तितः ॥ ११५
तदशौचं विप्रतुल्यं पतितो ऋतुदोषतः ।
सद्यः कोटकसंसर्गादधमो जगतीतले ॥ ११६
क्षत्रवीर्य्येण वैश्यायामृतोः प्रथमवासरे ।
जातः पुत्रो महादस्युर्बलवांश्च धनुर्द्धरः ॥ ११७
चकार वागतीतञ्च क्षत्रियेणापि वारितः ।
तेन जात्या स पुत्रश्च वागतीतः प्रकीर्त्तितः ॥११८
क्षत्रवीर्य्येण शूद्रायामृतुदोषेण पापतः ।
बलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातयः ॥ ११९
अविद्धकर्णाः क्रूराश्च निर्भया रणदुर्ज्जयाः ।
शौचाचारविहीनाश्च दुर्द्धर्षा धर्म्मवर्ज्जिताः ॥ १२०

(क) नवस्थाने "अष्टौ" इति बहुषु पुस्तकेषु पाठः । एवमुत्तरत्र । तत्पाठवत्सु च पुस्तकेषु "मालाकार-कर्म्मकार-शङ्खकार कुविन्दकान् । कुम्भकार-सूत्रधार-स्वर्णचित्रकरांस्तथा" इत्येवं नवतितमः श्लोकः पठ्यते ।

(क) हड्डुग्रन्तिमाविति वा पाठः ।

(ख) सद्यो बभूव यो बालो वणकः स प्रकीर्त्तितः ॥ इति पाठान्तरम् ।

(ग) कोशालीति वा पाठः ।

म्लेच्छात् कुविन्दकन्यायां जोलाजातिर्बभूव ह।
जोलात् कुविन्दकन्यायां शराकः परिकीर्त्तितः॥१२१
वर्णसङ्करदोषेण बह्वाश्च श्रुतजातयः।
तासां नामानि संख्याश्च को वा वक्तुं क्षमो द्विज॥१२२
वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति।
वैद्यवीर्य्येण शूद्रायां बभूवुर्बहवो जनाः॥१२३
ते च ग्राम्यगुणज्ञाश्च मन्त्रौषधिपरायणाः।
तेभ्यश्च जाताः शूद्रायां ये व्यालग्राहिणो भुवि॥१२४
शौनक उवाच।
कथं ब्राह्मणपत्न्यान्तु सूर्य्यपुत्रोऽश्विनीसुतः।
अहो केन विपाकेन वीर्य्याधानं चकार ह॥१२५
सौतिरुवाच।
गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं रविनन्दनः।
ददर्श कामुकः शान्तः पुष्पोद्याने च निर्ज्जने॥१२६
तया निवारितो यत्नाद्बलेन बलवान् सुरः।
अतीव सुन्दरीं दृष्ट्वा वीर्य्याधानं चकार सः॥१२७
द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोहरे।
सद्यो बभूव पुत्रश्च तप्तकाञ्चनसन्निभः॥१२८
सपुत्रा स्वामिनो गेहं जगाम व्रीड़िता तदा।
स्वामिनं कथयामास यन्मार्गे दैवसङ्कटम्॥१२९
विप्रो रोषेण तत्याज तञ्च पुत्रं स्वकामिनीम्।
सरिद्बभूव योगेन सा च गोदावरी स्मृता॥१३०
पुत्रं चिकित्साशास्त्रञ्च पाठयामास यत्नतः।
नाना शिल्पञ्च मन्त्रञ्च स्वयं स रविनन्दनः॥१३१
विप्रश्च ज्योतिर्गणनाद्वेतनाच्च निरन्तरम्।
वेदधर्म्मपरित्यक्तो बभूव गणको भुवि॥१३२
लोभी विप्रश्च शूद्राणामग्रे दानं गृहीतवान्।
ग्रहणे मृतदानानामग्रदानी बभूव सः॥१३३
कश्चित् पुमान् ब्रह्मयज्ञे यज्ञकुण्डात् समुत्थितः।
स सूतो धर्म्मवक्ता च मत्पूर्व्वपुरुषः स्मृतः॥१३४
पुराणं पाठयामास तञ्च ब्रह्मा कृपानिधिः।
पुराणवक्ता सूतश्च यज्ञकुण्डसमुद्भवः॥१३५
वैश्यायां सूतवीर्य्येण पुमानेको बभूव ह।
स भट्टो वावदूकश्च सर्व्वेषां स्तुतिपाठकः॥१३६
एतत्ते कथितं किञ्चित् पृथिव्यां जातिनिर्णयम्।
वर्णसङ्करदोषेण बह्व्योऽन्याः सन्ति जातयः॥१३७
सम्बन्धो येषु येषां यः सर्व्वजातिषु सर्व्वतः।
तत्त्वं ब्रवीमि वेदोक्तं ब्रह्मणा कथितं पुरा॥१३८
पिता तातस्तु जनको जन्मदातरि वर्त्तते।
अम्बा माता च जननी गर्भस्थल्यां प्रसूरिति॥१३९
पितामहः पितृपिता तत्पिता प्रपितामहः।
अत ऊर्द्ध्वं ज्ञातयश्च सगोत्राः परिकीर्त्तिताः॥१४०
मातामहः पिता मातुः प्रमातामह एव च।
मातामहस्य जनकस्तत्पिता वृद्धपूर्व्वकः॥१४१
पितामही पितुर्म्माता तत्श्वश्रूः प्रपितामही।
तत्श्वश्रूश्च परिज्ञेया सा वृद्धप्रपितामही॥१४२
मातामही मातृमाता मातृतुल्या च पूजिता।
प्रमातामहीति ज्ञेया प्रमातामहकामिनी॥१४३
वृद्धमातामही ज्ञेया तत्पितुः कामिनी तथा।
पितृभ्राता पितृव्यश्च मातृभ्राता च मातुलः॥१४४
पितृष्वसा पितुर्भग्नी मातृभग्नी च मासुरी।
सूनुश्च तनयः पुत्रो दायादश्चात्मजस्तथा॥१४५
धनभाग्वीर्य्यजश्चैव पुंसि जन्ये च वर्त्तते।
जन्यायां दुहिता कन्या चात्मजा परिकीर्त्तिता॥१४६
पुत्रपत्नी वधूर्ज्ञेया जामाता दुहितुः पतिः।
पतिः प्रियश्च भर्त्ता च स्वामी कान्ते च वर्त्तते॥१४७
देवरः स्वामिनो भ्राता ननन्दा स्वामिनः स्वसा।
श्वशुरः स्वामिनस्तातः श्वश्रूश्च स्वामिनः प्रसूः॥१४८
भार्य्या जाया प्रिया कान्ता स्त्री च पत्न्याञ्च वर्त्तते।
पत्नीभ्राता श्यालकश्च पत्नीभग्नी च श्यालिका॥१४९
पत्नीमाता तथा श्वश्रूस्तत्पिता श्वशुरः स्मृतः।
सगर्भः सोदरो भ्राता सगर्भा भगिनी स्मृता॥१५०
भग्नीपुत्रो भागिनेयो भ्रातृपुत्रश्च भ्रातृजः।
श्यालस्तु भगिनीकान्तो भगिनीपतिरेव च॥१५१
श्यालीपतिस्तु भ्राता च श्वशुरैकत्वहेतुना।
श्वशुरस्तु पिता ज्ञेयो जन्मदातुः समो मुने॥१५२
अन्नदाता भयत्राता पत्नीतातस्तथैव च।
विद्यादाता जन्मदाता पञ्चैते पितरो नृणाम्॥१५३
अन्नदातुश्च या पत्नी भगिनी गुरुकामिनी।
माता च तत्सपत्नी च कन्या पुत्रप्रिया तथा॥१५४
मातुर्म्माता पितुर्म्माता श्वश्रूः पित्रोः स्वसुः सुता।
पितृव्याणी मातुलानी मातरश्च चतुर्द्दश॥१५५
पौत्रस्तु पुत्रपुत्रे च प्रपौत्रस्तत्सुतेऽपि च।
तत्पुत्राद्याश्च ये वंश्याः कुलजाश्च प्रकीर्त्तिताः॥१५६

कन्यापुत्रश्च दौहित्रस्तत्पुत्राद्याश्च बान्धवाः।
भागिनेयसुताद्याश्च पुरुषा बान्धवाः स्मृताः॥ १५७
भ्रातृपुत्रस्य पुत्राद्यास्ते पुनर्ज्ञातयः स्मृताः।
गुरुपुत्रस्तथा भ्राता पोष्यः परमबान्धवः॥ १५८
गुरुकन्या च भगिनी पोष्या मातृसमा मुने।
पुत्रस्य च गुरुभ्राता पोष्यः सुस्निग्धबान्धवः॥१५९
पुत्रस्य श्वशुरो भ्राता बन्धुर्वैवाहिकः स्मृतः।
कन्यायाः श्वशुरे चैव तत्सम्बन्धः प्रकीर्त्तितः॥१६०
गुरुश्च कन्यकायाश्च भ्राता सुस्निग्धबान्धवः।
गुरुः श्वशुरभ्रातॄणां गुरुतुल्यः प्रकीर्त्तितः॥ १६१
बन्धुता येन सार्द्धञ्च तन्मित्रं परिकीर्त्तितम्।
मित्रं सुखप्रदं ज्ञेयं दुःखदो रिपुरुच्यते॥१६२
बान्धवो दुःखदो दैवात् निःसम्बन्धोऽसुखप्रदः।
सम्बन्धास्त्रिविधाः पुंसां विप्रेन्द्र जगतीतले॥१६३
विद्याजो योनिजश्चैव प्रीतिजश्च प्रकीर्त्तितः।
मित्रन्तु प्रीतिजं ज्ञेयं स सम्बन्धः सुदुर्लभः॥ १६४
मित्रमाता मित्रभार्य्या मातृतुल्या न संशयः।
मित्रभ्राता मित्रपिता भ्रातृपितृसमो नृणाम्॥१६५
चतुर्थं नाम सम्बन्धमित्याह कमलोद्भवः।
जारश्चोपपतिर्बन्धुर्दुष्टासम्भोगकर्त्तरि॥ १६६
उपपत्न्यां नवज्ञा च प्रेयसी चित्तहारिणी।
स्वामितुल्यश्च जारश्च नवज्ञा गृहिणीसमा॥ १६७
सम्बन्धो देशभेदे च सर्व्वदेशे विगर्हितः।
अवैदिको निन्दितस्तु विश्वामित्रेण निर्म्मितः॥१६८
दुस्त्यजस्तु महद्भिस्तु देशभेदे च सञ्चरेत्।
अकीर्त्तिजनकः पुंसां योषिताञ्च विशेषतः॥ १६९
तेजीयसां न दोषाय विद्यमानो युगे युगे॥ १७०

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-शौनक-संवादे जातिसम्बन्धनिर्णयो नाम दशमोऽध्यायः॥ १०॥

---

## एकादशोऽध्यायः।

शौनक उवाच।

द्विजः स भार्य्यां सन्त्यज्य किञ्चकारावशेषतः।
आत्मनो वामभागञ्च किंनामा कस्य वंशजः॥१ (क)

(क) अश्विनोर्वा महाभाग किंनामकस्य वंशजाविति पाठः क्वाचित्कः।

सौतिरुवाच।

द्विजस्य सुतपा नाम भारद्वाजो महामुनिः।
तपश्चकार कृष्णस्य लक्षवर्षं हिमालये॥ २
महातपस्वी तेजस्वी प्रज्वलन् ब्रह्मतेजसा।
ज्योतिर्ददर्श कृष्णस्य गगने सहसा क्षणम्॥ ३
वरं स वव्रे निर्लिप्तमात्मानं प्रकृतेः परम्।
मा च मोक्षं ययाचे तं दास्यं भक्तिञ्च निश्चलाम्॥४
बभूवाकाशवाणीति कुरु दारपरिग्रहम्।
पश्चाद्दास्यं प्रदास्यामि भक्तिं भोगक्षये द्विज॥ ५
पितॄणां मानसीं कन्यां ददौ तस्मै विधिः स्वयम्।
तस्यां कल्याणमित्रश्च बभूव मुनिपुङ्गवः॥६
यस्य स्मरणमात्रेण न भवेत् कुलिशाद्भयम्।
नष्टद्रव्यं बन्धुमित्रं नूनं तत्स्मरणाल्लभेत्॥ ७
कल्याणमित्रजननीं परित्यज्य महामुनिः।
शशाप सूर्य्यपुत्रञ्च यज्ञभागवर्ज्जितो भव॥ ८
ससोदरश्चैवापूज्यो भवेति च सुराधम।
व्याधिग्रस्तो जड़ाङ्गश्च भवेतोऽकीर्त्तिमानिति (क)॥९
इत्युक्त्वा सुतपा गेहे प्रतस्थौ सूनुना सह।
अश्विभ्यां सहितः सूर्य्यः प्रययौ च तदन्तिकम्॥ १०
पुत्राभ्यां व्याधियुक्ताभ्यां सूर्य्यस्त्रिजगतां पतिः।
मुनीन्द्रञ्च सुतपसं प्रतुष्टाव च शौनक॥ ११

सूर्य्य उवाच।

क्षमस्व भगवन् विप्र विष्णुरूप युगे युगे।
मम पुत्रापराधञ्च भारद्वाज मुनीश्वर॥ १२
ब्रह्म-विष्णु-महेशाद्याः सुराः सर्व्वे च सन्ततम्।
भुञ्जते विप्रदत्तन्तु फलपुष्पजलादिकम्॥ १३
ब्राह्मणावाहिता देवाः शश्वद्विश्वेषु पूजिताः।
न च विप्रात् परो देवो विप्ररूपी स्वयं हरिः॥ १४
ब्राह्मणे परितुष्टे च तुष्टो नारायणः स्वयम्।
नारायणे च सन्तुष्टे सन्तुष्टाः सर्व्वदेवताः॥ १५
नास्ति गङ्गासमं तीर्थं न च कृष्णात् परः स्मृतः।
न शङ्कराद्वैष्णवश्च न सहिष्णुर्धरापरा॥ १६
न च सत्यात् परो धर्म्मो न साध्वी पार्व्वतीसमा।
न दैवाद्बलवान् कश्चिन्नच पुत्रात् परः प्रियः॥ १७
न च व्याधिसमः शत्रुर्न च पूज्यो गुरोः परः।
नास्ति मातृसमो बन्धुर्न च मित्रं पितुः परम्॥ १८

(क) भवेतोऽकीर्त्तिमानिति पाठस्तु प्रामादिक इव।

एकादशी व्रतपरा (क) तपो नानशनात् परम् ।
परं सर्व्वधनं रत्नं विद्या रत्नात् परा यथा ॥ १९
सर्व्वाश्रमपरो विप्रो नास्ति विप्रसमो गुरुः ।
वेद-वेदाङ्ग-सर्व्वार्थमित्याह कमलोद्भवः ॥ २०
सूर्य्यस्य वचनं श्रुत्वा भारद्वाजो ननाम तम् ।
नीरुजो चापि तत्पुत्त्रौ चकार तपसः फलात् ॥२१
पश्चाच्च तत्र पुत्त्रौ च यज्ञभाजौ भविष्यतः ।
इत्युक्त्वा तञ्च सुतपाः प्रणम्य भास्करं मुनिः ॥ २२
जगाम गङ्गां सन्तुष्टो हरिसेवनतत्परः ।
पुत्त्राभ्यां सहितः सूर्य्यो जगाम निजमन्दिरम् ॥२३
बभूवतुस्तौ पूज्यौ च यज्ञभाजौ द्विजाज्ञया ।
एतत् सूर्य्यकृतं विप्र स्तोत्रं यो मानवः पठेत्(ख) ॥२४
विप्रपादप्रसादेन सर्व्वत्र विजयी भवेत् ।
ब्राह्मणेभ्यो नम इति प्रातरुत्थाय यः पठेत् ॥ २५
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ।
पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे॥२६
सागरे यानि तीर्थानि विप्रपादेषु तानि च ।
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ॥ २७
तावत् पुष्करपात्रेषु पिबन्ति पितरो जलम् ।
विप्रपादोदकं पुण्यं भक्तियुक्तश्च यः पिबेत् ॥ २८
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ।
महारोगी यदि पिबेत् विप्रपादोदकं द्विज ।
मुच्यते सर्व्वरोगाच्च माससेकन्तु भक्तितः ॥ २९
अविद्यो वा सविद्यो वा सन्ध्यापूतो हि यो द्विजः।(ग)
स एव विष्णुसदृशो मा हरौ विमुखो यदि ॥ ३०
घ्नन्तं विप्रं शपन्तं वा न हन्यान्नच तं शपेत् ।
गोभ्यः शतगुणं पूज्यो हरिभक्तश्च ब्राह्मणः ॥ ३१
पादोदकञ्च नैवेद्यं भुङ्क्ते विप्रस्य यो द्विज ।
नित्यं नैवेद्यभोजी यो राजसूयफलं लभेत् ॥ ३२
एकादश्यां न भुङ्क्ते यो नित्यं कृष्णं समर्च्चयेत् ।
तस्य पादोदकं प्राप्य स्थलं तीर्थं भवेद्ध्रुवम् ॥३३
यो भुङ्क्ते भोजनोच्छिष्टं नित्यं नैवेद्यभोजनम् ।
कृष्णदेवस्य पूतोऽसौ जीवन्मुक्तो महीतले ॥ ३४
अन्नं विष्ठा पयो मूत्रं यद्विष्णोरनिवेदितम् ।
द्विजानां कुलजातानामित्याह कमलोद्भवः ॥ ३५
ब्रह्मा च ब्रह्मपुत्त्राश्च सर्व्वे विष्णुपरायणाः ।
ब्राह्मणास्तत्कुले जातो विमुखश्च हरौ कथम् ॥३६
पित्रोर्मातामहादीनां संसर्गस्य गुरोश्च वा ।
दोषेण विमुखाः कृष्णे विप्रा जीवन्मृताश्च ते ॥ ३७
स किंगुरुः स किंतातः स किंपुत्त्रः स किंसखा ।
स किंराजा स किंबन्धुर्न दद्याद्यो हरौ मतिम् ॥३८
अवैष्णवाद्विजाद्विप्र चण्डालो वैष्णवो वरः ।
सगणः श्वपचो मुक्तो ब्राह्मणो नरकं व्रजेत् ॥ ३९
सन्ध्याहीनोऽशुचिर्नित्यं कृष्णे वा विमुखो द्विजः ।
स एव ब्राह्मणाभासो विषहीनो यथोरगः ॥ ४०
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविशति ।
तं वैष्णवं महापूतं जीवन्मुक्तं वदेद्विधिः ॥ ४१
पुंसां मातामहादीनां शतैः सार्द्धं हरेः पदम् ।
प्रयाति वैष्णवः पुंसामात्मनः कुलकोटिभिः ॥ ४२
ब्रह्म-क्षत्रिय-विट्-शूद्राश्चतस्रो जातयो यथा ।
स्वतन्त्रा जातिरेका च विश्वेषु वैष्णवाभिधा ॥ ४३
ध्यायन्ते वैष्णवाः शश्वद्गोविन्दपदपङ्कजम् ।
ध्यायते तांश्च गोविन्दः शश्वत्तेषाञ्च सन्निधौ ॥ ४४
सुदर्शनं संनियोज्य भक्तानां रक्षणाय च ।
तथापि न हि निश्चिन्तोऽवतिष्ठेद्भक्तसन्निधौ ॥ ४५
इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-
शौनक-संवादे विष्णु-वैष्णव-ब्राह्मणप्रशंसा
नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

शौनक उवाच ।

ऋषिवंशप्रसङ्गेन बभूवुर्व्विविधाः कथाः ।
उपालम्भेन प्रस्तावात् कौतुकेन श्रुता मया ॥ १
प्रजा वा सहसुः के वा ऊर्द्ध्वरेताश्च कश्चन ।
पित्रा सह विरोधेन नारदः किञ्चकार सः ॥ २
पितुः शापेन पुत्त्रस्य किं बभूव विरोधतः ।
पितुर्वा पुत्त्रशापेन सौते तत्कथ्यतां शुभम् ॥ ३

सौतिरुवाच ।

हंसो यतिश्चारुणी च वोढुः पञ्चशिखस्तथा ।

---

(क) नैकादशी व्रतपरा इति प ठस्तु प्रामादिक एव ।
(ख) एतत् सूर्य्यकृतं स्तोत्रं यो नरो नियतः पठेदिति वा पाठः ।
(ग) इतः परं चरणाष्टकं क्वचित् पुस्तके नास्ति। तत्तु न सङ्गतम् ।

अपान्तरतमाश्चैव सनकाद्याश्च शौनक ॥ ४
एतैर्विना च बहवो ब्रह्मपुत्राश्च सन्ततम्।
सांसारिकाः प्रजावन्तो गुर्व्वाज्ञापरिपालकाः ॥ ५
अपूज्यः पुत्रशापेन स्वयं ब्रह्मा प्रजापतिः।
तेनैव ब्रह्मणो मन्त्रं नोपासन्ते विपश्चितः ॥ ६
नारदो गुरुशापेन गन्धर्व्वश्च बभूव सः।
कथयामि सुविस्तीर्णं तद्वृत्तान्तं निशामय ॥ ७
गन्धर्व्वराजः सर्व्वेषां गन्धर्व्वाणां वरो महान्।
परमैश्वर्य्यसंयुक्तः पुत्रहीनो हि कर्म्मणा ॥ ८
गुर्व्वाज्ञया पुष्करे स परमेण समाधिना।
तपश्चकार शम्भोश्च कृपालोर्दीनमानसः ॥ ९
शिवस्य कवचं स्तोत्रं मन्त्रञ्च द्वादशाक्षरम्।
ददौ गन्धर्व्वराजाय वशिष्ठश्च कृपानिधिः ॥ १०
जजाप परमं मन्त्रं दिव्यं वर्षशतं मुने।
पुष्करे स निराहारः पुत्रदुःखेन तापितः ॥ ११
विरामे शतवर्षस्य ददर्श पुरतः शिवम्।
भासयन्तं दश दिशो ज्वलन्तं ब्रह्मतेजसा ॥ १२
शश्वत्तेजःस्वरूपञ्च भगवन्तं सनातनम्।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकारकम् ॥ १३
तपोरूपं तपोबीजं तपस्याफलदं फलम्।
शरणागतभक्ताय दातारं सर्व्वसम्पदाम् ॥ १४
त्रिशूलपट्टिशधरं वृषभस्थं दिगम्बरम्।
शुद्धस्फटिकसङ्काशं त्रिनेत्रं चन्द्रशेखरम् ॥ १५
तप्तस्वर्णप्रभाजुष्ट-जटाजालधरं वरम्।
नीलकण्ठञ्च सर्व्वज्ञं नागयज्ञोपवीतकम् ॥ १६
संहर्त्तारञ्च सर्व्वेषां कालं मृत्युञ्जयं परम्।
ग्रीष्ममध्याह्नमार्त्तण्ड-कोटिसङ्काशमीश्वरम् ॥ १७
तत्त्वज्ञानप्रदं शान्तं मुक्तिदं हरिभक्तिदम्।
दृष्ट्वा ननाम सहसा गन्धर्व्वो दण्डवद्भुवि ॥ १८
वशिष्ठदत्तस्तोत्रेण तुष्टाव परमेश्वरम्।
वरं वृणुष्वेति शिवस्तमुवाच कृपानिधिः।
स ययाचे हरेर्भक्तिं पुत्रं परमवैष्णवम् ॥ १९
गन्धर्व्वस्य वचः श्रुत्वा जहास चन्द्रशेखरः।
उवाच दीनं दीनेशो दीनबन्धुः सनातनः ॥ २०

श्रीमहादेव उवाच।

कृतार्थस्त्वं वरादेकाद्‌न्यच्चर्व्वितचर्व्वणम्।
गन्धर्व्वराज वृणुषे को वा त्वत्तोऽतिमङ्गले ॥ २१
यस्य भक्तिर्हरौ वत्स सुदृढ़ा सर्व्वमङ्गला।
स समर्थः सर्व्वविश्वं पूतं कर्त्तुञ्च लीलया ॥ २२
आत्मनः कुलकोटिञ्च शतं मातामहस्य च।
पुरुषाणां समुद्धृत्य गोलोकं याति निश्चितम् ॥ २३
त्रिविधानि च पापानि कोटिजन्मार्ज्जितानि च।
निहत्य पुण्यभोगञ्च हरिदास्यं लभेद्ध्रुवम् ॥ २४
तावत् पत्नी सुतस्तावत् तावदैश्वर्य्यमीप्सितम्।
सुखं दुःखं नृणां तावद् यावत् कृष्णे न मानसम्॥२५
कृष्णे मनसि सञ्जाते भक्तिखड्गो दुरत्ययः।
नराणां कर्म्मवृक्षाणां मूलच्छेदं करोत्यहो ॥ २६
भवेद्येषां सुकृतिनां पुत्राः परमवैष्णवाः।
कुलकोटिञ्च तेषां ते उद्धरन्त्यवलीलया ॥ २७
चरितार्थः पुमानेकादरमिच्छुर्व्वरादहो।
किं वरेण द्वितीयेन पुंसां त्वमिनं मङ्गले ॥ २८
धनं सञ्चितमस्माकं वैष्णवानां सुदुर्ल्लभम्।
श्रीकृष्णे भक्तिदास्यञ्च न वयं दातुमुत्सुकाः ॥ २९
वरयान्यं वरं वत्स यत्ते मनसि वाञ्छितम्।
इन्द्रत्वममरत्वं वा ब्रह्मत्वं लभ दुर्ल्लभम् ॥ ३०
सर्व्वसिद्धिं महायोगं ज्ञानं मृत्युञ्जयादिकम्।
सुखेन सर्व्वं दास्यामि हरिदास्यं त्यज क्षम ॥ ३१
शङ्करस्य वचः श्रुत्वा शुष्ककण्ठोष्ठतालुकः।
उवाच दीनो दीनेशं दातारं सर्व्वसम्पदाम् ॥ ३२

गन्धर्व्व उवाच।

यच्चक्षुःपतनेनैव ब्रह्मणः पतनं भवेत्।
तद्ब्रह्मत्वं स्वप्नतुल्यं कृष्णभक्तो नचेच्छति ॥ ३३
इन्द्रत्वममरत्वं वा सिद्धियोगादिकं शिव।
ज्ञानं मृत्युञ्जयाद्यं वा नहि भक्तस्य वाञ्छितम्॥३४
सालोक्य-सार्ष्टि-सामीप्य-सायुज्यं श्रीहरेरपि।
तत्र निर्व्वाणमोक्षञ्च नहि वाञ्छन्ति वैष्णवाः ॥३५
शश्वत्तत् सुदृढ़ा भक्तिर्हरिदास्यं सुदुर्लभम्।
स्वप्ने जागरणे भक्ता वाञ्छन्त्येवं वरं वरम् ॥३६
तद्दास्यं वैष्णवसुतं देहि कल्पतरो वरम्।
त्वां प्राप्य लभते तुष्टं वरमन्यं स वर्व्वरः ॥ ३७
न दास्यसीदं चेच्छम्भो वरं दुष्कृतिनञ्च माम्।
कृत्वा हि स्वशिरश्छेदं प्रदास्यामि हुताशने ॥ ३८
गन्धर्व्ववचनं श्रुत्वा तमुवाच कृपानिधिः।
भक्तं दीनञ्च भक्तेशो भक्तानुग्रहकारकः ॥३९

श्रीशङ्कर उवाच।
हरिभक्तिं हरेर्दास्यं पुत्रं परमवैष्णवम्।
चिरायुषञ्च गुणिनं शश्वत् सुस्थिरयौवनम्॥४०
ज्ञानिनं सुन्दरवरं गुरुभक्तं जितेन्द्रियम्।
गन्धर्व्वराज प्रवरं वरेमं लभ मा खिद॥४१
इत्युक्त्वा शङ्करस्तस्माज्जगाम स्वालयं मुने।
गन्धर्व्वराजः सन्तुष्ट आजगाम स्वमन्दिरम्॥४२
प्रफुल्लमानसाः सर्व्वे मानवाः सिद्धकर्म्मणः।
नारदस्तस्य भार्य्यायां लेभे जन्म च भारते॥४३
सुषाव पुत्रं सा दृष्ट्वा पर्व्वते गन्धमादने।
गुरुर्वशिष्ठो भगवान् नाम चक्रे यथोचितम्॥४४
बालकस्य च तस्यैव मङ्गलं मङ्गले दिने।
उपशब्दोऽधिकार्थश्च पूज्ये च वर्हणः पुमान्।
पूज्यानामधिको बालस्तेनोपवर्हणाभिधः॥४५

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-शौनक-संवादे नारदजन्मकथनं नाम द्वादशोऽध्यायः॥१२॥

---

## त्रयोदशोऽध्यायः।

सौतिरुवाच।
पुत्रोत्सवे च रत्नानि धनानि विविधानि च।
गन्धर्व्वराजः प्रददौ ब्राह्मणेभ्यो मुदान्वितः॥१
उपवर्हणस्तु कालेन हरेर्मन्त्रं सुदुर्लभम्।
वशिष्ठद्वारा सम्प्राप्य चकार दुष्करं तपः॥२
एकदा गण्डकीतीरे तञ्च सम्प्राप्तयौवनम्।
गन्धर्व्वपत्न्यो दद्दशुर्मूर्च्छामापुश्च तत्क्षणम्॥३
ततस्तीव्रं तपः कृत्वा प्राणान् सन्त्यज्य योगतः।
पञ्चाशत् ता बभूवुश्च कन्याश्चित्ररथस्य च॥४
उपवर्हणगन्धर्व्वं ताश्च तं वव्रिरे पतिम्।
मुदा माला ददुस्तस्मै कामुक्यः पितुराज्ञया॥५
गृहीत्वा ताश्च गन्धर्व्वो युवा सुस्थिरयौवनः।
दिव्यं विलक्षवर्षञ्च रेमे रहसि कामुकः॥६
ततोऽपि सुचिरं राज्यं कृत्वा ताभिः सहानिशम्।
जगाम ब्रह्मणः स्थानं हरिगाथां जगौ मुने॥७
दृष्ट्वा रम्भोरु-रम्भोरुं नर्त्तने कठिनं स्तनम्।
बभूव स्खलनं तस्य गन्धर्व्वस्य महात्मनः॥८
द्रुतं तत्याज सङ्गीतं मूर्च्छां प्राप सभातले।
उच्चैः प्रजहसुर्देवा ब्रह्मा कोपात् शशाप तम्॥९
व्रज त्वं शूद्रयोनिञ्च गन्धर्व्वीं तनुमुत्सृज।
काले वैष्णवसंसर्गात् मत्पुत्रस्त्वं भविष्यसि॥१०
विना विपत्तेर्म्महिमा पुंसां नैव भवेत् सुत।
सुखं दुःखञ्च सर्व्वेषां क्रमेण प्रभवेदिति॥११
(क) उपवर्हणगन्धर्व्वस्तत्याज तां तनुं तदा॥१२
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम्।
विशुद्धमाज्ञाख्यञ्चेति भित्त्वा षट्चक्रमेव च॥१३
इड़ां सुषुम्नां मेधाञ्च पिङ्गलां प्राणहारिणीम्।
सर्व्वज्ञानप्रदाञ्चैव मनःसंयमनीन्तथा॥१४
विशुद्धाञ्च निरुद्धाञ्च वायुसञ्चारिणीन्तथा।
तेजःशुष्ककरीञ्चैव बलपुष्टिकरीन्तथा॥१५
बुद्धिसञ्चारिणीञ्चैव ज्ञानजृम्भणकारिणीम्।
सर्व्वप्राणहराञ्चैव पुनर्ज्जीवनकारिणीम्॥१६
एताः षोड़शधा नाड़ीर्भित्त्वा च हंसमेव च।
मनसा सहितं ब्रह्मरन्ध्रमानीय योगतः॥१७
स्थित्वा मुहूर्त्तमात्मानमात्मन्येव युयोज ह।
जातिस्मरश्च योगीन्द्रः संप्राप ब्रह्म शौनक॥१८
वीणां त्रितन्त्रीं दुश्राप्यां वामस्कन्धे निधाय च।
शुद्धस्फटिकमालाञ्च विधृत्य दक्षिणे करे॥१९
संजल्पन् परमं ब्रह्म देवसारं परात् परम्।
परं निस्तारवीजञ्च कृष्ण इत्यक्षरद्वयम्॥२०
प्राच्यां कृत्वा शिरःस्थानं पश्चिमे चरणद्वयम्।
निधाय दर्भशयने शयानः पुरुषो यथा॥२१
गन्धर्व्वराजस्तं दृष्ट्वा भार्य्यया सह तत्क्षणम्।
योगेन ब्रह्म सम्प्राप श्रीकृष्णं मनसा स्मरन्॥२२
पत्न्यश्च बान्धवाः सर्व्वे विलप्य सुरुदुर्भृशम्।
जग्मुः क्रमेण शोकार्त्ता मोहिता विष्णुमायया॥२३
पञ्चाशद्योषितां मध्ये प्रधाना महिषी च या।
साध्वी मालावती नाम्ना परमा प्रेयसी वरा॥२४
उच्चै रुरोद सा तीव्रं कान्तं कृत्वा च वक्षसि।
इत्युवाच च शोकार्त्ता कान्तं संबोध्य यत्नतः॥२५
मालावत्युवाच।
हे नाथ रमणश्रेष्ठ विदग्ध रसिकेश्वर।

---

(क, इतः-पूर्व्वम्—इत्येवमुक्त्वा स विधिर्जगाम पुष्कराद् गृहम्। एतदर्द्धमधिकं क्वचित् पुस्तके पठ्यते।

दर्शनं देहि मां वन्धो निमग्नां शोकसागरे ॥ २६
विन्ध्यश्रकेपूदकेषु रम्ये चन्दनकानने।
पुष्पभद्रानदीतीरे पुष्पोद्याने मनोहरे ॥ २७
चन्दनाचलसान्निध्ये चारुचन्दनकानने।
पुष्पचन्दनतल्पे च चन्दनानिलवासिते ॥ २८
गन्धमादनशैलैकदेशे रम्ये नदीतटे।
पुंस्कोकिलनिनादे च मालतीजलशालिनि ॥२९
श्रीशैले श्रीवने दिव्ये श्रीनिवासनिषेविते।
श्रीयुक्ते श्रीपद्माम्भोजे पूतेऽच्युतकृते शुभे ॥ ३०
पुरा या या कृता क्रीड़ा वसन्ते रहसि त्वया।
मया च दुर्द्दैवात् सार्द्धं तया च दूयते मनः ॥३१
सुधातुल्येन वचसा सिक्ताहञ्च पुरा त्वया।
दूयते सततं तेन परमात्मातिदारुणम् ॥३२
साधुना सह संसर्गो वैकुण्ठादपि दुर्लभः।
अहो ततोऽतिविच्छेदो मरणादपि दुष्करः ॥ ३३
तस्मात्तेषाञ्च विच्छेदः साधुशोककरः परः।
ततोऽपि वन्धुविच्छेदः शोकः परमदारुणः ॥ ३४
ततोऽपत्यवियोगो हि मरणादतिरिच्यते।
सर्व्वस्मात् पतिभेदो हि तत्परं नास्ति सङ्कटम् ॥३५
शयने भोजने स्नाने स्वप्ने जागरणेऽपि च।
स्वामिविच्छेददुःखं हि नूतनूतं दिने दिने ॥ ३६
सर्व्वशोकं विस्मरेत् स्त्री स्वामिसंयोगभावतः।
वस्तुमन्यं न पश्यामि यं दृष्ट्वा विस्मरेत् पतिम् ॥३७
नातो विशिष्टं पश्यामि बान्धवं स्वामिना विना।
साध्वीनां कुलजातानामित्याह कमलोद्भवः ॥ ३८
हे दिगीशाश्च दिक्पाला हे धर्म्म हे प्रजापते।
गिरीश कमलाकान्त पतिदानञ्च देहि मे ॥ ३९
इत्युक्त्वा विरहार्त्ता सा कन्या चित्ररथस्य च।
मूर्च्छां संप्राप तत्रैव दुर्गमे गहने वने ॥ ४०
विचेतना तत्र तस्थौ कान्तं कृत्वा स्ववक्षसि।
परिपूर्णं दिवानक्तं सर्व्वैर्देवैश्च रक्षिता ॥ ४१
प्रभाते चेतनां प्राप्य विललाप भृशं मुहुः।
इत्युवाच पुनस्तत्र हरिं सम्बोध्य सा सती ॥ ४२

मालावत्युवाच।

हे कृष्ण जगतां नाथ नाथ नाहं जगद्बहिः।
त्वमेव जगतां पाता मां न पाहि कथं प्रभो ॥ ४३
अयं भर्त्तास्य भार्य्याहं ममेति तव मायया।
त्वमेव वास्तवो भर्त्ता सर्व्वेषां सर्व्वकारणम् ॥ ४४
गन्धर्व्वः कर्म्मणा कान्तः कान्ताहमस्य कर्म्मणा।
क्व गतः कर्म्मभोगान्ते कुत्र संस्थाप्य मां प्रियाम् ॥४५
को वा कस्याः पतिः पुत्रः का वा कस्य प्रिया प्रभो।
संयुनक्ति विधाता च वियुनक्ति च कर्म्मणा ॥ ४६
संयोगे परमानन्दो वियोगे प्राणसङ्कटः।
शश्वज्जगति मूर्खस्य नात्मारामस्य निश्चितम् ॥ ४७
नश्वरो विषयः सत्यं शोकश्च बान्धवो भुवि।
स्वयं त्यक्तः सुखायैव दुःखाय त्याजितः परैः ॥ ४८
तस्मात् सन्तः स्वयं त्यक्त्वा परमैश्वर्य्यमीप्सितम्।
ध्यायन्ते सन्ततं कृष्ण-पादपद्मं निरापदम् ॥ ४९
सर्व्वत्र ज्ञानिनः सन्तः का स्त्री ज्ञानवती भुवि।
ततो मह्यं विमूढ़ायै दातुमर्हसि वाञ्छितम् ॥ ५०
न मे वाञ्छामरत्वे च शक्रत्वे मोक्षवर्त्मनि।
इमं कान्तं वरं देहि चतुर्व्वर्गकरं परम् ॥ ५१
यावती कामिनीजातिर्जगत्यां जगदीश्वर।
कस्यैचिन्नहि दत्तश्च तेन यादृशः पतिः ॥ ५२
तस्मै दत्ता गुणाः सर्व्वे रूपाणि विविधानि च।
सुशीलानि च सर्व्वाणि चामरत्वं विना हरे ॥ ५३
रूपेण च गुणेनैव तेजसा विक्रमेण च।
ज्ञानेन शान्त्या सन्तुष्ट्या हरितुल्यः प्रभुर्मम ॥ ५४
हरिभक्तो हरिसमो गाम्भीर्य्ये सागरो यथा।
दीप्तिमान् सूर्य्यतुल्यश्च शुद्धो वह्निसमस्तथा ॥ ५५
चन्द्रतुल्यसदृश्यश्च कन्दर्पसमसुन्दरः।
बुद्ध्या बृहस्पतिसमः काव्ये कविसमस्तथा ॥ ५६
वाणीव सर्व्वशास्त्रज्ञः प्रतिभायां भृगोरिव।
कुवेरतुल्यो धनवान् महान् दाता मनोरिव ॥ ५७
धर्म्मे धर्म्मसमो धर्म्मी सत्ये सत्यव्रताधिकः।
कुमारतुल्यस्तपसा स्वाचारो ब्रह्मणा समः ॥ ५८
ऐश्वर्य्ये शक्रतुल्यश्च सहिष्णुः पृथिवीसमः।
एवम्भूतो मृतः कान्तः प्राणा यान्ति न मे कथम् ॥५९
अरे सुरा यज्ञभाजो घृतं भोक्तुं क्षमा भुवि।
क्षणेनायज्ञभाजश्च करिष्यामि च लीलया ॥ ६०
नारायण जगत्कान्त नाहमेव जगद्बहिः।
शीघ्रं जीवय मत्कान्तमन्यथा त्वां शपाम्यहम् ॥ ६१
प्रजापते पुत्रशापात् त्वमपूज्यो महीतले।
तवैवानधिकारित्वं करिष्याम्यधुना भवे ॥ ६२

हे ब्रह्मो ज्ञानलोपस्ते करिष्यामि शापेन च।
धर्म्मलोपञ्च धर्म्मस्य करिष्याम्यवलीलया ॥ ६३
यमाधिकारं दूरञ्च करिष्यामि न संशयः।
सत्वं कालं शपिष्यामि मृत्युकन्यां सुनिष्ठुराम् ॥ ६४
शपामि सर्व्वानत्रैव जरां व्याधिं विनाधुना।
व्याधिना जरया मृत्युर्नश्चभूच्च पतेर्म्मम ॥ ६५
इत्युक्त्वा कौशिकीतीरं जगाम शप्तुमेव तान्।
मालावती महासाध्वी शवं कृत्वा स्ववक्षसि ॥ ६६
तां शप्तुमुद्यतां दृष्ट्वा ब्रह्मा देवपुरोगमः।
जगाम शरणं विष्णुं तीरं क्षीरपयोनिधेः ॥ ६७
तत्र स्नात्वा च तुष्टाव परमात्मानमीश्वरम्।
विष्णुं ब्रह्मा जगत्कान्तमभीतं तत्र भीतवत् ॥ ६८
ब्रह्मोवाच।
उपबर्हणपत्नी सा कन्या चित्ररथस्य च।
कान्तहेतोश्च मां देवान् शपेत् त्वं रक्ष माधव ॥६९
स्मरन्ति साधवः सन्तो जपन्ति योगिनो सदा।
स्वप्ने जागरणे चैव सर्व्वकार्य्येषु माधवम् ॥ ७०
शरणागतदीनार्त्त-परित्राणपरायण।
रक्ष रक्ष हृषीकेश व्रजामः शरणं वयम् ॥ ७१
पूजा मे पुत्रशापेन विहता साम्प्रतं प्रभो।
अधिकारं हतं मात्र करोति मालती सती ॥ ७२
सर्व्वाधिकारो ब्रह्माण्डे त्वया दत्तः पुरा प्रभो।
सम्पदेतादृशी नाथ यास्यत्येवाधुना मम ॥ ७३
महादेव उवाच।
त्वया दत्तं महाज्ञानं गुप्तं सर्व्वेषु दुर्लभम्।
शतमन्वन्तरतपःफलेन पुष्करे पुरा ॥७४
ऐश्वर्य्यं वा धनं वापि विद्या वा विक्रमोऽथवा।
ज्ञानस्य परमार्थस्य कलां नार्हति षोड़शीम् ॥७५
सर्व्वाद्यातं सर्व्वगुप्तमतीव दुर्लभं परम्।
मम तत्त्वज्ञानरत्नं शापेन याति योषितः ॥७६
अहो पतिव्रतातेजः सर्व्वेषां तेजसां परम्।
तेजोबलेन दग्धं मां रक्ष रक्ष हरे हरे ॥७७
धर्म्म उवाच।
सर्व्वरत्नात् परं रत्नं धर्म्म एव सनातनः।
यास्यत्येवंविधो धर्म्मस्त्वया दत्तः पुरा प्रभो ॥ ७८
सप्तमन्वन्तरतपःफलेन परमेश्वर।
प्राप्तो धर्म्मोऽधुना याति शापेन योषितः प्रभो ॥७९

देवा ऊचुः।
यज्ञभाजो हृतभुजो वयमेव त्वया कृताः।
योषिच्छापेन तत् सर्व्वमधुना याति माधव ॥ ८०
इत्युक्त्वा संयताः सर्व्वे तस्थुस्तत्र भयार्द्दिताः।
एतस्मिन्नन्तरेऽकस्मादाशुरभूवाशरीरिणी ॥८१
यूयं गच्छत तन्मूलं विप्ररूपी जनार्द्दनः।
पश्चाद्‌यास्यति शान्त्यर्थमिति वो रक्षणाय च ॥८२
श्रुत्वा तद्वचनं देवाः प्रहृष्टमानसोन्मुखाः।
जग्मुर्म्मालावतीस्थानं कौशिकीतीरमीश्वराः ॥ ८३
तामेव ददृशुर्द्देवा देवीं मालावतीं सतीम्।
रत्नसारेन्द्रभूषाभिरुज्ज्वलां कमलाकलाम् ॥ ८४
वह्निशुद्धांशुकाधानां सिन्दूरविन्दुभूषिताम्।
शरच्चन्द्रप्रभां शान्तां द्योतयन्तीं दिशस्त्विषा ॥ ८५
पतिसेवामहद्धर्म्म-चिरसञ्चिततेजसा।
प्रज्वलन्तीं सुप्रदीप्तशिखां वह्नेरिवोत्तमाम् ॥ ८६
योगासनं कुर्व्वतीञ्च शववक्षःस्थलस्थिताम्।
सुरम्यां स्वामिनो वीणां(क) बिभ्रतीं दक्षिणे करे ॥८७
तर्ज्जन्यङ्गुष्ठकोटिभ्यां शुद्धस्फटिकमालिकाम्।
भक्त्या स्नेहेन कान्तस्य बिभ्रतीं योगमुद्रया ॥ ८८
चारुचम्पकवर्णाभां बिम्बोष्ठीं रत्नमालिनीम्।
यथा षोड़शवर्षीयां शश्वत्सुस्थिरयौवनाम् ॥ ८९
बृहन्नितम्बभारार्त्तां पीनश्रोणिपयोधराम्।
पश्यन्तीं शवमीशस्य शुभदृष्ट्या पुनः पुनः ॥ ९०
एवम्भूताञ्च तां दृष्ट्वा देवास्ते विस्मयं ययुः।
स्थगिताश्च क्षणं तत्र धार्म्मिका धर्म्मभीरवः ॥ ९१
इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-
शौनक-संवादे मालावतीविलापो नाम
त्रयोदशोऽध्यायः॥ १३ ॥

---

## चतुर्द्दशोऽध्यायः।

सौतिरुवाच।
तत्र स्थित्वा क्षणं देवा ब्रह्मेशानपुरोगमाः।
ययुर्म्मालावतीमूलं परं मङ्गलदायकाः ॥ १
मालावती सुरान् दृष्ट्वा प्रणनाम पतिव्रता।
रुरोद कान्तं संस्थाप्य देवानां सन्निधौ मुने ॥ २

(क) बिभ्रतीमित्यादिचरणचतुष्टयं क्वचित् पुस्तके नास्ति।

एतस्मिन्नन्तरे तत्र कश्चिद्ब्राह्मणबालकः ।
आजगाम सुराणाञ्च सभामतिमनोहरः ॥ ३
दण्डी छत्री शुक्लवासा बिभ्रत्तिलकमुज्ज्वलम् ।
दीर्घपुस्तकहस्तश्च सुप्रशान्तश्च सस्मितः ॥ ४
चन्दनोक्षितसर्व्वाङ्गः प्रज्वलन् ब्रह्मतेजसा ।
सुरान् संभाष्य तत्रैव विस्मितान् विष्णुमायया ॥ ५
तत्रोवास सभामध्ये तारामध्ये यथा शशी ।
उवाच देवान् सर्व्वांश्च मालतीञ्च विचक्षणः ॥ ६

ब्राह्मण उवाच ।

कथमत्र सुराः सर्व्वे ब्रह्मेशानपुरोगमाः ।
स्वयं विधाता जगतां स्रष्टात्र केन कर्म्मणा ॥ ७
सर्व्वब्रह्माण्डसंहर्त्ता शम्भुरत्र स्वयं विभुः ।
अहो त्रिजगतां साक्षी धर्म्मश्च सर्व्वकर्म्मणाम् ॥ ८
कथं रविः कथं चन्द्रः कथमत्र हुताशनः ।
कथं कालो मृत्युकन्या कथं वात्र यमादयः ॥ ९
हे मालावति त्वत्क्रोडे शवः कस्तेऽतिशुष्कितः ।
जीवितायाः कथं मूले योषितश्च पुमान् शवः ॥ १०
इत्युक्त्वा तांश्च तां (क) विप्रो विरराम सभातले ।
मालावतीं तं प्रणम्य समुवाच विचक्षणम् ॥ ११

मालावत्युवाच ।

आनन्दपूर्व्वकं वन्दे विप्ररूपं जनार्द्दनम् ।
तुष्टा देवा हरिस्तुष्टो यस्य पुष्पजलेन च ॥ १२
अवधानं कुरु विभो शोकार्त्ताया निवेदने ।
समा कृपा सतां शश्वद्योग्यायोग्ये कृपावताम् ॥ १३
उपबर्हणभार्य्याऽहं कन्या चित्ररथस्य च ।
सर्व्वे मालावतीं कृत्वा वदन्ति विप्रपुङ्गव ॥ १४
दिव्यं लक्षयुगं प्रायः (ख) स्थाने स्थाने मनोहरे ।
कृता क्रीड़ा च स्वच्छन्दमनेन स्वामिना सह ॥ १५
प्रिये स्नेहो हि साध्वीनां यावान् विप्रेन्द्र योषिताम्
सर्व्वं शास्त्रानुसारेण जानासि त्वं विचक्षण ॥ १६
अकस्माद् ब्रह्मणः शापात् प्राणांस्तत्याज मत्पतिः ।
देवानुद्दिश्य विलपे यथा जीवति मत्पतिः ॥ १७
स्वकार्य्यसाधने सर्व्वे व्यग्राश्च जगतीतले ।
भावाभावं न जानन्ति केवलं स्वार्थतत्पराः ॥ १८
सुखं दुःखं भयं शोकः सन्तापः कर्म्मणां नृणाम् ।
ऐश्वर्य्यं परमानन्दो जन्ममृत्युश्च मोक्षणम् ॥ १९
देवाश्च सर्व्वजनका दातारः कर्म्मणां फलम् ।
कर्त्तारः कर्म्मवृक्षाणां मूलोच्छेदश्च लीलया ॥ २०
न हि देवात् परो बन्धुर्न हि देवात् परो बली ।
दयावान् नहि देवाच्च न च दाता ततः परः ॥ २१
सर्व्वान् देवानहं याचे पतिदानं ममेप्सितम् ।
धर्म्मार्थकाममोक्षाणां फलदांश्च सुरद्रुमान् ॥ २२
यदि दास्यन्ति देवा मे कान्तदानं यथेप्सितम् ।
भद्रं तदान्यथा तेभ्यो दास्यामि स्त्रीवधं ध्रुवम् ॥ २३
शपिष्यामि च सर्व्वांश्च दारुणं दुर्निवारकम् ।
दुर्निवार्य्यः सतीशापस्तपसा केन वार्य्यते ॥ २४
इत्युक्त्वा मालती साध्वी शोकार्त्ता सुरसंसदि ।
विरराम द्विजश्रेष्ठस्तामुवाच च शौनक ॥ २५

ब्राह्मण उवाच ।

कर्म्मणां फलदातारो देवाः सत्यञ्च मालति ।
न सद्यः सुचिरेणैव धान्यं कृषकवर्त्मणाम् ॥ २६
गृही च कृषकद्वारा क्षेत्रे धान्यं वपेत् सति ।
तदङ्कुरो भवेत् काले काले वृक्षः फलत्यपि ॥ २७
काले सुपक्वं भवति काले प्राप्नोति तद्गृही ।
एवं सर्व्वं समुन्नेयं चिरेण कर्म्मणः फलम् ॥ २८
अष्टौ वपति संसारे गृहस्थो विष्णुमायया ।
काले तदङ्कुरो वृक्षः काले प्राप्नोति तत्फलम् ॥ २९
पुण्यवान् पुण्यभूमौ च करोति सुचिरं तपः ।
तेषाञ्च फलदातारो देवाः सत्यं न संशयः ॥ ३०
ब्राह्मणानां मुखे क्षेत्रे श्रेष्ठे चान्नजलं पयः (क) ।
यो यज्जुहोति भक्त्या च स तत् प्राप्नोति निश्चितम् ॥ ३१
न बलं न च सौन्दर्य्यं नैश्वर्य्यं न धनं सुतः ।
नैव स्त्री न च सत्कान्तः किं भवेत् तपसा विना ॥ ३२
सेवते प्रकृतिं यो हि भक्त्या जन्मनि जन्मनि ।
स लभेत् सुन्दरीं कान्तां विनीताञ्च गुणान्विताम् ॥ ३३
श्रियञ्च निश्चलां पुत्त्रं पौत्त्रं भूमिं बलं प्रजाम् ।
प्रकृतेश्च वरेणैव लभेद्भक्तोऽवलीलया ॥ ३४
शिवं शिवस्वरूपञ्च शिवदं शिवकारणम् ।
ज्ञानानन्दं महात्मानं परं मृत्युञ्जयं परम् ॥ ३५
तमीशं सेवते यो हि भक्त्या जन्मनि जन्मनि ।
पुमान् प्राप्नोति सत्कान्तां कामिनीचापि सत्पतिम् ॥ ३६

(क) तां सतीमिति वा पाठः ।
(ख) रम्ये इति बहुसम्मतः पाठः ।

(क) ऊषरं एव च इति वा पाठः ।

विद्यां ज्ञानं सुकवितां पुत्त्रं पौत्त्रं परां श्रियम्।
बलं धनं विक्रमञ्च लभेत् स तद्वरेण च॥ ३७
ब्रह्माणं भजते यो हि लभेत् सोऽपि प्रजां श्रियम्।
विद्यामैश्वर्य्यमानन्दं वरेण ब्रह्मणो नरः॥ ३८
यो नरो भजते भक्त्या दीननाथं दिनेश्वरम्।
विद्यामारोग्यमानन्दं धनं पुत्त्रं लभेद्ध्रुवम्॥ ३९
गणेश्वरं यो भजते देवदेवं सनातनम्।
सर्व्वाग्रपूज्यं सर्व्वेशं भक्त्या जन्मनि जन्मनि॥ ४०
विघ्ननाशो भवेत् तस्य स्वप्ने जागरणेऽनिशम्।
परमानन्दमैश्वर्य्यं पुत्त्रं पौत्त्रं धनं प्रजाः॥ ४१
ज्ञानं विद्यां सुकवितां लभते तद्वरेण च।
भजते यो हि विष्णुञ्च लक्ष्मीकान्तं सुरेश्वरम्॥ ४२
वरार्थी चेल्लभेत् सर्व्वं निर्व्वाणमन्यथा ध्रुवम्।
शान्तं निषेव्य पातारं सत्यं सत्यं लभेन्नरः॥ ४३
सर्व्वं तपः सर्व्वधर्म्मं यशः कीर्त्तिमनुत्तमाम्।
विष्णुं निषेव्य सर्व्वेशं यो मूढ़ो लभते वरम्॥ ४४
विड़म्बितो विधात्राऽसौ मोहितो विष्णुमायया।
माया नारायणीशाना सर्व्वप्रकृतिरीश्वरी॥ ४५
सा कृपां कुरुते यञ्च विष्णुमन्त्रं ददाति तम्।
धर्म्मं यो भजते धर्म्मी सर्व्वधर्म्मं लभेद्ध्रुवम्॥ ४६
इह लोके सुखं भुक्त्वा याति विष्णोः परं पदम्।
यो " देवं भजेद्भक्त्या स चादौ लभते च तम्॥ ४७
काले पश्चात्तेन सार्द्धं परं विष्णोः पदं लभेत्।
श्रीकृष्णं भजते यो हि निर्गुणं प्रकृतेः परम्॥ ४८
ब्रह्मविष्णुशिवादीनां सेव्यं वीजं परात्परम्।
अक्षरं परमं ब्रह्म भगवन्तं सनातनम्॥ ४९
साकारञ्च निराकारं ज्योतिः स्वेच्छामयं विभुम्।
सर्व्वाधारञ्च सर्व्वेशं परमानन्दमीश्वरम्॥ ५०
निर्लिप्तं साक्षिरूपञ्च भक्तानुग्रहविग्रहम्।
जीवन्मुक्तः स सत्यं हि न वरं लभते सुधीः॥ ५१
स सर्व्वं मन्यते तुच्छं सालोक्यादि चतुष्टयम्।
ब्रह्मत्वममरत्वं वा मोक्षं यत् तुच्छवत् सति॥ ५२
ऐश्वर्य्यं लोष्ट्रतुल्यञ्च नश्वरं चैव मन्यते।
इन्द्रत्वञ्च मनुत्वञ्च चिरजीवित्वमेव वा॥ ५३
जलवुद्वुदवद्बुद्ध्या चातितुच्छं न गण्यते।
स्वप्ने जागरणे वापि शश्वत् सेवाञ्च वाञ्छति॥ ५४
दास्यं विना न याचेत श्रीकृष्णस्य पदं परम्।
तत्पादाब्जे दृढ़ां भक्तिं लब्ध्वा पूर्णो निरन्तरम्॥ ५५
परिपूर्णतमं ब्रह्म निषेव्य सुस्थिरः सदा।
आत्मनः कुलकोटिञ्च शतं मातामहस्य च॥ ५६
श्वशुरस्य शतं पूर्व्वमुद्धृत्य चावलीलया।
दासं दासीं प्रसूं भार्य्यां पुत्त्रादपि परं शतम्॥ ५७
उद्धरेत् कृष्णभक्तश्च गोलोकं याति निश्चितम्।
तावद्गर्भे वसेत् कामी तावती यमयातना॥ ५८
तावद्गृही च भोगार्थी यावत् कृष्णं न सेवते।
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविश्यति॥ ५९
यमस्तल्लिखनं दूरं करोति तत्क्षणं भिया।
मधुपर्क्कादिकं ब्रह्मा पुरैव तन्नियोजयेत्॥ ६०
अहो विलङ्घ्य मल्लोकं मार्गेणानेन यास्यति।
तस्य वै निष्कृतिर्नास्ति कल्पकोटिशतैरपि॥ ६१
दुरितानि च भीतानि कोटिजन्मकृतानि च।
तं विहाय पलायन्ते वैनतेयं यथोरगाः॥ ६२
पुरातनं कृतं कर्म्म यद्यत् तस्य शुभाशुभम्।
छिनत्ति कृष्णचक्रेण तीक्ष्णधारेण सन्ततम्॥ ६३
तं विहाय जरा-मृत्युर्याति चक्रभिया सति।
अन्यथा शतखण्डं तां कुरुते च सुदर्शनः॥ ६४
निःशङ्को याति गोलोकं विहाय मानवीं तनुम्।
गत्वा दिव्यां तनुं धृत्वा श्रीकृष्णं सेवते सदा॥ ६५
यावत् कृष्णो हि गोलोके तावद्भक्तो वसेत् सदा।
निमेषं मन्यते दासो नश्वरं ब्रह्मणो वयः॥ ६६

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-शौनक-संवादे ब्राह्मण-मालावतीसंवादे चतुर्द्दशोऽध्यायः॥ १४॥

---

## पञ्चदशोऽध्यायः।

ब्राह्मण उवाच।

केन रोगेण हि मृतोऽधुना साध्वि तव प्रियः।
सर्व्वरोगचिकित्साञ्च जानामि च चिकित्सकः॥ १
मृततुल्यं मृतं रोगात् सप्ताहाभ्यन्तरे सति।
महाज्ञानेन तं जीवं जीवयाम्यवलीलया॥ २
जरां मृत्युं यमं कालं व्याधिमानीय त्वत्पुरः।
निबध्य दातुं शक्तोऽहं व्याधौ बद्ध्वा पशुं यथा॥ ३
यतो न सञ्चरेद्व्याधिर्द्देहिषु देहधारिणाम्।

व्याधीनां कारणं यद्यत् सर्व्वं जानामि सुन्दरि ॥४
यतो न सञ्चरेद्‌व्याधिवीजं दुष्टममङ्गलम्।
तदुपायं विजानामि शास्त्रतत्त्वानुसारतः ॥ ५
यो वा योगेन खेदेन देहत्यागं करोति च।
तस्य तं जीवनोपायं जानामि योगधर्म्मतः ॥ ६
ब्राह्मणस्य वचः श्रुत्वा स्फीता मालावती सती।
उवाच स्निग्धचित्ता सा तमुवाच प्रहर्षिता ॥ ७
मालावत्युवाच।
अहो श्रुतं किमाश्चर्य्यं वचनं बालवक्त्रतः।
वयसाऽतिशिशुर्दृष्टो ज्ञानं योगविदां परम् ॥ ८
त्वया कृता प्रतिज्ञा च कान्तं जीवयितुं क्षमः।
विपरीतं न सद्वाक्यं तत्क्षणं जीवितः पतिः ॥ ९
जीवयिष्यसि मत्कान्तं पश्चाद्वेदविदां वरः।
यद्यत् पृच्छामि सन्देहात्तद्भवान् वक्तुमर्हति ॥ १०
सभार्य्यां जीविते कान्ते तस्य तीव्रस्य सन्निधौ।
त्वां हि प्रष्टुं न शक्ताहं विद्यमाने महीश्वरे ॥ ११
एते ब्रह्मादयो देवा विद्यमानाश्च संसदि।
त्वञ्च वेदविदां श्रेष्ठो न च कश्चिन्मदीश्वरः ॥ १२
नारीं रक्षति भर्त्ता चेत् न कोऽपि खण्डितुं क्षमः।
शास्तिं करोति यदि स न कोऽपि रक्षिता भुवि ॥१३
एवं देवेषु नो शक्तिः शक्रे वा ब्रह्मरुद्रयोः।
स्त्रीपुंभावश्च बोद्धव्यः स्वामी कर्त्ता च योषिताम् ॥१४
स्वामी कर्त्ता च हर्त्ता च शास्ता पोष्टा च रक्षिता।
अभीष्टदेवः पूज्यश्च न गुरुः स्वामिनः परः ॥ १५
कन्या सत्कुलजाता या सा कान्तवशवर्त्तिनी।
या स्वतन्त्रा च सा दुष्टा स्वभावात् कुलटा ध्रुवम् ॥१६
दुष्टा परपुमांसञ्च सेवते या नराधमा।
सा निन्दति पतिं शश्वदसद्वंशप्रसूतिका ॥ १७
उपवर्हणभार्य्याहं कन्या चित्ररथस्य च।
वधूर्गन्धर्व्वराजस्य कान्तभक्ता सदा द्विज ॥ १८
सर्व्वं कालयितुं शक्तास्त्वञ्च वेदविदां वर।
कालं यमं मृत्युकन्यां मदभ्यासं समानय ॥ १९
मालावतीवचः श्रुत्वा विप्रो वेदविदां वरः।
सभामध्ये समाहूय तान् प्रत्यक्षं चकार ह ॥ २०
ददर्श मृत्युकन्याञ्च प्रथमं मालती सती। (क)
कृष्णवर्णां घोररूपां रक्ताम्बरधरां वराम् ॥२१
स्मितां षड्भुजां शान्तां दयायुक्तां महासतीम्।
कालस्य स्वामिनो वामे चतुःषष्टिसुतान्विताम् ॥२२
कालं नारायणांशञ्च ददर्श सुरता सती।
महोग्ररूपं विकटं ग्रीष्मसूर्य्यसमप्रभम् ॥ २३
षड्वक्त्रं षोड़शभुजं चतुर्व्विंशतिलोचनम्।
षट्पादं कृष्णवर्णञ्च रक्ताम्बरधरं परम् ॥ २४
देवस्य देवं विकृतं सर्व्वसंहाररूपिणम्।
कालाधिदेवं सर्व्वेशं भगवन्तं सनातनम् ॥ २५
ईषद्धास्यप्रसन्नास्यमक्षमालाकरं वरम्।
जपन्तं परमं ब्रह्म कृष्णमात्मानमीश्वरम् ॥ २६
सती ददर्श पुरतो व्याधिसंघान् सुदुर्जयान्।
वयसातिमहावृद्धान् स्तनन्धान् मातृसन्निधौ ॥ २७
स्थूलपादं कृष्णवर्णं धर्म्मिष्ठं रविनन्दनम्।
जपन्तं परमं ब्रह्म भगवन्तं सनातनम् ॥ २८
धर्म्माधर्म्मविचारज्ञं परं धर्म्मस्वरूपिणम्।
पापिनामपि शास्तारं ददर्श पुरतो यमम् ॥ २९
तांश्च दृष्ट्वा च निःशङ्का पप्रच्छ प्रथमं यमम्।
मालावती महासाध्वी प्रहृष्टवदनेक्षणा ॥ ३०
मालावत्युवाच।
हे धर्म्मराज धर्म्मिष्ठ धर्म्मशास्त्रविशारद।
कालव्यतिक्रमे कान्तं कथं हरसि मे विभो ॥ ३१
यम उवाच।
अप्राप्तकालो म्रियते न कश्चिज्जगतीतले।
ईश्वराज्ञां विना साध्वि नाग्रतं चालयाम्यहम् ॥३२
अहं कालो मृत्युकन्या व्याधयश्च सुदुर्ज्जयाः।
निषिकेण प्राप्तकालं कालयन्तीश्वराज्ञया ॥ ३३
मृत्युकन्या विचारज्ञा यं प्राप्नोति निषेकतः।
तमहं कालयाम्येव पृच्छ तां केन हेतुना ॥ ३४
मालावत्युवाच।
त्वमपि स्त्री मृत्युकन्या जानासि स्वामिवेदनम्।
कथं हरसि मत्कान्तं जीवितायां मयि प्रिये ॥ ३५
मृत्युकन्योवाच।
पुरा विश्वसृजा सृष्टाप्यहमेवात्र कर्म्मणि।

(क) प्रथमं मालती सतीत्यनन्तरं कृष्णवर्णामित्यादि चरणाष्टकं नास्ति, किन्तु महोग्ररूपां विकटां ग्रीष्मसूर्य्यसमप्रभाम्। षड्वक्त्रां षोड़शभुजां चतुर्व्विंशतिलोचनाम्। षट्पादां कृष्णवर्णाञ्च रक्ताम्बरधरां वराम् इति पाठः क्वचित् पुस्तके वर्त्तते। स च महोग्ररूपं विकटमित्यादिस्थ.नीयः।

न च क्षमा परित्यक्तुं बहुना तपसा सति ॥ ३६
सती सतीनां मध्ये च काचित्तेजस्विनी वरा।
मामेव भस्मसात् कर्त्तुं क्षमा यदि भवेद्भवे ॥ ३७
सर्व्वापच्छान्तिरेवेह तदा भवति सुन्दरि।
पुत्राणां स्वामिनः पश्चाद् भविता यद्भविष्यति ॥३८
कालेन प्रेरितास्त्वञ्च मत्पुत्रा व्याधयश्च वै।
न मत्सुतानां दोषश्च न च मे शृणु निश्चितम् ॥ ३९
पृच्छ कालं महात्मानं धर्म्मार्चं धर्म्मसंसदि।
तदा यदुचितं भद्रे तत् करिष्यसि निश्चितम् ॥ ४०

मालावत्युवाच।

हे काल कर्म्मणां साक्षिन् कर्म्मरूप सनातन।
नारायणांश भगवन् नमस्तुभ्यं पराय च ॥ ४१
कथं हरसि मत्कान्तं जीवितायां मयि प्रभो।
जानासि सर्व्वदुःखञ्च सर्व्वशस्त्वं कृपानिधे ॥ ४२

कालपुरुष उवाच।

को वाऽहं को यमः का च मृत्युकन्या च व्याधयः।
वयं भ्रमामः सततमीशाज्ञापरिपालकाः ॥ ४३
यस्य स्रष्टा च प्रकृतिर्ब्रह्मविष्णुशिवादयः।
सुरा मुनीन्द्रा मनवो मानवाः सर्व्वजन्तवः ॥ ४४
ध्यायन्ते तत्पदाम्भोजं योगिनश्च विचक्षणाः।
जपन्ति शश्वन्नामानि पुण्यानि परमात्मनः ॥ ४५
यद्भयाद्वाति वातोऽयं सूर्य्यस्तपति यद्भयात्।
स्रष्टा ब्रह्माज्ञया यस्य पाता विष्णुर्यदाज्ञया ॥ ४६
हर्त्ता शङ्करः सर्व्वजगतां यस्य शासनात्।
धर्म्मश्च कर्म्मणां साक्षी यस्याज्ञापरिपालकः ॥ ४७
राशिचक्रं ग्रहाः सर्व्वे भ्रमन्ति यस्य शासनात्।
दिगीशाश्चैव दिक्पाला यस्याज्ञापरिपालकाः ॥४८
यस्याज्ञया च तरवः पुष्पाणि च फलानि च।
बिभ्रत्येव ददत्येव काले मालावती-सति ॥ ४९
यस्याज्ञया जलाधाराः सर्व्वाधारा वसुन्धरा।
क्षमावती च पृथिवी कम्पिता च भयेन च ॥ ५०
सहसा मोहिता माया मायया यस्य सन्ततम्।
सर्व्वप्रसूर्या प्रकृतिः सा भीता यद्भयादहो ॥ ५१
यस्यान्तं न विदुर्व्वेदा वस्तूनां भावका अपि।
पुराणानि च सर्व्वाणि यस्यैव स्तुतिपाठकाः ॥ ५२
यस्य नाम विधिर्व्विष्णुः सेवते सुमहान् विराट्।
षोड़शांशो भगवतः स एव तेजसो विभोः ॥ ५३
सर्व्वेश्वरः कालकालो मृत्योर्मृत्युः परात्परः।
सर्व्वविघ्नविनाशाय तं कृष्णं परिचिन्तय ॥ ५४
सर्व्वाभीष्टञ्च भर्त्तारं प्रदास्यति कृपानिधिः।
इमे यत्प्रेरिताः सर्व्वे स दाता सर्व्वसम्पदाम् ॥५५
इत्युक्त्वा कालपुरुषो विरराम च शौनक।
कथां कथितुमारेभे पुनरेव तु ब्राह्मणः ॥ ५६

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे
मालावती-कालपुरुषसंवादे
पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोड़शोऽध्यायः।

ब्राह्मण उवाच।

पृष्टः कालो यमो मृत्युकन्या व्याधिगणा अहो।
कस्तेऽधुना च सन्देहस्तं पृच्छ कन्यके शुभे ॥ १
ब्राह्मणस्य वचः श्रुत्वा हृष्टा मालावती सती।
यन्मनोनिहितं प्रश्नं चकार जगदीश्वरम् ॥ २

मालावत्युवाच।

त्वया यत्कथितो व्याधिः प्राणिनां प्राणहारकः।
तत्कारणञ्च विविधं सर्व्वं वेदे निरूपितम् ॥ ३
यतो न सञ्चरेद्व्याधिर्दुर्निवारोऽशुभावहः।
तदुपायञ्च साकल्यं भवान् वक्तुमिहार्हति ॥ ४
यद्यत् पृष्टमपृष्टं वा ज्ञातमज्ञातमेव वा।
सर्व्वं कथय तद्भद्रं त्वं गुरुर्दीनवत्सलः ॥ ५
मालावतीवचः श्रुत्वा विप्ररूपी जनार्द्दनः।
संहितां वक्तुमारेभे संहितार्थञ्च वैदिकीम् ॥ ६

ब्राह्मण उवाच।

वन्दे तं सर्व्वतत्त्वज्ञं सर्व्वकारणकारणम्।
वेदवेदाङ्गबीजस्य बीजं श्रीकृष्णमीश्वरम् ॥ ७
य ईशश्चतुरो वेदान् ससृजे मङ्गलालयान्।
सर्व्वमङ्गलमङ्गल्यबीजरूपः सनातनः ॥ ८
ऋग्यजुःसामाथर्व्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः।
विचिन्त्य तेषामर्थञ्चैवायुर्व्वेदं चकार सः ॥ ९
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः।
स्वतन्त्रसंहितां तस्माद्भास्करश्च चकार सः ॥ १०
भास्करश्च स्वशिष्येभ्य आयुर्व्वेदं स्वसंहिताम्।
प्रददौ पाठयामास ते चक्रुः संहितास्ततः ॥ ११

तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च।
व्याधिप्रणाशबीजानि साध्वि मत्तो निशामय॥ १२
धन्वन्तरिर्दिवोदासः काशिराजोऽश्विनीसुतौ।
नकुलः सहदेवोऽर्किश्च्यवनो जनको बुधः॥ १३
जावालो जाजलिः पैलः करथोऽगस्त्य एव च।
इति वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः॥ १४
चिकित्सातत्त्वविज्ञानं नाम तन्त्रं मनोहरम्।
धन्वन्तरिश्च भगवान् चकार प्रथमे सति॥ १५
चिकित्सादर्पणं नाम दिवोदासश्चकार सः।
चिकित्साकौमुदीं दिव्यां काशिराजश्चकार सः॥१६
चिकित्सासारतन्त्रञ्च भ्रमघ्नञ्चाश्विनीसुतौ।
तन्त्रं वैद्यकसर्व्वस्वं नकुलश्च चकार सः॥ १७
चकार सहदेवश्च व्याधिसिन्धुविमर्द्दनम्।
ज्ञानार्णवं महातन्त्रं यमराजश्चकार ह॥ १८
च्यवनो जीवदानञ्च चकार भगवानृषिः।
चकार जनको योगी वैद्यसन्देहभञ्जनम्॥ १९
सर्व्वसारं चन्द्रसुतो जावालस्तन्त्रसारकम्।
वेदाङ्गसारं तन्त्रञ्च चकार जाजलिर्मुनिः॥ २०
पैलो निदानं करथस्तन्त्रं सर्व्वधरं परम्।
द्वैधनिर्णयतन्त्रञ्च चकार कुम्भसम्भवः॥ २१
चिकित्साशास्त्रबीजानि तन्त्राण्येतानि षोडश।
व्याधिप्रणाशबीजानि बलाधानकराणि च॥ २२
मथित्वा ज्ञानमन्थेन चायुर्व्वेदपयोनिधिम्।
ततस्तस्मादुद्दधुर्नवनीतानि कोविदाः॥ २३
एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहिताम्।
आयुर्व्वेदं सर्व्वबीजं सर्व्वं जानामि सुन्दरि॥ २४
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः॥ २५
आयुर्व्वेदस्य विज्ञाता चिकित्सासु यथार्थवित्।
धर्म्मिष्ठश्च दयालुश्च तेन वैद्यः प्रकीर्त्तितः॥ २६
जनकः सर्व्वरोगाणां दुर्व्वारो दारुणो ज्वरः।
शिवभक्तश्च योगी च निष्ठुरो विकृताकृतिः॥ २७
भीमस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः।
भस्मप्रहरणो रौद्रः कालान्तकयमोपमः॥ २८
मन्दाग्निस्तस्य जनको मन्दाग्नेर्जनकास्त्रयः।
पित्तश्लेष्मसमीराश्च प्राणिनां दुःखदायकाः॥ २९
वायुजः पित्तजश्चैव श्लेष्मजश्च तथैव च।
ज्वरभेदाश्च त्रिविधाश्चतुर्थश्च त्रिदोषजः॥ ३०
पाण्डुश्च कामलः कुष्ठः शोथः प्लीहा च शूलकः।
ज्वरातिसारग्रहणी-कासव्रणहलीमकाः॥ ३१
मूत्रकृच्छ्रश्च गुल्मश्च रक्तदोषविकारजः।
विषमेहश्च कुब्जश्च गोदश्च गलगण्डकः॥ ३२
भ्रमरी सन्निपातश्च विसूची दारुणी सति।
एषां भेदप्रभेदैश्च चतुःषष्टी रुजः स्मृताः॥ ३३
मृत्युकन्यासुताश्चैते जरा तस्याश्च कन्यका।
जरा च भ्रातृभिः सार्द्धं शश्वद्भ्रमति भूतलम्॥ ३४
एते चोपायवेत्तारं न गच्छन्ति च संयतम्।
पलायन्ते च तं दृष्ट्वा वैनतेयमिवोरगाः॥ ३५
चक्षुर्जलञ्च व्यायामः पादाधस्तैलमर्द्दनम्।
कर्णयोर्मूर्द्ध्नि तैलञ्च जराव्याधिविनाशनम्॥ ३६
वसन्ते भ्रमणं वह्निसेवां स्वल्पं करोति यः।
बालाञ्च सेवते काले जरा तं नोपगच्छति॥ ३७
स्नातशीतोदकस्नायी सेवते चन्दनद्रवम्।
नोपयाति जरा तञ्च निदाघेऽनिलसेवकम्॥ ३८
प्रावृष्युष्णोदकस्नायी घनतोयं न सेवते।
समये च समाहारी जरा तं नोपगच्छति॥ ३९
शरद्रौद्रं न गृह्णाति भ्रमणं तत्र वर्जयेत्।
स्नातस्नायी समाहारी जरा तं नोपगच्छति॥ ४०
स्नातस्नायी च हेमन्ते काले वह्निञ्च सेवते।
भुङ्क्ते नवान्नमुष्णञ्च जरा तं नोपगच्छति॥ ४१
शिशिरेऽशुकवह्निञ्च नवोष्णान्नञ्च सेवते।
य एवोष्णोदकस्नायी जरा तं नोपगच्छति॥ ४२
सद्यो मांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम्।
घृतञ्च सेवते यो हि जरा तं नोपगच्छति॥ ४३
भुङ्क्ते सदन्नं क्षुत्काले तृष्णायां पीयते जलम्।
नित्यं भुङ्क्ते च ताम्बूलं जरा तं नोपगच्छति॥ ४४
दधि हैयङ्गवीनञ्च नवनीतं तथा गुडम्।
नित्यं भुङ्क्ते संयमी यो जरा तं नोपगच्छति॥ ४५
शुष्कमांसं स्त्रियं वृद्धां बालार्कं तरुणं दधि।
संसेवन्तं जरा याति प्रहृष्टा भ्रातृभिः सह॥ ४६
रात्रौ ये दधि सेवन्ते पुंश्चलीश्च रजस्वलाः।
तानुपैति जरा हृष्टा भ्रातृभिः सह सुन्दरि॥ ४७
रजस्वला च कुलटा चावीरा जारदूतिका।
शूद्रयाजकपत्नी या ऋतुहीना च या सति॥ ४८

यो हि ताम्रामन्नभोजी ब्रह्महत्यां लभेत् तु सः।
तेन पापेन सार्द्धं सा जरा तमुपगच्छति॥ ४९
पापानां व्याधिभिः सार्द्धं मित्रता सन्ततं ध्रुवम्।
पापं व्याधिजरावीजं विघ्नवीजञ्च निश्चितम्॥ ५०
पापेन जायते व्याधिः पापेन जायते जरा।
पापेन जायते दैन्यं दुःखं शोको भयङ्करः॥ ५१
तस्मात् पापं महावैरं दोषवीजममङ्गलम्।
भारते सन्ततं सन्तो नाचरन्ति भयातुराः॥ ५२
स्वधर्म्माचारयुक्तञ्च दीक्षितं हरिसेवकम्।
गुरुदेवातिथीनाञ्च भक्तं सक्तं तपःसु च॥ ५३
व्रतोपवासयुक्तञ्च सदा तीर्थनिषेवकम्।
रोगा द्रवन्ति तं दृष्ट्वा वैनतेयमिवोरगाः॥ ५४
एतान् जरा न सेवेत व्याधिसंघश्च दुर्ज्जयः।
सर्व्वं बोध्यं समे काले काले सर्व्वं ग्रसिष्यति॥ ५५
ज्वरश्च सर्व्वरोगाणां जनकः कथितः सति।
पित्तश्लेष्मसमीराश्च ज्वरस्य जनकास्त्रयः॥ ५६
एते यथा सञ्चरन्ति स्वयं यान्ति च देहिषु।
तमेव विविधोपायं साध्वि मत्तो निशामय॥ ५७
क्षुधि जाज्वल्यमानायामाहाराभाव एव च।
प्राणिनां जायते पित्तं चक्रे च मणिपूरके॥ ५८
तालविल्वफलं भुक्त्वा जलपानञ्च तत्क्षणम्।
तदैव तु भवेत् पित्तं सद्यः प्राणहरं परम्॥ ५९
तप्तोदकञ्च शरदि भाद्रे तिक्तं विशेषतः।
दैवग्रस्तश्च यो भुङ्क्ते पित्तं तस्य प्रजायते॥ ६०
सशर्करञ्च धन्याकं पिष्टं शीतोदकान्वितम्।
चणकं सर्व्वगव्यञ्च दधितक्रविवर्ज्जितम्॥ ६१
विल्वतालफलं पक्वं सर्व्वमैक्षवमेव च।
आर्द्रकं मुद्गयूषञ्च तिलपिष्टं सशर्करम्॥ ६२
पित्तक्षयकरं सद्यो बलपुष्टिप्रदं परम्।
पित्तनाशञ्च तद्वीजमुक्तमन्यं निबोध मे॥ ६३
भोजनानन्तरं स्नानं जलपानं विना तृषा।
तिलतैलं स्निग्धतैलं स्निग्धमामलकीद्रवम्॥ ६४
पर्य्युषितान्नं तक्रञ्च पक्वं रम्भाफलं दधि।
मेघाम्बुशर्करातोयं सुस्निग्धजलसेवनम्॥ ६५
नारिकेलोदकं संस्नानं पर्य्युषिते जले।
तरमुज्जापक्वफलं सुपक्वं कर्क्कटीफलम्॥ ६६
स्नातस्नानञ्च वर्षासु मूलकं श्लेष्मकारकम्।
ब्रह्मरन्ध्रे च तज्जन्म महद्वीर्य्यविनाशनम्॥ ६७
वह्निस्वेदं भ्रष्टभङ्गं पक्वतैलविशेषकम्।
भ्रमणं शुष्कभक्ष्यञ्च शुष्कापक्वहरीतकी॥ ६८
पिण्डारकमपक्वञ्च रम्भाफलमपक्वकम्।
वेशवारः सिन्धुवारमनाहारमपानकम्॥ ६९
सघृतं रोचनाचूर्णं सघृतं शुष्कशर्करम्।
मरीचपिप्पलं शुष्कमार्द्रकं जीवकं मधु॥ ७०
द्रव्याण्येतानि गन्धर्व्वि सद्यः श्लेष्महराणि च।
बलपुष्टिकराण्येव वायुवीजं निशामय॥ ७१
भोजनानन्तरं सद्यो गमनं धावनं तथा।
छेदनं वह्नितापञ्च शश्वद्भ्रमणमैथुनम्॥ ७२
वृद्धास्त्रीगमनञ्चैव मनःसन्ताप एव च।
अतिरूक्षमनाहारो युद्धं कलह एव च॥ ७३
कटुवाक्यं भयं शोकः केवलं वायुकारणम्।
आज्ञाख्यचक्रे तज्जन्म विनाशाय तदौषधम्॥ ७४
पक्वं रम्भाफलञ्चैव सवीजं शर्करोदकम्।
नारिकेलोदकञ्चैव सद्यस्तक्रं सुपिष्टकम्॥ ७५
माहिषं दधि मिष्टञ्च केवलं वा सशर्करम्।
सद्यः पर्य्युषितान्नञ्च सौवीरं शीतलोदकम्॥ ७६
पक्वतैलविशेषञ्च तिलतैलञ्च केवलम्।
लाङ्गलीतालखर्ज्जूरमस्तु चामलकीद्रवम्॥ ७७
शीतलोष्णोदकस्नानं सुस्निग्धचन्दनद्रवम्।
स्निग्धपद्मपत्रतल्पं सुस्निग्धव्यजनानि च॥ ७८
एतत्ते कथितं वत्से सद्यो वायुप्रणाशनम्।
वायवस्त्रिविधाः पुंसां क्लेशसन्तापकामजाः॥ ७९
व्याधिसंघश्च कथितस्तन्नाणि विविधानि च।
तानि व्याधिप्रणाशाय कृतानि सद्भिरेव च॥ ८०
तन्त्राण्येतानि सर्व्वाणि व्याधिक्षयकराणि च।
रसायनादयो येषु चोपायाश्च सुदुर्लभाः॥ ८१
वक्तुं साध्वि न शक्नोमि याथार्थ्यं वत्सरेण च।
तेषाञ्च सर्व्वतन्त्राणां कृतानाञ्च विचक्षणैः॥ ८२
केन रोगेण लक्षान्तो (क) मृतः कथय शोभने।
तदुपायं करिष्यामि येन जीवेदयं सति॥ ८३
सौतिरुवाच।
ब्राह्मणस्य वचः श्रुत्वा कन्या चित्ररथस्य च।
कथां कथितुमारेभे सा गन्धर्व्वी प्रहर्षिता॥ ८४

(क) लं कान्त इति पाठस्तु प्रमादिक एव।

मालावत्युवाच ।
योगेन प्राणांस्तत्याज ब्रह्मणः शापहेतुना ।
सभायां लज्जितः कान्तो मम विप्र निशामय ॥ ८५
सर्व्वं श्रुतमपूर्व्वञ्च शुभाख्यानं मनोहरम् ।
भवेद्भवे कुतः केषां महत्सख्यं विपद्विना ॥ ८६
अधुना मत्प्राणकान्तं देहि देहि विचक्षण ।
नत्वा वः स्वामिना सार्द्धं यास्यामि स्वगृहं प्रति ॥८७
मालावतीवचः श्रुत्वा विप्ररूपी जनार्द्दनः ।
सभां जगाम देवानां शीघ्रं विप्र तदन्तिकात् ॥८८
इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे मालावती-विष्णुसंवादे चिकित्साप्रणयने षोड़शोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

सौतिरुवाच ।
दृष्ट्वा द्विजं देवसंघः प्रत्युत्थानं चकार च ।
परस्परञ्च सम्भाषा वभूव तत्र संसदि ॥ १
न तं वुबुधिरे देवाः श्रीहरिं विप्ररूपिणम् ।
पौर्व्वापर्य्यं विस्मृताश्च मोहिता विष्णुमायया ॥ २
सुरान् सम्बोध्य विप्रश्च वाचा मधुरया द्विज ।
उवाच सत्यं परमं प्राणिनां यत् सुखावहम् ॥ ३
ब्राह्मण उवाच ।
उपवर्हणभार्य्येयं कन्या चित्ररथस्य च ।
ययाचे जीवदानञ्च स्वामिनः शोककर्षिता ॥ ४
अधुना किमनुष्ठानमस्य कार्य्यस्य निश्चितम् ।
तन्मां ब्रूत सुराः सर्व्वं नित्यं यत् समयोचितम् ॥ ५
शप्तुकामा सुरान् सर्व्वान् साध्वी तेजस्विनी वरा ।
अहं हेमाय युष्माकमागतो बोधिता सती ॥ ६
स्तुतिः कृता च युष्माभिः श्वेतद्वीपे हरेरपि ।
युष्माकमीशो विष्णुश्च कथमेवात्र नागतः ॥ ७
बभूवाकाशवाणीति पश्चाद्यास्यति केशवः ।
विपरीतं कथं भूतं वाणीवाक्यमचञ्चलम् ॥ ८
ब्राह्मणस्य वचः श्रुत्वा स्वयं ब्रह्मा जगद्गुरुः ।
उवाच वचनं सत्यं हितं परममङ्गलम् ॥ ९
ब्रह्मोवाच ।
मत्पुत्रो नारदः शप्तो गन्धर्व्वश्चोपवर्हणः ।
योगेन प्राणांस्तत्याज पुनः शापान्ममैव हि ॥ १०
कालं लक्षयुगं व्याप्य स्थितिरस्य महीतले ।
शूद्रयोनिं ततः प्राप्य भविता मत्सुतः पुनः ॥ ११
अस्य कालावशेषस्य किञ्चिदस्ति द्विजोत्तम ।
तत्तु वर्षसहस्रञ्चैवायुरस्यास्ति साम्प्रतम् ॥ १२
दास्यामि जीवदानञ्च स्वयं विष्णोः प्रसादतः ।
यद्येनं न सृजेत् शापस्तत् करिष्यामि निश्चितम् ॥१३
नागतो हरिरत्रेति त्वया यत् कथितं द्विज ।
हरिः सर्व्वत्र सर्व्वात्मा विग्रहः कुत आत्मनः ॥१४
स्वेच्छामयं परं ब्रह्म भक्तानुग्रहविग्रहः ।
सर्व्वं पश्यति सर्व्वज्ञः सर्व्वत्रास्ति सनातनः ॥ १५
विः षश्च व्याप्तिवचनो णुश्च सर्व्वत्रवाचकः ।
सर्व्वव्यापी च सर्व्वात्मा तेन विष्णुः प्रकीर्त्तितः ॥
अपवित्रः पवित्रो वा सर्व्वावस्थां गतः पुमान् ।
भक्त्या च यः स्मरेद्विष्णुं स वाह्याभ्यन्तरः शुचिः ॥१७
कर्म्मारम्भे च मध्ये वा शेषे विष्णुञ्च यः स्मरेत् ।
परिपूर्णं तस्य कर्म्म वैदिकञ्च भवेद्द्विज ॥ १८
अहं स्रष्टा च जगतां विधाता संहरो हरः ।
धर्म्मश्च कर्म्मणां साक्षी यस्याज्ञापरिपालकः ॥ १९
कालः संहरते लोकान् यमः शास्ता च पापिनाम् ।
उपैति मृत्युः सर्व्वांश्च भिया यस्याज्ञया सदा ॥ २०
सर्व्वेशा या च सर्व्वाद्या प्रकृतिः सर्व्वसूः पुरा ।
सा भीता यस्य पुरतो यस्याज्ञापरिपालिका ॥२१
महेश्वर उवाच ।
पुत्राणां ब्रह्मणस्तेषां कस्य वंशोद्भवो भवान् ।
वेदानधीत्य भवता ज्ञातः कः सार एव च ॥ २२
शिष्यः कस्य मुनीन्द्रस्य कस्त्वं नाम्ना च भो द्विज ।
विभर्त्तिप्रकाशिविरिक्ताञ्च शिशुरूपोऽसि साम्प्रतम् ॥ २३
विड़म्बयसि देवांश्च विष्णुमस्माकमीश्वरम् ।
हृदिस्थञ्च न जानासि परमात्मानमीश्वरम् ॥२४
यस्मिन् गते पतेद्देहो देहिनां परमात्मनि ।
प्रयान्ति सर्व्वं तत्पश्चात् नरदेवानुगा इव ॥ २५
जीवस्तत्प्रतिबिम्बश्च मनो ज्ञानञ्च चेतना ।
प्राणाश्चेन्द्रियवर्गाश्च बुद्धिर्मेधा धृतिः स्मृतिः ॥२६
निद्रा दया च तन्द्रा च क्षुत् तृष्णा पुष्टिरेव च ।
श्रद्धा सन्तुष्टिरिच्छा च क्षमालज्जादिकाः स्मृताः ॥२७
प्रयाति यत्पुरः शक्तिरीश्वरे गमनोन्मुखे ।

एते सर्व्वे च शक्तिश्च यस्याज्ञापरिपालकाः॥ २८
ईश्वरे च स्थिते ईहो चमश्च सर्व्वकर्मसु।
गतेऽस्पृश्यः शवस्याज्यः कस्तं ईहो न मन्यते॥२९
स्वयं ब्रह्मा च जगतां विधाता सर्व्वकारकः।
पदारविन्दमनिशं ध्यायते स्रष्टुमक्षमः॥ ३०
युगलक्षं तपस्तप्तं श्रीकृष्णस्य च वेधसा।
तदा बभूव ज्ञानी च जगत् स्रष्टुं क्षमस्तदा॥ ३१
असंख्यकालं सुचिरं तपस्तप्तं हरेर्मया।
तृप्तिं जगाम न मनस्तृप्यते केन मङ्गले॥ ३२
अधुना पञ्चवक्त्रेण यन्नामगुणकीर्त्तनम्।
गायन् भ्रमामि सर्व्वत्र निःस्पृहः सर्व्वकर्मसु॥ ३३
मत्तो याति च मृत्युश्च यन्नामगुणकीर्त्तनात्।
अश्रुज्जपन्तं तन्नाम दृष्ट्वा मृत्युः पलायते॥ ३४
सर्व्वब्रह्माण्डसंहर्त्ताऽप्यहं मृत्युञ्जयाभिधः।
सुचिरं तपसा यस्य गुणनामानुकीर्त्तनात्॥ ३५
काले तत्र विलीनोऽहमाविर्भूतस्ततः पुनः।
न कालो मम संहर्त्ता न मृत्युर्यत्प्रसादतः॥ ३६
गोलोके यः स वैकुण्ठे श्वेतद्वीपे स एव च।
अंशांशिनोर्न भेदश्च ब्रह्मन् वह्निस्फुलिङ्गवत्॥३७
इन्द्रायुश्चैव दिव्यानां युगानामेकसप्ततिः।
अष्टाविंशतिके शक्रे गते च ब्रह्मणो दिनम्॥३८
एतत्संख्याविशिष्टस्य शतवर्षायुषो विधेः।
पाते लोचनपातश्च यद्विष्णोः परमात्मनः॥ ३९
अहं कपालसदृशमः कृष्णस्य परमात्मनः।
पारं महिम्नः को गच्छेन्न जानामि च किञ्चन॥४०
इत्युक्त्वा शङ्करस्तत्र विरराम च शौनक।
धर्म्मश्च वक्तुमारेभे यः साक्षी सर्व्वकर्म्मणाम्॥ ४१

धर्म्म उवाच।

यत्पाणिपादौ सर्व्वत्र चक्षुश्च सर्व्वदर्शनम्।
सर्व्वान्तरात्मा प्रच्छन्नोऽप्रत्यक्षश्च दुरात्मनः॥ ४२
अधुनापि सभां विष्णुर्नायाति इति यद्वचः।
त्वयोक्तं तत् कथा बुद्धा मुनीनाञ्च मतिभ्रमः॥४३
महन्निन्दा भवेद्यत्र नैव साधुः शृणोति ताम्।
निन्दकः श्रोतृभिः सार्द्धं कुम्भीपाकं व्रजेद्युगम्॥४४
श्रुत्वा देवान्महन्निन्दां श्रीविष्णोः स्मरणाद्बुधः।
मुच्यते सर्व्वपापेभ्यः पुण्यं प्राप्नोति दुर्लभम्॥ ४५
कामतोऽकामतो वापि विष्णुनिन्दां करोति यः।
यः शृणोति हसति वा सभामध्ये नराधमः॥ ४६
कुम्भीपाके पचति स यावद्धि ब्रह्मणो वयः।
स्थलं भवेदपूतञ्च सुरापात्रं यथा द्विज॥ ४७
प्राणी च नरकं याति श्रुतं तत्रैव वेदध्रुवम्।
विष्णुनिन्दा च त्रिविधा ब्रह्मणा कथिता पुरा॥४८
अप्रत्यक्षञ्च कुरुते किं वा तञ्च न मन्यते।
देवान्यसाम्यं कुरुते ज्ञानहीनो नराधमः॥ ४९
तस्यात्र निष्कृतिर्नास्ति यावद्वै ब्रह्मणः शतम्।
गुरोर्निन्दां यः करोति पितुर्निन्दां नराधमः॥ ५०
स याति कालसूत्रञ्च यावच्चन्द्रदिवाकरौ।
विष्णुर्गुरुश्च सर्व्वेषां जनको ज्ञानदायकः।
पोष्टा पाता भयत्राता वरदाता जगत्त्रये॥ ५१
एषाञ्च वचनं श्रुत्वा त्रयाणां विप्रपुङ्गवः।
प्रहस्योवाच तान् देवान् वाचा मधुरया पुनः॥५२

ब्राह्मण उवाच।

का कृता विष्णुनिन्दाऽत्र हे देवा धर्म्मशालिनः।
नागतो हरिरत्रेति व्यर्थाकाशसरस्वती॥ ५३
इति चोक्तं मया भद्रं ब्रूत धर्म्मार्थमीश्वराः।
सभायां पाचिकाः सन्तो घ्नन्ति ते शतपूरुषम्॥५४
यूयञ्च भावका ब्रूत विष्णुः सर्व्वत्र सन्ततम्।
इति चेत्तत् कथं याताः श्वेतद्वीपं वराय च॥५५
अंशांशिनोर्न भेदश्चेदात्मनश्चेति निश्चितम्।
कलां हित्वा निषेवन्ते सन्तः पूर्णतमं कथं॥ ५६
कोटिजन्मदुराराध्यमसाध्यमसतामपि।
आशा बलवती पुंसां कृष्णं सेवितुमिच्छति॥ ५७
किं क्षुद्राः किं महान्तश्च वाञ्छन्ति परमं पदम्।
लब्धुमिच्छति चन्द्रञ्च बाहुभ्यां वामनो यथा॥ ५८
यो विष्णुर्विषयी विश्वे श्वेतद्वीपनिवासकृत्।
यूयं ब्रह्मेशधर्म्माश्च दिक्पालाश्च दिगीश्वराः॥ ५९
ब्रह्मविष्णुशिवाद्याश्च सुरलोकाश्चराचराः।
एवं कतिविधाः सन्ति प्रतिविश्वेषु सन्ततम्॥ ६०
विश्वानाञ्च सुराणाञ्च कः संख्यां कर्त्तुमीश्वरः।
सर्व्वेषामीश्वरः कृष्णो भक्तानुग्रहविग्रहः॥ ६१
ऊर्द्ध्वञ्च सर्व्वब्रह्माण्डात् वैकुण्ठं सत्यमीप्सितम्।
तस्मादूर्द्ध्वञ्च गोलोकः पञ्चाशत्कोटियोजनम्॥ ६२
चतुर्भुजश्च वैकुण्ठे लक्ष्मीकान्तः सनातनः।
सुनन्द-नन्द-कुमुदपार्षदादिभिरावृतः॥ ६३

गोलोके द्विभुजः कृष्णो राधाकान्तः सनातनः ।
गोपाङ्गनादिभिर्युक्तो द्विभुजैर्गोपपार्षदैः ॥ ६४
परिपूर्णतमं ब्रह्म स चात्मा सर्व्वदेहिनाम् ।
स्वेच्छामयश्च विहरेद्रासे वृन्दावने सदा ॥ ६५
तज्ज्योतिर्म्मण्डलाकारं सूर्य्यकोटिसमप्रभम् ।
ध्यायन्ते योगिनः सन्तः सन्ततञ्च निरामयम् ॥६६
नवीननीरदश्यामं द्विभुजं पीतवाससम् ।
कोटिकन्दर्पलावण्यलीलाधाम मनोहरम् ॥ ६७
किशोरवयसं शश्वत् शान्तं सस्मितमीश्वरम् ।
ध्यायन्ते वैष्णवाः सन्तः सेवन्ते सत्यविग्रहम् ॥ ६८
यूयञ्च वैष्णवा ब्रूत कस्य वंशोद्भवो भवान् ।
शिष्यः कस्य मुनीन्द्रस्येत्येवं साञ्च पुनः पुनः ॥ ६९
यस्य वंशोद्भवोऽहञ्च यस्य शिष्यश्च बालकः ।
तस्येदं वचनं श्रुत्वा देवसंघा निबोधत ॥ ७०
शीघ्रं जीवय गन्धर्व्वं देवेश्वर सुरेश्वर ।
व्यक्तो विचारे मूर्खः को वाग्युद्धे किम्प्रयोजनम् ॥७१
इत्युक्त्वा बालकस्तत्र विप्ररूपी जनार्द्दनः ।
विरराम सभामध्ये प्रजहास च शौनक ॥ ७२

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे विष्णु-
सुरसंघसंवादे विष्णुप्रशंसा-प्रणयने
सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

सौतिरुवाच ।

देवाः सार्द्धं ब्राह्मणेन मोहिता विष्णुमायया ।
प्रययुर्मालतीमूलं ब्रह्मेशानपुरोगमाः ॥ १
ब्रह्मा कमण्डलुजलं ददौ गात्रे शवस्य च ।
सञ्चारं मनसस्तस्य चकार सुन्दरं वपुः ॥ २
ज्ञानदानं ददौ तस्मै ज्ञानानन्दः शिवः स्वयम् ।
धर्म्मज्ञानं स्वयं धर्म्मो जीवदानञ्च ब्राह्मणः ॥ ३
वह्निर्दर्शनमात्रेण बभूव जठरानलः ।
कामदर्शनमात्रेण सर्व्वकामः सुनिश्चितम् ॥ ४
तस्य वायोरधिष्ठानाज्जगत्प्राणस्वरूपिणः ।
निश्वासस्य च सञ्चारः प्राणानाञ्च बभूव ह ॥ ५
सूर्य्याधिष्ठानमात्रेण दृष्टिशक्तिर्बभूव ह ।
वाक्यं वाणीदर्शनेन शोभा श्रीदर्शनेन च ॥ ६
शवस्तथापि नोत्तस्थौ यथा शेते जड़स्तथा ।
विशिष्टबोधं न प्राप चाधिष्ठानं विनात्मनः ॥ ७
ब्राह्मणो वचनात् साध्वी तुष्टाव परमेश्वरम् ।
स्नात्वा शीघ्रं सरित्तोये धृत्वा धौते च वाससी ॥८

मालावत्युवाच ।

वन्दे तं परमात्मानं सर्व्वकारणकारणम् ।
विना येन शवाः सर्व्वे प्राणिनो जगतीतले ॥ ९
निर्लिप्तं साक्षिरूपञ्च सर्व्वेषां सर्व्वकर्म्मसु ।
विद्यमानं न दृष्टञ्च सर्व्वैः सर्व्वत्र सर्व्वदा ॥ १०
येन सृष्टा च प्रकृतिः सर्व्वाधारा परात्परा ।
ब्रह्मविष्णुशिवादीनां प्रसूर्या त्रिगुणात्मिका ॥ ११
जगत्स्रष्टा स्वयं ब्रह्मा नियतो यस्य सेवया ।
पाता विष्णुश्च जगतां संहर्त्ता शङ्करः स्वयम् ॥ १२
ध्यायन्ते यं सुराः सर्व्वे मुनयो मनवस्तथा ।
सिद्धाश्च योगिनः सन्तः सन्ततं प्रकृतेः परम् ॥ १३
साकारञ्च निराकारं परं स्वेच्छामयं विभुम् ।
वरं वरेण्यं वरदं वरार्हं वरकारणम् ॥ १४
तपःफलं तपोबीजं तपसाञ्च फलप्रदम् ।
स्वयं तपःस्वरूपञ्च सर्व्वरूपञ्च सर्व्वतः ॥ १५
सर्व्वाधारं सर्व्वबीजं कर्म्म तत्कर्म्मणां फलम् ।
तेषाञ्च फलदातारं तद्बीजं क्षयकारणम् ॥ १६
स्वयं तेजःस्वरूपञ्च भक्तानुग्रहविग्रहम् ।
सेवाध्यानं न घटते भक्तानां विग्रहं विना ॥ १७
तत्तेजो मण्डलाकारं सूर्य्यकोटिसमप्रभम् ।
अतीवकमनीयञ्च रूपं तत्र मनोहरम् ॥ १८
नवीननीरदश्यामं शरत्पङ्कजलोचनम् ।
शरत्पार्व्वणचन्द्रास्यमीषद्धास्यसमन्वितम् ॥ १९
कोटिकन्दर्पलावण्यलीलाधाम मनोहरम् ।
चन्दनोक्षितसर्व्वाङ्गं रत्नभूषणभूषितम् ॥ २०
द्विभुजं मुरलीहस्तं पीतकौषेयवाससम् ।
किशोरवयसं शान्तं राधाकान्तमनन्तकम् ॥ २१
गोपाङ्गनापरिवृतं कुत्रचिन्निर्जने वने ।
कुत्रचिद्रासमध्यस्थं राधया परिसेवितम् ॥ २२
कुत्रचिद्गोपवेशञ्च वेष्टितं गोपबालकैः ।
शतशृङ्गाचलोत्कृष्टे रम्ये वृन्दावने वने ॥ २३
निकरं कामधेनूनां रक्षन्तं शिशुरूपिणम् ।
गोलोके विरजातीरे पारिजातवने वने ॥ २४

वेणुं क्वणन्तं मधुरं गोपीसम्मोहकारणम्।
निरामये च वैकुण्ठे कुत्रचिच्च चतुर्भुजम्॥ २५
लक्ष्मीकान्तं पार्षदैश्च सेवितञ्च चतुर्भुजैः।
कुत्रचित् स्वांशरूपेण जगतां पालनाय च॥ २६
श्वेतद्वीपे विष्णुरूपं पद्मया परिसेवितम्।
कुत्रचित् स्वांशकलया ब्रह्माण्डे ब्रह्मरूपिणम्॥२७
शिवस्वरूपं शिवदं स्वांशेन शिवरूपिणम्।
स्वात्मनः षोड़शांशेन सर्व्वाधारं परात्परम्॥ २८
स्वयं महद्विराड्रूपं विश्वौघं यस्य लोमसु।
लीलया स्वांशकलया जगतां पालनाय च॥ २९
नानावतारं बिभ्रन्तं बीजं तेषां सनातनम्।
वसन्तं कुत्रचित् सन्तं योगिनां हृदये सताम्॥ ३०
प्राणरूपं प्राणिनाञ्च परमात्मानमीश्वरम्।
तञ्च स्तोतुमशक्ताऽहमबला निर्गुणं विभुम्॥ ३१
निर्लक्ष्यञ्च निरीहञ्च सारं वाङ्मनसोः परम्।
यं स्तोतुमक्षमोऽनन्तः सहस्रवदनेन च॥ ३२
पञ्चवक्त्रश्चतुर्व्वक्त्रो गजवक्त्रः षड़ाननः।
यं स्तोतुं न क्षमा माया मोहिता यस्य मायया॥३३
यं स्तोतुं न क्षमा श्रीश्च जड़ीभूता सरस्वती।
वेदा न शक्ता यं स्तोतुं को वा विद्वांश्च वेदवित्॥३४
किं स्तौमि तमनीहञ्च शोकार्त्ता स्त्री परात्परम्।
इत्युक्त्वा सा च गन्धर्व्वी विरराम रुरोद च॥ ३५
कृपानिधिं प्रणनाम भयार्त्ता च पुनः पुनः।
कृष्णश्च शक्तिभिः सार्द्धमधिष्ठानं चकार ह॥ ३६
भर्त्तुरभ्यन्तरे तस्याः परमात्मा निराकृतिः।
उत्थाय शीघ्रं वीणाञ्च धृत्वा स्नात्वा च वाससी॥३७
प्रणनाम देवसंघं ब्राह्मणं पुरतः स्थितम्।
नेदुर्दुन्दुभयो देवाः पुष्पवृष्टिञ्च चक्रिरे॥ ३८
दृष्ट्वा चोपरि दम्पत्योः प्रददुः परमाशिषम्।
गन्धर्व्वो देवपुरतो ननर्त्त च जगौ क्षणम्॥ ३९
जीवितौ पितरौ प्राप देवानाञ्च वरेण च।
जगाम पत्न्या सार्द्धञ्च पित्रा मात्रा च हर्षितः॥ ४०
उपवर्हणगन्धर्व्वो गन्धर्व्वनगरं पुनः।
मालावती रत्नकोटिं धनानि विविधानि च॥ ४१
प्रददौ ब्राह्मणेभ्यश्च भोजयामास तान् सती।
वेदांश्च पाठयामास कारयामास मङ्गलम्॥ ४२
महोत्सवञ्च विविधं हरेर्नामैकमङ्गलम्।
जग्मुर्देवाश्च स्वस्थानं विप्ररूपी हरिः स्वयम्॥ ४३
एतत्ते कथितं सर्व्वं स्तवराजञ्च शौनक।
इदं स्तोत्रं पुण्यरूपं पूजाकाले तु यः पठेत्॥ ४४
हरिभक्तिं हरेर्दास्यं लभते वैष्णवो जनः।
वरार्थी यः पठेद्भक्त्या चास्तिकः परमास्थया॥४५
धर्म्मार्थकाममोक्षाणां निश्चितं लभते फलम्।
विद्यार्थी लभते विद्यां धनार्थी लभते धनम्॥ ४६
भार्य्यार्थी लभते भार्य्यां पुत्त्रार्थी लभते सुतम्।
धर्म्मार्थी लभते धर्म्मं यशोऽर्थी लभते यशः॥ ४७
भ्रष्टराज्यो लभेद्राज्यं प्रजाभ्रष्टः प्रजां लभेत्।
रोगार्त्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्॥ ४८
भयान्मुच्येत भीतस्तु धनं नष्टधनो लभेत्।
दस्युग्रस्तो महारण्ये हिंस्रजन्तुसमन्वितः।
दावाग्निदग्धो मुच्येत निमग्नश्च जलार्णवे॥ ४९

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे गन्धर्व्व-जीवदान-महापुरुषस्तोत्रप्रणयनं नाम अष्टादशोऽध्यायः॥ १८॥

---

## ऊनविंशोऽध्यायः।

सौतिरुवाच।

मालावती धनं दत्त्वा ब्राह्मणेभ्यः प्रहर्षिता।
चकार विविधं वेशं स्वात्मनः स्वामिनः कृते॥ १
भर्त्तुश्चकार शुश्रूषां पूजाञ्च समयोचिताम्।
तेन सार्द्धं सुरसिका रेमे सा सुचिरं मुदा॥ २
महापुरुषस्तोत्रञ्च पूजाञ्च कवचं मनुम्।
विस्तृतं बोधयामास स्वयं रहसि सुव्रता॥ ३
पुरा दत्तं वशिष्ठेन स्तोत्रपूजादिकं हरेः।
गन्धर्व्वाय च मालत्यै मन्त्रमेकञ्च पुष्करे॥ ४
विस्तृतं स्तोत्रकवचं वशिष्ठश्च कृपानिधिः।
गन्धर्व्वराजं रहसि बोधयास शूलिनः॥ ५
एवं चकार राज्यञ्च कुवेरभवनोपमे।
आश्रमे परमानन्दी गन्धर्व्वो बान्धवैः सह॥ ६
यथा तथा गताभिश्च स्त्रीभिरन्याभिरेव च।
आगत्य ताभिः स्वस्वामी संप्राप्तः परया मुदा॥ ७

शौनक उवाच।

किं स्तोत्रं कवचं विष्णोर्म्मन्त्रपूजाविधिः पुरा।
दत्तो वशिष्ठेनाश्याञ्च तं भवान् वक्तुमर्हति॥ ८

द्वाद्शाक्षरमन्त्रञ्च शूलिनः कवचादिकम्।
दत्तं गन्धर्व्वराजाय वशिष्ठेन च किं पुरा॥ ९
तदपि ब्रूहि हे सौते श्रोतुं कौतूहलं मम।
शङ्करस्तोत्रकवचं मन्त्रं दुर्गविनाशनम्॥ १०

सौतिरुवाच।

तुष्टाव येन स्तोत्रेण मालती परमेश्वरम्।
तदेव स्तोत्रं दत्तञ्च मन्त्रञ्च कवचं शृणु॥ ११
ओं नमो भगवते रासमण्डलेशाय स्वाहा।
इमं मन्त्रं कल्पतरुं प्रददौ षोड़शाक्षरम्॥ १२
पुरा दत्तं कुमाराय ब्रह्मणा पुष्करे हरेः।
पुरा दत्तञ्च कृष्णेन गोलोके शङ्कराय च॥ १३
ध्यानञ्च विष्णोर्व्वेदोक्तं शाश्वतं सर्व्वदुर्लभम्।
मूलेन सर्व्वं देयञ्च नैवेद्यादिकमुत्तमम्॥ १४
अतीवगुप्तकवचं पितुर्व्वक्त्रान्मया श्रुतम्।
पित्रे दत्तं पुरा विप्र गङ्गायां शूलिना ध्रुवम्॥ १५
शूलिने ब्रह्मणे दत्तं गोलोके रासमण्डले।
धर्म्माय गोपीकान्तेन कृपया परमाद्भुतम्॥ १६

ब्रह्मोवाच।

राधाकान्त महाभाग कवचं यत् प्रकाशितम्।
ब्रह्माण्डपावनं नाम कृपया कथय प्रभो॥ १७
मां महेशञ्च धर्म्मञ्च भक्तञ्च भक्तवत्सल।
त्वत्प्रसादेन पुत्त्रेभ्यो दास्यामि भक्तिसंयुतः॥ १८

श्रीकृष्ण उवाच।

शृणु वक्ष्यामि ब्रह्मेश धर्म्मेदं कवचं परम्।
अहं दास्यामि युष्मभ्यं गोपनीयं सुदुर्लभम्॥ १९
यस्मै कस्मै न दातव्यं प्राणतुल्यं ममैव हि।
यत्तेजो मम देहेऽस्ति तत्तेजः कवचेऽपि च॥ २०
कुरु सृष्टिमिदं धृत्वा धाता त्रिजगतां भव।
संहर्त्ता भव हे शम्भो मम तुल्यो भवे भव॥ २१
हे धर्म्म त्वमिमं धृत्वा भव साक्षी च कर्म्मणाम्।
तपसां फलदाता च यूयं भवत मद्वरात्॥ २२
ब्रह्माण्डपावनस्यास्य कवचस्य हरिः स्वयम्।
ऋषिश्छन्दश्च गायत्री देवोऽहं जगदीश्वरः॥ २३
धर्म्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः।
त्रिलक्षवारपठनात् सिद्धिदं कवचं विधे॥ २४
यो भवेत् सिद्धकवचो मम तुल्यो भवेत्तु सः।
तेजसा सिद्धियोगेन ध्यानेन विक्रमेण च॥ २५
प्रणवो मे शिरः पातु नमो रासेश्वराय च।
भालं पायान्नेत्रयुग्मं नमो राधेश्वराय च॥ २६
कृष्णः पायात् श्रोत्रयुग्मं हे हरे घ्राणमेव च।
जिह्विकां वह्निजाया तु कृष्णायेति च सर्व्वतः॥ २७
श्रीकृष्णाय स्वाहेति च कण्ठं पातु षड़क्षरः।
ह्रीं कृष्णाय नमो वक्त्रं क्लीं पूर्व्वश्च भुजद्वयम्॥ २८
नमो गोपाङ्गनेशाय स्कन्धावष्टाक्षरोऽवतु।
दन्तपंक्तिमोष्ठयुग्मं नमो गोपीश्वराय च॥ २९
ओं नमो भगवते रासमण्डलेशाय स्वाहा।
स्वयं वक्षःस्थलं पातु मन्त्रोऽयं षोड़शाक्षरः॥ ३०
ऐं कृष्णाय स्वाहेति च कर्णयुग्मं सदाऽवतु।
ओं विष्णवे स्वाहेति च कङ्कालं सर्व्वतोऽवतु॥ ३१
ओं हरये नम इति पृष्ठं पादं सदाऽवतु।
ओं गोवर्द्धनधारिणे स्वाहा सर्व्वशरीरकम्॥ ३२
प्राच्यां मां पातु श्रीकृष्ण आग्नेय्यां पातु माधवः।
दक्षिणे पातु गोपीशो नैरृत्यां नन्दनन्दनः॥ ३३
वारुण्यां पातु गोविन्दो वायव्यां राधिकेश्वरः।
उत्तरे पातु रासेश ऐशान्यामच्युतः स्वयम्॥ ३४
सन्ततं सर्व्वतः पातु परो नारायणः स्वयम्।
इति ते कथितं ब्रह्मन् कवचं परमाद्भुतम्॥ ३५
मम जीवनतुल्यञ्च युष्मभ्यं दत्तमेव च।
अश्वमेधसहस्राणि वाजपेयशतानि च।
कलां नार्हन्ति तान्येव कवचस्यैव धारणात्॥ ३६
गुरुमभ्यर्च्य विधिवद्वस्त्रालङ्कारचन्दनैः।
स्नात्वा तञ्च नमस्कृत्य कवचं धारयेत् सुधीः॥ ३७
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः।
यदि स्यात् सिद्धकवचो विष्णुरेव भवेद्द्विज॥ ३८

इति श्रीब्रह्मवैवर्त्ते महापुराणब्रह्माण्ड-
पावनं कवचं समाप्तम्।

सौतिरुवाच।

शिवस्य कवचं स्तोत्रं श्रूयतामिति शौनक।
वशिष्ठेन च यद्दत्तं गन्धर्व्वाय च यो मनुः॥ ३९
ओं नमो भगवते शिवाय स्वाहेति च मनुः।
दत्तो वशिष्ठेन पुरा पुष्करे कृपया विभो॥ ४०
अयं मन्त्रो रावणाय प्रदत्तो ब्रह्मणा पुरा।
स्वयं शम्भुश्च वाणाय तथा दुर्व्वाससे पुरा॥ ४१
मूलेन सर्व्वं देयञ्च नैवेद्यादिकमुत्तमम्।

ध्यायेन्नित्यादिकं ध्यानं वेदोक्तं सर्व्वसम्मतम् ॥ ४२
ओं नमो महादेवाय।
वाणासुर उवाच।
महेश्वर महाभाग कवचं यत् प्रकाशितम्।
संसारपावनं नाम कृपया कथय प्रभो ॥ ४३
महेश्वर उवाच।
शृणु वक्ष्यामि हे वत्स कवचं परमाद्भुतम्।
अहं तुभ्यं प्रदास्यामि गोपनीयं सुदुर्लभम् ॥ ४४
पुरा दुर्व्वाससे दत्तं त्रैलोक्यविजयाय च।
ममैवेदञ्च कवचं भक्त्या यो धारयेत् सुधीः ॥ ४५
जेतुं शक्नोति त्रैलोक्यं भगवन्नवलीलया।
संसारपावनस्यास्य कवचस्य प्रजापतिः ॥ ४६
ऋषिश्छन्दश्च गायत्री देवोऽहञ्च महेश्वरः।
धर्म्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥ ४७
पञ्चलक्षजपेनैव सिद्धिदं कवचं भवेत्।
यो भवेत् सिद्धकवचो मम तुल्यो भवेद्भुवि।
तेजसा सिद्धियोगेन तपसा विक्रमेण च ॥ ४८
शम्भुर्मे मस्तकं पातु मुखं पातु महेश्वरः।
दन्तपंक्तिं नीलकण्ठोऽप्यधरोष्ठं हरः स्वयम् ॥ ४९
कण्ठं पातु चन्द्रचूड़ः स्कन्धौ वृषभवाहनः।
वक्षःस्थलं नीलकण्ठः पातु पृष्ठं दिगम्बरः ॥ ५०
सर्व्वाङ्गं पातु विश्वेशः सर्व्वदिक्षु च सर्व्वदा।
स्वप्ने जागरणे चैव स्थाणुर्मे पातु सन्ततम् ॥ ५१
इति ते कथितं वाण कवचं परमाद्भुतम्।
यस्मै कस्मै न दातव्यं गोपनीयं प्रयत्नतः ॥ ५२
यत् फलं सर्व्वतीर्थानां स्नानेन लभते नरः।
तत् फलं लभते नूनं कवचस्यैव धारणात् ॥ ५३
इदं कवचमज्ञात्वा भजेन्मां यः सुमन्दधीः।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ५४
इति श्रीब्रह्मवैवर्त्ते शङ्करकवचं समाप्तम्।
सौतिरुवाच।
इदञ्च कवचं प्रोक्तं स्तोत्रञ्च शृणु शौनक।
मन्त्रराजः कल्पतरुर्व्वशिष्ठो दत्तवान् पुरा ॥ ५५
ओं नमः शिवाय।
वाणासुर उवाच।
वन्दे सुराणां सारञ्च सुरेशं नीललोहितम्।
योगीश्वरं योगवीजं योगिनाञ्च गुरोर्गुरुम् ॥ ५६
ज्ञानानन्दं ज्ञानरूपं ज्ञानवीजं सनातनम्।
तपसां फलदातारं दातारं सर्व्वसम्पदाम् ॥ ५७
तपोरूपं तपोवीजं तपोधनधनं वरम्।
वरं वरेण्यं वरदमीड्यं सिद्धगणैर्व्वरैः ॥ ५८
कारणं भुक्तिमुक्तीनां नरकार्णवतारणम्।
आशुतोषं प्रसन्नास्यं करुणामयसागरम् ॥ ५९
हिमचन्दनकुन्देन्दु-कुमुदाम्भोजसन्निभम्।
ब्रह्मज्योतिःस्वरूपञ्च भक्तानुग्रहविग्रहम् ॥ ६०
विषयाणां विभेदेन विभ्रन्तं बहुरूपकम्।
जलरूपमग्निरूपमाकाशरूपमीश्वरम् ॥ ६१
वायुरूपं चन्द्ररूपं सूर्य्यरूपं महत्प्रभुम्।
आत्मनः स्वपदं दातुं समर्थमवलीलया ॥ ६२
भक्तजीवनमीशञ्च भक्तानुग्रहकारकम्।
वेदा न शक्ता यं स्तोतुं किमहं स्तौमि तं प्रभुम् ॥ ६३
अपरिच्छिन्नमीशानमहो वाङ्मनसोः परम्।
व्याघ्रचर्म्माम्बरधरं वृषभस्थं दिगम्बरम् ॥ ६४
त्रिशूलपट्टिशधरं सस्मितं चन्द्रशेखरम्।
इत्युक्त्वा स्तवराजेन नित्यं वाणः सुसंयतः ॥ ६५
प्रणमत् शङ्करं भक्त्या दुर्व्वासाश्च मुनीश्वरः।
इदं दत्तं वशिष्ठेन गन्धर्व्वाय पुरा मुने ॥ ६६
कथितञ्च महास्तोत्रं शूलिनः परमाद्भुतम्।
इदं स्तोत्रं महापुण्यं पठेद्भक्त्या च यो नरः ॥ ६७
स्नानस्य सर्व्वतीर्थानां फलमाप्नोति निश्चितम्।
अपुत्रो लभते पुत्रं वर्षमेकं शृणोति यः ॥ ६८
संयतश्च हविष्याशी प्रणम्य शङ्करं गुरुम्।
गलत्कुष्ठी महाशूली वर्षमेकं शृणोति यः ॥ ६९
अवश्यं मुच्यते रोगाद्व्यासवाक्यमिति श्रुतम्।
कारागारेऽपि बद्धो यो नैव प्राप्नोति निर्वृतिम् ॥ ७०
स्तोत्रं श्रुत्वा मासमेकं मुच्यते बन्धनाद्ध्रुवम् ॥ ७१
भ्रष्टराज्यो लभेद्राज्यं भक्त्या मासं शृणोति यः।
मासं श्रुत्वा संयतश्च लभेद्भ्रष्टधनो धनम् ॥ ७२
यक्ष्मग्रस्तो वर्षमेकमास्तिको यः शृणोति चेत्।
निश्चितं मुच्यते रोगात् शङ्करस्य प्रसादतः ॥ ७३
यः शृणोति सदा भक्त्या स्तवराजमिमं द्विज।
तस्यासाध्यं त्रिभुवने नास्ति किञ्चिच्च शौनक ॥ ७४
कदाचिद्बन्धुविच्छेदो न भवेत् तस्य भारते।
अचलं परमैश्वर्य्यं लभते नात्र संशयः ॥ ७५

सुसंयतोऽतिभक्त्या च मासमेकं शृणोति यः।
अभार्य्यो लभते भार्य्यां सुविनीतां सतीं वराम् ॥७६
महामूर्खश्च दुर्म्मेधा मासमेकं शृणोति यः।
बुद्धिं विद्याञ्च लभते गुरूपदेशमात्रतः ॥ ७७
कर्म्मदुःखी दरिद्रश्च मासं भक्त्या शृणोति यः।
ध्रुवं वित्तं भवेत् तस्य शङ्करस्य प्रसादतः ॥ ७८
इह लोके सुखं भुक्त्वा कृत्वा कीर्त्तिं सुदुर्लभाम्।
नानाप्रकारधर्म्मञ्च यात्यन्ते शङ्करालयम् ॥ ७९
पार्षदप्रवरो भूत्वा सेवते तत्र शङ्करम्।
यः शृणोति त्रिसन्ध्यञ्च नित्यं स्तोत्रमनुत्तमम् ॥ ८०

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे
सौतिशौनक-संवादे स्तवराजोऽय-
मूनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः।

सौतिरुवाच।

मुदा मालावतीसार्द्धं गन्धर्व्वश्चोपवर्हणः।
रेमे कालावशेषञ्च तामिश्च निर्ज्जने वने ॥ १
गन्धर्व्वराजो मुमुदे पुत्त्रदारादिभिः सह।
नानाविधं कृत्यवरं महत् पुण्यं चकार ह ॥ २
राजत्वं बुभुजे राजा कुवेरभवनोपमे।
रेमे सुशीलया सार्द्धं स्थिरयौवनयुक्तया ॥ ३
गन्धर्व्वराजः काले च गङ्गातीरे मनोहरे।
पत्न्या सार्द्धमसंस्यक्त्वा वैकुण्ठञ्च ययौ मुदा ॥ ४
शैवः शिवप्रसादेन पुत्त्रस्य विष्णुसेवया।
बभूव दासो वैकुण्ठे विष्णोः श्यामश्चतुर्भुजः ॥ ५
कृत्वा पित्रोश्च सत्कारं गन्धर्व्वश्चोपवर्हणः।
ब्राह्मणेभ्यो ददौ विप्र धनानि विविधानि च ॥ ६
काले स्वयं ब्रह्मशापात् प्राणांस्त्यक्त्वा विचक्षणः।
स जज्ञे वृषलीगर्भे ब्रह्मवीर्य्येण शौनक ॥ ७
मालावती ब्रह्मकुण्डे पुष्करे भारते भुवि।
कृत्वा तु वाञ्छितं कामं प्राणांस्तत्याज सा सती ॥८
सृञ्जयस्य तु पत्न्याञ्च मनुवंशोद्भवस्य च।
जज्ञे नृपस्य साध्वी सा पुण्या जातिस्मरा वरा ॥९
उपवर्हणगन्धर्व्वः पतिर्मे भवितेति च।
इतिकामा कामुकी सा सुन्दरी सुन्दरीवरा ॥ १०

शौनक उवाच।

ब्रह्मवीर्य्यात् शूद्रपत्न्यां गन्धर्व्वश्चोपवर्हणः।
जातः केन प्रकारेण तद्भवान् वक्तुमर्हति ॥ ११

सौतिरुवाच।

कान्यकुब्जे च देशे च द्रुमिलो गोपराजकः।
कलावती तस्य पत्नी बन्ध्या चापि पतिव्रता। १२
स्वामिदोषेण सा बन्ध्या काले च भर्त्तुराज्ञया।
उपतस्थे वने घोरे नरदं काश्यपं मुनिम् ॥ १३
ध्यायमानञ्च श्रीकृष्णं ज्वलन्तं ब्रह्मतेजसा।
तस्थौ सुवेशं कृत्वा सा ध्यानान्तञ्च मुनेः पुरः ॥१४
ग्रीष्ममध्याह्नमार्त्तण्ड-प्रभातुल्येन तेजसा।
तपन्तं दूरतोऽप्येवं समीपं गन्तुमक्षमा ॥ १५
ध्यानान्ते च मुनिश्रेष्ठः परः कृष्णपरायणः।
ददर्श पुरतो दूरे सुन्दरीं स्थिरयौवनाम् ॥ १६
चारुचम्पकवर्णाभां शरत्पङ्कजलोचनाम्।
शरत्पार्व्वणचन्द्रास्यां रत्नभूषणभूषिताम् ॥ १७
बृहन्नितम्बभारार्त्तां पीनश्रोणिपयोधराम्।
शोभितां पीतवस्त्रेण सस्मितां रक्तलोचनाम् ॥ १८
मोहितां मुनिरूपेण कामबाणप्रपीडिताम्।
दर्शयन्तीं स्तनश्रोणीं मैथुनासक्तचेतसा ॥ १९
सिन्दूरबिन्दुभूषाढ्यां सुचारुकज्जलोज्ज्वलाम्।
पद्मालक्तकशोभाढ्यां रूपेणैव यथोर्व्वशीम् ॥ २०
मुनिः पप्रच्छ दृष्ट्वा तां का त्वं कामिनि निर्ज्जने।
कस्य पत्नी कथं वात्र सत्यं ब्रूहि च पुंश्चलि ॥ २१
मुनेश्च वचनं श्रुत्वा कम्पिता च कलावती।
उवाच विनयेनैव कृत्वा च श्रीहरिं हृदि ॥ २२

कलावत्युवाच।

गोपिकाहं द्विजश्रेष्ठ द्रुमिलस्य च कामिनी।
पुत्रार्थिनी चागताहं त्वन्मूलं भर्त्तुराज्ञया ॥ २३
वीर्य्याधानं कुरु मयि स्त्री नोपेच्या ह्युपस्थिता(क)
तेजीयसां न दोषाय वह्नेः सर्व्वभुजो यथा ॥ २४
वृषलीवचनं श्रुत्वा चुकोप मुनिसत्तमः।
उवाच नीतं सत्यञ्च कोपप्रस्फुरिताधरः ॥ २५

काश्यप उवाच।

यः स्वलक्ष्मीञ्च भोगार्हां पराय दातुमिच्छति।

---

(क) स्त्रीं नोपेचेदुपस्थितामिति पाठान्तरम्।

तं सा त्यजति मूढ़श्च वेदवाद इति ध्रुवम् ॥ २६
न त्वं द्रुमिलभोगार्हा पुनरेव भविष्यसि ।
विरक्तेन स्वयं त्यक्ता न गृह्णाति च तां पुनः ॥ २७
यः शूद्रपत्नीं गृह्णाति ब्राह्मणो ज्ञानदुर्ब्बलः ।
स चण्डालो भवेत् सत्यं न कर्म्मार्हो द्विजातिषु ॥२८
पितृश्राद्धे च यज्ञे च शिलास्पर्शे सुरार्च्चने ।
नाधिकारश्च तस्यैवमित्याह कमलोद्भवः ॥ २९
कुम्भीपाकं स्वयं याति पातयित्वा च पूरुषान् ।
मातामहान् स्वात्मनश्च दश पूर्व्वान् दशापरान् ॥३०
तत्तर्पणं मूत्रमेव पिण्डं सद्यः पुरीषकम् ।
शालग्रामस्य तत्स्पर्शे चोपवासस्त्रिरात्रकम् ॥ ३१
तद्दिष्टदेवो गृह्णाति न नैवेद्यं न तज्जलम् ।
सन्न्यासिनां ब्राह्मणानां तदन्नञ्च पुरीषवत् ॥ ३२
कुम्भीपाके पच्यते स यावदिन्द्रा(?)श्चतुर्द्दश ।
एकविंशतिपुरुषैः सार्द्धं सत्यञ्च पुंश्चलि ॥ ३३
पात्रोच्छिष्टञ्च यो भुङ्क्ते शूद्राणां ब्राह्मणाधमः ।
तत्तुल्योऽधरभोजी चेत्येवाङ्गिरसभाषितम् ॥ ३४
शूद्रो वा यदि गृह्णाति ब्राह्मणीं ज्ञानदुर्ब्बलः ।
स पच्यते कालसूत्रे यावदिन्द्राश्चतुर्द्दश ॥ ३५
अष्टादशेन्द्रावच्छिन्नं कालञ्च कालसूत्रके ।
ब्राह्मणी पच्यते तत्र भक्षिता क्रिमिभिर्ध्रुवम् ॥ ३६
ततश्चण्डालयोनौ च लब्ध्वा जन्म च ब्राह्मणी ।
शूद्रश्च कुष्ठी भवति ज्ञातिभिः परिवर्ज्जितः ॥ ३७
इत्युक्त्वा च मुनिश्रेष्ठो विरराम च शौनक ।
वृषली तत्पुरस्तस्थौ शुष्ककण्ठोष्ठतालुका ॥ ३८
एतस्मिन्नन्तरे तेन पथा याति च मेनका ।
तस्या जस्रं स्तनं दृष्ट्वा मुनेर्व्वीर्य्यं पपात ह ॥ ३९
ऋतुस्नाता च वृषली पीत्वा तत्र चर्णं मुदा ।
मुनिं प्रणम्य प्रहृष्टा प्रययौ भर्त्तुरन्तिकम् ॥ ४०
गत्वा प्रणम्य द्रुमिलं कान्ता कान्तं मनोहरम् ।
सर्व्वं निवेदयामास वृत्तान्तं गर्भहेतुकम् ॥ ४१
कलावतीवचः श्रुत्वा प्रहृष्टवदनेक्षणः ।
उवाच कान्तां मधुरं परिणामसुखावहम् ॥ ४२

द्रुमिल उवाच ।

विप्रस्य वीर्य्यं त्वद्गर्भे वैष्णवस्य महात्मनः ।
वैष्णवो भविता बालस्त्वञ्च भाग्यवती सती ॥ ४३
यद्गर्भे वैष्णवो जातो यस्य वीर्य्येण वा सति ।
तयोर्याति च वैकुण्ठं पुरुषाणां शतं शतम् ॥ ४४
तौ च विष्णुविमानेन सद्रत्ननिर्म्मितेन च ।
यातौ वैकुण्ठनगरं जन्ममृत्युजराहरम् ॥ ४५
कस्यचिद्ब्राह्मणस्यैव गेहं गच्छ शुभानने ।
पश्चान्ममान्तिकं भद्रे यास्यसीति हरेः पुरः ॥ ४६
इत्युक्त्वा गोपराजश्च स्नात्वा कृत्वा तु तर्पणम् ।
संपूज्याभीष्टदेवञ्च ब्राह्मणेभ्यो धनं ददौ ॥ ४७
अश्वानाञ्च चतुर्लक्षं गजानां लक्षमेव च ।
शतं मत्तगजेन्द्राणां ब्राह्मणेभ्यो ददौ मुदा ॥ ४८
उच्चैःश्रवःपञ्चलक्षं रथानाञ्च सहस्रकम् ।
शकटानां त्रिलक्षञ्च ब्राह्मणेभ्यो ददौ मुदा ॥ ४९
गवां द्वादशलक्षञ्च महिषाणां त्रिलक्षकम् ।
त्रिलक्षं राजहंसानां ब्राह्मणेभ्यो ददौ मुदा ॥ ५०
पारावतानां लक्षञ्च शुकानाञ्च शतं मुने ।
लक्षञ्च दासदासीनां ब्राह्मणेभ्यो ददौ मुदा ॥ ५१
ग्रामाणाञ्च सहस्रञ्च नगराणां शतं शतम् ।
धान्यतण्डुलशैलञ्च ब्राह्मणेभ्यो ददौ मुदा ॥ ५२
शतकोटिं सुवर्णानां रत्नानाञ्च सहस्रकम् ।
मुद्राणां कोटिकलसं ब्राह्मणेभ्यो ददौ मुदा ॥ ५३
ददौ तैजसपात्राणां भूषणानामसंख्यकम् ।
तां स्त्रियं रत्नभूषाढ्यां ब्राह्मणेभ्यो ददौ मुदा॥५४
राज्यं दत्त्वा महाराजोऽप्यन्तर्व्वीक्ष्य हरिं स्मरन् ।
जगाम वदरीं गोपो मनोगामी मुदान्वितः ॥ ५५
तत्र मासं तपः कृत्वा गङ्गातीरे मनोहरे ।
प्राणांस्तत्याज योगेन सद्यो दृष्टो महर्षिभिः ॥ ५६
स च विष्णुविमानेन रत्नेन्द्रनिर्म्मितेन च ।
संयुक्तो विष्णुदूतैश्च वैकुण्ठञ्च जगाम ह ॥ ५७
तत्र प्राप हरेर्द्दास्यं हरिदासो बभूव सः ।
वृत्तान्तञ्च कलावत्याः श्रूयतामिति शौनक ॥ ५८
गते कलावती नाथे उच्चैश्च प्ररुरोद ह ।
वह्नौ प्राणांस्त्यक्तुकामा ब्राह्मणेनैव रक्षिता ॥५९
ब्राह्मणो मातरित्युक्त्वा तां गृहीत्वा मुदान्वितः ।
जगाम रत्नपूर्णञ्च स्वगेहञ्च क्षणेन च ॥ ६०
सा विप्रगेहे साध्वी च सुषाव तनयं वरम् ।
तप्तकाञ्चनवर्णाभं ज्वलन्तं ब्रह्मतेजसा ॥ ६१
तत्रस्था योषितः सर्व्वा ददृशुर्बालकं शुभम् ।
ग्रीष्ममध्याह्नमार्त्तण्ड-जितं तं ब्रह्मतेजसा ॥ ६२

कामदेवाधिकं रूपे चन्द्राधिकशुभाननम् ।
शरत्पार्व्वणचन्द्रास्यं शरत्पङ्कजलोचनम् ॥ ६३
हस्तपादादिललितं सुकपोलं मनोहरम् ।
पद्मचक्राङ्कितं पादपद्मं वाऽतुलमुज्ज्वलम् ॥ ६४
करयुग्मं वाऽतुलञ्च स्वदन्तञ्च स्तनार्थिनम् ।
शौनिती बालकं दृष्ट्वा प्रययुः स्वाश्रमं मुदा ॥ ६५
पुत्रदारयुतो विप्रः प्रहृष्टश्च ननर्त्त ह ।
स बालो ववृधे तत्र शुक्लपक्षे यथा शशी ॥ ६६
पुपोष ब्राह्मणस्ताञ्च सपुत्राञ्च यथा सुताम् ॥ ६७

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-शौनकसंवादे उपबर्हणजन्मकथनं नाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः ।

सौतिरुवाच ।

बभूव काले बालश्च क्रमेण पञ्चहायनः ।
जातिस्मरो ज्ञानयुक्तः पूर्व्वमन्त्रस्मृतः सदा ॥ १
गीयते सततं कृष्णयशोनामगुणादिकम् ।
क्षणं रोदिति नृत्येन पुलकाञ्चितविग्रहः ॥ २
कृष्णसम्बन्धिनीं गाथां शृणोति यत्र यत्र वै ।
तत्सम्बन्धि पुराणञ्च तत्र तिष्ठति बालकः ॥ ३
धूलिधूसरसर्व्वाङ्गो धूलिनैवेद्यमीप्सितम् ।
धूलिषु प्रतिमां कृत्वा धूलिना पूजयेद्धरिम् ॥ ४
पुत्रमाह्वयते माता प्रातराशाय चेन्मुने ।
हरिं संपूज्य यामीति मातरं संवदेत् पुनः ॥ ५

शौनक उवाच ।

किं नाम बालकस्यास्य जन्मन्यत्र बभूव ह ।
व्युत्पत्त्या संज्ञया वापि तद्भवान् वक्तुमर्हति ॥ ६

सौतिरुवाच ।

अनावृष्ट्यवशेषे च काले बालो बभूव ह ।
नारं ददौ जन्मकाले तेनायं नारदाभिधः ॥ ७
ददाति नारं ज्ञानञ्च बालकेभ्यश्च बालकः ।
जातिस्मरो महाज्ञानी तेनायं नारदाभिधः ॥ ८
वीर्य्येण नरदस्यैव बभूव बालको मुने ।
मुनीन्द्रस्य वरेणैव तेनायं नारदाभिधः ॥ ९

शौनक उवाच ।

शिशुनाम च विज्ञातं व्युत्पत्त्या च यथोचितम् ।
मुनीन्द्रस्य कथं नाम नरदश्चेति मङ्गलम् ॥ १०

सौतिरुवाच ।

अपुत्रकाय विप्राय धर्म्मपुत्रो नरो मुनिः ।
ददौ पुत्रं काश्यपाय तेनायं नरदाभिधः ॥ ११

शौनक उवाच ।

अधुना नामव्युत्पत्तिः श्रुता सौते शिशोरपि ।
शूद्रयोनौ ब्रह्मपुत्रे कथं स नारदाभिधः ॥ १२

सौतिरुवाच ।

कल्पान्तरे ब्रह्मकण्ठाद्बभूवुर्बहवो नराः ।
नरान् ददौ तत्कण्ठञ्च तेन तन्नरदं स्मृतम् ॥ १३
ततो बभूव बालश्च नरदात् कण्ठदेशतः ।
अतो ब्रह्मा नाम चक्रे नारदश्चेति मङ्गलम् ॥ १४
साम्प्रतं शिशुवृत्तान्तं सावधानं निशामय ।
उपालम्भरहस्येन विशिष्टं किं प्रयोजनम् ॥ १५
ववृधे गोपिकाबालो विप्रगेहे दिने दिने ।
सपुत्रां पालितां चक्रे ब्राह्मणः स्वसुतां यथा ॥ १६
एतस्मिन्नन्तरे विप्रा आययुर्विप्रमन्दिरम् ।
शिशवः पञ्चवर्षीया महातेजस्विनो यथा ॥ १७
प्रच्छन्नं ह्रतवन्तश्च ग्रीष्ममध्याह्नभास्करम् ।
मधुपर्कादिकं दत्त्वा तान् ननाम गृही द्विजः ॥ १८
फलमूलादिकं काले चत्वारो मुनिपुङ्गवाः ।
विप्रदत्तं बुभुजिरे तच्छेषं बुभुजे शिशुः ॥ १९
चतुर्थको मुनिस्तस्मै कृष्णमन्त्रं ददौ मुदा ।
तेषां दासः स बभूव द्विजस्य मातुराज्ञया ॥ २०
एकदा शिशुमाता च गच्छन्ती निशि वर्त्मनि ।
ममार सर्पदष्टा च तत्पदं स्मरती हरिम् ॥ २१
सद्यो जगाम वैकुण्ठं विष्णुयानेन सा सती ।
विष्णुपार्षदसंयुक्ता सद्रत्ननिर्म्मितेन च ॥ २२
प्रातर्बालो द्विजैः सार्द्धं प्रययौ विप्रमन्दिरात् ।
तत्त्वज्ञानं ददुस्तस्मै ब्राह्मणाश्च कृपालवः ॥ २३
ब्रह्मपुत्राः शिशुं त्यक्त्वा स्वस्थानं प्रययुः किल ।
महाज्ञानी शिशुस्तस्थौ गङ्गातीरे मनोहरे ॥ २४
तत्र स्नात्वा विप्रदत्तं विष्णुमन्त्रं जजाप सः ।
क्षुत्पिपासारोगशोकहरं वेदेषु दुर्लभम् ॥ २५
महारण्ये च घोरे च अश्वत्थमूलसन्निधौ ।
कृत्वा योगासनं तस्थौ सुचिरं तत्र बालकः ॥ २६

शौनक उवाच।
कं मन्त्रं बालकः प्राप कुमारेण च धीमता।
दत्तं परं श्रीहरेश्च तद्भवान् वक्तुमर्हति॥ २७
सौतिरुवाच।
कृष्णेन दत्तो गोलोके कृपया ब्रह्मणे पुरा।
द्वाविंशत्यक्षरो मन्त्रो वेदेषु च सुदुर्लभः॥ २८
तञ्च ब्रह्मा ददौ भक्त्या कुमाराय च धीमते।
कुमारेण स दत्तश्च मन्त्रश्च शिशवे द्विज॥ २९
ओं श्री नमो भगवते रासमण्डलेश्वराय।
श्रीकृष्णाय स्वाहेति च मन्त्रोऽयं कल्पपादपः॥३०
महापुरुषस्तोत्रञ्च पूर्व्वोक्तं कवचञ्च यत्।
अस्यौपयौगिकं ध्यानं सामवेदोक्तमेव च॥ ३१
तेजोमण्डलरूपे च सूर्य्यकोटिसमप्रभे।
योगिभिर्वाञ्छितं ध्यानयोगैः सिद्धगणैः सुरैः॥३२
ध्यायन्ते वैष्णवा रूपं तदभ्यन्तरसन्निधौ।
अतीव कमनीयानिर्व्वचनीयं मनोहरम्॥ ३३
नवीनजलदश्यामं शरत्पङ्कजलोचनम्।
शरत्पार्व्वणचन्द्रास्यं पक्वबिम्बाधिकाधरम्॥ ३४
मुक्तापंक्तिविनिन्दैक-दन्तपंक्तिमनोहरम्।
सस्मितं मुरलीन्यस्तं हस्तावलम्बनेन च॥ ३५
कोटिकन्दर्पलावण्यलीलाधाम मनोहरम्।
चन्द्रलक्षप्रभामुष्टं पुष्टं श्रीयुक्तविग्रहम्॥ ३६
त्रिभङ्गभङ्गिमायुक्तं द्विभुजं पीतवाससम्।
रत्नकेयूरवलय-रत्ननूपुरभूषितम्॥ ३७
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम्।
मयूरपुच्छचूडञ्च रत्नमालाविभूषितम्॥ ३८
शोभितं जानुपर्य्यन्तं मालतीवनमालया।
चन्दनोक्षितसर्व्वाङ्गं भक्तानुग्रहकारकम्॥ ३९
मणिना कौस्तुभेन्द्रेण वक्षःस्थलसमुज्ज्वलम्।
वीक्षितं गोपिकाभिश्च शश्वदङ्किमलोचनैः॥ ४०
स्थिरयौवनयुक्ताभिर्व्वेष्टिताभिश्च सन्ततम्।
भूषणैर्भूषिताभिश्च राधावक्षःस्थलस्थितम्॥ ४१
ब्रह्मविष्णुशिवाद्यैश्च पूजितं वन्दितं स्तुतम्।
किशोरं राधिकाकान्तं शान्तरूपं परात्परम्॥ ४२
निर्लिप्तं साक्षिरूपञ्च निर्गुणं प्रकृतेः परम्।
ध्यायेत् सर्व्वेश्वरं तञ्च परमात्मानमीश्वरम्॥ ४३
इदं ते कथितं ध्यानं स्तोत्रञ्च कवचं मुने।
मन्त्रौपयौगिकं सत्यं मन्त्रश्च कल्पपादपः॥ ४४
साम्प्रतं बालकस्तस्थौ ध्यानस्थस्तत्र (क) शौनक।
दिव्यं वर्षसहस्रञ्च निराहारः कृशोदरः॥ ४५
शक्तिमान् परिपुष्टश्च सिद्धमन्त्रप्रभावतः।
ददर्श बालको ध्याने दिव्यं लोकञ्च बालकम्॥ ४६
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम्।
किशोरवयसं श्यामं गोपवेशञ्च सस्मितम्॥ ४७
गोपैर्गोपाङ्गनाभिश्च वेष्टितं पीतवाससम्।
द्विभुजं मुरलीहस्तं चन्दनेन विचर्च्चितम्॥ ४८
ब्रह्मविष्णुशिवाद्यैश्च स्तूयमानं परात्परम्।
दृष्ट्वा च सुचिरं शान्तं शान्तश्च गोपिकासुतः॥ ४९
विरराम च शोकार्त्तो यदा तद्द्रष्टुमक्षमः।
सरोदाश्वत्थमूले च न दृष्ट्वा बालकं शिशुः॥ ५०
बभूवाकाशवाणीति रुदन्तं बालकं प्रति।
सत्यं प्रबोधयुक्तञ्च हितमेव मिताक्षरम्॥ ५१
सकृद्यद्दर्शितं रूपं तदेव नाधुना पुनः।
अतिपक्वकषायाणां दुर्दर्शञ्च कुयोगिनाम्॥ ५२
एतस्मिन् विग्रहेऽतीते संप्राप्ते दिव्यविग्रहे।
पुनर्द्रक्ष्यसि गोविन्दं जन्ममृत्युजराहरम्॥ ५३
इति श्रुत्वा बालकश्च विरराम मुदान्वितः।
काले तत्याज तीर्थे च तनुं कृष्णं हृदि स्मरन्॥५४
नेदुर्दुन्दुभयः स्वर्गे पुष्पवृष्टिर्बभूव ह।
बभूव शापमुक्तश्च नारदश्च महामुनिः॥ ५५
तनुं त्यक्त्वा स जीवश्च विलीनो ब्रह्मविग्रहे।
बभूव शाश्वतान्नित्यः कालभेदे तिरोहितः॥ ५६
आविर्भावस्तिरोभावः स्वेच्छया नित्यदेहिनाम्।
जन्ममृत्युजराव्याधिर्भक्तानां नास्ति शौनक॥ ५७
इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-शौनकसंवादे नारदशापविमोचनं नाम एकविंशोऽध्यायः॥ २१॥

---

## द्वाविंशोऽध्यायः।

सौतिरुवाच।
कतिकल्पान्तरेऽतीते स्रष्टुः सृष्टिविधौ पुनः।
मरीचिमिश्रैर्मुनिभिः सार्द्धं कण्ठाद्बभूव सः॥ १

(क) ध्याने च तत्र इति वा पाठः।

शिशेर्नारदनाम्नश्च कण्ठदेशाद्बभूव सः।
नारदश्चेति विख्यातो मुनीन्द्रस्तेन हेतुना ॥ २
यः पुत्त्रश्चेतसो धातुर्बभूव मुनिपुङ्गवः।
तेन प्रचेता इति च नाम चक्रे पितामहः ॥ ३
बभूव धातुर्यः पुत्त्रः सहसा दक्षपार्श्वतः।
सर्व्वकर्म्मणि दक्षश्च तेन दक्षः प्रकीर्त्तितः ॥ ४
देहेषु कर्द्दमः शब्दश्छायायां वर्त्तते स्फुटम्।
बभूव कर्द्दमाद्बालः कर्द्दमस्तेन कीर्त्तितः ॥ ५
तेजोभेदे मरीचिश्च वेदेषु वर्त्तते स्फुटम्।
जातः सद्योऽतितेजस्वी मरीचिस्तेन कीर्त्तितः ॥ ६
क्रतुसंघश्च बालेन कृतो जन्मान्तरेऽधुना।
ब्रह्मपुत्त्रेऽपि तन्नाम क्रतुरित्यभिधीयते ॥ ७
प्रधानाङ्गं मुखं धातुस्ततो जातश्च बालकः।
इरस्तेजस्विवचनोऽप्यङ्गिरास्तेन कीर्त्तितः ॥ ८
अतितेजस्विनि भृगुर्वर्त्तते नाम्नि शौनक।
जातः सद्योऽतितेजस्वी भृगुस्तेन प्रकीर्त्तितः ॥ ९
बालोऽप्यरुणवर्णश्च जातः सद्योऽतितेजसा।
प्रज्वलन्मूर्त्तितपसा चारुणी तेन कीर्त्तितः ॥ १०
हंसा आत्मवशा यस्य योगेन योगिनो ध्रुवम्।
बालः परमयोगीन्द्रस्तेन हंसी प्रकीर्त्तितः ॥ ११
वशीभूतश्च शिष्टश्च जातः सद्यो हि बालकः।
अतिप्रियश्च धातुश्च वशिष्ठस्तेन कीर्त्तितः ॥ १२
सन्ततं यस्य यत्नश्च तपःसु बालकस्य च।
प्रकीर्त्तितो यतिस्तेन संयतः सर्व्वकर्म्मसु ॥ १३
पुलस्तपःसु वेदेषु वर्त्तते प्रस्फुटेऽपि च।
तपःसंघस्वरूपश्च पुलस्त्यस्तेन बालकः ॥ १४
त्रिगुणायां प्रकृत्यां त्रिर्विष्णावश्च प्रवर्त्तते।
तयोर्भक्तिः समा यस्य तेन बालोऽत्रिरुच्यते ॥ १५
जटा वह्निशिखारूपाः पञ्च सन्ति च मस्तके।
तपस्तेजोभवा यस्य स च पञ्चशिखः स्मृतः ॥ १६
अपान्तरतमे देशे तपस्तेपेऽन्यजन्मनि।
अपान्तरतमा नाम शिशोस्तेन प्रकीर्त्तितम् ॥ १७
स्वयं तपः समाप्नोति वाहयेत् प्रापयेत् परान्।
ऊढः समर्थस्तपसि वोढुस्तेन प्रकीर्त्तितः ॥ १८
तपसस्तेजसा बालो दीप्तिमान् सततं मुने।
तपःसु रोचते चित्तं रुचिस्तेन प्रकीर्त्तितः ॥ १९
कोपकाले बभूवुर्ये स्रष्टुरेकादश स्मृताः।
रोदनादेव रुद्राश्च कोपितास्तेन हेतुना ॥ २०

शौनक उवाच।

रुद्रेष्वेकतमो बालो महेश इति मे भ्रमः।
भवान् पुराणतत्त्वज्ञः सन्देहं छेत्तुमर्हति ॥ २१

सौतिरुवाच।

विष्णुः सत्त्वगुणः पाता ब्रह्मा स्रष्टा रजोगुणः।
तमोगुणास्ते रुद्राश्च दुर्निवारा भयङ्कराः ॥ २२
कालाग्निरुद्रः संहर्त्ता तेष्वेकः शङ्करांशकः।
शुद्धसत्त्वस्वरूपश्च शिवश्च शिवदः सताम् ॥ २३
अन्ये कृष्णस्य च कलास्तावंशौ विष्णुशङ्करौ।
समौ सत्त्वस्वरूपौ द्वौ परिपूर्णतमस्य च ॥ २४
उक्तं रुद्रोद्भवे काले कथं विस्मरसि द्विज।
मायया मोहिताः सर्व्वे मुनीनाञ्च मतिभ्रमः ॥ २५
सनकश्च सनन्दश्च तृतीयश्च सनातनः।
सनत्कुमारो भगवांश्चतुर्थो ब्रह्मणः सुतः ॥ २६
ब्रह्मा स्रष्टुं पूर्व्वपुत्त्रानुवाच ते न सेहिरे।
तेन प्रकोपितो धाता रुद्राः कोपोद्भवा मुने ॥ २७
सनकश्च सनन्दश्च तौ द्वावानन्दवाचकौ।
आनन्दितौ च बालौ द्वौ भक्तिपूर्णतमौ सदा ॥ २८
सनातनश्च श्रीकृष्णो नित्यः पूर्णतमः स्वयम्।
तद्भक्तास्तत्समः सत्यं तेन बालः सनातनः ॥ २९
सनत्तु नित्यवचनः कुमारः शिशुवाचकः।
सनत्कुमारं तेनैवमुवाच कमलोद्भवः ॥ ३०
ब्रह्मणो बालकानाञ्च व्युत्पत्तिः कथिता मुने।
साम्प्रतं नारदाख्यानं श्रूयताञ्च यथाक्रमम् ॥ ३१

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-शौनकसंवादे ब्रह्मपुत्त्रव्युत्पत्तिकथनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः।

सौतिरुवाच।

स्रष्टा सृष्टिविधानेन नियोज्य सर्व्वबालकान्।
नारदं प्रेरयामास सृष्टिं कर्त्तुञ्च शौनक ॥ १
हितं सत्यं वेदसारं परिणामसुखावहम्।
उवाच नारदं ब्रह्मा वेदवेदाङ्गपारगम् ॥ २

ब्रह्मोवाच।

एहि वत्स कुलश्रेष्ठ नारद प्राणवल्लभ।
ज्ञानदीपशिखाऽज्ञान-तिमिरक्षयकारक ॥ ३
सर्व्वेषामपि वन्द्यानां जनकः परमो गुरुः।
विद्यादाता मन्त्रदाता द्वौ समौ च पितुः परौ ॥ ४
तवाहं जनकः पुत्र विद्यादाता च पालकः।
ममाज्ञया च मत्प्रीत्या कुरु दारपरिग्रहम् ॥ ५
स च शिष्यः सोऽपि पुत्रो यश्चाज्ञां पालयेद्गुरोः।
न क्षेमं तस्य मूढ़स्य यो गुरोरवचस्करः ॥ ६
स पण्डितः स च ज्ञानी स क्षेमी स च पुण्यवान्।
गुरोर्व्वचस्करो यो हि क्षेमं तस्य पदे पदे ॥ ७
सर्व्वेषामाश्रमाणाञ्च प्रधानं पुण्यवान् गृही।
स्त्री-पुत्र-पौत्रयुक्तञ्च मन्दिरं तपसः फलम् ॥ ८
पितरः सर्व्वकाले च तिथिकाले च देवताः।
सर्व्वे गृहस्थमायान्ति निपानमिव धेनवः ॥ ९
नित्यं नैमित्तिकं काम्यं कुर्व्वन्ति गृहिणः सदा।
इहामुत्र सुखं पुण्यं स्वर्गभोगः परत्र च ॥ १०
जीवन्मुक्तो गृहस्थश्च स्वधर्म्मपरिपालकः।
यशस्वी पुण्यवांश्चैव कीर्त्तिमान् धनवान् सुखी ॥११
यशस्वी कीर्त्तिमान् यो हि मृतो जीवति सन्ततम्।
यशःकीर्त्तिविहीनो हि जीवन्नपि मृतो हि सः ॥१२
ब्रह्मणो वचनं श्रुत्वा नारदो मुनिसत्तमः।
उवाच पितरं भीतः शुष्ककण्ठोष्ठतालुकः ॥ १३

नारद उवाच।

एकदा वाग्विरोधेन चोभयोस्तातपुत्रयोः।
हानिर्बभूव दैवेन महती वायशस्करी ॥ १४
मया प्राप्तञ्च त्वच्छापाद्गान्धर्व्वं शौद्रमेव च।
जन्म कर्म्म च मच्छापात् त्वमपूज्यो भवेऽभवः ॥ १५
बभूव शापो मुक्तो मे काले ते भविता विधे।
दोषाय कल्पते शश्वद्विरोधो न गुणाय च ॥ १६
स पिता स गुरुर्बन्धुः स पुत्रः स सदीश्वरः।
यः श्रीकृष्णपादपद्मे दृढ़ां भक्तिञ्च कारयेत् ॥ १७
असद्वर्त्मनि चाज्ञानाद्गच्छन्ति यदि बालकाः।
निवर्त्तयति तानेव स पिता करुणानिधिः ॥ १८
कारयित्वा कृष्णपादे भक्तित्यागञ्च यः पिता।
अन्यस्मिन् विषये पुत्रं स किं हन्त प्रवर्त्तयेत् ॥ १९
दारग्रहो हि दुःखाय केवलं न सुखाय च।
तपः-स्वर्ग-भुक्ति-मुक्ति-कर्म्मणां व्यवधायकः ॥ २०
योषितस्त्रिविधा ब्रह्मन् गृहिणां मूढ़चेतसाम्।
साध्वी भोग्या च कुलटास्ताः सर्व्वाः स्वार्थतत्पराः ॥२१
परलोकभिया साध्वी तथैव यशसात्मनः।
कामस्नेहाच्च कुरुते भर्त्तुः सेवाञ्च सन्ततम् ॥ २२
भोग्या भोगार्थिनी शश्वत् कामस्नेहेन केवलम्।
कुरुते कान्तसेवाञ्च न च भोगाद्वते क्षणम् ॥ २३
वस्त्रालङ्कारसंभोगं सुस्निग्धाहारमुत्तमम्।
यावत् प्राप्नोति सा भोग्या तावच्च वशगा प्रिया ॥ २४
कुलाङ्गारसमा नारी कुलटा कुलनाशिनी।
कपटात् कुरुते सेवां स्वामिनो न च भक्तितः ॥ २५
सदा पुंयोगमाशंसुर्मनसा मदनातुरा।
आहाराद्धिकं जारं प्रार्थयन्ती नवं नवम् ॥ २६
जारार्थं स्वपतिं तात हन्तुमिच्छति पुंश्चली।
तस्यां यो विश्वसेन्मूढ़ो जीवनं तस्य निष्फलम् ॥२७
कथिता योषितः सर्व्वा उत्तमामध्यमाधमाः।
स्वात्मारामा विजानन्ति मनस्तासां न पण्डिताः ॥२८
हृदयं क्षुरधाराभं शरत्पद्मोत्सवं मुखम्।
सुधासमं सुमधुरं वचनं स्वार्थसिद्धये ॥ २९
प्रकोपे विषतुल्यञ्च विश्वासे सर्व्वनाशनम्।
दुर्ज्ञेयस्तदभिप्रायो निगूढ़ं कर्म्म केवलम् ॥ ३०
सदा तासामविनयं प्रबलं साहसं परम्।
दोषोत्कर्षं छलोत्कर्षं शश्वन्माया दुरत्यया ॥ ३१
पुंसश्चाष्टगुणः कामः शश्वत् कामी जगद्गुरो।
आहारो द्विगुणो नित्यं नैष्ठुर्य्यञ्च चतुर्गुणम् ॥ ३२
कोपः पुंसः षड्गुणश्च व्यवसायश्च निश्चितम्।
यत्रेमे दोषनिवहाः कास्था तत्र पितामह ॥ ३३
का क्रीड़ा किं सुखं पुंसो विण्मूत्रपूयवेश्मनि।
तेजः प्रनष्टं सम्भोगे दिवास्वापे यशःक्षयः ॥ ३४
धनक्षयस्त्वतिप्रीतौ चात्याशक्तौ वपुःक्षयः।
साहित्ये पौरुषं नष्टं कलहे मान्यनाशनम् ॥ ३५
सर्व्वनाशश्च विश्वासे ब्रह्मन् नारीषु किं सुखम्।
यावद्धनी च तेजस्वी सश्रीको योग्यतापरः ॥ ३६
पुमान् नारीं वशीकर्त्तुं समर्थस्तावदेव हि।
रोगिणं निर्द्धनं वृद्धं योषिद्वा प्रेक्षते प्रियम् ॥ ३७
लोकाचारभयात्तस्मै ददात्याहारमल्पकम्।
इत्येवं कथितं सर्व्वं ब्रह्मन्नात्मागमो यथा ॥ ३८

सर्व्वं जानासि सर्व्वज्ञ स्वात्मारामेश्वरो भवान्।
अनुग्रहं कुरु विभो विदायं देहि साम्प्रतम् ॥ ३९
कृष्णभक्तिं प्रार्थयामि त्वयि कल्पतरौ पराम्।
इत्युक्त्वा नारदस्तत्र धृत्वा तातपदाम्बुजम् ॥ ४०
आज्ञां ययाचे पितरं गन्तुं तपसि मङ्गले।
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ ४१
कृत्वा प्रदक्षिणं नत्वा ब्रह्माणं गन्तुमुद्यतः।
गच्छन्तं तनयं दृष्ट्वा विधाता जगतां मुने ॥ ४२
रुरोदोच्चैर्मुक्तकण्ठं महासांसारिको यथा।
करे धृत्वा समालिङ्ग्य चुचुम्ब च पुनःपुनः ॥ ४३
चिरं वक्षसि कृत्वा च वासयामास जानुनि।
स्वात्मारामेश्वरो ब्रह्मा योगीन्द्राणां गुरोर्गुरुः ॥४४
भेदं सोढुं न शशाक विच्छेदो दुःसहो नृणाम्।
कातरः पुत्रभेदेन मोहितो विष्णुमायया।
शोकार्त्तो वक्तुमारेभे सुतं सम्बोध्य शौनक ॥ ४५

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे ब्रह्म-नारद-संवादे त्रयोविंशोऽध्यायः ॥२३॥

---

## चतुर्विंशोऽध्यायः।

### श्रीब्रह्मोवाच।

त्वं गच्छ तपसे वत्स किं मे संसारकर्म्मणि।
अहं यास्यामि गोलोकं विज्ञातुं कृष्णमीश्वरम् ॥ १
सनकश्च सनन्दश्च तृतीयश्च सनातनः।
सनत्कुमारो वैरागी चतुर्थपुत्र एव च ॥ २
यती हंसी चारुणी च (क) वोढुः पञ्चशिखस्तथा।
पुत्रास्तपस्विनः सर्व्वे किं मे संसारकर्म्मणि ॥ ३
वचस्करो मरीचिर्म्मे अङ्गिराश्च भृगुस्तथा।
रुचिरत्रिः कर्द्दमश्च प्रचेताश्च क्रतुर्मनुः ॥ ४
वशिष्ठो वशगः शश्वत् सर्व्वेषु च सुतेषु च।
अन्ये विवेकिनोऽसाध्याः किं मे संसारकर्म्मणि ॥ ५
निबोध वत्स वक्ष्यामि वेदोक्तं वचनं शुभम्।
पारम्पर्य्यक्रमपरं चतुर्व्वर्गफलप्रदम् ॥ ६
धर्म्मार्थकाममोक्षांश्च सर्व्वे वाञ्छन्ति पण्डिताः।
वेदप्रणिहितानेतान् सभासु च प्रशंसितान्।
वेदप्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विपर्य्ययः ॥ ७

आदौ विप्रो यज्ञसूत्रं परिधाय सुखं मखे।
समधीत्य ततो वेदान् ददाति गुरुदक्षिणाम् ॥ ८
ततःप्रकृष्टकुलजां सुविनीतां समुद्वहेत्।
सा साध्वी कुलजा या च पतिसेवासु तत्परा ॥ ९
सद्वंशे दुर्व्विनीता च प्रभवेन्न कदाचन।
आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥ १०
असद्वंशप्रसूता या पित्रोर्द्दोषेण नारद।
दुर्व्विनीता च सा दुष्टा स्वतन्त्रा सर्व्वकर्म्मसु ॥ ११
न वत्स दुष्टाः सर्व्वाश्च योषितः कमलाकलाः।
सर्व्वेशांशाश्च कुलटा असद्वंशसमुद्भवाः ॥ १२
निर्गुणं स्वामिनं साध्वी सेवते च प्रशंसति।
न सेवते च कुलटा प्रियं निन्दति सद्गुणम् ॥ १३
साधुः सद्वंशजां कन्यां प्रयत्नेन परिग्रहेत्।
तस्यां पुत्रान् समुत्पाद्य वृद्धस्तु तपसे व्रजेत् ॥ १४
वरं हुतवहे वासः सर्पवक्त्रे च कण्टके।
एतेभ्यो दुःखदो वासः स्त्रिया दुर्म्मुखया सह ॥ १५
त्वमधीतो मया वेदं मह्यञ्च गुरुदक्षिणाम्।
पुत्र देहीदमेवेह कुरु दारपरिग्रहम् ॥ १६
वत्स त्वं कुलजाताञ्च पूर्व्वपत्नीञ्च मालतीम्।
विवाहं कुरु कल्याण कल्याणे च दिनक्षणे ॥ १७
मनुवंशोद्भवस्येह सृञ्जयस्य गृहे सती।
लक्ष्मी जन्म लब्धा च कुरुते भारते तपः ॥ १८
ग्रहणं कुरु तां रत्नमालाञ्च कमलाकलाम्।
भारते न भवेद्व्यर्थं जनानां तपसः फलम् ॥ १९
आदौ भवेद्गृही लोको वाणप्रस्थस्ततः परम्।
ततस्तपस्वी मोक्षाय क्रम एष श्रुतौ श्रुतः ॥२०
वैष्णवानां हरेरर्च्चा तपस्या च श्रुतौ श्रुता।
वैष्णवस्त्वं गृहे तिष्ठ कुरु कृष्णपदार्च्चनम् ॥ २१
अन्तर्व्वाह्ये हरिर्यस्य तस्य किं तपसा सुत।
नान्तर्व्वाह्ये हरिर्यस्य तस्य किं तपसा वृथा ॥ २२
तपसा हरिराराध्यो नान्यः कश्चन विद्यते।
यत्र तत्र कृतं कृष्णसेवनं परमं तपः ॥ २३
वत्स मद्वचनेनैव गृहे स्थित्वा हरिं भज।
गृही भव मुनिश्रेष्ठ गृहिणां सर्व्वदा सुखम् ॥ २४
कामिन्यां सुखसम्भोगः स्वर्गभोगात् सुदुर्लभः।
तद्दर्शनमुपस्पर्शं वाञ्छन्त्येव मुमुक्षवः ॥ २५
सर्व्वस्पर्शसुखात् स्त्रीणामुपस्पर्शसुखं परम्।

(क) यतिर्हंसश्चारणिश्चेत्यपि पाठः।

ततः सुखतमं पुत्त्रदर्शनं स्पर्शनं मुने ॥ २६
सर्व्वेभ्यः प्रेयसी कान्ता प्रिया तेन प्रकीर्त्तिता।
पुत्त्रप्रयोजना कान्ता यतःकान्ताप्रियः सुतः ॥ २७
नास्ति पुत्त्रात् परो बन्धुर्नास्ति पुत्त्रात् परः प्रियः।
सर्व्वेभ्यो जयमन्विच्छेत् पुत्त्रादेकात् पराजयम् ॥२८
न चात्मनि प्रियोऽर्थश्च तस्मादपि प्रियः सुतः।
अतः प्रियतमे पुत्त्रे न्यसेदात्मपरं धनम् ॥ २९
इत्येवमुक्त्वा स ब्रह्मा विरराम च शौनक।
उवाच वचनं तातं नारदो ज्ञानिनां वरः ॥ ३०

नारद उवाच।

स्वयं विज्ञाय सर्व्वार्थं स्वपुत्त्रं वेददर्शने।
प्रवर्त्तयत्यसन्मार्गे स दयालुः कथं पिता ॥ ३१
जलबुद्बुदवत् सर्व्वं संसारमिति नश्वरम्।
जलरेखा यथा मिथ्या तथा ब्रह्मन् जगत्त्रयम् ॥ ३२
विहाय हरिदास्यञ्च विषये यत्मनश्चलम्।
दुर्लभं मानवं जन्म बभूव तस्य निष्फलम् ॥ ३३
का वा कस्य प्रिया पुत्त्रो बन्धुः को वा भवार्णवे।
कर्म्मोर्म्मिभिर्योजना च तदपायो वियोजना॥३४
सुकर्म्म कारयेद्यो हि तन्मित्रं स पिता गुरुः।
विबुद्धिं कारयेद्यो हि स रिपुश्च कथं पिता ॥ ३५
इत्येवं कथितं तात वेदबीजं यथागमम्।
ध्रुवं तथापि कर्त्तव्यं तवाज्ञापरिपालनम् ॥ ३६
आदौ यास्यामि भगवन्नरनारायणाश्रमम्।
नारायणकथां श्रुत्वा करिष्ये दारसंग्रहम् ॥ ३७
इत्येवमुक्त्वा स मुनिर्विरराम पितुः पुरः।
पुष्पवृष्टिस्तदुपरि तत्क्षणेन बभूव ह ॥ ३८
क्षणं पितुः पुरः स्थित्वा नारदो मुनिसत्तमः।
उवाच च पुनर्व्वेदवचनं मङ्गलप्रदम् ॥ ३९

नारद उवाच।

देहि मे कृष्णमन्त्रञ्च यन्मनोवाञ्छितं मम।
तत्सम्बन्धि च यज्ज्ञानं यच्च तद्गुणवर्णनम् ॥ ४०
ततः पश्चात् करिष्यामि लक्लीलया दारसंग्रहम्।
मानसे परिपूर्णे च कार्य्यं कर्त्तुं पुमान् सुखी ॥ ४१
नारदस्य वचः श्रुत्वा प्रहृष्टः कमलोद्भवः।
उवाच पुनरेवेदं पुत्त्रं ज्ञानविदां वरः ॥ ४२

ब्रह्मोवाच।

पत्युर्म्मन्त्रं पितुर्म्मन्त्रं न गृह्णीयाद्विचक्षणः।
विविक्ताश्रमिणाञ्चैव न पुत्त्र सुखदायकः ॥ ४३
निषिक्तात्मपश्यते मन्त्रो गुरुर्भर्त्ता च कामिनी।
विद्या सुखं भयं दुःखं पुरुषैः स्वेच्छया न च ॥४४
महेश्वरस्तव गुरुः प्राक्तनीयः पुरातनः।
गच्छ वत्स शिवं शान्तं शिवदं ज्ञानिनां गुरुम् ॥ ४५
तत्रैव भगवन्मन्त्रं ज्ञानं लब्ध्वा पुरातनात्।
नारायणकथां श्रुत्वा शीघ्रमागच्छ मद्गृहम् ॥४६
इत्युक्त्वा जगतां धाता विरराम च शौनक।
प्रणम्य पितरं भक्त्या शिवलोकं ययौ मुनिः ॥ ४७

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौतिशौनकसंवादे चतुर्व्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः।

सौतिरुवाच।

क्षणेन विप्रप्रवरो मुदान्वितो
जगाम शम्भोः सदनं मनोहरम्।
ऊर्द्ध्वं ध्रुवाद्वै योजनलक्षमीप्सितं
रत्नेन निर्म्माणकृतञ्च शूलिना ॥ १
निराश्रये योगबलेन शम्भुना
धृतं विचित्रं विविधालयान्वितम्।
दृष्टं स्वपुण्याशयसाधकैर्वरै-
र्मुनीन्द्रसारैर्ज्वलितं दिवानिशम् ॥ २
मयूखशून्यं रविचन्द्रयोर्मुने
हुताशनैर्वेष्टितमेव केवलम्।
प्राकाररूपैरतिरिक्तवर्द्धितै-
रुच्चैरसंख्यप्रमितैः शिखोज्ज्वलैः ॥ ३
पुरं वरं योजनलक्षविस्तृतं
त्रिकोटिरत्नेन्द्रगृहान्वितं सदा।
विराजितं क्षीरकसारनिर्म्मितै-
श्चित्रैर्व्विचित्रैर्व्विविधैर्म्मनोहरैः ॥ ४
माणिक्यमुक्तामणिदर्पणैर्युतं
न स्वप्नदृष्टं द्विज विश्वकर्म्मणः।
आकल्पमेकैः शिवसेवितैर्जनै-
र्निषेवितं सन्ततमेव शौनक ॥ ५
सिद्धैर्नियुक्तं शतकोटिलक्षकै-
स्त्रिकोटिलक्षैश्च युतं स्वपार्षदैः।

युक्तां विलक्षैर्व्विकटैश्च भैरवैः
क्षेत्रैश्चतुर्लक्षशतैश्च वेष्टितम्॥ ६
सुरद्रुमैर्व्वेष्टितमेव सन्ततं
मन्दारवृक्षप्रवरैः सुपुष्पितैः।
विराजितं सुन्दरकामधेनुभि-
र्यथा बलाकाशतकैर्नभस्तलम्॥ ७
दृष्ट्वा मुनिर्विस्मयमाप मानसे
किमत्र चित्रं बुध योगिनां गुरौ।
लोकं त्रिलोकाच्च विलक्षणं परं
श्री-मृत्यु-रोगार्त्ति-जराहरं वरम्॥ ८
दूरे सभामण्डलमध्यगं शिवं
ददर्श शान्तं शिवदं मनोहरम्।
पञ्चत्रिनेत्रं विधुपञ्चवक्त्रकं
गङ्गाधरं निर्म्मलचन्द्रशेखरम्॥ ९
प्रतप्तहेमाभजटाधरं विभुं
दिगम्बरं शुभ्रमनन्तमक्षरम्।
मन्दाकिनीपुष्करवीजमालया
कृष्णेति नामैव मुदा जपन्तम्॥ १०
सुनीलकण्ठं भुजगेन्द्रमण्डितं
योगीन्द्र-सिद्धेन्द्र-मुनीन्द्रवन्दितम्।
सिद्धेश्वरं सिद्धिविधानकारणं
मृत्युञ्जयं कालयमान्तकारकम्॥ ११
प्रसन्नहास्यास्यमनोहरं परं
विश्वोन्नतीनां शिवदं वरप्रदम्।
सदाशुतोषं भवरोषवर्ज्जितं
भक्तप्रियं भक्तजनैकवन्धुम्॥ १२
गत्वा समीपं मुनिरेव शूलिनं
ननाम मूर्द्ध्ना पुलकाङ्कविग्रहम्।
वीणां त्रितन्त्रीं क्वणयन् पुनर्जगौ
कृष्णं प्रतुष्टाव कलं सुकण्ठः॥ १३
दृष्ट्वा मुनीन्द्रप्रवरञ्च सस्मितं
विधेः सुतं वेदविदां वरिष्ठम्।
योगीन्द्र-सिद्धेन्द्र-महर्षिभिः सह
जवेन पीठादुदतिष्ठदीश्वरः॥ १४
ददौ च तस्मै मुनये ससंभ्रम-
मालिङ्गनञ्चाशिषमासनादिकम्।
पप्रच्छ भद्रं गमनप्रयोजनं
तपोधनं तं तपसाञ्च शौनक॥ १५
सद्रत्नसिंहासनसुन्दरे वरे
चोवास शम्भुर्वरपार्षदैः सह।
नोवास स्रष्टुस्तनयः पुटाञ्जलि-
स्तुष्टाव भक्त्या प्रणतः प्रभुं द्विज॥ १६
गन्धर्व्वराजेन कृतेन नारदो
वेदोक्तस्तोत्रेण शुभप्रदेन च।
स्तुत्वा प्रणामं पुनरेव कृत्वा
भवाज्ञयोवास भवस्य वामतः॥ १७
चकार तत्रैव निवेदनं शिवे
मनोऽभिलाषं भवकामपूरके।
श्रुत्वा मुनेस्तद्वचनं कृपानिधि-
र्द्दत्तं प्रतिज्ञां प्रचकार चोमिति॥ १८

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-
शौनक-संवादे शिव-नारदसम्मेलनं
नाम पञ्चविंशोऽध्यायः॥ २५॥

---

## षड्विंशोऽध्यायः।

### सौतिरुवाच।

हरेः स्तोत्रञ्च कवचं मन्त्रं पूजाविधिं परम्।
हरं ययाचे देवर्षिर्ध्यानञ्च ज्ञानमेव च॥ १
स्तोत्रञ्च कवचं मन्त्रं ध्यानं पूजाविधानकम्।
तत् प्राक्तनीयं ज्ञानञ्च ददौ तस्मै महेश्वरः॥ २
सर्व्वं प्राप्य मुनिश्रेष्ठः परिपूर्णमनोरथः।
उवाच प्रणतो भक्त्या गुरुं प्रणतवत्सलम्॥ ३

### नारद उवाच।

आह्निकं ब्राह्मणानाञ्च वद वेदविदां वर।
स्वधर्म्मपालनं नित्यं यतो भवति निर्व्ययः॥ ४

### श्रीमहेश्वर उवाच।

उत्थाय ब्राह्मे मुहूर्त्ते ब्रह्मरन्ध्रस्थपङ्कजे।
सूक्ष्मे सहस्रपद्मे च निर्म्मले ग्लानिवर्ज्जिते॥ ५
रात्रिवासः परित्यज्य गुरुं तत्रैव चिन्तयेत्।
व्याख्यामुद्राकरं प्रीतं सस्मितं शिष्यवत्सलम्॥ ६
प्रसन्नवदनं शान्तं परितुष्टं निरन्तरम्।
साक्षाद्ब्रह्मस्वरूपञ्च शिष्याणां चिन्तयेत् सदा॥ ७
ध्यात्वा तदाज्ञामादाय हृत्पद्मे निर्म्मले सिते।

सहस्रपत्रे विस्तीर्णे देवमिष्टं विचिन्तयेत् ॥ ८
यस्य देवस्य यद्ध्यानं तद्रूपं तद्विचिन्तयेत् ।
गृहीत्वा तदनुज्ञाञ्च कर्त्तव्यं समयोचितम् ॥ ९
आदौ ध्यात्वा गुरुं नत्वा संपूज्य विधिपूर्व्वकम् ।
पश्चात्तदाज्ञामादाय ध्यायेदिष्टं प्रपूजयेत् ॥ १०
गुरुप्रदर्शितो देवो मन्त्रपूजाविधिर्जपः ।
न देवेन गुरुर्दृष्टस्तस्माद्देवाद्गुरुः परः ॥ ११
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः प्रकृतिरीशाद्या गुरुश्चन्द्रोऽनलो रविः ॥ १२
गुरुर्वायुश्च वरुणो गुरुर्माता पिता सुहृत् ।
गुरुरेव परं ब्रह्म नास्ति पूज्यो गुरोः परः ॥ १३
अभीष्टदेवे रुष्टे च समर्थो रक्षणे गुरुः ।
न समर्था गुरौ रुष्टे रक्षणे सर्व्वदेवताः ॥ १४
यस्य तुष्टो गुरुः शश्वज्जयस्तस्य पदे पदे ।
यस्य रुष्टो गुरुस्तस्य सर्व्वनाशश्च सर्व्वदा ॥ १५
न संपूज्य गुरुं देवं यो मूढ़ः पूजयेद्भ्रमात् ।
ब्रह्महत्याशतं पापं लभते नात्र संशयः ॥ १६
सामवेदे च भगवानित्युवाच हरिः स्वयम् ।
तस्मादभीष्टदेवाच्च गुरुः पूज्यतमः परः ॥ १७
गुरुमिष्टं स्वयं ध्यात्वा स्तुत्वा च साधको मुने ।
वेदोक्तस्थलमासाद्य विण्मूत्रमुत्सृजेन्मुदा ॥ १८
जलं जलसमीपञ्च सरन्धं प्राणिसन्निधिम् ।
देवालयसमीपञ्च वृक्षमूलञ्च वर्त्म च ॥ १९
हलोत्कर्षस्थलञ्चैव शस्यक्षेत्रञ्च गोष्ठकम् ।
नदीकन्दरगर्भञ्च पुष्पोद्यानञ्च पङ्किलम् ॥ २०
ग्रामस्याभ्यन्तरञ्चैव नृणां गृहसमीपकम् ।
शङ्कुसेतुशरवणं श्मशानं वह्निसन्निधिम् ॥ २१
क्रीड़ास्थलं महारण्यं मञ्चकाधःस्थलं तथा ।
वृक्षच्छायायुतं स्थानमन्तःप्राण्यवपन्नकम् ॥ २२
दूर्व्वास्थानं कुशस्थानं वल्मीकस्थानमेव च ।
वृक्षारोपणभूमिञ्च कार्य्यार्थञ्च परिष्कृतम् ॥ २३
एतत् सर्व्वं परित्यज्य सूर्य्यतापविवर्ज्जितम् ।
कृत्वा गर्त्तं पुरीषञ्च मूत्रञ्च परिवर्ज्जयेत् ॥ २४
पुरीषमूत्रोत्सर्गञ्च दिवा कुर्य्यादुदङ्मुखः ।
पश्चिमाभिमुखो रात्रौ सन्ध्यायां दक्षिणामुखः ॥२५
मौनी भूत्वा च निश्वासं यथा गन्धो न सञ्चरेत् ।
त्यक्त्वा मृदा समाच्छाद्य शौचं कुर्य्याद्विचक्षणः ॥ २६
कृत्वा तु लोष्ट्रशौचञ्च जलशौचं ततः परम् ।
मृद्युक्तं तज्जलञ्चैव तत्प्रमाणं निशामय ॥ २७
एकां लिङ्गे मृदं दद्याद्वामहस्ते चतुष्टयम् ।
उभयोर्हस्तयोर्द्वे तु मूत्रशौचं प्रकीर्त्तितम् ॥ २८
मूत्रशौचञ्च द्विगुणं मैथुनानन्तरं यदि ।
मैथुनानन्तरे शौचं मूत्रशौचं चतुर्गुणम् ॥ २९
एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश ।
उभयोः सप्त दातव्याः पादौ षड्भिन शुध्यतः ॥ ३०
पुरीषशौचं विप्राणां गृहिणामिदमेव च ।
विधवानाञ्च द्विगुणं शौचमेवं प्रकीर्त्तितम् ॥ ३१
यतीनां वैष्णवानाञ्च ब्रह्मर्षिब्रह्मचारिणाम् ।
चतुर्गुणञ्च गृहिणां तेषां शौचं प्रकीर्त्तितम् ॥ ३२
नो यावदुपनीयेत द्विजः शूद्रस्तथाङ्गना ।
गन्धलेपक्षयकरं तेषां शौचं प्रकीर्त्तितम् ॥ ३३
शौचं क्षत्रविशोश्चैव द्विजानां गृहिणां समम् ।
द्विगुणं वैष्णवादीनां मुनीनां परिकीर्त्तितम् ॥ ३४
न्यूनाधिकं न कर्त्तव्यं शौचं शुद्धिमभीप्सता ।
प्रायश्चित्तं प्रयुज्येत विहिताऽतिक्रमे कृते ॥ ३५
शौचं तन्नियमं मत्तः सावधानं निशामय ।
मृच्छौचे च शुचिर्व्विप्रोऽप्यशुचिश्च व्यतिक्रमे ॥ ३६
वल्मीकमूषिकोत्खातां मृदमन्तर्जलान्तथा ।
शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम् ॥ ३७
अन्तःप्राण्यवपन्नाञ्च हलोत्खातां विशेषतः ।
कुशमूलोत्थिताञ्चैव दूर्व्वामूलोत्थितान्तथा ॥ ३८
अश्वत्थमूलान्नीताञ्च तथैव शयनोत्थिताम् ।
चतुष्पथाच्च गोष्ठानां गोष्पदानान्तथैव च ॥ ३९
शस्यस्थलानां क्षेत्राणामुद्यानानां मृदं त्यजेत् ।
स्नातो वाप्यथवाऽस्नातो विप्रः शौचेन शुध्यति ॥ ४०
शौचहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु ।
कृत्वा शौचमिदं विप्रो मुखं प्रक्षालयेत् सुधीः ॥ ४१
आदौ षोड़शगण्डूषैर्मुखशुद्धिं विधाय च ।
दन्तकाष्ठेन दन्तञ्च तत्पश्चात् परिमार्ज्जयेत् ॥ ४२
पुनः षोड़शगण्डूषैर्मुखशुद्धिं समाचरेत् ।
दन्तमार्ज्जनकाष्ठानां नियमं शृणु नारद ॥ ४३
निरूपितं सामवेदे हरिणा चाह्निकक्रमे ।
अपामार्गं सिन्धुवारमाम्रञ्च करवीरकम् ॥ ४४
खदिरञ्च शिरीषञ्च जातिपुन्नागशालकम् ।

अशोकमर्ज्जुनञ्चैव क्षीरिवृक्षं कदम्बकम् ॥ ४५
जम्बूकं वकुलं चोड्रं पलाशञ्च प्रशस्तकम् ।
वदरीं पारिभद्रञ्च मन्दारं शाल्मलीं तथा ॥ ४६
वृक्षं कण्टकयुक्तञ्च लतादिपरिवर्ज्जितम् ॥ ४७
पिप्पलञ्च पियालञ्च तिन्तिड़ीकञ्च ताड़कम् ।
खर्ज्जूरं नारिकेलञ्च तालञ्च परिवर्ज्जितम् ॥ ४८
दन्तशौचविहीनश्च सर्व्वशौचविहीनकः ।
शौचहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु ॥ ४९
कृत्वा शौचं शुचिर्विप्रो धृत्वा धौते च वाससी ।
प्रक्षाल्य पादमाचम्य प्रातःसन्ध्यां समाचरेत् ॥ ५०
एवं त्रिसन्ध्यं सन्ध्याञ्च कुरुते कुलजो द्विजः ।
स स्नातः सर्व्वतीर्थेषु त्रिसन्ध्यं यः समाचरेत् ॥ ५१
त्रिसन्ध्यहीनोऽप्यशुचिरनर्हः सर्व्वकर्म्मसु ।
यदह्ना कुरुते कर्म्म न तस्य फलभाग्भवेत् ॥ ५२
नोपतिष्ठति यः पूर्व्वां नोपास्ते यस्तु पश्चिमाम् ।
स शूद्रवद्वहिष्कार्य्यः सर्व्वस्मात्द्विजकर्म्मणः ॥ ५३
पूर्व्वां सन्ध्यां परित्यज्य मध्यमां पश्चिमां तथा ।
ब्रह्महत्यामात्महत्यां प्रत्यहं लभते द्विजः ॥ ५४
एकादशीविहीनो वा सन्ध्याहीनश्च यो द्विजः ।
कल्पं व्रजेत् कालसूत्रं यथा हि वृषलीपतिः ॥ ५५
विधाय प्रातःसन्ध्याञ्च गुरुमिष्टं सुरं रविम् ।
ब्रह्माणमीशं विष्णुञ्च मायां पद्मां सरस्वतीम् ॥ ५६
प्रणम्य गुरुमाज्यञ्च दर्पणं मधु काञ्चनम् ।
स्पृष्ट्वा स्नानादिकं काले कुर्य्यात्साधकसत्तमः ॥ ५७
पुष्करिण्यान्तु वाप्यान्तु यदा स्नानं समाचरेत् ।
समुद्धृत्य पञ्च पिण्डानादौ धर्म्मी विचक्षणः ॥ ५८
नद्यां नदे कन्दरे वा तीर्थे वा स्नानमाचरेत् ।
कुर्य्यात् स्नात्वा तु सङ्कल्पं ततः स्नानं पुनर्म्मुने ॥ ५९
श्रीकृष्णप्रीतिकामश्च वैष्णवानां महात्मनाम् ।
सङ्कल्पो दक्षिणाञ्चैव कृतपातकनाशनम् ॥ ६०
विप्रः कृत्वा तु सङ्कल्पं मृदं गात्रे प्रलेपयेत् ।
वेदोक्तमन्त्रेणानेन देहशुद्धीकृतेन च ॥ ६१
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥ ६२
उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
आरुह्य मम गात्राणि सर्व्वं पापं प्रमोचय ॥ ६३
पुण्यं देहि महाभागे स्नानार्हां कुरुष्व माम् ।
इत्युक्त्वा च जले नाभिप्रमाणे मन्त्रपूर्व्वकम् ॥ ६४
चतुर्हस्तप्रमाणाञ्च कृत्वा मण्डलिकां शुभाम् ।
तीर्थान्यावाहयेत्तत्र हस्तं दत्त्वा तपोधन ॥ ६५
यानि यानि च तीर्थानि सर्व्वाणि कथयामि ते ॥ ६६
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्म्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ ६७
नलिनी नन्दिनी सीता मालिनी च महापथा ।
विष्णुपादार्घ्यसम्भूत गङ्गा त्रिपथगामिनी ॥ ६८
पद्मावती भोगवती स्वर्णरेखा च कौशिकी ।
दक्षा पृथ्वी च सुभगा विश्वकाया शिवा सिता ॥ ६९
विद्याधरी सुप्रसन्ना तथा लोकप्रसादनी ।
क्षेमा च वैष्णवी शान्ता शान्तिदा गोमती सती ॥ ७०
सावित्री तुलसी दुर्गा महालक्ष्मीः सरस्वती ।
कृष्णप्राणाधिका राधा लोपामुद्रा दिती रतिः ॥ ७१
अहल्या चादितिः संज्ञा स्वधा स्वाहाप्यरुन्धती ।
शतरूपा देवहूतीत्येवनाद्याः स्मरेत् सुधीः ॥ ७२
स्नात्वा स्नात्वा महापूतः कुर्य्यात्तु तिलकं बुधः ।
बाहोर्मूले ललाटे च कण्ठदेशे च वक्षसि ॥ ७३
स्नानं दानं तपो होमं देवञ्च पितृकर्म्मसु ।
तत् सर्व्वं निष्फलं याति ललाटे तिलकं विना ॥ ७४
ब्राह्मणस्तिलकं कृत्वा कुर्य्यात् सन्ध्याञ्च तर्पणम् ।
नमस्कृत्य सुरान् भक्त्या गृहं गच्छेन्मुदान्वितः ॥ ७५
प्रक्षाल्य पादं यत्नेन धृत्वा धौते च वाससी ।
मन्दिरं प्रविशेत् प्राज्ञ इत्याह हरिरेव च ॥ ७६
विना पादौ च प्रक्षाल्य स्नात्वा विशति मन्दिरम् ।
तस्य स्नानादिकं नष्टं जपहोमञ्च पञ्चमम् ॥ ७७
परिधाय स्निग्धवस्त्रं गृहञ्च प्रविशेद्वती ।
रुष्टा लक्ष्मीर्गृहाद्याति शापं दत्त्वा सुदारुणम् ॥ ७८
आर्द्रजङ्घश्च यो विप्रः पादौ प्रक्षालयेद्यदि ।
तावद्भवति चाण्डालो यावद्गङ्गां न पश्यति ॥ ७९
उपविश्यासने ब्रह्मन्नाचम्य साधकः शुचिः ।
पूजां कुर्य्यात्तु वेदोक्तां भक्तियुक्तो हि संयतः ॥ ८०
शालग्रामे मणौ यन्त्रे प्रतिमायां जले स्थले ।
गोपृष्ठे वा गुरौ विप्रे प्रशस्तमर्च्चनं हरेः ॥ ८१
सर्व्वं (क) प्रशस्ता पूजा च शालग्रामे च नारद ।
सुराणामेव सर्व्वेषां यत्राधिष्ठानमेव च ॥ ८२

(क) शिवलिङ्गे ।

स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः।
शालग्रामोदकेनैव योऽभिषेकं समाचरेत्॥ ८३
शालग्रामजलं भक्त्या नित्यमश्नाति यो नरः।
जीवन्मुक्तः स च भवेद्यात्यन्ते कृष्णमन्दिरम्॥ ८४
शालग्रामशिलाचक्रं यत्र तिष्ठति नारद।
सचक्रो भगवांस्तत्र सर्व्वतीर्थानि निश्चितम्॥ ८५
तत्र यो हि मृतो देही ज्ञानाज्ञानेन देवतः।
रत्ननिर्म्माणयानेन स याति श्रीहरेः पदम्॥ ८६
शालग्रामं विनान्यत्र कः साधुः पूजयेद्धरिम्।
कृत्वा तत्र हरेः पूजां परिपूर्णं फलं लभेत्॥ ८७
पूजाधारश्च कथितः श्रूयतां पूजनक्रमः।
हरेः पूजां बहुमतां कथयामि यथागमम्॥ ८८
कश्चिद्ददाति हरये चोपहाराणि षोडश।
सुन्दराणि पवित्राणि नित्यं भक्त्या च वैष्णवः॥ ८९
कश्चिद्द्वादश द्रव्याणि पञ्च वस्तूनि कश्चन।
येषामेव यथा शक्तिर्भक्तिर्मूलञ्च पूजने॥ ९०
आसनं वसनं पाद्यमर्घ्यमाचमनीयकम्।
पुष्पं चन्दनधूपञ्च दीपनैवेद्यमुत्तमम्॥ ९१
गन्धमाल्ये च शय्या च ललिता सुविलक्षणा।
जलमन्नञ्च ताम्बूलं साधारं देयमेव च॥ ९२
गन्धान्नतल्पताम्बूलं विना द्रव्याणि द्वादश।
पाद्यार्घ्यजलनैवेद्यपुष्पाण्येतानि पञ्च च॥ ९३
सर्व्वाण्येतानि मूलेन दद्यात् साधकसत्तमः।
गुरूपदिष्टं मूलञ्च प्रशस्तं सर्व्वकर्म्मसु॥ ९४
आदौ कृत्वा भूतशुद्धिं प्राणायामं ततः परम्।
अङ्गन्यासङ्गन्यासञ्च मन्त्रन्यासं ततः परम्॥ ९५
वर्णन्यासं विनिर्व्वर्त्य चार्घ्यपात्रं विनिर्द्दिशेत्।
त्रिकोणमण्डलं कृत्वा तत्र कूर्म्मं प्रपूजयेत्॥ ९६
जलेनापूर्य्य शङ्खञ्च तत्र संस्थापयेद्द्विजः।
जलं संपूज्य विधिवत् तीर्थान्यावाहयेत्ततः॥ ९७
पूजोपकरणान्तेन जलेन क्षालयेत् पुनः।
ततो गृहीत्वा पुष्पञ्च कृत्वा योगासनं शुचिः॥ ९८
ध्यानेन गुरुदत्तेन ध्यायेत् कृष्णमनन्यधीः।
ध्यात्वा पाद्यादिकं सर्व्वं दद्यान्मूलेन साधकः॥ ९९
अङ्गप्रत्यङ्गदेवञ्च तन्त्रोक्तं पूजयेद्ध्रुवम्।
मूलं जप्त्वा यथा शक्ति देवे मन्त्रं विसर्जयेत्॥ १००
दत्त्वोपहारं विविधं स्तुत्वा च कवचं पठेत्।
ततः कृत्वा परीहारं मूर्द्ध्ना च प्रणमेद्भुवि॥ १०१
कृत्वा च देवपूजाञ्च यज्ञं कुर्य्याद्विचक्षणः।
शौतस्मार्त्ताग्निमुक्ताञ्च वलिं दद्यात्ततो मुने॥ १
नित्यश्राद्धं यथाशक्ति दानं वित्तानुरूपकम्।
कृत्वा कृती च विहरेत् क्रम एष श्रुतौ श्रुतः॥ १
इति ते कथितं सर्व्वं वेदोक्तं सूत्रमुत्तमम्।
आह्निकस्य च विप्राणां किं भूयः श्रोतुमिच्छसि

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे शिवनारदसंवादे आह्निकप्रकरण-कथनं षड्विंशोऽध्यायः॥ २६॥

---

## सप्तविंशोऽध्यायः।

नारद उवाच।

भक्ष्यं किं वाप्यभक्ष्यञ्च द्विजानां गृहिणां प्रभो।
यतीनां वैष्णवानाञ्च विधवाब्रह्मचारिणाम्॥१
किं कर्त्तव्यमकर्त्तव्यमभोग्यं भोग्यमेव वा।
सर्व्वं कथय सर्व्वज्ञ सर्व्वेश सर्व्वकारण॥ २

महादेव उवाच।

कश्चित्तपस्वी विप्रश्च निराहारी चिरं मुनिः।
कश्चित् समीरणाहारी फलाहारी च कश्चन॥ ३
अन्नाहारी यथाकाले गृही च गृहिणीयुतः।
येषामिच्छा च या ब्रह्मन् रुचीनां विविधा गतिः
हविष्यान्नं ब्राह्मणानां प्रशस्तं गृहिणां सदा।
नारायणोच्छिष्टमिष्टमनिवेद्यमभक्ष्यकम्॥ ५
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम्।
विश्वमूलं सर्व्वपापोत्तमन्नञ्च हरिवासरे॥ ६
ब्राह्मणः कामतोऽन्नञ्च यो भुङ्क्ते हरिवासरे।
त्रैलोक्यजनितं पापं सोऽपि भुङ्क्ते न संशयः॥ ७
न भोक्तव्यं न भोक्तव्यं न भोक्तव्यञ्च नारद।
गृहिभिर्ब्राह्मणैरन्नं संप्राप्ते हरिवासरे॥ ८
गृही शैवश्च शाक्तश्च ब्राह्मणो ज्ञानदुर्ब्बलः।
प्रयाति कालसूत्रञ्च भुक्त्वा च हरिवासरे॥ ९
कृमिभिः शालमानैश्च भक्षितस्तत्र तिष्ठति।
विण्मूत्रभोजनं कृत्वा यावदिन्द्राश्चतुर्द्दश॥ १०
जन्माष्टमीदिने चैव श्रीरामनवमीदिने।
शिवरात्रौ च यो भुङ्क्ते सोऽपि द्विगुणपातकी॥११
उपवासासमर्थश्च फलमूलजलं पिबेत्।

नष्टे शरीरे स भवेदन्यथा चात्मघातकः ॥ १२
सकृद्भुङ्क्ते हविष्यान्नं विष्णोर्नैवेद्यमेव च ।
न भवेत् प्रत्यवायी स चोपवासफलं लभेत् ॥ १३
एकादश्यामनाहारी गृही विप्रश्च भारते ।
स च तिष्ठति वैकुण्ठे यावद्वै ब्रह्मणो वयः ॥ १४
गृहिणां शैवशाक्तानामिदमुक्तञ्च नारद ।
विशेषतो वैष्णवानां यतीनां ब्रह्मचारिणाम् ॥ १५
नित्यं नैवेद्यभोजी यः श्रीकृष्णस्य च वैष्णवः ।
नित्यं शतोपवासानां जीवन्मुक्तः फलं लभेत् ॥ १६
वाञ्छन्ति तस्य संस्पर्शं तीर्थानि सर्व्वदेवताः ।
आलापं दर्शनञ्चैव सर्व्वपापप्रणाशनम् ॥ १७
द्विः स्विन्नमन्नं पृथुकं शुद्धं देशविशेषके ।
नात्यन्तशस्तं विप्राणां भक्षणे च निवेदने ॥ १८
अभक्ष्यं तद्यतीनां वै विधवाब्रह्मचारिणाम् ।
ताम्बूलञ्च यथा ब्रह्मन् तथैते वस्तुनी ध्रुवम् ॥ १९
ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम् ।
तपस्विनाञ्च विप्रेन्द्र गोमांससदृशं ध्रुवम् ॥ २०
सर्व्वेषां ब्राह्मणानाञ्च चाभक्ष्यं शृणु नारद ।
तदुक्तं सामवेदे च हरिणा चाह्निकक्रमे ॥ २१
ताम्रपात्रे पयःपानमुच्छिष्टे घृतभोजनम् ।
दुग्धं लवणसार्द्धञ्च सद्यो गोमांसभक्षणम् ॥ २२
नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु ।
ऐक्षवं ताम्रपात्रस्थं सुरातुल्यं न संशयः ॥ २३
उत्थाय वामहस्तेन यत्तोयं पिबति द्विजः ।
सुरापी च स विज्ञेयः सर्व्वधर्म्मबहिष्कृतः ॥ २४
अनिवेद्यं हरेरन्नं भक्ष्यशेषञ्च नित्यशः ।
पीतशेषजलञ्चैव गोमांससदृशं मुने ॥ २५
वार्त्तिङ्गणफलञ्चैव गोमांसं कार्त्तिके स्मृतम् ।
माघे च मूलकञ्चैव कलम्बी शयने तथा ॥ २६
श्वेतवर्णञ्च तालञ्च मसूरं मत्स्यमेव च ।
सर्व्वेषां ब्राह्मणानाञ्च त्याज्यञ्च सर्व्वदेशतः ॥ २७
मत्स्यांश्च कामतो भुक्त्वा सोपवासस्त्र्यहं वसेत् ।
प्रायश्चित्तं ततः कृत्वा शुद्धिमाप्नोति ब्राह्मणः ॥ २८
प्रतिपत्सु च कुष्माण्डभक्षणेऽर्थविनाशनम् ।
द्वितीयायाञ्च वृहतीभोजको(क) न स्मरेद्धरिम् ॥२९
अभक्ष्यञ्च पटोलञ्च शत्रुवृद्धिकरं परम् ।

(क) वृहतीभोजने इति वा पाठः ।

तृतीयायां चतुर्थ्याञ्च मूलकं धननाशनम् ॥ ३०
कलङ्ककारणञ्चैव पञ्चम्यां विल्वभक्षणम् ।
तिर्य्यग्योनिं प्रापयेत्तु षष्ठ्याञ्च निम्बभक्षणम् ॥ ३१
रोगवृद्धिकरञ्चैव नराणां तालभक्षणम् ।
सप्तम्याञ्च तथा तालं शरीरस्य च नाशकम् ॥ ३२
नारिकेलफलं भक्ष्यमष्टम्यां बुद्धिनाशनम् ।
तुम्बी नवम्यां गोमांसं दशम्याञ्च कलम्बकम् ॥ ३३
एकादश्यां तथा शिम्बी द्वादश्यां पूतिका तथा ।
त्रयोदश्यान्तु वार्त्ताकीभक्षणं पुत्रनाशनम् ॥ ३४
चतुर्द्दश्यां माषभक्ष्यं महापापकरं परम् ।
पञ्चदश्यां तथा मांसमभक्ष्यं गृहिणां मुने ॥ ३५
गृहिणा प्रोक्षितं मांसं भक्ष्यमन्यदिनेषु च ।
प्रातःस्नाने तथा श्राद्धे पार्व्वणे व्रतवासरे ॥ ३६
प्रशस्तं सार्षपं तैलं पक्वतैलञ्च नारद ।
कुहूपूर्णेन्दुसंक्रान्तिचतुर्द्दश्यष्टमीषु च ॥ ३७
रवौ श्राद्धे व्रताहे च दुष्टं स्त्री-तिलतैलकम् ।
माषञ्च रक्तशाकञ्च कांस्यपात्रे च भोजनम् ॥ ३८
निषिद्धं शयने चैव कूर्म्ममांसञ्च प्रोक्षितम् ।
निषिद्धं सर्व्ववर्णानां दिवा स्वस्त्रीनिषेवणम् ॥३९
रात्रौ च दधि भक्ष्यञ्च शयनं सन्ध्ययोर्दिने ।
रजस्वलास्त्रीगमनमेतन्नरककारणम् ॥ ४०
रजस्वलावीरान्नञ्च पुंश्चल्यन्नस्य भक्षणम् ।
शूद्राणां याजकान्नञ्च शूद्रश्राद्धान्नमेव च ॥ ४१
अभक्ष्यान्नञ्च विप्रर्षे यदन्नं वृषलीपतेः ।
ब्रह्मन् वार्द्धुषिकान्नञ्च गणकान्नमभक्ष्यकम् ॥ ४२
अग्रदानीद्विजान्नञ्च चिकित्साकारकस्य च ।
हस्ताचित्राद्वरौ तैलमग्राह्यञ्चाप्यभक्ष्यकम् ॥ ४३
मूले मृगे भाद्रपदे मांसं गोमांसतुल्यकम् ।
अमायां कृत्तिकायाञ्च द्विजैः क्षौरं विवर्ज्जितम् ॥४४
कृत्वा तु मैथुनं क्षौरं यो देवांस्तर्पयेत् पितॄन् ।
रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत् ॥ ४५
यत् कर्त्तव्यमकर्त्तव्यं यदभोज्यञ्च भोज्यकम् ।
सर्व्वं तुभ्यं निगदितं किं भूयः श्रोतुमिच्छसि ॥ ४६

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे
शिवनारदसंवादे कर्त्तव्याकर्त्तव्यकथनं
नाम सप्तविंशोऽध्यायः ॥२७॥

## अष्टाविंशोऽध्यायः।

नारद उवाच।

श्रुतं सर्व्वं जगन्नाथ त्वत्प्रसादाज्जगद्गुरो।
भवान् ब्रह्मस्वरूपश्च वद ब्रह्मनिरूपणम्॥ १
प्रभो किं ब्रह्म साकारं किं निराकारमीश्वरम्।
किं तद्विशेषणं किं वाप्यविशेषणमेव च॥ २
किं वा दृश्यमदृश्यं वा लिप्तं देहिषु किं न वा।
किं वा तल्लक्षणं शस्तं वेदे वा किं निरूपणम्॥ ३
ब्रह्मातिरिक्ता प्रकृतिः किं वा ब्रह्मस्वरूपिणी।
प्रकृतेर्लक्षणं किं वा सारभूतं श्रुतौ श्रुतम्॥ ४
कस्य सृष्टौ च प्राधान्यं द्वयोर्मध्ये वरं परम्।
विचार्य्य मनसा सर्व्वं सर्व्वज्ञ वद मां ध्रुवम्॥ ५
नारदस्य वचः श्रुत्वा पञ्चवक्त्रः प्रहस्य च।
भगवान् वक्तुमारेभे परं ब्रह्मनिरूपणम्॥ ६

महादेव उवाच।

यद्दृयत्पृष्टं त्वया वत्स निगूढ़ं ज्ञानमुत्तमम्।
सुदुर्लभञ्च वेदेषु पुराणेषु च नारद॥ ७
अहं ब्रह्मा च विष्णुश्च शेषो धर्म्मो महान् विराट्।
सर्व्वं निरूपितं ब्रह्मन्नस्माभिः श्रुतिभिर्न वा॥ ८
यद्विशेषणयुक्तञ्च दृश्यं प्रत्यक्षमेव च।
तन्निरूपितमस्माभिर्व्वेदे वेदविदां वर॥ ९
वैकुण्ठे च पुरा पृष्टो धर्म्मेण ब्रह्मणा मया।
यदुवाच हरिः किञ्चिन्निबोध कथयामि ते॥ १०
सारभूतञ्च तत्त्वानामज्ञानान्धकलोचनम्।
द्वैधभ्रमतमोध्वंसमुप्रकृष्टप्रदीपकम्॥ ११
परमात्मस्वरूपञ्च परं ब्रह्म सनातनम्।
सर्व्वदेहस्थितं साक्षिस्वरूपं देहिकर्म्मणाम्॥ १२
प्राणाः पञ्च स्वयं विष्णुर्म्मनो ब्रह्मा प्रजापतिः।
सर्व्वज्ञानस्वरूपोऽहं शक्तिः प्रकृतिरीश्वरी॥ १३
आत्माधीना वयं सर्व्वे स्थिते तस्मिंश्च संस्थिताः।
गते गताश्च परमे नरदेवमिवानुगाः (क)॥ १४
जीवस्तत्प्रतिविम्बश्च स च भोगी च कर्म्मणाम्।
यथार्कचन्द्रयोर्विम्बो जलपूर्णघटेषु च॥ १५
विम्बो घटेषु भग्नेषु प्रलीनश्चन्द्रसूर्य्ययोः।
तथा सृष्टौ च भग्नायां जीवो ब्रह्मणि लीयते॥ १६
एकमेव परं ब्रह्म शेषे वत्स भवक्षये।
वयं प्रलीनास्तत्रैव जगदेतच्चराचरम्॥ १७
तच्च ज्योतिःस्वरूपञ्च मण्डलाकारमेव च।
ग्रीष्ममध्याह्नमार्त्तण्डकोटिकोटिसमप्रभम्॥ १८
आकाशमिव विस्तीर्णं सर्व्वव्यापकमव्ययम्।
सुखदृश्यं यथा चन्द्रविम्बं योगिभिरेव च॥ १९
वदन्ति योगिनस्तत्तु परं ब्रह्म सनातनम्।
दिवानिशञ्च ध्यायन्ते सत्यं तत् सर्व्वमङ्गलम्॥ २०
निरीहञ्च निराकारं परमात्मानमीश्वरम्।
स्वेच्छामयं स्वतन्त्रञ्च सर्व्वकारणकारणम्॥ २१
परमानन्दरूपञ्च परमानन्दकारणम्।
परं प्रधानं पुरुषं निर्गुणं प्रकृतेः परम्॥ २२
तत्रैव लीना प्रकृतिः सर्व्वबीजस्वरूपिणी।
यथाग्नौ दाहिका शक्तिः प्रभा सूर्य्ये यथा मुने॥२३
यथा दुग्धे च धावल्यं जले शैत्यं यथैव च।
यथा शब्दश्च गगने यथा गन्धः क्षितौ सदा॥ २४
तथा हि निर्गुणं ब्रह्म निर्गुणा प्रकृतिस्तथा।
सृष्ट्युन्मुखेन तद्ब्रह्म चांशेन पुरुषः स्मृतः॥ २५
स एव सगुणो वत्स प्राकृतो विषयी स्मृतः।
सा च तत्रैव त्रिगुणा परा च्छायामयी स्मृता॥२६
यथा मृदा कुलालश्च घटं कर्त्तुं क्षमः सदा।
तथा प्रकृत्या तद्ब्रह्म सृष्टिं स्रष्टुं क्षमं मुने॥ २७
स्वर्णेन कुण्डलं कर्त्तुं स्वर्णकारः क्षमो यथा।
तथा ब्रह्म तया सार्द्धं सृष्टिं कर्त्तुमिहेश्वरम्॥२८
कुलालसृष्टा न च मृत् नित्या एव सनातनी।
न स्वर्णकारसृष्टं तत् स्वर्णञ्च नित्यमेव च॥ २९
नित्यं तत् परमं ब्रह्म नित्या च प्रकृतिः स्मृता।
द्वयोः समञ्च प्राधान्यमिति केचिद्वदन्ति हि॥ ३०
मृदं स्वर्णं समाहर्त्तुं कुलालस्वर्णकारकौ।
समर्थौ न च मृत्स्वर्णं तयोराहरणे क्षमम्॥ ३१
तस्मात्तद्ब्रह्म प्रकृतेः परमेवेति नारद।
इति केचिद्वदन्त्येव द्वयोश्च नित्यता ध्रुवम्॥ ३२
केचिद्वदन्ति तद्ब्रह्म स्वयञ्च प्रकृतिः पुमान्।
ब्रह्मातिरिक्ता प्रकृतिर्व्वदन्तीति च केचन॥ ३३
तद्ब्रह्म परमं धाम सर्व्वकारणकारणम्।
तद्ब्रह्म लक्षणं ब्रह्मन्निदं किञ्चित् श्रुतौ श्रुतम्॥३४

(क) नारदेवमिवानुगा इति नातिशुद्धः पाठः क्वाचित्कः।

ब्रह्म चात्मा च सर्व्वेषां निर्लिप्तं साक्षिरूपकम् ।
सर्व्वव्यापि च सर्व्वादिलक्षणञ्च श्रुतौ श्रुतम् ॥ ३५
तद्ब्रह्मशक्तिः प्रकृतिः सर्व्वबीजस्वरूपिणी ।
यतस्तच्छक्तिमद्ब्रह्म चेदं प्रकृतिलक्षणम् ॥ ३६
तेजोरूपञ्च तद्ब्रह्म ध्यायन्ते योगिनः सदा ।
वैष्णवास्तन्न मन्यन्ते यद्भक्ताः सूक्ष्मबुद्धयः ।
तत्तेजः कस्य वाश्चर्य्यं ध्यायन्ते पुरुषं विना ॥ ३७
कारणेन विना कार्य्यं कुतो वा प्रभवेद्भवे ।
ध्यायन्ते वैष्णवास्तस्मात्तच्च रूपं मनोहरम् ॥ ३८
स्वेच्छामयस्य पुंसश्च साकारस्यात्मनः सदा ।
तत्तेजोमण्डलाकारे सूर्य्यकोटिसमप्रभे ॥ ३९
नित्यं स्थूलञ्च प्रच्छन्नं गोलोकाभिधमेव च ।
लक्षकोटियोजनञ्च चतुरस्रं मनोहरम् ॥ ४०
(क) सुदृश्यं वर्त्तुलाकारं यथैव चन्द्रमण्डलम् ।
रत्नेन्द्रसारनिर्म्माणं निराधारञ्च स्वेच्छया ॥ ४१
ऊर्द्ध्वञ्च नित्यं वैकुण्ठात् पञ्चाशत्कोटियोजनम् ।
गो-गोप-गोपीसंयुक्तं कल्पवृक्षसमन्वितम् ॥ ४२
कामधेनुभिराकीर्णं रासमण्डलमण्डितम् ।
वृन्दावनवनाच्छन्नं विरजावेष्टितं मुने ॥ ४३
शतशृङ्गं शतशृङ्गैः सुदीप्तं दीप्तमीप्सितम् ।
लक्षकोटिपरिमितैराश्रमैः सुमनोहरैः ॥ ४४
शतमन्दिरसंयुक्ताश्रमं सुमनोहरम् ।
प्राकारपरिखायुक्तं पारिजातवनान्वितम् ॥ ४५
कौस्तुभेन्द्रेण मणिना निर्म्माणकलसोज्ज्वलैः ।
हीरासारविनिर्म्माणसोपानसंघसुन्दरैः ॥ ४६
मणीन्द्रसारनिर्म्माणैः कपाटदर्पणान्वितैः ।
नानाचित्रविचित्राढ्यैराश्रमञ्च सुसंस्कृतम् ॥ ४७
षोड़शद्वारसंयुक्तं सुदीप्तं रत्नदीपकैः ।
रत्नसिंहासने रम्ये चामूल्यरत्ननिर्म्मिते ॥ ४८
नानाचित्रविचित्राढ्ये वसन्तमीश्वरं वरम् ।
नवीननीरदश्यामं किशोरवयसं शिशुम् ॥ ४९
शरन्मध्याह्नमार्त्तण्डप्रभामोचनलोचनम् ।
शरत्पार्व्वणपूर्णेन्दुशोभाच्छादनमाननम् ॥ ५०
कोटिकन्दर्पलावण्यलीलानिन्दितसुन्दरम् ।
कोटिचन्द्रप्रभामुष्ट-पुष्टश्रीयुक्तविग्रहम् ॥ ५१

सस्मितं मुरलीहस्तं सुप्रशस्तं सुमङ्गलम् ।
वह्निसंस्कारपीतांशुयुगलेन समुज्ज्वलम् ॥ ५२
चन्दनोक्षितसर्व्वाङ्गं कौस्तुभेन विराजितम् ।
आजानुमालतीमाला-वनमालाविभूषितम् ॥ ५३
त्रिभङ्गभङ्गिमायुक्तं मणिमाणिक्यभूषितम् ।
मयूरपुच्छचूड़ञ्च सद्रत्नमुकुटोज्ज्वलम् ॥ ५४
रत्नकेयूरवलय-रत्नमञ्जीररञ्जितम् ।
रत्नकुण्डलयुग्मेन गण्डस्थलसुशोभितम् ॥ ५५
मुक्तापङ्क्तिविनिन्दैकदशनं सुमनोहरम् ।
पक्वबिम्बाधरौष्ठञ्च नासिकोन्नतशोभनम् ॥ ५६
वीक्षितं गोपिकाभिश्च वेष्टिताभिश्च सन्ततम् ।
स्थिरयौवनयुक्ताभिः सस्मिताभिश्च सादरम् ॥ ५७
भूषिताभिश्च सद्रत्ननिर्म्माणभूषणेन च ।
सुरेन्द्रैश्च मुनीन्द्रैश्च मुनिभिर्म्मानवेन्द्रकैः ॥ ५८
ब्रह्मविष्णुशिवानन्त-धर्म्माद्यैर्व्वन्दितं सदा ।
भक्तप्रियं भक्तनाथं भक्तानुग्रहकारकम् ॥ ५९
रासेश्वरं सुरसिकं राधावक्षःस्थलस्थितम् ।
एवंरूपमरूपं तं ध्यायन्ते वैष्णवा मुने ॥ ६०
सततं ध्येयमस्माकं परमात्मानमीश्वरम् ।
अक्षरं परमं ब्रह्म भगवन्तं सनातनम् ॥ ६१
स्वेच्छामयं निर्गुणञ्च निरीहं प्रकृतेः परम् ।
सर्व्वाधारं सर्व्वबीजं सर्व्वज्ञं सर्व्वमेव च ॥ ६२
सर्व्वेश्वरं सर्व्वपूज्यं सर्व्वसिद्धिकरप्रदम् ।
स एव भगवानादिर्गोलोके द्विभुजः स्वयम् ॥ ६३
गोपवेशश्च गोपालैः पार्षदैः परिवेष्टितः ।
परिपूर्णतमः श्रीमान् श्रीकृष्णो राधिकेश्वरः ॥ ६४
सर्व्वान्तरात्मा सर्व्वत्र प्रत्यक्षः सर्व्वगः स्मृतः ।
कृषिश्च सर्व्ववचनो णकारश्चात्मवाचकः ॥ ६५
सर्व्वात्मा च परं ब्रह्म तेन कृष्णः प्रकीर्त्तितः ।
कृषिश्च सर्व्ववचनो णकारश्चादिवाचकः ॥ ६६
सर्व्वादिपुरुषो व्यापी तेन कृष्णः प्रकीर्त्तितः ।
स एवांशेन भगवान् वैकुण्ठे च चतुर्भुजः ॥ ६७
चतुर्भुजैः पार्षदैस्तैरावृतः कमलापतिः ।
स एव कलया विष्णुः पाता च जगतां प्रभुः ॥ ६८
श्वेतद्वीपे सिन्धुकन्यापतिरेव चतुर्भुजः ।
एतत्ते कथितं सर्व्वं परंब्रह्मनिरूपणम् ॥ ६९
अस्माकं चिन्तनीयञ्च सेव्यं वन्दितमीप्सितम् ।

(क) इतः पूर्व्वं "रत्नेन्द्रसारनिर्म्माणैर्गोपीनामावृतं सदा ।" इत्यधिकः क्वचित् पाठः ।

इत्युक्त्वा शङ्करस्तत्र विरराम च शौनक ॥ ७०
गन्धर्व्वराजस्तोत्रेण तुष्टाव तत्र नारदः।
मुनिस्तोत्रेण सन्तुष्टो भगवानादिरच्युतः।
ज्ञानं मृत्युञ्जयस्तस्मै प्रददौ वरमीप्सितम् ॥ ७१
तं प्रणम्य मुनीन्द्रश्च प्रहृष्टवदनेक्षणः।
तदाज्ञया पुण्यरूपं ययौ नारायणाश्रमम् ॥ ७२

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-शौनकसंवादे नारदप्रस्थानं नामाष्टा-विंशोऽध्यायः ॥ २८ ॥

## ऊनत्रिंशोऽध्यायः।

सौतिरुवाच।

ददर्शाश्रममाश्चर्य्यं देवर्षिर्नारदस्तथा।
ऋषिर्नारायणस्यैव वदरीवनसंयुतम् ॥ १
नानावृक्षफलाकीर्णं पुंस्कोकिलरुतद्रुतम्। (क)
शरभेन्द्रैः केशरीन्द्रैर्व्याघ्रौघैः परिवेष्टितम् ॥ २
ऋषीन्द्रस्य प्रभावेण हिंसाभयविवर्ज्जितम्।
महारण्यमगम्यञ्च स्वर्गाधिकमनोहरम् ॥ ३
सिद्धेन्द्राणां मुनीन्द्राणामाश्रमाणां त्रिकोटिभिः।
आवृतं चन्दनारण्यपारिजातवनान्वितम् ॥ ४
ददर्श तमृषीन्द्रञ्च सभामध्ये मनोहरम्।
त्रिषष्टिकोटिसिद्धेन्द्रैरावृतं सूर्य्यवर्च्चसम् ॥ ५
ऋषीन्द्राणाञ्च पञ्चाशत्कोटिभिश्चान्वितं मुदा।
विद्याधरीणां नृत्यञ्च पश्यन्तं सस्मितं द्विज ॥ ६
गन्धर्व्वकृष्णसंगीतं शृतवन्तं मनोहरम्।
रत्नसिंहासने रम्ये वसन्तं योगिनां गुरुम् ॥ ७
जपन्तं परमं ब्रह्म कृष्णमात्मानमीश्वरम् ॥ (ख)
प्रणनाम च तं दृष्ट्वा ब्रह्मपुत्रश्च शौनक ॥ ८
उत्थाय सहसालिङ्ग्य युयुजे परमाशिषम्।
पप्रच्छ कुशलं स्वेच्छाचकारातिथिपूजनम् ॥ ९
रत्नसिंहासने रम्ये वासयामास नारदम्।
निवसन्नासने रम्ये वर्त्मश्रमवर्ज्जितः ॥ १०
उवाच तमृषिश्रेष्ठं भगवन्तं सनातनम् ॥ ११

नारद उवाच।

अधीत्य वेदान् सर्व्वांश्च पितुः स्थाने सुदुर्गमान्।
ज्ञानं संप्राप्य योगीन्द्रान्मन्त्रञ्च शङ्कराद्विभो।
मनो मे न हि तृप्नोति दुर्निवारञ्च चञ्चलम् ॥ १२
दृष्टं मया त्वत्पदाब्जं मनसा प्रेरितेन च।
किञ्चिज्ज्ञानविशेषञ्च लब्धुमिच्छामि साम्प्रतम् ॥ १३
यत्र कृष्णगुणाख्यानं जन्ममृत्युजराहरम्।
ब्रह्मविष्णुशिवाद्याश्च सुरेन्द्रश्च सुरा विभो ॥ १४
कं चिन्तयन्ति मुनयो मनवश्च विचक्षणाः।
कस्मात् सृष्टिश्च प्रभवेत् कुत्र वा विप्रलीयते ॥ १५
को वा सर्व्वेश्वरो विष्णुः सर्व्वकारणकारकः।
तस्येश्वरस्य किं रूपं कस्मै वा किं जगत्पतेः ॥ १६
विचार्य्य मनसा सर्व्वं तद्भवान् वक्तुमर्हति।
नारदस्य वचः श्रुत्वा प्रहस्य भगवानृषिः ॥ १७
कथां कथितुमारेभे पुण्यां भुवनपावनीम् ॥ १८

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौति-शौनकसंवादे नारायणं प्रति नारदप्रश्नो नाम ऊनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः।

श्रीनारायण उवाच।

लम्बोदरो हरिरुमापतिरीशशेषा
ब्रह्मादयः सुरगणा मनवो मुनीन्द्राः।
वाणी शिवा त्रिपथगा कमलादिका च
सच्चिन्तयेद्भगवतश्चरणारविन्दम् ॥ १
संसारसागरमतीव गभीरघोरं
दारादिसर्प-(क) परिवेष्टितचेष्टिताङ्गम्।
संलङ्घ्य गन्तुमभिवाञ्छति यो हि दास्यं
सच्चिन्तयेद्भगवतश्चरणारविन्दम् ॥ २
वेदाङ्गवेदमुखनिःसृतकीर्त्तिवंशे-
र्व्वेदाङ्गवेदजनकस्य विधेविधातुः।
जन्मान्तकादिभयशोकविदीर्णदेहः
सच्चिन्तयेद्भगवतश्चरणारविन्दम् ॥ ३
भूधारणञ्च दशनाग्रफलेन किं वा
विश्वानि लोमविवरेषु बिभर्त्तुरंशैः।

(क) श्रुतमिति पाठः क्वाचित्कः।
(ख) आत्मन्यात्मानमीश्वरमिति वा पाठः।

(क) दारा अपत्येति क्वाचित्कः पाठ आर्षः। दावाग्नि-सर्पेत्यपि पाठः क्वाचित्कः।

तस्येश्वरस्य च विभोः प्रकृतेः परस्य
सञ्चिन्तयेद्भगवतश्चरणारविन्दम् (क) ॥ ४
चक्षुर्निमेषपतितो जगतां विधाता
तत्कर्म्म वत्स कथितुं भुवि कः समर्थः।
त्वञ्चापि नारद मुने परमादरेण
संचिन्तनं कुरु हरेश्चरणारविन्दम् ॥ ५
यूयं वयं तस्य कलाकलांशाः
सुरेशसिद्धा मनवो मुनीन्द्राः।
कलाविशेषा भवपाद्ममुख्या
महान् विराड्यस्य कलाविशेषः ॥ ६
सहस्रशीर्षा शिरसः प्रदेशे
बिभर्त्ति सिद्धार्थमिदञ्च विश्वम्।
कूर्म्मे च शेषो मशको गजे यथा
कूर्म्मश्च कृष्णस्य कलाकलांशः ॥ ७
गोलोकनाथस्य विभोर्यशोऽमलं
श्रुतौ पुराणे न हि किञ्चन स्फुटम्।
न पाद्ममुख्याः कथितुं समर्थाः
सर्व्वेश्वरं तं भज पाद्मपुत्र ॥ ८
विश्वेषु सर्व्वेषु च विश्वधाम्नः
सन्त्येव शश्वद्विधिविष्णुरुद्राः।
तेषाञ्च संख्याः श्रुतयश्च देवाः
परं न जानन्ति तमीश्वरं भज ॥ ९
करोति सृष्टिं स विधेर्व्विधाता
विधाय नित्यां प्रकृतिं जगत्प्रसूम्।
ब्रह्मादयः प्राकृतिकाश्च सर्व्वे
भक्तिप्रदां श्रीं प्रकृतिं भजन्ति ॥ १०
ब्रह्मस्वरूपा प्रकृतिर्न भिन्ना
यया च सृष्टिं कुरुते सनातनः।
स्त्रियश्च सर्व्वाः कलया जगत्सु
माया च सर्व्वे च तया विमोहिताः ॥ ११
नारायणी सा परमा सनातनी
शक्तिश्च पुंसः परमात्मनश्च।
आत्मेश्वरश्चापि यया च शक्तिमां-
स्तया विना स्रष्टुमशक्त एव। १२
गत्वा विवाहं कुरु वत्स साम्प्रतं
कर्त्तुं प्रयुक्तञ्च पितुर्निदेशम्।
गुरोर्निदेशं प्रतिपालको भवेत्
सर्व्वत्र पूज्यो विजयी च सन्ततम् ॥ १३
स्वपत्नीं पूजयेद्यो हि वस्त्रालङ्कारचन्दनैः।
प्रकृतिस्तस्य सन्तुष्टा यथा कृष्णो द्विजार्च्चने ॥ १४
सा च योषित्स्वरूपा च प्रतिविश्वेषु मायया।
योषितामपमानेन पराभूता च सा भवेत् ॥ १५
द्विव्या स्त्री पूजिता येन पतिपुत्त्रवती सती।
प्रकृतिः पूजिता तेन सर्व्वमङ्गलदायिनी। १६
मूलप्रकृतिरेका सा पूर्णब्रह्मस्वरूपिणी।
सृष्टौ पञ्चविधा सा च विष्णुमाया सनातनी ॥ १७
प्राणाधिष्ठातृदेवी या कृष्णस्य परमात्मनः।
सर्व्वासां प्रेयसी कान्ता सा राधा परिकीर्त्तिता॥१८
नारायणप्रिया लक्ष्मीः सर्व्वसम्पत्स्वरूपिणी।
रागाधिष्ठातृदेवी या सा च पूज्या सरस्वती ॥ १९
सावित्री वेदमाता च पूज्यरूपा विधेः प्रिया।
शङ्करस्य प्रिया दुर्गा यस्याः पुत्त्रो गणेश्वरः ॥ २०

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे
सौतिशौनकसंवादे भगवत्स्वरूपकथनं
नाम त्रिंशोऽध्यायः ॥ ३० ॥

(क) गोवर्द्धनोद्धरणकीर्त्तिरतीव खिन्ना
भूर्धारिता च दशनाग्रकरेण छिन्ना।
विश्वानि लोमविवरेषु बिभर्त्ति यादैः
सञ्चिन्तयेद्भगवतश्चरणारविन्दम् ॥
गोपाङ्गनावदनपङ्कजषट्पदस्य
रासेश्वरस्य रसिकारमणस्य पुंसः।
वृन्दावने विहरतो व्रजवेशविष्णोः
सञ्चिन्तये द्भगवतश्चरणारविन्दम् ॥
इति पाठः क्वाचित्कः।

इति ब्रह्मखण्डं समाप्तम्।

# प्रकृतिखण्डम् ।

## प्रथमोऽध्यायः ।

नारद उवाच ।
गणेशजननी दुर्गा राधा लक्ष्मीः सरस्वती ।
सावित्री च सृष्टिविधौ प्रकृतिः पञ्चधा स्मृता ॥ १
आविर्बभूव सा केन का वा सा ज्ञानिनां वरा ।
किं वा तल्लक्षणं सा च बभूव पञ्चधा कथम् ॥ २
सर्व्वासां चरितं पूजाविधानं गुणमीप्सितम् ।
अवतारः कुतः कस्यास्तन्मां व्याख्यातुमर्हसि ॥ ३
नारायण उवाच ।
प्रकृतेर्लक्षणं वत्स को वा वक्तुं क्षमो भवेत् ।
किञ्चित्तथापि वक्ष्यामि यत् श्रुतं रुद्रवक्त्रतः ॥ ४
प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्त्तिता ॥ ५
गुणे प्रकृष्टसत्त्वे च प्रशब्दो वर्त्तते श्रुतौ ।
मध्यमे रजसि कृश्च तिशब्दस्तमसि स्मृतः ॥ ६
त्रिगुणात्मस्वरूपा या सर्व्वशक्तिसमन्विता ।
प्रधानं सृष्टिकरणे प्रकृतिस्तेन कथ्यते ॥ ७
प्रथमे वर्त्तते प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्त्तिता ॥ ८
योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः ।
पुमांश्च दक्षिणार्द्धाङ्गं वामाङ्गं प्रकृतिः स्मृतम् ॥ ९
सा च ब्रह्मस्वरूपा च माया नित्या सनातनी ।
तथात्मा च यथा शक्तिर्यथाग्नौ दाहिका स्मृता ॥ १०
अतएव हि योगीन्द्रः स्त्रीपुंभेदं न मन्यते ।
सर्व्वं ब्रह्ममयं ब्रह्मन् शश्वत् पश्यति नारद ॥ ११
स्वेच्छामयस्येच्छया च श्रीकृष्णस्य सिसृक्षया ।
साविर्बभूव सहसा मूलप्रकृतिरीश्वरी ॥ १२
तदाज्ञया पञ्चविधा सृष्टिकर्म्मणि भेदतः ।
अथ भक्तानुरोधाद्वा भक्तानुग्रहविग्रहा ॥ १३
गणेशमाता दुर्गा या शिवरूपा शिवप्रिया ।
नारायणी विष्णुमाया पूर्णब्रह्मस्वरूपिणी ॥ १४
ब्रह्मादिदेवैर्मुनिभिर्मनुभिः पूजिता सदा ।
सर्व्वाधिष्ठातृदेवी सा ब्रह्मरूपा सनातनी ॥ १५
धर्म्मसत्यपुण्यकीर्त्ति-यशोमङ्गलदायिनी ।
सुखमोक्षहर्षदात्री शोकार्त्तिदुःखनाशिनी ॥ १६
शरणागतदीनार्त्तपरित्राणपरायणा ।
तेजःस्वरूपा परमा तदधिष्ठातृदेवता ॥ १७
सर्व्वशक्तिस्वरूपा च शक्तिरीशस्य सन्ततम् ।
सिद्धेश्वरी सिद्धरूपा सिद्धिदा सिद्धिदेश्वरी ॥ १८
बुद्धिर्निद्रा क्षुत्पिपासा छाया तन्द्रा दया स्मृतिः ।
जातिः क्षान्तिश्च शान्तिश्च कान्तिर्भ्रान्तिश्च चेतना॥१९
तुष्टिः पुष्टिस्तथा लक्ष्मीर्वृत्तिर्माता तथैव च ।
सर्व्वशक्तिस्वरूपा सा कृष्णस्य परमात्मनः ॥ २०
उक्ताः श्रुतौ श्रुतगुणाश्चातिस्वल्पो यथागमम् ।
गुणोऽस्त्यनन्तोऽनन्तायाः अपराय निशामय ॥ २१
शुद्धसत्त्वस्वरूपा या पद्मा च परमात्मनः ।
सर्व्वसम्पत्स्वरूपा सा तदधिष्ठातृदेवता ॥ २२
कान्ता दान्तातिशान्ताच सुशीला सर्व्वमङ्गला ।
लोभमोहकामरोषाहङ्कारपरिवर्ज्जिता ॥ २३
भक्तानुरक्ता पत्युश्च सर्व्वाद्या च पतिव्रता ।
प्राणतुल्या भगवतः प्रेमपात्री प्रियंवदा ॥ २४
सर्व्वशस्यात्मिका सर्व्वजीवनोपायरूपिणी ।
महालक्ष्मीश्च वैकुण्ठे पतिसेवावती सदा ॥ २५
स्वर्गे च स्वर्गलक्ष्मीश्च राजलक्ष्मीश्च राजसु ।
गृहे च गृहलक्ष्मीश्च मर्त्त्यानां गृहिणां तथा ॥ २६
सर्व्वप्राणिषु द्रव्येषु शोभारूपा मनोहरा ।
प्रीतिरूपा पुण्यवतां प्रभारूपा नृपेषु च ॥ २७
वाणिज्यरूपा वणिजां पापिनां कलहङ्करा ।
दयामयी भक्तमाता भक्तानुग्रहकारिणी ॥ २८
चपले चपला भक्तसम्पदो रक्षणाय च ।
जगज्जीवन्मृतं सर्व्वं यया देव्या विना मुने ॥ २९

शक्तिर्द्वितीया कथिता वेदोक्ता सर्व्वसम्मता।
सर्व्वपूज्या सर्व्ववन्द्या चान्यां मत्तो निशामय ॥ ३०
वाग्बुद्धिविद्याज्ञानाधिदेवता परमात्मनः।
सर्व्वविद्यास्वरूपा या सा च देवी सरस्वती ॥ ३१
सुबुद्धिः-कविता-मेधा-प्रतिभा-स्मृतिदा सताम्।
नानाप्रकारसिद्धान्तभेदार्थकल्पनाप्रदा ॥ ३२
व्याख्या बोधस्वरूपा च सर्व्वसन्देहभञ्जिनी।
विचारकारिणी ग्रन्थकारिणी शक्तिरूपिणी ॥ ३३
सर्व्वसङ्गीतसन्धानतालकारणरूपिणी।
विषयज्ञानवाग्रूपा प्रतिविश्वेषु जीविनाम् ॥ ३४
व्याख्यामुद्राकरा शान्ता वीणापुस्तकधारिणी।
शुद्धसत्त्वस्वरूपा या सुशीला श्रीहरिप्रिया ॥ ३५
हिमचन्दनकुन्देन्दुकुमुदाम्भोजसन्निभा।
जपन्ती परमात्मानं श्रीकृष्णं रत्नमालया ॥ ३६
तपःस्वरूपा तपसां फलदात्री तपस्विनी।
सिद्धविद्यास्वरूपा च सर्व्वसिद्धिप्रदा सदा ॥ ३७
देवी तृतीया गदिता श्रीयुक्ता जगदम्बिका।
यथागमं यथाकिञ्चिदपरां सन्निबोध मे ॥ ३८
माता चतुर्णां वेदानां वेदाङ्गानाञ्च छन्दसाम्।
सन्ध्यावन्दनमन्त्राणां तन्त्राणाञ्च विचक्षणा ॥ ३९
द्विजातिजातिरूपा च जपरूपा तपस्विनी।
ब्राह्मतेजोमयी शक्तिस्तदधिष्ठातृदेवता ॥ ४०
यत्पादरजसा पूतं जगत् सर्व्वञ्च नारद।
देवी चतुर्थी कथिता पञ्चमीं वर्णयामि ते ॥ ४१
प्रेमप्राणाधिदेवी या पञ्चप्राणस्वरूपिणी।
प्राणाधिकप्रियतमा सर्व्वाद्या सुन्दरी वरा ॥ ४२
सर्व्वसौभाग्ययुक्ता च मानिनी गौरवान्विता।
वामार्द्धाङ्गस्वरूपा च गुणेन तेजसा समा ॥ ४३
परावरा सर्व्वभूता परमाद्या सनातनी।
परमानन्दरूपा च धन्या मान्या च पूजिता ॥ ४४
रासक्रीड़ाधिदेवी च कृष्णस्य परमात्मनः।
रासमण्डलसंभूता रासमण्डलमण्डिता ॥ ४५
रासेश्वरी सुरसिका रासवासनिवासिनी।
गोलोकवासिनी देवी गोपीवेशविधायिका ॥ ४६
परमाह्लादरूपा च सन्तोषहर्षरूपिणी।
निर्गुणा च निराकारा निर्लिप्तात्मस्वरूपिणी ॥ ४७
निरीहा निरहङ्कारा भक्तानुग्रहविग्रहा।
वेदानुसारध्यानेन विज्ञाता सा विचक्षणैः ॥ ४८
दृष्टिदृष्टा न सर्व्वेशैः सुरेन्द्रैर्मुनिपुङ्गवैः।
वह्निशुद्धांशुकाधाना रत्नालङ्कारभूषिता ॥ ४९
कोटिचन्द्रप्रभामुष्ट-श्रीयुक्तभक्तविग्रहा।
श्रीकृष्णभक्तदास्यैकदात्री च सर्व्वसम्पदाम् ॥ ५०
अवतारे च वाराहे वृकभानुसुता च या।
यत्पादपद्मसंस्पर्शपवित्रा च वसुन्धरा ॥ ५१
ब्रह्मादिभिरदृष्टा या सर्व्वदृष्टा च भारते।
स्त्रीरत्नसारसंभूता कृष्णवक्षःस्थलस्थिता।
तथा घने नवघने लोला सौदामिनी मुने ॥ ५२
षष्टिं वर्षसहस्राणि प्रतप्तं ब्रह्मणा पुरा।
तत्पादपद्मनखरदृष्टये चात्मशुद्धये।
न च दृष्टश्च स्वप्नेऽपि प्रत्यक्षस्यापि का कथा ॥ ५३
तेनैव तपसा दृष्टा भूवि वृन्दावने वने।
कथिता पञ्चमी देवी सा राधा परिकीर्त्तिता ॥ ५४
अंशरूपा कलारूपा कलांशांशसमुद्भवाः।
प्रकृतेः प्रतिविश्वेषु देव्यश्च सर्व्वयोषितः ॥ ५५
परिपूर्णतमाः पञ्चविधा देव्यः प्रकीर्त्तिताः।
या या प्रधानांशरूपा वर्णयामि निशामय ॥ ५६
प्रधानांशस्वरूपा च गङ्गा भुवनपावनी।
विष्णुविग्रहसंभूता द्रवरूपा सनातनी ॥ ५७
पापिपापेध्मदाहाय ज्वलदिन्धनरूपिणी।
दर्शस्पर्शस्नानपानैर्निर्व्वाणपददायिनी ॥ ५८
गोलोकस्थानप्रस्थान-सुसोपानस्वरूपिणी।
पवित्ररूपा तीर्थानां सरिताञ्च परा वरा ॥ ५९
शम्भुमौलिजटामेरु-मुक्तापङ्क्तिस्वरूपिणी।
तपःसम्पादनी सद्यो भारते च तपस्विनाम् ॥ ६०
शङ्खपद्मक्षीरनिभा शुद्धसत्त्वस्वरूपिणी।
निर्म्मला निरहङ्कारा साध्वी नारायणप्रिया ॥ ६१
प्रधानांशस्वरूपा च तुलसी विष्णुकामिनी।
विष्णुभूषणरूपा च विष्णुपादस्थिता सती ॥ ६२
तपःसङ्कल्पपूजादिसद्यःसम्पादनी मुने।
सारभूता च पुष्पाणां पवित्रा पुण्यदा सदा ॥ ६३
दर्शनस्पर्शनाभ्याञ्च सद्योनिर्व्वाणदायिनी।
कलौ कलुषशुष्केध्म-दाहनायाग्निरूपिणी ॥ ६४
यत्पादपद्मसंस्पर्शात् सद्यःपूता वसुन्धरा।
यत्स्पर्शदर्शं वाञ्छन्ति तीर्थानि चात्मशुद्धये ॥ ६५

यया विना च विश्वेषु सर्व्वं कर्म्मातिनिष्फलम्।
मोक्षदा या मुमुक्षूणां कामिनां सर्व्वकामदा ॥ ६६
कल्पवृक्षस्वरूपा च भारते विश्वरूपिणी।
त्राणाय भारतीनाञ्च प्रजानां परदेवता ॥ ६७
प्रधानांशस्वरूपा च मनसा कश्यपात्मजा।
शङ्करप्रियशिष्या च महाज्ञानविशारदा ॥ ६८
नागेश्वरस्यानन्तस्य भगिनी नागपूजिता।
नागेश्वरी नागमाता सुन्दरी नागवाहिनी ॥ ६९
नागेन्द्रगणयुक्ता सा नागभूषणभूषिता।
नागेन्द्रवन्दिता सिद्धयोगिनी नागवासिनी ॥ ७०
विष्णुभक्ता विष्णुरूपा विष्णुपूजापरायणा।
तपःस्वरूपा तपसां फलदात्री तपस्विनी ॥ ७१
दिव्यं त्रिलक्षवर्षञ्च तपस्तप्तं यया हरेः।
तपस्विनीषु पूज्या च तपस्विषु च भारते ॥ ७२
सर्पमन्त्राधिदेवी च ज्वलन्ती ब्रह्मतेजसा।
ब्रह्मस्वरूपा परमा ब्रह्मभावनतत्परा ॥ ७३
जरत्कारुमुनेः पत्नी कृष्णांशस्य पतिव्रता।
आस्तीकस्य मुनेर्माता प्रवरस्य तपस्विनाम् ॥ ७४
प्रधानांशस्वरूपा या देवसेना च नारद।
मातृकासु पूज्यतमा सा च षष्ठी प्रकीर्त्तिता ॥ ७५
शिशूनां प्रतिविश्वेषु प्रतिपालनकारिणी।
तपस्विनी विष्णुभक्ता कार्त्तिकेयस्य कामिनी ॥ ७६
षष्ठांशरूपा प्रकृतेस्तेन षष्ठी प्रकीर्त्तिता।
पुत्त्रपौत्त्रप्रदात्री च धात्री च जगतां सदा ॥ ७७
सुन्दरी युवती रम्या सततं भर्त्तुरन्तिके।
स्थाने शिशूनां परमा वृद्धरूपा च योगिनी ॥ ७८
पूजा द्वादशमासेषु यस्याः षष्ठ्यास्तु सन्ततम्।
पूजा च सूतिकागारेऽपरा षष्ठदिने शिशोः ॥ ७९
एकविंशतिमे चैव पूजा कल्याणहेतुकी।
शश्वन्नियमिता चैषा नित्या काम्याप्यतः परा ॥ ८०
मातृरूपा दयारूपा शश्वद्रक्षणकारिणी।
जले स्थले चान्तरीक्षे शिशूनां स्वप्नगोचरा ॥ ८१
प्रधानांशस्वरूपा या देवी मङ्गलचण्डिका।
प्रकृतेर्मुखसम्भूता सर्व्वमङ्गलदा सदा ॥ ८२
सृष्टौ मङ्गलरूपा च संहारे कोपरूपिणी।
तेन मङ्गलचण्डी सा पण्डितैः परिकीर्त्तिता ॥ ८३
प्रतिमङ्गलवारेषु प्रतिविश्वेषु पूजिता।
पञ्चोपचारैर्भक्त्या च योषिद्भिः परिपूजिता ॥ ८४
पुत्त्रपौत्त्रधनैश्वर्य्ययशोमङ्गलदायिनी।
शोकसन्तापपापार्त्ति-दुःखदारिद्र्यनाशिनी ॥ ८५
परितुष्टा सर्व्ववाञ्छाप्रदात्री सर्व्वयोषिताम्।
रुष्टा क्षणेन संहर्त्तुं शक्ता विश्वं महेश्वरी ॥ ८६
प्रधानांशस्वरूपा च काली कमललोचना।
दुर्गाललाटसम्भूता रणे शुम्भनिशुम्भयोः ॥ ८७
दुर्गार्द्धांशस्वरूपा च गुणेन तेजसा समा।
कोटिसूर्य्यप्रभामुष्ट-पुष्टज्योत्स्नवलविग्रहा ॥ ८८
प्रधानं सर्व्वशक्तीनां वरा बलवती परा।
सर्व्वसिद्धिप्रदा देवी परमा सिद्धयोगिनी ॥ ८९
कृष्णभक्ता कृष्णतुल्या तेजसा विक्रमैर्गुणैः।
कृष्णभावनया शश्वत् कृष्णवर्णा सनातनी ॥ ९०
संहर्त्तुं सर्व्वब्रह्माण्डं शक्ता निःश्वासमात्रतः।
रणं दैत्यैः समं तस्याः क्रीड़या लोकरक्षया ॥ ९१
धर्म्मार्थकाममोक्षांश्च दातुं शक्ता च पूजिता।
ब्रह्मादिभिः स्तूयमाना मुनिभिर्मनुभिर्नरैः ॥ ९२
प्रधानांशस्वरूपा च प्रकृतेश्च वसुन्धरा।
आधारभूता सर्व्वेषां सर्व्वशस्यप्रसूतिका ॥ ९३
रत्नाकरा रत्नगर्भा सर्व्वरत्नाकराश्रया।
प्रजादिभिः प्रजेशैश्च पूजिता वन्दिता सदा ॥ ९४
सर्व्वोपजीव्यरूपा च सर्व्वसम्पद्विधायिनी।
यया विना जगत्सर्व्वं निराधारं चराचरम् ॥ ९५
प्रकृतेश्च कला या यास्ता निबोध मुनीश्वर।
यस्य यस्य च याः पत्न्यस्ताः सर्व्वा वर्णयामि ते ॥ ९६
स्वाहा देवी वह्निपत्नी त्रिषु लोकेषु पूजिता।
यया विना हविर्दत्तं न ग्रहीतुं सुराः क्षमाः ॥ ९७
दक्षिणा यज्ञपत्नी च दीक्षा सर्व्वत्र पूजिता।
यया विना च विश्वेषु सर्व्वं कर्म्म च निष्फलम् ॥ ९८
स्वधा पितृणां पत्नी च मुनिभिर्मनुभिर्नरैः।
पूजिता पितृदानञ्च निष्फलञ्च यया विना ॥ ९९
स्वस्तिदेवी वायुपत्नी प्रतिविश्वेषु पूजिता।
आदानञ्च प्रदानञ्च निष्फलञ्च यया विना ॥ १००
पुष्टिर्गणपतेः पत्नी पूजिता जगतीतले।
यया विना परिक्षीणाः पुमांसो योषितोऽपि च ॥ १०१
अनन्तपत्नी तुष्टिश्च पूजिता वन्दिता सदा।
यया विना न सन्तुष्टः सर्व्वलोकश्च सर्व्वतः ॥ १०२

ईशानपत्नी सम्पत्तिः पूजिता च सुरैर्नरैः।
सर्व्वे लोका दरिद्राश्च विश्वेषु च यया विना ॥ १०३
धृतिः कपिलपत्नी च सर्व्वैः सर्व्वत्र पूजिता।
सर्व्वे लोका अधैर्य्याश्च जगत्सु च यया विना ॥ १०४
यमपत्नी क्षमा साध्वी सुशीला सर्व्वपूजिता।
समुन्मत्ताश्च रुष्टाश्च सर्व्वे लोका यया विना ॥ १०५
क्रीड़ाधिष्ठातृदेवी सा कामपत्नी रतिः सती।
केलिकौतुकहीनाश्च सर्व्वे लोका यथा विना ॥ १०६
सत्यपत्नी सती मुक्तिः पूजिता जगतां प्रिया।
यया विना भवेल्लोको बन्धुतारहितः सदा ॥ १०७
मोहपत्नी दया साध्वी पूजिता च जगत्प्रिया।
सर्व्वे लोकाश्च सर्व्वत्र निष्फलाश्च यया विना ॥ १०८
पुण्यपत्नी प्रतिष्ठा सा पुण्यरूपा च पूजिता।
यया विना जगत् सर्व्वं जीवन्मृतपरं मुने ॥ १०९
सुकर्म्मपत्नी कीर्त्तिश्च धन्या मान्या च पूजिता।
यया विना जगत् सर्व्वं यशोहीनं मृतं यथा ॥ ११०
क्रिया उद्योगपत्नी च पूजिता सर्व्वसम्मता।
यया विना जगत् सर्व्वमुच्छिन्नमिव नारद ॥ १११
अधर्म्मपत्नी मिथ्या सा सर्व्वधूर्त्तैश्च पूजिता।
यया विना जगत् सर्व्वमुच्छिन्नं विधिनिर्म्मितम् ॥११२
सत्ये अदर्शना या च त्रेतायां सूक्ष्मरूपिणी।
अर्द्धावयवरूपा च द्वापरे संवृता हिया ॥ ११३
कलौ महाप्रगल्भा च सर्व्वत्र व्यापिका बलात्।
कपटेन समं भ्रात्रा भ्रमत्येव गृहे गृहे ॥ ११४
शान्तिर्लज्जा च भार्य्ये द्वे सुशीलेऽस्य च पूजिते।
याभ्यां विना जगत् सर्व्वमुन्मत्तमिव नारद ॥ ११५
ज्ञानस्य तिस्रो भार्य्याश्च बुद्धिर्म्मेधा स्मृतिस्तथा।
याभिर्विना जगत् सर्व्वं मूढ़ं मृतसमं सदा ॥११६
मूर्त्तिश्च धर्म्मपत्नी सा कान्तिरूपा मनोहरा।
परमात्मा च विश्वौघा निराधारा यया विना ॥११७
सर्व्वत्र शोभारूपा च लक्ष्मीर्मूर्त्तिमती सती।
श्रीरूपा मूर्त्तिरूपा च मान्या धन्या च पूजिता॥११८
कालाग्निरुद्रपत्नी च निद्रा सा सिद्धयोगिनी।
सर्व्वलोकाः समाच्छन्ना मायायोगेन रात्रिषु ॥११९
कालस्य तिस्रो भार्य्याश्च सन्ध्या रात्रिर्दिनानि च।
याभिर्विना विधाता च संख्यां कर्त्तुं न शक्यते ॥१२०
क्षुत्पिपासे लोभभार्य्ये धन्ये मान्ये च पूजिते।
याभ्यां व्याप्तं जगत् क्षोभयुक्तं चिन्तितमेव च ॥१२१
प्रभा च दाहिका चैव द्वे भार्य्ये तेजसस्तथा।
याभ्यां विना जगत् स्रष्टुं विधाता च न चेश्वरः॥१२२
कालकन्ये मृत्युजरे प्रज्वरस्य प्रिये प्रिये।
याभ्यां जगत् समुच्छन्नं विधात्रा निर्म्मिते विधौ ॥१२३
निद्राकन्या च तन्द्रा सा प्रीतिरन्या सुखप्रिये।
याभ्यां व्याप्तं जगत्सर्व्वं विधिपुत्र विधेर्विधौ॥१२४
वैराग्यस्य च द्वे भार्य्ये श्रद्धा भक्तिश्च पूजिते।
याभ्यां शश्वज्जगत् सर्व्वं जीवन्मुक्तमिदं मुने ॥ १२५
अदितिर्द्देवमाता च सुरभी च गवां प्रसूः।
दितिश्च दैत्यजननी कद्रुश्च विनता दनुः ॥ १२६
उपयुक्ताः सृष्टिविधौ एताश्च प्रकृतेः कलाः।
कलाश्चान्याः सन्ति बह्वयस्तासु काश्चिन्निबोध मे॥१२७
रोहिणी चन्द्रपत्नी च संज्ञा सूर्य्यस्य कामिनी।
शतरूपा मनोर्भार्य्या शचीन्द्रस्य च गेहिनी ॥ १२८
तारा बृहस्पतेर्भार्य्या वशिष्ठस्याप्यरुन्धती।
अहल्या गौतमस्त्री साप्यनसूयात्रिकामिनी ॥ १२९
देवहूतिः कर्द्दमस्य प्रसूतिर्द्दक्षकामिनी।
पितॄणां मानसी कन्या मेनका साम्बिकाप्रसूः॥ १३०
लोपामुद्रा तथाहूतिः कुवेरकामिनी तथा।
वरुणानी यमस्त्री च बलेर्विन्ध्यावलीति च ॥ १३१
कुन्ती च दमयन्ती च यशोदा देवकी सती।
गान्धारी द्रौपदी शैव्या सावित्री सत्यवत्प्रिया ॥१३२
वृकभानुप्रिया साध्वी राधामाता कलावती।
मन्दोदरी च कौशल्या सुभद्रा कैटभी तथा। १३३
रेवती सत्यभामा च कालिन्दी लक्ष्मणा तथा।
जाम्बवती नाग्नजिती मित्रविन्दा तथापरा ॥ १३४
लक्षणा रुक्मिणी सीता स्वयं लक्ष्मीः प्रकीर्त्तिता।
कला योजनगन्धा च व्यासमाता महासती ॥ १३५
वाणपुत्री तथोषा च चित्रलेखा च तत्सखी।
प्रभावती भानुमती तथा मायावती सती ॥ १३६
रेणुका च भृगोर्माता हलिमाता च रोहिणी।
एकानंशा च दुर्गा सा श्रीकृष्णभगिनी सती ॥ १३७
बह्व्यः सन्ति कलाश्चैवं प्रकृतेरेव भारते।
या याश्च ग्रामदेव्यस्ताः सर्व्वाश्च प्रकृतेः कलाः ॥१३८
कलांशांशसमुद्भूताः प्रतिविश्वेषु योषितः।

योषितामपमानेन प्रकृतेश्च पराभवः ॥ १३९
ब्राह्मणी पूजिता येन पतिपुत्त्रवती सती।
प्रकृतिः पूजिता तेन वस्त्रालङ्कारचन्दनैः ॥ १४०
कुमारी चाष्टवर्षीया वस्त्रालङ्कारचन्दनैः।
पूजिता येन विप्रस्य प्रकृतिस्तेन पूजिता ॥ १४१
सर्व्वाः प्रकृतिसम्भूता उत्तमामध्यमाधमाः।
सत्त्वांशाश्चोत्तमा ज्ञेयाः सुशीलाश्च पतिव्रताः ॥ १४२
मध्यमा रजसश्चांशास्ताश्च भोग्याः प्रकीर्त्तिताः।
सुखसम्भोगवत्यश्च स्वकार्य्यैतत्पराः सदा ॥ १४३
अधमास्तमसश्चांशा अज्ञातकुलसम्भवाः।
दुर्म्मुखाः कुलटा धूर्त्ताः स्वतन्त्राः कलहप्रियाः ॥ १४४
पृथिव्यां कुलटा याश्च स्वर्गे चाप्सरसां गणाः।
प्रकृतेस्तमसश्चांशाः पुंश्चल्यः परिकीर्त्तिताः ॥ १४५
एवं निगदितं सर्व्वं प्रकृतेः परिकीर्त्तनम्।
ताः सर्व्वाः पूजिताः पृथ्व्यां पुण्यक्षेत्रे च भारते ॥ १४६
पूजिता सुरथेनादौ दुर्गा दुर्गतिनाशिनी।
द्वितीये रामचन्द्रेण रावणस्य वधार्थिना ॥ १४७
तत्पश्चाज्जगतां माता त्रिषु लोकेषु पूजिता।
जातादौ दक्षपत्न्याञ्च निहन्त्रं दैत्यदानवान् ॥ १४८
ततो देहं परित्यज्य यज्ञे भर्त्तुश्च निन्दया।
जज्ञे हिमवतः पत्न्यां लेभे पशुपतिं पतिम् ॥ १४९
गणेशश्च स्वयं कृष्णः स्कन्दो विष्णुकलोद्भवः।
बभूवतुस्तौ तनयौ पश्चात्तस्याश्च नारद ॥ १५०
लक्ष्मीर्मङ्गलभूपेन प्रथमे परिपूजिता।
त्रिषु लोकेषु तत्पश्चाद् देवतामुनिमानवैः ॥ १५१
सावित्री चापि प्रथमे भक्त्या च परिपूजिता।
तत्पश्चात् त्रिषु लोकेषु देवतामुनिमानवैः ॥ १५२
आदौ सरस्वती देवी ब्रह्मणा परिपूजिता।
तत्पश्चात् त्रिषु लोकेषु देवतामुनिमानवैः ॥ १५३
प्रथमे पूजिता राधा गोलोके रासमण्डले।
पौर्णमास्यां कार्त्तिकस्य कृष्णेन परमात्मना ॥ १५४
गोपिकाभिश्च गोपैश्च बालिकाभिश्च बालकैः।
गवां गणैः सुरगणैस्तत्पश्चान्मायया हरेः ॥ १५५
तदा ब्रह्मादिभिर्देवैर्मुनिभिर्मनुभिस्तथा।
पुष्पधूपादिभिर्भक्त्या पूजिता वन्दिता सदा ॥ १५६
पृथिव्यां प्रथमे देवी सुयज्ञेन च पूजिता।
शङ्करेणोपदिष्टेन पुण्यक्षेत्रे च भारते ॥ १५७
त्रिषु लोकेषु तत्पश्चादाज्ञया परमात्मनः।
पुष्पधूपादिभिर्भक्त्या पूजिता मुनिभिः सुरैः ॥ १५८
कलाया याः समुद्भूताः पूजितास्ताश्च भारते।
पूजिता ग्रामदेवत्यो ग्रामे च नगरे मुने ॥ १५९
एवं ते कथितं सर्व्वं प्रकृतेश्चरितं शुभम्।
यथागमं लक्षणञ्च किं भूयः श्रोतुमिच्छसि ॥ १६०

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे प्रकृतिचरित-सूत्रं नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः।

नारद उवाच।

समासेन श्रुतं सर्व्वं देवीनां चरितं विभो।
विबोधनायाबोधस्य व्यासेन वक्तुमर्हसि ॥ १
सृष्टिराद्या सृष्टिविधौ कथमाविर्ब्बभूव ह।
कथं वा पञ्चधा भूता वद वेदविदां वर ॥ २
भूता या याश्च कलया तया त्रिगुणया भवे।
व्यासेन तासां चरितं श्रोतुमिच्छामि साम्प्रतम् ॥ ३
तासां जन्मानुकथनं ध्यानं पूजाविधिं परम्।
स्तोत्रं कवचमैश्वर्य्यं शौर्य्यं वर्णय मङ्गलम् ॥ ४

श्रीनारायण उवाच।

नित्यात्मा च नभो नित्यं कालो नित्यो दिशो यथा।
विश्वेषां गोलकं नित्यं नित्यो गोलोक एव च ॥ ५
तदेकदेशो वैकुण्ठो लम्बभागः स नित्यकः।
तथैव प्रकृतिर्नित्या ब्रह्मलीना सनातनी ॥ ६
यथाग्नौ दाहिका चन्द्रे पद्मे शोभा प्रभा रवौ।
शश्वद्युक्ता न भिन्ना सा तथा प्रकृतिरात्मनि ॥ ७
विना स्वर्णं स्वर्णकारः कुण्डलं कर्त्तुमक्षमः।
विना मृदा कुलालो हि घटं कर्त्तुं न हीश्वरः ॥ ८
न हि क्षमं तथा ब्रह्म सृष्टिं स्रष्टुं तया विना।
सर्व्वशक्तिस्वरूपा सा तया च शक्तिमान् सदा ॥ ९
ऐश्वर्य्यवचनः शक् च तिः पराक्रमवाचकः।
तत्स्वरूपा तयोर्दात्री या सा शक्तिः प्रकीर्त्तिता ॥ १०
समृद्धिबुद्धिसम्पत्तियशसां वचनो भगः।
तेन शक्तिर्भगवती भगरूपा च सा सदा ॥ ११
तया युक्तः सदात्मा च भगवांस्तेन कथ्यते।
स च स्वेच्छामयः कृष्णः साकारश्च निराकृतिः ॥ १२

तेजोरूपं निराकारं ध्यायन्ते योगिनः सदा।
वदन्ति ते परं ब्रह्म परमात्मानमीश्वरम् ॥१३
अदृष्टं सर्व्वद्रष्टारं सर्व्वज्ञं सर्व्वकारणम्।
सर्व्वदं सर्व्वरूपान्तमरूपं सर्व्वपोषकम् ॥ १४
वैष्णवास्तं न मन्यन्ते तद्भक्ताः सूक्ष्मदर्शिनः।
वदन्तीति कस्य तेजस्ते च तेजस्विनं विना ॥ १५
तेजोमण्डलमध्यस्थं ब्रह्मतेजस्विनं परम्।
स्वेच्छामयं सर्व्वरूपं सर्व्वकारणकारणम् ॥ १६
अतीवसुन्दरं रम्यं विभ्रतं सुमनोहरम्।
किशोरवयसं शान्तं सर्व्वकान्तं परात्परम् ॥ १७
नवीननीरदाभासं रासैकश्यामसुन्दरम्।
शरन्मध्याह्नपद्मस्य शोभामोचनलोचनम् ॥ १८
मुक्तासारविनिन्द्यैक-दन्तपङ्क्तिमनोहरम्।
मयूरपुच्छचूडञ्च मालतीमाल्यमण्डितम् ॥ १९
सुनसं सस्मितं शश्वद्भक्तानुग्रहकारकम्।
ज्वलदग्निविशुद्धैकपीतांशुकसुशोभितम् ॥ २०
द्विभुजं मुरलीहस्तं रत्नभूषणभूषितम्।
सर्व्वाधारञ्च सर्व्वेशं सर्व्वशक्तियुतं विभुम् ॥ २१
सर्व्वैश्वर्य्यप्रदं सर्व्वं स्वतन्त्रं सर्व्वमङ्गलम्।
परिपूर्णतमं सिद्धं सिद्धिदं सिद्धिकारणम् ॥ २२
ध्यायन्ते वैष्णवाः शश्वद्देवरूपं सनातनम्।
जन्ममृत्युजराव्याधिशोकभीतिहरं परम् ॥ २३
ब्रह्मणो वयसा यस्य निमेष उपचर्य्यते।
स चात्मा परमं ब्रह्म कृष्ण इत्यभिधीयते ॥ २४
कृषिस्तद्भक्तिवचनो नश्च तद्दास्यवाचकः।
भक्तिदास्यप्रदाता यः स कृष्णः परिकीर्त्तितः ॥ २५
कृषिश्च सर्व्ववचनो णकारो वीजवाचकः।
सर्व्ववीजं परं ब्रह्म कृष्ण इत्यभिधीयते ॥ २६
असंख्यब्रह्मणां पाते कालोऽतीतेऽपि नारद।
यद्गुणानां नास्ति नाशस्तत्समानो गुणेन च ॥२७
स कृष्णः सर्व्वसृष्ट्यादौ सिसृक्षुरेक एव च।
सृष्ट्युन्मुखस्तदंशेन कालेन प्रेरितः प्रभुः ॥ २८
स्वेच्छामयः स्वेच्छया च द्विधारूपो बभूव ह।
स्त्रीरूपो वामभागांशो दक्षिणांशः पुमान् स्मृतः॥२९
तां ददर्श महाकामी कामाधारः सनातनः।
अतीवकमनीयाञ्च चारुचम्पकसन्निभाम् ॥ ३०
चन्द्रविम्वविनिन्द्यैकनितम्बयुगलां पराम्।
सुचारुकदलीस्तम्वनिन्दितश्रोणिसुन्दरीम् ॥ ३१
श्रीयुक्तश्रीफलाकारस्तनयुग्ममनोरमाम्।
पुष्ट्या युक्तां सुललितां मध्यक्षीणां मनोहराम् ॥३२
अतीव सुन्दरीं शान्तां सस्मितां वक्रलोचनाम्।
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ॥ ३३
शश्वच्चक्षुश्चकोराभ्यां पिवन्तीं सन्ततं मुदा।
कृष्णस्य मुखचन्द्रञ्च चन्द्रकोटिविनिन्दितम् ॥ ३४
कस्तूरीविन्दुभिः सार्द्धमधश्चन्दनविन्दुना।
समं सिन्दूरविन्दुञ्च भालमध्ये च बिभ्रतीम् ॥ ३५
वङ्किमं कवरीभारं मालतीमाल्यभूषितम्।
रत्नेन्द्रसारहारञ्च दधतीं कान्तकामुकीम् ॥ ३६
कोटिचन्द्रप्रभामुष्ट-पुष्टशोभासमन्विताम्।
गमनेन राजहंस-गजखञ्जनगञ्जनीम् ॥ ३७
दृष्टिमात्रं तया सार्द्धं रासेशो रासमण्डले।
रासोल्लासेषु रहसि रासक्रीडां चकार ह ॥ ३८
नानाप्रकारशृङ्गारं शृङ्गारो मूर्त्तिमानिव।
चकार सुखसम्भोगं यावद्वै ब्रह्मणो वयः ॥ ३९
ततः स च परिश्रान्तस्तस्या योनौ जगत्पिता।
चकार वीर्य्याधानञ्च नित्यानन्दः शुभक्षणे ॥ ४०
गात्रतो योषितस्तस्याः सुरतान्ते च सुव्रत।
निःससार श्रमजलं श्रान्तायास्तेजसा हरेः ॥ ४१
महारमणक्लिष्टाया निश्वासश्च बभूव ह।
तदाधारश्रमजलं तत्सर्व्वं विश्वगोलकं ॥ ४२
स च निश्वासवायुश्च सर्व्वाधारो बभूव ह।
निश्वासवायुः सर्व्वेषां जीविनाञ्च भवेषु च ॥ ४३
बभूव मूर्त्तिमद्वायोर्वामाङ्गात् प्राणवल्लभा।
तत्पत्नी सा च तत्पुत्राः प्राणाः पञ्च च जीविनाम् ॥४४
प्राणोऽपानः समानश्चैवोदानो व्यान एव च।
बभूवुरेव तत्पुत्रा अधःप्राणाश्च पञ्च च ॥ ४५
घर्म्मतोयाधिदेवश्च बभूव वरुणो महान्।
तद्वामाङ्गाच्च तत्पत्नी वरुणानी बभूव सा ॥ ४६
अथ सा कृष्णशक्तिश्च कृष्णाद्गर्भं दधार ह।
शतमन्वन्तरं यावज्ज्वलन्ती ब्रह्मतेजसा ॥ ४७
कृष्णप्राणाधिदेवी सा कृष्णप्राणाधिकप्रिया।
कृष्णस्य सङ्गिनी शश्वत् कृष्णवक्षःस्थलस्थिता ॥ ४८
शतमन्वन्तरातीतकालेऽतीतेऽपि सुन्दरी।
सुषाव डिम्बं स्वर्णाभं विश्वाधारालयं परम् ॥४९

दृष्ट्वा डिम्बञ्च सा देवी हृदयेन विदूयता।
उत्ससर्ज्ज च कोपेन ब्रह्माण्डं गोलके जले॥ ५०
दृष्ट्वा कृष्णश्च तत्त्यागं हाहाकारं चकार ह।
शशाप देवीं देवेशस्तत्क्षणञ्च यथोचितम्॥ ५१
यतोऽपत्यं त्वया त्यक्तं कोपशीले सुनिष्ठुरे।
भव त्वमनपत्यापि चाद्य प्रभृति निश्चितम्॥ ५२
या यास्त्वदंशरूपाश्च भविष्यन्ति सुरस्त्रियः।
अनपत्याश्च ताः सर्व्वास्तत्समा नित्ययौवनाः॥५३
एतस्मिन्नन्तरे देवीजिह्वाग्रात् सहसा ततः।
आविर्ब्बभूव कन्यैका शुक्लवर्णा मनोहरा॥ ५४
पीतवस्त्रपरीधाना वीणापुस्तकधारिणी।
रत्नभूषणभूषाढ्या सर्व्वशास्त्राधिदेवता॥ ५५
अथ कालान्तरे सा च द्विधारूपा बभूव ह।
वामार्द्धाङ्गा च कमला दक्षिणार्द्धश्च राधिका॥५६
एतस्मिन्नन्तरे कृष्णो द्विधारूपो बभूव ह।
दक्षिणार्द्धश्च द्विभुजो वामार्द्धश्च चतुर्भुजः॥ ५७
उवाच वाणीं श्रीकृष्णस्त्वमस्य कामिनी भव।
अत्रैव मानिनी राधा नैव भद्रं भविष्यति॥ ५८
एवं लक्षीञ्च प्रददौ तुष्टो नारायणाय च।
स जगाम च वैकुण्ठं ताभ्यां सार्द्धं जगत्पतिः॥ ५९
अनपत्ये च ते द्वे च यतो राधांशसम्भवा।
भूता नारायणाङ्गाच्च पार्षदाश्च चतुर्भुजाः॥ ६०
तेजसा वयसा रूपगुणाभ्याञ्च समा हरेः।
बभूवु कमलाङ्गाच्च दासीकोटाश्च तत्समाः॥ ६१
अथ गोलोकनाथस्य लोम्नां विवरतो मुने।
भूताश्चासंख्यगोपाश्च वयसा तेजसा समाः॥ ६२
रूपेण च गुणेनैव वेशेन विक्रमेण च।
प्राणतुल्यप्रियाः सर्व्वे बभूवुः पार्षदा विभोः॥ ६३
राधाङ्गलोमकूपेभ्यो बभूवुर्गोपकन्यकाः।
राधातुल्याश्च सर्व्वास्ताः राधातुल्यप्रियंवदाः॥६४
रत्नभूषणभूषाढ्याः शश्वत्सुस्थिरयौवनाः।
अनपत्याश्च ताः सर्व्वाः पुंसः शापेन सन्ततम्॥६५
एतस्मिन्नन्तरे विप्र सहसा कृष्णदेहतः।
आविर्ब्बभूव सा दुर्गा विष्णुमाया सनातनी॥ ६६
देवी नारायणीशानी सर्व्वशक्तिस्वरूपिणी।
बुद्ध्यधिष्ठातृदेवी सा कृष्णस्य परमात्मनः॥ ६७
देवीनां वीजरूपा च मूलप्रकृतिरीश्वरी।
परिपूर्णतमा तेजःस्वरूपा त्रिगुणात्मिका॥ ६८
तप्तकाञ्चनवर्णाभा सूर्य्यकोटिसमप्रभा।
ईषद्धास्यप्रसन्नास्या सहस्रभुजसंयुता॥ ६९
नानाशस्त्रास्त्रनिकरं बिभ्रती सा त्रिलोचना।
वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता॥ ७०
यस्याश्चांशांशकलया बभूवुः सर्व्वयोषितः।
सर्व्वे विश्वस्थिता लोका मोहिता मायया यया॥७१
सर्व्वैश्वर्य्यप्रदात्री च कामिनां गृहवासिनाम्।
कृष्णभक्तिप्रदात्री च वैष्णवानाञ्च वैष्णवी॥ ७२
मुमुक्षूणां मोक्षदात्री सुखिनां सुखदायिनी।
स्वर्गेषु स्वर्गलक्ष्मीः सा गृहलक्ष्मीर्गृहेष्वसौ॥ ७३
तपस्विषु तपस्या च श्रीरूपा सा नृपेषु च।
या चाग्नौ दाहिकारूपा प्रभारूपा च भास्करे॥७४
शोभास्वरूपा चन्द्रे च पद्मेषु च सुशोभना।
सर्व्वशक्तिस्वरूपा या श्रीकृष्णे परमात्मनि॥ ७५
यया च शक्तिमानात्मा यया च शक्तिमज्जगत्।
यया विना जगत्सर्व्वं जीवन्मृतमिव स्थितम्॥ ७६
या च संसारवृक्षस्य वीजरूपा सनातनी।
स्थितिरूपा बुद्धिरूपा फलरूपा च नारद॥ ७७
क्षुत् पिपासा दया श्रद्धा निद्रा तन्द्रा क्षमा धृतिः।
शान्तिर्लज्जातुष्टिपुष्टिभ्रान्तिकान्त्यादिरूपिणी॥७८
सा च संस्तूय सर्व्वेशं तत्पुरः समुवास ह।
रत्नसिंहासनं तस्यै प्रददौ राधिकेश्वरः॥ ७९
एतस्मिन्नन्तरे तत्र सस्त्रीकश्च चतुर्मुखः।
पद्मनाभो नाभिपद्मान्निःससार पुमान् मुने॥ ८०
कमण्डलुधरः श्रीमांस्तपस्वी ज्ञानिनां वरः।
चतुर्म्मुखैस्तं तुष्टाव प्रज्वलन् ब्रह्मतेजसा॥ ८१
सुन्दरी सुन्दरीश्रेष्ठा शतचन्द्रसमप्रभा।
वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता॥ ८२
रत्नसिंहासने रम्ये संस्तूय सर्व्वकारणम्।
उवास स्वामिना सार्द्धं कृष्णस्य पुरतो मुदा॥ ८३
एतस्मिन्नन्तरे कृष्णो द्विधारूपो बभूव सः।
वामार्द्धाङ्गो महादेवो दक्षिणो गोपिकापतिः॥८४
शुद्धस्फटिकसङ्काशः शतकोटिरविप्रभः।
त्रिशूलपट्टिशधरो व्याघ्रचर्म्मधरो हरः॥ ८५
तप्तकाञ्चनवर्णाभजटाभारधरः परः।
भस्मभूषणगात्रश्च सस्मितश्चन्द्रशेखरः॥ ८६॥

दिगम्बरो नीलकण्ठः सर्पभूषणभूषितः।
बिभ्रद्दक्षिणहस्तेन रत्नमालां सुसंस्कृताम् ॥ ८७
प्रजपन् पञ्चवक्त्रेण ब्रह्मज्योतिः सनातनम्।
सत्यस्वरूपं श्रीकृष्णं परमात्मानमीश्वरम् ॥ ८८
कारणं कारणानाञ्च सर्व्वमङ्गलमङ्गलम्।
जन्ममृत्युजराव्याधि-शोकभीतिहरं परम् ॥ ८९
संस्तूय मृत्योर्मृत्युं तं जातो मृत्युञ्जयाभिधः।
रत्नसिंहासने रम्ये समुवास हरेः पुरः ॥ ९०

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे देवदेव्युत्पत्ति-र्नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः।

श्रीनारायण उवाच।

अथ डिम्बो जले तिष्ठन् यावद्वै ब्रह्मणो वयः।
ततः स्वकाले सहसा द्विधारूपो बभूव सः ॥ १
तन्मध्ये शिशुरेकश्च शतकोटिरविप्रभः।
क्षणं रोरूयमाणश्च स्तनान्धः पीड़ितः क्षुधा ॥ २
मातृपितृपरित्यक्तो जलमध्ये निराश्रयः।
ब्रह्माण्डासंख्यनाथो(क) यो ददर्शोर्द्धमनाथवत् ॥ ३
स्थूलात्स्थूलतमः सोऽपिनाम्नायोहि(ख) महाविराट्
परमाणुर्यथा सूक्ष्मात्परः स्थूलात्तथाप्यसौ ॥ ४
तेजसां षोड़शांशोऽयं कृष्णस्य परमात्मनः।
आधारोऽसंख्यविश्वानां महाविष्णुश्च प्राकृतः ॥ ५
प्रत्येकं रोमकूपेषु विश्वानि निखिलानि च।
अद्यापि तेषां संख्याञ्च कृष्णो वक्तुं न हि क्षमः ॥ ६
संख्या चेद्रजसामस्ति विश्वानां न कदाचन।
ब्रह्मविष्णुशिवादीनां तथा संख्या न विद्यते ॥ ७
प्रतिविश्वेषु सन्त्येवं ब्रह्मविष्णुशिवादयः।
पातालाद्ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्त्तितम् ॥ ८
तत ऊर्द्ध्वं च वैकुण्ठो ब्रह्माण्डाद्बहिरेव सः।
स च सत्यस्वरूपश्च शश्वन्नारायणो यथा ॥ ९
तदूर्द्ध्वं चैव गोलोकः पञ्चाशत्कोटियोजनात्।
नित्यः सत्यस्वरूपश्च यथा कृष्णस्तथाप्ययम् ॥ १०
सप्तद्वीपमिता पृथ्वी सप्तसागरसंयुता।
जनपञ्चाशदुपद्वीपासंख्यशैलवनान्विता ॥ ११
ऊर्द्ध्वं सप्त स्वर्गलोका ब्रह्मलोकसमन्विताः।
पातालानि च सप्ताधश्चैवं ब्रह्माण्डमेव च ॥ १२
ऊर्द्ध्वं धराया भूर्लोको भुवर्लोकस्ततः परः।
स्वर्लोकस्तु ततः पश्चान्महर्लोकस्ततो जनः ॥ १३
ततः परस्तपोलोकः सत्यलोकस्ततः परः।
ततः परो ब्रह्मलोकस्तप्तकाञ्चननिर्म्मितः ॥ १४
एवं सर्व्वं कृत्रिमञ्च धराभ्यन्तरमेव च।
तद्विनाशे विनाशश्च सर्व्वेषामेव नारद ॥ १५
जलबुद्बुदवत् सर्व्वं विश्वसंघमनित्यकम्।
नित्यौ गोलोकवैकुण्ठौ सत्यौ शश्वदकृत्रिमौ ॥ १६
लोमकूपे च ब्रह्माण्डं प्रत्येकमस्य निश्चितम्।
एषां संख्यां न जानाति कृष्णोऽन्यस्यापि का कथा१७
प्रत्येकं प्रतिब्रह्माण्डे ब्रह्मविष्णुशिवादयः।
तिस्रः कोट्यः सुराणाञ्च संख्या सर्व्वत्र पुत्रक ॥१८
दिगीशाश्चैव दिक्पाला नक्षत्राणि ग्रहादयः।
भुवि वर्णाश्च चत्वारोऽप्यधो नागाश्चराचराः ॥ १९
अथ कालेन स विराडूर्द्ध्वं दृष्ट्वा पुनः पुनः।
डिम्बान्तरञ्च शून्यञ्च न द्वितीयं कथञ्चन ॥ २०
चिन्तामवाप क्षुद्युक्तो रुरोद च पुनः पुनः।
ज्ञानं प्राप्य तदा दध्यौ कृष्णं परमपूरुषम् ॥ २१
ततो ददर्श तत्रैव ब्रह्मज्योतिः सनातनम्।
नवीननीरदश्यामं द्विभुजं पीतवाससम् ॥ २२
सस्मितं मुरलीहस्तं भक्तानुग्रहकारकम्।
जहास बालकस्तुष्टो दृष्ट्वा जनकमीश्वरम् ॥ २३
वरं तस्मै ददौ तुष्टो वरेशः समयोचितम्।
मत्समो ज्ञानयुक्तश्च क्षुत्पिपासाविवर्ज्जितः ॥ २४
ब्रह्माण्डासंख्यनिलयो भव वत्स लयावधि।
निष्कामो निर्भयश्चैव सर्व्वेषां वरदो वरः ॥
जरामृत्युरोगशोक-पीड़ादिपरिवर्ज्जितः ॥ २५
इत्युक्त्वा तद्दक्षकर्णे महामन्त्रं षड़क्षरम्।
त्रिकृत्वः प्रजजापादौ वेदाङ्गमवरं परम् ॥२६
प्रणवादिचतुर्थ्यन्तं कृष्ण इत्यक्षरद्वयम्।
वह्निजायान्तमिष्टञ्च सर्व्वविघ्नहरं परम् ॥ २७
मन्त्रं दत्त्वा तदाहारं कल्पयामास वै प्रभुः।
श्रूयतां तद्ब्रह्मपुत्र निबोध कथयामि ते ॥ २८
प्रतिविश्वे यन्नैवेद्यं ददाति विष्णवे जनः।

(क) ब्रह्माण्डनाथनाथ इति वा पाठः।
(ख) देव इति वा पाठः।

षोड़शांशं विषयिणो विष्णोः पञ्चदशास्य वै ॥ २९
निर्गुणस्यात्मनश्चैव परिपूर्णतमस्य च ।
नैवेद्येन च कृष्णस्य न हि किञ्चित् प्रयोजनम् ॥ ३०
यद्यद्ददाति नैवेद्यं यस्मै देवाय यो जनः ।
स च खादति तत्सर्व्वं लक्ष्मीदृष्ट्या पुनर्भवेत् ॥ ३१
तञ्च मन्त्रं वरं दत्त्वा तमुवाच पुनर्विभुः ।
वरमन्यं किमिष्टं ते तन्मे ब्रूहि ददामि ते ॥ ३२
कृष्णस्य वचनं श्रुत्वा तमुवाच महाविराट् ।
अदन्तो बालकस्तत्र वचनं समयोचितम् ॥ ३३
महाविराडुवाच ।
वरं मे त्वत्पदाम्भोजे भक्तिर्भवतु निश्चला ।
सन्ततं यावदायुर्म्मे क्षणं वा सुचिरञ्च वा ॥ ३४
त्वद्भक्तियुक्तो यो लोके जीवन्मुक्तः स सन्ततम् ।
त्वद्भक्तिहीनो मूर्खश्च जीवन्नपि मृतो हि सः ॥ ३५
किं तज्जपेन तपसा यज्ञेन पूजनेन च ।
व्रतेनैवोपवासेन पुण्येन तीर्थसेवया ॥ ३६
कृष्णभक्तिविहीनस्य मूर्खस्य जीवनं वृथा ।
येनात्मना जीवितश्च तमेव न हि मन्यते ॥ ३७
यावदात्मा शरीरेऽस्ति तावत् स शक्तिसंयुतः ।
पश्चाद्यान्ति गते तस्मिन्नस्वतन्त्राश्च शक्तयः ॥ ३८
स च त्वञ्च महाभाग सर्व्वात्मा प्रकृतेः परः ।
स्वेच्छामयश्च सर्व्वाद्यो ब्रह्मज्योतिः सनातनः ॥ ३९
इत्युक्त्वा बालकस्तत्र विरराम च नारद ।
उवाच कृष्णः प्रत्युक्तिं मधुरां श्रुतिसुन्दरीम् ॥ ४०
श्रीकृष्ण उवाच ।
सुचिरं सुस्थिरं तिष्ठ यथाहं त्वं तथा भव ।
ब्रह्मणोऽसंख्यपाते च पातस्ते न भविष्यति ॥ ४१
अंशेन प्रतिब्रह्माण्डे त्वञ्च पुत्र विराड् भव ।
त्वन्नाभिपद्मे ब्रह्मा च विश्वस्रष्टा भविष्यति ॥ ४२
ललाटे ब्रह्मणश्चैव रुद्राश्चैकादशैव तु ।
शिवांशेन भविष्यन्ति सृष्टिसंहरणाय वै ॥ ४३
कालाग्निरुद्रस्तेष्वेको विश्वसंहारकारकः ।
पाता विष्णुश्च विषयी क्षुद्रांशेन भविष्यति ॥ ४४
मद्भक्तियुक्तः सततं भविष्यसि वरेण मे ।
ध्यानेन कमनीयं मां नित्यं द्रक्ष्यसि निश्चितम् ॥ ४५
मातरं कमनीयाञ्च मम वक्षःस्थलस्थिताम् ।
यामि लोकं तिष्ठ वत्सेत्युक्त्वा सोऽन्तरधीयत ॥ ४६
गत्वा स्वलोकं ब्रह्माणं शङ्करं स उवाच ह ।
स्रष्टारं स्रष्टुमीशञ्च संहर्त्तारञ्च तत्क्षणम् ॥ ४७
श्रीकृष्ण उवाच ।
सृष्टिं स्रष्टुं गच्छ वत्स नाभिपद्मोद्भवो भव ।
महाविराड्लोमकूपे क्षुद्रस्य च विधे शृणु ॥ ४८
गच्छ वत्स महादेव ब्रह्मभालोद्भवो भव ।
अंशेन च महाभाग स्वयञ्च सुचिरं तप ॥ ४९
इत्युक्त्वा जगतां नाथो विरराम विधेः सुत ।
जगाम नत्वा तं ब्रह्मा शिवश्च शिवदायकः ॥ ५०
महाविराड्लोमकूपे ब्रह्माण्डगोलके जले ।
स बभूव विराट् क्षुद्रो विराडंशेन साम्प्रतम् ॥ ५१
श्यामो युवा पीतवासाः शयानो जलतल्पके ।
ईषद्धास्यप्रसन्नास्यो विश्वरूपी जनार्द्दनः ॥ ५२
तन्नाभिकमले ब्रह्मा बभूव कमलोद्भवः ।
सम्भूय पद्मदण्डञ्च बभ्राम युगलक्षकम् ॥ ५३
नान्तं जगाम दण्डस्य पद्मनाभस्य पद्मजः ।
नाभिजस्य च पद्मस्य चिन्तामाप पितामहः ॥ ५४
स्वस्थानं पुनरागत्य दध्यौ कृष्णपदाम्बुजम् ।
ततो ददर्श क्षुद्रं तं ध्यानेन दिव्यचक्षुषा ॥ ५५
शयानं जलतल्पे च ब्रह्माण्डगोलकावृते ।
यल्लोमकूपे ब्रह्माण्डं तञ्च तत्परमीश्वरम् ॥ ५६
श्रीकृष्णञ्चापि गोलोकं गोपगोपीसमन्वितम् ।
तं संस्तूय वरं प्राप ततः सृष्टिं चकार सः ॥ ५७
बभूवुर्ब्रह्मणः पुत्रा मानसाः सनकादयः ।
ततो रुद्राः कपालाच्च शिवांशैकादश स्मृताः ॥ ५८
बभूव पाता विष्णुश्च क्षुद्रस्य वामपार्श्वतः ।
चतुर्भुजश्च भगवान् श्वेतद्वीपनिवासकृत् ॥ ५९
क्षुद्रस्य नाभिपद्मे च ब्रह्मा विश्वं ससर्ज्ज सः ।
स्वर्गं मर्त्त्यञ्च पातालं त्रिलोकं सचराचरम् ॥ ६०
एवं सर्व्वं लोमकूपे विश्वं प्रत्येकमेव च ।
प्रतिविश्वे क्षुद्रविराड्ब्रह्मविष्णुशिवादयः ॥ ६१
इत्येवं कथितं वत्स कृष्णसङ्कीर्त्तनं शुभम् ।
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥ ६२
इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे विश्वनिर्णय-
वर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः।

नारद उवाच।

श्रुतं सर्व्वमपूर्व्वञ्च त्वत्प्रसादात् सुधोपमम्।
अधुना प्रकृतीनाञ्च व्यासं वर्णय पूजनम्॥ १
कस्याः पूजा कृता केन कथं मर्त्त्ये प्रकाशिता।
केन वा पूजिता का वा केन का वा स्तुता मुने॥ २
कवचं स्तोत्रमन्त्रञ्च प्रभावं चरितं शुभम्।
काभिः केभ्यो वरो दत्तस्तन्मे व्याख्यातुमर्हसि॥ ३

नारायण उवाच।

गणेशजननी दुर्गा राधा लक्ष्मीः सरस्वती।
सावित्री च सृष्टिविधौ प्रकृतिः पञ्चधा स्मृता॥ ४
आसां पूजा प्रसिद्धा च प्रभावः परमाद्भुतः।
सुधोपमञ्च चरितं सर्व्वमङ्गलकारणम्॥ ५
प्रकृत्यंशाः कला याश्च तासाञ्च चरितं शुभम्।
सर्व्वं वक्ष्यामि ते ब्रह्मन् सावधानं निशामय॥ ६
काली वसुन्धरा गङ्गा षष्ठी मङ्गलचण्डिका।
तुलसी मनसा निद्रा स्वधा स्वाहा च दक्षिणा॥ ७
संक्षेपमासां चरितं पुण्यदं श्रुतिसुन्दरम्।
जीवकर्म्मविपाकञ्च तच्च वक्ष्यामि सुन्दरम्॥ ८
दुर्गायाश्चैव राधाया विस्तीर्णं चरितं महत्।
तच्च पश्चात् प्रवक्ष्यामि संक्षेपं क्रमतः शृणु॥ ९
आदौ सरस्वतीपूजा श्रीकृष्णेन विनिर्म्मिता।
यत्प्रसादान्मुनिश्रेष्ठ मूर्खो भवति पण्डितः॥ १०
आविर्भूता यदा देवी वक्त्रतः कृष्णयोषितः।
इयेष कृष्णं कामेन कामुकी कामरूपिणी॥ ११
स च विज्ञाय तद्भावं सर्व्वज्ञः सर्व्वमातरम्।
तामुवाच हितं सत्यं परिणामसुखावहम्॥ १२

श्रीकृष्ण उवाच

भज नारायणं साध्वि मदंशञ्च चतुर्भुजम्।
युवानं सुन्दरं सर्व्वगुणयुक्तञ्च मत्समम्॥ १३
कामदं कामिनीनाञ्च तासाञ्च कामपूरकम्।
कोटिकन्दर्पलावण्य-लीलान्यकृतमीश्वरम्॥ १४
कान्ते कान्तञ्च मां कृत्वा यदि स्थातुमिहेच्छसि।
त्वत्तो बलवती राधा न ते भद्रं भविष्यति॥ १५
यो यस्माद्बलवान् सोऽपि ततोऽन्यं रक्षितुं क्षमः।
कथं परान् साधयति यदि स्वयमनीश्वरः॥ १६
सर्व्वेशः सर्व्वशास्ताहं राधां बाधितुमक्षमः।
तेजसा मत्समा सा च रूपेण च गुणेन च॥ १७
प्राणाधिष्ठातृदेवी सा प्राणांस्त्यक्तुञ्च कः क्षमः।
प्राणतोऽपि प्रियः पुत्र केषां वास्ति च कश्चन॥ १८
त्वं भद्रे गच्छ वैकुण्ठं तव भद्रं भविष्यति।
पतिं तमीश्वरं कृत्वा मोदस्व सुचिरं सुखम्॥१९
लोभ-मोह-काम-कोप-मान-हिंसा-विवर्जिता।
तेजसा त्वत्समा लक्ष्मी रूपेण च गुणेन च॥ २०
तया सार्द्धं भव प्रीत्या शश्वत् कालः प्रयास्यति।
गौरवं महदात्तुल्यं करिष्यति पतिर्द्वयोः॥ २१
प्रतिविश्वेषु ते पूजां महतीं दयिते मुदा।
माघस्य शुक्लपञ्चम्यां विद्यारम्भेषु सुन्दरि॥ २२
मानवा मनवो देवा मुनीन्द्राश्च मुमुक्षवः।
सन्तश्च योगिनः सिद्धा नाग-गन्धर्व्व-किन्नराः॥२३
मद्वरेण करिष्यन्ति कल्पे कल्पे लयावधि।
भक्तियुक्ताश्च दत्त्वा चैवोपचारांश्च षोड़श॥ २४
काण्वशाखोक्तविधिना ध्यानेन स्तवनेन च।
जितेन्द्रियाः संयताश्च घटे च पुस्तकेऽपि च॥ २५
कृत्वा सुवर्णगुटिकां गन्धचन्दनचर्च्चिताम्।
कवचं ते ग्रहीष्यन्ति कण्ठे वा दक्षिणे भुजे॥ २६
पठिष्यन्ति च विद्वांसः पूजाकाले च पूजिते।
इत्युक्त्वा पूजयामास तां देवीं सर्व्वपूजितः॥ २७
ततस्तत्पूजनं चक्रुर्ब्रह्मविष्णुमहेश्वराः।
अनन्तश्चापि धर्म्मश्च मुनीन्द्राः सनकादयः॥ २८
सर्व्वे देवाश्च मनवो नृपाश्च मानवादयः।
बभूव पूजिता नित्या सर्व्वलोकैः सरस्वती॥ २९

नारद उवाच।

पूजाविधानं स्तवनं ध्यानं कवचमीप्सितम्।
पूजोपयुक्तं नैवेद्यं पुष्पञ्च चन्दनादिकम्॥ ३०
वद वेदविदां श्रेष्ठ श्रोतुं कौतूहलं मम।
वर्द्धते साम्प्रतं शश्वत् किमिदं श्रुतिसुन्दरम्॥ ३१

नारायण उवाच।

शृणु नारद वक्ष्यामि काण्वशाखोक्तपद्धतिम्।
जगन्मातुः सरस्वत्याः पूजाविधिसमन्विताम्॥ ३२
माघस्य शुक्लपञ्चम्यां विद्यारम्भदिनेऽपि च।
पूर्व्वेऽह्नि संयमं कृत्वा तत्राह्नि संयतः शुचिः॥ ३३
स्नात्वा नित्यक्रियां कृत्वा घटं संस्थाप्य भक्तितः।
संपूज्य देवषट्कञ्च नैवेद्यादिभिरेव च॥ ३४

गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्।
संपूज्य संयतोऽग्रे च ततोऽभीष्टं प्रपूजयेत्॥ ३५
ध्यानेन वक्ष्यमाणेन ध्यात्वावाह्य घटे बुधः।
ध्यात्वा पुनः षोड़शोपचारेण पूजयेद्व्रती॥ ३६
पूजोपयुक्तनैवेद्यं यद्यद्वेदे निरूपितम्।
वक्ष्यामि साम्प्रतं किञ्चिद्यथाधीतं यथागमम्॥३७
नवनीतं दधि क्षीरं लाजांश्च तिललड्डुकम्।
इक्षुमिक्षुरसं शुक्लवर्णपक्वगुड़ं मधु॥ ३८
स्वस्तिकं शर्करां शुक्लधान्यस्याक्षतमक्षतम्।
अस्विन्नशुक्लधान्यस्य पृथुकं शुक्लमोदकम्॥ ३९
घृतसैन्धवसंस्कारैर्हविष्यान्नञ्च व्यञ्जनैः।
यवगोधूमचूर्णानां पिष्टकं घृतसंस्कृतम्॥ ४०
पिष्टकं स्वस्तिकस्यापि पक्वरम्भाफलस्य च।
परमान्नञ्च सघृतं मिष्टान्नञ्च सुधोपमम्॥ ४१
नारिकेलं तदुदकं केशरं मूलमार्द्रकम्।
पक्वरम्भाफलं चारु श्रीफलं वदरीफलम्॥ ४२
कालदेशोद्भवं पक्वफलं शुक्लं सुसंस्कृतम्।
सुगन्धि शुक्लपुष्पञ्च सुगन्धि शुक्लचन्दनम्॥ ४३
नवीनशुक्लवस्त्रञ्च शङ्खञ्च सुमनोहरम्।
माल्यञ्च शुक्लपुष्पाणां शुक्लहारञ्च भूषणम्॥ ४४
यद्दृष्टञ्च श्रुतौ ध्यानं प्रशस्यं श्रुतिसुन्दरम्।
तन्निबोध महाभाग भ्रमभञ्जनकारणम्॥ ४५
सरस्वतीं शुक्लवर्णां सस्मितां सुमनोहराम्।
कोटिचन्द्रप्रभामुष्टपुष्टश्रीयुक्तविग्रहाम्॥ ४६
वह्निशुद्धांशुकाधानां सस्मितां सुमनोहराम्।
रत्नसारेन्द्रनिर्म्माण-वरभूषणभूषिताम्॥ ४७
सुपूजितां सुरगणैर्ब्रह्मविष्णुशिवादिभिः।
वन्दे भक्त्या वन्दितां तां मुनीन्द्रमनुमानवैः॥४८
एवं ध्यात्वा च मूलेन सर्व्वं दत्त्वा विचक्षणः।
संस्तूय कवचं धृत्वा प्रणमेद्दण्डवद्भुवि॥ ४९
येषामियमिष्टदेवी तेषां नित्यक्रिया मुने।
विद्यारम्भे च सर्व्वेषां वर्षान्ते पञ्चमीदिने॥५०
सर्व्वोपयुक्तो मूलश्च वैदिकाष्टाक्षरः परः।
येषां येनोपदेशो वा तेषां मूलः स एव च॥ ५१
सरस्वतीचतुर्थ्यन्तो वह्निजायान्त एव च।
लक्ष्मीमायादिकश्चैवं मन्त्रोऽयं कल्पपादपः॥ ५२
पुरा नारायणश्चेमं वाल्मीकाय कृपानिधिः।

प्रददौ जाह्नवीतीरे पुण्यक्षेत्रे च भारते॥ ५३
भृगुर्ददौ च शुक्राय पुष्करे सूर्य्यपर्व्वणि।
चन्द्रपर्व्वणि मारीचो ददौ वाक्पतये मुदा॥ ५४
भृगवे च ददौ तुष्टो ब्रह्मा वदरिकाश्रमे।
आस्तीकाय जरत्कारुर्ददौ क्षीरोदसन्निधौ।
विभाण्डको ददौ मेरौ ऋष्यशृङ्गाय धीमते॥ ५५
शिवः कणादमुनये गौतमाय ददौ मुने।
सूर्य्यश्च याज्ञवल्क्याय तथा कात्यायनाय च॥ ५६
शेषः पाणिनये चैव भरद्वाजाय धीमते।
ददौ शाकटायनाय सुतले बलिसंसदि॥ ५७
चतुर्लक्षजपेनैव मन्त्रः सिद्धो भवेन्नृणाम्।
यदि स्यात् सिद्धमन्त्रो हि वृहस्पतिसमो भवेत्॥५८
कवचं शृणु विप्रेन्द्र यद्दत्तं विधिना पुरा।
विश्वश्रेष्ठं विश्वजयं भृगवे गन्धमादने॥ ५९

भृगुरुवाच।

ब्रह्मन् ब्रह्मविदां श्रेष्ठ ब्रह्मज्ञानविशारद।
सर्व्वज्ञ सर्व्वजनक सर्व्वेश सर्व्वपूजित॥ ६०
सरस्वत्याश्च कवचं ब्रूहि विश्वजयं प्रभो।
अयातयाममन्त्राणां समूहसंयुतं परम्॥ ६१

ब्रह्मोवाच।

शृणु वत्स प्रवक्ष्यामि कवचं सर्व्वकामदम्।
श्रुतिसारं श्रुतिसुखं श्रुत्युक्तं श्रुतिपूजितम्॥ ६२
उक्तं कृष्णेन गोलोके मह्यं वृन्दावने वने।
रासेश्वरेण विभुना रासेन रासमण्डले॥ ६३
अतीव गोपनीयञ्च कल्पवृक्षसमं परम्।
अश्रुताद्भुतमन्त्राणां समूहैश्च समन्वितम्॥ ६४
यद्धृत्वा पठनाद्ब्रह्मन् बुद्धिमांश्च वृहस्पतिः।
यद्धृत्वा भगवान् शुक्रः सर्व्वदैत्येषु पूजितः॥ ६५
पठनाद्धारणाद्वाग्मी कवीन्द्रो वाल्मिकी मुनिः।
स्वायम्भुवो मनुश्चैव यद्धृत्वा सर्व्वपूजितः॥ ६६
कणादो गौतमः कण्वः पाणिनिः शाकटायनः।
ग्रन्थं चकार यद्धृत्वा दक्षः कात्यायनः स्वयम्॥६७
धृत्वा वेदविभागञ्च पुराणान्यखिलानि च।
चकार लीलामात्रेण कृष्णद्वैपायनः स्वयम्॥ ६८
शातातपश्च सम्वर्त्तो वशिष्ठश्च पराशरः।
यद्धृत्वा पठनाद्ग्रन्थं याज्ञवल्क्यश्चकार सः॥ ६९
ऋष्यशृङ्गो भरद्वाजश्चास्तीको देवलस्तथा।

जैगीषव्योऽथ जावालिर्यद्दत्वा सर्व्वपूजितः ॥ ७०
कवचस्यास्य विप्रेन्द्र ऋषिरेष प्रजापतिः ।
स्वयं छन्दश्च वृहती देवो रासेश्वरः प्रभुः ॥ ७१
सर्व्वतत्त्वपरिज्ञान-सर्व्वार्थसाधनेषु च ।
कवितासु च सर्व्वासु विनियोगः प्रकीर्त्तितः ॥ ७२
ओं ह्रीं सरस्वत्यै स्वाहा शिरो मे पातु सर्व्वतः ।
श्रीं वाग्देवतायै स्वाहा भालं मे सर्व्वदाऽवतु ॥७३
ओं सरस्वत्यै स्वाहेति श्रोत्रं पातु निरन्तरम् ।
ओं श्रीं ह्रीं भारत्यै स्वाहा नेत्रयुग्मं सदाऽवतु ॥७४
ऐं ह्रीं वाग्वादिन्यै स्वाहा नासां मे सर्व्वतोऽवतु ।
ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा ओष्ठं सदाऽवतु ॥७५
ओं श्रीं ह्रीं ब्राह्म्यै स्वाहेति दन्तपंक्तीः सदाऽवतु ।
ऐं इत्येकाक्षरो मन्त्रो मम कण्ठं सदाऽवतु ॥ ७६
ओं ह्रीं ह्रीं पातु मे ग्रीवां स्कन्धं मे श्रीं सदाऽवतु ।
श्रीं विद्याधिष्ठातृदेव्यै स्वाहा वक्षः सदाऽवतु ॥ ७७
ओं ह्रीं विद्यास्वरूपायै स्वाहा मे पातु नाभिकाम् ।
ओं ह्रीं ह्रीं वाण्यै स्वाहेति मम पृष्ठं सदाऽवतु ॥७८
ओं सर्व्ववर्णात्मिकायै पादयुग्मं सदाऽवतु ।
ओं रागाधिष्ठातृदेव्यै सर्व्वाङ्गं मे सदाऽवतु ॥ ७९
ओं सर्व्वकण्ठवासिन्यै स्वाहा प्राच्यां सदाऽवतु ।
ओं ह्रीं जिह्वाग्रवासिन्यै स्वाहाग्निदिशि रक्षतु॥८०
ओं ऐं ह्रीं श्रीं सरस्वत्यै बुधजनन्यै स्वाहा ।
सततं मन्त्रराजोऽयं दक्षिणे मां सदाऽवतु ॥ ८१
ओं ह्रीं श्रीं त्र्यक्षरो मन्त्रो नैर्‌ऋत्यां मे सदाऽवतु ।
कविजिह्वाग्रवासिन्यै स्वाहा मां वारुणेऽवतु ॥ ८२
ओं सदाम्बिकायै स्वाहा वायव्ये मां सदाऽवतु ।
ओं गद्यपद्यवासिन्यै स्वाहा मामुत्तरेऽवतु ॥ ८३
ओं सर्व्वशास्त्रवासिन्यै स्वाहैशान्यां सदाऽवतु ।
ओं ह्रीं सर्व्वपूजितायै स्वाहा चोर्द्ध्वं सदाऽवतु ॥८४
ऐं ह्रीं पुस्तकवासिन्यै स्वाहाऽधो मां सदाऽवतु ।
ओं ग्रन्थवीजरूपायै स्वाहा मां सर्व्वतोऽवतु ॥ ८५
इति ते कथितं विप्र सर्व्वमन्त्रौघविग्रहम् ।
इदं विश्वजयं नाम कवचं ब्रह्मरूपकम् ॥ ८६
पुरा श्रुतं धर्म्मवक्त्रात् पर्व्वते गन्धमादने ।
तव स्नेहान्मयाख्यातं प्रवक्तव्यं न कस्यचित् ॥८७
गुरुमभ्यर्च्च विधिवद्वस्त्रालङ्कारचन्दनैः ।
प्रणम्य दण्डवद्भूमौ कवचं धारयेत् सुधीः ॥८८
पञ्चलक्षजपेनैव सिद्धन्तु कवचं भवेत् ।
यदि स्यात् सिद्धकवचो वृहस्पतिसमो भवेत् ॥ ८९
महावाग्मी कवीन्द्रश्च त्रैलोक्यविजयी भवेत् ।
शक्नोति सर्व्वं जेतुं स कवचस्य प्रसादतः ॥ ९०
इदं ते काण्वशाखोक्तं कथितं कवचं मुने ।
स्तोत्रं पूजाविधानञ्च ध्यानञ्च वन्दनं तथा ॥ ९१

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे सरस्वतीकवचं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

नारायण उवाच ।

वाग्देवतायाः स्तवनं श्रूयतां सर्व्वकामदम् ।
महामुनिर्याज्ञवल्क्यो येन तुष्टाव तां पुरा ॥ १
गुरुशापाच्च स मुनिर्हतविद्यो बभूव ह ।
तदा जगाम दुःखार्त्तो रविस्थानञ्च पुण्यदम् ॥ २
संप्राप्य तपसा सूर्य्यं कोणार्के दृष्टिगोचरे ।
तुष्टाव सूर्य्यं शोकेन रुरोद च पुनः पुनः ॥ ३
सूर्य्यस्तं पाठयामास वेदवेदाङ्गमीश्वरः ।
उवाच स्तुहि वाग्देवीं भक्त्या च स्मृतिहेतवे ॥४
तमित्युक्त्वा दिननाथोऽप्यन्तर्द्धानं चकार सः ।
मुनिः स्नात्वा च तुष्टाव भक्तिनम्रात्मकन्धरः ॥ ५

याज्ञवल्क्य उवाच ।

कृपां कुरु जगन्मातर्मामेव हततेजसम् ।
गुरुशापात् स्मृतिभ्रष्टं विद्याहीनञ्च दुःखितम् ॥ ६
ज्ञानं देहि स्मृतिं देहि विद्यां विद्याधिदेवते ।
प्रतिष्ठां कवितां देहि शक्तिं शिष्यप्रबोधिकाम् ॥७
ग्रन्थकर्त्तृत्वशक्तिञ्च सच्छिष्यं सुप्रतिष्ठितम् ।
प्रतिभां सत्सभायाञ्च विचारक्षमतां शुभाम् ।
लुप्तं सर्व्वं दैववशात् नवीभूतं पुनः कुरु ॥ ८
यथाङ्कुरं भस्मनि च करोति देवता पुनः ।
ब्रह्मस्वरूपा परमा ज्योतीरूपा सनातनी ॥ ९
सर्व्वविद्याधिदेवी या तस्यै वाण्यै नमो नमः ।
यया विना जगत्सर्व्वं शश्वज्जीवन्मृतं सदा ॥ १०
ज्ञानाधिदेवी या तस्यै सरस्वत्यै नमो नमः ।
यया विना जगत् सर्व्वं मूकमुन्मत्तवत् सदा ॥ ११

वागधिष्ठातृदेवी या तस्यै वाण्यै नमो नमः।
हिमचन्दनकुन्देन्दु-कुमुदाम्भोजसन्निभा॥ १२
वर्णाधिदेवी या तस्यै चाक्षरायै नमो नमः।
विसर्गविन्दुमात्रासु यदधिष्ठानमेव च॥ १३
तदधिदेवी या तस्यै भारत्यै च नमो नमः।
यया विनाऽत्र संख्याकृत् संख्यां कर्त्तुं न शक्यते॥ १४
कालसंख्यास्वरूपा या तस्यै देव्यै नमो नमः।
व्याख्यास्वरूपा या देवी व्याख्याधिष्ठातृदेवता॥१५
भ्रमसिद्धान्तरूपा या तस्यै देव्यै नमो नमः।
स्मृतिशक्तिर्ज्ञानशक्तिर्बुद्धिशक्तिस्वरूपिणी॥ १६
प्रतिभा कल्पनाशक्तिर्या च तस्यै नमो नमः।
सनत्कुमारो ब्रह्माणं ज्ञानं पप्रच्छ यत्र वै॥ १७
बभूव जड़वत् सोऽपि सिद्धान्तं कर्त्तुमक्षमः।
तदा जगाम भगवानात्मा श्रीकृष्ण ईश्वरः॥ १८
उवाच सततं स्तौहि वाणीमिति प्रजापतिम्।
स च तुष्टाव तां ब्रह्मा चाज्ञया परमात्मनः॥ १९
चकार तत्प्रसादेन तदा सिद्धान्तमुत्तमम्।
यदाप्यनन्तं पप्रच्छ ज्ञानमेकं वसुन्धरा॥ २०
बभूव मूकवत् सोऽपि सिद्धान्तं कर्त्तुमक्षमः।
तदा त्वाञ्च स तुष्टाव सन्त्रस्तः कश्यपाज्ञया॥ २१
ततश्चकार सिद्धान्तं निर्म्मलं भ्रमभञ्जनम्।
व्यासः पुराणसूत्रञ्च पप्रच्छ वाल्मिकं यदा॥ २२
मौनीभूतः स सस्मार त्वामेव जगदम्बिकाम्।
तदा चकार सिद्धान्तं त्वद्वरेण मुनीश्वरः॥ २३
संप्राप निर्म्मलं ज्ञानं प्रमाद-ध्वंसकारणम्।
पुराणसूत्रं श्रुत्वा स व्यासः कृष्णकलोद्भवः॥ २४
त्वां सिषेवे स दध्यौ च शतवर्षञ्च पुष्करे।
तदा त्वत्तो वरं प्राप्य स कवीन्द्रो बभूव ह॥ २५
तदा वेदविभागञ्च पुराणञ्च चकार ह।
यदा महेन्द्रः पप्रच्छ तत्त्वज्ञानं शिवाशिवम्॥ २६
क्षणं त्वामेव संचिन्त्य तस्मै ज्ञानं ददौ विभुः।
पप्रच्छ शब्दशास्त्रञ्च महेन्द्रश्च बृहस्पतिम्॥ २७
दिव्यं-वर्षसहस्रञ्च स त्वां दध्यौ च पुष्करे।
तदा त्वत्तो वरं प्राप्य दिव्यं वर्षसहस्रकम्॥ २८
उवाच शब्दशास्त्रञ्च तदर्थञ्च सुरेश्वरम्।
अध्यापिताश्च यैः शिष्या यैरधीतं मुनीश्वरैः॥ २९
ते च त्वां परिसंचिन्त्य प्रवर्त्तन्ते सुरेश्वरि।
त्वं संस्तुता पूजिता च मुनीन्द्रमनुमानवैः॥ ३०
दैत्येन्द्रैश्च सुरैश्चापि ब्रह्मविष्णुशिवादिभिः।
जड़ीभूतः सहस्रास्यः पञ्चवक्त्रश्चतुर्म्मुखः॥ ३१
यां स्तोतुं किमहं स्तौमि तामेकास्येन मानवः।
इत्युक्त्वा याज्ञवल्क्यश्च भक्तिनम्रात्मकन्धरः॥ ३२
प्रणनाम निराहारो रुरोद च मुहुर्म्मुहुः।
तदा ज्योतिःस्वरूपा सा तेनादृष्टाप्युवाच तम्॥३३
सुकवीन्द्रो भवेत्युक्त्वा वैकुण्ठञ्च जगाम च।
याज्ञवल्क्यकृतं वाणीस्तोत्रं यः संयतः पठेत्॥३४
सुकवीन्द्रो महावाग्मी बृहस्पतिसमो भवेत्।
महामूर्खश्च दुर्म्मेधा वर्षमेकञ्च यः पठेत्।
स पण्डितश्च मेधावी सुकविश्च भवेद्ध्रुवम्॥ ३५

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे याज्ञवल्क्योक्त-
वाणीस्तवः पञ्चमोऽध्यायः॥ ५॥

---

## षष्ठोऽध्यायः।

### नारायण उवाच।

सरस्वती सा वैकुण्ठे स्वयं नारायणान्तिके।
गङ्गाशापेन कलया कलहाद्भारते सरित्॥ १
पुण्यदा पुण्यजननी पुण्यतीर्थस्वरूपिणी।
पुण्यवद्भिर्निषेव्या च स्थितिः पुण्यवतां मुने॥ २
तपस्विनां तपोरूपा तपस्याकाररूपिणी।
कृतपापैकदाहाय ज्वलदग्निस्वरूपिणी॥ ३
ज्ञाने सरस्वतीतोये मृतं यैर्मानवैर्भुवि।
तेषां स्थितिश्च वैकुण्ठे सुचिरं हरिसंसदि॥ ४
भारते कृतपापश्च स्नात्वा तत्रावलीलया।
मुच्यते सर्व्वपापेभ्यो विष्णुलोके वसेच्चिरम्॥ ५
चतुर्द्दश्यां पौर्णमास्यामक्षयायां दिनक्षये।
व्यतीपाते च ग्रहणेऽन्यस्मिन् पुण्यदिनेऽपि च॥ ६
अनुषङ्गेण यः स्नाति हेलयाश्रद्धयापि वा।
सारूप्यं लभते नूनं वैकुण्ठे च हरेरपि॥ ७
सरस्वतीमनुं तत्र मासमेकन्तु यो जपेत्।
महामूर्खः कवीन्द्रश्च स भवेन्नात्र संशयः॥ ८
नित्यं सरस्वतीतोये यः स्नाति मुण्डयेन्नर।
न गर्भवासं कुरुते पुनरेव स मानवः॥ ९

इत्येवं कथितं किञ्चिद्भारतीगुणकीर्त्तनम्।
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥ १०
नारायणवचः श्रुत्वा नारदो मुनिसत्तमः।
पुनः पप्रच्छ सन्देहच्छेदं शौनक सत्वरम् ॥ ११

नारद उवाच।

कथं सरस्वतीदेवी गङ्गाशापेन भारते।
कलया कलहेनैव बभूव पुण्यदा सरित् ॥ १२
श्रवणे श्रुतिसाराणां वर्द्धते कौतुकं मम।
कथामृतानां नो तृप्तिः केन श्रेयसि तृप्यते ॥ १३
कथं शशाप सा गङ्गा पूजितां तां सरस्वतीम्।
शान्ता सत्त्वस्वरूपा च पुण्यदा सर्व्वदा सदा ॥ १४
तेजस्विन्योर्द्वयोर्वादकारणं श्रुतिसुन्दरम्।
सुदुर्लभं पुराणेषु तन्मे व्याख्यातुमर्हसि ॥ १५

नारायण उवाच।

शृणु नारद वक्ष्यामि कथामेतां पुरातनीम्।
यस्याः स्मरणमात्रेण सर्व्वपापात् प्रमुच्यते ॥ १६
लक्ष्मीः सरस्वती गङ्गा तिस्रो भार्य्या हरेरपि।
प्रेम्णा समास्तास्तिष्ठन्ति सततं हरिसन्निधौ ॥१७
चकार सैकदा गङ्गा विष्णोर्मुखनिरीक्षणम्।
सस्मितातिसकामा च सकटाक्षं पुनः पुनः ॥ १८
विभुर्जहास तद्वक्त्रं निरीक्ष्य च क्षणं मुदा।
क्षमां चकार तद्दृष्ट्वा लक्ष्मीर्नैव सरस्वती ॥ १९
बोधयामास तां पद्मा सत्त्वरूपा च सस्मिता।
क्रोधाविष्टा च सा वाणी न च शान्ता बभूव ह ॥२०
उवाच गङ्गां भर्त्तारं रक्तास्या रक्तलोचना।
कम्पिता कोपवेगेन शश्वत्प्रस्फुरिताधरा ॥ २१

सरस्वत्युवाच।

सर्व्वत्र समताबुद्धिः सद्भर्त्तुः कामिनीं प्रति।
धर्म्मिष्ठस्य वरिष्ठस्य विपरीता खलस्य च ॥ २२
ज्ञातं सौभाग्यमधिकं गङ्गायां ते गदाधर।
कमलायाश्च तत्तुल्यं न च किञ्चिन्मयि प्रभो ॥ २३
गङ्गायाः पद्मया सार्द्धं प्रीतिश्चापि सुसम्मता।
क्षमां चकार तेनेदं विपरीतं हरिप्रिया ॥ २४
किं जीवनेन मेऽत्रैव दुर्भगायाश्च साम्प्रतम्।
निष्फलं जीवनं तस्या या पत्युः प्रेमवञ्चिता ॥ २५
त्वां सर्व्वेशं सत्त्वरूपं ये वदन्ति मनीषिणः।
ते च मूर्खा न वेदज्ञा न जानन्ति मतिं तव ॥ २६
सरस्वतीवचः श्रुत्वा दृष्ट्वा तां कोपसंयुताम्।
मनसा स समालोच्य प्रजगाम बहिः सभाम् ॥ २७
गते नारायणे गङ्गामुवाच निर्भयं रुषा।
वागधिष्ठातृदेवी सा वाक्यं श्रवणदुःसहम् ॥ २८
हे निर्लज्जे सकामे त्वं स्वामिगर्व्वं करोषि किम्।
अधिकं स्वामिसौभाग्यं विज्ञापयितुमिच्छसि ॥ २९
मानचूर्णं करिष्यामि तवाद्य हरिसन्निधौ।
किं करिष्यति ते कान्तो ममैव कान्तवल्लभे ॥ ३०
इत्येवमुक्त्वा गङ्गायाः केशं ग्रहीतुमुद्यता।
वारयामास तां पद्मा मध्यदेशस्थिता सती ॥ ३१
शशाप वाणी तां पद्मां महाकोपवती सती।
वृक्षरूपा सरिद्रूपा भविष्यसि न संशयः ॥ ३२
विपरीतं यतो दृष्ट्वा किञ्चिन्न वक्तुमर्हसि।
सन्तिष्ठसि सभामध्ये यथा वृक्षो यथा सरित् ॥ ३३
शापं श्रुत्वा च सा देवी न शशाप चुकोप न।
तत्रैव दुःखिता तस्थौ वाणीं धृत्वा करेण च ॥ ३४
अत्युन्नताञ्च तां दृष्ट्वा कोपप्रस्फुरिताननाम्।
उवाच गङ्गा तां देवीं पद्मां च पद्मलोचना ॥ ३५

गङ्गोवाच।

त्वमुत्सृज महोग्राञ्च पद्मे किं मे करिष्यति।
वाग्दुष्टा वागधिष्ठातृदेवीयं कलहप्रिया ॥ ३६
यावती योग्यतास्याश्च यावती शक्तिरेव वा।
तया करोतु वादञ्च मया सार्द्धं सुदुर्म्मुखा ॥ ३७
स्वबलं यन्मम बलं विज्ञापयितुमिच्छति।
जानन्तु सर्व्वे ह्युभयोः प्रभावं विक्रमं सति ॥ ३८
इत्येवमुक्त्वा सा देवी वाण्यै शापं ददाविति।
सरित्स्वरूपा भवतु सा या त्वाञ्च शशाप ह ॥३९
अधोमर्त्त्यं सा प्रयातु सन्ति यत्रैव पापिनः।
कलौ तेषाञ्च पापांशं लभिष्यति न संशयः ॥ ४०
इत्येवं वचनं श्रुत्वा तां शशाप सरस्वती।
त्वमेव यास्यसि महीं पापिपापं लभिष्यसि ॥ ४१
एतस्मिन्नन्तरे तत्र भगवानाजगाम ह।
चतुर्भुजश्चतुर्भिश्च पार्षदैश्च चतुर्भुजैः ॥ ४२
सरस्वतीं करे धृत्वा वासयामास वक्षसि।
बोधयामास सर्व्वज्ञः सर्व्वज्ञानं पुरातनम् ॥ ४३
श्रुत्वा रहस्यं तासाञ्च शापस्य कलहस्य च।
उवाच दुःखितास्ताश्च वाक्यं सामयिकं विभुः ॥ ४४

श्रीभगवानुवाच।
लक्ष्मीस्त्वं कलया गच्छ धर्म्मध्वजगृहं शुभे।
अयोनिसम्भवा भूमौ तस्य कन्या भविष्यसि॥ ४५
तत्रैव दैवदोषेण वृक्षत्वञ्च लभिष्यसि।
मदंशस्यासुरस्यैव शङ्खचूडस्य कामिनी॥ ४६
भूत्वा पश्चाच्च मत्पत्नी भविष्यसि न संशयः।
त्रैलोक्यपावनी नाम्ना तुलसीति च भारते॥ ४७
कलया च सरिद्भूत्वा शीघ्रं गच्छ वरानने।
भारते भारतीशापान्नाम्ना पद्मावती भव॥ ४८
गङ्गे यास्यसि पश्चात् त्वमंशेन विश्वपावनी।
भारतं भारतीशापात् पापदाहाय देहिनाम्॥४९
भगीरथस्य तपसा तेन नीता सुदुष्करात्।
नाम्ना भागीरथी पूता भविष्यसि महीतले॥ ५०
मदंशस्य समुद्रस्य जाया जाये ममाज्ञया।
मत्कलांशस्य भूपस्य शान्तनोश्च सुरेश्वरि॥ ५१
गङ्गाशापेन कलया भारतं गच्छ भारति।
कलहस्य फलं भुङ्क्ष्व सपत्नीभ्यां सहाच्युते॥ ५२
स्वयञ्च ब्रह्मसदनं ब्रह्मणः कामिनी भव।
गङ्गा यातु शिवस्थानमत्र पद्मैव तिष्ठतु॥ ५३
शान्ता च क्रोधरहिता मद्भक्ता सत्त्वरूपिणी।
महासाध्वी महाभागा सुशीला धर्म्मचारिणी॥५४
यदंशकलया सर्व्वा धर्म्मिष्ठाश्च पतिव्रताः।
शान्तरूपाः सुशीलाश्च प्रतिविश्वेषु योषितः॥ ५५
तिस्रो भार्य्यास्त्रयः शालास्त्रयो भृत्याश्च बान्धवाः।
ध्रुवं वेदविरुद्धाश्च नह्येते मङ्गलप्रदाः॥ ५६
स्त्री पुंवच्च गृहे येषां गृहिणां स्त्रीवशः पुमान्।
निष्फलञ्च जन्म तेषामशुभञ्च पदे पदे॥ ५७
मुखदुष्टा योनिदुष्टा यस्य स्त्री कलहप्रिया।
अरण्यं तेन गन्तव्यं महारण्यं गृहादरम्॥ ५८
जलानाञ्च स्थलानाञ्च फलानां प्राप्तिरेव च।
सततं सुलभा तत्र न तेषां तद्गृहेऽपि च॥ ५९
वरमग्नौ स्थितिर्हिंस्रजन्तूनां सन्निधौ सुखम्।
ततोऽपि दुःखं पुंसाञ्च दुष्टस्त्रीसन्निधौ ध्रुवम्॥ ६०
व्याधिज्वाला विषज्वाला वरं पुंसां वरानने।
दुष्टस्त्रीणां मुखज्वाला मरणादतिरिच्यते॥ ६१
पुंसश्च स्त्रीजितस्यैव जीवितं निष्फलं ध्रुवम्।
यदह्ना कुरुते कर्म्म न तस्य फलभाग्भवेत्॥ ६२
स निन्दितोऽत्र सर्व्वत्र परत्र नरकं व्रजेत्।
यशःकीर्त्तिविहीनो यो जीवन्नपि मृतो हि सः॥६३
बह्वीनाञ्च सपत्नीनां नैकत्र श्रेयसी स्थितिः।
एकभार्य्यः सुखी नैव बहुभार्य्यः कदाचन॥ ६४
गच्छ गङ्गे शिवस्थानं ब्रह्मस्थानं सरस्वति।
अत्र तिष्ठतु मद्गेहे सुशीला कमलालया॥ ६५
सुसाध्वी यस्य पत्नी च सुशीला च पतिव्रता।
इह स्वर्गसुखं तस्य धर्म्ममोक्षौ परत्र च॥ ६६
पतिव्रता यस्य पत्नी स च मुक्तः शुचिः सुखी।
जीवन्मृतोऽशुचिर्दुःखी दुःशीलापतिरेव यः॥ ६७
इत्युक्त्वा जगतां नाथो विरराम च नारद।
अत्युच्चै रुरुदुर्देव्यः समालिङ्ग्य परस्परम्॥ ६८
ताश्च सर्व्वाः समालोच्य क्रमेणोचुः सदीश्वरम्।
कम्पिताः साश्रुनेत्राश्च शोकेन च भयेन च॥ ६९
सरस्वत्युवाच।
विदायं देहि भो नाथ दुष्टां मां जन्मशोधनम्।
सत्स्वामिना परित्यक्ताः कुत्र जीवन्ति काः स्त्रियः॥७०
देहत्यागं करिष्यामि योगेन भारते ध्रुवम्।
अत्युच्छ्रितो निपतनं प्राप्नुमर्हति निश्चितम्॥ ७१
गङ्गोवाच।
अहं केनापराधेन त्वया त्यक्ता जगत्पते।
देहत्यागं करिष्यामि निर्द्दोषाया वधं लभ॥ ७२
निर्द्दोषकामिनीत्यागं करोति यो जनो भवे।
स याति नरकं कल्पं किं ते सर्व्वेश्वरस्य वा॥ ७३
लक्ष्मीरुवाच।
नाथ सत्त्वस्वरूपस्त्वं कोपः कथमहो तव।
प्रसादं कुरु भार्य्याभ्यः सदीशस्य क्षमा वरा॥ ७४
भारतं भारतीशापाद्यास्यामि कलया यदि।
कतिकालं स्थितिस्तत्र कदा द्रक्ष्यामि ते पदम्॥७५
दास्यन्ति पापिनः पापं मह्यं स्नानावगाहनात्।
केन तेन विमुक्ताहमागमिष्यामि ते पदम्॥ ७६
कलया तुलसीरूपा धर्म्मध्वजसुता सती।
भूत्वा कदा लभिष्यामि त्वत्पदाम्बुजमच्युत॥ ७७
वृक्षरूपा भविष्यामि तदधिष्ठातृदेवता।
मामुद्धरिष्यसि कदा तन्मे ब्रूहि कृपानिधे॥ ७८
गङ्गा सरस्वतीशापाद्यदि यास्यति भारतम्।
शापेन मुक्ता पापाच्च कदा त्वां वा लभिष्यति॥७९

गङ्गाशापेन सा वाणी यदि यास्यति भारतम्।
कदा शापाद्विनिर्मुच्य लभिष्यति पदं तव ॥ ८०
तां वाणीं ब्रह्मसदनं गङ्गां वा शिवमन्दिरम्।
गन्तुं वदसि हे नाथ तत् क्षमस्व च ते वचः ॥ ८१
इत्युक्त्वा कमला कान्तपदं धृत्वा ननाम च।
स्वकेशैर्वेष्टयित्वा च रुरोद च पुनः पुनः ॥ ८२
उवाच पद्मनाभस्तां पद्मां कृत्वा स्ववक्षसि।
ईषद्धास्यप्रसन्नास्यो भक्तानुग्रहकातरः ॥ ८३

नारायण उवाच।

त्वद्वाक्यमाचरिष्यामि स्ववाक्यञ्च सुरेश्वरि।
समताञ्च करिष्यामि शृणु तत्क्रममेव च ॥ ८४
भारती यातु कलया सरिद्रूपा च भारतम्।
अर्द्धांशा ब्रह्मसदनं स्वयं तिष्ठतु मद्गृहे ॥ ८५
भगीरथेन नीता सा गङ्गा यास्यति भारतम्।
पूतं कर्त्तुं त्रिभुवनं स्वयं तिष्ठतु मद्गृहे ॥ ८६
तत्रैव चन्द्रमौलेश्च मौलिं प्राप्स्यति दुर्लभम्।
ततः स्वभावतः पूताप्यतिपूता भविष्यति ॥ ८७
कलांशांशेन त्वं गच्छ भारते कमलोद्भवे।
पद्मावतीसरिद्रूपा तुलसीवृक्षरूपिणी ॥ ८८
कलेः पञ्चसहस्रे च गते वर्षे च मोक्षणम्।
युष्माकं सरितां भूयो मद्गृहे चागमिष्यथ ॥ ८९
सम्पदां हेतुभूता च विपत्तिः सर्व्वदेहिनाम्।
विना विपत्तेर्महिमा केषां पद्मे भवेद्भवे ॥ ९०
मन्मन्त्रोपासकानाञ्च सतां स्नानावगाहनात्।
युष्माकं मोक्षणं पापात् पापिदत्ताच्च स्पर्शनात्॥९१
पृथिव्यां यानि तीर्थानि सन्त्यसंख्यानि सुन्दरि।
भविष्यन्ति च पूतानि मद्भक्तस्पर्शदर्शनात् ॥ ९२
मन्मन्त्रोपासका भक्ता भ्रमन्ति भारते सति।
पूतं कर्त्तुं भारतञ्च सुपवित्रा मनोहराः ॥ ९३
मद्भक्ता यत्र तिष्ठन्ति पादं प्रक्षालयन्ति च।
तत्स्थानञ्च महातीर्थं सुपवित्रं भवेद्ध्रुवम् ॥ ९४
स्त्रीघ्नो गोघ्नः कृतघ्नश्च ब्रह्मघ्नो गुरुतल्पगः।
जीवन्मुक्तो भवेत् पूतो मद्भक्तस्पर्शदर्शनात् ॥ ९५
एकादशीविहीनश्च सन्ध्याहीनोऽप्यनास्तिकः।
नरघाती भवेत् पूतो मद्भक्तस्पर्शदर्शनात् ॥ ९६
असिजीवी मसिजीवी धावकः शूद्रयाजकः।
वृषवाही भवेत् पूतो मद्भक्तस्पर्शदर्शनात् ॥ ९७
विश्वासघाती मित्रघ्नो मिथ्यासाक्ष्यप्रदायकः।
स्थाप्यहारी भवेत् पूतो मद्भक्तस्पर्शदर्शनात् ॥ ९८
ऋणग्रस्तो वार्द्धुषिको जारजः पुंश्चलीपतिः।
पूतश्च पुंश्चलीपुत्रो मद्भक्तस्पर्शदर्शनात् ॥ ९९
शूद्राणां सूपकारश्च देवलो ग्रामयाजकः।
अदीक्षितो भवेत् पूतो मद्भक्तस्पर्शदर्शनात् ॥ १००
अश्वत्थघातकश्चैव मद्भक्तनिन्दकस्तथा।
अनिवेद्यभोजी विप्रश्च पूतो मद्भक्तदर्शनात् ॥ १०१
मातरं पितरं भार्य्यां भ्रातरं तनयं सुताम्।
गुरोः कुलञ्च भगिनीं वंशहीनञ्च बान्धवम् ॥ १०२
श्वश्रूञ्च श्वशुरञ्चैव यो न पुष्णाति नारद।
स महापातकी पूतो मद्भक्तस्पर्शदर्शनात् ॥ १०३
देवद्रव्यापहारी च विप्रद्रव्यापहारकः।
लाक्षालोहरसानाञ्च विक्रेता दुहितुस्तथा ॥ १०४
महापातकिनश्चैते शूद्राणां शवदाहकः।
भवेयुरेते पूताश्च मद्भक्तस्पर्शदर्शनात् ॥ १०५

लक्ष्मीरुवाच।

भक्तानां लक्षणं ब्रूहि भक्तानुग्रहकारक।
येषां सन्दर्शनस्पर्शात् सद्यःपूता नराधमाः ॥ १०६
हरिभक्तिविहीनाश्च महाहङ्कारसंयुताः।
स्वप्रशंसारता धूर्त्ताः शठाश्च साधुनिन्दकाः ॥ १०७
पुनन्ति सर्व्वतीर्थानि येषां स्नानावगाहनात्।
येषाञ्च पादरजसा पूता पादोदकान्मही ॥ १०८
येषां सन्दर्शनं स्पर्शं देवा वाञ्छन्ति भारते।
सर्व्वेषां परमो लाभो वैष्णवानां समागमः ॥ १०९
नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः।
ते पुनन्त्युरुकालेन विष्णुभक्ताः क्षणादहो ॥ ११०

सौतिरुवाच।

महालक्ष्मीवचः श्रुत्वा लक्ष्मीकान्तश्च सस्मितः।
निगूढतत्त्वं कथितुमृषिश्रेष्ठोपचक्रमे ॥ १११

नारायण उवाच।

भक्तानां लक्षणं लक्ष्मि गूढं श्रुतिपुराणयोः।
पुण्यस्वरूपं पापघ्नं सुखदं भुक्तिमुक्तिदम् ॥ ११२
सारभूतं गोपनीयं न वक्तव्यं खलेषु च।
त्वां पवित्रां प्राणतुल्यां कथयामि निशामय ॥ ११३
गुरुवक्त्राद्विष्णुमन्त्रं यस्य कर्णे प्रविश्यति।
वदन्ति वेदवेदाङ्गास्तं पवित्रं नरोत्तमम् ॥ ११४

पुरुषाणां शतं पूर्व्वं पूतं तज्जन्ममात्रतः।
स्वर्गस्थं नरकस्थं वा मुक्तिं प्राप्नोति तत्क्षणम् ॥११५
यैः कैश्चिद्यत्र वा जन्म लब्धं येषु च जन्मसु।
जीवन्मुक्तास्ते च पूता यान्ति काले हरेः पदम्॥११६
मद्भक्तियुक्तो मत्पूजानियुक्तो मद्गुणान्वितः।
मद्गुणश्लाघनीयश्च मन्निविष्टश्च सन्ततम् ॥ ११७
मद्गुणश्रुतिमात्रेण सानन्दः पुलकान्वितः।
सगद्गदः साश्रुनेत्रः स्वात्मविस्मृत एव च ॥ ११८
न वाञ्छन्ति सुखं मुक्तिसालोक्यादि चतुष्टयम्।
ब्रह्मत्वममरत्वं वा तद्वाञ्छा मम सेवने ॥ ११९
इन्द्रत्वञ्च मनुत्वञ्च देवत्वञ्च सुदुर्लभम्।
स्वर्गराज्यादिभोगञ्च स्वप्ने च न हि वाञ्छति ॥१२०
ब्रह्मत्वानि विनश्यन्ति देवा ब्रह्मादयस्तथा।
कल्याणभक्तियुक्तश्च मद्भक्तो न प्रणश्यति ॥ १२१
भ्रमन्ति भारते भक्ता लब्ध्वा जन्म सुदुर्लभम्।
तेऽपि यान्ति महीं पूता नरास्तीर्थं ममालयम्१२२
इत्येतत् कथितं सर्व्वं कुरु पद्मे यथोचितम्।
तदाज्ञया तास्तथक्रुर्हरिस्तस्थौ सुखासने ॥ १२३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे सतस्यत्युपाख्यानं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः।

### नारायण उवाच।

सरस्वती पुण्यक्षेत्रमाजगाम च भारतम्।
गङ्गाशापेन कलया स्वयं तस्थौ हरेः पदे ॥ १
भारती भारतं गत्वा ब्राह्मी च ब्रह्मणः प्रिया।
वागधिष्ठातृदेवी सा तेन वाणी च कीर्त्तिता ॥ २
सर्व्वविश्वोपरिव्यापी स्रोतस्येव हि दृश्यते।
हरिः सरःसु तस्येयं तेन नाम्ना सरस्वती ॥ ३
सरस्वती नदीशा च तीर्थरूपातिपावनी।
पापिपापेध्मदाहाय ज्वलदग्निस्वरूपिणी ॥ ४
पश्चाद्भगीरथानीता महीं भागीरथी शुभा।
समाजगाम कलया वाणीशापेन नारद ॥ ५
तत्रैव समये ताञ्च दधार शिरसा शिवः।
वेगं सोढुमशक्ताया भुवः प्रार्थनया विभुः ॥ ६
पद्मा जगाम कलया सा च पद्मावती नदी।
भारतं भारतीशापात् स्वयं तस्थौ हरेः पदे ॥ ७
ततोऽन्यया सा कलया लेभे जन्म भारते।
धर्म्मध्वजसुता लक्ष्मीर्विख्याता तुलसीति च ॥ ८
पुरा सरस्वतीशापात् तत्पश्चाद्धरिशापतः।
बभूव वृक्षरूपा सा कलया विश्वपावनी ॥ ९
कलेः पञ्चसहस्रञ्च वर्षं स्थित्वा च भारते।
जग्मुस्तत्र सरिद्रूपं विहाय श्रीहरेः पदम् ॥ १०
यानि सर्व्वाणि तीर्थानि काशीं वृन्दावनं विना।
यास्यन्ति सार्द्धं ताभिश्च वैकुण्ठमाज्ञया हरेः ॥ ११
शालग्रामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम्।
कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पुरम् ॥ १२
वैष्णवाश्च पुराणानि शङ्खानि श्राद्धतर्पणम्।
वेदोक्तानि च कर्म्माणि ययुस्तैः सार्द्धमेव च ॥ १३
हरिपूजा हरेर्नाम तत्कीर्त्तिगुणकीर्त्तनम्।
वेदाङ्गानि च शास्त्राणि ययुस्तैः सार्द्धमेव च ॥ १४
सत्त्वञ्च सत्यं धर्म्मश्च वेदाश्च ग्राम्यदेवताः।
व्रतं तपस्यानशनं ययुस्तैः सार्द्धमेव च ॥ १५
वामाचाररताः सर्व्वे मिथ्याकापट्यसंयुताः।
तुलसीवर्ज्जिताः पूजा भविष्यन्ति ततः परम् ॥१६
एकादशीविहीनाश्च सर्व्वे धर्म्मविवर्ज्जिताः।
हरिप्रसङ्गविमुखा भविष्यन्ति ततः परम् ॥ १७
शठाः क्रूरा दाम्भिकाश्च महाहङ्कारसंयुताः।
चौराश्च हिंसकाः सर्व्वे भविष्यन्ति ततः परम् ॥१८
पुंसां भेदश्च स्त्रीभेदो विवाहो राशिनिर्णयः।
स्वस्वामिभेदो वस्तूनां न भविष्यति तत्परम् ॥ १९
सर्व्वे जनाः स्त्रीवशाश्च पुंश्चल्यश्च गृहे गृहे।
तर्ज्जनैर्भर्त्सनैः श्वश्रूः स्वामिनं ताडयन्ति च ॥ २०
गृहेश्वरी च गृहिणी गृही भृत्याधिकोऽधमः।
चेटीभृत्यसमौ वध्वाः श्वश्रूश्च श्वशुरस्तथा ॥ २१
कर्त्तारो बलिनो गेहे योनिसम्बन्धबान्धवाः।
विद्यासम्बन्धिभिः सार्द्धं सम्भाषोऽपि न विद्यते ॥ २२
यथापरिचिता लोकास्तथा पुंसश्च बान्धवाः।
सर्व्वकर्म्माक्षमाः पुंसो योषितामाज्ञया विना॥ २३
म्लेच्छशास्त्रं पठिष्यन्ति स्वशास्त्राणि विहाय च।
ब्रह्मक्षत्त्रविशां वंशाः शूद्राणां सेवकाः कलौ ॥ २४
सूपकारा भविष्यन्ति धावका वृषवाहकाः।

नन्यहीना जनाः सर्व्वे शस्यहीना च मेदिनी ॥ २५
फलहीनाश्च तरवोऽपत्यहीनाश्च योषितः।
क्षीरहीनास्तथा गावः क्षीरं सर्पिर्विवर्ज्जितम् ॥२६
दम्पती प्रीतिहीनौ च गृहिणः सुखवर्ज्जिताः।
प्रतापहीना भूपाश्च प्रजाश्च करपीड़िताः ॥ २७
जलहीना नद्यः सद्यो दीर्घिकाः कन्दरादयः।
धर्म्महीनाः पुण्यहीना वर्णाश्चत्वार एव च ॥ २८
लक्षेषु पुण्यवान् कोऽपि न तिष्ठति ततः परम्।
कुत्सिता विकृताकारा नरा नार्य्यश्च बालकाः ॥ २९
कुवार्त्ताः कुत्सिताः शब्दा भविष्यन्ति ततः परम्।
केचिद्ग्रामाश्च नगरा नरशून्या भयानकाः ॥ ३०
केचित् स्वल्पकुटीरेण नरेण च समन्विताः।
अरण्यानि भविष्यन्ति ग्रामेषु नगरेषु च ॥ ३१
अरण्यवासिनः सर्व्वे जनाश्च करपीड़िताः।
शस्यानि च भविष्यन्ति तड़ागेषु नदीषु च ॥ ३२
प्रकृष्टानि च क्षेत्राणि शस्यहीनानि तत्परम्।
हीनाः प्रकृष्टा धनिनो बलदर्पसमन्विताः ॥ ३३
प्रकृष्टवंशजा हीना भविष्यन्ति कलौ युगे।
अलीकवादिनो धूर्त्ताः शठाश्च सत्यवादिनः ॥ ३४
पापिनः पुण्यवन्तश्चाप्यशिष्टः शिष्टमेव च।
जितेन्द्रियं लम्पटाश्च पुंश्चल्यश्च पतिव्रताम् ॥ ३५
तपस्विनः पातकिनो विष्णुभक्तमवैष्णवाः।
अहिंसकं दयायुक्तं चौराश्च नरघातिनः ॥ ३६
भिक्षुवेशधरा धूर्त्ता निन्दन्त्युपहसन्ति च।
भूतादिसेवानिपुणाः जनानां मन्दकारिणः ॥ ३७
पूजितास्ते भविष्यन्ति वञ्चका ज्ञानदुर्ब्बलाः।
वामना व्याधियुक्ताश्च नरा नार्य्यश्च सर्व्वतः ॥ ३८
अल्पायुषो जरायुक्ता यौवनेषु कलौ युगे।
पलिताः षोड़शे वर्षे महान् वृद्धस्तु विंशतौ ॥ ३९
अष्टवर्षा च युवती रजोयुक्ता च गर्भिणी।
वत्सरान्ते प्रसूता स्त्री षोड़शेन जरान्विता ॥ ४०
एताः काश्चित् सहस्रेषु सर्व्वा वन्ध्याः कलौ युगे।
कन्याविक्रयिणः सर्व्वे वर्णाश्चत्वार एव च ॥ ४१
मातृजायावधूनाञ्च जारोपार्ज्जनभक्षकाः।
कन्यानां भगिनीनाञ्च जारोपार्ज्जनजीविनः ॥ ४२
हरेर्नामविक्रयिणो भविष्यन्ति कलौ युगे।
स्वयमुत्सृज्य दानञ्च कीर्त्तिवर्द्धनहेतवे ॥ ४३
तत्पश्चान्मनसालोच्य स्वयमुल्लङ्घयिष्यति।
देववृत्तिं ब्रह्मवृत्तिं वृत्तिं गुरुकुलस्य च ॥ ४४
स्वदत्तां परदत्तां वा सर्व्वमुल्लङ्घयिष्यति।
कन्यकागामिनः केचित् केचिच्च श्वश्रूगामिनः ॥ ४५
केचिद्वधूगामिनश्च केचिच्च सर्व्वगामिनः।
भगिनीगामिनः केचित् सपत्नीमातृगामिनः ॥ ४६
भ्रातृजायागामिनश्च भविष्यन्ति कलौ युगे।
अगम्यागमनञ्चैव करिष्यन्ति गृहे गृहे ॥ ४७
मातृयोनिं परित्यज्य विहरिष्यन्ति सर्व्वतः।
पत्नीनां निर्णयो नास्ति भर्त्तॄणाञ्च कलौ युगे॥ ४८
प्रजानाञ्चैव ग्रामाणां वस्तूनाञ्च विशेषतः।
अलीकवादिनः सर्व्वे सर्व्वे चौराश्च लम्पटाः ॥ ४९
परस्परं हिंसकाश्च सर्व्वे च नरघातिनः।
ब्रह्मक्षत्रविशां वंशा भविष्यन्ति च पापिनः ॥ ५०
लाक्षालौहरसानाञ्च व्यापारं लवणस्य च।
वृषवाहा विप्रवंशा शूद्राणां शवदाहिनः ॥ ५१
शूद्रान्नभोजिनः सर्व्वे सर्व्वे च वृषलीरताः।
पञ्चपर्व्वपरित्यक्ताः कुहूरात्रौ च भोजिनः ॥ ५२
यज्ञसूत्रविहीनाश्च सन्ध्याशौचविहीनकाः।
पुंश्चली वार्द्धुषावीरा कुट्टनी च रजस्वला ॥ ५३
विप्राणां रन्धनागारे भविष्यन्ति च पाचिकाः।
अन्नानां निर्णयो नास्ति योनीनाञ्च विशेषतः ॥५४
आश्रमाणां जनानाञ्च सर्व्वे म्लेच्छाः कलौ युगे॥५५
एवं कलौ संप्रवृत्ते सर्व्वे म्लेच्छमये भवे।
हस्तप्रमाणे वृक्षे चाङ्गुष्ठमाने च मानवे ॥ ५६
विप्रस्य विष्णुयशसः पुत्त्रः कल्की भविष्यति।
नारायणकलांशश्च भगवान् बलिनां बली ॥ ५७
दीर्घेण करवालेन दीर्घघोटकवाहनः।
म्लेच्छशून्याञ्च पृथिवीं त्रिरात्रेण करिष्यति ॥ ५८
निर्म्लेच्छां वसुधां कृत्वा चान्तर्द्धानं करिष्यति।
अराजका च वसुधा दस्युग्रस्ता भविष्यति ॥ ५९
स्थूलप्रमाणां षड्रात्रं वर्षधाराप्लुता मही।
लोकशून्या वृक्षशून्या गृहशून्या भविष्यति ॥ ६०
ततश्च द्वादशादित्याः करिष्यन्त्युदयं मुने।
प्राप्नोति शुष्कतां पृथ्वी समा तेषाञ्च तेजसा ॥ ६१
कलौ गते च दुर्द्धर्षे संप्रवृत्ते कृते युगे।
तपःसत्यसमायुक्तो धर्म्मः पूर्णो भविष्यति ॥६२

तपस्विनश्च धर्म्मिष्ठा वेदज्ञा ब्राह्मणा भुवि ।
पतिव्रताश्च धर्म्मिष्ठा योषितश्च गृहे गृहे ॥ ६३
राजानः क्षत्रियाः सर्व्वे विप्रभक्ता महामुने ।
प्रतापवन्तो धर्म्मिष्ठाः पुण्यकर्म्मरताः सदा ॥ ६४
वैश्या वाणिज्यनिरता विप्रभक्ताश्च धार्म्मिकाः ।
शूद्राश्च पुण्यशीलाश्च धर्म्मिष्ठा विप्रसेविनः ॥ ६५
विप्रक्षत्रविशां वंशा विष्णुयज्ञपरायणाः ।
विष्णुमन्त्ररताः सर्व्वे विष्णुभक्ताश्च वैष्णवाः ॥ ६६
श्रुतिस्मृतिपुराणज्ञा धर्म्मज्ञा ऋतुगामिनः ।
लेशो नास्ति ह्यधर्म्माणां धर्म्मपूर्णे कृते युगे ॥६७
धर्म्मस्त्रिपाच्च त्रेतायां द्विपाच्च द्वापरे स्मृतः ।
कलौ वृत्ते चैकपाच्च सर्व्वलुप्तस्ततः परम् ॥ ६८
वाराः सप्त यथा विप्र तिथयः षोडश स्मृताः ।
यथा द्वादश मासाश्च ऋतवश्च षडेव च ॥ ६९
द्वौ पक्षौ चायने द्वे च चतुर्भिः प्रहरैर्दिनम् ।
चतुर्भिः प्रहरै रात्रिर्मासस्त्रिंशद्दिनैस्तथा ॥ ७०
वर्षैः पञ्चविधो ज्ञेयः कालसंख्याविधिक्रमे ।
यथा चायान्ति यान्त्येव तथा युगचतुष्टयम् ॥ ७१
वर्षे पूर्णे नराणाञ्च देवानाञ्च दिवानिशम् ।
शतत्रये षष्ठ्यधिके नराणाञ्च युगे गते ।
देवानाञ्च युगो ज्ञेयः कालसंख्याविदां मतम् ॥ ७२
मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः ।
मन्वन्तरसमं ज्ञेयञ्चेन्द्रायुः परिकीर्त्तितम् ॥ ७३
अष्टाविंशतिमे चेन्द्रे गते ब्रह्मदिवानिशम् ।
अष्टोत्तरे वर्षशते गते पातश्च ब्रह्मणः ॥ ७४
प्रलयः प्राकृतो ज्ञेयस्तत्रादृष्टा वसुन्धरा ।
जलप्लुतानि विश्वानि ब्रह्मविष्णुशिवादयः ॥ ७५
ऋषयो जीविनः सर्व्वे लीनाः कृष्णे परात्परे ।
तत्रैव प्रकृतिर्लीना तेन प्राकृतिको लयः ॥ ७६
लये प्राकृतिकेऽतीते पाते च ब्रह्मणो मुने ।
निमेषमात्रं कालश्च कृष्णस्य परमात्मनः ॥ ७७
एवं नश्यन्ति सर्व्वाणि ब्रह्माण्डान्यखिलानि च ।
स्थितौ गोलोकवैकुण्ठौ श्रीकृष्णश्च सपार्षदः ॥ ७८
निमेषमात्रं प्रलयं यत्र विश्वं जलप्लुतम् ।
निमेषानन्तरे काले पुनः सृष्टिः क्रमेण च ॥ ७९
एवं कतिविधा सृष्टिर्लयः कतिविधोऽपि वा ।
कतिकृत्वो गतायातः संख्यां जानाति कः पुमान् ॥८०
सृष्टानाञ्च कलानाञ्च ब्रह्माण्डानाञ्च नारद ।
ब्रह्मादीनाञ्च ब्रह्माण्डे संख्यां जानाति कः पुमान् ॥८१
ब्रह्माण्डानाञ्च सर्व्वेषामीश्वरश्चैक एव सः ।
सर्व्वेषां परमात्मा च श्रीकृष्णः प्रकृतेः परः ॥ ८२
ब्रह्मादयश्च तस्यांशास्तस्यांशश्च महान् विराट् ।
तस्यांशश्च विराट् क्षुद्रस्तस्यांशः प्रकृतिः स्मृता ॥ ८३
स च कृष्णो द्विधाभूतो द्विभुजश्च चतुर्भुजः ।
चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम् ॥ ८४
ब्रह्मादितृणपर्य्यन्तं सर्व्वं प्राकृतिकं भवे ।
यद्यत् प्राकृतिकं सृष्टं सर्व्वं नश्वरमेव च ॥ ८५
एवं विद्धि सृष्टिहेतुं सत्यं नित्यं सनातनम् ।
स्वेच्छामयं परं ब्रह्म निर्लिप्तं निर्गुणं परम् ॥ ८६
निरुपाधिं निराकारं भक्तानुग्रहविग्रहम् ।
अतीव कमनीयञ्च नवीननीरदप्रभम् ॥ ८७
द्विभुजं मुरलीहस्तं गोपवेशकिशोरकम् ।
सर्व्वज्ञं सर्व्वसेव्यञ्च परमात्मानमीश्वरम् ॥ ८८
करोति ब्रह्मा ब्रह्माण्डं ज्ञानात्मा कमलोद्भवः ।
शिवो मृत्युञ्जयश्चैव संहर्त्ता सर्व्वतत्त्ववित् ॥ ८९
यस्य ज्ञानाद्यत्तपसा सर्व्वेशस्तत्समो महान् ।
महाविभूतियुक्तश्च सर्व्वज्ञः सर्व्वदा स्वयम् ॥ ९०
सर्व्वव्यापी सर्व्वपाता प्रदाता सर्व्वसम्पदाम् ।
विष्णुः सर्व्वेश्वरः श्रीमान् यस्य ज्ञानाज्जगत्पतिः॥९१
महामाया च प्रकृतिः सर्व्वशक्तिमतीश्वरी ।
यज्ज्ञानाद्यस्य तपसा यद्भक्त्या यस्य सेवया ॥९२
सावित्री वेदमाता च वेदाधिष्ठातृदेवता ।
पूज्या द्विजानां वेदज्ञा यज्ज्ञानाद्यस्य सेवया ९३
सर्व्वविद्याधिदेवी सा पूज्या च विदुषां परा ।
यत्सेवया यत्तपसा यस्य ज्ञानात् सरस्वती ॥९४
यत्सेवया यत्तपसा प्रदात्री सर्व्वसम्पदाम् ।
धनधान्यादिदेवी या महालक्ष्मीः सनातनी ॥९५
यत्सेवया यत्तपसा सर्व्वविश्वेषु पूजिता ।
सर्व्वग्रामाधिदेवी सा सर्व्वसम्पत्प्रदायिनी ॥ ९६
सर्व्वेश्वरी सर्व्ववन्द्या सर्व्वं प्राप पतिं सती ।
सर्व्वस्तुता च सर्व्वज्ञा दुर्गा दुर्गतिनाशिनी ॥ ९७
कृष्णवामांशसम्भूता कृष्णप्राणाधिदेवता ।
कृष्णप्राणाधिका प्रेम्णा राधिका कृष्णसेवया ॥ ९८
सर्व्वाधिकञ्च रूपञ्च सौभाग्यमानगौरवम् ।

कृष्णवक्षःस्थलस्थानं पत्नीत्वं प्राप सेवया ॥ ९९
तपश्चकार सा पूर्व्वं शतशृङ्गे च पर्व्वते।
दिव्यं युगसहस्रञ्च निराहारा कृशा सती ॥ १००
कृशां निश्वासरहितां दृष्ट्वा चन्द्रकलोपमाम्।
कृष्णो वक्षःस्थले कृत्वा रुरोद कृपया विभुः ॥ १०१
वरं तस्यै ददौ सारं सर्व्वेषामपि दुर्लभम्।
मम वक्षःस्थले तिष्ठ मयि ते भक्तिरस्त्विति ॥ १०२
सौभाग्येन च मानेन प्रेम्णा च गौरवेण च।
त्वं मे श्रेष्ठा च प्रेष्ठा च ज्येष्ठा च सर्व्वयोषिताम् १०३
वरिष्ठा च गरिष्ठा च संस्तुता पूजिता मया।
सन्ततं तव साध्योऽहं राधस्व प्राणवल्लभे ॥ १०४
इत्युक्त्वा जगतां नाथश्चकार चेतनां ततः।
सपत्नीरहितां ताञ्च चकार प्राणवल्लभाम् ॥ १०५
अन्या या याश्च देव्यश्च पूजितास्तस्य सेवया।
तपस्या यादृशी यासां तासां तादृक् फलं मुने ॥१०६
दिव्यं वर्षसहस्रञ्च तपस्तप्त्वा हिमालये।
दुर्गा च तत्पदं ध्यात्वा सर्व्वपूज्या बभूव ह ॥१०७
सरस्वती तपस्तप्त्वा पर्व्वते गन्धमादने।
लक्षवर्षञ्च दिव्यञ्च सर्व्ववन्द्या बभूव सा ॥ १०८
लक्ष्मीर्युगशतं दिव्यं तपस्तप्त्वा च पुष्करे।
सर्व्वसम्पत्प्रदात्री च बभूव तस्य सेवया ॥ १०९
सावित्री मलये तप्त्वा द्विजपूज्या बभूव सा।
षष्टिं वर्षसहस्रञ्च दिव्यं ध्यात्वा च तत्पदम् ॥ ११०
शतमन्वन्तरं तप्तं शङ्करेण पुरा विभो।
शतमन्वन्तरञ्चैव ब्रह्मणा तस्य भक्तितः।
शतमन्वन्तरं विष्णुस्तप्त्वा पाता बभूव ह ॥ १११
शतमन्वन्तरं धर्म्मस्तप्त्वा पूज्यो बभूव ह।
मन्वन्तरं तपस्तेपे शेषो भक्त्या च नारद ॥ ११२
मन्वन्तरञ्च सूर्य्यश्च शक्रश्चन्द्रस्तथैव च ॥ ११३
दिव्यं शतयुगञ्चैव वायुस्तप्त्वा च भक्तितः।
सर्व्वप्राणः सर्व्वपूज्यः सर्व्वाधारो बभूव सः ॥ ११४
एवं कृष्णस्य तपसा सर्व्वे देवाश्च पूजिताः।
मुनयो मानवा भूपा ब्राह्मणाश्चैव पूजिताः ॥ ११५
एवं ते कथितं सर्व्वं पुराणञ्च तथागमम्।
गुरुवक्त्राद्यथा ज्ञातं किं भूयः श्रोतुमिच्छसि॥११६
इति श्रीब्रह्मवैवर्त्ते प्रकृतिखण्डे काल-कलीश्वर-
गुणनिरूपणं नाम सप्तमोऽध्यायः ॥ ७॥

## अष्टमोऽध्यायः।

नारद उवाच।

हरेर्निमेषमात्रेण ब्रह्मणः पात एव च।
तस्य पाते प्राकृतिकः प्रलयः परिकीर्त्तितः ॥ १
प्रलये प्राकृते चोक्तं तत्रादृष्टा वसुन्धरा।
जलप्लुतानि विश्वानि सर्व्वे लीना हराविति ॥ २
वसुन्धरा तिरोभूता कुत्र वा तत्र तिष्ठति।
सृष्टेर्विधानसमये साविर्भूता कथं पुनः ॥ ३
कथं बभूव सा धन्या मान्या सर्व्वाश्रया जया।
तस्याश्च जन्मकथनं वद मङ्गलकारणम् ॥ ४

नारायण उवाच।

सर्व्वादिसृष्टौ सर्व्वेषां जन्म कृष्णादिति श्रुतिः।
आविर्भावस्तिरोभावः सर्गेषु प्रलयेषु च ॥ ५
श्रूयतां वसुधाजन्म सर्व्वमङ्गलमङ्गलम्।
विघ्ननिघ्नकरं पापनाशनं पुण्यवर्द्धनम् ॥ ६
अहो केचिद्वदन्तीति मधुकैटभमेदसा।
बभूव वसुधा धन्या तद्विरुद्धमतं शृणु ॥ ७
ऊचतुस्तौ पुरा विष्णुं तुष्टौ युद्धेन तेजसा।
आवां जहि न यत्रोर्व्वी पयसा संवृतेति च ॥ ८
तयोस्सर्व्वी वधकाले प्रत्यक्षा साभवत् स्फुटम्।
ततो बभूव मेदश्च मरणानन्तरं तयोः ॥ ९
मेदिनीति च विख्यातेत्युक्तं यैस्तन्मतं शृणु।
जलधौता कृता पूर्व्वं वर्द्धिता मेदसा यतः ॥ १०
कथयामि च तज्जन्म सार्थकं सर्व्वसम्मतम्।
पुरा श्रुतं यत् श्रुत्युक्तं धर्म्मवक्त्राच्च पुष्करे ॥ ११
महाविराट्शरीरस्य जलस्थस्य चिरं स्फुटम्।
मलो बभूव कालेन सर्व्वाङ्गव्यापको ध्रुवम् ॥ १२
स च प्रविष्टः सर्व्वेषां तल्लोम्नां विवरेषु च।
कालेन महता तस्माद्बभूव वसुधा मुने ॥ १३
प्रत्येकं प्रतिलोम्नाञ्च कूपेषु सा स्थिरा स्थिता।
आविर्भूता तिरोभूता सजला च पुनः पुनः ॥ १४
आविर्भूता सृष्टिकाले तज्जलात् पर्य्युपस्थिता।
प्रलये च तिरोभूता जलाभ्यन्तरवस्थिता ॥ १५
प्रतिविश्वेषु वसुधा शैलकाननसंयुता।
सप्तसागरसंयुक्ता सप्तद्वीपमिता सती ॥ १६
हिमाद्रिमेरुसंयुक्ता ग्रहचन्द्रार्कसंयुता।

ब्रह्मविष्णुशिवाद्यैश्च सुरलोकैः कृतालया ॥ १७
पुण्यतीर्थसमायुक्ता पुण्यभारतसंयुता।
काञ्चनीभूमिसंयुक्ता सर्व्वदुर्गसमन्विता ॥ १८
पातालसप्त तदधस्तदूर्द्धं ब्रह्मलोककः।
ध्रुवलोकश्च तत्रैव सर्व्वविश्वञ्च तत्र वै ॥ १९
एवं सर्व्वाणि विश्वानि पृथिव्यां निर्म्मितानि वै।
ऊर्द्धौ गोलोकवैकुण्ठौ नित्यौ विश्वपरौ च तौ ॥२०
नश्वराणि च विश्वानि सर्व्वाणि कृत्रिमाणि च।
प्रलये प्राकृते ब्रह्मन् ब्रह्मणश्च निपातने ॥ २१
महाविराडादिसृष्टौ सृष्टः कृष्णेन चात्मना।
नित्ये स्थितः स प्रलये काष्ठाकाशेश्वरैः सह ॥ २२
क्षित्यधिष्ठातृदेवी सा वाराहे पूजिता सुरैः।
मनुभिर्मुनिभिर्विप्रैर्गन्धर्व्वादिभिरेव च ॥ २३
विष्णोर्वराहरूपस्य पत्नी सा श्रुतिसम्मता।
तत्पुत्रो मङ्गलो ज्ञेयो घटेशो मङ्गलात्मजः ॥ २४

नारद उवाच।

पूजिता केन रूपेण वाराहे च सुरैर्मही।
वराहेण च वाराही सर्व्वैः सर्व्वाश्रया सती ॥२५
तस्याः पूजाविधानञ्चाप्यधश्चोद्धरणक्रमम्।
मङ्गलं मङ्गलस्यापि जन्म व्यासं वद प्रभो ॥ २६

नारायण उवाच।

वाराहे च वराहश्च ब्रह्मणा संस्तुतः पुरा।
उद्दधार महीं हत्वा हिरण्याक्षं रसातलात् ॥ २७
जले तां स्थापयामास पद्मपत्रं यथार्णवे।
तत्रैव निर्म्ममे ब्रह्मा सर्व्वविश्वं मनोहरम् ॥ २८
दृष्ट्वा तदधिदेवीञ्च सकामां कामुको हरिः।
वराहरूपी भगवान् कोटिसूर्य्यसमप्रभः ॥ २९
कृत्वा रतिकरीं शय्यां मूर्त्तिञ्च सुमनोहराम्।
क्रीडां चकार रहसि दिव्यवर्षमहर्निशम् ॥ ३०
सुखसम्भोगसंसर्गान्मूर्च्छां सम्प्राप सुन्दरी।
विदग्धाया विदग्धेन सङ्गमोऽतिसुखप्रदः ॥ ३१
विष्णुस्तदङ्गसंश्लेषाद्बुबुधे न दिवानिशम्।
वर्षान्ते चेतनां प्राप्य कामी तत्याज कामुकीम् ॥३२
पूर्व्वरूपञ्च वाराहं दधार चावलीलया।
पूजां चकार भक्त्या च ध्यात्वा च धरणीं सतीम्॥३३
धूपैर्दीपैश्च नैवेद्यैः सिन्दूरैरनुलेपनैः।
वस्त्रैः पुष्पैश्च बलिभिः संपूज्योवाच तां हरिः ॥३४

महावराह उवाच।

सर्व्वाधारा भव शुभे सर्व्वैः संपूजिता सुखम्।
मुनिभिर्मनुभिर्देवैः सिद्धैश्च मानवादिभिः ॥ ३५
अम्बुवाचीत्यागदिने गृहारम्भप्रवेशने।
वापीतडागारम्भे च गृहे च कृषिकर्म्मणि ॥ ३६
तव पूजां करिष्यन्ति मद्वरेण सुरादयः।
मूढा ये न करिष्यन्ति यास्यन्ति नरकञ्च ते ॥ ३७

वसुधोवाच।

वहामि सर्व्वं वाराहरूपेणाहं तवाज्ञया।
लीलामात्रेण भगवन् विश्वञ्च सचराचरम् ॥ ३८
मुक्तां शुक्तिं हरेरर्च्चां शिवलिङ्गं शिलां तथा।
शङ्खं प्रदीपं रत्नञ्च माणिक्यं हीरकं मणिम् ॥३९
यज्ञसूत्रञ्च पुष्पञ्च पुस्तकं तुलसीदलम्।
जपमालां पुष्पमालां कर्पूरञ्च सुवर्णकम् ॥ ४०
गोरोचनां चन्दनञ्च शालग्रामजलं तथा।
एतान् वोढुमशक्ताहं क्लिष्टा च भगवन् शृणु ॥ ४१

श्रीभगवानुवाच।

द्रव्याण्येतानि ये मूढा अर्पयिष्यन्ति सुन्दरि।
ते यास्यन्ति कालसूत्रं दिव्यं वर्षशतं त्वयि ॥ ४२
इत्येवमुक्त्वा भगवान् विरराम च नारद।
बभूव तेन गर्भेण तेजस्वी मङ्गलग्रहः ॥ ४३
पूजां चक्रुः पृथिव्याश्च ते सर्व्वे चाज्ञया हरेः।
काण्वशाखोक्तध्यानेन तुष्टुवुः स्तवनेन च ॥ ४४
ददुर्मूलेन मन्त्रेण नैवेद्यादिकमेव च।
संस्तुता त्रिषु लोकेषु पूजिता सा बभूव ह ॥ ४५

नारद उवाच।

किं ध्यानं स्तवनं किं वा तस्य मूलञ्च किं वद।
गूढं सर्व्वपुराणेषु श्रोतुं कौतूहलं मम ॥ ४६

नारायण उवाच।

आदौ च पृथिवी देवी वराहेण च पूजिता।
ततो हि ब्रह्मणा पश्चात् ततश्च पृथुना पुरा ॥ ४७
ततः सर्व्वैर्मुनीन्द्रैश्च मनुभिर्नारदादिभिः।
ध्यानञ्च स्तवनं मन्त्रं शृणु वक्ष्यामि नारद ॥ ४८
ओं ह्रीं श्रीं क्लीं वसुधायै स्वाहेत्यनेन पूजिता। (क)

---

(क) ओं ह्रीं श्रीं वां वसुधायै स्वाहा।
इत्यनेन मन्त्रेण पूजिता विष्णुना पुरा।
इति पाठश्च दृश्यते।

श्वेतचम्पकवर्णाभां शतचन्द्रसमप्रभाम्।
चन्दनोक्षितसर्व्वाङ्गीं सर्व्वभूषणभूषिताम्॥ ५०
रत्नाधारां रत्नगर्भां रत्नाकरसमन्विताम्।
वह्निशुद्धांशुकाधानां सस्मितां वन्दितां भजे॥ ५१
ध्यानेनानेन सा देवी सर्व्वैश्च पूजिता भवेत्।
स्तवनं शृणु विप्रेन्द्र काण्वशाखोक्तमेव च॥ ५२

विष्णुरुवाच।

जये जय जयाधारे जयशीले जयप्रदे।
यज्ञशूकरजाये च जयं देहि जयावहे॥ ५३
मङ्गले मङ्गलाधारे मङ्गले मङ्गलप्रदे।
मङ्गलार्थे मङ्गलांशे मङ्गलं देहि मे भवे॥ ५४
सर्व्वाधारे सर्व्ववीजे सर्व्वशक्तिसमन्विते।
सर्व्वकामप्रदे देवि सर्व्वेष्टं देहि मे भवे॥ ५५
पुण्यस्वरूपे जीवानां पुण्यरूपे सनातनि।
पुण्याश्रये पुण्यवतामालये पुण्यदे भवे॥ ५६
रत्नाधारे रत्नगर्भे रत्नाकरसमन्विते।
स्त्रीरत्नरूपे रत्नाढ्ये रत्नसारप्रदे भवे॥ ५७
सर्व्वशस्यालये सर्व्वशस्याढ्ये सर्व्वशस्यदे।
सर्व्वशस्यहरे काले सर्व्वशस्यात्मिके भवे॥ ५८
भूमे भूमिपसर्व्वस्वे भूमिपालपरायणे।
भूमिपाहङ्काररूपे भूमिं देहि च भूमिदे॥ ५९
इदं स्तोत्रं महापुण्यं तां संपूज्य च यः पठेत्।
कोटि कोटि जन्म जन्म स भवेद्भूमिपेश्वरः॥ ६०
भूमिदानकृतं पुण्यं लभते पठनाज्जनः।
भूमिदानहरात् पापात् मुच्यते नात्र संशयः॥ ६१
अम्बुवाचीभूखननपापात् स मुच्यते ध्रुवम्।
अन्यकूपे कूपदजात् पापात् स मुच्यते ध्रुवम्।
परभूश्राद्धजात् पापान्मुच्यते नात्र संशयः॥ ६२
भूमौ वीर्य्यत्यागपापाद्भूमौ दीपादिस्थापनात्।
पापात् प्रमुच्यते प्राज्ञस्तोत्रस्य पठनान्मुने।
अश्वमेधशतं पुण्यं लभते नात्र संशयः॥ ६३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे पृथिव्युपाख्याने पृथिवीस्तोत्रं नामाष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

नारद उवाच।

भूमिदानकृतं पुण्यं पापं तद्धरणेन यत्।
परभूमौ श्राद्धरूपं कूपे कूपदजं तथा॥ १
अम्बुवाचीभूखनन-वीजत्यागजमेव च।
दीपादिस्थापनात् पापं श्रोतुमिच्छामि यत्नतः॥ २
अन्यद्वा पृथिवीजन्यं पापं यत् प्रश्नतः परम्।
यदस्ति तत्प्रतीकारं वद वेदविदां वर॥ ३

नारायण उवाच।

वितस्तिमात्रं भूमिञ्च यो ददाति च भारते।
सन्ध्यापूताय विप्राय स याति विष्णुमन्दिरम्॥ ४
भूमिञ्च सर्व्वशस्याढ्यां ब्राह्मणाय ददाति यः।
भूमिरेणुप्रमाणञ्च वर्षं विष्णुपदे स्थितिः॥ ५
ग्रामं भूमिञ्च धान्यञ्च यो ददात्याददाति यः।
सर्व्वपापादिनिर्म्मुक्तौ चोभौ वैकुण्ठवासिनौ॥ ६
भूमिं दातुञ्च यत्काले यः साधुश्चानुमोदते।
स प्रयाति च वैकुण्ठं मित्रगोत्रसमन्वितः॥ ७
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत् तु यः।
स तिष्ठति कालसूत्रं यावच्चन्द्रदिवाकरौ॥ ८
तत्पुत्रपौत्रप्रभृतिर्भूमिहीनः श्रिया हतः।
पुत्रहीनो दरिद्रश्च अन्ते याति च रौरवम्॥ ९
गवां मार्गं विनिष्कृष्य यश्च शस्यं ददाति च।
दिव्यं वर्षशतञ्चैव कुम्भीपाके स तिष्ठति॥ १०
गोष्ठं तड़ागं निष्कृष्य मार्गं शस्यं ददाति यः।
च तिष्ठत्यसीपत्रे यावदिन्द्राश्चतुर्द्दश॥ ११
परकीयतड़ागे च पङ्कमुद्धृत्य चोत्सृजेत्।
रेणुप्रमाणवर्षञ्च ब्रह्मलोके वसेन्नरः॥ १२
पिण्डं पित्रे भूमिभर्त्तुर्न प्रदाय च मानवः।
श्राद्धं करोति यो मूढ़ो नरकं याति निश्चितम्॥१३
भूमौ प्रदीपं योऽर्पयति स चान्धः सप्तजन्मसु।
भूमौ शङ्खञ्च संस्थाप्य कुष्ठं जन्मान्तरे लभेत्॥ १४
मुक्तामाणिक्यहीरञ्च सुवर्णञ्च मणिं तथा।
यश्च संस्थापयेद्भूमौ दरिद्रः सप्तजन्मसु॥ १५
शिवलिङ्गं शिलामर्च्चां यश्चार्पयति भूतले।
शतमन्वन्तरं यावत् कृमिभक्ष्ये स तिष्ठति॥ १६
सूक्तं मन्त्रं शिलातोयं पुष्पञ्च तुलसीदलम्।
यश्चार्पयति भूमौ च स तिष्ठेन्नरकं युगम्॥ १७

जपमालां पुष्पमालां कर्पूरं रोचनां तथा ।
यो मूढ़स्थापयेद्भूमौ स याति नरकं ध्रुवम् ॥ १८
मुने चन्दनकाष्ठञ्च रुद्राक्षं कुशमूलकम् ।
संस्थाप्य भूमौ नरके वसेन्मन्वन्तरावधि ॥ १९
पुस्तकं यज्ञसूत्रञ्च भूमौ संस्थापयेत् तु यः ।
न भवेद्विप्रयोनौ च तस्य जन्मान्तरे जनिः ॥ २०
ब्रह्महत्यासमं पापमिह वै लभते ध्रुवम् ।
ग्रन्थियुक्तं यज्ञसूत्रं पूज्यञ्च सर्व्ववर्णकैः ॥ २१
यज्ञं कृत्वा तु यो भूमिं क्षीरेण न हि सिञ्चति ।
स याति तप्तभूम्मिञ्च सन्तप्तः सर्व्वजन्मसु ॥ २२
भूकम्पे ग्रहणे यो हि करोति खननं भुवः ।
जन्मान्तरे महापापी सोऽङ्गहीनो भवेद्ध्रुवम् ॥ २३
भवनं यत्र सर्व्वेषां भूमिस्तेन प्रकीर्त्तिता ।
वसु रत्नं यो ददाति वसुधा च वसुन्धरा ॥ २४
हरेरूरौ च या जाता सा चोर्व्वी परिकीर्त्तिता ।
धरा धरित्री धरणी सर्व्वेषां धरणाच्च सा ॥ २५
इज्या च यागाधाराच्च क्षौणी क्षीणा लये च सा ।
महालये क्षयं याति क्षितिस्तेन प्रकीर्त्तिता ॥ २६
काश्यपी कश्यपस्येयमचला स्थितिरूपतः ।
विश्वम्भरा तद्भरणाद्धानन्तानन्तरूपतः ॥ २७
पृथिवी पृथुकन्या सा विस्तृतत्वान्महामुने ॥ २८

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे पृथिव्युपाख्यानं
नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

नारद उवाच ।

श्रुतं पृथिव्युपाख्यानमतीव सुमनोहरम् ।
गङ्गोपाख्यानमधुना वद वेदविदां वर ॥ १
भारतं भारतीशापादाजगाम सुरेश्वरी ।
विष्णुस्वरूपा परमा स्वयं विष्णुपदी सती ॥ २
कथं कुत्र युगे केन प्रार्थिता प्रेरिता पुरा ।
तत्क्रमं श्रोतुमिच्छामि पापघ्नं पुण्यदं शुभम् ॥ ३

नारायण उवाच ।

राजराजेश्वरः श्रीमान् सगरः सूर्य्यवंशजः ।
तस्य भार्य्या च वैदर्भी शैव्या च द्वे मनोहरे ॥ ४
सत्यस्वरूपः सत्येष्टः सत्यवाक् सत्यभावनः ।
सत्यवर्गविचारज्ञः परं सत्ययुगोद्भवः ॥ ५
एकस्यामेकपुत्रश्च बभूव सुमनोहरः ।
असमञ्जा इति ख्यातः शैव्यायां कुलवर्द्धनः ॥ ६
अन्या चाराधयामास शङ्करं पुत्रकामुकी ।
बभूव गर्भस्तस्याश्च शिवस्य च वरेण च ॥ ७
गते शताब्दे पूर्णे च मांसपिण्डं सुषाव सा ।
तद्दृष्ट्वा च शिवं ध्यात्वा रुरोदोच्चैः पुनः पुनः ॥ ८
शम्भुर्ब्राह्मणरूपेण तत्समीपं जगाम ह ।
चकार संविभज्यैतत् पिण्डं षष्टिसहस्रधा ॥ ९
सर्व्वे बभूवुः पुत्राश्च महाबलपराक्रमाः ।
ग्रीष्ममध्याह्नमार्त्तण्ड-प्रभामुष्टकरा वराः ॥ १०
कपिलस्य कोपदृष्ट्या बभूवुर्भस्मसाच्च ते ।
राजा रुरोद तच्छ्रुत्वा जगाम मरणं शुचा ॥ ११
तपश्चकारासमञ्जा गङ्गानयनकारणम् ।
तपः कृत्वा लक्षवर्षं ममार कालयोगतः ॥ १२
अंशुमांस्तस्य पुत्रश्च गङ्गानयनकारणम् ।
तपः कृत्वा लक्षवर्षं ममार कालयोगतः ॥ १३
दिलीपस्तस्य तनयो गङ्गानयनकारणम् ।
तपः कृत्वा लक्षवर्षं ययौ लोकान्तरं नृपः ॥ १४ (क)
भगीरथस्तस्य पुत्रो महाभागवतः सुधीः ।
वैष्णवो विष्णुभक्तश्च गुणवानजरामरः ॥ १५
तपः कृत्वा लक्षवर्षं गङ्गानयनकारणम् ।
ददर्श कृष्णं हृष्टास्यं सूर्य्यकोटिसमप्रभम् ॥ १६
द्विभुजं मुरलीहस्तं किशोरं गोपवेशकम् ।
परमात्मानमीशञ्च भक्तानुग्रहविग्रहम् ॥ १७
स्वेच्छामयं परं ब्रह्म परिपूर्णतमं विभुम् ।
ब्रह्मविष्णुशिवाद्यैश्च स्तुतं मुनिगणैर्युतम् ॥ १८
निर्लिप्तं साक्षिरूपञ्च निर्गुणं प्रकृतेः परम् ।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकारकम् ।
वह्निशुद्धांशुकाधानं रत्नभूषणभूषितम् ॥ १९
तुष्टाव दृष्ट्वा नृपतिः प्रणम्य च पुनः पुनः ।

---

(क) यदि च बहुषु पुस्तकेषु तपश्चकारासमञ्जा इत्येतत्-श्लोकानन्तरं दिलीपस्तस्य तनय इत्ययं श्लोकः, ततश्च अंशुमांस्तस्य पुत्रश्चेति श्लोको दृश्यते तथापि अंशुमतोऽसमञ्जः-पुत्रत्वं दिलीपस्य चांशुमत्पुत्रत्वं सर्व्वसम्मतमिति विपरीत-क्रमेण श्लोकावेतौ निवेशितौ ।

लीलया च वरं प्राप्य वाञ्छितं वंशतारणम् ॥ २०
तत्राजगाम गङ्गा सा स्मरणात् परमात्मनः ।
तं प्रणम्य प्रतस्थौ च तत्पुरः संपुटाञ्जलिः ॥ २१
उवाच भगवांस्तत्र तां दृष्ट्वा सुमनोहराम् ।
कुर्व्वतीं स्तवनं दिव्यं पुलकाञ्चितविग्रहाम् ॥ २२

श्रीकृष्ण उवाच ।

भारतं भारतीशापाद्गच्छ शीघ्रं सुरेश्वरि ।
सगरस्य सुतान् सर्व्वान् पूतं कुरु ममाज्ञया ॥ २३
त्वत्स्पर्शवायुना पूता यास्यन्ति मम मन्दिरम् ।
बिभ्रतो दिव्यमूर्त्तिं ते दिव्यस्यन्दनगामिनः ॥ २४
मत्पार्षदा भविष्यन्ति सर्व्वकालनिरामयाः ।
समुच्छिद्य कर्म्मभोगं कृतं जन्मनि जन्मनि ॥ २५
कोटिजन्मार्ज्जितं पापं भारते यत् कृतं नृणाम् ।
गङ्गायाः स्पर्शवातेन तन्नश्यति श्रुतौ श्रुतम् ॥ २६
स्पर्शनाद्दर्शनाद्देव्याः पुण्यं दशगुणं ततः ॥ २७
मौषलस्नानमात्रेण सामान्यदिवसे नृणाम् ।
शतकोटिजन्मपापं नश्यतीति श्रुतौ श्रुतम् ॥ २८
यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
जन्मासंख्यार्ज्जितान्येव कामतोऽपि कृतानि च ।
तानि सर्व्वाणि नश्यन्ति मौषलस्नानतो नृणाम् ॥ २९
पुण्याहस्नानजं पुण्यं वेदा नैव वदन्ति च ।
केचिद्वदन्ति ते देवि फलमेव यथागमम् ॥ ३०
ब्रह्मविष्णुशिवाद्याश्च सर्व्वं नैव वदन्ति च ।
सामान्यदिवसस्नाने सङ्कल्पं शृणु सुन्दरि ॥ ३१
पुण्यं दशगुणञ्चैव मौषलस्नानतः परम् ।
ततस्त्रिंशद्गुणं पुण्यं रविसंक्रमणे दिने ॥ ३२
अमायाञ्चापि तत्तुल्यं द्विगुणं दक्षिणायने ।
ततो दशगुणं पुण्यं नराणामुत्तरायणे ॥ ३३
चातुर्म्मास्यपौर्णमास्योरनन्तं पुण्यमेव च ।
अक्षयायाञ्च तत्तुल्यं नैतद्वेदे निरूपितम् ॥ ३४
असंख्यपुण्यफलदमेतेषु स्नानदानकम् ।
सामान्यदिवसस्नानाद्दानाच्छतगुणं फलम् ॥ ३५
मन्वन्तराद्यां देवेशि युगाद्यायां तथैव च ।
माघस्य सितसप्तम्यां भीष्माष्टम्यां तथैव च ।
तथाप्यशोकाष्टम्याञ्च नवम्याञ्च तथा हरेः ॥ ३६
ततोऽपि द्विगुणं पुण्यं नन्दायां तव दुर्लभे ।
दशहरादशम्याञ्च युगाद्यादिसमं फलम् ॥ ३७
नन्दासमञ्च वारुण्यां महत्पूर्व्वे चतुर्गुणम् ।
ततश्चतुर्गुणं पुण्यं द्विमहत्पूर्व्वके सति ॥ ३८
पुण्यं कोटिगुणञ्चैव सामान्यस्नानतो हि यत् ।
चन्द्रोपरागसमये सूर्य्ये दशगुणं ततः ॥ ३९
पुण्येऽप्यर्द्धोदये काले ततः शतगुणं फलम् ।
सर्व्वेषामेव सङ्कल्पो वैष्णवानां विपर्य्ययः ॥ ४
फलसन्धानरहिता जीवन्मुक्ताश्च वैष्णवाः ।
मत्प्रीतिभक्तिकामास्ते सर्व्वदा सर्व्वकर्म्मसु ॥ ४१
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविशति ।
जीवन्मुक्तं वैष्णवं तं वेदाः सर्व्वे वदन्ति च ॥ ४२
पुरुषाणां शतं पूर्व्वं पितृकञ्च परं शतम् ।
मातामहस्य च शतं मातरं मातृमातरम् ॥ ४३
भगिनीं भ्रातरञ्चैव भागिनेयञ्च मातुलम् ।
श्वश्रूञ्च श्वशुरञ्चैव गुरुपत्नीं गुरोः सुतम् ॥ ४४
गुरुञ्च ज्ञानदातारं मित्रञ्च सहचारिकम् ।
भृत्यं शिष्यं तथा चेटीं प्रजाः स्वाश्रमसन्निधौ ॥ ४५
उद्धरेदात्मना सार्द्धं मन्त्रग्रहणमात्रतः ।
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः ॥ ४६
तस्य संस्पर्शनात् पूतं तीर्थञ्च भुवि भारतम् ।
तस्यैव पादरजसा सद्यःपूता वसुन्धरा ।
पादोदकप्लुतस्थानं तीर्थमेव भवेद्ध्रुवम् ॥ ४७
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम् ।
वैष्णवाश्च न खादन्ति नैवेद्यभोजिनः सदा ॥ ४८
विष्णोर्निवेदितान्नञ्च नित्यं ये भुञ्जते नराः ।
पूतानि सर्व्वतीर्थानि तेषाञ्च स्पर्शनाद्धो ॥ ४९
विष्णोः पादोदकं पुण्यं नित्यं ये भुञ्जते नराः ।
तेभ्यः पापाः पलायन्ते वैनतेयादिवोरगाः ॥ ५०
तेषां दर्शनमात्रेण पूतञ्च भुवनत्रयम् ।
विष्णोः सुदर्शनं चक्रं सततं तांश्च रक्षति ॥ ५१
मद्गुणश्रवणाद्ये च पुलकाञ्चितविग्रहाः ।
गद्गदाः साश्रुनेत्रास्ते नराश्च वैष्णवोत्तमाः ॥ ५२
पुत्रादपि परः स्नेहो मयि येषां निरन्तरम् ।
गृहाद्याश्च मयि न्यस्तास्ते नरा वैष्णवोत्तमाः ॥ ५३
आब्रह्मस्तम्बपर्य्यन्तं मत्तः सर्व्वं चराचरम् ।
सर्व्वेषामहमात्मेश इतिज्ञा वैष्णवोत्तमाः ॥ ५४
असंख्यकोटिब्रह्माण्डं ब्रह्मविष्णुशिवादयः ।
प्रलये मयि लीयन्ते चेतिज्ञा वैष्णवोत्तमाः ॥ ५५

तेजःस्वरूपं परमं भक्तानुग्रहविग्रहम् ।
स्वेच्छामयं निर्गुणञ्च निरीहं प्रकृतेः परम् ॥ ५६
सर्व्वे प्राकृतिका भक्त आविर्भूतास्तिरोहिताः ।
इति जानन्ति ये देवि ते नरा वैष्णवोत्तमाः ॥ ५७
इत्येवमुक्त्वा देवेशो विरराम तयोः पुरः ।
उवाच तं त्रिपथगा भक्तिनम्रात्मकन्धरा ॥ ५८

गङ्गोवाच ।

यामि वैकुण्ठं नाथ भारतीशापतः पुरा ।
तवाज्ञया च राजेन्द्रतपसा चैव साम्प्रतम् ॥ ५९
दास्यन्ति पापिनो मह्यं पापानि यानि कानि च ।
तानि मे केन नश्यन्ति तदुपायं वद प्रभो ॥ ६०
कतिकालं परिमितं स्थितिर्मे तत्र भारते ।
कदा यास्यामि सर्व्वेश तद्विष्णोः परमं पदम् ॥ ६१
ममान्यद्वाञ्छितं यद्यत् सर्व्वं जानासि सर्व्ववित् ।
सर्व्वान्तरात्मा सर्व्वज्ञ तदुपायं वद प्रभो ॥ ६२

श्रीकृष्ण उवाच ।

जानामि वाञ्छितं गङ्गे तव सर्व्वं सुरेश्वरि ।
पतिस्ते रुद्ररूपोऽयं लवणोदो भविष्यति ॥ ६३
ममांशः स समुद्रश्च त्वञ्च लक्ष्मीस्वरूपिणी ।
विदग्धाया विदग्धेन सङ्गमो गुणवान् भुवि ॥ ६४
यावत्यः सन्ति नद्यश्च भारत्याद्याश्च भारते ।
सौभाग्यत्वञ्च तास्वेव लवणोदस्य सौरते ॥ ६५
अद्यप्रभृति देवेशि कलेः पञ्चसहस्रकम् ।
वर्षं स्थितिस्ते भारत्याः शापेन भारते भुवि ॥ ६६
नित्यं वारिनिधिना सार्द्धं करिष्यसि रहो रतिम् ।
त्वमेव रसिका देवी रसिकेन्द्रेण संयुता ॥ ६७
त्वां स्तोष्यन्ति च स्तोत्रेण भगीरथकृतेन च ।
भारतस्था जनाः सर्व्वे पूजयिष्यन्ति भक्तितः ॥ ६८
कौथुमोक्तेन ध्यानेन ध्यात्वा त्वां पूजयिष्यति ।
यः स्तौति प्रणमेन्नित्यं सोऽश्वमेधफलं लभेत् ॥ ६९
गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।
मुच्यते सर्व्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ७०
सहस्रपापिनां स्नानाद्यत् पापं ते भविष्यति ।
मद्भक्तैकदर्शनेन तदेव हि विनश्यति ॥ ७१
पापिनान्तु सहस्राणां शवस्पर्शेन यत् तव ।
मन्मन्त्रोपासकस्नानात् तदघञ्च विनङ्क्ष्यति ॥ ७२
यत्र यत्र भवेद्गङ्गे मन्नामगुणकीर्त्तनम् ।
तत्रैव त्वमधिष्ठानं करिष्यस्यघमोचनात् ॥ ७३
सार्द्धं सरिद्भिः श्रेष्ठाभिः सरस्वत्यादिभिः शुभे ।
तत्तु तीर्थं भवेत् सद्यो यत्र मद्गुणकीर्त्तनम् ॥ ७४
तद्रेणुस्पर्शमात्रेण पूतो भवति पातकी ।
रेणुप्रमाणं वर्षञ्च स वैकुण्ठे भवेद्ध्रुवम् ॥ ७५
ज्ञानेन त्वयि ये भक्त्या मन्नामस्मृतिपूर्व्वकम् ।
समुत्सृजन्ति प्राणांश्च ते गच्छन्ति हरेः पदम् ॥ ७६
पार्षदप्रवरास्ते च भविष्यन्ति हरेश्चिरम् ।
लयं प्राकृतिकं ते च द्रक्ष्यन्ति चाप्यसंख्यकम् ॥ ७७
मृतस्य बहुपुण्येन तच्छवं त्वयि विन्यसेत् ।
प्रयाति स च वैकुण्ठं यावदस्यां स्थितिस्त्वयि ॥ ७८
कायव्यूहं ततः कृत्वा भोजयित्वा स्वकर्म्मकम् ।
तस्मै ददामि सारूप्यं करोमि तञ्च पार्षदम् ॥ ७९
अज्ञानात्वज्जलस्पर्शाद्यदि प्राणान् समुत्सृजेत् ।
तस्मै ददामि सारूप्यं करोमि तञ्च पार्षदम् ॥ ८०
अन्यत्र वा त्यजेत् प्राणांस्त्वन्नामस्मृतिपूर्व्वकम् ।
तस्मै ददामि सारूप्यमसंख्यप्रलयं त्वयम् ॥ ८१
अन्यत्र वा त्यजेत् प्राणान् मन्नामस्मृतिपूर्व्वकम् ।
तस्मै ददामि सालोक्यं यावद्वै ब्रह्मणो वयः ॥ ८२
तीर्थेऽप्यतीर्थे मरणे विशेषो नास्ति कश्चन ।
मन्मन्त्रोपासकानाञ्च नित्यं नैवेद्यभोजिनाम् ॥ ८३
पूतं कर्त्तुं स शक्तो हि लीलया भुवनत्रयम् ।
रत्नेन्द्रसारयानेन गोलोकं स प्रयाति च ॥ ८४
मद्भक्तबान्धवा ये ये ते ते पुण्यधियः शुभे ।
ते यान्ति रत्नयानेन गोलोकञ्च सुदुर्लभम् ॥ ८५
यत्र तत्र मृता ये च ज्ञानाज्ञानेन वा सति ।
जीवन्मुक्ताश्च ते पूता मद्भक्तसन्निधानतः ॥ ८६
इत्युक्त्वा श्रीहरिस्ताञ्च तमुवाच भगीरथम् ।
स्तुहि गङ्गामिमां भक्त्या पूजां कुर्व्विति साम्प्रतम् ॥ ८७
भगीरथस्तां तुष्टाव पूजयामास भक्तितः ।
कौथुमोक्तेन ध्यानेन स्तोत्रेण च पुनः पुनः ॥ ८८
प्रणनाम च श्रीकृष्णं परमात्मानमीश्वरम् ।
भगीरथश्च गङ्गा च सोऽन्तर्द्धानं चकार ह ॥ ८९

नारद उवाच ।

केन ध्यानेन स्तोत्रेण केन पूजाक्रमेण च ।
पूजां चकार नृपतिर्वद वेदविदां वर ॥ ९०

नारायण उवाच।

स्नात्वा नित्यक्रियां कृत्वा धृत्वा धौते च वाससी।
संपूज्य देवषट्कञ्च संयतो भक्तिपूर्व्वकम्॥ ९१
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्।
संपूज्य देवषट्कञ्च सोऽधिकारी च पूजने॥ ९२
गणेशं विघ्ननाशाय निष्पापाय दिवाकरम्।
वह्निं स्वशुद्धये विष्णुं मुक्तये पूजयेन्नरः॥ ९३
शिवं ज्ञानाय ज्ञानेशं शिवाञ्च बुद्धिवृद्धये।
संपूज्यैतल्लभेत् प्राज्ञो विपरीतमतोऽन्यथा॥९४
इध्यावनेन तद्ध्यानं शृणु नारद तत्त्वतः।
ध्यानञ्च कौथुमोक्तञ्च सर्व्वपापप्रणाशनम्॥ ९५
श्वेतचम्पकवर्णाभां गङ्गां पापप्रणाशिनीम्।
कृष्णविग्रहसम्भूतां कृष्णतुल्यां परां सतीम्॥ ९६
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम्।
शरत्पूर्णेन्दुशतक-प्रभामुष्टकरां वराम्॥ ९७
ईषद्धास्यप्रसन्नास्यां शश्वत्सुस्थिरयौवनाम्।
नारायणप्रियां शान्तां सत्सौभाग्यसमन्विताम्॥९८
बिभ्रतीं कवरीभारं मालतीमाल्यसंयुताम्।
सिन्दूरविन्दुललितां सार्द्धं चन्दनविन्दुभिः॥ ९९
कस्तूरीपत्रकं गण्डे नानाचित्रसमन्विताम्।
पक्वबिम्बविनिन्द्यैक-चार्व्वोष्ठपुटमुत्तमम्॥ १००
मुक्तापङ्क्तिप्रभामुष्ट-दन्तपङ्क्तिमनोहरम्।
सुचारुवक्त्रनयनां सकटाक्षं मनोरमाम्॥ १०१
कठिनश्रीफलाकारं स्तनयुग्मं सपत्रकम्।
वृहत्श्रोणीं सुकठिनां रम्भास्तम्भविनिन्दिताम्॥१०२
स्थलपद्मप्रभामुष्ट-पादपद्मयुगं वरम्।
रत्नपाशकसंयुक्तं कुङ्कुमाक्तं सयावकम्॥ १०३
देवेन्द्रमौलिमन्दार-मकरन्दकणारुणम्।
सुरसिद्धमुनीन्द्रैश्च दत्तार्घ्यसंयुतं मुदा॥ १०४
तपस्विमौलिनिकर-भ्रमरश्रेणिसंयुतम्।
मुक्तिप्रदं मुमुक्षूणां कामिनां स्वर्गभोगदम्॥ १०५
वरां वरेण्यां वरदां भक्तानुग्रहकातराम्।
श्रीविष्णोः पददात्रीञ्च भजे विष्णुपदीं सतीम्॥ १०६
इत्यनेन च ध्यानेन ध्यात्वा त्रिपथगां शुभाम्।
दत्त्वा संपूजयेद्ब्रह्मन्नुपचाराणि षोड्श॥ १०७
आसनं पाद्यमर्घ्यञ्च स्नानीयञ्चानुलेपनम्।
धूपं दीपञ्च नैवेद्यं ताम्बूलं शीतलं जलम्॥ १०८
वसनं भूषणं माल्यं गन्ध आचमनीयकम्।
मनोहरं सुतल्पञ्च देयान्येतानि षोड्श॥ १०९
दत्त्वा भक्त्या च प्रणमेत् सम्भूय संपुटाञ्जलिः।
संपूज्यैवंप्रकारेण सोऽश्वमेधफलं लभेत्॥ ११०
स्तोत्रञ्च कौथुमोक्तञ्च संवादं विष्णुब्रह्मणोः।
शृणु नारद वक्ष्यामि पापघ्नञ्च सुपुण्यदम्॥ १११

श्रीब्रह्मोवाच।

श्रोतुमिच्छामि देवेश लक्ष्मीकान्त जगत्प्रभो।
विष्णो विष्णुपदीस्तोत्रं पापघ्नं पुण्यकारणम्॥ ११२

श्रीनारायण उवाच।

शिवसंगीतसंमुग्धश्रीकृष्णाङ्गद्रवोद्भवाम्।
राधाङ्गद्रवसंसक्तां तां गङ्गां प्रणमाम्यहम्॥ ११३
यज्जन्म सृष्टेरादौ च गोलोके रासमण्डले।
सन्निधाने शङ्करस्य तां गङ्गां प्रणमाम्यहम्॥ ११४
गोपैर्गोपीभिराकीर्णे शुभे राधामहोत्सवे।
कार्त्तिकीपूर्णिमाजातां तां गङ्गां प्रणमाम्यहम् ११५
कोटियोजनविस्तीर्णा दैर्घ्ये लक्षगुणा ततः।
समावृता या गोलोकं तां गङ्गां प्रणमाम्यहम्॥११६
षष्टिलक्षयोजना या ततो दैर्घ्ये चतुर्गुणा।
समावृता या वैकुण्ठं तां गङ्गां प्रणमाम्यहम्॥११७
त्रिंशल्लक्षयोजना या ततो दैर्घ्ये चतुर्गुणा।
आवृता ब्रह्मलोकं या तां गङ्गां प्रणमाम्यहम्॥११८
त्रिंशल्लक्षयोजना या दैर्घ्ये पञ्चगुणा ततः।
आवृता शिवलोकं या तां गङ्गां प्रणमाम्यहम्॥११९
षड्योजनविस्तीर्णा दैर्घ्ये दशगुणा ततः।
मन्दाकिनी येन्द्रलोके तां गङ्गां प्रणमाम्यहम्॥ १२०
लक्षयोजनविस्तीर्णा दैर्घ्ये सप्तगुणा ततः।
आवृता ध्रुवलोकं या तां गङ्गां प्रणमाम्यहम्॥ १२१
लक्षयोजनविस्तीर्णा दैर्घ्ये दशगुणा ततः।
आवृता चन्द्रलोकं या तां गङ्गां प्रणमाम्यहम्॥१२२
षष्टिसहस्रयोजना या दैर्घ्ये दशगुणा ततः।
आवृता सूर्य्यलोकं या तां गङ्गां प्रणमाम्यहम्॥१२३
लक्षयोजनविस्तीर्णा दैर्घ्ये च षड्गुणा ततः।
आवृता सत्यलोकं या तां गङ्गां प्रणमाम्यहम्॥१२४
दशलक्षयोजना या दैर्घ्ये पञ्चगुणा ततः।
आवृता या तपोलोकं तां गङ्गां प्रणमाम्यहम्॥१२५
सहस्रयोजना या च दैर्घ्ये सप्तगुणा ततः।

आवृता जनलोकं या तां गङ्गां प्रणमाम्यहम् ॥१२६
सहस्रयोजना या सा दैर्घ्ये सप्तगुणा ततः ।
आवृता या च कैलासं तां गङ्गां प्रणमाम्यहम् ॥१२७
पाताले या भोगवती विस्तीर्णा दशयोजना ।
ततो दशगुणा दैर्घ्ये तां गङ्गां प्रणमाम्यहम् ॥१२८
क्रोशैकमात्रविस्तीर्णा ततः क्षीणा न कुत्रचित् ।
क्षितौ चालकनन्दा या तां गङ्गां प्रणमाम्यहम् ॥१२९
सत्ये या क्षीरवर्णा च त्रेतायामिन्दुसन्निभा ।
द्वापरे चन्दनाभा च तां गङ्गां प्रणमाम्यहम् ॥१३०
जलप्रभा कलौ या च नान्यत्र पृथिवीतले ।
स्वर्गे च नित्यं क्षीराभा तां गङ्गां प्रणमाम्यहम् ॥१३१
यस्याः प्रभावमतुलं पुराणे च श्रुतौ श्रुतम् ।
या पुण्यदा पापहर्त्री तां गङ्गां प्रणमाम्यहम् ॥१३२
यत्तोयकणिकास्पर्शः पापिनाञ्च पितामह ।
ब्रह्महत्यादिकं पापं कोटिजन्मार्ज्जितं दहेत् ॥१३३
इत्येवं कथितं ब्रह्मन् गङ्गापद्यैकविंशतिः ।
स्तोत्ररूपञ्च परमं पापघ्नं पुण्यवीजकम् ॥१३४
नित्यं यो हि पठेद्भक्त्या संपूज्य च सुरेश्वरीम् ।
अश्वमेधफलं नित्यं लभते नात्र संशयः ॥ १३५
अपुत्रो लभते पुत्रं भार्य्याहीनो लभेत् प्रियाम् ।
रोगान्मुच्येत रोगी च बद्धो मुच्येत बन्धनात् ॥१३६
अस्पष्टकीर्त्तिः सुयशा मूर्खो भवति पण्डितः ।
यः पठेत् प्रातरुत्थाय गङ्गास्तोत्रमिदं शुभम् ॥१३७
शुभं भवेत्तु दुःस्वप्ने गङ्गास्नानफलं लभेत् ॥ १३८
इति श्रीब्रह्मवैवर्त्ते महापुराणे गङ्गास्तोत्रम् ।

नारायण उवाच ।

भगीरथोऽनया स्तुत्या स्तुत्वा गङ्गाञ्च नारद ।
जगाम तां गृहीत्वा च यत्र नष्टाश्च सागराः ॥१३९
वैकुण्ठं ते ययुस्तूर्णं गङ्गायाः स्पर्शवायुना ।
भगीरथेन सा नीता तेन भागीरथी स्मृता ॥ १४०
इत्येवं कथितं सर्व्वं गङ्गोपाख्यानमुत्तमम् ।
पुण्यदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥१४१

नारद उवाच ।

शिवसङ्गीतसंमुग्ध-श्रीकृष्णे द्रवतां गते ।
द्रवताञ्च गतायाञ्च राधायां किं बभूव ह ॥ १४२
तत्रस्थाश्च जना ये ये ते च किं चक्रुरुत्तमम् ।
एतत् सर्व्वं सुविस्तीर्णं कृत्वा वक्तुमिहार्हसि ॥१४३

नारायण उवाच ।

कार्त्तिकीपूर्णिमायाञ्च राधायाः सुमहोत्सवे ।
कृष्णः संपूज्य तां राधामुवास रासमण्डले ॥ १४४
कृष्णेन पूजितां तां तु संपूज्य हृष्टमानसाः ।
ऊचुर्ब्रह्मादयः सर्व्वे ऋषयः सनकादयः ॥ १४५
एतस्मिन्नन्तरे कृष्णसंगीतञ्च सरस्वती ।
जगौ सुन्दरतानेन वीणया च मनोहरम् ॥ १४६
तुष्टो ब्रह्मा ददौ तस्यै रत्नेन्द्रसारहारकम् ।
शिरोमणीन्द्रसारञ्च सर्व्वब्रह्माण्डदुर्लभम् ॥ १४७
कृष्णः कौस्तुभरत्नञ्च सर्व्वरत्नात् परं वरम् ।
अमूल्यरत्ननिर्म्माण-हारसारञ्च राधिका ॥ १४८
नारायणश्च भगवान् वनमालां मनोहराम् ।
अमूल्यरत्ननिर्म्माणं लक्ष्मीर्मकरकुण्डलम् ॥ १४९
विष्णुमाया भगवती मूलप्रकृतिरीश्वरी ।
दुर्गा नारायणीशानी विष्णुभक्तिं सुदुर्लभाम् ॥ १५०
धर्म्मबुद्धिञ्च धर्म्मश्च यशश्च विपुलं भवे ।
वह्निशुद्धांशुकं वह्निर्वायुश्च मणिनूपुरम् ॥ १५१
एतस्मिन्नन्तरे शम्भुर्ब्रह्मणा प्रेरितो मुहुः ।
जगौ श्रीकृष्णसङ्गीतं रासोल्लाससमन्वितम् ॥ १५२
मूर्च्छां प्रापुः सुराः सर्व्वे चित्रपुत्तलिका यथा ।
क्षणेन चेतनां प्राप्य ददृशू रासमण्डलम् ॥ १५३
स्थलं सर्व्वं जलाकीर्णं राधाकृष्णविहीनकम् ।
अत्युच्चै रुरुदुः सर्व्वे गोपगोप्यः सुरा द्विजाः ॥ १५४
ध्यानेन ब्रह्मा बुबुधे सर्व्वमेवमभीप्सितम् ।
गतश्च राधया सार्द्धं श्रीकृष्णो द्रवतामिति ॥ १५५
ततो ब्रह्मादयः सर्व्वे तुष्टुवुः परमेश्वरम् ।
स्वमूर्त्तिं दर्शय विभो वाञ्छितं वरमेव नः ॥ १५६
एतस्मिन्नन्तरे तत्र वाग्बभूवाशरीरिणी ।
तामेव शुश्रुवुः सर्व्वे सुव्यक्तां मधुरान्विताम् ॥ १५७
सर्व्वात्माहमियं शक्तिर्भक्तानुग्रहविग्रहा ।
ममाप्यस्याश्च हे देवा देहेन च किमावयोः ॥ १५८
मनवो मानवाः सर्व्वे मुनयश्चैव वैष्णवाः ।
मन्त्रपूता मां द्रष्टुमागमिष्यन्ति मत्पदम् ॥ १५९
मूर्त्तिं द्रष्टुञ्च सुव्यग्रा यूयं यदि सुरेश्वराः ।
करोतु शम्भुस्तत्रैव मदीयं वाक्यपालनम् ॥ १६०
स्वयं विधाता त्वं ब्रह्मन्नाज्ञां कुरु जगद्गुरुम् ।
कर्त्तुं शास्त्रविशेषञ्च वेदाङ्गं सुमनोहरम् ॥ १६१

अपूर्व्वमन्त्रनिकरैः सर्व्वाभीष्टफलप्रदैः ।
स्तोत्रैश्च कवचैर्ध्यानैर्युतं पूजाविधिक्रमैः ॥ १६२
मन्मन्त्रकवचस्तोत्रं कृत्वा यत्नेन गोपय ।
भवन्ति विमुखा येन जनानां तत् करिष्यति ॥१६३
सहस्रेषु शतेष्वेको मन्मन्त्रोपासको भवेत् ।
ते ते जना मन्त्रपूताश्चागमिष्यन्ति मत्पदम् ॥ १६४
अन्यथा च भविष्यन्ति सर्व्वे गोलोकवासिनः ।
निष्फलं भविता सर्व्वं ब्रह्माण्डञ्चैव ब्रह्मणः ॥ १६५
जनाः पञ्चप्रकाराश्च युक्ताः सृष्टौ भवे भवे ।
पृथिवीवासिनः केचित् केचित् स्वर्गनिवासिनः ॥१६६
अधोनिवासिनः केचिद्ब्रह्मलोकनिवासिनः ।
केचिदत्र वैष्णवाः केचिन्मम लोकनिवासिनः ॥ १६७
इदं कर्त्तुं महादेवः करोतु देवसंसदि ।
प्रतिज्ञां सुदृढ़ां सद्यस्ततो मूर्त्तिञ्च द्रक्ष्यसि ॥ १६८
इत्येवमुक्त्वा गगने विरराम सनातनः ।
तच्छ्रुत्वा च जगन्नाथस्तमुवाच शिवं मुदा ॥ १६९
ब्रह्मणो वचनं श्रुत्वा ज्ञानेशो ज्ञानिनां वरः ।
गङ्गातोयं करे कृत्वा स्वीकारञ्च चकार सः ॥ १७०
संयुक्तं विष्णुमायाद्यैः मन्त्राद्यैः शास्त्रमुत्तमम् ।
वेदसारं करिष्यामि कृष्णाज्ञापालनाय च ॥ १७१
गङ्गातोयमुपस्पृश्य मिथ्या यदि वदेज्जनः ।
स याति कालसूत्रञ्च यावद्वै ब्रह्मणो वयः ॥ १७२
इत्युक्ते शङ्करे ब्रह्मन् गोलोके सुरसंसदि ।
आविर्ब्बभूव श्रीकृष्णो राधया सह तत्परम् ॥ १७३
ते तं दृष्ट्वा च संहृष्टाः संस्तूय पुरुषोत्तमम् ।
परमानन्दपूर्णाश्च चक्रुश्च पुनरुत्सवम् ॥ १७४
कालेन शम्भुर्भगवान् शास्त्रदीपं चकार सः ।
इत्येवं कथितं सर्व्वं सुगोप्यञ्च सुदुर्लभम् ॥ १७५
सा एव द्रवरूपा या गङ्गा गोलोकसम्भवा ।
राधाकृष्णाङ्गसम्भूता भुक्तिमुक्तिफलप्रदा ॥ १७६
स्थाने स्थाने स्थापिता सा कृष्णेन परमात्मना ।
कृष्णस्वरूपा परमा सर्व्वब्रह्माण्डपूजिता ॥ १७७

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे गङ्गोपाख्यानं नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

नारद उवाच ।

कलेः पञ्चसहस्राब्दे समतीते सुरेश्वरी ।
क्व गता सा महाभागा तन्मे व्याख्यातुमर्हसि ॥ १

नारायण उवाच ।

भारतं भारतीशापात् समागम्येश्वरेच्छया ।
जगाम तत्र वैकुण्ठं शापान्ते पुनरेव सा ॥ २
भारती भारतं त्यक्त्वा जगाम तं हरेः पदम् ।
पद्मावती च शापान्ते गङ्गायाश्चैव नारद ॥ ३
गङ्गा सरस्वती लक्ष्मीश्चैतास्तिस्रः प्रिया हरेः ।
तुलसीसहिता ब्रह्मंश्चतस्रः कीर्त्तिताः श्रुतौ ॥ ४

नारद उवाच ।

बभूव सा मुनिश्रेष्ठ गङ्गा नारायणप्रिया ।
अहो केन प्रकारेण तन्मे व्याख्यातुमर्हसि ॥ ५

नारायण उवाच ।

पुरा बभूव गोलोके सा गङ्गा द्रवरूपिणी ।
राधाकृष्णाङ्गसम्भूता तदंशा तत्स्वरूपिणी ॥ ६
द्रवाधिष्ठातृरूपा या रूपेणाप्रतिमा भुवि ।
नवयौवनसम्पन्ना रत्नाभरणभूषिता ॥ ७
शरन्मध्याह्नपद्मास्या सस्मिता सुमनोहरा ।
तप्तकाञ्चनवर्णाभा शतचन्द्रसमप्रभा ॥ ८
स्निग्धप्रभातिसुस्निग्धा शुद्धसत्त्वस्वरूपिणी ।
सुपीनकठिनश्रोणी सुनितम्बयुगं वरम् ॥ ९
पीनोन्नतं सुकठिनं स्तनयुग्मं सुवर्त्तुलम् ।
सुचारु नेत्रयुगलं सकटाक्षं सुवङ्किमम् ॥ १०
वङ्किमं कवरीभारं मालतीमाल्यसंयुतम् ।
सिन्दूरविन्दुललितं सार्द्धं चन्दनविन्दुभिः ॥ ११
कस्तूरीपत्रिकायुक्तं गण्डयुग्मं मनोहरम् ।
बन्धूककुसुमाकारमधरौष्ठञ्च सुन्दरम् ॥ १२
पक्वदाड़िम्बवीजाभ-दन्तपङ्क्तिसमुज्ज्वलम् ।
वाससी वह्निशुद्धे च नीवीयुक्ते च बिभ्रती ॥ १३
सा सकामा कृष्णपार्श्वे समुवास सलज्जिता ।
वाससा मुखमाच्छाद्य लोचनाभ्यां विभोर्मुखम् ॥१४
निमेषरहिताभ्याञ्च पिवन्ती सततं मुदा ।
प्रफुल्लवदना हर्षान्नवसङ्गमलालसा ॥ १५
मूर्च्छिता प्रभुरूपेण पुलकाङ्कितविग्रहा ।

एतस्मिन्नन्तरे तत्र विद्यमाना च राधिका ॥ १६
गोपीस्त्रिंशत्कोटियुक्ता कोटिचन्द्रसमप्रभा।
कोपेन रक्तपद्मास्या रक्तपङ्कजलोचना ॥ १७
श्वेतचम्पकवर्णाभा गजेन्द्रमन्दगामिनी।
अमूल्यरत्ननिर्म्माण-नानाभरणभूषिता ॥ १८
अमूल्यरत्नखचितममूल्यं वह्निशौचकम्।
पीताम्बरयुगलं नीवीयुक्तञ्च बिभ्रतीम् ॥ १९
स्थलपद्मप्रभामुष्टं कोमलञ्च सुरञ्जितम्।
कृष्णदत्तार्घ्यसंयुक्तं विन्यस्यन्ती पदाम्बुजम् ॥ २०
रत्नेन्द्रसारनिर्म्माण-विमानादवरुह्य च।
सखीभिः सेव्यमाना च श्वेतचामरवायुना ॥ २१
कस्तूरीविन्दुभिर्युक्तं चन्दनेन्दुसमन्वितम्।
दीप्तदीपप्रभाकारं सिन्दूरविन्दुसुन्दरम् ॥ २२
दधती भालमध्ये च सीमन्ताधस्थलोज्ज्वलं।
पारिजातप्रसूनानां माल्ययुक्तं सुवङ्किमम् ॥ २३
सुचारुकवरीभारं कम्पयन्ती च कम्पिता।
सुचारुनासासंयुक्तमोष्ठं कम्पयती रुषा ॥ २४
गत्वोवास कृष्णपार्श्वे रत्नसिंहासने वरे।
सखीनाञ्च समूहैश्च परिपूर्णा विभोः सभा ॥ २५
ताञ्च दृष्ट्वा समुत्तस्थौ कृष्णः सादरपूर्व्वकम्।
संभाष्य मधुराभाषैः सस्मितश्च ससम्भ्रमः ॥ २६
प्रणेमुरतिसन्त्रस्ता गोपा नम्रात्मकन्धराः।
तुष्टुवुस्ते च भक्त्या च तुष्टाव परमेश्वरः ॥ २७
उत्थाय गङ्गा सहसा सम्भाषाञ्च चकार सा।
कुशलं परिपप्रच्छ भीतातिविनयेन च ॥ २८
नम्रतावस्थिता(क) त्रस्ता शुष्ककण्ठोष्ठतालुका।
ध्यानेन शरणापन्ना श्रीकृष्णचरणाम्बुजे ॥ २९
तद्धृत्पद्मे स्थितः कृष्णो भीतायैवाभयं ददौ।
बभूव स्थिरचित्ता सा सर्व्वेश्वरवरेण च ॥ ३०
उर्द्ध्वसिंहासनस्थाञ्च राधां गङ्गा ददर्श सा।
सुस्निग्धां सुखदृश्याञ्च ज्वलन्तीं ब्रह्मतेजसा ॥ ३१
असंख्यब्रह्मणामाद्याञ्चादिसृष्टेः सनातनीम्।
यथा द्वादशवर्षीयां कन्याञ्च नवयौवनाम् ॥ ३२
विश्ववृन्दे निरुपमां रूपेण च गुणेन च।
शान्तां कान्तामनन्तान्तामाद्यन्तरहितां सतीम् ॥ ३३
शुभां सुभद्रां सुभगां स्वामिसौभाग्यसंयुताम्।
सौन्दर्य्यसुन्दरीश्रेष्ठां सर्व्वासु सुन्दरीषु च ॥ ३४
कृष्णार्द्धाङ्गां कृष्णसमां तेजसा वयसा स्त्रिया।
पूजिताञ्च महालक्ष्मीं महालक्ष्मीश्वरेण च ॥ ३५
प्रच्छाद्यमानां प्रभया सभामीशस्य सुप्रभाम्।
सखीदत्तं भुक्तवतीं ताम्बूलमन्यदुर्लभम् ॥ ३६
अजन्यां सर्व्वजननीं धन्यां मान्याञ्च मानिनीम्।
कृष्णप्राणाधिदेवीञ्च प्राणप्रियतमां रमाम् ॥ ३७
दृष्ट्वा रासेश्वरीं तृप्तिं न जगाम सुरेश्वरी।
निमेषरहिताभ्याञ्च लोचनाभ्यां पपौ च ताम् ॥ ३८
एतस्मिन्नन्तरे राधा जगदीशमुवाच सा।
वाचा मधुरया शान्ता विनीता सस्मिता मुने ॥ ३९

राधिकोवाच।

केयं प्राणेश कल्याणी सस्मिता त्वन्मुखाम्बुजम्।
पश्यन्ती सततं पार्श्वे सकामारक्तलोचना ॥ ४०
मूर्च्छां प्राप्नोति रूपेण पुलकाञ्चितविग्रहा।
वस्त्रेण मुखमाच्छाद्य निरीक्षन्ती पुनः पुनः ॥ ४१
त्वञ्चापीमां संनिरीक्ष्य सकामः सस्मितः सदा।
मयि जीवति गोलोके भूता दुर्वृत्तिरीदृशी ॥ ४२
त्वमेव चैवं दुर्वृत्तं वारं वारं करोषि च।
क्षमां करोमि प्रेम्णा च स्त्रीजातिः स्निग्धमानसा ॥ ४३
संगृह्येमां प्रियामिष्टां गोलोकाद्गच्छ लम्पट।
अन्यथा न हि ते भद्रं भविष्यति व्रजेश्वर ॥ ४४
दृष्टस्त्वं विरजायुक्तो मया चन्दनकानने।
क्षमा कृता मया पूर्व्वं सखीनां वचनाद्धरे ॥ ४५
त्वया मच्छब्दमात्रेण तिरोधानं कृतं पुरा।
देहं सन्त्यज्य विरजा नदीरूपा बभूव सा ॥ ४६
कोटियोजनविस्तीर्णा ततो दैर्घ्ये चतुर्गुणा।
अद्यापि विद्यमाना सा तव सत्कीर्त्तिरूपिणी ॥ ४७
गृहं मयि गतायाञ्च पुनर्गत्वा तदन्तिकम्।
उच्चैररोदीर्विरजे विरजेति च संस्मरन् ॥ ४८
तदा तोयात् समुत्थाय सा योगात् सिद्धयोगिनी।
सालङ्कारा मूर्त्तिमती ददौ तुभ्यञ्च दर्शनम् ॥ ४९
ततस्ताञ्च समाश्लिष्य वीर्य्याधानं कृतं त्वया।
ततो बभूवुस्तस्याञ्च समुद्राः सप्त एव च ॥ ५०
दृष्टस्त्वं शोभया गोप्या युक्तश्चम्पककानने।
सद्यो मच्छब्दमात्रेण तिरोधानं कृतं त्वया ॥ ५१
शोभा देहं परित्यज्य जगाम चन्द्रमण्डलम्।

(क) नम्रभावस्थितेति पाठान्तरम्।

ततस्तस्याः शरीरञ्च स्निग्धं तेजो बभूव ह ॥५२
संविभज्य त्वया दत्तं हृदयेन विदूयता।
रत्नाय किञ्चित् स्वर्णाय किञ्चिन्मणिवराय च ॥५३
किञ्चित् स्त्रीणां मुखाब्जेभ्यः किञ्चिद्राज्ये च किञ्चन।
किञ्चित् प्रकृष्टवस्त्रेभ्यो रौप्येभ्यश्चापि किञ्चन ॥ ५४
किञ्चिच्चन्दनपङ्केभ्यस्तोयेभ्यश्चापि किञ्चन।
किञ्चित् किसलयेभ्यश्च पुष्पेभ्यश्चापि किञ्चन ॥ ५५
किञ्चित् फलेभ्यः शस्येभ्यः सुपक्वेभ्यश्च किञ्चन।
नृपदेवगृहेभ्यश्च संस्कृतेभ्यश्च किञ्चन ॥ ५६
दृष्टस्त्वं प्रभया गोप्या युक्तो वृन्दावने वने।
सद्यो मच्छब्दमात्रेण तिरोधानं कृतं त्वया ॥ ५७
प्रभा देहं परित्यज्य जगाम सूर्य्यमण्डलम्।
ततस्तस्याः शरीरञ्च तीक्ष्णं तेजो बभूव ह ॥ ५८
संविभज्य त्वया दत्तं प्रेम्णा प्ररुदता पुरा।
विसृज्य चक्षुषोर्दत्तं लज्जया मद्भयेन च ॥ ५९
हुताशनाय किञ्चिच्च नृपेभ्यश्चापि किञ्चन।
किञ्चित् पुरुषसंघेभ्यो देवेभ्यश्चापि किञ्चन ॥ ६०
किञ्चिद्दस्युगणेभ्यश्च नागेभ्यश्चापि किञ्चन।
ब्राह्मणेभ्यो मुनिभ्यश्च तपस्विभ्यश्च किञ्चन ॥ ६१
स्त्रीभ्यः सौभाग्ययुक्ताभ्यो यशस्विभ्यश्च किञ्चन।
तच्च दत्वा च सर्व्वेभ्यः पूर्व्वं रोदितुमुद्यतः ॥ ६२
शान्त्या गोप्या युतस्त्वञ्च दृष्टोऽत्र रासमण्डले।
वसन्ते पुष्पशय्यायां माल्यवांश्चन्दनोक्षितः ॥ ६३
रत्नप्रदीपैर्युक्तश्च रत्ननिर्म्माणमन्दिरे।
रत्नभूषणभूषाढ्यो रत्नभूषितया सह ॥ ६४
त्वया दत्तञ्च ताम्बूलं भुक्तवत्या सुरम्यया।
तया दत्तञ्च ताम्बूलं भुक्तवान् त्वं पुरा विभो ॥ ६५
सद्यो मच्छब्दमात्रेण तिरोधानं कृतं त्वया।
शान्तिर्देहं परित्यज्य भिया लीना त्वयि प्रभो ॥ ६६
ततस्तस्याः शरीरञ्च गुणश्रेष्ठं बभूव ह।
संविभज्य त्वया दत्तं प्रेम्णा प्ररुदता पुरा ॥ ६७
विश्वे विषयिणे किञ्चित् सत्त्वरूपाय विष्णवे।
शुद्धसत्त्वस्वरूपायै किञ्चिल्लक्ष्म्यै पुरा विभो ॥ ६८
त्वन्मन्त्रोपासकेभ्यश्च वैष्णवेभ्यश्च किञ्चन।
तपस्विभ्यश्च धर्म्माय धर्म्मिष्ठेभ्यश्च किञ्चन ॥ ६९
मया पूर्व्वञ्च त्वं दृष्टो गोप्या च क्षमया सह।
सुवेशयुक्तो मालावान् गन्धचन्दनसंयुतः ॥ ७०
रत्नभूषितया गन्धचन्दनोक्षितया तया।
सुखेन मूर्च्छितस्तल्पे पुष्पे चन्दनसंयुते ॥ ७१
श्लिष्टो निद्रितया सद्यः सुखेन नवसङ्गमात्।
मया प्रबोधिता सा च भवांश्च स्मरणं कुरु ॥ ७२
गृहीतं पीतवस्त्रं ते मुरली च मनोहरा।
वनमाला कौस्तुभश्चाप्यमूल्यं रत्नकुण्डलम् ॥ ७३
पश्चात् प्रदत्तं प्रेम्णा च सखीनां वचनाद्धरे।
लज्जया कृष्णवर्णोऽभूद्भवानद्यापि पश्यतः ॥ ७४
क्षमा देहं परित्यज्य लज्जया पृथिवीं गता।
ततस्तस्याः शरीरञ्च गुणश्रेष्ठं बभूव ह ॥ ७५
संविभज्य त्वया दत्तं प्रेम्णा प्ररुदता पुरा।
किञ्चिद्दत्तं विष्णवे च वैष्णवेभ्यश्च किञ्चन ॥ ७६
धर्म्मिष्ठेभ्यश्च धर्म्माय दुर्ब्बलेभ्यश्च किञ्चन।
तपस्विभ्योऽपि देवेभ्यः पण्डितेभ्यश्च किञ्चन ॥ ७७
एतत् ते कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि।
त्वद्गुणश्च बहुतरं जानामि चापरं प्रभो ॥ ७८
इत्येवमुक्त्वा सा राधा रक्तपङ्कजलोचना।
गङ्गां वक्तुं समारेभे नम्रास्यां लज्जितां सतीम् ॥ ७९
गङ्गा रहस्यं विज्ञाय योगेन सिद्धयोगिनी।
तिरोभूय सभामध्यात् स्वजलं प्रविवेश सा ॥ ८०
राधा योगेन विज्ञाय सर्व्वत्रावस्थिताञ्च ताम्।
पानं कर्त्तुं समारेभे गण्डूषात् सिद्धयोगिनी ॥ ८१
गङ्गा रहस्यं विज्ञाय योगेन सिद्धयोगिनी।
श्रीकृष्णचरणाम्भोजे विवेश शरणं ययौ ॥ ८२
गोलोकञ्चैव वैकुण्ठं ब्रह्मलोकादिकं तथा।
ददर्श राधा सर्व्वत्र नैव गङ्गां ददर्श सा ॥ ८३
सर्व्वतो जलशून्यञ्च शुष्कपङ्कजगोलकम्।
जलजन्तुसमूहैश्च मृतदेहैः समन्वितम् ॥ ८४
ब्रह्मविष्णुशिवानन्त-धर्म्मेन्द्रेन्दुदिवाकराः।
मनवो मानवाः सर्व्वे देवाः सिद्धास्तपस्विनः ॥ ८५
गोलोकञ्च समाजग्मुः शुष्ककण्ठोष्ठतालुकाः।
सर्व्वे प्रणेमुर्गोविन्दं सर्व्वेशं प्रकृतेः परम् ॥ ८६
वरं वरेण्यं वरदं वरिष्ठं वरकारणम्।
वरेशञ्च वराहञ्च सर्व्वेषां प्रवरं प्रभुम् ॥ ८७
निरीहञ्च निराकारं निर्लिप्तञ्च निराश्रयम्।
निर्गुणञ्च निरुत्साहं निर्व्यूहञ्च निरञ्जनम् ॥ ८८
स्वेच्छामयञ्च साकारं भक्तानुग्रहविग्रहम्।

सत्यस्वरूपं सत्येशं साक्षिरूपं सनातनम् ॥ ८९
परं परेशं परमं परमात्मानमीश्वरम्।
प्रणम्य तुष्टुवुः सर्व्वे भक्तिनम्रात्मकन्धराः ॥ ९०
सगद्गदाः साश्रुनेत्राः पुलकाञ्चितविग्रहाः।
सर्व्वे संस्तूय सर्व्वेशं भगवन्तं परं हरिम् ॥ ९१
ज्योतिर्म्मयं परं ब्रह्म सर्व्वकारणकारणम्।
अमूल्यरत्ननिर्म्माण-चित्रसिंहासनस्थितम् ॥ ९२
सेव्यमानञ्च गोपालैः श्वेतचामरवायुना।
गोपालिकानृत्यगीतं पश्यन्तं सस्मितं मुदा ॥ ९३
परितो व्यावृतं शश्वद्गोपीभिः शतकोटिभिः।
चन्दनोक्षितसर्व्वाङ्गं रत्नभूषणभूषितम् ॥ ९४
नवीननीरदश्यामं किशोरं पीतवाससम्।
यथा द्वादशवर्षीयबालं गोपालरूपिणम् ॥ ९५
कोटिचन्द्रप्रभासुष्ट-पुष्टश्रीयुक्तविग्रहम्।
स्वतेजसा परिवृतं सुखदृश्यं मनोहरम् ॥ ९६
कोटिकन्दर्पसौन्दर्य्य-लीलालावण्यधामकम्।
दृश्यमानञ्च गोपीभिः सस्मिताभिश्च सन्ततम् ॥ ९७
भूषणैर्भूषिताभिश्च रत्नेन्द्रसारनिर्म्मितैः।
पिबन्तीभिर्लोचनाभ्यां मुखचन्द्रं प्रभोर्मुदा ॥ ९८
प्राणाधिकप्रियतम-राधावक्षःस्थलस्थितम्।
तया प्रदत्तं ताम्बूलं भुक्तवन्तं सुवासितम् ॥ ९९
परिपूर्णतमं रासे ददृशुः सर्व्वतः सुराः।
मुनयो मनवः सिद्धास्तपसा च तपस्विनः ॥ १००
प्रहृष्टमानसाः सर्व्वे जग्मुः परमविस्मयम्।
परस्परं समालोच्य ते ऊचुश्चतुर्मुखम् ॥ १०१
निवेदितुं जगन्नाथं स्वाभिप्रायमभीप्सितम्।
ब्रह्मा तद्वचनं श्रुत्वा विष्णुं कृष्णस्य दक्षिणे ॥ १०२
वामतो वामदेवञ्च जगाम कृष्णसन्निधिम्।
परमानन्दयुक्तांश्च परमानन्दरूपकम् ॥ १०३
सर्व्वं कृष्णमयं धाता ददर्श रासमण्डले।
सर्व्वं समानवेशञ्च समानासनसंस्थितम् ॥ १०४
द्विभुजं मुरलीहस्तं वनमालाविभूषितम्।
मयूरपुच्छचूडञ्च कौस्तुभेन विराजितम् ॥ १०५
अतीव कमनीयञ्च सुन्दरं शान्तविग्रहम्।
गुणभूषणरूपेण तेजसा वयसा त्विषा ॥ १०६
वाससा यशसा कृत्या मूर्त्त्या भङ्गिमया समम्।
परिपूर्णतमं सर्व्वं सर्व्वैश्वर्य्यसमन्वितम् ॥ १०७
कं सेव्यं सेवकं कं वा दृष्ट्वा निर्व्वक्तुमक्षमः।
क्षणं तेजःस्वरूपञ्च रूपं तत्र स्थितं क्षणम्।
निराकारञ्च साकारं ददर्श द्विविधं क्षणम् ॥ १०८
एकमेव क्षणं कृष्णं राधया सहितं परम्।
प्रत्येकासनसंस्थञ्च तया च सहितं क्षणम् ॥ १०९
राधारूपधरं कृष्णं कृष्णरूपकलत्रकम्।
किं स्त्रीरूपञ्च पुंरूपं विधाता ध्यातुमक्षमः ॥ ११०
हृत्पद्मस्थञ्च श्रीकृष्णं धाता ध्यानेन चेतसा।
चकार स्तवनं भक्त्या परिहारमनेकधा ॥ १११
ततः स चक्षुरुन्मील्य पुनश्च तदनुज्ञया।
ददर्श कृष्णमेकञ्च राधावक्षःस्थलस्थितम् ॥ ११२
स्वपार्षदैः परिवृतं गोपीमण्डलमण्डितम्।
पुनः प्रणेमुः संहृष्टास्तुष्टुवुश्च पुनश्च ते ॥ ११३
विज्ञाय तदभिप्रायं तानुवाच सुरेश्वरः।
सर्व्वान्तरात्मा सर्व्वज्ञः सर्व्वेशः सर्व्वभावनः ॥ ११४

श्रीभगवानुवाच।

आगच्छ कुशलं ब्रह्मन्नागच्छ कमलापते।
इहागच्छ महादेव शश्वत् कुशलमस्तु वः ॥ ११५
आगताः स्थ महाभागा गङ्गानयनकारणात्।
गङ्गा मच्चरणाम्भोजे भयेन शरणं गता ॥ ११६
राधेमां पातुमिच्छन्ती दृष्ट्वा मत्सन्निधानतः।
दास्यामीमां वहिष्कृत्य यूयं कुरुत निर्भयाम् ॥ ११७
श्रीकृष्णस्य वचः श्रुत्वा सस्मितः कमलोद्भवः।
तुष्टाव सर्व्वाराध्यान्तां राधां श्रीकृष्णपूजिताम् ॥ ११८
वक्त्रैश्चतुर्भिः संस्तूय भक्तिनम्रात्मकन्धरः।
धाता चतुर्णां वेदानामुवाच चतुराननः ॥ ११९

ब्रह्मोवाच।

गङ्गा त्वदङ्गसम्भूता प्रभोश्च रासमण्डले।
युवयोर्द्रवरूपा सा मुग्धयोः शङ्करस्वरात् ॥ १२०
कृष्णांशा च त्वदंशा च त्वत्कन्यासदृशी प्रिया।
त्वन्मन्त्रग्रहणं कृत्वा करोतु तव पूजनम् ॥ १२१
भविष्यति पतिस्तस्या वैकुण्ठे च चतुर्भुजः।
भूगतायाः कलायाश्च लवणोदश्च वारिधिः ॥ १२२
गोलोकस्था च या राधा सर्व्वत्रस्था ततोऽम्बिका।
तदात्मिका त्वं देवेशि सर्व्वदा च तवात्मजा ॥ १२३
ब्रह्मणो वचनं श्रुत्वा स्वीचकार च सस्मिता।
वहिर्ब्बभूव सा कृष्णपादाङ्गुष्ठनखाग्रतः ॥ १२४

तत्रैव संवृता शान्ता तस्थौ तेषाञ्च मध्यतः।
उवाच तोयादुत्थाय तदधिष्ठातृदेवता ॥ १२५
तत्तोयं ब्रह्मणा किञ्चित् स्थापितञ्च कमण्डलौ।
किञ्चिद्दधार शिरसि चन्द्रार्द्धं चन्द्रशेखरः ॥ १२६
गङ्गायै राधिकामन्त्रं प्रददौ कमलोद्भवः।
तत्स्तोत्रं कवचं पूजाविधानं ध्यानमेव च ॥ १२७
सर्व्वं तत्सामवेदोक्तं पुरश्चर्य्याक्रमं तथा।
गङ्गा तामेव संपूज्य वैकुण्ठं प्रययौ सती ॥ १२८
लक्ष्मीः सरस्वती गङ्गा तुलसी विश्वपावनी।
एता नारायणस्यैव चतस्रो योषितो मुने ॥ १२९
अथ तं सस्मितः कृष्णो ब्रह्माणं समुवाच ह।
सर्व्वं कालस्य वृत्तान्तं दुर्ब्बोध्यमतिविस्मितम् ॥ १३०

श्रीकृष्ण उवाच।

गृहाण गङ्गां हे ब्रह्मन् हे विष्णो हे महेश्वर।
शृणु कालस्य वृत्तान्तं यदतीतं निशामय ॥ १३१
यूयञ्च येऽन्यदेवाश्च मुनयो मनवस्तथा।
सिद्धास्तपस्विनश्चैव ये येऽत्रैव समागताः ॥ १३२
ते ते जीवन्ति गोलोके कालचक्रविवर्ज्जिते।
जलप्लुतं सर्व्वविश्वमागतं प्राकृते लये ॥ १३३
ब्रह्माद्या येऽन्यविश्वस्थास्ते लीना अधुना मयि।
वैकुण्ठञ्च विना सर्व्वं जलपूर्णं पश्य पद्मज ॥ १३४
गत्वा सृष्टिं कुरु पुनर्ब्रह्मलोकादिकं भवम्।
स्वब्रह्माण्डं विरचय पश्चाद्गङ्गा च यास्यति ॥ १३५
एवमन्येषु विश्वेषु सृष्टा ब्रह्मादिकं पुनः।
करोम्यहं पुनः सृष्टिं गच्छ शीघ्रं सुरैः सह ॥ १३६
गतश्च्युतो हि विषयैर्ब्रह्मणः पतनं भवेत्।
गताः कतिविधास्ते च भविष्यन्ति च वेधसः ॥ १३७
इत्युक्त्वा राधिकानाथो जगामान्तःपुरं मुने।
देवा गत्वा पुनः सृष्टिं चक्रुरेव प्रयत्नतः ॥ १३८
गोलोके च स्थिता गङ्गा वैकुण्ठे शिवलोकके।
ब्रह्मलोके तथान्यत्र यत्र तत्र पुरा स्थिता ॥ १३९
तत्रैव सा गता गङ्गा चाज्ञया परमात्मनः।
निर्गता विष्णुपादाब्जात् तेन विष्णुपदी स्मृता ॥ १४०
इत्येवं कथितं सर्व्वं गङ्गोपाख्यानमुत्तमम्।
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥ १४१

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
गङ्गोपाख्याने एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः।

नारद उवाच।

लक्ष्मीः सरस्वती गङ्गा तुलसी लोकपावनी।
एता नारायणस्यैव चतस्रश्च प्रिया इति ॥ १
गङ्गा जगाम वैकुण्ठमिदमेव श्रुतं मया।
कथं सा तस्य पत्नी च बभूवेति न च श्रुतम् ॥ २

नारायण उवाच।

गङ्गा जगाम वैकुण्ठं तत्पश्चाज्जगतां विधिः।
गत्वोवाच तया सार्द्धं प्रणम्य जगदीश्वरम् ॥ ३

ब्रह्मोवाच।

राधा-कृष्णाङ्गसम्भूता या देवी द्रवरूपिणी।
तदधिष्ठातृदेवीयं रूपेणाप्रतिमा भुवि ॥ ४
नवयौवनसम्पन्ना सुशीला सुन्दरीवरा।
शुद्धसत्त्वस्वरूपा च क्रोधाहङ्कारवर्ज्जिता ॥ ५
यदङ्गसम्भवा नान्यं वृणोतीयञ्च त्वां विना।
तथापि मानिनी राधा महातेजस्विनी वरा ॥ ६
समुद्यता पातुमिमां भीतेयं बुद्धिपूर्व्वकम्।
विवेश चरणाम्भोजे कृष्णस्य परमात्मनः ॥ ७
सर्व्वं विशुष्कं गोलोकं दृष्ट्वाहमगमं तदा।
गोलोकं यत्र कृष्णश्च सर्व्ववृत्तान्तप्राप्तये ॥ ८
सर्व्वान्तरात्मा सर्व्वं नो ज्ञात्वाभिप्रायमेव च।
बहिश्चकार गङ्गाञ्च पादाङ्गुष्ठनखाग्रतः ॥ ९
दत्त्वास्यै राधिकामन्त्रं पूरयित्वा च गोलकम्।
संप्रणम्य च राधेशं सर्व्वेषामागमं विभो ॥ १०
गान्धर्व्वेण विवाहेन गृहाणेमां सुरेश्वरीम्।
सुरेश्वरस्त्वं रसिको रसिकां रसभावन ॥ ११
त्वं रत्नं पुंसु देवेषु स्त्रीरत्नं स्त्रीष्वियं सती।
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत् ॥ १२
उपस्थितां स्त्रियं यः कान्यां न गृह्णाति मदेन च।
तं विहाय महालक्ष्मी रुष्टा याति न संशयः ॥ १३
यो भवेत् पण्डितः सोऽपि प्रकृतिं नावमन्यते।
सर्व्वे प्राकृतिकाः पुंसः कामिन्यः प्रकृतेः कलाः ॥ १४
त्वमेव भगवानाद्यो निर्गुणः प्रकृतेः परः।
अर्द्धाङ्गो द्विभुजः कृष्णोऽप्यर्द्धाङ्गेन चतुर्भुजः ॥ १५
कृष्णवामांशसम्भूता बभूव राधिका पुरा।
दक्षिणांशः स्वयं सा च वामांशः कमला यथा ॥ १६

तेनेयं त्वां वृणोत्येव यतस्त्वद्देहसम्भवा।
एकाङ्गञ्चैव स्त्रीपुंसोर्यथा प्रकृतिपूरुषः॥ १७
इत्येवमुक्त्वा धाता च तां समर्प्य जगाम सः।
गान्धर्व्वेण विवाहेन तां जग्राह हरिः स्वयम्॥ १८
शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्च्चिताम्।
रेमे रमापतिस्तत्र गङ्गया सहितो मुदा॥ १९
गां पृथ्वीञ्च गता यस्मात् स्वस्थानं परमागता।
निर्गता विष्णुपादाच्च गङ्गा विष्णुपदी स्मृता॥ २०
मूर्च्छां सम्प्राप सा देवी नवसङ्गममात्रतः।
रसिका सुखसम्भोगाद्रसिकेश्वरसंयुता॥ २१
तद्दृष्ट्वा दुःखिता वाणी सा पद्मेर्ष्याविवर्ज्जिता।
नित्यमीर्ष्यति तां वाणी न च गङ्गा सरस्वतीम्॥२२
गङ्गया सह तस्यैव तिस्रो भार्य्या रमापतेः।
सार्द्धं तुलस्या पश्चाच्च चतस्रस्ता बभूविरे॥ २३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे गङ्गाविवाहो
नाम द्वादशोऽध्यायः॥ १२॥

---

## त्रयोदशोऽध्यायः।

### नारद उवाच।

नारायणप्रिया साध्वी कथं सा च बभूव ह।
तुलसी कुत्र सम्भूता का वा सा पूर्व्वजन्मनि॥ १
कस्य वा सा कुले जाता कस्य कन्या तपस्विनी।
केन वा तपसा सा च संप्राप प्रकृतेः परम्॥ २
निर्व्विकल्पं निरीहञ्च सर्व्वसाक्षिस्वरूपकम्।
नारायणं परं ब्रह्म परमात्मानमीश्वरम्॥ ३
सर्व्वाराध्यञ्च सर्व्वेशं सर्व्वज्ञं सर्व्वकारणम्।
सर्व्वाधारं सर्व्वरूपं सर्व्वेषां परिपालकम्॥ ४
कथमेतादृशी देवी वृक्षत्वं समवाप ह।
कथं वाप्यसुरग्रस्ता सा बभूव तपस्विनी॥ ५
सन्दिग्धं मे मनो लोलं प्रेरयेन्मां मुहुर्मुहुः।
छेत्तुमर्हसि सन्देहं सर्व्वसन्देहभञ्जन॥ ६

### नारायण उवाच।

मनुश्च दक्षसावर्णिः पुण्यवान् वैष्णवः शुचिः।
यशस्वी कीर्त्तिमांश्चैव विष्णोरंशसमुद्भवः॥ ७
तत्पुत्त्रो धर्म्मसावर्णिर्धर्म्मिष्ठो वैष्णवः शुचिः।
तत्पुत्त्रो विष्णुसावर्णिर्वैष्णवश्च जितेन्द्रियः॥ ८
तत्पुत्त्रो देवसावर्णिर्विष्णुव्रतपरायणः।
तत्पुत्त्रो राजसावर्णिर्महाविष्णुपरायणः॥ ९
वृषध्वजश्च तत्पुत्त्रो वृषध्वजपरायणः।
यस्याश्रमे स्वयं शम्भुरासीद्देवयुगत्रयम्॥ १०
पुत्त्रादपि परः स्नेहो नृपे तस्मिन् शिवस्य च।
न च नारायणं मेने न च लक्ष्मीं सरस्वतीम्॥ ११
पूजाञ्च सर्व्वदेवानां दूरीभूतां चकार सः।
भाद्रे मासि महालक्ष्मीपूजां मत्तो बभञ्ज ह॥ १२
माघे सरस्वतीपूजां दूरीभूतां चकार सः।
यज्ञञ्च विष्णुपूजाञ्च निनिन्द न चकार सः॥ १३
न कोऽपि देवो भूपेन्द्रं शशाप शिवकारणात्।
भ्रष्टश्रीर्भव भूपेति तं शशाप दिवाकरः॥ १४
शूलं गृहीत्वा तं सूर्य्यं दधाव शङ्करः स्वयम्।
पित्रा सार्द्धं दिनेशश्च ब्रह्माणं शरणं ययौ॥ १५
शिवस्त्रिशूलहस्तश्च ब्रह्मलोकं ययौ क्रुधा।
ब्रह्मा सूर्य्यं पुरस्कृत्य वैकुण्ठञ्च ययौ भिया॥ १६
शूलं गृहीत्वा तं सूर्य्यं दधाव शङ्करः स्वयम्।
ब्रह्मकश्यपमार्त्तण्डाः सन्त्रस्ताः शुष्कतालुकाः॥१७
नारायणञ्च सर्व्वेशं ते ययुः शरणं भिया।
मूर्द्ध्ना प्रणेमुस्ते गत्वा तुष्टुवुश्च पुनः पुनः॥ १८
सर्व्वं निवेदनं चक्रुर्भयस्य कारणं हरेः।
नारायणश्च कृपया तेभ्यो हि अभयं ददौ॥ १९
स्थिरा भवत हे भीता भयं किं वो मयि स्थिते।
स्मरन्ति ये यत्र तत्र मां विपत्तौ भयान्विताः।
तांस्तत्र गत्वा रक्षामि चक्रहस्तस्त्वरान्वितः॥ २०
पाताहं जगतां देवाः कर्त्ताहं सततं सदा।
स्रष्टा च ब्रह्मरूपेण संहर्त्ता शिवरूपतः॥ २१
शिवोऽहं त्वमहञ्चापि सूर्य्योऽहं त्रिगुणात्मकः।
विधाय नानारूपञ्च करोमि सृष्टिपालनम्॥ २२
यूयं गच्छत भद्रं वो भविष्यति भयं कुतः।
अद्यप्रभृति वो नास्ति मद्वराच्छङ्कराद्भयम्॥ २३
आशुतोषः स भगवान् शङ्करश्च सतां गतिः।
भक्ताधीनश्च भक्तेशो भक्तात्मा भक्तवत्सलः॥ २४
सुदर्शनं शिवश्चैव मम प्राणाधिकप्रियः।
ब्रह्माण्डेषु न तेजस्वी हे ब्रह्मन्ननयोः परः॥ २५
शक्तः स्रष्टुं महादेवः सूर्य्यकोटिञ्च लीलया। ॰

कोटिश्च ब्रह्मणामेवं किमसाध्यञ्च शूलिनः ॥ २६
वाञ्छाज्ञानं तन्न किञ्चिद्ध्यायतो मां दिवानिशम् ।
मन्नाम मद्गुणं भक्त्या पञ्चवक्त्रेण गीयते ॥२७
अहमेवं चिन्तयामि तत्कल्याणं दिवानिशम् ।
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥ २८
शिवस्वरूपो भगवान् शिवाधिष्ठातृदेवकः ।
शिवं भवति तस्माच्च शिवं तेन विदुर्बुधाः ॥ २९
एतस्मिन्नन्तरे तत्राजगाम शङ्करः स्वयम् ।
शूलहस्तो वृषारूढो रक्तपङ्कजलोचनः ॥ ३०
अवरुह्य वृषात् तूर्णं भक्तिनम्रात्मकन्धरः ।
ननाम भक्त्या तं शान्तं लक्ष्मीकान्तं परात्परम् ॥३१
रत्नसिंहासनस्थञ्च रत्नालङ्कारभूषितम् ।
किरीटिनं कुण्डलिनं चक्रिणं वनमालिनम् ॥ ३२
नवीननीरदश्यामं सुन्दरञ्च चतुर्भुजम् ।
चतुर्भुजैः सेवितञ्च श्वेतचामरवायुना ॥ ३३
चन्दनोक्षितसर्व्वाङ्गं भूषितं पीतवाससा ।
लक्ष्मीप्रदत्तताम्बूलं भुक्तवन्तञ्च नारद ॥ ३४
विद्याधरीनृत्यगीतं पश्यन्तं सस्मितं मुदा ।
ईश्वरं परमात्मानं भक्तानुग्रहविग्रहम् ॥ ३५
तं ननाम महादेवो ब्रह्माणश्च ननाम सः ।
ननाम सूर्य्यो भक्त्या च सन्त्रस्तश्चन्द्रशेखरम् ॥ ३६
कश्यपश्च महाभक्त्या तुष्टाव च ननाम च ।
शिवः संस्तूय सर्व्वेशं समुवास सुखासने ॥ ३७
सुखासने सुखासीनं विश्रान्तं चन्द्रशेखरम् ।
श्वेतचामरवातेन सेवितं विष्णुपार्षदैः ॥ ३८
अक्रोधं सत्त्वसंसर्गात् प्रसन्नं सस्मितं मुदा ।
स्तुवन्तञ्च (क) पञ्चवक्त्रैः परं नारायणं विभुम् ॥ ३९
तमुवाच प्रसन्नात्मा प्रसन्नं सुरसंसदि ।
पीयूषतुल्यमधुरं वचनं सुमनोहरम् ॥ ४०

श्रीभगवानुवाच ।

अत्यन्तमुपहास्यञ्च शिवप्रश्नं शिवे शिवम् ।
लौकिकं वैदिकं प्रश्नं त्वां पृच्छामि तथापि शम् ॥४१
तपसां फलदातारं दातारं सर्व्वसम्पदाम् ।
सम्पत्प्रश्नं तपःप्रश्नमयोग्यं त्वाञ्च साम्प्रतम् ॥ ४२
ज्ञानाधिदेवे सर्व्वज्ञे ज्ञानं पृच्छामि किं वृथा ।
निरापदि विपत्प्रश्नमलं मृत्युञ्जये हरे ॥ ४३
त्वामेवागमनप्रश्नमलं स्वाश्रम आगमे ।
आगतोऽसि कथं वत्स इत्येवं वद कारणम् ॥ ४४

श्रीमहादेव उवाच ।

वृषध्वजश्च मद्भक्तो मम प्राणाधिकप्रियम् ।
सूर्य्यः शशाप इति मे कारणं वत्सकोपयोः ॥ ४५
पुत्रवात्सल्यशोकेन सूर्य्यं हन्तुं समुद्यतः ।
स ब्रह्माणं प्रपन्नश्च ससूर्य्यश्च विधिस्त्वयि ॥ ४६
त्वयि ये शरणापन्ना ध्यानेन वचसापि वा ।
निरापदस्ते निःशङ्का जरा मृत्युश्च तैर्ज्जितः ॥४७
साक्षाद्धरे शरणापन्नास्तत्फलं किं वदामि भोः ।
हरिस्मृतिश्चाभयदा सर्व्वमङ्गलदा सदा ॥ ४८
किं मे भक्तस्य भविता तन्मे ब्रूहि जगत्प्रभो ।
श्रीहतस्यास्य मूढस्य सूर्य्यशापेन हेतुना ॥ ४९

श्रीभगवानुवाच ।

कालोऽतियातो दैवेन युगानामेकविंशतिः ।
वैकुण्ठे घटिकार्द्धेन शीघ्रं गच्छ नृपालयम् ॥ ५०
वृषध्वजो मृतः कालाद्दुर्निवार्य्यात् सुदारुणात् ।
हंसध्वजश्च तत्पुत्रो मृतः सोऽपि श्रिया हतः ॥ ५१
तत्पुत्रौ च महाभागौ धर्म्मध्वजकुशध्वजौ ।
हतश्रियौ सूर्य्यशापात् तौ च परमवैष्णवौ ॥ ५२
राज्यभ्रष्टौ श्रिया भ्रष्टौ कमलातापसावुभौ ।
तयोश्च भार्य्ययोर्लक्ष्मीः कलया च जनिष्यति ॥ ५३
सम्पद्युक्तौ तदा तौ च नृपश्रेष्ठौ भविष्यतः ।
मृतस्ते सेवकः शम्भो गच्छ यूयञ्च गच्छत ॥ ५४
इत्युक्त्वा च सलक्ष्मीकः सभातोऽभ्यन्तरं गतः ।
देवा जग्मुश्च संहृष्टाः स्वाश्रमं परमं मुदा ॥ ५५
शिवश्च तपसे शीघ्रं परिपूर्णतमं ययौ ॥ ५६

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे तुलस्युपाख्याने
त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्द्दशोऽध्यायः ।

नारायण उवाच ।

लक्ष्मीं तौ च समाराध्य चोग्रेण तपसा मुने ।
वरमिष्टञ्च प्रत्येकं संप्रापतुरभीप्सितम् ॥ १

---

(क) स्तूयमानमिति पाठे कर्त्तरि यक्शानचावार्षौ ।

महालक्ष्म्या वरेणैव तौ पृथ्वीशौ बभूवतुः ।
धनवन्तौ पुत्त्रवन्तौ धर्म्मध्वजकुशध्वजौ ॥ २
कुशध्वजस्य पत्नी च देवी मालावती सती ।
सा सुषाव च कालेन कमलांशां सुतां सतीम् ॥ ३
सा च भूमिष्ठमात्रेण ज्ञानयुक्ता बभूव ह ।
कृत्वा वेदध्वनिं स्पष्टमुत्तस्थौ सूतिकागृहे ॥ ४
वेदध्वनिं सा चकार जातमात्रेण कन्यका ।
तस्मात् ताञ्च वेदवतीं प्रवदन्ति मनीषिणः ॥ ५
जातमात्रेण सुस्नाता जगाम तपसे वनम् ।
सर्व्वैर्निषिद्धा यत्नेन नारायणपरायणा ॥ ६
एकमन्वन्तरञ्चैव पुष्करे च तपस्विनी ।
अत्युग्राञ्च तपस्याञ्च लीलया च चकार सा ॥ ७
तथापि पुष्टा न क्लिष्टा नवयौवनसंयुता ।
शुश्राव खे च सहसा सा वाचमशरीरिणीम् ॥ ८
जन्मान्तरे ते भर्त्ता च भविष्यति हरिः स्वयम् ।
ब्रह्मादिभिर्दुराराध्यं पतिं लप्स्यसि सुन्दरि ॥ ९
इति श्रुत्वा तु सा रुष्टा चकार च पुनस्तपः ।
अतीव निर्ज्जनस्थाने पर्व्वते गन्धमादने ॥ १०
तत्रैव सुचिरं तप्त्वा विश्रास्य समुवास सा ।
ददर्श पुरतस्तत्र रावणं दुर्निवारणम् ॥ ११
दृष्ट्वा सातिथिभक्त्या च पाद्यं तस्मै ददौ किल ।
सुस्वादुफलमूलञ्च जलञ्चापि सुशीतलम् ॥ १२
तच्च भुक्त्वा स पापिष्ठश्चोवास तत्समीपतः ।
चकार प्रश्नमिति तां का त्वं कल्याणि चेति च ॥१३
ताञ्च दृष्ट्वा वरारोहां पीनोन्नतपयोधराम् ।
शरत्पद्मोत्सवास्याञ्च सस्मितां सुदतीं सतीम् ॥ १४
मूर्च्छामवाप कृपणः कामबाणप्रपीड़ितः ।
तां करेण समाकृष्य शृङ्गारं कर्त्तुमुद्यतः ॥ १५
सा सती कोपदृष्ट्या च स्तम्भितं तं चकार ह ।
स जड़ो हस्तपादाभ्यां किञ्चित्कर्त्तुं न च क्षमः ॥ १६
तुष्टाव मनसा देवीं पद्मांशां पद्मलोचनाम् ।
सा तत्स्तवेन सन्तुष्टा प्रकृतं तं चकार ह ॥ १७
शशाप च मदर्थे त्वं विनङ्क्ष्यसि सबान्धवः ।
स्पृष्टाहञ्च त्वया कामं विसृजाम्यवलोकय ॥ १८
इत्युक्त्वा सा च योगेन देहत्यागं चकार ह ।
गङ्गायां ताञ्च संन्यस्य स्वगृहं रावणो ययौ ॥१९
अहो किमद्भुतं दृष्टं किं कृतं वा मयाधुना ।
इति संचिन्त्य संस्मृत्य विललाप पुनः पुनः ॥२०
सा च कालान्तरे साध्वी बभूव जनकात्मजा ।
सीता देवीति विख्याता यदर्थे रावणो हतः ॥२१
महातपस्विनी सा च तपसा पूर्व्वजन्मनः ।
लेभे रामञ्च भर्त्तारं परिपूर्णतमं हरिम् ॥ २२
संप्राप्य तपसाराध्य स्वामिनञ्च जगत्पतिम् ।
सा रमा सुचिरं रेमे रामेण सह सुन्दरी ॥ २३
जातिस्मरा च स्मरति तपसश्च क्रमं पुरा ।
सुखेन तज्जहौ सर्व्वं दुःखञ्चापि सुखं फलम् ॥ २४
नानाप्रकारविभवं चकार सुचिरं सती ।
सम्प्राप्य सुकुमारं तमतीव नवयौवनम् ॥ २५
गुणिनं रसिकं शान्तं कान्तवेशमनुत्तमम् ।
स्त्रीणां मनोज्ञं सुचिरं तथा लेभे यथेप्सितम् ॥ २
पितृसत्यपालनार्थं सत्यसन्धो रघूत्तमः ।
जगाम काननं पश्चात् कालेन च बलीयसा ।
तस्थौ समुद्रनिकटे सीतया लक्ष्मणेन च ।
ददर्श तत्र वह्निञ्च विप्ररूपधरं हरिः ॥ २८
तं रामं दुःखितं दृष्ट्वा स च दुःखी बभूव ह ।
उवाच किञ्चित् सत्येष्टं सत्यं सत्यपरायणः ॥ २९

वह्निरुवाच ।

भगवन् श्रूयतां वाक्यं कालेन यदुपस्थितम् ।
सीताहरणकालोऽयं तवैव समुपस्थितः ॥ ३०
दैवञ्च दुर्निवार्य्यञ्च न च दैवात् परं बलम् ।
मत्प्रसूं मयि संन्यस्य छायां रक्षान्तिकेऽधुना ॥३१
दास्यामि सीतां तुभ्यञ्च परीक्षासमये पुनः ।
देवैः प्रस्थापितोऽहञ्च न च विप्रो हुताशनः ॥ ३२
रामस्तद्वचनं श्रुत्वा न प्रकाश्य च लक्ष्मणम् ।
स्वीचकार च स्वच्छन्दं हृदयेन विदूयता ॥ ३३
वह्निर्योगेन सीताया मायासीतां चकार ह ।
तत्तुल्यगुणसर्व्वाङ्गां ददौ रामाय नारद ॥ ३४
सीतां गृहीत्वा स ययौ गोप्यं वक्तुं निषिध्य च ।
लक्ष्मणो नैव बुबुधे गोप्यमन्यस्य का कथा ॥ ३५
एतस्मिन्नन्तरे रामो ददर्श कनकं मृगम् ।
सीता तं प्रेरयामास तदर्थे यत्नपूर्व्वकम् ॥ ३६
संन्यस्य लक्ष्मणे रामो जानक्या रक्षणं वने ।
स्वयं जगाम हन्तुं तं विव्याध सायकेन च ॥ ३७
लक्ष्मणेति च शब्दञ्च कृत्वा च मायया मृगः ।

प्राणांस्तत्याज सहसा पुरो दृष्ट्वा हरिं स्मरन् ॥ ३८
अंगरूपं परित्यज्य दिव्यरूपं विधाय च ।
रत्ननिर्म्माणयानेन वैकुण्ठं स जगाम ह ॥ ३९
वैकुण्ठद्वारे द्वार्थासीत् किङ्करो द्वारपालयोः ।
जयविजययोश्चैव बलवांश्च जिताभिधः ॥ ४०
शापेन सनकादीनां सम्प्राप्य राक्षसीं तनुम् ।
पुनर्जगाम तद्द्वारमादौ स द्वारपालयोः ॥ ४१
अथ शब्दञ्च सा श्रुत्वा लक्ष्मणेति च विक्लवम् ।
सीता तं प्रेरयामास लक्ष्मणं रामसन्निधौ ॥ ४२
गते च लक्ष्मणे रामं रावणो दुर्निवारणः ।
सीतां गृहीत्वा प्रययौ लङ्कामेव स्वलीलया ॥ ४३
विषसाद च रामश्च वने दृष्ट्वा च लक्ष्मणम् ।
तूर्णञ्च स्वाश्रमं गत्वा सीतां नैव ददर्श सः ॥ ४४
मूर्च्छां सम्प्राप्य सुचिरं विललाप भृशं पुनः ।
पुनर्बभ्राम गहने तदन्वेषणपूर्व्वकम् ॥ ४५
सम्प्राप्य तद्वार्त्तां पक्षिद्वारा नदीतटे ।
सहायं वानरं कृत्वा बबन्ध सागरं हरिः ॥ ४६
लङ्कां गत्वा रघुश्रेष्ठो जघान शायकेन च ।
सबान्धवं रावणञ्च सीतां सम्प्राप्य दुःखिताम् ॥ ४७
ताञ्च वह्निपरीक्षाञ्च कारयामास सत्वरम् ।
हुताशनस्तत्र काले वास्तवीं जानकीं ददौ ॥४८
उवाच च्छाया वह्निञ्च रामञ्च विनयान्विता ।
करिष्यामीति किमहं तदुपायं वदस्व मे ॥ ४९

वह्निरुवाच ।

त्वं गच्छ तपसे देवि पुष्करञ्च सुपुण्यदम् ।
कृत्वा तपस्यां तत्रैव स्वर्गलक्ष्मीर्भविष्यसि ॥ ५०
सा च तद्वचनं श्रुत्वा प्रतप्य पुष्करे तपः ।
दिव्यं त्रिलक्षवर्षञ्च स्वर्गे लक्ष्मीर्बभूव ह ॥ ५१
सा च कालेन तपसा यज्ञकुण्डसमुद्भवा ।
कामिनी पाण्डवानाञ्च द्रौपदी द्रुपदात्मजा ॥ ५२
कृते युगे वेदवती कुशध्वजसुता शुभा ।
त्रेतायां रामपत्नी च सीतेति जनकात्मजा ॥ ५३
तच्छाया द्रौपदी देवी द्वापरे द्रुपदात्मजा ।
त्रिहायणीति सा प्रोक्ता विद्यमाना युगत्रये ॥ ५४

नारद उवाच ।

प्रियाः पञ्च कथं तस्या बभूवुर्मुनिपुङ्गव ।
इति मे चित्तसन्देहं भञ्ज सन्देहभञ्जन ॥ ५५

नारायण उवाच ।

लङ्कायां वास्तवी सीता रामं सम्प्राप नारद ।
रूपयौवनसम्पन्ना च्छाया च बहुचिन्तिता ॥ ५६
रामाग्न्योराज्ञया तप्ता ययाचे शङ्करं वरम् ।
कामातुरा पतिव्यग्रा प्रार्थयन्ती पुनः पुनः ॥ ५७
पतिं देहि पतिं देहि पतिं देहि त्रिलोचन ।
पतिं देहि पतिं देहि पञ्चवारं चकार सा ॥ ५८
शिवस्तत्प्रार्थनं श्रुत्वा सस्मितो रसिकेश्वरः ।
प्रिये तव प्रियाः पञ्च भविष्यन्ति वरं ददौ ॥ ५९
तेन सा पाण्डवानाञ्च बभूव कामिनी प्रिया ।
इत्येवं कथितं सर्व्वं प्रस्तावं वास्तवं शृणु ॥ ६०
अथ सम्प्राप्य लङ्कायां सीतां रामो मनोहराम् ।
विभीषणाय तां लङ्कां दत्त्वायोध्यां ययौ पुनः॥६१
एकादशसहस्राब्दं कृत्वा राज्यञ्च भारते ।
जगाम सर्व्वैर्लोकैश्च सार्द्धं वैकुण्ठमेव च ॥ ६२
कमलांशा वेदवती कमलायां विवेश सा ।
कथितं पुण्यमाख्यानं पुण्यदं पापनाशनम् ॥ ६३
सततं मूर्त्तिमन्तश्च वेदाश्चत्वार एव च ।
सन्ति यस्याश्च जिह्वाग्रे सा च वेदवती स्मृता ॥ ६४
कुशध्वजसुताख्यानमुक्तं संक्षेपमेव च ।
धर्म्मध्वजसुताख्यानं निबोध कथयामि ते ॥ ६५

इति श्रीब्रह्मवैवर्त्ते प्रकृतिखण्डे नारायण-नारद-संवादे चतुर्द्दशोऽध्यायः ॥१४॥

---

## पञ्चदशोऽध्यायः ।

नारायण उवाच ।

धर्म्मध्वजस्य पत्नी च माधवीति च विश्रुता ।
नृपेण सार्द्धं सा रामा रेमे च गन्धमादने ॥ १
शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्च्चिताम् ।
चन्दनोक्षितसर्व्वाङ्गी पुष्पचन्दनवायुना ॥ २
स्त्रीरत्नमतिचार्व्वङ्गी रत्नभूषणभूषिता ।
कामुकी रसिकाश्रेष्ठा रसिकासनसंयुता ॥ ३
सुरते विरतिर्नास्ति तयोः सुरतविज्ञयोः ।
गतं वर्षशतं दैवं तौ न ज्ञातौ दिवानिशम् ॥ ४
ततो राजा मतिं प्राप्य सुरताद्विरराम सः ।
कामुकी सुन्दरी किञ्चिन्न च तृप्तिं जगाम सा ॥ ५

दधार गर्भं सा सद्यो दैवाब्दशतकं सती।
श्रीगर्भा श्रीयुता सा च सम्बभूव दिने दिने॥ ६
शुभक्षणे शुभदिने शुभयोगेन संयुते।
शुभलग्ने शुभांशे च शुभस्वामिग्रहान्विते॥ ७
कार्त्तिकीपूर्णिमायाञ्च सितवारे च पद्मज।
सुषाव सा च पद्मांशां पद्मिनीं सुमनोहराम्॥ ८
पादपद्मयुगे पद्मराजीचिह्नविराजिताम्।
राजराजेश्वरीलक्ष्मीसर्व्वाङ्गभङ्गिमायुताम्॥ ९
राजलक्ष्मीलक्ष्मयुक्तां राजलक्ष्म्यधिदेवताम्।
शरत्पार्व्वणचन्द्रास्यां शरत्पङ्कजलोचनाम्॥ १०
पक्वबिम्बाधरोष्ठीञ्च पश्यन्तीं सस्मितां गृहम्।
हस्तपादतलारक्तां निम्ननाभिमनोरमाम्॥११
तदधस्त्रिवलीयुक्तां नितम्बयुग्मवर्त्तुलाम्।
शीते सुखोष्णसर्व्वाङ्गीं ग्रीष्मे च सुखशीतलाम्॥१२
श्यामां सुकेशीं रुचिरां न्यग्रोधपरिमण्डलाम्।
श्वेतचम्पकवर्णाभां सुन्दरीष्वेकसुन्दरीम्॥ १३
नरा नार्य्यश्च तां दृष्ट्वा तुलनां दातुमक्षमाः।
तेन नाम्ना च तुलसीं तां वदन्ति पुराविदः॥ १४
सा च भूमिष्ठमात्रेण सद्यः च प्रकृतिर्यथा।
सर्व्वैर्निषिद्धा तपसे जगाम बदरीवनम्॥ १५
तत्र दैवाब्दलक्षञ्च चकार परमं तपः।
मम नारायणः स्वामी भवितेति च निश्चिता। १६
ग्रीष्मे पञ्चतपाः शीते तोयावस्था च प्रावृषि।
आसनस्था वृष्टिधारां सहन्तीति दिवानिशम्॥१७
विंशत्सहस्रवर्षञ्च फलतोयाशना च सा।
त्रिंशच्छतसहस्राब्दं पत्राहारा तपस्विनी॥ १८
चत्वारिंशत्सहस्राब्दं वायुाहारा कृशोदरी।
ततो दशसहस्राब्दं निराहारा बभूव सा॥ १९
निर्लक्ष्याञ्चैकपादस्थां दृष्ट्वा तां कमलोद्भवः।
समाययौ वरं दातुं परं बदरिकाश्रमम्॥ २०
चतुर्मुखञ्च सा दृष्ट्वा ननाम हंसवाहनम्।
तामुवाच जगत्कर्त्ता विधाता जगतामपि॥ २१

ब्रह्मोवाच।

वरं वृणुष्व तुलसि यत्ते मनसि वाञ्छितम्।
हरिभक्तिञ्च मुक्तिं वाप्यजरामरतामपि॥ २२

तुलस्युवाच।

शृणु तात प्रवक्ष्यामि यन्मे मनसि वाञ्छितम्।
सर्व्वज्ञस्यापि पुरतः का लज्जा मम साम्प्रतम्॥ २३
अहञ्च तुलसी गोपी गोलोकेऽहं स्थिता पुरा।
कृष्णप्रिया किङ्करी च तदंशा तत्सखी प्रिया॥ २४
गोविन्दरच संयुक्तामतृप्तां माञ्च मूर्च्छिताम्।
रासेश्वरी समागत्य ददर्श रासमण्डले॥ २५
गोविन्दं भर्त्सयामास मां शशाप रुषान्विता।
याहि त्वं मानवीं योनिमित्येवञ्च पितामह॥ २६
मामुवाच स गोविन्दो मदंशं त्वं चतुर्भुजम्।
लभिष्यसि तपस्तप्त्वा भारते ब्रह्मणो वरात्॥ २७
इत्येवमुक्त्वा देवेशोऽप्यन्तर्द्धानं चकार सः।
देव्या भिया तनुं त्यक्त्वा लब्धं जन्म मया भुवि॥२८
अहं नारायणं कान्तं शान्तं सुन्दरविग्रहम्।
साम्प्रतं लब्धुमिच्छामि वरमेवञ्च देहि मे॥ २९

ब्रह्मोवाच।

सुदामा नाम गोपश्च श्रीकृष्णाङ्गसमुद्भवः।
तदंशश्चातितेजस्वी ललाभ जन्म भारते॥ ३०
साम्प्रतं राधिकाशापाद्दनुवंशसमुद्भवः।
शङ्खचूड़ इति ख्यातस्त्रैलोक्ये न च तत्परः॥ ३१
गोलोके त्वां पुरा दृष्ट्वा कामोन्मथितमानसः।
विलङ्घितुं न शशाक राधिकायाः प्रभावतः॥ ३२
स च जातिस्मरस्तस्मात् त्वां ललाभ वरेण च।
जातिस्मरापि त्वमपि सर्व्वं जानासि सुन्दरि॥ ३३
अधुना तस्य पत्नी च भव भाविनि शोभने।
पश्चान्नारायणं कान्तं शान्तमेव लभिष्यसि॥ ३४
शापान्नारायणस्यैव कलया दैवयोगतः।
भविष्यसि वृक्षरूपा त्वं पूता विश्वपावनी॥ ३५
प्रधानं सर्व्वपुष्पाणां विष्णुप्राणाधिका भवे।
त्वया विना च सर्व्वेषां पूजा च विफला भवेत्॥३६
वृन्दावने वृक्षरूपा नाम्ना वृन्दावनीति च।
तत्पत्रैर्गोपिका गोपाः पूजयिष्यन्ति माधवम्॥ ३७
वृक्षाधिदेवीरूपेण सार्द्धं कृष्णेन सन्ततम्।
विहरिष्यसि गोपेन स्वच्छन्दं मद्वरेण च॥ ३८
इत्येव वचनं श्रुत्वा सस्मिता हृष्टमानसा।
प्रणनाम च ब्रह्माणं तञ्च किञ्चिदुवाच ह॥ ३९

तुलस्युवाच।

यथा मे द्विभुजे कृष्णे वाञ्छा च श्यामसुन्दरे।
सत्यं ब्रवीमि हे तात न तथा च चतुर्भुजे॥ ४०

अदृष्टाहञ्च गोविन्दे दैवात् शृङ्गारभङ्गतः ।
गोविन्दस्यैव वचनात् प्रार्थयामि चतुर्भुजम् ॥ ४१
त्वत्प्रसादेन गोविन्दं पुनरेव सुदुर्लभम् ।
ध्रुवमेवं लभिष्यामि राधाभीतिं प्रमोचय ॥ ४२

ब्रह्मोवाच ।

गृहाण राधिकामन्त्रं ददामि षोड़शाक्षरम् ।
तस्याश्च प्राणतुल्या त्वं मद्वरेण भविष्यसि ॥ ४३
शृङ्गारं युवयोर्गोप्यमाज्ञास्यति च राधिका ।
राधासमा त्वं सुभगा गोविन्दस्य भविष्यसि ॥ ४४
इत्येवमुक्त्वा दत्त्वा च देव्याश्च षोड़शाक्षरम् ।
मन्त्रं तस्यै जगद्धाता स्तोत्रञ्च कवचं परम् ॥ ४५
सर्व्वं पूजाविधानञ्च पुरश्चर्याविधिक्रमम् ।
परं शुभाशिषं कृत्वा सोऽन्तर्द्धानं चकार ह ॥ ४६
सा च ब्रह्मोपदेशेन पुण्ये वदरिकाश्रमे ।
जजाप परमं मन्त्रं यदिष्टं पूर्व्वजन्मनः ॥ ४७
दिव्यं द्वादशवर्षञ्च पूजाञ्चैव चकार सा ।
बभूव सिद्धा सा देवी तत्प्रत्यादेशमाप च ॥ ४८
सिद्धे तपसि मन्त्रे च वरं प्राप्य यथेप्सितम् ।
बुभुजे च महाभोगं यद्विश्वेषु सुदुर्लभम् ॥ ४९
प्रसन्नमानसा देवी तत्याज तपसः श्रमम् ।
सिद्धे फले नराणाञ्च दुःखञ्च सुखमुत्तमम् ॥ ५०
भुक्त्वा पीत्वा च सन्तुष्टा शयनञ्च चकार सा ।
तल्पे मनोरमे तत्र पुष्पचन्दनचर्च्चिते ॥ ५१

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे तुलसीवरप्रदानं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोड़शोऽध्यायः ।

नारायण उवाच ।

तुलसी परितुष्टा च सुखापह्नतमानसा ।
नवयौवनसम्पन्ना वृषस्यन्ती वराङ्गना ॥ १
चिक्षेप पञ्च बाणांश्च पञ्चबाणश्च तां प्रति ।
पुष्पायुधेन सा दग्धा पुष्पचन्दनचर्च्चिता ॥ २
पुलकाञ्चितसर्व्वाङ्गी कम्पितारक्तलोचना ।
क्षणं सा शुष्कतां प्राप क्षणं मूर्च्छामवाप ह ॥ ३
क्षणमुद्विग्नतां प्राप क्षणं तन्द्रां सुखावहाम् ।
क्षणं सा दाहनं प्राप क्षणं प्राप प्रमोहताम् ॥ ४
क्षणं सा चेतनां प्राप क्षणं प्राप विषण्णताम् ।
उत्तिष्ठन्ती क्षणं तल्पाद्गच्छन्ती निकटं क्षणम् ॥ ५
भ्रमन्ती क्षणमुद्वेगाद्विशन्ती क्षणं पुनः ।
क्षणमेव समुद्वेगात् सुष्वाप पुनरेव सा ॥ ६
पुष्पचन्दनतल्पञ्च तद्बभूवातिकण्टकम् ।
विषमाहारसुखाद्दु दिव्यरूपं फलं जलम् ॥ ७
निलयञ्च निराकारं सूक्ष्मवस्त्रं हुताशनम् ।
सिन्दूरपत्रकञ्चैव व्रणतुल्यञ्च दुःखदम् ॥ ८
क्षणं ददर्श तन्द्रायां सुवेशं पुरुषं सती ।
सुन्दरञ्च युवानञ्च सस्मितं रसिकेश्वरम् ॥ ९
चन्दनोक्षितसर्व्वाङ्गं रत्नभूषणभूषितम् ।
आगच्छन्तं माल्यवन्तं पश्यन्तं तन्मुखाम्बुजम् ॥ १०
कथयन्तं रतिकथां चुम्बन्तमधरं मुहुः ।
सम्भुक्तवन्तं तल्पे च समाश्लिष्यन्तमीप्सितम् ॥ ११
पुनरेव तु गच्छन्तमागच्छन्तं वसन्तकम् ।
कान्त क्व यासि प्राणेश तिष्ठेत्येवमुवाच सा ॥ १२
पुनश्च चेतनां प्राप्य विललाप पुनः पुनः ।
एवं तपोवने सा च तस्थौ तत्रैव नारद ॥ १३
शङ्खचूड़ो महायोगी जैगीषव्यान्मनोहरम् ।
कृष्णस्य मन्त्रं सम्प्राप्य कृत्वा सिद्धिन्तु पुष्करे ॥ १४
कवचञ्च गले बद्ध्वा सर्व्वमङ्गलमङ्गलम् ।
ब्रह्मणश्च वरं प्राप्य यत्तन्मनसि वाञ्छितम् ॥ १५
आज्ञया ब्रह्मणः सोऽपि वदरीञ्च समाययौ ।
आगच्छन्तं शङ्खचूड़ं ददर्श तुलसी मुने ॥ १६
नवयौवनसम्पन्नं कामदेवसमप्रभम् ।
श्वेतचम्पकवर्णाभं रत्नभूषणभूषितम् ॥ १७
शरत्पार्व्वणचन्द्रास्यं शरत्पङ्कजलोचनम् ।
रत्नसारविनिर्म्माण-विमानस्थं मनोहरम् ॥ १८
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् ॥ १९
पारिजातप्रसूनानां माल्यवन्तञ्च सस्मितम् ।
कस्तूरीकुङ्कुमयुतं सुगन्धिचन्दनान्वितम् ॥ २०
सा दृष्ट्वा सन्निधाने तं मुखमाच्छाद्य वाससा ।
सस्मिता तं निरीक्षन्ती सकटाक्षं पुनः पुनः ॥ २१
बभूवातिनम्रमुखी नवसङ्गमलज्जिता ।
कामुकी कामबाणेन पीड़िता पुलकान्विता ॥ २२
पिबन्ती तन्मुखाम्भोजं लोचनाभ्याञ्च सन्ततम् ।

ददर्श शङ्खचूडश्च कन्यामेकां तपोवने ॥ २३
पुष्पचन्दनतल्पस्थां वसन्तीं वाससावृताम् ।
पश्यन्तीं तन्मुखं शश्वत् सस्मितां सुमनोहराम् ॥ २४
सुपीनकठिनश्रोणीं पीनोन्नतपयोधराम् ।
मुक्तापङ्क्तिप्रभामुष्ट-दन्तपङ्क्तिं सुबिभ्रतीम् ॥ २५
पक्वबिम्बाधरोष्ठीञ्च सुनासां सुन्दरीं वराम् ।
तप्तकाञ्चनवर्णाभां शरच्चन्द्रसमप्रभाम् ॥ २६
स्वतेजसा परिवृतां सुखदृश्यां मनोरमाम् ।
कस्तूरीविन्दुभिः सार्द्धमधश्चन्दनविन्दुना ॥ २७
सिन्दूरविन्दुना शश्वत् सीमन्ताधःस्थलोज्ज्वलाम् ।
निम्ननाभिगभीराञ्च तदधस्त्रिवलीयुताम् ॥ २८
करपद्मस्थलारक्तां नखचन्द्रैर्विभूषिताम् ।
स्थलपद्मप्रभायुक्तं पादपद्मञ्च बिभ्रतीम् ॥ २९
आरक्तवर्णं ललितमलक्तकसमप्रभम् ।
अङ्घ्रिपद्मस्थले पद्मरागराजीविराजिताम् ॥ ३०
शरदिन्दुविनिन्दैक-नखेन्दुराजिराजिताम् ।
अमूल्यरत्ननिर्म्माण-पाशकावलिसंयुताम् ॥ ३१
मणीन्द्रसारनिर्म्माण-क्वणन्मञ्जीररञ्जिताम् ।
दधतीं कवरीभारं मालतीमाल्यसंयुतम् ॥ ३२
अमूल्यरत्ननिर्म्माण-मकराकृतिरूपिणा ।
चित्रकुण्डलयुग्मेन गण्डस्थलविराजिताम् ॥ ३३
रत्नेन्द्रसारहारेण स्तनमध्यस्थलोज्ज्वलाम् ।
रत्नकङ्कणकेयूर-शङ्खभूषणभूषिताम् ॥ ३४
रत्नाङ्गुरीयकैर्दिव्यैरङ्गुल्यावलिराजिताम् ॥ ३५
दृष्ट्वा तां ललितां रम्यां सुशीलां सुदतीं सतीम् ।
उवास तत्समीपे च मधुरं तामुवाच सः ॥ ३६

शङ्खचूड उवाच ।

का त्वमत्र कस्य कन्या धन्ये मान्ये सुयोषिताम् ।
का त्वं मानिनि कल्याणि सर्व्वकल्याणदायिनि ॥ ३७
स्वर्गभोगादिसारेऽतिविचारे हाररूपिणि ।
संसारे दारसारे च मायाधारे मनोहरे ॥ ३८
जगद्विलक्षणधामे मुनीन्द्रमोहकारिणि ।
मौनीभूते किङ्करं मां सम्भाषां कुरु सुन्दरि ॥ ३९
इत्येवं वचनं श्रुत्वा सकामा वामलोचना ।
सस्मिता नम्रवदना सकामं तमुवाच सा ॥ ४०

तुलस्युवाच ।

धर्म्मध्वजसुताहञ्च तपस्यायां तपोवने ।
तपस्विनीह तिष्ठामि कस्त्वं गच्छ यथासुखम् ॥ ४१
कामिनीं कुलजाताञ्च रहस्येकाकिनीं सतीम् ।
न पृच्छति कुले जात एवमेव श्रुतौ श्रुतम् ॥ ४२
लम्पटोऽसत्कुले जातो धर्म्मशास्त्रार्थमश्रुतः ।
यो न श्रुतः श्रुतिरर्थं स कामीच्छति कामिनीम् ॥ ४३
आपातमधुरामन्ते अन्तकां पुरुषस्य ताम् ।
विषकुम्भाकाररूपाममृतास्याञ्च सन्ततम् ॥ ४४
हृदये क्षुरधाराभां शश्वन्मधुरभाषिणीम् ।
स्वकार्य्यपरिनिष्पत्तितत्परां सततं सदा ॥ ४५
कार्य्यार्थे स्वामिवशगामन्यथैवावशां सदा ।
स्वान्तर्म्मलिनरूपाञ्च प्रसन्नवदनेक्षणाम् ॥ ४६
श्रुतौ पुराणे यासाञ्च चरित्रमनिरूपितम् ।
तासु को विश्वसेत् प्राज्ञोऽप्रज्ञाश्चैव दुराशयाम् ॥ ४७
तासां को वा रिपुर्मित्रं प्रार्थयन्तीं नवं नवम् ।
दृष्ट्वा सुवेशं पुरुषमिच्छन्तीं हृदये सदा ॥ ४८
वाह्ये स्वात्मसतीत्वञ्च ज्ञापयन्तीं प्रयत्नतः ।
शश्वत्कामाञ्च रामाञ्च कामाधारां मनोहराम् ॥ ४९
वाह्ये छलाच्छादयन्तीं स्वान्तमैथुनलालसाम् ।
कान्तं ग्रसन्तीं रहसि वाह्येऽतीव सुलज्जिताम् ॥ ५०
मानिनीं मैथुनाभावे कोपिनीं कलहाङ्कुराम् ।
सम्प्रीतां भूरिसम्भोगात् स्वल्पमैथुनदुःखिताम् ॥ ५१
सुमिष्टान्नात् शीततोयादाकाङ्क्षन्तीञ्च मानसे ।
सुन्दरं रसिकं कान्तं युवानं गुणिनं सदा ॥ ५२
सुतात् परमतिस्नेहं कुर्व्वतीं रतिकर्त्तरि ।
प्राणाधिकप्रियतमं सम्भोगकुशलं प्रियम् ॥ ५३
पश्यन्तीं रिपुतुल्यञ्च वृद्धं वा मैथुनाक्षमम् ।
कलहं कुर्व्वतीं शश्वत् तेन सार्द्धं सुकोपनाम् ॥ ५४
चर्व्वया भक्षयन्तीं तं कीलाश इव गोरजः ।
दुःसाहसस्वरूपाञ्च सर्व्वदोषाश्रयां सदा ॥ ५५
शश्वत्कपटरूपाञ्च दुःसाध्यामप्रतीतकाम् ।
ब्रह्माविष्णुशिवादीनां दुस्त्याज्यां मोहरूपिणीम् ॥ ५६
तपोमार्गार्गलां शश्वन्मुक्तिद्वारकवाटिकाम् ।
हरिभक्तिव्यवहितां सर्व्वमायाकरण्डिकाम् ॥ ५७
संसारकारागारे च शश्वन्निगडरूपिणीम् ।
इन्द्रजालस्वरूपाञ्च मिथ्यारतिस्वरूपिणीम् ॥ ५८
बिभ्रतीं वाह्यसौन्दर्य्यमधोऽङ्गमतिकुत्सितम् ।
नानाविण्मूत्रपूयानामाधारं मलसंयुतम् ॥ ५९

दुर्गन्धि दोषसंयुक्तं रक्तात्तकमसंस्कृतम्।
मायारूपं मायिनाञ्च विधिना निर्म्मितं पुरा॥ ६०
विषरूपां मुमुक्षूणामदृश्यामप्यवाञ्छिताम्॥ ६१
इत्युक्त्वा तुलसी तत्र विरराम च नारद।
सस्मितः शङ्खचूड़श्च प्रवक्तुमुपचक्रमे॥ ६२
शङ्खचूड़ उवाच।
त्वया यत् कथितं देवि न च सर्व्वमलीककम्।
किञ्चित् सत्यमलीकञ्च किञ्चिन्मत्तो निशामय॥ ६३
निर्म्मितं द्विविधं धात्रा स्त्रीरूपं सर्व्वमोहनम्।
कृत्यारूपं वास्तवञ्चाप्रशंस्यञ्चाप्रशंसितम्॥ ६४
लक्ष्मी-सरस्वती-दुर्गा-सावित्री-राधिकादिकम्।
सृष्टिसूत्रस्वरूपञ्चाद्यं स्रष्टुर्निर्म्मितम्॥ ६५
एतासामंशरूपं यत् स्त्रीरूपं वास्तवं स्मृतम्।
तत्प्रशंस्यं यशोरूपं सर्व्वमङ्गलकारणम्॥ ६६
शतरूपा देवहूतिः स्वधा स्वाहा च दक्षिणा।
छायावती रोहिणी च वरुणानी शची तथा॥ ६७
कुवेरवायुपत्नी चाप्यदितिश्च दितिस्तथा।
लोपामुद्रानुसूया च कैटभी तुलसी तथा॥ ६८
अहल्यारुन्धती मेना तारा मन्दोदरी परा।
दमयन्ती वेदवती गङ्गा च मनसा तथा॥ ६९
पुष्टिस्तुष्टिः स्मृतिर्मेधा कालिका च वसुन्धरा।
षष्ठी मङ्गलचण्डी च मूर्त्तिश्च धर्म्मकामिणी॥ ७०
स्वस्तिः श्रद्धा च कान्तिश्च तुष्टिः कान्तिस्तथापरा।
निद्रा तन्द्रा क्षुत्पिपासा सन्ध्या रात्रिर्दिनानि च॥ ७१
सम्पत्तिर्वृत्तिकीर्त्त्यश्च क्रियाशोभाप्रभादिकम्।
यत् स्त्रीरूपञ्च सम्भूतमुत्तमं तद्युगे युगे॥ ७२
कृत्यास्वरूपं तद्यत्तु स्वर्व्वेश्यादिकमेव च।
तदप्रशंस्यं विश्वेषु पुंश्चलीरूपमेव च॥ ७३
सत्त्वप्रधानं यद्रूपं तच्च शुद्धं स्वभावतः।
तदुत्तमञ्च विश्वेषु साध्वीरूपं प्रशंसितम्॥ ७४
तद्वास्तवञ्च विज्ञेयं प्रवदन्ति मनीषिणः।
रजोरूपं तमोरूपं कृत्यासु द्विविधं स्मृतम्॥ ७५
स्थानाभावात् क्षणाभावान्मध्यवृत्तेरभावतः।
देहक्लेशेन रोगेण सत्संसर्गेण सुन्दरि॥ ७६
बहुगोष्ठ्यावृतेनैव रिपुराजभयेन च।
रजोरूपस्य साध्वीत्वमेतेनैवोपजायते॥ ७७
इदं मध्यमरूपञ्च प्रवदन्ति मनीषिणः।
तमोरूपं दुर्निवार्य्यमधमं तद्विदुर्बुधाः॥ ७८
न पृच्छति कुले जातः पण्डितश्च परस्त्रियम्।
निर्जनेऽनिर्जने वापि रहस्येव परस्त्रियम्॥ ७९
आगच्छामि त्वत्समीपमाज्ञया ब्रह्मणोऽधुना।
गान्धर्व्वेण विवाहेन त्वां ग्रहीष्यामि शोभने॥ ८०
अहमेव शङ्खचूड़ो देवविद्रावकारकः।
दनुवंशोद्भवो विश्वे सुदामाहं हरेः पुरे॥ ८१
अहमष्टसु गोपेषु गो-गोपी-पार्षदेषु च।
अधुना दानवेन्द्रोऽहं राधिकायाश्च शापतः॥ ८२
जातिस्मरोऽहं जानामि कृष्णमन्त्रप्रभावतः।
जातिस्मरा त्वं तुलसी सम्भुक्ता हरिणा पुरा॥ ८३
त्वमेव राधिकाशापाज्जातासि भारते भुवि।
त्वां सम्भोक्तुमुत्सुकोऽहं नालं राधाभयात् ततः॥ ८४
इत्येवमुक्त्वा स पुमान् विरराम महामुने।
सस्मिता तुलसी हृष्टा प्रवक्तुमुपचक्रमे॥ ८५
तुलस्युवाच।
एवंविधो बुधो विश्वे बुधेषु च प्रशंसितः।
कान्तमेवंविधं कान्ता शश्वदिच्छति कामतः॥ ८६
त्वयाहमधुना सत्यं विचारेण पराजिता।
स निन्दितश्चाप्यशुचिर्यः पुमांश्च स्त्रिया जितः॥ ८७
निन्दन्ति पितरो देवा बान्धवा स्त्रीजितं जनम्।
स्त्रीजितं मनसा वाचा पिता भ्राता च निन्दति॥ ८८
शुध्येद्विप्रो दशाहेन जातके मृतके तथा।
भूमिपो द्वादशाहेन वैश्यः पञ्चदशाहतः॥ ८९
शूद्रो मासेन वेदेषु मातृवद्वर्णसङ्करः।
अशुचिः स्त्रीजितः शुध्येच्चितादाहनकालतः॥ ९०
न गृह्णन्तीच्छया तस्य पितरः पिण्डतर्पणम्।
न गृह्णन्तीच्छया देवास्तस्य पुष्पजलादिकम्॥ ९१
किं तज्ज्ञानेन तपसा जपहोमप्रपूजनैः।
किं विद्यया वा यशसा स्त्रीभिर्यस्य मनो हृतम्॥ ९२
विद्याप्रभावज्ञानार्थं मया त्वञ्च परीक्षितः।
कृत्वा परीक्षां कान्तस्य वृणोति कामिनी वरम्॥ ९३
वराय गुणहीनाय वृद्धायाज्ञानिने तथा।
दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च॥ ९४
अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च।
पङ्गुलायाङ्गहीनाय चान्धाय बधिराय च॥ ९५
जड़ाय चैव मूकाय क्लीवतुल्याय पापिने।

ब्रह्महत्यां लभेत्सोऽपि यश्च कन्यां ददाति च ॥ ९६
शान्ताय गुणिने चैव यूने च विदुषेऽपि च।
वैष्णवाय सुतां दत्त्वा दशवाजिफलं लभेत् ॥ ९७
यः कन्यापालनं कृत्वा करोति विक्रयं यदि।
विपदा धनलाभेन कुम्भीपाकं स गच्छति ॥ ९८
कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी।
कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्द्दश ॥ ९९
तदन्ते व्याधयोनौ च लभते जन्म निश्चितम्।
विक्रीणाति मांसभारं वहत्येव दिवानिशम् ॥ १००
इत्येवमुक्त्वा तुलसी विरराम तपोवने।
एतस्मिन्नन्तरे ब्रह्मा तयोरन्तिकमाययौ ॥ १०१
मूर्द्ध्ना ननाम तुलसी शङ्खचूड़श्च नारद।
उवास तत्र देवेशश्चोवाच च तयोर्हितम् ॥ १०२
ब्रह्मोवाच।
किं करोषि शङ्खचूड़ संवादमनया सह।
गान्धर्व्वेण विवाहेन त्वमिमां ग्रहणं कुरु ॥ १०३
त्वञ्च पुरुषरत्नञ्च स्त्रीरत्नं स्त्रीष्वियं सती।
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत् ॥ १०४
निर्व्विरोधसुखं राजन् को वा त्यजति दुर्लभम्।
योऽविरोधसुखत्यागी स पशुर्नात्र संशयः ॥ १०५
किं त्वं परीक्षसे कान्तमीदृशं गुणिनं सति।
देवानामसुराणाञ्च दानवानां विमर्द्दकम् ॥ १०६
यथा लक्ष्मीश्च लक्ष्मीशे यथा कृष्णे च राधिका।
यथा मयि च सावित्री भवानी च भवे यथा ॥ १०७
यथा धरा वराहे च यथा मेना हिमालये।
यथात्रावनसूया च दमयन्ती नले यथा ॥ १०८
रोहिणी च यथा चन्द्रे यथा कामे रतिः सती।
यथादितिः कश्यपे च वशिष्ठेऽरुन्धती यथा ॥ १०९
यथाहल्या गौतमे च देवहूतिश्च कर्द्दमे।
यथा बृहस्पतौ तारा शतरूपा मनौ यथा ॥ ११०
यथा च दक्षिणा यज्ञे यथा स्वाहा हुताशने।
यथा शची महेन्द्रे च यथा पुष्टिर्गणेश्वरे ॥ १११
देवसेना यथा स्कन्दे धर्म्मे मूर्त्तिर्यथा सती।
सौभाग्यसुप्रिया त्वञ्च शङ्खचूड़े तथा भव ॥ ११२
अनेन सार्द्धं सुचिरं सुन्दरेण च सुन्दरि।
स्थाने स्थाने विहारञ्च यथेच्छं कुरु सन्ततम् ॥ ११३
पश्चात् प्राप्स्यसि गोविन्दं गोलोके पुनरेव च।

चतुर्भुजञ्च वैकुण्ठे शङ्खचूड़े मृते सति ॥ ११४
इत्येवमाशिषं कृत्वा स्वालयं प्रययौ विधिः।
गान्धर्व्वेण विवाहेन जग्राहे ताञ्च दानवः ॥ ११५
स्वर्गे दुन्दुभिवाद्यञ्च पुष्पवृष्टिर्बभूव च।
स रेमे रामया सार्द्धं वासगेहे मनोहरे ॥ ११६
मूर्च्छां सम्प्राप तुलसी नवसङ्गमसङ्गता।
निमग्ना निर्ज्जने साध्वी सम्भोगसुखसागरे ॥ ११७
चतुःषष्टिकलामानं चतुःषष्टिविधं सुखम्।
कामशास्त्रे यन्निरुक्तं रसिकानां यथेप्सितम् ॥ ११८
अङ्गप्रत्यङ्गसंश्लेषपूर्वकं स्त्रीमनोहरम्।
तत्सर्व्वं सुखशृङ्गारं चकार रसिकेश्वरः ॥ ११९
अतीव रम्ये देशे च सर्व्वजन्तुविवर्ज्जिते।
पुष्पचन्दनतल्पे च पुष्पचन्दनवायुना ॥ १२०
पुष्पोद्याने नदीतीरे पुष्पचन्दनचर्च्चिते।
गृहीत्वा रसिकां रासे पुष्पचन्दनचर्चिताम् ॥ १२१
भूषितां भूषणेनैव रत्नभूषणभूषिते।
सुरते विरतिर्नास्ति तयोः सौरतविज्ञयोः ॥ १२२
जहार मानसं भर्त्तुर्लीलया तुलसी सती।
चेतनां रसिकायाश्च जहार रसभाववित् ॥ १२३
वक्षस्थचन्दनं बाह्वोस्तिलकं विजहार सा।
स च जग्राह तस्याश्च सिन्दूरविन्दुपत्रकम् ॥ १२४
स तद्वक्षसि तस्याश्च नखरेखां ददौ मुदा।
सा ददौ तद्वामपार्श्वे करभूषणलक्षणम् ॥ १२५
राजा दन्तोष्ठपुटके ददौ दशनदंशनम्।
तद्गण्डयुगले सा च प्रददौ तच्चतुर्गुणम् ॥ १२६
सुरते विरतौ तौ च समुत्थाय परस्परम्।
सुवेशं चक्रतुस्तत्र यत्तन्मनसि वाञ्छितम् ॥ १२७
कुङ्कुमाक्तं चन्दनेन सा तस्मै तिलकं ददौ।
सर्व्वाङ्गे सुन्दरे रम्ये चकार चानुलेपनम् ॥ १२८
सुवासितञ्च ताम्बूलं वह्निशुद्धे च वाससी।
पारिजातस्य कुसुमं नानादुःखविनाशनम् ॥ १२९
अमूल्यरत्ननिर्म्माणमङ्गुरीयकमुत्तमम्।
सुन्दरञ्च मणिवरं त्रिषु लोकेषु दुर्लभम् ॥ १३०
दासी तवाहमित्येवं समुच्चार्य्य पुनः पुनः।
ननाम परया भक्त्या स्वामिनं गुणशालिनम् ॥ १३१
सस्मिता तन्मुखाम्भोजं लोचनाभ्यां पपौ पुनः।
निमेषरहिताभ्याञ्च सकटाक्षञ्च सुन्दरम् ॥ १३२

स च तां समाकृष्य चकार वक्षसि प्रियाम् ।
सस्मितं वाससाच्छन्नं ददर्श मुखपङ्कजम् ॥ १३३
चुचुम्ब कठिने गण्डे बिम्बोष्ठे पुनरेव च ।
ददौ तस्यै वस्त्रयुग्मं वरुणादाहृतञ्च यत् ॥ १३४
ददौ मञ्जीरयुग्मञ्च स्वाहायाश्च हृतञ्च यत् ।
केयूरयुग्मं छायाया रोहिण्याश्चैव कुण्डलम् ॥१३५
अङ्गुरीयकरत्नानि रत्याश्च वरभूषणम् ।
शङ्खं सुरुचिरं चित्रं यद्दत्तं विश्वकर्मणा ॥ १३६
विचित्रपाशकश्रेणीं शय्याञ्चापि सुदुर्लभाम् ।
भूषणानि च दत्त्वा च परीहारं चकार ह ॥ १३७
निर्माय कवरीभारं तस्याश्च माल्यसंयुतम् ।
सुचित्रं पत्रकं गण्डे जयलेखसमं तथा ॥ १३८
चन्द्रलेखात्रिभिर्युक्तं चन्दनेन सुगन्धिना ।
परितः परितश्चित्रैः सार्द्धं कुङ्कुमबिन्दुभिः ॥ १३९
ज्वलत्प्रदीपाकारञ्च सिन्दूरतिलकं ददौ ।
तत्पादपद्मयुगले स्थलपद्मविनिन्दिते ॥ १४०
चित्रालक्तकरागञ्च नखरेषु ददौ मुदा ।
स्ववक्षसि मुहुर्न्यस्तं सरागं चरणाम्बुजम् ॥ १४१
हे देवि तव दासोऽहमित्युच्चार्य्य पुनः पुनः ।
रत्ननिर्म्माणयानेन ताञ्च कृत्वा स्ववक्षसि ॥ १४२
तपोवनं परित्यज्य राजा स्थानान्तरं ययौ ।
मलये देवनिलये शैले शैले वने वने ॥ १४३
स्थाने स्थानेऽतिरम्ये च पुष्पोद्यानेऽतिनिर्ज्जने ।
कन्दरे कन्दरे सिन्धुतीरे च सुन्दरे वने ॥ १४४
पुष्पभद्रानदीतीरे नीरवाते मनोहरे ।
पुलिने पुलिने दिव्ये नद्यां नद्यां नदे नदे ॥ १४५
मधौ मधुकराणाञ्च मधुरध्वनिनादिते ।
विस्यन्दने सुवसने चन्दने गन्धमादने ॥ १४६
देवोद्याने देववने चित्रे चन्दनकानने ।
चम्पकानां केतकीनां माधवीनाञ्च माधवे ॥ १४७
कुन्दानां मालतीनाञ्च कुमुदाम्भोजकानने ।
कल्पवृक्षे कल्पवृक्षे पारिजातवने वने ॥ १४८
निर्ज्जने काञ्चनीस्थाने धन्ये काञ्चनपर्व्वते ।
काञ्चीवने किञ्जनके कञ्चुके काञ्चनाकरे ॥ १४९
पुष्पचन्दनतल्पे च पुंस्कोकिलरुतश्रुते ।
पुष्पचन्दनसंयुक्तः पुष्पचन्दनवायुना ॥ १५०
कामुक्या कामुकः कामात् स रेमे रामया सह ।
न तृप्तो दानवेन्द्रश्च तृप्तिनैव जगाम सा ॥ १५१
हविषा कृष्णवर्त्मेव ववृधे मदनस्तयोः ।
तया सह समागत्य स्वाश्रमं दानवस्ततः ॥ १५२
रम्यक्रीड़ालयं कृत्वा विजहार पुनस्ततः ।
एवं सम्बुभुजे राज्यं शङ्खचूड़ः प्रतापवान् ॥ १५३
एकमन्वन्तरं पूर्णं राजराजेश्वरो बली ।
देवानामसुराणाञ्च दानवानाञ्च सन्ततम् ॥ १५४
गन्धर्व्वाणां किन्नराणां राक्षसानाञ्च शान्तिदः ।
हृताधिकारा देवाश्च चरन्ति भिक्षुका यथा ॥ १५५
पूजाहोमादिकं तेषां जहार विषयं बलात् ।
आश्रयञ्चाधिकारञ्च शस्त्रास्त्रभूषणादिकम् ॥ १५६
निरुद्यमाः सुराः सर्व्वे चित्रपुत्तलिका यथा ।
ते च सर्व्वे विषण्णाश्च प्रजग्मुर्ब्रह्मणः सभाम् ॥ १५७
वृत्तान्तं कथयामासू रुरुदुश्च भृशं मुहुः ।
तदा ब्रह्मा सुरैः सार्द्धं जगाम शङ्करालयम् ॥ १५८
सर्व्वं संकथयामास विधाता चन्द्रशेखरम् ।
ब्रह्मा शिवश्च तैः सार्द्धं वैकुण्ठञ्च जगाम ह ॥ १५९
सुदुर्लभं परं धाम जरामृत्युहरं परम् ।
सम्प्राप च वरं द्वारमाश्रमाणां हरेरहो ॥ १६०
ददृशु द्वारपालांश्च रत्नसिंहासनस्थितान् ।
शोभितान् पीतवस्त्रैश्च रत्नभूषणभूषितान् ॥ १६१
वनमालान्वितान् सर्व्वान् श्यामसुन्दरविग्रहान् ।
शङ्खचक्रगदापद्मधरांश्चैव चतुर्भुजान् ॥ १६२
सस्मितान् पद्मवक्त्रांश्च पद्मनेत्रान् मनोहरान् ।
ब्रह्मा तान् कथयामास वृत्तान्तं गमनार्थकम् ॥ १६३
तेऽनुज्ञाञ्च ददुस्तस्मै प्रविवेश तदाज्ञया ।
एवञ्च षोड़श द्वारान् निरीक्ष्य कमलोद्भवः ॥ १६४
देवैः सार्द्धं तानतीत्य प्रविवेश हरेः सभाम् ।
देवर्षिभिः परिवृतां पार्षदैश्च चतुर्भुजैः ॥ १६५
नारायणस्वरूपैश्च सर्व्वैः कौस्तुभभूषितैः ।
पूर्णेन्दुमण्डलाकारां चतुरस्रां मनोहराम् ॥ १६६
मणीन्द्रसारनिर्म्माणां हीरसारसुशोभिताम् ।
अमूल्यरत्नखचितां रचितां स्वेच्छया हरेः ॥ १६७
माणिक्यमालाजालाढ्यां मुक्तापङ्क्तिविभूषिताम् ।
मण्डितां मण्डलाकारै रत्नदर्पणकोटिभिः ॥ १६८
विचित्रैश्चित्ररेखाभिर्नानाचित्रविचित्रिताम् ।
पद्मरागेन्द्ररचितैं रचितां पद्मकृत्रिमैः ॥ १६९

सोपानशतकैर्युक्तां स्यमन्तकविनिर्म्मितैः ।
पट्टसूत्रग्रन्थियुतैश्चारुचन्दनपल्लवैः ॥ १७०
इन्द्रनीलमणिस्तम्भैर्वेष्टितां सुमनोरमाम् ।
सद्रत्नपूर्णकुम्भानां समूहैश्च समन्विताम् ॥ १७१
पारिजातप्रसूनानां मालाजालैर्विराजिताम् ।
कस्तूरीकुङ्कुमाक्तैश्च सुगन्धिचन्दनद्रवैः ॥ १७२
सुसंस्कृतान्तु सर्व्वत्र वासितां गन्धवायुना ।
विद्याधरीसमूहानां संगीतैश्च मनोहराम् ॥ १७३
सहस्रयोजनायामां परिपूर्णाञ्च किङ्करैः ।
ददर्श श्रीहरिं ब्रह्मा शङ्करश्च सुरैः सह ॥ १७४
वसन्तं तन्मध्यदेशे यथेन्दुं तारकावृतम् ।
अमूल्यरत्ननिर्म्माण-चित्रसिंहासनस्थितम् ॥ १७५
किरीटिनं कुण्डलिनं वनमालाविभूषितम् ।
शङ्खचक्रगदापद्मधारिणञ्च चतुर्भुजम् ॥ १७६
नवीननीरदश्यामं सुन्दरं सुमनोहरम् ।
अमूल्यरत्ननिर्म्माण-सर्व्वभूषणभूषितम् ॥ १७७
चन्दनोक्षितसर्व्वाङ्गं बिभ्रतं केलिपङ्कजम् ।
पुरतो नृत्यगीतञ्च पश्यन्तं सस्मितं मुदा ॥ १७८
शान्तं सरस्वतीकान्तं लक्ष्मीधृतपदाम्बुजम् ।
भक्तप्रदत्तताम्बूलं भुक्तवन्तं सुवासितम् ॥ १७९
गङ्गया परया भक्त्या सेवितं श्वेतचामरैः ।
सर्व्वैश्च स्तूयमानञ्च भक्तिनम्रात्मकन्धरैः ॥ १८०
एवं विशिष्टं तं दृष्ट्वा परिपूर्णतमं विभुम् ।
ब्रह्मादयः सुराः सर्व्वे प्रणम्य तुष्टुवुस्तदा ॥ १८१
सगद्गदाः साश्रुनेत्राः पुलकाञ्चितविग्रहाः ।
भक्त्या परमया भक्ता भीता नम्रात्मकन्धराः ॥१८२
पुटाञ्जलियुतो भूत्वा विधाता जगतामपि ।
वृत्तान्तं कथयामास विनयेन हरेः पुरः ॥ १८३
हरिस्तद्वचनं श्रुत्वा सर्व्वज्ञः सर्व्वभाववित् ।
प्रहस्योवाच ब्रह्माणं रहस्यञ्च मनोहरम् ॥ १८४

श्रीभगवानुवाच ।

शङ्खचूड़स्य वृत्तान्तं सर्व्वं जानामि पद्मज ।
मद्भक्तस्य च गोपस्य महातेजस्विनः पुरा ॥ १८५
सुराः शृणुत तत्सर्व्वमितिहासं पुरातनम् ।
गोलोकस्यैव चरितं पापघ्नं पुण्यकारणम् ॥ १८६
सु- -मा नाम गोपश्च पार्षदप्रवरो मम ।
स्वानीं योनिं राधाशापात् सुदारुणात् १८७
तत्रैकदाहमगमं स्वालयाद्रासमण्डलम् ।
विहाय मानिनीं राधां मम प्राणाधिकां पराम् ॥१८८
सा मां विरजया सार्द्धं विज्ञाय किङ्करीमुखात् ।
पश्चात् क्रुद्धा सा जगाम मां ददर्श च तत्र च ॥ १८९
विरजाञ्च नदीरूपां मां ज्ञात्वा च तिरोहितम् ।
पुनर्जगाम सा रुष्टा स्वालयं सखीभिः सह ॥ १९०
मां दृष्ट्वा मन्दिरे देवी सुदाम्ना सहितं पुरा ।
भृशं सा भर्त्सयामास मौनीभूतञ्च सुस्थिरम् ॥१९१
तच्छ्रुत्वासहमानश्च सुदामा तां चुकोप ह ।
स च तां भर्त्सयामास कोपेन मम सन्निधौ ॥१९२
तच्छ्रुत्वा सा कोपयुक्ता रक्तपङ्कजलोचना ।
बहिष्कर्त्तुं चकाराज्ञां सन्त्रस्ता मम संसदि ॥ १९३
सखीलक्षं समुत्तस्थौ दुर्व्वारं तेजसोज्ज्वलम् ।
बहिश्चकार तं तूर्णं जल्पन्तञ्च पुनः पुनः ॥ १९४
सा च तद्वचनं श्रुत्वा समाक्रुष्टा शशाप तम् ।
याहि रे दानवीं योनिमित्येवं दारुणं वचः ॥१९५
तं गच्छन्तं शपन्तञ्च रुदन्तं मां प्रणम्य च ।
वारयामास सा तुष्टा रुदती कृपया पुनः ॥ १९६
हे वत्स तिष्ठ मा गच्छ क्व यासीति पुनः पुनः ।
समुच्चार्य्य च तत्पश्चाज्जगाम सा च विक्लवा ॥१९७
गोप्यश्च रुरुदुः सर्व्वा गोपाश्चेति सुदुःखिताः ।
ते सर्व्वे राधिका चापि तत्पश्चाद्बोधिता मया ॥१९८
आयास्यति क्षणार्द्धेन कृत्वा शापस्य पालनम् ।
सुदामा त्वमिहागच्छेत्युवाच सा निवारिता ॥ १९९
गोलोकस्य क्षणार्द्धेन चैकमन्वन्तरं भवेत् ।
पृथिव्यां जगतां धातरित्येवं वचनं ध्रुवम् ॥ २००
स एव शङ्खचूड़श्च पुनस्तत्रैव यास्यति ।
महाबलिष्ठो योगीशः सर्व्वमायाविशारदः ॥ २०१
मम शूलं गृहीत्वा च शीघ्रं गच्छत भारतम् ।
शिवः करोतु संहारं मम शूलेन दानवम् ॥ २०२
ममैव कवचं कण्ठे सर्व्वमङ्गलमङ्गलम् ।
बिभर्त्ति दानवः शश्वत् संसारविजयी ततः ॥ २०३
तत्र ब्रह्मन् स्थिते कण्ठे न कोऽपि हिंसितुं क्षमः ।
तच्च याच्ञां करिष्यामि विप्ररूपोऽहमेव च ॥ २०४
सतीत्वभङ्गस्तत्पत्न्या यत्र काले भविष्यति ।
तत्रैव काले तन्मृत्युरिति दत्तो वरस्त्वया ॥ २०५
तत्पत्न्याश्चोदरे वीर्य्यमर्पयिष्यामि निश्चितम् ।

तत्क्षणेनैव तन्मृत्युर्भविष्यति न संशयः ॥ २०६
पश्चात् सा देहमुत्सृज्य भविष्यति प्रिया मम।
इत्युक्त्वा जगतां नाथो ददौ शूलं हराय च ॥ २०७
शूलं दत्त्वा ययौ शीघ्रं हरिरभ्यन्तरं मुदा।
भारतञ्च ययुर्देवा ब्रह्मरुद्रपुरोगमाः ॥ २०८

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे तुलस्युपाख्याने शङ्खचूड़वरप्रसङ्गो नाम षोड़शोऽध्यायः॥ १६ ॥

---

## सप्तदशोऽध्यायः।

नारायण उवाच।

ब्रह्मा शिवं संनियोज्य संहारे दानवस्य च।
जगाम स्वालयं तूर्णं यथास्थानं महामुने ॥ १
चन्द्रभागानदीतीरे वटमूले मनोहरे।
तत्र तस्थौ महादेवो देवनिस्तारहेतवे ॥ २
दूतं कृत्वा पुष्पदन्तं गन्धर्व्वेश्वरमीप्सितम्।
शीघ्रं प्रस्थापयामास शङ्खचूड़ान्तिकं मुने ॥ ३
स चेश्वराज्ञया शीघ्रं ययौ तन्नगरं वरम्।
महेन्द्रनगरोत्कृष्टं कुवेरभवनाधिकम् ॥ ४
पञ्चयोजनविस्तीर्णं दैर्घ्यं तद्द्विगुणं भवेत्।
सप्तभिः परिखाभिश्च दुर्गमाभिः समन्वितम् ॥ ५
ज्वलदग्निनिभैः शश्वज्ज्वलितं रत्नकोटिभिः।
युक्तञ्च वीथिशतकैर्मणिवेदिसमन्वितैः ॥ ६
परितो वणिजां संघैर्नानावस्तुविराजितैः।
सिन्दूराकारमणिभिर्निर्म्मितैश्च विचित्रितैः ॥ ७
भूषितं भूषितैर्दिव्यैराश्रमैः शतकोटिभिः।
गत्वा ददर्श तन्मध्ये शङ्खचूड़ालयं वरम् ॥ ८
अतीव वलयाकारं यथा पूर्णेन्दुमण्डलम्।
ज्वलदग्निशिखाक्ताभिः परिखाभिश्चतसृभिः ॥ ९
सुदुर्गमञ्च शत्रूणामन्येषां सुगमं सुखम्।
अत्युच्चैर्गगनस्पर्शि-मणिप्राचीरवेष्टितम् ॥ १०
राजितं द्वादशद्वारैर्द्वारपालसमन्वितैः।
रत्नकृत्रिमपद्माढ्यै रत्नदर्पणभूषितैः ॥ ११
रत्नेन्द्रचित्रराजीभिः सद्दीप्ताभिर्विराजितैः।
परितो रक्षितं शश्वद्दानवैः शतकोटिभिः ॥ १२
दिव्यास्त्रधारिभिः सर्व्वैर्महाबलपराक्रमैः।
सुन्दरैश्च सुवेशैश्च नानालङ्कारभूषितैः ॥ १३
तान् दृष्ट्वा पुष्पदन्तोऽपि वरद्वारं ददर्श सः।
द्वारे नियुक्तं पुरुषं शूलहस्तञ्च सस्मितम् ॥ १४
तिष्ठन्तं पिङ्गलास्यञ्च ताम्रवर्णं भयङ्करम्।
कथयामास वृत्तान्तं जगाम तदनुज्ञया ॥ १५
अतिक्रम्य नवद्वारं जगामाभ्यन्तरं पुनः।
न कैश्च रक्षितं श्रुत्वा दूतरूपं रणस्य च ॥ १६
गत्वा सोऽभ्यन्तरद्वारं द्वारपालमुवाच ह।
रणस्य सर्व्ववृत्तान्तं विज्ञापयितुमीश्वरम् ॥ १७
स च तं कथयित्वा च दूतं गन्तुमुवाच ह।
स गत्वा शङ्खचूड़ं तं ददर्श सुमनोहरम् ॥ १८
सभामण्डलमध्यस्थं स्वर्णसिंहासनस्थितम्।
मणीन्द्रखचितं छत्रं रत्नदण्डसमन्वितम् ॥ १९
रत्नकृत्रिमपुष्पैश्च प्रशस्तं शोभितं सदा।
भृत्येन मस्तकन्यस्त-स्वर्णच्छत्रमनोहरम् (क) ॥ २०
सेवितं पार्षदगणैर्व्यजनैः श्वेतचामरैः।
सुवेशं सुन्दरं रम्यं रत्नभूषणभूषितम् ॥ २१
माल्यानुलेपनं सूक्ष्मवस्त्रञ्च दधतं मुने।
दानवेन्द्रैः परिवृतं सुवेशैश्च त्रिकोटिभिः।
शतकोटिभिरन्यैश्च भ्रमद्भिर्वस्त्रधारिभिः ॥ २२
एवम्भूतञ्च तं दृष्ट्वा पुष्पदन्तः सविस्मयः।
उवाच रणवृत्तान्तं यदुक्तं शङ्करेण च ॥ २३

पुष्पदन्त उवाच।

राजेन्द्र शिवदूतोऽहं पुष्पदन्ताभिधः प्रभो।
यदुक्तं शङ्करेणैव तद्ब्रवीमि निशामय ॥ २४
राज्यं देहि च देवानामधिकारञ्च साम्प्रतम्।
देवाश्च शरणापन्नाः सर्व्वेशे श्रीहरौ वरे ॥ २५
हरिर्दत्त्वा स्वशूलञ्च तेन प्रस्थापितः शिवः।
चन्द्रभागानदीतीरे वटमूले त्रिलोचनः ॥ २६
विषयं देहि तेषाञ्च युद्धं वा कुरु निश्चितम्।
गत्वा वक्ष्यामि किं शम्भुमथवा वद मामपि ॥ २७
दूतस्य वचनं श्रुत्वा शङ्खचूड़ः प्रहस्य च।
प्रभातेऽहं गमिष्यामि त्वञ्च गच्छेत्युवाच ह ॥ २८
स गत्वोवाच तूर्णं तं वटमूलस्थमीश्वरम्।
शङ्खचूड़स्य वचनं तदीयं यत् परिच्छदम् ॥ २९

---

(क) मस्तकन्यस्तं ( मस्तके न्यस्तं ) स्वर्णच्छत्रमिति वहुपुस्तकसम्मतः पाठः।

एतस्मिन्नन्तरे स्कन्द आजगाम शिवान्तिकम्।
वीरभद्रश्च नन्दी च महाकालः सुभद्रकः। ३०
विशालाक्षश्च वाणश्च पिङ्गलाक्षो विकम्पनः।
विरूपो विकृतश्चैव मणिभद्रश्च वाष्कलः॥ ३१
कपिलाक्षो दीर्घदंष्ट्रो विकटस्ताम्रलोचनः।
कालङ्कटो बलीभद्रः कालजिह्वः कुटीचरः॥३२
बलोन्मत्तो रणश्लाघी दुर्जयो दुर्गमस्तथा।
अष्टौ च भैरवा रौद्रा रुद्राश्चैकादश स्मृताः॥ ३३
वसवो वासवाद्याश्च चादित्या द्वादश स्मृताः।
हुताशनश्च चन्द्रश्च विश्वकर्म्माश्विनौ च तौ॥ ३४
कुवेरश्च यमश्चैव जयन्तो नलकूवरः।
वायुश्च वरुणश्चैव बुधश्च मङ्गलस्तथा॥ ३५
धर्म्मश्च शनिरीशानः कामदेवश्च वीर्य्यवान्।
उग्रदंष्ट्रा चोग्रचण्डा कोट्टवी कैटभी तथा॥ ३६
स्वयं शतभुजा देवी भद्रकाली भयङ्करी।
रत्नेन्द्रसारनिर्म्माण-विमानोपरि संस्थिता॥ ३७
रक्तवस्त्रपरीधाना रक्तमाल्यानुलेपना।
नृत्यन्ती च हसन्ती च गायन्ती सुस्वरं मुदा॥३८
अभयं ददती भक्तमभया सा भयं रिपुम्।
बिभ्रतीं विकटां जिह्वां सुलोलां योजनायताम्॥३९
खर्परं वर्त्तुलाकारं गभीरं योजनायतम्।
त्रिशूलं गगनस्पर्शि शक्तिञ्च योजनायताम्॥ ४०
शङ्खं चक्रं गदां पद्मं शरांश्चापं भयङ्करम्।
मुद्गरं मुषलं वज्रं खड्गं फलकमुल्वणम्॥ ४१
वैष्णवास्त्रं वारुणास्त्रं वह्निञ्च नागपाशकम्।
नारायणास्त्रं ब्रह्मास्त्रं गान्धर्व्वं गारुडं तथा॥ ४२
पार्ज्जन्यञ्च पाशुपतं जृम्भणास्त्रञ्च पार्व्वतम्।
माहेश्वरास्त्रं वायव्यं दण्डं सम्मोहनं तथा।
अव्यर्थमस्त्रशतकं दिव्यास्त्रशतकं परम्॥ ४३
आगत्य तत्र तस्थौ सा योगिनीनां त्रिकोटिभिः।
सार्द्धञ्च डाकिनीनाञ्च विकटानां त्रिकोटिभिः॥ ४४
भूताः प्रेताः पिशाचाश्च कुष्माण्डा ब्रह्मराक्षसाः।
वेतालाश्चैव यक्षाश्च राक्षसाश्चैव किन्नराः॥४५
ताभिश्चैव सह स्कन्दः प्रणम्य चन्द्रशेखरम्।
पितुः पार्श्वे सभायाञ्च समुवास भवाज्ञया॥ ४६
दूते गते तत्र शङ्खचूड़ः प्रतापवान्।
उवाच तुलसीं वार्त्तां गलाभ्यन्तरमेव च॥ ४७
रणवार्त्ताञ्च सा श्रुत्वा शुष्ककण्ठौष्ठतालुका।
उवाच मधुरं साध्वी हृदयेन विदूयता॥ ४८

तुलस्युवाच।

हे प्राणनाथ हे बन्धो तिष्ठ मे वक्षसि क्षणम्।
हे प्राणाधिष्ठातृदेव रक्ष मे जीवनं क्षणम्॥ ४९
भुङ्क्ष्व जन्मसमाधानं यद्दे मनसि वाञ्छितम्।
पश्यामि त्वां क्षणं किञ्चिल्लोचनाभ्यां पिपासिता॥५०
आन्दोलयन्ति प्राणा मे मनो दग्धञ्च सन्ततम्।
दुःस्वप्नञ्च मया दृष्टश्चाद्यैव चरमे निशि॥ ५१
तुलसीवचनं श्रुत्वा भुक्त्वा पीत्वा नृपेश्वरः।
उवाच वचनं प्राज्ञो हितं सत्यं यथोचितम्॥ ५२

शङ्खचूड़ उवाच।

काले नियोजितं सर्व्वं कर्म्मभोगनिवन्धने।
शुभं हर्षः सुखं दुःखं भयशोकममङ्गलम्॥ ५३
काले भवन्ति वृक्षाश्च स्कन्धवन्तश्च कालतः।
क्रमेण पुष्पवन्तश्च फलवन्तश्च कालतः॥ ५४
ते सर्व्वे फलिनः काले काले कालं प्रयान्ति च।
भवन्ति काले भूतानि काले कालं प्रयान्ति च।
काले भवन्ति विश्वानि काले नश्यन्ति सुन्दरि॥ ५५
काले सृजति स्रष्टा च पाता पाति च कालतः।
संहर्त्ता संहरेत् काले सञ्चरन्ति क्रमेण ते॥ ५६
ब्रह्मविष्णुशिवादीनामीश्वरः प्रकृतेः परः।
स्रष्टा पाता च संहर्त्ता तं कृष्णं भज सन्ततम्॥ ५७
काले स एव प्रकृतिं निर्म्माय स्वेच्छया प्रभुः।
निर्म्माय प्राकृतान् सर्व्वान् विश्वस्थांश्च चराचरान्॥५८
आब्रह्मस्तम्बपर्य्यन्तं सर्व्वं कृत्रिममेव च।
प्रभवन्ति च कालेन नश्यन्त्यपि च नश्वराः॥ ५९
भज सत्यं परं ब्रह्म राधेशं त्रिगुणात् परम्।
सर्व्वेशं सर्व्वरूपञ्च सर्व्वात्मानं तमीश्वरम्॥ ६०
जलं जलेन सृजति जलं पाति जलेन यः।
हरेज्जलं जलेनैव तं कृष्णं भज सन्ततम्॥ ६१
यस्याज्ञया वाति वातः शीघ्रगामी च सन्ततम्।
यस्याज्ञया च तपनस्तपत्येव यथाक्षणम्॥ ६२
यथाक्षणं वर्षतीन्द्रो मृत्युश्चरति जन्तुषु।
यथाक्षणं दहत्यग्निश्चन्द्रो भ्रमति भीतवत्॥ ६३
मृत्योर्म्मृत्युं कालकालं यमस्य च यमं परम्।
विभुं स्रष्टुश्च स्रष्टारं पातुश्च पालकं भवे॥ ६४

संहर्त्तारञ्च संहर्त्तुस्तं कृष्णं शरणं व्रज।
स्त्री वन्धुश्चैव केषां वा सर्व्ववन्धुं भज प्रिये॥ ६५
अहं को वा च त्वं का वा विधिना योजितः पुरा।
त्वया सार्द्धं कर्म्मणा च विधिनैव वियोजितः॥ ६६
अज्ञानी कातरः शोके विपत्तौ च न पण्डितः।
सुखं दुःखं भ्रमत्येव चक्रनेमिक्रमेण च॥ ६७
नारायणं तं सर्व्वेशं कान्तं प्राप्स्यसि निश्चितम्।
तपः कृतं यदर्थं च पुरा वदरिकाश्रमे॥ ६८
मया त्वं तपसा लब्धा ब्रह्मणश्च वरेण च।
हर्य्यर्थं तव तपो हरिं प्राप्स्यसि कामिनि।
वृन्दावने च गोविन्दं गोलोके त्वं भविष्यसि॥ ६९
अहं यास्यामि तल्लोकं तनुं त्यक्त्वा च दानवीम्।
तत्र द्रक्ष्यसि मां त्वञ्च त्वाञ्च द्रक्ष्यामि सन्ततम्॥ ७०
आगमं राधिकाशापाद्भारतञ्च सुदुर्लभम्।
पुनर्यास्यामि तत्रैव कः शोको मे शृणु प्रिये॥ ७१
त्वञ्च देहं परित्यज्य दिव्यरूपं विधाय च।
तत्कालं प्राप्स्यसि हरिं मा कान्ते कातरा भव॥ ७२
इत्युक्त्वा च दिनान्ते च तया सार्द्धं मनोहरे।
सुष्वाप शोभने तल्पे पुष्पचन्दनचर्च्चिते॥ ७३
नानाप्रकारविभवं चकार रत्नमन्दिरे॥ ७४
रत्नप्रदीपसंयुक्ते स्त्रीरत्नं प्राप्य सुन्दरीम्।
निनाय रजनीं राजा क्रीड़ाकौतुकमङ्गलैः॥ ७५
कृत्वा वक्षसि कान्तां तां रुदतीमतिदुःखिताम्।
कृशोदरीं निराहारां निमग्नां शोकसागरे॥ ७६
पुनस्तां बोधयामास दिव्यज्ञानेन ज्ञानवित्।
पुरा कृष्णेन यद्दत्तं भाण्डीरे च तदुत्तमम्॥ ७७
स च तस्यै ददौ तच्च सर्व्वशोकहरं वरम्॥ ७८
ज्ञानं सम्प्राप्य सा देवी प्रसन्नवदनेक्षणा।
क्रीड़ां चकार हर्षेण सर्व्वं मत्वेति नश्वरम्॥ ७९
तौ दम्पती च क्रीड़ार्त्तौ निमग्नौ सुखसागरे।
पुलकाञ्चितसर्व्वाङ्गौ मूर्च्छितौ निर्ज्जने मुने॥ ८०
अङ्गप्रत्यङ्गसंयुक्तौ सुप्रीतौ सुरतोत्सुकौ।
एकाङ्गौ च तथा तौ द्वौ चार्द्धनारीश्वरौ यथा॥ ८१
प्राणेश्वरञ्च तुलसी मेने प्राणाधिकं परम्।
प्राणाधिकाञ्च तां मेने राजा प्राणाधिकेश्वरीम्॥ ८२
तौ स्थितौ सुखसुप्तौ च तन्द्रितौ सुन्दरौ समौ।
सुवेशौ सुखसम्भोगादचेष्टौ सुमनोहरौ॥ ८३
क्षणं सचेतनौ तौ च कथयन्तौ रसाश्रयाम्।
कथां मनोहरां दिव्यां हसन्तौ च क्षणं पुनः॥ ८४
भुक्तवन्तौ च ताम्बूलं प्रदत्तञ्च परस्परम्।
परस्परं सेवितौ च सुप्रीत्या श्वेतचामरैः॥ ८५
क्षणं शयानौ सानन्दौ वसन्तौ च क्षणं पुनः।
क्षणं केलिनियुक्तौ च रसभावसमन्वितौ॥ ८६
सुरतेर्विरतिर्नास्ति तौ तद्विषयपण्डितौ।
सततं जययुक्तौ द्वौ क्षणं नैव पराजितौ॥ ८७

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे तुलस्युपाख्याने तुलसी-शङ्खचूड़सम्भोगो नाम सप्तदशोऽध्यायः॥१७॥

---

## अष्टादशोऽध्यायः।

### नारायण उवाच।

श्रीकृष्णं मनसा ध्यात्वा राजा कृष्णपरायणः।
उत्थाय ब्राह्मे मुहूर्त्ते पुष्पतल्पान्मनोहरात्॥ १
रात्रिवासः परित्यज्य स्नात्वा मङ्गलवारिणा।
धौते च वाससी धृत्वा कृत्वा तिलकमुज्ज्वलम्॥ २
चकाराह्निकमावश्यमभीष्टदेववन्दनम्।
दध्याज्यमधुलाजञ्च ददर्श वस्तुमङ्गलम्॥ ३
रत्नश्रेष्ठं मणिश्रेष्ठं वस्त्रश्रेष्ठञ्च काञ्चनम्।
ब्राह्मणेभ्यो ददौ भक्त्या यथा नित्यञ्च नारद॥
अमूल्यरत्नं यत् किञ्चिन्मुक्तामाणिक्यहीरकम्।
ददौ विप्राय गुरवे यात्रामङ्गलहेतवे॥ ५
गजरत्नमश्वरत्नं धेनुरत्नं मनोहरम्।
ददौ सर्व्वं दरिद्राय विप्राय मङ्गलाय च॥ ६
भाण्डाराणां सहस्रञ्च नगराणां त्रिलक्षकम्।
ग्रामाणां शतकोटिञ्च ब्राह्मणेभ्यो ददौ मुदा॥ ७
पुत्रं कृत्वा च राजेन्द्रं सुचन्द्रं दानवेषु च।
पुत्रे समर्प्य भार्य्याञ्च राज्यञ्च सर्व्वसम्पदम्॥ ८
प्रजानुचरसंघञ्च भाण्डारवाहनादिकम्।
स्वयं सन्नाहयुक्तश्च धनुष्पाणिर्बभूव ह॥ ९
भृत्यद्वारा क्रमेणैव चकार सैन्यसञ्चयम्।
अश्वानाञ्च त्रिलक्षेण लक्षेण वरहस्तिनाम्॥ १०
रथानामयुतेनैव धानुष्काणां त्रिकोटिभिः।
त्रिकोटिभिश्चर्म्मिणाञ्च शूलिनाञ्च त्रिकोटिभिः॥ ११

कृता सेना परिमिता दानवेन्द्रेण नारद।
तस्यां सेनापतिश्चैको युद्धशास्त्रविशारदः॥ १२
महारथः स विज्ञेयो रथिनां प्रवरो रणे।
त्रिलक्षाक्षौहिणीसेनापतिं कृत्वा नराधिपः॥ १३
त्रिंशदक्षौहिणीवाद्यभाण्डौघञ्च चकार ह।
वहिर्बभूव शिविरान्मनसा श्रीहरिं स्मरन्॥ १४
रत्नेन्द्रसारनिर्म्माण-विमानमारुरोह सः।
गुरुवर्गान् पुरस्कृत्य प्रययौ शङ्करान्तिकम्॥ १५
पुष्पभद्रानदीतीरं यत्राक्षयवटं शुभम्।
सिद्धाश्रमञ्च सिद्धानां सिद्धक्षेत्रञ्च नामतः॥ १६
कपिलस्य तपःस्थानं पुण्यक्षेत्रञ्च भारते।
पश्चिमोदधिपूर्व्वे च मलयस्य च पश्चिमे॥ १७
श्रीशैलोत्तरभागे च गन्धमादनदक्षिणे।
पञ्चयोजनविस्तीर्णा दैर्घ्ये शतगुणा तथा॥ १८
शाश्वती जलपूर्णा च पुष्पभद्रा नदी तथा।
लवणोदप्रियाभार्य्या शश्वत्सौभाग्यसंयुता॥ १९
शुद्धस्फटिकसङ्काशा भारते च सुपुण्यदा।
शरावतीमिश्रिता च निर्गता सा हिमालयात्॥ २०
गोमन्तं वामतः कृत्वा प्रविष्टा पश्चिमोदधौ।
तत्र गत्वा शङ्खचूड़ो ददर्श चन्द्रशेखरम्॥ २१
वटमूले समासीनं सूर्य्यकोटिसमप्रभम्।
कृत्वा योगासनं स्थित्वा मुद्रा युक्तञ्च सस्मितम्॥ २२
शुद्धस्फटिकसङ्काशं ज्वलन्तं ब्रह्मतेजसा।
त्रिशूलपट्टिशधरं व्याघ्रचर्म्माम्बरं वरम्॥ २३
तप्तकाञ्चनवर्णाभं जटाजालञ्च बिभ्रतम्।
त्रिनेत्रं पञ्चवक्त्रञ्च नागयज्ञोपवीतिनम्॥ २४
मृत्युञ्जयं मृत्युमृत्युं विश्वमृत्युकरं परम्।
भक्तमृत्युहरं शान्तं गौरीकान्तं मनोरमम्॥ २५
तपसां फलदातारं दातारं सर्व्वसम्पदाम्।
आशुतोषं प्रसन्नास्यं भक्तानुग्रहकारकम्॥ २६
विश्वनाथं विश्वरूपं विश्वबीजञ्च विश्वजम्।
विश्वम्भरं विश्ववरं विश्वसंहारकारणम्॥ २७
कारणं कारणानाञ्च नरकार्णवतारणम्।
ज्ञानप्रदं ज्ञानबीजं ज्ञानानन्दं सनातनम्॥ २८
अवरुह्य विमानाच्च तं दृष्ट्वा दानवेश्वरः।
सर्व्वैः सार्द्धं भक्तियुक्तः शिरसा प्रणनाम सः॥ २९
वामतो भद्रकालीञ्च स्कन्दञ्च तत्पुरःस्थितम्।
आशिषञ्च ददौ तस्मै काली स्कन्दश्च शङ्करः॥ ३०
उत्तस्थुर्दानवं दृष्ट्वा सर्व्वे नन्दीश्वरादयः।
परस्परञ्च सम्भाषां ते चक्रुस्तत्र साम्प्रतम्॥ ३१
राजा कृत्वा च सम्भाषामुवास शिवसन्निधौ।
प्रसन्नात्मा महादेवो भगवांस्तमुवाच ह॥ ३२

श्रीमहादेव उवाच।

विधाता जगतां ब्रह्मा पिता धर्म्मस्य धर्म्मवित्।
मरीचिस्तस्य पुत्रश्च वैष्णवश्चापि धार्म्मिकः॥ ३३
कश्यपश्चापि तत्पुत्रो धर्म्मिष्ठश्च प्रजापतिः।
दक्षः प्रीत्या ददौ तस्मै भक्त्या कन्यास्त्रयोदश॥ ३४
तास्वेका च दनुः साध्वी तत्सौभाग्येन वर्द्धिता।
चत्वारिंशद्दनोः पुत्रा दानवास्तेजसोज्ज्वलाः॥ ३५
तेष्वेको विप्रचित्तिश्च महाबलपराक्रमः।
तत्पुत्रो धार्म्मिको दम्भो विष्णुभक्तो जितेन्द्रियः॥३६
जजाप परमं मन्त्रं पुष्करे लक्षवत्सरम्।
शुक्राचार्य्यं गुरुं कृत्वा कृष्णस्य परमात्मनः॥ ३७
तदा त्वां तनयं प्राप वरं कृष्णपरायणम्।
पुरा त्वं पार्षदो गोपो गोपेष्वष्टसु धार्म्मिकः॥ ३८
अधुना राधिकाशापाद्भारते दानवेश्वरः।
आब्रह्मस्तम्बपर्य्यन्तं भ्रमं मेने च वैष्णवः॥ ३९
सालोक्य-सार्ष्टि-सारूप्य-सामीप्यैक्यं हरेरपि।
दीयमानं न गृह्णन्ति वैष्णवाः सेवनं विना॥ ४०
ब्रह्मत्वममरत्वं वा तुच्छं मेने च वैष्णवः।
इन्द्रत्वं वा कुवेरत्वं (क) न मेने गणनासु च॥ ४१
कृष्णभक्तस्य ते किं वा देवानां विषये भ्रमे।
देहि राज्यञ्च देवानां मत्प्रीतिं कुरु भूमिप॥ ४२
सुखं स्वराज्ये त्वं तिष्ठ देवास्तिष्ठन्तु स्वे पदे।
अलं भ्रातृविरोधेन सर्व्वे कश्यपवंशजाः॥ ४३
यानि कानि च पापानि ब्रह्महत्यादिकानि च।
ज्ञातिद्रोहस्य पापस्य कलां नार्हन्ति षोड़शीम्॥४४
स्वसम्पदाञ्च हानिञ्च यदि राजेन्द्र मन्यसे।
सर्व्वावस्था च समतां केषां याति च सर्व्वदा॥ ४५
ब्रह्मणश्च तिरोभावो लये प्राकृतिके सति।
आविर्भावः पुनस्तस्य प्रभवेदीश्वरेच्छया॥ ४६
ज्ञानवृद्धिश्च तपसा स्मृतिर्लोकस्य निश्चितम्
करोति सृष्टिं ज्ञानेन स्रष्टा सोऽपि क्रमेण च॥ ४७

(क) मनुत्वं वेति पाठान्तरम्।

परिपूर्णतमो धर्म्मः सत्ये सत्याश्रयः सदा ।
त्रिभागः सोऽपि त्रेतायां द्विभागो द्वापरे स्मृतः ॥४८
एकभागः कलेः पूर्व्वं तद्ध्रासश्च क्रमेण च ।
कलामात्रं कलेः शेषे कुह्वां चन्द्रकला यथा ॥४९
यादृक् तेजो रवेर्ग्रीष्मे न तादृक् शिशिरे पुनः ।
दिने च यादृङ्मध्याह्ने सायं प्रातर्न तत्समम् ॥ ५०
उदयं याति कालेन बालताञ्च क्रमेण च ।
प्रकाण्डताञ्च तत्पश्चात् कालेऽस्तं पुनरेव सः ॥ ५१
दिने प्रच्छन्नतां याति कालेन दुर्द्दिने घने ।
राहुग्रस्ते कम्पितश्च पुनरेव प्रसन्नताम् ॥ ५२
परिपूर्णतमश्चन्द्रः पूर्णिमायाञ्च यादृशः ।
तादृशो न भवेन्नित्यं क्षयं याति दिने दिने ॥ ५३
पुनः स पुष्टितां याति परं कुह्वा दिने दिने ।
सम्पद्युक्तः शुक्लपक्षे कृष्णे म्लानश्च यक्ष्मणा ॥ ५४
राहुग्रस्ते दिने म्लानो दुर्द्दिने निविड़े घने ।
काले चैन्द्रो भवेच्छुद्धो भ्रष्टश्रीः कालभेदके ॥ ५५
भविष्यति बलिश्चेन्द्रो भ्रष्टश्रीः सुतलेऽधुना ।
कालेन पृथ्वी शस्याढ्या सर्व्वाधारा वसुन्धरा ॥ ५६
काले जले निमग्ना सा तिरोभूता विपन्नता ।
काले नश्यन्ति विश्वानि प्रभवन्त्येव कालतः ॥ ५७
चराचराश्च कालेन नश्यन्ति प्रभवन्ति च ।
ईश्वरस्यैव समता कृष्णस्य परमात्मनः ॥ ५८
अहं मृत्युञ्जयो यस्मादसंख्यं प्राकृतं लयम् ।
अदर्शञ्चापि द्रक्ष्यामि वारं वारं पुनः पुनः ॥ ५९
स च प्रकृतिरूपश्च स एव पुरुषः स्मृतः ।
स चात्मा स च जीवश्च नानारूपधरः परः ॥ ६०
करोति सततं यो हि तन्नामगुणकीर्त्तनम् ।
कालं मृत्युं स जयति जन्मरोगजराभयम् ॥ ६१
स्रष्टा कृतो विधिस्तेन पाता विष्णुः कृतो भवे ।
अहं कृतश्च संहर्त्ता वयं विषयिणः कृताः ॥ ६२
कालाग्निरुद्रं संहारे नियोज्य विषये नृपः ।
अहं करोमि सततं तन्नामगुणकीर्त्तनम् ॥ ६३
तेन मृत्युञ्जयोऽहञ्च ज्ञानेनानेन निर्भयः ।
मृत्युर्मत्तो भयाद्याति वैनतेयादिवोरगः ॥ ६४
इत्युक्त्वा स च सर्व्वेशः सर्व्वज्ञः सर्व्वभावनः ।
विरराम च सर्व्वश्च सभामध्ये च नारद ॥ ६५
राजा तद्वचनं श्रुत्वा प्रशशंस पुनः पुनः ।
उवाच मधुरं दिव्यं परं विनयपूर्व्वकम् ॥ ६६

शङ्खचूड़ उवाच ।

त्वया यत् कथितं नाथ सर्व्वं सत्यञ्च नानृतम् ।
तथापि किञ्चिद्याथार्थ्यं श्रूयतां मन्निवेदनम् ॥ ६७
ज्ञातिद्रोहे महत् पापं त्वयोक्तमधुनात्र यत् ।
गृहीत्वा तस्य सर्व्वस्वं कुतः प्रस्थापितो बलिः ॥६८
मया समुद्धृतं सर्व्वमुद्यमैश्वर्य्यमीश्वर ।
सुतलाच्च समुद्धर्त्तुं नालं सोऽपि गदाधरः ॥ ६९
सभ्रातृको हिरण्याक्षः कथं देवैश्च हिंसितः ।
शुम्भादयश्चासुराश्च कथं देवैर्निपातिताः ॥ ७०
पुरा समुद्रमथने पीयूषं भक्षितं सुरैः ।
क्लेशभाजो वयं तत्र ते सर्व्वफलभाजनैः ॥ ७१
क्रीड़ाभाण्डमिदं विश्वं कृष्णस्य परमात्मनः ।
यस्मै तत्र स ददाति तस्यैश्वर्य्यं भवेत् तदा ॥ ७२
देवदानवयोर्वादः शश्वन्नैमित्तिकः सदा ।
पराजयो जयस्तेषां कालेऽस्माकं क्रमेण च ॥ ७३
तत्रावयोर्विरोधे चागमनं निष्फलं तव ।
मम सम्बन्धिनो बन्धोरीश्वरस्य महात्मनः ॥ ७४
इयं ते महती लज्जा स्पर्द्धास्माभिः सहाधुना ।
ततोऽधिका च समरे कीर्त्तिहानिः पराजये ॥ ७५
शङ्खचूड़वचः श्रुत्वा प्रहस्य च त्रिलोचनः ।
यथोचितं सुमधुरमुवाच दानवेश्वरम् ॥ ७६

श्रीमहादेव उवाच ।

युष्माभिः सह युद्धं मे ब्रह्मवंशसमुद्भवैः ।
का लज्जा महती राजन्नकीर्त्तिर्वा पराजये ॥७७
युद्धमादौ हरेरेव मधुना कैटभेन च ।
हिरण्यकशिपोश्चैव सह तेनात्मना नृप ॥ ७८
हिरण्याक्षस्य युद्धञ्च पुनस्तेन गदाभृता ।
त्रिपुरैः सह युद्धञ्च मया चापि पुरा कृतम् ॥ ७९
सर्व्वेश्वर्य्याः सर्व्वमातुः प्रकृत्याश्च बभूव ह ।
सह शुम्भादिभिः पूर्व्वं समरं परमाद्भुतम् ॥ ८०
पार्षदप्रवरस्त्वञ्च कृष्णस्य परमात्मनः ।
ये ये हताश्च ते दैत्या न हि कोऽपि त्वया समाः॥८१
का लज्जा महती राजन्नकीर्त्तिर्वा पराजये ।
सुराणां शरणस्यैव प्रेषितस्य हरेरहो ॥ ८२
देहि राज्यञ्च देवानां वाग्व्यये किं प्रयोजनम् ।
युद्धं वा कुरु मत्सार्द्धमिति मे निश्चितं वचः ॥ ८३

इत्युक्त्वा शङ्खस्तत्र विरराम च नारद ।
उत्तस्थौ शङ्खचूडश्च स्वामात्यैः सह सत्वरः ॥ ८४

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे तुलस्युपाख्याने शिव-शङ्खचूडसंवादोऽष्टादशोऽध्यायः ॥१८॥

---

## एकोनविंशोऽध्यायः ।

नारायण उवाच ।

शिवं प्रणम्य शिरसा दानवेन्द्रः प्रतापवान् ।
समारुरोह यानञ्च स्वामात्यैः सह सत्वरः ॥ १
शिवः स्वसैन्यं देवांश्च प्रेरयामास सत्वरः ।
दानवेन्द्रः स्वसैन्यञ्च युद्धारम्भो बभूव ह ॥ २
स्वयं महेन्द्रो युयुधे सार्द्धञ्च वृषपर्व्वणा ।
भास्करो युयुधे विप्रचित्तिना सह सत्वरः ॥ ३
दम्भेन सह चन्द्रश्च चकार समरं परम् ।
कालेश्वरेण कालश्च गोकर्णेन हुताशनः ॥ ४
कुवेरः कालकेयेन विश्वकर्म्मा मयेन च ।
भयङ्करेण मृत्युश्च संहारेण यमस्तथा ॥ ५
कलविङ्केन वरुणश्चञ्चलेन समीरणः ।
वुधश्च घृतपृष्ठेन रक्ताक्षेण शनैश्चरः ॥ ६
जयन्तो रत्नसारेण वसवो वर्च्चसां गणैः ।
अश्विनौ च दीप्तिमता धूम्रेण नलकूवरः ॥ ७
धनुर्द्धरेण धर्म्मश्च मण्डूकाक्षेण मङ्गलः ।
शोभाकरेणैवेशानः पीठरेण च मन्मथः ॥ ८
उल्कामुखेन धूम्रेण खड्गेनापि ध्वजेन च ।
काञ्चीमुखेन पिण्डेन धूम्रेण सह नन्दिना ॥ ९
विश्वेन च पलाशेन चादित्या युयुधुः परम् ।
एकादश महारुद्राश्चैकादशभयङ्करैः ॥ १०
महामारी च युयुधे चोग्रदण्डादिभिः सह ।
नन्दीश्वरादयः सर्व्वे दानवानां गणैः सह ॥ ११
युयुधुश्च महायुद्धे प्रलये च भयङ्करे ।
वटमूले च शम्भुश्च तस्थौ काल्या सुतेन च ॥ १२
सर्व्वे च युयुधुः सैन्यसमूहाः सततं मुने ।
रत्नसिंहासने रम्ये कोटिभिर्दानवैः सह ॥ १३
उवास शङ्खचूडश्च रत्नभूषणभूषितः ।
शङ्करस्य च योधाश्च युद्धे सर्व्वे पराजिताः ॥ १४
देवाश्च दुद्रुवुः सर्व्वे भीताश्च क्षतविक्षताः ।
चकार कोपं स्कन्दश्च देवेभ्यश्चाभयं ददौ ॥ १५
बभूव स्वगणानाञ्च वर्द्धयामास तेजसा ।
स्वयमेकश्च युयुधे दानवानां गणैः सह ॥ १६
अक्षौहिणीनां शतकं समरे स जघान ह ।
खर्परं पातयामास काली कमललोचना ॥ १७
पपौ रक्तं दानवानां क्रुद्धा सा शतखर्परम् ।
दशलक्षं गजेन्द्राणां शतलक्षञ्च घोटकम् ॥ १८
समादायैकहस्तेन मुखे चिक्षेप लीलया ।
कबन्धानां सहस्रञ्च ननर्त्त समरे मुने ॥ १९
स्कन्दस्य शरजालेन दानवाः क्षतविक्षताः ।
भीताश्च दुद्रुवुः सर्व्वे महाबलपराक्रमाः ॥ २०
वृषपर्व्वा विप्रचित्तिर्दम्भश्चापि विकङ्कणः ।
स्कन्देन सार्द्धं युयुधुस्ते च सर्व्वे क्रमेण च ॥ २१
महामारी च युयुधे न बभूव पराङ्मुखी ।
बभूवुस्ते च संक्षुब्धाः स्कन्दस्य शक्तिपीड़या ॥ २२
नेदुर्दुन्दुभयः स्वर्गे पुष्पवृष्टिर्बभूव ह ।
स्कन्दस्योपरि तत्रैव समरे च भयङ्करे ॥ २३
स्कन्दस्य समरं दृष्ट्वा महदद्भुतमुल्वणम् ।
दानवानां क्षयकरं यथा प्राकृतिकं लयम् ।
राजा विमानमारुह्य शरवर्षं चकार ह ॥ २४
नृपस्य शरवृष्टिश्च घनस्य वर्षणं यथा ।
महाघोरान्धकारश्च वह्न्युत्थानं बभूव ह ॥ २५
देवाः प्रदुद्रुवुश्चान्ये सर्व्वे नन्दीश्वरादयः ।
एक एव कार्त्तिकेयस्तस्थौ समरमूर्द्धनि ॥ २६
पर्व्वतानाञ्च सर्पाणां शिलानां शाखिनां तथा ।
शश्वच्चकार वृष्टिञ्च दुर्व्वाह्याञ्च भयङ्करीम् ॥ २७
नृपस्य शरवृष्ट्या च प्रच्छन्नः शिवनन्दनः ।
नीहारेण च सान्द्रेण संच्छन्नो भास्करो यथा ॥ २८
धनुश्चिच्छेद स्कन्दस्य दुर्व्वहञ्च भयङ्करम् ।
बभञ्ज च रथं दिव्यं चिच्छेद रथघोटकान् ॥ २९
मयूरं जर्ज्जरीभूतं दिव्यास्त्रेण चकार सः ।
शक्तिं चिक्षेप सूर्य्याभां तस्य वक्षसि घातिनीम् ॥ ३०
क्षणं मूर्च्छाञ्च संप्राप्य चकार चेतनां पुनः ।
गृहीत्वान्यद्धनुर्दिव्यं यद्दत्तं विष्णुना पुरा ॥ ३१
रत्नेन्द्रसारनिर्म्माणयानमारुह्य कार्त्तिकः ।
शस्त्रास्त्रञ्च गृहीत्वा च चकार रणमुल्वणम् ॥ ३२

सर्पांश्च पर्व्वतांश्चैव वृक्षांश्च प्रस्तरांस्तथा।
सर्व्वांश्चिच्छेद कोपेन दिव्यास्त्रेण शिवात्मजः॥ ३३
वह्निं निर्व्वापयामास पार्ज्जन्येन प्रतापवान्।
रथं धनुश्च चिच्छेद शङ्खचूड़स्य लीलया॥ ३४
सन्नाहं सारथिं रत्नकिरीटमुकुटोज्ज्वलम्।
चिक्षेप शक्तिमुल्काभां दानवेन्द्रस्य वक्षसि॥ ३५
मूर्च्छां सम्प्राप्य राजा च चेतनाञ्च चकार सः।
आरुरोह यानमन्यद्‌ धनुर्जग्राह सत्वरः॥ ३६
चकार शरजालञ्च मायया मायिनां वरः।
गुहञ्चाच्छाद्य समरे शरजालेन नारद॥ ३७
जग्राह शक्तिमव्यर्थां शतसूर्य्यसमप्रभाम्।
प्रलयाग्निशिखारूपां विष्णोश्च तेजसावृताम्॥ ३८
चिक्षेप ताञ्च कोपेन महावेगेन कार्त्तिके।
पपात शक्तिस्तद्गात्रे वह्निराशिरिवोज्ज्वला॥ ३९
मूर्च्छां सम्प्राप शक्त्या च कार्त्तिकेयो महाबलः।
काली गृहीत्वा तं क्रोड़े निनाय शिवसन्निधौ॥ ४०
शिवस्तञ्चापि ज्ञानेन जीवयामास लीलया।
ददौ बलमनन्तञ्च स चोत्तस्थौ प्रतापवान्॥ ४१
काली जगाम समरं रक्षन्‌ कार्त्तिकं शिवः।
वीरास्तामनुजग्मुश्च ते च नन्दीश्वरादयः॥ ४२
सर्व्वे देवाश्च गन्धर्व्वा यक्षराक्षसकिन्नराः।
वाद्यभाण्डश्च बहुशः शतकोटिर्व्वलाहकाः॥ ४३
सा च गत्वा च संग्रामं सिंहनादं चकार ह।
देव्याश्च सिंहनादेन प्रापुर्मूर्च्छाञ्च दानवाः॥ ४४
अट्टाट्टहासमशिवं चकार च पुनः पुनः।
हृष्टा पपौ च माध्वीकं ननर्त्त रणमूर्द्धनि॥ ४५
उग्रदंष्ट्रा चोग्रचण्डा कोट्टवी च पपौ मधु।
योगिनीनां डाकिनीनां गणाः सुरगणादयः॥ ४६
दृष्ट्वा कालीं शङ्खचूड़ः शीघ्रमाजिं समाययौ॥
दानवाश्च भयं प्रापू राजा तेभ्योऽभयं ददौ॥ ४७
काली चिक्षेप वह्निञ्च प्रलयाग्निशिखोपमम्।
राजा निर्व्वापयामास पार्ज्जन्येनावलीलया॥ ४८
चिक्षेप वारुणं सा च तत् तीव्रं महदद्भुतम्।
गान्धर्व्वेण च चिच्छेद दानवेन्द्रश्च लीलया॥ ४९
माहेश्वरं प्रचिक्षेप काली वह्निशिखोपमम्।
राजा जघान तच्छीघ्रं वैष्णवेनावलीलया (क)॥ ५०

( क ) वैष्णवेन बलीयसेति वा पाठः।

नारायणास्त्रं सा देवी चिक्षेप मन्त्रपूर्व्वकम्।
राजा ननाम तद्दृष्ट्वा चावरुह्य रथाद्‌द्रुतो॥ ५१
ऊर्द्ध्वं जगाम तच्चास्त्रं प्रलयाग्निशिखोपमम्।
पपात शङ्खचूड़श्च भक्त्या च दण्डवद्भुवि॥ ५२
ब्रह्मास्त्रं सा च चिक्षेप यत्नतो मन्त्रपूर्व्वकम्।
ब्रह्मास्त्रेण महाराजो निर्व्वाणञ्च चकार ह॥ ५३
चिक्षेपातीव दिव्यास्त्रं सा देवी मन्त्रपूर्व्वकम्।
राजा दिव्यास्त्रजालेन निर्व्वाणञ्च चकार ह॥ ५४
देवी चिक्षेप शक्तिञ्च यत्नतो योजनायताम्।
राजा तीक्ष्णास्त्रजालेन शतखण्डं चकार ह॥ ५५
जग्राह मन्त्रपूर्व्वञ्च देवी पाशुपतं रुषा।
निक्षेप्तुं सा निषिद्धा च वाग्बभूवाशरीरिणी॥ ५६
मृत्युः पाशुपते नास्ति नृपस्य च महात्मनः।
यावदस्त्येव कण्ठेऽस्य कवचञ्च हरेरिति॥ ५७
यावत् सतीत्वमस्त्येव सत्याश्च नृपयोषितः।
तावदस्य जरामृत्युर्नास्तीति ब्रह्मणो वरः॥ ५८
इत्याकर्ण्य भद्रकाली न तच्चिक्षेप सा सती।
शतलक्षं दानवानां जग्राह लीलया क्षुधा॥ ५९
ग्रस्तुं जगाम वेगेन शङ्खचूड़ं भयङ्करी।
दिव्यास्त्रेण सुतीक्ष्णेण वारयामास दानवः॥ ६०
खड्गं चिक्षेप सा देवी ग्रीष्मसूर्य्योपमं परम्।
दिव्यास्त्रेण दानवेन्द्रः शतखण्डं चकार सः॥ ६१
पुनर्ग्रस्तुं महादेवी वेगेन च जगाम तम्।
सर्व्वसिद्धेश्वरः श्रीमान् ववृधे दानवेश्वरः (क)॥ ६२
वेगेन मुष्टिना काली कोपयुक्ता भयङ्करी।
बभञ्जाथ रथं तस्य जघान सारथिं सती॥ ६३
सा च शूलञ्च चिक्षेप प्रलयाग्निशिखोपमम्।
वामहस्तेन जग्राह शङ्खचूड़श्च लीलया॥ ६४
मुष्ट्या जघान तं देवी महाकोपेन वेगतः।
बभ्राम व्यथया दैत्यः क्षणं मूर्च्छामवाप ह॥ ६५
क्षणेन चेतनां प्राप्य समुत्तस्थौ प्रतापवान्।
न चकार बाहुयुद्धं देव्या सह ननाम ताम्॥ ६६
देव्याश्चास्त्रञ्च चिच्छेद जग्राह च स्वतेजसा।
नास्त्रं चिक्षेप तां भक्त्या मातृबुद्ध्या च वैष्णवः॥ ६७
गृहीत्वा दानवं देवी भ्रामयित्वा पुनः पुनः।

( क ) निवारयामास च तां सर्व्वसिद्धेश्वरो वरः इति क्वचित् पाठः।

ऊर्द्ध्वं च प्रेरयामास महावेगेन कोपतः ॥ ६८
उद्र्ध्वात् पपात वेगेन शङ्खचूड़ः प्रतापवान् ।
निपत्य च समुत्तस्थौ प्रणम्य भद्रकालिकाम् ॥ ६९
रत्नेन्द्रसारनिर्म्माणविमानान्यं मनोहरम् ।
आसरोह हर्षयुक्तो न विश्रान्तो महारणे ॥ ७०
दानवानाञ्च क्षतजं मांसञ्च विपुलं क्षुधा ।
पीत्वा भुक्त्वा भद्रकाली जगाम शङ्करान्तिकम् ॥ ७१
उवाच रणवृत्तान्तं पौर्व्वापर्य्यं यथाक्रमम् ।
श्रुत्वा जहास शम्भुश्च दानवानां विनाशनम् ॥ ७२
लक्षञ्च दानवेन्द्राणामवशिष्टं रणेऽधुना ।
उद्वृत्तं भूभृता सार्द्धं तदन्यद्भुक्तमीश्वर ॥ ७३
संग्रामे दानवेन्द्रश्च हन्तुं पाशुपतेन वै ।
अवध्यस्तव राजेति गाग्वभूवाशरीरिणी ॥ ७४
राजेन्द्रश्च महाज्ञानी महाबलपराक्रमः ।
न च चिक्षेप मय्यस्त्रं चिच्छेद मम शायकम् ॥ ७५

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारद-संवादे तुलस्युपाख्याने काली-शङ्खचूड़युद्धे एकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः ।

नारायण उवाच ।

शिवस्तत्त्वं समाकर्ण्य तत्त्वज्ञानविशारदः ।
ययौ स्वयञ्च समरं स्वगणैः सह नारद ॥ १
शङ्खचूड़ः शिवं दृष्ट्वा विमानादवरुह्य च ।
ननाम परया भक्त्या दण्डवत् पतितो भुवि ॥ २
तं प्रणम्य च वेगेन विमानमारुरोह सः ।
तूर्णं चकार सन्नाहं धनुर्जग्राह दुर्व्वहम् ॥ ३
शिव-दानवयोर्युद्धं पूर्णमब्दं बभूव ह ।
न बभूवतुरनयोर्ब्रह्मन् जयपराजयौ ॥ ४
न्यस्तशस्त्रश्च भगवान् न्यस्तशस्त्रश्च दानवः ।
रथस्थः शङ्खचूड़श्च वृषस्थो वृषभध्वजः ॥ ५
दानवानाञ्च शतकमुद्वृत्तञ्च बभूव ह ।
रणे ये ये मृताः शम्भुर्जीवयामास तान् विभुः ॥ ६
ततो विष्णुर्महामायो वृद्धब्राह्मणरूपधृक् ।
आगत्य च रणस्थानमुवाच दानवेश्वरम् ॥ ७

वृद्धब्राह्मण उवाच ।

देहि भिक्षाञ्च राजेन्द्र मह्यं विप्राय साम्प्रतम् ।
त्वं सर्व्वसम्पदां दाता यन्मे मनसि वाञ्छितम् ॥ ८
निराहाराय वृद्धाय तृषितायातुराय च ।
पश्चात् त्वां कथयिष्यामि पुरः सत्यञ्च कुर्व्विति ॥ ९
ओमित्युवाच राजेन्द्रः प्रसन्नवदनेक्षणः ।
कवचार्थी जनश्चाहमित्युवाचेति मायया ॥ १०
तच्छ्रुत्वा दानवश्रेष्ठो ददौ कवचमुत्तमम् ।
गृहीत्वा कवचं दिव्यं जगाम हरिरेव च ॥ ११
शङ्खचूड़स्य रूपेण जगाम तुलसीं प्रति ।
गत्वा तस्यां मायया च वीर्य्याधानं चकार ह ॥ १२
अथ शम्भुर्हरेः शूलं जग्राह दानवं प्रति ।
ग्रीष्ममध्याह्नमार्त्तण्ड-शतकप्रभमुज्ज्वलम् ॥ १३
नारायणाधिष्ठिताग्रं ब्रह्माधिष्ठितमध्यकम् ।
शिवाधिष्ठितमूलञ्च कालाधिष्ठितधारकम् ॥ १४
किरणावलिसंयुक्तं प्रलयाग्निशिखोपमम् ।
दुर्निवार्य्यञ्च दुर्द्धर्षमव्यर्थं वैरिघातकम् ॥ १५
तेजसा चक्रतुल्यञ्च सर्व्वशस्त्रास्त्रसारकम् ।
शिवकेशवयोरन्यदुर्व्वहञ्च भयङ्करम् ॥ १६
धनुःसहस्रं दैर्घ्येण प्रस्थेन शतहस्तकम् ।
सजीवं ब्रह्मरूपञ्च नित्यरूपमनिर्म्मितम् ॥ १७
संहर्तुं सर्व्वब्रह्माण्डमलञ्च स्वावलीलया ।
चिक्षेप घूर्णनं कृत्वा शङ्खचूड़े च नारद ॥ १८
राजा चापं परित्यज्य श्रीकृष्णचरणाम्बुजम् ।
ध्यानं चकार भक्त्या च कृत्वा योगासनं धिया ॥ १९
शूलञ्च भ्रमणं कृत्वा पपात दानवोपरि ।
चकार भस्मसात् तञ्च सरथञ्चावलीलया ॥ २०
राजा धृत्वा दिव्यरूपं किशोरगोपवेशकम् ।
द्विभुजं मुरलीहस्तं रत्नभूषणभूषितम् ॥ २१
रत्नेन्द्रसारनिर्म्माणं वेष्टितं गोपकोटिभिः ।
गोलोकादागतं यानमारुह्य तत्पुरं ययौ ॥ २२
गत्वा ननाम शिरसा राधामाधवयोर्मुने ।
भक्त्या तच्चरणाम्भोजं रासे वृन्दावने वने ॥ २३
सुदामानं तौ च दृष्ट्वा प्रसन्नवदनेक्षणौ ।
क्रोड़े चकार स्नेहेन प्रेम्णातिपरिसंप्लुतौ ॥ २४
अथ शूलञ्च वेगेन प्रययौ शूलिनः करम् ।
शङ्करस्तेन शूलेन शूलपाणिर्बभूव सः ॥ २५

स शिवस्तेन शूलेन दानवस्यास्थिजालकम्।
प्रेम्णा च प्रेरयामास लवणोदे च सागरे॥ २६
अस्थिभिः शङ्खचूडस्य शङ्खजातिर्बभूव ह।
नानाप्रकाररूपा च शश्वत्पूता सुरार्च्चने॥ २७
प्रशस्तं शङ्खतोयञ्च देवानां प्रीतिदं परम्।
तीर्थतोयस्वरूपञ्च पवित्रं शम्भुना विना॥ २८
शङ्खशब्दो भवेद्यत्र तत्र लक्ष्मीश्च सुस्थिरा।
स स्नातः सर्व्वतीर्थेषु यः स्नातः शङ्खवारिणा॥२९
शङ्खे हरेरधिष्ठानं यत्र शङ्खस्ततो हरिः।
तत्रैव सततं लक्ष्मीर्दूरीभूतममङ्गलम्॥ ३०
स्त्रीणाञ्च शङ्खध्वनिभिः शूद्राणाञ्च विशेषतः।
भीता रुष्टा याति लक्ष्मीः स्थलमन्यत् स्थलात्ततः॥३१
शिवश्च दानवं हत्वा शिवलोकं जगाम सः।
प्रहृष्टो वृषमारुह्य स्वगणैश्च समावृतः॥ ३२
सुराः स्वविषयं प्रापुः परमानन्दसंयुताः।
नेदुर्दुन्दुभयः स्वर्गे जगुर्गन्धर्व्वकिन्नराः॥ ३३
बभूव पुष्पवृष्टिश्च शिवस्योपरि सन्ततम्।
प्रशशंसुः सुरास्तञ्च मुनीन्द्रप्रवरादयः॥ ३४

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे तुलस्युपाख्याने शङ्खचूडवधो नाम विंशोऽध्यायः॥२०॥

---

## एकविंशोऽध्यायः।

नारद उवाच।

नारायणश्च भगवन् वीर्य्याधानं चकार ह।
तुलस्यां केन रूपेण तन्मे व्याख्यातुमर्हसि॥ १

नारायण उवाच।

नारायणश्च भगवान् देवानां साधनेन च।
शङ्खचूडस्य रूपेण रेमे तद्रमया सह॥ २
शङ्खचूडस्य कवचं गृहीत्वा विष्णुमायया।
पुनर्विधाय तद्रूपं जगाम तुलसीगृहम्॥ ३
दुन्दुभिं वादयामास तुलसीद्वारसन्निधौ।
जयशब्दं चरद्वारा बोधयामास सुन्दरीम्॥ ४
तच्छ्रुत्वा सा च साध्वी च परमानन्दसंयुता।
राजमार्गं गवाक्षेण ददर्श परमादरात्॥ ५
ब्राह्मणेभ्यो धनं दत्त्वा कारयामास मङ्गलम्।
वन्दिभ्यो भिक्षुकेभ्यश्च वाचकेभ्यो धनं ददौ॥ ६
अवरुह्य रथाद्देवो देव्याश्च भवनं ययौ।
अमूल्यरत्ननिर्म्माणं सुन्दरं सुमनोहरम्॥ ७
दृष्ट्वा च पुरतः कान्तं शान्तं कान्ता मुदान्विता।
तत्पादं क्षालयामास ननाम च रुरोद च॥ ८
रत्नसिंहासने रम्ये वासयामास कामुकी।
ताम्बूलञ्च ददौ तस्मै कर्पूरादिसुवासितम्॥ ९
अद्य मे सफलं जन्म अद्य मे सफला क्रिया।
रणागतञ्च प्राणेशं पश्यन्त्याश्च पुनर्गृहे॥ १०
सस्मिता सकटाक्षञ्च सकामा पुलकाञ्चिता।
पप्रच्छ रणवृत्तान्तं कान्तं मधुरया गिरा॥ ११

तुलस्युवाच।

असंख्यविश्वसंहर्त्ता सार्द्धमाजौ तव प्रभो।
कथं बभूव विजयस्तन्मे ब्रूहि कृपानिधे॥ १२
तुलसीवचनं श्रुत्वा प्रहस्य कमलापतिः।
शङ्खचूडस्य रूपेण तामुवाचामृतं वचः॥ १३

श्रीहरिरुवाच।

आवयोः समरं कान्ते पूर्णमब्दं बभूव ह।
नाशो बभूव सर्व्वेषां दानवानाञ्च कामिनि॥ १४
प्रीतिञ्च कारयामास ब्रह्मा च स्वयमावयोः।
देवानामधिकारश्च प्रदत्तो ब्रह्मणाज्ञया॥ १५
मयागतं स्वभवनं शिवलोकं शिवो गतः।
इत्युक्त्वा जगतां नाथः शयनञ्च चकार ह॥ १६
रेमे रमापतिस्तत्र रामया सह नारद।
सा साध्वी सुखसम्भोगादाकर्षणव्यतिक्रमात्।
सर्व्वं वितर्कयामास कस्त्वमेवेत्युवाच ह॥ १७

तुलस्युवाच।

को वा त्वं वद मायेश भुक्ताहं मायया त्वया।
दूरीकृतं मत्सतीत्वमथवा त्वां शपामि ह॥ १८
तुलसीवचनं श्रुत्वा हरिः शापभयेन च।
दधार लीलया ब्रह्मन् स्वमूर्त्तिं सुमनोहराम्॥१९
ददर्श पुरतो देवी देवदेवं सनातनम्।
नवीननीरदश्यामं शरत्पङ्कजलोचनम्॥ २०
कोटिकन्दर्पलीलाभं रत्नभूषणभूषितम्।
ईषद्धास्यप्रसन्नास्यं शोभितं पीतवाससा॥ २१
तं दृष्ट्वा कामिनी कामान्मूर्च्छां संप्राप लीलया।
पुनश्च चेतनां प्राप्य पुनः सा तमुवाच ह॥ २२

तुलस्युवाच।

हे नाथ ते दया नास्ति पाषाणसदृशस्य च।
छलेन धर्म्मभङ्गेण मम स्वामी त्वया हतः॥ २३
पाषाणसदृशस्त्वञ्च दयाहीनो यतः प्रभो।
तस्मात् पाषाणरूपस्त्वं भवे देव भवाधुना॥ २४
ये वदन्ति दयासिन्धुं त्वां ते भ्रान्ता न संशयः।
भक्तो विनापराधेन परार्थे च कथं हतः॥ २५
सर्व्वात्मा त्वञ्च सर्व्वज्ञो न जानासि परव्यथाम्।
अतस्त्वमेकजन्मनि स्वमेव विस्मरिष्यसि॥ २६
इत्युक्त्वा च महासाध्वी निपत्य चरणे हरेः।
भृशं रुरोद शोकार्त्ता विललाप मुहुर्म्मुहुः॥ २७
तस्याश्च करुणां दृष्ट्वा करुणामयसागरः।
नयेन तां बोधयितुमुवाच कमलापतिः॥ २८

श्रीभगवानुवाच।

तपस्त्वया कृतं साध्वि मदर्थे भारते चिरम्।
त्वदर्थे शङ्खचूडश्च चकार सुचिरं तपः॥ २९
कृत्वा त्वां कामिनीं कामी विजहार च तत्फलात्।
अधुना दातुमुचितं तवैव तपसः फलम्॥ ३०
इदं शरीरं त्यक्त्वा च दिव्यं देहं विधाय च।
रासे रम मया सार्द्धं त्वं रमासदृशी भव॥ ३१
इयं तनुर्नदीरूपा गण्डकीति च विश्रुता।
पूता सुपुण्यदा नृणां पुण्या भवतु भारते॥ ३२
तव केशसमूहश्च पुण्यवृक्षो भवत्विति।
तुलसीकेशसम्भूतः तुलसीति च विश्रुतः॥ ३३
त्रिलोकेषु च पुष्पाणां पत्राणां देवपूजने।
प्रधानरूपा तुलसी भविष्यति वरानने॥ ३४
स्वर्गे मर्त्त्ये च पाताले वैकुण्ठे मम सन्निधौ।
भवन्तु तुलसीवृक्षा वराः पुष्पेषु सुन्दरि॥ ३५
गोलोके विरजातीरे रासे वृन्दावने भुवि।
भाण्डीरे चम्पकवने रम्ये चन्दनकानने॥ ३६
माधवी-केतकी-कुन्द-मल्लिका-मालतीवने।
भवन्तु तरवस्तत्र पुण्यस्थानेषु पुण्यदाः॥ ३७
तुलसीतरुमूले च पुण्यदेशे सुपुण्यदे।
अधिष्ठानन्तु तीर्थानां सर्व्वेषाञ्च भविष्यति॥ ३८
तत्रैव सर्व्वदेवानां ममाधिष्ठानमेव च।
तुलसीपत्रपतनप्राप्तये च वरानने॥ ३९
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः।
तुलसीपत्रतोयेन योऽभिषेकं समाचरेत्॥ ४०
सुधाघटसहस्रेण या तुष्टिर्न भवेद्धरेः।
सा च तुष्टिर्भवेन्नॄणां तुलसीपत्रदानतः॥ ४१
गवामयुतदानेन यत् फलं लभते नरः।
तुलसीपत्रदानेन तत् फलं लभते सति॥ ४२
तुलसीपत्रतोयञ्च मृत्युकाले च यो लभेत्।
स मुच्यते सर्व्वपापाद्विष्णुलोकं स गच्छति॥ ४३
नित्यं यस्तुलसीतोयं भुङ्क्ते भक्त्या च मानवः।
स एव जीवन्मुक्तश्च गङ्गास्नानफलं लभेत्॥ ४४
नित्यं यस्तुलसीं दत्त्वा पूजयेन्माञ्च मानवः।
लक्षाश्वमेधजं पुण्यं लभते नात्र संशयः॥ ४५
तुलसीं स्वकरे धृत्वा देहे धृत्वा च मानवः।
प्राणांस्त्यजति तीर्थेषु विष्णुलोकं स गच्छति॥ ४६
तुलसीकाष्ठनिर्म्माणमालां गृह्णाति यो नरः।
पदे पदेऽश्वमेधस्य लभते निश्चितं फलम्॥ ४७
तुलसीं स्वकरे धृत्वा स्वीकारं यो न रक्षति।
स याति कालसूत्रञ्च यावच्चन्द्रदिवाकरौ॥ ४८
करोति मिथ्या शपथं तुलस्या यो हि मानवः।
स याति कुम्भीपाकञ्च यावदिन्द्राश्चतुर्द्दश॥ ४९
तुलसीतोयकणिकां मृत्युकाले च यो लभेत्।
रत्नयानं समारुह्य वैकुण्ठं स प्रयाति च॥ ५०
पूर्णिमायाममायाञ्च द्वादश्यां रविसंक्रमे।
तैलाभ्यङ्गे च स्नाने च मध्याह्ने निशि सन्ध्ययोः॥ ५१
अशौचे शुचिकाले वा रात्रिवासोऽन्विते नराः।
तुलसीं ये विचिन्वन्ति ते छिन्दन्ति हरेः शिरः॥ ५२
त्रिरात्रं तुलसीपत्रं शुद्धं पर्य्युषितं सति।
श्राद्धे व्रते वा दाने वा प्रतिष्ठायां सुरार्च्चने॥ ५३
भूगतं तोयपतितं यद्दत्तं विष्णवे सति।
शुद्धन्तु तुलसीपत्रं क्षालनादन्यकर्म्मणि॥ ५४
वृक्षाधिष्ठातृदेवी या गोलोके च निरामये।
कृष्णेन सार्द्धं रहसि नित्यक्रीड़ां करिष्यति॥ ५५
नद्यधिष्ठातृदेवी या भारते च सुपुण्यदा।
लवणोदस्य पत्नी च मदंशस्य भविष्यति॥ ५६
त्वञ्च स्वयं महासाध्वी वैकुण्ठे मम सन्निधौ।
रमासमा च रासे च भविष्यसि न संशयः॥ ५७
अहञ्च शैलरूपी च गण्डकीतीरसन्निधौ।
अधिष्ठानं करिष्यामि भारते तव शापतः॥ ५८

वज्रकीटाश्च क्रमयो वज्रदंष्ट्राश्च तत्र वै।
तच्छिलाकुहरे चक्रं करिष्यन्ति मदीयकम्॥ ५९
एकद्वारे चतुश्चक्रं वनमालाविभूषितम्।
नवीननीरदश्यामं लक्ष्मीनारायणाभिधम्॥ ६०
एकद्वारे चतुश्चक्रं नवीननीरदोपमम्।
लक्ष्मीजनार्द्दनं ज्ञेयं रहितं वनमालया॥ ६१
द्वारद्वये चतुश्चक्रं गोष्पदेन समन्वितम्।
रघुनाथाभिधं ज्ञेयं रहितं वनमालया॥ ६२
अतिक्षुद्रं द्विचक्रञ्च नवीनजलदप्रभम्।
दधिवामनाभिधं ज्ञेयं गृहिणाञ्च सुखप्रदम्॥ ६३
अतिक्षुद्रं द्विचक्रञ्च वनमालाविभूषितम्।
विज्ञेयं श्रीधरं देवं श्रीप्रदं गृहिणां सदा॥ ६४
स्थूलञ्च वर्त्तुलाकारं रहितं वनमालया।
द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम्॥ ६५
मध्यमं वर्त्तुलाकारं द्विचक्रं वाणविक्षतम्।
रणरामाभिधं ज्ञेयं शरतूणसमन्वितम्॥ ६६
मध्यमं सप्तचक्रञ्च छत्रतूणसमन्वितम्।
राजराजेश्वरं ज्ञेयं राजसम्पत्प्रदं नृणाम्॥ ६७
द्विसप्तचक्रं स्थूलञ्च नवीनजलदप्रभम्।
अनन्ताख्यञ्च विज्ञेयं चतुर्व्वर्गफलप्रदम्॥ ६८
चक्राकारं द्विचक्रञ्च सश्रीकं जलदप्रभम्।
सगोष्पदं मध्यमञ्च विज्ञेयं मधुसूदनम्॥ ६९
सुदर्शनञ्चैकचक्रं गुप्तचक्रं गदाधरम्।
द्विचक्रं हयवक्त्राभं हयग्रीवं प्रकीर्त्तितम्॥ ७०
अतीव विस्तृतास्यञ्च द्विचक्रं विकटं सति।
नरसिंहाभिधं ज्ञेयं सद्यो वैराग्यदं नृणाम्॥ ७१
द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम्।
लक्ष्मीनृसिंहं विज्ञेयं गृहिणां सुखदं सदा॥ ७२
द्वारदेशे द्विचक्रञ्च सश्रीकञ्च समं स्फुटम्।
वासुदेवञ्च विज्ञेयं सर्व्वकामफलप्रदम्॥ ७३
प्रद्युम्नं सूक्ष्मचक्रञ्च नवीननीरदप्रभम्।
सुषिरे छिद्रबहुलं गृहिणाञ्च सुखप्रदम्॥ ७४
द्वे चक्रे चैकलग्ने च पृष्ठे यत्र तु पुष्कलम्।
सङ्कर्षणन्तु विज्ञेयं सुखदं गृहिणां सदा॥ ७५
अनिरुद्धन्तु पीताभं वर्त्तुलञ्चातिशोभनम्।
सुखप्रदं गृहस्थानां प्रवदन्ति मनीषिणः॥ ७६
शालग्रामशिला यत्र तत्र सन्निहितो हरिः।
तत्रैव लक्ष्मीर्वसति सर्व्वतीर्थसमन्विता॥ ७७
यानि कानि च पापानि ब्रह्महत्यादिकानि च।
तानि सर्व्वाणि नश्यन्ति शालग्रामशिलार्च्चनात्॥ ७८
छत्राकारे भवेद्राज्यं वर्त्तुले च महाश्रियम्।
दुःखञ्च शकटाकारे शूलाग्रे मरणं ध्रुवम्॥ ७९
विकृतास्ये च दारिद्र्यं पिङ्गले हानिरेव च।
भग्ने चक्रे भवेद्व्याधिर्विदीर्णे मरणं ध्रुवम्॥ ८०
व्रतं दानं प्रतिष्ठा च श्राद्धञ्च देवपूजनम्।
शालग्रामशिलायाश्चैवाधिष्ठानात् प्रशस्तकम्॥ ८१
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः।
शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत्॥ ८२
सर्व्वदानेषु यत् पुण्यं प्रादक्षिण्ये भुवो यथा।
सर्व्वयज्ञेषु तीर्थेषु व्रतेष्वनशनेषु च॥ ८३
तस्य स्पर्शञ्च वाञ्छन्ति तीर्थानि निखिलानि च।
जीवन्मुक्तो महापूतो भवेदेव न संशयः॥ ८४
पाठे चतुर्णां वेदानां तपसां करणे सति।
तत् पुण्यं लभते नूनं शालग्रामशिलार्च्चनात्॥ ८५
शालग्रामशिलातोयं नित्यं भुङ्क्ते च यो नरः।
सुरेप्सितं प्रसादञ्च जन्ममृत्युजराहरम्॥ ८६
तस्य स्पर्शञ्च वाञ्छति तीर्थानि निखिलानि च।
जीवन्मुक्तो महापूतोऽप्यन्ते याति हरेः पदम्॥ ८७
तत्रैव हरिणा सार्द्धमसंख्यं प्राकृतं लयम्।
पश्यत्येव हि दास्ये च नियुक्तो दास्यकर्म्मणि॥ ८८
यानि कानि च पापानि ब्रह्महत्यादिकानि च।
तञ्च दृष्ट्वा भिया यान्ति वैनतेयमिवोरगाः॥ ८९
तत्पादपद्मरजसा सद्यः पूता वसुन्धरा।
पुंसां लक्षं तत्पितॄणां निस्तारस्तस्य जन्मनः॥ ९०
शालग्रामशिलातोयं मृत्युकाले च यो लभेत्।
सर्व्वपापाद्विनिर्म्मुक्तो विष्णुलोकं स गच्छति॥ ९१
निर्व्वाणमुक्तिं लभते कर्म्मभोगाद्विमुच्यते।
विष्णुपादे प्रलीनश्च भविष्यति न संशयः॥ ९२
शालग्रामशिलां धृत्वा मिथ्यावादं वदेत्तु यः।
स याति कूर्म्मदंष्ट्रञ्च यावद्वै ब्रह्मणो वयः॥ ९३
शालग्रामशिलां स्पृष्ट्वा स्वीकारं यो न पालयेत्।
स प्रयात्यसिपत्रञ्च लक्षमन्वन्तराधिकम्॥ ९४
तुलसीपत्रविच्छेदं शालग्रामे करोति यः।
तस्य जन्मान्तरे कान्ते स्त्रीविच्छेदो भविष्यति॥ ९५

तुलसीपत्रविच्छेदं शङ्खं यो हि करोति च।
भार्य्याहीनो भवेत् सोऽपि रोगी च सप्तजन्मसु॥९६
शालग्रामञ्च तुलसीं शङ्खमेकत्र एव च।
यो रक्षति महाज्ञानी स भवेत् श्रीहरिप्रियः॥९७
सकृदेव हि यो यस्यां वीर्य्याधानं करोति च।
तद्विच्छेदे तस्य दुःखं भवेदेव परस्परम्॥ ९८
त्वं प्रिया शङ्खचूडस्य चैकमन्वन्तरावधि।
शङ्खेन सार्द्धं त्वद्भेदः केवलं दुःखदस्तव॥ ९९
इत्युक्त्वा श्रीहरिस्ताञ्च विरराम च सादरम्।
सा च देहं परित्यज्य दिव्यरूपं दधार ह॥ १००
यथा श्रीश्च तथा सा चाप्युवास हरिवक्षसि।
प्रजगाम तया सार्द्धं वैकुण्ठं कमलापतिः॥ १०१
लक्ष्मीः सरस्वती गङ्गा तुलसी चापि नारद।
हरेः प्रियाश्चतस्रश्च बभूवुरीश्वरस्य च॥ १०२
सद्यस्तद्देहजाता च बभूव गण्डकी नदी।
हरेरंशेन शैलश्च तत्तीरे पुण्यदो नृणाम्॥ १०३
कुर्व्वन्ति तत्र कीटाश्च शिलां बहुविधां मुने।
जले पतन्ति या याश्च जलदाभाश्च निश्चितम्॥१०४
स्थलस्थाः पिङ्गला ज्ञेयाश्चोपतापाद्रवेरिति।
इत्येवं कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि॥ १०५

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे तुलस्युपाख्याने एकविंशोऽध्यायः॥ २१॥

---

## द्वाविंशोऽध्यायः।

नारद उवाच।

तुलसी च जगत्पूज्या पूता नारायणप्रिया।
तस्याः पूजाविधानञ्च स्तोत्रं किं न श्रुतं मया॥ १
केन पूज्या स्तुता केन पुरा प्रथमतो मुने।
भवपूज्या सा बभूव केन वा वद मामहो॥ २

सूत उवाच।

नारदस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः।
कथां कथितुमारेभे पुण्यरूपां पुरातनीम्॥ ३

नारायण उवाच।

हरिः संप्राप्य तुलसीं रेमे च रमया सह।
रमासमां तां सुभगां चकार गौरवेण च॥ ४
सेहे लक्ष्मीश्च गङ्गा च तस्याश्च नवसङ्गमम्।
सौभाग्यं गौरवं कोपान्न सेहे च सरस्वती॥ ५
सा तां जघान कलहे मानिनी हरिसन्निधौ।
व्रीडया खापमानाच्च सान्तर्द्धानं चकार ह॥ ६
सर्व्वसिद्धेश्वरी देवी ज्ञानिनी सिद्धयोगिनी।
बभूवादर्शनं कोपात् सर्व्वत्र च हरेरहो॥ ७
हरिर्न दृष्ट्वा तुलसीं बोधयित्वा सरस्वतीम्।
तदनुज्ञां गृहीत्वा च जगाम तुलसीवनम्॥ ८
तत्र गत्वा च स्नात्वा च तुलस्या तुलसीं सतीम्।
पूजयामास ध्यात्वा तां स्तोत्रं भक्त्या चकार ह॥ ९
लक्ष्मी-माया-काम-वाणी-बीजपूर्व्वं दशाक्षरम्।
वृन्दावनीति ङेऽन्तञ्च वह्निजायान्तमेव च॥१०
अनेन कल्पतरुणा मन्त्रराजेन नारद।
पूजयेच्च विधानेन सर्व्वसिद्धिं लभेन्नरः॥ ११
घृतदीपेन धूपेन सिन्दूरचन्दनेन च।
नैवेद्येन च पुष्पेण चोपहारेण नारद॥ १२
हरिस्तोत्रेण तुष्टा सा चाविर्भूय महीरुहात्।
प्रपन्ना चरणाम्भोजे जगाम शरणं शुभम्॥ १३
वरं तस्यै ददौ विष्णुर्जगत्पूज्या भवेति च।
अहं त्वाञ्च धरिष्यामि स्वमूर्द्ध्नि वक्षसीति च॥ १४
सर्व्वे त्वां धारयिष्यन्ति स्वयं मूर्द्ध्नि सुरादयः।
इत्युक्त्वा तां गृहीत्वा च प्रययौ स्वालयं विभुः॥१५

नारद उवाच।

किं ध्यानं स्तवनं किं वा किं वा पूजाविधिक्रमम्।
तुलस्याश्च महाभाग तन्मे व्याख्यातुमर्हसि॥ १६

नारायण उवाच।

अन्तर्हितायां तस्याञ्च गत्वा च तुलसीवनम्।
हरिः संपूज्य तुष्टाव तुलसीं विरहातुरः॥ १७

श्रीभगवानुवाच।

वृन्दारूपा च वृक्षाश्च यदैकत्र भवन्ति च।
विदुर्बुधास्तेन वृन्दां मत्प्रियां तां भजाम्यहम्॥ १८
पुरा बभूव सा देवी ह्यादौ वृन्दावने वने।
तेन वृन्दावनी ख्याता तां सौभाग्यां भजाम्यहम्॥१९
असंख्येषु च विश्वेषु पूजिता या निरन्तरम्।
तेन विश्वपूजिताख्यां जगत्पूज्यां भजाम्यहम्॥२०
असंख्यानि च विश्वानि पवित्राणि यया सदा।
तां विश्वपावनीं देवीं विरहेण स्मराम्यहम्॥ २१

देवा न तुष्टा पुष्पाणां समूहेन यया विना ।
तां पुष्पसारां शुद्धाञ्च द्रष्टुमिच्छामि शोकतः ॥ २२
विश्वे यत्प्राप्तिमात्रेण भक्त्यानन्दो भवेद्ध्रुवम् ।
नन्दिनी तेन विख्याता सा प्रीता भवताद्धि मे ॥ २३
यस्या देव्याः समं नास्ति विश्वेषु निखिलेषु च ।
तुलसी तेन विख्याता तां यामि शरणं प्रियाम् ॥२४
कृष्णजीवनरूपा या शश्वत् प्रियतमा सती ।
तेन कृष्णजीवनीति सा मे रक्षतु जीवनम् ॥ २५
इत्येवं स्तवनं कृत्वा तत्र तस्थौ रमापतिः ।
ददर्श तुलसीं साक्षात् पादपद्मे नतां सतीम् ॥ २६
रुदतीमभिमानेन मानिनीं मानपूजिताम् ।
प्रियां दृष्ट्वा प्रियः शीघ्रं वासयामास वक्षसि ॥ २७
भारत्याज्ञां गृहीत्वा च स्वालयञ्च ययौ हरिः ।
भारत्या सह तत्प्रीतिं कारयामास सत्वरम् ॥ २८
वरं विष्णुर्ददौ तस्यै विश्वपूज्या भवेति च ।
शिरोधार्या च सर्व्वेषां वन्द्या मान्या ममेति च ॥२९
विष्णोर्वरेण सा देवी परितुष्टा बभूव ह ।
सरस्वती तामाश्लिष्य वासयामास सन्निधौ ॥ ३०
लक्ष्मीर्गङ्गा सस्मिता तां समाश्लिष्य च नारद ।
गृहं प्रवेशयामास विनयेन सती तदा ॥ ३१
वृन्दां वृन्दावनीं विश्वपावनीं विश्वपूजिताम् ।
पुष्पसारां नन्दिनीञ्च तुलसीं कृष्णजीवनीम् ॥ ३२
एतन्नामाष्टकञ्चैतत् स्तोत्रं नामार्थसंयुतम् ।
यः पठेत् ताञ्च संपूज्य सोऽश्वमेधफलं लभेत् ॥ ३३
कार्त्तिकीपूर्णिमायाञ्च तुलस्या जन्म मङ्गलम् ।
तत्र तस्याश्च पूजा च विहिता हरिणा पुरा ॥ ३४
तस्यां यः पूजयेत् ताञ्च भक्त्या च विश्वपावनीम् ।
सर्व्वपापाद्विनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ३५
कार्त्तिके तुलसीपत्रं विष्णवे यो ददाति च ।
गवामयुतदानस्य फलमाप्नोति निश्चितम् ॥ ३६
अपुत्रो लभते पुत्रं प्रियाहीनो लभेत् प्रियाम् ।
बन्धुहीनो लभेद्बन्धुं स्तोत्रस्मरणमात्रतः ॥ ३७
रोगी प्रमुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु पापान्मुच्येत पातकी ॥ ३८
इत्येवं कथितं स्तोत्रं ध्यानं पूजाविधिं शृणु ।
त्वमेव ध्यानं जानासि काण्वशाखोक्तमेव च ॥ ३९
यद्वृक्षे पूजयेत् ताञ्च भक्त्या चावाहनं विना ।
ध्यात्वा षोड़शोपचारैर्ध्यानं पातकनाशनम् ॥ ४०
तुलसीं पुष्पसाराञ्च सतीं पूज्यां मनोहराम् ।
कृत्स्नपापेध्मदाहाय ज्वलदग्निशिखोपमाम् ॥ ४१
पुष्पेषु तुलनाप्यस्या नासीद्देवीषु या मुने ।
पवित्ररूपा सर्व्वासु तुलसी सा च कीर्त्तिता ॥ ४२
शिरोधार्याञ्च सर्व्वेषामीप्सितां विश्वपावनीम् ।
जीवन्मुक्तां मुक्तिदाञ्च भजे तां हरिभक्तिदाम् ॥४३
इति ध्यात्वा च संपूज्य स्तुत्वा च प्रणमेद्बुधः ।
उक्तं तुलस्युपाख्यानं किं भूयः श्रोतुमिच्छसि ॥ ४४

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे तुलस्युपाख्यानं
नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः ।

नारद उवाच ।

तुलस्युपाख्यानमिदं श्रुतमीश सुधोपमम् ।
यत्तु सावित्र्युपाख्यानं तन्मे व्याख्यातुमर्हसि ॥ १
पुरा येन समुद्भूता सा श्रुता च श्रुतिप्रसूः ।
केन वा पूजिता देवी प्रथमे कैश्च वा परे ॥ २

नारायण उवाच ।

ब्रह्मणा वेदजननी पूजिता प्रथमे मुने ।
द्वितीये च देवगणैस्तत्पश्चाद्विदुषां गणैः ॥ ३
तदा चाश्वपतिः पूर्व्वं पूजयामास भारते ।
तत्पश्चात्पूजयामासुर्वर्णाश्चत्वार एव च ॥ ४

नारद उवाच ।

को वा सोऽश्वपतिर्ब्रह्मन् केन वा तेन पूजिता ।
सर्व्वपूज्या च सावित्री तन्मे व्याख्यातुमर्हसि ॥ ५

नारायण उवाच ।

मद्रदेशे महाराजो बभूवाश्वपतिर्मुने ।
वैरिणां बलहर्त्ता च मित्राणां दुःखनाशनः ॥ ६
आसीत् तस्य महाराज्ञी महिषी धर्म्मचारिणी ।
मालतीति च सा ख्याता यथा लक्ष्मीर्गदाभृतः ॥ ७
सा च राज्ञी महावन्ध्या वशिष्ठस्योपदेशतः ।
चकाराराधनं भक्त्या सावित्र्याश्चैव नारद ॥ ८
प्रत्यादेशं न सा प्राप महिषी न ददर्श ताम् ।
गृहं जगाम सा दुःखाद्धृदयेन विदूयता ॥ ९

राजा तां दुःखितां दृष्ट्वा बोधयित्वा नयेन वै।
सावित्र्यास्तपसे भक्त्या जगाम पुष्करं तदा ॥ १०
तपश्चचार तत्रैव संयतः शतवत्सरम्।
न ददर्श च सावित्रीं प्रत्यादिशो बभूव ह ॥ ११
शुश्रावाकाशवाणीञ्च नृपेन्द्रश्चाशरीरिणीम्।
गायत्रीदशलक्षञ्च जपं कुर्व्विति नारद ॥ १२
एतस्मिन्नन्तरे तत्र प्रजगाम पराशरः।
प्रणनाम नृपस्तञ्च मुनिर्नृपमुवाच ह ॥ १३

पराशर उवाच।

सकृज्जपश्च गायत्र्याः पापं दिनकृतं हरेत्।
दशधाप्रजपान्नृणां दिवारात्र्यघमेव च ॥ १४
शतधा च जपाच्चैवं पापं मासार्ज्जितं परम्।
सहस्रधा जपश्चैवं कल्मषं वत्सरार्ज्जितम् ॥ १५
लक्षो जन्मकृतं पापं दशलक्षस्त्रिजन्मनः।
सर्व्वजन्मकृतं पापं शतलक्षो विनश्यति ॥ १६
करोति मुक्तिं विप्राणां जपो दशगुणस्ततः।
करं सर्पफणाकारं कृत्वा तु जर्द्धमुद्रितम् ॥ १७
आनम्रमूर्द्धमचलं प्रजपेत् प्राङ्मुखो द्विजः।
अनामिकामध्यदेशादधोवामक्रमेण च। १८
तर्ज्जनीमूलपर्य्यन्तं जपस्यैष क्रमः करे॥
श्वेतपङ्कजवीजानां स्फाटिकानाञ्च संस्कृताम् ॥ १९
कृत्वा वा मालिकां राजन् जपेत् तीर्थे सुरालये।
संस्थाप्य मालामश्वत्थपत्रसप्तसु संयतः ॥ २०
कृत्वा गोरोचनाक्ताञ्च गायत्र्या स्नापयेत् सुधीः।
गायत्रीशतकं तस्यां जपेच्च विधिपूर्व्वकम् ॥ २१
अथवा पञ्चगव्येन स्नाता माला च संस्कृता।
अथ गङ्गोदकेनैव स्नाता वातिसुसंस्कृता ॥ २२
एवं क्रमेण राजर्षे दशलक्षं जपं कुरु।
साक्षाद्द्रक्ष्यसि सावित्रीं त्रिजन्मपातकक्षयात् ॥२३
नित्यं नित्यं त्रिसन्ध्याञ्च करिष्यसि दिने दिने।
मध्याह्ने चापि सायाह्ने प्रातरेव शुचिः सदा ॥ २४
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु।
यदह्ना कुरुते कर्म्म न तस्य फलभाग्भवेत् ॥ २५
नोपतिष्ठति यः पूर्व्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्वहिष्कार्य्यः सर्व्वस्माद्द्विजकर्म्मणः ॥ २६
यावज्जीवनपर्य्यन्तं यस्त्रिसन्ध्यां करोति च।
स च सूर्य्यसमो विप्रस्तेजसा तपसा सदा ॥ २७

तत्पादपद्मरजसा सद्यःपूता वसुन्धरा।
जीवन्मुक्तः स तेजस्वी सन्ध्यापूतो हि यो द्विजः ॥२८
तीर्थानि च पवित्राणि तस्य स्पर्शनमात्रतः।
ततः पापानि यान्त्येव वैनतेयादिवोरगाः ॥ २९
न गृह्णन्ति सुराः पूजां पितरः पिण्डतर्पणम्।
स्वेच्छया च द्विजातेश्च त्रिसन्ध्यारहितस्य च ॥ ३०
विष्णुमन्त्रविहीनश्च विषहीनो यथोरगः।
एकादशीविहीनश्च विषहीनो यथोरगः ॥ ३१
हरेरनैवेद्यभोजी धावको वृषवाहकः।
शूद्रान्नभोजी विप्रश्च विषहीनो यथोरगः ॥ ३२
शवदाही च शूद्राणां यो विप्रो वृषलीपतिः।
शूद्राणां सूपकारश्च विषहीनो यथोरगः ॥ ३३
शूद्राणाञ्च प्रतिग्राही शूद्रयाजी च यो द्विजः।
असिजीवी मसीजीवी विषहीनो यथोरगः ॥ ३४
यो विप्रोऽवीरान्नभोजी ऋतुस्नातान्नभोजकः।
भगजीवी वार्द्धुषिको विषहीनो यथोरगः ॥ ३५
यः कन्याविक्रयी विप्रो यो हरेर्नामविक्रयी।
यो दुग्धविक्रयी भूप विषहीनो यथोरगः ॥ ३६
सूर्य्योदये च द्विर्भोजी मत्स्यभोजी च यो द्विजः।
शिलापूजादिरहितो विषहीनो यथोरगः ॥ ३७
इत्युक्त्वा च मुनिश्रेष्ठः सर्व्वं पूजाविधिक्रमम्।
तमुवाच च सावित्र्या ध्यानादिकमभीप्सितम् ॥ ३८
दत्त्वा सर्व्वं नृपेन्द्राय प्रययौ स्वालयं मुनिः।
राजा सम्पूज्य सावित्रीं ददर्श वरमाप सः ॥ ३९

नारद उवाच।

किं वा ध्यानञ्च सावित्र्याः किं वा पूजाविधानकम्।
स्तोत्रं मन्त्रञ्च किं दत्त्वा प्रययौ स पराशरः ॥ ४०
नृपः केन विधानेन सम्पूज्य श्रुतिमातरम्।
वरञ्च किं वा सम्प्राप वद सोऽश्वपतिर्नृपः ॥ ४१

नारायण उवाच।

ज्यैष्ठे कृष्णत्रयोदश्यां शुद्धे काले च संयतः।
व्रतमेव चतुर्द्दश्यां व्रती भक्त्या समाचरेत् ॥ ४२
व्रतं चतुर्द्दशाब्दञ्च द्विसप्तफलसंयुतम्।
दत्त्वा द्विसप्तनैवेद्यं पुष्पधूपादिकं तथा ॥ ४३
वस्त्रं यज्ञोपवीतञ्च भोज्यञ्च विधिपूर्व्वकम्।
संस्थाप्य मङ्गलघटं फलशाखासमन्वितम् ॥ ४४
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्।

सम्पूज्य पूजयेदिष्टं घटे आवाहिते मुने ॥ ४५
शृणु ध्यानञ्च सावित्र्याश्चोक्तं माध्यन्दिने च यत्।
स्तोत्रं पूजाविधानञ्च मन्त्रञ्च सर्व्वकामदम् ॥ ४६
तप्तकाञ्चनवर्णाभां ज्वलन्तीं ब्रह्मतेजसा।
ग्रीष्ममध्याह्नमार्त्तण्ड-सहस्रसमसन्निभाम् ॥ ४७
ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम्।
वह्निशुद्धांशुकाधानां भक्तानुग्रहकातराम् ॥ ४८
सुखदां मुक्तिदां शान्तां कान्ताञ्च जगतां विधेः।
सर्व्वसम्पत्स्वरूपाञ्च प्रदात्रीं सर्व्वसम्पदाम् ॥ ४९
वेदाधिष्ठातृदेवीञ्च वेदशास्त्रस्वरूपिणीम्।
वेदबीजस्वरूपाञ्च भजे तां वेदमातरम् ॥ ५०
ध्यात्वा ध्यानेन चानेन दत्त्वा पुष्पं स्वमूर्द्धनि।
पुनर्ध्यात्वा घटे भक्त्या देवीमावाहयेद्व्रती ॥ ५१
दत्त्वा षोड़शोपचारं वेदोक्तमन्त्रपूर्व्वकम्।
सम्पूज्य स्तुत्वा प्रणमेद्देवं देवीं विधानतः ॥ ५२
आसनं पाद्यमर्घ्यञ्च स्नानीयञ्चानुलेपनम्।
धूपं दीपञ्च नैवेद्यं ताम्बूलं शीतलं जलम् ॥ ५३
वसनं भूषणं रम्यं गन्धमाचमनीयकम्।
मनोहरं सुतल्पञ्च देयान्येतानि षोड़श ॥ ५४
दारुसारविकारञ्च हेमादिनिर्म्मितञ्च वा।
देवाधारं पुण्यदञ्च मया तुभ्यं निवेदितम् ॥ ५५
तीर्थोदकञ्च पाद्यञ्च पुण्यदं प्रीतिदं महत्।
पूजाङ्गभूतं शुद्धञ्च मया भक्त्या निवेदितम् ॥ ५६
पवित्ररूपमर्घ्यञ्च दूर्व्वापुष्पाक्षतान्वितम्।
पुण्यदं शङ्खतोयाक्तं मया तुभ्यं निवेदितम् ॥ ५७
सुगन्धि धात्रीतैलञ्च देहसौन्दर्य्यकारणम्।
मया निवेदितं भक्त्या स्नानीयं प्रतिगृह्यताम् ॥ ५८
मलयाचलसम्भूतं देहशोभाविवर्द्धनम्।
सुगन्धयुक्तं सुखदं मया तुभ्यं निवेदितम् ॥ ५९
गन्धद्रव्योद्भवः पुण्यः प्रीतिदो दिव्यगन्धदः।
मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम् ॥ ६०
जगतां दर्शनीयञ्च दर्शनं दीप्तिकारणम्।
अन्धकारध्वंसबीजं मया तुभ्यं निवेदितम् ॥ ६१
तुष्टिदं पुष्टिदञ्चैव प्रीतिदं क्षुद्विनाशनम्।
पुण्यदं स्वादुरूपञ्च नैवेद्यं प्रति गृह्यताम् ॥ ६२
ताम्बूलञ्च वर रम्यं कर्पूरादिसुवासितम्।
तुष्टिदं पुष्टिदञ्चैव मया भक्त्या निवेदितम् ॥ ६३
सुशीतलं वासितञ्च पिपासानाशकारणम्।
जगतां बीजरूपञ्च जीवनं प्रतिगृह्यताम् ॥ ६४
देहशोभास्वरूपञ्च सभाशोभाविवर्द्धनम्।
कार्पासजञ्च कृमिजं वसनं प्रतिगृह्यताम् ॥ ६५
काञ्चनादिविनिर्म्मितं श्रीयुक्तं श्रीकरं सदा।
सुखदं पुण्यदञ्चैव भूषणं प्रतिगृह्यताम् ॥ ६६
नानापुष्पविनिर्म्मितं पुष्पचन्दनसंयुतम्।
प्रीतिदं पुण्यदञ्चैव माल्यञ्च प्रतिगृह्यताम् ॥ ६७
सर्व्वमङ्गलरूपश्च सर्व्वमङ्गलदो वरः।
पुण्यप्रदश्च गन्धाढ्यो गन्धश्च प्रतिगृह्यताम् ॥ ६८
शुद्धं शुद्धिप्रदञ्चैव शुद्धानां प्रीतिदं महत्।
रम्यञ्चाचमनीयञ्च मया दत्तं प्रगृह्यताम् ॥ ६९
रत्नसारादिनिर्म्मितं पुष्पचन्दनसंयुतम्।
सुखदं पुण्यदञ्चैव सुतल्पं प्रतिगृह्यताम् ॥ ७०
नानावृक्षसमुद्भूतं नानारूपसमन्वितम्।
फलस्वरूपं फलदं फलञ्च प्रतिगृह्यताम् ॥ ७१
सिन्दूरञ्च वरं रम्यं भालशोभाविवर्द्धनम्।
भूषणं भूषणानाञ्च सिन्दूरं प्रतिगृह्यताम् ॥ ७२
विशुद्धग्रन्थिसंयुक्तं पुण्यसूत्रविनिर्म्मितम्।
पवित्रं वेदमन्त्रेण यज्ञसूत्रञ्च गृह्यताम् ॥ ७३
द्रव्याण्येतानि मूलेन दत्त्वा स्तोत्रं पठेत् सुधीः।
ततः प्रणम्य विप्राय व्रती दद्याच्च दक्षिणाम् ॥ ७४
सावित्रीति चतुर्थ्यन्तं वह्निजायान्तमेव च।
लक्ष्मी-माया-कामपूर्व्वं मन्त्रमष्टाक्षरं विदुः ॥ ७५
माध्यन्दिनोक्तं स्तोत्रञ्च सर्व्ववाञ्छाफलप्रदम्।
विप्रजीवनरूपञ्च निबोध कथयामि ते ॥ ७६
कृष्णेन दत्ता सावित्री गोलोके ब्रह्मणे पुरा।
न याति सा तेन सार्द्धं ब्रह्मलोकञ्च नारद ॥ ७७
ब्रह्मा कृष्णाज्ञया भक्त्या तुष्टाव वेदमातरम्।
तदा सा परितुष्टा च ब्रह्माणं चकमे सती ॥ ७८

ब्रह्मोवाच।

नारायणस्वरूपे च नारायणि सनातनि।
नारायणात् समुद्भूते प्रसन्ना भव सुन्दरि ॥ ७९
तेजःस्वरूपे परमे परमानन्दरूपिणि।
द्विजातीनां जातिरूपे प्रसन्ना भव सुन्दरि ॥ ८०
नित्ये नित्यप्रिये देवि नित्यानन्दस्वरूपिणि।
सर्व्वमङ्गलरूपे च प्रसन्ना भव सुन्द

मन्त्रस्वरूपे विप्राणां मन्त्रसारे परात्परे।
सुखदे मोक्षदे देवी प्रसन्ना भव सुन्दरि॥ ८२
विप्रपापेध्मदाहाय ज्वलदग्निशिखोपमे।
ब्रह्मतेजःप्रदे देवि प्रसन्ना भव सुन्दरि॥ ८३
कायेन मनसा वाचा यत् पापं कुरुते द्विजः।
तत् त्वत्स्मरणमात्रेण भस्मीभूतं भविष्यति॥ ८४
इत्युक्त्वा जगतां धाता तत्र तस्थौ च संसदि।
सावित्री ब्रह्मणा सार्द्धं ब्रह्मलोकं जगाम सा॥ ८५
अनेन स्तवराजेन संस्तूयाश्वपतिर्नृपः।
ददर्श ताञ्च सावित्रीं वरं प्राप मनोगतम्॥ ८६
स्तवराजमिदं पुण्यं त्रिसन्ध्यायाञ्च यः पठेत्।
पाठे चतुर्णां वेदानां यत् फलं तल्लभेद्ध्रुवम्॥ ८७

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायणनारदसंवादे सावित्र्युपाख्याने
सावित्रीस्तोत्रप्रकरणं नाम
त्रयोविंशोऽध्यायः॥२३॥

---

## चतुर्व्विंशोऽध्यायः।

नारायण उवाच।

स्तुत्वानेन सोऽश्वपतिः सम्पूज्य विधिपूर्व्वकम्।
ददर्श तत्र तां देवीं सहस्रार्कसमप्रभाम्॥ १
उवाच सा तं राजानं प्रसन्ना सस्मिता सती।
यथा माता स्वपुत्रञ्च द्योतयन्ती दिशश्छिवा॥ २

सावित्र्युवाच।

जानामि हे महाराज यत् ते मनसि वर्त्तते।
वाञ्छितं तव पत्न्याश्च सर्व्वं दास्यामि निश्चितम्॥ ३
साध्वी कन्याभिलाषञ्च करोति तव कामिनी।
त्वं प्रार्थयसि पुत्त्रञ्च भविष्यति क्रमेण ते॥ ४
इत्युक्त्वा सा महादेवी ब्रह्मलोकं जगाम ह।
राजा जगाम स्वगृहं तत्कन्यादौ बभूव ह॥ ५
आराधनाच्च सावित्र्या बभूव कमलाकला।
सावित्रीति च तन्नाम चकाराश्वपतिर्नृपः॥ ६
कालेन सा वर्द्धमाना बभूव च दिने दिने।
रूपयौवनसम्पन्ना शुक्ले चन्द्रकला यथा॥ ७
सा वरं वरयामास द्युमत्सेनात्मजं तथा।
सत्यवन्तं सत्यवन्तं नानागुणसमन्वितम्॥ ८
राजा तस्मै ददौ ताञ्च रत्नभूषणभूषिताम्।
स च तेन यौतुकेन तां गृहीत्वा गृहं ययौ॥ ९
स च संवत्सरेऽतीते सत्यवान् सत्यविक्रमः।
जगाम फलकाष्ठार्थं प्रहर्षं पितुराज्ञया॥ १०
जगाम साध्वी सावित्री तत्पश्चाद्दैवयोगतः।
निपत्य वृक्षाद्दैवेन प्राणांस्तत्याज सत्यवान्॥ ११
यमस्तज्जीवपुरुषं वृद्धाङ्गुष्ठसमं मुने।
गृहीत्वा गमनं चक्रे तत्पश्चात् प्रययौ सती॥ १२
पश्चात् तां सुन्दरीं दृष्ट्वा यमः संयमनीपतिः।
उवाच मधुरं साध्वीं साधूनां प्रवरो महान्॥ १३

यम उवाच।

अहो क्व यासि सावित्रि गृहीत्वा मानुषीं तनुम्।
यदि यास्यसि कान्तेन सार्द्धं देहं तदा त्यज॥ १४
गन्तुं मर्त्त्यो न शक्नोति गृहीत्वा पाञ्चभौतिकम्।
देहञ्च यमलोकञ्च नश्वरं नश्वरः सदा॥ १५
भर्त्तुस्ते कालपूर्णञ्च बभूव भारते सति।
स कर्म्मफलभोगार्थं सत्यवान् याति मद्गृहम्॥ १६
कर्म्मणा जायते जन्तुः कर्म्मणैव प्रलीयते।
सुखं दुःखं भयं शोकं कर्म्मणैव प्रपद्यते॥ १७
कर्म्मणेन्द्रो भवेज्जीवो ब्रह्मपुत्त्रः स्वकर्म्मणा।
स्वकर्म्मणा हरेर्दासो जन्मादिरहितो भवेत्॥ १८
स्वकर्म्मणा सर्व्वसिद्धिममरत्वं लभेद्ध्रुवम्।
लभेत् स्वकर्म्मणा विष्णोः सालोक्यादि चतुष्टयम्॥१९
कर्म्मणा ब्राह्मणत्वञ्च मुक्तिञ्चैव स्वकर्म्मणा।
सुरत्वञ्च मनुत्वञ्च राजेन्द्रत्वं लभेन्नरः॥ २०
कर्म्मणा च मुनीन्द्रत्वं तपस्वित्वञ्च कर्म्मणा।
कर्म्मणा क्षत्त्रियत्वञ्च वैश्यत्वञ्च स्वकर्म्मणा॥ २१
कर्म्मणा चैव शूद्रत्वमन्त्यजत्वं स्वकर्म्मणा।
स्वकर्म्मणा च म्लेच्छत्वं लभते नात्र संशयः॥ २२
स्वकर्म्मणा जङ्गमत्वं स्थावरत्वं स्वकर्म्मणा॥ २३
स्वकर्म्मणा च शैलत्वं वृक्षत्वञ्च स्वकर्म्मणा।
स्वकर्म्मणा पशुत्वञ्च पक्षित्वञ्च स्वकर्म्मणा॥ २४
कर्म्मणा क्षुद्रजन्तुत्वं कृमित्वञ्च स्वकर्म्मणा।
स्वकर्म्मणा च सर्पत्वं गन्धर्व्वत्वं स्वकर्म्मणा॥ २५
स्वकर्म्मणा राक्षसत्वं किन्नरत्वं स्वकर्म्मणा।
स्वकर्म्मणा च यक्षत्वं कुष्माण्डत्वं स्वकर्म्मणा॥२६
स्वकर्म्मणा च प्रेतत्वं वेतालत्वं स्वकर्म्मणा।

भूतत्वञ्च पिशाचत्वं डाकिनीत्वं स्वकर्म्मणा ॥ २७
दैत्यत्वं दानवत्वञ्च असुरत्वं स्वकर्म्मणा।
कर्म्मणा पुण्यवान् जीवो महापापी स्वकर्म्मणा ॥२८
कर्म्मणा चाङ्गहीनश्च बधिरश्च स्वकर्म्मणा। (क)
कर्म्मणा सुन्दरोऽरोगी महारोगी च कर्म्मणा ॥ २९
कर्म्मणा नरकं यान्ति जीवाः स्वर्गं स्वकर्म्मणा।
कर्म्मणा शक्रलोकञ्च सूर्य्यलोकं स्वकर्म्मणा ॥ ३०
कर्म्मणा चन्द्रलोकञ्च वह्निलोकं स्वकर्म्मणा।
कर्म्मणा वायुलोकञ्च कर्म्मणा वरुणालयम् ॥ ३१
ब्रह्मन् कुबेरलोकञ्च नरो याति स्वकर्म्मणा।
कर्म्मणा ध्रुवलोकञ्च शिवलोकं स्वकर्म्मणा ॥ ३२
याति नक्षत्रलोकञ्च सत्यलोकं स्वकर्म्मणा।
जनलोकं तपोलोकं महर्लोकं स्वकर्म्मणा ॥ ३३
स्वकर्म्मणा च पातालं ब्रह्मलोकं स्वकर्म्मणा।
कर्म्मणा भारतं पुण्यं सर्व्वेप्सितवरं परम् ॥ ३४
कर्म्मणा याति वैकुण्ठं गोलोकञ्च निरामयम्।
कर्म्मणा चिरजीवित्वं क्षणायुश्च स्वकर्म्मणा ॥ ३५
कर्म्मणा कोटिकल्पायुः क्षीणायुश्च स्वकर्म्मणा।
जीवसञ्चारमात्रायुर्गर्भः क्षीणः स्वकर्म्मणा ॥ ३६
इत्येवं कथितं सर्व्वं महातत्त्वञ्च सुन्दरि।
कर्म्मणा ते मृतो भर्त्ता गच्छ वत्से यथासुखम् ॥३७

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे कर्म्मविपाके
कर्म्मसर्व्वहेतु-प्रदर्शनं नाम
चतुर्व्विंशोऽध्यायः ॥२४॥

---

## पञ्चविंशोऽध्यायः।

नारायण उवाच।

यमस्य वचनं श्रुत्वा सावित्री च पतिव्रता।
तुष्टाव परया भक्त्या तमुवाच मनस्विनी ॥ १

सावित्र्युवाच।

किं कर्म्म वा शुभं धर्म्मराज किं वाशुभं नृणाम्।
कर्म्म निर्म्मलयन्त्येवं केन वा साधवो जनाः ॥ २
कर्म्मणां वीजरूपः कः को वा कर्म्मफलप्रदः।
किं कर्म्म तद्भवेत् केन को वा तद्धेतुरेव च ॥ ३
को वा कर्म्मफलं भुङ्क्ते को वा निर्लिप्त एव च।
को वा देही कश्च देहः को वात्र कर्म्मकारकः ॥४
किं विज्ञानं मनो बुद्धिः के वा प्राणाः शरीरिणाम्।
कानीन्द्रियाणि किं तेषां लक्षणं देवताश्च काः ॥ ५
भोक्ता भोजयिता को वा को भोगः का च निष्कृतिः
को जीवः परमात्मा कस्तन्मे व्याख्यातुमर्हसि ॥ ६

यम उवाच।

वेदप्रणिहितं कर्म्म तन्मन्ये मङ्गलं परम्।
अवैदिकन्तु यत् कर्म्म तदेवाशुभमेव च ॥ ७
अहैतुकी विष्णुसेवा सङ्कल्परहिता सताम्।
कर्म्मनिर्म्मूलरूपा च सा एव हरिभक्तिदा ॥ ८
हरिभक्तो नरो यश्च स च मुक्तः श्रुतौ श्रुतम्।
जन्म-मृत्यु-जरा-व्याधि-शोक-भीतिविवर्ज्जितः ॥ ९
मुक्तिश्च द्विविधा साध्वि श्रुत्युक्ता सर्व्वसम्मता।
निर्व्वाणपददात्री च हरिभक्तिप्रदा नृणाम् ॥ १०
हरिभक्तिस्वरूपाञ्च मुक्तिं वाञ्छन्ति वैष्णवाः।
अन्ये निर्व्वाणरूपाञ्च मुक्तिमिच्छन्ति साधवः ॥ ११
कर्म्मणो वीजरूपश्च सन्ततं तत्फलप्रदः।
कर्म्मरूपश्च भगवान् श्रीकृष्णः प्रकृतेः परः ॥ १२
सोऽपि तद्धेतुरूपश्च कर्म्म तेन भवेत् सति।
जीवः कर्म्मफलं भुङ्क्ते आत्मा निर्लिप्त एव च ॥ १३
आत्मनः प्रतिविम्बश्च देही जीवः स एव च।
पाञ्चभौतिकरूपश्च देहो नश्वर एव च ॥ १४
पृथिवी वायुराकाशो जलं तेजस्तथैव च।
एतानि भूतरूपाणि स्रष्टुः सृष्टिविधौ हरेः ॥ १५
कर्त्ता भोक्ता च देही च स्वात्मा भोजयिता सदा।
भोगो विभवभेदश्च निष्कृतिर्मुक्तिरेव च ॥ १६
सदसद्भेदवीजञ्च ज्ञानं नानाविधं भवेत्।
विषयाणां विभागानां भेदवीजञ्च कीर्त्तितम् ॥ १७
बुद्धिर्व्विवेचनारूपा सा ज्ञानजननी श्रुतौ।
वायुभेदाश्च प्राणाश्च वलरूपाश्च देहिनाम् ॥ १८
इन्द्रियाणाञ्च प्रवरमीश्वरांशसमूहकम्।
प्रेरकं कर्म्मणाञ्चैव दुर्निवार्य्यञ्च देहिनाम् ॥ १९
अनिरूप्यमदृश्यञ्च ज्ञानभेदो मनः स्मृतम् ॥ २०
लोचनं श्रवणं घ्राणं त्वग्जिह्वादिकमिन्द्रियम्।
अङ्गिनामङ्गरूपञ्च प्रेरकं सर्व्वकर्म्मणाम् ॥ २१

---

(क) अत्र—कर्म्मणा चान्धकाणश्च कुष्ठिनश्च स्वकर्म्मणा। इति पाठः क्वाचित्कः।

रिपुरूपं मित्ररूपं सुखदं दुःखदं सदा।
सूर्य्यो वायुश्च पृथिवी वाण्याद्या देवताः स्मृताः ॥२२
प्राणदेहादिभृद्यो हि स जीवः परिकीर्त्तितः ॥२३
परमात्मा परं ब्रह्म निर्गुणः प्रकृतेः परः।
कारणं कारणानाञ्च श्रीकृष्णो भगवान् स्वयम् ॥२४
इत्येवं कथितं सर्व्वं मया पृष्टं यथागमम्।
ज्ञानिनां ज्ञानरूपञ्च गच्छ वत्से यथासुखम् ॥२५

सावित्र्युवाच।

त्यक्त्वा क्व यामि कान्तं वा त्वां वा ज्ञानार्णवं बुधम्।
यद्यत् करोमि प्रश्नञ्च तद्भवान् वक्तुमर्हति ॥ २६
कां कां योनिं याति जीवः कर्म्मणा केन वा यम।
केन वा कर्म्मणा स्वर्गं केन वा नरकं पितः ॥ २७
केन वा कर्म्मणा मुक्तिः केन भक्तिर्भवेद्धरेः।
केन वा कर्म्मणा रोगी चारोगी केन कर्म्मणा ॥ २८
केन वा दीर्घजीवी च केनाल्पायुश्च कर्म्मणा।
केन वा कर्म्मणा दुःखी केन वा कर्म्मणा सुखी ॥२९
अङ्गहीनश्च काणश्च बधिरः केन कर्म्मणा।
अन्धो वा कृपणो वापि प्रमत्तः केन कर्म्मणा ॥ ३०
क्षिप्तोऽतिलुब्धकश्चैव केन वा नरघातकः।
केन सिद्धिमवाप्नोति सालोक्यादि चतुष्टयम् ॥ ३१
केन वा ब्राह्मणत्वञ्च तपस्वित्वञ्च केन वा।
स्वर्गभोगादिकं केन वैकुण्ठं केन कर्म्मणा ॥ ३२
गोलोकं केन वा ब्रह्मन् सर्व्वोत्कृष्टं निरामयम्।
नरकं वा कतिविधं किंसंख्यं नाम किञ्च वा ॥ ३३
को वा कं नरकं याति कियन्तं तेषु तिष्ठति।
पापिनां कर्म्मणा केन को वा व्याधिः प्रजायते।
यद्यदस्ति मया पृष्टं तन्मे व्याख्यातुमर्हसि ॥ ३४

इति श्रीब्रह्मवैवर्त्त महापुराणे प्रकृतिखण्डे नारायण-नारद-संवादे सावित्र्युपाख्याने यम-सावित्रीसंवादे कर्म्मविपाके सावित्री-प्रश्नो नाम पञ्चविंशोऽध्यायः ॥२५॥

---

## षड्विंशोऽध्यायः।

नारायण उवाच।

सावित्रीवचनं श्रुत्वा जगाम विस्मयं यमः।
प्रहस्य वक्तुमारेभे कर्म्मपाकञ्च जीविनाम् ॥ १

यम उवाच।

कन्या द्वादशवर्षीया वत्से त्वं वयसाधुना।
ज्ञानं ते पूर्व्वविदुषां योगिनां ज्ञानिनां परम् ॥२
सावित्रीवरदानेन त्वं सावित्रीकला सती।
प्राप्ता पुरा भूभृता च तपसा तत्समा शुभे ॥ ३
यथा श्रीः श्रीपतेः क्रोड़े भवानी च भवोरसि।
यथा राधा च श्रीकृष्णे सावित्री ब्रह्मवक्षसि ॥ ४
धर्म्मोरसि यथा मूर्त्तिः शतरूपा मनौ यथा।
कर्द्दमे देवहूतिश्च वशिष्ठेऽरुन्धती यथा ॥ ५
अदितिः कश्यपे चापि यथाहल्या च गौतमे।
यथा शची महेन्द्रे च यथा चन्द्रे च रोहिणी ॥ ६
यथा रतिः कामदेवे यथा स्वाहा हुताशने।
यथा स्वधा पितृषु च यथा संज्ञा दिवाकरे ॥ ७
वरुणानी च वरुणे यज्ञे च दक्षिणा यथा।
यथा धरा वराहे च देवसेना च कार्त्तिके।
सौभाग्या सुप्रिया त्वञ्च भव सत्यवति प्रिये ॥ ८
इति तुभ्यं वरं दत्तमपरञ्च यदीप्सितम्।
वृणु देवि महाभागे सर्व्वं दास्यामि निश्चितम् ॥ ९

सावित्र्युवाच।

सत्यवदौरसेनैव पुत्राणां शतकं मम।
भविष्यति महाभाग वरमेवमभीप्सितम् ॥ १०
मत्पितुः पुत्रशतकं श्वशुरस्य च चक्षुषी।
राज्यलाभो भवत्वेवं वरमेव मदीप्सितम् ॥ ११
अन्ते सत्यवता सार्द्धं यास्यामि हरिमन्दिरम्।
समतीते लक्षवर्षे देहीमं मे जगत्प्रभो ॥ १२
जीवकर्म्मविपाकञ्च श्रोतुं कौतूहलञ्च मे।
विश्वविस्तारबीजञ्च तन्मे व्याख्यातुमर्हसि ॥ १३

यम उवाच।

भविष्यति महासाध्वि सर्व्वं मानसिकं तव।
जीवकर्म्मविपाकञ्च कथयामि निशामय ॥ १४
शुभानामशुभानाञ्च कर्म्मणा जन्म भारते।
पुण्यक्षेत्रे तु सर्व्वत्र नान्यत्र भुञ्जते जनाः ॥ १५
सुरा दैत्या दानवाश्च गन्धर्व्वा राक्षसादयः।
नरश्च कर्म्मजनको न सर्व्वे जीविनः सति ॥ १६
विशिष्टजीविनः कर्म्म भुञ्जते सर्व्वयोनिषु ॥ १७
विशेषतो मानवाश्च भ्रमन्ति सर्व्वयोनिषु।
शुभाशुभं भुञ्जते च कर्म्म पूर्व्वार्ज्जितं परम् ॥ १८

शुभेन कर्म्मणा यान्ति ते स्वर्गादिकमेव च।
कर्म्मणा चाशुभेनैव भ्रमन्ति नरकेषु च॥ १९
कर्म्मनिर्म्मूलने मुक्तिः सा चोक्ता द्विविधा मता।
निर्व्वाणरूपा सेवा च कृष्णस्य परमात्मनः॥ २०
रोगी कुकर्म्मणा जीवश्चारोगी शुभकर्म्मणा।
दीर्घजीवी च क्षीणायुः सुखी दुःखी च निश्चितम्॥२१
अन्धादयश्चाङ्गहीनाः कुत्सितेन च कर्म्मणा।
सिद्ध्यादिकमवाप्नोति सर्व्वोत्कृष्टेन कर्म्मणा॥ २२
सामान्यं कथितं सर्व्वं विशेषं शृणु सुन्दरि।
सुदुर्लभं सुगोप्यञ्च पुराणेषु श्रुतिष्वपि॥ २३
दुर्लभा मानवी जातिः सर्व्वजातिषु भारते।
सर्व्वाभ्यो ब्राह्मणः श्रेष्ठः प्रशस्तः सर्व्वकर्म्मसु॥ २४
विष्णुभक्तो द्विजश्चैव गरीयान् भारते ततः।
निष्कामश्च सकामश्च वैष्णवो द्विविधः सति॥ २५
सकामश्च प्रधानश्च निष्कामो भक्त एव च।
कर्म्मभोगी सकामश्च निष्कामो निरुपद्रवः॥ २६
स याति देहं त्यक्त्वा च पदं विष्णोर्निरामयम्।
पुनरागमनं नास्ति तेषां निष्कामिणां सति॥ २७
ये सेवन्ते च द्विभुजं कृष्णमात्मानमीश्वरम्।
गोलोकं यान्ति ते भक्ता दिव्यरूपञ्च धारिणः॥ २८
ये च नारायणं भक्ताः सेवन्ते च चतुर्भुजम्।
वैकुण्ठं यान्ति ते सर्व्वे दिव्यरूपविधारिणः॥ २९
सकामिनो वैष्णवाश्च गत्वा वैकुण्ठमेव च।
भारतं पुनरायान्ति तेषां जन्म द्विजातिषु॥ ३०
कालेन ते च निष्कामा भविष्यन्ति क्रमेण च।
भक्तिञ्च निर्म्मलां बुद्धिं तेभ्यो दास्यति निश्चितम्॥३१
ब्राह्मणा वैष्णवादन्ये सकामाः सर्व्वजन्मसु।
न तेषां निर्म्मला बुद्धिर्विष्णुभक्तिविवर्ज्जिता॥ ३२
तीर्थाश्रिता द्विजा ये च तपस्यानिरताः सति।
ते यान्ति ब्रह्मलोकञ्च पुनरायान्ति भारतम्॥ ३३
स्वधर्म्मनिरता ये च तीर्थान्यत्र निवासिनः।
व्रजन्ति ते सत्यलोकं पुनरायान्ति भारतम्॥ ३४
स्वधर्म्मनिरता विप्राः सूर्य्यभक्ताश्च भारते।
व्रजन्ति सूर्य्यलोकं ते पुनरायान्ति भारतम्॥ ३५
स्वधर्म्मनिरता विप्राः शैवाः शाक्ताश्च गाणपाः।
ते यान्ति शिवलोकञ्च पुनरायान्ति भारतम्॥ ३६
ये विप्रा अन्यदेवेष्टाः स्वधर्म्मनिरताः सति।
ते गत्वा शक्रलोकञ्च पुनरायान्ति भारतम्॥ ३७
हरिभक्ताश्च निष्कामाः स्वधर्म्मरहिता द्विजाः।
तेऽपि यान्ति हरेर्लोकं क्रमाद्भक्तिबलाद्धरेः॥ ३८
स्वधर्म्मरहिता विप्रा देवान्यसेविनः सदा।
भ्रष्टाचाराश्च वालाश्च ते यान्ति नरकं ध्रुवम्॥ ३९
स्वधर्म्मनिरताश्चैवं वर्णाश्चत्वार एव च।
भवन्त्येव शुभस्यैव कर्म्मणः फलभागिनः॥ ४०
स्वधर्म्मरहितास्ते च नरकं यान्ति हि ध्रुवम्।
भारते च भवन्त्येव कर्म्मणः फलभागिनः॥ ४१
स्वधर्म्मनिरता विप्राः स्वधर्म्मनिरताय च।
कन्यां ददति विप्राय चन्द्रलोकं व्रजन्ति ते॥ ४२
वसन्ति तत्र ते साध्वि यावदिन्द्राश्चतुर्द्दश।
सालङ्कृताया दाने च द्विगुणं फलमुच्यते॥ ४३
सकामा यान्ति तल्लोकं न निष्कामाश्च वैष्णवाः।
ते प्रयान्ति विष्णुलोकं फलसन्धानवर्ज्जिताः॥ ४४
गव्यञ्च रजतं भार्य्यां वस्त्रं शस्यं फलं जलम्।
ये ददत्येव विप्रेभ्यस्तल्लोकं ते व्रजन्ति च॥ ४५
वसन्ति ते च तल्लोके यावन्मन्वन्तरं सति।
सुचिरात् सुचिरं वासं कुर्व्वन्ति तत्र ते जनाः॥४६
यो ददाति सुवर्णञ्च गाञ्च ताम्रादिकं सति।
ते यान्ति सूर्य्यलोकञ्च शुचये ब्राह्मणाय च॥ ४७
वसन्ति तत्र ते लोके वर्षाणामयुतं सति।
विपुले च चिरं वासं कुर्व्वन्ति च निरामयाः॥ ४८
ददाति भूमिं विप्रेभ्यो धान्यानि विपुलानि च।
स याति विष्णुलोकञ्च श्वेतद्वीपं मनोहरम्॥ ४९
तत्रैव निवसत्येव यावच्चन्द्रदिवाकरौ।
विपुलं विपुले वासं करोति पुण्यवान् सति॥ ५०
गृहं ददति विप्राय ये जना भक्तिपूर्व्वकम्।
ते यान्ति वसुलोकञ्च चिरं तत्र वसन्ति ते॥ ५१
गृहरेणुप्रमाणाब्दं दानं पुण्यदिने यदि।
विपुलं विपुले वासं कुर्व्वन्ति मानवाः सति॥ ५२
यस्मै यस्मै च देवाय यो ददाति गृहं नरः।
स याति तस्य लोकञ्च रेणुमानाब्दमेव च॥ ५३
सौधे चतुर्गुणं पुण्यं मूर्त्ते शतगुणं फलम्।
प्रकृष्टेऽष्टगुणं तस्मादित्याह कमलोद्भवः॥ ५४
यो ददाति तड़ागञ्च सर्व्वभूताश्च भारते।
स याति जनलोकञ्च वर्षाणामयुतं सति॥ ५५

वाप्यां फलं शतगुणं प्राप्नोति मानवः सदा।
सेतुशङ्कुप्रदानेन तड़ागस्य फलं लभेत् ॥ ५६
धनुश्चतुःसहस्रेण दैर्घ्यमानेन निश्चितम्।
न्यूना वा तावती प्रस्थे सा वापी परिकीर्त्तिता ॥ ५७
दशवापीसमा कुल्या यदि पात्राय दीयते।
फलं ददाति द्विगुणं यदि सालङ्कृता भवेत् ॥ ५८
यत् फलञ्च तड़ागे च पङ्कोद्धारे च तत् फलम्।
वाप्याश्च पङ्कोद्धारेण वापीतुल्यफलं लभेत् ॥ ५९
अश्वत्थवृक्षमारोप्य प्रतिष्ठाञ्च करोति यः।
स च याति तपोलोकं वर्षाणामयुतं परम् ॥ ६०
पुष्पोद्यानं यो ददाति सावित्रि सर्व्वभूतये।
स वसेत् ध्रुवलोके च वर्षाणामयुतं ध्रुवम् ॥ ६१
यो ददाति विमानञ्च विष्णवे भारते सति।
विष्णुलोके वसेत् सोऽपि यावन्मन्वन्तरं परम् ॥ ६२
चित्रयुक्ते च विपुले फलं तस्य चतुर्गुणम्।
रथार्द्धं शिविकादाने फलमेव लभेद्ध्रुवम् ॥ ६३
यो ददाति भक्तियुक्तो हरये दोलमन्दिरम्।
विष्णुलोके वसेत् सोऽपि यावन्मन्वन्तरं परम् ॥ ६४
राजमार्गं सौधयुक्तं यः करोति पतिव्रते।
वर्षाणामयुतं सोऽपि शक्रलोके महीयते ॥ ६५
ब्राह्मणेभ्योऽपि देवेभ्यो दाने समफलं लभेत्।
यच्च दत्तञ्च तद्भोक्तुं न दत्तं नोपतिष्ठते ॥ ६६
भुक्त्वा स्वर्गादिकं सौख्यं पुण्यवान् जन्म भारते।
लभेद्विप्रकुलेष्वेव क्रमेणैवोत्तमादिषु ॥ ६७
भारते पुण्यवान् विप्रो भुक्त्वा स्वर्गादिकं परम्।
पुनः सोऽपि भवेद्विप्रश्चैवञ्च (क) क्षत्रियादयः ॥ ६८
क्षत्रियो वापि वैश्यो वा कल्पकोटिशतेन च।
तपसा ब्राह्मणत्वञ्च न प्राप्नोति श्रुतौ श्रुतम् ॥ ॥ ६९
स्वधर्म्मरहिता विप्रा नानायोनिं व्रजन्ति च।
भुक्त्वा च कर्म्मभोगञ्च विप्रयोनिं लभेत् पुनः ॥ ७०
माभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम् ॥ ७१
देवतीर्थसहायेन कायव्यूहेन शुध्यति।
एतत् ते कथितं सर्व्वं किं भूयः श्रोतुमर्हसि ॥ ७२

इति श्रीब्रह्मवैवर्त्ते प्रकृतिखण्डे सावित्र्युपाख्याने कर्म्मविपाके षड्विंशोऽध्यायः ॥ २६ ॥

प्रति—
(क) न पुनरिति पाठः क्वाचित्कः।

## सप्तविंशोऽध्यायः।

सावित्र्युवाच।

प्रयान्ति स्वर्गमन्यञ्च येन येनैव कर्म्मणा।
मानवाः पुण्यवन्तश्च तन्मे व्याख्यातुमर्हसि ॥ १

यम उवाच।

अन्नदानञ्च विप्राय यः करोति च भारते।
अन्नप्रमाणवर्षञ्च शक्रलोके महीयते ॥ २
अन्नदानात् परं दानं न भूतं न भविष्यति।
नात्र पात्रपरीक्षा स्यान्न कालनियमः क्वचित् ॥ ३
देवेभ्यो ब्राह्मणेभ्यो वा ददाति चासनं यदि।
महीयते वह्निलोके वर्षाणामयुतं ध्रुवम् ॥ ४
यो ददाति च विप्राय दिव्यां धेनुं पयस्विनीम्।
तल्लोमसानवर्षञ्च वैकुण्ठे च महीयते ॥ ५
चतुर्गुणं पुण्यदिने तीर्थे शतगुणं फलम्।
दाने नारायणक्षेत्रे फलं कोटिगुणं भवेत् ॥ ६
गां यो ददाति विप्राय भारते भक्तिपूर्व्वकम्।
वर्षाणामयुतञ्चैव चन्द्रलोके महीयते ॥ ७
यश्चोभयमुखीदानं करोति ब्राह्मणाय च।
तल्लोममानवर्षञ्च वैकुण्ठे च महीयते ॥ ८
यो ददाति ब्राह्मणाय शालग्रामं सवस्त्रकम्।
महीयते स वैकुण्ठे यावच्चन्द्रदिवाकरौ ॥ ९
यो ददाति ब्राह्मणाय छत्रञ्च सुमनोहरम्।
वर्षाणामयुतं सोऽपि मोदते वरुणालये ॥ १०
विप्राय पादुकायुग्मं यो ददाति च भारते।
महीयते वायुलोके वर्षाणामयुतं सति ॥ ११
यो ददाति ब्राह्मणाय शय्यां दिव्यां मनोहराम्।
महीयते चन्द्रलोके यावच्चन्द्रदिवाकरौ ॥ १२
यो ददाति प्रदीपञ्च देवाय ब्राह्मणाय च।
यावन्मन्वन्तरं सोऽपि ब्रह्मलोके महीयते ॥ १३
सम्प्राप्य मानवीं योनिं चक्षुष्मांश्च भवेद्ध्रुवम्।
न याति यमलोकञ्च तेन पुण्येन सुन्दरि ॥ १४
करोति गजदानञ्च यो हि विप्राय भारते।
यावदिन्द्रं नरस्तावदिन्द्रस्यार्द्धासने वसेत् ॥ १५
भारते योऽश्वदानञ्च करोति ब्राह्मणाय च।
मोदते वारुणे लोके यावदिन्द्राश्चतुर्द्दश ॥ १६
प्रकृष्टां शिविकां यो हि ददाति ब्राह्मणाय च।

महीयते विष्णुलोके यावन्मन्वन्तरं सति ॥ १७
यो ददाति च विप्राय व्यजनं श्वेतचामरम्।
महीयते वायुलोके वर्षाणामयुतं ध्रुवम् ॥ १८
धान्याचलं यो ददाति ब्राह्मणाय च भारते।
स च धान्यप्रमाणाब्दं विष्णुलोके महीयते ॥ १९
ततः स्वयोनिं सम्प्राप्य चिरजीवी भवेत् सुखी।
दाता ग्रहीता तौ द्वौ च ध्रुवं वैकुण्ठगामिनौ ॥ २०
सततं श्रीहरेर्नाम भारते यो जपेन्नरः।
स एव चिरजीवी च ततो मृत्युः पलायते ॥ २१
यो नरो भारते वर्षे दोलनं कारयेद्धरेः।
पूर्णिमारजनीशेषे जीवन्मुक्तो भवेन्नरः ॥ २२
इहलोके सुखं भुक्त्वा यात्यन्ते विष्णुमन्दिरम्।
निश्चितं निवसेत् तत्र शतमन्वन्तरावधि ॥ २३
फलमुत्तरफल्गुन्यां ततोऽपि द्विगुणं भवेत्।
कल्पान्तजीवी स भवेदित्याह कमलोद्भवः ॥ २४
तिलदानं ब्राह्मणाय यः करोति च भारते।
तिलप्रमाणवर्षञ्च मोदते विष्णुमन्दिरे ॥ २५
ततः स्वयोनिं सम्प्राप्य चिरजीवी भवेत् सुखी।
ताम्रपात्रस्थदानेन द्विगुणञ्च फलं लभेत् ॥ २६
सालङ्कृताञ्च भोग्याञ्च सवस्त्रां सुन्दरीं प्रियाम्।
यो ददाति ब्राह्मणाय भारते च पतिव्रताम् ॥ २७
महीयते चन्द्रलोके यावदिन्द्राश्चतुर्दश।
तत्र स्वर्वेश्यया सार्द्धं मोदते च दिवानिशम् ॥ २८
ततो गन्धर्वलोके च वर्षाणामयुतं सति।
दिवानिशं कौतुकेन चोर्वश्या सह मोदते ॥ २९
ततो जन्मसहस्रञ्च प्राप्नोति सुन्दरीं प्रियाम्।
सतीं सौभाग्ययुक्ताञ्च कोमलां प्रियवादिनीम् ॥ ३०
ददाति सफलं वृक्षं ब्राह्मणाय च यो नरः।
फलप्रमाणवर्षञ्च शक्रलोके महीयते ॥ ३१
पुनः स्वयोनिं सम्प्राप्य लभते सुतमुत्तमम्।
सफलानाञ्च वृक्षाणां सहस्रञ्च प्रशंसितम् ॥ ३२
केवलं फलदानञ्च ब्राह्मणाय ददाति यः।
सुचिरं स्वर्गवासञ्च कृत्वा याति च भारतम् ॥ ३३
नानाद्रव्यसमायुक्तं नानाशस्यसमन्वितम्।
ददाति यश्च विप्राय भारते विपुलं गृहम् ॥ ३४
कुवेरलोके वसति स च मन्वन्तरावधि।
ततः स्वयोनिं सम्प्राप्य महांश्च धनवान् भवेत् ॥ ३५

यो जनः शस्यसंयुक्तां भूमिञ्च रुचिरां सति।
ददाति भक्त्या विप्राय पुण्यक्षेत्रे च वा सति ॥ ३६
महीयते स वैकुण्ठे मन्वन्तरशतं ध्रुवम्।
पुनः स्वयोनिं सम्प्राप्य महांश्च धनवान् भवेत् ॥ ३७
तं न त्यजति भूमिश्च जन्मनां शतकं परम्।
श्रीमांश्च धनवांश्चैव पुत्रवांश्च प्रजेश्वरः ॥ ३८
सप्रजञ्च प्रकृष्टञ्च ग्रामं दद्याद्द्विजातये।
लक्षमन्वन्तरञ्चैव वैकुण्ठे स महीयते ॥ ३९
पुनः स्वयोनिं सम्प्राप्य ग्रामलक्षं लभेद्ध्रुवम्।
न जहाति च तं पृथ्वी जन्मनां लक्षमेव च ॥ ४०
सप्रजं सुप्रकृष्टञ्च पक्वशस्यसमन्वितम्।
नानापुष्करिणीवृक्ष-फलभोगसमन्वितम् ॥ ४१
नगरं यश्च विप्राय ददाति भारते भुवि।
महीयते स वैकुण्ठे दशलक्षेन्द्रकालकम् ॥ ४२
पुनः स्वयोनिं सम्प्राप्य राजेन्द्रो भारते भवेत्।
नगराणाञ्च नियुतं लभते नात्र संशयः ॥ ४३
धरा तं न जहात्येव जन्मनां नियुतं ध्रुवम्।
परमैश्वर्यसंयुक्तो भवेदेव महीतले ॥ ४४
नगराणाञ्च शतकं देशं यो हि द्विजातये।
सुप्रकृष्टं प्रजायुक्तं ददाति भक्तिपूर्वकम् ॥ ४५
वापीतडागसंयुक्तं नानावृक्षसमन्वितम्।
महीयते स वैकुण्ठे कोटिमन्वन्तरावधि ॥ ४६
पुनः स्वयोनिं सम्प्राप्य जम्बूद्वीपपतिर्भवेत्।
परमैश्वर्यसंयुक्तो यथा शक्रस्तथा भुवि ॥ ४७
मही तं न जहात्येव जन्मनां कोटिमेव च।
कल्पान्तजीवी स भवेद्राजराजेश्वरो महान् ॥ ४८
स्वाधिकारं समग्रञ्च यो ददाति द्विजातये।
चतुर्गुणं फलञ्चातो भवेत् तस्य न संशयः ॥ ४९
जम्बूद्वीपं यो ददाति ब्राह्मणाय पतिव्रते।
फलं शतगुणञ्चातो भवेत् तस्य न संशयः ॥ ५०
सप्तद्वीपमहीदातुः सर्व्वतीर्थानुसेविनः।
सर्व्वेषां तपसां कर्त्तुः सर्व्वोपवासकारिणः ॥ ५१
सर्व्वदानप्रदातुश्च सर्व्वसिद्धेश्वरस्य च।
अस्त्येव पुनरावृत्तिर्न भक्तस्य हरेरहो ॥ ५२
असंख्यब्रह्मणां पातं पश्यन्ति वैष्णवाः सति।
निवसन्ति हि गोलोके वैकुण्ठे वा हरेः पदे ॥ ५३
विष्णुमन्त्रोपासकश्च विहाय मानवीं तनुम्।

बिभर्त्ति दिव्यरूपञ्च जन्ममृत्युजरापहम् ॥ ५४
लब्ध्वा विष्णोश्च सारूप्यं विष्णुसेवां करोति च।
स च पश्यति गोलोके ह्यसंख्यं प्राकृतं लयम् ॥५५
पश्यन्ति देवाः सिद्धाश्च विश्वानि निखिलानि च।
कृष्णभक्ता न पश्यन्ति जन्ममृत्युजरापहाः ॥ ५६
कार्त्तिके तुलसीदानं करोति हरये च यः।
युगं पत्रप्रमाणञ्च मोदते हरिमन्दिरे ॥ ५७
पुनः स्वयोनिं सम्प्राप्य हरिभक्तिं लभेद्ध्रुवम्।
सुखी च चिरजीवी च स भवेद्भारते भुवि ॥ ५८
घृतप्रदीपं हरये कार्त्तिके यो ददाति च।
पलप्रमाणवर्षञ्च मोदते हरिमन्दिरे ॥ ५९
पुनः स्वयोनिं संप्राप्य विष्णुभक्तिं लभेद्ध्रुवम्।
महाधनाढ्यः स भवेच्चक्षुष्मांश्चैव दीप्तिमान् ॥ ६०
माघे यः स्नाति गङ्गायामरुणोदयकालतः।
युगषष्टिसहस्राणि मोदते हरिमन्दिरे ॥ ६१
पुनः स्वयोनिं सम्प्राप्य विष्णुभक्तिं लभेद्ध्रुवम्।
जितेन्द्रियाणां प्रवरः स भवेद्भारते भुवि ॥ ६२
माघे यः स्नाति गङ्गायां प्रयागे चारुणोदये।
वैकुण्ठे मोदते सोऽपि लक्षमन्वन्तरावधि ॥ ६३
पुनः स्वयोनिं सम्प्राप्य विष्णुमन्त्रं लभेद्ध्रुवम्।
त्यक्त्वा च मानुषं देहं पुनर्याति हरेः पदम् ॥ ६४
नास्ति तत्पुनरावृत्तिर्वैकुण्ठाच्च महीतले।
करोति हरिदास्यञ्च लब्ध्वा सारूप्यमेव च ॥ ६५
नित्यस्नायी च गङ्गायां स पूतः सूर्य्यवद्भुवि।
पदे पदेऽश्वमेधस्य लभते निश्चितं फलम् ॥ ६६
तस्यैव पादरजसा सद्यःपूता वसुन्धरा।
मोदते स च वैकुण्ठे यावच्चन्द्रदिवाकरौ ॥ ६७
पुनः स्वयोनिं सम्प्राप्य तपस्विप्रवरो भवेत्।
स्वधर्म्मनिरतः शुद्धो विद्वांश्च सुजितेन्द्रियः ॥ ६८
मीनकर्कटयोर्मध्ये गाढ़ं तपति भास्करे।
भारते यो ददात्येव जलमेव सुवासितम् ॥ ६९
मोदते स च वैकुण्ठे यावदिन्द्राश्चतुर्द्दश।
पुनः स्वयोनिं सम्प्राप्य सुखी निष्कपटो भवेत् ॥७०
वैशाखे हरये भक्त्या यो ददाति च चन्दनम्।
युगषष्टिसहस्राणि मोदते विष्णुमन्दिरे ॥ ७१
पुनः स्वयोनिं सम्प्राप्य रूपवांश्च सुखी भवेत्।
रत्नेण तत् पुण्यं लभते नात्र संशयः ॥ ७२
वैशाखे शक्तुदानञ्च यः करोति द्विजातये।
शक्तुरेणुप्रमाणाब्दं मोदते विष्णुमन्दिरे ॥ ७३
करोति भारते यो हि कृष्णजन्माष्टमीव्रतम्।
शतजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥ ७४
वैकुण्ठे मोदते सोऽपि यावदिन्द्राश्चतुर्द्दश।
पुनः स्वयोनिं सम्प्राप्य कृष्णभक्तिं लभेद्ध्रुवम् ॥ ७५
इहैव भारते वर्षे शिवरात्रिं करोति यः।
मोदते शिवलोके च सप्तमन्वन्तरावधि ॥ ७६
शिवाय शिवरात्रौ च बिल्वपत्रं ददाति यः।
पत्रप्रमाणञ्च युगं मोदते शिवमन्दिरे ॥ ७७
पुनः स्वयोनिं सम्प्राप्य शिवभक्तिं लभेद्ध्रुवम्।
विद्यावान् पुत्रवांश्चापि प्रजावान् भूमिमान् भवेत् ७८
चैत्रमासेऽथवा माघे शङ्करं योऽर्चयेद्व्रती।
करोति नर्त्तनं भक्त्या वेत्रपाणिर्दिवानिशम् ॥ ७९
मासं वाप्यर्द्धमासं वा दश सप्त दिनानि वा।
दिनमानं युगं सोऽपि शिवलोके महीयते ॥ ८०
श्रीरामनवमीं यो हि करोति भारते नरः।
सप्तमन्वन्तरं यावन्मोदते विष्णुमन्दिरे ॥ ८१
पुनः स्वयोनिं सम्प्राप्य रामभक्तिं लभेद्ध्रुवम्।
जितेन्द्रियाणां प्रवरो महांश्च धार्म्मिको भवेत् ॥ ८२
शारदीयां महापूजां प्रकृतेर्यः करोति च।
नाना पुष्पैः सुगन्धैश्च भक्तियुक्तादिभिर्वरैः ॥ ८३
नैवेद्यैरुपहारैश्च धूपदीपादिभिर्युताम्।
नृत्यगीतादिभिर्वाद्यैर्नानाकौतुकमङ्गलैः ॥ ८४
शिवलोके वसेत् सोऽपि सप्तमन्वन्तरावधि।
पुनः स्वयोनिं सम्प्राप्य बुद्धिञ्च निर्म्मलां लभेत् ॥ ८५
अचलां श्रियमाप्नोति पुत्रपौत्रादिवर्द्धिनीम्।
महाप्रभावयुक्तश्च गजवाजिसमन्वितः ॥ ८६
राजराजेश्वरः सोऽपि भवेदेव न संशयः।
भाद्रशुक्लाष्टमीं प्राप्य महालक्ष्मीञ्च योऽर्चयेत् ॥ ८७
नित्यं भक्त्या पक्षमेकं पुण्यक्षेत्रे च भारते।
दत्त्वा तस्यै प्रकृष्टानि चोपहाराणि षोड़श ॥ ८८
वैकुण्ठे मोदते सोऽपि यावच्चन्द्रदिवाकरौ।
पुनः स्वयोनिं संप्राप्य राजराजेश्वरो भवेत् ॥ ८९
कार्त्तिकीपूर्णिमायाञ्च कृत्वा तु रासमण्डलम्।
गोपानां शतकं कृत्वा गोपीनां शतकं तथा ॥ ९०
शिलायां प्रतिमायां वा श्रीकृष्णं राधया सह॥

भारते पूजयेद्दत्त्वा चोपहाराणि षोड़श ॥ ९१
गोलोके च वसेत् सोऽपि यावद्वै ब्रह्मणो वयः ।
भारतं पुनरागत्य हरिभक्तिं लभेद्ध्रुवम् ॥ ९२
क्रमेण सुदृढ़ां भक्तिं लब्ध्वा मन्त्रं हरेरपि ।
देहं त्यक्त्वा च गोलोकं पुनरेव प्रयाति सः ॥ ९३
तत्र कृष्णस्य सारूप्यं सम्प्राप्य पार्षदो भवेत् ।
पुनस्तत्पतनं नास्ति जरामृत्युहरो महान् ॥९४
शुक्लां वाप्यथवा कृष्णां करोत्येकादशीञ्च यः ।
वैकुण्ठे मोदते सोऽपि यावद्वै ब्रह्मणो वयः ॥ ९५
भारतं पुनरागत्य हरिभक्तिं लभेद्ध्रुवम् ।
पुनर्याति च वैकुण्ठं न तस्य पतनं भवेत् ॥ ९६
भाद्रे शुक्ले च द्वादश्यां यः शक्रं पूजयेन्नरः ।
षष्टिवर्षसहस्राणि शक्रलोके महीयते ॥ ९७
रविवारार्कसंक्रान्त्यां सप्तम्यां शुक्लपक्षतः ।
सम्पूज्यार्कं हविष्यान्नं यः करोति च भारते ॥ ९८
महीयते सोऽर्कलोके यावच्चन्द्रदिवाकरौ ।
भारतं पुनरागत्य चारोगी श्रीयुतो भवेत् ॥ ९९
ज्यैष्ठशुक्लचतुर्द्दश्यां सावित्रीं यो हि पूजयेत् ।
महीयते ब्रह्मलोके सप्तमन्वन्तरावधि ॥ १००
पुनर्महीं समागत्य श्रीमानतुलविक्रमः ।
चिरजीवी भवेत् सोऽपि ज्ञानवान् सम्पदा युतः॥१०१
माघस्य शुक्लपञ्चम्यां पूजयेद्यः सरस्वतीम् ।
संयतो भक्तितो दत्त्वा चोपहाराणि षोड़श ॥ १०२
महीयते स वैकुण्ठे यावद्ब्रह्मदिवानिशम् ।
सम्प्राप्य च पुनर्ज्जन्म स भवेत् कविपण्डितः ॥ १०३
गां सुवर्णादिकं यो हि ब्राह्मणाय ददाति च ।
नित्यं जीवनपर्य्यन्तं भक्तियुक्तश्च भारते ॥ १०४
गवां लोमप्रमाणाब्दं द्विगुणं विष्णुमन्दिरे ।
मोदते हरिणा सार्द्धं क्रीड़ाकौतुकमङ्गलैः ॥ १०५
ततः पुनरिहागत्य राजराजेश्वरो भवेत् ।
गोमांश्च पुत्रवान् विद्वान् ज्ञानवान् सर्व्वतः सुखी१०६
भोजयेद्यो हि मिष्टान्नं ब्राह्मणेभ्यश्च भारते ।
विप्रलोमप्रमाणाब्दं मोदते विष्णुमन्दिरे ॥ १०७
ततः पुनरिहागत्य विष्णुभक्तिं लभेद्ध्रुवम् ।
यदि नारायणक्षेत्रे फलं कोटिगुणं लभेत् ॥ १०८
नाम्नां कोटिं हरेर्यो हि क्षेत्रे नारायणे जपेत् ।
सर्व्वपापविनिर्म्मुक्तो जीवन्मुक्तो भवेद्ध्रुवम् ॥ १०९
लभते तत् पुनर्ज्जन्म वैकुण्ठे स महीयते ।
लभेद्विष्णोश्च सारूप्यं न तस्य पतनं भवेत् ॥ ११०
यः शिवं पूजयेन्नित्यं कृत्वा लिङ्गञ्च पार्थिवम् ।
यावज्जीवनपर्य्यन्तं स याति शिवमन्दिरम् ॥ १११
मृदां रेणुप्रमाणाब्दं शिवलोके महीयते ।
ततः पुनरिहागत्य राजेन्द्रो भारते भवेत् ॥ ११२
शिलायां योऽर्च्चयेन्नित्यं शिलातोयञ्च भक्षति ।
महीयते स वैकुण्ठे यावद्वै ब्रह्मणः शतम् ॥ ११३
ततो लब्ध्वा पुनर्ज्जन्म हरिभक्तिं सुदुर्लभाम् ।
महीयते विष्णुलोके न तस्य पतनं भवेत् ॥ ११४
तपांसि चैव सर्व्वाणि व्रतानि निखिलानि च ।
कृत्वा तिष्ठति वैकुण्ठे यावदिन्द्राश्चतुर्द्दश ॥ ११५
ततो लब्ध्वा पुनर्ज्जन्म राजेन्द्रो भारते भवेत् ।
ततो मुक्तो भवेत् पश्चात् पुनर्जन्म न विद्यते ॥ ११६
यः स्नाति सर्व्वतीर्थेषु भुवि कृत्वा प्रदक्षिणाम् ।
स च निर्व्वाणतां याति न तज्जन्म भवेद्भुवि ॥ ११७
पुण्यक्षेत्रे भारते च योऽश्वमेधं करोति च ।
अश्वलोमप्रमाणाब्दं शक्रस्यार्द्धासने वसेत् ॥ ११८
चतुर्गुणं राजसूये फलमाप्नोति मानवः ।
नरमेधेऽश्वमेधार्द्धं गोमेधे च तदेव च ॥ ११९
पुत्रेष्टौ च तदर्द्धञ्च सुपुत्रञ्च लभेद्ध्रुवम् ।
लभते लाङ्गलेष्टौ च गोमेधसदृशं फलम् ॥ १२०
तत्समानञ्च विप्रेष्टौ वृद्धियागे च तत्फलम् ।
पद्मयज्ञे तदर्द्धञ्च फलमाप्नोति मानवः ॥ १२१
विशोके च विशोकञ्च पद्मार्द्धं स्वर्गमश्नुते ।
विजयी विजयी राजा स्वर्गं पद्मसमं लभेत् ॥ १२२
प्राजापत्ये प्रजालाभो भूवृद्धिर्भूभृतां भवेत् ।
इह राजश्रियं लब्ध्वा पद्मार्द्धं स्वर्गमश्नुते ॥ १२३
ऋद्धियागे महैश्वर्य्यं स्वर्गं पद्मसमं भवेत् ॥१२४
विष्णुयज्ञः प्रधानञ्च सर्व्वयज्ञेषु सुन्दरि ।
ब्रह्मणा च कृतः पूर्व्वं महान् सम्भारसंयुतः ॥ १२५
बभूव कलहो यत्र दक्षशङ्करयोः सति ।
शेपुश्च नन्दिनं विप्राः नन्दी विप्रांश्च कोपतः ॥ १२६
यतो हेतोर्द्दक्षयज्ञं बभञ्ज चन्द्रशेखरः ॥ १२७
चकार विष्णुयज्ञञ्च पुरा दक्षः प्रजापतिः ।
धर्म्मश्च कश्यपश्चैव शेषश्चापि च कर्द्दमः ॥ १२८
स्वायम्भुवो मनुश्चैव तत्पुत्रश्च प्रियव्रतः ।

शिवः सनत्कुमारश्च कपिलश्च ध्रुवस्तथा ॥ १२९
राजसूयसहस्राणि समृद्धा च क्रतुर्भवेत्।
राजसूयसहस्राणां फलमाप्नोति निश्चितम्।
विष्णुयज्ञात् परो यज्ञो नास्ति वेदे फलप्रदः ॥१३०
बहुकल्पान्तजीवी च जीवन्मुक्तो भवेद्ध्रुवम्।
ज्ञानेन तपसा चैव विष्णुतुल्यो भवेदिह ॥ १३१
देवानाञ्च यथा विष्णुर्वैष्णवानां यथा शिवः।
शास्त्राणाञ्च यथा वेदा आश्रमाणाञ्च ब्राह्मणाः ॥१३२
तीर्थानाञ्च यथा गङ्गा पवित्राणाञ्च वैष्णवाः।
एकादशी व्रतानाञ्च पुष्पाणां तुलसी यथा ॥ १३३
नक्षत्राणां यथा चन्द्रः पक्षिणां गरुड़ो यथा।
यथा स्त्रीणाञ्च प्रकृतिराधाराणां वसुन्धरा ॥ १३४
शीघ्रगाणाञ्चेन्द्रियाणां चञ्चलानां यथा मनः।
प्रजापतीनां ब्रह्मा च प्रजेशानां प्रजापतिः ॥ १३५
वृन्दावनं वनानाञ्च वर्षाणां भारतं यथा।
श्रीमताञ्च यथा श्रीश्च विदुषाञ्च सरस्वती ॥ १३६
पतिव्रतानां दुर्गा च सुभगानाञ्च राधिका।
विष्णुयज्ञस्तथा वत्से यज्ञेषु च महानिति ॥ १३७
अश्वमेधशतेनैव शक्रत्वं लभते ध्रुवम्।
सहस्रेण विष्णुपदं सम्प्राप्य मृत्युमेव च ॥ १३८
स्नानञ्च सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षणम्।
सर्व्वेषाञ्च व्रतानाञ्च तपसां फलमेव च ॥ १३९
पाठश्चतुर्णां वेदानां प्रादक्षिण्यं भुवस्तथा।
फलवीजमिदं सर्व्वं मुक्तिदं कृष्णसेवनम् ॥ १४०
पुराणेषु च वेदेषु चेतिहासेषु सर्व्वतः।
निरूपितं सारभूतं कृष्णपादाम्बुजार्च्चनम् ॥ १४१
तद्दर्शनञ्च तद्ध्यानं तन्नाम-गुणकीर्त्तनम्।
तत्स्तोत्रं स्मरणञ्चैव वन्दनं जप एव च ॥ १४२
तत्पादोदकनैवेद्यभक्षणं नित्यमेव च।
सर्व्वसम्मतमित्येवं सर्व्वेप्सितमिदं सति ॥ १४३
भज कृष्णं परं ब्रह्म निर्गुणं प्रकृतेः परम्।
गृहाण स्वामिनं वत्से सुखं गच्छ स्वमन्दिरम् ॥१४४
एष ते कथितः सर्व्वो विपाकः कर्म्मणां नृणाम्।
सर्व्वेप्सितः सर्व्वमतः परं तत्त्वप्रदो नृणाम् ॥ १४५

इति श्रीब्रह्मवैवर्त्ते प्रकृतिखण्डे सावित्र्युपाख्याने कर्म्मविपाककथनं सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः।

नारायण उवाच।

हरेरुत्कीर्त्तनं श्रुत्वा सावित्री यमवक्त्रतः।
साश्रुनेत्रा सपुलका यमं पुनरुवाच सा ॥ १

सावित्र्युवाच।

हरेरुत्कीर्त्तनं धर्म्म स्वकुलोद्धारणं ध्रुवम्।
श्रोतॄणाञ्चैव वक्तॄणां जन्ममृत्युजराहरम् ॥ २
दानानाञ्च व्रतानाञ्च सिद्धीनां तपसां परम्।
योगानाञ्चैव वेदानां कीर्त्तनं सेवनं हरेः ॥ ३
मुक्तत्वममरत्वं वा सर्व्वसिद्धत्वमेव वा।
श्रीकृष्णसेवनस्यैव कलां नार्हन्ति षोड़शीम् ॥ ४
भजामि केन विधिना श्रीकृष्णं प्रकृतेः परम्।
मूढ़ां मामवलां तात वद वेदविदां वर ॥ ५
शुभकर्म्मविपाकश्च श्रुतो नृणां मनोहरः।
कर्म्माशुभविपाकञ्च तन्मे व्याख्यातुमर्हसि ॥ ६
इत्युक्त्वा सा सती ब्रह्मन् भक्तिनम्रात्मकन्धरा।
तुष्टाव धर्म्मराजञ्च वेदोक्तेन स्तवेन च ॥ ७

सावित्र्युवाच।

तपसा धर्म्ममाराध्य पुष्करे भास्करः पुरा।
धर्म्मांशं यं सुतं प्राप धर्म्मराजं नमाम्यहम् ॥ ८
समता सर्व्वभूतेषु यस्य सर्व्वस्य साक्षिणः।
अतो यन्नाम शमन इति तं प्रणमाम्यहम् ॥ ९
येनान्तश्च कृतो विश्वे सर्व्वेषां जीविनां परम्।
कर्म्मानुरूपकाले च तं कृतान्तं नमाम्यहम् ॥ १०
विभर्त्ति दण्डं दण्डाय पापिनां शुद्धिहेतवे।
नमामि तं दण्डधरं यः शास्ता सर्व्वकर्म्मणाम् ॥ ११
विश्वे च कलयत्येव यः सर्व्वायुश्च सन्ततम्।
अतीव दुर्निवार्य्यञ्च तं कालं प्रणमाम्यहम् ॥ १२
तपस्वी वैष्णवो धर्म्मी संयमी विजितेन्द्रियः।
जीविनां कर्म्मफलदं तं यमं प्रणमाम्यहम् ॥ १३
स्वात्मारामश्च सर्व्वज्ञो मित्रं पुण्यकृतां भवे।
पापिनां क्लेशदो यस्तं पुण्यमित्रं नमाम्यहम् ॥ १४
यज्जन्म ब्रह्मणो वंशे ज्वलन्तं ब्रह्मतेजसा।
यो ध्यायति परं ब्रह्म ब्रह्मवंशं नमाम्यहम् ॥ १५
इत्युक्त्वा सा च सावित्री प्रणनाम यमं मुने।
यमस्तां विष्णुभजनं कर्म्मपाकमुवाच ह ॥ १६

इदं यमाष्टकं नित्यं प्रातरुत्थाय यः पठेत् ।
यमात् तस्य भयं नास्ति सर्व्वपापात् प्रमुच्यते ॥ १७
महापापी यदि पठेन्नित्यं भक्त्या च नारद ।
यमः करोति तं शुद्धं कायव्यूहेन निश्चितम् ॥ १८

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे-सावित्रीकृतयम-
स्तोत्रं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः ।

नारायण उवाच ।

यमस्तस्यै विष्णुमन्त्रं दत्त्वा च विधिपूर्व्वकम् ।
कर्म्माशुभविपाकञ्च तामुवाच रवेः सुतः ॥ १

यम उवाच ।

शुभकर्म्मविपाकश्च श्रुतो नानाविधः सति ।
कर्म्माशुभविपाकञ्च कथयामि निशामय ॥ २
नानाप्रकारं स्वर्गञ्च याति जीवः स्वकर्म्मणा ।
कुकर्म्मणा च नरकं याति नानाविधं नरः ॥ ३
नरकाणाञ्च कुण्डानि सन्ति नानाविधानि च ।
नानापुराणभेदेन नामभेदानि तानि च ॥ ४
विस्तृतानि गभीराणि क्लेशदानि च जीविनाम् ।
भयङ्कराणि घोराणि हे वत्से कुत्सितानि च ॥ ५
षड़शीतिश्च कुण्डानि संयमन्याञ्च सन्ति च ।
निबोध तेषां नामानि प्रसिद्धानि श्रुतौ सति ॥ ६
वह्निकुण्डं तप्तकुण्डं क्षारकुण्डं भयानकम् ।
विट्कुण्डं मूत्रकुण्डञ्च श्लेष्मकुण्डञ्च दुःसहम् ॥ ७
गरकुण्डं वसाकुण्डं दूषिकाकुण्डमेव च ।
शुक्रकुण्डमसृक्कुण्ड-मश्रुकुण्डञ्च कुत्सितम् ॥ ८
कुण्डं गात्रमलानाञ्च कर्णविट्कुण्डमेव च ।
मज्जाकुण्डं मांसकुण्डं नखकुण्डञ्च दुस्तरम् ॥ ९
लोम्नां कुण्डं केशकुण्डमस्थिकुण्डञ्च दुःखदम् ।
ताम्रकुण्डं लौहकुण्डं प्रतप्तं क्लेशदं महत् ॥ १०
तीक्ष्णकण्टककुण्डञ्च विषकुण्डञ्च विघ्नदम् ।
घर्म्मकुण्डं तप्तसुराकुण्डञ्चापि प्रकीर्त्तितम् ॥ ११
प्रतप्ततैलकुण्डञ्च दन्तकुण्डञ्च दुर्व्वहम् ।
कृमिकुण्डं पूयकुण्डं सर्पकुण्डं दुरन्तकम् ॥ १२
मशकुण्डं दंशकुण्डं भीमं गरलकुण्डकम् ।
कुण्डञ्च वज्रदंष्ट्राणां वृश्चिकानाञ्च सुव्रते ॥ १३
शरकुण्डं शूलकुण्डं खड्गकुण्डञ्च भीषणम् ।
गोलकुण्डं नक्रकुण्डं काककुण्डं शुचास्पदम् ॥ १४
सञ्चानकुण्डं वाजकुण्डं वज्रकुण्डं सुदुस्तरम् ।
तप्तपाषाणकुण्डञ्च तीक्ष्णपाषाणकुण्डकम् ॥ १५
लालाकुण्डं मसीकुण्डं चूर्णकुण्डं सुदारुणम् ।
चक्रकुण्डं वक्रकुण्डं कूर्म्मकुण्डं महोल्वणम् ॥ १६
ज्वालाकुण्डं भस्मकुण्डं पूतिकुण्डञ्च सुन्दरि ।
तप्तशूर्म्ममसिपत्रं क्षुरधारं सूचीमुखम् ॥ १७
गोधामुखं नक्रमुखं गजदंशञ्च गोमुखम् ।
कुम्भीपाकं कालसूत्रमवटोदमरुन्तुदम् ॥ १८
पांशुभोजं पाशवेष्टं शूलप्रोतं प्रकम्पनम् ।
उल्कामुखमन्धकूपं वेधनं दण्डताड़नम् ॥ १९
जालवद्धं देहचूर्णं दलनं शोषणं कषम् ।
सर्पज्वालामुखं जिह्मं धूमान्धं नागवेष्टनम् ॥ २०
कुण्डान्येतानि सावित्रि पापिनां क्लेशदानि च ।
नियुक्तैः किङ्करगणै रक्षितानि च सन्ततम् ॥ २१
दण्डहस्तैः शूलहस्तैः पाशहस्तैर्भयङ्करैः ।
शक्तिहस्तैर्गदाहस्तैर्मदमत्तैश्च दारुणैः ॥ २२
तमोयुक्तैर्दयाहीनैर्दुर्निवार्य्यैश्च सर्व्वतः ।
तेजस्विभिश्च निःशङ्कैस्ताम्रपिङ्गललोचनैः ॥ २३
योगयुक्तैः सिद्धयोगैर्नानारूपधरैर्वरैः ।
आसन्नमृत्युभिर्दृष्टैः पापिभिः सर्व्वजीविभिः ॥ २४
स्वकर्म्मनिरतैः शैवैः शाक्तैः सौरैश्च गाणपैः ।
अदृष्टैः पुण्यकृद्भिश्च सिद्धैर्योगिभिरेव च ॥ २५
स्वधर्म्मनिरतैर्वापि विरतैर्वा स्वतन्त्रकैः ।
वलवद्भिश्च निःशङ्कैः स्वप्नादृष्टैश्च वैष्णवैः ॥ २६
एतत् ते कथितं साध्वि कुण्डसंख्यानिरूपणम् ।
येषां निवासो यत् कुण्डं निबोध कथयामि ते ॥ २७

इति श्रीब्रह्मवैवर्त्ते प्रकृतिखण्डे सावित्र्युपाख्याने
यम-सावित्री-संवादे नरककुण्डसंख्यानं
नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ।

यम उवाच ।

हरिसेवारतः शुद्धो योगी सिद्धो व्रती सति ।
तपस्वी ब्रह्मचारी च न याति नरकं यती ॥ १

कटुवाचा बान्धवांश्च खलत्वेन च यो नरः।
दग्धं करोति बलवान् वह्निकुण्डं प्रयाति सः॥ २
गात्रलोमप्रमाणाब्दं तत्र स्थित्वा हुताशने।
पशुयोनिमवाप्नोति रौद्रे दग्धस्त्रिजन्मनि॥ ३
ब्राह्मणं तृषितं क्षुब्धं प्रतप्तं गृहमागतम्।
न भोजयति यो मूढस्तप्तकुण्डं प्रयाति सः॥ ४
तत्र लोमप्रमाणाब्दं स्थित्वा तत्र च दुःखितः।
तप्तस्थले वह्नितुल्ये पक्षी च सप्तजन्मसु॥ ५
रविवारार्कसंक्रान्त्याममायां श्राद्धवासरे।
वस्त्राणां क्षारसंयोगं करोति यो हि मानवः॥ ६
स याति क्षारकुण्डञ्च सूत्रमानाब्दमेव च।
स व्रजेद्रजकीं योनिं सप्तजन्मसु भारते॥ ७
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत् तु यः।
षष्टिवर्षसहस्राणि विट्कुण्डञ्च प्रयाति सः॥ ८
षष्टिवर्षसहस्राणि विड्भोजी तत्र तिष्ठति।
षष्टिवर्षसहस्राणि विट्कृमिश्च पुनर्भुवि॥ ९
परकीयतड़ागे च तड़ागं यः करोति च।
उत्सृजेद्दैवदोषेण मूत्रकुण्डं प्रयाति सः॥ १०
तद्रेणुमानवर्षञ्च तद्भोजी तत्र तिष्ठति।
भारते गोधिका चैव स भवेत् सप्तजन्मसु॥ ११
एकाकी मिष्टमश्नाति श्लेष्मकुण्डं प्रयाति सः।
पूर्णमब्दशतञ्चैव तद्भोजी तत्र तिष्ठति॥ १२
पुनः पूर्णशताब्दञ्च स प्रेतो भारते भवेत्।
श्लेष्ममूत्रगरञ्चैव पूयं भुङ्क्ते ततः शुचिः॥ १३
पितरं मातरञ्चैव गुरुभार्यां सुतं सुताम्।
यो न पुष्णात्यनाथञ्च गरकुण्डं प्रयाति सः॥ १४
पूर्णमब्दसहस्रञ्च तद्भोजी तत्र तिष्ठति।
ततो व्रजेद्भूतयोनिं शतवर्षं ततः शुचिः॥ १५
दृष्ट्वाऽतिथिं वक्रचक्षुः करोति यो हि मानवः।
पितृदेवास्तस्य जलं न गृह्णन्ति च पापिनः॥ १६
यानि कानि च पापानि ब्रह्महत्यादिकानि च।
इहैव लभते चान्ते दूषिकाकुण्डमाव्रजेत्॥ १७
पूर्णमब्दशतञ्चैव तद्भोजी तत्र तिष्ठति।
ततो नरो भवेद्भूमौ दरिद्रः सप्तजन्मसु॥ १८
दत्त्वा द्रव्यञ्च विप्राय चान्यस्मै दीयते यदि।
स तिष्ठति वसाकुण्डे तद्भोजी शतवत्सरम्॥ १९
ततो भवेत् स चण्डालस्त्रिजन्मनि ततः शुचिः।
कृकलासो भवेत् सोऽपि भारते सप्तजन्मसु।
ततो भवेन्मानवश्च दरिद्रोऽल्पायुरेव च॥ २०
पुमांसं कामिनी वापि कामिनीं वा पुमानथ।
यः शुक्रं पातयत्येव शुक्रकुण्डं प्रयाति सः॥ २१
पूर्णमब्दशतञ्चैव तद्भोजी तत्र तिष्ठति।
योनिकृमिः शताब्दञ्च भवेद्भुवि ततः शुचिः॥ २२
सन्ताड्य च गुरुं विप्रं रक्तपातञ्च कारयेत्।
स च तिष्ठत्यसृक्कुण्डे तद्भोजी शतवत्सरम्॥ २३
ततो भवेद्व्याधजन्म सप्तजन्मसु भारते।
ततः शुद्धिमवाप्नोति मानवश्च क्रमेण च॥ २४
अश्रु स्रवन्तं गायन्तं भक्तं दृष्ट्वा च गद्गदम्।
श्रीकृष्णगुणसङ्गीते हसत्येव हि यो नरः॥ २५
स वसेदश्रुकुण्डे च तद्भोजी शतवत्सरम्।
ततो भवेत् स चण्डालस्त्रिजन्मनि ततः शुचिः॥ २६
करोति खलतां शश्वदशुद्धहृदयो नरः।
कुण्डं गात्रमलानाञ्च स च याति दशाब्दकम्॥ २७
ततः स गर्दभीं योनिमवाप्नोति त्रिजन्मनि।
त्रिजन्मनि च शार्गालीं ततः शुद्धो भवेद्ध्रुवम्॥ २८
बधिरं यो हसत्येव निन्दत्येवाभिमानतः।
स वसेत् कर्णविट्कुण्डे तद्भोजी शतवत्सरम्॥ २९
ततो भवेत् स बधिरो दरिद्रः सप्तजन्मसु।
सप्तजन्मस्वङ्गहीनस्ततः शुद्धिं लभेद्ध्रुवम्॥ ३०
लोभात् स्वपालनार्थाय जीविनं हन्ति यो नरः।
मज्जाकुण्डे वसेत् सोऽपि तद्भोजी लक्षवर्षकम्॥ ३१
ततो भवेत् स शशको मीनश्च सप्तजन्मसु।
एणादयश्च कर्मभ्यस्ततः शुद्धिं लभेद्ध्रुवम्॥ ३२
स्वकन्यापालनं कृत्वा विक्रीणाति हि यो नरः।
अर्थलोभान्महामूढो मांसकुण्डं प्रयाति सः॥ ३३
कन्यालोमप्रमाणाब्दं तद्भोजी तत्र तिष्ठति।
तञ्च दण्डप्रहारञ्च करोति यमकिङ्करः॥ ३४
मांसभारं मूर्ध्नि कृत्वा रक्तधारां लिहेत् क्षुधा।
ततो हि भारते पापी कन्याविट्सु कृमिर्भवेत्॥ ३५
षष्टिवर्षसहस्राणि व्याधश्च सप्तजन्मसु।
त्रिजन्मनि वराहश्च कुक्कुरः सप्तजन्मसु॥ ३६
सप्तजन्मसु मण्डूको जलौका सप्तजन्मसु।
सप्तजन्मसु काकश्च ततः शुद्धिं लभेद्ध्रुवम्॥ ३७
व्रतानामुपवासानां श्राद्धादीनाञ्च संयमे।

न करोति च क्षौरकर्म्म सोऽशुचिः सर्व्वकर्म्मसु ॥ ३८
स च तिष्ठति कुण्डेषु नखादीनाञ्च सुन्दरि।
तद्दिव दिनमानाब्दं तद्भोजी दण्डताड़ितः ॥ ३९
स्त्रकीयं पार्थिवं लिङ्गं यो वार्च्चयति भारते।
स तिष्ठति केशकुण्डे रेणुप्रमाणवर्षकम् ॥ ४०
तदन्ते यावनीं योनिं प्रयाति हरकोपतः।
शताब्दाच्छुद्धिमाप्नोति स्वकुलं लभते ध्रुवम् ॥ ४१
पितृणां यो विष्णुपदे पिण्डं नैव ददाति च।
स च तिष्ठत्यस्थिकुण्डे स्वलोमाब्दं महोल्वणे ॥ ४२
ततः स्वयोनिं सम्प्राप्य खञ्जः सप्तसु जन्मसु।
भवेन्महादरिद्रश्च ततः शुद्धो हि दण्डतः ॥ ४३
यः सेवते महामूढ़ो गुर्व्विणीञ्च स्वकामिनीम्।
प्रतप्तताम्रकुण्डे च शतवर्षं स तिष्ठति ॥ ४४
अवीरान्नञ्च यो भुङ्क्ते ऋतुस्नातान्नमेव च।
लौहकुण्डे शताब्दञ्च स च तिष्ठति तप्तके ॥ ४५
स व्रजेद्राजकीं योनिं कार्म्मारीं सप्तजन्मसु।
महाव्रणी दरिद्रश्च ततः शुद्धो भवेन्नरः ॥ ४६
यो हि घर्म्माक्तहस्तेन देवद्रव्यमुपस्पृशेत्।
शतवर्षप्रमाणञ्च घर्म्मकुण्डे स तिष्ठति ॥ ४७
यः शूद्रेणाभ्यनुज्ञातो भुङ्क्ते शूद्रान्नमेव च।
स च तप्तसुराकुण्डे शताब्दं तिष्ठति द्विजः ॥ ४८
ततो भवेच्छूद्रयाजी ब्राह्मणः सप्तजन्मसु।
शूद्रश्राद्धान्नभोजी च ततः शुद्धो भवेद्ध्रुवम् ॥ ४९
वाग्दुष्टा कटुवाचा या ताड़येत् स्वामिनं सदा।
तीक्ष्णकण्टककुण्डे सा तद्भोजी तत्र तिष्ठति ॥ ५०
ताड़िता मम दूतेन दण्डेन च चतुर्युगम्।
तत उच्चैःश्रवाः सप्तजन्मस्वेव ततः शुचिः ॥ ५१
विषेण जीवनं हन्ति निर्द्दयो यो हि पामरः।
विषकुण्डे च तद्भोजी सहस्राब्दञ्च तिष्ठति ॥ ५२
ततो भवेन्नृघाती च व्रणी च सप्तजन्मसु।
सप्तजन्मसु कुष्ठी च ततः शुद्धो भवेद्ध्रुवम् ॥ ५३
दण्डेन ताड़येद्यो हि वृषञ्च वृषवाहकः।
भृत्यद्वारा स्वतन्त्रो वा पुण्यक्षेत्रे च भारते ॥ ५४
प्रतप्ततैलकुण्डे च स तिष्ठति चतुर्युगम्।
गवां लोमप्रमाणाब्दं वृषो भवति तत्परम् ॥ ५५
दन्तेन हन्ति जीवं यो लौहेन वड़िशेन वा।
दन्तकुण्डे वसेत् सोऽपि वर्षाणामयुतं सति ॥ ५६
ततः स्वयोनिं सम्प्राप्य चोदरव्याधिसंयुतः।
जन्मनैकेन क्लेशेन ततः शुद्धो भवेन्नरः ॥ ५७
यो भुङ्क्ते च वृथामांसं मत्स्यभोजी च ब्राह्मणः।
हरेरनैवेद्यभोजी कृमिकुण्डं प्रयाति सः ॥ ५८
स्वलोममानवर्षञ्च तद्भोजी तत्र तिष्ठति।
ततो भवेन्म्लेच्छजातिस्त्रिजन्मनि ततो द्विजः ॥ ५९
ब्राह्मणः शूद्रयाजी यः शूद्रश्राद्धान्नभोजकः।
शूद्राणां शवदाही च पूयकुण्डं व्रजेद्ध्रुवम् ॥ ६०
यावल्लोमप्रमाणाब्दं यजमानस्य सुव्रते।
ताड़ितो मम दूतेन तद्भोजी तत्र तिष्ठति ॥६१
ततो भारतमागत्य स शूद्रः सप्तजन्मसु।
महाशूली दरिद्रश्च ततः शुद्धः पुनर्द्विजः ॥ ६२
कृष्णपादमस्तकस्थं सर्पं हन्ति च यो नरः।
स स्वलोमप्रमाणाब्दं सर्पकुण्डं प्रयाति च ॥ ६३
सर्पेण भक्षितः सोऽपि मम दूतेन ताड़ितः।
वसेच्च सर्पविड्भोजी ततः सर्पो भवेद्ध्रुवम् ॥ ६४
ततो भवेन्मानवश्चैवाल्पायुर्दद्रुसंयुतः।
महाक्लेशेन तन्मृत्युः सर्पेण भक्षितो ध्रुवम् ॥ ६५
विधिं प्रदत्त्वा जीवांश्च क्षुद्रजन्तूंश्च हन्ति यः।
स दंश-मशयोः कुण्डे जन्तुमानाब्दकं वसेत् ॥ ६६
दिवानिशं भक्षितस्तैरनाहारश्च शब्दकृत्।
हस्तपादादिबद्धश्च मम दूतेन ताड़ितः ॥ ६७
ततो भवेत् क्षुद्रजन्तुजातिश्च यावती स्मृता।
ततो भवेन्मानवश्च सोऽङ्गहीनस्ततः शुचिः ॥ ६८
यो मूढ़ो मधु गृह्णाति हत्वा च मधुमक्षिकाः।
स एव गरले कुण्डे जीविमानाब्दकं वसेत् ॥ ६९
भक्षितो गरलैर्दग्धो ममदूतेन ताड़ितः।
ततो हि मक्षिकाजातिस्ततः शुद्धो भवेन्नरः ॥७०
अर्थलोभेन यो भूपः प्रजादण्डं करोति च।
वृश्चिकानाञ्च कुण्डेषु तल्लोमाब्दं वसेद्ध्रुवम् ॥ ७१
ततो वृश्चिकजातिश्च सप्तजन्मसु भारते।
ततो नरश्चाङ्गहीनो व्याधियुक्तो भवेन्नरः ॥ ७२
ब्राह्मणः शस्त्रधारी यो ह्यन्येषां धावको भवेत्।
सन्ध्याहीनश्च मूढ़श्च हरिभक्तिविहीनकः ॥७३
स तिष्ठति स्वलोमाब्दं कुण्डादिषु शरादिषु।
विद्धः शरादिभिः शश्वत् ततः शुद्धो भवेन्नरः ॥७४
कारागारे सान्धकारे निबध्नाति प्रजाश्च यः।

प्रमत्तः स्वल्पदोषेण गोलकुण्डं प्रयाति सः ॥ ७५
सपङ्कतप्ततोयाक्तं सान्धकारं भयङ्करम्।
तीक्ष्णदंष्ट्रैश्च कीटैश्च संयुतं गोलकुण्डकम् ॥ ७६
कीटैर्विद्धो वसेत् तत्र प्रजालोमाब्दमेव च।
ततो भवेत् प्रजाभृत्यस्ततः शुद्धो नरो भुवि ॥ ७७
सरोवरादुत्थितांश्च नक्रादीन् हन्ति यः सति।
नक्रकण्टकमानाब्दं नक्रकुण्डं प्रयाति सः ॥ ७८
ततो नक्रादिजातिश्च भवेन्नद्यादिषु ध्रुवम्।
ततः सद्योऽपि शुद्धो हि दण्डेनैव नरः पुनः ॥ ७९
वक्षःश्रोणीस्तनास्यञ्च यः पश्यति परस्त्रियाः।
कामेन कामुको यो हि पुण्यक्षेत्रे च भारते ॥ ८०
स वसेत् काककुण्डे च काकैश्च क्षतलोचनः।
ततः स्वलोममानाब्दं ततश्चान्धस्त्रिजन्मनि ॥ ८१
स्वर्णस्तेयी च यो मूढो भारते सुरविप्रयोः।
स च सञ्चानकुण्डे च स्वलोमाब्दं वसेद्ध्रुवम् ॥ ८२
ताड़ितो मम दूतेन सञ्चानैः क्षतलोचनः।
तद्विड्भोजी च तत्रैव ततश्चान्धस्त्रिजन्मनि ॥ ८३
सप्तजन्म दरिद्रश्च महाक्रूरश्च पातकी।
भारते स्वर्णकारश्च स च स्वर्णवणिक् ततः ॥ ८४
यो भारते ताम्रचौरो लौहचौरश्च सुन्दरि।
स च लोमप्रमाणाब्दं वाजकुण्डं प्रयाति सः ॥ ८५
तत्रैव वाजविड्भोजी वाजैश्च क्षतलोचनः।
ताड़ितो मम दूतेन ततः शुद्धो भवेन्नरः ॥ ८६
भारते देवचौरश्च देवद्रव्यादिहारकः।
सुदुष्करे वज्रकुण्डे स्वलोमाब्दं वसेद्ध्रुवम् ॥ ८७
देहदग्धो हि तद्वज्रैरनाहारश्च शब्दकृत्।
ताड़ितो मम दूतेन ततः शुद्धो भवेन्नरः ॥ ८८
रौप्यगव्यांशुकानाञ्च यश्चौरः सुरविप्रयोः।
तप्तपाषाणकुण्डे च स्वलोमाब्दं वसेद्ध्रुवम् ॥ ८९
त्रिजन्मनि वकः सोऽपि श्वेतहंसस्त्रिजन्मनि।
जन्मैकं शङ्खचिल्लश्च ततोऽन्ये श्वेतपक्षिणः ॥ ९०
ततो रक्तविकारी च शूली च मानवो भवेत्।
सप्तजन्मसु चाल्पायुस्ततः शुद्धो भवेन्नरः ॥ ९१
रैत्यकांस्यादिपात्रञ्च यो हरेत् सुरविप्रयोः।
तीक्ष्णपाषाणकुण्डे च स्वलोमाब्दं वसेद्ध्रुवम् ॥ ९२
स भवेदश्वजातिश्च भारते सप्तजन्मसु।
ततोऽधिकाङ्गजातिश्च पादरोगी ततः शुचिः ॥ ९३

पुंश्चल्यन्नञ्च यो भुङ्क्ते पुंश्चलीजीव्यजीवनः।
स्वलोममानवर्षञ्च लालाकुण्डे वसेद्ध्रुवम् ॥ ९४
ताड़ितो मम दूतेन तद्भोजी तत्र तिष्ठति।
ततश्चक्षुःशूलरोगी ततः शुद्धः क्रमेण च ॥ ९५
म्लेच्छसेवी मसीजीवी यो विप्रो भारते भुवि।
स च तप्तमसीकुण्डे स्वलोमाब्दं वसेद्ध्रुवम् ॥ ९६
ताड़ितो मम दूतेन तद्भोजी तत्र तिष्ठति।
तत्र त्रिजन्मनि भवेत् कृष्णवर्णपशुः सति ॥ ९७
त्रिजन्मनि भवेच्छागः कृष्णसर्पस्त्रिजन्मनि।
ततश्च तालवृक्षश्च ततः शुद्धो भवेन्नरः ॥ ९८
धान्यादिशस्यं ताम्बूलं यो हरेत् सुरविप्रयोः।
आसनञ्च तथा तल्पं चूर्णकुण्डं प्रयाति सः ॥ ९९
शताब्दं तत्र निवसेन्मम दूतेन ताड़ितः।
ततो भवेन्मेषजातिः कुक्कुटश्च त्रिजन्मनि ॥ १००
ततो भवेद्वामनश्च कासव्याधियुतो भुवि।
वंशहीनो दरिद्रश्च चाल्पायुश्च ततः शुचिः ॥ १०१
भोगं करोति विप्राणां हृत्वा द्रव्यञ्च यो नरः।
स वसेच्चक्रकुण्डञ्च शताब्दं दण्डताड़ितः ॥ १०२
ततो भवेन्मानवश्च तैलकारस्त्रिजन्मनि।
व्याधियुक्तो भवेद्रोगी वंशहीनस्ततः शुचिः ॥ १०३
बान्धवेषु च विप्रेषु करोति वक्रतां नरः।
प्रयाति वक्रकुण्डञ्च वसेत् तत्र युगं सति ॥ १०४
ततो भवेत् स वक्राङ्गो हीनाङ्गः सप्तजन्मसु।
दरिद्रो वंशहीनश्च भार्य्याहीनस्ततः शुचिः ॥ १०५
शयने कूर्म्ममांसञ्च ब्राह्मणो यो हि भक्षति।
कूर्म्मकुण्डे वसेत् सोऽपि शताब्दं कूर्म्मभक्षितः ॥ १०६
ततो भवेत् कूर्म्मजन्म त्रिजन्मनि च शूकरः।
त्रिजन्मनि विड़ालश्च मयूरश्च त्रिजन्मनि ॥ १०७
घृततैलादिकञ्चैव यो हरेत् सुरविप्रयोः।
स याति ज्वालाकुण्डञ्च भस्मकुण्डञ्च पातकी ॥ १०८
तत्र स्थित्वा शताब्दञ्च स भवेत् तैलपायिका।
सप्तजन्म मत्स्यरङ्गो मूषिकश्च ततः शुचिः ॥ १०९
सुगन्धितैलधात्रीञ्च गन्धद्रव्याण्यमेव वा।
भारते पुण्यवर्षे च यो हरेत् सुरविप्रयोः ॥ ११०
वसेद्दुर्गन्धकुण्डे च भवेद्गन्धो दिवानिशम्।
स्वलोममानवर्षञ्च ततो दुर्गन्धिका भवेत् ॥ १११
दुर्गन्धिका सप्तजन्म मृगनाभिस्त्रिजन्मनि।

सप्तजन्म सुगन्धिश्च ततो हि मानवो भवेत् ॥११२
बलेनैव खलत्वेन हिंसारूपेण वा सति ।
बलिष्ठश्च हरेद्भूमिं भारते परपैतृकीम् ॥ ११३
वसेत् तप्तशूर्म्मिग्राञ्च भवेत् तप्तो दिवानिशम् ।
तप्ततैले यथा जीवो दग्धो भ्रमति सन्ततम् ॥ ११४
भस्मसान्न भवत्येव भोगदेहो न नश्यति ।
सप्तमन्वन्तरं पापी सन्तप्तस्तत्र तिष्ठति ॥ ११५
शब्दं करोत्यनाहारो मम दूतेन ताडितः ।
षष्टिवर्षसहस्राणि विट्कृमिर्भारते ततः ॥ ११६
ततो भवेद्भूमिहीनो दरिद्रश्च ततः शुचिः ।
ततः स्वयोनिं सम्प्राप्य शुभकर्म्मा भवेत् पुनः ॥११७
छिनत्ति जीविनः खड्गैर्दयाहीनः सुदारुणः ।
नरघाती हन्ति नरमर्थलोभेन भारते ॥ ११८
असिपत्रे स च वसेद्यावदिन्द्राश्चतुर्दश ।
तेषु चेद्ब्राह्मणान् हन्ति शतमन्वन्तरं तदा ॥ ११९
छिन्नाङ्गश्च भवेत् पापी खड्गधारेण सन्ततम् ।
अनाहारः शब्दकृच्च मम दूतेन ताडितः ॥ १२०
सृगालः शतजन्मानि शतजन्मानि शूकरः ।
कुक्कुरः सप्तजन्मानि शृगालः सप्तजन्मसु ॥ १२१
व्याघ्रश्च सप्त जन्मानि वृकश्चैव त्रिजन्मनि ।
जन्मसप्त गण्डकश्च महिषश्च त्रिजन्मनि ॥ १२२
ग्रामं वा नगरं वापि दाहनं यः करोति च ।
क्षुरधारे वसेत् सोऽपि छिन्नाङ्गस्त्रियुगं सति ॥ १२३
ततः प्रेतो भवेत् सद्यो वह्निवक्त्रो भ्रमेन्महीम् ।
सप्तजन्मामेध्यभोजी खद्योतः सप्तजन्मसु ॥ १२४
ततो भवेन्महाशूली मानवः सप्तजन्मसु ।
सप्तजन्म गलत्कुष्ठी ततः शुद्धो भवेन्नरः ॥ १२५
परकर्णे मुखं दत्त्वा परनिन्दां करोति यः ।
परदोषे महाश्लाघी देवब्राह्मणनिन्दकः ॥ १२६
सूचीमुखे स च वसेत् सूचीविद्धो युगत्रयम् ।
ततो भवेद्वृश्चिकश्च सर्पश्च सप्तजन्मसु ॥ १२७
वज्रकीटः सप्तजन्म भस्मकीटस्ततः परम् ।
ततो भवेन्मानवश्च महाव्याधिस्ततः शुचिः ॥ १२८
गृहिणाञ्च गृहं भित्त्वा वस्तुस्तेयं करोति यः ।
गाश्च छागांश्च मेषांश्च याति गोधामुखञ्च सः ॥१२९
ततो भवेत् सप्तजन्म गोजातिर्व्याधिसंयुता ।
त्रिजन्म मेषजातिश्च छागजातिस्त्रिजन्मनि ॥ १३०
ततो भवेन्मानवश्च नित्यरोगी दरिद्रकः ।
भार्य्याहीनो बन्धुहीनः सन्तापितस्ततः शुचिः ॥ १३१
सामान्यद्रव्यचौरश्च याति नक्रमुखं युगम् ।
ततो भवेन्मानवश्च महारोगी ततः शुचिः ॥ १३२
हन्ति गाश्च गजांश्चैव तुरगांश्च नरांस्तथा ।
स याति गजदंशञ्च महापापी युगत्रयम् ॥ १३३
ताडितो मम दूतेन गजदन्तेन सन्ततम् ।
स भवेद्गजजातिश्च तुरगश्च त्रिजन्मनि ।
गोजातिर्म्लेच्छजातिश्च ततः शुद्धो भवेन्नरः ॥ १३४
जलं पिबन्तीं तृषितां गां वारयति यो नरः ।
तच्छुश्रूषाविहीनश्च गोमुखं याति मानवः ॥ १३५
नरकं गोमुखाकारं कृमितप्तोदकान्वितम् ।
तत्र तिष्ठति सन्तप्तो यावन्मन्वन्तरावधि ॥ १३६
ततो नरोऽपि गोहीनो महारोगी दरिद्रकः ।
सप्तजन्मान्त्यजातिश्च ततः शुद्धो भवेन्नरः ॥ १३७
गोहत्यां ब्रह्महत्याञ्च यः करोत्यातिदेशिकीम् ।
यो हि गच्छेदगम्याञ्च सन्ध्याहीनोऽप्यदीक्षितः॥१३८
प्रतिग्राही यस्तीर्थेषु ग्रामयाजी च देवलः ।
शूद्राणां सूपकारश्च प्रमत्तो वृषलीपतिः ॥ १३९
गोहत्यां ब्रह्महत्याञ्च स्त्रीहत्याञ्च करोति यः ।
भिक्षुहत्यां भ्रूणहत्यां महापापी च भारते ॥ १४०
कुम्भीपाके स च वसेद् यावदिन्द्राश्चतुर्दश ।
ताडितो मम दूतेन घूर्णमानश्च सन्ततम् ॥ १४१
क्षणं पतति वह्नौ च क्षणं पतति कण्टके ।
क्षणाच्च तप्ततैलेषु तप्ततोयेषु च क्षणम् ॥ १४२
क्षणाच्च तप्तपाषाणे तप्तलौहे क्षणं ततः ।
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः ॥ १४३
काकश्च सप्त जन्मानि सर्पश्च सप्तजन्मसु ।
षष्टिं वर्षसहस्राणि ततश्च विट्कृमिर्भवेत् ॥ १४४
ततो भवेत् स वृषलो गलत्कुष्ठी दरिद्रकः ।
यक्ष्मग्रस्तो वंशहीनो भार्य्याहीनस्ततः शुचिः ॥१४५

सावित्र्युवाच ।

ब्रह्महत्याञ्च गोहत्यां किंविधामातिदेशिकीम् ।
का वा नृणामगम्या वा को वा सन्ध्याविहीनकः॥१४६
अदीक्षितः पुमान् को वा को वा तीर्थे प्रतिग्रही ।
द्विजः को वा ग्रामयाजी को वा विप्रश्च देवलः ॥१४७
शूद्राणां सूपकारश्च प्रमत्तो वृषलीपतिः ।

एतेषां लक्षणं सर्व्वं वद वेदविदां वर ॥ १४८
यम उवाच।
श्रीकृष्णे च तदर्च्चायां मृण्मय्यां प्रकृतौ तथा।
शिवे च शिवलिङ्गे च सूर्य्ये सूर्य्यमणौ तथा ॥ १४९
गणेशे वा तदर्च्चायामेवं सर्व्वत्र सुन्दरि।
यः करोति भेदबुद्धिं ब्रह्महत्यां लभेत्तु सः ॥ १५०
स्वगुरौ स्वेष्टदेवेषु जन्मदातरि मातरि।
करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत्तु सः ॥ १५१
वैष्णवेष्वन्यभक्तेषु ब्राह्मणेष्वितरेषु च।
करोति समतां यो हि ब्रह्महत्यां लभेत्तु सः ॥१५२
यो मूढ़ो विष्णुनैवेद्ये चान्यनैवेद्यके तथा।
हरेः पादोदकेष्वन्यदेवपादोदके तथा।
करोति समतां यो हि ब्रह्महत्यां लभेत्तु सः ॥१५३
सर्व्वेश्वरेश्वरे कृष्णे सर्व्वकारणकारणे।
सर्व्वाद्ये सर्व्वदेवानां सेव्ये सर्व्वात्मनीश्वरे ॥ १५४
माययानेकरूपे वाप्येक एव हि निर्गुणे।
करोत्यन्येन समतां ब्रह्महत्यां लभेत्तु सः ॥ १५५
पितृदेवार्च्चनं पौर्व्वापरवेदविनिर्म्मितम्।
यः करोति निषेधञ्च ब्रह्महत्यां लभेत्तु सः ॥ १५६
ये निन्दन्ति हृषीकेशं तन्मन्त्रोपासकं तथा।
पवित्राणां पवित्रञ्च ब्रह्महत्यां लभन्ति ते ॥ १५७
ये निन्दन्ति विष्णुमायां विष्णुभक्तिप्रदां सति।
सर्व्वशक्तिस्वरूपाञ्च प्रकृतिं सर्व्वमातरम्। १५८
सर्व्वदेवीस्वरूपाञ्च सर्व्वाद्यां सर्व्ववन्दिताम्।
सर्व्वकारणरूपाञ्च ब्रह्महत्यां लभन्ति ते ॥ १५९
कृष्णजन्माष्टमीं रामनवमीं पुण्यदां पराम्।
शिवरात्रिं तथाचैकादशीं वारं रवेस्तथा ॥ १६०
पञ्चपर्व्वाणि पुण्यानि ये न कुर्व्वन्ति मानवाः।
लभन्ते ब्रह्महत्यां ते चाण्डालाधिकपापिनः ॥१६१
अम्बुवाच्यां भूखननं जले शौचादिकञ्च ये।
कुर्व्वन्ति भारते वर्षे ब्रह्महत्यां लभन्ति ते ॥ १६२
गुरुञ्च मातरं तातं साध्वीं भार्य्यां सुतं सुताम्।
एतांश्च यो न पुष्णाति ब्रह्महत्यां लभेत्तु सः ॥ १६३
विवाहो यस्य न भवेन्न पश्यति सुतञ्च यः।
हरिभक्तिविहीनो यो ब्रह्महत्यां लभेद्ध्रुवम् ॥ १६४
हरेरनैवेद्यभोजी नित्यं विष्णुं न पूजयेत्।
पुण्यं पार्थिवलिङ्गं वा ब्रह्महत्यां लभेत्त सः ॥ १६५
आहारं कुर्व्वतीं गाञ्च पिबन्तीं यो निवारयेत्।
याति गोविप्रयोर्म्मध्ये गोहत्याञ्च लभेत्तु सः ॥१६६
दण्डैर्गांस्ताड़येन्मूढ़ो यो विप्रो वृषवाहकः।
दिने दिने गवां हत्यां लभते नात्र संशयः ॥ १६७
ददाति गोभ्य उच्छिष्टं याजयेद्वृषवाहकम्।
भोजयेद्वृषवाहान्नं स गोहत्यां लभेद्ध्रुवम् ॥ १६८
वृषलीपतिं याजयेद्यो भुङ्क्तेऽन्नं तस्य यो नरः।
गोहत्याशतकं सोऽपि लभते नात्र संशयः ॥ १६९
पादं ददाति वह्नौ च गाञ्च पादेन ताड़येत्।
गृहं विशेदधौताङ्घ्रिः स्नात्वा गोवधमालभेत् ॥ १७०
यो भुङ्क्तेऽस्निग्धपादेन शेते स्निग्धाङ्घ्रिरेव च।
सूर्य्योदये च द्विर्भोजी स गोहत्यां लभेद्ध्रुवम् ॥ १७१
अवीरान्नञ्च यो भुङ्क्ते योनिजीवी च ब्राह्मणः।
यस्त्रिसन्ध्याविहीनश्च ब्रह्महत्यां लभेद्ध्रुवम् ॥ १७२
पितॄंश्च पर्व्वकाले च तिथिकाले च देवताः।
न सेवतेऽतिथिं यो हि गोहत्यां स लभेद्ध्रुवम् ॥ १७३
स्वभर्त्तरि च कृष्णे च भेदबुद्धिं करोति या।
कटूक्त्या ताड़येत् कान्तं सा गोहत्यां लभेद्ध्रुवम्॥१७४
गोमार्गखननं कृत्वा ददाति शस्यमेव च।
तड़ागे वा तदूर्द्ध्वे वा स गोहत्यां लभेद्ध्रुवम् ॥ १७५
प्रायश्चित्तं गोवधस्य यः करोति व्यतिक्रमम्।
अर्थलोभादथाज्ञानात् स गोहत्यां लभेद्ध्रुवम् ॥१७६
राजके दैवके यत्नाद्गोस्वामी गां न पालयेत्।
दुःखं ददाति यो मूढ़ो गोहत्यां स लभेद्ध्रुवम्॥१७७
प्राणिनं लङ्घयेद्यो हि देवार्च्चामनलं जलम्।
नैवेद्यं पुष्पमन्नञ्च गोहत्यां लभते ध्रुवम्॥ १७८
शश्वन्नास्तीति वादी यो मिथ्यावादी प्रतारकः।
देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद्ध्रुवम् ॥ १७९
देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं सति।
सम्भ्रमान्न नमेद्यो हि स गोहत्यां लभेद्ध्रुवम् ॥१८०
न ददात्याशिषं कोपात् प्रणताय च यो द्विजः।
विद्यार्थिने च विद्याञ्च स गोहत्यां लभेद्ध्रुवम् ॥ १८१
गोहत्या ब्रह्महत्या च कथिता चातिदेशिकी।
यथा श्रुतं सूर्य्यवक्त्रात् किं भूयः श्रोतुमिच्छसि॥१८२
सावित्र्युवाच।
वास्तवे चातिदेशे च सम्बन्धे पापपुण्ययोः।
न्यूनाधिक्ये च को भेदस्तन्मां व्याख्यातुमर्हसि ॥१८३

यम उवाच।

कुत्रापि वास्तवः श्रेष्ठो न्यूनातिदैशिकः सति।
कुत्रातिदैशिकः श्रेष्ठो वास्तवो न्यून एव च॥ १८४
कुत्र वा समता साध्वि तयोर्वेदप्रमाणतः।
करोति तत्र नाश्यां यो गुरुहत्यां लभेत्तु सः॥ १८५
पुरापरिचये विप्रे विद्यामन्त्रप्रदातरि।
गुरौ पितृत्वमारोपो वास्तवाच्छ्रेष्ठ उच्यते॥ १८६
पितुः शतगुणे माता मातुः शतगुणे तथा।
विद्यामन्त्रप्रदाता च गुरुः पूज्यः श्रुतेर्मतः॥ १८७
गुरुतो गुरुपत्नी च गौरवेण गरीयसी।
यथेष्टदेवपत्नी च पूज्या चाभीष्टदेवता॥ १८८
विप्रः शिवसमोऽयञ्च विष्णुतुल्यपराक्रमः।
राजातिदैशिकाच्छ्रेष्ठो वास्तवो गुणलक्षतः॥ १८९
सर्व्वं गङ्गासमं तोयं सर्व्वे व्याससमा द्विजाः।
ग्रहणे सूर्य्यशशिनोस्तत्रैव समता तयोः॥ १९०
आतिदैशिकहत्याया वास्तवश्च चतुर्गुणः।
सम्मतः सर्व्वदेवानामित्याह कमलोद्भवः॥ १९१
आतिदैशिकहत्याया भेदश्च कथितः सति।
या यागम्या नृणामेव निबोध कथयामि ते॥ १९२
स्वस्त्री गम्या च सर्व्वेषामिति वेदनिरूपितम्।
अगम्या च तदन्या या इति वेदविदो विदुः॥ १९३
सामान्यं कथितं सर्व्वं विशेषं शृणु सुन्दरि।
अत्यगम्याश्च या याश्च निबोध कथयामि ते॥ १९४
शूद्राणां विप्रपत्नी च विप्राणां शूद्रकामिणी।
अत्यगम्या च निन्द्या च लोके वेदे पतिव्रते॥ १९५
शूद्रश्च ब्राह्मणीं गच्छन् ब्रह्महत्याशतं लभेत्।
तत्समं ब्राह्मणी चापि कुम्भीपाकं व्रजेद्ध्रुवम्॥ १९६
यदि शूद्रां व्रजेद्विप्रो वृषलीपतिरेव सः।
स भ्रष्टो विप्रजातेश्च चण्डालात् सोऽधमः स्मृतः॥१९७
विष्ठासमश्च तत्पिण्डो मूत्रतुल्यञ्च तर्पणम्।
तत्पितॄणां सुराणाञ्च पूजने तत्समं सति॥ १९८
कोटिजन्मार्ज्जितं पुण्यं सन्ध्यार्च्चातपसार्ज्जितम्।
द्विजस्य वृषलीभोगान्नश्यत्येव न संशयः॥ १९९
ब्राह्मणश्च सुरापीती विड्भोजी वृषलीपतिः।
हरिवासरभोजी च कुम्भीपाकं व्रजेद्ध्रुवम्॥ २००
गुरुपत्नीं राजपत्नीं सपत्नीमातरं प्रसूम्।
सुतां पुत्रवधूं श्वश्रूं सगर्भां भगिनीं सति॥ २०१
सोदरभ्रातृजायाञ्च मातुलानीं पितृप्रसूम्।
मातुः प्रसूं तत्स्वसारं भगिनीं भ्रातृकन्यकाम्॥ २०२
शिष्याञ्च शिष्यपत्नीञ्च भागिनेयस्य कामिनीम्।
भ्रातृपुत्रप्रियाञ्चैवात्यगम्यामाह पद्मजः॥ २०३
एतास्वेकामनेकां वा यो व्रजेन्मानवोऽधमः।
समातृगामी वेदेषु ब्रह्महत्याशतं लभेत्॥ २०४
अकर्म्मार्होऽपि सोऽस्पृश्यो लोके वेदेऽतिनिन्दितः।
स याति कुम्भीपाकञ्च महापापी सुदुष्करम्॥ २०५
करोत्यशुद्धां सन्ध्याञ्च सन्ध्यां वा न करोति यः।
त्रिसन्ध्यं वर्ज्जयेद्वा यो वा सन्ध्याहीनश्च स द्विजः॥२०६
वैष्णवञ्च तथा शैवं शाक्तं सौरञ्च गाणपम्।
योऽहङ्कारान्न गृह्णाति मन्त्रं सोऽदीक्षितः स्मृतः२०७
प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम्।
तत्र नारायणः स्वामी गङ्गागर्भान्तरे वरे॥ २०८
तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे।
वाराणस्यां वदर्य्याञ्च गङ्गासागरसङ्गमे॥ २०९
पुष्करे भास्करक्षेत्रे प्रभासे रासमण्डले।
हरिद्वारे च केदारे सोमे वदरपाचने॥ २१०
सरस्वतीनदीतीरे पुण्ये वृन्दावने वने।
गोदावर्य्याञ्च कौशिक्यां त्रिवेण्याञ्च हिमालये॥२११
एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः।
स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च॥ २१२
शूद्रातिरिक्तयाजी यो ग्रामयाजी च कीर्त्तितः।
देवद्रव्योपजीवी च देवलः परिकीर्त्तितः॥ २१३
शूद्रपाकोपजीवी यः सूपकार इति स्मृतः।
सन्ध्यापूजाविहीनश्च प्रमत्तः पतितः स्मृतः॥ २१४
उक्तं पूर्व्वप्रकरणे लक्षणं वृषलीपतेः॥ २१५
एते महापातकिनः कुम्भीपाकं प्रयान्ति ते।
कुण्डान्यन्यानि ये यान्ति निबोध कथयामि ते॥२१६

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
सावित्र्युपाख्याने पापिनरकनिरूपणं
नाम त्रिंशोऽध्यायः॥३०॥

## एकत्रिंशोऽध्यायः।

यम उवाच।

हरिसेवां विना साध्वि न भवेत् कर्म्मखण्डनम्।
शुभकर्म्म स्वर्गवीजं नरकञ्च कुकर्म्मणा॥ १

पुंश्चल्यन्नञ्च यो भुङ्क्ते वेश्यान्नञ्च पतिव्रते।
ते तु व्रजेद्द्विजो यो हि कालसूत्रं प्रयाति सः॥२
शतवर्षं कालसूत्रे स्थित्वा शूद्रो भवेद्ध्रुवम्।
तत्र जन्मनि रोगी च ततः शुद्धो भवेद्द्विजः॥३
पतिव्रता चैकपत्नी द्वितीये कुलटा स्मृता।
तृतीये धर्षिणी ज्ञेया चतुर्थे पुंश्चली स्मृता॥४
वेश्या च पञ्चमे षष्ठे युग्मी (क) च सप्तमेऽष्टमे।
अत ऊर्द्ध्वं महावेश्या साऽस्पृश्या सर्व्वजातिषु॥५
यो द्विजः कुलटां गच्छेद्धर्षिणीं पुंश्चलीमपि।
युग्मीं वेश्यां महावेश्यामवटोदं प्रयाति सः॥६
शताब्दं कुलटागामी धृष्टागामी चतुर्गुणम्।
षड्गुणं पुंश्चलीगामी वेश्यागामी गुणाष्टकम्॥७
युग्मीगामी दशगुणं वसेत् तत्र न संशयः।
महावेश्यागामुकश्च ततः शतगुणं वसेत्॥८
तत्रैव सर्व्वगामी चेत्येवमाह पितामहः।
तत्रैव यातनां भुङ्क्ते मम दूतेन ताड़ितः॥९
तित्तिरिः कुलटागामी धृष्टागामी च वायसः।
कोकिलः पुंश्चलीगामी वेश्यागामी वृकस्तथा॥१०
युग्मीगामी शूकरश्च सप्तजन्मसु भारते।
महावेश्यागामुकश्च श्मशाने शाल्मलिस्तरुः॥११
यो भुङ्क्ते ज्ञानहीनश्च ग्रहणे चन्द्रसूर्य्ययोः।
अरुन्तुदं स यात्येव चन्द्रमानाब्दमेव च॥१२
ततो भवेन्मानवश्च उदरीव्याधिसंयुतः।
गुल्मयुक्तश्च काणश्च दन्तहीनस्ततः शुचिः॥१३
वाक्प्रदत्ताञ्च कन्याञ्च यश्चान्यस्मै ददाति च।
स वसेत् पांशुभोजे च तद्भोजी च शताब्दकम्॥१४
दत्तापहारी यः साध्वि पाशवेष्टं शताब्दकम्।
निवसेत् शरशय्यायां मम दूतेन ताड़ितः॥१५
न पूजयेद्यो हि भक्त्या शिवलिङ्गञ्च पार्थिवम्।
स याति शूलिनः कोपात् शूलप्रोतं सुदारुणम्॥१६
स्थित्वा शताब्दं तत्रैव श्वापदः सप्तजन्मसु।
ततो भवेद्देवलश्च सप्तजन्म ततः शुचिः॥१७
करोति दण्डं यो विप्रं यद्भयात् कम्पते द्विजः।
प्रकम्पने वसेत् सोऽपि विप्रलोमाब्दमेव च॥१८
प्रकोपवदना कोपात् स्वामिनं या च पश्यति।
कटूक्तिं तञ्च वदति याति चोल्कामुखञ्च सा॥१९
उल्कां ददाति वक्त्रे च सन्ततं मम किङ्करः।
दण्डेन ताड़येन्मूर्ध्नि तल्लोमाब्दप्रमाणकम्॥२०
ततो भवेन्मानवी च विधवा सप्तजन्मसु।
भुक्त्वा दुःखञ्च वैधव्यं व्याधियुक्ता ततः शुचिः॥२१
या ब्राह्मणी शूद्रभोग्या साऽन्धकूपं प्रयाति च।
तप्तशौचोदके ध्वान्ते तदाहारा दिवानिशम्॥२२
निवसेदतिसन्तप्ता मम दूतेन ताड़िता।
शौचोदके निमग्ना च यावदिन्द्राश्चतुर्द्दश॥२३
काकी जन्मसहस्राणि शतजन्मानि शूकरी।
कुक्कुरी शतजन्मानि शृगाली सप्तजन्मसु॥२४
पारावती सप्तजन्म वानरी सप्तजन्मसु।
ततो भवेत् सा चण्डाली सर्व्वभोग्या च भारते॥२५
ततो भवेच्च रजकी यक्ष्मग्रस्ता च पुंश्चली।
ततः कुष्ठयुता तैल-कारी शुद्धा भवेत् ततः॥२६
वेश्या वसेद्वेधने च युग्मी च दण्डताड़ने।
जालबद्धे महावेश्या कुलटा देहचूर्णके॥२७
स्वैरिणी दलने चैव धृष्टा च शोषणे तथा।
निवसेद्यातनायुक्ता मम दूतेन ताड़िता॥२८
विण्मूत्रभक्षणं तत्र यावन्मन्वन्तरं सति।
ततो भवेद्विट्क्रमिश्च वर्षलक्षं ततः शुचिः॥२९
ब्राह्मणो ब्राह्मणीं गच्छेत् क्षत्रियामपि क्षत्रियः।
वैश्यो वैश्याञ्च शूद्राञ्च शूद्रो वापि व्रजेद्यदि॥३०
स्ववर्णपरदारी च कषं याति तया सह।
भुक्त्वा कषायतप्तोदं निवसेद्द्वादशाब्दकम्॥३१
ततो विप्रो भवेच्छुद्धश्चैवञ्च क्षत्रियादयः।
योषितश्चापि शुध्यन्तीत्येवमाह पितामहः॥३२
क्षत्रियो ब्राह्मणीं गच्छेद् वैश्यो वापि पतिव्रते।
मातृगामी भवेत् सोऽपि शूलञ्च नरकं व्रजेत्॥३३
शूर्पाकारैश्च क्रमिभिर्ब्राह्मण्या सह भक्षितः।
प्रतप्तमूत्रभोजी च मम दूतेन ताड़ितः॥३४
तत्रैव यातनां भुङ्क्ते यावदिन्द्राश्चतुर्द्दश।
जन्मसप्त वराहश्च छागलश्च ततः शुचिः॥३५
करे धृत्वा च तुलसीं प्रतिज्ञां यो न पालयेत्।
मिथ्या वा शपथं कुर्य्यात् स च ज्वालामुखं व्रजेत्॥३६
गङ्गातोयं करे धृत्वा प्रतिज्ञां यो न पालयेत्।
शिलां वा देवप्रतिमां स च ज्वालामुखं व्रजेत्॥३७
मित्रद्रोही कृतघ्नश्च यो हि विश्वासघातकः।

(क) सर्व्वत्र युग्मीत्यत्र युग्नेति क्वचित् पाठः।

मिथ्यासाच्यप्रदश्चैव स च ज्वालामुखं व्रजेत् ॥ ३८
एते तत्र वसन्त्येव यावदिन्द्राश्चतुर्द्दश।
यथाङ्गारप्रदग्धाश्च मम दूतैश्च ताडिताः ॥ ३९
चण्डालस्तुलसीस्पर्शी सप्तजन्म ततः शुचिः।
म्लेच्छो गङ्गाजलस्पर्शी पञ्चजन्म ततः शुचिः ॥ ४०
शिलास्पर्शी विट्कृमिश्च सप्तजन्म च सुन्दरि।
अर्च्चास्पर्शी व्रणकृमिर्जन्मसप्त ततः शुचिः ॥ ४१
दक्षहस्तप्रदाता च सर्पश्च सप्तजन्मसु।
ततो भवेद्धस्तहीनो मानवश्च ततः शुचिः ॥ ४२
मिथ्यावादी देवगृहे देवलः सप्तजन्मसु।
विप्रादि सूपकारी यः सोऽग्रदानी भवेद्ध्रुवम् ॥ ४३
ततो भवन्ति मूकास्ते बधिराश्च त्रिजन्मनि।
भार्य्याहीना वंशहीना बुद्धिहीनास्ततः शुचिः ॥४४
मित्रद्रोही च नकुलः कृतघ्नश्चापि गण्डकः।
विश्वासघाती व्याघ्रश्च सप्तजन्मसु भारते ॥ ४५
मिथ्यासाच्यप्रदश्चैव भल्लूकः सप्तजन्मसु।
पूर्व्वान् सप्त परान् सप्त पुरुषान् हन्ति चात्मनः ॥ ४६
नित्यक्रियाविहीनश्च जड़त्वेन युतो द्विजः।
यस्यानास्था वेदवाक्ये मन्दं हसति सन्ततम् ॥ ४७
व्रतोपवासहीनश्च सद्वाक्यपरनिन्दकः।
जिह्मे जिह्मो वसेत् सोऽपि शताब्दञ्च हिमोदके ॥४८
जलजन्तुर्भवेत् सोऽपि शतजन्म क्रमेण च।
ततो नानाप्रकारश्च मत्स्यजातिस्ततः शुचिः ॥ ४९
यः करोत्यपहारञ्च देवब्राह्मणयोर्धनम्।
पातयेत् स स्वपुरुषान् दश पूर्व्वान् दशापरान् ॥५०
स्वयं याति च धूमान्धं धूमध्वान्तसमन्वितम्।
धूमक्लिष्टो धूमभोजी वसेत् तत्र चतुर्युगम् ॥ ५१
ततो मूषिकजातिश्च शतजन्मानि भारते।
ततो नानाविधाः पक्षि-जातयः कृमिजातयः ॥५२
ततो नानाविधा वृक्ष-जातयश्च ततो नरः।
भार्य्याहीनो वंशहीनो शवरो व्याधिसंयुतः ॥ ५३
ततो भवेत् स्वर्णकारः स सुवर्णवणिक् ततः।
ततो यवनसेवी च ब्राह्मणो गणकस्ततः ॥ ५४
विप्रो देवलोपजीवी वैद्यजीवी चिकित्सकः।
लाक्षालौहादिव्यापारी रसादिविक्रयी च यः॥ ५५
स याति नागवेष्टञ्च नागैर्व्वेष्टित एव च।
वसेत् स्वलोममानाब्दं तत्रैव नागदंशितः ॥ ५६
ततो भवेत् स गणको वैद्यश्च सप्तजन्मसु।
गोपश्च कर्म्मकारश्च शङ्खकारस्ततः शुचिः ॥ ५७
प्रसिद्धानि च कुण्डानि कथितानि पतिव्रते।
अन्यानि चाप्रसिद्धानि क्षुद्राणि तत्र सन्ति वै ॥ ५८
सन्ति पातकिनस्तेषु स्वकर्म्मफलभोगिनः।
भ्रमन्ति नानायोनिं ते किं भूयः श्रोतुमिच्छसि ॥ ५९

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारद-संवादे सावित्र्युपाख्याने सावित्रीयमसंवादे कुण्डपापिनिर्णयो नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः।

सावित्र्युवाच।

धर्म्मराज महाभाग वेदवेदाङ्गपारग।
नानापुराणेतिहासपञ्चरात्रप्रदर्शक ॥ १
सर्व्वेषु सारभूतं यत् सर्व्वेष्टं सर्व्वसम्मतम्।
कर्म्मच्छेदवीजरूपं प्रशस्यं सुखदं नृणाम् ॥ २
यशःप्रदं धर्म्मदञ्च सर्व्वमङ्गलमङ्गलम्।
येन यामीं न ते यान्ति यातनां भवदुःखदाम् ॥ ३
कुण्डानि च न पश्यन्ति तत्र नैव पतन्ति च।
न भवेद्येन जन्मादि तत् कर्म्म वद सुव्रत ॥ ४
किमाकाराणि कुण्डानि कति तेषां मितानि च।
केन रूपेण तत्रैव तिष्ठन्ति पापिनः सदा ॥ ५
स्वदेहे भस्मसाद्भूते यान्ति लोकान्तरं नराः।
केन देहेन वा भोगं भुञ्जते वा शुभाशुभम् ॥ ६
सुचिरं क्लेशभोगेन कथं देहो न नश्यति।
देहो वा किंविधो ब्रह्मंस्तन्मे व्याख्यातुमर्हसि ॥ ७
सावित्रीवचनं श्रुत्वा धर्म्मराजो हरिं स्मरन्।
कथां कथितुमारेभे गुरुं नत्वा च नारद ॥ ८

यम उवाच।

वत्से चतुर्षु वेदेषु धर्म्मेषु संहितासु च।
पुराणेष्वितिहासेषु पञ्चरात्रादिकेषु च ॥ ९
अन्येषु सर्व्वशास्त्रेषु वेदाङ्गेषु च सुव्रते।
सर्व्वेष्टसारभूतञ्च मङ्गलं कृष्णसेवनम् ॥ १०
जन्म-मृत्यु-जरा-रोग-शोक-सन्तापतारणम्।
सर्व्वमङ्गलरूपञ्च परमानन्दकारणम् ॥ ११

कारणं सर्व्वसिद्धीनां नरकार्णवतारणम्।
भक्तिवृक्षाङ्कुरकरं कर्म्मवृक्षनिकृन्तनम् ॥ १२
गोलोकमार्गसोपान-मविनाशिपदप्रदम्।
सालोक्य-सार्ष्टि-सारूप्य-सामीप्यादिप्रदं शुभे ॥ १३
कुण्डानि यमदूतञ्च यमञ्च यमकिङ्करान्।
न हि पश्यन्ति स्वप्नेन श्रीकृष्णकिङ्कराः सति ॥ १४
हरिव्रतं ये कुर्व्वन्ति गृहिणः कर्म्मभोगिनः।
ये स्नान्ति हरितीर्थे च नाश्नन्ति हरिवासरे ॥ १५
प्रणमन्ति हरिं नित्यं हर्य्यर्च्चां पूजयन्ति च।
न यान्ति ते च घोराञ्च नराः संयमनीं पुरीम् ॥ १६
त्रिसन्ध्यपूता विप्राश्च शुद्धाचारसमन्विताः।
स्वधर्म्मनिरताः शान्ता न यान्ति यममन्दिरम् ॥१७
ते स्वर्गभोगिनोऽन्ये च शुद्धा दैवान्यकिङ्कराः।
यान्त्यायान्ति च स्वर्गञ्च मर्त्यञ्च न हि निर्वृताः ॥१८
निर्व्वृतिं न हि लभन्ति कृष्णसेवां विना नराः।
स्वधर्म्मनिरताश्चापि स्वधर्म्मविरतास्तथा ॥ १९
गच्छन्तो मर्त्यलोकञ्च दुर्द्धर्षा मम किङ्कराः।
भीताः कृष्णोपासकाच्च वैनतेयादिवोरगाः ॥ २०
स्वदूतं पाशहस्तञ्च गच्छन्तं तं वदाम्यहम्।
यास्यसीति च सर्व्वत्र हरिभक्ताश्रमं विना ॥ २१
कृष्णमन्त्रोपासकानां नामानि च निकृन्तनम्।
करोति नखराञ्जल्या चित्रगुप्तश्च भीतवत् ॥ २२
मधुपर्कादिकं ब्रह्मा तेषाञ्च कुरुते पुनः।
विलङ्घ्य ब्रह्मलोकञ्च गोलोकं गच्छतां सताम् ॥२३
दुरितानि च नश्यन्ति तेषां संस्पर्शमात्रतः।
यथा सुप्रज्वलद्वह्नौ शुष्काणि च तृणानि च ॥ २४
प्राप्नोति मोहः सम्मोहं तांश्च दृष्ट्वा च भीतवत्।
कामश्च कामिनं याति लोभक्रोधौ ततः सति ॥ २५
मृत्युः पलायते रोगो जरा शोको भयं तथा।
कालः शुभाशुभं कर्म्म हर्षशोकभयं तथा ॥ २६
ये ये न यान्ति यामीं तां कथितास्ते मया सति।
शृणु देहविवरणं कथयामि यथागमम् ॥ २७
पृथिवी वायुराकाशं तेजस्तोयमिति स्फुटम्।
देहिनां देहवीजञ्च स्रष्टुः सृष्टिविधौ परम् ॥ २८
पृथिव्यादिपञ्चभूतैर्यो देहो निर्म्मितो भवेत्।
स कृत्रिमो नश्वरश्च भस्मसाच्च भवेदिह ॥ २९
वृद्धाङ्गुष्ठप्रमाणञ्च यं जीवः पुरुषाकृतिः।
बिभर्त्ति देहं जीवन्तं तद्रूपं भोगहेतवे ॥ ३०
स देहो न भवेद्भस्म ज्वलदग्नौ ममालये।
जले न नष्टो देही वा प्रहारे सुचिरे कृते ॥ ३१
न शस्त्रे च न चास्त्रे च सुतीक्ष्णे कण्टके तथा।
तप्तद्रवे तप्तलौहे तप्तपाषाण एव च ॥ ३२
प्रतप्तप्रतिमाश्लेषेऽप्यत्यूर्द्ध्वपतनेऽपि च।
कथितो देवि वृत्तान्तः कारणञ्च यथागमम् ॥ ३३
कुण्डानां लक्षणं सर्व्वं निबोध कथयामि ते ॥ ३४

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारद-संवादे सावित्र्युपाख्याने यम-सावित्रीसंवादे द्वात्रिंशोऽध्यायः ॥३२॥

---

## त्रयस्त्रिंशोऽध्यायः।

यम उवाच।

पूर्णेन्दुमण्डलाकारं सर्व्वकुण्डञ्च वर्त्तुलम्।
अतीव निम्नं पाषाणभेदैश्च खचितं सति ॥ १
न नश्वरञ्चाप्रलयं निर्म्मितञ्चेश्वरेच्छया।
पातकिनां क्लेशदञ्च नानारूपं तदालयम् ॥ २
ज्वलदङ्गाररूपञ्च शतहस्तशिखान्वितम्।
परितः क्रोशमानञ्च वह्निकुण्डं प्रकीर्त्तितम् ॥ ३
महच्छब्दं प्रकुर्व्वद्भिः पापिभिः परिपूरितम्।
रक्षितं मम दूतैश्च ताड़ितैश्चापि सन्ततम् ॥ ४
प्रतप्तोदकपूर्णञ्च हिंस्रजन्तुसमन्वितम्।
महाघोरान्धकारञ्च पापिसंघेन सङ्कुलम् ॥ ५
प्रकुर्व्वता काकुशब्दं प्रहारैर्घूर्णितेन च।
क्रोशार्द्धमानं मद्दूतैस्ताड़ितेन च रक्षितम् ॥ ६
तप्तक्षारोदकैः पूर्णं नक्रैश्च परिवेष्टितम्।
सङ्कुलं पापिभिश्चैव क्रोशमानं भयानकम् ॥ ७
त्राहीति शब्दं कुर्व्वद्भिर्मम दूतैश्च ताड़ितैः।
प्रचलद्भिरनाहारैः शुष्ककण्ठौष्ठतालुकैः ॥ ८
विड्द्रवैरेव पूर्णञ्च क्रोशमानञ्च कुत्सितम्।
अतिदुर्गन्धसंयुक्तं व्याप्तं पापिभिरेव च ॥ ९
ताड़ितैर्मम दूतैश्च अनाहारैरुपद्रुतैः।
रक्षेति शब्दं कुर्व्वद्भिस्तत्कीटैरेव भक्षितैः ॥ १०
तप्तमूत्रद्रवैः पूर्णं मूत्रकीटैश्च सङ्कुलम्।
युक्तं महापापिभिश्च तत्कीटैर्दंशितैः सदा ॥ ११

गव्यूतिमानं ध्वान्तार्त्तं शब्दकृद्भिश्च सन्ततम्।
मद्दूतैस्ताडितैर्वीरैः शुष्ककण्ठौष्ठतालुकैः॥ १२
श्लेष्मपूर्णं क्रोशमितं तत्कीटैर्भक्षितैर्मुदा।
तद्भोजिभिः पापिभिश्च तत्कीटैर्भक्षितैः सदा॥ १३
क्रोशार्द्धं गरपूर्णञ्च गरभोजिभिरन्वितम्।
गरकीटैर्भक्षितैश्च पापिभिः पूर्णमेव च॥ १४
ताडितैर्मम दूतैश्च शब्दकृद्भिश्च कम्पितैः।
सर्पाकृतैर्वज्रदंष्ट्रैः शुष्ककण्ठैः सदारुणैः॥ १५
नेत्रयोर्मलपूर्णञ्च क्रोशार्द्धं कीटसंयुतम्।
पापिभिः सङ्कुलं शश्वत् कुर्व्वद्भिः कीटभक्षितैः॥ १६
वसारसेन पूर्णञ्च क्रोशतुर्य्यं सुदुःसहम्।
तद्भोजिभिः पातकिभिर्व्याप्तं दूतैश्च ताडितैः॥ १७
शुक्रपूर्णं क्रोशतुर्य्यं शुक्रकीटैश्च भक्षितैः।
क्रन्दद्भिः पापिभिः शश्वत् सङ्कुलं व्याकुलैर्भिया॥ १८
दुर्गन्धरक्तपूर्णञ्च वापीमानं गभीरकम्।
तद्भोजिभिः पापिभिश्च सङ्कुलं कीटभक्षितैः॥ १९
पूर्णं नेत्राश्रुभिर्नॄणां वाप्यर्द्धं पापिभिर्युतम्।
ताडितैर्मम दूतैन तद्भक्ष्यैः कीटभक्षितैः॥ २०
नॄणां गात्रमलैः पूर्णं तद्भक्ष्यैः पापिभिर्युतम्।
ताडितैर्मम दूतैश्च व्यग्रैश्च कीटभक्षितैः॥ २१
कर्णविट्परिपूर्णञ्च तद्भक्ष्यैः पापिभिर्युतम्।
वापीतुर्य्यप्रमाणञ्च रुदद्भिः कीटभक्षितैः॥ २२
त्राहीति शब्दं कुर्व्वद्भिस्त्रासितैश्च भयानकैः।
वापीतुर्य्यप्रमाणञ्च नखादिकचतुष्टयम्।
पापिभिः सङ्कुलं शश्वन्मम दूतैश्च ताडितैः॥ २३
प्रतप्तताम्रकुण्डञ्च ताम्रपर्य्युल्मुकान्वितम्।
ताम्राणां प्रतिमालक्षैः प्रतप्तैरावृतं सदा॥ २४
प्रत्येकं प्रतिमाश्लिष्टैः रुवद्भिः पापिभिर्युतम्।
गव्यूतिमानं विस्तीर्णं मम दूतैश्च ताडितैः॥ २५
प्रतप्तलौहधारञ्च ज्वलदङ्गारसंयुतम्।
लौहानां प्रतिमालक्षैः प्रतप्तैरावृतं सदा॥ २६
प्रत्येकं प्रतिमाश्लिष्टैः शश्वद्विचलितैर्भिया।
रक्ष रक्षेति शब्दञ्च कुर्व्वद्भिर्दूतताडितैः॥२७
महापातकिभिर्युक्तं द्विगव्यूतिप्रमाणकम्।
भयानकं ध्वान्तयुक्तं लौहकुण्डं प्रकीर्त्तितम्॥ २८
चर्म्मकुण्डं तप्तसुराकुण्डं वाप्यर्द्धमेव च।
तद्भोजिभिः पापिभिश्च व्याप्तं मद्दूतताडितैः॥ २९
अधः शाल्मलिवृक्षस्य तीक्ष्णकण्टककुण्डकम्।
लक्षपौरुषमानञ्च क्रोशमानञ्च दुःखदम्॥ ३०
धनुर्म्मानैः कण्टकैश्च सुतीक्ष्णैः परिवेष्टितम्।
प्रत्येकं कण्टकैर्विद्धं महापातकिभिर्युतम्॥ ३१
वृक्षाग्रान्निपतद्भिश्च मम दूतैश्च ताडितैः।
जलं देहीति शब्दञ्च कुर्व्वद्भिः शुष्कतालुकैः॥ ३२
महाभयातिव्यग्रैश्च दण्डेन भग्नमस्तकैः।
प्रचलद्भिर्यथा तप्ततैले जीविभिरेव च॥ ३३
विषौघैस्तक्षकादीनां पूर्णञ्च क्रोशमानकम्।
तद्भक्ष्यैः पापिभिर्युक्तं मम दूतैश्च ताडितैः॥ ३४
प्रतप्ततैलपूर्णञ्च कीटादिपरिवर्ज्जितम्।
तद्भक्ष्यैः पापिभिर्युक्तं दिग्धगात्रैश्च चेष्टितैः॥ ३५
काकुशब्दं प्रकुर्व्वद्भिश्चलद्भिर्दूतताडितैः।
महापातकिभिर्युक्तं द्विगव्यूतिप्रमाणकम्॥ ३६
शस्त्रकुण्डं ध्वान्तयुक्तं क्रोशमानं भयानकम्।
शूलाकारैः सुतीक्ष्णाग्रैर्लौहशस्त्रैश्च वेष्टितम्॥ ३७
शस्त्रतल्पस्वरूपञ्च क्रोशतुर्य्यप्रमाणकम्।
पातकिभिर्वेष्टितञ्च कुन्तविद्धैश्च चेष्टितैः॥ ३८
ताडितैर्मम दूतैश्च शुष्ककण्ठौष्ठतालुकैः।
कीटैः शकुलमानैश्च सर्पमानैर्भयङ्करैः॥ ३९
तीक्ष्णदन्तैश्च विकृतैर्व्याप्तं ध्वान्तयुतं सति।
महापातकिभिर्युक्तं भीतैश्च कीटभक्षितैः।
रुदद्भिः क्रोशमानञ्च मम दूतैन ताडितैः॥ ४०
अतिदुर्गन्धसंयुक्तं क्रोशार्द्धं पूयसंयुतम्।
तद्भक्ष्यैः पापिभिर्युक्तं मम दूतैन ताडितैः॥ ४१
द्विगव्यूतिप्रमाणञ्च हिमतोयप्रपूरितम्।
तालवृक्षप्रमाणैश्च सर्पकोटिभिरावृतम्॥ ४२
सर्पवेष्टितगात्रैश्च पापिभिः सर्पभक्षितैः।
सङ्कुलं शब्दकृद्भिश्च मम दूतैश्च ताडितैः॥ ४३
कुण्डत्रयं मशादीनां पूर्णञ्च मशकादिभिः।
सर्व्वं क्रोशार्द्धमानञ्च महापातकिभिर्युतम्॥ ४४
हस्तपादादिभिर्बद्धैः क्षतैः क्षतजलोहितैः।
हाहेति शब्दं कुर्व्वद्भिः प्रचलद्भिश्च सन्ततम्॥ ४५
वज्रवृश्चिकयोः कुण्डं ताभ्याञ्च परिपूरितम्।
वाप्यर्द्धं पापिभिर्युक्तं वज्रवृश्चिकदंशितैः॥ ४६
कुण्डत्रयं शरादीनां तैरेव परिपूरितम्।
तैर्विद्धैः पापिभिर्युक्तं वाप्यर्द्धं रक्तलोहितैः॥ ४७

तप्तपङ्कोदकैः पूर्णं सध्वान्तं गोलकुण्डकम् ।
विण्मूत्रश्लेष्मभक्ष्यैश्च संयुक्तं शतकोटिभिः ।
काकैश्च विकृताकारैर्धनुर्लक्षञ्च पापिभिः ॥ ४८
सञ्चानवाजयोः कुण्डं ताभ्याञ्च परिपूरितम् ।
भक्षितैः पापिभिर्युक्तं शब्दकृद्भिश्च सन्ततम् ॥ ४९
धनुःशतं वज्रयुक्तं पापिभिः सङ्कुलं सदा ।
शब्दकृद्भिर्वज्रदंष्ट्रैरन्तध्वान्तमयं सदा ॥ ५०
वापीद्विगुणमानञ्च तप्तप्रस्तरनिर्म्मितम् ।
ज्वलदङ्गारसदृशं चलद्भिः पापिभिर्युतम् ॥ ५१
क्षुरधारोपलैस्तीक्ष्णैः पाषाणैर्निर्म्मितं परम् ।
महापातकिभिर्युक्तं क्षतं क्षतजलोक्षितैः ॥ ५२
दुर्गन्धलालापूर्णञ्च तद्भक्ष्यैः पापिभिर्युतम् ।
क्रोशमानं गभीरञ्च मम दूतैश्च ताड़ितैः ॥ ५३
तप्ततोयाञ्जनाकारैः परिपूर्णं धनुःशतम् ।
चलद्भिः पापिभिर्युक्तं मम दूतेन ताड़ितैः ॥ ५४
कुण्डं कुलालचक्राभं घूर्णमानञ्च सन्ततम् ।
सुतीक्ष्णं षोड़शारञ्च घूर्णितैः पापिभिर्युतम् ॥ ५५
अतीव वक्रनिम्नञ्च द्विगव्यूतिप्रमाणकम् ।
कन्दराकारनिर्म्माणं तप्तोदकसमन्वितम् ॥ ५६
महापातकिभिर्युक्तं भक्षितैर्जलजन्तुभिः ।
चलद्भिः शब्दकृद्भिश्च ध्वान्तयुक्तं भयानकम् ॥ ५७
कोटिभिर्विकृताकारैः कच्छपैश्च सुदारुणैः ।
जलस्थैः संयुतं तैश्च भक्षितैः पापिभिर्युतम् ॥ ५८
ज्वालाकलापैस्तेजोभिर्निर्म्माणं क्रोशमानकम् ।
शब्दकृद्भिश्च कृमिभिः पापिभिः संयुतं सदा ॥ ५९
क्रोशमानं गभीरञ्च तप्तभस्मभिरन्वितम् ।
शश्वच्चलद्भिः संयुक्तं पापिभिभस्मभक्षितैः ॥ ६०
तप्तपाषाणलोष्ट्राणां समूहैः परिपूरितम् ।
पापिभिर्दग्धगात्रैश्च युक्तञ्च शुष्कतालुकैः ॥ ६१
क्रोशमानं ध्वान्तमयं गभीरमतिदारुणैः ।
ताड़ितैमम दूतैश्च दग्धकुण्डं प्रकीर्त्तितम् ॥ ६२
अतीवोर्म्मियुक्ततोयं प्रतप्तक्षारसंयुतम् ।
नानाप्रकारविकृत-जलजन्तुसमन्वितम् ॥ ६३
द्विगव्यतिप्रमाणञ्च गभीरं ध्वान्तसंयुतम् ।
तद्भक्ष्यैः पापिभिर्युक्तं दंशितैर्जलजन्तुभिः ॥ ६४
चलद्भिः क्रन्दमानैश्च न पश्यद्भिः परस्परम् ।
उत्तप्तात्यूर्म्मिकुण्डञ्च कीर्त्तितञ्च भयानकम् ॥ ६५
असिवद्धारपत्रस्याप्युच्चैस्तालतरोरधः ।
क्रोशार्द्धमानकुण्डञ्च पतत्पत्रसमन्वितम् ॥ ६६
पापिनां रक्तपूर्णञ्च वृक्षाग्रात् पततां परम् ।
परित्राहीति शब्दञ्च कुर्व्वतामसतामपि ॥ ६७
गभीरं ध्वान्तसंयुक्तं रक्तकीटसमन्वितम् ।
तदसीपत्रकुण्डञ्च कीर्त्तितञ्च भयानकम् ॥ ६८
धनुःशतप्रमाणञ्च क्षुराकारास्त्रसङ्कुलम् ।
पापिनां रक्तपूर्णञ्च क्षुरधारं भयानकम् ॥ ६९
सूचीराश्यस्त्रसंयुक्तं पापिरक्तौघपूरितम् ।
पञ्चाशद्धनुरायामं क्लेशदञ्च सूचीमुखम् ॥ ७०
कस्यचिज्जन्तुभेदस्य गोधेत्यस्य मुखाकृतम् ।
कूपरूपं गभीरञ्च धनुर्व्विंशत्प्रमाणकम् ॥ ७१
महापातकिनाञ्चैव महाक्लेशकरं परम् ।
तत्कीटभक्षितानाञ्च नम्रास्यानाञ्च सन्ततम् ॥ ७२
कुण्डं नक्रमुखाकारं धनुःषोड़शमानकम् ।
गभीरं कूपरूपञ्च पापिभिः सङ्कुलं सदा ॥ ७३
गजेन्द्राणां समूहेन व्याप्तं कुण्डाकृतं स्थलम् ।
गजदन्तहतानाञ्च पापिनां रक्तपूरितम् ॥ ७४
तत्कीटभक्षितानाञ्च काकुशब्दकृतां सदा ।
धनुःशतप्रमाणञ्च कीर्त्तितं गजदंशनम् ॥ ७५
धनुस्त्रिंशत्प्रमाणञ्च कुण्डञ्च गोमुखाकृति ।
पापिनां दुःखदञ्चैव गोमुखं परिकीर्त्तितम्॥ ७६
भ्रमितं कालचक्रेण सन्ततञ्च भयानकम् ।
कुम्भाकारं ध्वान्तयुक्तं द्विगव्यूतिप्रमाणकम् ॥ ७७
लक्षपौरुषमानञ्च गभीरमतिविस्तृतम् ।
कुत्रचित्तप्ततैलाक्त-कुण्डाभ्यन्तरितं परम् ॥७८
कुत्रचित्तप्तलौहादि-ताम्रादिकुण्डमेव च ।
पापिनाञ्च प्रधानैश्च महापातकिभिर्युतम् ॥ ७९
परस्परं न पश्यद्भिः शब्दकृद्भिश्च सन्ततम् ।
ताड़ितैमम दूतैश्च दण्डैश्च मुषलैस्तथा ॥ ८०
घूर्णमानैः पतद्भिश्च मूर्च्छितैश्च मुहुर्मुहुः ।
पातितैर्मम दूतैश्च चाप्यूर्द्धात् पतितैः क्षणम् ॥ ८१
यावन्तः पापिनः सन्ति सर्व्वकुण्डेषु सुन्दरि ।
ततश्चतुर्गुणाः सन्ति कुम्भीपाके च दुष्करे ॥ ८२
सुचिरं पतिताश्चैव भोगदेहाविवर्ज्जिताः । (क)

(क) सुचिरं पच्यमानाश्च भोगदेहा न नश्वराः इति च पाठः ।

सर्व्वकुण्डप्रधानञ्च कुम्भीपाकं प्रकीर्त्तितम् ॥ ८३
कालनिर्म्मितसूत्रेण निबद्धा यत्र पापिनः।
उत्थापिताश्च मद्दूतैः च्वणमेव निमज्जिताः ॥ ८४
निश्वासबद्धाः सुचिरं कुण्डाद्भ्यन्तरे सदा।
अतीव क्लेशयुक्ताश्च भोगदेहा न नश्वराः ॥ ८५
दण्डेन मुषलेनैव मम दूतैश्च ताड़िताः।
प्रतप्ततोययुक्तञ्च कालसूत्रं प्रकीर्त्तितम् ॥ ८६
अवटः कूपभेदश्च यत्नोदश्च तदाकृति।
प्रतप्ततोयपूर्णञ्च धनुर्व्विंशप्रमाणकम् ॥ ८७
व्याप्तं महापापिभिश्च दग्धगात्रैश्च सन्ततम्।
मद्दूतैस्ताड़ितैः शश्वदवटोदं प्रकीर्त्तितम् ॥ ८८
यत्तोयस्पर्शमात्रेण सर्व्वव्याधिश्च पापिनाम्।
भवेदकस्मात् पततां यत्र कुण्डे धनुःशते ॥ ८९
सर्व्वास्या पापिनश्च तुदन्ति यत्र सन्ततम्।
हा हेति शब्दं कुर्व्वन्तस्तदेवारुन्तुदं विदुः ॥ ९०
तप्तपांशुभिराकीर्णं ज्वलद्भिस्तु सदग्धकैः।
तद्भक्ष्यैः पापिभिर्युक्तं पांशुभोजं प्रकीर्त्तितम् ॥ ९१
पतन्मात्रे च पापी च पाशेन वेष्टितो भवेत्।
क्रोशमाने च कुण्डे च तत् पाशवेष्टनं विदुः ॥ ९२
पतन्मात्रेण पापी च शूलेन ग्रथितो भवेत्।
धनुर्व्विंशप्रमाणञ्च शूलप्रोतं प्रकीर्त्तितम् ॥ ९३
पततां पापिनां यत्र भवेदेव प्रकम्पनम्।
अतीव हिमतोये च क्रोशार्द्धञ्च प्रकम्पनम् ॥ ९४
ददत्येव हि मद्दूता यत्रोल्काः पापिनां मुखे।
धनुर्व्विंशप्रमाणञ्च तदुल्काभिश्च सङ्कुलम् ॥ ९५
लक्षपौरुषमानञ्च गभीरञ्च धनुःशतम्।
नानाप्रकारकृमिभिः संयुक्तञ्च भयानकैः ॥ ९६
अत्यन्धकारव्याप्तं यत् कूपाकारञ्च वर्त्तुलम्।
तद्भक्ष्यैः पापिभिर्युक्तं न पश्यद्भिः परस्परम् ॥ ९७
तप्ततोयप्रदग्धैश्च चलद्भिः कीटभक्षितैः।
ध्वान्तेन चक्षुषा चान्धैरन्धकूपं प्रकीर्त्तितम् ॥ ९८
नानाप्रकारशस्त्रौघैर्यत्र विद्धाश्च पापिनः।
धनुर्व्विंशप्रमाणञ्च वेधनं तत् प्रकीर्त्तितम् ॥ ९९
दण्डेन ताड़िता यत्र मम दूतैश्च पापिनः।
धनुःषोड़शमानञ्च तत् कुण्डं दण्डताड़नम् ॥ १००
निरुद्धाश्च महाजालैर्यथा मीनाश्च पापिनः।
धनुस्त्रिंशत्प्रमाणञ्च जालबद्धं प्रकीर्त्तितम् ॥ १०१
पततां पापिनां कुण्डे देहाश्चूर्णा भवन्ति च।
लौहवेडीनिबद्धास्ते कोटिपौरुषमानकम् ॥ १०२
गभीरं ध्वान्तयुक्तञ्च धनुर्व्विंशप्रमाणकम्।
मूर्च्छितानां जड़ानाञ्च देहचूर्णं प्रकीर्त्तितम् ॥ १०३
दलिताः पापिनो यत्र मद्दूतैर्मुषलैः सदा।
धनुःषोड़शमानञ्च तत् कुण्डं दलनं स्मृतम् ॥ १०४
पतन्मात्रे यत्र पापी शुष्ककण्ठौष्ठतालुकः।
वालुकासु च तप्तासु धनुस्त्रिंशत्प्रमाणकम् ॥ १०५
शतपौरुषमानञ्च गभीरं ध्वान्तसंयुतम्।
जलाहारविरहितं शोषणं तत् प्रकीर्त्तितम् ॥ १०६
नानाचर्म्मकषायोदं विण्मूत्रैः परिपूरितम्।
दुर्गन्धयुक्तं तद्भक्ष्यैः पापिभिः सङ्कुलं कषम् ॥१०७
सर्पाकारमुखं कुण्डं धनुर्द्वादशमानकम्।
तप्तलौहवालुकाभिः पूर्णं पातकिभिर्युतम् ॥ १०८
अन्तराग्निशिखानाञ्च ज्वालाव्याप्तमुखं सदा।
धनुर्व्विंशत्प्रमाणस्य यस्य कुण्डस्य सुन्दरि ॥ १०९
ज्वालाभिर्दग्धगात्रैश्च पापिभिर्व्याप्तमेव यत्।
तन्महत्क्लेशदं शश्वत् कुण्डं ज्वालामुखं स्मृतम् ॥११०
पतन्मात्राद्य यत्र पापी मूर्च्छितो जिह्मितो भवेत्।
तप्तेष्टकाभ्यन्तरितं वाप्यर्द्धं जिह्मकुण्डकम् ॥ १११
धूमान्धकारयुक्तञ्च धूमान्धैः पापिभिर्युतम्।
धनुःशतं श्वासबद्धैर्धूमान्धं परिकीर्त्तितम् ॥ ११२
पतन्मात्राद्य यत्र पापी नागैश्च वेष्टितो भवेत्।
धनुःशतं नागपूर्णं तन्नागवेष्टकुण्डकम् ॥ ११३
षड़शीतिश्च कुण्डानि मयोक्तानि निशामय।
लक्षणञ्चापि तेषाञ्च किं भूयः श्रोतुमिच्छसि ॥ ११४

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारद-संवादे सावित्र्युपाख्याने
सावित्रीयमसंवादे कुण्डलक्षणकथनं
नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः।

सावित्र्युवाच।

हरिभक्तिं देहि मह्यं सारभूतां सुदुर्लभाम्।
सर्व्वं श्रुतञ्च प्राप्तञ्च नावशिष्टो वरो मम ॥ १
किञ्चित् कथय मे धर्म्म श्रीकृष्णगुणकीर्त्तनम्।

पुंसां लक्षोद्धारबीजं नरकार्णवतारणम् ॥ २
कारणं मुक्तिसाराणां सर्व्वाशुभनिवारणम् ।
पावनं कर्म्मवृक्षाणां कृतपापौघहारणम् ॥ ३
मुक्तयः कतिधा सन्ति किं वा तासाञ्च लक्षणम् ।
हरिभक्तिमुक्तिभेदं निषेकस्यापि लक्षणम् ॥ ४
तत्त्वज्ञानविहीना च स्त्रीजातिर्विधिनिर्म्मिता ।
किं तज्ज्ञानं सारभूतं वद वेदविदां वर ॥ ५
सर्व्वदानमनशनं तीर्थस्नानं व्रतं तपः ।
अज्ञानज्ञानदानस्य कलां नार्हन्ति षोड़शीम् ॥ ६
पितुः शतगुणैर्माता गौरवेणाति निश्चितम् ।
मातुः शतगुणैः पूज्यो ज्ञानदाता गुरुः प्रभो ॥ ७

यम उवाच ।

पूर्व्वं सर्व्ववरो दत्तो यत् ते मनसि वाञ्छितम् ।
अधुना हरिभक्तिस्ते वत्से भवतु मद्वरात् ॥ ८
श्रोतुमिच्छसि कल्याणि श्रीकृष्णगुणकीर्त्तनम् ।
वक्तॄणां प्रश्नकर्त्तॄणां श्रोतॄणां कुलतारणम् ॥ ९
शेषो वक्त्रसहस्रेण न हि यद्वक्तुमीश्वरः ।
मृत्युञ्जयो न क्षमश्च वक्तुं पञ्चमुखेन च ॥ १०
धाता चतुर्णां वेदानां विधाता जगतामपि ।
ब्रह्मा चतुर्म्मुखेनैव नालं विष्णुश्च सर्व्ववित् ॥ ११
कार्त्तिकेयः षण्मुखेन नापि वक्तुमलं ध्रुवम् ।
न गणेशः समर्थश्च योगीन्द्राणां गुरोर्गुरुः ॥ १२
सारभूताश्च शास्त्राणां वेदाश्चत्वार एव च ।
कलामात्रं यद्गुणानां न विदन्ति बुधाश्च ये ॥ १३
सरस्वती च यत्नेन नालं यद्गुणवर्णने ।
सनत्कुमारो धर्म्मश्च सनकश्च सनातनः ॥ १४
सनन्दः सनकः सूर्य्यो येऽन्ये च ब्रह्मणः सुताः ।
विचक्षणा न यद्वक्तुं के वान्ये जड़बुद्धयः ॥ १५
न यद्वक्तुं क्षमाः सिद्धा मुनीन्द्रा योगिनस्तथा ।
के वान्ये च वयं के वा भगवद्गुणवर्णने ॥ १६
ध्यायन्ते यत्पदाम्भोजं ब्रह्मविष्णुशिवादयः ।
अतिसाध्यं स्वभक्तानां तदन्येषां सुदुर्लभम् ॥ १७
कश्चित् किञ्चिद्विजानाति तद्गुणोत्कीर्त्तनं महत् ।
अतिरिक्तं विजानाति ब्रह्मा ब्रह्मविदां वरः ॥ १८
ततोऽतिरिक्तं जानाति गणेशो ज्ञानिनां गुरुः ।
सर्व्वातिरिक्तं जानाति सर्व्वज्ञः शम्भुरेव च ॥ १९
तस्मै दत्तं पुरा ज्ञानं कृष्णेन परमात्मना ।
अतीवनिर्ज्जने रम्ये गोलोके रासमण्डले ॥ २०
तत्रैव कथितं किञ्चित् स्वगुणोत्कीर्त्तनं पुनः ।
धर्म्माय कथयामास शिवलोके शिवः स्वयम् ॥ २१
धर्म्मस्तत् कथयामास पुष्करे भास्कराय च ।
यमाराध्य मम पिता मां प्राप तपसा सति ॥ २२
पूर्व्वं स्वविषयञ्चाहं न गृह्णामि प्रयत्नतः ।
वैराग्ययुक्तस्तपसे गन्तुमिच्छामि सुव्रते ॥ २३
तदा मां कथयामास पिता तद्गुणकीर्त्तनम् ।
यथागमं तद्वदामि निबोधातीव दुर्गमम् ॥ २४
तद्गुणं स न जानाति तदन्यस्य च का कथा ।
यथाकाशो न जानाति स्वान्तमेव वरानने ॥ २५
सर्व्वान्तरात्मा भगवान् सर्व्वकारणकारणम् ।
सर्व्वेश्वरश्च सर्व्वाद्यः सर्व्ववित् सर्व्वरूपधृक् ॥ २६
नित्यरूपी नित्यदेही नित्यानन्दो निराकृतिः ।
निरङ्कुशश्च निःशङ्को निर्गुणश्च निराश्रयः ॥ २७
निर्लिप्तः सर्व्वसाक्षी च सर्व्वाधारः परात्परः ।
तद्विकारा च प्रकृतिस्तद्विकाराश्च प्राकृताः ॥ २८
स्वयं पुमांश्च प्रकृतिः स्वयञ्च प्रकृतेः परः ।
रूपं विधत्तेऽरूपश्च भक्तानुग्रहहेतवे ॥ २९
अतीव कमनीयञ्च सुन्दरं सुमनोहरम् ।
नवीननीरदश्यामं किशोरं गोपवेशकम् ॥ ३०
कन्दर्पकोटिलावण्य-लीलाधाममनोहरम् ।
शरन्मध्याह्नपद्मानां शोभामोचनलोचनम् ॥ ३१
शरत्पार्व्वणकोटीन्दुशोभाप्रच्छादनाननम् ।
अमूल्यरत्ननिर्म्माण-रत्नाभरणभूषितम् ॥ ३२
सस्मितं शोभितं शश्वदमूल्यपीतवाससा ।
परंब्रह्मस्वरूपञ्च ज्वलन्तं ब्रह्मतेजसा ॥ ३३
सुखदृश्यञ्च शान्तञ्च राधाकान्तमनन्तकम् ।
गोपीभिर्वीक्ष्यमाणञ्च सस्मिताभिः समन्ततः ॥ ३४
रासमण्डलमध्यस्थं रत्नसिंहासनस्थितम् ।
वंशीं क्वणन्तं द्विभुजं वनमालाविभूषितम् ॥ ३५
कौस्तुभेन मणीन्द्रेण शश्वद्वक्षःस्थलोज्ज्वलम् ।
कुङ्कुमागुरुकस्तूरी-चन्दनार्चितविग्रहम् ॥ ३६
चारुचम्पकमालाढ्यं मालतीमाल्यमण्डितम् ।
चारुचम्पकशोभाढ्यं चूड़ावङ्किमराजितम् ॥ ३७
एवम्भूतञ्च ध्यायन्ते भक्ता भक्तिपरिप्लुताः ।
यद्भयाज्जगतां धाता विधत्ते सृष्टिमेव च ॥ ३८

कर्म्मानुरूपलिखनं करोति सर्व्वकर्म्मिणाम् ।
तपसां फलदाता च कर्म्मणाञ्च यदाज्ञया ॥ ३९
विष्णुः पाता च सर्व्वेषां यद्भयात् पाति सन्ततम् ।
कालाग्निरुद्रः संहर्त्ता सर्व्वविश्वेषु यद्भयात् ॥ ४०
शिवो मृत्युञ्जयश्चैव ज्ञानिनाञ्च गुरोर्गुरुः ।
यज्ज्ञानदानात् सिद्धेशो योगीशः सर्व्ववित्स्वयम्४१
परमानन्दयुक्तश्च भक्तिवैराग्यसंयुतः ।
यत्प्रसादाद्वाति वातः प्रवरः शीघ्रगामिणाम् ॥ ४२
तपनश्च प्रतपति यद्भयात् सन्ततं सति ।
यदाज्ञया वर्षतीन्द्रो मृत्युश्चरति जन्तुषु ॥ ४३
यदाज्ञया दहेद्वह्निर्जलमेव सुशीतलम् ।
दिशो रक्षन्ति दिक्पाला महाभीता यदाज्ञया ॥४४
भ्रमन्ति राशिचक्राञ्च ग्रहाश्च यद्भयेन च ।
भयात् फलन्ति वृक्षाश्च पुष्पाण्यपि च यद्भयात्॥४५
भयात् फलानि पक्वानि निष्फलास्तरवो भयात् ।
यदाज्ञया स्थलस्थाश्च न जीवन्ति जलेषु च ॥ ४६
तथा स्थले जलस्थाश्च न जीवन्ति यदाज्ञया ।
अहं नियमकर्त्ता च धर्म्माधर्म्मस्य यद्भयात् ॥४७
कालश्च कालयेत् सर्व्वं भ्रमत्येव यदाज्ञया ।
अकाले नाहरेत् कालो मृत्युश्च यद्भयेन च ॥ ४८
ज्वलदग्नौ पतन्तञ्च गभीरे च जलार्णवे ।
वृक्षाग्रात् तीक्ष्णखड्गे च सर्पादीनां मुखेषु च ॥ ४९
नानाशस्त्रास्त्रविद्धञ्च रणेषु विषमेषु च ।
पुष्पचन्दनतल्पे च बन्धुवर्गैश्च रक्षितम् ।
शयानं तत्क्षणस्त्रैश्च काले कालो हरेद्भयात् ॥ ५०
धत्ते वायुस्तोयराशिं तोयं कूर्म्मं यदाज्ञया ॥ ५१
कूर्म्मोऽनन्तं स च क्षौणीं समुद्रान् सप्त पर्व्वतान् ।
सर्व्वांश्चैव क्षमारूपा नानारत्नं बिभर्त्ति च ॥ ५२
यतः सर्व्वाणि भूतानि लीयन्तेऽन्ते च तत्र च ।
इन्द्रायुश्चैव दिव्यानां युगानामेकसप्ततिः ॥ ५३
अष्टाविंशच्छक्रपाते ब्रह्मणश्चैत्यहर्निशम् ।
अष्टाधिके पञ्चशते सहस्रे पञ्चविंशती ॥ ५४
युगे नराणां शक्रायुरेवं संख्याविदो विदुः ।
एवं त्रिंशद्दिनैर्मासो द्वाभ्यान्ताभ्यामृतुः स्मृतः॥ ५५
ऋतुभिः षड्भिरेवाब्दः शताब्दं ब्रह्मणो वयः ।
ब्रह्मणश्च निपाते च चक्षुरुन्मीलनं हरेः ॥ ५६
चक्षुर्निमीलने तस्य लयं प्राकृतिकं विदुः ॥ ५७
प्रलये प्राकृताः सर्व्वे देवाद्याश्च चराचराः ।
लीना धातरि धाता च श्रीकृष्णनाभिपङ्कजे ॥ ५८
विष्णुः क्षीरोदशायी च वैकुण्ठे यश्चतुर्भुजः ।
विलीनो वामपार्श्वे च कृष्णस्य परमात्मनः ॥ ५९
रुद्राद्या भैरवाद्याश्च यावन्तश्च शिवानुगाः ।
शिवाधारे शिवे लीना ज्ञानानन्दे सनातने ॥ ६०
ज्ञानाधिदेवः कृष्णस्य महादेवः स चात्मनः ।
तस्य ज्ञाने विलीनश्च बभूव च क्षणं हरेः ॥ ६१
दुर्गायां विष्णुमायायां विलीनाः सर्व्वशक्तयः ।
सा च कृष्णस्य बुद्धौ च बुद्ध्यधिष्ठातृदेवता ॥ ६२
नारायणांशः स्कन्दश्च लीनो वक्षसि तस्य च ।
श्रीकृष्णांशश्च तदाद्धे देवाधीशो गणेश्वरः ॥ ६३
पद्मांशाश्चापि पद्मायां सा राधायाञ्च सुव्रते ।
गोप्यश्चापि च तस्याञ्च सर्व्वाश्च देवयोषितः ॥ ६४
कृष्णप्राणाधिदेवी सा तस्य प्राणेषु सा स्थिता ।
सावित्री च सरस्वत्यां वेदशास्त्राणि यानि च ॥ ६५
स्थिता वाणी च जिह्वायां तस्यैव परमात्मनः ।
गोलोकस्य च गोपाश्च विलीनास्तस्य लोमसु ॥ ६६
तत्प्राणेषु च सर्व्वेषां प्राणा वाता हुताशनः ।
जठराग्नौ विलीनश्च जलं तद्रसनाग्रतः ॥ ६७
वैष्णवाश्चरणाम्भोजे परमानन्दसंयुताः ।
सारात्सारतरा भक्ति-रसपीयूषपायिनः ।
विराट् क्षुद्रश्च महति लीनः कृष्णे महान् विराट्॥६८
यस्यैव लोमकूपेषु विश्वानि निखिलानि च ।
यस्य चक्षुर्निमेषेण महांश्च प्रलयो भवेत् ॥ ६९
चक्षुरुन्मीलने सृष्टिर्यस्यैव पुनरेव च ।
यावत्कालो निमेषेण तावदुन्मीलने वयः ॥ ७०
ब्रह्मणश्च शताब्दे च सृष्टिस्तत्र लयः पुनः ।
ब्रह्मसृष्टिलयानाञ्च संख्या नास्त्येव सुव्रते ।
यथा भूरजसाञ्चैवासंख्यानाञ्च निशामय ॥ ७१
चक्षुर्निमेषे प्रलयो यस्य सर्व्वान्तरात्मनः ।
उन्मीलने पुनः सृष्टिर्भवेदेवेच्छया हरेः ॥ ७२
तद्गुणोत्कीर्त्तनं वक्तुं ब्रह्माण्डेषु च कः क्षमः ॥ ७३
यथा श्रुतं तातवक्त्रात् तथोक्तञ्च यथागमम् ।
मुक्तयश्च चतुर्व्वेदैर्निरुक्ताश्च चतुर्व्विधाः ॥ ७४
तत्प्रधाना हरेर्भक्तिर्मुक्तेरपि गरीयसी ।
सालोक्यदा हरेरेका चान्या सारूप्यदा परा ॥७५

सामीप्यदा च निर्व्वाण-दात्री चैवमिति स्मृतिः।
भक्तास्ता न हि वाञ्छन्ति विना तत्सेवनादिकम्॥७६
सिद्धत्वममरत्वञ्च ब्रह्मत्वञ्चावहेलया।
जन्ममृत्युजराव्याधि-भयशोकादिखण्डनम्॥ ७७
दिव्यरूपधारणञ्च निर्व्वाणं मोक्षदं विदुः।
मुक्तिश्च सेवारहिता भक्तिः सेवाविवर्द्धिनी।
भक्तिमुक्त्योरयं भेदो निषेकलक्षणं शृणु॥ ७८
विदुर्बुधा निषेकञ्च भोगञ्च कृतकर्म्मणाम्।
तत्खण्डनञ्च शुभदं श्रीकृष्णसेवनं परम्॥ ७९
तत्त्वज्ञानमिदं साध्वि सारञ्च लोकवेदयोः।
विघ्नघ्नं शुभदञ्चोक्तं गच्छ वत्से यथासुखम्॥ ८०
इत्युक्त्वा सूर्य्यपुत्रश्च जीवयित्वा च तत्पतिम्।
तस्यै शुभाशिषं दत्त्वा गमनं कर्त्तुमुद्यतः॥ ८१
दृष्ट्वा यमञ्च गच्छन्तं सावित्री तं प्रणम्य च।
रुरोद चरणे धृत्वा सद्विच्छेदोऽतिदुःखदः॥ ८२
सावित्रीरोदनं दृष्ट्वा यम एव कृपानिधिः।
तामित्युवाच सन्तुष्टो रुरोद चापि नारद॥ ८३

यम उवाच।

लक्षवर्षं सुखं भुक्त्वा पुण्यक्षेत्रे च भारते।
अन्ते यास्यसि गोलोके श्रीकृष्णभवनं शुभे॥ ८४
गत्वा च स्वगृहं भद्रे सावित्र्याश्च व्रतं कुरु।
द्विसप्तवर्षपर्य्यन्तं नारीणां मोक्षकारणम्॥ ८५
ज्यैष्ठे कृष्णचतुर्द्दश्यां सावित्र्याश्च व्रतं शुभम्।
शुक्लाष्टम्यां भाद्रपदे महालक्ष्म्या व्रतं शुभम्॥ ८६
द्व्यष्टवर्षव्रतञ्चेदं प्रत्यब्दपक्षमेव च।
करोति परया भक्त्या सा याति च हरेः पदम्॥८७
प्रतिमङ्गलवारे च देवीं मङ्गलचण्डिकाम्।
प्रतिमासं शुक्लषष्ठ्यां षष्ठीं मङ्गलदायिकाम्॥ ८८
तथा चाषाढ़संक्रान्त्यां मनसां सर्व्वसिद्धिदाम्।
राधां रासे च कार्त्तिक्यां कृष्णप्राणाधिकां प्रियाम्॥८९
उपोष्य शुक्लाष्टम्याञ्च प्रतिमासे वरप्रदाम्।
विष्णुमायां भगवतीं दुर्गां दुर्गतिनाशिनीम्॥ ९०
प्रकृतिं जगदम्बाञ्च पतिपुत्रवतीषु च।
पतिव्रतासु शुद्धासु यन्त्रेषु प्रतिमासु च॥ ९१
या नारी पूजयेद्भक्त्या धनसन्तानहेतवे।
इह लोके सुखं भुक्त्वा यात्यन्ते श्रीहरेः पदम्॥ ९२
इत्युक्त्वा तां धर्म्मराजो जगाम निजमन्दिरम्।
गृहीत्वा स्वामिनं सा च सावित्री च निजालयम्॥९३
सावित्री सत्यवन्तञ्च वृत्तान्तञ्च यथाक्रमम्।
अन्यांश्च कथयामास बान्धवांश्चैव नारद॥ ९४
सावित्रीजनकः पुत्रान् सम्प्राप च क्रमेण च।
श्वशुरश्चक्षुषी राज्यं सा च पुत्रान् वरेण च॥ ९५
लक्षवर्षं सुखं भुक्त्वा पुण्यक्षेत्रे च भारते।
जगाम स्वामिना सार्द्धं गोलोकं सा पतिव्रता॥ ९६
सवितुश्चाधिदेवी सा मन्त्राधिष्ठातृदेवता।
सावित्री चापि वेदानां सावित्री तेन कीर्त्तिता॥
इत्येवं कथितं वत्स सावित्र्याख्यानमुत्तमम्।
जीवकर्म्मविपाकञ्च किं पुनः श्रोतुमिच्छसि॥ ९८

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे सावित्र्युपाख्यानं
नाम चतुस्त्रिंशोऽध्यायः॥ ३४॥

---

## पञ्चत्रिंशोऽध्यायः।

नारद उवाच।

श्रीकृष्णस्यात्मनश्चैव निर्गुणस्य निराकृतेः।
सावित्री-यमसंवादे श्रुतं सुनिर्म्मलं यशः॥ १
तद्गुणोत्कीर्त्तनं सत्यं मङ्गलानाञ्च मङ्गलम्।
अधुना श्रोतुमिच्छामि लक्ष्म्युपाख्यानमीश्वर॥ २
केनादौ पूजिता सापि किम्भूता केन वा पुरा।
तद्गुणोत्कीर्त्तनं सत्यं वद वेदविदां वर॥ ३

नारायण उवाच।

सृष्टेरादौ पुरा ब्रह्मन् कृष्णस्य परमात्मनः।
देवी वामांशसम्भूता बभूव रासमण्डले॥ ४
अतीव सुन्दरी श्यामा न्यग्रोधपरिमण्डला।
यथा द्वादशवर्षीया शश्वत्सुस्थिरयौवना॥ ५
श्वेतचम्पकवर्णाभा सुखदृश्या मनोहरा।
शरत्पार्व्वणकोटीन्दु-प्रभाप्रच्छादनानना॥ ६
शरन्मध्याह्नपद्मानां शोभामोचनलोचना।
सा च देवी द्विधा भूता सहसैवेश्वरेच्छया॥ ७
समा रूपेण वर्णेन तेजसा वयसा त्विषा।
यशसा वाससा मूर्त्त्या भूषणेन गुणेन च॥ ८
स्मितेन वीक्षणेनैव वचसा गमनेन च।
मधुरेण स्वरेणैव नयेनानुनयेन च॥ ९

तद्वामांशो महालक्ष्मीर्दक्षिणांशश्च राधिका।
राधादौ वरयामास द्विभुजञ्च परात्परम्॥ १०
महालक्ष्मीश्च तत्पश्चात् चकमे कमनीयकम्।
कृष्णस्तन्नीरवेणैव द्विधारूपो बभूव ह॥ ११
दक्षिणांशश्च द्विभुजो वामांशश्च चतुर्भुजः।
चतुर्भुजाय द्विभुजो महालक्ष्मीं ददौ पुरा॥ १२
लक्ष्यते दृश्यते विश्वं स्निग्धदृष्ट्या ययानिशम्।
देवीषु या च महती महालक्ष्मीश्च सा स्मृता॥ १३
द्विभुजो राधिकाकान्तो लक्ष्म्याः कान्तश्चतुर्भुजः।
शुद्धसत्त्वस्वरूपैश्च गोपैर्गोपीभिरावृतः॥ १४
चतुर्भुजश्च वैकुण्ठं प्रययौ पद्मया सह।
सर्व्वांशेन समौ तौ द्वौ कृष्णनारायणौ परौ॥ १५
महालक्ष्मीश्च योगेन नानारूपा बभूव सा।
वैकुण्ठे च महालक्ष्मीः परिपूर्णतमा परा॥ १६
शुद्धसत्त्वस्वरूपा च सर्व्वसौभाग्यसंयुता।
प्रेम्णा सा च प्रधानञ्च सर्व्वासु रमणीषु च॥ १७
स्वर्गे च स्वर्गलक्ष्मीश्च शक्रसम्पत्स्वरूपिणी।
पातालेषु च मर्त्त्येषु राजलक्ष्मीश्च राजसु॥ १८
गृहलक्ष्मीर्गृहेष्वेव गृहिणी च कलांशया।
सम्पत्स्वरूपा गृहिणां सर्व्वमङ्गलमङ्गला॥ १९
गवां प्रसूः सा सुरभी दक्षिणा यज्ञकामिनी।
क्षीरोदसिन्धुकन्या सा श्रीरूपा पद्मिनीषु च॥ २०
शोभारूपा च चन्द्रे च सूर्य्यमण्डलमण्डिता।
विभूषणेषु रत्नेषु फलेषु च जलेषु च॥ २१
नृपेषु नृपपत्नीषु दिव्यस्त्रीषु गृहेषु च।
सर्व्वशस्येषु वस्त्रेषु स्थानेषु संस्कृतेषु च॥ २२
प्रतिमासु च देवानां मङ्गलेषु घटेषु च।
माणिक्येषु च मुक्तासु माल्येषु च मनोहरा॥ २३
मणीन्द्रेषु च क्षीरेषु क्षीरेषु चन्दनेषु च।
वृक्षशाखासु रम्यासु नवमेघेषु वस्तुषु॥ २४
वैकुण्ठे पूजिता सादौ देवी नारायणेन च।
द्वितीये ब्रह्मणा भक्त्या तृतीये शङ्करेण च॥ २५
विष्णुना पूजिता सा च क्षीरोदे भारते मुने।
स्वायम्भुवेन मनुना मानवेन्द्रैश्च सर्व्वतः॥ २६
ऋषीन्द्रैश्च मुनीन्द्रैश्च सद्भिश्च गृहिभिर्भवे।
गन्धर्व्वाद्यैश्च नागाद्यैः पातालेषु च पूजिता॥ २७
शुक्लाष्टम्यां भाद्रपदे कृता पूजा च ब्रह्मणा
भक्त्या च पक्षपर्य्यन्तं त्रिषु लोकेषु नारद॥ २८
चैत्रे पौषे च भाद्रे च पुण्ये मङ्गलवासरे।
विष्णुना निर्म्मिता पूजा त्रिषु लोकेषु भक्तितः॥ २९
वर्षान्ते पौषसंक्रान्त्यां मेध्यामावाह्य (क) प्राङ्गणे।
मनुस्तां पूजयामास सा भूता भुवनत्रये॥ ३०
राजेन्द्रेण पूजिता सा मङ्गलेनैव मङ्गला।
केदारेणैव नीरेण बलेन (ख) सुबलेन च॥ ३१
ध्रुवेणोत्तानपादेन शक्रेण बलिना तथा।
कश्यपेन च दक्षेण मनुना च विवस्वता॥ ३२
प्रियव्रतेन चन्द्रेण कुवेरेणैव वायुना।
यमेन वह्निना चैव वरुणेनैव पूजिता॥ ३३
एवं सर्व्वत्र सर्व्वैश्च वन्दिता पूजिता सदा।
सर्व्वैश्वर्य्याधिदेवी सा सर्व्वसम्पत्स्वरूपिणी॥ ३४

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे लक्ष्म्युपाख्याने
पञ्चत्रिंशोऽध्यायः॥ ३५॥

---

## षट्त्रिंशोऽध्यायः।

नारद उवाच।

नारायणप्रिया सा च वरा वैकुण्ठवासिनी।
वैकुण्ठाधिष्ठातृदेवी महालक्ष्मीः सनातनी॥ १
कथं बभूव सा देवी पृथिव्यां सिन्धुकन्यका।
किं तद्ध्यानञ्च कवचं सर्व्वः पूजाविधिक्रमः॥ २
पुरा केन स्तुतादौ सा तन्मे व्याख्यातुमर्हसि॥ ३

नारायण उवाच।

पुरा दुर्व्वाससः शापाद् भ्रष्टश्रीश्च पुरन्दरः।
बभूव देवसंघश्च मर्त्त्यलोकश्च नारद॥ ४
लक्ष्मीः स्वर्गादिकं त्यक्त्वा रुष्टा परमदुःखिता।
गत्वा लीना च वैकुण्ठे महालक्ष्म्याञ्च नारद॥ ५
तदा शोकाद्ययुर्देवा दुःखिता ब्रह्मणः सभाम्।
ब्रह्माणञ्च पुरस्कृत्य ययुर्वैकुण्ठमेव च॥ ६
वैकुण्ठे शरणापन्ना देवा नारायणे परे।
अतीव दैन्ययुक्ताश्च शुष्ककण्ठोष्ठतालुकाः॥ ७
तदा लक्ष्मीश्च कलया पुरा नारायणाज्ञया।

(क) आरोप्य इति वा पाठः
(ख) नीलेन नलेनेति च पाठः।

बभूव सिन्धुकन्या सा शक्रसम्पत्स्वरूपिणी ॥ ८
तथा मथिला क्षीरोदं देवा दैत्यगणैः सह।
सम्प्राप्य च वरं लक्ष्मीस्तांश्च तत्र ददर्श च ॥ ९
सुरादिभ्यो वरं दत्त्वा वरमन्यच्च विष्णवे।
ददौ प्रसन्नवदना तुष्टा क्षीरोदशायिने ॥ १०
देवाश्चाप्यसुरग्रस्तं राज्यं प्रापुश्च तद्वरात्।
तां सम्पूज्य च संस्तूय सर्व्वत्र च दिवौकसः ॥ ११
नारद उवाच।
कथं शशाप दुर्व्वासा मुनिश्रेष्ठः पुरन्दरम्।
केन दोषेण वा ब्रह्मन् ब्रह्मिष्ठं ब्रह्मवित् पुरा ॥१२
ममन्थे केन रूपेण जलधिस्तैः सुरादिभिः।
केन स्तोत्रेण सा देवी शक्रसाक्षाद्बभूव ह ॥ १३
को वा तयोश्च संवादो बभूव तद्वद प्रभो ॥ १४
नारायण उवाच।
मधुपानप्रमत्तश्च त्रैलोक्याधिपतिः पुरा।
क्रीड़ां चकार रहसि रम्भया सह कामुकः ॥ १५
कृत्वा क्रीड़ां तया सार्द्धं कामुक्या हृतचेतनः।
तस्थौ तत्र महारण्ये कामोन्मथितचेतनः ॥ १६
कैलासशिखरं यान्तं वैकुण्ठादृषिपुङ्गवम्।
दुर्व्वाससं ददर्शेन्द्रो ज्वलन्तं ब्रह्मतेजसा ॥ १७
ग्रीष्ममध्याह्नमार्त्तण्ड-सहस्रप्रभमीश्वरम्।
प्रतप्तकाञ्चनाकार-जटाभारमहोज्ज्वलम् ॥ १८
शुक्लयज्ञोपवीतञ्च चीरं दण्डं कमण्डलुम्।
महोज्ज्वलञ्च तिलकं बिभ्रतं चन्द्रसन्निभम् ॥ १९
समन्वितं शिष्यलक्षैर्वेदवेदाङ्गपारगैः।
दृष्ट्वा ननाम शिरसा सम्भ्रमात् तं पुरन्दरः ॥ २०
शिष्यवर्गञ्च भक्त्या च तुष्टाव च मुदान्वितः।
मुनिना च सशिष्येण तस्मै दत्ताः शुभाशिषः ॥ २१
विष्णुदत्तं पारिजातपुष्पञ्च सुमनोहरम्।
जरा-मृत्यु-रोग-शोकहरं मोक्षकरं परम् ॥ २२
शक्रः पुष्पं गृहीत्वा च प्रमत्तो राजसम्पदा।
भ्रमेण स्थापयामास तदैव हस्तिमस्तके ॥ २३
हस्ती तत्स्पर्शमात्रेण रूपेण च गुणेन च।
तेजसा वयसा कान्त्या विष्णुतुल्यो बभूव सः ॥ २४
त्यक्ताशक्रो गजेन्द्रश्च जगाम घोरकाननम्।
न शशाक महेन्द्रस्तं रक्षितुं तेजसा मुने ॥ २५
तं पुष्पं त्यक्तवन्तञ्च दृष्ट्वा शक्रं मुनीश्वरः।
तमुवाच महारुष्टः शशाप स रुषान्वितः ॥ २६
अरे श्रिया प्रमत्तस्त्वं कथं मामवमन्यसे।
मद्दत्तपुष्पं दत्तञ्च गर्व्वेण हस्तिमस्तके ॥ २७
विष्णोर्निवेदितं पुष्पं नैवेद्यं वा फलं जलम्।
प्राप्तिमात्रेण भोक्तव्यं त्यागेन ब्रह्महा जनः ॥ २८
भ्रष्टश्रीर्भ्रष्टबुद्धिश्च भ्रष्टज्ञानो भवेन्नरः।
यस्त्यजेद्विष्णुनैवेद्यं भाग्येनोपस्थितं शुभम् ॥ २९
प्राप्तिमात्रेण यो भुङ्क्ते भक्त्या विष्णुनिवेदितम्।
पुंसां शतं समुद्धृत्य जीवन्मुक्तः स्वयं भवेत् ॥ ३०
विष्णुनैवेद्यभोजी यो नित्यन्तु प्रणमेद्धरिम्।
पूजयेत् स्तौति वा भक्त्या स विष्णुसदृशो भवेत् ॥३१
तत्स्पर्शवायुना सद्यस्तीर्थौघश्च विशुध्यति।
तत्पादरजसा मूढ़ सद्यःपूता वसुन्धरा ॥ ३२
पुंश्चल्यन्नमवीरान्नं शूद्रश्राद्धान्नमेव च।
यद्धरेरनिवेद्यञ्च वृथामांसमभक्ष्यकम् ॥ ३३
शिवलिङ्गप्रदत्तान्नं यदन्नं शूद्रयाजिनाम्।
चिकित्सकद्विजानाञ्च देवलान्नं तथैव च ॥ ३४
कन्याविक्रयिणामन्नं यदन्नं योनिजीविनाम्।
अनुष्णान्नं पर्य्युषितं सर्व्वभक्ष्यावशेषकम् ॥ ३५
शूद्रापतिद्विजानाञ्च वृषवाहद्विजान्नकम्।
अदीक्षितद्विजानाञ्च यदन्नं शवदाहिनाम् ॥ ३६
अगम्यागामिनाञ्चैव द्विजानामन्नमेव च।
मित्रद्रुहां कृतघ्नानामन्नं विश्वासघातिनाम् ॥ ३७
मिथ्यासाक्ष्यप्रदानाञ्च ब्राह्मणानां तथैव च।
एतत् सर्व्वं विशुध्येत विष्णुनैवेद्यभक्षणात् ॥ ३८
विष्णुसेवी स्वकीयानां वंशानां कोटिमुद्धरेत्।
हरेरभक्तो विप्रश्च स्वञ्च रक्षितुमक्षमः ॥ ३९
अज्ञानाद्यदि गृह्णाति विष्णोर्निर्म्माल्यमेव च।
सप्तजन्मार्ज्जितात् पापान्मुच्यते नात्र संशयः ॥ ४०
ज्ञात्वा भक्त्या च गृह्णाति विष्णोर्नैवेद्यमेव च।
कोटिजन्मार्ज्जितात् पापान्मुच्यते नात्र संशयः ॥ ४१
यस्मात् संस्थापितं पुष्पं गर्व्वेण हस्तिमस्तके।
तस्माद्युष्मान् परित्यज्य यातु लक्ष्मीर्हरेः पदम्॥४२
नारायणस्य भक्तोऽहं न बिभेमीश्वरं विधिम्।
कालं मृत्युं जराञ्चैव कानन्यान् गणयामि च ॥ ४३
किं करिष्यति ते तातः कश्यपश्च प्रजापतिः।
बृहस्पतिर्गुरुश्चैव निःशङ्कस्य च मे हरेः ॥ ४४

इदं पुष्पं यस्य मूर्द्ध्नि तस्यैव पूजनं पुरः ।
मूर्द्धच्छेदे शिवशिशोश्छित्त्वेदं योजयिष्यति ॥ ४५
इति श्रुत्वा महेन्द्रश्च धृत्वा तच्चरणद्वयम् ।
उच्चै रुरोद शोकार्त्तस्तमुवाच भयाकुलः ॥ ४६

इन्द्र उवाच ।

[illegible] समुचितः शापो मह्यं मत्ताय ते प्रभो ।
हृता त्वया चेत् सम्पत्तिः किञ्चिज्ज्ञानञ्च देहि मे ॥ ४७
ऐश्वर्य्यं विपदां वीजं ज्ञानप्रच्छन्नकारणम् ।
मुक्तिमार्गार्गलं दार्ढ्यं हरिभक्तिव्यवायकम् ॥ ४८
जन्म-मृत्यु-जरा-रोग-शोक-भीताङ्कुरं परम् ।
सम्पत्तितिमिरान्धश्च मुक्तिमार्गं न पश्यति ॥ ४९
सम्पन्मत्तः सुमूढ़श्च सुरामत्तः सचेतनः ।
बान्धवैर्वेष्टितः सोऽपि बन्धुद्वेषकरो मुने ॥ ५०
सम्पन्मदप्रमत्तश्च विषयान्धश्च विह्वलः ।
महाकामी राजसिकः सत्त्वमार्गं न पश्यति ॥ ५१
द्विविधो विषयान्धश्च राजसस्तामसः स्मृतः ।
अशास्त्रज्ञस्तामसश्च शास्त्रज्ञो राजसः स्मृतः ॥ ५२
शास्त्रे च द्विविधं मार्गं दर्शयेन्मुनिपुङ्गव ।
प्रवृत्तिवीजमेकञ्च निवृत्तेः कारणं परम् ॥ ५३
चरन्ति जीविनश्चादौ प्रवृत्तौ दुःखवर्त्मनि ।
स्वच्छन्दे च प्रसन्ने च निर्व्विरोधे च सन्ततम् ॥ ५४
आपातमधुनो लोभात् क्लेशे च सुखमानिनः ।
परिणामनाशवीजे जन्म-मृत्यु-जराकरे ॥ ५५
अनेकजन्मपर्य्यन्तं कृत्वा च भ्रमणं मुदा ।
स्वकर्म्मविहितायाञ्च नानायोन्यां क्रमेण च ॥ ५६
ततः कृष्णानुग्रहाच्च सत्सङ्गं लभते जनः ।
सहस्रेषु शतश्चैको भवाब्धिपारकारणम् ॥ ५७
साधुः सत्त्वप्रदीपेन मुक्तिमार्गं प्रदर्शयेत् ।
तदा करोति यत्नञ्च जीवो बन्धनखण्डने ॥ ५८
अनेकजन्मयोगेन तपसानशनेन च ।
तदा लभेन्मुक्तिमार्गं निर्व्विघ्नं सुखदं परम् ॥ ५९
इदं श्रुतं गुरोर्वक्त्रात् प्रसङ्गावसरेण च ।
न हि पृष्टमतोऽन्यच्च जन्मालजालवेष्टितः ॥ ६०
अधुना विधिना दत्तो विपत्तौ ज्ञानसागरः ।
सम्पद्रूपा विपदियं मम निस्तारकारिणी ॥ ६१
ज्ञानसिन्धो दीनबन्धो मह्यं दीनाय साम्प्रतम् ।
देहि किञ्चिज्ज्ञानसारं भवपारं दयानिधे ॥ ६२

इन्द्रस्य वचनं श्रुत्वा प्रहस्य ज्ञानिनां गुरुः ।
ज्ञानं कथितुमारेभे ह्यतितुष्टः सनातनः ॥ ६३

मुनिरुवाच ।

अहो महेन्द्र मङ्गल्यं मार्गेष्टं द्रष्टुमिच्छसि ।
आपातदुःखवीजञ्च परिणामसुखावहम् ॥ ६४
स्वगर्भयातनानाश-पीड़ाखण्डनकारणम् ।
दुष्पारासारदुर्व्वार-संसारार्णवतारणम् ॥ ६५
कर्म्मवृक्षाङ्कुरच्छेद-कारणं सर्व्वतारणम् ।
सन्तोषसन्ततिकरं प्रवरं सर्व्ववर्त्मनाम् ॥ ६६
दानेन तपसा वापि व्रतेनानशनादिना ।
कर्म्मणा स्वर्गभोगादिसुखं भवति जीविनाम् ॥ ६७
पूर्व्वकाम्यकर्म्मणाञ्च मूलं सञ्छिद्य यत्नतः ।
अधुनेदं मोक्षवीजं सङ्कल्पाभाव एव च ॥ ६८
यत् कर्म्म सात्त्विकं कुर्य्यादसङ्कल्पितमेव च ।
सर्व्वं कृष्णार्पणं कृत्वा परे ब्रह्मणि लीयते ॥ ६९
सांसारिकाणामेतत्तु निर्व्वाणमोक्षणं विदुः ।
नेच्छन्ति वैष्णवास्तत्तु सेवाविरहकातराः ॥ ७०
सेवां कुर्व्वन्ति ते नित्यं विधाय देहमुत्तमम् ।
गोलोके वापि वैकुण्ठे तस्यैव परमात्मनः ॥ ७१
हरिसेवादिरूपाञ्च मुक्तिमिच्छन्ति वैष्णवाः ।
जीवन्मुक्ताश्च ते शक्र स्वकुलोद्धारकारिणः ॥ ७२
स्मरणं कीर्त्तनं विष्णोरर्च्चनं पादसेवनम् ।
वन्दनं स्तवनं नित्यं भक्त्या नैवेद्यभक्षणम् ॥ ७३
चरणोदकपानञ्च तन्मन्त्रजपनं परम् ।
इदं निस्तारवीजञ्च सर्व्वेषामीप्सितं भवेत् ॥ ७४
इदं मृत्युञ्जयं ज्ञानं दत्तं मृत्युञ्जयेन मे ।
तच्छिष्योऽहञ्च निःशङ्कस्तत्प्रसादाच्च सर्व्वतः ॥ ७५
स जन्मदाता स गुरुः स च बन्धुः सतां परः ।
यो ददाति हरेर्भक्तिं त्रैलोक्ये च सुदुर्लभाम् ॥ ७६
दर्शयेदन्यमार्गञ्च श्रीकृष्णसेवनं विना ।
स च तं नाशयत्येवं ध्रुवं तद्वधभाग्भवेत् ॥ ७७
सन्ततं जपतां कृष्णनाम मङ्गलकारणम् ।
मङ्गलं वर्द्धते नित्यं न भवेदायुषो व्ययः ॥ ७८
तेभ्योऽप्यपैति कालश्च मृत्युश्च रोग एव च ।
सन्तापश्चैव शोकश्च वैनतेयादिवोरगाः ॥ ७९
कृष्णमन्त्रोपासकश्च ब्राह्मणः श्वपचोऽपि वा ।
ब्रह्मलोकं समुल्लङ्घ्य याति गोलोकमुत्तमम् ॥ ८०

ब्रह्मणा पूजितः सोऽपि मधुपर्कादिना च वै ।
स्तुतः सुरैश्च सिद्धैश्च परमानन्दभावनः ॥ ८१
ज्ञानसारं तपःसारं ब्रह्मसारं परं शिवम् ।
शिवेनोक्तं योगसारं श्रीकृष्णपादसेवनम् ॥ ८२
ब्रह्मादितृणपर्य्यन्तं सर्व्वं मिथ्यैव स्वप्नवत् ।
भज सत्यं परं ब्रह्म राधेशं प्रकृतेः परम् ॥ ८३
अतीव सुखदं सारं भक्तिदं मुक्तिदं परम् ।
सिद्धियोगप्रदञ्चैव दातारं सर्व्वसम्पदाम् ॥ ८४
योगिनामपि सिद्धानां यतीनाञ्च तपस्विनाम् ।
सर्व्वेषां कर्म्मभोगोऽस्ति न नारायणसेविनाम् ॥ ८५
भस्मसाच्च भवेत् पापं यदुपस्पर्शमात्रतः ।
ज्वलदग्नौ पातितेन यथा शुष्केन्धनं तथा ॥ ८६
ततो रोगा विपद्यन्ते पापानि च भयानि च ।
दूरतश्च पलायन्ते यमदूता यथा भयात् ॥ ८७
तावन्निबद्धः संसारे कारागारे विधेर्जनः ।
न यावत् कृष्णमन्त्रञ्च प्राप्नोति गुरुवक्त्रतः ॥ ८८
कृतकर्म्मभोगरूप-निगडच्छेदकारणम् ।
मायाजालच्छेदकरं मायापाशनिकृन्तनम् ॥ ८९
गोलोकमार्गसोपानं निस्तारबीजकारणम् ।
भक्त्यङ्कुररूपञ्च नित्यं वृद्धमनश्वरम् ॥ ९०
सारञ्च सर्व्वतपसां योगानाञ्च तथैव च ।
सिद्धीनां वेदपाठानां व्रतादीनाञ्च निश्चितम् ॥ ९१
दानानां तीर्थस्नानानां यज्ञादीनां पुरन्दर ।
पूजानामुपवासानामित्याह कमलोद्भवः ॥ ९२
पुंसां लक्षं पितृणाञ्च शतं मातामहस्य च ।
पूर्व्वं परञ्च तत्संख्यं पितरं मातरं गुरुम् ॥ ९३
सहोदरं कलत्रञ्च बन्धुं शिष्यञ्च किङ्करम् ।
समुद्धरेच्च श्वशुरं श्वश्रूं कन्याञ्च तत्सुतम् ॥ ९४
स्वात्मानञ्च सतीर्थञ्च गुरुपत्नीं गुरोः सुतम् ।
उद्धरेद्बलवान् भक्तो मन्त्रग्रहणमात्रतः ॥ ९५
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः ।
तत्स्पर्शपूतस्तीर्थौघः सद्यःपूता वसुन्धरा ॥ ९६
अनेकजन्मपर्य्यन्तं दीक्षाहीनो भ्रमेन्नरः ।
तदन्यदेवमन्त्रञ्च लभते पुण्यशेषतः ॥ ९७
सप्तजन्मोपदेवानां कृत्वा सेवां स्वकर्म्मतः ।
लभते च रवेर्मन्त्रं साक्षिणः सर्व्वकर्म्मणाम् ॥ ९८
जन्मत्रयं भास्करञ्च निषेव्य मानवः शुचिः ।
लभेद्गणेशमन्त्रञ्च सर्व्वविघ्नहरं परम् ॥ ९९
जन्मत्रयं तं निषेव्य निर्व्विघ्नश्च भवेन्नरः ।
विघ्नेशस्य प्रसादेन दिव्यज्ञानं लभेन्नरः ॥ १००
तदा ज्ञानप्रदीपेन समालोच्य महामतिः ।
अज्ञानान्धतमं हित्वा महामायां भजेन्नरः ॥ १०१
विष्णुमायाञ्च प्रकृतिं दुर्गां दुर्गतिनाशिनीम् ।
सिद्धिदां सिद्धिरूपाञ्च परमां सिद्धयोगिनीम् ॥ १०२
वाणीरूपाञ्च पद्माञ्च भद्रां कृष्णप्रियात्मिकाम् ।
नानारूपां तां निषेव्य जन्मनां शतकं नरः ॥ १०३
तत्प्रसादाद्भवेज्ज्ञानी ज्ञानानन्दं तदा भजेत् ।
कृष्णज्ञानाधिदेवञ्च महाज्ञानं सनातनम् ॥ १०४
शिवं शिवस्वरूपञ्च शिवदं शिवकारणम् ।
परमानन्दरूपञ्च परमानन्ददायिनम् ॥ १०५
सुखदं मोक्षदञ्चैव दातारं सर्व्वसम्पदाम् ।
अमरत्वप्रदञ्चैव दीर्घायुष्टप्रदं परम् ॥ १०६
इन्द्रत्वञ्च मनुत्वञ्च दातुं शक्तञ्च लीलया ।
राजेन्द्रत्वप्रदञ्चैव ज्ञानदं हरिभक्तिदम् ॥ १०७
जन्मत्रयं समाराध्य चाशुतोषप्रसादतः ।
सर्व्वदस्य वरेणैव निर्म्मलं ज्ञानमालभेत् ॥ १०८
निर्म्मलज्ञानदीपेन सुप्रदीपेन तत्त्ववित् ।
ब्रह्मादितृणपर्य्यन्तं सर्व्वं मिथ्यैव पश्यति ॥ १०९
दयानिधेः प्रसादेन शङ्करस्य महात्मनः ।
वरदस्य वरेणैव हरिभक्तिं लभेद्ध्रुवम् ॥ ११०
तदा निर्व्वृतिमाप्नोति सारात्सारां परात्पराम् ।
यत्र देहे लभेन्मन्त्रं तद्देहावधि भारते ॥ १११
तत् पाञ्चभौतिकं त्यक्त्वा बिभर्त्ति दिव्यरूपकम् ।
करोति दास्यं गोलोके वैकुण्ठे वा हरेः पदम् ॥ ११२
परमानन्दसंयुक्तो मोहादिसुविवर्ज्जितः ।
न विद्यते पुनर्जन्म पुनरागमनं सुर ।
पुनश्च न पिबेत् क्षीरं धृत्वा मातृस्तनं परम् ॥ ११३
विष्णुमन्त्रोपासकानां गङ्गादितीर्थसेविनाम् ।
स्वधर्म्मिणाञ्च भिक्षूणां पुनर्जन्म न विद्यते ॥ ११४
तीर्थे परित्यजेत् पापं नित्यं कृत्वा हरिं भजेत् ।
अयं निरूपितो धात्रा स्वधर्म्मस्तीर्थसेविनाम् ॥ ११५
तन्नाम मन्त्रं प्रजपेत् तत्सेवादिषु तत्परः ।
तद्व्रतोपवासरत इत्येवं विष्णुसेविनाम् ॥ ११६
चन्दने वा कर्दमे वा लोष्ट्रे वा काञ्चने तथा ।

समबुद्धिर्यस्य शश्वत् स सन्न्यासीति कीर्त्तितः॥११७
दण्डं कमण्डलुं रक्तवस्त्रमात्रञ्च धारयेत्।
नित्यं प्रवासी नैकत्र स सन्न्यासीति कीर्त्तितः ॥११८
शुद्धाचारद्विजान्नञ्च भुङ्क्ते लोभादिवर्ज्जितः।
किन्तु किञ्चिन्न याचेत स सन्न्यासीति कीर्त्तितः॥११९
शश्वन्मौनी ब्रह्मचारी सम्भाषालापवर्ज्जितः।
सर्व्वं ब्रह्ममयं पश्येत् स सन्न्यासीति कीर्त्तितः ॥१२०
सर्व्वत्र समबुद्धिश्च हिंसामायादिवर्ज्जितः।
क्रोधाहङ्काररहितः स सन्न्यासीति कीर्त्तितः ॥१२१
न व्यापारी नाश्रमी च सर्व्वकर्म्मविवर्ज्जितः।
ध्यायेन्नारायणं शश्वत् स सन्न्यासीति कीर्त्तितः॥१२२
अयाचितोपस्थितञ्च मिष्टामिष्टञ्च भुक्तवान्।
न याचते भक्षणार्थी स सन्न्यासीति कीर्त्तितः ॥१२३
न च पश्येन्मुखं स्त्रीणां न तिष्ठेत् तत्समीपतः।
दारवीमपि योषाञ्च न स्पृशेद्यः स भिक्षुकः।
अयं सन्न्यासिनां धर्म्म इत्याह कमलोद्भवः॥ १२४
विपर्य्यये विनाशश्च जन्म याम्यं भयं भवेत्।
जन्मदुःखं याम्यदुःखं जीविनामतिदारुणम् ॥१२५
सुरशूकरयोनौ वा गर्भे दुःखं समं सुर।
योनौ वा क्षुद्रजन्तूनां पश्वादीनां तथैव च॥ १२६
गर्भे स्मरन्ति सर्व्वे ते जीविनो विष्णुमायया।
विस्मरेन्निर्गतो जीवी गर्भाच्च विष्णुमायया।
स्वदेहं पाति यत्नेन सुरो वा कीट एव वा॥ १२७
योनेरभ्यन्तरे शुक्रे पतिते पुरुषस्य च।
शुक्रशोणितयुक्तश्च सहसा तत्क्षणं भवेत्॥ १२८
रक्ताधिके मातृसमश्चेतरे पितुराकृतिः।
युग्माहे च भवेत् पुत्रः कन्यका तद्विपर्य्यये॥ १२९
रवि-भौम-गुरूणाञ्च वारे चेत् तद्भवेत् सुतः।
अयुग्माहे तदितरे वारे च कन्यका भवेत्॥ १३०
प्रथमप्रहरे जन्म यस्य सोऽल्पायुरेव च।
द्वितीये मध्यमश्चैव तृतीये तत्परो भवेत्॥ १३१
चतुर्थे चिरजीवी च क्षणानुरूपको भवेत्।
दुःखी वाथ सुखी वापि पूर्व्वकर्म्मानुरूपतः॥ १३२
यादृशे च क्षणे जन्म प्रसवस्तादृशे भवेत्।
प्रसूतिक्षणचर्चाञ्च कुर्व्वन्त्येव विचक्षणाः॥ १३३
कललस्त्वेकरात्रेण वर्द्धयेच्च दिने दिने।
सप्तमे बदराकारो मासे गण्डुसमो भवेत्॥ १३४

मासत्रये मांसपिण्डो हस्तपादादिवर्ज्जितः।
सर्व्वावयवसम्पन्नो देही मासे च पञ्चमे॥ १३५
भवेत्तु जीवसञ्चारः षण्मासे सर्व्वतत्त्ववित्।
दुःखी स्वल्पस्थलस्थायी शकुन्त इव पिञ्जरे॥१३६
मातृजग्धान्नपानञ्च भुङ्क्तेऽमेध्यस्थले स्थितः।
हा हेति शब्दं कृत्वा च चिन्तयेदीश्वरं परम्॥१३७
एवञ्च चतुरो मासान् भुक्त्वा परमयातनाम्।
प्रेरितो वायुना काले गर्भाच्च निर्गतो भवेत्॥ १३८
दिग्देशकालाव्युत्पन्नो विस्मृतो विष्णुमायया।
शश्वद्विण्मूत्रसंयुक्तः शिशुश्च शैशवावधि॥ १३९
परायत्तोऽप्यक्षमश्च मशकादिनिवारणे।
कीटादिभुक्तो दुःखी च रौति तत्र पुनः पुनः॥ १४०
स्तनान्धोऽप्यसमर्थश्च याच्ञां कर्त्तुमभीप्सितम्।
न वाणी निःसरेत् तस्य पौगण्डावधि पापतः॥१४१
पौगण्डे यातनां भुक्त्वा प्राप्नोति यौवनं पुनः।
न स्मरेन्मायया देही गर्भादियातनां पुनः॥१४२
आहार-मैथुनार्त्तश्च नानामोहादिवेष्टितः।
पुत्त्रं कलत्रमतुगं यत्नेन परिपालयेत्॥ १४३
एवं यावत् समर्थश्च तावदेव हि पूजितः।
असमर्थञ्च मन्यन्ते बान्धवा गोजरं यथा॥ १४४
यदातीवजरायुक्तो जडोऽतिबधिरो भवेत्।
कासश्वासादियुक्तश्च परायत्तोऽतिमूढवत्॥ १४५
तदन्तरेऽनुतापञ्च करोति सन्ततं पुनः।
न सेवितो हरिस्तीर्थं सत्सङ्गश्चापि तापसः॥ १४६
पुनश्च मानवीं योनिं लभामि भारते यदि।
तदा तीर्थं गमिष्यामि भजामि कृष्णमित्यहो॥ १४७
इत्येवमादि मनसि कुर्व्वन्तं तं जडं सुर।
गृह्णाति यमदूतश्च काले प्राप्तेऽतिदारुणः॥ १४८
स पश्येद्यमदूतञ्च पाशहस्तञ्च दण्डिनम्।
अतीव कोपरक्ताक्षं विकृताकारमुल्बणम्॥ १४९
दुर्निवार्य्यमुपायैश्च बलिष्ठञ्च भयङ्करम्।
तद्दृष्टं सर्व्वसिद्धिघ्नं सर्व्वादृष्टं पुरःस्थितम्॥ १५०
दृष्टिमात्रान्महाभीतो विण्मूत्रञ्च समुत्सृजेत्।
तदा प्राणांस्त्यजेत् सद्यो देहञ्च पाञ्चभौतिकम्॥१५१
अङ्गुष्ठमात्रं पुरुषं गृहीत्वा यमकिङ्करः।
विन्यस्य भोगदेहे च स्वस्थानं स्थापयेद्द्रुतम्॥१५२
जीवी गत्वा यमं पश्येत् सर्व्वधर्म्मज्ञमेव च।

रत्नसिंहासनस्थञ्च सज्जितं सुस्थिरं परम्॥ १५३
धर्म्माधर्म्मविचारञ्च सर्व्वज्ञं सर्व्वतोमुखम्।
विश्वेष्वेकाधिकारञ्च विधात्रा वर्द्धितं पुरा॥ १५४
वह्निशुद्धांशुकाधानं रत्नभूषणभूषितम्।
वेष्टितं पार्षदगणैर्दूतैश्चापि त्रिकोटिभिः॥ १५५
जपन्तं श्रीकृष्णनाम शुद्धस्फाटिकमालया।
ध्यायमानं तत्पदाब्जं पुलकाञ्चितविग्रहम्॥ १५६
सगद्गदं साश्रुनेत्रं सर्व्वत्र समदर्शिनम्।
अतीव कमनीयञ्च शश्वत्सुस्थिरयौवनम्॥ १५७
स्वतेजसा प्रज्वलन्तं सुखदृश्यं विचक्षणम्।
शरत्पार्व्वणचन्द्राभं चित्रगुप्तपुरःस्थितम्॥ १५८
पुण्यात्मनां शान्तरूपं पापिनाञ्च भयङ्करम्।
तद्दृष्ट्वा प्रणमेद्देही महाभीतश्च तिष्ठति॥ १५९
चित्रगुप्तविचारेण येषां यदुचितं फलम्।
शुभाशुभञ्च कुरुते तदेव रविनन्दनः॥ १६०
एवं तेषां गतायाते निवृत्तिर्नास्ति जीविनाम्।
निवृत्तिहेतुरूपञ्च श्रीकृष्णपादसेवनम्॥ १६१
इत्येवं कथितं सर्व्वं वरं प्रार्थय वाञ्छितम्।
सर्व्वं दास्यामि ते वत्स न मेऽसाध्यञ्च किञ्चन॥ १६२

महेन्द्र उवाच।

इन्द्रत्वञ्च गतं भद्रं किमैश्वर्य्यैः प्रयोजनम्।
कल्पवृक्ष मुनिश्रेष्ठ देहि मे परमं पदम्॥ १६३
महेन्द्रस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः।
तमुवाच वचः सत्यं वेदोक्तं सारमेव च॥ १६४

दुर्व्वासा उवाच।

परं पदं विषयिणां महेन्द्रातिसुदुर्लभम्।
मुक्तिर्युष्मद्विधानाञ्च न लये प्राकृतेऽपि च॥ १६५
आविर्भावः सृष्टिविधौ तिरोभावो लयेऽपि च।
यथा जागरणं सुप्तिभवत्येव क्रमेण च॥ १६६
यथा भ्रमति कालश्च तथा विषयिणो ध्रुवम्।
चक्रनेमिक्रमेणैव नित्यमेवश्वरेच्छया॥ १६७
पलमेकं भवेदेव यथा विपलषष्टिभिः।
षष्टिभिश्च पलैर्दण्डो मुहूर्त्तं द्विगुणात् ततः॥१६८
त्रिंशदेव मुहूर्त्तांश्च भवेदेव दिवानिशम्।
दशपञ्च दिवारात्रिः पक्षमेकं विदुर्बुधाः॥ १६९
पक्षाभ्यां शुक्लकृष्णाभ्यां मास एव विधीयते।
ऋतुर्द्वाभ्याञ्च मासाभ्यां संख्याविद्भिः प्रकीर्त्तितः॥१७०

ऋतुत्रयेणायनञ्च ताभ्यां द्वाभ्याञ्च वत्सरः।
विंशत्सहस्राधिकैरेव त्रिचत्वारिंशल्लक्षकैः॥ १७१
वत्सरैर्नरमानैश्च युगाश्चत्वार एव च।
षष्ठ्यधिके पञ्चशते सहस्रे पञ्चत्रिंशती॥ १७२
युगे नराणां शक्रायुर्मनोरायुः प्रकीर्त्तितम्।
दिव्यसहस्रेन्द्रनिपातेऽष्टसहस्राधिक एव च॥ १७३
निपातो ब्रह्मणस्तत्र भवेत् प्राकृतिको लयः।
लये प्राकृतिके वत्स कृष्णस्य परमात्मनः॥ १७४
चक्षुर्निमेषः सृष्टिश्च पुनरुन्मीलने तथा।
ब्रह्मसृष्टिलयानाञ्च संख्या नास्ति श्रुतौ श्रुतम्॥१७५
यथा पृथिव्या रेणूनामित्याह चन्द्रशेखरः।
एतेषां मोक्षणं नास्ति कथितानि च यानि च॥ १७६
सृष्टिसूत्रस्वरूपाणि चान्यं वृणु वरं सुर।
मुनीन्द्रस्य वचः श्रुत्वा देवेन्द्रो विस्मितो मुने॥ १७७
आत्मनः पूर्व्वमैश्वर्य्यं वरयामास तत्र वै।
तत् प्राप्स्यसि चिरेणैवेत्युक्त्वा स प्रययौ गृहम्॥१७८
इन्द्रो लेभे ज्ञानञ्च न सम्पद्विपदं विना॥ १७९

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
मुनीन्द्र-सुरेन्द्रसंवादे लक्ष्म्युपाख्याने
षट्त्रिंशोऽध्यायः॥ ३६॥

---

## सप्तत्रिंशोऽध्यायः।

नारद उवाच।

हरेर्गुणं समाकर्ण्य ज्ञानं प्राप्य पुरन्दरः।
किं चकार गृहं गत्वा तन्मे व्याख्यातुमर्हसि॥ १

नारायण उवाच।

श्रीकृष्णस्य गुणं श्रुत्वा वीतरागो बभूव सः।
वैराग्यं वर्द्धयामास तस्य ब्रह्मन् दिने दिने॥ २
मुनिस्थानाद्गृहं गत्वा स ददर्शामरावतीम्।
दैत्यैरसुरसंघैश्च समाकीर्णां भयाकुलाम्॥ ३
विषमबान्धवां कुत्र बन्धुहीनाञ्च कुत्रचित्।
पितृ-मातृ-कलत्रादि-विहीनामतिचञ्चलाम्॥ ४
शत्रुग्रस्ताञ्च तां दृष्ट्वा जगाम वाक्पतिं प्रति।
शक्रो मन्दाकिनीतीरे ददर्श गुरुमीश्वरम्॥ ५
ध्यायमानं परं ब्रह्म गङ्गातोयस्थितं परम्।
सूर्य्याभिसंमुखं पूर्व्वमुखञ्च विश्वतोमुखम्॥ ६

साश्रुनेत्रं पुलकितं परमानन्दसंयुतम्।
वरिष्ठञ्च गरिष्ठञ्च धर्म्मिष्ठमिष्टसेविनाम्॥ ७
प्रियञ्च बन्धुवर्गाणामतिश्रेष्ठञ्च ज्ञानिनाम्।
ज्येष्ठञ्च भ्रातृवर्गाणां नेष्टञ्च सुरवैरिणाम्॥ ८
दृष्ट्वा गुरुं जपन्तञ्च तत्र तस्थौ सुरेश्वरः।
गृहद्रान्ते गुरुं दृष्ट्वा चोत्थितं प्रणनाम सः॥ ९
प्रणम्य चरणाम्भोजे रुरोदोच्चैर्मुहुर्म्मुहुः।
वृत्तान्तं कथयामास ब्रह्मशापादिकं तथा॥ १०
पुनर्वरोपलब्धिञ्च ज्ञानप्राप्तिं सुदुर्लभाम्।
वैरग्रस्ताञ्च स्वपुरीं क्रमेणैव सुरेश्वरः॥ ११
शिष्यस्य वचनं श्रुत्वा सतां बुद्धिमतां वरः।
बृहस्पतिरुवाचेदं कोपरक्तास्यलोचनः॥ १२
गुरुरुवाच।
श्रुतं सर्व्वं सुरश्रेष्ठ मा रोदीर्वचनं शृणु।
न कातरो हि नीतिज्ञो विपत्तौ च कदाचन॥ १३
सम्पत्तिर्वा विपत्तिर्वा नश्वरा स्वप्नरूपिणी।
पूर्व्वस्वकर्म्मायत्ता च स्वयं कर्त्ता तयोरपि॥ १४
सर्व्वेषाञ्च भ्रमत्येव शश्वज्जन्मनि जन्मनि।
चक्रनेमिक्रमेणैव तत्र का परिदेवना॥ १५
भुङ्क्ते हि स्वकृतं कर्म्म सर्व्वत्र चापि भारते।
शुभाशुभञ्च यत्किञ्चित् स्वकर्म्मफलभुक् पुमान्॥ १६
नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम्॥ १७
इत्येवमुक्तं वेदे च कृष्णेन परमात्मना।
सान्धि कौथुमशाखायां सम्बोध्य कमलोद्भवम्॥ १८
जन्मभोगावशेषे च सर्व्वेषां कृतकर्म्मणाम्।
अनुरूपञ्च तेषाञ्च भारते नान्यथैव हि॥ १९
कर्म्मणा ब्रह्मशापञ्च कर्म्मणा च शुभाशिषम्।
कर्म्मणा च महालक्ष्मीं लभेद्दैन्यञ्च कर्म्मणा॥ २०
कोटिजन्मार्ज्जितं कर्म्म जीविनामनुगच्छति।
न हि त्यजेद्विना भोगात् तच्छायेव पुरन्दर॥ २१
कालभेदे देशभेदे पात्रभेदे च कर्म्मणाम्।
न्यूनताधिकता वापि तावदेव हि कर्म्मणाम्॥ २२
वस्तुदाने च वस्तूनां समं पुण्यं समे दिने।
दिनभेदे कोटिगुणमसंख्यं वाधिकं ततः॥ २३
समे देशे च वस्तूनां दाने पुण्यं सुरेश्वर।
देशभेदे कोटिगुणमसंख्यं वाधिकं तथा॥ २४
समे पात्रे समं पुण्यं वस्तूनां कर्त्तुरेव च।
पात्रभेदे शतगुणमसंख्यं वा ततोऽधिकम्॥ २५
यथा फलन्ति शस्यानि न्यूनानि वाधिकानि च।
कृषकाणां क्षेत्रभेदे पात्रभेदे फलं तथा॥ २६
सामान्यदिवसे विप्रे दानं समफलं भवेत्।
अमायां रविसंक्रान्त्यां फलं शतगुणं भवेत्।
चातुर्म्मास्य-पौर्णमास्योरनन्तफलमेव च॥ २७
ग्रहणे शशिनः कोटिगुणञ्च फलमेव च।
सूर्य्यस्य ग्रहणे चापि ततो दशगुणं फलम्॥ २८
अक्षयायामक्षयञ्च वासंख्यं फलमुच्यते।
एवमन्यत्र पुण्याहे फलाधिक्यं भवेदिह॥ २९
यथा दाने तथा स्नाने जपे सत्पुण्यकर्म्मसु।
एवं सर्व्वत्र बोद्धव्यं नराणां कर्म्मणां फलम्॥ ३०
सामान्यदेशे दानञ्च विप्रे समफलं भवेत्।
तीर्थे देवगृहे चैव फलं शतगुणं स्मृतम्॥ ३१
गङ्गायाञ्च कोटिगुणं क्षेत्रे नारायणेऽव्ययम्।
कुरुक्षेत्रे वदर्य्याञ्च काश्यां कोटिगुणं तथा॥ ३२
यथा चैव कोटिगुणं तथा च विष्णुमन्दिरे।
केदारे च लक्षगुणं हरिद्वारे तथा फलम्॥ ३३
पुष्करे भास्करक्षेत्रे दशलक्षगुणं फलम्।
एवं सर्व्वत्र बोद्धव्यं फलाधिक्यं क्रमेण च॥ ३४
सामान्यब्राह्मणे दाने सममेव फलं लभेत्।
लक्षं त्रिसन्ध्यपूते च पण्डिते च जितेन्द्रिये॥ ३५
विष्णुमन्त्रोपासके च बुधे कोटिगुणं फलम्।
एवं सर्व्वत्र बोद्धव्यं फलाधिक्यं भवेत् ततः॥ ३६
एवं दण्डेन सूत्रेण शरावेण जलेन च।
कुम्भं निर्म्माति चक्रेण कुम्भकारो मृदा भुवि॥ ३७
तथैव कर्म्मसूत्रेण फलं धाता ददाति च।
यस्याज्ञया सृष्टिविधौ तञ्च नारायणं भज॥ ३८
स विधाता विधातुश्च पातुः पाता जगत्त्रये।
स्रष्टुः स्रष्टा च संहर्त्तुः संहर्त्ता कालकालकः॥ ३९
महाविपत्तौ संसारे यः स्मरेन्मधुसूदनम्।
विपत्तौ तस्य सम्पत्तिर्भवेदित्याह शङ्करः॥ ४०
इत्येवमुक्त्वा जीवश्च समालिङ्ग्य सुरेश्वरम्।
दत्त्वा शुभाशिषञ्चेष्टं बोधयामास नारद॥ ४१
इति श्रीब्रह्मवैवर्त्ते प्रकृतिखण्डे लक्ष्म्युपाख्याने
महेन्द्रसंवादे सप्तत्रिंशोऽध्यायः॥ ३७॥

## अष्टत्रिंशोऽध्यायः।

नारायण उवाच।

हरिं ध्यात्वा हरिर्ब्रह्मन् जगाम ब्रह्मणः सभाम्।
वृहस्पतिं पुरस्कृत्य सर्व्वैः सुरगणैः सह ॥ १
शीघ्रं गत्वा ब्रह्मलोकं दृष्ट्वा च कमलोद्भवम्।
प्रणेमुर्द्देवताः सर्व्वाः गुरुणा सह नारद ॥ २
वृत्तान्तं कथयामास सुराचार्य्यो विधिं विभुम्।
प्रहस्योवाच तच्छ्रुत्वा महेन्द्रं कमलोद्भवः ॥ ३

ब्रह्मोवाच।

वत्स मद्वंशजातोऽसि प्रपौत्रो मे विचक्षणः।
वृहस्पतेश्च शिष्यस्त्वं सुराणामधिपः स्वयम् ॥ ४
मातामहश्च दक्षश्च विष्णुभक्तः प्रतापवान्।
कुलत्रयं यस्य शुद्धं कथं सोऽहङ्कृती भवेत् ॥ ५
माता पतिव्रता यस्य पिता शुद्धो जितेन्द्रियः।
मातामहो मातुलश्च कथं सोऽहङ्कृती भवेत् ॥ ६
जनः पैतृकदोषेण दोषान्मातामहस्य च।
गुरोर्द्दोषान्नीतिदोषैर्हरिद्वेषी भवेद्ध्रुवम् ॥ ७
सर्व्वान्तरात्मा भगवान् सर्व्वदेहेष्ववस्थितः।
यस्य देहात् स प्रयाति स शवस्तत्क्षणं भवेत् ॥ ८
मनोऽहमिन्द्रियेशोऽपि ज्ञानरूपो हि शङ्करः।
विष्णुः प्राणाश्च प्रकृतिर्बुद्धिर्भगवती सती ॥ ९
निद्रादयः शक्तयश्च ताः सर्व्वाः प्रकृतेः कलाः।
आत्मनः प्रतिविम्बश्च जीवो भोगी शरीरभृत् ॥ १०
आत्मनीशे गते देहात् सर्व्वे यान्ति ससम्भ्रमात्।
यथा चाध्वनि गच्छन्तं नरदेवमिवानुगाः ॥ ११
अहं शिवश्च शेषश्च विष्णुधर्म्मो महान् विराट्।
वयं यदंशा भक्ताश्च तत्पुष्पं न्यक्कृतं त्वया ॥ १२
शिवेन पूजितं पादपद्मं पुष्पेण येन च।
तच्च दुर्व्वाससा दत्तं देवेन न्यक्कृतं सुर ॥ १३
तत्पुष्पं मस्तके यस्य कृष्णपादाब्जप्रच्युतम्।
सर्व्वेषाञ्च सुराणाञ्च तत्पूजा पुरतो भवेत् ॥ १४
दैवेन वञ्चितस्त्वञ्च दैवञ्च बलवत्तरम्।
भाग्यहीनं जनं मूढ़ं को वा रक्षितुमीश्वरः ॥ १५
कृष्णं न मन्यते यो हि श्रीनाथं सर्व्ववन्दितम्।
प्रयाति रुष्टा तद्वासी महालक्ष्मीर्विहाय तम् ॥१६
शतयज्ञेन या लब्धा दीक्षितेन त्वया पुरा।
सा श्रीर्गताधुना कोपात्कृष्णनिर्म्माल्यवर्ज्जनात् ॥१७
अधुना गच्छ वैकुण्ठं मया च गुरुणा सह।
निषेव्य तत्र श्रीनाथं श्रियं प्राप्स्यसि तद्वरात् ॥ १८
इत्येवमुक्त्वा स ब्रह्मा सर्व्वैः सुरगणैः सह।
शीघ्रं जगाम वैकुण्ठं यत्र श्रीशस्तया सह ॥ १९
तत्र गत्वा परं ब्रह्म भगवन्तं सनातनम्।
दृष्ट्वा तेजःस्वरूपञ्च प्रज्वलन्तं स्वतेजसा ॥ २०
ग्रीष्ममध्याह्नमार्त्तण्ड-शतकोटिसमप्रभम्।
शान्तञ्चानादिमध्यान्तं लक्ष्मीकान्तमनन्तकम् ॥ २१
चतुर्भुजैः पार्षदैश्च सरस्वत्यान्वितं शुभम्।
भक्त्या चतुर्भिर्व्वेदैश्च गङ्गया परिषेवितम् ॥ २२
तं प्रणेमुः सुराः सर्व्वे मूर्द्ध्ना ब्रह्मपुरोगमाः।
भक्तिनम्राः साश्रुनेत्रास्तुष्टुवुः पुरुषोत्तमम् ॥ २३
वृत्तान्तं कथयामास स्वयं ब्रह्मा कृताञ्जलिः।
रुरुदुर्द्देवताः सर्व्वाः स्वाधिकारच्युताश्च ताः ॥ २४
स ददर्श सुरगणं विपद्ग्रस्तं भयाकुलम्।
वस्त्रभूषणशून्यञ्च वाहनादिविवर्ज्जितम् ॥ २५
शोभाशून्यं हतश्रीकमतिनिष्प्रतिभं परम्।
उवाच कातरं दृष्ट्वा प्रपन्नभयभञ्जनः ॥ २६

श्रीनारायण उवाच।

मा भैर्ब्रह्मन् हे सुराश्च भयं किं वो मयि स्थिते।
दास्यामि लक्ष्मीमचलां परमैश्वर्य्यवर्द्धिनीम् ॥ २७
किन्तु मद्वचनं किञ्चित् श्रूयतां समयोचितम्।
हितं सत्यं सारभूतं परिणामसुखावहम् ॥ २८
जनाश्चासंख्यविश्वस्था मदधीनाश्च सन्ततम्।
यथा तथाहं मद्भक्तैः पराधीनः स्वतन्त्रकः ॥ २९
यं यं रुष्टो हि मद्भक्तो मत्परो हि निरङ्कुशः।
तद्गेहेऽहं न तिष्ठामि पद्मया सह निश्चितम् ॥ ३०
दुर्व्वासाः शङ्करांशश्च वैष्णवो मत्परायणः।
तच्छापादागतोऽहञ्च सश्रीको वो गृहादपि ॥ ३१
यत्र शङ्खध्वनिर्नास्ति तुलसी च शिलार्च्चनम्।
न भोजनञ्च विप्राणां न पद्मा तत्र तिष्ठति ॥ ३२
मद्भक्तानाञ्च मन्निन्दा यत्र यत्र भवेत् सुराः।
महारुष्टा महालक्ष्मीस्ततो याति पराभवात् ॥३३
मद्भक्तिहीनो यो मूढ़ो यो भुङ्क्ते हरिवासरे।
मम जन्मदिने चापि याति श्रीस्तद्गृहादपि ॥ ३४
मन्नामविक्रयी यश्च विक्रीणाति स्वकन्यकाम्।

यत्रातिथिर्न भुङ्क्ते च मत्प्रिया याति तद्गृहात् ॥३५
पापिनां यो गृहं याति शूद्रश्राद्धान्नभोजकः।
महारुष्टा ततो याति मन्दिरात् कमलालया ॥ ३६
शूद्राणां शवदाही च भाग्यहीनश्च ब्राह्मणः।
याति रुष्टा तद्गृहाच्च देवी कमलवासिनी ॥ ३७
शूद्राणां सूपकारो यो ब्राह्मणो वृषवाहकः।
तत्तोयपानभीता च कमला याति तद्गृहात् ॥ ३८
विप्रो यवनसेवी च देवलः शूद्रयाजकः।
तत्तोयपानभीता च वैष्णवी याति तद्गृहात् ॥ ३९
विश्वासघाती मित्रघ्नो नरघाती कृतघ्नकः।
योऽगम्यागामुको विप्रो महालक्ष्मी याति तद्गृहात्॥४०
अशुद्धहृदयः क्रूरो हिंसको निन्दको द्विजः।
ब्राह्मण्यां शूद्रजातश्च याति देवी च तद्गृहात् ॥४१
यो विप्रः पुंश्चलीपुत्रो महापापी च तत्पतिः।
अवीरान्नञ्च यो भुङ्क्ते तस्माद्याति जगत्प्रसूः ॥ ४२
तृणं छिनत्ति नखरैस्तैर्वा यो हि लिखेन्महीम्।
गृही मलिनवासाश्च सा प्रयाति च तद्गृहात् ॥ ४३
सूर्य्योदये च दिर्भोजी दिवाशायी च ब्राह्मणः।
दिवामैथुनकारी च तस्माद्याति हरिप्रिया ॥ ४४
आचारहीनो यो विप्रो यश्च शूद्रप्रतिग्रही।
अदीक्षितो हि यो मूढस्तस्माल्लोला प्रयाति च ॥ ४५
स्निग्धपादश्च नग्नो वा यः शेते ज्ञानदुर्बलः।
शश्वद्धसति वाचालो यात्येव तद्गृहात् सती ॥ ४६
शिरःस्नातश्च तैलेन योऽन्यदङ्गमुपस्पृशेत्।
स्वाङ्गे च वादयेद्वाद्यं रमा याति च तद्गृहात् ॥ ४७
व्रतोपवासहीनो यः सन्ध्याहीनोऽशुचिर्द्विजः।
विष्णुभक्तिविहीनो यस्तस्माद्याति हरिप्रिया ॥ ४८
ब्राह्मणं निन्दयेद्यो हि तांश्च द्वेष्टि च सन्ततम्।
जीवहिंसी दयाहीनो याति सर्व्वप्रसूस्ततः ॥ ४९
यत्र यत्र हरेरर्च्चा हरेरुत्कीर्त्तनं शुभम्।
तत्र तिष्ठति सा देवी कमला सर्व्वमङ्गला ॥ ५०
यत्र प्रशंसा कृष्णस्य तद्भक्तस्य पितामह।
सा च कृष्णप्रिया देवी तत्र तिष्ठति सन्ततम् ॥ ५१
यत्र शङ्खध्वनिः शङ्खः शिला च तुलसीदलम्।
तत्सेवा वन्दनं ध्यानं तत्र सा परितिष्ठति ॥ ५२
शिवलिङ्गार्च्चनं यत्र तस्य चोत्कीर्त्तनं शुभम्।
दुर्गार्च्चनं तद्गुणाश्च तत्र पद्मनिवासिनी ॥ ५३
विप्राणां सेवनं यत्र तेषाञ्च भोजनं शुभम्।
अर्च्चनं सर्व्वदेवानां तत्र पद्ममुखी सती ॥ ५४
इत्युक्त्वा च सुरान् सर्व्वान् रमामाह रमापतिः।
क्षीरोदसागरे जन्म कलया च लभेति च ॥ ५५
इत्युक्त्वा तान् जगन्नाथो ब्रह्माणं पुनराह च।
मथित्वा सागरं लक्ष्मीं देवेभ्यो देहि पद्मज ॥ ५६
इत्युक्त्वा कमलाकान्तो जगामाभ्यन्तरं मुने।
देवाश्चिरेण कालेन ययुः क्षीरोदसागरम् ॥ ५७
मन्थानं मन्दरं कृत्वा कूर्म्मं कृत्वा च भाजनम्।
कृत्वा शेषं मन्थपाशं सुराश्चक्रुश्च घर्षणम् ॥ ५८
धन्वन्तरिञ्च पीयूषमुच्चैःश्रवसमीप्सितम्।
नानारत्नं हस्तिरत्नं प्रापुर्लक्ष्मीं सुदर्शनम् ॥ ५९
वनमालां ददौ सा च क्षीरोदशायिने मुने।
सर्व्वेश्वराय रम्याय विष्णवे वैष्णवी सती ॥ ६०
देवैः स्तुता पूजिता च ब्रह्मणा शङ्करेण च।
ददौ दृष्टिं सुरगृहे ब्रह्मशापविमोचने ॥ ६१
प्रापुर्देवाः स्वविषयं दैत्यैर्ग्रस्तं भयङ्करैः।
महालक्ष्मीप्रसादेन वरदानेन नारद ॥ ६२
इत्येवं कथितं सर्व्वं लक्ष्म्युपाख्यानमुत्तमम्।
सुखदं सारभूतञ्च किं भूयः श्रोतुमिच्छसि ॥ ६३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारद-संवादे लक्ष्म्युपाख्याने
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशोऽध्यायः।

नारद उवाच।

हरेरुत्कीर्त्तनं भद्रं श्रुतं तज्ज्ञानमुत्तमम्।
ईप्सितं लक्ष्म्युपाख्यानं ध्यानं स्तोत्रादिकं वद ॥ १
हरिणा पूजिता पूर्व्वं ततो ब्रह्मादिभिस्तथा।
शक्रेण भ्रष्टराज्येन सार्द्धं सुरगणेन च ॥ २
पूजिता केन ध्यानेन विधिना केन वा पुरा।
स्तुता वा केन स्तोत्रेण तन्मे व्याख्यातुमर्हसि ॥ ३

नारायण उवाच।

स्नात्वा तीर्थे पुरा शक्रो धृत्वा धौते च वाससी।
घटं संस्थाप्य क्षीरोदे देवषट्कञ्च पूजयेत् ॥ ४
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्।

एतान् भक्त्या समभ्यर्च्य पुष्पगन्धादिभिस्तथा ॥ ५
तत्रावाह्य महालक्ष्मीं परमैश्वर्य्यरूपिणीम् ।
पूजां चकार देवेशो ब्रह्मणा च पुरोधसा ॥ ६
पुरःस्थितेषु मुनिषु ब्राह्मणेषु गुरौ तथा ।
देवादिषु च देवेशे ज्ञानानन्दे शिवे मुने ॥ ७
पारिजातस्य पुष्पञ्च गृहीत्वा चन्दनोक्षितम् ।
ध्यात्वा देवीं महालक्ष्मीं पूजयामास नारद ॥ ८
ध्यानञ्च सामवेदोक्तं यद्दत्तं ब्रह्मणे पुरा ।
हरिणा तेन ध्यानेन तन्निबोध वदामि ते ॥ ९
सहस्रदलपद्मस्य कर्णिकावासिनीं पराम् ।
शरत्पार्व्वणकोटीन्दुप्रभामुष्टकरीं वराम् ॥ १०
स्वतेजसा प्रज्वलन्तीं सुखदृश्यां मनोहराम् ।
प्रतप्तकाञ्चननिभां शोभां मूर्त्तिमतीं सतीम् ॥ ११
रत्नभूषणभूषाढ्यां शोभितां पीतवाससा ।
ईषद्धास्यप्रसन्नास्यां शश्वत्सुस्थिरयौवनाम् ॥ १२
सर्व्वसम्पत्प्रदात्रीञ्च महालक्ष्मीं भजे शुभाम् ।
ध्यानेनानेन तां ध्यात्वा नानोपहारसंयुतः ॥ १३
सम्पूज्य ब्रह्मवाक्येण चोपहाराणि षोडश ।
ददौ भक्त्या विधानेन प्रत्येकं मन्त्रपूर्व्वकम् ।
प्रशंस्यानि प्रहृष्टानि दुर्लभानि वराणि च ॥ १४
अमूल्यरत्नसारञ्च निर्म्मितं विश्वकर्म्मणा ।
आसनञ्च प्रसन्नञ्च महालक्ष्मि प्रगृह्यताम् ॥ १५
शुद्धं गङ्गोदकमिदं सर्व्ववन्दितमीप्सितम् ।
पापेध्मवह्निरूपञ्च गृह्यतां कमलालये ॥ १६
पुष्प-चन्दन-दूर्व्वादिसंयुतं जाह्नवीजलम् ।
शङ्खगर्भस्थितं शुद्धं गृह्यतां पद्मवासिनि ॥ १७
सुगन्धि विष्णुतैलञ्च सुगन्धामलकीजलम् ।
देहसौन्दर्य्यबीजञ्च गृह्यतां श्रीहरिप्रिये ॥ १८
वृक्षनिर्य्यासरूपञ्च गन्धद्रव्यादिसंयुतम् ।
श्रीकृष्णकान्ते धूपञ्च पवित्रञ्च प्रगृह्यताम् ॥ १९
मलयाचलसम्भूतं वृक्षसारं मनोहरम् ।
सुगन्धयुक्तं सुखदं चन्दनं देवि गृह्यताम् ॥ २०
जगच्चक्षुःस्वरूपञ्च प्राणरक्षणकारणम् ।
प्रदीपं शुद्धरूपञ्च गृह्यतां परमेश्वरि ॥ २१
नानोपहाररूपञ्च नानारससमन्वितम् ।
नानास्वादुकरञ्चैव नैवेद्यं प्रतिगृह्यताम् ॥ २२
अन्नब्रह्मस्वरूपञ्च प्राणरक्षणकारणम् ।
तुष्टिदं पुष्टिदञ्चैवमन्नञ्च प्रतिगृह्यताम् ॥ २३
शाल्यन्नसुपक्वञ्च शर्करागव्यसंयुतम् ।
सुस्वादुयुक्तं पद्मे च परमान्नं प्रगृह्यताम् ॥ २४
शर्करागव्यपक्वञ्च सुस्वादु सुमनोहरम् ।
मया निवेदितं लक्ष्मि स्वस्तिकं प्रतिगृह्यताम् ॥ २५
नानाविधानि रम्याणि पक्वानि च फलानि च ।
स्वादुयुक्तानि कमले गृह्यन्तां फलदानि च ॥ २६
सुरभिस्तन्यसंयुक्तं सुस्वादु सुमनोहरम् ।
मर्त्यामृतञ्च गव्यञ्च गृह्यतामच्युतप्रिये ॥ २७
सुस्वादु रससंयुक्तमिक्षुवृक्षरसोद्भवम् ।
अग्निपक्वमपक्वं वा गुड़ञ्च देवि गृह्यताम् ॥ २८
यव-गोधूमशस्यानां चूर्णरेणुसमुद्भवम् ।
सुपक्वगुड़गव्याक्तं मिष्टान्नं देवि गृह्यताम् ॥ २९
शस्यचूर्णोद्भवं पक्वं स्वस्तिकादिसमन्वितम् ।
मया निवेदितं देवि पिष्टकं प्रतिगृह्यताम् ॥ ३०
पार्थिवो वृक्षभेदश्च विविधद्रव्यकारणम् ।
सुस्वादु रससंयुक्त इक्षुश्च प्रतिगृह्यताम् ॥ ३१
शीतवायुप्रदञ्चैव दाहे च सुखदं परम् ।
कमले गृह्यताञ्चेदं व्यजनं श्वेतचामरम् ॥ ३२
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम् ।
जिह्वाजाड्यच्छेदकरं ताम्बूलं देवि गृह्यताम् ॥ ३३
सुवासितं शीतलञ्च पिपासानाशकारणम् ।
जगज्जीवनरूपञ्च जीवनं देवि गृह्यताम् ॥ ३४
देहसौन्दर्य्यबीजञ्च सदा शोभाविवर्द्धनम् ।
कार्पासजञ्च क्रिमिजं वसनं देवि गृह्यताम् ॥ ३५
रत्नस्वर्णविकारञ्च देहभूषाविवर्द्धनम् ।
शोभाधानं श्रीकरञ्च भूषणं प्रतिगृह्यताम् (क) ॥ ३६
नानाकुसुमनिर्म्माणं बहुशोभाप्रदं (ख) परम् ।
सुर-भूपप्रियं शुद्धं माल्यं देवि प्रगृह्यताम् ॥ ३७
शुचिदः शुद्धरूपश्च सर्व्वमङ्गलमङ्गलः ।
गन्धवस्तूद्भवो रम्यो गन्धो देवि प्रगृह्यताम् ॥ ३८
पुण्यतीर्थोदकञ्चैव विशुद्धं शुचिदं सदा ।
गृह्यतां कृष्णकान्ते च रम्यमाचमनीयकम् ॥ ३९
रत्नसारादिनिर्म्माणं पुष्पचन्दनसंयुतम् ।
रत्नभूषणभूषाढ्यं सुतल्पं प्रतिगृह्यताम् ॥ ४०

(क) श्रीः प्रगृह्यताम् इति क्वचित् पाठः ।
(ख) शोभाश्रयमिति च पाठः ।

यद्युयद्द्रव्यमपूर्व्वञ्च पृथिव्यामतिदुर्लभम्।
देव-भूपार्हभोग्यञ्च तद्द्रव्यं देवि गृह्यताम्॥ ४१
द्रव्याण्येतानि दत्त्वा च मूलेन देवपुङ्गवः।
मूलं जजाप भक्त्या च दशलक्षं विधानतः॥ ४२
जपेन दशलक्षेण मन्त्रसिद्धिर्बभूव ह।
मन्त्रश्च ब्रह्मणा दत्तः कल्पवृक्षश्च सर्व्वदः॥ ४३
लक्ष्मीर्माया कामवाणी ङेऽन्तः कमलवासिनी।
स्वाहान्तो वैदिको मन्त्रराजोऽयं द्वादशाक्षरः॥ ४४
कुवेरोऽनेन मन्त्रेण सर्व्वैश्वर्य्यमवाप्तवान्।
राजराजेश्वरो दक्ष-सावर्णिर्मनुरेव सः॥ ४५
मङ्गलोऽनेन मन्त्रेण सप्तद्वीपवतीपतिः।
प्रियव्रतोत्तानपादौ केदारो नृप एव च॥ ४६
एते च सिद्धा राजेन्द्रा मन्त्रेणानेन नारद।
सिद्धे मन्त्रे महालक्ष्मीः शक्राय दर्शनं ददौ॥ ४७
रत्नेन्द्रसारनिर्म्माण-विमानस्था वरप्रदा।
सप्तद्वीपवतीं पृथ्वीं छादयन्ती त्विषा च सा॥ ४८
श्वेतचम्पकवर्णाभा रत्नभूषणभूषिता।
ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकातरा॥ ४९
बिभ्रती रत्नमालाञ्च कोटिचन्द्रसमप्रभाम्।
दृष्ट्वा जगत्प्रसूं शान्तां तुष्टाव तां पुरन्दरः॥ ५०
पुलकाञ्चितसर्व्वाङ्गः साश्रुनेत्रः कृताञ्जलिः।
ब्रह्मणा च प्रदत्तेन स्तोत्रराजेन संयतः।
सर्व्वाभीष्टप्रदेनैव वैदिकेनैव तत्र च॥ ५१

इन्द्र उवाच।

ओं नमो महालक्ष्म्यै।

नमः कमलवासिन्यै नारायण्यै नमो नमः।
कृष्णप्रियायै सारायै पद्मायै च नमो नमः॥ ५२
पद्मपत्रेक्षणायै च पद्मास्यायै नमो नमः।
पद्मासनायै पद्मिन्यै वैष्णव्यै च नमो नमः॥ ५३
सर्व्वसम्पत्स्वरूपायै सर्व्वदात्र्यै नमो नमः।
सुखदायै मोक्षदायै सिद्धिदायै नमो नमः॥ ५४
हरिभक्तिप्रदात्र्यै च हर्षदायै नमो नमः।
कृष्णवक्षःस्थितायै च कृष्णेशायै नमो नमः॥ ५५
चन्द्रशोभास्वरूपायै रत्नपद्मे च शोभने।
सम्पत्त्यधिष्ठातृदेव्यै महादेव्यै नमो नमः॥ ५६
शस्याधिष्ठातृदेव्यै च शस्यायै च नमो नमः।
नमो बुद्धिस्वरूपायै बुद्धिदायै नमो नमः॥ ५७

वैकुण्ठे या महालक्ष्मीर्लक्ष्मीः क्षीरोदसागरे।
स्वर्गलक्ष्मीरिन्द्रगेहे राजलक्ष्मीर्नृपालये॥ ५८
गृहलक्ष्मीश्च गृहिणां गेहे च गृहदेवता।
सुरभी सा गवां माता दक्षिणा यज्ञकामिनी॥ ५९
अदितिर्देवमाता त्वं कमला कमलालये।
स्वाहा त्वञ्च हविर्द्दाने कव्यदाने स्वधा स्मृता॥ ६०
त्वं सहिष्णुस्वरूपा च सर्व्वाधारा वसुन्धरा।
शुद्धसत्त्वस्वरूपा त्वं नारायणपरायणा॥ ६१
क्रोधहिंसावर्ज्जिता च वरदा च शुभानना।
परमार्थप्रदा त्वञ्च हरिदास्यप्रदा परा॥ ६२
यया विना जगत् सर्व्वं भस्मीभूतमसारकम्।
जीवन्मृतञ्च विश्वञ्च शवतुल्यं यया विना॥ ६३
सर्व्वेषाञ्च परा माता सर्व्वबान्धवरूपिणी।
यया विना न सम्भाष्यो बान्धवैर्बान्धवः सदा॥ ६४
त्वया हीनो बन्धुहीनस्त्वया युक्तः सबान्धवः।
धर्म्मार्थकाममोक्षाणां त्वञ्च कारणरूपिणी॥ ६५
यथा माता स्तनन्धानां शिशूनां शैशवे सदा।
तथा त्वं सर्व्वदा माता सर्व्वेषां सर्व्वविश्वतः॥ ६६
मातृहीनः स्तनान्धश्च स चेज्जीवति दैवतः।
त्वया हीनो जनः कोऽपि न जीवत्येव निश्चितम्॥ ६७
सुप्रसन्नस्वरूपा त्वं मां प्रसन्ना भवाम्बिके।
वैरिग्रस्तञ्च विषयं देहि मह्यं सनातनि॥ ६८
वयं यावत् त्वया हीना बन्धुहीनाश्च भिक्षुकाः।
सर्व्वसम्पद्विहीनाश्च तावदेव हरिप्रिये॥ ६९
राज्यं देहि श्रियं देहि बलं देहि सुरेश्वरि।
कीर्त्तिं देहि धनं देहि यशो मह्यञ्च देहि मे॥ ७०
कामं देहि मतिं देहि भोगान् देहि हरिप्रिये।
ज्ञानं देहि च धर्म्मञ्च सर्व्वसौभाग्यमीप्सितम्॥ ७१
प्रभावञ्च प्रतापञ्च सर्व्वाधिकारमेव च।
जयं पराक्रमं युद्धे परमैश्वर्य्यमेव च॥ ७२
इत्युक्त्वा च महेन्द्रश्च सर्व्वैः सुरगणैः सह।
प्रणनाम साश्रुनेत्रो मूर्द्ध्ना चैव पुनः पुनः॥ ७३
ब्रह्मा च शङ्करश्चैव शेषो धर्म्मश्च केशवः।
सर्व्वे चक्रुः परीहारं सुरार्थे च पुनः पुनः॥ ७४
देवेभ्यश्च वरं दत्त्वा पुष्पमालां मनोहराम्।
केशवाय ददौ लक्ष्मीः सन्तुष्टा सुरसंसदि॥ ७५
ययुर्देवाश्च सन्तुष्टाः स्वं स्वं स्थानञ्च नारद।

देवी ययौ हरेः क्रोड़ं दृष्टा क्षीरोदशायिनः ॥ ७६
ययतुश्चैव स्वगृहं ब्रह्मेशानौ च नारद।
दत्त्वा शुभाशिषं तौ च देवेभ्यः प्रीतिपूर्व्वकम् ॥ ७७
इदं स्तोत्रं महापुण्यं त्रिसन्ध्यं यः पठेन्नरः।
कुवेरतुल्यः स भवेद्राजराजेश्वरो महान् ॥ ७८
सिद्धस्तोत्रं यदि पठेत् सोऽपि कल्पतरुर्नरः।
पञ्चलक्षजपेनैव स्तोत्रसिद्धिर्भवेन्नृणाम् ॥ ७९
सिद्धस्तोत्रं यदि पठेन्मासमेकञ्च संयतः।
महासुखी च राजेन्द्रो भविष्यति न संशयः ॥ ८०
इति श्रीब्रह्मवैवर्त्ते महालक्ष्मीस्तोत्रं समाप्तम्।

नारद उवाच।

पुष्पं दुर्व्वाससा दत्तमस्यैव यस्य मस्तके।
तस्य सर्व्वपुरःपूजेत्युक्तं पूर्व्वं त्वया प्रभो ॥ ८१
तदैव स्थापितं पुष्पं गजेन्द्रस्यैव मस्तके।
कुतो जन्म गणेशस्य स च मत्तो वनं गतः ॥ ८२
मूर्द्धच्छेदे गणपतेः शनेर्दृष्ट्या पुरा मुने।
तत्स्कन्धे योजयामास हस्तिमस्तं हरिः स्वयम् ॥ ८३
अधुनोक्तं देवषट्कं सम्पूज्य च पुरन्दरः।
पूजयामास लक्ष्मीञ्च क्षीरोदे च सुरैः सह ॥ ८४
अहो पुराणवक्तृणां दुर्व्बोधं वचनं नृणाम्।
सुव्यक्तमस्य सिद्धान्तं वद वेदविदां वर ॥ ८५

नारायण उवाच।

यदा शशाप शक्रञ्च दुर्व्वासा मुनिपुङ्गवः।
तदा नास्त्येव तज्जन्म पूजाकाले बभूव सः ॥ ८६
सुचिरं दुःखिता देवा बभ्रमुर्ब्रह्मशापतः।
पश्चात् सम्प्राप तां लक्ष्मीं वरेण च हरेर्मुने ॥ ८७

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे लक्ष्म्युपाख्यानं नामैकोनचत्वारिंशोऽध्यायः ॥३९॥

---

## चत्वारिंशोऽध्यायः।

नारद उवाच।

नारायण महाभाग नारायणसम प्रभो।
रूपेण च गुणेनैव यशसा तेजसा त्विषा ॥ १
त्वमेव ज्ञानिनां श्रेष्ठः सिद्धानां योगिनां तथा।
महालक्ष्म्या उपाख्यानं विज्ञातं महदद्भुतम् ॥ २
तपस्विनां मुनीनाञ्च परो वेदविदां तथा।
अन्यत् किञ्चिदुपाख्यानं निगूढ़ं वद साम्प्रतम् ॥ ३
अतीव गोपनीयं यदुपयुक्तञ्च सर्व्वतः।
अप्रकाश्यं पुराणेषु वेदोक्तधर्म्मसंयुतम् ॥ ४

नारायण उवाच।

नानाप्रकारमाख्यानमप्रकाश्यं पुराणतः।
श्रुतौ कतिविधं गूढ़मास्ते ब्रह्मन् सुदुर्लभम् ॥ ५
तेषु यत् सारभूतञ्च श्रोतुं किं वा त्वमिच्छसि।
तन्मे ब्रूहि महाभाग पश्चाद्वक्ष्यामि तत् पुनः ॥ ६

नारद उवाच।

स्वाहा देवहविर्द्दाने प्रशस्ता सर्व्वकर्म्मसु।
पितृदाने स्वधा शस्ता दक्षिणा सर्व्वतो वरा ॥
एतासां चरितं जन्म फलं प्राधान्यमेव च।
श्रोतुमिच्छामि त्वद्वक्त्रात् वद वेदविदां वर ॥ ८

सौतिरुवाच।

नारदस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः।
कथां कथितुमारेभे पुराणोक्तां पुरातनीम् ॥ ९

नारायण उवाच।

सृष्टेः प्रथमतो देवाश्चाहारार्थं ययुः पुरा।
ब्रह्मलोके ब्रह्मसभामगम्यां सुमनोहराम् ॥ १०
गत्वा निवेदनं चक्रुराहारहेतुकं मुने।
ब्रह्मा श्रुत्वा प्रतिज्ञाय सिषेवे श्रीहरिं परम् ॥ ११
यज्ञरूपो हि भगवान् कलया च बभूव सः।
यज्ञे यद्यद्धविर्द्दानं दत्तं तेभ्यश्च ब्रह्मणा ॥ १२
हविर्द्ददति विप्राश्च भक्त्या च क्षत्रियादयः।
सुरा नैव प्राप्नुवन्ति तद्दानं मुनिपुङ्गव ॥ १३
देवा विषण्णास्ते सर्व्वे तत्सभाञ्च पुनर्ययुः।
गत्वा निवेदनं चक्रुराहाराभावहेतुकम् ॥ १४
ब्रह्मा श्रुत्वा तु ध्यानेन श्रीकृष्णं शरणं ययौ।
पूजां चकार प्रकृतिं ध्यानेनैव तदाज्ञया ॥ १५
प्रकृतिः कलया चैव सर्व्वशक्तिस्वरूपिणी।
बभूव दाहिकाशक्तिरग्नेः स्वाहा स्वकामिनी ॥ १६
ग्रीष्ममध्याह्नमार्त्तण्ड-प्रभाच्छादनकारिणी।
अतीव सुन्दरी रामा रमणीया मनोहरा ॥ १७
ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकातरा।
उवाचेति विधेरग्रे पद्मयोने वरं वृणु ॥ १८
विधिस्तद्वचनं श्रुत्वा सम्भ्रमात् समुवाच ताम् ॥१९

ब्रह्मोवाच।
त्वमग्नेर्दाहिका शक्तिर्भव पत्नी च सुन्दरि।
दग्धुं न शक्तस्त्वकृती हुताशश्च त्वया विना ॥ २०
त्वन्नामोच्चार्य्य मन्त्रान्ते यो दास्यति हविर्नरः।
सुरेभ्यस्तत् प्राप्नुवन्ति सुराश्चानन्दपूर्व्वकम् । २१
अग्नेः सम्पत्स्वरूपा च श्रीरूपा च गृहेश्वरी।
देवानां पूजिता शश्वन्नरादीनां भवाम्बिके ॥ २२
ब्रह्मणश्च वचः श्रुत्वा सा विषण्णा बभूव ह।
तमुवाच स्वयं देवी स्वाभिप्रायं स्वयम्भुवम् ॥ २३
स्वाहोवाच।
अहं कृष्णं भजिष्यामि तपसा सुचिरेण च।
ब्रह्मंस्तदन्यद्यत् किञ्चित् स्वप्नवद्भ्रम एव च ॥ २४
विधाता जगतां त्वञ्च शम्भुर्मृत्युञ्जयः प्रभुः।
बिभर्त्ति शेषो विश्वञ्च धर्म्मः साक्षी च देहिनाम्॥२५
सर्व्वाद्यपूज्यो देवानां गणेषु च गणेश्वरः।
प्रकृतिः सर्व्वसूः सर्व्वपूजिता यत्प्रसादतः ॥ २६
ऋषयो मुनयश्चैव पूजिता यं निषेव्य च।
यत्पादपद्मं पद्मैकभावेन चिन्तयाम्यहम् ॥ २७
पद्मास्या पाद्ममित्युक्त्वा पद्मनाभानुसारतः।
जगाम तपसे पाद्मे पाद्मादीशस्य पाद्मजा ॥ २८
तपस्तेपे लक्षवर्षमेकपादेन पाद्मजा।
तदा ददर्श श्रीकृष्णं निर्गुणं प्रकृतेः परम् ॥ २९
अतीव कमनीयञ्च रूपं दृष्ट्वा च सुन्दरी।
मूर्च्छां सम्प्राप कामेन कामेशस्य च कामुकी ॥ ३०
विज्ञाय तदभिप्रायं सर्व्वज्ञस्तामुवाच सः।
समुत्थाप्य च सत्क्रोड़े क्षीणाङ्गीं तपसा चिरम् ॥ ३१
श्रीकृष्ण उवाच।
वाराहे च त्वमंशेन मम पत्नी भविष्यसि।
नाम्ना नाग्नजीती कन्या कान्ते नग्नजितस्य च ॥३२
अधुनाग्नेर्दाहिका त्वं भव पत्नी च भाविनि।
मन्त्राङ्गरूपा पूता च मत्प्रसादाद्भविष्यसि ॥ ३३
वह्निस्त्वां भक्तिभावेन सम्पूज्य च गृहेश्वरीम्।
रमिष्यते त्वया सार्द्धं रामया रमणीयया ॥ ३४
इत्युक्त्वान्तर्दधे देवो देवीमाश्वास्य नारद।
तत्राजगाम सन्त्रस्तो वह्निर्ब्रह्मनिदेशतः ॥ ३५
सामवेदोक्तध्यानेन ध्यात्वा तां जगदम्बिकाम्।
सम्पूज्य परितुष्टाव पाणिं जग्राह मन्त्रतः ॥ ३६
तदा दिव्यं वर्षशतं स रेमे रामया सह।
अतीव निर्ज्जने रम्ये सम्भोगसुखदे सदा ॥ ३७
बभूव गर्भस्तस्याश्च हुताशस्य च तेजसा।
तद्दधार च सा देवी दिव्यं द्वादशवत्सरम् ॥ ३८
ततः सुषाव पुत्रांश्च रमणीयान् मनोहरान्।
दक्षिणाग्नि-गार्हपत्या-हवनीयान् क्रमेण च ॥ ३९
ऋषयो मुनयश्चैव ब्राह्मणाः क्षत्रियादयः।
स्वाहान्तं मन्त्रमुच्चार्य्य हविर्ददति नित्यशः ॥ ४०
स्वाहायुक्तञ्च मन्त्रञ्च यो गृह्णाति प्रशस्तकम्।
सर्व्वसिद्धिर्भवेत् तस्य ब्रह्मन् ग्रहणमात्रतः ॥ ४१
विषहीनो यथा सर्पो वेदहीनो यथा द्विजः।
पतिसेवाविहीना स्त्री विद्याहीनो यथा नरः।
फलशाखाविहीनश्च यथा वृक्षो हि निन्दितः।
स्वाहाहीनस्तथा मन्त्रो न हुतः फलदायकः ॥ ४२
परितुष्टा द्विजाः सर्व्वे देवाः सम्प्रापुराहुतिम्।
स्वाहान्तेनैव मन्त्रेण सफलं सर्व्वकर्म्म च ॥ ४४
इत्येवं वर्णितं सर्व्वं स्वाहोपाख्यानमुत्तमम्।
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥ ४५
नारद उवाच।
स्वाहापूजाविधानञ्च ध्यानं स्तोत्रं मुनीश्वर।
सम्पूज्य वह्निस्तुष्टाव येन तां वद मे प्रभो ॥ ४६
नारायण उवाच।
ध्यानञ्च सामवेदोक्तं स्तोत्रं पूजाविधानकम्।
वदामि श्रूयतां ब्रह्मन् सावधानं निशामय ॥ ४७
सर्व्वयज्ञारम्भकाले शालग्रामे घटेऽथवा।
स्वाहां सम्पूज्य यत्नेन यज्ञं कुर्य्यात् फलाप्तये ॥ ४८
स्वाहां मन्त्राङ्गयुताञ्च मन्त्रसिद्धिस्वरूपिणीम्।
सिद्धाञ्च सिद्धिदां नृणां कर्म्मणां फलदां भजे ॥ ४९
इति ध्यात्वा च मूलेन दत्त्वा पाद्यादिकं नरः।
सर्व्वसिद्धिं लभेत् स्तुत्वा मूलं स्तोत्रं मुने शृणु ॥५०
ओं ह्रीं श्रीं वह्निजायायै देव्यै स्वाहेत्यनेन च।
यः पूजयेच्च तां देवीं सर्व्वेष्टिं लभते ध्रुवम् ॥ ५१
वह्निरुवाच।
स्वाहाद्या प्रकृतेरंशा मन्त्रतन्त्राङ्गरूपिणी।
मन्त्राणां फलदात्री च धात्री च जगतां सती ॥५२
सिद्धिस्वरूपा सिद्धा च सिद्धिदा सर्व्वदा नृणाम्।
हुताशदाहिकाशक्तिस्तत्प्राणाधिकरूपिणी ॥ ५३

संसारसाररूपा च घोरसंसारतारिणी।
देवजीवनरूपा च देवपोषणकारिणी ॥ ५४
योऽधीतानि नामानि यः पठेद्भक्तिसंयुतः।
सर्व्वसिद्धिर्भवेत् तस्य चेहलोके परत्र च ॥ ५५
नाङ्गहीनं भवेत् तस्य सर्व्वकर्म्म सुशोभनम्।
अपुत्रो लभते पुत्रमभार्य्यो लभते प्रियाम् ॥ ५६
इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे स्वाहोपाख्यानं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशोऽध्यायः।

नारायण उवाच।

शृणु नारद वक्ष्यामि स्वधोपाख्यानमुत्तमम्।
पितॄणाञ्च तृप्तिकरं श्राद्धानां फलवर्द्धनम् ॥ १
सृष्टेरादौ पितृगणान् ससर्ज्ज जगतां विधिः।
चतुरश्च मूर्त्तिमतस्त्रींश्च तेजःस्वरूपिणः ॥ २
दृष्ट्वा सप्त पितृगणान् सिद्धरूपान् मनोहरान्।
आहारं ससृजे तेषां श्राद्धतर्पणपूर्व्वकम् ॥ ३
स्नानं तर्पणपर्य्यन्तं श्राद्धान्तं देवपूजनम्।
आह्निकञ्च त्रिसन्ध्यान्तं विप्राणाञ्च श्रुतौ श्रुतम् ॥ ४
नित्यं न कुर्य्याद्यो विप्रस्त्रिसन्ध्यं श्राद्धतर्पणम्।
बलिं वेदध्वनिं सोऽपि विषहीनो यथोरगः ॥ ५
हरिसेवाविहीनश्च श्रीहरेरनिवेद्यभुक्।
तस्यान्तं सूतकं तस्य न कर्म्मार्हः स नारद ॥ ६
ब्रह्मा श्राद्धादिकं दृष्ट्वा जगाम पितृहेतवे।
न प्राप्नुवन्ति पितरो ददति ब्राह्मणादयः ॥ ७
सर्व्वे प्रजग्मुः क्षुधिता विषण्णा ब्रह्मणः सभाम्।
सर्व्वं निवेदनं चक्रुस्तमेव जगतां विधिम् ॥ ८
ब्रह्मा च मानसीं कन्यां ससृजे च मनोहराम्।
रूपयौवनसम्पन्नां शतचन्द्रसमप्रभाम् ॥ ९
विद्यावतीं गुणवतीमतिरूपवतीं सतीम्।
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम् ॥ १०
विशुद्धां प्रकृतेरंशां सस्मितां वरदां शुभाम्।
स्वधाभिधानां सुदतीं लक्ष्मीलक्षणसंयुताम् ॥ ११
शतपद्मपदन्यस्तपादपद्मञ्च बिभ्रतीम्।
पत्नीं पितॄणां पद्मास्यां पद्मजां पद्मलोचनाम् ॥ १२
पितृभ्यस्तां ददौ कन्यां तुष्टेभ्यस्तुष्टिरूपिणीम्।
ब्राह्मणांश्चोपदेशञ्च चकार गोपनीयकम् ॥ १३
स्वधान्तं मन्त्रमुच्चार्य्य पितृभ्यो देहि चेति च।
क्रमेण तेन विप्राश्च पितृे दानं ददुः पुरा ॥ १४
स्वाहा शस्ता देवदाने पितृदाने स्वधा वरा।
सर्व्वत्र दक्षिणा शस्ता हतयज्ञमदक्षिणम् ॥ १५
पितरो देवता विप्रा मुनयो मनवस्तथा।
पूजां चक्रुः स्वधां शान्तां तुष्टवुः परमादरम् ॥ १६
देवादयश्च सन्तुष्टाः परिपूर्णमनोरथाः।
विप्रादयश्च पितरः स्वधादेवीवरेण च ॥ १७
इत्येवं कथितं सर्व्वं स्वधोपाख्यानमुत्तमम्।
सर्व्वेषाञ्च तुष्टिकरं किं भूयः श्रोतुमिच्छसि ॥ १८

नारद उवाच।

स्वधापूजाविधानञ्च ध्यानं स्तोत्रं महामुने।
श्रोतुमिच्छामि यत्नेन वद वेदविदां वर ॥ १९

नारायण उवाच।

तद्ध्यानं स्तवनं ब्रह्मन् वेदोक्तं सर्व्वसम्मतम्।
सर्व्वं जानासि च कथं ज्ञातुमिच्छसि वृद्धये ॥ २०
शरत्कृष्णत्रयोदश्यां मघायां श्राद्धवासरे।
स्वधां सम्पूज्य यत्नेन ततः श्राद्धं समाचरेत् ॥ २१
स्वधां नाभ्यर्च्य यो विप्रः श्राद्धं कुर्य्यादहम्मतिः।
न भवेत् फलभाक् सत्यं श्राद्धस्य तर्पणस्य च ॥ २२
ब्रह्मणो मानसीं कन्यां शश्वत्सुस्थिरयौवनाम्।
पूज्यां पितॄणां देवानां श्राद्धानां फलदां भजे ॥ २३
इति ध्यात्वा शालग्रामेऽप्यथवा शोभने घटे।
दद्यात् पाद्यादिकं तस्यै मूलेनेति श्रुतौ श्रुतम् ॥ २४
ओं ह्रीं श्रीं क्लीं स्वधादेव्यै स्वाहेति च महामनुम्।
समुच्चार्य्य च सम्पूज्य स्तुत्वा तां प्रणमेद्द्विजः ॥ २५
स्तोत्रं शृणु मुनिश्रेष्ठ ब्रह्मपुत्र विशारद।
सर्व्ववाञ्छाप्रदं नृणां ब्रह्मणा यत् कृतं पुरा ॥ २६

ब्रह्मोवाच।

स्वधोच्चारणमात्रेण तीर्थस्नायी भवेन्नरः।
मुच्यते सर्व्वपापेभ्यो वाजपेयफलं लभेत् ॥ २७
स्वधा स्वधा स्वधेत्येवं यदि वारत्रयं स्मरेत्।
श्राद्धस्य फलमाप्नोति बलेश्च तर्पणस्य च ॥ २८
श्राद्धकाले स्वधास्तोत्रं यः शृणोति समाहितः।
लभेच्छ्राद्धशतानाञ्च पुण्यमेव न संशयः ॥ २९
स्वधा स्वधा स्वधेत्येवं त्रिसन्ध्यं यः पठेन्नरः।
प्रियां विनीतां स लभेत् साध्वीं पुत्रं गुणान्वितम् ३०

पितॄणां प्राणतुल्या त्वं द्विजजीवनरूपिणी ।
श्राद्धाधिष्ठातृदेवी च श्राद्धादीनां फलप्रदा ॥ ३१
बहिर्गच्छ मन्मनसः पितॄणां तुष्टिहेतवे ।
सम्प्रीतये द्विजातीनां गृहिणां वृद्धिहेतवे ॥ ३२
नित्या त्वं नित्यरूपासि गुणरूपासि सुव्रते ।
आविर्भावस्तिरोभावः सृष्टौ च प्रलये तव ॥ ३३
ओं स्वस्ति च नमः स्वाहा स्वधा त्वं दक्षिणा तथा ।
निरूपितायतुर्वेदे षट् प्रशस्ताश्च कर्म्मिणाम् ॥ ३४
पुरासीस्त्वं स्वधा गोपी गोलोके राधिकासखी ।
धृतोरसि स्वधात्मानं कृष्णं तेन स्वधा स्मृता ॥ ३५
ध्वस्ता त्वं राधिकाशापाद्गोलोकाद्विश्वमागता ।
कृष्णाश्लिष्टा तया दृष्टा पुरा वृन्दावने वने ॥ ३६
कृष्णालिङ्गनपुण्येन भूता मे मानसी सुता ।
अतृप्ता सुरतौ तेन चतुर्णां स्वामिनां प्रिया ॥ ३७
स्वाहा सा सुन्दरी गोपी पुरासीद्राधिकासखी ।
रतं कृष्णमाह रतये तेन स्वाहा प्रकीर्त्तिता ॥ ३८
कृष्णेन सार्द्धं सुचिरं वसन्ते रासमण्डले ।
प्रमत्ता सुरतौ श्लिष्टा दृष्टा सा राधया पुरा ॥ ३९
तस्याः शापेन प्रध्वस्ता गोलोकाद्विश्वमागता ।
कृष्णालिङ्गनपुण्येन बभूव वह्निकामिनी ॥ ४०
पवित्ररूपा परमा देवानां वन्दिता नृणाम् ।
यन्नामोच्चारणेनैव नरो मुच्येत पातकात् ॥ ४१
या सुशीलाभिधा गोपी पुरासीद्राधिकासखी ।
उवास दक्षिणे क्रोड़े कृष्णस्य राधिकाग्रतः ॥ ४२
प्रध्वस्ता सा च तच्छापाद्गोलोकाद्विश्वमागता ।
कृष्णालिङ्गनपुण्येन सा बभूव च दक्षिणा ॥ ४३
सुप्रेयसी रतौ दक्षा प्रशस्ता सर्व्वकर्म्मसु ।
उवास दक्षिणे भर्त्तुर्दक्षिणा तेन कीर्त्तिता ॥ ४४
बभूवुस्तिस्रो गोप्यश्च स्वधा स्वाहा च दक्षिणा ।
कर्म्मिणां कर्म्मपूर्णार्थं पुरा चेवेश्वरेच्छया ॥ ४५
इत्येवमुक्त्वा स ब्रह्मा ब्रह्मलोकेषु संसदि ।
तस्थौ च सहसा सद्यः स्वधा साविर्बभूव ह ॥ ४६
तदा पितृभ्यः प्रददौ तामेव कमलाननाम् ।
तां सम्प्राप्य ययुस्ते च पितरश्च प्रहर्षिताः ॥ ४७
स्वधास्तोत्रमिदं पुण्यं यः शृणोति समाहितः ।
स स्नातः सर्व्वतीर्थेषु वेदपाठफलं लभेत् ॥ ४८
इति स्वधोपाख्यानमेकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## द्विचत्वारिंशोऽध्यायः ।

नारायण उवाच ।

उक्तं स्वाहा-स्वधाख्यानं सावधानं निशामय ।
गोपी सुशीला गोलोके पुरासीत् प्रेयसी हरेः ॥ १
राधा प्रधाना सध्रीची धन्या मान्या मनोहरा ।
अतीव सुन्दरी रामा सुभगा सुदती सती ॥ २
विद्यावती गुणवती सती रूपवती रतिः ।
कलावती कोमलाङ्गी कान्ता कमललोचना ॥ ३
सुश्रोणी सुस्तनी श्यामा न्यग्रोधपरिमण्डला ।
ईषद्धास्यप्रसन्नास्या रत्नालङ्कारभूषिता ॥ ४
श्वेतचम्पकवर्णाभा बिम्बोष्ठी मृगलोचना ।
कामशास्त्रसुनिष्णाता कामिनी हंसगामिनी ॥ ५
भावानुरक्ता भावज्ञा कृष्णस्य प्रियभाविनी ।
रसज्ञा रसिका रासे रासेशस्य रसोत्सुका ॥ ६
उवास दक्षिणे क्रोड़े राधायाः पुरतः पुरा ।
सम्बभूव नम्रमुखो भयेन मधुसूदनः ॥ ७
दृष्ट्वा राधाञ्च पुरतो गोपीनां प्रवरां वराम् ।
मानिनीं रक्तवदनां रक्तपङ्कजलोचनाम् ॥ ८
कोपेन कम्पिताङ्गीञ्च कोपनां कोपदर्शनाम् ।
कोपेन निष्ठुरं वक्तुमुद्यतां स्फुरिताधराम् ॥ ९
वेगेन तामागच्छन्तीं विज्ञाय च तदन्तरम् ।
विरोधभीतो भगवानन्तर्द्धानं चकार सः ॥ १०
पलायमानं तं शान्तं सत्त्वाधारं सुविग्रहम् ।
विलोक्य कम्पिता गोपी सुशीलान्तर्दधौ भिया ॥ ११
विलोक्य सङ्कटं तत्र गोपीनां लक्षकोटयः ।
पुटाञ्जलियुता भीता भक्तिनम्रात्मकन्धराः ॥ १२
रक्ष रक्षेत्युक्तवत्यो हे देवीति पुनः पुनः ।
ययुर्भयेन शरणं तस्याश्चरणपङ्कजे ॥ १३
त्रिलक्षकोटयो गोपाः सुदामादय एव च ।
ययुर्भयेन शरणं तत्पदाब्जे च नारद ॥ १४
पलायमानं कान्तञ्च विज्ञाय परमेश्वरी ।
पलायन्तीं सहचरीं सुशीलाञ्च शशाप सा ॥ १५
अद्यप्रभृति गोलोकं सा चेदायाति गोपिका ।
सद्यो गमनमात्रेण भस्मसाच्च भविष्यति ॥ १६
इत्येवमुक्त्वा तत्रैव देवदेवीश्वरी रुषा ।
रासेश्वरी रासमध्ये रासेशमाजुहाव ह ॥ १७

नालोक्य पुरतः कृष्णं राधा विरहकातरा।
युगकोटिसमं मेने क्षणभेदेन सुव्रता ॥ १८
हे कृष्ण हे प्राणनाथागच्छ प्राणाधिकप्रिय।
प्राणाधिष्ठातृदेवेह प्राणा यान्ति त्वया विना ॥ १९
स्त्रीगर्व्वः पतिसौभाग्याद्वर्द्धते च दिने दिने।
सुखी चेद्विभवो यस्मात् तं भजेद्धर्मतः सदा ॥ २०
पतिर्बन्धुः कुलस्त्रीणामधिदेवः सदागतिः।
परं सम्पत्स्वरूपश्च स गतिर्देवमूर्त्तिमान् ॥ २१
धर्म्मदः सुखदः शश्वत् प्रीतिदः शान्तिदः सदा।
सम्मानदो मानदश्च मान्यश्च मानखण्डनः ॥ २२
सारात् सारतमः स्वामी बन्धूनां बन्धुवर्द्धनः।
न च भर्त्तुः समो बन्धुर्बन्धो बन्धुषु दृश्यते ॥ २३
भरणादेव भर्त्तायं पालनात् पतिरुच्यते।
शरीरेशाच्च स स्वामी कामदात् कान्त एव च ॥ २४
बन्धुश्च सुखवर्द्धाच्च प्रीतिदानात् प्रियः परः।
ऐश्वर्य्यदानादीशश्च प्राणेशात् प्राणनायकः ॥ २५
रतिदानाच्च रमणः प्रियो नास्ति प्रियात् परः।
पुत्रस्तु स्वामिनः शुक्राज्जायते तेन स प्रियः ॥ २६
शतपुत्रात् परः स्वामी कुलजानां प्रियः सदा।
असत्कुलप्रसूता या कान्तं विज्ञातुमक्षमा ॥ २७
स्नानञ्च सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षणम्।
प्रादक्षिण्यं पृथिव्याश्च सर्व्वाणि च तपांसि च ॥ २८
सर्व्वाण्येव व्रतानीति महादानानि यानि च।
उपोषणानि पुण्यानि यान्यन्यानि च विश्वतः ॥ २९
गुरुसेवा-विप्रसेवा-देवसेवादिकञ्च यत्।
स्वामिनः पदसेवायाः कलां नार्हति षोड़शीम् ॥३०
गुरुविप्रेष्टदेवेषु सर्व्वेभ्यश्च पतिर्गुरुः।
विद्यादाता यथा पुंसां कुलजानां तथा प्रियः ॥३१
गोपीत्रिलक्षकोटीनां गोपानाञ्च तथैव च।
ब्रह्माण्डानामसंख्यानां तत्रस्थानां तथैव च ॥ ३२
रमादिगोलकान्तानामीश्वरी यत्प्रसादतः।
अहं न जाने तं कान्तं स्त्रीस्वभावो दुरत्ययः ॥ ३३
इत्युक्त्वा राधिका कृष्णं तत्र दध्यौ सुभक्तितः।
आरात् सम्प्राप तं तेन विजहार च तत्र वै ॥ ३४
अथ सा दक्षिणा देवी ध्वस्ता गोलोकतो मुने।
सुचिरञ्च तपस्तप्त्वा विवेश कमलातनौ ॥ ३५
अथ देवादयः सर्व्वे यज्ञं कृत्वा सुदुष्करम्।
न लभन्ते फलं तेषां विषण्णाः प्रययुर्विधिम् ॥ ३६
विधिर्निवेदनं श्रुत्वा देवादीनां जगत्पतिम्।
दध्यौ सुचिन्तितो भक्त्या तत्प्रत्यादेशमाप सः ॥ ३७
नारायणश्च भगवान् महालक्ष्म्याश्च देहतः।
विनिष्कृष्य मर्त्त्यलक्ष्मीं ब्रह्मणे दक्षिणां ददौ ॥३८
ब्रह्मा ददौ तां यज्ञाय पूर्णार्थं कर्म्मणां सताम्।
यज्ञः सम्पूज्य विधिवत् तां तुष्टाव रमां मुदा ॥ ३९
तप्तकाञ्चनवर्णाभां चन्द्रकोटिसमप्रभाम्।
अतीव कमनीयाञ्च सुन्दरीं सुमनोहराम् ॥ ४०
कमलास्यां कोमलाङ्गीं कमलायतलोचनाम्।
कमलासनपूज्याञ्च कमलाङ्गसमुद्भवाम् ॥ ४१
वह्निशुद्धांशुकाधानां बिम्बोष्ठीं सुदतीं सतीम्।
बिभ्रतीं कवरीभारं मालतीमाल्यमण्डितम् ॥ ४२
ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम्।
सुवेशाढ्याञ्च सुस्नातां मुनिमानसमोहिनीम् ॥ ४३
कस्तूरीविन्दुभिः सार्द्धं सुगन्धिचन्दनान्विताम्।
सिन्दूरविन्दुनात्यन्त-मलकाधःस्थलोज्ज्वलाम् ॥ ४४
सुप्रशस्तनितम्बाढ्यां बृहच्छ्रोणिपयोधराम्।
कामदेवाधाररूपां कामबाणप्रपीड़िताम् ॥ ४५
तां दृष्ट्वा रमणीयाञ्च यज्ञो मूर्च्छामवाप ह।
पत्नीं तामेव जग्राह विधिबोधितपूर्व्वकम् ॥ ४६
दिव्यं वर्षशतञ्चैव तां गृहीत्वा सुनिर्ज्जने।
यज्ञो रेमे मुदा युक्तो रामया रमया सह ॥ ४७
गर्भं दधार सा देवी दिव्यं द्वादशवत्सरम्।
ततः सुषाव पुत्रञ्च फलञ्च सर्व्वकर्म्मणाम् ॥ ४८
कर्म्मणां पूर्णरूपा च दक्षिणा कर्म्मणां सताम्।
परिपूर्णे कर्म्मणि च तत्पुत्रः फलदायकः ॥ ४९
यज्ञोऽपि दक्षिणासार्द्धं पुत्रेण च फलेन च।
कर्म्मिणां फलदाता चेत्येवं वेदविदो विदुः ॥ ५०
यज्ञश्च दक्षिणां प्राप्य पुत्रञ्च फलदायकम्।
फलं ददौ च सर्व्वेभ्यः कर्म्मिभ्य इति नारद ॥ ५१
तदा देवादयस्तुष्टाः परिपूर्णमनोरथाः।
स्वस्थानं प्रययुः सर्व्वे धर्म्मवक्त्रादिदं श्रुतम् ॥ ५२
कृत्वा कर्म्म च कर्त्ता च तूर्णं दद्याच्च दक्षिणाम्।
तत्क्षणं फलमाप्नोति वेदैरुक्तमिदं मुने ॥ ५३
कर्म्मी कर्म्मणि पूर्णे च तत्क्षणाद्यदि दक्षिणाम्।
न दद्याद्ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथवा।

मुहूर्त्ते समतीते च द्विगुणा सा भवेद्ध्रुवम् ॥ ५४
एकरात्रव्यतीते तु भवेच्छतगुणा च सा।
त्रिरात्रे तद्दशगुणा सप्ताहे द्विगुणा ततः ॥ ५५
मासे लक्षगुणा प्रोक्ता ब्राह्मणानाञ्च वर्द्धते।
संवत्सरे व्यतीते तु सा त्रिकोटिगुणा भवेत् ॥ ५६
कर्म्म तद्यजमानानां सर्व्वञ्च निष्फलं भवेत्।
स च ब्रह्मस्वापहारी न कर्म्मार्होऽशुचिर्नरः ॥ ५७
दरिद्रो व्याधियुक्तश्च तेन पापेन पातकी।
तद्गृहाद्याति लक्ष्मीश्च शापं दत्त्वा सुदारुणम् ॥ ५८
पितरो नैव गृह्णन्ति तद्दत्तं श्राद्धतर्पणम्।
एवं सुराश्च तत्पूजां तद्दत्तामग्निराहुतिम् ॥ ५९
दाता न दीयते दानं ग्रहीता तन्न याचते।
उभौ तौ नरकं यातश्छिन्नरज्जुर्यथा घटः ॥ ६०
नार्पयेद्यजमानश्चेद्याचितारञ्च दक्षिणाम्।
भवेद्ब्रह्मस्वापहारी कुम्भीपाकं व्रजेद्ध्रुवम् ॥ ६१
वर्षलक्षं वसेत् तत्र यमदूतेन ताडितः।
ततो भवेत् स चण्डालो व्याधियुक्तो दरिद्रकः ॥ ६२
पातयेत् पुरुषान् सप्त पूर्व्वांश्च सप्तजन्मनाम्।
इत्येवं कथितं विप्र किं भूयः श्रोतुमिच्छसि ॥ ६३

नारद उवाच।

यत् कर्म्म दक्षिणाहीनं को भुङ्क्ते तत्फलं मुने।
पूजाविधिं दक्षिणायाः पुरा यज्ञकृतं वद ॥ ६४

नारायण उवाच।

कर्म्मणोऽदक्षिणस्यैव कुत एव फलं मुने।
सदक्षिणे कर्म्मणि च फलमेव प्रवर्त्तते ॥ ६५
या या कर्म्मणि सामग्री बलिर्भुङ्क्ते च तां मुने।
बलये तत्प्रदत्तञ्च वामनेन पुरा मुने ॥ ६६
अश्रोत्रियं श्राद्धद्रव्यमश्राद्धं दानमेव च।
वृषलीपतिविप्राणां पूजाद्रव्यादिकञ्च यत् ॥ ६७
गुरोरभक्तस्य कर्म्म बलिर्भुङ्क्ते न संशयः ॥ ६८
दक्षिणायाश्च यद्ध्यानं स्तोत्रं पूजाविधिक्रमम्।
तत् सर्व्वं काण्वशाखोक्तं प्रवक्ष्यामि निशामय ॥ ६९
पुरा सम्प्राप्य तां यज्ञः कर्म्मदक्षाञ्च दक्षिणाम्।
मुमोह तस्या रूपेण तुष्टाव कामकातरः ॥ ७०

यज्ञ उवाच।

पुरा गोलोकगोपीयं गोपीनां प्रवरा परा।
राधासमा तत्सखी च श्रीकृष्णप्रेयसी प्रिये ॥ ७१
कार्त्तिकीपूर्णिमायान्तु रासे राधामहोत्सवे।
आविर्भूता दक्षिणांशात् कृष्णस्य तेन दक्षिणा ॥ ७२
पुरा त्वञ्च सुशीलाख्या शीलेन शोभनेन च।
कृष्णदक्षांशवासाच्च राधाशापाच्च दक्षिणा। ७३
गोलोकात् त्वं परिध्वस्ता मम भाग्यादुपस्थिता।
कृपां कुरु त्वमेवाद्य स्वामिनं कुरु मां प्रिये ॥ ७४
कर्म्मिणां कर्म्मणां देवी त्वमेव फलदा सदा।
त्वया विना च सर्व्वेषां सर्व्वं कर्म्म च निष्फलम् ॥ ७५
फलशाखाविहीनश्च यथा वृक्षो महीतले।
त्वया विना तथा कर्म्म कर्म्मिणाञ्च न शोभते ॥ ७६
ब्रह्मविष्णुमहेशाश्च दिक्पालादय एव च।
कर्म्मणश्च फलं दातुं न शक्ताश्च त्वया विना ॥ ७७
कर्म्मरूपी स्वयं ब्रह्मा फलरूपी महेश्वरः।
यज्ञरूपी विष्णुरहं त्वमेषां साररूपिणी ॥ ७८
फलदाता परं ब्रह्म निर्गुणः प्रकृतेः परः।
स्वयं कृष्णश्च भगवान् न च शक्तस्त्वया विना ॥ ७९
त्वमेव शक्तिः कान्ते मे शश्वज्जन्मनि जन्मनि।
सर्व्वकर्म्मणि शक्तोऽहं त्वया सह वरानने ॥ ८०
इत्युक्त्वा तत्पुरस्तस्थौ यज्ञाधिष्ठातृदेवकः।
तुष्टा बभूव सा देवी भेजे तं कमलाकला ॥ ८१
इदञ्च दक्षिणास्तोत्रं यज्ञकाले च यः पठेत्।
फलञ्च सर्व्वयज्ञानां लभते नात्र संशयः ॥ ८२
राजसूये वाजपेये गोमेधे नरमेधके।
अश्वमेधे लाङ्गले च विष्णुयज्ञे यशस्करे ॥ ८३
धनदे भूमिदे फल्गौ पुत्रेष्टौ गजमेधके।
लोहयज्ञे स्वर्णयज्ञे पाटलिव्याधिखण्डने ॥ ८४
शिवयज्ञे रुद्रयज्ञे शक्रयज्ञे च बन्धुके।
इष्टौ वरुणयागे च कन्दुके वैरिमर्द्दने ॥ ८५
शुचियागे धर्म्मयागे रेचने पापमोचने।
बन्धने कर्म्मयागे च मणियागे सुभद्रके ॥ ८६
एतेषाञ्च समारम्भे इदं स्तोत्रञ्च यः पठेत्।
निर्व्विघ्नेन च तत्कर्म्म साङ्गं भवति निश्चितम् ॥ ८७
इति श्रीब्रह्मवैवर्त्ते दक्षिणास्तोत्रं समाप्तम्।
इदं स्तोत्रञ्च कथितं ध्यानं पूजाविधानकम्।
शालग्रामे घटे वापि दक्षिणां पूजयेत् सुधीः ॥ ८८
लक्ष्मीदक्षांशसम्भूतां दक्षिणां कमलाकलाम्।
सर्व्वकर्म्मसु दक्षाञ्च फलदां सर्व्वकर्म्मणाम् ॥ ८९

विष्णोः शक्तिस्वरूपाञ्च सुशीलां शुभदां भजे।
ध्यात्वा तेनैव वरदां मूलेन पूजयेत् सुधीः ॥ ९०
दत्त्वा पाद्यादिकं देव्यै वेदोक्तेन च नारद।
ओं ह्रीं क्लीं श्रीं दक्षिणायै स्वाहेति च विचक्षणः ॥ ९१
पूजयेद्विधिवद्भक्त्या दक्षिणां सर्व्वपूजिताम्।
इत्येवं कथितं सर्व्वं दक्षिणाख्यानमुत्तमम् ॥ ९२
सुखदं प्रीतिदञ्चैव फलदं सर्व्वकर्म्मणाम्।
इदञ्च दक्षिणाख्यानं यः शृणोति समाहितः ॥ ९३
अङ्गहीनञ्च तत्कर्म्म न भवेद्भारते भुवि।
अपुत्रो लभते पुत्रं निश्चितञ्च गुणान्वितम् ॥ ९४
भार्य्याहीनो लभेद्भार्य्यां सुशीलां सुन्दरीं पराम्।
वरारोहां पुत्रवतीं विनीतां प्रियवादिनीम् ॥ ९५
पतिव्रतां सुव्रताञ्च शुद्धाञ्च कुलजां वराम्।
विद्याहीनो लभेद्विद्यां धनहीनो धनं लभेत् ॥ ९६
भूमिहीनो लभेद्भूमिं प्रजाहीनो लभेत् प्रजाम् ॥ ९७
सङ्कटे बन्धुविच्छेदे विपत्तौ बन्धने तथा।
मासमेकमिदं श्रुत्वा मुच्यते नात्र संशयः ॥ ९८

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे दक्षिणोपाख्यानं नाम द्विचत्वारिंशोऽध्यायः ॥४२॥

## त्रिचत्वारिंशोऽध्यायः।

नारद उवाच।

अनेकासाञ्च देवीनां श्रुतमाख्यानमुत्तमम्।
अन्यासां चरितं ब्रह्मन् वद वेदविदां वर ॥ १

नारायण उवाच।

सर्व्वासां चरितं विप्र वेदेष्वस्ति पृथक् पृथक्।
पूर्व्वोक्तानाञ्च देवीनां त्वं कासां श्रोतुमिच्छसि ॥ २

नारद उवाच।

षष्ठी मङ्गलचण्डी च मनसा प्रकृतेः कला।
व्युत्पत्तिमासां चरितं श्रोतुमिच्छामि तत्त्वतः ॥ ३

नारायण उवाच।

षष्ठांशा प्रकृतेर्या च सा च षष्ठी प्रकीर्त्तिता।
बालकाधिष्ठातृदेवी विष्णुमाया च बालदा ॥ ४
मातृकासु च विख्याता देवसेनाभिधा च सा।
प्राणाधिकप्रिया साध्वी स्कन्दभार्य्या च सुव्रता ॥ ५
आयुःप्रदा च बालानां धात्री रक्षणकारिणी।
सततं शिशुपार्श्वस्था योगेन सिद्धयोगिनी ॥ ६
तस्याः पूजाविधौ ब्रह्मन्नितिहासविधिं शृणु।
यच्छ्रुतं धर्म्मवक्त्रेण सुखदं पुत्रदं परम् ॥ ७
राजा प्रियव्रतश्चासीत् स्वायम्भुवमनोः सुतः।
योगीन्द्रो नोद्वहेद्भार्य्यां तपस्यासु रतः सदा ॥ ८
ब्रह्माज्ञया च यत्नेन कृतदारो बभूव ह।
सुचिरं कृतदारश्च न लभेत् तनयं मुने ॥ ९
पुत्रेष्टियज्ञं तञ्चापि कारयामास कश्यपः।
मालिन्यै तस्य कान्तायै मुनिर्यज्ञचरुं ददौ ॥ १०
भुक्त्वा चरुञ्च तस्याश्च सद्यो गर्भो बभूव ह।
दधार तञ्च सा देवी दैवं द्वादशवत्सरम् ॥ ११
ततः सुषाव सा ब्रह्मन् कुमारं कनकप्रभम्।
सर्व्वावयवसम्पन्नं मृतमुत्तारलोचनम् ॥ १२
तं दृष्ट्वा रुरुदुः सर्व्वा नार्य्यश्च बान्धवस्त्रियः।
मूर्च्छामवाप तन्माता पुत्रशोकेन सुव्रता ॥ १३
श्मशानञ्च ययौ राजा गृहीत्वा बालकं मुने।
रुरोद तत्र कान्तारे पुत्रं कृत्वा स्ववक्षसि ॥ १४
नोत्सृजेद्बालकं राजा प्राणांस्त्यक्तुं समुद्यतः।
ज्ञानयोगं विसस्मार पुत्रशोकात् सुदारुणात् ॥ १५
एतस्मिन्नन्तरे तत्र विमानञ्च ददर्श ह।
शुद्धस्फटिकसङ्काशं मणिराजविराजितम् ॥ १६
तेजसा ज्वलितं शश्वच्छोभितं क्षौमवाससा।
नानाचित्रविचित्राढ्यं पुष्पमालाविराजितम् ॥ १७
ददर्श तत्र देवीञ्च कमनीयां मनोहराम्।
श्वेतचम्पकवर्णाभां शश्वत् सुस्थिरयौवनाम् ॥ १८
ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम्।
कृपामयीं योगसिद्धां भक्तानुग्रहकातराम् ॥ १९
दृष्ट्वा तां पुरतो राजा तुष्टाव परमादरम्।
चकार पूजनं तस्या विहाय बालकं भुवि ॥ २०
पप्रच्छ राजा तां दृष्ट्वा ग्रीष्मसूर्य्यसमप्रभाम्।
तेजसा ज्वलितां शान्तां कान्तां स्कन्दस्य नारद ॥ २१

प्रियव्रत उवाच।

कथं सुशोभने शान्ते कस्य कान्तासि सुव्रते।
कस्य कन्या वरारोहे धन्या मान्या च योषिताम् ॥ २२
नृपेन्द्रस्य वचः श्रुत्वा जगन्मङ्गलदायिनी।
उवाच देवसेना सा देवरक्षणकारिणी ॥ २३

देवानां दैत्यग्रस्तानां पुरा सेना बभूव सा।
जयं ददौ च तेभ्यश्च देवसेना च तेन सा॥ २४

देवसेनोवाच।

ब्रह्मणो मानसी कन्या देवसेनाहमीश्वरी।
सृष्ट्वा मां मनसो धाता ददौ स्कन्दाय भूमिप॥ २५
मातृकासु च विख्याता स्कन्दसेना च सुव्रता।
विश्वे षष्ठीति विख्याता षष्ठांशा प्रकृतेर्यतः॥ २६
अपुत्राय पुत्रदाऽहं प्रियदात्यप्रियाय च।
धनदा च दरिद्रेभ्योऽकर्म्मिणे शुभकर्म्मदा॥ २७
सुखं दुःखं भयं शोको हर्षो मङ्गलमेव च।
सम्पत्तिश्च विपत्तिश्च सर्व्वं भवति कर्म्मणा॥ २८
कर्म्मणा बहुपुत्री च वंशहीनश्च कर्म्मणा।
कर्म्मणा बहुभार्य्यश्च भार्य्याहीनश्च कर्म्मणा॥ २९
कर्म्मणा च दरिद्रश्च धनाढ्यश्च स्वकर्म्मणा।
कर्म्मणा रूपवांश्चैव रोगी शश्वत् स्वकर्म्मणा॥ ३०
कर्म्मणा मृतपुत्रश्च कर्म्मणा चिरजीविनम्।
कर्म्मणा गुणवन्तश्च कर्म्मणा चाङ्गहीनकम्॥ ३१
तस्मात् कर्म्म परं राजन् सर्व्वेभ्यश्च श्रुतौ श्रुतम्।
कर्म्मरूपी च भगवान् तद्वरात् फलदो हरिः॥ ३२
इत्येवमुक्त्वा सा देवी गृहीत्वा बालकं मुने।
महाज्ञानेन सहसा जीवयामास लीलया॥ ३३
राजा ददर्श तं बालं सस्मितं कनकप्रभम्।
देवसेना च पश्यन्तं नृपमम्बरमेव च॥ ३४
गृहीत्वा बालकं देवी गगनं गन्तुमुद्यता।
पुनस्तुष्टाव तां राजा शुष्ककण्ठोष्ठतालुकः॥ ३५
नृपस्तोत्रेण सा देवी परितुष्टा बभूव ह।
उवाच तं नृपं ब्रह्मन् वेदोक्तं कर्म्म निर्म्मितम्॥ ३६

देवसेनोवाच।

त्रिषु लोकेषु राजा त्वं स्वायम्भुवमनोः सुतः।
मम पूजाञ्च सर्व्वत्र कारयित्वा स्वयं कुरु॥ ३७
तदा दास्यामि पुत्रं ते कुलपद्मं मनोहरम्।
सुव्रतं नाम विख्यातं गुणवन्तं सुपण्डितम्॥ ३८
जातिस्मरञ्च योगीन्द्रं नारायणपरायणम्।
शतक्रतुकरं श्रेष्ठं क्षत्रियाणाञ्च वन्दितम्॥ ३९
मत्तमातङ्गलक्षाणां धृतवन्तं बलं शुभम्।
धन्विनं गुणिनं शुद्धं विदुषां प्रियमेव च॥ ४०
योगिनं ज्ञानिनञ्चैव सिद्धरूपं तपस्विनम्।
यशस्विनञ्च लोकेषु दातारं सर्व्वसम्पदाम्॥ ४१
इत्येवमुक्त्वा सा देवी तस्मै तद्बालकं ददौ।
राजा चकार स्वीकारं तत्पूजार्थञ्च सुव्रतः॥ ४२
जगाम देवी स्वर्गञ्च ददौ तस्मै शुभं वरम्।
आजगाम महाराजः स्वगृहं हृष्टमानसः॥ ४३
आगत्य कथयामास वृत्तान्तं पुत्रहेतुकम्।
देवीञ्च पूजयामास ब्राह्मणेभ्यो धनं ददौ॥ ४४
राजा च प्रतिमासेषु शुक्लषष्ठ्यां महोत्सवम्।
षष्ठ्या देव्याश्च यत्नेन कारयामास सर्व्वतः॥ ४५
बालानां सूतिकागारे षष्ठाहे यत्नपूर्व्वकम्।
तत्पूजां कारयामास चैकविंशतिवासरे॥ ४६
बालानां शुभकार्य्ये च शुभान्नप्राशने तथा।
सर्व्वत्र वर्द्धयामास स्वयमेव चकार ह॥ ४७
ध्यानं पूजाविधानञ्च स्तोत्रं मत्तो निशामय।
यच्छ्रुतं धर्म्मवक्त्रेण कौथुमोक्तञ्च सुव्रत॥ ४८
शालग्रामे घटे वाथ वटमूलेऽथवा मुने।
भित्त्यां पुत्तलिकां कृत्वा पूजयित्वा विचक्षणः॥ ४९
षष्ठांशां प्रकृतेः शुद्धां सुप्रतिष्ठाञ्च सुव्रताम्।
सुपुत्रदाञ्च शुभदां दयारूपां जगत्प्रसूम्॥ ५०
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम्।
पवित्ररूपां परमां देवसेनां परां भजे॥ ५१
इति ध्यात्वा स्वशिरसि पुष्पं दत्त्वा विचक्षणः।
पुनर्ध्यात्वा च मूलेन पूजयेत् सुव्रतां सतीम्॥ ५२
पाद्यार्घ्याचमनीयैश्च गन्ध-पुष्प-प्रदीपकैः।
नैवेद्यैर्विविधैश्चापि फलेन शोभनेन च॥ ५३
मूलं ओं ह्रीं षष्ठीदेव्यै स्वाहेति विधिपूर्व्वकम्।
अष्टाक्षरं महामन्त्रं यथाशक्ति जपेन्नरः॥ ५४
तत्र स्तुत्वा च प्रणमेद्भक्तियुक्तः समाहितः।
स्तोत्रञ्च सामवेदोक्तं धन-पुत्र-फलप्रदम्॥ ५५
अष्टाक्षरं महामन्त्रं लक्षधा यो जपेन्मुने।
स पुत्रं लभते नूनमित्याह कमलोद्भवः॥ ५६
स्तोत्रं शृणु मुनिश्रेष्ठ सर्व्वेषाञ्च शुभावहम्।
वाञ्छाप्रदञ्च सर्व्वेषां गूढं वेदे च नारद॥ ५७

प्रियव्रत उवाच।

नमो देव्यै महादेव्यै सिद्ध्यै शान्त्यै नमो नमः।
शुभायै देवसेनायै षष्ठीदेव्यै नमो नमः॥ ५८
वरदायै पुत्रदायै धनदायै नमो नमः।

सुखदायै मोक्षदायै षष्ठीदेव्यै नमो नमः ॥ ५९
शक्तिषष्ठांशरूपायै सिद्धायै च नमो नमः ।
मायायै सिद्धयोगिन्यै षष्ठीदेव्यै नमो नमः ॥ ६०
सारायै शारदायै च षष्ठीदेव्यै नमो नमः ।
सारायै शारदायै च परायै सर्व्वकर्म्मणाम् ॥ ६१
बालाधिष्ठातृदेव्यै च षष्ठीदेव्यै नमो नमः ।
कल्याणदायै कल्याण्यै फलदायै च कर्म्मणाम् ॥ ६२
प्रत्यक्षायै च भक्तानां षष्ठीदेव्यै नमो नमः ।
पूज्यायै स्कन्दकान्तायै सर्व्वेषां सर्व्वकर्म्मसु ॥ ६३
देवरक्षणकारिण्यै षष्ठीदेव्यै नमो नमः ।
शुद्धसत्त्वस्वरूपायै वन्दितायै नृणां सदा ॥ ६४
हिंसा-क्रोधवर्ज्जितायै षष्ठीदेव्यै नमो नमः ।
धनं देहि प्रियां देहि पुत्रं देहि सुरेश्वरि ॥ ६५
धर्म्मं देहि यशो देहि षष्ठीदेव्यै नमो नमः ।
भूमिं देहि प्रजां देहि देहि विद्यां सुपूजिते ॥ ६६
कल्याणञ्च जयं देहि षष्ठीदेव्यै नमो नमः ॥ ६७
इति देवीञ्च संस्तूय लेभे पुत्रं प्रियव्रतः ।
यशस्विनञ्च राजेन्द्रं षष्ठीदेवीप्रसादतः ॥६८
षष्ठीस्तोत्रमिदं ब्रह्मन् यः शृणोति च वत्सरम् ।
अपुत्रो लभते पुत्रं वरं सुचिरजीविनम् ॥ ६९
वर्षमेकञ्च या भक्त्या संस्तूयेदं शृणोति च ।
सर्व्वपापाद्विनिर्मुक्ता महावन्ध्या प्रसूयते ॥ ७०
वीरपुत्रञ्च गुणिनं विद्यावन्तं यशस्विनम् ।
सुचिरायुष्मन्तमेव षष्ठीदेवीप्रसादतः ॥ ७१
काकवन्ध्या च या नारी मृतापत्या च या भवेत् ।
वर्षं श्रुत्वा लभेत् पुत्रं षष्ठीदेवीप्रसादतः ॥ ७२
रोगयुक्ते च बाले च पिता माता शृणोति च ।
मासञ्च मुच्यते बालः षष्ठीदेवीप्रसादतः ॥ ७३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे षष्ठ्युपाख्याने षष्ठी-स्तोत्रं नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥

---

## चतुश्चत्वारिंशोऽध्यायः ।

नारायण उवाच ।

कथितं षष्ठ्युपाख्यानं ब्रह्मपुत्र यथागमम् ।
देवी मङ्गलचण्डी या तदाख्यानं निशामय ॥ १
तस्याः पूजादिकं सर्व्वं धर्म्मवक्त्राच्च यच्छ्रुतम् ।
श्रुतिसम्मतमेवेष्टं सर्व्वेषां विदुषामपि ॥ २
दक्षायां वर्त्तते चण्डी कल्याणेषु च मङ्गलम् ।
मङ्गलेषु च या दक्षा सा च मङ्गलचण्डिका ॥ ३
पूज्यायां विद्यते चण्डी मङ्गलोऽपि महीसुतः ।
मङ्गलाभीष्टदेवी या सा वा मङ्गलचण्डिका ॥ ४
मङ्गलो मनुवंशश्च सप्तद्वीपावनीपतिः ।
तस्य पूजाभीष्टदेवी तेन मङ्गलचण्डिका ॥ ५
मूर्त्तिभेदेन सा दुर्गा मूलप्रकृतिरीश्वरी ।
कृपारूपातिप्रत्यक्षा योषितामिष्टदेवता ॥ ६
प्रथमे पूजिता सा च शङ्करेण पुरा परा ।
त्रिपुरस्य वधे घोरे विष्णुना प्रेरितेन च ॥ ७
ब्रह्मन् ब्रह्मोपदेशेन दुर्गग्रस्तेन सङ्कटे ।
आकाशात् पतिते याने दैत्येन पातिते रुषा ॥ ८
ब्रह्मविष्णूपदिष्टश्च दुर्गां तुष्टाव शङ्करः ।
सा च मङ्गलचण्डी च बभूव रूपभेदतः ॥ ९
उवाच पुरतः शम्भोर्भयं नास्तीति ते प्रभो ।
भगवान् वृषरूपश्च सर्व्वेशश्च बभूव ह ।
युद्धशक्तिस्वरूपाहं भविष्यामि तदाज्ञया ॥ १०
मयात्मना च हरिणा सहायेन वृषध्वज ।
जहि दैत्यञ्च शत्रुञ्च सुराणां पदघातकम् ॥ ११
इत्युक्त्वान्तर्हिता देवी शम्भोः शक्तिर्बभूव सा ।
विष्णुदत्तेन शस्त्रेण जघान तमुमापतिः ॥ १२
मुनीन्द्र पतिते दैत्ये सर्व्वे देवा महर्षयः ।
तुष्टुवुः शङ्करं देवा भक्तिनम्रात्मकन्धराः ॥ १३
सद्यः शिरसि शम्भोश्च पुष्पवृष्टिर्बभूव ह ।
ब्रह्मा विष्णुश्च सन्तुष्टौ ददौ तस्मै शुभाशिषम् ॥ १४
ब्रह्मविष्णूपदिष्टश्च सुस्नातः शङ्करः शुचिः ।
पूजयामास तां शक्तिं देवीं मङ्गलचण्डिकाम् ॥ १५
पाद्यार्घ्याचमनीयैश्च बलिभिर्विविधैरपि ।
पुष्प-चन्दन-नैवेद्यैर्भक्त्या नानाविधैर्मुने ॥ १६
छागैर्मेषैश्च महिषैर्गण्डैर्मायातिभिस्तथा ।
वस्त्रालङ्कारमाल्यैश्च पायसैः पिष्टकैरपि ॥ १७
मधुभिश्च सुधाभिश्च पक्वैर्नानाविधैः फलैः ।
सङ्गीतैर्नर्त्तनैर्वाद्यैरुत्सवैः कृष्णकीर्त्तनैः ॥ १८
ध्यात्वा मध्यन्दिनोक्तेन ध्यानेन भक्तिपूर्व्वकम् ।
ददौ द्रव्याणि मूलेन मन्त्रेणैव च नारद ॥ १९

ओं ह्रीं श्रीं क्लीं सर्व्वपूज्ये देवि मङ्गलचण्डिके।
ऐं क्रूं फट् स्वाहेत्येवं चाप्येकविंशाक्षरो मनुः॥ २०
पूज्यः कल्पतरुश्चैव भक्तानां सर्व्वकामदः।
दशलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम्॥ २१
मन्त्रसिद्धिर्भवेद्यस्य स विष्णुः सर्व्वकामदः।
ध्यानञ्च श्रूयतां ब्रह्मन् वेदोक्तं सर्व्वसम्मतम्॥ २२
देवीं षोड़शवर्षीयां शश्वत्सुस्थिरयौवनाम्।
सर्व्वरूपगुणाढ्याञ्च कोमलाङ्गीं मनोहराम्॥ २३
श्वेतचम्पकवर्णाभां चन्द्रकोटिसमप्रभाम्।
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम्॥ २४
बिभ्रतीं कबरीभारं मल्लिकामाल्यभूषितम्।
बिम्बोष्ठीं सुदतीं शुद्धां शरत्पद्मनिभाननाम्॥ २५
ईषद्धास्यप्रसन्नास्यां सुनीलोत्पललोचनाम्।
जगद्धात्रीञ्च दात्रीञ्च सर्व्वेभ्यः सर्व्वसम्पदाम्॥ २६
संसारसागरे घोरे पोतरूपां वरां भजे॥ २७
देव्याश्च ध्यानमित्येवं स्तवनं श्रूयतां मुने।
प्रयतं सङ्कटग्रस्तो येन तुष्टाव शङ्करः॥ २८

शङ्कर उवाच।

रक्ष रक्ष जगन्मातर्देवि मङ्गलचण्डिके।
हारिके विपदां राशेर्हर्षमङ्गलकारिके॥ २९
हर्षमङ्गलदक्षे च हर्षमङ्गलचण्डिके।
शुभे मङ्गलदक्षे च शुभमङ्गलचण्डिके॥ ३०
मङ्गले मङ्गलार्हे च सर्व्वमङ्गलमङ्गले।
सतां मङ्गलदे देवि सर्व्वेषां मङ्गलालये॥ ३१
पूज्ये मङ्गलवारे च मङ्गलाभीष्टदेवते।
पूज्ये मङ्गलभूपस्य मनुवंशस्य सन्ततम्॥ ३२
मङ्गलाधिष्ठातृदेवि मङ्गलानाञ्च मङ्गले।
संसारमङ्गलाधारे मोक्षमङ्गलदायिनि॥ ३३
सारे च मङ्गलाधारे पारे च सर्व्वकर्म्मणाम्।
प्रतिमङ्गलवारे च पूज्ये च मङ्गलप्रदे॥ ३४
स्तोत्रेणानेन शम्भुश्च स्तुत्वा मङ्गलचण्डिकाम्।
प्रतिमङ्गलवारे च पूजां कृत्वा गतः शिवः॥ ३५
देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः।
तन्मङ्गलं भवेच्छश्वन्न भवेत् तदमङ्गलम्॥ ३६
प्रथमे पूजिता देवी शिवेन सर्व्वमङ्गला।
द्वितीये पूजिता देवी मङ्गलेन ग्रहेण च॥ ३७
तृतीये पूजिता भद्रे मङ्गलेन नृपेण च।
चतुर्थे मङ्गले वारे सुन्दरीभिश्च पूजिता॥ ३८
पञ्चमे मङ्गलाकाङ्क्षि-नरैर्मङ्गलचण्डिका।
पूजिता प्रतिविश्वेषु विश्वेशपूजिता सदा॥ ३९
ततः सर्व्वत्र सम्पूज्या सा बभूव सुरेश्वरी।
देवादिभिश्च मुनिभिर्मनुभिर्मानवैर्मुने॥ ४०
देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः।
तन्मङ्गलं भवेच्छश्वन्न भवेत् तदमङ्गलम्।
वर्द्धते तत्पुत्त्र-पौत्त्रौ मङ्गलेष्टे दिने दिने॥ ४१

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे मङ्गलोपाख्यानं तत्स्तोत्रकथनं नाम चतुश्चत्वारिंशोऽध्यायः॥ ४४॥

---

## पञ्चचत्वारिंशोऽध्यायः।

नारायण उवाच।

उक्तं द्वयोरुपाख्यानं ब्रह्मपुत्त्र यथागमम्।
श्रूयतां मनसाख्यानं यच्छ्रुतं धर्म्मवक्त्रतः॥ १
कन्या सा च भगवती कश्यपस्य च मानसी।
तेनेयं मनसा देवी मनसा या च दीव्यति॥ २
मनसा ध्यायते या वा परमात्मानमीश्वरम्।
तेन सा मनसा देवी योगेन तेन दीव्यति॥ ३
आत्मारामा च सा देवी वैष्णवी सिद्धयोगिनी।
त्रियुगञ्च तपस्तप्त्वा कृष्णस्य परमात्मनः॥ ४
जरत्कारुशरीरञ्च दृष्ट्वा यत् क्षीणमीश्वरः।
गोपीपतिर्नाम चक्रे जरत्कारुरिति प्रभुः॥ ५
वाञ्छितञ्च ददौ तस्यै कृपया च कृपानिधिः।
पूजाञ्च कारयामास चकार च पुनः स्वयम्।
स्वर्गे च नागलोके च पृथिव्यां ब्रह्मलोकतः॥ ६
भृशं जगत्सु गौरी सा सुन्दरी च मनोहरा।
जगद्गौरीति विख्याता तेन सा पूजिता सती॥ ७
शिवशिष्या च सा देवी तेन शैवीति कीर्त्तिता।
विष्णुभक्तातीव शश्वद्वैष्णवी तेन नारद॥ ८
नागानां प्राणरक्षित्री यज्ञे जन्मेजयस्य (क) च।
नागेश्वरीति विख्याता सा नागभगिनी तथा॥ ९
विषं संहर्त्तुमीशा सा तेन विषहरीति सा।

---

(क) जनमेजयस्येत्यर्थे अकारलोप आर्षः।

सिद्धिं योगं हरात् प्राप तेनातिसिद्धयोगिनी ॥ १०
महाज्ञानञ्च गोप्यञ्च मृतसञ्जीवनीं पराम्।
महाज्ञानयुतां ताञ्च प्रवदन्ति मनीषिणः ॥ ११
आस्तीकस्य मुनीन्द्रस्य माता सा च तपस्विनः।
आस्तीकमाता विख्याता जगत्सु सुप्रतिष्ठिता ॥ १२
प्रिया मुनेर्जरत्कारोर्मुनीन्द्रस्य महात्मनः।
योगिनो विश्वपूज्यस्य जरत्कारुप्रिया ततः ॥१३
जरत्कारुर्जगद्गौरी मनसा सिद्धयोगिनी।
वैष्णवी नागभगिनी शैवी नागेश्वरी तथा ॥ १४
जरत्कारुप्रियास्तीकमाता विषहरीति च।
महाज्ञानयुता चैव सा देवी विश्वपूजिता ॥ १५
द्वादशैतानि नामानि पूजाकाले च यः पठेत्।
तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च ॥ १६
नागभीते च शयने नागग्रस्ते च मन्दिरे।
नागक्षते महादुर्गे नागवेष्टितविग्रहे ॥ १७
इदं स्तोत्रं पठित्वा तु मुच्यते नात्र संशयः।
नित्यं पठेद्यस्तं दृष्ट्वा नागवर्गः पलायते ॥ १८
दशलक्षजपेनैव स्तोत्रसिद्धिर्भवेन्नृणाम्।
स्तोत्रसिद्धिर्भवेद्यस्य स विषं भोक्तुमीश्वरः ॥ १९
नागौघं भूषणं कृत्वा स भवेन्नागवाहनः।
नागासनो नागतल्पो महासिद्धो भवेन्नरः ॥ २०

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे मनसोपाख्याने मनसास्तोत्रं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशोऽध्यायः।

नारायण उवाच।

पूजाविधानं स्तोत्रञ्च श्रूयतां मुनिपुङ्गव।
ध्यानञ्च सामवेदोक्तं देवीपूजाविधानकम् ॥ १
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम्।
वह्निशुद्धांशुकाधानां नागयज्ञोपवीतिनीम् ॥ २
महाज्ञानयुताञ्चैव प्रवरां ज्ञानिनां सतीम्।
सिद्धाधिष्ठातृदेवीञ्च सिद्धां सिद्धिप्रदां भजे ॥ ३
इति ध्यात्वा च तां देवीं मूलेनैव प्रपूजयेत्।
नैवेद्यैर्विविधैर्दीपैः पुष्पैर्धूपानुलेपनैः ॥ ४
मूलमन्त्रश्च वेदोक्तो भक्तानां वाञ्छितप्रदः।
मुने कल्पतरुर्नाम सुसिद्धो द्वादशाक्षरः ॥ ५
ओं ह्रीं श्रीं क्लीं(क)ऐं मनसादेव्यै स्वाहेति कीर्त्तितः
पञ्चलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ॥ ६
मन्त्रसिद्धिर्भवेद्यस्य स सिद्धो जगतीतले।
सुधासमं विषं तस्य धन्वन्तरिसमो भवेत् ॥ ७
ब्रह्मन्नाषाढ़संक्रान्त्यां गूढ़शाखासु यत्नतः।
देवीमिष्टान्तमावाह्य पूजयेद्यो हि भक्तितः ॥ ८
पञ्चम्यां मनसाख्यायां देव्यै दद्याच्च यो बलिम्।
धनवान् पुत्रवांश्चैव कीर्त्तिमान् स भवेद्ध्रुवम् ॥ ९
पूजाविधानं कथितं तदाख्यानं निशामय।
कथयामि महाभाग यच्छ्रुतं धर्म्मवक्त्रतः ॥ १०
पुरा नागभयाक्रान्ता बभूवुर्मानवा भुवि।
यान् यान् खादन्ति नागाश्च न ते जीवन्ति नारद११
मन्त्रांश्च ससृजे भीतः कश्यपो ब्रह्मणार्थितः।
वेदवीजानुसारेण चोपदेशेन ब्रह्मणः ॥ १२
मन्त्राधिष्ठातृदेवीं तां मनसां ससृजे ततः।
तपसा मनसा तेन बभूव मनसा च सा ॥ १३
कुमारी सा च सम्भूय जगाम शङ्करालयम्।
भक्त्या सम्पूज्य कैलासे तुष्टाव चन्द्रशेखरम् ॥ १४
दिव्यं वर्षसहस्रञ्च तं निषेव्य मुनेः सुता।
आशुतोषो महेशश्च ताञ्च तुष्टो बभूव ह ॥ १५
महाज्ञानं ददौ तस्यै पाठयामास साम च।
कृष्णमन्त्रं कल्पतरुं ददावष्टाक्षरं मुने ॥ १६
लक्ष्मी-माया-कामवीजं ङेऽन्तं कृष्णपदं ठठः।
त्रैलोक्यमङ्गलं नाम कवचं पूजनक्रमम् ॥ १७
सर्व्वपूज्यञ्च स्तवनं ध्यानं भुवनपावनम्।
पुरश्चर्य्याक्रमञ्चापि वेदोक्तं सर्व्वसम्मतम् ॥ १८
प्राप्य मृत्युञ्जयाज्ज्ञानं परं मृत्युञ्जयं सती।
जगाम तपसा साध्वी पुष्करं शङ्कराज्ञया ॥ १९
त्रियुगञ्च तपस्तप्त्वा कृष्णस्य परमात्मनः।
सिद्धा बभूव सा देवी ददर्श पुरतः प्रभुम् ॥ २०
दृष्ट्वा कृशाङ्गीं बालाञ्च कृपया च कृपानिधिः।
पूजाञ्च कारयामास चकार च हरिः स्वयम् ॥ २१
वरञ्च प्रददौ तस्यै पूजिता त्वं भवे भव।
वरं दत्त्वा च कल्याण्यै सद्यश्चान्तर्दधे विभुः ॥ २२

(क) क्रौमित्यत्र क्लीमिति च पाठो दृश्यते।

प्रथमे पूजिता सा च कृष्णेन परमात्मना।
द्वितीये शङ्करेणैव कश्यपेन सुरेण च ॥ २३
मनुना मुनिना चैव नागेन मानवादिना।
बभूव पूजिता सा च त्रिषु लोकेषु सुव्रत ॥ २४
जरत्कारुमुनीन्द्राय कश्यपस्तां ददौ पुरा।
अयाचितो मुनिश्रेष्ठो जग्राह ब्रह्मणाज्ञया ॥ २५
कृत्वोद्वाहं महायोगी विश्रान्तस्तपसा चिरम्।
सुष्वाप देव्या जघने वटमूले च पुष्करे ॥ २६
निद्रां जगाम स मुनिः स्मृत्वा निद्रेशमीश्वरम्।
जगामास्तं दिनकरः सायंकाल उपस्थितः ॥ २७
सञ्चिन्त्य मनसा तत्र मनसा सा पतिव्रता।
धर्म्मलोपभयेनैव चकारालोकनं सती ॥ २८
अकृत्वा पश्चिमां सन्ध्यां नित्याञ्चैव द्विजन्मनाम्।
ब्रह्महत्यादिकं पापं लभिष्यति पतिर्मम ॥ २९
नोपतिष्ठति यः पूर्व्वां नोपास्ते यस्तु पश्चिमाम्।
स एव चाशुचिर्नित्यं ब्रह्महत्यादिकं लभेत् ॥ ३०
वेदोक्तमिति सञ्चिन्त्य बोधयामास तं मुनिम्।
स च बुद्धा मुनिश्रेष्ठश्चुकोप तां भृशं मुनिः ॥ ३१

जरत्कारुरुवाच।

कथं मे सुव्रते साध्वि निद्राभङ्गः कृतस्त्वया।
व्यर्थं व्रतादिकं तस्या या भर्त्तुश्चापकारिणी ॥ ३२
तपश्चानशनञ्चैव व्रतं दानादिकञ्च यत्।
भर्त्तुरप्रियकारिण्याः सर्व्वं भवति निष्फलम् ॥ ३३
यया पतिः पूजितश्च श्रीकृष्णः पूजितस्तया।
पतिव्रताव्रतार्थञ्च पतिरूपी हरिः स्वयम् ॥ ३४
सर्व्वदानं सर्व्वयज्ञः सर्व्वतीर्थनिषेवणम्।
सर्व्वं तपो व्रतं सर्व्वमुपवासादिकञ्च यत् ॥ ३५
सर्व्वधर्म्मश्च सत्यञ्च सर्व्वदेवप्रपूजनम्।
तत् सर्व्वं स्वामिसेवायाः कलां नार्हति षोडशीम् ॥ ३६
सुपुण्ये भारते वर्षे पतिसेवां करोति या।
वैकुण्ठं स्वामिना सार्द्धं सा याति ब्रह्मणः शतम् ॥ ३७
विप्रियं कुरुते भर्त्तुर्विप्रियं वदति प्रियम्।
असत्कुलप्रजाता या तत्फलं श्रूयतां सति ॥ ३८
कुम्भीपाकं व्रजेत् सा च यावच्चन्द्रदिवाकरौ।
ततो भवति चाण्डाली पतिपुत्रविवर्ज्जिता ॥ ३९
इत्युक्त्वा च मुनिश्रेष्ठो बभूव स्फुरिताधरः।
चकम्पे मनसा साध्वी भयेनोवाच तं पतिम् ॥ ४०

मनसोवाच।

सन्ध्यालोपभयेनैव निद्राभङ्गः कृतस्तव।
कुरु शान्तिं महाभाग दुष्टाया मम सुव्रत ॥ ४१
शृङ्गाराहारनिद्राणां यश्च भङ्गं करोति च।
स व्रजेत् कालसूत्रञ्च स्वामिनश्च विशेषतः ॥ ४२
इत्युक्त्वा मनसा देवी स्वामिनश्चरणाम्बुजे।
पपात भक्त्या भीता च रुरोद च पुनः पुनः ॥ ४३
कुपितञ्च मुनिं दृष्ट्वा श्रीसूर्य्यं शप्तुमुद्यतम्।
तत्राजगाम भगवान् सन्ध्यया सह नारद ॥ ४४
तत्रागत्य मुनिश्रेष्ठमुवाच भास्करः स्वयम्।
विनयेन च भीतश्च तया सह यथोचितम् ॥ ४५

श्रीसूर्य्य उवाच।

सूर्य्यास्तसमयं दृष्ट्वा धर्म्मलोपभयेन च।
त्वां बोधयामास विप्र नाहमस्तं गतस्तदा ॥ ४६
क्षमस्व भगवान् ब्रह्मन् मां शप्तुं नोचितं मुने।
ब्राह्मणानाञ्च हृदयं नवनीतसमं तथा ॥ ४७
तेषां क्षणार्द्धं क्रोधश्च ततो भस्म भवेज्जगत्।
पुनः स्रष्टुं द्विजः शक्तो न तेजस्वी द्विजात् परः ॥ ४८
ब्रह्मणो वंशसम्भूतः प्रज्वलन् ब्रह्मतेजसा।
श्रीकृष्णं भावयेन्नित्यं ब्रह्मज्योतिः सनातनम् ॥ ४९
सूर्य्यस्य वचनं श्रुत्वा द्विजस्तुष्टो बभूव ह।
सूर्य्यो जगाम स्वस्थानं गृहीत्वा ब्राह्मणाशिषम् ॥ ५०
तत्याज मनसां विप्र प्रतिज्ञापालनाय च।
रुदतीं शोकयुक्ताञ्च हृदयेन विदूयता ॥ ५१
सा सस्मार गुरुं शम्भुमिष्टदेवं हरिं विधिम्।
कश्यपं जन्मदातारं विपत्तौ भयकर्षिता ॥ ५२
तत्राजगाम भगवान् गोपीशः शम्भुरेव च।
विधिश्च कश्यपश्चैव मनसा परिचिन्तितः ॥ ५३
दृष्ट्वा विप्रोऽभीष्टदेवं निर्गुणं प्रकृतेः परम्।
तुष्टाव परया भक्त्या प्रणनाम मुहुर्मुहुः ॥ ५४
नमश्चकार शम्भुञ्च ब्रह्माणं कश्यपं तदा।
कथमागमनं देव इति प्रश्नं चकार सः ॥ ५५
ब्रह्मा तद्वचनं श्रुत्वा सहसा समयोचितम्।
तमुवाच नमस्कृत्य हृषीकेशपदाम्बुजम् ॥ ५६

ब्रह्मोवाच।

यदि त्यक्ता धर्म्मपत्नी धर्म्मिष्ठा मनसा सती।
कुरुष्वास्यां सुतोत्पत्तिं स्वधर्म्मपालनाय वै ॥ ५७

यती वा ब्रह्मचारी वा भिक्षुर्वनचरोऽपि वा ।
जायायाश्च सुतोत्पत्तिं कृत्वा पश्चाद्भवेन्मुनिः ॥ ५८
अकृत्वा तु सुतोत्पत्तिं वैरागी यस्त्यजेत् प्रियाम् ।
स्रवेत् तपस्तत्पुण्यञ्च चालन्याञ्च यथा जलम् ॥ ५९
ब्रह्मणो वचनं श्रुत्वा जरत्कारुर्मुनीश्वरः ।
चकार तन्नाभिस्पर्शं योगेन मन्त्रपूर्व्वकम् ॥ ६०
तस्यै शुभाशिषं दत्त्वा ययुर्देवा मुदान्विताः ।
मुदान्विता च मनसा जरत्कारुर्मुदान्वितः ॥ ६१
मुनेः करस्पर्शमात्रात् सद्यो गर्भो बभूव ह ।
मनसाया मुनिश्रेष्ठ मुनिश्रेष्ठ उवाच ताम् ॥ ६२

जरत्कारुरुवाच ।

गर्भेणानेन मनसे तव पुत्त्रो भविष्यति ।
जितेन्द्रियाणां प्रवरो धर्म्मिष्ठो वैष्णवाग्रणीः ॥६३
तेजस्वी च तपस्वी च यशस्वी च गुणान्वितः ।
वरो वेदविदाञ्चैव ज्ञानिनां योगिनां तथा ॥ ६४
स च पुत्त्रो विष्णुभक्तो धार्म्मिकः कुलमुद्धरेत् ।
नृत्यन्ति पितरः सर्व्वे यज्जन्ममात्रतो मुदा ॥ ६५
पतिव्रता सुशीला या सा प्रिया प्रियवादिनी ।
धर्म्मिष्ठपुत्त्रमाता च कुलजा कुलपालिका ॥ ६६
हरिभक्तिप्रदो बन्धुस्तदिष्टं यत् सुखप्रदम् ।
यो बन्धच्छित् स च पिता हरेर्वर्त्मप्रदर्शकः ॥ ६७
सा गर्भधारिणी या च गर्भवासविमोचनी ।
विष्णुमन्त्रप्रदाता च स गुरुर्विष्णुभक्तिदः ॥ ६८
गुरुश्च ज्ञानदाता च तज्ज्ञानं कृष्णभावनम् ।
आब्रह्मस्तम्बपर्य्यन्तं यतो विश्वं चराचरम् ॥ ६९
आविर्भूतं तिरोभूतं किं वा ज्ञानं तदन्यतः ।
वेदजं योगजं यद्यत् तत्सारं हरिसेवनम् ॥ ७०
तत्त्वानां सारभूतञ्च हरेरन्यद्विडम्बनम् ।
दत्तं ज्ञानं मया तुभ्यं स स्वामी ज्ञानदो हि यः ॥७१
ज्ञानात् प्रमुच्यते बन्धात् स रिपुर्यो हि बन्धदः ।
विष्णुभक्तियुतं ज्ञानं ददाति स हि यो गुरुः ॥७२
स रिपुः शिष्यघाती च यतो बन्धान्न मुच्यते ।
जननीगर्भजात् क्लेशाद्यमताड़नजात् तथा ।
तं मोचयेद्यः स कथं गुरुस्तातो हि बान्धवः ॥ ७३
परमानन्दरूपञ्च कृष्णमार्गमनश्वरम् ।
न दर्शयेद्यः स कथं कीदृशो बान्धवो नृणाम् ॥ ७४
भज साध्वि परंब्रह्माच्युतं कृष्णञ्च निर्गुणम् ।
निर्म्मूलञ्च पुराकर्म्म भवेद्यत्सेवया ध्रुवम् ॥ ७५
मया छलेन त्वं त्यक्ता क्षम देवि मम प्रिये ।
क्षमायुतानां साध्वीनां सत्त्वात् क्रोधो न विद्यते॥७६
पुष्करे तपसे यामि गच्छ देवि यथा सुखम् ।
श्रीकृष्णचरणाम्भोजे ध्यानविच्छेदकातरः ॥ ७७
धनादिषु स्त्रियां प्रीतिः प्रवृत्तिवर्त्म गच्छताम् ।
श्रीकृष्णचरणाम्भोजे निस्पृहाणां मनोरथाः ॥ ७८
जरत्कारुवचः श्रुत्वा मनसा शोककातरा ।
सा साश्रुनेत्रा विनयादुवाच प्राणवल्लभम् ॥ ७९

मनसोवाच ।

दोषिणाहं त्वया त्यक्ता निद्राभङ्गेण ते प्रभो ।
यत्र स्मरामि त्वां बन्धो तत्र मामागमिष्यसि ॥ ८०
बन्धुभेदः क्लेशतमः पुत्त्रभेदस्ततः परः ।
प्राणेशभेदः प्राणानां विच्छेदात् सर्व्वतः परः ॥८१
पतिः पतिव्रतानाञ्च शतपुत्त्राधिकः प्रियः ।
सर्व्वस्माच्च प्रियः स्त्रीणां प्रियस्तेनोच्यते बुधैः ॥८२
पुत्त्रे यथैकपुत्त्राणां वैष्णवानां यथा हरौ ।
नेत्रे यथैकनेत्राणां तृषितानां यथा जले ॥ ८३
क्षुधितानां यथान्ने च कामुकानां यथा स्त्रियाम् ।
यथा परस्वे चौराणां यथा जारे कुयोषिताम् ॥८४
विदुषाञ्च यथा शास्त्रे वाणिज्ये वणिजां यथा ।
तथा शश्वन्मनः कान्ते साध्वीनां योषितां प्रभो ॥८५
इत्युक्त्वा मनसा देवी पपात स्वामिनः पदे ।
क्षणं चकार क्रोड़े तां कृपया च कृपानिधिः ॥ ८६
नेत्रोदकेन मनसां स्नापयामास तां मुनिः ।
साश्रुणा च मुनेः क्रोड़ं सिषेच भेदकातरा ॥ ८७
तदा ज्ञानेन तौ द्वौ च विशोकौ च बभूवतुः ।
स्मारं स्मारं पदाम्भोजं कृष्णस्य परमात्मनः ॥ ८८
जगाम तपसे विप्रः स कान्तां सुप्रबोध्य च ।
जगाम मनसा शम्भोः कैलासं मन्दिरं गुरोः ॥ ८९
पार्व्वती बोधयामास मनसां शोककर्षिताम् ।
शिवश्चातीवज्ञानेन शिवेन च शिवालयः ॥ ९०
सुप्रशस्तदिने साध्वी सुषाव मङ्गले क्षणे ।
नारायणांशं पुत्त्रञ्च ज्ञानिनां योगिनां गुरुम् ॥९१
गर्भस्थितो महाज्ञानं श्रुत्वा शङ्करवक्त्रतः ।
स बभूव च योगीन्द्रो योगिनां ज्ञानिनां गुरुः ॥९२
जातकं कारयामास वाचयामास मङ्गलम् ।

वेदांश्च पाठयामास शिवाय च शिवः शिशोः ॥ ९३
रत्नत्रिकोटिलक्षञ्च ब्राह्मणेभ्यो ददौ शिवः।
पार्व्वती च गवां लक्षं रत्नानि विविधानि च ॥ ९४
शम्भुश्च चतुरो वेदान् वेदाङ्गानितरांस्तथा।
बालकं पाठयामास ज्ञानं मृत्युञ्जयं परम् ॥ ९५
भक्तिरस्ति स्वकान्ते चाभीष्टे देवे हरौ गुरौ।
यस्मास्तेन च तत्पुत्रो बभूवास्तीक एव च ॥ ९६
जगाम तपसे विष्णोः पुष्करं शङ्कराज्ञया।
सम्प्राप्य च महामन्त्रं तपश्च परमात्मनः ॥ ९७
दिव्यं वर्षत्रिलक्षञ्च तपस्तप्त्वा तपोधनः।
आजगाम महायोगी नमस्कर्त्तुं शिवं प्रभुम् ॥ ९८
शङ्करञ्च नमस्कृत्य स्थित्वा च बालकं पुरः।
सा चाजगाम मनसा कश्यपस्याश्रमं पितुः ॥ ९९
तां सपुत्रां सुतां दृष्ट्वा मुदं प्राप प्रजापतिः।
शतलक्षञ्च रत्नानां ब्राह्मणेभ्यो ददौ मुने ॥ १००
ब्राह्मणान् भोजयामास असंख्यानिच्छया शिशोः।
अदितिश्च दितिश्चान्या मुदं प्रापुः परं तथा ॥ १०१
सा सपुत्रा च सुचिरं तस्थौ तातालये तदा।
तदीयं पुनराख्यानं वक्ष्यामि तन्निशामय ॥ १०२
अथाभिमन्युतनये ब्रह्मशापः परिक्षिते।
बभूव सहसा ब्रह्मन् दैवदोषेण कर्म्मणा ॥ १०३
सप्ताहे समतीते तु तक्षकस्त्वाञ्च भोक्ष्यति।
शशाप शृङ्गी चेतीदं कौशिक्याश्च जलेन च ॥ १०४
राजा श्रुत्वा तत्प्रवृत्तिं गङ्गाद्वारं जगाम सः।
तत्र तस्थौ च सप्ताहं शुश्राव धर्म्मसंहिताम् ॥ १०५
सप्ताहे समतीते तु गच्छन्तं तक्षकं पथि।
धन्वन्तरिर्नृपं मोक्तुं ददर्श गामुको नृपम् ॥ १०६
तयोर्बभूव संवादः सुप्रीतिश्च परस्परम्।
धन्वन्तरिर्मणिं प्राप तक्षकः स्वेच्छया ददौ ॥ १०७
स ययौ तं गृहीत्वा तु तुष्टः प्रहृष्टमानसः।
तक्षको भक्षयामास नृपञ्च मञ्चकस्थितम् ॥ १०८
राजा जगाम वैकुण्ठं स्मारं स्मारं हरिं गुरुम्।
सत्कारं कारयामास पितुर्जन्मेजयः शुचा ॥ १०९
राजा चकार यज्ञञ्च सर्पसत्रं ततो मुने।
प्राणांस्तत्याज सर्पाणां समूहो ब्रह्मतेजसा ॥ ११०
स तक्षकश्च भीतश्च महेन्द्रं शरणं ययौ।
सेन्द्रञ्च तक्षकं हन्तुं विप्रवर्गः सम[illegible] ॥ १११
अथ देवाश्च मुनयश्चाययुर्मनसान्तिकम्।
तां तुष्टाव महेन्द्रश्च भयकातरविह्वलः ॥ ११२
तत आस्तीक आगत्य यज्ञञ्च मातुराज्ञया।
महेन्द्रतक्षकप्राणान् ययाचे भूमिपं वरम् ॥ ११३
ददौ वरं नृपश्रेष्ठः कृपया ब्राह्मणाज्ञया।
यज्ञं समाप्य विप्रेभ्यो दक्षिणाञ्च ददौ मुदा ॥ ११४
विप्राश्च मुनयो देवा गत्वा च मनसान्तिकम्।
मनसां पूजयामासुस्तुष्टुवुश्च पृथक् पृथक् ॥ ११५
शक्रः सम्भृतसम्भारो भक्तियुक्तः सदा शुचिः।
मनसां पूजयामास तुष्टाव परमादरम् ॥ ११६
दत्त्वा षोडशोपचारैर्बलिञ्च तत्प्रियं तदा।
प्रददौ परितुष्टश्च ब्रह्म-विष्णु-शिवाज्ञया ॥ ११७
सम्पूज्य मनसादेवीं प्रययुः स्वालयञ्च ते।
इत्येवं कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि ॥ ११८

नारद उवाच।

केन तुष्टाव स्तोत्रेण महेन्द्रो मनसां सतीम्।
पूजाविधिक्रमं तस्याः श्रोतुमिच्छामि तत्त्वतः ॥ ११९

नारायण उवाच।

सुस्नातः शुचिराचान्तो धृत्वा धौते च वाससी।
रत्नसिंहासने देवीं वासयामास भक्तितः ॥ १२०
स्वर्गगङ्गाजलेनैव बहुकुम्भस्थितेन च।
स्नापयामास मनसां महेन्द्रो वेदमन्त्रतः ॥ १२१
वाससी वासयामास वह्निशुद्धे मनोरमे।
सर्व्वाङ्गे चन्दनं दत्त्वा पाद्यार्घ्यं भक्तिसंयुतः ॥ १२२
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्।
सम्पूज्य देवषट्कञ्च पूजयामास तां सतीम् ॥ १२३
ओं ह्रीं श्रीं मनसादेव्यै स्वाहेत्येवञ्च मन्त्रतः।
दशाक्षरेण मन्त्रेण ददौ सर्व्वं यथोचितम् ॥ १२४
दत्त्वा षोडशोपचारं भक्तितो दुर्लभं हरिः।
पूजयामास भक्त्या च ब्रह्मणा प्रेरितो मुदा ॥ १२५
वाद्यं नानाप्रकारञ्च वादयामास तत्र वै।
बभूव पुष्पवृष्टिश्च नभसो मनसोपरि ॥ १२६
देवविप्राज्ञया तत्र ब्रह्म-विष्णु-शिवाज्ञया।
तुष्टाव साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ॥ १२७

महेन्द्र उवाच।

देवि त्वां स्तोतुमिच्छामि साध्वीनां प्रवरां वराम्।
परात्पराञ्च परमां न हि स्तोतुं क्षमोऽधुना ॥ १२८

स्तोत्राणां लक्षणं वेदे स्वभावाख्यानतत्परम्।
न क्षमः प्रकृतिं वक्तुं गुणानां तव सुव्रते ॥ १२९
शुद्धसत्त्वस्वरूपा त्वं कोपहिंसाविवर्जिता।
न च शप्तो मुनिस्तेन त्यक्तया च त्वया यतः ॥ १३०
त्वं मया पूजिता साध्वि जननी च यथादितिः।
दयारूपा च भगिनी क्षमारूपा यथा प्रसूः ॥ १३१
त्वया मे रक्षिताः प्राणाः पुत्त्रदाराः सुरेश्वरि।
अहं करोमि त्वां पूज्यां प्रीतिश्च वर्द्धते मम ॥ १३२
नित्या यद्यपि पूज्या त्वं भवेऽत्र जगदम्बिके।
तथापि तव पूजाञ्च वर्द्धयामि च सर्व्वतः ॥ १३३
ये त्वामाषाढ़संक्रान्त्यां पूजयिष्यन्ति भक्तितः।
पञ्चम्यां मनसाख्यायामिषान्ते वा दिने दिने ॥ १३४
पुत्त्रपौत्त्रादयस्तेषां वर्द्धन्ते च धनानि च।
यशस्विनः कीर्त्तिमन्तो विद्यावन्तो गुणान्विताः ॥१३५
ये त्वां न पूजयिष्यन्ति निन्दन्त्यज्ञानतो जनाः।
लक्ष्मीहीना भविष्यन्ति तेषां नागभयं सदा ॥ १३६
त्वं स्वर्गलक्ष्मीः स्वर्गे च वैकुण्ठे कमलाकला।
नारायणांशो भगवान् जरत्कारुर्मुनीश्वरः ॥ १३७
तपसा तेजसा त्वाञ्च मनसा सस्रजे पिता।
अस्माकं रक्षणायैव तेन त्वं मनसाभिधा ॥ १३८
मनसा देवितुं शक्ता स्वात्मना सिद्धयोगिनी।
तेन त्वं मनसा देवी पूजिता वन्दिता भवे ॥ १३९
यां भक्त्या मनसां देवाः पूजयन्त्यनिशं भृशम्।
तेन त्वां मनसादेवीं प्रवदन्ति पुराविदः ॥ १४०
सत्त्वरूपा च देवि त्वं शश्वत्सत्त्वनिषेवया।
यो हि यद्भावयेन्नित्यं स तत् प्राप्नोति तत्समः॥१४१
इन्द्रश्च मनसां स्तुत्वा गृहीत्वा भगिनीञ्च ताम्।
प्रजगाम स्वभवनं भूषावासपरिच्छदाम् ॥ १४२
पुत्त्रेण सार्द्धं सा देवी चिरं तस्थौ पितुर्गृहे।
भ्रातृभिः पूजिता शश्वन्मान्या वन्द्या च सर्व्वतः॥१४३
गोलोकात् सुरभी ब्रह्मन् तत्रागत्य सुपूजिताम्।
स्नापयित्वा च क्षीरेण पूजयामास सादरम् ॥ १४४
ज्ञानञ्च कथयामास सुगोप्यं सर्व्वदुर्लभम्।
तया देवैः पूजिता सा स्वर्गलोकं पुनर्ययौ ॥ १४५
इदं स्तोत्रं पुण्यवीजं तां सम्पूज्य च यः पठेत्।
तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च ॥ १४६
विषं भवेत् सुधातुल्यं सिद्धस्तोत्रं यदा पठेत्।
पञ्चलक्षजपेनैव सिद्धस्तोत्रो भवेन्नरः।
सर्पशायी भवेत् सोऽपि निश्चितं सर्पवाहनः ॥ १४७

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारद-संवादे मनसोपाख्याने स्तोत्रकथनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

## सप्तचत्वारिंशोऽध्यायः।

नारद उवाच।

का वा सा सुरभी देवी गोलोकादागता च या।
तज्जन्मचरितं ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः ॥ १

नारायण उवाच।

गवामधिष्ठातृदेवी गवामाद्या गवां प्रसूः।
गवां प्रधाना सुरभी गोलोके च समुद्भवा ॥ २
सर्व्वादिसृष्टेः कथनं कथयामि निशामय।
बभूव येन तज्जन्म पुरा वृन्दावने वने ॥ ३
एकदा राधिकानाथो राधया सह कौतुकात्।
गोपाङ्गनापरिवृतः पुण्यं वृन्दावनं ययौ ॥ ४
सहसा तत्र रहसि विजहार च कौतुकात्।
बभूव क्षीरपानेच्छा तदा स्वेच्छामयस्य च ॥ ५
सस्रजे सुरभीं देवीं लीलया वामपार्श्वतः।
वत्सयुक्तां दुग्धवतीं वत्सानाञ्च मनोरमाम् ॥ ६
दृष्ट्वा सवत्सां सुदामा रत्नभाण्डे दुदोह च।
क्षीरं सुधातिरिक्तञ्च जन्ममृत्युहरं परम् ॥ ७
तदुष्णञ्च पयः स्वादु पपौ गोपीपतिः स्वयम्।
सरो बभूव पयसो भाण्डविभ्रंशनेन च ॥ ८
दीर्घे च विस्तृते चैव परितः शतयोजनम्।
गोलोकेषु प्रसिद्धश्च स च क्षीरसरोवरः ॥ ९
गोपिकानाञ्च राधायाः क्रीड़ावापी बभूव सा।
रत्नेन खचिता तूर्णं भूता वापीश्वरेच्छया ॥ १०
बभूव कामधेनूनां सहसा लक्षकोटयः।
तावन्तो हि च वत्साश्च सुरभीलोमकूपतः ॥ ११
तासां पुत्त्राश्च पौत्त्राश्च सम्बभूवुरसंख्यकाः।
कथिता च गवां सृष्टिस्तया च पूरितं जगत् ॥ १२
पूजां चकार भगवान् सुरभ्याश्च पुरा मुने।
ततो बभूव तत्पूजा त्रिषु लोकेषु दुर्लभा ॥ १३

द्दीपान्वितापरदिने श्रीकृष्णस्याज्ञया भवे ।
बभूव सुरभीपूजा धर्म्मवक्त्रादिति श्रुतम् ॥ १४
ध्यानं स्तोत्रं मूलमन्त्रं यद्‌यत् पूजाविधिक्रमम् ।
वेदोक्तञ्च महाभाग निबोध कथयामि ते ॥ १५
ओं सुरभ्यै नम इति मन्त्रस्तस्याः षडक्षरः ।
सिद्धो लक्षजपेनैव भक्तानां कल्पपादपः ॥ १६
ध्यानं तद्यजुर्व्वेदोक्तं पूजनं सर्व्वसम्मतम् ।
ऋद्धिदां वृद्धिदाञ्चैव मुक्तिदां सर्व्वकामदाम् ॥ १७
लक्ष्मीस्वरूपां परमां राधासहचरीं पराम् ।
गवामधिष्ठातृदेवीं गवामाद्यां गवां प्रसूम् ॥ १८
पवित्ररूपां पूज्याञ्च भक्तानां सर्व्वकामदाम् ।
यया पूतं सर्व्वविश्वं तां देवीं सुरभीं भजे ॥ १९
घटे वा धेनुशिरसि बन्धस्तम्भे गवाञ्च वा ।
शालग्रामे जलेऽग्नौ वा सुरभीं पूजयेद्द्विजः ॥ २०
द्दीपान्वितापरदिने पूर्व्वाह्णे भक्तिसंयुतः ।
यः पूजयेच्च सुरभीं स च पूज्यो भवेद्भुवि ॥ २१
एकदा त्रिषु लोकेषु वाराहे विष्णुमायया ।
क्षीरं जहार सहसा चिन्तिताश्च सुरादयः ॥ २२
ते गत्वा ब्रह्मलोकञ्च ब्रह्माणं तुष्टुवुः सदा ।
तदाज्ञया च सुरभीं तुष्टाव पाकशासनः ॥ २३

महेन्द्र उवाच ।

नमो देव्यै महादेव्यै सुरभ्यै च नमो नमः ।
गवां वीजस्वरूपायै नमस्ते जगदम्बिके ॥ २४
नमो राधाप्रियायै च पद्मांशायै नमो नमः ।
नमः कृष्णप्रियायै च गवां मात्रे नमो नमः ॥ २५
कल्पवृक्षस्वरूपायै सर्व्वेषां सन्ततं परम् ।
श्रीदायै धनदायै च वृद्धिदायै नमो नमः ॥ २६
शुभदायै प्रसन्नायै गोप्रदायै नमो नमः ।
यशोदायै कीर्त्तिदायै धर्म्मज्ञायै नमो नमः ॥ २७
स्तोत्रश्रवणमात्रेण तुष्टा हृष्टा जगत्प्रसूः ।
आविर्भूता सा तत्रैव ब्रह्मलोके सनातनी ॥ २८
महेन्द्राय वरं दत्त्वा वाञ्छितञ्चापि दुर्लभम् ।
जगाम सा च गोलोकं ययुर्देवादयो गृहम् ॥ २९
बभूव विश्वं सहसा दुग्धपूर्णञ्च नारद ।
दुग्धाद्घृतं ततो यज्ञस्ततः प्रीतिः सुरस्य च ॥ ३०
इदं स्तोत्रं महापुण्यं भक्तियुक्तश्च यः पठेत् ।
स गोमान् धनवांश्चैव कीर्त्तिमान् पुण्यवान् भवेत् ३१
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ।
इह लोके सुखं भुक्त्वा यात्यन्ते कृष्णमन्दिरम् ॥ ३२
सुचिरं निवसेत् तत्र करोति कृष्णसेवनम् ।
न पुनर्भवनं तस्य ब्रह्मपुत्त्र भवे भवेत् ॥ ३३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे सुरभ्युपाख्यानं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अष्टचत्वारिंशोऽध्यायः ।

नारद उवाच ।

नारायण महाभाग नारायणपरायण ।
नारायणांश भगवन् ब्रूहि नारायणीं कथाम् ॥ १
श्रुतं सुरभ्युपाख्यानमतीव सुमनोहरम् ।
गोप्यं सर्व्वपुराणेषु पुराविद्भिः प्रशंसितम् ॥ २
अधुना श्रोतुमिच्छामि राधिकाख्यानमुत्तमम् ॥ ३

नारायण उवाच ।

पुरा कैलासशिखरे भगवन्तं सनातनम् ।
सिद्धेशं सिद्धिदं सर्व्वस्वरूपं शङ्करं वरम् ॥ ४
प्रफुल्लवदनं प्रीतं सस्मितं मुनिभिः स्तुतम् ।
कुमाराय प्रवोचन्तं कृष्णस्य परमात्मनः ॥ ५
रासोत्सवरसाख्यानं रासमण्डलवर्णनम् ।
तदाख्यानावसाने च प्रस्तावावसरे सती ॥ ६
पप्रच्छ पार्व्वती स्मेरा सस्मिता प्राणवल्लभम् ।
स्तवनं कुर्व्वती भीता प्राणेशेन प्रसादिता ॥ ७
प्रोवाच तां महादेवो महादेवीं सुरेश्वरीम् ।
अपूर्व्वं राधिकाख्यानं पुराणेषु सुदुर्लभम् ॥ ८

पार्व्वत्युवाच ।

आगमं निखिलं नाथ श्रुतं सर्व्वमनुत्तमम् ।
पञ्चरात्रादिकं नीतिशास्त्रं योगञ्च योगिनाम् ॥ ९
सिद्धानां सिद्धिशास्त्रञ्च नानातन्त्रं मनोहरम् ।
भक्तानां भक्तिशास्त्रञ्च कृष्णस्य परमात्मनः ॥ १०
देवीनामपि सर्व्वासां चरितं त्वन्मुखाम्बुजात् ।
अधुना श्रोतुमिच्छामि राधिकाख्यानमुत्तमम् ॥ ११
श्रुतौ श्रुतं प्रशंसा च राधायाश्च समासतः ।
त्वन्मुखात् काण्वशाखायां व्यासेन तावताधुना ॥१२
आगमाख्यानकाले च भवता स्वीकृतं पुरा ।

न हीश्वरव्याहृतिश्च मिथ्या भवितुमर्हति ॥ १३
तदुत्पत्तिश्च तद्ध्यानं नाम्नो माहात्म्यमुत्तमम्।
पूजाविधानं चरितं स्तोत्रं कवचमीप्सितम् ॥ १४
आराधनविधानञ्च पूजापद्धतिमीप्सिताम्।
साम्प्रतं ब्रूहि भगवन् मां भक्तां भक्तवत्सल ॥ १५
कथ न कथितं पूर्व्वमागमाख्यानकालतः।
पार्व्वतीवचनं श्रुत्वा नम्रवक्त्रो बभूव सः ॥ १६
पञ्चवक्त्रश्च भगवान् शुष्ककण्ठोष्ठतालुकः। (क)
स्वसत्यभङ्गभीतश्च मौनीभूतो हि चिन्तितः ॥ १७
सस्मार कृष्णं ध्यानेनाभीष्टदेवं कृपानिधिम्।
तदनुज्ञाञ्च सम्प्राप्य स्वार्द्धाङ्गां तामुवाच सः ॥ १८
निषिद्धोऽहं भगवता कृष्णेन परमात्मना।
आगमारम्भसमये राधाख्यानप्रसङ्गतः ॥ १९
मदर्द्धाङ्गस्वरूपा त्वं न मद्भिन्ना स्वरूपतः।
अतोऽनुज्ञां ददौ कृष्णो मह्यं वक्तुं महेश्वरि ॥ २०
मदिष्टदेवकान्ताया राधायाश्चरितं सति।
अतीव गोपनीयञ्च सुखदं कृष्णभक्तिदम् ॥ २१
जानामि तदहं दुर्गे सर्व्वं पूर्व्वापरं वरम्।
यज्जानामि रहस्यञ्च न तद्ब्रह्मा फणीश्वरः ॥ २२
न तत् सनत्कुमारश्च न च धर्म्मः सनातनः।
न देवेन्द्रो मुनीन्द्राश्च सिद्धेन्द्राः सिद्धपुङ्गवाः ॥ २३
मत्तो बलवती त्वञ्च प्राणांस्त्यक्तुं समुद्यता।
अतस्त्वां गोपनीयञ्च कथयामि सुरेश्वरि ॥ २४
शृणु दुर्गे प्रवक्ष्यामि रहस्यं परमाद्भुतम्।
चरितं राधिकायाश्च दुर्लभञ्च सुपुण्यदम् ॥ २५
पुरा वृन्दावने रम्ये गोलोके रासमण्डले।
शतशृङ्गैकदेशे च मालती-मल्लिकावने ॥ २६
रत्नसिंहासने रम्ये तस्थौ तत्र जगत्पतिः।
स्वेच्छामयश्च भगवान् बभूव रमणोत्सुकः ॥ २७
रमणीं कर्त्तुमिच्छा च तद्बभूव सुरेश्वरी।
इच्छया च भवेत् सर्व्वं तस्य स्वेच्छामयस्य च ॥२८
एतस्मिन्नन्तरे दुर्गे द्विधारूपो बभूव सः।
दक्षिणाङ्गञ्च श्रीकृष्णो वामाङ्गं सा च राधिका ॥ २९
बभूव रमणी रम्या रासे सा रमणोत्सुका।
अमूल्यरत्नाभरणा रत्नसिंहासनस्थिता ॥ ३०
वह्निशुद्धांशुकाधाना कोटिपूर्णशशिप्रभा।

(क) शुष्ककण्ठो जगत्पतिरिति वा पाठः।

तप्तकाञ्चनवर्णाभा राजिता च स्वतेजसा ॥ ३१
सस्मिता सुदती शुद्धा शरत्पद्मनिभानना।
बिभ्रती कबरीं रम्यां मालतीमाल्यमण्डिताम् ॥ ३२
रत्नमालाञ्च दधती ग्रीष्मसूर्य्यसमप्रभा।
मुक्ताहारेण शुभ्रेण गङ्गाधारानिभेन च ॥ ३३
संयुक्तं वर्त्तुलोत्तुङ्गं सुमेरुगिरिसन्निभम्।
कठिनं सुन्दरं दृश्यं कस्तूरीपत्रचिह्नितम् ॥ ३४
माङ्गल्यं मङ्गलार्हञ्च स्तनयुग्मञ्च बिभ्रती।
नितम्बश्रोणिभारार्त्ता नवयौवनसंयुता ॥ ३५
कामातुरां सस्मितां तां ददर्श रसिकेश्वरः।
दृष्ट्वा कान्तां जगत्कान्तो बभूव रमणोत्सुकः ॥ ३६
दृष्ट्वा रिरंसुं कान्तञ्च सा दधाव हरेः पुरः।
तेन राधा समाख्याता पुराविद्भिर्महेश्वरि ॥ ३७
राधा भजति श्रीकृष्णं स च ताञ्च परस्परम्।
उभयोः सर्व्वसाम्यञ्च सदा सन्तो वदन्ति च ॥ ३८
भवनं धावनं रासे स्मरत्यालिङ्गनं जपात्।
तेन जल्पति सङ्केताद्वंशाः राधां मदीश्वरः ॥३९
रा-शब्दोच्चारणाद्भक्तो राति मुक्तिं सुदुर्लभाम्।
धा-शब्दोच्चारणाद्दुर्गे धावत्येव हरेः पदम् ॥ ४०
कृष्णवामांशसम्भूता राधा रासेश्वरी पुरा।
तस्याश्चांशांशकलया बभूवुर्देवयोषितः ॥ ४१
रा इत्यादानवचनो धा च निर्व्वाणवाचकः।
यतोऽवाप्नोति मुक्तिञ्च सा च राधा प्रकीर्त्तिता ॥४२
बभूव गोपीसङ्घश्च राधाया लोमकूपतः।
श्रीकृष्णलोमकूपेभ्यो बभूवुः सर्व्वबल्लवाः ॥ ४३
राधावामांशभागेन महालक्ष्मीर्बभूव सा।
चतुर्भुजस्य सा पत्नी देवी वैकुण्ठवासिनी ॥ ४४
तदंशा राजलक्ष्मीश्च राजसम्पत्प्रदायिनी।
तदंशा मर्त्त्यलक्ष्मीश्च गृहिणाञ्च गृहे गृहे ॥ ४५
शस्याधिष्ठातृदेवी च सा एव गृहदेवता ॥ ४६
स्वयं राधा कृष्णपत्नी कृष्णवक्षःस्थलस्थिता।
प्राणाधिष्ठातृदेवी च तस्यैव परमात्मनः ॥ ४७
आब्रह्मस्तम्बपर्य्यन्तं सर्व्वं मिथ्यैव पार्व्वति।
भज सत्यं परंब्रह्म राधेशं त्रिगुणात् परम् ॥ ४८
परं प्रधानं परमं परमात्मानमीश्वरम्।
सर्व्वाद्यं सर्व्वपूज्यञ्च निरीहं प्रकृतेः परम् ॥ ४९
स्वेच्छामयं नित्यरूपं भक्तानुग्रहविग्रहम्।

तद्विन्नानाञ्च देवानां प्राकृतं रूपमेव च ॥ ५०
तस्य प्राणाधिका राधा बहुसौभाग्यसंयुता।
महाविष्णोः प्रसूः सा च मूलप्रकृतिरीश्वरी ॥ ५१
मानिनीं राधिकां सन्तः सदा सेवन्ति नित्यशः।
सुलभं यत्पदाम्भोजं ब्रह्मादीनां सुदुर्लभम् ॥ ५२
स्वप्ने राधापदाम्भोजं न हि पश्यन्ति बल्लवाः।
स्वयं देवी हरेः क्रोड़े छायारूपेण कामिनी ॥ ५३
स च द्वादशगोपानां रायाणः प्रवरः प्रिये।
श्रीकृष्णांशश्च भगवान् विष्णुतुल्यपराक्रमः ॥ ५४
सुदामशापात् सा देवी गोलोकादागता महीम्।
वृषभानुगृहे जाता तन्माता च कलावती ॥ ५५

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे हर-गौरी-संवादे राधोपाख्यानं नामाष्टचत्वारिंशोऽध्यायः ॥४८॥

---

## एकोनपञ्चाशोऽध्यायः।

पार्व्वत्युवाच।

कथं सुदामशापञ्च सा च देवी ललाभ ह।
कथं शशाप भक्तो हि स्वाभीष्टदेवकामिनीम् ॥ १

भगवानुवाच।

शृणु देवि प्रवक्ष्यामि रहस्यं परमाद्भुतम्।
गोप्यं सर्व्वपुराणेषु शुभदं भक्तिमुक्तिदम् ॥ २
एकदा राधिकेशश्च गोलोके रासमण्डले।
शतशृङ्गैकपर्व्वतैकदेशे वृन्दावने वने ॥ ३
गृहीत्वा विरजां गोपीं सौभाग्यां राधिकासमाम्।
क्रीड़ां चकार भगवान् रत्नभूषणभूषितः ॥ ४
रत्नप्रदीपसंयुक्ते रत्ननिर्म्माणमण्डले।
अमूल्यरत्ननिर्म्माणतल्पे चम्पकचर्च्चिते ॥ ५
कस्तूरी-कुङ्कुमासक्ते सुगन्धिचन्दनार्च्चिते।
सुगन्धिमालतीमाला-समूहपरिशोभिते ॥ ६
सुरतेर्विरतिर्नास्ति दम्पती रतिपण्डितौ।
तौ द्वौ परस्परासक्तौ सुखसम्भोगतन्त्रितौ ॥ ७
मन्वन्तराणां लक्षञ्च कालः परिमितो गतः।
गोलोकस्य स्वल्पकाले जन्मादिरहितस्य च ॥ ८
दूतश्चतस्रो ज्ञात्वा च कथयामास राधिकाम्।
श्रुत्वा परमरुष्टा सा तत्याज हरिमीश्वरी ॥ ९
प्रबोधिता सखीभिश्च कोपरक्तास्यलोचना।
विहाय रत्नालङ्कारं वह्निशुद्धांशुके शुभे ॥ १०
क्रीड़ापद्मञ्च सद्रत्नांमूल्यदर्पणमुज्ज्वलम्।
चकार लोपं वस्त्रेण सिन्दूरं चित्रपत्रकम् ॥ ११
प्रक्षाल्य तोयाञ्जलिभिर्मुखरागमलक्तकम्।
विस्रस्तकवरीभारा मुक्तकेशी प्रकम्पिता ॥ १२
शुक्लवस्त्रपरीधाना रहा वेशादिवर्ज्जिता।
ययौ यानान्तिकं तूर्णं प्रियालीभिर्निवारिता ॥ १३
आजुहाव सखीसंघं सरोषस्फुरिताधरा।
शश्वल्लक्ष्म्यान्विताङ्गीशगोपीभिः परिवारिता ॥१४
ताभिर्भक्त्यानताभिश्च कातराभिश्च संस्तुता।
आरुरोह रथं दिव्यममूल्यरत्ननिर्म्मितम् ॥ १५
सहस्रचक्रयुक्तञ्च नानाचित्रसमन्वितम्।
नानाविचित्रवसनैः सूक्ष्मैः क्षौमैर्विराजितम् ॥ १६
अमूल्यरत्ननिर्म्माणदर्पणैः परिशोभितम्।
मणीन्द्रजालमालाली-पुष्पमालाविराजितम् ॥ १७
सद्रत्नकलसैर्युक्तं रम्यैर्मन्दिरकोटिभिः।
त्रिलक्षकोटिभिः सार्द्धं गोपीभिश्च प्रियालिभिः ॥१८
ययौ रथेन तेनैव रमणीयायिना प्रिये।
श्रुत्वा कोलाहलं गोपः सुदामा कृष्णपार्षदः ॥ १९
कृष्णं कृत्वा सावधानं गोपैः सार्द्धं पलायितः।
भयेन कृष्णः सन्त्रस्तो विहाय विरजां सतीम् ॥२०
स्वप्रेमभङ्गभीतश्च तिरोधानं चकार सः।
सा सती समयं ज्ञात्वा विचार्य्य स्वहृदि क्रुधा ॥२१
राधाप्रकोपभीता च प्राणांस्तत्याज तत्क्षणम्।
विरजालिगणास्तत्र भयविह्वलकातराः ॥ २२
प्रययुः शरणं साध्वीं विरजां तत्क्षणं भिया।
गोलोके सा सरिद्रूपा बभूव शैलकन्यके ॥ २३
कोटियोजनविस्तीर्णा दैर्घ्ये शतगुणा तथा।
गोलोकं वेष्टयामास परिखेव मनोहरा ॥ २४
बभूवुः क्षुद्रनद्यश्च तदान्या गोप्य एव च ॥ २५
सर्व्वा नद्यस्तदंशाश्च प्रतिविश्वेषु सुन्दरि।
इति सप्त समुद्राश्च विरजानन्दना भुवि ॥ २६
तथागत्य भगवती राधा रासेश्वरी पुरा।
न दृष्ट्वा विरजां कृष्णं स्वगृहञ्च पुनर्ययौ ॥ २७
जगाम कृष्णस्तां राधां गोपालैरष्टभिः सह।
गोपीभिर्द्वानियुक्ताभिर्वारितश्च पुनः पुनः ॥ २८

दृष्ट्वा कृष्णञ्च सा देवी भर्त्सनञ्च चकार तम्।
सुदामा भर्त्सयामास तामेव कृष्णसन्निधौ॥ २९
क्रुद्धा शशाप सा देवी सुदामानं सुरेश्वरी।
गच्छ त्वमासुरीं योनिं गच्छ क्रूरमते द्रुतम्॥ ३०
शशाप तां सुदामा च त्वमितो गच्छ भारतम्।
भव गोपी गोपकन्या गोपीभिः स्वाभिरेव च॥ ३१
तत्र ते कृष्णविच्छेदो भविष्यति शतं समाः।
तत्र भारावतरणं भगवांश्च करिष्यति॥ ३२
इत्येवमुक्त्वा सुदामा प्रणम्य मातरं हरिम्।
साश्रुनेत्रो मोहयुक्तस्ततश्च गन्तुमुद्यतः॥ ३३
राधा जगाम तत्पश्चात् साश्रुनेत्रातिविह्वला।
वत्स क्व यासीत्युच्चार्य्य पुत्रविच्छेदकातरा॥ ३४
कृष्णस्तां बोधयामास विज्ञाय च कृपामयीम्।
शीघ्रं सम्प्राप्स्यसि सुतं मा रुदेत्येवमेव च॥ ३५
स चासुरः शङ्खचूड़ो बभूव तुलसीपतिः।
मत्शूलभिन्नः कालेन गोलोकञ्च जगाम सः॥ ३६
राधा जगाम वाराहे गोकुलं भारतं सति।
वृषभानोश्च वैश्यस्य सा च कन्या बभूव ह॥ ३७
अयोनिसम्भवा देवी वायुगर्भा कलावती।
सुषाव मायया वायुं सा तत्राविर्ब्बभूव ह॥ ३८
अतीते द्वादशाब्दे तु दृष्ट्वा तां नवयौवनाम्।
सार्द्धं रायाणवैश्येन तत्सम्बन्धं चकार सः॥ ३९
छायां संस्थाप्य तद्गेहे सान्तर्द्धानं चकार ह।
बभूव तस्य वैश्यस्य विवाहश्छायया सह॥ ४०
गते चतुर्द्दशाब्दे तु कंसभीतिच्छलेन च।
जगाम गोकुलं कृष्णः शिशुरूपी जगत्पतिः॥ ४१
कृष्णमाता यशोदा या रायाणस्तत्सहोदरः।
गोलोके गोपकृष्णांशः सम्बन्धात् कृष्णमातुलः॥ ४२
कृष्णेन सह राधायाः पुण्ये वृन्दावने वने।
विवाहं कारयामास विधिना जगतां विधिः॥ ४३
स्वप्ने राधापदाम्भोजं न हि पश्यन्ति वल्लवाः।
स्वयं राधा हरेः क्रोड़े छाया रायाणमन्दिरे॥४४
षष्टिवर्षसहस्राणि तपस्तेपे पुरा विधिः॥ ४५
राधिकाचरणाम्भोज-दर्शनार्थी च पुष्करे।
भारावतरणे भूमेर्भारते नन्दगोकुले॥ ४६
ददर्श तत्पदाम्भोजं तपसस्तत्फलेन च।
किञ्चित्कालञ्च श्रीकृष्णः पुण्ये वृन्दावने वने॥ ४७
रेमे गोलोकनाथश्च राधया सह भारते।
ततः सुदामशापेन विच्छेदश्च बभूव ह॥ ४८
तत्र भारावतरणं भूमेः कृष्णश्चकार सः।
वृषभानुश्च नन्दश्च ययौ गोलोकमुत्तमम्॥ ४९
सर्व्वे गोपाश्च गोप्यश्च यद्युक्ता याः समागताः।
छाया गोपाश्च गोप्यश्च प्रापुर्मुक्तिञ्च सन्निधौ॥ ५०
रेमिरे ताश्च तत्रैव सार्द्धं कृष्णेन पार्व्वति।
षट्त्रिंशल्लक्षकोट्यश्च गोप्यो गोपाश्च तत्समाः।
गोलोकं प्रययुर्मुक्ताः सार्द्धं कृष्णेन राधया॥ ५१
द्रोणः प्रजापतिर्नन्दो यशोदा तत्प्रिया धरा।
सम्प्राप्य पूर्व्वतपसा परमात्मानमीश्वरम्॥ ५२
वसुदेवः कश्यपश्च देवकी चादिती सती।
देवमाता देवपिता प्रतिकल्पे स्वभावतः॥ ५३
पितॄणां मानसी कन्या राधामाता कलावती।
वसुदामापि गोलोकाद्वृषभानुः समाययौ॥ ५४
इत्येवं कथितं दुर्गे राधिकाख्यानमुत्तमम्।
सम्पत्करं पापहरं पुत्र-पौत्रविवर्द्धनम्॥ ५५
श्रीकृष्णश्च द्विधारूपो द्विभुजश्च चतुर्भुजः।
चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम्॥ ५६
चतुर्भुजस्य पत्नी च महालक्ष्मीः सरस्वती।
गङ्गा च तुलसी चैव देवी नारायणप्रिया॥ ५७
श्रीकृष्णपत्नी सा राधा तदर्द्धाङ्गसमुद्भवा।
तेजसा वयसा साध्वी रूपेण च गुणेन च॥ ५८
आदौ राधां समुच्चार्य्य पश्चात् कृष्णं वदेद्बुधः।
व्यतिक्रमे ब्रह्महत्यां लभते नात्र संशयः॥ ५९
कार्त्तिकीपूर्णिमायाञ्च गोलोके रासमण्डले।
चकार पूजां राधायास्तत्सम्बन्धिमहोत्सवम्॥ ६०
सद्रत्नगुटिकायाञ्च कृत्वा तत्कवचं हरिः।
दधार कण्ठे बाहौ च दक्षिणे सह गोपकैः॥ ६१
कृत्वा ध्यानञ्च भक्त्या च स्तोत्रमेव चकार सः।
राधाचर्व्वितताम्बूलं चखाद मधुसूदनः॥ ६२
राधा पूज्या च कृष्णस्य तत्पूज्यो भगवान् प्रभुः।
परस्पराभीष्टदेवो भेदकृन्नरकं व्रजेत्॥ ६३
द्वितीये पूजिता सा च धर्म्मेण ब्रह्मणा त्वया।
अनन्तेन वासुकिना रविणा शशिना पुरा॥ ६४
महेन्द्रेण च रुद्रेण मनुना मानवेन च।
सुरेन्द्रैश्च मुनीन्द्रैश्च सर्व्वविप्रैश्च पूजिता॥ ६५

तृतीये पूजिता सा च सप्तद्वीपेश्वरेण च।
भारतेन सुयज्ञेन पात्रैर्मित्रैर्मुदान्वितैः॥ ६६
ब्राह्मणेनाभिशप्तेन दैवदोषेण भूभृता।
व्याधिग्रस्तेन दुःखेन दुःखिना च विदूयता॥ ६७
सम्प्राप राज्यं भ्रष्टश्रीः स च राधावरेण च।
ब्रह्मदत्तेन स्तोत्रेण स्तुत्वा च परमेश्वरीम्॥ ६८
अभेद्यं कवचं तस्याः कण्ठे बाहौ दधार सः।
ध्यात्वा चकार पूजाञ्च पुष्करे शतवत्सरम्॥ ६९
अन्ते जगाम गोलोकं रत्नयानेन भूमिपः।
इति ते कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि॥ ७०

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे हर-गौरी-संवादे राधोपाख्यानं नामैकोन-पञ्चाशोऽध्यायः॥ ४९॥

---

## पञ्चाशोऽध्यायः।

पार्व्वत्युवाच।

को वा सुयज्ञनृपतिः कुत्र वंशे समुद्भवः।
कथं विप्राभिशप्तश्च कथं सम्प्राप राधिकाम्॥ १
सर्व्वात्मनश्च कृष्णस्य पत्नीञ्च कृष्णपूजिताम्।
कथं विश्वव्रधारी च सिषेवे परमेश्वरीम्॥ २
षष्टिवर्षसहस्राणि तपस्तेपे पुरा विधिः।
यत्पादाम्भोजरेणूनां लब्धये पुष्करे विभुः॥ ३
कथं ददर्श तां देवीं महालक्ष्मीं परां सतीम्।
दुर्दर्शामपि युष्माकं दृष्टा सा वा कथं नृणाम्॥ ४
कथं त्रिजगतां धाता तस्मै तत्कवचं ददौ।
ध्यानं पूजाविधिस्तोत्रं तन्मे व्याख्यातुमर्हसि॥ ५

महादेव उवाच।

स्वायम्भुवो मनुर्देवि मनूनामादिरेव च।
ब्रह्मात्मजस्तपस्वी च शतरूपापतिः प्रभुः॥ ६
उत्तानपादस्तत्पुत्रस्तत्पुत्रो ध्रुव एव च।
ध्रुवस्य कीर्त्तिर्विख्याता त्रैलोक्ये शैलकन्यके॥ ७
उत्कलस्तस्य पुत्रश्च नारायणपरायणः।
सहस्रं राजसूयानां पुष्करे स चकार ह॥ ८
सर्व्वाणि रत्नपात्राणि ब्राह्मणेभ्यो ददौ मुदा।
अमूल्यरत्नराशीनां सहस्रं तेजसावृतम्।
ब्राह्मणेभ्यो ददौ राजा यज्ञान्ते सुमहोत्सवे॥ ९
दृष्ट्वा तच्छोभनं यज्ञं विधाता जगतां प्रिये।
सुयज्ञं नाम नृपतेश्चकार सुरसंसदि॥ १०
स च राजा सुयज्ञश्च मनुवंशसमुद्भवः।
अन्नदाता रत्नदाता दाता च सर्व्वसम्पदाम्॥ ११
दशलक्षं गवाञ्चैव रत्नशृङ्गं परिच्छदम्।
नित्यं ददौ स विप्रेभ्यो मुदा युक्तः सदक्षिणम्॥ १२
गवां दशशतलक्षाणां ददौ नित्यं मुदान्वितः।
सुपक्वानि च मांसानि ब्राह्मणेभ्यश्च पार्व्वति॥ १३
षट्कोटिं ब्राह्मणानाञ्च भोजयामास नित्यशः।
चूष्य-चर्व्य-लेह्य-पेयैरतितृप्तं दिने दिने॥ १४
विप्रलक्षं सूपकारं भोजयामास तत्परम्।
पूपमन्नञ्च सूपाक्त-ममेध्यमांसवर्ज्जितम्॥ १५
विप्रा भोजनकाले च मनुवंशसमुद्भवम्।
न तुष्टुवुः सुयज्ञञ्च तुष्टुवुस्तत्पितृंश्च ते॥ १६
दिने सुयज्ञयज्ञान्ते षट्त्रिंशल्लक्षकोटयः।
चक्रुः सुभोजनं विप्राश्चातितृप्ताश्च सुन्दरि॥ १७
गृहीतानि च रत्नानि स्वगृहं वोढुमक्षमाः।
वृषलेभ्यो ददौ किञ्चित् किञ्चित् पथि च तत्यजुः॥ १८
विप्राणां भोजनान्ते च विप्रान्येभ्यो ददौ नृपः।
तथाप्युर्व्वरितं तत्र चान्नराशिसहस्रकम्॥ १९
कृत्वा यज्ञं महाबाहुः समुवास सुसंसदि।
रत्नेन्द्रसारनिर्म्माण-च्छत्रकोटिसमन्वितः॥ २०
रत्नसिंहासने रम्ये चावृते च सुसंस्कृते।
चन्दनोदकसंमृष्टे रम्ये चन्दनपल्लवैः॥ २१
शाखायुक्तपूर्णकुम्भ-रम्भावृक्षैश्च शोभिते।
चन्दनागुरु-कस्तूरी-फल-सिन्दूरसंयुते॥ २२
वसु-वासव-चन्द्रेन्द्र-रुद्रादित्यसमन्विते।
मुनि-मानव-मन्वादि-ब्रह्म-विष्णु-शिवान्विते॥ २३
एतस्मिन्नन्तरे तत्र विप्र एकः समाययौ।
रुक्षो मलिनवासाश्च शुष्ककण्ठोष्ठतालुकः॥ २४
रत्नसिंहासनस्थञ्च माला-चन्दनचर्च्चितम्।
राजानमाशिषं चक्रे सस्मितः सम्पुटाञ्जलिः॥ २५
प्रणनाम नृपस्तञ्च नोत्तस्थौ किञ्चिदेव हि।
सभासदश्च नोत्तस्थुर्जहसुः स्वल्पमेव च॥ २६
वेदिभ्योऽपि च देवेभ्यो नमस्कृत्य द्विजोत्तमः।
शशाप नृपतिं क्रोधात् तत्र तिष्ठन्निरङ्कुशः॥ २७

गच्छ दूरमतो राज्याद्भ्रष्टश्रीर्भव पामर ।
भवाचिरं गलत्कुष्ठी बुद्धिहीनोऽप्युपद्रुतः ॥ २८
इत्युक्त्वा कम्पितः क्रोधात् सभास्थान् समुद्यतः ।
ये तत्र जहसुः सर्व्वे समुत्तस्थुः सभासदः ॥ २९
सर्व्वे चक्रुः परीहारं क्रोधं तत्याज ब्राह्मणः ।
राजागत्य तं प्रणम्य रुरोद भयकातरः ॥ ३०
निःससार सभामध्याद्दर्पेण विदूयता ।
ब्राह्मणो गूढरूपी च प्रज्वलन् ब्रह्मतेजसा ॥ ३१
तत्पश्चान्मुनयः सर्व्वे प्रययुर्भयकातराः ।
हे विप्र तिष्ठ तिष्ठेति समुच्चार्य्य पुनः पुनः ॥ ३२
पुलहश्च पुलस्त्यश्च प्रचेता भृगुरङ्गिराः ।
मरीचिः कश्यपश्चैव वशिष्ठः क्रतुरेव च ॥ ३३
शुक्रो बृहस्पतिश्चैव दुर्व्वासा लोमशस्तथा ।
गौतमश्च कणादश्च कण्वः कात्यायनः कठः ॥ ३४
पाणिनिर्जाजलिश्चैव ऋष्यशृङ्गो विभाण्डकः ।
आपिशलिस्तैतिलिश्च मार्कण्डेयो महातपाः ॥ ३५
सनकश्च सनन्दश्च वोढुः पैलः सनातनः ।
सनत्कुमारो भगवान् नर-नारायणावृषी ॥ ३६
पराशरो जरत्कारुः सम्वर्त्तः करथस्तथा ।
और्व्वश्च च्यवनश्चैव भरद्वाजश्च वाल्मिकिः ॥ ३७
अगस्त्योऽत्रिरुतथ्यश्च सम्वर्त्तोऽस्तीक आसुरिः ।
शिलालिर्लाङ्गलिश्चैव शाकल्यः शाकटायनः ॥ ३८
गर्गो वात्स्यः पञ्चशिखो जामदग्न्यश्च देवलः ।
जैगीषव्यो वामदेवो बालिखिल्यादयस्तथा ॥ ३९
शक्तिर्दक्षः कर्द्दमश्च प्रस्कन्नः कपिलस्तथा ।
विश्वामित्रश्च कौत्सश्च ऋचीकोऽप्यघमर्षणः ॥ ४०
एते चान्ये च मुनयः पितरोऽग्निर्हविःप्रियः ।
दिक्पाला देवताः सर्व्वे विप्रपश्चात् समाययुः ॥ ४१
ब्राह्मणं बोधयामासुर्वासयामासुरीश्वरि ।
अमूचुस्तं क्रमेणैव नीतिं नीतिविशारदाः ॥ ४२

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारदसंवादे हर-गौरीसंवादे
पञ्चाशोऽध्यायः ॥ ५० ॥

## एकपञ्चाशोऽध्यायः ।

पार्व्वत्युवाच ।

किमूचुर्ब्राह्मणं ब्रह्मन् ब्राह्मणा ब्रह्मणः सुताः ।
नीतिज्ञा नीतिवचनं तन्मां व्याख्यातुमर्हसि ॥ १

महादेव उवाच ।

तुष्टं कृत्वा ब्राह्मणञ्च स्तवेन विनयेन च ।
क्रमेण वक्तुमारेभे मुनिसङ्घो वरानने ॥ २

सनत्कुमार उवाच ।

त्वत्पश्चादागता लक्ष्मीः कीर्त्तिः सत्त्वं यशस्तथा ।
सुशीलञ्च महैश्वर्य्यं पितरोऽग्निः सुरास्तथा ॥ ३
आगता नृपगेहेभ्यः कृत्वा भ्रष्टश्रियं नृपम् ।
भव तुष्टो द्विजश्रेष्ठ आशुतोषश्च ब्राह्मणः ॥ ४
ब्राह्मणानान्तु हृदयं कोमलं नवनीतवत् ।
शुद्धं सुनिर्म्मलञ्चैव मार्ज्जितं तपसा मुने ॥ ५
क्षमस्व गच्छ विप्रेन्द्र शुद्धं कुरु नृपालयम् ॥

गुरुरुवाच ।

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
पितरस्तस्य देवाश्च वह्निश्चैव तथैव च ॥ ७
निराशाः प्रतिगच्छन्ति चातिथेरप्रतिग्रहात् ।
क्षमस्व गच्छ विप्रेन्द्र शुद्धं कुरु नृपालयम् ॥ ८
स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः ।
तुल्यदोषो भवत्येतैर्यस्यातिथिरनर्च्चितः ॥ ९

पुलस्त्य उवाच ।

ये पश्यन्ति वक्रदृष्ट्या चातिथिं गृहमागतम् ।
दत्त्वा स्वपापं तस्मै तत्पुण्यमादाय गच्छति ॥ १०
क्षमस्व नृपदोषञ्च गच्छ वत्स यथासुखम् ।
राजा स्वकर्म्मदोषेण नोत्तस्थौ तत् क्षमां कुरु ॥ ११

पुलह उवाच ।

राजश्रियाऽविद्यया वा ब्राह्मणं योऽवमन्यते ।
त्रिसन्ध्याहीनो विप्रश्च श्रीहीनः क्षत्रियो भवेत् ॥१२
एकादशीविहीनश्च विष्णुनैवेद्यवञ्चितः ।
क्षमस्व गच्छ विप्रेन्द्र शुद्धं कुरु नृपालयम् ॥ १३

क्रतुरुवाच ।

ब्राह्मणः क्षत्रियो वापि वैश्यो वा शूद्र एव च ।
दीक्षाहीनो भवेत् सोऽपि ब्राह्मणं योऽवमन्यते ॥ १४
धनहीनः पुत्त्रहीनो भार्य्याहीनो भवेद्ध्रुवम् ।

क्षमस्व गच्छ भगवन् गच्छ वत्स नृपालयम् ॥ १५
अङ्गिरा उवाच ।
ज्ञानवान् ब्राह्मणो भूत्वा ब्राह्मणं योऽवमन्यते ।
वृषवाहो भवेत् सोऽपि भारते सप्तजन्मसु ॥ १६
मरीचिरुवाच ।
पुण्यक्षेत्रे भारते च देवञ्च ब्राह्मणं गुरुम् ।
विष्णुभक्तिविहीनश्च स भवेद्‌यो ऽवमन्यते ॥ ॥ १७
कश्यप उवाच ।
वैष्णवं ब्राह्मणं दृष्ट्वा यो ह्यत्यवमन्यते ।
विष्णुमन्त्रविहीनश्च तत्पूजाविरतो भवेत् ॥ १८
प्रचेता उवाच ।
अतिथिं ब्राह्मणं दृष्ट्वा नाभ्युत्थानं करोति यः ।
पितृमातृभक्तिहीनः स भवेद्भारते भुवि ॥ १९
प्राप्नोति कौष्करीं योनिं स मूढः सप्तजन्मसु ।
शीघ्रं गच्छ द्विजश्रेष्ठ राजानमाशिषं कुरु ॥ २०
दुर्व्वासा उवाच ।
गुरुं वा ब्राह्मणं वापि देवताप्रतिमामपि ।
दृष्ट्वा शीघ्रं न नमेद्यः स भवेत्शूकरो भुवि ॥ २१
मिथ्यासाक्ष्यं तं घटते भवेद्विश्वासघातकः ।
क्षमस्व सर्व्वमस्माकं-मातिथ्यग्रहणं कुरु ॥ २२
राजोवाच ।
छलेन कथितो धर्म्मो युष्माभिर्मुनिपुङ्गवैः ।
सर्व्वं कृत्वा च विस्फोटं माञ्च मूढं प्रबोधय ॥ २३
स्त्रीघ्न-गोघ्न-कृतघ्नानां गुरुस्त्रीगामिनां तथा ।
ब्रह्मघ्नानाञ्च को दोषो मां ब्रूत कोविदां वराः ॥ २४
वशिष्ठ उवाच ।
कामतो गोवधे राजन् वर्षं तीर्थं वसेन्नरः ।
यवयावकभोजी च करेण च जलं पिबेत् ॥ २५
तदा धेनुशतं दिव्यं ब्राह्मणेभ्यः सदक्षिणम् ।
दत्त्वा मुक्तिं पापाच्च भोजयित्वा द्विजं शतम् ॥ २६
प्रायश्चित्ते च क्षीणे च सर्व्वपापान्न मुच्यते ।
पापावशेषाद्भवति दुःखी चाण्डाल एव च ॥ २७
आतिदेशिकहत्यायां तदर्द्धं फलमश्नुते ।
प्रायश्चित्तानुकल्पेन सर्व्वपापान्न मुच्यते ॥ २८
शुक्र उवाच ।
गोहत्याद्विगुणं पापं स्त्रीहत्यायां भवेद्ध्रुवम् ।
षष्टिं वर्षसहस्राणि कालसूत्रे वसेद्ध्रुवम् ॥ २९
ततो भवेन्महापापी शूकरः सप्तजन्मसु ।
ततो भवति सर्पश्च सप्तजन्म ततः शुचिः ॥ ३०
बृहस्पतिरुवाच ।
स्त्रीहत्याद्विगुणात् पापात् ब्रह्महत्या भवेद्ध्रुवः ।
लक्षवर्षं महाघोरे कुम्भीपाके वसेद्ध्रुवम् ॥ ३१
ततो भवेन्महापापी विष्ठाकीटः शताब्दकम् ।
ततो भवति सर्पश्च जन्मसप्त ततः शुचिः ॥ ३२
गौतम उवाच ।
दोषः कृतघ्ने राजेन्द्र ब्रह्महत्याचतुर्गुणः ।
निष्कृतिर्नास्ति वेदे च कृतघ्नानाञ्च निश्चितम् ॥ ३३
राजोवाच ।
लक्षणञ्च कृतघ्नानां वद वेदविदां वर ।
कृतघ्नः कतिधा प्रोक्तः केषु को दोष एव च ॥ ३४
ऋष्यशृङ्ग उवाच ।
कृतघ्नाः षोड़शविधाः सामवेदे निरूपिताः ।
सर्व्वः प्रत्येकदोषेण प्रत्येकं फलमश्नुते ॥ ३५
कृते सत्ये च पुण्ये च स्वधर्म्मे तपसि स्थिते ।
प्रतिज्ञायाञ्च दाने च स्वगोष्ठीपरिपालने ॥ ३६
गुरुकृत्ये देवकृत्ये काम्यकृत्ये द्विजार्च्चने ।
नित्यकृत्ये च विश्वासे परधर्म्मप्रदानयोः ॥ ३७
एतान् यो हन्ति पापिष्ठः स कृतघ्न इति स्मृतः ।
एतेषां सन्ति लोकाश्च तज्जन्म भिन्नयोनिषु ॥ ३८
यान् यांश्च नरकांस्ते च यान्ति राजेन्द्र पापिनः ।
ते ते च नरकाः सन्ति यमलोके च निश्चितम् ॥ ३९
सुयज्ञ उवाच ।
के किं कृत्वा कृतघ्नाश्च कान् कान् गच्छन्ति रौरवान्
प्रत्येकं श्रोतुमिच्छामि वक्तुमर्हसि मे प्रभो ॥ ४०
कात्यायन उवाच ।
कृत्वा शपथरूपञ्च सत्यं हन्ति न पालयेत् ।
स कृतघ्नः कालसूत्रे वसेदेव चतुर्युगम् ॥ ४१
सप्तजन्मसु काकश्च सप्तजन्मसु पेचकः ।
ततः शूद्रो महाव्याधी सप्तजन्म ततः शुचिः ॥ ४२
सनन्द उवाच ।
पुण्यं कृत्वा वदत्येवं कीर्त्तिवर्द्धनहेतुना ।
स कृतघ्नस्तप्तशूर्म्मां वसत्येवं युगत्रयम् ॥ ४३
पञ्चजन्मसु मण्डूकस्त्रिषु जन्मसु कर्क्कटी ।
ततो मूको नरो व्याधी दरिद्रश्च ततः शुचिः ॥ ४४

सनातन उवाच।

स्वधर्म्मं हन्ति यो विप्रः सन्ध्यात्रयविवर्ज्जितः।
अतर्पणाश्च यत् स्नानं विष्णुनैवेद्यवर्ज्जितः॥ ४५
विष्णुपूजाविहीनश्च विष्णुमन्त्रविहीनकः।
एकादशीविहीनश्च कृष्णस्य जन्मवासरे॥ ४६
शिवरात्रौ च यो भुङ्क्ते श्रीरामनवमीदिने।
पितृकृत्ये दैवकृत्ये स कृतघ्न इति स्मृतः॥ ४७
कुम्भीपाके वसत्येव यावच्चन्द्रदिवाकरौ।
ततश्चाण्डालतां याति सप्तजन्मसु निश्चितम्॥ ४८
शतजन्मानि गृध्रश्च शतजन्मानि शूकरः।
ततो भवेद्ब्राह्मणश्च शूद्राणां सूपकारकः॥ ४९
ततो भवेज्जन्मसप्त ब्राह्मणो वृषवाहकः।
शूद्राणां शवदाही च भवेत् सप्तसु जन्मसु॥ ५०
द्विजो भूत्वा जन्मसप्त भारते वृषलीपतिः।
भुक्त्वा स्वभोगमेषाञ्च भ्रमित्वा याति रौरवम्॥ ५१
पुनः पुनः पापयोनिं नरकञ्च पुनः पुनः।
ततो भवेद्गर्द्दभश्च मार्ज्जारः पञ्चजन्मसु॥ ५२
पञ्चजन्मसु मण्डूको भवेच्छुद्धस्ततः क्रमात्॥ ५३

सुयज्ञ उवाच।

शूद्राणां पाककरणे शूद्राणां शवदाहने।
शूद्रान्नभोजने वापि शूद्रस्त्रीगमनेऽपि च॥ ५४
ब्राह्मणानाञ्च को दोषो वृषाणां वाहने तथा।
एतान् सर्व्वान् समालोच्य ब्रूयतां निश्चयं मुने॥ ५५

पराशर उवाच।

शूद्राणां सूपकारश्च यो विप्रो ज्ञानपूर्व्वकम्।
असीपत्रे वसत्येवं युगानामेकसप्ततिम्॥ ५६
ततो भवेवेद्गर्द्दभश्च मूषिकः सप्तजन्मसु।
तैलपायी सप्तजन्म ततः शुद्धो भवेन्नरः॥ ५७

जरत्कारुरुवाच।

भृत्यद्वारा स्वयं वापि यो विप्रो वृषवाहकः।
स कृतघ्न इति ख्यातः प्रसिद्धो भारते नृप॥ ५८
ब्रह्महत्यासमं पापं तन्नित्यं वृषताड़ने।
वृषपृष्ठे भारदानात् पापं तद्द्विगुणं भवेत्॥ ५९
सूर्य्यातपे वाहयेद्यः क्षुधितं तृषितं वृषम्।
ब्रह्महत्याशतं पापं लभते नात्र संशयः॥ ६०
अन्नं विष्ठा जलं मूत्रं विप्राणां वृषवाहिनाम्।
नाधिकारी भवेत् तस्य पितृदेवार्च्चने नृप॥ ६१
नानाकुण्डे वसत्येवं यावच्चन्द्रदिवाकरौ।
विष्ठाभक्ष्यं मूत्रजलं तत्र तस्य भवेद्ध्रुवम्॥ ६२
त्रिसन्ध्यं ताड़येत् तञ्च शूलेन यमकिङ्करः।
उल्कां ददाति मुखतः सूच्या कृन्तति सन्ततम्॥ ६३
षष्टिं वर्षसहस्राणि विष्ठायाञ्च कृमिस्ततः।
ततः काको जन्मपञ्च जन्मपञ्च बकस्तथा॥ ६४
जन्मपञ्च गृध्रकश्च शृगालः सप्तजन्मसु।
ततो दरिद्रः शूद्रश्च महाव्याधी ततः शुचिः॥ ६५

भरद्वाज उवाच।

शूद्राणां शवदाही यः स कृतघ्न इति स्मृतः।
शवप्रमाणं राजेन्द्र ब्रह्महत्यां लभेद्ध्रुवम्॥ ६६
तत्तुल्ययोनिभ्रमणात् तत्तुल्यनरकाच्छुचिः॥ ६७
यो दोषो ब्राह्मणानाञ्च शूद्राणां शवदाहने।
तावदेव भवेद्दोषः शूद्राणां श्राद्धभोजने॥ ६८

विभाण्डक उवाच।

पितृश्राद्धे च शूद्राणां भुङ्क्ते यो ब्राह्मणोऽधमः।
सुरापीती ब्रह्मघाती पितृदेवार्च्चनाद्बहिः॥ ६९

मार्कण्डेय उवाच।

यो दोषो ब्राह्मणानाञ्च शूद्रस्त्रीगमने नृप।
वेदोक्तञ्च सावधानं तद्वक्ष्यामि निशामय॥ ७०
कृतघ्नानां प्रधानश्च यो विप्रो वृषलीपतिः।
कृमिदंष्ट्रे वसेत् सोऽपि यावदिन्द्राः शतं शतम्॥ ७१
कृमिभक्ष्यो भवेत् सोऽपि विह्वलो यमकिङ्करैः।
प्रतिमायां तप्तलौहामाश्लेषयति नित्यशः॥ ७२
ततश्च पुंश्चलीयोनौ कृमिर्भवति निश्चितम्।
एवं वर्षसहस्राणि ततः शूद्रस्ततः शुचिः॥ ७३

सुयज्ञ उवाच।

अन्येषाञ्च कृतघ्नानां वद किं तत् फलं मुने।
श्लाघ्यो मे ब्रह्मशापश्च कस्य सम्पद्विपद्दिना॥ ७४
धन्योऽहं कृतकृत्योऽहं सफलं जीवनं मम।
आगतास्तु यतो मुक्ता मद्गेहे मुनयः सुराः॥ ७५

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृति खण्डे नारायण-नारद-संवादे एकपञ्चाशोऽध्यायः॥५१॥

## द्विपञ्चाशोऽध्यायः।

पार्व्वत्युवाच।

अन्येषाञ्च कृतघ्नानां यद्यत् कर्म्मफलं प्रभो।
तेषां किमूचुर्मुनयो वेदवेदाङ्गपारगाः॥ १

महेश्वर उवाच।

प्रश्नं कुर्व्वति राजेन्द्रे सर्व्वेषु मुनिषु प्रिये।
तत्र प्रवक्तुमारेभे ऋषिर्नारायणो महान्॥ २

नारायण उवाच।

स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः।
स कृतघ्न इति ज्ञेयः फलञ्च शृणु भूमिप॥ ३
यावन्तो रेणवः सिक्ता विप्राणां नेत्रविन्दुभिः।
तावद्वर्षसहस्रञ्च शूलप्रोते स तिष्ठति॥ ४
तप्ताङ्गारञ्च तद्भक्ष्यं पानञ्च तप्तमूत्रकम्।
तप्ताङ्गारे च शयनं ताड़ितो यमकिङ्करैः॥ ५
तदन्ते च महापापी विष्ठायां जायते क्रिमिः।
षष्टिं वर्षसहस्राणि देवमानेन भारते॥ ६
ततो भवेद्भूमिहीनः पूजाहीनश्च मानवः।
दरिद्रः कृपणो रोगी शूद्रो निन्द्यस्ततः शुचिः॥ ७
हन्ति यः परकीर्त्तिञ्च स्वकीर्त्तिं वा नराधमः।
स कृतघ्न इति ख्यातस्तत्फलञ्च निशामय॥ ८
अन्धकूपे वसेत् सोऽपि यावदिन्द्राश्चतुर्द्दश।
कीटैर्नकुलमानैश्च भक्षितः सन्ततं नृप॥ ९
तप्तक्षारोदकं वापि नित्यं पिवति खादति।
ततः सर्पो जन्मसप्त काकः पश्च ततः शुचिः॥ १०

देवल उवाच।

ब्रह्मस्वं वा गुरुस्वं वा देवस्वं वापि यो हरेत्।
स कृतघ्न इति ज्ञेयो महापापी च भारते॥ ११
अवटोदे वसेत् सोऽपि यावदिन्द्राश्चतुर्द्दश।
ततो भवेत् सुरापीती ततः शूद्रस्ततः शुचिः॥ १२

जैगीषव्य उवाच।

पितृमातृगुरूंश्चापि भक्तिहीनो न पालयेत्।
वाचा च ताड़येन्नित्यं स्वामिनं कुलटा च या॥ १३
सा कृतघ्नीति विख्याता भारते पापिनीवरा।
वह्निकुण्डं महाघोरं स च सा च प्रयाति च॥ १४
तत्र वह्नौ वसत्येव यावच्चन्द्रदिवाकरौ।
ततो भवेज्जलौका च जन्मसप्त ततः शुचिः॥ १५

वाल्मीकिरुवाच।

यथा तरुषु वृचलं सर्व्वत्र न जहाति च।
तथा कृतघ्नता राजन् सर्व्वपापेषु वर्त्तते॥ १६
मिथ्यासाक्ष्यं यो ददाति कामक्रोधात्तथा भयात्।
सभायां पाक्षिकं वक्ति स कृतघ्न इति स्मृतः॥ १७
पुण्यमात्रञ्चापि राजन् यो हन्ति स कृतघ्नकः।
सर्व्वत्रापि च सर्व्वेषां पुण्यहानौ कृतघ्नता॥ १८
मिथ्यासाक्ष्यं पाक्षिकं वा भारते वक्ति यो नृप।
यावदिन्द्राः सहस्रञ्च सर्पकुण्डे वसेद्ध्रुवम्॥ १९
सन्ततं वेष्टितैः सर्पैर्भीतश्च भक्षितस्तथा।
भुङ्क्ते च सर्पविण्मूत्रं यमदूतेन ताड़ितः॥ २०
कृकलासो भवेत् तत्र भारते सप्तजन्मसु।
सप्तजन्मसु मण्डूकः पितृभिः सप्तभिः सह॥ २१
ततो भवेच्च वृक्षश्च महारण्ये च शाल्मलिः।
ततो भवेन्नरो मूकस्ततः शूद्रस्ततः शुचिः॥ २२

आस्तीक उवाच।

गुर्व्वङ्गनानां गमने मातृगामी भवेन्नरः।
नराणां मातृगमने प्रायश्चित्तं न विद्यते॥ २३
भारते नृपतिश्रेष्ठ यो दोषो मातृगामिनाम्।
ब्राह्मणीगमने चैव शूद्राणां तावदेव हि॥ २४
तावदेव हि ब्राह्मण्या दोषः शूद्रस्य मैथुने।
कन्यानां पुत्रपत्नीनां श्वश्रूणां गमने तथा॥ २५
सगर्भभ्रातृपत्नीनां भगिनीनां तथैव च।
दोषं वक्ष्यामि राजेन्द्र यदाह कमलोद्भवः॥ २६
यः करोति महापापी एताभिः सह मैथुनम्।
जीवन्मृतो भवेत् सोऽपि चाण्डालास्पृश्य एव च॥२७
नाधिकारी भवेत् तस्य सूर्य्यमण्डलदर्शने।
शालग्रामं तज्जलञ्च तुलस्याश्च दलं जलम्॥ २८
सर्व्वतीर्थजलञ्चैव विप्रपादोदकं तथा।
स्प्रष्टुञ्च न च शक्नोति विट्तुल्यः पातकी नरः॥ २९
देवं गुरुं ब्राह्मणञ्च नमस्कर्त्तुं न चार्हति।
विष्ठादिकं तदन्नञ्च जलं मूत्रादिकं तथा॥३०
देवताः पितरो विप्रा नैव गृह्णन्ति भारते।
भवेत् तदङ्गवातेन तीर्थमङ्गारवाहनम्॥ ३१
सप्तरात्रमुपवसेद् देवस्पर्शात् सुरो द्विजः।
भाराक्रान्ता च पृथिवी तद्भारं वोढ़मक्षमा॥ ३२
तत्पापात् पतितो देशः कन्याविक्रयिणो यथा।

तत्स्पर्शाच्च तदालापात् शयनाशयभोजनात् ॥ ३३
नृणाञ्च तत्समः पापी भवत्येव न संशयः।
कुम्भीपाके वसेत् सोऽपि यावद्वै ब्रह्मणः शतम् ॥३४
दिवानिशं भ्रमेत् तत्र चक्रावर्त्ते निरन्तरम्।
दग्धश्चाग्निशिखाभिश्च यमदूतैश्च ताड़ितः ॥ ३५
एवं नित्यं महापापी भुङ्क्ते निरययातनाम्।
आहारश्चास्ति सर्व्वत्र कुम्भीपाके विवर्ज्जितः ॥ ३६
गते प्राकृतिके घोरे महति प्रलये तथा।
पुनःसृष्टिसमारम्भे तन्निवासी भवेत् पुनः ॥ ३७
षष्टिं वर्षसहस्राणि कृमिश्च पुंश्चलीभगे।
षष्टिवर्षसहस्राणि विष्ठायाञ्च कृमिर्भवेत्।
ततो भवति चाण्डालो भार्य्याहीनो नपुंसकः ॥ ३८
जन्मसप्त गलत्कुष्ठी चाण्डालास्तस्य एव च।
ततस्तीर्थे भवेद्ध्वाङ्क्षः क्षुधितः सप्तजन्मसु ॥ ३९
सप्तजन्मसु सर्पश्च भार्य्याहीनो नपुंसकः।
सप्तजन्मसु शूद्रश्च गलत्कुष्ठी नपुंसकः ॥ ४०
ततो भवेद्ब्राह्मणश्चाप्यश्वकुष्ठी नपुंसकः।
एवं लब्धा जन्मसप्त महापापी भवेच्छुचिः ॥ ४१

मुनय ऊचुः।

इत्येवं कथितं सर्व्वमस्माभिर्वो यथागमम्।
एभिस्तुल्यो भवेद्दोषोऽप्यतिथीनां पराभवे ॥ ४२
प्रणामं कुरु विप्रेन्द्रं गृहं प्रापय निश्चितम्।
सम्पूज्य ब्राह्मणं यत्नाद्गृहीत्वा ब्राह्मणाशिषः ॥ ४३
वनं गच्छ महाराज तपस्यां कुरु सत्वरम्।
ब्रह्मशापविनिर्म्मुक्तः पुनरेवागमिष्यसि ॥ ४४
इत्युक्त्वा मुनयः सर्व्वे ययुस्तूर्णं स्वमन्दिरम्।
सुराश्चापि च राजानो बन्धुवर्गाश्च पार्व्वति ॥ ४५

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायणनारदसंवादे हरगौरीसंवादे
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

## त्रिपञ्चाशोऽध्यायः।

पार्व्वत्युवाच।

गतेषु मुनिसङ्घेषु श्रुत्वा कर्म्मफलं नृणाम्।
किं चकार नृपश्रेष्ठो ब्रह्मशापेन विह्वलः ॥ १
अतिथिर्ब्राह्मणो वापि किं चकार तदा प्रभो।
जगाम नृपगेहं वा न वा तद्वक्तुमर्हसि ॥ २

महेश्वर उवाच।

गतेषु मुनिसङ्घेषु निन्दाग्रस्तो नराधिपः।
प्रेरितस्तु वशिष्ठेन धर्मिष्ठेन पुरोधसा ॥ ३
पपात दण्डवद्भूमौ पादयोर्ब्राह्मणस्य च।
त्यक्त्वा मन्युं द्विजश्रेष्ठो ददौ तस्मै शुभाशिषम् ॥ ४
हर्षितं ब्राह्मणं दृष्ट्वा त्यक्तमन्युं कृपामयम्।
उवाच नृपतिश्रेष्ठः साश्रुनेत्रः पुटाञ्जलिः ॥ ५

राजोवाच।

कुत्र वंशे भवान् जातः किं नाम भवतः प्रभो।
किं नाम वा पितुर्ब्रूहि क्व वासः कथमागतः ॥ ६
विप्ररूपी स्वयं विष्णुर्गूढ़ः कपटमानुषः।
साक्षात् स मूर्त्तिमानग्निः प्रज्वलन् ब्रह्मतेजसा ॥७
को वा गुरुस्ते भगवन्निष्टदेवश्च भारते।
तव वेशः कथमयं ज्ञानपूर्णस्य साम्प्रतम् ॥ ८
गृहाण राज्यं निखिलमैश्वर्य्यं कोषमेव च।
स्वभृत्यं कुरु मे पुत्रं माञ्च दासीं स्त्रियं मुने ॥ ९
सप्तसागरसंयुक्तां सप्तद्वीपां वसुन्धराम्।
नवद्वयोपद्वीपान्तां सशैलवनशोभिताम् ॥ १०
मया भृत्येन त्वं शाधि राजेन्द्रो भव भारते।
रत्नेन्द्रसारनिर्म्माणे तिष्ठ सिंहासने वरे ॥ ११
नृपस्य वचनं श्रुत्वा जहास मुनिपुङ्गवः।
उवाच परमं तत्त्वं महत्तं सर्व्वदुर्लभम् ॥ १२

अतिथिरुवाच।

मरीचिर्ब्रह्मणः पुत्रस्तत्पुत्रः कश्यपः स्वयम्।
कश्यपस्य सुताः सर्व्वे प्राप्ता देवत्वमीप्सितम् ॥ १३
तेषु त्वष्टा महाज्ञानी चकार परमं तपः।
दिव्यं वर्षसहस्रञ्च पुष्करे दुष्करं तपः ॥ १४
शिशिवे ब्राह्मणार्थञ्च देवदेवं हरिं परम्।
नारायणाद्वरं प्राप विप्रस्तेजस्विनं सुतम् ॥ १५
ततो बभूव तेजस्वी विश्वरूपस्तपोधनः।
पुरोधसं चकारेन्द्रो वाक्पतौ तं क्रुधागते ॥ १६
मातामहेभ्यो दैत्येभ्यो दत्तवन्तं घृताहुतिम्।
चिच्छेद तं सुनाशीरो ब्राह्मणं मातुराज्ञया ॥ १७
विश्वरूपस्य तनयो विरूपो मत्पिता नृप।
अहञ्च सुतपा नाम वैरागी काश्यपो द्विजः ॥ १८
महादेवो मम गुरुर्विद्या-ज्ञान-मनुप्रदः।

अभीष्टदेवः सर्व्वात्मा श्रीकृष्णः प्रकृतेः परः॥ १९
चिन्तयामि तत्पदाब्जं न मे वाञ्छास्ति सम्पदि।
सालोक्यसार्ष्टिसारूप्य-सामीप्यं राधिकापतेः॥ २०
तेन दत्तं न गृह्लामि विना तत्सेवनं शुभम्।
ब्रह्मत्वममरत्वं वा न मन्ये जलविम्बवत्॥ २१
भक्तिव्यवहितं मिथ्याभ्रमेव तु नश्वरम्।
इन्द्रत्वं वा मनुत्वं वा सौरत्वं वा नराधिप॥ २२
न मन्ये जलरेखेति नृपत्वं केन गण्यते।
श्रुत्वा सुयज्ञयज्ञे तु मुनीनां गमनं नृप॥ २३
लालसा विष्णुभक्तेर्मे प्राप्तिहेतुमिहागतः।
केवलानुगृहीतस्त्वं न हि शप्तो मयाधुना॥ २४
समुद्धृतश्च पतितो घोरे निम्ने भवार्णवे।
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः॥२५
ते पुनन्त्युरुकालेन कृष्णभक्तास्च दर्शनात्।
राजन्निर्गम्यतां गेहाद्देहि राज्यं सुताय च॥२६
पुत्रे न्यस्य प्रियां साध्वीं गच्छ वत्स वनं त्वरा।
ब्रह्मादिस्तम्बपर्य्यन्तं सर्व्वं मिथ्यैव भूमिप॥ २७
श्रीकृष्णं भज राधेशं परमात्मानमीश्वरम्।
ध्यानासाध्यं दुराराध्यं ब्रह्म-विष्णु-शिवादिभिः॥ २८
आविर्भूतैस्तिरोभूतैः प्राकृतैः प्रकृतेः परम्।
ब्रह्मा स्रष्टा हरिः पाता हरः संहारकारकः॥ २९
दिक्पालाश्च दिगीशाश्च भ्रमन्ति यस्य मायया।
यदाज्ञया वाति वायुः सूर्य्यो दिनपतिः सदा॥ ३०
निशापतिः शशी शश्वच्छस्यसुस्निग्धकारकः।
कालेन मृत्युश्चरति सर्व्वविश्वेषु भीतवत्॥ ३१
काले वर्षति शक्रश्च दहत्यग्निश्च कालतः।
भीतवद्विश्वशास्ता च प्रजासंयमनो यमः॥ ३२
कालः संहरते काले कालः सृजति पाति च।
स्वदेशे च समुद्रश्च स्वदेशे च वसुन्धरा॥ ३३
स्वदेशे पर्व्वताश्चैव स्वः पातालाः स्वदेशतः।
स्वर्लोकाः सप्त राजेन्द्र सप्तद्वीपा वसुन्धरा॥ ३४
शैलसागरसंयुक्ताः पातालाः सप्त एव च।
एभिर्लोकैश्च ब्रह्माण्डं डिम्बाकारं जलप्लुतम्॥ ३५
सन्त्येव प्रतिब्रह्माण्डे ब्रह्म-विष्णु-शिवादयः।
सुरा नराश्च नागाश्च गन्धर्व्वा राक्षसादयः॥ ३६
आपातालाद्ब्रह्मलोकपर्य्यन्तं डिम्बरूपकम्।
इदमेव तु ब्रह्माण्डं ब्रह्मणः कृत्रिमं नृप॥ ३७
नाभिपद्मे विराड्विष्णोः क्षुद्रस्य जलशायिनः।
स्थितं यथा पद्मबीजं कर्णिकायाञ्च पङ्कजे॥ ३८
एवं सोऽपि शयानश्च जलतल्पे सुविस्तृते।
ध्यायते स महायोगी प्राकृतः प्रकृतेः परम्।
कालभीतश्च कालेशं कृष्णमात्मानमीश्वरम्॥ ३९
महाविष्णोर्लोमकूपे साधारः सोऽस्ति विस्तृते।
लोम्नां कूपेषु प्रत्येकमेवं विश्वानि सन्ति वै॥ ४०
महाविष्णोर्गात्रलोम्नां ब्रह्माण्डानाञ्च भूमिप।
संख्यां कर्त्तुं न शक्नोति कृष्णोऽप्यन्यस्य का कथा॥४१
महान् विष्णुः प्राकृतिकः सोऽपि डिम्बोद्भवः सदा।
भवेत् कृष्णेच्छया डिम्बः प्रकृतेर्गर्भसम्भवः॥ ४२
सर्व्वाधारो महाविष्णुः कालभीतः स शङ्कितः।
कालेशं ध्यायते शश्वत् कृष्णमात्मानमीश्वरम्॥ ४३
एवञ्च सर्व्वविश्वस्था ब्रह्म-विष्णु-शिवादयः।
महान् विराट् क्षुद्रविराट् सर्व्वे प्राकृतिकाः सदा॥४४
सा सर्व्वबीजरूपा च मूलप्रकृतिरीश्वरी।
काले लीना च कालेशे कृष्णे तं ध्यायते सदा॥ ४५
एवं सर्व्वे कालभीताः प्रकृतिः प्राकृतास्तथा।
आविर्भूतास्तिरोभूताः कालेन परमात्मनि॥ ४६
इत्येवं कथितं सर्व्वं महाज्ञानं सुदुर्लभम्।
शिवेन गुरुणा दत्तं किं भूयः श्रोतुमिच्छसि॥ ४७

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे हर-गौरी-संवादे त्रिपञ्चाशोऽध्यायः॥५३॥

---

## चतुःपञ्चाशोऽध्यायः।

राजोवाच।

क्षुद्राधारो महाविष्णोः सर्व्वाधारस्य तस्य च।
कालभीतस्य कति च कालमायुर्मुनीश्वरः॥ १
क्षुद्रस्य कतिचित् कालं ब्रह्मणः प्रकृतेस्तथा।
मनोरिन्द्रस्य चन्द्रस्य सूर्य्यस्यायुस्तथैव च॥ २
अन्येषाञ्च जनानाञ्च प्राकृतानां परं वयः।
वेदोक्तं सुविचार्य्यैव वद वेदविदां वर॥ ३
विश्वेशामूर्द्धभागे च कश्च वा लोक एव च।
कथयस्व महाभाग सन्देहच्छेदनं कुरु॥ ४

मुनिरुवाच।

विश्वेषां गोलोकं राजन् विस्तृतञ्च नभःसमम्।

शश्वन्नित्यं डिम्बरूपं श्रीकृष्णेच्छासमुद्भवम् ॥ ५
जलेन परिपूर्णञ्च कृष्णस्य मुखविन्दुना।
सृष्टोन्मुखस्यादिसर्गे परिश्रान्तस्य क्रीड़तः ॥ ६
प्रकृत्या सह युक्तस्य कलया निजया नृप।
तत्राधारो महाविष्णोर्विश्वाधारस्य विस्तृतः ॥ ७
प्रकृतेर्गर्भसम्भूत-डिम्बोद्भूतस्य भूमिप।
सुविस्तृते जलाधारे शयानश्च महाविराट् ॥ ८
राधेश्वरस्य कृष्णस्य षोड़शांशः प्रकीर्त्तितः।
दूर्व्वादलश्यामरूपः सस्मितश्च चतुर्भुजः ॥ ९
वनमालाधरः श्रीमान् शोभितः पीतवाससा।
ऊर्द्धं नभसि संविष्टो नित्यवैकुण्ठ एव च ॥ १०
आत्माकाशसमो नित्यो वर्त्तुलश्चन्द्रविम्बवत्।
ईश्वरेच्छासमुद्भूतो निर्लक्षश्च निराश्रयः ॥ ११
आकाशवत् सुविस्तारश्चामूल्यरत्ननिर्म्मितः।
तत्र नारायणः श्रीमान् वनमाली चतुर्भुजः ॥ १२
लक्ष्मी-सरस्वती-गङ्गा-तुलसीपतिरीश्वरः।
सुनन्द-नन्द-कुमुद-पार्षदादिभिरावृतः ॥ १३
सर्व्वेशः सर्व्वसिद्धेशो भक्तानुग्रहविग्रहः।
श्रीकृष्णश्च द्विधाभूतो द्विभुजश्च चतुर्भुजः ॥ १४
चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम्।
ऊर्द्धं वैकुण्ठदेशाच्च पञ्चाशत्कोटियोजनात् ॥ १५
गोलोको वर्त्तुलाकारो विशिष्टः सर्व्वलोकतः।
अमूल्यरत्ननिर्म्माणैर्मन्दिरैश्च विभूषितः ॥ १६
रत्नेन्द्रसारनिर्म्माणैः स्तम्भसोपानचित्रकैः।
मणीन्द्रदर्पणासक्तैः कवाटकलसोज्ज्वलैः ॥ १७
नानाचित्रविचित्रैश्च शिविरैश्च विराजितः।
कोटियोजनविस्तीर्णो दैर्घ्ये शतगुणोऽपि च ॥ १८
विरजासरिदाकीर्णः शतशृङ्गेण वेष्टितः।
सरिदर्द्धप्रमाणेन दैर्घ्येण विस्तृतेन च ॥ १९
शैलार्द्धपरिमाणेन युक्तो वृन्दावनेन च।
तदर्द्धमाननिर्म्माण-रासमण्डलमण्डितः ॥ २०
सरिच्छैलवनादीनां मध्ये गोलोक एव च।
यथा पङ्कजमध्ये च कर्णिकारो मनोहरः ॥ २१
तत्र गो-गोप-गोपीभिर्गोपीशो रासमण्डले।
रासेश्वरीराधिकया संयुक्तः सन्ततं नृप ॥ २२
द्विभुजो मुरलीहस्तः शिशुगोपालरूपधृक्।
वह्निशुद्धांशुकाधानो रत्नभूषणभूषितः।
चन्दनोक्षितसर्व्वाङ्गो रत्नमालाविराजितः ॥ २३
रत्नसिंहासनस्थश्च रत्नच्छत्रेण छत्रितः।
शश्वत्सुप्रियगोपालैः सेवितः श्वेतचामरैः ॥ २४
गोपीभिः सेविताभिश्च मालाचन्दनचर्च्चितः।
सस्मिता-सकटाक्षाभिः सुवेशाभिश्च वीक्षितः ॥ २५
कथितं लोकनिर्म्माणं यथाशक्ति यथागमम्।
यथा श्रुतं शम्भुवक्त्रात् कालमानं निशामय ॥ २६
षट्पलं पात्रनिर्म्माणं गभीरं चतुरङ्गुलम् ॥ २७
स्वर्णमाषैः कृतच्छिद्रं दण्डैश्च चतुरङ्गुलैः।
यावज्जलप्लुतं पात्रं तत्कालं दण्डमेव च ॥ २८
दण्डद्वये मुहूर्त्तञ्च यामस्तस्य चतुर्गुणः।
वासरश्चाष्टभिर्यामैः पक्षः पञ्चदश स्मृतः ॥ २९
मासो द्वाभ्याञ्च पक्षाभ्यां वर्षो द्वादशमासकैः।
मासेन च नराणाञ्च पितॄणां तदहर्निशम् ॥ ३०
कृष्णपक्षे दिनं प्रोक्तं शुक्ले रात्रिः प्रकीर्त्तिता।
वत्सरेण नराणाञ्च देवानाञ्च दिवानिशम् ॥ ३१
उत्तरायणे दिनं प्रोक्तं रात्रिश्च दक्षिणायने।
युगकर्म्मानुरूपञ्च नरादीनां वयो नृप ॥ ३२
प्रकृतेः प्राकृतानाञ्च ब्रह्मादीनां निशामय।
कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् ॥ ३३
दिव्यैर्द्वादशसाहस्रैः सावधानं निशामय।
चत्वारि त्रीणि द्वे चैकं कृतादिषु यथायुगम् ॥ ३४
तेषाञ्च सन्ध्या-सन्ध्यांशौ द्वे सहस्रे प्रकीर्त्तिते ॥ ३५
त्रिचत्वारिंशल्लक्षेण विंशत्सहस्राधिकेन च।
चतुर्युगं परिमितं नरमानक्रमेण च ॥ ३६
सप्तदशलक्षमितमष्टाविंशत्सहस्रकम्।
नृमानेन कृतयुगं संख्याविद्भिः प्रकीर्त्तितम् ॥ ३७
द्विषड्लक्षपरिमितं षण्णवतिसहस्रकम्।
त्रेतायुगं परिमितं कालविद्भिः प्रकीर्त्तितम् ॥ ३८
अष्टलक्षपरिमितं चतुःषष्टिसहस्रकम्।
प्रमितो द्वापरश्चैव प्रोक्तः संख्याविपश्चिता ॥ ३९
चतुर्लक्षपरिमितं द्वात्रिंशच्च सहस्रकम्।
नृमानाब्दं कलियुगं विदुः कालविपश्चितः ॥ ४०
यथा च सप्त वाराश्च तिथयः षोड़श स्मृताः।
दिवा रात्रिश्च पक्षौ द्वौ मासो वर्षञ्च निर्म्मितम् ॥ ४१
यथा भ्रमन्ति सततमेवमेव चतुर्युगम्।
यथा युगानि राजेन्द्र तथा मन्वन्तराणि च ॥ ४२

मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः
एवं क्रमाद्भ्रमन्त्येव मनवश्च चतुर्द्दश ॥ ४३
षष्ठ्यधिकं पञ्चशतं पञ्चविंशत्सहस्रकम् ।
नरमानयुगञ्चैव परं मन्वन्तरं स्मृतम् ॥ ४४
आख्यानञ्च मनूनाञ्च धर्म्मिष्ठानां नराधिप ।
यच्छ्रुतं शिववक्त्रेण तत् त्वं मत्तो निशामय ॥ ४५
आद्यो मनुर्ब्रह्मपुत्त्रः शतरूपा पतिव्रता ।
धर्म्मिष्ठानां वरिष्ठश्च गरिष्ठो मनुषु प्रभुः ॥ ४६
स्वायम्भुवः शम्भुशिष्यो विष्णुव्रतपरायणः ।
जीवन्मुक्तो महाज्ञानी भवतः प्रपितामहः ॥ ४७
राजसूयसहस्रञ्च चकार नर्म्मदातटे ।
त्रिलक्षमश्वमेधञ्च त्रिलक्षनरमेधकम् ॥ ४८
गोमेधञ्च चतुर्लक्षं विधिवन्महदद्भुतम् ।
ब्राह्मणानां त्रिकोटिञ्च भोजयामास नित्यशः ॥ ४९
पञ्चलक्षगवां मांसैः सुपक्वैर्घृतसंस्कृतैः ।
चर्व्व्य-चोष्य-लेह्य-पेयैर्मिष्टद्रव्यसुदुर्लभैः ॥ ५०
अमूल्यरत्नलक्षञ्च दशकोटिसुवर्णकम् ।
स्वर्णशृङ्गयुतं दिव्यं गवां लक्षं सुपूजितम् ॥ ५१
वह्निशुद्धञ्च वस्त्रञ्च मणीन्द्राणाञ्च लक्षकम् ।
भूमिञ्च सर्व्वशस्याढ्यां गजेन्द्ररत्नलक्षकम् ॥ ५२
त्रिलक्षमश्वरत्नञ्च शातकुम्भविनिर्म्मितम् ।
सहस्ररथरत्नञ्च शिविकालक्षमेव च ॥ ५३
त्रिकोटिस्वर्णपात्रञ्च सान्नं सजलमीप्सितम् ।
त्रिकोटिस्वर्णपात्रञ्च कर्पूरादिसुवासितम् ॥ ५४
ताम्बूलं सुविचित्रञ्च स्वर्णपात्रप्रपूरितम् ।
रत्नेन्द्रसारखचितं रचितं विश्वकर्म्मणा ॥ ५५
वह्निशुद्धांशुकैश्चित्रै राजितं माल्यजालकैः ।
नित्यं ददौ ब्राह्मणेभ्यो विष्णुप्रीत्या शिवाज्ञया ॥५६
सम्प्राप्य शङ्कराज्ज्ञानं कृष्णमन्त्रं सुदुर्लभम् ।
सम्प्राप्य कृष्णदास्यञ्च गोलोकञ्च जगाम सः ॥ ५७
दृष्ट्वा मुक्तं स्वपुत्त्रञ्च प्रहृष्टश्च प्रजापतिः ।
तुष्टाव शङ्करं तुष्टः ससृजे मनुमन्यकम् ॥ ५८
स च स्वयम्भुपुत्त्रश्च पुरः स्वायम्भुवो मनुः ।
स्वारोचिषो मनुश्चैव द्वितीयो वह्निनन्दनः ॥ ५९
राजा वदान्यो धर्म्मिष्ठः स्वायम्भुवसमो महान् ।
प्रियव्रतसुतावन्यौ द्वौ मनू धर्म्मिणां वरौ ॥ ६०
तौ तृतीयचतुर्थौ च वैष्णवौ तापसोत्तमौ ।
तौ च शङ्करशिष्यौ च कृष्णभक्तिपरायणौ ॥ ६१
धर्म्मिष्ठानां वरिष्ठश्च रैवतः पञ्चमो मनुः ।
षष्ठश्च चाक्षुषो ज्ञेयो विष्णुभक्तिपरायणः ॥ ६२
श्राद्धदेवः सूर्य्यसुतो वैष्णवः सप्तमो मनुः ।
सावर्णिः सूर्य्यतनयो वैष्णवो मनुरष्टमः ॥ ६३
नवमो दक्षसावर्णिर्विष्णुव्रतपरायणः ।
दशमो ब्रह्मसावर्णिर्ब्रह्मज्ञानविशारदः ॥ ६४
ततश्च धर्म्मसावर्णिर्मनुरेकादशः स्मृतः ।
धर्म्मिष्ठश्च वरिष्ठश्च वैष्णवानां सदाव्रती ॥ ६५
ज्ञानी च रुद्रसावर्णिर्मनुश्च द्वादशः स्मृतः ।
धर्म्मात्मा देवसावर्णिर्मनुरेव त्रयोदशः ॥ ६६
चतुर्द्दशो महाज्ञानी चन्द्रसावर्णिरेव च ।
यावदायुर्मनूनाञ्चेन्द्राणां तावदेव हि ॥ ६७
चतुर्द्दशेन्द्रे विच्छिन्ने ब्रह्मणो दिनमुच्यते ।
तावती ब्रह्मणो रात्रिः सा च ब्राह्मी निशा नृप॥६८
कालरात्रिश्च सा ज्ञेया वेदेषु परिकीर्त्तिता ।
ब्रह्मणो वासरे राजन् क्षुद्रः कल्पः प्रकीर्त्तितः ॥६९
एवं सप्तकल्पजीवी मार्कण्डेयो महातपाः ॥ ७०
ब्रह्मलोकादधः सर्व्वे लोका दग्धाश्च तत्र वै ॥ ७१
उत्थितेनैव सहसा सङ्कर्षणमुखाग्निना ।
चन्द्रार्कब्रह्मपुत्त्राश्च ब्रह्मलोकं गता ध्रुवम् ॥ ७२
ब्राह्मीरात्रिव्यतीते तु पुनश्च ससृजे विधिः ।
तस्यां ब्रह्मनिशायाञ्च क्षुद्रः प्रलय उच्यते ॥ ७३
देवाश्च मनवश्चैव तत्र दग्धा नरादयः ।
एवं त्रिंशद्दिवारात्रैर्ब्रह्मणो मास एव च ॥ ७४
एवं पञ्चाशदब्दे तु गते च ब्रह्मणो नृप ।
दैनन्दिनस्तु प्रलयो वेदेषु परिकीर्त्तितः ॥ ७५
मोहरात्रिश्च सा प्रोक्ता वेदविद्भिः पुरातनैः ।
ततः सर्व्वे प्रनष्टाश्च चन्द्रार्कादि-दिगीश्वराः ॥ ७६
आदित्या वसवो रुद्रा मुनीन्द्रा मानवादयः ।
ऋषयो मनवश्चैव गन्धर्व्वा राक्षसादयः ॥ ७७
मार्कण्डेयो लोमशश्च मुनयश्चैव जीविनः ।
इन्द्रद्युम्नश्च नृपतिश्चाकूपारश्च कच्छपः ॥ ७८
नाड़ीजङ्घो वकश्चैव सर्व्वे नष्टाश्च तत्र वै ।
ब्रह्मलोकादधः सर्व्वे लोका नागालयास्तथा ॥७९
ब्रह्मलोकं ययुः सर्व्वे ब्रह्मपुत्त्रादयस्तथा ।
गते दैनन्दिने ब्रह्मा लोकांश्च ससृजे पुनः ॥ ८०

एवं शताब्दपर्य्यन्तं परमायुश्च ब्रह्मणः ।
ब्रह्मणश्च निपातेन महाकल्पो भवेन्नृप ॥ ८१
प्रकीर्त्तिता महारात्रिः सा एव च पुरातनैः ।
ब्रह्मणश्च निपाते च ब्रह्माण्डौघो जलप्लुतः ॥ ८२
वेदमाता च सावित्री वेदा धर्म्मादयस्तथा ।
सर्व्वे प्रनष्टा मृत्युश्च प्रकृतिश्च शिवं विना ॥ ८३
नारायणे प्रलीनाश्च विश्वस्था वैष्णवास्तथा ।
कालाग्निरुद्रः संहर्त्ता सर्व्वरुद्रगणैः सह ॥ ८४
मृत्युञ्जये महादेवे लीनः सत्त्वे तमोगुणः ।
ब्रह्मणश्च निपातेन निमेषः प्रकृतेर्भवेत् ॥ ८५
नारायणस्य शम्भोश्च महाविष्णोश्च निश्चितम् ।
निमेषान्ते पुनः सृष्टिर्भवेत् कृष्णेच्छया नृप ॥ ८६
कृष्णो निमेषरहितो निर्गुणः प्रकृतेः परः ।
सगुणानां निमेषश्च कालसंख्यावयो मितम् ॥ ८७
न निर्गुणस्य नित्यस्य चाद्यन्तरहितस्य च ।
निमेषाणां सहस्रेण प्रकृतेर्दण्ड उच्यते ॥ ८८
षष्टिदण्डात्मकस्तस्या वासरश्च प्रकीर्त्तितः ।
मासस्त्रिंशद्दिवारात्रैर्वर्षं द्वादशमासकैः ॥ ८९
एवं गते शताब्दे च श्रीकृष्णे प्रकृतेर्लयः ।
प्रकृत्याश्च प्रलीनायां श्रीकृष्णे प्राकृतो लयः ॥ ९०
सर्व्वान् संहृत्य सा चैका महाविष्णोः प्रसूस्तु या ।
कृष्णवक्षसि लीना च मूलप्रकृतिरीश्वरी ॥ ९१
आत्मा वदन्ति तां दुर्गां विष्णुमायां सनातनीम् ।
सर्व्वशक्तिस्वरूपाञ्च प्रेम्णा प्राणाधिकां तथा ॥ ९२
बुद्ध्यधिष्ठातृदेवीञ्च कृष्णस्य निर्गुणात्मिकाम् ।
यन्मायामोहिताश्चैव ब्रह्म-विष्णु-शिवादयः ॥ ९३
वैष्णवास्तां महालक्ष्मीं परां राधां वदन्ति ते ।
यदर्द्धाङ्गा महालक्ष्मीः प्रिया नारायणस्य च ॥ ९४
प्राणाधिष्ठातृदेवीञ्च प्रेम्णा प्राणाधिकां वराम् ।
शश्वत्प्रेममयीं शक्तिं निर्गुणां निर्गुणस्य च ॥ ९५
नारायणश्च शम्भुश्च संहृत्य स्वगणान् बहून् ।
शुद्धसत्त्वस्वरूपी च कृष्णे लीनश्च निर्गुणे ॥ ९६
गोपा गोप्यश्च गावश्च सुरभ्यश्च नराधिप ।
सर्व्वे लीनाः प्रकृत्याञ्च प्रकृतिः प्रकृतीश्वरे ॥ ९७
महाविष्णौ प्रलीनाश्च ते सर्व्वे क्षुद्रविष्णवः ।
महाविष्णुः प्रकृत्याञ्च सा चैवं परमात्मनि ॥ ९८
प्रकृतिर्योगनिद्रा च श्रीकृष्णनेत्रपद्मयोः ।
अधिष्ठानं चकारैवं मायया चेश्वरेच्छया ॥ ९९
प्रकृतेर्वासरं यावन्मितं कालं प्रकीर्त्तितम् ।
तावद्वृन्दावने निद्रा कृष्णस्य परमात्मनः ॥ १००
अमूल्यरत्नतल्पे च वह्निशुद्धांशुकार्च्चिते ।
गन्धचन्दनमाल्यानां वायुना सुरभीकृते ॥ १०१
पुनः प्रजागरे तस्य सर्व्वसृष्टिर्भवेत् पुनः ।
एवं सर्व्वे प्राकृताश्च श्रीकृष्णं निर्गुणं विना ॥ १०२
तद्वन्दनं तत्स्मरणं तस्य ध्यानं तदर्च्चनम् ।
कीर्त्तनं तद्गुणानाञ्च महापातकनाशनम् ॥ १०३
एतत् ते कथितं सर्व्वं यद्दृष्टमृत्युञ्जयाच्छ्रुतम् ।
यथागमं महाराज किं भूयः श्रोतुमिच्छसि ॥ १०४

सुयज्ञ उवाच ।

कालाग्निरुद्रो विश्वानां संहर्त्ता च तमोगुणः ।
ब्रह्मणोऽन्ते विलीनश्च सत्त्वे मृत्युञ्जये शिवे ॥ १०५
शिवो लीनो निर्गुणे चेत् श्रीकृष्णे प्राकृते लये ।
कथं तव गुरोर्नाम मृत्युञ्जय इति श्रुतौ ॥ १०६
कथं वा मूलप्रकृतिर्महाविष्णोः प्रसूरियम् ।
असंख्यानि च विश्वानि वसन्ति यस्य लोमसु ॥ १०७

सुतपा उवाच ।

ब्रह्मणोऽन्ते मृत्युकन्या प्रनष्टा जलविम्बवत् ।
संहर्त्री सर्व्वलोकानां ब्रह्मादीनां नराधिप ॥ १०८
कतिधा मृत्युकन्यानां ब्रह्मणां कोटिशो लये ।
कालेन लीनः शम्भुश्च सत्त्वरूपी च निर्गुणे ॥ १०९
मृत्युकन्या जिता शश्वच्छिवेन गुरुणा मम ।
न मृत्युना जितः शम्भुः कल्पे कल्पे श्रुतौ श्रुतम् ॥ ११०
शम्भोर्नारायणस्यैव प्रकृतेश्च नराधिप ।
नित्यानां लीनता नित्ये तन्माया न तु वास्तवी ॥ १११
स्वयं पुमान् निर्गुणश्च कालेन सगुणः स्वयम् ।
स्वयं नारायणः शम्भुर्मायया प्रकृतिः स्वयम् ॥ ११२
तदंशस्तत्समः शश्वद्यथा वह्नेः स्फुलिङ्गवत् ॥ ११३
ये ये च ब्रह्मणा सृष्टा रुद्रादित्यादयस्तथा ।
कल्पे कल्पे जितास्ते ते न शिवो मृत्युना जितः ॥ ११४
न शिवो ब्रह्मणा सृष्टः सत्यो नित्यः सनातनः ।
कतिधा ब्रह्मणां पातो यन्निमेषेण भूमिप ॥ ११५
अथादिसर्गे श्रीकृष्णः प्रकृत्याञ्च जगद्गुरुः ।
चकार वीर्य्याधानञ्च पुण्ये वृन्दावने वने ॥ ११६
तद्गर्भांशसमुद्भूता रासे रासेश्वरी पुरा ।

गर्भं दधार सा राधा यावद्वै ब्रह्मणो वयः ॥ ११७
ततः सुषाव सा डिम्बं गोलोके रासमण्डले ।
चुकोप डिम्बं सा दृष्ट्वा हृदयेन विदूयता ॥ ११८
तड्डिम्बं प्रेरयामास तदधो विश्वगोलके ।
त्यक्तापत्यं महादेवी रुरोद च मुहुर्मुहुः ॥ ११९
कृष्णस्तां बोधयामास महायोगेन योगवित् ।
बभूव तस्माड्डिम्बाच्च सर्व्वाधारो महाविराट्॥ १२०
सुयज्ञ उवाच ।
अद्य मे सफलं जन्म जीवनं सार्थकं मम ।
शापो मे वरह्रपश्च बभूव भक्तिकारकः ॥ १२१
सुदुर्लभा हरेर्भक्तिः सर्व्वमङ्गलमङ्गला ।
न तस्याश्च समं विप्र वेदेषु मुक्तिपञ्चकम् ॥ १२२
यथा भक्तिर्मम भवेत् श्रीकृष्णे परमात्मनि ।
सुदुर्लभा च सर्व्वेषां तत् कुरुष्व महामुने ॥ १२३
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन कृष्णभक्ताश्च दर्शनात् ॥ १२४
सर्व्वेषामाश्रमाणाञ्च द्विजातिर्जातिरुत्तमा ।
स्वधर्म्मनिरताश्चैव तेषु श्रेष्ठाश्च भारते ॥ १२५
कृष्णमन्त्रोपासकश्च कृष्णभक्तिपरायणः ।
नित्यं नैवेद्यभोजी च ततः श्रेष्ठो महान् शुचिः ॥१२६
त्वां वैष्णवं द्विजश्रेष्ठं महाज्ञानार्णवं परम् ।
सम्प्राप्य शिवशिष्यञ्च कं यामि शरणं मुने ॥ १२७
अधुनाहं गलत्कुष्ठी तव शापान्महामुने ।
कथं तपस्यामशुचिर्नाधिकारी करोमि च ॥ १२८
सुतपा उवाच ।
हरिभक्तिप्रदात्री सा विष्णुमाया सनातनी ।
सा च याननुगृह्णाति तेभ्यो भक्तिं ददाति च ॥ १२९
यांश्च माया मोहयति तेभ्यस्तां न ददाति च ।
करोति वञ्चनां तांश्च नश्वरेण धनेन च ॥ १३०
कृष्णप्रेममयीं शक्तिं प्राणाधिष्ठातृदेवताम् ।
भज राधां निर्गुणां तां प्रदात्रीं सर्व्वसम्पदाम् ॥ १३१
शीघ्रं यास्यसि गोलोकं तदनुग्रहसेवया ।
सा सेविता श्रीकृष्णेन सर्व्वाराध्येन पूजिता ॥ १३२
ध्यानासाध्यं दुराराध्यं भक्ताः संसेव्य निर्गुणम् ।
सुचिरेण च गोलोकं प्रयान्ति बहुजन्मतः ॥१३३
कृपामयीञ्च संसेव्य भक्ता यान्त्यचिरेण च ।
सा प्रसूश्च महाविष्णोः सर्व्वसम्पत्स्वरूपिणी । १३४

विप्रपादोदकं भुङ्क्ष्व सहस्रवर्षसंयतः ।
कामदेवस्वरूपश्च रोगहीनो भविष्यसि ॥ १३५
विप्रपादोदकक्लिन्ना यावत् तिष्ठति मेदिनी ।
तावत् पुष्करपात्रेषु पिबन्ति पितरो जलम् ॥ १३६
पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे ।
सागरे यानि तीर्थानि पादे विप्रस्य दक्षिणे ॥१३७
विप्रपादोदकञ्चैव पाप-व्याधिविनाशनम् ।
सर्व्वतीर्थोदकसमं भक्ति-मुक्तिप्रदं शुभम् ॥ १३८
विप्रो मानवरूपी च देवदेवो जनार्द्दनः ।
विप्रेण दत्तं द्रव्यञ्च भुञ्जते सर्व्वदेवताः ॥ १३९
इत्येवमुक्त्वा विप्रश्च गृहीत्वा तस्य पूजनम् ।
जगाम गृहमित्युक्त्वा चायास्ये वत्सरान्तरे ॥ १४०
भक्त्या च बुभुजे राजा विप्रपादोदकं शिवे ।
विप्रञ्च पूजयामास भोजयामास वत्सरम् ॥ १४१
संवत्सरव्यतीते तु निर्म्मुक्ते व्याधितो नृपे ।
आजगाम मुनिश्रेष्ठः सुतपाः काश्यपाग्रणीः ॥ १४२
राधापूजाविधानञ्च स्तोत्रञ्च कवचं मनुम् ।
ध्यानञ्च सामवेदोक्तं ददौ तस्मै नृपाय च ॥ १४३
राजन् निर्गम्यतां शीघ्रमित्युक्त्वा तपसे मुनिः ।
जगाम स्वालयं दुर्गे निर्जगाम त्वरा नृपः ॥ १४४
ससृदुर्वान्धवाः सर्व्वे त्वरावं शोकमूर्च्छिताः ।
भार्य्याश्च तत्यजुः प्राणान् पुत्रो राजा बभूव ह॥१४५
सुयज्ञः पुष्करं गत्वा चकार दुष्करं तपः ।
दिव्यं वर्षशतं राजा जजाप परमं मनुम् ॥ १४६
तदा ददर्श गगने वयःस्थां परमेश्वरीम् ।
स तद्दर्शनमात्रेण निष्पापश्च बभूव ह ॥ १४७
तत्याज मानुषं देहं दिव्यां मूर्त्तिं दधार सः ॥ १४८
सा देवी तेन यानेन रत्नेन्द्रनिर्म्मितेन च ।
नृपं नीत्वा च गोलोकं स्तोत्रतुष्टा ययौ तदा ॥१४९
राजा ददर्श गोलोकं नद्या विरजयावृतम् ।
वेष्टितं पर्व्वतेनैव शतशृङ्गेण चारुणा ॥ १५०
श्रीवृन्दावनसंयुक्तं रासमण्डलमण्डितम् ।
गो-गोपी-गोपनिकरैः शोभितैः परिशोभितम्॥१५१
रत्नेन्द्रसारनिर्म्माणमन्दिरैः सुमनोहरैः ।
नानाचित्रविचित्रैश्च राजितं परिशोभितम् ॥ १५२
सप्तत्रिंशदुपवनैः कल्पवृक्षसमन्वितैः ।
पारिजातद्रुमाकीर्णैर्वेष्टितं कामधेनुभिः ॥ १५३

आकाशवत् सुविस्तीर्णं वर्त्तुलं चन्द्रविम्बवत्।
अत्यूर्द्ध्वमपि वैकुण्ठात् पञ्चाशत्कोटियोजनम्॥ १५४
शून्यस्थितं निराधारं भवमेवेश्वरेच्छया।
आत्माकाशसमं नित्यमस्माकञ्च सुदुर्लभम्॥ १५५
अहं नारायणोऽनन्तो ब्रह्मा विष्णुमहान् विराट्।
धर्म्मः क्षुद्रविराट्सङ्घो गङ्गा लक्ष्मीः सरस्वती॥१५६
त्वं विष्णुमाया सावित्री तुलसी च गणेश्वरः।
सनत्कुमारः स्कन्दश्च नर-नारायणावृषी॥ १५७
कपिलो दक्षिणा यज्ञो ब्रह्मपुत्राश्च योगिनः।
पवनो वरुणश्चैव चन्द्रः सूर्य्यो हुताशनः॥ १५८
कृष्णमन्त्रोपासकाश्च भारतस्थाश्च वैष्णवाः।
एभिर्दृष्टश्च गोलोको नान्यैर्दृष्टः कदाचन॥ १५९
निरामये च तत्रैव रत्नसिंहासने स्थितम्।
रत्नमालाकिरीटैश्च भूषितं रत्नभूषणैः॥ १६०
निर्म्मलैः पीतवस्त्रैश्च वह्निशुद्धैर्विराजितम्।
चन्दनोक्षितसर्व्वाङ्गं किशोरगोपरूपिणम्॥ १६१
नवीनजलदश्यामं श्वेतपङ्कजलोचनम्।
शरत्पार्व्वणचन्द्रास्यमीषद्धास्यमनोहरम्॥ १६२
द्विभुजं मुरलीहस्तं भक्तानुग्रहकारकम्।
स्वेच्छामयं परंब्रह्म निर्गुणं प्रकृतेः परम्॥ १६३
ध्यानासाध्यं दुराराध्यमस्माकञ्च सुदुर्लभम्।
प्रियैर्द्वादशगोपालैः सेवितं श्वेतचामरैः॥ १६४
वीक्षितं गोपिकावृन्दैः सस्मितैः सुमनोहरैः।
पीडितैः कामवाणैश्च शश्वत्सुस्थिरयौवनैः॥ १६५
वह्निशुद्धांशुकाधानै रत्नभूषणभूषितैः।
रासमण्डलमध्यस्थं श्रीकृष्णञ्च परात्परम्॥ १६६
ददर्श राजा तत्रैव राधया दर्शितं तथा।
स्तुतं चतुर्भिर्वेदैश्च मूर्त्तिमद्भिर्मनोहरैः॥ १६७
रागिणीनाञ्च रागाणामतीवसुमनोहरम्।
श्रुतवन्तञ्च सङ्गीतं यन्त्रवक्त्रोत्थितं शिवे॥ १६८
नित्यया च सनातन्या प्रकृत्या सत्यया त्वया।
शश्वत्पूजितपादाब्जमखण्डतुलसीदलैः॥ १६९
कस्तूरी-कुङ्कुमाक्तैश्च गन्धचन्दनचर्च्चितैः।
दूर्व्वाभिः साक्षताभिश्च पारिजातप्रसूनकैः।
निर्म्मलैर्विरजातोयैर्दत्तार्घ्यैरपि शोभितैः॥ १७०
सुप्रसन्नं सुतन्त्रञ्च सर्व्वकारणकारणम्।
सर्व्वं सर्व्वान्तरात्मानं सर्व्वेशं सर्व्वजीवनम्॥ १७१
सर्व्वाधारं परं पूज्यं ब्रह्मज्योतिः सनातनम्।
सर्व्वसम्पत्स्वरूपञ्च दातारं सर्व्वसम्पदाम्॥ १७२
सर्व्वमङ्गलरूपञ्च सर्व्वमङ्गलकारणम्।
सर्व्वमङ्गलदं सर्व्वमङ्गलानाञ्च मङ्गलम्॥ १७३
तं दृष्ट्वा नृपतिस्त्रस्तो ह्यवरुह्य रथात् त्वरा।
साश्रुनेत्रः पुलकितो मूर्द्ध्ना च प्रणनाम च॥१७४
परमात्मा ददौ तस्मै स्वदास्यञ्च शुभाशिषम्।
स्वभक्तिं निश्चलां सत्यामस्माकञ्च सुदुर्लभाम्॥ १७५
राधावरुह्य स्वरथादुवास कृष्णवक्षसि।
गोपीभिः सुप्रियाभिश्च सेविता श्वेतचामरैः॥ १७६
सम्भाषिता श्रीकृष्णेन सस्मितेन च पूजिता।
समुत्थितेन सहसा भक्त्या च सम्भ्रमेण च॥ १७७
आदौ राधां समुच्चार्य्य पश्चात् कृष्णञ्च माधवम्।
प्रवदन्ति च वेदेषु वेदविद्भिः पुरातनैः॥ १७८
विपर्य्ययं ये वदन्ति ये निन्दन्ति जगत्प्रसूम्।
कृष्णप्राणाधिकां प्रेममयीं शक्तिञ्च राधिकाम्॥१७९
ते पच्यन्ते कालसूत्रे यावच्चन्द्रदिवाकरौ।
भवन्ति स्त्रीपुत्रहीना रोगिणः सप्तजन्मसु॥ १८०
इत्येवं कथितं दुर्गे राधिकाख्यानमुत्तमम्।
सा त्वं सती भगवती वैष्णवी च सनातनी॥ १८१
नारायणी विष्णुमाया मूलप्रकृतिरीश्वरी।
मायया मां पृच्छसि त्वं सर्व्वज्ञा सर्व्वरूपिणी॥ १८२
स्त्रीजातिष्वधिदेवी च परा जातिस्मरा वरा।
कथितं राधिकाख्यानं किं भूयः श्रोतुमिच्छसि॥१८३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारद-संवादे हर-गौरी-संवादे कालादिनिरूपणं नाम चतुःपञ्चाशोऽध्यायः॥५४॥

---

## पञ्चपञ्चाशोऽध्यायः।

पार्व्वत्युवाच।

श्रीकृष्णस्य स्थिते मन्त्रे शुभाकमीश्वरस्य च।
कथं जग्राह राधाया मन्त्रञ्च वैष्णवो नृपः॥ १
किं विधानञ्च किं ध्यानं किं स्तोत्रं कवचञ्च किम्।
किं मन्त्रञ्च ददौ राज्ञे तां पूजापद्धतिं वद॥ २

महेश्वर उवाच।

हे विप्र कं भजामीति प्रश्नं कुर्व्वति राजनि।

शीघ्रं प्राप्नोमि गोलोकं कस्य।राधनतो मुने ॥ ३
इत्युक्तवन्तं राजेन्द्रमुवाच ब्राह्मणोत्तमः।
तत्सेवया च तल्लोकं प्राप्स्यसे बहुजन्मतः ॥ ४
तत्प्राणाधिष्ठातृदेवीं भज राधां परात्पराम्।
कृपामयीप्रसादेन शीघ्रं प्राप्नोषि तत्पदम् ॥ ५
इत्युक्त्वा राधिकामन्त्रं ददौ तस्मै षडक्षरम्।
श्रीं राधेति चतुर्थ्यन्तं वह्निजायान्तमेव च ॥ ६
प्राणायामं भूतशुद्धिं मन्त्रन्यासं तथैव च।
कराङ्गन्यासमेवञ्च ध्यानं सर्व्वसुदुर्लभम् ॥ ७
स्तोत्रञ्च कवचं तञ्च शिक्षयामास भक्तितः।
राजा तेन क्रमेणैव जजाप परमं मनुम् ॥ ८
ध्यानञ्च सामवेदोक्तं मङ्गलानाञ्च मङ्गलम्।
कृष्णस्तां पूजयामास पुरा ध्यानेन येन च ॥ ९
श्वेतचम्पकवर्णाभां कोटिचन्द्रसमप्रभाम्।
शरत्पार्व्वणचन्द्रास्यां शरत्पङ्कजलोचनाम् ॥ १०
सुश्रोणीं सुनितम्बाञ्च पक्वबिम्बाधरां वराम्।
मुक्तापङ्क्तिविनिन्द्यैक-दन्तपङ्क्तिमनोहराम् ॥ ११
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकातराम्।
वह्निशुद्धांशुकाधानां रत्नमालाविभूषिताम् ॥ १२
रत्नकेयूरवलयां रत्नमञ्जीररञ्जिताम्।
रत्नकेयूरयुग्मेण विचित्रेण विराजिताम् ॥ १३
सूर्य्यप्रभाच्छादितेन गण्डस्थलविराजिताम्।
अमूल्यरत्ननिर्माण-वक्षलीयुग्मभूषिताम् ॥ १४
सद्रत्नसारनिर्माण-किरीटमुकुटोज्ज्वलाम्।
रत्नाङ्गुरीयसंयुक्तां रत्नपाशकशोभिताम्।
बिभ्रतीं कवरीभारं मालतीमाल्यभूषितम् ॥१५
रूपाधिष्ठातृदेवीञ्च गजेन्द्रमन्दगामिनीम्।
गोपीभिः सुप्रियाभिश्च सेवितां श्वेतचामरैः ॥ १६
कस्तूरीबिन्दुभिः सार्द्धमधश्चन्दनबिन्दुना।
सिन्दूरबिन्दुना चारुसीमन्ताधःस्थलोज्ज्वलाम् ॥१७
नित्यं सुपूजितां भक्त्या कृष्णेन परमात्मना।
कृष्णसौभाग्यसंयुक्तां कृष्णप्राणाधिकां वराम् ॥ १८
कृष्णप्राणाधिदेवीञ्च निर्गुणाञ्च परात्पराम्।
महाविष्णुविधात्रीञ्च दात्रीञ्च सर्व्वसम्पदाम् ॥ १९
कृष्णभक्तिप्रदां शान्तां मूलप्रकृतिमीश्वरीम्।
वैष्णवीं विष्णुमायाञ्च कृष्णप्रेममयीं शुभाम् ॥ २०
रासमण्डलमध्यस्थां रत्नसिंहासनस्थिताम्।
रासे रासेश्वरयुतां राधां रासेश्वरीं भजे ॥ २१
ध्यात्वा पुष्पं मूर्द्ध्नि दत्त्वा पुनर्ध्यायेज्जगत्प्रसूम्।
दद्यात् पुष्पं पुनर्ध्यात्वा चोपचाराणि षोड़श ॥२२
आसनं वसनं पाद्यमर्घ्यं गन्धानुलेपनम्।
धूपं दीपं सुपुष्पञ्च स्नानीयं रत्नभूषणम् ॥ २३
नानाप्रकारनैवेद्यं ताम्बूलं वासितं जलम्।
मधुपर्कं रत्नतल्पमुपचाराणि षोड़श ॥ २४
प्रत्येकं वेदमन्त्रेण दत्तं भक्त्या च भूभृता।
मन्त्रांश्च शृणुतां दुर्गे वेदोक्तान् सर्व्वसम्मतान् ॥ २५
रत्नसारविकारञ्च निर्म्मितं विश्वकर्म्मणा।
वरं सिंहासनं रम्यं राधे पूजासु गृह्यताम् ॥ २६
अमूल्यरत्नखचितममूल्यं सूक्ष्ममेव च।
वह्निशुद्धं निर्म्मलञ्च वसनं देवि गृह्यताम् ॥ २७
सद्रत्नसारपात्रस्थं नानातीर्थोदकं शुभे।
पादप्रक्षालनार्थञ्च राधे पाद्यं प्रगृह्यताम् ॥ २८
दक्षिणावर्त्तशङ्खस्थं सदूर्व्वापुष्पचन्दनम्।
पूतं युक्तं तीर्थतोये राधेऽर्घ्यं प्रतिगृह्यताम् ॥ २९
पार्थिवद्रव्यसम्भूतमतीवसुरभीकृतम्।
मङ्गलार्हं पवित्रञ्च राधे गन्धं गृहाण मे ॥ ३०
श्रीखण्डचूर्णं सुस्निग्धं कस्तूरी-कुङ्कुमान्वितम्।
सुगन्धयुक्तं देवेशि गृह्यतामनुलेपनम् ॥ ३१
वृक्षनिर्याससंयुक्तं पार्थिवद्रव्यसंयुतम्।
ज्वलदग्निशिखापूतं धूपं देवि गृहाण मे ॥३२
अन्धकारभयध्वस्तममूल्यं रत्नकुण्डलम्।
रत्नप्रदीपं शोभाढ्यं गृहाण परमेश्वरि ॥ ३३
पारिजातप्रसूनञ्च गन्धचन्दनचर्च्चितम्।
अतीवसौरभं रम्यं गृहाण परमेश्वरि ॥ ३४
सुगन्धामलकीचूर्णं सुस्निग्धं सुमनोहरम्।
विष्णुतैलसमायुक्तं स्नानीयं देवि गृह्यताम् ॥ ३५
अमूल्यरत्ननिर्माणं केयूरवलयादिकम्।
शङ्खं सुशोभनं राधे गृह्यतां भूषणं मम ॥ ३६
कालदेशोद्भवं पक्वफलञ्च लड्डुकादिकम्।
परमान्नञ्च मिष्टान्नं नैवेद्यं प्रतिगृह्यताम् ॥ ३७
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम्।
सर्व्वभोगाधिकं स्वादु ताम्बूलं प्रतिगृह्यताम् ॥ ३८
आसवं रत्नपात्रस्थं सुस्वादु सुमनोहरम्।
मया निवेदितं भक्त्या गृहाण परमेश्वरि ॥ ३९

रत्नेन्द्रसारनिर्म्माणं वह्निशुद्धांशुकान्वितम्।
पुष्पचन्दनचर्चाढ्यं पर्य्यङ्कं देवि गृह्यताम्॥ ४०
एवं सम्पूज्य देवीं तां दद्यात् पुष्पाञ्जलित्रयम्।
यत्नेन पूजयेद्देवीं नायिकाष्टौ व्रते व्रती॥ ४१
प्रागादिक्रमयोगेण दक्षिणावर्त्ततः प्रिये।
भक्त्या पञ्चोपचारेण सुप्रियाः परिचारिकाः॥ ४२
मालावतीं पूर्व्वकोणे वह्निकोणे च माधवीम्।
दक्षिणे रत्नमालाञ्च सुशीलां नैरृते सति॥ ४३
पश्चिमे च शशिकलां पारिजाताञ्च मारुते।
पद्मावतीमुत्तरे च ऐशान्यां सुन्दरीं तथा॥ ४४
यूथिका-मालती-पद्म-मालां दत्त्वा व्रते व्रती।
परिहारञ्च कुरुते सामवेदोक्तमेव च॥ ४५
त्वं देवि जगतां माता विष्णुमाया सनातनी।
कृष्णप्राणाधिदेवी च कृष्णप्राणाधिका शुभा॥ ४६
कृष्णप्रेममयी शक्तिः कृष्णसौभाग्यरूपिणी।
कृष्णभक्तिप्रदे राधे नमस्ते मङ्गलप्रदे॥ ४७
अद्य मे सफलं जन्म जीवनं सार्थकं मम।
पूजितासि मया सा च या श्रीकृष्णेन पूजिता॥४८
कृष्णवक्षसि या राधा सर्व्वसौभाग्यसंयुता।
रासे रासेश्वरीरूपा राधा वृन्दावने वने॥ ४९
कृष्णप्रिया च गोलोके तुलसीकाननेऽतुला।
चम्पावती कृष्णसङ्गे क्रीड़ा चम्पककानने॥ ५०
चन्द्रावली चन्द्रवने शतशृङ्गे सती सति।
विरजादर्पहन्त्री च विरजातटकानने॥ ५१
पद्मावती पद्मवने कृष्णा कृष्णसरोवरे।
भद्रा कुञ्जकुटीरे च काम्या च काम्यके वने॥ ५२
वैकुण्ठे च महालक्ष्मीर्वाणी नारायणोरसि।
क्षीरोदे सिन्धुकन्या च मर्त्त्ये लक्ष्मीर्हरिप्रिया॥ ५३
सर्व्वस्वर्गे स्वर्गलक्ष्मीर्देवदुःखविनाशिनी।
सनातनी विष्णुमाया दुर्गा शङ्करवक्षसि॥ ५४
सावित्री वेदमाता च कलया कृष्णवक्षसि।
कलया धर्म्मपत्नी त्वं नरनारायणप्रसूः॥ ५५
कलया तुलसी त्वञ्च गङ्गा भुवनपावनी।
लोमकूपोद्भवा गोप्यः कलांशा रोहिणी रतिः॥५६
कलाकलांशरूपा च शतरूपा शची दितिः।
अदितिर्देवमाता च त्वत्कलांशा हरिप्रिया॥ ५७
देव्यश्च मुनिपत्न्यश्च त्वत्कलाकलया शुभे।
कृष्णभक्तिं कृष्णदास्यं देहि मे कृष्णपूजिते॥ ५८
एवं कृत्वा परीहारं स्तुत्वा च कवचं पठेत्।
पुरा कृतं स्तोत्रमेतद्भक्ति-दास्यप्रदं शुभम्॥ ५९
एवं नित्यं पूजयेद्यो विष्णुतुल्यः स भारते।
जीवन्मुक्तश्च पूतश्च गोलोकं याति निश्चितम्॥ ६०
कार्त्तिकीपूर्णिमायाञ्च राधां यः पूजयेच्छिवे।
एवं क्रमेण प्रत्यब्दं राजसूयफलं लभेत्॥ ६१
परमैश्वर्य्ययुक्तश्च इह लोके स पुण्यवान्।
सर्व्वपापाद्विनिर्म्मुक्तो यात्यन्ते विष्णुमन्दिरम्॥ ६२
आदावेवं क्रमेणैव रासे वृन्दावने वने।
स्तुता सा पूजिता राधा श्रीकृष्णेन पुरा सति॥६३
सम्पूज्य तां द्वितीये च राधामेवं क्रमेण च।
त्वद्वरेण च सम्प्राप विधाता वेदमातरम्॥ ६४
नारायणो महालक्ष्मीं प्राप यां पूज्य भारतीम्।
गङ्गाञ्च तुलसीञ्चैव परां भुवनपावनीम्॥ ६५
विष्णुः क्षीरोदशायी च प्राप सिन्धुसुतां तथा॥६६
मृतायां दक्षकन्यायां मया कृष्णाज्ञया पुरा।
त्वमेव दुर्गा सम्प्राप्ता पूजिता पुष्करे च सा॥ ६७
अदितिं कश्यपः प्राप चन्द्रः सम्प्राप रोहिणीम्।
कामो रतिञ्च सम्प्राप धर्म्मो मूर्त्तिं पतिव्रताम्॥६८
देवाश्च मुनयश्चैव यां सम्पूज्य पतिव्रताम्।
सम्प्राप यद्वरेणैव धर्म्मार्थ-कामार्थ-मोक्षकम्॥ ६९
एवं पूजाविधानञ्च कथितञ्च स्तवं शृणु॥ ७०
एकदा मानिनी राधा बभूवादर्शना प्रभोः।
संसक्तस्य तुलस्याञ्च गोप्याञ्च तुलसीवने॥ ७१
सा संहृत्य स्वमूर्त्तीश्च कलाः सर्व्वाश्च लीलया।
सर्व्वे बभूवुर्देवाश्च ब्रह्म-विष्णु-शिवादयः॥ ७२
भ्रष्टैश्वर्य्याश्च निश्रीका भार्य्याहीना ह्युपद्रुताः।
ते च सर्व्वे समालोच्य श्रीकृष्णं शरणं ययुः॥ ७३
तेषां स्तोत्रेण सन्तुष्टः स्नात्वा सम्पूज्य तां शुचिः।
तुष्टाव परमात्मा स सर्व्वेषां राधिकां सतीम्॥७४

श्रीकृष्ण उवाच।

एवमेव प्रियोऽहं ते प्रेमेदमेव ते मयि।
सुव्यक्तमदा कापट्यवचनं ते वरानने॥ ७५
हे कृष्ण त्वं मम प्राणा जीवात्मेति च सन्ततम्।
यद्ब्रवीषि नित्यं प्रेम्णा च साम्प्रतं ते कुतो गतः॥७६
तस्मात् सर्व्वमलं कान्ते वचनं जगदम्बिके।

क्षुरधारञ्च हृदयं स्त्रीजातीनाञ्च सर्व्वतः ॥ ७७
अस्माकं वचनं सत्यं यद्ब्रवीमीति तद्ध्रुवम् ।
यश्चप्राणाधिदेवी त्वं तच्च प्राणाधिकेति मे ॥ ७८
शक्तो न रक्षितुं ताञ्च यान्ति प्राणास्त्वया विना ।
विनाधिष्ठातृदेवीञ्च को वा कुत्र च जीवति ॥ ७९
महाविष्णोश्च माता त्वं मूलप्रकृतिरीश्वरी ।
सगुणा त्वञ्च कलया निर्गुणा स्वयमेव तु ॥ ८०
ज्योतीरूपा निराकारा भक्तानुग्रहविग्रहा ।
भक्तानां रुचिवैचित्र्यान्नानामूर्त्तीश्च बिभ्रती ॥ ८१
महालक्ष्मीश्च वैकुण्ठे भारती च सतां प्रसूः ।
पुण्यक्षेत्रे भारते च सती च पार्व्वती तथा ॥ ८२
तुलसी पुण्यरूपा च गङ्गा भुवनपावनी ।
ब्रह्मलोके च सावित्री कलया त्वं वसुन्धरा ॥ ८३
गोलोके राधिका त्वञ्च सर्व्वगोपालकेश्वरी ।
त्वया विनाहं निर्जीवो ह्यशक्तः सर्व्वकर्म्मसु ॥ ८४
शिवः शक्तस्त्वया शक्त्या शवाकारस्त्वया विना ।
वेदकर्त्ता स्वयं ब्रह्मा वेदमात्रा त्वया सह ॥ ८५
नारायणस्त्वया लक्ष्म्या जगत्पाता जगत्पतिः ।
फलं ददाति यज्ञश्च त्वया दक्षिणया सह ॥ ८६
बिभर्त्ति सृष्टिं शेषश्च त्वां कृत्वा मस्तके विभुः ।
बिभर्त्ति गङ्गारूपां त्वां मूर्द्ध्नि गङ्गाधरः शिवः ॥ ८७
शक्तिमच्च जगत् सर्व्वं शवरूपं त्वया विना ।
वक्ता सर्व्वस्त्वया वाण्या सूतो मूकस्त्वया विना ॥८८
यथा मृदा घटं कर्त्तुं कुलालः शक्तिमान् सदा ।
सृष्टिं स्रष्टुं तथाहञ्च प्रकृत्या च त्वया सह ॥८९
त्वया विना जडश्चाहं सर्व्वत्र च न शक्तिमान् ।
सर्व्वशक्तिस्वरूपा त्वं त्वमागच्छ ममान्तिकम् ॥ ९०
वह्नौ त्वं दाहिकाशक्तिर्नाग्निस्तप्तस्त्वया विना ।
शोभास्वरूपा चन्द्रे त्वं त्वां विना न स सुन्दरः ॥९१
प्रभारूपा हि सूर्य्ये त्वं त्वां विना न स भानुमान् ।
न कामः कामिनीबन्धुस्त्वया रत्या विना प्रिये ॥९२
इत्येवं स्तवनं कृत्वा तां सम्प्राप जगत्प्रभुः ।
देवा बभूवुः सश्रीकाः सभार्य्याः शक्तिसंयुताः ।
सस्त्रीकञ्च जगत् सर्व्वं बभूव शैलकन्यके ॥ ९३
गोपीपूर्णश्च गोलोको बभूव तत्प्रसादतः ।
राजा जगाम गोलोकमिति स्तुत्वा हरिप्रियाम्॥९४
श्रीकृष्णेन कृतं स्तोत्रं राधाया यः पठेन्नरः ।
कृष्णभक्तिञ्च तद्दास्यं स प्राप्नोति न संशयः ॥ ९५
स्त्रीविच्छेदे यः शृणोति मासमेकमिदं शुचिः ।
अचिराल्लभते भार्य्यां हत्वा विघ्नं शतं शतम् ॥ ९६
भार्य्याहीनो भाग्यहीनो वर्षमेकं शृणोति यः ।
अचिराल्लभते भार्य्यां सुशीलां सुन्दरीं सतीम् ॥ ९७
पुरा मया च त्वं प्राप्ता स्तोत्रेणानेन पार्व्वति ।
मृतायां दक्षकन्यायामाज्ञया परमात्मनः ॥ ९८
स्तोत्रेणानेन सम्प्राप्ता सावित्री ब्रह्मणा पुरा ।
पुरा दुर्व्वाससः शापान्निश्रीका देवतागणाः ।
स्तोत्रेणानेन देवैस्तैः सम्प्राप्ता श्रीः सुदुर्लभा ॥ ९९
शृणोति वर्षमेकञ्च पुत्रार्थी लभते सुतम् ।
महाव्याधी रोगमुक्तो भवेत् स्तोत्रप्रसादतः ॥ १००
कार्त्तिकीपूर्णिमायान्तु तां सम्पूज्य पठेन्नरः ।
अचलां श्रियमाप्नोति राजसूयफलं लभेत् ॥१०१
नारी शृणोति चेत् स्तोत्रं स्वामिसौभाग्यतां लभेत् ।
भक्त्या शृणोति चेत् स्तोत्रं बन्धनान्मुच्यते ध्रुवम् ॥१०२
नित्यं पठति यो भक्त्या राधां सम्पूज्य भक्तितः ।
स प्रयाति च गोलोकं निर्म्मुक्तो भवबन्धनात् ॥ १०३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारद-संवादे हर-गौरी-
संवादे राधापूजास्तोत्रं नाम
पञ्चपञ्चाशोऽध्यायः ॥५५॥

---

## षट्पञ्चाशोऽध्यायः ।

पार्व्वत्युवाच ।

पूजाविधानं स्तोत्रञ्च श्रुतमत्यद्भुतं मया ।
अधुना कवचं ब्रूहि श्रोष्यामि त्वत्प्रसादतः ॥ १

महेश्वर उवाच ।

शृणु वक्ष्यामि हे दुर्गे कवचं परमाद्भुतम् ।
पुरा मह्यं निगदितं गोलोके परमात्मना ॥ २
अतिगुह्यं परं तत्त्वं सर्व्वमन्त्रौघविग्रहम् ।
यद्धृत्वा पठनाद्ब्रह्मा सम्प्राप वेदमातरम् ॥ ३
यद्धृत्वाहं तव स्वामी सर्व्वमातुः सुरेश्वरि ।
नारायणश्च यद्धृत्वा महालक्ष्मीमवाप सः ॥ ४
यद्धृत्वा परमात्मा च निर्गुणः प्रकृतेः परः ।
बभूव शक्तिमान् कृष्णः सृष्टिं स्रष्टुं पुरा विभुः ॥ ५

विष्णुः पाता च यद्धृत्वा सम्प्राप सिन्धुकन्यकाम्।
शेषो बिभर्त्ति ब्रह्माण्डं मूर्ध्नि सर्षपवद्यतः॥ ६
लोमकूपेषु प्रत्येकं ब्रह्माण्डानि महान् विराट्।
बिभर्त्ति धारणाद्यस्य सर्व्वाधारो बभूव सः॥ ७
यद्धारणाच्च पठनाद्धर्म्मः साक्षी च सर्व्वतः।
यद्धारणात् कुवेरश्च धनाध्यक्षश्च भारते॥ ८
इन्द्रः सुराणामीशश्च पठनाद्धारणाद्यतः।
नृपाणां मनुरीशश्च पठनाद्धारणाद्यतः॥ ९
श्रीमांश्चन्द्रश्च यद्धृत्वा राजसूयं चकार सः।
स्वयं सूर्य्यस्त्रिलोकेशः पठनाद्धारणाद्यतः॥ १०
यद्धृत्वा पठनादग्निर्जगत् पूतं करोति च।
यद्धृत्वा वाति वातोऽयं पुनाति भुवनत्रयम्॥ ११
यद्धृत्वा च स्वतन्त्रो हि मृत्युश्चरति जन्तुषु।
त्रिःसप्तकृत्वो निःक्षत्रां चकार च वसुन्धराम्॥ १२
जामदग्न्यश्च रामश्च पठनाद्धारणाद्यतः।
पपौ समुद्रं यद्धृत्वा पठनात् कुम्भसम्भवः॥ १३
सनत्कुमारो भगवान् यद्धृत्वा ज्ञानिनां गुरुः।
जीवन्मुक्तौ च सिद्धौ च नर-नारायणावृषी॥ १४
यद्धृत्वा पठनात् सिद्धो वशिष्ठो ब्रह्मपुत्रकः।
सिद्धेशः कपिलो यस्मात् यस्माद्दक्षः प्रजापतिः॥१५
यस्माद्भृगुश्च मां द्वेष्टि कूर्म्मोऽशेषं बिभर्त्ति च।
सर्व्वाधारो यतो वायुर्वरुणः पवनो यतः॥ १६
ईशानो दिक्पतिश्चैव यमः शास्ता यतः शिवे।
कालः कालाग्निरुद्रश्च संहर्त्ता जगतां यतः॥ १७
यद्धृत्वा गौतमः सिद्धः कश्यपश्च प्रजापतिः।
वसुदेवसुतां प्राप चैकानंशाञ्च तत्कलाम्॥ १८
पुरा स्वजायाविच्छेदे दुर्व्वासा मुनिपुङ्गवः।
सम्प्राप रामः सीताञ्च रावणेन हृतां पुरा॥ १९
पुरा नलश्च सम्प्राप दमयन्तीं यतः सतीम्।
शङ्खचूड़ो महावीरो दैत्यानामीश्वरो यतः॥ २०
वृषो वहति मां दुर्गे यतो हि गरुड़ो हरिम्।
एवं सम्प्राप संसिद्धिं सिद्धाश्च मुनयः पुरा॥ २१
यद्धृत्वा च महालक्ष्मीः प्रदात्री वरसम्पदाम्।
सरस्वती सतां श्रेष्ठा यतः क्रीड़ावती रतिः॥ २२
सावित्री वेदमाता च यतः सिद्धिमवाप्नुयात्।
सिन्धुकन्या मर्त्यलक्ष्मीर्यतो विष्णुमवाप सा॥ २३
यद्धृत्वा तुलसी पूता गङ्गा भुवनपावनी।
यद्धृत्वा सर्व्वशस्याढ्या सर्व्वाधारा वसुन्धरा॥ २४
यद्धृत्वा मनसा देवी सिद्धा च विश्वपूजिता।
यद्धृत्वा देवमाता च विष्णुं पुत्रमवाप सा॥ २५
पतिव्रता च यद्धृत्वा लोपामुद्राप्यरुन्धती।
लेभे च कपिलं पुत्रं देवहूतिर्यतः सती॥ २६
प्रियव्रतोत्तानपादौ सुतौ प्राप च तत्प्रसूः।
तन्माता चापि सम्प्राप त्वां देवीं गिरिजां यतः॥२७
एवं सर्व्वे सिद्धगणाः सर्व्वैश्वर्य्यमवाप्नुयुः।
श्रीजगन्मङ्गलस्यास्य कवचस्य प्रजापतिः॥ २८
ऋषिश्छन्दोऽस्य गायत्री देवी रासेश्वरी स्वयम्।
श्रीकृष्णभक्तिसम्प्राप्तौ विनियोगः प्रकीर्त्तितः॥ २९
शिष्याय कृष्णभक्ताय ब्राह्मणाय प्रकाशयेत्।
शठाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात्॥ ३०
राज्यं देयं शिरो देयं न देयं कवचं प्रिये।
कण्ठे धृतमिदं भक्त्या कृष्णेन परमात्मना॥ ३१
मया दृष्टञ्च गोलोके ब्रह्मणा विष्णुना पुरा।
ॐ राधेति चतुर्थ्यन्तं वह्निजायान्तमेव च॥ ३२
कृष्णेनोपासितो मन्त्रः कल्पवृक्षः शिरोऽवतु।
ॐ ह्रीं श्रीं राधिकाङेऽन्तं वह्निजायान्तमेव च॥३३
कपालं नेत्रयुग्मञ्च श्रोत्रयुग्मं सदाऽवतु।
ॐ रां ह्रीं श्रीं राधिकेति ङेऽन्तं वह्निप्रियान्तकम्॥३४
मस्तकं केशसंघांश्च मन्त्रराजः सदावतु।
रां राधेति चतुर्थ्यन्तं वह्निजायान्तमेव च॥ ३५
सर्व्वसिद्धिप्रदः पातु कपोलं नासिकां मुखम्।
क्लीं ह्रीं कृष्णप्रियाङेऽन्तं कण्ठं पातु नमोऽन्तकम्॥३६
ॐ रां रासेश्वरीङेऽन्तं स्कन्धं पातु नमोऽन्तकम्।
ॐ रां रासविलासिन्यै पृष्ठं पातु सदावतु॥ ३७
वृन्दावनविलासिन्यै स्वाहा वक्षः सदावतु।
तुलसीवनवासिन्यै स्वाहा पातु नितम्बकम्॥ ३८
कृष्णप्राणाधिकाङेऽन्तं स्वाहान्तं प्रणवादिकम्।
पादयुग्मञ्च सर्व्वाङ्गं सन्ततं पातु सर्व्वतः॥ ३९
राधा रक्षतु प्राच्याञ्च वह्नौ कृष्णप्रियावतु।
दक्षे रासेश्वरी पातु गोपीशा नैरृतेऽवतु॥ ४०
पश्चिमे निर्गुणा पातु वायव्ये कृष्णपूजिता।
उत्तरे सन्ततं पातु मूलप्रकृतिरीश्वरी॥ ४१
सर्व्वेश्वरी सदैशान्यां पातु मां सर्व्वपूजिता।
जले स्थले चान्तरीक्षे स्वप्ने जागरणे तथा॥ ४२

महाविष्णोश्च जननी सर्व्वतः पातु सन्ततम्।
कवचं कथितं दुर्गे श्रीजगन्मङ्गलं परम्॥ ४३
यस्मै तस्मै न दातव्यं गूढ़ाद्गूढ़तरं परम्।
तव स्नेहान्मयाख्यातं प्रवक्तव्यं न कस्यचित्॥ ४४
गुरुमभ्यर्च्य विधिवद्वस्त्रालङ्कारचन्दनैः।
कण्ठे वा दक्षिणे बाहौ धृत्वा विष्णुसमो भवेत्॥४५
शतलक्षजपेनैव सिद्धञ्च कवचं भवेत्।
यदि स्यात् सिद्धकवचो न दग्धो वह्निना भवेत्॥४६
एतस्मात् कवचाद्दुर्गे राजा दुर्य्योधनः पुरा।
विशारदो जलस्तम्भे वह्निस्तम्भे च निश्चितम्॥ ४७
मया सनत्कुमाराय पुरा दत्तञ्च पुष्करे।
सूर्य्यपर्व्वणि मेरौ च स सान्दीपनये ददौ॥ ४८
बलाय तेन दत्तञ्च ददौ दुर्य्योधनाय सः।
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः॥ ४९
नित्यं पठति भक्त्येदं तन्मन्त्रोपासकश्च यः।
विष्णुतुल्यो भवेन्नित्यं राजसूयफलं लभेत्॥ ५०
स्नानेन सर्व्वतीर्थानां सर्व्वदानेन यत् फलम्।
सर्व्वतश्चोपवासे च पृथिव्याश्च प्रदक्षिणे॥ ५१
सर्व्वयज्ञेषु दीक्षायां नित्यञ्च सत्यरक्षणे।
नित्यं श्रीकृष्णसेवायां कृष्णनैवेद्यभक्षणे॥ ५२
पाठे चतुर्णां वेदानां यत् फलञ्च लभेन्नरः।
तत् फलं लभते नूनं पठनात् कवचस्य च॥ ५३
राजद्वारे श्मशाने च सिंहव्याघ्रान्विते वने।
दावाग्नौ सङ्कटे चैव दस्युचौरान्विते भये॥ ५४
कारागारे विपद्ग्रस्ते घोरे च दृढ़बन्धने।
व्याधियुक्तो भवेन्मुक्तो धारणात् कवचस्य च॥ ५५
इत्येतत् कथितं दुर्गे तवैवेदं महेश्वरि।
त्वमेव सर्व्वरूपा मां माया पृच्छसि मायया॥ ५६

नारायण उवाच।

इत्युक्त्वा राधिकाख्यानं स्मारं स्मारञ्च माधवम्।
पुलकाञ्चितसर्व्वाङ्गः साश्रुनेत्रो बभूव सः॥ ५७
न कृष्णसदृशो देवो न गङ्गासदृशी सरित्।
न पुष्करसमं तीर्थं नाश्रमो ब्राह्मणात् परः॥ ५८
परमाणुपरं सूक्ष्मं महाविष्णोः परो महान्।
नभःपरञ्च विस्तीर्णं यथा नास्त्येव नारद॥ ५९
तथा न वैष्णवाज्ज्ञानी योगीन्द्रः शङ्करात् परः।
काम-क्रोध-लोभ-मोहा जितास्तेनैव नारद॥ ६०
स्वप्ने जागरणे शश्वत् कृष्णध्यानरतः शिवः।
यथा कृष्णस्तथा शम्भुर्न भेदो माधवेशयोः॥ ६१
यथा शम्भुर्वैष्णवेषु यथा देवेषु माधवः।
तथेदं कवचं वत्स कवचेषु प्रशस्तकम्॥ ६२
शिवेति मङ्गलार्थञ्चैवाकारो दातृवाचकः।
मङ्गलानां प्रदाता यः स शिवः परिकीर्त्तितः॥६३
नराणां सन्ततं विश्वे शं कल्याणं करोति यः।
कल्याणं मोक्षवचनं स एव शङ्करः स्मृतः॥ ६४
ब्रह्मादीनां सुराणाञ्च मुनीनां वेदवादिनाम्।
तेषाञ्च महतां देवो महादेवः प्रकीर्त्तितः॥ ६५
महती पूजिता विश्वे मूलप्रकृतिरीश्वरी।
तस्या देवः पूजितश्च महादेवः स च स्मृतः॥ ६६
विश्वस्थानाञ्च सर्व्वेषां महतामीश्वरः स्वयम्।
महेश्वरञ्च तेनेमं प्रवदन्ति मनीषिणः॥ ६७
हे ब्रह्मपुत्र धन्योऽसि यद्गुरुश्च महेश्वरः।
श्रीकृष्णभक्तिदाता यो भवान् पृच्छति माञ्च किम्॥६८
इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारद-संवादे राधिकोपाख्यानं
नाम षट्पञ्चाशोऽध्यायः॥ ५६॥

---

## सप्तपञ्चाशोऽध्यायः।

नारद उवाच।

सर्व्वाख्यानं श्रुतं ब्रह्मन्नतीव परमाद्भुतम्।
अधुना श्रोतुमिच्छामि दुर्गोपाख्यानमुत्तमम्॥ १
दुर्गा नारायणीशाना विष्णुमाया शिवा सती।
नित्या सत्या भगवती सर्व्वाणी सर्व्वमङ्गला॥ २
अम्बिका वैष्णवी गौरी पार्व्वती च सनातनी।
नामानि कौथुमोक्तानि सर्व्वेषां शुभदायिनी॥ ३
अर्थं षोड़शनाम्नाञ्च सर्व्वेषामीप्सितं वरम्।
ब्रूहि वेदविदां श्रेष्ठ वेदोक्तं सर्व्वसम्मतम्॥ ४
केन वा पूजिता सादौ द्वितीये केन वा पुरा।
तृतीये वा चतुर्थे वा केन सर्व्वत्र पूजिता॥ ५

नारायण उवाच।

अर्थं षोड़शनाम्नाञ्च विष्णुर्वेदे चकार सः।
पुनः पृच्छसि ज्ञात्वा त्वं कथयामि यथागमम्॥ ६
दुर्गो दैत्ये महाविघ्ने भवबन्धे च कर्म्मणि।
शोके दुःखे च नरके यमदण्डे च जन्मनि॥ ७

महाभयेऽतिरोगे चाप्याशब्दो हन्तृवाचकः।
एतान् हन्त्येव या देवी सा दुर्गा परिकीर्त्तिता ॥८
यशसा तेजसा रूपैर्नारायणसमा गुणैः।
शक्तिर्नारायणस्येयं तेन नारायणी स्मृता ॥ ९
ईशानः सर्व्वसिद्धर्थे चाशब्दो दातृवाचकः।
सर्व्वसिद्धिप्रदात्री या सापीशाना प्रकीर्त्तिता ॥ १०
सृष्टा माया पुरा सृष्टौ विष्णुना परमात्मना।
मोहितं मायया विश्वं विष्णुमाया प्रकीर्त्तिता ॥ ११
शिवकल्याणरूपा च शिवदा च शिवप्रिया।
प्रिये दातरि चाशब्दः शिवा तेन प्रकीर्त्तिता ॥ १२
सद्बुद्ध्यधिष्ठातृदेवी विद्यमाना युगे युगे।
पतिव्रता सुशीला या सा सती परिकीर्त्तिता ॥ १३
यथा नित्यो हि भगवान् नित्या भगवती तथा।
स्वमायया तिरोभूता तत्रेशे प्राकृते लये ॥ १४
आब्रह्मस्तम्बपर्य्यन्तं सर्व्वं मिथ्येव कृत्रिमम्।
दुर्गा सत्यस्वरूपा सा प्रकृतिर्भगवान् यथा ॥ १५
सिद्धैश्वर्य्यादिकं सर्व्वं यस्यामस्ति युगे युगे।
सिद्धादिके भगो ज्ञेयस्तेन भगवती स्मृता ॥ १६
सर्व्वान् मोक्षं प्रापयति जन्म-मृत्यु-जरादिकम्।
चराचरांश्च विश्वस्थान् सर्व्वाणी तेन कीर्त्तिता ॥ १७
मङ्गलं मोक्षवचनञ्चाशब्दो दातृवाचकः।
सर्व्वान् मोक्षान् या ददाति सा एव सर्व्वमङ्गला ॥ १८
हर्षे सम्पदि कल्याणे मङ्गलं परिकीर्त्तितम्।
तांस्तु ददाति या देवी सा एव सर्व्वमङ्गला ॥ १९
अम्बेति मातृवचनं वन्दने पूजनेऽपि च।
पूजिता वन्दिता माता जगतां तेन साम्बिका ॥ २०
विष्णुभक्ता विष्णुरूपा विष्णोः शक्तिस्वरूपिणी।
सृष्टौ च विष्णुना सृष्टा वैष्णवी तेन कीर्त्तिता ॥ २१
गौरः पीते च निर्लिप्ते परे ब्रह्मणि निर्म्मले।
तस्यात्मनः शक्तिरियं गौरी तेन प्रकीर्त्तिता ॥ २२
गुरुः शम्भुश्च सर्व्वेषां तस्य शक्तिः प्रिया सती।
गुरुः कृष्णश्च तन्माया गौरी तेन प्रकीर्त्तिता ॥ २३
तिथिभेदे कल्पभेदे पर्व्वभेदे प्रभेदतः।
ख्यातौ तेषु च विख्याता पार्व्वती तेन कीर्त्तिता ॥ २४
महोत्सवविशेषश्च पर्व्वन्निति प्रकीर्त्तितम्।
तस्याधिदेवी या सा च पार्व्वती परिकीर्त्तिता ॥ २५
पर्व्वतस्य सुता देवी साविर्भूता च पर्व्वते।
पर्व्वताधिष्ठातृदेवी पार्व्वती तेन कीर्त्तिता ॥ २६
सर्व्वकाले सना प्रोक्ता विद्यमाने तनोति च।
सर्व्वत्र सर्व्वकाले च विद्यमाना सनातनी ॥ २७
अर्थः षोडशनाम्नाञ्च कीर्त्तितश्च महामुने।
यथागमञ्च वेदोक्तोपाख्यानञ्च निशामय ॥ २८
प्रथमे पूजिता सा च कृष्णेन परमात्मना।
वृन्दावने च सृष्ट्यादौ गोलोके रासमण्डले ॥ २९
मधुकैटभभीतेन ब्रह्मणा सा द्वितीयतः।
त्रिपुरप्रेरितेनैव तृतीये त्रिपुरारिणा ॥ ३०
भ्रष्टश्रिया महेन्द्रेण शापाद्दुर्व्वाससः पुरा।
चतुर्थे पूजिता देवी भक्त्या भगवती सती ॥ ३१
तदा मुनीन्द्रैः सिद्धेन्द्रैर्देवैश्च मुनिपुङ्गवैः।
पूजिता सर्व्वविश्वेषु बभूव सर्व्वतः सदा ॥ ३२
तेजःसु सर्व्वदेवानां साविर्भूता पुरा मुने।
सर्व्वे देवा ददुस्तस्यै शस्त्राणि भूषणानि च ॥ ३३
दुर्गादयश्च दैत्याश्च निहता दुर्गया तया।
दत्तं स्वराज्यं देवेभ्यो वरञ्च यदभीप्सितम् ॥ ३४
कल्पान्तरे पूजिता सा सुरथेन महात्मना।
राज्ञा मेधसशिष्येण मृण्मय्याञ्च सरित्तटे ॥ ३५
मेषादिभिश्च महिषैः कृष्णसारैश्च गण्डकैः।
छागैर्मेषैश्च कुष्माण्डैः पक्षिभिर्बलिभिर्मुने ॥ ३६
वेदोक्तानि च द्रव्याणि समुपचाराणि षोडश।
ध्यात्वा च कवचं धृत्वा सम्पूज्य च विधानतः ॥ ३७
राजा कृत्वा परीहारं वरं प्राप यथेप्सितम्।
मुक्तिं सम्प्राप वैश्यश्च सम्पूज्य च सरित्तटे ॥ ३८
तुष्टाव राजा वैश्यश्च ततः स्थानान्तरं ययौ ॥ ३९
त्यक्त्वा देहञ्च वैश्यश्च पुष्करे दुष्करं तपः।
कृत्वा जगाम गोलोकं दुर्गादेवीवरेण सः ॥ ४०
राजा ययौ स्वराज्यञ्च प्राप्य निष्कण्टकं बली।
भोगञ्च बुभुजे भूपः षष्टिं वर्षसहस्रकम् ॥ ४१
भार्य्यां स्वराज्यं संन्यस्य पुत्रे स कालयोगतः।
मनुर्बभूव सावर्णिस्तप्त्वा च पुष्करे तपः ॥ ४२
इत्येवं कथितं वत्स समासेन यथागमम्।
दुर्गाख्यानं मुनिश्रेष्ठ किं भूयः श्रोतुमिच्छसि ॥ ४३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारद-संवादे दुर्गोपाख्यानं
नाम सप्तपञ्चाशोऽध्यायः ॥५७॥

## अष्टपञ्चाशोऽध्यायः ।

नारद उवाच ।

कस्य वंशोद्भवो राजा सुरथो धर्म्मिणां वरः ।
कथं सम्प्राप ज्ञानञ्च मेधसाज्ज्ञानिनां वरात् ॥ १
कस्य वंशोद्भवो ब्रह्मन् मेधसो मुनिसत्तमः ।
बभूव कुत्र संवादो नृपस्य मुनिना सह ॥ २
बभूव कुत्र साक्षाद्वा सुनीम-नृपवैश्ययोः ।
व्यासेन श्रोतुमिच्छामि वद वेदविदां वर ॥ ३

नारायण उवाच ।

अत्रिश्च ब्रह्मणः पुत्त्रस्तस्य पुत्त्रो निशाकरः ।
स च कृत्वा राजसूयं द्विजराजो बभूव ह ॥ ४
गुरुपत्न्याञ्च तारायां तद्भूव बुधः सुतः ।
बुधपुत्त्रश्च चैत्रश्च तत्पौत्त्रः सुरथश्च सः ॥ ५

नारद उवाच ।

गुरुपत्न्याञ्च तारायां बभूव तत्सुतः कथम् ।
अहो व्यतिक्रमं ब्रूहि वेदस्य च महामुने ॥ ६

नारायण उवाच ।

सम्पन्मत्तो महाकामी ददर्श जाह्नवीतटे ।
तारां सुरगुरोः पत्नीं धर्म्मिष्ठाञ्च पतिव्रताम् ॥ ७
सुस्नातां सुन्दरीं रम्यां पीनोन्नतपयोधराम् ।
सुश्रोणीं सुनितम्बाञ्च मध्यक्षीणां मनोहराम् ॥ ८
सुदतीं कोमलाङ्गीञ्च नवयौवनसंयुताम् ।
सूक्ष्मवस्त्रपरीधानां रत्नभूषणभूषिताम् ॥ ९
कस्तूरीबिन्दुना सार्द्धमधश्चन्दनबिन्दुना ।
सिन्दूरबिन्दुना चारुभालमध्यस्थलोज्ज्वलाम् ॥ १०
वायुनाधोवस्त्रहीनां सकामां वक्रलोचनाम् ।
शरत्पार्व्वणचन्द्रास्यां पक्वबिम्बाधरां वराम् ॥ ११
सस्मितां नम्रवक्त्राञ्च लज्जया चन्द्रदर्शनात् ।
गच्छन्तीं स्वगृहं हर्षाद्गजेन्द्रमन्दगामिनीम् ॥१२
तां दृष्ट्वा मन्मथाक्रान्तश्चन्द्रो लज्जां जहौ मुने ।
पुलकाञ्चितसर्व्वाङ्गः सकामस्तामुवाच ह ॥ १३

चन्द्र उवाच ।

योषिच्छ्रेष्ठे क्षणं तिष्ठ वरिष्ठे रसिकासु च ।
सुविदग्धे विदग्धानां मनो हरसि सन्ततम् ॥ १४
निषेव्य प्रकृतिं जन्मसहस्रकामसागरे ।
तपःफलेन त्वां प्राप वृहच्छ्रोणिं वृहस्पतिः ॥ १५
अहो तपस्विना सार्द्धमविदग्धेन वेधसा ।
योषितां त्वं रसवती प्रशश्वत् कामातुरा वरा ॥ १६
किं वा सुखञ्च विज्ञानामविज्ञेषु समागमे ।
विदग्धाया विदग्धेन सङ्गमः सुखसागरः ॥ १७
कामेन कामिनी लञ्च दग्धासि व्यर्थमीश्वरि ।
कर्म्मणो वात्मदोषाद्वा को जानाति मनः स्त्रियाः १८
दिने दिने वृथा याति दुर्लभं नवयौवनम् ।
नवीनयौवनस्थाया वृद्धेन स्वामिना तव ॥ १९
शश्वत्तपस्यायुक्तः स कृष्णमात्मानमीप्सितम् ।
स्वप्ने जागरणे वापि ध्यायते च वृहस्पतिः ॥ २०
सर्व्वकामरसज्ञा त्वं निकामं काममीप्सितम् ।
कामुकी ध्यायते शश्वद्धु यूनः शृङ्गारमात्मना ॥२१
अन्यश्च लम्नमनःकामो भिन्नं लङ्घ्येरीप्सितम् ।
का प्रीतिः सङ्गमे कान्ते द्वयोर्विषयभिन्नयोः॥ २२
वासन्तीपुष्पतल्पे च गन्धचन्दनचर्च्चिते ।
वसन्ते मां महीला च मोदस्व माधवीवने ॥ २३
निर्ज्जने चन्दनवने सुगन्धिपुष्पचर्च्चिते ।
भवती युवती भाग्यवती तत्रैव मोदताम् ॥ २४
चन्दने चम्पकवने शीतचम्पकवायुना ।
रम्ये चम्पकतल्पे च क्रीडां कुरु मया सह ॥ २५
रम्यायां मलयद्रोण्यां मन्दचन्दनवायुना ।
रामे रम मया सार्द्धमतीवनिर्ज्जने वने ॥ २६
स्वर्णरेखातटवने नर्म्मदापुलिने शुभे ।
सुराणां वाञ्छिते स्थाने रतिं कुरु मया सह ॥२७
इत्युक्त्वा मदनोन्मत्तो मदनाधिकसुन्दरः ।
पपात चरणे देव्या मन्दो मन्दाकिनीतटे ॥२८
निरुद्धमार्गा चन्द्रेण शुष्ककण्ठौष्ठतालुका ।
अभीतोवाच कोपेन रक्तपङ्कजलोचना ॥ २९

तारकोवाच ।

धिग्धिक् त्वां न क्षणं मन्ये परस्त्रीलम्पटं शठम् ।
अत्रेरभाग्यात् त्वं पुत्त्रो व्यर्थं ते जन्म जीवनम् ॥ ३०
अरे कृत्वा राजसूयमात्मानं मन्यसे बली ।
बभूव पुण्यं ते व्यर्थं विप्रस्त्रीषु च यन्मनः ॥ ३१
यस्य चित्तं परस्त्रीषु सोऽशुचिः सर्व्वकर्म्मसु ।
न कर्म्मफलभाक् पापी निन्द्यो विश्वेषु सर्व्वतः ॥३२
हंसि चेन्मे सतीत्वञ्च यक्ष्मग्रस्तो भविष्यसि ।
अत्युच्छ्रितो निपतनं प्राप्नोतीति श्रुतौ श्रुतम् ॥ ३३

दुष्टानां दर्पहा कृष्णो दर्पं ते निहनिष्यति ।
त्यज मां मातरं वत्स यदि ते शं भविष्यति ॥ ३४
इत्युक्त्वा तारका साध्वी रुरोद च मुहुर्मुहुः ।
चकार साक्षिणं धर्म्मं सूर्य्यं वायुं हुताशनम् ॥ ३५
ब्रह्माणं परमात्मानमाकाशं पवनं धराम् ।
दिनं रात्रिञ्च सन्ध्याञ्च सर्व्वं सुरगणं मुने ॥ ३६
तारकावचनं श्रुत्वा न भीतः स चुकोप ह ।
करे धृत्वा रथे तूर्णं स्थापयामास सुन्दरीम् ॥ ३७
रथञ्च चालयामास मनोयायी मनोहरम् ।
मनोहरां गृहीत्वा तां स च रेमे मनोहरम् ॥ ३८
विश्वन्दके सुरसने नन्दने पुष्पभद्रके ।
पुष्करे च नदीतीरे पुष्पिते पुष्पकानने ॥ ३९
सुगन्धिपुष्पतल्पे च पुष्पचन्दनवायुना ।
निर्ज्जने मलयद्रोण्यां स्निग्धचन्दनचर्च्चिते ॥ ४०
शैले शैले नदे नद्यां शृङ्गारं कुर्व्वतोस्तयोः ।
गतं वर्षशतं हर्षान्मुहूर्त्तमिव नारद ॥ ४१
बभूव शरणापन्नो भीतो दैत्येषु चन्द्रमाः ।
तेजस्विनि तथा शुक्रे तेषाञ्च बलिनां गुरौ ॥ ४२
अभयञ्च ददौ तस्मै कृपया भृगुनन्दनः ।
गुरुं जहास देवानां स्वविपक्षं वृहस्पतिम् ॥ ४३
सभायां जहसुर्हृष्टा बलिनो दितिनन्दनाः ।
अभयञ्च ददुस्तस्मै भीताय च कलङ्किने ॥ ४४
सतीसतीत्वध्वंसेन पापानि चन्द्रमण्डले ।
बभूव शशरूपञ्च कलङ्कं निर्म्मले मलम् ॥ ४५
उवाच तं महाभीतं शुक्रो वेदविदां वरः ।
हितं तथ्यं वेदयुक्तं परिणामसुखावहम् ॥ ४६

शुक्र उवाच ।

त्वमहो ब्रह्मणः पौत्रोऽप्यत्रेर्भगवतः सुतः ।
दुर्नीतं कर्म्म ते पुत्र नीचवन्न यशस्करम् ॥ ४७
राजसूयपुण्यफले निर्म्मले कीर्त्तिमण्डले ।
सुधाराशौ सुराबिन्दुरूपमङ्कमुपार्ज्जितम् ॥ ४८
त्यज देवगुरोः पत्नीं प्रसूमिव महासतीम् ।
धर्म्मिष्ठस्य वरिष्ठस्य ब्राह्मणस्य वृहस्पतेः ॥ ४९
शम्भोः सुराणामीशस्य गुरुपुत्रस्य ब्रह्मणः ।
पुत्रस्याङ्गिरसः शश्वज्ज्वलतो ब्रह्मतेजसा ॥ ५०
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ।
इति सद्वंशजातानां स्वभावश्च सतामपि ॥ ५१

न शत्रुर्मे सुरगुरोः परो विश्वे निशाकर ।
तथापि सहजाख्यानं वर्णितं धर्म्मसंसदि ॥ ५२
यत्र लोकाश्च धर्म्मिष्ठास्तत्र धर्म्मः सनातनः ।
यतो धर्म्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥ ५३
गौरेकं पश्च च व्याघ्री सिंही सप्त प्रसूयते ।
हिंसकाः प्रलयं यान्ति धर्म्मो रक्षति धार्म्मिकम् ॥ ५४
देवाश्च गुरवो विप्राः शक्ता यद्यपि रक्षितुम् ।
तथापि नहि रक्षन्ति धर्म्मघ्नं पापिनं जनम् ॥ ५५
कुलटाविप्रपत्नीनां गमने सुरविप्रयोः ।
ब्रह्महत्याषोडशांशपातकञ्च भवेद्ध्रुवम् ॥ ५६
तासामुपस्थितानाञ्च गमने तच्चतुर्थकम् ।
त्यागे धर्म्मो नास्ति पापमित्याह कमलोद्भवः ॥ ५७
विप्रपत्नीसतीनाञ्च गमने च बलेन चेत् ।
ब्रह्महत्याशतं पापं भवेदेव श्रुतौ श्रुतम् ॥ ५८
धर्म्मं चर महाभाग ब्राह्मणीं त्यज साम्प्रतम् ।
कृत्वानुतापं पापाच्च निवृत्तिस्तु महाफला ॥ ५९
उपायेन च ते पापं दूरीभूतं करोम्यहम् ।
शरणागतस्य भीतस्य मयि देवस्य धर्म्मतः ॥ ६०
शक्तहीनञ्च भीतञ्च दीनञ्च शरणागतम् ।
यो न रक्षति धर्म्मिष्ठः कुम्भीपाके वसेद्युगम् ॥ ६१
राजसूयशतानाञ्च रक्षिता लभते फलम् ।
परमैश्वर्य्ययुक्तश्च धर्म्मेण स भवेदिह ॥ ६२
इत्युक्त्वा च दैत्यगुरुः स्वर्गे मन्दाकिनीतटे ।
स्नात्वा तं स्नापयामास विष्णुपूजां चकार सः ॥ ६३
विष्णुपादोदकं पुण्यं तन्नैवेद्यं शुभप्रदम् ।
गङ्गोदकञ्च चन्द्रञ्च भोजयामास पुण्यदम् ॥ ६४
क्रोडे कृत्वा तु तं भीतं लज्जितं पापकर्म्मणा ।
ईषद्धास्य (क) इत्युवाच स्मारं स्मारं हरिं मुने ॥ ६५

शुक्र उवाच ।

यद्यद्य मे तपः सत्यं सत्यं पूजाफलं हरेः ।
सत्यं व्रतफलञ्चैव सत्यं सत्यवचःफलम् ॥ ६६
तीर्थस्नानफलं सत्यं सत्यं दानफलं यदि ।
उपवासफलं सत्यं पापान्मुक्तो भवान् भव ॥ ६७
त्रिसन्ध्यहीनं विप्रञ्च विष्णुपूजाविहीनकम् ।
तं गच्छतु महाघोरं चन्द्रपापं सुदारुणम् ॥ ६८
स्वभार्य्यां वञ्चनं कृत्वा यः प्रयाति परस्त्रियम् ।

(क) कुशहस्त इति पाठान्तरम् ।

स यातु नरकं घोरं चन्द्रपापेण पातकी ॥ ६९
वाचा वा ताड़येत् कान्तं दुःशीला दुर्म्मुखा च या।
सा युगं चन्द्रपापेण यातु लालामुखं ध्रुवम् ॥ ७०
अनैवेद्यं वृथान्नञ्च यश्च भुङ्क्ते हरेर्द्विजः।
स यातु कालसूत्रञ्च चन्द्रपापाच्चतुर्युगम् ॥ ७१
अम्बुवाच्यां भूखननं करोति यो नराधमः।
चन्द्रपापाद्द्युगशतं कालसूत्रं स गच्छतु ॥ ७२
स्वकान्तं वञ्चनं कृत्वा या याति परपूरुषम्।
सा यातु वह्निकुण्डञ्च चन्द्रपापाच्चतुर्युगम् ॥ ७३
कीर्त्तिं करोति रजसा परकीर्त्तिं विलुप्य च।
स युगं चन्द्रपापेण कुम्भीपाकञ्च गच्छतु ॥ ७४
पितरं मातरं भार्य्यां यो न पुष्णाति पातकी।
स्वगुरुं चन्द्रपापेण यातु चाण्डालतां ध्रुवम् ॥ ७५
कुलटान्नमवीरान्नमृतुस्नातान्नमेव च।
योऽश्नाति चन्द्रपापञ्च तं यातु पापिनं ध्रुवम् ॥ ७६
स यातु तेन पापेन कुम्भीपाकं चतुर्युगम्।
तस्मादुत्तीर्य्य चाण्डालीं योनिमाप्नोतु पातकी ॥ ७७
दिवसे यो ग्राम्यधर्म्मं महापापी करोति च।
यो गच्छेत्कामतः कामी गुर्व्विणीं वा रजस्वलाम् ७८
तं यातु चन्द्रपापञ्च महाघोरञ्च पापिनम्।
स यातु तेन पापेन कालसूत्रं चतुर्युगम् ॥ ७९
मुखं श्रोणीं स्तनञ्चापि यः पश्यति परस्त्रियाः।
कामतः कामदग्धश्च तं यातु चन्द्रकल्मषम् ॥ ८०
स यातु लालाभक्षञ्च चन्द्रपापाच्चतुर्युगम्।
तस्मादुत्तीर्य्य भवतु चाण्डालोऽन्धो नपुंसकः ॥ ८१
कुहू-पूर्णेन्दु-संक्रान्त्यां चतुर्द्दश्यष्टमीषु च।
श्राद्धं मसूरं लकुचं यश्च भुङ्क्ते रवेर्दिने ॥ ८२
कुरुते ग्राम्यधर्म्मञ्च तं यातु चन्द्रकिल्बिषम्।
चतुर्युगं कालसूत्रं तेन पापेन गच्छतु ॥ ८३
तस्मादुत्तीर्य्य चाण्डालीं योनिमाप्नोतु पातकी।
सप्तजन्म महारोगी दरिद्रः कुब्ज एव च ॥ ८४
एकादश्याञ्च यो भुङ्क्ते श्रीजन्माष्टमीदिने।
शिवरात्रौ महापापी तं यातु चन्द्रपातकम् ॥ ८५
स यातु कुम्भीपाकञ्च यावदिन्द्राश्चतुर्द्दश।
तेन पापेन प्राप्नोतु चाण्डालीं योनिमेव च ॥ ८६
ताम्रस्थं दुग्धमाध्वीकमुच्छिष्टे घृतमेव च।
नारिकेलोदकं कांस्ये दुग्धं सलवणं तथा ॥ ८७
पीतशेषजलञ्चैव भक्ष्यावशेषमोदनम्।
ओदनं योऽसकृद्भुङ्क्ते सूर्य्ये नास्तं गते द्विजः ॥ ८८
तं यातु चन्द्रपापञ्च दुर्निवारञ्च दारुणम्।
स यातु तेन पापेन चान्धकूपं चतुर्युगम् ॥ ८९
स्वकन्याविक्रयी विप्रो देवलो वृषवाहकः।
शूद्राणां शवदाही च तेषाञ्च सूपकारकः ॥ ९०
अश्वत्थतरुघाती च विष्णु-वैष्णवनिन्दकः।
तं यातु चन्द्रपापञ्च दारुणं पापिनं भृशम् ॥ ९१
स यातु तस्मात् पापाच्च तप्तशूर्म्मीञ्च पातकी।
भस्मदग्धो भवतु स यावदिन्द्राश्चतुर्द्दश ॥ ९२
तस्मादुत्तीर्य्य चाण्डालीं योनिं प्राप्नोतु पातकी।
सप्तजन्म स चाण्डालो वृषश्च जन्मपञ्च च ॥ ९३
गर्द्दभो जन्मशतकं शूकरो जन्मसप्त च।
तीर्थध्वाङ्क्षो जन्मसप्त विट्कृमिर्जन्मपञ्च च ॥
जलौका जन्मशतकं शुचिर्भवतु तत्परम् ॥ ९४
वृथामांसञ्च यो भुङ्क्ते स्वार्थपाकान्नमेव च।
तद्दत्तं महापापी स यातु चन्द्रपातकम् ॥ ९५
स यालनेन पापेन चासीपत्रं चतुर्युगम्।
ततो भवतु सर्पश्च स शुचिः सप्तजन्म च ॥ ९६
विप्रो वार्द्धुषिको यो हि योनिजीवी चिकित्सकः।
हरेर्नाम्नाञ्च विक्रेता यश्च वा स्वाङ्गविक्रयी ॥ ९७
स्वधर्म्मकथकश्चैव यश्च स्वात्मप्रशंसकः।
मसीजीवी धावकश्च कुलटापोष्य एव च ॥ ९८
तं यातु चन्द्रपापञ्च चन्द्रो भवतु विज्वरः।
स यातु तेन पापेन शूलप्रोतं सुदारुणम् ॥ ९९
तत्र विद्धो भवतु स यावदिन्द्राश्चतुर्द्दश।
ततो दरिद्रो रोगी च दीनाहीनो नरः पशुः ॥१००
लाक्षा-मांस-रसानाञ्च तिलानां लवणस्य च।
अश्वानाञ्चैव लौहानां विक्रेता नरघातकः ॥ १०१
चौरश्च विप्रो वर्द्धीशस्तं यातु चन्द्रपातकम्।
स यातु तेन पापेन क्षुरधारं सुदुःसहम् ॥ १०२
तत्र छिन्नो भवतु स यावदिन्द्रसहस्रकम्।
तस्मादुत्तीर्य्य भवतु शृगालः सप्तजन्मसु ॥ १०३
सप्तजन्म च मार्ज्जारो महिषो जन्मपञ्चकम्।
सप्तजन्म च भल्लूकः कुक्कुरः सप्तजन्म च ॥ १०४
मत्स्यश्च (क) जन्मशतकं कर्कटी जन्मपञ्चकम्।

(क) आखुश्चेति पाठान्तरम्।

गोधिका जन्मशतकं गण्डकः सप्तजन्मसु ॥ १०५
सप्तजन्म च मण्डूकस्ततश्च मानवाधमः।
कर्म्मकारश्च रजकस्तैलकारश्च वार्द्धकी ॥ १०६
नाविकः शवजीवी च व्याधश्च स्वर्णकारकः।
कुम्भकारो लौहकारस्ततः चन्द्रस्ततो द्विजः ॥१०७
इति चन्द्रं शुचिं कृत्वा स उवाच तु तारकाम्।
त्यक्त्वा चन्द्रं महासाध्वि गच्छ कान्तमिति द्विज ॥१०८
प्रायश्चित्तं विना पूता त्वमेव शुद्धमानसा।
अकामा या बलिष्ठेन न स्त्री जारेण दुष्यति ॥१०९
इत्येवमुक्त्वा शुक्रश्च चन्द्रश्च तारकां सतीम्।
सस्मितां सस्मितश्चैव चकार च शुभाशिषम् ॥ ११०

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारदसंवादे दुर्गोपाख्यानं नामाष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

## एकोनषष्टितमोऽध्यायः।

नारद उवाच।

वृहस्पतिः किं चकार तारकाहरणान्तरे।
कथं सम्प्राप तां साध्वीं तन्मे व्याख्यातुमर्हसि ॥ १

नारायण उवाच।

दृष्ट्वा विलम्बं ताराया श्रान्त्याश्चापि गुरुः स्वयम्।
प्रस्थापयामास शिष्यमन्वेषणार्थञ्च सत्वरीम् ॥ २
शिष्यो गत्वा स्वर्णदीञ्च सम्प्राप्य लोकवक्त्रतः।
रुदन्नुवाच स गुरुं तारकाहरणं मुने ॥ ३
श्रुत्वा सुरगुरुर्वार्त्तां शशिना च प्रियां हृताम्।
सुचिरं प्राप मूर्च्छाञ्च ततः सम्प्राप चेतनाम् ॥ ४
रुरोदोच्चैः समाश्लिष्य हृदयेन विदूयता।
शोकेन लज्जया विप्रो विललाप मुहुर्मुहुः ॥ ५
उवाच शिष्यान् सम्बोध्य नीतिञ्च श्रुतिसम्मताम्।
साश्रुनेत्रः साश्रुनेत्रान् शोकार्त्तः शोककर्शितान् ॥ ६

वृहस्पतिरुवाच।

हे वत्साः केन शप्तोऽहं न जाने कारणं परम्।
दुःखं धर्म्मविरुद्धो यः स प्राप्नोति न संशयः ॥ ७
यस्य नास्ति सती भार्य्या गृहेषु प्रियवादिनी।
अरण्यं तेन गन्तव्यं यथा रण्यं तथा गृहम् ॥ ८
भावानुरक्ता वनिता हृता यस्य च शत्रुणा।
अरण्यं तेन गन्तव्यं यथा रण्यं तथा गृहम् ॥ ९
सुशीला सुन्दरी भार्य्या गता यस्य गृहाद्बही।
अरण्यं तेन गन्तव्यं यथा रण्यं तथा गृहम् ॥ १०
यस्य माता गृहे नास्ति गृहिणी वा सुहासिता।
अरण्यं तेन गन्तव्यं यथा रण्यं तथा गृहम् ॥ ११
प्रियाहीनं गृहं यस्य पूर्णं द्रविणवस्तुभिः।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ १२
भार्य्याशून्या वनसमाः सभार्य्याश्च गृहा गृहाः।
गृहिणी च गृहं प्रोक्तं न गृहं गृहमुच्यते ॥ १३
अशुचिः स्त्रीविहीनश्च दैवे पैत्र्ये च कर्म्मणि।
यदह्ना कुरुते कर्म्म न तस्य फलभाग्भवेत् ॥ १४
दाहिकाशक्तिहीनश्च यथा मन्दो हुताशनः।
प्रभाहीनो यथा सूर्य्यः शोभाहीनो यथा शशी ॥ १५
शक्तिहीनो यथा जीवो यथा चात्मा तनुं विना।
विनाधारं यथा शेषो यथेशः प्रकृतिं विना ॥ १६
न च शक्तो यथा यज्ञः फलदां दक्षिणां विना।
कर्म्मणाञ्च फलं दातुं सामग्रीं मूलमेव च ॥ १७
विना स्वर्णं स्वर्णकारो यथाऽशक्तः स्वकर्म्मणि।
यथाऽशक्तः कुलालश्च मृत्तिकाञ्च विना द्विजाः ॥१८
तथा गृही न शक्तश्च सन्ततं सर्व्वकर्म्मणि।
भार्य्यामूलाः क्रियाः सर्व्वाः भार्य्यामूला गृहास्तथा ॥१९
भार्य्यामूलं सुखं सर्व्वं गृहस्थानां गृहे सदा।
भार्य्यामूलः सदा हर्षो भार्य्यामूलञ्च मङ्गलम् ॥ २०
भार्य्यामूलश्च संसारो भार्य्यामूलञ्च सौरतम्।
यथा रथश्च रथिनां गृहिणाञ्च तथा गृहम् ॥ २१
सर्व्वरत्नप्रधानञ्च स्त्रीरत्नं दुष्कुलादपि।
गृहीता सा गृहस्थेनेत्येवाह कमलोद्भवः ॥२२
यथा जलं विना पद्मं पद्मं शोभां विना यथा।
तथैव च गृहसुखं गृहिणां गृहिणीं विना ॥ २३
इत्येवमुक्त्वा स गुरुः प्रविवेश मुहुर्मुहुः।
गृहं वहिर्निःससार भूयो भूयः शुचान्वितः ॥ २४
मुहुर्मुहुश्च मूर्च्छाञ्च चेतनां समवाप सः।
भूयो भूयो रुरोदोच्चैः स्मारं स्मारं प्रियागुणम् ॥२५
अथान्तरं महाज्ञानी ज्ञानिभिश्च प्रबोधितः।
सच्छिष्यैर्मुनिभिश्चान्यैः पुरन्दरगृहं ययौ ॥ २६
स गुरुः पूजितस्तेन चातिथ्येन मरुत्वता।
तमुवाच स्ववृत्तान्तं हृदि शल्यमिवाप्रियम् ॥ २७

बृहस्पतिवचः श्रुत्वा रक्तपङ्कजलोचनः।
तमुवाच महेन्द्रश्च कोपप्रस्फुरिताधरः॥ २८

महेन्द्र उवाच।

दूतानाञ्च सहस्रन्तु गच्छन्तु चारकर्म्मणि।
अतीव निपुणं दक्षं तत्त्वप्राप्तिनिमित्तकम्॥ २९
अत्रास्ति पातकी चन्द्रस्तत्राता (क) तारया सह।
गच्छामि तत्र सन्नद्धः सर्व्वैर्द्देवगणैः सह॥ ३०
त्यज चिन्तां महाभाग सर्व्वं भद्रं भविष्यति।
भद्रबीजं दुर्गमिदं कस्य सम्पद्विपद्विना॥ ३१
इत्युक्त्वा च सुनासीरो दूतानाञ्च सहस्रकम्।
तूर्णं प्रस्थापयामास तत्कर्म्मनिपुणं मुने॥ ३२
ते दूताश्च वर्षशतं ययुर्निर्ज्जनमेव च।
सुदुर्लङ्घ्यञ्च विश्वेषु भ्रमित्वा शुक्रमाययुः॥ ३३
चन्द्रञ्च शुक्रभवने तत्पन्नञ्च विज्वरम्।
दृष्ट्वा सतारकं भीतं कथयामासुरीश्वरम्॥ ३४
इति श्रुत्वा सुनासीरो नतवक्त्रं बृहस्पतिम्।
उवाच शोकसन्तप्तो ह्रदयेन विदूयता॥ ३५

महेन्द्र उवाच।

शृणु नाथ प्रवक्ष्यामि परिणामसुखावहम्।
भयं त्यज महाभाग सर्व्वं भद्रं भविष्यति॥ ३६
त्वया न हि जितः शुक्रो न मया दितिनन्दनः।
एतदालोच्य चन्द्रश्च जगाम शरणं कविम्॥ ३७
गच्छ शीघ्रं ब्रह्मलोकमस्माभिः सार्द्धमेव च।
ब्रह्मणा सह यास्यामः कैलासं शङ्करं वरम्॥ ३८
इत्युक्त्वा च महेन्द्रश्च सन्तप्तो गुरुणा सह।
जगाम ब्रह्मलोकञ्च सुखदृश्यं निरामयम्॥ ३९
तत्र दृष्ट्वा च ब्रह्माणं ननाम गुरुणा सह।
प्रोवाच सर्व्ववृत्तान्तं देवानामीश्वरं वरम्॥ ४०
महेन्द्रवचनं श्रुत्वा जहास कमलोद्भवः।
हितं तथ्यं नीतिसारमुवाच विनयान्वितम्॥ ४१

ब्रह्मोवाच।

यो ददाति परस्मै च दुःखमेव च सर्व्वतः।
तस्मै ददाति दुःखञ्च शास्ता कृष्णः सनातनः॥ ४२
अहं स्रष्टा च सृष्टेश्च पाता विष्णुः सनातनः।
तथा रुद्रश्च संहर्त्ता ददाति च शिवं शिवः॥ ४३
निरन्तरं सर्व्वसाक्षी धर्म्मश्च सर्व्वकारणः।
सर्व्वे देवा विषयिणः कृष्णाज्ञापरिपालकाः॥ ४४
बृहस्पतिरुतथ्यश्च सम्वर्त्तश्च जितेन्द्रियः।
त्रयश्चाङ्गिरसः पुत्रा वेदवेदाङ्गपारगाः॥ ४५
सम्वर्त्ताय च शिष्याय न च किञ्चिद्ददौ गुरुः।
स बभूव तपस्वी च ध्यायते कृष्णमीश्वरम्॥ ४६
उतथ्यस्य मध्यमस्य भार्य्याञ्च गुर्व्विणीं सतीम्।
जहार कामतस्ताञ्च भ्रातृजायामकामुकीम्॥ ४७
भ्रातृजायापहारी च मातृगामी भवेन्नरः।
ब्रह्महत्यासहस्रञ्च लभते नात्र संशयः॥ ४८
स याति कुम्भीपाकञ्च यावच्चन्द्रदिवाकरौ।
तस्मादुत्तीर्य्य पापी च विष्ठायां जायते कृमिः॥ ४९
वर्षकोटिसहस्राणि तत्र स्थित्वा च पातकी।
ततो भवेन्महापापी वर्षकोटिसहस्रकम्।
पुंश्चलीयोनिगर्त्ते च कृमिश्चैव पुरन्दर॥ ५०
गृध्रः कोटिसहस्राणि शतजन्मानि कुक्कुरः।
भ्रातृजायापहरणाच्छतजन्मानि शूकरः॥ ५१
यो ददाति न दायञ्च बलिष्ठो दुर्ब्बलाय च।
स याति कुम्भीपाकञ्च यावच्चन्द्रदिवाकरौ॥ ५२
माभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम्॥ ५३
जगद्गुरोः शिवस्यापि गुरुपुत्त्रो बृहस्पतिः।
ज्ञातं करोतु वृत्तान्तमीश्वरं बलिनां वरम्॥ ५४
सर्व्वे समूह्य देवानां सन्नद्धाश्च सवाहनाः।
मध्यस्था मुनयश्चैव तिष्ठन्तु नर्म्मदातटे॥ ५५
पश्चादहञ्च यास्यामि पुण्यञ्च नर्म्मदातटम्।
गुरुस्तद्गुरुपुत्त्रोऽपि शीघ्रं यातु शिवालयम्॥ ५६

महेन्द्र उवाच।

कथं वा वेदकर्त्तुश्च सिद्धानां योगिनां गुरोः।
मृत्युञ्जयस्य शम्भोश्च गुरुपुत्त्रो बृहस्पतिः॥ ५७
अङ्गिरास्तव पुत्त्रश्च तत्पुत्त्रश्च बृहस्पतिः।
त्वत्तो ज्ञानी महादेवः कथं शिष्यो गुरोः पितुः॥ ५८

ब्रह्मोवाच।

कथेयमतिगुप्ता च पुराणेषु पुरन्दर।
इमां पुरा प्रवृत्तिञ्च कथयामि निशामय॥ ५९
मृतवत्सा कर्म्मदोषाद्भार्य्या चाङ्गिरसः पुरा।
व्रतं चकार मद्वाक्यात् कृष्णस्य परमात्मनः॥ ६०
व्रतं पुंसवनं नाम वर्षमेकं चकार सा।

(क) सम्भवेति क्वचित् पाठः।

सनत्कुमारो भगवान् कारयामास तां व्रतम् ॥ ६१
तदागत्य च गोलोकात् परमात्मा कृपामयः।
स्वेच्छामयं परंब्रह्म भक्तानुग्रहविग्रहः ॥ ६२
सुव्रतामनशनक्षीणां तामुवाच कृपानिधिः।
प्रणतां साश्रुनेत्राञ्च विनीताञ्च तया स्तुतः ॥ ६३
श्रीकृष्ण उवाच।
गृहाणेदं व्रतफलं मम तेजःसमन्वितम्।
भुङ्क्ष्व मद्वरपुत्रस्ते भविष्यति मदंशतः ॥ ६४
पतिर्गुरुश्च देवानां बृहतां ज्ञानिनां वरः।
पुत्रस्ते भविता साध्वि मद्वरेण बृहस्पतिः ॥ ६५
मद्वरेण भवेद्वयो हि स च मद्वरपुत्रकः।
त्वद्गर्भे मम पुत्रोऽयं चिरजीवी भविष्यति ॥ ६६
वरजो वीर्य्यजश्चैव क्षेत्रजः पालकस्तथा।
विद्यामन्त्रसुतानाञ्च गृहीता सप्तमः सुतः ॥ ६७
इत्युक्त्वा राधिकानाथः स्वलोकञ्च जगाम सः।
श्रीकृष्णवरपुत्रोऽयं ज्ञानी सुरगुरुः स्वयम् ॥ ६८
मृत्युञ्जयं महाज्ञानं शिवाय प्रददौ पुरा।
दिव्यं वर्षत्रिलक्षञ्च तपश्चक्रे हिमालये ॥ ६९
स्वयोगं ज्ञानमखिलं तेजः स्वात्मसमं परम्।
स्वशक्तिं विष्णुमायाञ्च स्वांशञ्च वाहनं वृषम् ॥ ७०
स्वशूलञ्च स्वकवचं स्वमन्त्रं द्वादशाक्षरम्।
कृपामयः स्तुतस्तेन श्रीकृष्णश्च परात्परः ॥ ७१
शिवलोके शिवा सा च विष्णुमाया शिवप्रिया।
शक्तिर्नारायणस्येयं तेन नारायणी स्मृता ॥ ७२
तेजःसु सर्व्वदेवानां साविर्भूता सनातनी।
जघान दैत्यनिकरं देवेभ्यः प्रददौ पदम् ॥ ७३
कल्पान्ते दक्षकन्या च सा मूलप्रकृतिः सती।
पितृयज्ञे तनुं त्यक्त्वा योगेन शिवयोगिनी ॥ ७४
बभूव शैलकन्या सा साध्वी च भर्त्तृनिन्दया।
कालेन कृष्णतपसा शङ्करं प्राप शङ्करी ॥ ७५
श्रीकृष्णो हि गुरुः शम्भोः परमात्मा परात्परः।
कृष्णस्य वरपुत्रोऽयं स्वयमेव बृहस्पतिः ॥ ७६
अतो हेतोः सुरगुरुर्गुरुपुत्रः शिवस्य च।
इत्येवं कथितं सर्व्वमतिगुह्यं पुरातनम् ॥ ७७
इति प्रधानसम्बन्धः श्रुतश्च कथितो मया।
पारम्परिकमन्यञ्च कथयामि निशामय ॥ ७८
दुर्व्वासा गरुडश्चैव शङ्करांशः प्रतापवान्।
शिष्यौ चाङ्गिरसस्तौ द्वौ गुरुपुत्रोऽथवा ततः ॥ ७९
प्राणाधिकायां सत्याञ्च मृतायां दक्षशापतः।
स्वज्ञानं स्वञ्च भगवान् विसस्मार स्वमोहतः ॥ ८०
स्मरणं कारयामास कृष्णेन प्रेरितोऽङ्गिराः।
अतो हेतोर्गुरुरिव शिवस्य मत्सुतश्च सः ॥ ८१
शीघ्रं गच्छतु कैलासं स्वयमेव बृहस्पतिः।
त्वं गच्छ पुत्र सनन्दः सदेवो नर्म्मदातटम् ॥ ८२
इत्युक्त्वा जगतां धाता विरराम च नारद।
गुरुर्ययौ च कैलासं महेन्द्रो नर्म्मदातटम् ॥ ८३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारद-संवादे दुर्गोपाख्याने एकोनषष्टितमोऽध्यायः ॥५९॥

## षष्टितमोऽध्यायः।

नारद उवाच।
नारायण महाभाग वेदवेदाङ्गपारगं।
निपीतञ्च सुधाख्यानं त्वन्मुखेन्दुविनिःसृतम् ॥ १
अधुना श्रोतुमिच्छामि किमुवाच बृहस्पतिः।
शिवञ्च गत्वा कैलासं दातारं सर्व्वसम्पदाम् ॥ २
जगत्कर्त्ता विधाता च किं वा तं प्रत्युवाच सः।
एतत् सर्व्वं समालोच्य वद वेदविदां वर ॥ ३
नारायण उवाच।
शीघ्रं गत्वा च कैलासं भ्रष्टश्रीः शङ्करं गुरुः।
प्रणम्य तस्थौ पुरतो लज्जामलिनविग्रहः ॥ ४
दृष्ट्वा गुरुसुतं शम्भुरुदतिष्ठत् कुशासनात्।
आलिङ्गनं ददौ तस्मै शीघ्रं मङ्गलमाशिषम् ॥ ५
आसने वासयित्वा च पप्रच्छ कुशलं वचः।
उवाच मधुरं वाक्यं भीतं तं लज्जितं शिवः ॥ ६
शङ्कर उवाच।
कथमेवंविधस्त्वञ्च दुःखी मलिनविग्रहः।
साश्रुनेत्रो लज्जितश्च भीतस्तत्कारणं वद ॥ ७
किं वा तपस्या हीना ते सन्ध्याहीनाथवा मुने।
किं वा श्रीकृष्णसेवा च विहीना दैवदोषतः ॥ ८
किं वा गुरौ भक्तिहीनोऽभीष्टदेवेऽथवा हरौ।
किं वा न रक्षितुं शक्तः प्रपन्नं शरणागतम् ॥ ९
किं वातिथिस्ते विमुखः किं वा पोष्या बुभुक्षिताः।
किं वा स्वतन्त्रा स्त्री सा ते किं वा पुत्रोऽवचस्करः॥१०

स्वगामिनो न शिष्यो वा किं भृत्याश्चोत्तरप्रदाः ।
किं वा ते विमुखा लक्ष्मीः किं वा रुष्टो गुरुस्तव॥११
वशिष्ठश्च वशिष्ठस्य शश्वत्सन्तुष्टमानसः ।
गुरुस्तव वशिष्ठश्च श्रेष्ठः श्रेष्ठः सतामहो ॥ १२
किं वा रुष्टोऽभीष्टदेवः किं वा रुष्टाश्च ब्राह्मणाः ।
किं वा रुष्टा वैष्णवाश्च(क)किं वा ते प्रबलो रिपुः॥१३
किं वा ते बन्धुविच्छेदो विग्रहो बलिना सह ।
किं वा पदं परग्रस्तं किं वा बन्धुधनञ्च वा ॥ १४
केन ते वा कृता निन्दा खलेन पापिना मुने ।
केन वा त्वं परित्यक्तः प्रियेण बान्धवेन वा ॥ १५
बन्धुत्यक्तास्त्वया किं वा वैराग्येण क्षुधाथ वा ।
किं वा तीर्थे न हि स्नानं न दत्तं पुण्यवासरे ॥ १६
गुरुनिन्दा बन्धुनिन्दा खलवक्त्राच्छुताथवा ।
गुरुनिन्दा हि साधूनां मरणादतिरिच्यते ॥ १७
असद्वंशप्रजातानां खलानां निन्दनं सताम् ।
दुःशीलमेवमसतां शश्वन्नारकिणामिह ॥ १८
परप्रशंसकाः सन्तः पुण्यवन्तो हि भारते ।
शश्वन्मङ्गलयुक्ताश्च राजन्ते मनसा सदा ॥ १९
पुत्रे यशसि तोये च सम्पदे च पराक्रमे ।
ऐश्वर्य्ये वा प्रतापे च प्रजा-भूमि-धनेषु च ॥ २०
वचनेषु च बुद्धौ च स्वभावे च पवित्रतः ।
आचारे व्यवहारे च ज्ञायते हृदयं नृणाम् ॥ २१
यादृशं येषाञ्च हृदयं तादृक् तेषाञ्च मङ्गलम् ।
यादृशं येषां पूर्व्वपुण्यं तादृक् तेषाञ्च मानसम् ॥ २२
इत्युक्त्वा च महादेवो विरराम सुरसंसदि ।
तमुवाच महावक्ता स्वयमेव बृहस्पतिः ॥ २३
बृहस्पतिरुवाच ।
अकथ्यमेव वृत्तान्तं कथयामि किमीश्वर ।
लोकाः कर्म्मवशीभूतास्तत् कर्म्म यत् कृतं पुरा॥ २४
स्वकर्म्मणां फलं भुङ्क्ते जन्तुर्जन्मनि जन्मनि ।
न हि नष्टञ्च तत् कर्म्म विना भोगाच्च भारते ॥ २५
सुखं दुःखं भयं शोकं नराणां भारते प्रभो ।
केचिद्वदन्तीति भवेत् स्वकृतेन च कर्म्मणा ॥ २६
केचिद्वदन्ति दैवेन स्वभावेनेति केचन ।
त्रिविधाश्च मता वेदे वेदवेदाङ्गपारगाः ॥ २७
स्वयञ्च कर्म्मजनकस्तत् कर्म्म दैवकारणम् ।
स्वभावो जायते नृणामात्मनः पूर्व्वकर्म्मणः ॥२८
स्वकर्म्मणा च सर्व्वेषां जन्तूनां प्रतिजन्मनि ।
सुखं दुःखं भयं शोकमात्मना च प्रजायते ॥ २९
स्वकर्म्मफलभोक्ता च जीवो हि सगुणः सदा ।
आत्मा भोजयिता साक्षी निर्गुणः प्रकृतेः परः ॥३०
स एवात्मा सर्व्वसेव्यः सर्व्वेषाञ्च फलप्रदः ।
स च सृजति दैवञ्च स्वभावं कर्म्म एव च ॥ ३१
कर्म्मणा च नृणां लज्जा प्रशंसा च प्रफुल्लता ।
लज्जाबीजञ्च वृत्तान्तं तथापि कथयामि ते ॥ ३२
इत्युक्त्वा सर्व्ववृत्तान्तमुवाच तं बृहस्पतिः ।
श्रुत्वा बभूव नम्रास्यो लज्जेशो लज्जया मुने ॥ ३३
जपमाला कराद्भ्रष्टा कोपाविष्टस्य शूलिनः ।
बभूव सद्यः कम्पश्च रक्तपङ्कजलोचनः ॥ ३४
संहर्त्तुरीशो रुद्रस्य विष्णोः पातुः सखा शिवः ।
स्रष्टुः स्वयञ्च मान्यश्च स्वात्मेव परमात्मनः ॥ ३५
निर्गुणस्य च कृष्णस्य प्रकृतीशस्य नारद ।
कोपात् प्रवक्तुमारेभे शुष्ककण्ठौष्ठतालुकः ॥३६
शिव उवाच ।
शिवमस्तु च साधूनां वैष्णवानां सतामिह ।
अवैष्णवानामसतामशिवञ्च पदे पदे ॥ ३७
ददाति वैष्णवेभ्यश्च यो दुःखमुच्छ्रितो जनः ।
श्रीकृष्णस्तस्य संहर्त्ता विघ्नस्तस्य पदे पदे ॥ ३८
अवैष्णवानां हृदयं न हि शुद्धं सदा मलम् ।
श्रीकृष्णमन्त्रस्मरणं मनोनैर्म्मल्यकारणम् ॥ ३९
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः ।
विष्णुमन्त्रोपासनया क्षीयते कर्म्म वै नृणाम् ॥ ४०
अहो श्रीकृष्णदासानां कः स्वभावः सुनिर्म्मलः ।
हृतभार्य्यमुच्छ्रितञ्च न शशाप रिपुं गुरुः ॥ ४१
गुरुर्यस्य वशिष्ठश्च क्रोधहीनश्च धार्म्मिकः ।
हन्तारञ्च पुत्रशतं न शशाप रिपुं मुनिः ॥ ४२
निश्वासेन सुरगुरोर्भ्रातुर्मम बृहस्पतेः ।
भस्मीभूतो निमेषेण शतचन्द्रो भविष्यति ॥ ४३
तथापि तं न शशाप धर्म्मभङ्गभयेन च ।
तपस्या यायते शम्भुः कोपाविष्टस्य नित्यशः ॥ ४४
अहो अत्रेरसत्पुत्रः परस्त्रीलुब्धकः शठः ।
तपस्विनो वैष्णवस्य ब्रह्मपुत्रस्य धर्म्मिणः ॥ ४५
धर्म्मिष्ठा ब्राह्मणः पुत्रा वैष्णवा ब्राह्मणास्तथा ।

(क) बान्धवाश्चेति पाठः क्वाचित्कः ।

केचिद्देवा द्विजा दैत्याः पौत्राश्च विविधा मताः ॥४६
ये सात्त्विका ब्राह्मणास्ते देवा राजर्षिकास्तथा।
दैत्यास्तामसिका रौद्रा बलिष्ठाश्चोद्धताः सदा ॥४७
स्वधर्म्मनिरता विप्रा नारायणपरायणाः।
शैवाः शाक्ताश्च ते देवा दैत्याः पूजाविवर्ज्जिताः ॥४८
मुमुक्षवो विष्णुभक्ता ब्राह्मणा दास्यलिप्सवः।
ऐश्वर्य्यलिप्सवो देवाश्चासुरास्तामसास्तथा ॥ ४९
ब्राह्मणानां स्वधर्म्मश्च कृष्णस्यार्च्चनमीप्सितम्।
निष्कामाणां निर्गुणस्य परस्य प्रकृतेरपि ॥ ५०
ये ब्राह्मणा वैष्णवाश्च स्वतन्त्राः परमं पदम्।
यान्त्यन्योपासकाश्चान्यैः सार्द्धञ्च प्राकृते लये ॥ ५१
वर्णानां ब्राह्मणाः श्रेष्ठाः साधवो वैष्णवा यदि।
विष्णुमन्त्रविहीनेभ्यो द्विजेभ्यः श्वपचो वरः ॥ ५२
परिपक्वा विपक्वा वा वैष्णवाः साधवश्च ये।
सन्ततं पाति तांश्चैव विष्णुचक्रं सुदर्शनम् ॥ ५३
यथा वह्नौ शुष्कतृणं भस्मीभूतं भविष्यति।
तथा पापं वैष्णवेषु तेजस्विषु हुताशवत् ॥ ५४
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविश्यति।
तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥ ५५
पुंसां शतं पितृणाञ्च शतं मातामहस्य च।
सहोदरांश्च जननीमुद्धरन्त्येव वैष्णवाः ॥ ५६
गयायां पिण्डदानेन पिण्डदाः पिण्डभोजिनम्।
समुद्धरन्ति पुंसाञ्च वैष्णवाश्च शतं शतम् ॥ ५७
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः।
यमस्तस्मान्महाभीतो वैनतेयादिवोरगाः ॥ ५८
निष्पुनन्त्येव तीर्थानि गङ्गादीनि च भारते।
कृष्णमन्त्रोपासकाश्च स्पर्शमात्रेण वाक्पते ॥ ५९
पापानि पापिनां तीर्थे यावन्ति प्रभवन्ति च।
नश्यन्ति तानि सर्व्वाणि वैष्णवस्पर्शमात्रतः ॥ ६०
कृष्णमन्त्रोपासकानां रजसा पादपद्मयोः।
सद्यो मुक्ता पातकेभ्यो हृष्टा पूता वसुन्धरा ॥ ६१
वायुश्च पवनो वह्निः सूर्य्यः सर्व्वं पुनाति च।
एते पूता वैष्णवानां स्पर्शमात्रेण लीलया ॥ ६२
अहं सर्व्वश्च शेषश्च धर्म्मः साक्षी च कर्म्मणाम्।
एते हृष्टाश्च वाञ्छन्ति वैष्णवानां समागमम् ॥ ६३
फलं कर्म्मानुरूपेण सर्व्वेषां भारते भवेत्।
न भवेत् तद्वैष्णवे च सिद्धधान्ये यथाङ्कुरः ॥ ६४
हन्ति तेषां कर्म्म पूर्व्वं भक्तानां भक्तवत्सलः।
कृपया स्वपदं तेभ्यो ददात्येव कृपानिधिः ॥ ६५
तेजस्विनाञ्च प्रवरं वैष्णवं भृगुनन्दनम्।
स चन्द्रो दुर्ब्बलो भीतः शुक्रञ्च शरणं ययौ ॥ ६६
सुदर्शनाद्बलिष्ठञ्च शुक्रं जेतुं न शक्तिमान्।
तथापि चोद्धरिष्यामि तारां मन्त्रणया गुरो ॥ ६७
भज सत्यं परंब्रह्म कृष्णमात्मानमीश्वरम्।
सुप्रसन्ने भगवति पत्नीं प्राप्स्यसि लीलया ॥ ६८
मन्त्रं तस्य प्रदास्यामि भ्रातः कल्पतरुं वरम्।
कोटिजन्माघनिघ्नञ्च सर्व्वमङ्गलकारणम् ॥ ६९
शरणं याहि गोविन्दं परमात्मानमीश्वरम् ॥ ७०
तावद्भवेच्छा भोगेच्छा स्त्रीषु स्वेच्छा नृणामिह।
यावद्गुरुमुखाम्भोजान्न प्राप्नोति मनुं हरेः ॥ ७१
सम्प्राप्य दुर्लभं मन्त्रं विष्णुर्हि भवेन्नरः।
इन्द्रत्वममरत्वञ्च न हि वाञ्छन्ति वैष्णवाः ॥ ७२
न हि वाञ्छन्ति मोक्षञ्च दास्यं भक्तिं विना हरेः।
भक्तिनिर्म्मञ्छनं भक्तो न करोति च मोक्षणम् ॥ ७३
ज्ञानं मृत्युञ्जयत्वञ्च सर्व्वसिद्धत्वमीप्सितम्।
वाक्सिद्धत्वञ्च ब्रह्मत्वं भक्तानां न हि वाञ्छितम् ७४
भक्तिं विहाय कृष्णस्य विषयं यो हि वाञ्छति।
विषमत्ति सुधां त्यक्त्वा वञ्चितो विष्णुमायया ॥ ७५
अहं ब्रह्मा च विष्णुश्च धर्म्मोऽनन्तश्च कश्यपः।
कपिलश्च कुमारश्च नरनारायणावृषी ॥ ७६
स्वायम्भुवो मनुश्चैव प्रह्लादश्च पराशरः।
भृगुः शुक्रश्च दुर्व्वासा वशिष्ठः क्रतुरङ्गिराः ॥ ७७
बलिश्च बालिखिल्याश्च वरुणश्च हुताशनः।
वायुः सूर्य्यश्च गरुड़ो दक्षो गणपतिः स्वयम् ॥ ७८
एते परा भक्तवराः कृष्णस्य परमात्मनः।
ये च यस्य कलाः श्रेष्ठास्ते तद्भक्तिपरायणाः ॥ ७९
इत्युक्त्वा शङ्करस्तस्मै ददौ कल्पतरुं मनुम्।
लक्ष्मीमायाकामबीजं ङेऽन्तं कृष्णपदं मुने ॥ ८०
परं पूजाविधानञ्च स्तोत्रञ्च कवचं मुने।
तत्पुरश्चरणं ध्यानं सिद्धे मन्दाकिनीतटे ॥ ८१
गुरुः सम्प्राप्य तं मन्त्रं शङ्कराच्च जगद्गुरोः।
विष्णुर्हि भवाब्धौ च बभूव तमुवाच ह ॥ ८२

बृहस्पतिरुवाच।

आज्ञां कुरु जगन्नाथ यामि तप्तुं हरेस्तपः।

तारा तिष्ठतु तत्रैव न तया मे प्रयोजनम् ॥ ८३
पश्यामि विषतुल्यञ्च सर्व्वं नश्वरमीश्वर ।
श्रीकृष्णं शरणं यामि सत्यं नित्यञ्च निर्गुणम् ॥ ८४
महादेव उवाच ।
परग्रस्तां स्त्रियं त्यक्त्वा न प्रशंस्यं तपो मुने ।
सम्भावितस्य दुश्वर्य्या मरणादितिरिच्यते ॥ ८५
पुरी गच्छ महाभाग तत्रैव नर्म्मदा तटम् ।
यत्र ब्रह्मादयो देवास्तत्राहं यामि सत्वरम् ॥ ८६
शिवस्य वचनं श्रुत्वा ययौ सुरगुरुः स्वयम् ।
आययौ च महाभाग शङ्करो नर्म्मदतटम् ॥ ८७
सगणं शङ्करं दृष्ट्वा प्रसन्नवदनेक्षणम् ।
प्रणेमुर्द्देवताः सर्व्वा मनवो मुनयस्तथा ॥ ८८
ननाम शम्भुः शिरसा विष्णुञ्च कमलोद्भवम् ।
ददतुस्तौ महेशाय प्रेम्णालिङ्गनमाशिषम् ॥ ८९
एतस्मिन्नन्तरे तत्र चागमच्च वृहस्पतिः ।
प्रणनाम महादेवं विष्णुञ्च कमलोद्भवम् ॥ ९०
सूर्य्यं धर्म्ममनन्तञ्च नरं माञ्च मुनीश्वरान् ।
स्वगुरुं पितरं भक्त्या चोवास तत्र संसदि ॥ ९१
सञ्चिन्त्य मनसा युक्तिमुवाच तत्र संसदि ।
स्वयं विष्णुश्च भगवान् ब्रह्माणं चन्द्रशेखरम् ॥ ९२
विष्णुरुवाच ।
(क) युवाञ्च मुनयश्चैव समुद्रपुलिनं त्वरा ।
शुक्रं कश्चिच मध्यस्थं प्रस्थापयितुमर्हसि ॥ ९३
विग्रहेणैव विषमं भविष्यति न संशयः ।
महाशिषा सुरगुरुस्तारां प्राप्स्यति निश्चितम् ॥ ९४
सुरैः स्तुतश्च सन्तुष्टः शुक्राचार्य्यो भविष्यति ।
सुरैः शुक्रश्च न जितः कृष्णचक्रेण रक्षितः ॥ ९५
विप्रुर्बलिष्ठः स्तोत्रेण वशीभूत इति श्रुतिः ।
इत्युक्त्वा जगतां नाथस्तत्रैवान्तरधीयत ॥ ९६
स्ततो ब्रह्मादिभिर्द्देवैः प्रणतैः परिपूजितः ।
गते च जगतां नाथे श्वेतद्वीपञ्च नारद ॥ ९७
चिन्तिताश्च सुराः सर्व्वे विषण्णमानसास्तथा ।
मुनीन् देवांश्च सम्बोध्य ब्रह्मा च तत्र संसदि ॥ ९८
उवाच नीतिसारञ्च सम्मतः शङ्करेण च ॥ ९९
ब्रह्मोवाच ।
मम शम्भोश्च विष्णोश्च धर्म्मस्य सर्व्वसाक्षिणः ।
अस्माकञ्च समः स्नेहो दैत्ये देवे च पुत्रकाः ॥ १००
दैत्यानाञ्च गुरौ शुक्रे प्रपन्नश्च निशाकरः ।
न जितश्च सुरैः शुक्रः पूजितो दितिनन्दनैः ॥ १०१
ताराहेतोरहं यामि शुक्रस्य भवनं सुराः ।
सर्व्वे समुद्रपुलिनं यान्तु विष्णोर्निर्द्देशतः ॥ १०२
इत्युक्त्वा जगतां धाता जगाम शुक्रसन्निधिम् ।
प्रययुर्द्देवता विप्राः समुद्रपुलिनं मुने ॥ १०३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारद-संवादे तारोद्धारण-प्रस्तावे षष्टितमोऽध्यायः ॥ ६०

---

## एकषष्टितमोऽध्यायः ।

नारद उवाच ।
ततः परं किं रहस्यं बभूवासुरदेवयोः ।
श्रोतुमिच्छामि भगवन् परं कौतूहलं मम ॥ १
नारायण उवाच ।
ब्रह्मा जगाम निलयं शुक्रस्य च महात्मनः ।
नानादैत्यगणाकीर्णं रत्नमन्दिरभूषितम् ॥ २
पञ्चाशत्कोटिभिः शिष्यैः परीतं ब्रह्मवादिभिः ।
सप्तभिः परिखाभिश्च वेष्टितं दुर्गमेव च ॥ ३
रक्षितं रक्षकगणैर्द्दैत्यैश्च शतकोटिभिः ।
पद्मरागविरचितैः प्राचीरैः परिशोभितम् ॥ ४
ददर्श जगतां धाता सभायां भृगुनन्दनम् ।
स्तुतं मुनिगणैर्द्दैत्यै रत्नसिंहासनस्थितम् ॥ ५
जपन्तं परमं ब्रह्म कृष्णमात्मानमीश्वरम् ।
शतसूर्य्यप्रभं शश्वज्ज्वलन्तं ब्रह्मतेजसा ॥ ६
दृष्ट्वा पौत्रं प्रभायुक्तं विधाता हृष्टमानसः ।
आत्मानं कृतिनं मेने पुत्रं पौत्रञ्च नारद ॥ ७
दृष्ट्वा पितामहं शुक्रो धातारं जगतां प्रभुम् ।
उत्थाय सहसा भीतः प्रणनाम पुटाञ्जलिः ॥ ८
प्रदाय पूजयामास उपचाराणि षोडश ।
तुष्टाव परया भक्त्या सम्भ्रमेण यथागमम् ॥ ९
विद्यामन्त्रप्रदातारं दातारं सर्व्वसम्पदाम् ।

---

(क) युवाभ्यां प्रार्थ्यमानो हि युवयोश्च स्तवेन च ।
श्वेतद्वीपादागतोऽस्मि परितुष्टः स्तवेन च ॥
शुक्राश्रमसमीपन्तु सर्व्वा गच्छन्तु देवताः '
इतः पूर्व्वमित्यधिकः पाठः क्वाचित्कः ॥

स्वकर्म्मणाञ्च फलदं सर्व्वेषां बिभ्रतो वरम् ॥१०
शुक्रस्य स्तवनेनैव सन्तुष्टो जगतां पतिः।
अवरुह्य रथात् तूर्णमुवास तत्र संसदि ॥ ११
शुक्रेण शिरसा दत्ते रत्नसिंहासने वरे।
तेजसा ज्वलिते रम्ये निर्म्मिते विश्वकर्म्मणा ॥ १२
शुक्रः प्रणम्य ब्रह्माणं कुमारं सनकं क्रतुम्।
वशिष्ठञ्च मरीचिञ्च सनन्दञ्च सनातनम् ॥ १३
कपिलञ्च पञ्चशिखं वोढुमङ्गिरसं मुने।
धर्म्मं माञ्च नरं भक्त्या प्रणनाम पुटाञ्जलिः ॥ १४
प्रत्येकं पूजयामास सादरञ्च यथोचितम्।
सिंहासनेषु रत्नेषु वासयामास धार्म्मिकः ॥ १५
प्रहृष्टवदनाः सर्व्वे प्रणेमुर्दितिनन्दनाः।
ऋषिसङ्घञ्च ब्रह्माणं तुष्टुवुश्च यथागमम् ॥ १६
सर्व्वान् संस्तूय स कविरुवाच च पुटाञ्जलिः।
साश्रुनेत्रः स पुलकः प्रणतो विनयान्वितः ॥ १७

शुक्र उवाच।

अद्य मे सफलं जन्म जीवितञ्च सुजीवितम्।
स्वयं विधाता भगवान् साक्षाद्दृष्टः स्वमन्दिरे ॥ १८
साक्षाद्दृष्टाश्च तत्पुत्रा भगवन्तः सनातनाः।
तुष्टः कृष्णोऽद्य मामेव परमात्मा परात्परः ॥ १९
कृतार्थं कर्त्तुमीशा मां युष्माभिः स्वागतं शिशुम्।
स्वात्मारामेषु कुशलप्रश्न एवविडम्बनम् ॥ २०
पवित्रं कर्त्तुमीशा मां हेतुरागमने च वः।
अपरं ब्रूहि किं वापि शाधि नः करवाम किम् ॥२१

ब्रह्मोवाच।

उद्विग्नश्चिरविच्छेदात् त्वां पौत्रं द्रष्टुमागतः।
विच्छेदः पुत्रपौत्राणां मरणादतिरिच्यते ॥ २२
कुशलं ते मुनिश्रेष्ठ पुत्रयोश्चापि योषितः।
कुशलं ते स्वधर्म्माणां काम्यानां तपसामपि ॥ २३
दिने दिने परिच्छिन्नं श्रीकृष्णार्च्चनमीप्सितम्।
स्वगुरोः सेवनं नित्यमविच्छिन्नं भवेत् तव ॥ २४
गुर्व्विष्टयोः पूजनञ्च सर्व्वमङ्गलकारणम्।
पापाधिरोगशोकघ्नं पुण्यहर्षप्रदं शुभम् ॥ २५
अभीष्टदेवः सन्तुष्टो गुरौ तुष्टे नृणामिह।
इष्टदेवे च सन्तुष्टे सन्तुष्टाः सर्व्वदेवताः ॥ २६
गुरुर्विप्रः सुरो रुष्टो येषां पातकिनामिह।
तेषाञ्च कुशलं नास्ति विघ्नश्चापि पदे पदे ॥ २७
तुष्टश्च सन्ततं वत्स श्रीकृष्णः प्रकृतेः परः।
सर्व्वान्तरात्मा भगवांस्तव भक्त्या च निर्गुणः ॥ २८
तव तुष्टो गुरुरहं विधाता जगतामपि।
मयि तुष्टे हरिस्तुष्टो हरौ तुष्टे तु देवताः ॥ २९
साम्प्रतं शृणु मे हेतुं गमनस्य मुनीश्वर।
प्रेषितस्य सुराणाञ्च विश्वसंहर्त्तुरेव च ॥ ३०
शिवस्य गुरुपुत्रस्य साध्वीं तारां बृहस्पतेः।
अपहृत्य निशानाथस्तवैव शरणागतः ॥ ३१
शम्भुर्धर्म्मश्च सूर्य्यश्च शक्रोऽनन्तश्च पुत्रकाः।
आदित्या वसवो रुद्रा दिक्पालाश्च दिगीश्वराः॥३२
युद्धायातौवसन्नद्धास्तिस्रः कोट्यश्च देवताः।
नागाः किम्पूरुषाश्चैव यक्ष-राक्षस-किन्नराः ॥ ३३
भूताः प्रेताः पिशाचाश्च कुष्माण्डा ब्रह्मराक्षसाः।
किरातश्चैव गन्धर्व्वाः समुद्रपुलिनेऽधुना ॥ ३४
तारकामयसंग्रामे मध्यस्थोऽहं सुतैः सह।
देहि तारां रणं किं वा त्यज चन्द्रञ्च कामिनम् ॥३५

शुक्र उवाच।

आगच्छन्तु सुराः सर्व्वे सन्नद्धा रणदुर्म्मदाः।
योत्स्ये विना महेशञ्च सर्व्वेषाञ्च गुरुं परम् ॥ ३६

दैत्या ऊचुः।

उभयेषां गुरुः शम्भुर्मान्यो वन्द्यश्च सर्व्वदा।
धर्म्मश्च साक्षी सर्व्वेषां त्वमेव च पितामह ॥ ३७
अन्यांश्च तृणतुल्यांश्च न हि मन्यामहे वयम्।
आगच्छन्तु च योत्स्यामो व्रज ब्रूहि जगद्गुरो ॥३८
कृपया गुरुपुत्रस्य यद्यायाति महेश्वरः।
अग्रे नास्त्रं विधास्यामः पश्चान्मोक्ष्यामहे प्रभो ॥ ३९

ब्रह्मोवाच।

कालाग्निरुद्रः संहर्त्ता विश्वस्य बलिनां वरः।
हे वत्सास्तेन सार्द्धञ्च को वा युद्धं करिष्यति ॥ ४०
भद्रकाली जगन्माता खड्ग-खर्परधारिणी।
तया दुरत्यया सार्द्धं को वा युद्धं करिष्यति ॥ ४१
सा सहस्रभुजा देवी मुण्डमाला-विभूषणा।
योजनायतवक्त्रा च दशयोजनविस्तृता ॥ ४२
सप्ततालप्रमाणाश्च यस्या दन्ता भयानकाः।
क्रोशप्रमाणजिह्वा च महालोला भयङ्करी ॥ ४३
अतीवरौद्राः सन्नद्धा भीमाः शङ्करकिङ्कराः।
अतिभीमा भैरवाश्च नन्दी च रणकर्कशः।

शिवस्य पार्षदाः सर्व्वे महाबलपराक्रमाः ॥ ४४
सहस्रमूर्द्धः शेषस्य फणैकैकशकोणतः।
विश्वं सर्षपतुल्यञ्च को वा योद्धा च तत्समः ॥ ४५
कालाग्निरुद्रः संहर्त्ता यस्य यश्चोऽपि किङ्करः।
शूलिनस्त्रिपुरघ्नश्च प्रज्वलन् ब्रह्मतेजसा ॥ ४६
यस्य पाशुपतास्त्रेण दुर्निवार्य्येण पुत्रकाः।
भस्मीभूतं भवेद्विश्वं दैत्यानाञ्चैव का कथा ॥ ४७
यस्य शूलेन भिन्नश्च शङ्खचूड़ः प्रतापवान्।
सुदामा पार्षदवरः कृष्णस्य परमात्मनः ॥ ४८
त्रिकोटिसूर्य्यसदृशस्तेजस्वी परमाद्भुतः।
राधाकवचकण्ठश्च सर्व्वदैत्यजनेश्वरः ॥ ४९
मधुकैटभयोर्हन्ता हिरण्यकशिपोश्च यः।
स च विष्णुः समायाति श्वेतद्वीपात् स च प्रभुः ॥ ५०
इत्युक्त्वा जगतां धाता विरराम च संसदि।
प्रहस्योवाच प्रह्लादो दानवानामपीश्वरः ॥ ५१
प्रह्लाद उवाच।
नमस्तुभ्यं जगद्धातः सर्व्वेषां प्राक्तनेश्वर।
सर्व्वपूज्य सर्व्वनाथ किं वच्मामि तवाग्रतः ॥ ५२
हिरण्यकशिपोर्हन्ता मधुकैटभयोश्च यः।
सकला यस्य कृष्णस्य परिपूर्णतमस्य च ॥ ५३
सर्व्वान्तरात्मनस्तस्य चक्रं नाम सुदर्शनम्।
अस्माकं लोकमस्मांश्च शश्वद्रक्षति दुःसहम् ॥ ५४
ततो न बलवान् शम्भुर्न च पाशुपतं विधे।
न च काली न शेषश्च न च रुद्रादयः सुराः ॥ ५५
यस्य लोमसु विश्वानि निखिलानि जगत्पते।
सर्व्वाधारस्य च विभो स्थूलात् स्थूलतरस्य च ॥५६
षोड़शांशो भगवतः स एव च महाविराट्।
अनन्तो न ततः स्थूलो न काली वृहती ततः ॥ ५७
आगच्छन्तु सुराः सर्व्वे युद्धं कुर्व्वन्तु साम्प्रतम्।
न बिभेमि शरेभ्यश्च न च पाशुपताद्धरात् ॥ ५८
नमस्तस्मै भगवते शिवाय शिवरूपिणे।
नमोऽनन्ताय साधुभ्यो वैष्णवेभ्यः प्रजापते ॥५९
श्रीकृष्णस्य प्रसादेन निर्भयोऽहं निरामयः।
न मे स्वात्मा बलं ब्रह्मंस्तद्बलं यत् प्रभोर्बलम् ॥ ६०
स्वपापेन मृतस्तातो विष्णोश्च विष्णुनिन्दया।
निबन्धाच्छङ्खचूड़श्च दर्पाच्च मधुकैटभौ ॥ ६१
त्रिपुरः किङ्करोऽस्माकं वीरत्वेन न गण्यते।
तथापि प्रेरितस्तेन स रथस्थो महेश्वरः ॥ ६२
इत्युक्त्वा दानवश्रेष्ठो विरराम च संसदि ॥ ६३
ब्रह्मोवाच।
विनाशकारणं युद्धमुभयोर्दैत्य-देवयोः।
सुप्रीताचरणं वत्स सर्व्वमङ्गलकारणम् ॥ ६४
तारां भिक्षां देहि मह्यं भिक्षुकाय च ब्रह्मणे।
विमुखे भिक्षुके राजन् गृहस्थः सर्व्वपापभाक् ॥६५
सनत्कुमार उवाच।
स्वकीर्त्तिं रक्ष राजेन्द्र सिंहस्त्वं सुरदैत्ययोः।
यस्य भिक्षुर्जगद्धाता तस्य कीर्त्तेश्च का कथा ॥ ६६
सनातन उवाच।
न जितश्च सुरेन्द्रैश्च ब्रह्मेशानपुरोगमैः।
रक्षितः कृष्णचक्रेण वैष्णवः पुण्यवान् शुचिः ॥ ६७
सनन्द उवाच।
यस्येष्टदेवः सर्व्वात्मा श्रीकृष्णः प्रकृतेः परः।
गुरुश्च वैष्णवः शुक्रः स च केन जितो महान् ॥६८
सनक उवाच।
पुण्यवान् न जितः केन जितः पापी स्वपातकैः।
पुण्यदीपो न निर्व्वाति पापखड्गेनैव वायुना ॥ ६९
ऋषय ऊचुः।
देहि तारां महाभाग चन्द्रं प्राणाधिकं विधेः।
स्वकीर्त्तिं रक्ष सुचिरं प्रार्थयामः पुनः पुनः ॥ ७०
प्रह्लाद उवाच।
स्थिते महीश्वरे साक्षान्न हि भृत्यो विराजते।
कर्त्तारं ब्रूहि मन्नाथं गुरुं शुक्रं सतां वरम् ॥ ७१
शिष्याणामाधिपत्ये च साधूनां गुरुरीश्वरः।
गुरौ समर्पितं सर्व्वं सर्व्वैश्वर्य्यं मुनीश्वरे ॥ ७२
वयं भृत्याश्च पोष्याश्च स्वगुरोः परिचारकाः।
ते च शिष्याः कुशलिनो कुर्व्वाज्ञां पालयन्ति ये ॥७३
प्रह्लादस्य वचः श्रुत्वा चकार प्रार्थनं कविम्।
ददौ शुक्रश्च तारां तां चन्द्रञ्च मलिनं मुने ॥ ७४
दृष्ट्वा तारां विधुं शुक्रः प्रणनाम विधेः पदे।
नमस्कृत्य मुनिभ्यश्च प्रणतः स्वगुरुं ययौ ॥ ७५
ब्रह्मा ददर्श ताराञ्च प्रणतां स्वपदे सतीम्।
लज्जया नम्रवक्त्राञ्च रुदतीं गुर्व्विणीं मुने ॥ ७६
चन्द्रञ्च प्रणतं धाता क्रोड़े संस्थाप्य मायया।
उवाच मलिनां तारां कातराञ्च कृपामयः ॥ ७७

तारे त्यज भयं मातर्भयं किं ते मयि स्थिते।
सौभाग्ययुक्ता स्वपतेर्भविष्यति वरेण मे॥ ७८
दुर्बला बलिता ग्रस्ता निष्कामा न च या भवेत्।
प्रायश्चित्तेन शुद्धा सा न स्त्री जारेण दुष्यति॥ ७९
सकामा कामतो जारं भजते स्वसुखेन च।
प्रायश्चित्तान्न शुद्धा सा स्वामिना परिवर्ज्जिता॥ ८०
कुम्भीपाके पच्यते सा यावच्चन्द्रदिवाकरौ।
अन्नं विष्ठा जलं मूत्रं स्पर्शनं सर्व्वपापदं॥ ८१
पापीयस्याश्च तस्याश्च साधुभिः परिवर्ज्जितम्।
कस्य गर्भं वद शुभे गच्छ वत्से गुरोर्गृहम्॥ ८२
त्यज लज्जां महाभागे सर्व्वञ्च प्राक्तनाद्भवेत्।
ब्रह्मणो वचनं श्रुत्वा तमुवाच सती तदा।
चन्द्रस्य गर्भं हे तात बिभर्म्मि दैवयोगतः॥ ८३
सर्व्वे मे साक्षिणः सन्ति दुर्बलायाः प्रजापते।
तदा जग्राह चन्द्रो मां दयाहीनश्च दुर्म्मतिः॥ ८४
इत्युक्त्वा तारका देवी सुषाव कनकप्रभम्।
कुमारं सुन्दरं तत्र ज्वलन्तं ब्रह्मतेजसा॥ ८५
गृहीत्वा तनयं चन्द्रो नत्वा ब्रह्माणमीश्वरम्।
जगाम स स्वभवनं ब्रह्मा सिन्धुतटं ययौ॥ ८६
साध्वीं ताराञ्च गुरवे देवेभ्योऽप्यभयं ददौ।
आशिषं शम्भु-धर्म्माभ्यां ब्रह्मलोकं ययौ विधिः॥८७
देवा ययुः स्वभवनं स्वगृहञ्च बृहस्पतिः।
भावानुरक्तवनितां सम्प्राप्य हृष्टमानसः॥ ८८
तारकागर्भसम्भूतः स एव च बुधः स्वयम्।
तेजस्वी सद्गुणी ब्रह्मंश्चन्द्रस्य तनयो महान्॥ ८९
स एव नन्दनवने चित्रां सम्प्राप निर्ज्जने।
घृताच्या गर्भसम्भूतां कुवेरस्य च रेतसा॥ ९०
दृष्ट्वा च निर्ज्जने रम्यां कन्यां कमललोचनाम्।
अतीवयौवनस्थाञ्च बालां द्वादशवार्षिकीम्॥ ९१
गान्धर्व्वेण विवाहेन तां जग्राह विधेः सुत।
तस्यामतीव रहसि वीर्य्याधानं चकार सः॥ ९२
बभूव राजा चित्रायां चैत्रश्च मण्डलेश्वरः।
सप्तद्वीपपतिः पृथ्वी-प्रशास्ता धार्म्मिको बली॥९३
शतनद्यो घृतानाञ्च दध्नो नद्यः शतानि च।
शतानि नद्यो दुग्धानां मधुनद्यश्च षोडश॥ ९४
दश नद्यश्च तैलानां शर्करा लक्षराशयः।
मिष्टान्नानां स्वस्तिकानां लक्षराश्यश्च नित्यशः॥९५
पञ्चकोटिगवां मांसं सपूपं सान्नमेव च।
एतेषाञ्च नदीराशीर्भुञ्जते ब्राह्मणा मुने॥ ९६
गवां लक्षञ्च रत्नानां मणीनां लक्षमेव च।
शतलक्षं सुवर्णानां लक्षञ्च सूक्ष्मवाससाम्॥ ९७
रत्नानां भूषणं पात्रमतीव सुमनोहरम्।
ददौ द्विजातये राजा नित्यञ्च जीवनावधि॥ ९८
तस्य चैत्रस्य पुत्रश्च राजाधिरथ एव च।
तस्य पुत्रश्च सुरथश्चक्रवर्त्ती बृहच्छ्रवाः॥ ९९
महाज्ञानञ्च सम्प्राप्य मेधसो मुनिसत्तमात्।
भेजे पुरा विष्णुमायां पुण्यक्षेत्रे च भारते॥ १००
शरत्काले महापूजां चकार स सरित्तटे।
वैश्येन सार्द्धं स महान् ज्ञानिना मुनिसत्तम॥ १०१
राजा कलिङ्गदेशस्य विराधश्च विशां वरः।
तस्य पुत्रो महायोगी द्रुमिणो ज्ञानिनां वरः॥१०२
द्रुमिणो वैष्णवः प्राज्ञः पुष्करे दुष्करं तपः।
कृत्वा समाधिं सम्प्राप ज्ञानिनं वैष्णवाग्रणीम्॥१०३
पुत्रदारैर्निरस्तश्च धनलोभाद्दुरात्मभिः॥ १०४
स च कोटिसुवर्णञ्च नित्यं दत्त्वा जलं पपौ।
मुक्तिं सम्प्राप संसेव्य विष्णुमायां सनातनीम्॥ १०५
राजा लेभे मनुत्वञ्च राज्यं निष्कण्टकं मुने।
उवाच मधुरं वाक्यं धाता त्रिजगतां पतिः॥ १०६

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारद-संवादे ताराहरणे
एकषष्टितमोऽध्यायः॥ ६१॥

---

## द्विषष्टितमोऽध्यायः।

नारद उवाच।

कथं राजा महाज्ञानं सम्प्राप मुनिसत्तम।
वैश्यो मुक्तिं मेधसाच्च तन्मे व्याख्यातुमर्हसि॥ १

नारायण उवाच।

ध्रुवस्य पौत्रो बलवान् नन्दिरुत्कलनन्दनः।
स्वायम्भुवमनोर्वंशः सत्यवादी जितेन्द्रियः॥ २
अक्षौहिणीनां शतकं गृहीत्वा सैन्यमेव च।
कोलाञ्च वेष्टयामास सुरथस्य महामतेः॥ ३
युद्धं बभूव नियतं पूर्णमब्दञ्च नारद।
चिरजीवी वैष्णवश्च जिगाय सुरथं नृपः॥ ४

एकाकी सुरथो भीतो नन्दिना च बहिष्कृतः ।
निशायां हयमारुह्य जगाम गहनं वनम् ॥ ५
ददर्श तत्र वैश्यञ्च पुष्पभद्रानदीतटे ।
तयोर्बभूव सम्प्रीतिः कृतबान्धवयोर्मुने ॥ ६
वैश्येन सार्द्धं नृपतिर्जगाम मेधसाश्रमम् ।
पुष्करं दुष्करं पुण्य-क्षेत्रञ्च भारते सताम् ॥ ७
ददर्श तत्र नृपतिर्मुनिं तं तीव्रतेजसम् ।
शिष्येभ्यश्च प्रवोचन्तं ब्रह्मतत्त्वं सुदुर्लभम् ॥ ८
राजा ननाम वैश्यश्च शिरसा मुनिपुङ्गवम् ।
मुनिस्तौ पूजयामास ददौ ताभ्यां शुभाशिषम् ॥ ९
प्रश्नं चकार कुशलं जातिं नाम पृथक् पृथक् ।
ददौ प्रत्युत्तरं राजा क्रमेण मुनिपुङ्गवम् ॥ १०

सुरथ उवाच ।

राजाहं सुरथो ब्रह्मंश्चैत्रवंशसमुद्भवः ।
बहिर्भूतः स्वराज्याच्च नन्दिना बलिनाधुना ॥ ११
कमुपायं करिष्यामि कथं राज्यं भवेन्मम ।
तन्मां ब्रूहि महाभाग त्वय्येव शरणागतं ॥ १२
अयं वैश्यः समाधिश्च स्वगृहाच्च बहिष्कृतः ।
पुत्रैः कलत्रैर्दैवेन धनलोभेन धार्म्मिकः ॥ १३
ब्राह्मणाय ददौ नित्यं रत्नकोटिं दिने दिने ।
निषिध्यमानः पुत्रैश्च कलत्रैर्बान्धवैरयम् ॥ १४
कोपान्निराकृतस्तैश्च पुनरन्वेषितः शुचा ।
अयं गृहञ्च न ययौ विरक्तो ज्ञानवान् शुचिः ॥१५
पुत्रांश्च पितृशोकेन गृहं त्यक्त्वा ययुर्वनम् ।
दत्त्वा धनानि विप्रेभ्यो विरक्ताः सर्व्वकर्म्मसु ॥ १६
सुदुर्लभं हरेर्दास्यं वैश्यस्यास्य च वाञ्छितम् ।
कथं प्राप्नोति निष्कामस्तन्मे व्याख्यातुमर्हसि ॥ १७

मेधस उवाच ।

करोति माययाच्छन्नं विष्णुमाया दुरत्यया ।
निर्गुणस्य च कृष्णस्य त्रिगुणा विश्वमायया ॥ १८
कृपां करोति येषां सा धर्म्मिणाञ्च कृपामयी ।
तेभ्यो ददाति कृपया कृष्णभक्तिं सुदुर्लभाम् ॥ १९
येषां मायाविनां माया न करोति कृपां नृप ।
मायया तान् निबध्नाति मोहजालेन दुर्गतान् ॥ २०
नश्वरेऽनित्यसंसारे भ्रमेण वर्व्वराः सदा ।
कुर्व्वन्ति नित्यबुद्धिञ्च विहाय परमेश्वरम् ॥ २१
देवमन्यं निषेवन्ते तन्मन्त्रञ्च जपन्ति च ।
मिथ्या किञ्चिन्निमित्तञ्च कृत्वा मनसि लोभतः ॥ २२
हरेः कला देवताश्च निषेव्य जन्मसप्त च ।
तदा प्रकृत्याः कृपया सेवन्ते प्रकृतिं तदा ॥ २३
निषेव्य विष्णुमायाञ्च सप्तजन्म कृपामयीम् ।
शिवे भक्तिं लभन्ते ते ज्ञानानन्दे सनातने ॥ २४
ज्ञानाधिष्ठातृदेवञ्च निषेव्य शङ्करं हरेः ।
अचिराद्विष्णुभक्तिञ्च प्राप्नुवन्ति महेश्वरात् ॥ २५
सेवन्ते सगुणं सत्त्वं विष्णुं विषयिणः सदा ।
सत्त्वज्ञानाच्च पश्यन्ति ज्ञानञ्च निर्म्मलं नराः ।।२६
निषेव्य सगुणं विष्णुं सात्त्विकं वैष्णवा नराः ।
लभन्ते निर्गुणे भक्तिं श्रीकृष्णे प्रकृतेः परे ॥ २७
कुर्व्वन्ति ग्रहणं सन्तो मन्त्रं तस्य निरामयम् ।
निषेव्य निर्गुणं देवं ते जपन्ति च निर्गुणाः ॥ २८
असंख्यब्रह्मणः पातं ते च पश्यन्ति वैष्णवाः ।
दास्यं कुर्व्वन्ति सततं गोलोके च निरामये ॥ २९
कृष्णभक्तात् कृष्णमन्त्रं यो गृह्णाति नरोत्तमः ।
पुरुषाणां सहस्रञ्च स्वपितॄणां समुद्धरेत् ॥ ३०
मातामहानां पुरुष-सहस्रं मातरं तथा ।
दासादिकं समुद्धृत्य गोलोकं स प्रयाति च ॥ ३१
भवार्णवे महाघोरे कर्णधारस्वरूपिणी ।
पारं करोति दुर्गा तान् कृष्णभक्त्या च नौकया ॥३२
स्वकर्म्मबन्धनं छेत्तुं वैष्णवानाञ्च वैष्णवी ।
तीक्ष्णशस्त्रस्वरूपा सा कृष्णस्य परमात्मनः ॥ ३३
विवेचना चावरणी शक्तेः शक्तिर्द्विधा नृप ।
पूर्व्वां ददाति भक्ताय चेतराय परां परा ॥३४
सत्यस्वरूपः श्रीकृष्णस्तस्मात् सर्व्वञ्च नश्वरम् ।
बुद्धिर्विवेचनेत्येवं वैष्णवानां सतामपि ॥ ३५
नित्यरूपा ममेयं श्रीरिति चावरणी च धीः ।
अवैष्णवानामसतां कर्म्मभोगभुजामहो ॥ ३६
अहं प्रचेतसः पुत्रः पौत्रश्च ब्रह्मणो नृप ।
भजामि कृष्णमात्मानं ज्ञानं सम्प्राप्य शङ्करात् ॥ ३७
गच्छ राजन् नदीतीरं भज दुर्गां सनातनीम् ।
बुद्धिमावरणीं तुभ्यं देवी दास्यति कामिने ॥ ३८
निष्कामाय च वैश्याय वैष्णवाय च वैष्णवी ।
बुद्धिं विवेचनां शुद्धां दास्यत्येव कृपामयी ॥ ३९
इत्युक्त्वा च मुनिश्रेष्ठो ददौ ताभ्यां कृपानिधिः ।
पूजाविधानं दुर्गायाः स्तोत्रञ्च कवचं मनुम् ॥ ४०

वैश्यो मुक्तिञ्च सम्प्राप तां निषेव्य कृपामयीम्।
राजा राज्यं मनुलञ्च परमैश्वर्य्यमीप्सितम्॥ ४१
इत्येवं कथितं सर्व्वं दुर्गोपाख्यानमुत्तमम्।
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि॥ ४२

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारद-संवादे दुर्गोपाख्याने सुरथ-मेधस-संवादे द्विषष्टितमोऽध्यायः॥ ६२॥

---

## त्रिषष्टितमोऽध्यायः।

नारद उवाच।

नारायण महाभाग वद वेदविदां वर।
राजा केन प्रकारेण सिषेवे प्रकृतिं पराम्॥ १
समाधिर्नाम वैश्यो वा निष्कामं निर्गुणं विभुम्।
भेजे केन प्रकारेण प्रकृतेरुपदेशतः॥ २
किं वा पूजाविधानञ्च ध्यानं वा मनुमेव च।
किं स्तोत्रं कवचं किं वा ददौ राज्ञे महामुनिः॥ ३
तस्मै वैश्याय प्रकृतिः किं वा ज्ञानं ददौ परम्।
साक्षाद्बभूव सहसा केन वा प्रकृतिस्तयोः॥ ४
ज्ञानं सम्प्राप्य वैश्यश्च किं पदं प्राप दुर्लभम्।
गतिर्बभूव राज्ञश्च का वा ताश्च शृणोम्यहम्॥ ५

नारायण उवाच।

राजा मन्त्रञ्च सम्प्राप वैश्यश्च मेधसान्मुने।
स्तोत्रञ्च कवचं देव्या ध्यानञ्चैव पुरस्क्रियाम्॥ ६
जजाप परमं मन्त्रं राजा वैश्यश्च पुष्करे।
स्नात्वा त्रिकालं वर्षञ्च ततः सिद्धो बभूव सः॥ ७
साक्षाद्बभूव तत्रैव मूलप्रकृतिरीश्वरी।
राज्ञे ददौ राज्यवरं मनुलं वाञ्छितं सुखम्॥ ८
ज्ञानं निगूढं वैश्याय ददौ चातिसुदुर्लभम्।
यद्दत्तं शूलिने पूर्व्वं कृष्णेन परमात्मना॥ ९
निराहारमतिक्लिष्टं दृष्ट्वा वैश्यं कृपामयी।
सरोद कृत्वा क्रोड़े तमचेष्टं श्वासवर्ज्जितम्॥ १०
चेतनं कुरु भो वत्सेत्युच्चार्य्य च पुनः पुनः।
चेतनाञ्च ददौ तस्मै स्वयं चैतन्यरूपिणी॥ ११
सम्प्राप्य चेतनां वैश्यो रुरोद प्रकृतेः पुरः।
तमुवाच प्रसन्ना सा कृपयातिकृपामयी॥ १२

प्रकृतिरुवाच।

वरं वृणुष्व हे वत्स यत् ते मनसि वर्त्तते।
ब्रह्मत्वममरत्वं वा ततो वातिसुदुर्लभम्॥ १३
इन्द्रत्वं वा मनुत्वं वा सर्व्वसिद्धित्वमेव च।
तुच्छं तुभ्यं न दास्यामि नश्वरं बालवञ्चनम्॥ १४

वैश्य उवाच।

ब्रह्मत्वममरत्वं वा मातर्मे न हि वाञ्छितम्।
ततोऽतिदुर्लभं किं वा न जाने तदभीप्सितम्॥ १५
त्वय्येव शरणापन्नो देहि यद्वाञ्छितं तव।
अनश्वरं सर्व्वसारं वरं मे दातुमर्हसि॥ १६

प्रकृतिरुवाच।

अदेयं नास्ति मे तुभ्यं दास्यामि मम वाञ्छितम्।
यतो यास्यसि गोलोकं पदमेव सुदुर्लभम्॥ १७
सर्व्वसारञ्च यज्ज्ञानं सुरर्षीणां सुदुर्लभम्।
तद्गृहीतं महाभाग गच्छ वत्स हरेः पदम्॥ १८
स्मरणं वन्दनं ध्यानमर्च्चनं गुणकीर्त्तनम्।
श्रवणं भावनं सेवा सर्व्वं कृष्णे निवेदनम्॥ १९
एतदेव वैष्णवानां नवधा भक्तिलक्षणम्।
जन्म-मृत्यु-जरा-व्याधि-यमताड़नखण्डनम्॥ २०
आयुर्हरति लोकानां रविरेव हि सन्ततम्।
नवधा भक्तिहीनाना-मसतां पापिनामपि॥ २१
भक्तास्तद्गतचित्ताश्च वैष्णवाश्चिरजीविनः।
जीवन्मुक्ताश्च निष्पापा जन्मादिपरिवर्ज्जिताः॥ २२
शिवः शेषश्च धर्म्मश्च ब्रह्मा विष्णुर्महान् विराट्।
सनत्कुमारः कपिलः सनकश्च सनन्दनः॥ २३
वोढ़ः पञ्चशिखो दक्षो नारदश्च सनातनः।
भृगुर्मरीचिर्दुर्व्वासाः कश्यपः पुलहोऽङ्गिराः॥ २४
मेधसो लोमशः शुक्रो वशिष्ठः क्रतुरेव च।
बृहस्पतिः कर्द्दमश्च शक्तिरत्रिः पराशरः॥ २५
मार्कण्डेयो बलिश्चैव प्रह्लादश्च गणेश्वरः।
यमः सूर्य्यश्च वरुणो वायुश्चन्द्रो हुताशनः॥ २६
अकूपार उलूकश्च-नाड़ीजङ्घश्च वायुजः।
नरनारायणौ कूर्म्म इन्द्रद्युम्नो विभीषणः॥ २७
नवधा भक्तियुक्ताश्च कृष्णस्य परमात्मनः।
एते महान्तो धर्म्मिष्ठा भक्तानां प्रवरास्तथा॥ २८
ये तद्भक्तास्ते तदंशा जीवन्मुक्ताश्च सन्ततम्।
पापापहाश्चास्तीर्थानां पृथिव्याश्च विशाम्पते॥ २९

ऊर्द्ध्वे च सप्त स्वर्गाश्च सप्तद्वीपा वसुन्धरा।
अधः सप्त च पाताला एतद्ब्रह्माण्डमेव च ॥ ३०
एवंविधानां विश्वानां संख्या नास्त्येव पुत्रक।
एवञ्च प्रतिविश्वेषु ब्रह्मविष्णुशिवादयः ॥ ३१
देवा देवर्षयश्चैव मनवो मानवादयः।
सर्व्वायिमाश्च सर्व्वत्र सन्ति वहाश्च मायया ॥ ३२
महाविष्णोर्लोमकूपे सन्ति विश्वानि यस्य च।
स षोड़शांशः कृष्णस्य चात्मनश्च महाविराट् ॥ ३३
भज सत्यं परंब्रह्म नित्यं निर्गुणमच्युतम्।
प्रकृतेः परमीशानं कृष्णमात्मानमीप्सितम् ॥ ३४
निरीहञ्च निराकारं निर्व्विकारं निरञ्जनम्।
निष्कामं निर्व्विरोधञ्च नित्यानन्दं सनातनम् ॥ ३५
स्वेच्छामयं सर्व्वरूपं भक्तानुग्रहविग्रहम्।
तेजःस्वरूपं परमं दातारं सर्व्वसम्पदाम् ॥ ३६
ध्यानासाध्यं दुराराध्यं शिवादीनाञ्च योगिनाम्।
सर्व्वेश्वरं सर्व्वपूज्यं सर्व्वज्ञं सर्व्वकामदम् ॥ ३७
सर्व्वाधारञ्च सर्व्वज्ञं सर्व्वानन्दकरं परम्।
सर्व्वधर्म्मप्रदं सर्व्वं सर्व्वज्ञं प्राणरूपिणम् ॥ ३८
सर्व्वधर्म्मस्वरूपञ्च सर्व्वकारणकारणम्।
सुखदं मोक्षदं सारं पाररूपञ्च भक्तिदम् ॥ ३९
दास्यदं धर्म्मदञ्चैव सर्व्वसिद्धिप्रदं सताम्।
सर्व्वं तदतिरिक्तञ्च नश्वरं कृत्रिमं सदा ॥ ४०
परात्परतरं शुद्धं परिपूर्णतमं शिवम्।
यथासुखं गच्छ वत्स भगवन्तमधोक्षजम् ॥ ४१
कृष्णेति द्व्यक्षरं मन्त्रं गृहाण कृष्णदास्यदम्।
पुष्करं दुष्करं गत्वा दशलक्षमिमं जप ॥ ४२
दशलक्षजपेनैव मन्त्रसिद्धिर्भवेत् तव।
इत्युक्त्वा सा भगवती तत्रैवान्तरधीयत ॥ ४३
वैश्यो नत्वा च तां भक्त्या जगाम पुष्करं मुने।
पुष्करे दुष्करं तप्त्वा सम्प्राप कृष्णमीश्वरम्।
भगवत्याः प्रसादेन कृष्णदासो बभूव सः ॥ ४४

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-नारद-संवादे दुर्गोपाख्याने सुरथ-मेधस-संवादे-त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

## चतुःषष्टितमोऽध्यायः।

नारायण उवाच।

राजा येन क्रमेणैव भेजे तां प्रकृतिं पराम्।
तत् श्रूयतां महाभाग वेदोक्तं क्रममेव च ॥ १
स्नात्वाचम्य महाराज कृत्वा न्यासत्रयं तदा।
स्वकराङ्गाङ्गमन्त्राणां भूतशुद्धिं चकार सः ॥ २
प्राणायामं ततः कृत्वा कृत्वा च स्वाङ्गशोधनम्।
ध्यात्वा देवीञ्च मृण्मय्यां चकारावाहनं तदा ॥ ३
पुनर्ध्यात्वा च भक्त्या च पूजयामास भक्तितः।
देव्याश्च दक्षिणे भागे संस्थाप्य कमलालयाम् ॥ ४
सम्पूज्य भक्तिभावेन भक्त्या परमधार्म्मिकः।
देवषट्कं समावाह्य देव्याश्च पुरतो घटे ॥ ५
भक्त्या च पूजयामास विधिपूर्व्वञ्च नारद।
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम् ॥ ६
देवषट्कञ्च सम्पूज्य नमस्कृत्य विचक्षणः।
तदा ध्यायेन्महादेवीं ध्यानेनानेन भक्तितः ॥ ७
ध्यानञ्च सामवेदोक्तं परं कल्पतरुं मुने।
ध्यायेन्नित्यं महादेवीं मूलप्रकृतिमीश्वरीम् ॥ ८
ब्रह्म-विष्णु-शिवादीनां पूज्यां वन्द्यां सनातनीम्।
नारायणीं विष्णुमायां वैष्णवीं विष्णुभक्तिदाम् ॥ ९
सर्व्वस्वरूपां सर्व्वेषां सर्व्वाधारां परात्पराम्।
सर्व्वविद्या-सर्व्वमन्त्र-सर्व्वशक्तिस्वरूपिणीम् ॥ १०
सगुणां निर्गुणां सत्यं वरां स्वेच्छामयीं सतीम्।
महाविष्णोश्च जननीं कृष्णस्यार्द्धाङ्गसम्भवाम् ॥ ११
कृष्णप्रियां कृष्णशक्तिं कृष्णबुद्ध्यधिदेवताम्।
कृष्णस्तुतां कृष्णपूज्यां कृष्णवन्द्यां कृपामयीम् ॥ १२
तप्तकाञ्चनवर्णाभां कोटिसूर्य्यसमप्रभाम्।
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकातराम् ॥ १३
दुर्गां शतभुजां देवीं महादुर्गतिनाशिनीम्।
त्रिलोचनप्रियां साध्वीं त्रिगुणाञ्च त्रिलोचनाम् ॥ १४
त्रिलोचनप्राणरूपां शुद्धार्द्धचन्द्रशेखराम्।
बिभ्रतीं कवरीभारं मालतीमाल्यशोभितम् ॥ १५
वर्त्तुलं वामवक्त्रञ्च यन्मोमानसमोहनम्।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम् ॥ १६
नासादक्षिणभागेन बिभ्रतीं गजमौक्तिकम्।
अमूल्यरत्नवल्लीं बिभ्रतीं श्रवणोपरि ॥ १७

मुक्तापङ्क्तिविनिन्दैक-दन्तपङ्क्तिसुशोभनाम्।
पक्वविम्बाधरोष्ठीञ्च सुप्रसन्नां सुमङ्गलाम्॥ १८
चित्रपत्रावलीरम्य-कपोलयुगलोज्ज्वलाम्।
रत्नकेयूरवलय-रत्नमञ्जीररञ्जिताम्॥ १९
रत्नकङ्कणभूषाढ्यां रत्नपाशकशोभिताम्।
रत्नाङ्गुरीयनिकरैः कराङ्गुलिचयोज्ज्वलाम्॥ २०
पदाङ्गुलिनखासक्ता-लक्तरेखासुशोभनाम्।
वह्निशुद्धांशुकाधानां गन्धचन्दनचर्च्चिताम्॥ २१
बिभ्रतीं स्तनयुग्मञ्च कस्तूरीचित्रशोभितम्।
सर्व्वरूपगुणवतीं गजेन्द्रमन्दगामिनीम्॥ २२
अतीवकान्तां शान्ताञ्च नीतान्तां योगसिद्धिषु।
विधातुश्च विधात्रीञ्च सर्व्वधात्रीञ्च शङ्करीम्॥ २३
शरत्पार्व्वणचान्द्रास्या-मतीवसुमनोहराम्।
कस्तूरीविन्दुभिः सार्द्धमधश्चन्दनविन्दुना॥ २४
सिन्दूरविन्दुना शश्व-द्भालमध्यस्थलोज्ज्वलाम्।
परं मध्याह्नकमलप्रभामोचनलोचनाम्॥ २५
चारुकज्जलरेखाभ्यां सर्व्वतश्च समुज्ज्वलाम्।
कोटिकन्दर्पलावण्य-लीलानिन्दितविग्रहाम्॥ २६
रत्नसिंहासनस्थाञ्च सद्रत्नमुकुटोज्ज्वलाम्।
सृष्टौ स्रष्टुः शिल्परूपां दयां पातुश्च पालने॥२७
संहारकाले संहर्त्तुः परां संहाररूपिणीम्।
निशुम्भशुम्भमथिनीं महिषासुरमर्द्दिनीम्॥ २८
पुरा त्रिपुरयुद्धे च संस्तुतां त्रिपुरारिणा।
मधुकैटभयोर्युद्धे विष्णुशक्तिस्वरूपिणीम्॥ २९
सर्व्वदैत्यनिहन्त्रीञ्च,रक्तवीजविनाशिनीम्।
नृसिंहशक्तिरूपाञ्च हिरण्यकशिपोर्वधे॥ ३०
वराहशक्तिं वाराहीं हिरण्याक्षवधे तथा।
परब्रह्मस्वरूपाञ्च सर्व्वशक्तिं सदा भजे॥ ३१
इति ध्यात्वा स्वशिरसि पुष्पं दत्त्वा विचक्षणः।
पुनर्ध्यात्वा चैव कुर्य्याद्दुर्गामावाहनान्ततः॥ ३२
प्रकृतेः प्रतिमां धृत्वा मन्त्रमेवं पठेन्नरः।
जीवन्यासं ततः कुर्य्यान्मनुनानेन यत्नतः॥ ३३
एह्येहि भगवत्यम्ब शिवलोकात् सनातनि।
गृहाण मम पूजाञ्च शारदीयां सुरेश्वरि॥ ३४
इहागच्छ जगत्पूज्ये तिष्ठ तिष्ठ महेश्वरि।
हे मातरस्यामर्च्चायां सन्निरुद्धा भवाम्बिके॥ ३५
इहागच्छन्तु त्वत्प्राणाश्चाधःप्राणैः सहाच्युते।
इहागच्छन्तु त्वरितं तवैव सर्व्वशक्तयः॥ ३६
ओं ह्रीं श्रीं क्लीं च दुर्गायै वह्निजायान्तमेव च।
समुच्चार्य्यौरसि प्राणाः सन्तिष्ठन्तु सदाशिवे॥३७
सर्व्वेन्द्रियाधिदेवास्ते इहागच्छन्तु चण्डिके।
इहागच्छन्तु ते शक्तय इहागच्छतु ईश्वरः॥ ३८
इत्यावाह्य महादेवीं परिहारं करोति च।
मन्त्रेणानेन विप्रेन्द्र तं शृणुष्व समाहितः॥ ३९
स्वागतं भगवत्यम्ब शिवलोकाच्छिवप्रिये।
प्रसादं कुरु मां भद्रे भद्रकालि नमोऽस्तु ते॥ ४०
धन्योऽहं कृतकृत्योऽहं सफलं जीवनं मम।
आगतासि यतो दुर्गे माहेश्वरि मदालयम्॥ ४१
अद्य मे सफलं जन्म सार्थकं जीवनं मम।
पूजयामि यतो दुर्गां पुण्यक्षेत्रे च भारते॥ ४२
भारते भारतीं पूज्यां दुर्गां यः पूजयेद्बुधः।
सोऽन्ते याति च तल्लोकं परमैश्वर्य्यवानिह॥ ४३
कृत्वा च वैष्णवीपूजां विष्णुलोकं व्रजेत् सुधीः।
माहेश्वरीञ्च सम्पूज्य शिवलोकञ्च गच्छति॥ ४४
सात्त्विकी तामसी चैव त्रिधा पूजा च राजसी।
भगवत्याश्च वेदोक्ता चोत्तमा मध्यमाधमा॥ ४५
सात्त्विकी वैष्णवानाञ्च शाक्तादीनाञ्च राजसी।
अदीक्षितानामसतां वन्यानां तामसी स्मृता॥ ४६
जीवहत्याविहीना या वरा पूजा च वैष्णवी।
वैष्णवा यान्ति गोलोकं वैष्णवी वरदानतः॥ ४७
माहेश्वरी राजसी च बलिदानसमन्विता।
शाक्ताद्यो राजसाश्च कैलासं यान्ति ते तथा॥ ४८
किराता नरकं यान्ति तामस्या पूजया तथा॥ ४९
त्वमेव जगतां मातश्चतुर्व्वर्गफलप्रदा।
सर्व्वशक्तिस्वरूपा च कृष्णस्य परमात्मनः॥ ५०
जन्म-मृत्यु-जरा-व्याधिहरा त्वञ्च परात्परा।
सुखदा मोक्षदा भद्रा कृष्णभक्तिप्रदा सदा॥ ५१
नारायणि महाभागे दुर्गे दुर्गतिनाशिनि।
दुर्गेति स्मृतिमात्रेण याति दुर्गं नृणामिह॥ ५२
इति कृत्वा परीहारं देव्या वामे च साधकः।
त्रिपद्या उपरिष्टात्तु कुर्य्याच्च शङ्खस्थापनम्॥ ५३
तत्र दत्त्वा जलं पूर्णं दूर्व्वां पुष्पञ्च चन्दनम्।
धृत्वा दक्षिणहस्तेन मन्त्रमेवं पठेन्नरः॥ ५४
शङ्खस्त्वं पुण्यशङ्खानां मङ्गलानाञ्च मङ्गलः।

प्रभवः शङ्खचूडास्तः पुरा कल्पे पवित्रकः ॥ ५५
ततोऽर्घ्यपात्रं संस्थाप्य विधिनानेन पण्डितः।
दत्त्वा सम्पूजयेद्देवीमुपचारेण षोड़श ॥ ५६
त्रिकोणमण्डलं कृत्वा सजलेन कुशेन च।
कूर्म्मं शेषं धरित्रीञ्च सम्पूज्य तत्र धार्म्मिकः ॥ ५७
त्रिपदीं स्थापयेत्तत्र त्रिपद्यां शङ्खमेव च।
शङ्खे त्रिभागतोयञ्च दत्त्वा सम्पूजयेत् ततः ॥ ५८
गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्म्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥५९
सगरेखे कनखले पारिभद्रे च गण्डकि।
श्वेतगङ्गे चन्द्ररेखे पम्पे चम्पे च गोमति ॥ ६०
पद्मावतीति पर्णाशे विपाशे विरजे शुभे।
शतद्रु्दे मन्दाकिनि (क) जलेऽस्मिन् सन्निधिं कुरु॥६१
वह्निं सूर्य्यञ्च विष्णुञ्च गणेशं वरुणं शिवम्।
पूजयेत् तत्र तोये च तुलस्या चन्दनेन च।
नैवेद्यानि च सर्व्वाणि प्रोक्षयेत् तज्जलेन च ॥ ६२
ततो दद्याच्च प्रत्येकमुपचाराणि षोड़श।
आसनं वसनं पाद्यं स्नानीयमनुलेपनम् ॥ ६३
मधुपर्कमर्घ्यगन्धौ पुष्पं नैवेद्यमीप्सितम्।
पुनराचमनीयञ्च ताम्बूलं रत्नभूषणम्।
धूपं प्रदीपं तल्पञ्चेत्युपचाराणि षोड़श ॥ ६४
अमूल्यरत्ननिर्म्माणं नानाचित्रविराजितम्।
वरं सिंहासनश्रेष्ठं गृह्यतां शङ्करप्रिये ॥ ६५
अतन्तुसूत्रप्रभवमीश्वरेच्छाविनिर्म्मितम्।
ज्वलदग्निविशुद्धञ्च वसनं गृह्यतां शिवे ॥ ६६
अमूल्यरत्नपात्रस्थं निर्म्मलं जाह्नवीजलम्।
पादप्रक्षालनार्थाय दुर्गे पाद्यं प्रगृह्यताम् ॥ ६७
सुगन्ध्यामलकीस्निग्धद्रवमेव सुदुर्लभम्।
सुपक्वं विष्णुतैलञ्च गृह्यतां परमेश्वरि ॥ ६८
कस्तूरीकुङ्कुमाक्तञ्च सुगन्धिचन्दनद्रवम्।
सुवासितं जगन्मातर्गृह्यतामनुलेपनम् ॥ ६९
माध्वीकं रत्नपात्रस्थं सुपवित्रं सुमङ्गलम्।
मधुपर्कं महादेवि गृह्यतां प्रीतिपूर्व्वकम् ॥ ७०
वृक्षभेदमूलचूर्णं गन्धद्रव्यसमन्वितम्।
सुपवित्रं मङ्गलार्हं देवि गन्धं गृहाण मे ॥ ७१
पवित्रशङ्खपात्रस्थं दूर्व्वा-पुष्पाक्षतान्वितम्।
स्वर्गमन्दाकिनीतोयमर्घ्यं चण्डि गृहाण मे ॥ ७२
सुगन्धिपुष्पश्रेष्ठञ्च पारिजाततरूद्भवम्।
मालत्यादिपुष्पमाल्यं गृह्यतां जगदम्बिके ॥ ७३
दिव्यं सिद्धान्नमामान्नं पिष्टकं पायसादिकम्।
मिष्टान्नं लड्डुकफलं नैवेद्यं गृह्यतां शिवे ॥ ७४
सुवासितं शीततोयं कर्पूरादिसुसंस्कृतम्।
मया निवेदितं भक्त्या गृह्यतां शैलकन्यके ॥ ७५
गुवाकपर्णचूर्णञ्च कर्पूरादिसुवासितम्।
सर्व्वभोगवरं रम्यं ताम्बूलं देवि गृह्यताम् ॥ ७६
अत्यमूल्यरत्नसार-निर्म्माणमीश्वरेच्छया।
सर्व्वाङ्गशोभनकरं भूषणं देवि गृह्यताम् ॥ ७७
तरुनिर्यासचूर्णञ्च गन्धवस्तुसमन्वितम्।
हुताशनशिखाशुद्धं धूपं देवि गृहाण मे ॥ ७८
दिव्यरत्नविशेषञ्च सान्द्रध्वान्तनिराकृतम्।
सुपवित्रं प्रदीपञ्च गृहाण परमेश्वरि ॥ ७९
रत्नसारविनिर्म्माणं दिव्यपर्य्यङ्कमुत्तमम्।
सूक्ष्मवस्त्रसमाकीर्णं देवि तल्पं प्रगृह्यताम् ॥ ८०
एवं सम्पूज्य तां दुर्गां दद्यात् पुष्पाञ्जलिं मुने।
ततोऽष्टनायिका देव्या यत्नतः परिपूजयेत् ॥ ८१
उग्रचण्डां प्रचण्डाञ्च चण्डोग्रां चण्डनायिकाम्।
अतिचण्डाञ्च चामुण्डां चण्डां चण्डवतीं तथा ॥ ८२
पद्मे चाष्टदले चैताः प्रागादिक्रमतस्ततः।
पञ्चोपचारैः सम्पूज्य भैरवान्मध्यदेशतः ॥ ८३
आदौ महाभैरवञ्च संहारभैरवं तथा।
असिताङ्गभैरवञ्च रुरुभैरवमेव च ॥ ८४
ततः कालभैरवञ्च क्रोधभैरवमेव च।
ताम्रचूड़ं चन्द्रचूड़मन्ते च भैरवद्वयम् ॥ ८५
एतान् सम्पूज्य मध्ये च नव शक्तीश्च पूजयेत्।
तत्र पद्मे चाष्टदले मध्ये च भक्तिपूर्व्वकम् ॥ ८६
वैष्णवीञ्चैव ब्रह्माणीं रौद्रीं माहेश्वरीं तथा।
नारसिंहीञ्च वाराहीमिन्द्राणीं कार्त्तिकीं तथा ॥ ८७
सर्व्वशक्तिस्वरूपाञ्च प्रधानां सर्व्वमङ्गलाम्।
नव शक्तीश्च सम्पूज्य घटे देवांश्च पूजयेत् ॥ ८८
शङ्करं कार्त्तिकेयञ्च सूर्य्यं सोमं हुताशनम्।
वायुञ्च वरुणञ्चैव देव्याश्चेटीं वटुं तथा ॥ ८९
चतुःषष्टियोगिनीश्च सम्पूज्य विधिपूर्व्वकम्।
यथाशक्ति बलिं दत्त्वा करोति स्तवनं बुधः ॥ ९०

(क) श्वेतगङ्गे इति क्वचित् पाठः।

कवचञ्च गले बद्ध्वा पठित्वा भक्तिपूर्व्वकम् ।
ततः कृत्वा परीहारं नमस्कुर्य्याद्विचक्षणः ॥ ९१
बलिदानविधानञ्च श्रूयतां मुनिसत्तम ।
मायातिं महिषं छागं दद्यान्मेषादिकं शुभम् ॥ ९२
सहस्रवर्षं सुप्रीता दुर्गा मायातिदानतः ।
महिषेण वर्षशतं दशवर्षञ्च छागलात् ॥ ९३
वर्षं मेषेण कुष्माण्डैः पक्षिभिर्हरिणैस्तथा ।
दशवर्षं कृष्णसारैः सहस्राब्दञ्च गण्डकैः ॥ ९४
कृत्रिमैः पिष्टनिर्म्माणैः षण्मासं पशुभिस्तथा ।
मासं सुकासादिफलैरक्षतैरिति नारद ॥ ९५
युवकं व्याधिहीनञ्च सशृङ्गं लक्षणान्वितम् ।
विशुद्धमविकाराङ्गं सुवर्णं पुष्टमेव च ॥ ९६
शिशुना बलिना दातुर्हन्ति पुत्रञ्च चण्डिका ।
वृद्धेनैव गुरुजनं कृशेन बान्धवंस्तथा ॥ ९७
धनञ्चैवाधिकाङ्गेन हीनाङ्गेन प्रजां तथा ।
कामिनीं शृङ्गभङ्गेन काणेन भ्रातरंस्तथा ॥ ९८
षष्टिकेन भवेन्मृत्युर्विप्रञ्च चित्रमस्तके ।
हतं मित्रं ताम्रपृष्ठे भ्रष्टश्रीः पुच्छहीनतः ॥ ९९
मायातीनाञ्च निर्णीतं श्रूयतां मुनिसत्तम ।
वक्ष्याम्यथर्व्ववेदोक्तं फलहानिर्व्यतिक्रमे ॥ १००
पितृ-मातृ-विहीनञ्च युवकं व्याधिहीनकम् ।
विवाहितं दीक्षितञ्च परदारविहीनकम् ॥ १०१
अजारकं विशुद्धञ्च सत्शूद्रं मूलकं वरम् ।
तद्बन्धुभ्यो धनं दत्त्वा क्रीतं मूल्यातिरेकतः ॥ १०२
स्नापयित्वा च तं धर्म्मी सम्पूज्य वस्त्रचन्दनैः ।
माल्यैर्धूपैश्च सिन्दूरैर्दधि-गोरोचनादिभिः ॥ १०३
तञ्च वर्षं भ्रामयित्वा चरद्वारेण यत्नतः ।
वर्षान्ते च समुत्सृज्य दुर्गायै तं निवेदयेत् ॥ १०४
अष्टमी-नवमीसन्धौ दद्यान्मायातिमेव च ।
इत्येवं कथितं सर्व्वं बलिदानप्रसङ्गतः ॥ १०५
बलिं दत्त्वा च स्तुत्वा च धृत्वा च कवचं बुधः ।
प्रणम्य दण्डवद्भूमौ दद्याद्विप्राय दक्षिणाम् ॥ १०६

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारद-संवादे दुर्गोपाख्याने
चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः ।

नारद उवाच ।

श्रुतं सर्व्वं महाभाग सुधारसपरं वरम् ।
स्तोत्रञ्च कवचं पूजां फलं कालं वद प्रभो ॥ १

नारायण उवाच ।

आर्द्रायां बोधयेद्देवीं मूलेनैव प्रवेशयेत् ।
उत्तरेणार्च्चनं कृत्वा श्रवणायां विसर्ज्जयेत् ॥ २
आर्द्रायुक्तनवम्यान्तु कृत्वा देव्याश्च बोधनम् ।
पूजायाः शतवाजिक्याः फलमाप्नोति मानवः ॥ ३
मूलायान्तु प्रवेशेन नरमेधफलं लभेत् ।
उत्तरे पूजनं कृत्वा वाजपेयफलं लभेत् ॥ ४
कृत्वा विसर्ज्जनं देव्याः श्रवणायाञ्च मानवः ।
लक्ष्मीञ्च पुत्रपौत्राणां लभते नात्र संशयः ॥ ५
भुवः प्रदक्षिणं पुण्यं पूजायां लभते नरः ।
नक्षत्रहीने वर्षे चेत् पार्व्वत्याश्चैव नारद ॥ ६
नवम्यां बोधनं कृत्वा पक्षं सम्पूज्य मानवः ।
अश्वमेधफलं लब्ध्वा दशम्याञ्च विसर्ज्जयेत् ॥ ७
सप्तम्यां पूजनं कृत्वा बलिं दद्याद्विचक्षणः ।
अष्टम्यां पूजनं शस्तं बलिदानविवर्ज्जितम् ॥ ८
अष्टम्यां बलिदानेन विपत्तिर्जायते नृणाम् ।
दद्याद्विचक्षणो भक्त्या नवम्यां विधिवद्बलिम् ॥ ९
बलिदानेन विप्रेन्द्र दुर्गाप्रीतिर्भवेन्नृणाम् ।
हिंसाजन्यञ्च पापञ्च लभते नात्र संशयः ॥ १०
उत्सर्गकर्त्ता दाता च छेत्ता पोष्टा च रक्षकः ।
अग्रपश्चान्निबद्धा च सप्तैते वधभागिनः ॥ ११
यो यं हन्ति स तं हन्ति चेति वेदोक्तमेव च ।
कुर्व्वन्ति वैष्णवीपूजां वैष्णवास्तेन हेतुना ॥ १
एवं सम्पूज्य सुरथः पूर्णं वर्षञ्च भक्तितः ।
कवचञ्च गले बद्ध्वा तुष्टाव परमेश्वरीम् ॥ १३
स्तोत्रेण परितुष्टा सा तस्य साक्षाद्बभूव ह ।
स ददर्श पुरो देवीं ग्रीष्मसूर्य्यसमप्रभाम् ॥ १४
तेजःस्वरूपां परमां सगुणां निर्गुणां वराम् ।
दृष्ट्वा तां कमनीयाञ्च तेजोमण्डलमध्यतः ॥ १५
स्वेच्छामयीं कृपारूपां भक्तानुग्रहकातराम् ।
पुनस्तुष्टाव राजेन्द्रो भक्तिनम्रात्मकन्धरः ॥ १६
स्तवेन परितुष्टा सा सस्मिता भक्तिपूर्व्वकम् ।

उवाच सत्यं राजेन्द्रं कृपया जगदम्बिका ॥ १७
प्रकृतिरुवाच ।
साक्षात् सम्प्राप्य मां राजन् वृणोषि विभवं वरम् ।
ददामि तुभ्यं विभवं साम्प्रतं वाञ्छितं तव ॥ १८
निर्जित्य सर्व्वान् शत्रूंश्च लभ राज्यमकण्टकम् ।
भविष्यसि महाराज सावर्णिरष्टमो मनुः ॥ १९
ददामि तुभ्यं ज्ञानञ्च परिणामे नराधिप ।
भक्तिं दास्यञ्च परमे श्रीकृष्णे परमात्मनि ॥ २०
वृणोति विभवं यो हि साक्षान्मां प्राप्य मन्दधीः ।
मायया वञ्चितः सोऽपि विषमत्यामृतं त्यजेत् ॥ २१
ब्रह्मादिस्तम्बपर्य्यन्तं सर्व्वं नश्वरमेव च ।
नित्यं सत्यं परंब्रह्म कृष्णं निर्गुणमच्युतम् ॥ २२
ब्रह्म-विष्णु-शिवादीनामहमाद्या परात्परा ।
सगुणा निर्गुणा चापि वरा स्वेच्छामयी सदा ॥२३
नित्यानित्या सर्व्वरूपा सर्व्वकारणकारणा ।
बीजरूपा च सर्व्वेषां मूलप्रकृतिरीश्वरी ॥२४
पुण्ये वृन्दावने रम्ये गोलोके रासमण्डले ।
राधा प्राणाधिकाहञ्च कृष्णस्य परमात्मनः ॥ २५
अहं दुर्गा विष्णुमाया बुद्ध्यधिष्ठातृदेवता ।
अहं लक्ष्मीश्च वैकुण्ठे स्वयं देवी सरस्वती ॥ २६
सावित्री वेदमाताहं ब्रह्माणी ब्रह्मलोकतः ।
अहं गङ्गा च तुलसी सर्व्वाधारा वसुन्धरा ॥ २७
नानाविधाहं कलया मायया सर्व्वयोषितः ।
साहं कृष्णेन सृष्टा च भ्रूभङ्गलीलया नृप ॥ २८
भ्रूभङ्गलीलया सृष्टो येन पुंसा महाविराट् ।
यस्य लोम्नाञ्च कूपेषु विश्वानि सन्ति नित्यशः ॥ २९
असंख्यानि च तान्येव कृत्रिमाणि च मायया ।
अनित्येषु नित्यबुद्धिं सर्व्वे कुर्व्वन्ति सन्ततम् ॥ ३०
सप्तसागरसंयुक्ता सप्तद्वीपा वसुन्धरा ।
तदधः सप्त पातालाः सप्त लोकाश्च तत्परे ॥ ३१
एवं विश्वञ्च निर्म्माणं ब्रह्माण्डं ब्रह्मणावृतम् ।
प्रत्येकं सर्व्वब्रह्माण्डे ब्रह्म-विष्णु-शिवादयः ॥ ३२
सर्व्वेषामीश्वरः कृष्ण इति ज्ञानं परात्परम् ।
वेदानाञ्च व्रतानाञ्च तीर्थानां तपसां तथा ॥ ३३
देवानाञ्चैव पुण्यानां सारः कृष्ण इति स्मृतः ।
तद्भक्तिहीनो यो मूढः स च जीवन्मृतो ध्रुवम् ॥ ३४
पवित्राणि च तीर्थानि तद्भक्तस्पर्शवायुना ।
तन्मन्त्रोपासकश्चैव जीवन्मुक्त इति स्मृतः ॥ ३५
मन्त्रग्रहणमात्रेण नरो नारायणो भवेत् ।
विना जपेन तपसा विना तीर्थेन पूजया ॥ ३६
मातामहानां शतकं पितृणाञ्च सहस्रकम् ।
पुंसामेवं समुद्धृत्य गोलोकं स च गच्छति ॥ ३७
इदं ज्ञानं सारभूतं कथितं ते नराधिप ।
मन्वन्तरान्ते भोगान्ते भक्तिं दास्यामि ते हरौ ॥३८
नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम् ॥ ३९
अहं यमनुगृह्णामि तस्मै दास्यामि निर्म्मलाम् ।
निश्चलां सुदृढां भक्तिं श्रीकृष्णे परमात्मनि ॥ ४०
करोमि वञ्चनां यं यं तेभ्यो दास्यामि सम्पदम् ।
प्रातःस्वप्नस्वरूपाञ्च मिथ्येतिभ्रमरूपिणीम् ॥ ४१
इति ते कथितं ज्ञानं गच्छ वत्स यथा सुखम् ।
इत्युक्त्वा च महादेवी तत्रैवान्तरधीयत ॥ ४२
राजा सम्प्राप्य राज्यञ्च नत्वा तां प्रययौ गृहम् ।
इति ते कथितं वत्स दुर्गोपाख्यानमुत्तमम् ॥ ४३

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारद-संवादे दुर्गोपाख्याने
प्रकृति-सुरथ-संवादे ज्ञानकथनं
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः ।

नारद उवाच ।
श्रुतं सर्व्वं नावशिष्टं किञ्चिदेव हि निश्चितम् ।
प्रकृतेः कवचं स्तोत्रं ब्रूहि मे मुनिसत्तम ॥ १
नारायण उवाच ।
पुरा स्तुता सा गोलोके कृष्णेन परमात्मना ।
सम्पूज्य मधुमासे च प्रीतेन रासमण्डले ॥ २
मधुकैटभयोर्युद्धे द्वितीये विष्णुना पुरा ।
तत्रैव काले सा दुर्गा ब्रह्मणा प्राणसङ्कटे ॥ ३
चतुर्थे संस्तुता देवी भक्त्या च त्रिपुरारिणा ।
पुरा त्रिपुरयुद्धे च महाघोरतरे मुने ॥ ४
पञ्चमे संस्तुता देवी वृत्रासुरवधे तथा ।
शक्रेण सर्व्वदेवैश्च घोरे च प्राणसङ्कटे ॥ ५
तदा मुनीन्द्रैर्मनुभिर्मानवैः सुरथादिभिः ।

संस्तुता पूजिता सा च कल्पे कल्पे परात्परा ॥ ६
स्तोत्रञ्च श्रूयतां ब्रह्मन् सर्व्वविघ्नविनाशनम् ।
सुखदं मोक्षदं सारं भवाब्धिपारकारणम् ॥ ७

श्रीकृष्ण उवाच ।

त्वमेव सर्व्वजननी मूलप्रकृतिरीश्वरी ।
त्वमेवाद्या सृष्टिविधौ स्वेच्छया त्रिगुणात्मिका ॥ ८
कार्य्यार्थे सगुणा त्वञ्च वस्तुतो निर्गुणा स्वयम् ।
परब्रह्मस्वरूपा त्वं सत्यानित्या सनातनी ॥ ९
तेजःस्वरूपा परमा भक्तानुग्रहविग्रहा ।
सर्व्वस्वरूपा सर्व्वेशा सर्व्वाधारा परात्परा ॥ १०
सर्व्ववीजस्वरूपा च सर्व्वपूज्या निराश्रया ।
सर्व्वज्ञा सर्व्वतो भद्रा सर्व्वमङ्गलमङ्गला ॥ ११
सर्व्वबुद्धिस्वरूपा च सर्व्वशक्तिस्वरूपिणी ।
सर्व्वज्ञानप्रदा देवी सर्व्वज्ञा सर्व्वभाविनी ॥ १२
त्वं स्वाहा देवदाने च पितृदाने स्वधा स्वयम् ।
दक्षिणा सर्व्वदाने च सर्व्वशक्तिस्वरूपिणी ॥ १३
निद्रा त्वञ्च दया त्वञ्च तृष्णा त्वञ्चात्मनश्च मे ।
क्षुत्क्षान्तिःशान्तिरीशा च कान्तिःसृष्टिश्चशाश्वती१४
श्रद्धा पुष्टिश्च तन्द्रा च लज्जा शोभा दया सदा ।
सतां सम्पत्स्वरूपा च विपत्तिरसतामिह ॥ १५
प्रीतिरूपा पुण्यवतां पापिनां कलहाङ्कुरा ।
शश्वत्कर्म्ममयी शक्तिः सर्व्वदा सर्व्वजीविनाम् ॥ १६
देवेभ्यः स्वपदं दात्री धातुर्धात्री कृपामयी ।
हिताय सर्व्वदेवानां सर्व्वासुरविनाशिनी ॥ १७
योगनिद्रा योगरूपा योगधात्री च योगिनी ।
सिद्धिस्वरूपा सिद्धानां सिद्धिदा सिद्धयोगिनी ॥ १८
माहेश्वरी च ब्रह्माणी विष्णुमाया च वैष्णवी ।
भद्रदा भद्रकाली च सर्व्वलोकभयङ्करी ॥ १९
ग्रामे ग्रामे ग्रामदेवी गृहदेवी गृहे गृहे ।
सतां कीर्त्तिः प्रतिष्ठा च निन्दा त्वमसतां सदा ॥ २०
महायुद्धे महामारी दुष्टसंहाररूपिणी ।
रक्षास्वरूपा शिष्टानां मातेव हितकारिणी ॥ २१
वन्द्या पूज्या स्तुता त्वञ्च ब्रह्मादीनाञ्च सर्व्वशः ।
ब्रह्मण्यरूपा विप्राणां तपस्या च तपस्विनाम् ॥२२
विद्या विद्यावतां त्वञ्च बुद्धिर्बुद्धिमतां सताम् ।
मेधास्मृतिस्वरूपा च प्रतिभा प्रतिभावताम् ॥ २३
राज्ञां प्रतापरूपा च विशां वाणिज्यरूपिणी ।
सृष्टौ सृष्टिस्वरूपा त्वं रक्षारूपा च पालने ॥ २४
तथान्ते त्वं महामारी विश्वस्य विश्वपूजिते ।
कालरात्रिर्महारात्रिर्मोहरात्रिश्च मोहिनी ॥ २५
दुरत्यया मे माया त्वं यया सम्मोहितं जगत् ।
मायामुग्धो हि विद्वांश्च मोक्षमार्गं न पश्यति ॥ २६
इत्यात्मना कृतं स्तोत्रं दुर्गाया दुर्गनाशनम् ।
पूजाकाले पठेद्यो हि सिद्धिर्भवति वाञ्छिता ॥ २७
वन्ध्या च काकवन्ध्या च मृतवत्सा च दुर्भगा ।
श्रुत्वा स्तोत्रं वर्षमेकं सुपुत्रं लभते ध्रुवम् ॥ २८
कारागारे महाघोरे यो बद्धो दृढबन्धने ।
श्रुत्वा स्तोत्रं मासमेकं बन्धनान्मुच्यते ध्रुवम् ॥ २९
यक्ष्मग्रस्तो गलत्कुष्ठी महाशूली महाज्वरी ।
श्रुत्वा स्तोत्रं वर्षमेकं सद्यो रोगात् प्रमुच्यते ॥ ३०
पुत्त्रभेदे प्रजाभेदे पत्नीभेदे च दुर्गतः ।
श्रुत्वा स्तोत्रं मासमेकं लभते नात्र संशयः ॥ ३१
राजद्वारे श्मशाने च महारण्ये रणस्थले ।
हिंस्रजन्तुसमीपे च श्रुत्वा स्तोत्रं प्रमुच्यते ॥ ३२
गृहदाहे च दावाग्नौ दस्युसैन्ये (क) समन्विते ।
स्तोत्रश्रवणमात्रेण लभते नात्र संशयः ॥ ३३
महादरिद्रो मूर्खश्च वर्षं स्तोत्रं पठेत् तु यः ।
विद्यावान् धनवांश्चैव स भवेन्नात्र संशयः ॥३४

इति श्रीब्रह्मवैवर्त्ते दुर्गास्तोत्रं सम्पूर्णम् ।

नारद उवाच ।

भगवन् सर्व्वधर्म्मज्ञ सर्व्वज्ञानविशारद ।
ब्रह्माण्डमोहनं नाम प्रकृतेः कवचं वद ॥ ३५

नारायण उवाच ।

शृणु वक्ष्यामि हे वत्स कवचञ्च सुदुर्लभम् ।
श्रीकृष्णेनैव कथितं कृपया ब्रह्मणे पुरा ॥ ३६
ब्रह्मणा कथितं सर्व्वं धर्म्माय जाह्नवीतटे ।
धर्म्मेण दत्तं मह्यञ्च कृपया पुष्करे पुरा ॥ ३७
त्रिपुरारिश्च यद्धृत्वा जघान त्रिपुरं पुरा ।
मुमोच ब्रह्मा यद्धृत्वा मधुकैटभयोर्भयात् ॥ ३८
संजहार रक्तवीजं यद्धृत्वा भद्रकालिका ।
यद्धृत्वा च महेन्द्रश्च सम्प्राप कमलालयाम् ॥ ३९
यद्धृत्वा च महाकालश्चिरजीवी च धार्म्मिकः ।
यद्धृत्वा च महाज्ञानी नन्दी सानन्दपूर्व्वकम् ॥ ४०

(क) दस्युसैन्येति पाठः क्वाचित्कः ।

वङ्गला च महायोद्धा बाणः सत्रुभयङ्करः।
वङ्गला शिवतुल्यश्च दुर्व्वासा ज्ञानिनां वरः ॥ ४१
ओं दुर्गेति चतुर्थ्यन्तः स्वाहान्तो मे शिरोऽवतु।
मन्त्रः षड़क्षरोऽयञ्च भक्तानां कल्पपादपः ॥ ४२
विचारो नास्ति वेदे च ग्रहणेऽस्य मनोर्मुने।
मन्त्रग्रहणमात्रेण विष्णुतुल्यो भवेन्नरः ॥ ४३
मम वक्त्रं सदा पातु ओं दुर्गायै नमोऽन्तकः।
ओं दुर्गे रक्षेति मन्त्रः कण्ठं पातु सदा मम।
ओं ह्रीं श्रीं इति मन्त्रोऽयं स्कन्धं पातु निरन्तरम् ४४
ओं श्रीं ह्रीं (क) इति पृष्ठञ्च पातु मे सर्व्वतः सदा।
ह्रीं मे वक्षःस्थलं पातु हस्तं श्रीमिति सन्ततम् ॥४५
ऐं ह्रीं श्रीं (ख) पातु सर्व्वाङ्गं स्वप्ने जागरणे तथा।
प्राच्यां मां पातु प्रकृतिः पातु वह्नौ च चण्डिका ॥४६
दक्षिणे भद्रकाली च नैर्ऋते च महेश्वरी।
वारुणे पातु वाराही वायव्यां सर्व्वमङ्गला ॥ ४७
उत्तरे वैष्णवी पातु तथैशान्यां शिवप्रिया।
जले स्थले चान्तरीक्षे पातु मां जगदम्बिका ॥ ४८
इति ते कथितं वत्स कवचञ्च सुदुर्लभम्।
यस्मै कस्मै न दातव्यं प्रवक्तव्यं न कस्यचित् ॥ ४९
गुरुमभ्यर्च्य विधिवद्-वस्त्रालङ्कारचन्दनैः।
कवचं धारयेद्यस्तु सोऽपि विष्णुर्न संशयः ॥ ५०
स्नाने च सर्व्वतीर्थानां पृथिव्याश्च प्रदक्षिणे।
यत् फलं लभते लोकस्तदेतद्धारणे मुने ॥ ५१
पञ्चलक्षजपेनैव सिद्धमेतद्भवेद्ध्रुवम्।
लोकञ्च सिद्धकवचं नास्त्रं विध्यति सङ्कटे ॥ ५२
न तस्य मृत्युर्भवति जले वह्नौ विषे ध्रुवम्।
जीवन्मुक्तो भवेत् सोऽपि सर्व्वसिद्धेश्वरः स्वयम् ॥५३
यदि स्यात् सिद्धकवचो विष्णुतुल्यो भवेद्ध्रुवम्।
कथितं प्रकृतेः खण्डं सुधाखण्डात्परं मुने ॥ ५४
या एव मूलप्रकृतिर्यस्याः पुत्रो गणेश्वरः।
कृत्वा कृष्णव्रतं सा च लेभे गणपतिं सुतम्।
स्वांशेन कृष्णो भगवान् बभूव च गणेश्वरः ॥ ५५
श्रुत्वा च प्रकृतेः खण्डं सुश्रवञ्च सुधोपमम्।
भोजयित्वा च दध्यन्नं तस्मै दद्याच्च काञ्चनम् ॥५६
सवत्सां सुरभीं रम्यां दद्याच्च भक्तिपूर्व्वकम्।
वर्द्धते पुत्रपौत्रादिर्यशस्वी तत्प्रसादतः।
लक्ष्मीर्वसति तद्गेहे स्वन्ते गोलोकमाप्नुयात् ॥ ५७

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
नारायण-नारद-संवादे दुर्गोपा-
ख्याने प्रकृतिकवचं नाम षट्-
षष्टितमोऽध्यायः ॥ ६६ ॥

---

(क) ह्रीं श्रीं ह्लीं इति पाठान्तरम्।
(ख) ओं श्रीं ह्रीं श्रीं इति कश्चित् पठ्यते।

## इति प्रकृतिखण्डं समाप्तम्।

# गणेशखण्डम् ।

## प्रथमोऽध्यायः ।

नारद उवाच ।

श्रुतं प्रकृतिखण्डं तदमृतार्णवमुत्तमम् ।
सर्व्वोत्कृष्टमीप्सितञ्च मूढ़ानां ज्ञानवर्द्धनम् ॥ १
अधुना श्रोतुमिच्छामि गणेशखण्डमीश्वर ।
तज्जन्मचरितं नृणां सर्व्वमङ्गलमङ्गलम् ॥ २
कथं जज्ञे सुरश्रेष्ठः पार्व्वत्या उदरं विना ।
देवी केन प्रकारेण लेभे ताद्दृशं सुतम् ॥ ३
स चांशः कस्य देवस्य कथं जन्म लभाम सः ।
अयोनिसम्भवः किं वा किं वाऽसौ योनिसम्भवः ॥ ४
किं वा तद्ब्रह्मतेजो वा कियानेव पराक्रमः ।
का तपस्या च किं ज्ञानं किं वा तन्निर्म्मलं यशः ॥५
कथं तस्य पुरः पूजा विश्वेषु निखिलेषु च ।
स्थिते नारायणे शम्भौ जगदीशे च ब्रह्मणि ॥ ६
पुराणेषु निगूढ़ञ्च तज्जन्म परिकीर्त्तितम् ।
कथं वा गजवक्त्रोऽयमेकदन्तो महोदरः ॥ ७
एतत् सर्व्वं समाचक्ष्व श्रोतुं कौतूहलं मम ।
सुविस्तीर्णं महाभाग तदतीवमनोहरम् ॥ ८

नारायण उवाच ।

शृणु नारद वक्ष्यामि रहस्यं परमाद्भुतम् ।
पापसन्तापहरणं सर्व्वविघ्नविनाशनम् ॥ ९
सर्व्वमङ्गलदं सारं सर्व्वश्रुतिमनोहरम् ।
सुखदं मोक्षवीजञ्च पापमूल-(क) निकृन्तनम् ॥ १०
दैत्यार्द्दितानां देवानां तेजोराशिसमुद्भवा ।
देवी संहृत्य दैत्यौघान् दक्षकन्या बभूव ह ॥ ११
सा च नाम्ना सती देवी स्वामिनो निन्दया पुरा ।
देहं सन्त्यज्य योगेन जाता शैलप्रियोदरे ॥ १२
शङ्कराय ददौ ताञ्च पार्व्वतीं पर्व्वतो मुदा ।
तां गृहीत्वा महादेवो जगाम निर्ज्जनं वनम् ॥ १३
शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्च्चिताम् ।
स रेमे नर्म्मदातीरे पुष्पोद्याने तथा सह ॥ १४
सहस्र-वर्ष-पर्यन्तं दैवमानेन नारद ।
तयोर्बभूव शृङ्गारो विपरीतादिकः परम् ॥ १५
दुर्गाङ्गस्पर्शमात्रेण कामेन मूर्च्छितः शिवः ।
मूर्च्छिता सा शिवस्पर्शाद्बुबुधे न दिवानिशम् ॥ १६
हंसकारण्डवाकीर्णे पुंस्कोकिलरुतश्रुते ।
नानापुष्पविकसिते भ्रमरध्वनिसंयुते ॥ १७
सुगन्धिकुसुमाक्तेन वायुना सुरभीकृते ।
अतीवसुखदे रम्ये सर्व्वजन्तुविवर्ज्जिते ॥ १८
दृष्ट्वा तयोस्तच्छृङ्गारं चिन्तां प्रापुः सुराः पराम् ।
ब्रह्माणञ्च पुरस्कृत्य ययुर्नारायणान्तिकम् ॥ १९
तं नत्वा कथयामास ब्रह्मा वृत्तान्तमीप्सितम् ।
सन्तस्थुर्देवताः सर्व्वाश्चित्रपुत्तलिका यथा ॥ २०

ब्रह्मोवाच ।

सहस्र-वर्ष-पर्यन्तं दैवमानेन शङ्करः ।
रतौ रतश्च निश्चेष्टो न योगी विरराम ह ॥ २१
मैथुने च विरामे च दम्पत्योर्जगदीश्वर ।
किम्भूतं भवितापत्यं तन्नः कथितुमर्हसि ॥ २२

भगवानुवाच ।

चिन्ता नास्ति जगद्धातः सर्व्वं भद्रं भविष्यति ।
मयि ये शरणापन्नास्तेषां दुःखं कुतो विधे ॥ २३
येनोपायेन तद्वीर्य्यं भूमौ पतति निश्चितम् ।
तत् कुरुष्व प्रयत्नेन सार्द्धं देवगणेन च ॥ २४
पतेत् तु शम्भोर्वीर्य्यं तत् पार्व्वत्या उदरे यदि ।
ततोऽपत्यञ्च भविता सुरासुरविमर्द्दकम् ॥ २५
ततः शक्रादयः सर्व्वे सुरा नारायणाज्ञया ।
प्रययुर्नर्म्मदातीरं ययौ ब्रह्मा निजालयम् ॥ २६
तत्रैव पर्व्वतद्रोणी-वहिर्देशे सुराः पराः ।
विषण्णवदनाः सर्व्वे बभूवुर्भयकातराः ॥ २७

(क) च-त्र द स्मे मूलनिकृन्तनमिति पाठः समीचीनतया प्रतिभाति ।

शक्रो राजा कुबेरञ्च कुबेरो वरुणं तथा।
समीरणं तं वरुणो वरुणञ्च यमः स्वयम्॥ २८
वह्निस्तं प्रेरयामास भास्करञ्च हुताशनम्।
भास्करश्च तथा चन्द्र ईशानश्चन्द्रमेव च॥ २९
एवं देवाः प्रेरयन्ति देवांश्च रतिभञ्जने।
हरशृङ्गारभङ्गञ्च कुर्व्वित्युक्त्वा परस्परम्॥ ३०
द्वारस्थितो वक्रशिराः शक्रः प्राह महेश्वरम्॥ ३१

इन्द्र उवाच।

किं करोषि महादेव योगीश्वर नमोऽस्तु ते।
जगदीश जगद्वीज भक्तानां भयभञ्जन॥ ३२
हरिर्जगामेत्युक्त्वैव-माजगाम च भास्करः।
संवीक्ष्योवाच द्वारस्थो भयार्त्तो वक्रचक्षुषा॥ ३३

सूर्य्य उवाच।

किं करोषि महादेव जगतां परिपालक।
सुरश्रेष्ठ महाभाग पार्व्वतीश नमोऽस्तु ते॥ ३४
इत्येवमुक्त्वा श्रीसूर्य्यः प्रजगाम भयातुरः।
आजगाम तथा चन्द्र उवाच वक्रकन्धरः॥ ३५

चन्द्र उवाच।

किं करोषि त्रिलोकेश त्रिलोचन नमोऽस्तु ते।
आत्माराम पूर्णकाम पुण्य-श्रवण-कीर्त्तन॥ ३६
इत्येवमुक्त्वा भीतश्च विरराम निशापतिः।
संवीक्ष्योवाच द्वारस्थः स्वयमेव समीरणः॥ ३७

पवन उवाच।

किं करोषि जगन्नाथ जगद्बन्धो नमोऽस्तु ते।
धर्म्मार्थ-काम-मोक्षाणां वीजरूप सनातन॥ ३८
इत्येव स्तवनं श्रुत्वा योग-ज्ञान-विशारदः।
त्यक्तुकामो न तत्याज शृङ्गारं पार्व्वतीभयात्॥ ३९
दृष्ट्वा सुरान् भयार्त्तांश्च पुनः स्तोतुं समुद्यतान्।
विजहौ सुखसम्भोगं कण्ठलग्नाञ्च पार्व्वतीम्॥ ४०
उत्तिष्ठतो महेशस्य त्रस्तस्य लज्जितस्य च।
भूमौ पपात तद्वीर्य्यं ततः स्कन्दो बभूव ह॥ ४१
पश्चात् तां कथयिष्यामि कथामतिमनोहराम्।
स्कन्दजन्मप्रसङ्गेन साम्प्रतं वाञ्छितं शृणु॥ ४२

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-
खण्डे नारायण-नारद-संवादे
प्रथमोऽध्यायः॥ १॥

---

## द्वितीयोऽध्यायः।

नारायण उवाच।

त्यक्त्वा रतिं महादेवो ददर्श पुरतः सुरान्।
पलायध्वमित्युवाच कृपया पार्व्वतीभयात्॥ १
देवाः पलायिता भीताः पार्व्वतीशापहेतुना।
ब्रह्माण्डसर्व्वसंहर्त्ता चकम्पे पार्व्वतीभयात्॥ २
तल्पादुत्थाय सा दुर्गा न च दृष्ट्वा पुरः सुरान्।
समुत्थितं कोपवह्निं स्तम्भयामास देहतः॥ ३
अद्यप्रभृति ते देवा व्यर्थवीर्य्या भवन्त्विति।
शशाप देवी तान् देवानतिरुष्टा बभूव ह॥ ४
ततः शिवः शिवां दृष्ट्वा क्रोधसंरक्तलोचनाम्।
रुदतीं नम्रवदनां लिखन्तीं धरणीतलम्॥ ५
शिवस्तां दुःखितां दृष्ट्वा क्रोधसंरक्तलोचनाम्।
हस्ते गृहीत्वा देवेशो वासयामास वक्षसि (क)।
अतीवभीतसन्त्रस्त उवाच मधुरं वचः॥ ६

शङ्कर उवाच।

कथं रुष्टा गिरिश्रेष्ठ-कन्ये धन्ये मनोहरे।
मम सौभाग्यरूपे च प्राणाधिष्ठातृदेवते।
किं तेऽभीष्टं करिष्यामि वद मां जगदम्बिके॥ ७
ब्रह्माण्डसङ्घनिखिले किमसाध्यमिहावयोः।
अहो निरपराधं मां प्रसन्ना भव सुन्दरि।
दैवादज्ञातदोषस्य शान्तिं मे कर्त्तुमर्हसि॥ ८
त्वया युक्तः शिवोऽहञ्च सर्व्वेषां शिवदायकः।
त्वया विना हीश्वरश्च शवतुल्योऽशिवः सदा॥ ९
प्रकृतिस्त्वञ्च बुद्धिस्त्वं शक्तिस्त्वञ्च क्षमा दया।
तुष्टिस्त्वञ्च तथा पुष्टिः शान्तिस्त्वं क्षान्तिरेव च।
क्षुत् त्वं छाया तथा निद्रा तन्द्रा श्रद्धा सुरेश्वरि॥ १०
सर्व्वाधारस्वरूपा त्वं सर्व्ववीजस्वरूपिणी।
स्मितपूर्व्वं वद वचः साम्प्रतं सरसं शिवे॥ ११
त्वत्कोपविषसंदग्धं तेन जीवय मां मृतम्॥ १२
शङ्करस्य वचः श्रुत्वा कोपयुक्ता च पार्व्वती।
उवाच मधुरं देवी हृदयेन विदूयता॥ १३

पार्व्वत्युवाच।

किं वाहं कथयिष्यामि सर्व्वज्ञं सर्व्वरूपिणम्। (ख)

---

(क) एतत्श्लोकस्य द्वितीयतृतीयचरणे क्वचित् पुस्तके न दृश्येते।

(ख) किन्त्वहं कथयिष्यामीति बहुत्र पाठः।

आत्मारामं पूर्णकामं सर्व्वदेहेष्ववस्थितम् ॥ १४
कामिनी-मानसं काम-मप्रत्तं स्वामिनं वदेत्।
सर्व्वेषां हृदयज्ञञ्च हृदिस्थं कथयामि किम् ॥ १५
सुगोप्यं सर्व्वनारीणां लज्जाजनककारणम्।
अकथ्यमपि सर्व्वासां तथापि कथयामि ते ॥ १६
सुखेषु मध्ये स्त्रीणाञ्च विभवेषु सुरेश्वर।
सत्पुंसा सह सम्भोगो निर्ज्जनेषु परं सुखम् ॥ १७
तद्भङ्गेन च यद्दुःखं तत्समं नास्ति च स्त्रियाः।
कान्तानां कान्तविच्छेदः शोकः परमदारुणः ॥ १८
कृष्णपक्षे यथा चन्द्रः क्षीयमाणो दिने दिने।
तथा कान्तं विना कान्ता क्षीणकान्तिः क्षणे क्षणे॥१९
चिन्ता ज्वरश्च सर्व्वेषा-(क) मुपतापश्च वाससाम्।
साध्वीनां कान्तविच्छेदस्तुरगाणाञ्च मैथुनम् ॥ २०
रतिभङ्गो दुःखमेकं द्वितीयं वीर्य्यपातनम्।
दुःखातिरेकदुःखञ्च तृतीयमनपत्यता ॥ २१
त्रैलोक्यकान्तः कान्तस्त्वं न च लब्धो मया सुतः।
या स्त्री पुत्त्रविहीना च जीवनं तदपार्थकम्॥ २२
जन्मान्तरसुखं पुण्यं तपोदानसमुद्भवम्।
सद्वंशजातपुत्त्रश्च परत्रेह सुखप्रदः ॥ २३
सुपुत्त्रः स्वामिनोऽंशश्च स्वामितुल्यसुखप्रदः।
कुपुत्त्रश्च कुलाङ्गारो मनस्तापाय केवलम् ॥ २४
स्वामी स्वांशेन स्वस्त्रीणां गर्भे जन्म लभेद्ध्रुवम्।
साध्वी स्त्री मातृतुल्या च सततं हितकारिणी ॥ २५
असाध्वी वैरितुल्या च शश्वत्सन्तापदायिनी।
मुखदुष्टा योनिदुष्टा चैवासाध्वीति हि स्मृता ॥ २६
कमुपायं करिष्यामि वद योगीश्वरेश्वर।
उपायसिन्धो तपसां सर्व्वेषाञ्च फलप्रदः ॥ २७
इत्युक्त्वा पार्व्वती देवी नम्रवक्त्रा रुरोद (ख) ह।
प्रहस्य शङ्करो देवो बोधयामास पार्व्वतीम् ॥ २८
सत्पुत्त्रवीजं सुखदं सन्तापनाशकारणम्।
मितं स्निग्धं सुरुचिरं प्रवक्तुमुपचक्रमे ॥ २९

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-
खण्डे नारायण-नारद-संवादे
द्वितीयोऽध्यायः ॥ २ ॥

---

(क) चिन्ता ज्वरो मनुष्याणामिति क्वते तु साधु स्यात्।
(ख) शश्वद्ध ह इति च वङ्गप्र पाठः।

## तृतीयोऽध्यायः।

महादेव उवाच।

शृणु पार्व्वति वक्ष्यामि तव भद्रं भविष्यति।
उपायतः कार्य्यसिद्धिर्भवेद्देव जगत्त्रये॥ १
सर्व्ववाञ्छितसिद्धस्य वीजरूपं सुमङ्गलम्।
मनसः प्रीतिजननमुपायं कथयामि ते ॥ २
हरेराराधनं कृत्वा व्रतं कुरु वरानने।
व्रतञ्च पुण्यकं नाम वर्षमेकं करिष्यसि ॥ ३
महाकठोरवीजञ्च वाञ्छाकल्पतरुं परम्।
सुखदं पुण्यदं सारं पुत्त्रदं सम्पदां प्रदम् (क) ॥४
नदीनाञ्च यथा गङ्गा देवानाञ्च हरिर्यथा।
वैष्णवानां यथाहञ्च देवीनां त्वं यथा प्रिये ॥ ५
वर्णानाञ्च यथा विप्रस्तीर्थानां पुष्करो यथा।
पुष्पाणां पारिजातञ्च पत्राणां तुलसी यथा ॥ ६
यथा पुण्यप्रदानाञ्च तिथिरेकादशी स्मृता।
रविवारश्च वाराणां यथा पुण्यप्रदः शिवे ॥ ७
मासानां मार्गशीर्षश्च ऋतूनां माधवो यथा।
संवत्सरो वत्सराणां युगानाञ्च कृतं यथा ॥ ८
विद्याप्रदश्च पूज्यानां गुरूणां जननी यथा।
साध्वी पत्नी यथाप्तानां विश्वस्तानां मनो यथा ॥ ९
यथा धनानां रत्नञ्च प्रियाणाञ्च यथा पतिः।
यथा पुत्त्रश्च बन्धूनां वृक्षाणां कल्पपादपः ॥ १०
फलानाञ्च चूतफलं वर्षाणां भारतं यथा।
वृन्दावनं वनानाञ्च शतरूपा च योषिताम् ॥ ११
यथा काशी पुरीणाञ्च सूर्य्यस्तेजस्विनां यथा।
यथेन्दुः सुखदानाञ्च सुन्दराणाञ्च मन्मथः ॥ १२
शास्त्राणाञ्च यथा वेदाः सिद्धानां कपिलो यथा।
हनूमान् वानराणाञ्च क्षेत्राणां ब्राह्मणाननम् ॥१३
यशोदानां यथा विद्या कविता च मनोहरा।
आकाशश्च (ख) व्यापकानामङ्गानां लोचनं यथा॥१४
विभवानां हरिकथा सुखानां हरिचिन्तनम्।
स्पर्शानां पुत्त्रसंस्पर्शो हिंस्राणाञ्च यथा खलः ॥१५
पापानाञ्च यथा मिथ्या पापिनीनाञ्च पुंश्चली।

---

(क) सर्व्वसम्पदमिति पाठः क्वचित्कः। स चार्षः।
(ख) आत्माकाशौ व्यापकानामिति क्वचित् पाठः।
स्व... सम्यक् वस्तुद्वयोल्लेखादक्रमतादोषोत्पत्तेः।

पुण्यानाञ्च यथा सत्यं तपसां हरिसेवनम् ॥ १६
यथा घृतञ्च गव्यानां यथा ब्रह्मा तपस्विनाम् ।
अमृतं भक्ष्यवस्तूनां शस्यानां धान्यकं यथा ॥ १७
पुण्यदानां यथा तोयं शुद्धानाञ्च हुताशनः ।
सुवर्णं तैजसानाञ्च मिष्टानां प्रियभाषणम् ॥ १८
गरुड़ः पक्षिणाञ्चैव हस्तिनामिन्द्रवाहनम् ।
योगिनाञ्च कुमारश्च देवर्षीणाञ्च नारदः ॥ १९
गन्धर्व्वाणां चित्ररथो जीवो बुद्धिमतां यथा ।
सुकवीनां यथा शुक्रः काव्यानाञ्च पुराणकम् ॥ २०
स्रोतस्वतां समुद्रश्च यथा पृथ्वी क्षमावताम् ।
दृष्टानाञ्च यथा मुक्तिर्हरिभक्तिश्च सम्पदाम् ॥ २१
पवित्राणां वैष्णवाश्च वर्णानां प्रणवो यथा ।
विष्णुमन्त्रश्च मन्त्राणां वीजानां प्रकृतिर्यथा ॥ २२
विदुषाञ्च यथा वाणी गायत्री छन्दसां यथा ।
यथा कुवेरो यक्षाणां सर्पाणां वासुकिर्यथा ॥ २३
यथा पिता ते शैलानां गवाञ्च सुरभी यथा ।
वेदानां सामवेदश्च तृणानाञ्च यथा कुशः ॥ २४
सुखदानां यथा लक्ष्मीर्मनश्च शीघ्रगामिणाम् ।
अक्षराणामकारश्च हितैषिणां पिता यथा ॥ २५
शालग्रामश्च यन्त्राणां पशूनां विष्णुपञ्जरः ।
चतुष्पदानां पञ्चास्यो मानवो जीविनां यथा ॥ २६
यथा स्वान्तमिन्द्रियाणां मन्दाग्निश्च रुजां यथा ।
बलानाञ्च यथा शक्ती रंहः शक्तिमतां यथा (क)॥२७
महान् विराट् च स्थूलानां सूक्ष्माणां परमाणुकः ।
यथेन्द्र आदितेयानां दैत्यानाञ्च बलिर्यथा ॥ २८
प्रह्लादश्चैव साधूनां दातॄणां दधिचिर्यथा ।
ब्रह्मास्त्रञ्चापि शस्त्राणां चक्राणाञ्च सुदर्शनम् ॥ २९
नृणां श्रीरामचन्द्रश्च धन्विनां (ख) लक्ष्मणो यथा ।
सर्व्वाधारः सर्व्वसेव्यः सर्व्ववीजश्च सर्व्वदः ।
सर्व्वसारो यथा कृष्णो व्रतानां पुण्यकं तथा ॥ ३०
व्रतं कुरु महाभागे त्रिषु लोकेषु दुर्लभम् ।
सर्व्वसारश्च पुत्रस्ते व्रतादेव भविष्यति ॥ ३१
व्रताराध्यश्च श्रीकृष्णः सर्व्वेषां वाञ्छितप्रदः ।
जनो यत्सेवनान्मुक्तः पितृभिः कोटिभिः सह ॥३२

(क) बलिनाञ्च यथा शक्ती रंहः शक्तिमतां यथा इति क्वचित् पाठः ।

(ख) नृपाणां रामचन्द्रश्च वीराणामिति वा पाठः ।

हरिमन्त्रमुपादाय हरिसेवां करोति यः ।
भारते जन्म सफलमात्मनः स करोति च ॥ ३३
उद्धृत्य कोटिपुरुषान् वैकुण्ठं याति निश्चितम् ।
श्रीकृष्णपार्षदो भूत्वा सुखं तत्रैव मोदते ॥ ३४
सहोदरान् स्वभृत्यांश्च स्वबन्धून् सहचारिणः ।
स्त्रियश्च समुद्धृत्य भक्तो याति हरेः पदम् ॥ ३५
तस्माद्दास्यामि गिरिजे हरेर्मन्त्रं सुदुर्लभम् ।
जप मन्त्रं व्रते तत्र पितृणां मुक्तिकारणम् ॥ ३६
इत्युक्त्वा शङ्करो देवो गत्वा गिरिजयासह ।
शीघ्रञ्च जाह्नवीतीरं हरेर्मन्त्रं मनोहरम् ॥ ३७
तस्यै ददौ च सम्प्रीत्या कवचं स्तोत्रसंयुतम् ।
पूजाविधान नियमं कथयामास तां मुने ॥ ३८

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-
खण्डे नारायण नारद-संवादे
तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

नारायण उवाच ।

श्रुत्वा व्रतविधानञ्च दुर्गा प्रहृष्टमानसा ।
सर्व्वं व्रत-विधानञ्च संप्रष्टुमुपचक्रमे ॥ १

पार्व्वत्युवाच ।

सर्व्वं व्रतविधानं मां वद वेदविदां वर ।
हे नाथ करुणासिन्धो दीनबन्धो परात्पर ॥ २
कानि व्रतोपयुक्तानि द्रव्याणि च फलानि च ।
समयं नियमं भक्ष्यं विधानं तत्फलं प्रभो ॥ ३
देहि मह्यं विनीतायै नियुक्तं सत्पुरोहितम् ।
पुष्पोपहारान् विप्रांश्च द्रव्याहरणकिङ्करान् ॥ ४
अन्यानि चोपयुक्तानि मयाऽज्ञातानि यानि च ।
सन्नियोजय तत् सर्व्वं स्त्रीणां स्वामीश सर्व्वदः ॥ ५
पिता कौमारकाले च सर्व्वपालनकारकः ।
भर्त्ता मध्ये सुतः शेषे त्रिधावस्था च योषिताम् ॥ ६
ततोऽशोकः प्राणतुल्यां दत्त्वा सत्स्वामिने सुताम् ।
स्वामी निवृतिमाप्नोति संन्यस्य स्वसुते प्रियाम् ॥ ७
बन्धुत्रययुता या स्त्री सा च भाग्यवती परा ।
किञ्चिद्धीना मध्या च सर्व्वहीनाधमा भुवि ॥ ८
एतेषाञ्च समीपस्था प्रशंस्या सा जगत्त्रये ।

निन्दितान्येषु संन्यस्ता सर्व्वमेतत् श्रुतौ श्रुतम् ॥९
सर्व्वात्मा भगवांस्त्वञ्च सर्व्वसाक्षी च सर्व्ववित्।
देहि मह्यं पुत्रवरं स्वात्मनिर्वृतिहेतुकम् ॥ १०
स्वात्मबोधानुमानेन महात्मनि निवेदितम्।
सर्व्वान्तराभिप्रायज्ञं बोधज्ञं बोधयामि किम् ॥ ११
इत्युक्त्वा पार्व्वती प्रीत्या पपात स्वामिनः पदे।
कृपासिन्धुश्च भगवान् प्रवक्तुमुपचक्रमे ॥ १२

महादेव उवाच।

शृणु देवि प्रवक्ष्यामि विधानं नियमं फलम्।
फलानि चैव द्रव्याणि व्रतोपयोगिकानि च ॥ १३
विप्राणां शतकं शुद्धं फलपुष्पोपहारकम्।
किङ्कराणाञ्च शतकं द्रव्याहरणकारकम् ॥ १४
दासीनां शतकं लक्षं नियुक्तञ्च पुरोहितम्।
सर्व्वव्रतविधानज्ञं वेदवेदान्तपारगम् ॥ १५
प्रवरं हरिभक्तानां सर्व्वज्ञं ज्ञानिनां वरम्।
सनत्कुमारं मत्तुल्यं गृहाण व्रतहेतवे ॥ १६
देवि शुद्धे च काले च परं नियमपूर्व्वकम्।
माघे शुक्लत्रयोदश्यां व्रतारम्भः शुभः प्रिये ॥ १७
गात्रं सुनिर्म्मलं कृत्वा शिरःसंस्कारपूर्व्वकम्।
उपोष्य पूर्व्वदिवसे वस्त्रं प्रक्षाल्य यत्नतः ॥ १८
अरुणोदयवेलायां तल्पादुत्थाय सुव्रती।
मुखप्रक्षालनं कृत्वा स्नात्वा च निर्म्मले जले ॥ १९
आचम्य मन्त्रपूतो हि हरिस्मरणपूर्व्वकम् (क)।
दत्त्वार्घ्यं हरये भक्त्या गृहमागत्य सत्वरम् ॥ २०
धौते च वाससी धृत्वा उपविश्यासने शुचौ।
आचम्य तिलकं कृत्वा निर्व्वाह्य स्वाह्निकं पुनः ॥२१
घटमारोपणं कृत्वा स्वस्तिवाचनपूर्व्वकम्।
पुरोहितस्य वरणं पुरः कृत्वा प्रयत्नतः।
सङ्कल्पं वेदविहितं व्रतमेतत् समाचरेत् (ख) ॥ २२
व्रते द्रव्याणि नित्यानि चोपचाराणि षोडश।
देयानि नित्यं देवेशि कृष्णाय परमात्मने ॥ २३
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्।
मधुपर्कञ्च स्नानीयं वस्त्राणि भूषणानि च ॥ २४
सुगन्धपुष्पधूपञ्च दीपनैवेद्यवन्दनम्।
यज्ञसूत्रञ्च ताम्बूलं कर्पूरादिसुवासितम् ॥ २५

(क) यत्नपूत इति क्वचित् पाठः।
(ख) समारभेदिति पाठान्तरम्।

द्रव्याण्येतानि पूजायाश्चाङ्गरूपाणि सुन्दरि।
देवि किञ्चिद्विहीनेनैवाङ्गहानिः प्रजायते ॥ २६
अङ्गहीनञ्च यत् कर्म्म चाङ्गहीनो यथा नरः ॥ २७
अङ्गहीने च कार्य्ये च फलहानिः प्रजायते ॥ २८
अष्टोत्तरशतं पुष्पं पारिजातस्य विष्णवे।
देयं प्रतिदिनं दुर्गे स्वात्मनो रूपहेतवे ॥ २९
श्वेतचम्पकपुष्पाणां लक्षमक्षतमीप्सितम्।
प्रदेयं हरये भक्त्या वर्णसौन्दर्य्यहेतवे ॥ ३०
सहस्रपत्रपद्मानामक्षतं पुष्पलक्षकम्।
भक्त्या देयञ्च हरये मुखसौन्दर्य्यहेतवे ॥ ३१
अमूल्यरत्नरचितं दर्पणानां सहस्रकम्।
देयं नारायणायैव नेत्रशोदीप्तिहेतवे ॥ ३२
नीलोत्पलानां लक्षञ्च देयं कृष्णाय भक्तितः।
व्रताङ्गभूतं देवेशि चक्षुषो रूपहेतवे ॥ ३३
हिमालयोद्भवं लक्षं रुचिरं श्वेतचामरम्।
प्रदेयं केशवायैव केशसौन्दर्य्यहेतवे ॥ ३४
अमूल्यरत्नरचितं पुटकानां सहस्रकम्।
प्रदेयं गोपिकेशाय नासिकारूपहेतवे ॥ ३५
बन्धूकपुष्पलक्षञ्च देयं राधेश्वराय च।
सौम्यौष्ठाधरयोश्चैव वक्त्रसौन्दर्य्यहेतवे ॥ ३६
मुक्ताफलानां लक्षञ्च दन्तसौन्दर्य्यहेतवे।
देयं गोलोकनाथाय शैलजे भक्तिपूर्व्वकम् ॥ ३७
रत्नगण्डूकलक्षञ्च गण्डसौन्दर्य्यहेतवे।
मदीश्वराय दातव्यं व्रते शैलेन्द्रकन्यके ॥ ३८
रत्नपाशकलक्षञ्च देयं ब्रह्मेश्वराय च।
ओष्ठाधःस्थलरूपाय प्राणेशि भक्तितो व्रते ॥ ३९
कर्णभूषणलक्षञ्च रत्नसारविनिर्म्मितम्।
देयं सर्व्वेश्वरायैव कर्णसौन्दर्य्यहेतवे ॥ ४०
माध्वीककलसानाञ्च लक्षं रत्नविनिर्म्मितम्।
देयं विश्वेश्वरायैव स्वरसौन्दर्य्यहेतवे ॥ ४१
सुधापूर्णञ्च कुम्भनां सहस्रं रत्ननिर्म्मितम्।
देयं कृष्णाय देवेशि वाक्यसौन्दर्य्यहेतवे ॥ ४२
रत्नप्रदीपलक्षञ्च गोपवेशविधायिने।
देयं किशोरवेशाय दृष्टिसौन्दर्य्यहेतवे ॥ ४३
धुस्तूरकुसुमाकारं रत्नपात्रसहस्रकम्।
देयं गोरक्षकायैव गलसौन्दर्य्यहेतवे ॥ ४४
सद्रत्नसाररचित-पद्मनालसहस्रकम्।

देयं चण्डकपालाय बाहुसौन्दर्य्यहेतवे ॥ ४५
लक्षञ्च रक्तपद्मानां करसौन्दर्य्यहेतवे ।
देयं गोपाङ्गनेशाय नारायणि हरिव्रते ॥ ४६
अङ्गुरीयकलक्षञ्च रत्नसारविनिर्म्मितम् ।
अङ्गुलीनाञ्च रूपार्थं देयं देवेश्वराय च ॥ ४७
मणीन्द्रसारलक्षञ्च श्वेतवर्णं मनोहरम् ।
देयं मुनीन्द्रनाथाय नखसौन्दर्य्यहेतवे ॥ ४८ ॥
सद्रत्नसारहाराणां लक्षञ्चातिमनोहरम् ।
देयं मदनमोहाय वक्षःसौन्दर्य्यहेतवे ॥ ४९
सुपक्वश्रीफलानाञ्च लक्षञ्च सुमनोहरम् ।
देयं सिद्धेन्द्रनाथाय स्तनसौन्दर्य्यहेतवे ॥ ५०
सद्रत्नवर्त्तुलाकारं पात्रलक्षं मनोहरम् ।
देयं पद्मालयेशाय देहस्य रूपहेतवे ॥ ५१
सद्रत्नसाररचितं नाभीनाञ्च सहस्रकम् ।
प्रदेयं पद्मनाभाय नाभिसौन्दर्य्यहेतवे ॥ ५२
सद्रत्नसाररचितं नखचन्द्रसहस्रकम् ।
नितम्बसौन्दर्य्यार्थञ्च प्रदेयं चक्रपाणये ॥ ५३
सुवर्णरम्भास्तम्भानां लक्षञ्च सुमनोहरम् ।
प्रदेयं श्रीनिवासाय श्रोणिसौन्दर्य्यहेतवे ॥ ५४
शतपत्रस्थलाब्जानां लक्षमम्लानमक्षतम् ।
प्रदेयं पद्मनेत्राय पादसौन्दर्य्यहेतवे ॥ ५५
सुवर्णरचितानाञ्च खञ्जनानां सहस्रकम् ।
गतिसौन्दर्य्यहेत्वर्थं देयं लक्ष्मीश्वराय च ॥ ५६
राजहंससहस्रञ्च गजेन्द्राणां सहस्रकम् ।
सुवर्णरचितं देयं हरये गतिहेतवे ॥ ५७
सुवर्णच्छत्रलक्षञ्च देयं नारायणाय च ।
विचित्रं रत्नसारेण मूर्द्धसौन्दर्य्यहेतवे ॥ ५८
मालतीनाञ्च कुसुममक्षतं लक्षमीश्वरि ।
देयं वृन्दावनेशाय हास्यसौन्दर्य्यहेतवे ॥ ५९
अमूल्यरत्नलक्षञ्च देयं नारायणाय वै ।
सुव्रते व्रतपूर्णार्थं शीलसौन्दर्य्यहेतवे ॥ ६०
स्वच्छस्फटिकसङ्काशं मणीन्द्रसारलक्षकम् ।
देयं मुनीन्द्रनाथाय मनःसौन्दर्य्यहेतवे ॥ ६१
प्रवालसारसङ्काशं मणिसारसहस्रकम् ।
देयं कृष्णाय भक्त्या च प्रियानुरागवृद्धये ॥ ६२
माणिक्यसारलक्षञ्च देयं कृष्णाय यत्नतः ।
जन्मनः कोटिपर्य्यन्तं स्वामिसौभाग्यहेतवे ॥ ६३
कुष्माण्डं नारिकेलञ्च जम्बीरं श्रीफलं तथा ।
फलान्येतानि देयानि हरये पुत्रहेतवे ॥ ६४
रत्नेन्द्रसारलक्षञ्च देयं कृष्णाय यत्नतः ।
असंख्यजन्मपर्य्यन्तं स्वामिनो धनवृद्धये ॥ ६५
वाद्यं नानाप्रकारञ्च कांस्यतालादिकं परम् ।
व्रते सम्पत्तिवृद्ध्यर्थं श्रीहरिं श्रावयेद्व्रती ॥ ६६
पायसं पिष्टकं सर्पिः शर्करात्तं मनोहरम् ।
प्रदेयं हरये भक्त्या (क) स्वामिनो भोगवृद्धये ॥ ६७
सुगन्धिपुष्पमालानां लक्षमक्षतमीप्सितम् ।
प्रदेयं हरये भक्त्या हरिभक्तिविवृद्धये ॥ ६८
नैवेद्यानि च देयानि स्वादूनि मधुराणि च ।
श्रीकृष्णप्रीतिप्राप्त्यर्थं दुर्गे नानाविधानि च ॥ ६९
नानाविधानि पुष्पाणि तुलसीसंभृतानि च ।
श्रीकृष्णप्रीतये भक्त्या व्रते देयानि सुव्रते ॥ ७०
ब्राह्मणानां सहस्रञ्च प्रत्यहं भोजयेद्व्रती ।
आत्मनः स्वस्तवृद्ध्यर्थं व्रते जन्मनि जन्मनि ॥ ७१
पुष्पाञ्जलिशतं देयं नित्यं पूर्णञ्च पूजने ।
प्रणामशतकं देवि कर्त्तव्यं भक्तिवृद्धये ॥ ७२
षण्मासांश्च हविष्यान्नं मासान् पञ्च फलादिकम् ।
हविः पक्षं जलं पक्षं व्रते भक्षेच्च सुव्रते ॥ ७३
रत्नप्रदीपशतकं वह्निं दद्याद्दिवानिशम् ।
रात्रौ कुशासनं कृत्वा नित्यं जागरणं व्रते ॥ ७४
स्मरणं कीर्त्तनं केलिः श्रवणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥ ७५
मैथुनाष्टविधं (ख) त्याज्यं व्रते क्रीड़ाविवृद्धये ।
सम्पूर्णे च व्रते देवि प्रतिष्ठा तदनन्तरम् ॥ ७६
त्रिशतञ्च षष्ठ्यधिकं डल्लकं वस्त्रसंयुतम् ।
सभोज्यं सोपवीतञ्च सोपहारं मनोहरम् ॥ ७७
त्रिशतञ्च षष्ठ्यधिकं सहस्रं विप्रभोजनम् ।
त्रिशतञ्च षष्ठ्यधिकं सहस्रं तिलहोमकम् ॥ ७८
त्रिशतञ्च षष्ठ्यधिकं सहस्रं स्वर्णमेव च ।
देया व्रतसमाप्तौ च दक्षिणा विधिबोधिता ॥ ७९
अन्यां समाप्तिदिवसे कथयिष्यामि दक्षिणाम् ।
एतद्व्रतफलं देवि दृढ़ा भक्तिर्हरौ भवेत् ॥ ८०

---

(क) स्वामिनो भोगवृद्धाय इत्यादिकं चरणचतुष्टयं क्वचिन्नास्ति ।

(ख) स्वप्नमैथुनकमिति पाठस्तु न सङ्गतः ।

हरितुल्यो भवेत् पुत्त्रो विख्यातो भुवनत्रये।
सौन्दर्य्यं स्वामिसौभाग्यमैश्वर्य्यं विपुलं धनम्॥ ८१
सर्व्ववाञ्छितसिद्धीनां वीजं जन्मनि जन्मनि।
इत्येवं कथितं देवि व्रतं कुरु महेश्वरि॥ ८२
पुत्त्रस्ते भविता साध्वीत्युक्त्वा स विरराम ह॥ ८३

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारदसंवादे व्रतविधानं नाम चतुर्थोऽध्यायः॥ ४॥

---

## पञ्चमोऽध्यायः।

नारायण उवाच।

श्रुत्वा व्रतविधानञ्च दुर्गा प्रहृष्टमानसा।
पुनः पप्रच्छ कान्तं सा दिव्यां व्रतकथां शुभाम्॥ १

पार्व्वत्युवाच।

किमद्भुतं (क) श्रुतं नाथ विधानं फलमस्य च (ख)।
अयि कान्त कथां ब्रूहि व्रतं केन प्रकाशितम्॥ २

महादेव उवाच।

शतरूपा मनोः पत्नी पुत्त्रदुःखेन दुःखिता।
ब्रह्मणः स्थानमागत्य सा ब्रह्माणमुवाच ह॥ ३

शतरूपोवाच।

ब्रह्मन् केन प्रकारेण वन्ध्यायाश्च सुतो भवेत्।
तन्मे ब्रूहि जगद्धातः सृष्टिकारणकारण॥ ४
मज्जन्म निष्फलं ब्रह्मन्नैश्वर्य्यं धनमेव च।
किञ्चिन्न शोभते गेहे विना पुत्त्रेण श्रीमताम् (ग)॥ ५
तपोदानोद्भवं पुण्यं जन्मान्तरसुखावहम्।
सुखदो मोक्षदः प्रीतिदाता पुत्त्रश्च पुत्त्रिणाम्॥ ६
पुत्त्री पुत्त्रमुखं दृष्ट्वा शताश्वमेधजं फलम्।
पुन्नामनरकत्राण-कारणं लभते ध्रुवम्॥ ७
पुत्त्रोपायं यदि विधे वद मां तापसंयुताम्।
तदा भद्रं न चेद्भर्त्रा सह यास्यामि काननम्॥ ८
गृहाण राज्यमैश्वर्य्यं धनं पृथ्वीं प्रजावहाम्।
किमेतेनावयोस्तात विना पुत्त्रैरपुत्त्रिणोः॥ ९

अपुत्त्रिणो मुखं द्रष्टुं विद्वान् नोत्सहतेऽशिवम्।
मुखं दर्शयितुं लज्जां समवाप्नोत्यपुत्त्रकः॥ १०
अथवा गरलं भुक्त्वा प्रवेक्ष्यामि हुताशनम्।
अपुत्त्रं पुत्त्रमशिवं गृहाण स्त्रीविहीनकम्॥ ११
इत्येवमुक्त्वा सा साध्वी ब्रह्मणश्च रुरोद ह।
कृपानिधिश्च तां दृष्ट्वा प्र[illegible]नुमुपचक्रमे॥ १[illegible]

ब्रह्मोवाच।

शृणु वत्से प्रवक्ष्यामि पुत्त्रोपायं सुखावहम्।
सर्व्वैश्वर्य्यादिवीजञ्च सर्व्ववाञ्छाप्रदं शुभम्॥ १३
माघशुक्लत्रयोदश्यां व्रतमेतत् सुपुण्यकम्।
कर्त्तव्यं शुद्धकाले च कृष्णाराध्यञ्च सर्व्वदम् (क)॥ १४
संवत्सरञ्च कर्त्तव्यं सर्व्वविघ्नविनाशनम्।
वेदोक्तानि च द्रव्याणि व्रते देयानि सुव्रते॥ १५
व्रतञ्च काण्वशाखोक्तं सर्व्ववाञ्छितसिद्धिदम्।
कृत्वा पुत्त्रं लभ शुभे विष्णुतुल्यपराक्रमम्॥ १६
ब्रह्मणश्च वचः श्रुत्वा सा कृत्वा व्रतमुत्तमम्।
प्रियव्रतोत्तानपादौ लेभे पुत्त्रौ मनोहरौ॥ १७
व्रतं कृत्वा देवहूतिर्लेभे सिद्धेश्वरं सुतम्।
नारायणांशं कपिलं पुण्यकं पुण्यदं शुभम्॥ १८
अरुन्धतीदं कृत्वा तु लेभे शक्तिं सुतं शुभा।
शक्तिकान्ता व्रतं कृत्वा सुतं लेभे पराशरम्॥ १९
अदितिश्च व्रतं कृत्वा लेभे वामनकं सुतम्।
शची जयन्तं पुत्त्रञ्च लेभे कृत्वेदमीश्वरि॥ २०
उत्तानपादपत्नीदं कृत्वा लेभे ध्रुवं सुतम्।
कुबेरजाया कृत्वेदं लेभे च नलकूवरम्॥ २१
सूर्य्यपत्नी मनुं लेभे कृत्वेदं व्रतमुत्तमम्।
अत्रिपत्नी सुतं चन्द्रं लेभे कृत्वेदमुत्तमम्॥ २२
लेभे चाङ्गिरसः पत्नी कृत्वेदं व्रतमुत्तमम्।
वृहस्पतिं सुरगुरुं पुत्त्रमस्य प्रभावतः॥ २३
भृगोर्भार्य्या व्रतं कृत्वा लेभे दैत्यगुरुं सुतम्।
शुक्रं नारायणांशञ्च सर्व्वतेजस्विनां परम्॥ २४
इत्येवं कथितं देवि व्रतानां व्रतमुत्तमम्।
त्वमेव कुरु कल्याणि हिमालयसुते शुभे॥ २५
साध्वं राजेन्द्रपत्नीनां देवीनाञ्च सुखावहम्।
व्रतमेतन्महासाध्वि साध्वीनां प्राणतः प्रियम्॥ २६
व्रतस्यास्य प्रभावेण स्वयं गोपाङ्गनेश्वरः।

---

(क) व्रतमिति पाठः क्वाचित्कः।
(ख) फलमेव चेति वा पाठः।
(ग) पुत्त्रिणामिति क्वचित् पाठः। स च सङ्गत इव न प्रतीयते।

(क) कृष्णमाराध्यच्च पुण्यदमिति साधु।

ईश्वरः सर्व्वदेवानां तव पुत्त्रो भविष्यति ॥ २७
इत्युक्त्वा शङ्करस्तत्र विरराम च नारद ।
व्रतं चकार सा देवी प्रहृष्टा शङ्कराज्ञया ॥ २८
इत्येवं कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि ।
सुखदं मोक्षदं सारं गणेशजन्मकारणम् ॥ २९
इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारद-संवादे व्रतकथाप्रकरणं
नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

शौनक उवाच ।
नारायणवचः श्रुत्वा नारदो हृष्टमानसः ।
किं पप्रच्छ पुनः साधो तन्मे ब्रूहि तपोधन ॥ १
सूत उवाच ।
नारायणवचः श्रुत्वा नारदो हृष्टमानसः ।
व्रतारम्भविधानञ्च सम्प्रष्टुमुपचक्रमे ॥ २
नारद उवाच ।
कृतं केन प्रकारेण व्रतमेतच्छुभावहम् ।
तन्मे ब्रूहि मुनिश्रेष्ठ पार्व्वत्या भर्त्तुराज्ञया ॥ ३
लेभे जन्म गोपीशः कृते सुव्रतया व्रते ।
ब्रह्मन् केन प्रकारेण तन्नः शंसितुमर्हसि ॥ ४
नारायण उवाच ।
कथयित्वा कथां दिव्यां विधानञ्च व्रतस्य च ।
स्वयं विधाता तपसां जगाम तपसे शिवः ॥ ५
हरेराराधनव्यग्रो मूर्त्तिभेदधरो हरेः ।
हरिसेवनशीलश्च(क)हरिध्यानपरायणः (ख) ॥ ६
परमानन्दपूर्णश्च ज्ञानानन्दः सनातनः ।
दिवानिशं न जानाति हरिमन्त्रैर्व्विहिः स्मरन् ॥ ७
प्रहृष्टमानसा देवी पार्व्वती भर्त्तुराज्ञया ।
किङ्करान् प्रेरयामास विप्रांश्च व्रतहेतवे ॥ ८
आनीय सर्व्वद्रव्याणि व्रतोपयोगिकानि च ।
व्रतं कर्त्तुं समारेभे शुभदा सा शुभक्षणे ॥ ९
सनत्कुमारो भगवानाजगाम विधेः सुतः ।
मूर्त्तिमांस्तेजसां राशिः प्रज्वलन् ब्रह्मतेजसा ॥ १०

(क) हरिभावनशीलश्च इति क्वचित् पाठः ।
(ख) हरिस्तुतिपरायण इति वा पाठः ।

ब्रह्मा जगाम हृष्टश्च ब्रह्मलोकात् सभार्य्यकः ।
अतित्रस्तो हि भगवानाजगाम महेश्वरः ॥ ११
विष्णुः क्षीरोदशायी च सलक्ष्मीकश्चतुर्भुजः ।
भगवान् जगतां पाता शास्ता भर्त्ता सपार्षदः ॥१२
वनमालाधरः स्वामी भूषितो रत्नभूषणैः
महासम्भृतसम्भारो रत्नयानेन नारद ॥ १३
सनकश्च सनन्दश्च कपिलश्च सनातनः ।
आसुरिश्च क्रतुर्हंसो वोढुः पञ्चशिखोऽरुणिः ॥ १४
यतिश्च सुमतिश्चैव वशिष्ठश्च सहानुगः ।
पुलहश्च पुलस्त्यश्च अत्रिश्च भृगुरङ्गिराः ॥ १५
अगस्त्यश्च प्रचेताश्च दुर्व्वासाश्च्यवनस्तथा ।
मरीचिः कश्यपः कण्वो जरत्कारुश्च गौतमः ॥१६
वृहस्पतिरुतथ्यश्च संवर्त्तः सौभरिस्तथा ।
जावालो जमदग्निश्च जैगीषव्यश्च देवलः ॥ १७
गोकामुखश्चक्ररथः (क) पारिभद्रः पराशरः ।
विश्वामित्रो वामदेव ऋष्यशृङ्गो विभाण्डकः ॥ १८
मार्कण्डेयो मृकण्डुश्च पुष्करो लोमशस्तथा ।
कौत्सो वत्सश्च दक्षश्च कालाग्निरघमर्षणः ॥ १९
कात्यायनः कणादश्च पाणिनिः शाकटायनः ।
शङ्कुः पिशलिश्चैव शाकल्यः शङ्ख एव च ॥ २०
एते चान्ये च बहवः सशिष्या मुनयो मुने ।
आवाञ्च धर्म्मपुत्त्रौ च नरनारायणौ समौ ॥ २१
दिक्पालाश्च तथा देवा यक्ष-गन्धर्व्व-किन्नराः ।
आजग्मुः पर्व्वताः सर्व्वे सगणाः पार्व्वतीव्रते ॥ २२
हिमालयः शैलराजः सापत्यश्च सभार्य्यकः ।
सगणः सानुगश्चैव रत्नभूषणभूषितः ॥ २३
महासम्भृतसम्भारो नानाद्रव्यसमन्वितः ।
मणिमाणिक्यरत्नानि व्रतोपयोगिकानि च ॥ २४
नानाप्रकारवस्तूनि जगतां दुर्लभानि च ।
लक्षञ्च गजरत्नानामश्वरत्नं त्रिलक्षकम् ॥ २५
दशलक्षं गवां रत्नं शतलक्षं सुवर्णकम् ।
हीरकाणां क्षीरकाणां सर्व्वाणाञ्च तथैव च ॥ २६
मुक्तानाञ्च चतुर्लक्षं कौस्तुभानां सहस्रकम् ।
सुस्वादुमिष्टद्रव्याणां लक्षभाराणि कौतुकी ।
अनन्तरत्नप्रभव आजगाम सुताव्रते ॥ २७
ब्राह्मणा मनवः सिद्धा नागा विद्या धरास्तथा

(क) चक्ररथ इति वा पाठः ।

भिक्षवो भिक्षुकाश्चैव वन्दिनः पार्व्वतीव्रते ॥ २८
विद्याधरी नर्त्तकी च नर्त्तकोऽप्सरसां गणाः।
नानाविधा वाद्यभाण्डा आजग्मुः शिवमन्दिरम् ॥२९
कैलासराजमार्गञ्च चन्दनेन सुसंस्कृतम्।
आम्रपल्लवसूत्रार्त्तं कदलीस्तम्भशोभितम् ॥ ३०
दूर्व्वा-धान्य-पर्ण-लाज-फल-पुष्प-विभूषितम्।
निर्म्मितं पद्मरागेण दृढ़युक्ते गणा मुदा ॥ ३१
जषुः सिंहासनेष्वेते पूजिताः शङ्करेण च।
कैलासवासिनः सर्व्वे परमानन्दसंयुताः ॥ ३२
दानाध्यक्षः सुनासीरः कुवेरः कोषरक्षकः।
आदिष्टा च स्वयं सूर्य्यः परिवेष्टा जलाधिपः ॥३३
दध्नां नद्यः सहस्राणि दुग्धानाञ्च तथैव च।
सहस्राणि घृतानाञ्च गुड़ानाञ्च शतानि च ॥ ३४
माध्वीकानां सहस्राणि तैलानाञ्च शतानि च।
लक्षाणि चैव तक्राणां बभूवुः पार्व्वतीव्रते ॥ ३५
पीयूषाणाञ्च कुम्भानि शतलक्षाणि नारद।
मिष्टान्नानां शर्कराणां बभूवुर्लक्षराशयः ॥ ३६
यवगोधूमचूर्णानां घृतात्तानाञ्च नारद।
स्वस्तिकानाञ्च पूपानां बभूवुर्लक्षराशयः ॥ ३७
गुड़संस्कृतलाजानां बभूवुः कोटिराशयः।
शालीनां पृथुकानाञ्च राशीनां दशकोटयः ॥ ३८
तण्डुलानाञ्च राशीनां मुने संख्या न विद्यते।
स्वर्ण-रौप्य-प्रवालानां मणीनाञ्च महामुने ॥ ३९
बभूवुः पर्व्वतास्तत्र कैलासे पार्व्वतीव्रते ॥ ४०
पायसं पिष्टकञ्चैव शाल्यन्नं सुमनोहरम्।
चकार लक्ष्मीः पाकञ्च व्यञ्जनं घृतसंस्कृतम् ॥ ४१
बुभुजे देवर्षिगणैः सार्द्धं नारायणः स्वयम्।
बभूवुर्लक्षविप्राश्च परिवेशनकारकाः ॥ ४२
ताम्बूलञ्च ददौ तेभ्यः कर्पूरादिसुवासितम्।
रत्नसिंहासनं तेभ्यो विप्रलक्षाः सुरक्षकाः ॥ ४३
रत्नसिंहासनस्थञ्च विष्णुं क्षीरोदशायिनम्।
सेव्यमानं पार्षदैश्च सस्मितैः श्वेतचामरैः ॥ ४४
ऋषिभिः स्तूयमानञ्च सिद्धैर्देवगणैस्तथा।
विद्याधरीणां नृत्यानि पश्यन्तं सस्मितं मुदा ॥ ४५
गन्धर्व्वाणाञ्च सङ्गीतं श्रुतवन्तं मनोहरम्।
पप्रच्छ शङ्करो ब्रह्मन् ब्रह्मेशं भक्तिपूर्व्वकम् ॥ ४६
ब्रह्मणा प्रेरितो युक्तं व्रतकर्त्तव्यमीप्सितम्।
देवर्षिगणपूर्णायां सभायां स पुटाञ्जलिः ॥ ४७

महादेव उवाच।

मदीयं प्रार्थनं नाथ श्रीनिवास शृणु प्रभो।
तपःस्वरूप तपसां कर्म्मणाञ्च फलप्रद ॥ ४८
व्रतानां जप-यज्ञानां पूजानां सर्व्वपूजित।
सर्व्वेषां वीजरूपेण वाञ्छाकल्पतरो हरे ॥ ४९
सुपुण्यकव्रतं कर्त्तुं ब्रह्मन्निच्छति पार्व्वती।
पुत्रार्थिनी सा शोकार्त्ता हृदयेन विदूयता ॥ ५०
रतिभङ्गे कृते देवैर्वीर्य्यव्यर्थशुचार्द्दिता।
प्रबोधिता मया साध्वी विविधैर्वचनामृतैः ॥ ५१
सत्पुत्रं स्वामिसौभाग्यं सुव्रता याचते व्रते।
ताभ्यां विना न सन्तुष्टा स्वप्राणांस्त्यक्तुमिच्छति ॥५२
पुरा त्यक्त्वा स्वदेहञ्च पितृयज्ञे च भाविनी।
मन्निन्दया शैलगेहे पुनर्जन्म ललाभ सा ॥ ५३
सर्व्वं जानासि वृत्तान्तं सर्व्वज्ञं त्वां वदामि किम्।
काम्या तां वद तत्त्वज्ञ परिणामशुभप्रदाम् ॥ ५४
दुर्निवार्य्यश्च सर्व्वेषां स्त्रीस्वभावश्च चापलः।
दुःसाध्यं योगिभिः सिद्धैरस्माभिश्च तपस्विभिः ॥ ५५
जितेन्द्रियैर्जितक्रोधैः स्त्रीरूपं मोहकारणम्।
सर्व्वमायाकरण्डञ्च सर्व्वबन्धनकारणम् (ख) ॥५६
ब्रह्मास्त्रं कामदेवस्य दुर्भेद्यं जयकारणम्।
अनिर्म्मितञ्च विधिना सर्व्वाद्यं विधिपूर्व्वजम् ॥ ५७
मोक्षद्वारकवाटञ्च हरिभक्तिनिरोधनम्।
संसारबन्धनस्तम्भ-रज्जुरूपमकृन्तनम् ॥ ५८
वैराग्यनाशवीजञ्च शश्वद्रागविवर्द्धनम्।
पत्तनं साहसानाञ्च दोषाणामालयः सदा ॥ ५९
अप्रत्ययानां क्षेत्रञ्च स्वयं कपटमूर्त्तिमत्।
अहङ्काराश्रमं शश्वद्विषकुम्भं पयोमुखम् (ख) ॥ ६०
सर्व्वैरसाध्यमानञ्च दुराराध्यञ्च सर्व्वदा।
स्वकार्य्यसाध्यञ्चाराध्यं कलहाङ्कुरकारणम् ॥ ६१
सर्व्वं निवेदितं नाथ कर्त्तव्यं वक्तुमर्हसि।
कार्य्यं सर्व्वं परामर्शं परिणामसुखावहम् ॥ ६२

नारायण उवाच।

इत्येवमुक्त्वा भगवान् निरीक्ष्य ब्रह्मणो मुखम्।
विरराम सभामध्ये स्तुत्वा च कमलापतिम् ॥ ६३

(क) कामवर्द्धनकारणमिति पाठान्तरम्।
(ख) सुधासुखमित्यपि पाठः।

शङ्करस्य वचः श्रुत्वा प्रहस्य जगदीश्वरः।
हितं मितञ्च वचनं प्रवक्तुमुपचक्रमे॥ ६४

श्रीविष्णुरुवाच।

सुपुण्यकव्रतं सारं सतीसन्तानहेतवे।
स्वामिसौभाग्यबीजञ्च पत्नी ते कर्त्तुमिच्छति॥ ६५
सर्व्वाराध्यं दुराराध्यं सर्व्वकामफलप्रदम्।
सुखदं मोक्षसारञ्च मोक्षदं पार्व्वतीश्वर॥ ६६
आत्मा साक्षिस्वरूपश्च ज्योतीरूपः सनातनः।
निराश्रयश्च निर्लिप्तो निरुपाधिर्निरामयः॥ ६७
भक्तप्राणश्च भक्तेशो भक्तानुग्रहकारकः।
दुराराध्यो हि योऽन्येषां भक्तानामतिसाध्यकः॥ ६८
भक्ताधीनो हि भगवान् सर्व्वसिद्धो हि निष्कलः।
ते यस्य च कलाः पुंसो ब्रह्म-विष्णु-महेश्वराः॥ ६९
महाविराड्यदंशश्च निर्लिप्तः प्रकृतेः परः।
अव्यग्रो विग्रहश्चोग्रो भक्तानुग्रहविग्रहः॥ ७०
ग्रहग्रहो ग्रहाणाञ्च ग्रहनिग्रहकारकः।
त्रिकोटिजन्मसाध्यश्च न साध्यो भवता विना॥ ७१
लब्ध्वा हि भारते जन्म हरिभक्तिं लभेन्नरः।
सेवनं क्षुद्रदेवानां कृत्वा सप्तसु जन्मसु॥ ७२
सूर्य्यमन्त्रमवाप्नोति केवलं स तदाशिषा।
सूर्य्यमन्त्रं समाराध्य त्रिषु जन्मसु भारते॥ ७३
प्राप्नोति शैवं मन्त्रञ्च सर्व्वदं मानवो मुदा।
संसेव्य परया भक्त्या त्वामेव सप्तजन्मसु॥ ७४
प्राप्नोति मायामन्त्रञ्च त्वत्पदाब्जप्रसादतः।
शतं जन्म समाराध्य मायां नारायणीं पराम्॥ ७५
नारायणकलां सेव्यां समवाप्नोति मानवः।
कलां निषेव्य वर्षेऽत्र पुण्यक्षेत्रे सुदुर्लभे॥ ७६
कृष्णभक्तिमवाप्नोति भक्तसंसर्गहेतुकीम्।
सम्प्राप्य भक्तिं निष्पक्वां भ्रामं भ्रामञ्च भारते॥ ७७
प्राप्नोति परिपक्वाञ्च भक्तिं भक्तनिषेवया।
तदा भक्तप्रसादेन देवानामाशिषा शिव॥ ७८
श्रीकृष्णमन्त्रं प्राप्नोति निर्व्वाणफलदं परम्।
कृष्णव्रतं कृष्णमन्त्रं सर्व्वकामफलप्रदम्॥ ७९
कृष्णतुल्यो भवेद्भक्तश्चिरं कृष्णनिषेवया॥ ८०
महति प्रलये पातः सर्व्वेषां सर्व्व निश्चितम्।
न पातः कृष्णभक्तानां साधूनामविनाशिनाम्॥ ८१
अविनाशिनि गोलोके मोदन्ते कृष्णकिङ्कराः।
हसन्ति ते सुनिश्चिन्ता देवान् ब्रह्मादिकान् शिव॥ ८२
त्वं संहर्त्ता च सर्व्वेषां न भक्तानां महेश्वर।
माया मोहयते सर्व्वान् भक्तान् न कृपया मम॥ ८३
माया नारायणी माता सर्व्वेषां कृष्णभक्तिदा।
न कृष्णभक्तिं प्राप्नोति विना मायानिषेवणम्॥ ८४
सा च नारायणी माता मूलप्रकृतिरीश्वरी।
कृष्णप्रिया कृष्णभक्ता कृष्णतुल्याऽविनाशिनी (क)॥ ८५
सा च तेजःस्वरूपा च स्वेच्छाविग्रहधारिणी।
आविर्भूता च देवानां तेजसाऽसुरनिग्रहे॥ ८६
निहत्य दैत्यसङ्घांश्च दक्षपत्न्याञ्च भारते।
ललाभ दक्षतपसा जन्म चानेकजन्मनः॥ ८७
त्यक्त्वा देहं पितुर्यज्ञे सा सती तव निन्दया।
जगाम देवी गोलोकं कृष्णशक्तिः सनातनी॥ ८८
गृहीत्वा विग्रहं तस्या गुणरूपाश्रयं परम्।
भ्रामं भ्रामं भारते त्वं विषण्णोऽभूः पुरा स्मर॥ ८९
प्रबोधितो मया त्वञ्च शैलेषु सरित्तटे।
ललाभ जन्म सा शैलकान्तायामचिरेण च॥ ९०
करोतु पुण्यकं साध्वी सुव्रता सुव्रतं शिवा।
राजसूयसहस्राणां पुण्यं शङ्कर पुण्यके॥ ९१
राजसूयसहस्राणां व्रते यत्र धनव्ययः।
न साध्यं सर्व्वसाध्वीनां व्रतमेतत् त्रिलोचन॥ ९२
स्वयं गोलोकनाथश्च पुण्यकस्य प्रभावतः।
पार्व्वतीगर्भजातश्च तव पुत्त्रो भविष्यति॥ ९३
स्वयं देवगणानाञ्च यस्मादीशः कृपानिधिः।
गणेश इति विख्यातो भविष्यति जगत्त्रये॥ ९४
यस्य स्मरणमात्रेण विघ्ननिघ्नं भवेद्ध्रुवम्।
जगतां हेतुना तेन विघ्ननिघ्नाभिधो विभुः॥ ९५
नानाविधानि द्रव्याणि यस्माद्दत्तानि पुण्यके।
भुक्त्वा लम्बोदरत्वञ्च तेन लम्बोदरः स्मृतः॥ ९६
शनिदृष्ट्या शिरश्छेदाद्गजवक्त्रेण योजितः।
गजाननः शिशुस्तेन निषेकः केन वार्य्यते॥ ९७
परशुना परशुरामस्य यदेकदन्तखण्डनम्।
भविष्यति निषेकेण चैकदन्ताभिधः शिशुः॥ ९८
पूज्यश्च सर्व्वदेवानामस्माकं जगतां विभुः।
सर्व्वाग्रे पूजनं तस्य भविता मद्वरेण वै॥ ९९
पूजासु सर्व्वदेवनामग्रे सम्पूज्य तं जनः।

(क) कृष्णतुल्याऽरिनाशिनीति पाठान्तरम्।

पूजाफलमवाप्नोति निर्व्विघ्नेन वृथान्यथा ॥ १००
गणेशञ्च दिनेशञ्च विष्णुं शम्भुं हुताशनम् ।
दुर्गामेतान् संनिवेश्य पूजयेद्देवतान्तरम् ॥ १०१
गणेशपूजने विघ्ननिर्व्विघ्नं जगतां भवेत् ।
निर्व्याधिः सूर्य्यपूजायां शुचिः श्रीविष्णुपूजने ॥१०२
मोक्षश्च पापनाशश्च यशश्चैश्वर्य्यवर्द्धनम् ।
तत्त्वज्ञानं सुतत्त्वानां बीजं शङ्करपूजनम् ॥ १०३
सुबुद्धि-सुस्त्री-सद्भूमि-सुप्रजा-बन्धुकारणम् ।
हरि भक्ति प्रदश्चैव परं दुर्गार्च्चनं शिवम् ॥ ॥ १०४
निधने संस्कृताग्निश्च ज्ञानमत्युं लभेन्नरः ।
दाता भोक्ता च भवति शङ्कराग्निनिषेवणात् १०५
विपरीतं त्रिजगतामेतेषां पूजनं विना ।
एवं क्रमो महादेव कल्पे कल्पेऽस्ति निश्चितम् ॥१०६
एते शश्वद्विद्यमाना नित्याः सृष्टिपरायणाः ।
आविर्भावतिरोभावौ चैतेषामीश्वरेच्छया ॥ ॥ १०७
इत्युक्त्वा श्रीहरिस्तत्र विरराम सभातले ।
प्रहृष्टा देवता विप्राः पार्व्वत्या सह शङ्करः ॥ १०८

इति ब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे व्रताज्ञा-ग्रहणं नाम षष्ठोऽध्यायः ॥६

---

## सप्तमोऽध्यायः ।

नारायण उवाच ।

हरेराज्ञां समादाय हरः प्रहृष्टमानसः ।
उवाच पार्व्वतीं प्रीत्या हरिसंलापमङ्गलम् ॥ १
शिवाज्ञां तां समादाय शिवा प्रहृष्टमानसा ।
वाद्यञ्च वादयामास मङ्गलं मङ्गलव्रते ॥ २
सुस्नाता सुदती शुद्धा बिभ्रती धौतवाससी ।
संस्थाप्य रत्नकलसं शुक्लधान्योपरिस्थितम् ॥ ३
आम्रपल्लवसंयुक्तं फलाक्षतसुशोभितम् ।
चन्दनागुरुकस्तूरी-कङ्कुमेण विभूषितम् ॥ ४
रत्नासनस्था रत्नाढ्या रत्नोदर(क)सुता सती ।
रत्नसिंहासनस्थांश्च सम्पूज्य मुनिपुङ्गवान् ॥ ५
रत्नसिंहासनस्थञ्च सम्पूज्य च पुरोहितम् ।
चन्दनागुरुकस्तूरीरत्नभूषणभूषितम् ॥ ६
संस्थाप्य पुरतो भक्त्या दिक्पालान् रत्नभूषितान् ।
देवान्तरानागतांश्च (क)समक्षं विधिबोधितम् ॥ ७
समर्च्य परया भक्त्या ब्रह्म-विष्णु-महेश्वरान् ।
चन्दनागुरुकस्तूरी-कुङ्कुमेण विराजितान् ॥ ८
वह्निशुद्धांशुवस्त्रैश्च सद्रत्नभूषणेन च ।
पूजार्हद्रव्यविविधैः पूजितान् पुण्यको मुने ॥ ९
समारेभे व्रतं देवी स्वस्तिवाचनपूर्व्वकम् ।
आवाह्याभीष्टदेवं तं श्रीकृष्णं मङ्गले घटे ॥ १०
भक्त्या ददौ क्रमेणैव चोपचाराणि षोड़श ।
यानि व्रतविधेयानि देयानि विविधानि च ॥ ११
प्रददौ तानि सर्व्वाणि प्रत्येकं फलदानि च ।
व्रतोक्तमुपहारञ्च दुर्लभं भुवनत्रये ॥ १२
तच्च सर्व्वं ददौ भक्त्या सुव्रते सुव्रता सती ।
दत्त्वा सर्व्वाणि द्रव्याणि वेदमन्त्रेण सा सती ॥१३
होमञ्च कारयामास त्रिलक्षं तिलसर्पिषा ।
ब्राह्मणान् भोजयामास देवानतिथिपूजितान् ॥१४
कर्त्तव्यमेवं कर्त्तव्ये सुव्रते सुव्रता सती ।
प्रत्यहं सावधानञ्च चकार पूर्णवत्सरम् ॥ १५
समाप्तिदिवसे विप्रस्तामुवाच पुरोहितः ।
सुव्रते सुव्रते मह्यं देहीति पतिदक्षिणाम् ॥ १६
श्रुत्वा पुरोहितोक्तं सा विलप्य सुरसंसदि ।
मूर्च्छां प्राप महामाया मायामोहितचेतसा ॥ १७
तां ते च मूर्च्छितां दृष्ट्वा प्रहस्य मुनिपुङ्गवाः ।
शङ्करं प्रेषयामासुर्ब्रह्मा विष्णुश्च नारद ॥ १८
सम्प्रेरितशिवश्चैव शिवां बोधयितुं मुने ।
शिवः समुद्यमं चक्रे प्रवक्तुं वदतां वरः ॥ १९

महादेव उवाच ।

उत्तिष्ठ भद्रे भद्रं ते भविष्यति न संशयः ।
साम्प्रतं चेतनं कृत्वा मदीयं वचनं शृणु ॥ २०
शिवः शिवां तामित्युक्त्वा शुष्ककण्ठोष्ठतालुकाम् ।
वक्षसि स्थापयामास कारयामास चेतनाम् ॥ २१
हितं सत्यं मितं सर्व्वं परिणामसुखावहम् ।
यशस्करञ्च फलदं प्रवक्तुमुपचक्रमे ॥ २२
शृणु देवि प्रवक्ष्यामि यद्वेदेन निरूपितम् ।
सर्व्वसम्मतमिष्टञ्च धर्म्मार्थं धर्म्मसंसदि ॥ २३
सर्व्वेषां कर्म्मणां देवि सारभूता च दक्षिणा ।

---

(क) रत्नोद्भवेति पाठान्तरम् ।

(क) देवान्तरांश्च नागांश्चेति पाठः क्वाचित्कः ।

यज्ञोन्द्रा फलदा नित्यं धर्म्मिष्ठे धर्म्मकर्म्मणि ॥ २४
दैवं वा पैतृकं वापि नित्यं नैमित्तिकं प्रिये ।
यत् कर्म्म दक्षिणाहीनं तत् सर्व्वं निष्फलं भवेत् ।
दाता च कर्म्मणा तेन कालसूत्रं व्रजेद्ध्रुवम् ॥ २५
दुःखान्ते दैन्यमाप्नोति शत्रुणा परिपीडितः ।
दक्षिणा विप्रमुद्दिश्य तत्कालन्तु न दीयते ॥ २६
तन्मुहूर्त्ते व्यतीते तु दक्षिणा द्विगुणा भवेत् ।
चतुर्गुणा दिनातीते पक्षे शतगुणा भवेत् ॥ २७
मासे सहस्रगुणा षण्मासे तच्चतुर्गुणा ।
संवत्सरे व्यतीते तु तत् कर्म्म निष्फलं भवेत् ॥ २८
दाता च नरकं याति यावद्वर्षसहस्रकम् ।
पुत्त्रं पौत्त्रं धनैश्वर्य्यं क्षयमाप्नोति पातकात् ।
धर्म्मो नष्टो भवेत् तस्य धर्म्महीने च कर्म्मणि ॥२९

श्रीविष्णुरुवाच ।

रक्ष स्वधर्म्मं धर्म्मिष्ठे धर्म्मज्ञे धर्म्मकर्म्मणि ।
सर्व्वेषाञ्च भवेद्रक्षा स्वधर्म्म परिपालने ॥ ३०

ब्रह्मोवाच ।

यश्च केन निमित्तेन न धर्म्मं परिरक्षति ।
धर्म्मे नष्टे च धर्म्मज्ञे तस्य धर्म्मो विनश्यति ॥ ३१

धर्म्म उवाच ।

मां रक्ष यत्नतः साध्वि प्रदाय पतिदक्षिणाम् ।
मयि स्थिते महासाध्वि सर्व्वं भद्रं भविष्यति ॥ ३२

देवा ऊचुः ।

धर्म्मं रक्ष महासाध्वि कुरु पूर्णं व्रतं सति ।
वयं तव व्रते पूर्णे कुर्म्मस्ते पूर्णमानसम् ॥ ३३

मुनय ऊचुः ।

कृत्वा साध्वि पूर्णाहोमं देहि विप्राय दक्षिणाम् ।
स्थितेष्वस्मासु धर्म्मज्ञे किमभद्रं भविष्यति ॥ ३४

सनत्कुमार उवाच ।

शिवे शिवं देहि मह्यं न चेद्व्रतफलं व्रते ।
सुचिरं सञ्चितस्यापि स्वात्मनस्तपसः फलम् ॥ ३५
कर्म्मण्यदक्षिणे साध्वि यागस्याहन्तु तत् फलम् ।
प्राप्स्यामि यजमानस्य,सम्पूर्णकर्म्मणः फलम् ॥ ३६

पार्व्वत्युवाच ।

किं कर्म्मणा मे देवेशाः किं मे दक्षिणया मुने ।
किं पुत्त्रेण च धर्म्मेण यत्र भर्त्ता च दक्षिणा ॥ ३७
यदि भूमिर्मया त्यक्ता यदि वृक्षश्च दैवतः ।
गते च कारणे कार्य्यं कुतः शस्यं कुतः फलम् ॥३८
प्राणास्त्यक्ताः स्वेच्छया चेद्देहेन किं प्रयोजनम् ।
दृष्टिशक्तिविहीनेन चक्षुषा किं प्रयोजनम् ॥ ३९
शतपुत्त्रसमः स्वामी साध्वीनाञ्च सुरेश्वराः ।
यदि भर्त्ता व्रते देयः किं व्रतेन सुतेन वा ॥ ४०
भर्त्तुर्वंशश्च तनयः केवलं भर्त्तृमूलकः ।
यत्र मूलं भवेद्भ्रष्टं तद्वाणिज्यञ्च निष्फलम् ॥ ४१

श्रीविष्णुरुवाच ।

पुत्त्रादपि परः स्वामी धर्म्मश्च स्वामिनः परः ।
नष्टे धर्म्मे च धर्म्मिष्ठे स्वामिना किं सुतेन वा ॥ ४२

ब्रह्मोवाच ।

स्वामिनश्च परो धर्म्मो धर्म्मात् सत्यञ्च सुव्रते ।
सत्यं सङ्कल्पितं कर्म्म न भ्रष्टं कुरु सुव्रते ॥ ४३

पार्व्वत्युवाच ।

निरूपितश्च वेदेषु स्वशब्दो धनवाचकः ।
तद्धनस्यास्तीति स स्वामी वेदज्ञ शृणु मद्वचः ॥ ४४
तस्य दाता सदा स्वामी न च स्वं स्वामिनो भवेत् ।
अहो व्यवस्था भवतां वेदज्ञा नाम बोधत ॥ ४५

धर्म्म उवाच ।

पत्नीं विनान्यत् स्वं साध्वि स्वामिनं दातुमक्षमम् ।
दम्पती ध्रुवमेकाङ्गौ द्वयोर्दाने च द्वौ समौ ॥ ४६

पार्व्वत्युवाच ।

पिता ददाति जामात्रे स च गृह्णाति तत्सुताम् ।
न श्रुतं विपरीतञ्च श्रुतौ श्रुतिपरायणाः ॥ ४७

देवा ऊचुः ।

बुद्धिस्वरूपा त्वं दुर्गे बुद्धिमन्तो वयं त्वया ।
वेदज्ञे वेदवादेषु के वा त्वां जेतुमीश्वराः ॥ ४८
निरूपिता पुण्यके तु व्रते स्वामी च दक्षिणा ।
श्रुतौ श्रुते यः स्वधर्म्मो विपरीतो ह्यधर्म्मकः ॥ ४९

पार्व्वत्युवाच ।

केवलं वेदमाश्रित्य कः करोति विनिर्णयम् ।
बलवान् लौकिको वेदाल्लोकाचारञ्च कस्त्यजेत् ॥ ५०
वेदे प्रकृति-पुंसोश्च गरीयान् पुरुषो ध्रुवम् ।
निबोधत सुराः प्राज्ञा बालाहं कथयामि किम् ॥५१

बृहस्पतिरुवाच ।

न पुमांश्च विना स्रष्टिनंसाध्वि प्रकृतिं विना ।
श्रीकृष्णश्च द्वयोः स्रष्टा समौ प्रकृति-पूरुषौ ॥ ५२

पार्व्वत्युवाच ।

यः कृष्णः स्रष्टा सर्व्वेषां सोऽंशेन सगुणः पुमान् ।
पुमान् गरीयान् प्रकृतेस्तथापि न ततश्च सा ॥ ५३
एतस्मिन्नन्तरे देवा मुनयस्तत्र संसदि ।
रत्नेन्द्रसारनिर्म्माण-माकाशे ददृशू रथम् ॥५४
पार्षदैश्च परिवृतं सर्व्वैः श्यामैश्चतुर्भुजैः ।
वनमालापरिवृतै रत्नभूषणभूषितैः ॥ ५५
अवरुह्य मुदा यानादाजगाम सभातलम् ।
तुष्टुवुस्तं सुरेन्द्रास्ते देवं वैकुण्ठवासिनम् ॥ ५६
शङ्ख-चक्र-गदा-पद्मधरमीशं चतुर्भुजम् ।
लक्ष्मी-सरस्वतीकान्तं शान्तं तं सुमनोहरम् ॥ ५७
सुखदृश्यमभक्ताना-मदृश्यं कोटिजन्मभिः ।
कोटिकन्दर्पलीलाभं कोटिचन्द्रसमप्रभम् ॥ ५८
अमूल्यरत्नरचित-चारुभूषणभूषितम् ।
सेव्यं ब्रह्मादिदेवैश्च सेवकैः सन्ततं स्तुतम् ॥ ५९
तद्भासया च प्रच्छन्नैर्वेष्टितञ्च सुरर्षिभिः ।
वासयामासुस्तं ते च रत्नसिंहासने वरे ॥ ६०
तं प्रणेमुश्च शिरसा ब्रह्म-विष्णु-शिवादयः ।
सम्पुटाञ्जलयः सर्व्वे पुलकाङ्काश्रुलोचनाः ॥ ६१
स सस्मितस्तान् पप्रच्छ सर्व्वं मधुरया गिरा ।
प्रबोधितः सुबोधज्ञः प्रवक्तुमुपचक्रमे ॥ ६२

नारायण उवाच ।

स्वबुद्ध्या बुद्धिमन्तो न वक्तुमुचितं सुराः ।
सर्व्वे शक्त्यानया विश्वे शक्तिमन्तो हि जीविनः ॥६३
ब्रह्मादितृणपर्य्यन्तं सर्व्वं प्राकृतिकं जगत् ।
सत्यं सत्यं विना माञ्च मायाशक्तिः प्रकाशिता ॥६४
आविर्भूता च सा मत्तः सृष्टौ देवी मदिच्छया ।
तिरोहिता च सा शेषे सृष्टिसंहारणे मयि ॥ ६५
सृष्टिकर्त्री च प्रकृतिः सर्व्वेषां जननी परा ।
मम तुल्या च मन्माया तेन नारायणी स्मृता ॥ ६६
सुचिरञ्च तपस्तप्तं शम्भुना ध्यायता च माम् ।
तेन तस्मै मया दत्ता तपसां फलरूपिणी ॥ ६७
व्रतञ्च लोकशिक्षार्थमस्या न स्वार्थमेव च ।
स्वयं व्रतानां तपसां फलदात्री जगत्त्रये ॥ ६८
मायया मोहिताः सर्व्वे किमस्या वास्तवं व्रतम् ।
साध्यमस्या व्रतफलं कल्पे कल्पे पुनः पुनः ॥ ६९
सुरेश्वरा मदंशाश्च ब्रह्म-विष्णु-महेश्वराः ।
कलाः कलांशरूपाश्च-जीविनश्च सुरादयः ॥ ७०
मृदा विना घटं कर्त्तुं कुलालश्च यथाऽक्षमः ।
विना स्वर्णं स्वर्णकारः कुण्डलं कर्त्तुमक्षमः ।
विना शक्त्या तथाहञ्च स्वसृष्टिं कर्त्तुमक्षमः ॥ ७१
शक्तिप्रधाना सृष्टिश्च सर्व्वदर्शनसम्मता ।
अहमात्मा हि निर्लिप्तोऽदृश्यः साक्षी च देहिनाम् ॥७२
देहाः प्रकृतिकाः सर्व्वे नश्वराः पाञ्चभौतिकाः ।
अहं नित्यः शरीरी च भक्तानुग्रहविग्रहः (क) ॥७३
सर्व्वाधारा च प्रकृतिः सर्व्वात्माहं जगत्सु च ॥ ७४
अहमात्मा मनो ब्रह्मा ज्ञानरूपो महेश्वरः ।
पञ्च प्राणाः स्वयं विष्णुर्बुद्धिः प्रकृतिरीश्वरी ॥ ७५
मेधा निद्रादयश्चैताः सर्व्वाश्च प्रकृतेः कलाः ।
सा च शैलेन्द्रकन्यैषा इति वेदे निरूपितम् ॥ ७६
अहं गोलोकनाथश्च वैकुण्ठेशः सनातनः ।
गोपीगोपैः परिवृतस्तत्रैव द्विभुजः स्वयम् ।
चतुर्भुजोऽत्र देवेशो लक्ष्मीशः पार्षदैर्वृतः ॥ ७७
ऊर्द्ध्वं परश्च वैकुण्ठात् पञ्चाशत्कोटियोजने ।
ममाश्रयश्च गोलोकस्तत्राहं गोपिकापतिः ॥ ७८
व्रताराध्यो हि द्विभुजः स च तत्फलदायकः ।
यद्रूपं चिन्तयेद्यो हि तच्च तत्फलदायकम् ॥ ७९
व्रतं पूर्णं कुरु शिवे शिवं दत्त्वा च दक्षिणाम् ।
पुनः समुचितं मूल्यं दत्त्वा नाथं ग्रहीष्यसि ॥ ८०
विष्णुदेहा यथा गावो विष्णुदेहस्तथा शिवः ।
द्विजाय दत्त्वा गोमूल्यं गृहाण स्वामिनं शुभे ॥ ८१
यज्ञे पत्नीं यथा दातुं क्षमः स्वामी सदैव तु ।
तथा सा स्वामिनं दातुमीश्वरीति श्रुतेर्मतम् ॥ ८२
इत्युक्त्वा तां सभामध्ये तत्रैवान्तरधीयत ।
हृष्टास्ते सा च संहृष्टा दक्षिणां दातुमुद्यता ॥ ८३
कृत्वा शिवा पूर्णहोमं सा शिवं दक्षिणां ददौ ।
स्वस्तीत्युक्त्वा च जग्राह कुमारो देवसंसदि ॥ ८४
उवाच दुर्गा संत्रस्ता शुष्ककण्ठौष्ठतालुका ।
पुटाञ्जलियुता विप्रं हृदयेन विदूयता ॥ ८५

पार्व्वत्युवाच ।

गोमूल्यं मत्पतिसममिति वेदे निरूपितम् ।
गवां लक्षं प्रयच्छामि देहि मत्स्वामिनं द्विज ॥८६
तदा दास्यामि विप्रेभ्यो दानानि विविधानि च ।

(क) भानुविग्रहविग्रह इति क्वचित् पाठः ।

आत्महीनो हि देहश्च किं कर्म कर्त्तुमीश्वरः ॥ ८७

सनत्कुमार उवाच।

गवां लक्षेण मे देवि विप्रस्य किं प्रयोजनम्।
ददात्यमूल्यरत्नञ्च गवां प्रत्यर्पणेन कः ॥ ८८
स्वस्य स्वस्य स्वयं कर्त्ता सर्व्वः सर्व्वो जगत्त्रये।
कर्त्तुं देवेप्सितं कर्म भवेत् किं वा परेच्छया ॥ ८९
दिगम्बरं पुरः कृत्वा भ्रमिष्यामि जगत्त्रयम्।
बालकानां बालिकानां सम्भूहस्मितकारणम् ॥ ९०
इत्युक्त्वा ब्रह्मणः पुत्रो गृहीत्वा शङ्करं मुने।
सन्निधौ वासयामास तेजस्वी देवसंसदि ॥ ९१
दृष्ट्वा शिवं गृह्यमाणं कुमारेण च पार्व्वती।
समुद्यता तनुं त्यक्तुं शुष्ककण्ठौष्ठतालुका ॥ ९२
विचिन्त्य मनसा साध्वीत्येवमेव दुरत्ययम्।
न दृष्टोऽभीष्टदेवश्च न च प्राप्तफलं व्रतम् (क) ॥ ९३
एतस्मिन्नन्तरे देवाः पार्व्वतीसहितास्तदा।
सद्यो ददृशुराकाशे तेजसां निकरं परम् ॥ ९४
कोटिसूर्य्यप्रभोर्द्धञ्च प्रज्वलच्च दिशो दश।
कैलासशैलं प्रतपत् सर्व्वदेवादिभिर्युतम् ॥ ९५
सर्व्वान् कुर्व्वच्च प्रच्छन्नं विस्तीर्णं मण्डलाकृति।
दृष्ट्वा तच्च भगवतस्तुष्टुवुस्ते क्रमेण च ॥ ९६

श्रीविष्णुरुवाच।

ब्रह्माण्डानि च सर्व्वाणि यल्लोमविवरेषु च।
सोऽयं ते षोड़शांशश्च के वयं यो महान् विराट् ॥ ९७

ब्रह्मोवाच।

वेदोपयुक्तं (ख) दृश्यं यत् प्रत्यक्षं द्रष्टुमीश्वरः।
स्तोतुं तद्वर्णितुमहं शक्तः किं स्तौमि तत्परम् ॥ ९८

महादेव उवाच।

ज्ञानाधिष्ठातृदेवोऽहं स्तौमि ज्ञानपरञ्च किम्।
सर्व्वानिर्व्वचनीयं यं तं त्वां स्वेच्छामयं विभुम् ॥ ९९

धर्म उवाच।

अदृश्यमवतारेषु यद्दृश्यं सर्व्वजन्तुभिः।
किं स्तौमि तेजोरूपं तद्भक्तानुग्रहविग्रहम् ॥ १००

देवा ऊचुः।

के वयं त्वत्कलांशाश्च किं वा त्वां स्तोतुमीश्वराः।
स्तोतुं न शक्ता वेदा यं न च शक्ता सरस्वती ॥ १०१

मुनय ऊचुः।

वेदान् पठित्वा विद्वांसो वयं किं वेदकारणम्।
स्तोतुमीशा न वाणी च त्वाञ्च वाङ्मनसोः परम् ॥ १०२

सरस्वत्युवाच।

वागधिष्ठातृदेवीं मां वदन्ति वेदवादिनः।
किञ्चिन्न शक्ता त्वां स्तोतुमहो वाङ्मनसोः परम् ॥ १०३

सावित्र्युवाच।

वेदप्रसूरहं नाथ स्रष्टा त्वं कलया पुरा।
किं स्तौमि स्त्रीस्वभावेन सर्व्वकारणकारणम् ॥ १०४

लक्ष्मीरुवाच।

त्वदंशविष्णुकान्ताहं जगत्पोषणकारिणी।
किं स्तौमि त्वत्कला सृष्टा जगतां वीजकारणम् ॥ १०५

हिमालय उवाच।

हसन्ति सन्तो मां नाथ कर्म्मणा स्थावरं परम्।
स्तोतुं समुद्यतं क्षुद्रं किं स्तौमि स्तोतुमक्षमः ॥ १०६
क्रमेण सर्व्वे तं स्तुत्वा देवा विरेमुर्मुने।
देव्यश्च मुनयः सर्व्वे पार्व्वती स्तोतुमुद्यता ॥ १०७
धौतवस्त्रजटाभारं बिभ्रती सुव्रता व्रते।
प्रेरिता परमात्मानं व्रताराध्यं शिवेन च ॥ १०८
ज्वलदग्निशिखारूपा तेजोमूर्त्तिमती सती।
तपसां फलदा माता जगतां सर्व्वकारणम् ॥ १०९

पार्व्वत्युवाच।

कृष्ण जानासि मां भद्र नाहं त्वां ज्ञातुमीश्वरी।
के वा जानन्ति वेदज्ञा वेदा वा वेदकारकाः ॥ ११०
तदंशास्त्वां न जानन्ति कथं ज्ञास्यन्ति त्वत्कलाः।
त्वञ्चापि तत्त्वं जनासि किमन्ये ज्ञातुमीश्वराः ॥ १११
सूक्ष्मात् सूक्ष्मतमोऽव्यक्तः स्थूलात् स्थूलतमो महान्
विश्वस्त्वं विश्वरूपश्च विश्ववीजं सनातनः ॥ ११२
कार्य्यं त्वं कारणं त्वञ्च कारणानाञ्च कारणम्।
तेजःस्वरूपो भगवान् निराकारो निराश्रयः ॥ ११३
निर्लिप्तो निर्गुणः साक्षी स्वात्मारामः परात्परः।
प्रकृतीशो विराड्वीजं विराड्रूपस्त्वमेव च।
सगुणस्त्वं प्रकृतिकः कलया सृष्टिहेतवे ॥ ११४
प्रकृतिस्त्वं पुमांस्त्वञ्च त्वदन्यो न क्वचिद्भवे।
जीवस्त्वंसाक्षिणो भोगी स्वात्मनः प्रतिविम्बकः ॥ ११५
कर्म त्वं कर्मवीजं त्वं कर्म्मणां फलदायकः।
ध्यायन्ति योगिनस्तेजस्त्वदीयमशरीरिणम्।

---

(क) प्राप्तं फलं व्रत इति वा पाठः।
(ख) वेद उपयुक्तमिति साधु।

केचिच्चतुर्भुजं शान्तं लक्ष्मीकान्तं मनोहरम् ॥ ११६
वैष्णवाश्चैव साकारं कमनीयं मनोहरम्।
शङ्ख-चक्र-गदा-पद्मधरं पीताम्बरं परम् ॥ ११७
द्विभुजं कमनीयञ्च किशोरं श्यामसुन्दरम्।
शान्तं गोपाङ्गनाकान्तं रत्नभूषणभूषितम् ॥ ११८
एवं तेजस्विनं भक्ताः सेवन्ते सन्ततं मुदा।
ध्यायन्ति योगिनो यत् तत् कुतस्तेजस्विनं विना॥११९
तत् तेजो बिभ्रतां देव देवानां तेजसा पुरा।
आविर्भूता सुराणाञ्च वधाय ब्रह्मणः स्तुता ॥ १२०
नित्या तेजःस्वरूपाहं विधृत्य विग्रहं विभो।
स्त्रीरूपं कमनीयञ्च विधाय समुपस्थिता ॥ १२१
मायया तव मायाहं मोहयित्वाऽसुरान् पुरा।
निहत्य सर्व्वान् शैलेन्द्रमगमं तं हिमालयम् ॥ १२२
ततोऽहं संस्तुता देवैस्तारकाख्येण पीड़ितैः।
अभवं दक्षजायायां शिवस्त्री तत्र जन्मनि ॥ १२३
त्यक्त्वा देहं दक्षयज्ञे शिवाहं शिवनिन्दया।
अभवं शैलजायायां शैलजा च स्वकर्म्मणा ॥ १२४
अनेकतपसा प्राप्तः शिवश्चात्रापि जन्मनि।
पाणिं जग्राह मे योगी प्रार्थितो ब्रह्मणा विभुः॥१२५
शृङ्गारजञ्च तत्तेजो नालभं देवमायया।
स्तौमि त्वामेव देवेश पुत्रदुःखेन दुःखिता ॥ १२६
व्रते भवद्विधं पुत्रं लब्धमिच्छामि साम्प्रतम्।
देवेश विहिता वेदे स्वाङ्गे स्वस्वामिदक्षिणा ॥१२७
श्रुत्वा सर्व्वं कृपासिन्धो कृपां मां कर्त्तुमर्हसि।
इत्युक्त्वा पार्व्वती तत्र विरराम च नारद ॥ १२८
भारते पार्व्वतीस्तोत्रं यः शृणोति सुसंयतः।
सत्पुत्रं लभते नूनं विष्णुतुल्यपराक्रमम् ॥ १२९
संवत्सरं हविष्याशी हरिमभ्यर्च्य भक्तितः।
सुपुण्यकव्रतफलं लभते नात्र संशयः ॥ १३०
विष्णुस्तोत्रमिदं ब्रह्मन् सर्व्वसम्पत्तिवर्द्धनम्।
सुखदं मोक्षदं सारं स्वामिसौभाग्यवर्द्धनम् ॥ १३१
सर्व्वसौन्दर्य्यबीजञ्च यशोराशिविवर्द्धनम्।
हरिभक्तिप्रदं तत्त्वज्ञानबुद्धिविवर्द्धनम् ॥ १३२

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारद-संवादे पुण्यकव्रते
पार्व्वतीकृत श्रीकृष्णकथनं नाम
सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः।

नारायण उवाच।

पार्व्वतीस्तवनं श्रुत्वा श्रीकृष्णः करुणानिधिः।
स्वरूपं दर्शयामास सर्व्वादृश्यं सुदुर्लभम् ॥ १
स्तुत्वा देवी ध्यानलग्ना कृष्णैकतानमानसा।
ददर्श तेजसां मध्ये रूपं संसार-(क) मोहनम् ॥ २
सद्रत्नसारनिर्म्माणे हीरकेण परिष्कृते।
युक्ते माणिक्यमालाभी रत्नपूर्णे मनोरथे ॥ ३
वह्निसंशुद्धपीतांशु-धरं वंशीकरं परम्।
वनमालागलं श्यामं रत्नभूषणभूषितम् ॥ ४
किशोरवयसं वेशविचित्रं चन्दनाङ्कितम्।
चारुस्मितास्यमाढ्यं तत् शारदेन्दुविनिन्दकम् ॥ ५
मालतीमाल्यसंयुक्त-मयूरपुच्छचूड़कम्।
गोपाङ्गनापरिवृतं राधावक्षःस्थलोज्ज्वलम् ॥ ६
कोटिकन्दर्पलावण्य-लीलाधाम मनोहरम्।
अतीवहृष्टं सर्व्वेष्टं भक्तानुग्रहकारकम् ॥ ७
दृष्ट्वा रूपं रूपवती पुत्रं तदनुरूपकम्।
मनसा वरयामास वरं सम्प्राप्य तत्क्षणम् ॥ ८
वरं दत्त्वा वरेशस्तु यद्यन्मनसि वाञ्छितम्।
दत्त्वाभीष्टं सुरेभ्यश्च तत्तेजोऽन्तरधीयत ॥ ९
कुमारं बोधयित्वा तु देवा देव्यै दिगम्बरम्।
ददुर्निरुपमं तत्र प्रहृष्टाये मुदान्विताः ॥ १०
ब्राह्मणेभ्यो ददौ दुर्गा रत्नानि विविधानि च।
सुवर्णानि च भिक्षुभ्यो वन्दिभ्यो विश्ववन्दिता ॥११
ब्राह्मणान् भोजयामास देवांश्च पर्व्वतांस्तथा।
शङ्करं पूजयामास चोपहारैरनुत्तमैः ॥ १२
दुन्दुभिं वादयामास कारयामास मङ्गलम्।
सङ्गीतं गाययामास हरिसम्बन्धि सुन्दरम् ॥ १३
व्रतं समाप्य सा दुर्गा दत्त्वा दानानि सस्मिता।
सर्व्वांश्च भोजयित्वा तु बुभुजे स्वामिना सह ॥ १४
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम्।
क्रमात् प्रदाय सर्व्वेभ्यो बुभुजे तेन कौतुकात् ॥ १५
पयःफेननिभां शय्यां रम्यां सद्रत्ननिर्म्मिताम्।
पुष्पचन्दनसंयुक्तां कस्तूरीकुङ्कुमान्विताम्।
रहसि स्वामिना सार्द्धं सुष्वाप परमेश्वरी ॥ १६

(क) स्वरूपं सारेति क्वचित् पाठः।

कैलासस्यैकदेशे च रम्ये चन्दनकानने ।
सुगन्धिकुसुमाक्तेन वायुना सुरभीकृते ॥ १७
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते ।
विजहार सुरसिका तत्र तेन सहाम्बिका ॥ १८
रेतःपतनकाले च सं विष्णुर्विष्णुमायया ।
विधाय विप्ररूपन्तु आजगाम रतेर्गृहम् ॥ १९
शुक्लवस्त्रं विना तैलं कुचैलं भिक्षुकं मुने ।
अतीवशुक्लदशनं तृष्णया परिपीड़ितम् ॥ २०
अतीवशुभ्रगात्रञ्च बिभ्रत् तिलकमुज्ज्वलम् ।
वहुकाकुस्वरं दीनं दैन्यात् कुत्सितमूर्त्तिमत् ॥ २१
आजुहाव महादेव-मतिवृद्धोऽन्नयाचकः ।
दण्डावलम्बनं कृत्वा रतिद्वारेऽतिदुर्व्बलः ॥ २२

ब्राह्मण उवाच ।

किं करोषि महादेव रक्ष मां शरणागतम् ।
सप्तरात्रिव्रतेऽतीते पारणाकाङ्क्षिणं क्षुधा ॥ २३
किं करोषि महादेव हे तात करुणानिधे ।
पश्य वृद्धं जराग्रस्तं तृष्णया परिपीड़ितम् ॥ २४
मातरुत्तिष्ठ शामन्नं प्रयच्छ वाञ्छितं जलम् ।
अनन्तरत्नोद्भवजे रक्ष मां शरणागतम् ॥ २५
मातर्मातजगन्मात-र्देहि नाहं जगद्वहिः ।
सीदामि तृष्णया कस्मात् स्थितायाः शैलमातरि ॥२६
इति काकुस्वरं श्रुत्वा शिवस्योत्तिष्ठतो मुने ।
पपात वीर्य्यं शय्यायां न योनौ प्रकृतेस्तदा ॥ २७
उत्तस्थौ पार्व्वती त्रस्ता सूक्ष्मवस्त्रं पिधाय च ।
आजगाम रतिद्वारं पार्व्वत्या सह शङ्करः ॥ २८
दृदृश ब्राह्मणं दीनं जरया परिपीड़ितम् ।
वृद्धं ललितगात्रञ्च बिभ्रतं दण्डमानतम् ॥ २९
तपस्विनमशान्तञ्च शुष्ककण्ठौष्ठतालुकम् ।
कुर्व्वन्तं परया भक्त्या प्रणामं स्तवनं तयोः ॥ ३०
श्रुत्वा तद्वचनं तत्र नीलकण्ठः सुधोपमम् ।
उवाच परया प्रीत्या प्रसन्नस्तं प्रहस्य च ॥ ३१

शङ्कर उवाच ।

गृहं ते कुत्र विप्रर्षे वद वेदविदां वर ।
किन्नाम भवतः क्षिप्रं ज्ञातुमिच्छामि साम्प्रतम् ॥३२

पार्व्वत्युवाच ।

आगतोऽसि कुतो विप्र मम भाग्यादुपस्थितः ।
अद्य मे सफलं जन्म ब्राह्मणो मद्गृहेऽतिथिः ॥ ३३
अतिथिः पूजितो येन त्रिजगत् तेन पूजितम् ।
तत्रैवाधिष्ठिता देवा ब्राह्मणा गुरवो द्विज ॥ ३४
तीर्थान्यतिथिपादेषु शश्वत् तिष्ठन्ति निश्चितम् ।
तस्माद्धौततोयेन मिश्रितानि लभेद्गृही ॥ ३५
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ।
अतिथिः पूजितो येन स्वात्मशक्त्या यथोचितम् ॥ ३६
महादानानि सर्व्वाणि कृतानि तेन भूतले ।
अतिथिः पूजितो येन भारते भक्तिपूर्व्वकम् ॥ ३७
नानाप्रकारपुण्यानि वेदोक्तानि च यानि च ।
अन्ये वातिथिसेवायाः कलां नार्हन्ति षोड़शीम् ॥३८
अपूजितोऽतिथिर्यस्य भवनाद्विनिवर्त्तते ।
पितृदेवाग्नयः शश्वद्गुरवो यान्त्यपूजिताः ॥ ३९
यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
तानि सर्व्वाणि लभते नाश्यर्च्चातिथिमीप्सितम् ॥४०

ब्राह्मण उवाच ।

जानासि वेदान् वेदज्ञे वेदोक्तं कुरु पूजनम् ।
क्षुत्तृड्भ्यां पीड़ितो मातर्वचनञ्च श्रुतौ श्रुतम् ॥ ४१
व्याधियुक्तो निराहारो यदा वाऽनशनव्रती ।
मनोरथेनोपहारं भोक्तुमिच्छति मानवः ॥ ४२

पार्व्वत्युवाच ।

भोक्तुमिच्छसि किं विप्र त्रैलोक्ये यत् सुदुर्लभम् ।
भोक्तुमर्हसि मे साधो मज्जन्म सफलं कुरु ॥ ४३

ब्राह्मण उवाच ।

व्रते सुव्रतया सर्व्वमुपहारं त्वया कृतम् ।
नानाविधं मिष्टमिष्टं भोक्तुं श्रुत्वा समागतः ॥ ४४
सुव्रते तव पुत्त्रोऽहमग्रे मां पूजयिष्यसि ।
दत्त्वा मिष्टानि वस्तूनि त्रैलोक्ये दुर्लभानि च ॥ ४५
ताताः पञ्चविधाः प्रोक्ता मातरो विविधाः स्मृताः ।
पुत्त्राः पञ्चविधाः साध्वि कथिता वेदवादिभिः ॥४६
विद्यादातान्नदाता च भयात् त्राता च जन्मदः ।
कन्यादाता च वेदोक्ता नराणां पितरः स्मृताः ॥४७
गुरुपत्नी गर्भधात्री स्तनदात्री पितुः स्वसा ।
स्वसा मातुः सपत्नी च पुत्त्रभार्य्यान्नदायिका ॥ ४८
भृत्यः शिष्यश्च पोष्यश्च वीर्य्यजः शरणागतः ।
धर्म्मपुत्राश्च चत्वारो वीर्य्यजो धनभाक् सति ॥ ४९
क्षुत्तृड्भ्यां पीड़ितो मातर्वृद्धोऽहं शरणागतः ।
साम्प्रतं तव वन्ध्याया अनाथः पुत्त्र एव च ॥ ५०

पिष्टकं परमान्नञ्च सुपक्वानि फलानि च ।
नानाविधानि पिष्टानि कालदेशोद्भवानि च ॥ ५१
पक्वान्नं स्वस्तिकं क्षीरमिक्षुमिक्षुविकारजम् ।
घृतं दधि च शाल्यन्नं घृतपक्वञ्च व्यञ्जनम् ॥ ५२
लड्डुकानि तिलानाञ्च भृष्टानां सगुडानि च ।
मम ज्ञातानि वस्तूनि सुधायावकमीश्वरि ॥ ५३
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम् ।
जलं सुनिर्म्मलं स्वादु द्रव्याण्येतानि वाञ्छितम् ॥ ५४
द्रव्याणि यानि भुक्त्वा मे चारुलम्बोदरं भवेत् ।
अनन्तरत्नोद्भवजे तानि मह्यं प्रदास्यसि ॥ ५५
स्वामी ते त्रिजगत्कर्त्ता प्रदाता सर्व्वसम्पदाम् ।
महालक्ष्मीस्वरूपा त्वं सर्व्वैश्वर्य्यप्रदायिनी ॥ ५६
रत्नसिंहासनं द्रव्य-ममूल्यं रत्नभूषणम् ।
वह्निशुद्धांशुकं चारु प्रदास्यसि सुदुर्लभम् ॥ ५७
सुदुर्लभं हरेर्मन्त्रं हरौ भक्तिं दृढां सति ।
हरिप्रिया हरेः शक्तिस्त्वमेव सर्व्वदा सदा ॥ ५८
ज्ञानं मृत्युञ्जयं नाम दास्यशक्तिं सुखप्रदाम् ।
सर्व्वसिद्धिञ्च किं मातरदेयं स्वसुताय च ॥ ५९
मनः सुनिर्म्मलं कृत्वा धर्म्मे तपसि सन्ततम् ।
करिष्यति सर्व्वपरे न कामे जन्महेतुके ॥ ६०
स्वकामात् कुरुते कर्म्म कर्म्मणो भोग एव च ।
भोगौ शुभाशुभौ ज्ञेयौ तौ हेतू सुख-दुःखयोः ॥६१
दुःखं न कस्माद्भवति सुखं वा जगदम्बिके ।
सर्व्वं स्वकर्म्मणो भोगस्तेन तद्विरतो बुधः ॥ ६२
कर्म्म निर्म्मूलयन्त्येव सन्तो हि सततं मुदा ।
हरिभावनबुद्ध्या तत् तपसा भक्तसङ्गतः ॥ ६३
इन्द्रियद्रव्यसंयोग-सुखं विध्वंसनावधि ।
हरिसंलापरूपञ्च सुखं तत् सार्व्वकालिकम् ॥ ६४
हरिस्मरणशीलानां नायुर्याति सतां सति ।
न तेषामीश्वरः कालो न च मृत्युञ्जयो ध्रुवम् ॥ ६५
चिरं जीवन्ति ये भक्ता भारते चिरजीविनः ।
सर्व्वसिद्धिञ्च विज्ञाय स्वच्छन्दं सर्व्वगामिणः ॥ ६६
जातिस्मरा हरेर्भक्ता जानन्ति कोटिजन्मनः ।
कथयन्ति कथां जन्म लभन्ते स्वेच्छया मुदा ॥ ६७
परं पुनन्ति ते पूतास्तीर्थानि स्वात्मलीलया (क) ।
वैष्णवानां पदस्पर्शात् सद्यःपूता वसुन्धरा ॥ ६८
तद्गोदोहनमात्रञ्च तीर्थं यत्र वसन्ति ते ॥ ६९
गुरोरास्याद्विष्णुमन्त्रः श्रुतौ यस्य प्रविशति ।
तं वैष्णवं तीर्थपूतं प्रवदन्ति पुराविदः ॥ ७०
पुरुषाणां शतं पूर्व्वमुद्धरन्ति शतं परम् ।
लीलया भारते भक्त्या सोदरान्मातरं तथा ॥ ७१
मातामहानां पुरुषान् दश पूर्व्वान् दशापरान् ।
मातुः प्रसूमुद्धरन्ति दारुणाद्यमताडनात् ॥ ७२
भक्तदर्शनमाश्लेषं मानवाः प्राप्नुवन्ति ये ।
ते याताः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षिताः ॥७३
न लिप्ताः पातके भक्ताः सन्ततं हरिमानसाः ।
यथाग्नयः सर्व्वभक्षा यथा द्रव्येषु वायवः ॥ ७४
त्रिकोटिजन्मनो जन्तुः प्राप्नोति जन्म मानुषम् ।
प्राप्नोति भक्तसङ्गं स मानुषात् कोटिजन्मनः ॥७५
भक्तसङ्गाद्भवेद्भक्तेरङ्कुरो जीविनः सति ।
अभक्तदर्शनादेव स च प्राप्नोति शुष्कताम् ॥ ७६
पुनः प्रफुल्लतां याति वैष्णवालापमात्रतः ।
अङ्कुरश्चाविनाशी च वर्द्धते प्रतिजन्मनि ॥ ७७
तत् तरोर्व्वर्द्धमानस्य हरिदास्यं फलं सति ।
परिणामे भक्तिपाके पार्षदश्च भवेद्धरेः ॥ ७८
महति प्रलये नाशो न भवेत् तस्य निश्चितम् ।
सर्व्वस्रष्टेश्च संहारे ब्रह्मलोकस्य ब्रह्मणः ॥ ७९
तस्मान्नारायणे भक्तिं देहि नारायणाम्बिके ।
न भवेद्विष्णुभक्तिश्च विष्णुमाये त्वया विना ॥ ८०
त्वद्व्रतं लोकशिक्षार्थं त्वत्तपस्तव पूजनम् ।
सर्व्वेषां फलदात्री त्वं नित्यरूपा सनातनी ॥ ८१
गणेशरूपः श्रीकृष्णः कल्पे कल्पे तवात्मजः ।
त्वत्क्रोड़मागतः क्षिप्रमित्युक्त्वान्तरधीयत ॥ ८२
कृत्वान्तर्द्धानमीशश्च बालरूपं विधाय सः ।
जगाम पार्व्वतीतल्पं मन्दिराभ्यन्तरस्थितम् ॥ ८३
तल्पस्थे शिववीर्य्ये च मिश्रितः स बभूव ह ।
ददर्श गेहशिखरं प्रसूतो बालको यथा ॥ ८४
शुद्धचम्पकवर्णाभः कोटिचन्द्रसमप्रभः ।
सुखदृश्यः सर्व्वजनैश्चक्षुरश्मिविवर्द्धकः ॥ ८५
अतीवसुन्दरतनुः कामदेवविमोहनः ।
मुखं निरुपमं बिभ्रच्छारदेन्दुविनिन्दकम् ॥ ८६
सुन्दरे लोचने बिभ्रच्चारुपद्मविनिन्दके ।

(क) इतः परं पुण्यक्षेत्रेऽत्र सेवायै पराथैश्च भ्रमन्ति ते इत्यधिकं क्वचित् पठ्यते ।

ओष्ठाधरपुटं बिभ्रत् पक्वबिम्बविनिन्दकम् ॥८७
कपालञ्च कपोलं तदतीवसुमनोहरम्।
नासाग्रं रुचिरं बिभ्रत् खगेन्द्रचञ्चुनिन्दितम् ॥ ८८
त्रैलोक्येषु निरुपमं सर्व्वाङ्गं बिभ्रदुत्तमम्।
शयानः शयने तस्मिन् प्रेरयन् हस्तपादकम् ॥८९

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे गणेशोत्पत्तिर्नाम अष्टमोऽध्यायः ॥८॥

---

## नवमोऽध्यायः।

नारायण उवाच।

हरौ तिरोहिते भूते दुर्गा च शङ्करस्तदा।
ब्राह्मणान्वेषणं कृत्वा बभ्राम पुरतो मुने ॥ १

पार्व्वत्युवाच।

अयि विप्रेन्द्रातिवृद्धः क्व गतोऽसि क्षुधातुरः।
हे तात दर्शनं देहि प्राणांश्च रक्ष मे विभो ॥ २
शिव शीघ्रं समुत्तिष्ठ ब्राह्मणान्वेषणं कुरु।
क्षणमुत्पन्नयोरेव प्रत्यक्षमावयोर्गतः ॥ ३
अगृहीत्वा गृहात् पूजां गृहिणोऽतिथिरीश्वर।
यदि याति क्षुधार्त्तश्च तस्य किं जीवनं वृथा ॥ ४
पितरस्तन्न गृह्णन्ति पिण्डदानञ्च तर्पणम्।
तस्याहुतिं न गृह्णन्ति वह्निः पुष्पं जलं सुराः ॥ ५
हव्यं पुष्पं जलं द्रव्यमशुचेश्च सुरासमम्।
अमेध्यसदृशः पिण्डः स्पर्शनं पुण्यनाशनम् ॥ ६
एतस्मिन्नन्तरे तत्र वाग्बभूवाशरीरिणी।
केवलमुक्ता सा दुर्गा तां शुश्राव शुचातुरा ॥ ७
शान्ता भव जगन्मातः स्वसुतं पश्य मन्दिरे।
कृष्णं गोलोकनाथं तं परिपूर्णतमं परम् ॥ ८
सुपुण्यकव्रततरोः फलरूपं सनातनम्।
यत् तेजो योगिनः शश्वद्ध्यायन्ते सन्ततं मुदा ॥ ९
ध्यायन्ते वैष्णवा देवा ब्रह्म-विष्णु-शिवादयः।
यस्य पूज्यस्य सर्व्वाग्रे कल्पे कल्पे च पूजनम् ॥ १०
यस्य स्मरणमात्रेण सर्व्वविघ्नो विनश्यति।
पुण्यराशिस्वरूपञ्च स्वसुतं पश्य मन्दिरे ॥ ११
कल्पे कल्पे ध्यायसे यं ज्योतीरूपं सनातनम्।
पश्याध्वं मुक्तिदं पुत्रं भक्तानुग्रहविग्रहम् ॥ १२
तव वाञ्छापूर्णबीजं तपःकल्पतरोः फलम्।
सुन्दरं स्वसुतं पश्य कोटिकन्दर्पनिन्दकम् ॥ १३
नायं विप्रः क्षुधार्त्तश्च विप्ररूपी जनार्द्दनः।
किं वा विलपसे दुर्गे क्व वा वृद्धः क्व चातिथिः।
सरस्वतीत्येवमुक्त्वा विरराम च नारद ॥ १४
वत्सा श्रुत्वाकाशवाणीं जगाम स्वालयं सती।
ददर्श बालं पर्य्यङ्के शयानं स्मितं मुदा ॥ १५
पश्यन्तं गेहशिखरं शतचन्द्रसमप्रभम्।
स्वप्रभापटलेनैव द्योतयन्तं महीतलम् ॥ १६
कुर्व्वन्तं भ्रमणं तल्पे पश्यन्तं स्वेच्छया मुदा।
उमेति शब्दं कुर्व्वन्तं रुदन्तं तं स्तनार्थिनम् ॥ १७
दृष्ट्वा तदद्भुतं रूपं वत्सा शङ्करसन्निधिम्।
गत्वेत्युवाच प्राणेशं मङ्गलं सर्व्वमङ्गला ॥ १८

पार्व्वत्युवाच।

गृहमागच्छ प्राणेश तपसां फलदायकम्।
कल्पे कल्पे ध्यायसे यं तं पश्यागत्य मन्दिरम् ॥१९
शीघ्रं पुत्रमुखं पश्य पुण्यबीजं महोत्सवम्।
पुन्नाम-नरक-त्राण-कारणं भवतारणम् ॥ २०
स्नानञ्च सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षणम्।
पुत्रस्य दर्शनस्यास्य कलां नार्हन्ति षोडशीम् ॥२१
सर्व्वदानेन यत् पुण्यं यत् पृथिव्याः प्रदक्षिणात्।
पुत्रदर्शनपुण्यस्य कलां नार्हन्ति षोडशीम् ॥ २२
सर्व्वैस्तपोभिर्यत् पुण्यं यदेवानशनैर्व्रतैः।
सत्पुत्रोद्भवपुण्यस्य कलां नार्हन्ति षोडशीम् ॥२३
यद्बहुविप्रभोजनैः पुण्यं यदेव सुरसेवनैः।
सत्पुत्रप्राप्तिपुण्यस्य कलां नार्हन्ति षोडशीम् ॥२४
पार्व्वतीवचनं श्रुत्वा शिवः प्रहृष्टमानसः।
आजगाम स्वभवनं क्षिप्रं स्वकान्तया सह ॥ २५
ददर्श तल्पे स्वसुतं तप्तकाञ्चनसन्निभम्।
हृदयस्थञ्च यद्रूपं तदेवातिमनोहरम् ॥ २६
दुर्गा तल्पात् समादाय कृत्वा वक्षसि तं सुतम्।
चुचुम्बानन्दजलधौ निमग्ना सेत्युवाच ह ॥ २७

पार्व्वत्युवाच।

सम्प्राप्यमूल्यरत्नं त्वां पूर्णां मे वत्स मानसम् (क)।
यथा मनो दरिद्रस्य सहसा प्राप्य सद्धनम् ॥ २८
कान्ते सुचिरमायाते प्रोषिते योषितो यथा।

(क) पूर्णमेव सनातनमिति क्वचित् पाठः।

मानसं परिपूर्णञ्च बभूव च तथा मम ॥ २९
सुचिरं गतमायान्तमेकपुत्त्रा यथा सुतम्।
दृष्ट्वा तुष्टा यथा वत्स तथाहमपि साम्प्रतम् ॥ ३०
सद्रत्नं सुचिरं भ्रष्टं प्राप्य हृष्टो यथा जनः।
अनावृष्टौ सुवृष्टिञ्च सम्प्राप्याहं तथा सुतम् ॥ ३१
यथा सुचिरमन्धानां स्थितानाञ्च निराश्रये।
चक्षुः सुनिर्म्मलं प्राप्य मनः पूर्णं तथैव मे ॥ ३२
दुस्तरे सागरे घोरे पतितानाञ्च सङ्कटे।
सनाविकां(क) प्राप्य नौकां मनः पूर्णं तथा मम॥३३
तृष्णया शुष्ककण्ठानां सुचिरञ्च सुशीतलम्।
सुवासितं जलं प्राप्य मनः पूर्णं तथा मम ॥ ३४
दावाग्निपतितानाञ्च स्थितानाञ्च निराश्रये।
निरग्निमाश्रयं प्राप्य मनः पूर्णं तथा मम ॥ ३५
चिरं बुभुक्षितानाञ्च व्रतोपवासकारिणाम्।
सदन्नं पुरतो दृष्ट्वा मनः पूर्णं तथा मम ॥ ३६
इत्युक्त्वा पार्व्वती तत्र क्रोड़े कृत्वा स्वबालकम्।
प्रीत्या स्तनं ददौ तस्मै परमानन्दमानसा ॥ ३७
क्रीड़े चकार भगवान् बालकं हृष्टमानसः।
चुचुम्ब गण्डं वेदोक्तां युयुजे चाशिषं मुदा ॥ ३८

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारद-संवादे गणेशदर्शनं
नाम नवमोऽध्यायः ॥९॥

---

## दशमोऽध्यायः।

### नारायण उवाच।

तौ दम्पती वह्निर्गत्वा पुत्त्रमङ्गलहेतवे।
विविधानि च रत्नानि ब्राह्मणेभ्यो ददौ(ख) मुदा॥१
वन्दिभ्यो भिक्षुकेभ्यश्च दानानि विविधानि च।
नानाविधानि वाद्यानि वादयामास शङ्करः ॥ २
हिमालयश्च रत्नानां ददौ लक्षं द्विजातये।
सहस्रञ्च गजेन्द्राणामश्वानाञ्च त्रिलक्षकम् ॥ ३
दशलक्षं गवाञ्चैव पञ्चलक्षं सुवर्णकम्।
मुक्ता-माणिक्य-रत्नानि मणिश्रेष्ठानि यानि च ॥४
अन्यान्यपि च दानानि वस्त्राणि भूषणानि च।
सर्व्वाण्यमूल्यरत्नानि क्षीरोदसम्भवानि च।
ब्राह्मणेभ्यो ददौ विष्णुः कौस्तुभं कौतुकान्वितः ॥
ब्रह्मा विशिष्टदानानि विप्राणां वाञ्छितानि च।
सुदुर्लभानि स्रष्टा च ब्राह्मणेभ्यो ददौ मुदा ॥ ६
धर्म्मः सूर्य्यश्च शक्रश्च देवाश्च मुनयस्तथा।
गन्धर्व्वाः पर्व्वता देव्यो ददुर्दानं क्रमेण च ॥७
परशानां सहस्राणि सूचकानां शतानि च।
शतानि कौस्तुभानाञ्च क्षीरकाणां शतानि च ॥ ८
माणिक्यानां सहस्राणि रत्नानाञ्च शतानि च।
हरिद्वर्णमणीन्द्राणां सहस्राणि मुदान्विता ॥ ९
गवां रत्नानि लक्षाणि गजरत्नं सहस्रकम्।
अयुतान्यश्वरत्नानि श्वेतवर्णानि कौतुकात् ॥ १०
शतलक्षं सुवर्णानां वह्निशुद्धांशुकानि च।
ब्राह्मणेभ्यो ददौ ब्रह्मंस्तत्र क्षीरोदकन्यका ॥ ११
हारञ्चामूल्यरत्नानां त्रिषु लोकेषु दुर्लभम्।
अतीवनिर्म्मलं सारं सूर्य्यभानुविनिन्दकम् ॥ १२
परिष्कृतञ्च माणिक्यैर्हीरकैश्च विराजितम्।
रम्यं कौस्तुभमध्यस्थं ददौ देवी सरस्वती ॥ १३
त्रैलोक्यसारहारञ्च सद्रत्नसारनिर्म्मितम्।
भूषणानि च सर्व्वाणि सा सावित्री ददौ मुदा ॥१४
लक्षं सुवर्णलोष्ट्राणां धनानि विविधानि च।
शतान्यमूल्यरत्नानां कुबेरश्च ददौ मुदा ॥ १५
दानानि दत्त्वा विप्रेभ्यस्ते सर्व्वे ददृशुः शिशुम्।
परमानन्दसंयुक्ता शिवपुत्त्रोत्सवे मुने ॥ १६
भारं वोढुमशक्ताश्च ब्राह्मणा वन्दिनस्तथा।
स्थायं स्थायञ्च गच्छन्तो धनानां पथि कातराः ॥१७
कथयन्ति कथाः सर्व्वे विश्रान्ताः पूर्व्वदायिनाम्।
श्रुत्वा शृण्वन्ति मुदिता युवानो भिक्षुका मुने ॥ १८
विष्णुः प्रमुदितस्तत्र वादयामास दुन्दुभिम्।
सङ्गीतं गापयामास कारयामास नर्त्तनम् ॥ १९
वेदांश्च पाठयामास पुराणानि च नारद।
मुनीन्द्रानानयामास पूजयामास तान् मुदा ॥ २०
आशिषं दापयामास कारयामास मङ्गलम्।
सार्द्धं देवैश्च देवीभिर्ददौ तस्मै शुभाशिषम् ॥ २१

### विष्णुरुवाच।

शिवेन तुल्यं ज्ञानं ते परमायुश्च बालक।
पराक्रमो मया तुल्यः सर्व्वसिद्धेश्वरो भव ॥ २२

(क) पतितस्य च सङ्कटे। अनौकस्य इति वा पाठः।
(ख) ददाविति आर्षं ददुरिति साधु।

ब्रह्मोवाच।

अग्रगण्या ते जगत् पूर्णं सर्व्वपूज्यो भवाचिरम्।
सर्व्वेषां पुरतः पूजा भवत्वतिसुदुर्लभा॥ २३

धर्म्म उवाच।

मया तुल्यः सुधर्म्मिष्ठो भवान् भव सुदुर्लभः।
सर्व्वज्ञश्च दयायुक्तो हरिभक्तो हरेः समः॥ २४

महादेव उवाच।

दाता भव मया तुल्यो हरिभक्तश्च बुद्धिमान्।
विद्यावान् पुण्यवान् शान्तो दान्तश्च प्राणवल्लभ॥२५

लक्ष्मीरुवाच।

मम स्थितिश्च गेहे ते देहे भवतु शाश्वती।
पतिव्रता मया तुल्या शान्ता कान्ता मनोहरा॥२६

सरस्वत्युवाच।

मया तुल्या सुकविता-धारणाशक्तिरेव च।
स्मृतिर्विवेचनाशक्ति-र्भवत्वतिशया सुत॥ २७

सावित्र्युवाच।

वत्साऽहं वेदजननी वेदज्ञाता भवाचिरम्।
मन्मन्त्रजपशीलश्च प्रवरो वेदवादिनाम्॥ २८

हिमालय उवाच।

श्रीकृष्णे ते मतिः शश्वद्भक्तिर्भवतु शाश्वती।
श्रीकृष्णतुल्यो भगवान् (क) भव कृष्णपरायणः॥२९

मेनकोवाच।

समुद्रतुल्यो गाम्भीर्य्ये कामतुल्यश्च रूपवान्।
श्रीयुक्तः श्रीपतिसमो धर्म्मे धर्म्मसमो भव॥ ३०

वसुन्धरोवाच।

क्षमाशीलो मया तुल्यः शरण्यः सर्व्वरत्नवान्।
निर्व्विघ्नो विघ्ननिघ्नश्च भव वत्स शुभाश्रयः॥ ३१

पार्व्वत्युवाच।

ताततुल्यो महायोगी सिद्धः सिद्धिप्रदः शुभः।
मृत्युञ्जयश्च भगवान् भवत्वतिविशारदः॥ ३२

नारायण उवाच।

ऋषयो मुनयः सिद्धाः सर्व्वे युयुजुराशिषम्।
ब्राह्मणा वन्दिनश्चैव युयुजुः सर्व्वमङ्गलम्॥ ३३
सर्व्वं ते कथितं वत्स सर्व्वमङ्गलमङ्गलम्।
गणेशजन्मकथनं सर्व्वविघ्नविनाशनम्॥ ३४
इमं सुमङ्गलाध्यायं यः शृणोति सुसंयतः।
सर्व्वमङ्गलसंयुक्तः स भवेन्मङ्गलालयः॥ ३५
अपुत्रो लभते पुत्रमधनो लभते धनम्।
कृपणो लभते सर्व्वं शश्वत् सम्पत्प्रदायि च॥ ३६
भार्य्यार्थी लभते भार्य्यां प्रजार्थी लभते प्रजाः।
आरोग्यं लभते रोगी सौभाग्यं दुर्भगा लभेत् (क)३७
भ्रष्टं पुत्रं नष्टधनं प्रोषितञ्च प्रियं लभेत्।
शोकाविष्टः सदानन्दं लभते नात्र संशयः॥ ३८
गणेशाख्यानश्रवणे यत् फलं लभते नरः।
तत् फलं लभते नूनमध्यायश्रवणे मुने॥ ३९
अयञ्च मङ्गलाध्यायो यस्य गेहे च तिष्ठति।
सदा मङ्गलसंयुक्तः स भवेन्नात्र संशयः॥ ४०
यात्राकाले च पुण्याहे यः शृणोति समाहितः।
सर्व्वाभीष्टं स लभते श्रीगणेशप्रसादतः॥ ४१

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे गणेशोद्भवो नाम दशमोऽध्यायः॥ १०॥

---

## एकादशोऽध्यायः।

नारायण उवाच।

हरिस्तमाशिषं कृत्वा रत्नसिंहासने वरे।
देवैश्च मुनिभिः सार्द्धमुवास तत्र संसदि॥ १
दक्षिणे शङ्करस्तस्य वामे ब्रह्मा प्रजापतिः।
पुरतो जगतां साक्षी धर्म्मो धर्म्मवतां वरः॥ २
शावां धर्म्मसमीपे च सूर्य्यः शक्रः कलानिधिः।
देवाश्च मुनयः शैलाः ब्रह्मन्नषुः सुखासने॥ ३
ननर्त्त नर्त्तकश्रेणी जगुर्गन्धर्व्वकिन्नराः।
श्रुतिसारं श्रुतिसुखं तुष्टवुः श्रुतयो हरिम्॥ ४
एतस्मिन्नन्तरे तत्र द्रष्टुं शङ्करनन्दनम्।
आजगाम महायोगी सूर्य्यपुत्रः शनैश्चरः॥ ५
अत्यन्तनम्रवदन ईषन्मुद्रितलोचनः।
अन्तर्व्वहिः स्मरन् कृष्णं कृष्णैकगतमानसः॥ ६
तपःफलाशी तेजस्वी ज्वलदग्निशिखोपमः।
अतीवसुन्दरः श्यामः पीताम्बरधरो वरः॥ ७
प्रणम्य विष्णुं ब्रह्माणं शिवं धर्म्मं रविं सुरान्।
मुनीन्द्रान् बालकं द्रष्टुं जगाम तदनुज्ञया॥ ८

---

(क) गुणवानिति वा पाठः।

(क) लभेदिति चार्षं लभेत इति साधु।

शम्भानद्वारमासाद्य शिवतुल्यपराक्रमम्।
द्वारिणं शूलहस्तञ्च विशालाक्षमुवाच ह॥ ९

शनैश्चर उवाच।

शिवाज्ञया शिशुं द्रष्टुं यामि शङ्करकिङ्कर।
विष्णुप्रमुखदेवानां मुनीनामनुरोधतः॥ १०
गत्वा तामीश्वरीमीड्य पार्व्वतीसन्निधिं बुध।
पुनर्यामि शिशुं दृष्ट्वा विषचारत्नमानसः॥११

विशालाक्ष उवाच।

आज्ञावहो न देवानां नाहं शङ्करकिङ्करः।
द्वारं दातुं न शक्तोऽहं विनात्ममातुराज्ञया॥ १२
इत्युक्त्वाभ्यन्तरस्थेत्य प्रेरयित्वा शिवाज्ञया।
ददौ द्वारं ग्रहेशाय चक्षुःकोणाज्ञया ततः॥ १३
शनिरभ्यन्तरं गत्वा ननाम नम्रकन्धरः।
रत्नसिंहासनस्थाञ्च पार्व्वतीं सस्मितां मुदा॥ १४
सखीभिः पञ्चभिः शश्वत्सेवितां श्वेतचामरैः।
सखिदत्तञ्च ताम्बूलं भुक्तवन्तीं सुवासितम्॥ १५
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम्।
पश्यन्तीं नर्त्तकीनृत्यं पुत्रवक्षःस्थलस्थिताम्॥ १६
नतं सूर्य्यसुतं दृष्ट्वा दुर्गा सम्भाष्य सादरम्।
शुभाशिषं ददौ तस्मै पृष्ट्वा तन्मङ्गलं शुभा॥ १७

पार्व्वत्युवाच।

कथमानम्रवक्त्रस्त्वं श्रोतुमिच्छामि साम्प्रतम्।
कथं न पश्य मां साधो बालकं वा ग्रहेश्वर॥ १८

शनिरुवाच।

सर्व्वे स्वकर्म्मणा साध्वि भुञ्जते तपसः फलम्।
शुभाशुभञ्च यत् कर्म्म कोटिकल्पेन लुप्यते॥ १९
कर्म्मणा जायते जन्तुर्ब्रह्मेन्द्रसूर्य्यमन्दिरे।
कर्म्मणा नरगेहेषु पश्वादिषु च कर्म्मणा॥ २०
कर्म्मणा नरकं याति वैकुण्ठं याति कर्म्मणा।
स्वकर्म्मणां च राजेन्द्रो भृत्यस्तस्य स्वकर्म्मणा॥ २१
कर्म्मणा सुन्दरः शश्वद्व्याधियुक्तः स्वकर्म्मणा।
कर्म्मणा विषयी मातर्निर्लिप्तश्च स्वकर्म्मणा॥ २२
कर्म्मणा धनवान् लोको दैन्ययुक्तः स्वकर्म्मणा।
सत्कुटुम्बः सुकर्म्मा च कर्म्मणा बन्धुकण्टकः॥२३
सुभार्य्यश्च सुपुत्रश्च सुखी शश्वत् स्वकर्म्मणा।
अपुत्रकश्च कुस्त्रीवान् निस्त्रीकश्च स्वकर्म्मणा॥ २४
इतिहासश्चातिगोप्यं शृणु शङ्करवल्लभे।
अकथ्यं जननीसाक्षाल्लज्जाजनककारणम्॥ २५
आबाल्यात् कृष्णभक्तोऽहं कृष्णध्यानैकमानसः।
तपस्यासु रतः शश्वद्विषये विरतः सदा॥ २६
पिता ददौ विवाहे तु कन्यां चित्ररथस्य च।
अतितेजस्विनी शश्वत् तपस्यासु रता सती॥ २७
एकदा सा ऋतुस्नाता सुवेशं स्वं विधाय च।
रत्नालङ्कारसंयुक्ता मुनिमानसमोहिनी॥ २८
हरिपादध्यायमानं मां पश्यन्तीत्युवाच ह।
मत्समीपं समागत्य सस्मिता लोललोचना॥ २९
शशाप मामपश्यन्तं ऋतुनष्टा सुकोपतः।
बाह्यज्ञानविहीनञ्च ध्यानैकतानमानसम्॥ ३०
न दृष्टाहं त्वया येन न कृतम्ऋतुरक्षणम्।
त्वया दृष्टञ्च यद्वस्तु मूढ़ सर्व्वं विनश्यति॥ ३१
अहञ्च विरतो ध्याने तामतोषं पुरा सति।
शापं मोक्तुं न शक्ता सा पश्चात्तापं चकार ह॥ ३२
तेन मातर्न पश्यामि किञ्चिद्वस्तु स्वचक्षुषा।
ततः प्रभृतिनम्रास्यः प्राणिहिंसाभयादहम्॥ ३३
शनैश्चरवचः श्रुत्वा जहास पार्व्वती मुने।
उच्चैः प्रजहसुः सर्व्वा नर्त्तक्यः किङ्करीगणाः॥ ३४

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारद-संवादे शनि-पार्व्वती-
संवादो नामैकादशोऽध्यायः॥११॥

---

## द्वादशोऽध्यायः।

नारायण उवाच।

दुर्गा तद्वचनं श्रुत्वा सस्मार हरिमीश्वरम्।
ईश्वरेच्छावशीभूतं जगदित्युवाच ह॥ १
सा च दैववशीभूता शनिं प्रोवाच कौतुकात्।
पश्य मां मच्छिशुमिति निषेकः केन वार्य्यते॥ २
पार्व्वतीवचनं श्रुत्वा शनिर्म्मने हृदा स्वयम्।
पश्यामि किं न पश्यामि पार्व्वतीसुतमित्यहो॥ ३
यदि बालो मया दृष्टस्तस्य विघ्नो भवेद्ध्रुवम्।
इत्येवमुक्त्वा धर्म्मिष्ठो धर्म्मं कृत्वा तु साक्षिणम्।
बालं द्रष्टुं मनश्चक्रे न बालमातरं शनिः॥ ४
विषण्णमानसः पूर्व्वं शुष्ककण्ठौष्ठतालुकः।
सव्यलोचनकोणेन ददर्श च शिशोर्मुखम्॥ ५

शनेश्च दृष्टिमात्रेण चिच्छेद मस्तकं मुने ।
चक्षुर्निवारयामास तस्थौ नम्राननः शनिः ॥ ६
शतस्थौ पार्व्वतीक्रोड़े तत्सर्व्वाङ्गः सुलोहितः ।
विविश मस्तकं कृष्णे गत्वा गोलोकमीप्सितम् ॥ ७
मूर्च्छां सम्प्राप सा देवी विलप्य च भृशं मुहुः ।
मृता इव पृथिव्यान्तु कृत्वा वक्षसि बालकम् ॥ ८
विस्मितास्ते सुराः सर्व्वे चित्रपुत्तलिका यथा ।
देव्यश्च शैला गन्धर्व्वाः शिवः कैलासवासिनः ॥ ९
तान् सर्व्वान् मूर्च्छितान् दृष्ट्वारुह्य गरुडं हरिः ।
जगाम पुष्पभद्रां स उत्तरस्यां दिशि स्थिताम् ॥१०
पुष्पभद्रानदीतीरे ददर्श कानने स्थितम् ।
गजेन्द्रं निद्रितं तत्र शयानं हस्तिनीयुतम् ॥ ११
दिश्युत्तरस्यां शिरसं मूर्च्छितं सुरतश्रमात् ।
परितः शावकान् कृत्वा परमानन्दमानसम् ॥ १२
शीघ्रं सुदर्शनेनैव चिच्छेद तच्छिरो मुदा ।
स्थापयामास गरुड़े रुधिराक्तं मनोहरम् ॥ १३
गजच्छिन्नाङ्गविक्षेपात् प्रबोधं प्राप्य हस्तिनी ।
शावकान् बोधयामास वदन्ती चाशुभं सदा ॥ १४
रुरोद शावकैः सार्द्धं सा विलाप्य शुचातुरा ।
तुष्टाव कमलाकान्तं भ्रामयन्तं सुदर्शनम् ॥ १५
निषेकं खण्डितुं शक्तं निषेकजनकं विभुम् ।
निषेकभोगदातारं भोगनिस्तारकारणम् ॥ १६
प्रभुस्तत्स्तवनात् तुष्टस्तस्यै विप्र वरं ददौ ।
मुण्डान्मुण्डं विनिष्कृत्य युयुजे तद्गजे मुदा ॥ १७
जीवयामास तं तत्र ब्रह्मज्ञानेन ब्रह्मवित् ।
सर्व्वाङ्गे योजयामास गजस्य चरणाम्बुजम् ॥ १८
त्वं जीवाकल्पपर्य्यन्तं परिवारैः समं गज ।
इत्युक्त्वा च मनोयायी कैलासमाजगाम सः ॥ १९
आगत्य पार्व्वतीस्थानं बालं कृत्वा स्ववक्षसि ।
रुचिरं तच्छिरः कृत्वा योजयामास बालके ॥ २०
ब्रह्मस्वरूपो भगवान् ब्रह्मज्ञानेन लीलया ।
जीवनं जीवयामास हुंकारोच्चारणेन च ॥ २१
पार्व्वतीं बोधयित्वा तु दत्त्वा क्रोड़े च तं शिशुम् ।
बोधयामास तां नाथ आध्यात्मिकविबोधनैः ॥ २२

विष्णुरुवाच ।

ब्रह्मादिकीटपर्य्यन्तं जगद्वृन्दे स्वकर्म्मणाम् ।
फलं बुद्धिस्वरूपासि त्वं न जानासि किं शिवे ॥ २३
कल्पकोटिशतं भोगो जीविनां तत् स्वकर्म्मणाम् ।
उपस्थितं भवेन्नित्यं प्रतियोनौ (क)शुभाशुभम् ॥ २४
इन्द्रः स्वकर्म्मणा कीटयोनौ जन्म लभेत् सति ।
कीटश्चापि भवेदिन्द्रः पूर्व्वकर्म्मफलेन वै ॥ २५
सिंहोऽपि मक्षिकां हन्तुमक्षमः प्राक्तनं विना ।
मशको हस्तिनं हन्तुं क्षमः स्वप्राक्तनेन च ॥ २६
सुखं दुःखं भयं शोकमानन्दं कर्म्मणः फलम् ।
सुकर्म्मणः सुखं हर्षमितरे पापकर्म्मणः ॥ २७
इहैव कर्म्मणो भोगः परत्र च शुभाशुभम् ।
कर्म्मोपार्ज्जनयोग्यञ्च पुण्यक्षेत्रञ्च भारतम् ॥ २८
कर्म्मणः फलदाता च विधाता च विधेरपि ।
मृत्योर्मृत्युः कालकालो निषेकस्य निषेककृत् ॥ २९
संहर्त्तुरपि संहर्त्ता पातुः पाता परात्परः ।
गोलोकनाथः श्रीकृष्णः परिपूर्णतमः स्वयम् ॥ ३०
वयं यस्य कलाः पुंसो ब्रह्म-विष्णु-महेश्वराः ।
महाविराड्यदंशश्च यल्लोमविवरे जगत् ॥ ३१
कलांशाः केपि तद्दुर्गे कलांशांशाश्च केचन ।
चराचरं जगत् सर्व्वं ततस्तेन विनायकः ॥ ३२
श्रीविष्णोर्वचनं श्रुत्वा परितुष्टा च पार्व्वती ।
स्तनं ददौ च शिशवे तं प्रणम्य गदाधरम् ॥ ३३
तुष्टाव पार्व्वती तुष्टा प्रेरिता शङ्करेण च ।
पुटाञ्जलियुता भक्त्या विष्णुं तं कमलापतिम् ॥ ३४
आशिषं युयुजे विष्णुः शिशुञ्च शिशुमातरम् ।
ददौ गले बालकस्य कौस्तुभञ्च स्वभूषणम् ॥ ३५
ब्रह्मा ददौ स्वमुकुटं धर्म्मश्च रत्नभूषणम् ।
क्रमेण देव्यो रत्नानि ददुः सर्व्वा यथोचितम् ॥ ३६
तुष्टाव तं महादेव-श्चातीव-हृष्ट-मानसः ।
देवाश्च मुनयः शैला गन्धर्व्वाः सर्व्वयोषितः ॥ ३७
दृष्ट्वा शिवः शिवा चैव बालकं मृतजीवितम् ।
ब्राह्मणेभ्यो ददौ तत्र कोटि रत्नानि नारद ॥ ३८
अश्वानाञ्च गजानाञ्च सहस्राणि शतानि च ।
वन्दिभ्यः प्रददौ तत्र बालके मृतजीविते ॥ ३९
हिमालयश्च संहृष्टो हृष्टा देवाश्च तत्र वै ।
ददुर्दानानि विप्रेभ्यो वन्दिभ्यः सर्व्वयोषितः ॥ ४०
ब्राह्मणान् भोजयामास कारयामास मङ्गलम् ।
वेदांश्च पाठयामास पुराणानि रमापतिः ॥ ४१

(क) प्रतियोनावित्यर्थे प्रतियोनीति साधु ।

शनिं सलज्जितं दृष्ट्वा पार्व्वती कोपशालिनी।
शशाप च सभामध्येऽप्यङ्गहीनो भवेति च॥ ४२
दृष्ट्वा शप्तं शनिं सूर्य्यः कश्यपश्च यमस्तथा।
तेऽतिरुष्टाः समुत्तस्थुर्गाम्भुकाः शङ्करालयात्॥ ४३
रक्तास्यास्ते रक्तमुखाः कोपप्रस्फुरिताधराः।
तां धर्म्मं साक्षिणं कृत्वा विष्णुञ्च शप्तुमुद्यताः॥ ४४
ब्रह्मा तान् बोधयामास विष्णुना प्रेरितः सुरैः।
रक्तास्यां पार्व्वतीञ्चैव कोपप्रस्फुरिताधराम्॥ ४५
ब्रह्माणमूचुस्ते तत्र क्रमेण समयोचितम्।
भैरवो देवताः सर्व्वे मुनयः पर्व्वता स्तथा॥ ४६

कश्यप उवाच।

दुर्द्दैवोऽयं प्राक्तनेन पत्नीशापेन सर्व्वदा।
बालं ददर्श यत्नेन तस्यैव मातुराज्ञया॥ ४७

श्रीसूर्य्य उवाच।

तं धर्म्मं साक्षिणं कृत्वा पुत्त्रस्य मातुराज्ञया।
मत्पुत्त्रोऽतिप्रयत्नेन ददर्श पार्व्वतीसुतम्॥ ४८
यथा निरपराधेन मत्पुत्त्रं सा शशाप ह।
तत्पुत्त्रस्याङ्गभङ्गश्च भविष्यति न संशयः॥ ४९

यम उवाच।

प्रदाय स्वयमाज्ञाञ्च शशाप च स्वयं कथम्।
वयं शपामः कोऽधर्म्मो जिघांसोश्च जिघांसने॥ ५०

ब्रह्मोवाच।

शशाप पार्व्वती रुष्टा स्त्रीस्वभावाच्च चापलात्।
सर्व्वेषां साधनेनैव हन्तुमर्हन्ति साधवः॥ ५१
दुर्गं लमाशां दत्त्वा च पुत्त्रदर्शनहेतवे।
कथं शपसि निर्द्दोषमतिथिं लक्ष्यागतम्॥ ५२
इत्युक्त्वा शनिमादाय बोधयित्वा तु पार्व्वतीम्।
तां तं समर्पणं चक्रे शापमोचनहेतवे॥ ५३
बभूव पार्व्वती तुष्टा ब्रह्मणो वचनान्मुने।
शान्ता बभूवुस्ते तत्र दिनेश-यम-कश्यपाः॥ ५४
उवाच पार्व्वती तत्र सन्तुष्टा तं शनेश्वरम्।
प्रसादिता शिवेनैव ब्रह्मणा परिशान्तिता॥ ५५

पार्व्वत्युवाच।

ग्रहराजो भव शने मद्वरेण हरिप्रिय।
चिरजीवी च योगीन्द्रो हरिभक्तस्य का विपत्॥५६
अद्यप्रभृति निर्व्विघ्ने हरौ भक्तिर्द्दृढास्तु ते।
मच्छापामोघतो वत्स किञ्चित् खञ्जो भविष्यति॥५७

इत्युक्त्वा पार्व्वती तुष्टा बालं कृत्वा च वक्षसि।
उवास तोषितां मध्ये तस्मै दत्त्वा शुभाशिषम्॥ ५८
शनिर्जगाम देवानां समीपं हृष्टमानसः।
प्रणम्य भक्त्या तां ब्रह्मन्नम्बिकां जगदम्बिकाम्॥५९

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारदसंवादे विघ्नोपशमनं नाम द्वादशोऽध्यायः॥ १२॥

---

## त्रयोदशोऽध्यायः।

नारायण उवाच।

अथ विष्णुः शुभे काले देवैश्च मुनिभिः सह।
पूजयामास तं बालमुपहारैरनुत्तमैः॥ १
सर्व्वाग्रे तव पूजा च मया दत्ता सुरोत्तम।
सर्व्वपूज्यश्च योगीन्द्रो भव वत्सेत्युवाच तम्॥ २
वनमाला ददौ तस्मै ब्रह्मज्ञानञ्च मुक्तिदम्।
सर्व्वसिद्धिं प्रदायैव चकारात्मसमं हरिः॥ ३
ददौ द्रव्याणि चारूणि चोपचाराणि षोड़श।
तन्नामकरणं चक्रे मुनिभिश्च समं सुरैः॥ ४
विघ्नेशश्च गणेशश्च हेरम्बश्च गजाननः।
लम्बोदरश्चैकदन्तः शूर्पकर्णो विनायकः॥ ५
एतान्यष्टौ च नामानि तच्चकार सनातनः।
आशिषं दापयामास चानयामास तान् मुनीन्॥ ६
सिंहासनं ददौ धर्म्मस्तस्मै ब्रह्मा कमण्डलुम्।
शङ्करो योगपट्टञ्च तत्त्वज्ञानं सुदुर्लभम्॥ ७
रत्नसिंहासनं शक्रः सूर्य्यश्च मणिकुण्डले।
माणिक्यमालां चन्द्रश्च कुवेरश्च किरीटकम्॥ ८
वह्निशुद्धञ्च वसनं ददौ तस्मै हुताशनः।
रत्नच्छत्त्रञ्च वरुणो वायू रत्नाङ्गुरीयकम्॥ ९
क्षीरोदोद्भवसद्रत्न-रचितं वलयं वरम्।
मञ्जीरञ्चापि केयूरं ददौ पद्मालया मुने॥ १०
कण्ठभूषाञ्च सावित्री भारती हारमुज्ज्वलम्।
क्रमेण सर्व्वदेवाश्च देव्यश्च यौतुकं ददुः॥ ११
मुनयः पर्व्वताश्चैव रत्नानि विविधानि च।
वसुन्धरा ददौ तस्मै वाहनाय च मूषिकम्॥ १२
क्रमेण देवा देव्यश्च मुनयः पर्व्वतादयः।
गन्धर्व्वाः किन्नरा यक्षा मनवो मानवास्तथा॥ १३

नानाविधानि द्रव्याणि स्वादूनि मधुराणि च।
पूजां चक्रुश्च ते सर्व्वे क्रमेण भक्तिपूर्व्वकम् ॥ १४
पार्व्वती जगतां माता स्मेराननसरोरुहा।
रत्नसिंहासने पुत्रं वासयामास नारद ॥ १५
सर्व्वतीर्थोदकानाञ्च कलसानां शतेन च।
स्नापयामास वेदोक्त-मन्त्रेण मुनिभिः सह ॥ १६
अग्निशौचे च वसने ददौ तस्मै सती मुदा ॥ १७
गोदावर्य्युदकं पाद्यमर्घ्यं गङ्गोदकेन च।
दूर्व्वाभिरक्षतैः पुष्पैश्चन्दनेन समन्वितम् ॥ १८
पुष्करोदकमानीय पुनराचमनीकम्।
मधुपर्कं रत्नपात्रेरासवं शर्करान्वितम् ॥ १९
स्नानीयं विष्णुतैलञ्च खर्व्वैद्येन विनिर्म्मितम्।
अमूल्यरत्नरचित-चारूणि भूषणानि च ॥ २०
पारिजातप्रसूनानां माल्यानां शतकानि च।
मालतीचम्पकादीनां पुष्पाणि विविधानि च ॥ २१
पूजार्हाणि च पत्राणि तुलसीवर्ज्जितानि च।
चन्दनागुरुकस्तूरी-कुङ्कुमाणि च सारदा ॥ २२
रत्नप्रदीपनिकरं धूपञ्च परितो ददौ।
तस्मियञ्चैव नैवेद्यं तिललड्डुकपर्व्वतम् ॥ २३
यवगोधूमचूर्णानां पिष्टकानाञ्च पर्व्वतम्।
पक्वान्नानां पर्व्वतञ्च सुस्वादुसुमनोहरम् ॥ २४
पर्व्वतं स्वस्तिकानाञ्च सुस्वादुशर्करान्वितम्।
गुड़ाक्तानाञ्च लाजानां पृथुकानाञ्च पर्व्वतम् ॥ २५
शाल्यन्नानां पिष्टकानां पर्व्वतं व्यञ्जनैः सह।
कलसानाञ्च पयसां लक्षाणि प्रददौ मुदा ॥ २६
लक्षाणि कलसानाञ्च दध्नां नारद पूजने।
मधूनां कलसानाञ्च त्रिलक्षाणि च सुन्दरी ॥ २७
सर्पिषां कलसानाञ्च पञ्चलक्षाणि सारदा।
दाड़िमानां श्रीफलानामसंख्यानि फलानि च ॥ २८
खर्ज्जूराणां करञ्जानां जम्बूनां विविधानि च।
आम्राणां पनसानाञ्च कदलीनाञ्च नारद।
फलानि नारिकेलानामसंख्यानि ददौ मुदा ॥ २९
अन्यानि परिपक्वानि कालदेशोद्भवानि च।
ददौ तानि महामाया स्वादूनि मधुराणि च ॥ ३०
स्वच्छं सुनिर्म्मलञ्चैव कर्पूरादिसुवासितम्।
गङ्गाजलञ्च पानार्थं पुनराचमनीयकम् ॥ ३१
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम्।
सुवर्णपात्रशतकं परिपूर्णञ्च नारद ॥ ३२
शैलेश्वरी शैलराजः शैलजा शैलराजजः।
शैलराजप्रियामात्याः प्रपूजुः शैलजात्मजम् ॥ ३३
ओं श्रीं ह्रीं क्लीं गणेश्वराय ब्रह्मरूपाय चारवे।
सर्व्वसिद्धिप्रदेशाय विघ्नेशाय नमो नमः ॥ ३४
द्व्यनेनैव मन्त्रेण दत्त्वा द्रव्याणि भक्तितः।
सर्व्वे प्रमुदितास्तत्र ब्रह्म-विष्णु-शिवादयः ॥ ३५
द्वात्रिंशदक्षरो माला-मन्त्रोऽयं सर्व्वकामदः।
धर्म्मार्थ-काम-मोक्षाणां फलदः सर्व्वसिद्धिदः ॥ ३६
पञ्चलक्षजपेनैव मन्त्रसिद्धिस्तु मन्त्रिणः।
मन्त्रसिद्धिर्भवेद्यस्य स च विष्णुश्च भारते ॥ ३७
विघ्नानि च पलायन्ते तन्नामस्मरणेन च।
महावाग्मी महासिद्धः सर्व्वसिद्धिसमन्वितः ॥ ३८
वाक्पतिर्जड़तां याति तस्य साक्षात् सुनिश्चितम्।
महाकवीन्द्रो गुणवान् विदुषाञ्च गुरोर्गुरुः ॥ ३९
सम्पूज्यानेन मन्त्रेण देवा आनन्दसंप्लुताः।
नानाविधानि वाद्यानि वादयामासुरुत्सवे ॥ ४०
ब्राह्मणान् भोजयामासुः कारयामासुरुत्सवम्।
ददुर्दानानि तेभ्यश्च वन्दिभ्यश्च विशेषतः ॥ ४१

नारायण उवाच।

अथ विष्णुः सभामध्ये सम्पूज्य तं गणेश्वरम्।
तुष्टाव परया भक्त्या सर्व्वविघ्नविनायकम् ॥ ४२

श्रीविष्णुरुवाच।

ईश त्वां स्तोतुमिच्छामि ब्रह्मज्योतिः सनातनम्।
निरूपितुमशक्तोऽहं मनुरूपमनूहकम् ॥ ४३
प्रवरं सर्व्वदेवानां सिद्धानां योगिनां गुरुम्।
सर्व्वस्वरूपं सर्व्वेशं ज्ञानराशिस्वरूपिणम् ॥ ४४
अव्यक्तमक्षरं नित्यं सत्यमात्मस्वरूपिणम्।
वायुतुल्यातिनिर्लिप्तं चाक्षतं सर्व्वसाक्षिणम् ॥ ४५
संसारार्णवपारे च मायापोते सुदुर्लभम्।
कर्णधारस्वरूपञ्च भक्तानुग्रहकारकम् ॥ ४६
वरं वरेण्यं वरदं वरदानामपीश्वरम्।
सिद्धं सिद्धिस्वरूपञ्च सिद्धिदं सिद्धिसाधनम् ॥ ४७
ध्यानातिरिक्तं ध्येयञ्च ध्यानासाध्यञ्च धार्म्मिकम्।
धर्म्मस्वरूपं धर्म्मज्ञं धर्म्माधर्म्मफलप्रदम् ॥ ४८

(क) वाक्पतिर्जगतां याति तस्य साक्षात् सुनिश्चितम्।
इति क्वचित् पाठः स चासङ्गतः।

बीजं संसारवृक्षाणामङ्कुरञ्च तदाश्रयम्।
स्त्री-पुं-नपुंसकानाञ्च रूपमेतदतीन्द्रियम्॥ ४९
सर्व्वाद्यमग्रपूज्यञ्च सर्व्वपूज्यं गुणार्णवम्।
स्वेच्छया सगुणं ब्रह्म निर्गुणञ्चापि स्वेच्छया॥ ५०
स्वं प्रकृतिरूपञ्च प्राकृतं प्रकृतेः परम्।
स्तोतुमक्षमोऽनन्तः सहस्रवदनेन च॥ ५१
न क्षमः पञ्चवक्त्रश्च न क्षमश्चतुराननः।
सरस्वती न शक्ता च न शक्तोऽहं तव स्तुतौ।
न शक्ताश्च चतुर्व्वेदाः के वा ते वेदवादिनः॥ ५२
इत्येवं स्तवनं कृत्वा सुरेशं सुरसंसदि।
सुरेशश्च सुरैः सार्द्धं विरराम रमापतिः॥ ५३
इदं विष्णुकृतं स्तोत्रं गणेशस्य च यः पठेत्।
सायं प्रातश्च मध्याह्ने भक्तियुक्तः समाहितः॥ ५४
तद्विघ्ननिघ्नं कुरुते विघ्नेशः सततं मुने।
वर्द्धयेत् सर्व्वकल्याणं कल्याणजनकः सदा। ५५
यात्राकाले पठित्वा तु यो याति भक्तिपूर्व्वकम्।
तस्य सर्व्वाभीष्टसिद्धिर्भवत्येव न संशयः॥ ५६
तेन दृष्टञ्च दुःस्वप्नं सुखप्नमुपजायते।
कदापि न भवेत् तस्य ग्रहपीड़ा च दारुणा॥ ५७
भवेद्विनाशः शत्रूणां बन्धूनाञ्च विवर्द्धनम्।
शश्वद्विघ्नविनाशश्च शश्वत्सम्पद्विवर्द्धनम्॥ ५८
स्थिरा भवेद्गृहे लक्ष्मीः पुत्रपौत्रविवर्द्धनी।
सर्व्वैश्वर्य्यमिह प्राप्य अन्ते विष्णुपदं लभेत्॥५९
फलञ्चापि च तीर्थानां यज्ञानां यद्भवेद्ध्रुवम्।
महतां सर्व्वदानानां श्रीगणेशप्रसादतः॥ ६०
इति विष्णुकृतं गणेशस्तोत्रं समाप्तम्।

नारद उवाच।

श्रुतं स्तोत्रं गणेशस्य पूजनञ्च मनोहरम्।
कवचं श्रोतुमिच्छामि साम्प्रतं भवतारणम्॥ ६१

नारायण उवाच।

पूजायां सुनिवृत्तायां सभामध्ये शनैश्चरः।
उवाच विष्णुं सर्व्वेषां त्रासितो जगतां गुरुम्॥ ६२

शनैश्चर उवाच।

सर्व्वदुःखविनाशाय दुःखप्रशमनाय च।
कवचं विघ्ननिघ्नस्य वद वेदविदां वर॥ ६३
बभूवैषां विवादश्च शक्त्या च मायया सह।
उद्विग्नशमनार्थञ्च कवचं धारयाम्यहम्॥ ६४

श्रीविष्णुरुवाच।

विनायकस्य कवचं त्रिषु लोकेषु दुर्लभम्।
सुगोप्यञ्च पुराणेषु दुर्लभञ्चागमेषु च॥ ६५
उक्तं कौथुमशाखायां सामवेदे मनोहरम्।
कवचं विघ्ननाथस्य सर्व्वविघ्नहरं परम्॥ ६६
राज्यं देयं शिरो देयं प्राणा देयाश्च सूर्य्यज।
एवम्भूतञ्च कवचं न देयं प्राणसङ्कटे॥ ६७
आविर्भावस्तिरोभावः स्वेच्छयास्य च मायया।
नित्योऽयमेकदन्तश्च कवचं चास्य वत्सक॥ ६८
पूजास्य नित्या स्तोत्रञ्च कल्पे कल्पेऽस्ति सन्ततम्।
अस्यास्यजन्मनः पूर्व्वं मुनयश्च सिषेविरे॥ ६९
यथा मदवतारेषु जन्मविग्रहधारणम्।
तथा गणेश्वरस्यापि जन्म शैलसुतोदरे॥ ७०
यद्धृत्वा मुनयः सर्व्वे जीवन्मुक्ताश्च भारते।
निःशङ्काश्च सुराः सर्व्वे शत्रुपक्षविमर्द्दकाः॥ ७१
कवचं बिभ्रतां मृत्युर्न याति सन्निधिं भिया।
नायुर्व्ययो नाशुभञ्च ब्रह्माण्डे न पराजयः॥ ७२
दशलक्षजपेनैव सिद्धञ्च कवचं भवेत्।
यो भवेत् सिद्धकवचो मृत्युं जेतुं स च क्षमः॥७३
असिद्धकवचो वाग्मी चिरजीवी महीतले।
सर्व्वत्र विजयी पूज्यो भवेद्ग्रहणमात्रतः॥ ७४
मालामन्त्रमिदं पुण्यं कवचञ्चेदमेव च।
बिभ्रतां सर्व्वपापानि प्रणश्यन्ति सुनिश्चितम्॥७५
भूत-प्रेत-पिशाचाश्च कुष्माण्डा ब्रह्मराक्षसाः।
डाकिन्यो योगिन्यश्चैव वेतालाद्य एव च॥ ७६
बालग्रहाग्रहाश्चैव क्षेत्रपालादयस्तथा।
तेषाञ्च शब्दमात्रेण पलायन्ते च भीरवः॥७७
आधयो व्याधयो मोहाः शोकाश्चैव भयावहाः।
न यान्ति सन्निधिं तेषां गरुड़स्य यथोरगाः॥ ७८
ऋजवे गुरुभक्ताय स्वशिष्याय प्रकाशयेत्।
खलाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात्॥ ७९
संसारमोहनस्यास्य कवचस्य प्रजापतिः।
ऋषिश्छन्दश्च बृहती देवो लम्बोदरः स्वयम्।
धर्म्मार्थ-काम-मोक्षेषु विनियोगः प्रकीर्त्तितः॥ ८०
सर्व्वेषां कवचानाञ्च सारभूतमिदं मुने।
ओँ गौं गं श्रीगणेशाय(क)स्वाहा मे पातु मस्तकम्

(क) ओँ गौं हुं इति च पाठः।

द्वाविंशदक्षरो मन्त्रो ललाटं मे सदाऽवतु ॥ ८१
ओं ह्रीं क्लीं श्रीं गमिति च सन्ततं पातु लोचनम् ।
तालुकं पातु विघ्नेशः सन्ततं धरणीतले ॥ ८२
ओं ह्रीं श्रीं क्लीं गमिति च सन्ततं पातु नासिकाम् ।
ओं गौं गं शूर्पकर्णाय स्वाहा पात्वधरं मम ॥ ८३
दन्तानि तालुकां जिह्वां पातु मे षोड़शाक्षरः ।
ओं लं श्रीं लम्बोदरायेति स्वाहा गण्डं सदावतु ॥८४
ओं क्लीं ह्रीं विघ्ननाशाय स्वाहा कर्णं सदावतु ।
ओं श्रीं गं गजाननायेति स्वाहा स्कन्धं सदाऽवतु ॥८५
ओं ह्रीं क्लीं विनायकायेति स्वाहा पृष्ठं सदाऽवतु ।
ओं क्लीं ह्रीं मिति कङ्कालं पातु वक्षःस्थलञ्च गम् ।
करौ पादौ सदा पातु सर्व्वाङ्गं विघ्ननिघ्नकृत् ॥ ८६
प्राच्यां लम्बोदरः पातु आग्नेय्यां विघ्ननायकः ।
दक्षिणे पातु विघ्नेशो नैर्ऋत्यान्तु गजाननः ॥ ८७
पश्चिमे पार्व्वतीपुत्त्रो वायव्यां शङ्करात्मजः ।
कृष्णस्यांशश्चोत्तरे च परिपूर्णतमस्य च ॥ ८८
ऐशान्यामेकदन्तश्च हेरम्बः पातु चोर्द्ध्वतः ।
गणाधिप इत्यधः पातु सर्व्वपूज्यश्च सर्व्वतः ।
स्वप्ने जागरणे चैव पातु मां योगिनां गुरुः ॥ ८९
इति ते कथितं वत्स सर्व्वमन्त्रौघविग्रहम् ।
संसारमोहनं नाम कवचं परमाद्भुतम् ॥ ९०
श्रीकृष्णेन पुरा दत्तं गोलोके रासमण्डले ।
वृन्दावने विनीताय मह्यं दिनकरात्मज ॥ ९१
मया दत्तञ्च तुभ्यञ्च यस्मै कस्मै न दास्यसि ।
परं वरं सर्व्वपूज्यं सर्व्वसङ्कटतारणम् ॥ ९२
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत्तु यः ।
कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः ॥ ९३
अश्वमेधसहस्राणि वाजपेयशतानि च ।
ग्रहेन्द्रकवचस्यास्य कलां नार्हन्ति षोड़शीम् ॥ ९४
इदं कवचमज्ञात्वा यो भजेच्छङ्करात्मजम् ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ९५

इति श्रीब्रह्मवैवर्त्ते संसारमोहनं कवचम् ।

इत्येवं सूर्य्यपुत्त्राय विरराम सुरेश्वरः ।
परमानन्दसंयुक्ता देवा जग्मुः समीपतः ॥ ९६

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे पूजा-स्तव-कवच-कथनं नाम त्रयोदशोऽध्यायः॥१३॥

## चतुर्द्दशोऽध्यायः ।

नारायण उवाच ।

देवा विष्णुसभायां ते सर्व्वे प्रहृष्टमानसाः ।
गन्धर्व्वा मुनयः शैलाः पश्यन्तः सुमहोत्सवम् ॥ १
एतस्मिन्नन्तरे दुर्गा स्मेराननसरोरुहा ।
उवाच विष्णुं प्रणता देवेशं देवसंसदि ॥ २

पार्व्वत्युवाच ।

त्वं पाता सर्व्वजगतां नाथ नाहं जगद्बहिः ।
कथं मत्स्वामिनो वीर्य्यं नामोघं रक्षितं प्रभो ॥ ३
रतिभङ्गे कृते देवैर्ब्रह्मणा प्रेरितैस्त्वया ।
भूमौ निपतितं वीर्य्यं केन देवेन निह्नुतम् (क) ॥ ४
सर्व्वे देवास्त्वत्पुरतस्तदन्वेषणमीश्वर ।
अराजकं कथं युक्तं तिष्ठति त्वयि राजनि ॥ ५
पार्व्वतीवचनं श्रुत्वा प्रहस्य जगदीश्वरः ।
उवाच देववर्गांश्च मुनिवर्गं च तिष्ठति ॥ ६

श्रीविष्णुरुवाच ।

देवाः शृणुत मद्वाक्यं पार्व्वतीवचनं श्रुतम् ।
शिवस्यामोघवीर्य्यं यत् तत् पुरा केन निह्नुतम् ॥७
सभामानय तं क्षिप्रं न चेत् स दण्डमर्हति ।
स को राजा न शास्ता यः प्रजाबाध्यश्च पाक्षिकः॥ ८
विष्णोस्तद्वचनं श्रुत्वा समालोच्य परस्परम् ।
ऊचुः सर्व्वे क्रमेणैव त्रासिताः पुरतो हरेः ॥ ९

ब्रह्मोवाच ।

तद्वीर्य्यं निह्नुतं येन पुण्यभूमौ च भारते ।
स वञ्चितो भवत्वत्र पुण्याहे पुण्यकर्म्मणि ॥ १०

महादेव उवाच ।

स्ववीर्य्यं निह्नुतं येन पुण्यभूमौ च भारते ।
स वञ्चितो भवत्वत्र सेवने पूजने तव ॥ ११

यम उवाच ।

स वञ्चितो भवत्वत्र शरणागतरक्षणे ।
एकादशीव्रते चैव तद्वीर्य्यं येन निह्नुतम् ॥ १२

इन्द्र उवाच ।

तद्वीर्य्यं निह्नुतं येन पापिना पापमोचन ।
भवत्वत्र यशो लुप्तं तत्पुण्यकर्म्मसन्ततम् ॥ १३

(क) इदानीं सर्व्वत्र निह्नुतमित्यत्र निह्नुतमिति क्वचित् पाठः ।

वरुण उवाच।

भविता तत् कलौ जन्म संन्यासं भारतेतवे।
भविताख्य कलौ जन्म वर्षे वा भारतेतरे।
शूद्रयाजक-(क) पत्न्याश्च गर्भे तद्दुयेन निष्कृतम् ॥ १४

कुबेर उवाच।

स्थाप्यहारी स भवतु विश्वासघ्नश्च मित्रहा।
सत्यघ्नश्च कृतघ्नश्च तद्वीर्य्यं येन निष्कृतम् ॥ १५

ईशान उवाच।

परद्रव्यापहारी च स भवलत्र भारते।
नरघाती गुरुद्रोही तद्वीर्य्यं येन निष्कृतम् ॥ १६

रुद्रा ऊचुः।

ते मिथ्यावादिनः सन्तु भारते पारदारिकाः।
गुरुनिन्दारताः शश्वत् तद्वीर्य्यं यैश्च निष्कृतम् ॥ १७

कामदेव उवाच।

कृत्वा प्रतिज्ञां यो मूढ़ो न पालयति विभ्रमात्।
भाजनं तस्य पापस्य स भवेद्दुयेन निष्कृतम् ॥ १८

स्वर्वैद्यावूचतुः।

मातुः पितुर्गुरोश्चैव स्त्री-पुत्राणाञ्च पोषणे।
भवतां वञ्चितौ तौ च याभ्यां वीर्य्यञ्च निष्कृतम् ॥१९

सर्व्वे देवा ऊचुः।

मिथ्यासाक्ष्यप्रदातारस्ते भवन्त्वत्र भारते।
अपुत्रिणो दरिद्राश्च यैश्च वीर्य्यञ्च निष्कृतम् ॥ २०

देवपत्न्य ऊचुः।

ता निन्दन्तु स्वभर्त्तारं गच्छन्तु परपूरुषम्।
सन्तु बन्धुविहीनाश्च याभिर्वीर्य्यञ्च निष्कृतम् ॥ २१
देवानां वचनं श्रुत्वा देवीनाञ्च हरिः स्वयम्।
कर्म्मणां साक्षिणं धर्म्मं सूर्य्यं चन्द्रं हुताशनम् ॥ २२
पवनं पृथिवीं तोयं सन्ध्ये रात्रिं दिनं मुने।
उवाच जगतां कर्त्ता पाता शास्ता जगत्त्रये ॥ २३

श्रीविष्णुरुवाच।

देवैर्न निष्कृतं वीर्य्यं तदेतत् केन निष्कृतम्।
तदमोघं भगवतो महेशस्य जगद्गुरोः ॥ २४
यूयञ्च साक्षिणो विश्वे सन्ततं सर्व्वकर्म्मणाम्।
युष्माभिर्निष्कृतं किं वा किं भूतं वक्तुमर्हथ ॥ २५
ईश्वरस्य वचः श्रुत्वा सभायां कम्पिताश्च ते।
परस्परं समालोच्य क्रमेणोचुः पुरो हरेः ॥ २६

धर्म्म उवाच।

रतेरुत्तिष्ठतो वीर्य्यं पपात वसुधातले।
मया ज्ञातममोघं तत् शङ्करस्य प्रकोपतः ॥ २७

क्षितिरुवाच।

वीर्य्यं वोढुमशक्ताहं तद्वह्नौ न्यक्षिपं पुरा।
अतीवदुर्व्वहं ब्रह्मन्नबला हन्तुमर्हसि ॥ २८

अग्निरुवाच।

वीर्य्यं वोढुमशक्तोऽहं न्यक्षिपं शरकानने।
दुर्ब्बलस्य जगन्नाथ किं यशः किञ्च पौरुषम् ॥ २९

वायुरुवाच।

शरेषु पतितं वीर्य्यं सद्यो बालो बभूव ह।
अतीवसुन्दरो विष्णो स्वर्णरेखानदीतटे ॥ ३०

सूर्य्य उवाच।

रुदन्तं बालकं दृष्ट्वाऽगममस्ताचलं प्रति।
प्रेरितः कालचक्रेण निमिषं स्थातुमक्षमः ॥ ३१

चन्द्र उवाच।

रुदन्तं बालकं प्राप्य गृहीत्वा कृत्तिकागणाः।
जगाम स्वालयं विष्णो गच्छन् बदरिकाश्रमात् ॥ ३२

जलमुवाच।

अमुं (क) रुदन्तमानीय स्तनं दत्त्वा स्तनार्थिने।
वर्द्धयामासुरीशस्य सुतं सूर्य्याधिकप्रभम् ॥ ३३

सन्ध्योवाच।

अधुना कृत्तिकानाञ्च षण्णां तत् पोष्यपुत्रकः।
तन्नाम चक्रुस्ताः प्रेम्णा कार्त्तिकश्चेति कौतुकात् ॥ ३४

रात्रिरुवाच।

न चक्रुर्बालकं ताश्च लोचनानामगोचरम्।
प्राणेभ्योऽपि प्रेमपात्रं यः पोष्टा तस्य पुत्रकः ॥ ३५

दिनमुवाच।

यानि यानि च वस्तूनि त्रैलोक्ये दुर्लभानि च।
प्रशंसितानि स्वादूनि भोजयामासुरेव तम् ॥ ३६
तेषां तद्वचनं श्रुत्वा सन्तुष्टो मधुसूदनः।
ते सर्व्वे हरिमित्यूचुः सभायां हृष्टमानसाः ॥ ३७
पुत्रस्य वार्त्तां सम्प्राप्य पार्व्वती हृष्टमानसा।
कोटिं रत्नानि विप्रेभ्यो ददौ बहुधनानि च।
ददौ सर्व्वाणि विप्रेभ्यो वासांसि विविधानि च ॥ ३८

(क) भवतत्र कलौ जन्म वर्षेऽस्य भारतेतरे। शूद्र-यातकेति पाठश्च दृश्यते।

(क) भ्रान्तमिति वा पाठः।

लक्ष्मीः सरस्वती मेना सावित्री सर्व्वयोषितः।
विष्णुश्च सर्व्वदेवाश्च ब्राह्मणेभ्यो ददुर्धनम् ॥ ३८

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे कार्त्तिकप्रवृत्ति-प्राप्तिर्नाम चतुर्द्दशोऽध्यायः ॥१४॥

---

## पञ्चदशोऽध्यायः।

नारायण उवाच।

पुत्रस्य वार्त्तां सम्प्राप्य पार्व्वत्या सह शङ्करः।
प्रेरितो विष्णुना देवैर्मुनिभिः पर्व्वतैर्मुने ॥ १
दूतान् प्रस्थापयामास महाबलपराक्रमान्।
वीरभद्रं विशालाक्षं शङ्कुकर्णं कबन्धकम् ॥ २
नन्दीश्वरं महाकालं वज्रदन्तं भगन्दनम् (क)।
गोकामुखं दधिमुखं ज्वलदग्निशिखोपमम् ॥ ३
लक्षञ्च क्षेत्रपालानां भूतानाञ्च त्रिलक्षकम्।
वेतालानां चतुर्लक्षं यक्षाणां पञ्चलक्षकम् ॥ ४
कुष्माण्डानां चतुर्लक्षं त्रिलक्षं ब्रह्मरक्षसाम्।
डाकिनीनाञ्च लक्षाणां योगिनीनां त्रिलक्षकम् ॥ ५
रुद्रांश्च भैरवांश्चैव शिवतुल्यपराक्रमान्।
अन्यांश्च विकृताकारानसंख्यानपि नारद ॥ ६
ते सर्व्वे शिवदूताश्च नानाशस्त्रास्त्रपाणयः।
कृत्तिकानाञ्च भवनं वेष्टयामासुरुन्मदाः ॥ ७
दृष्ट्वा तान् कृत्तिकाः सर्व्वा भयविह्वलमानसाः।
कार्त्तिकं कथयामासुर्ज्वलन्तं ब्रह्मतेजसा ॥ ८

कृत्तिका ऊचुः।

वत्स सैन्यान्यसंख्यानि वेष्टयामासुरालयम्।
न जानीमो वयं कस्य करवाम च (ख) कार्त्तिक ॥ ९

कार्त्तिकेय उवाच।

भयं त्यजत कल्याण्यो भयं किं वो मयि स्थिते।
दुर्निवार्य्यो निषेकश्च मातरः केन वार्य्यते ॥ १०
एतस्मिन्नन्तरे तत्र सैन्येन्द्रो नन्दिकेश्वरः।
पुरतः कार्त्तिकस्यापि तिष्ठंस्ताः समुवाच ह ॥ ११

नन्दीश्वर उवाच।

भ्रातः प्रवृत्तिं शृणु मे मातरश्च शुभावहम्।
प्रेषितस्य सुरेन्द्रस्य संहर्त्तुः शङ्करस्य च ॥ १२
कैलासे सर्व्वदेवाश्च ब्रह्म-विष्णु-शिवादयः।
सभायां ते वसन्तश्च गणेशोत्सवमङ्गलम् ॥ १३
शैलेन्द्रकन्या तं विष्णुं जगतां परिपालकम्।
सम्बोध्य कथयामास तवान्वेषणहेतुकम् ॥ १४
पप्रच्छ देवान् विष्णुस्तान् क्रमेणावाप्तिहेतवे।
प्रत्युत्तरं ददुस्ते तु प्रत्येकञ्च यथोचितम् ॥ १५
त्वमत्र कृत्तिकास्थाने कथयामासुरीश्वरम्।
सर्व्वे धर्म्मादयो देवा धर्म्माधर्म्मस्य साक्षिणः ॥ १६
या बभूव रहःक्रीड़ा पार्व्वती-शिवयोः पुरा।
दृष्टस्य च सुरैः शम्भोर्वीर्य्यं भूमौ पपात ह ॥ १७
भूमिस्तद्दहिपद्वह्नौ वह्निश्च शरकानने।
तत्तु लब्धं कृत्तिकाभिरधुना गच्छ साम्प्रतम् ॥ १८
तवाभिषेकं विष्णुश्च करिष्यति सुरैः सह।
हनिष्यसि तारकाख्यं सर्व्वशस्त्रं लभिष्यसि ॥ १९
पुत्रस्त्वं विश्वहर्त्तुश्च त्वां गोप्तुमक्षमा इमाः।
नाग्निं गोप्तुं यथाशक्ताः शुष्कवृक्षः स्वकोटरे ॥ २०
दीप्तिमांस्त्वञ्च विश्वेषु नासां गेहेषु शोभसे।
यथा पतन् महाकूपे द्विजराजो न राजते ॥ २१
करोषि जगदालोकं नाच्छन्नोऽन्याङ्गतेजसा (क)।
यथा सूर्य्यः कराच्छन्नो न भवेन्मानवस्य च ॥ २२
विष्णुस्त्वञ्च जगद्व्यापी नासां व्याप्योऽसि शाश्वत।
यथा न केषां व्याप्यञ्च तत् सर्व्वं व्यापकं नभः ॥ २३
योगीन्द्रो नानुलिप्तस्त्वं भोगी चेत् परपोषणे।
नैव लिप्तो यथात्मा च कर्म्मभोगेषु जीविनाम् ॥२४
विश्वाधारस्त्वमीशश्च नास्मृते सम्भवेत् स्थितिः।
सागरस्य यथा नद्यां सरितामाश्रयस्य च ॥ २५
न हि सर्व्वेश्वरावासः सम्भवेत् कृत्तिकालये।
गरुड़स्य यथा बालः क्षुद्रे च चटकोदरे ॥ २६
त्वाञ्च देवा न जानन्ति भक्तानुग्रहविग्रहम्।
गुणानां तेजसां राशिं यथा ज्ञानमयोगिनः ॥ २७
त्वामनिर्व्वचनीयञ्च कथं जानन्ति कृत्तिकाः।
यथा परां हरेर्भक्तिमभक्ता मूढ़चेतसः ॥ २८
भ्रातर्यं यं न जानन्ति ते तं कुर्व्वन्त्यनादरम्।
नाद्रियन्ते यथा भेकास्त्वेकवासाश्च पङ्कजान् ॥ २९

---

(क) भगन्दरमिति वा पाठः।
(ख) करालानि चेति क्वचित् पाठः।

(क) नाच्छन्नः स्वाङ्गतेजसा इति नाच्छन्नः स्वाः सुते-जसा इति च पाठः क्वचित्कः।

कार्त्तिक उवाच।

भ्रातः सर्व्वं विजानामि ज्ञानं त्रैकालिकञ्च यत्।
ज्ञानी त्वं का प्रशंसा ते यतो मृत्युञ्जयाश्रितः॥ ३०
कर्म्मणा जन्म येषां वा यासु यासु च योनिषु।
तासु ते निर्व्वृतिं भ्रातः प्राप्नुवन्ति च सन्ततम्॥ ३१
ये यत्र सन्ति सन्तो वा मूढ़ा वा कर्म्मभोगतः।
तेऽपि तं बहु मन्यन्ते मोहिता विष्णुमायया॥ ३२
साम्प्रतं जगतां माता विष्णुमाया सनातनी।
सर्व्वाद्या विष्णुमाया च सर्व्वदा विष्णुमङ्गला॥ ३३
शैलेन्द्रपत्नीगर्भे सा लेभे जन्म भारते।
दारुणञ्च तपस्तप्त्वा सम्प्राप शङ्करं पतिम्॥ ३४
ब्रह्मादितृणपर्य्यन्तं सर्व्वं मिथ्यैव कृत्रिमम्।
सर्व्वं कृष्णोद्भवाः काले विलीनास्तत्र केवलम्॥ ३५
कल्पे कल्पे जगन्माता माता मे प्रतिजन्मनि।
यज्जन्म मायया बद्धो नित्यः सृष्टिविधावहम्॥ ३६
प्रकृतेरुद्भवाः सर्व्वा जगत्सु सर्व्वयोषितः।
काश्चिदंशाः कलाः काश्चित् कलांशांशेन काश्चन॥३७
कृत्तिका ज्ञानवत्यश्च योगिन्यः प्रकृतेः कलाः।
स्तनेनाभिर्व्वर्द्धितोऽहमुपहारेण सन्ततम्॥ ३८
तासामहं पोष्यपुत्रो मदम्बाः पोषणादिमाः।
तस्याश्च प्रकृतेः पुत्रो यतस्तत्स्वामिवीर्य्यतः॥ ३९
न गर्भजोऽहं शैलेन्द्र-कन्याया नन्दिकेश्वर।
सा च मे धर्म्मतो माता यथेमाः सर्व्वसम्मताः॥ ४०
स्तनदात्री गर्भधात्री भक्ष्यदात्री गुरुप्रिया।
अभीष्टदेवपत्नी च पितुः पत्नी च कन्यकाः॥ ४१
सगर्भकन्या भगिनी पुत्रपत्नी प्रियाप्रसूः।
मातुर्म्माता पितुर्म्माता सोदरस्य प्रिया तथा॥ ४२
मातुः पितुश्च भगिनी मातुलानी तथैव च।
जनानां वेदविहिता मातरः षोड़श स्मृताः॥ ४३
इमाश्च सर्व्वसिद्धिज्ञाः परमैश्वर्य्यसंयुताः।
न क्षुद्रा ब्रह्मणः कन्यास्त्रिषु लोकेषु पूजिताः॥ ४४
विष्णुना प्रेरितस्त्वञ्च शम्भोः पुत्रसमो महान्।
गच्छ यामि त्वया सार्द्धं द्रक्ष्यामि देवताकुलम्॥४५

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारदसंवादे नन्दिकार्त्तिक-
संवादे पञ्चदशोऽध्यायः॥ १५॥

---

## षोड़शोऽध्यायः।

नारायण उवाच।

इत्येवमुक्त्वा तं शीघ्रं सम्बोध्य कृत्तिकागणम्।
उवाच नीतियुक्तञ्च वचनं शङ्करात्मजः॥ १

कार्त्तिक उवाच।

यास्यामि शङ्करस्थानं द्रक्ष्यामि देवताकुलम्।
मातरं बन्धुवर्गांश्च विदायं देहि मातरः॥ २
दैवाधीनं जगत् सर्व्वं जन्म कर्म्म शुभावहम्।
संयोगश्च वियोगश्च न च दैवात्परं बलम्॥ ३
कृष्णायत्तञ्च तद्दैवं स च दैवात् परस्ततः।
भजन्ति सततं सन्तः परमात्मानमीश्वरम्॥ ४
दैवं वर्द्धयितुं शक्तः क्षयं कर्त्तुं स्वलीलया।
न दैवबद्धस्तद्भक्तश्चाविनाशी च निर्णयः॥ ५
तस्माद्भजत गोविन्दं मोहं त्यजत दुःखदम्।
सुखदं मोक्षदं सारं जन्म-मृत्यु-भयापहम्॥ ६
परमानन्दजननं मोहजालनिकृन्तनम्।
शश्वद्भजन्ति यं सर्व्वे ब्रह्म-विष्णु-शिवादयः॥ ७
कोऽहं भवाब्धौ युष्माकं का वा यूयं ममात्मिकाः।
तत् कर्म्म स्रोतसा सर्व्वं पुञ्जीभूतञ्च फेनवत्॥ ८
संश्लेषं विपरीतं वा तत् सर्व्वमीश्वरेच्छया।
ब्रह्माण्डमीश्वराधीनमस्वतन्त्रं विदुर्बुधाः॥ ९
जलबुद्बुदवत् सर्व्वमनित्यञ्च जगत्त्रयम्।
मायामनित्ये कुर्व्वन्ति मायया मूढ़चेतसः॥ १०
सन्तस्तत्र न लिप्यन्ते वायुवत् कृष्णचेतसः।
तस्मान्मोहं परित्यज्य विदायं देहि मातरः॥ ११
इत्येवमुक्त्वा ता नत्वा सार्द्धं शङ्करपार्षदैः।
यात्रां चकार भगवान् मनसा श्रीहरिं स्मरन्॥१२
एतस्मिन्नन्तरे तत्र ददर्श रथमुत्तमम्।
विश्वकर्म्मविनिर्म्माणं क्षीरकोषपरिष्कृतम्॥ १३
सद्रत्नसाररचितं माणिक्येन विराजितम्।
पारिजातप्रसूनानां मालाजालैश्च शोभितम्॥ १४
मणीन्द्रदर्पणैः श्वेत-चामरैरतिदीपितम्।
क्रीड़ार्हमन्दिरे रम्यैश्चित्रितैश्चित्रितं वरम्॥ १५
शतचक्रं सुविस्तीर्णं मनोयायि-मनोहरम्।
प्रस्थापितञ्च पार्व्वत्या वेष्टितं पार्षदैर्वरैः॥ १६
समारोहन्तं यानं ता हृदयेन विदूयता।

लब्ध्वा चेतनां प्राप्य मुक्तकेश्यः शुचातुराः ॥ १७
दृष्ट्वा च स्वपुरः स्कन्दं स्तम्भिता अतिशोकतः ।
उन्मत्ता इव तत्रैव वक्तुमारेभिरे भिया ॥ १८

कृत्तिका ऊचुः ।

किं कुर्म्मः क्व च यास्यामो वयं वत्स त्वदाश्रयाः ।
विहायास्मान् क्व यासि त्वं नायं धर्म्मस्तवाधुना ॥१९
स्नेहेन वर्द्धितोऽस्माभिः पुत्रोऽस्माकं स्वधर्म्मतः ।
नायं धर्म्मो मातृवर्गानुपयुक्तः सुतस्त्यजेत् ॥ २०
इत्युक्त्वा कृत्तिकाः सर्व्वाः कृत्वा वक्षसि कार्त्तिकम् ।
पुनर्मूर्च्छामवापुस्ताः सुतविच्छेददारुणाः ॥ २१
कुमारो बोधयित्वा ता अध्यात्मवचनेन वै ।
ताभिश्च पार्षदैः सार्द्धमारुरोह रथं मुने ॥ २२
पूर्णकुम्भं द्विजं वेश्यां शुक्लधान्यञ्च दर्पणम् ।
दध्याज्यं मधु लाजञ्च पुष्पं दूर्व्वाक्षतं सितम् ॥ २३
वृषं गजेन्द्रतुरगं ज्वलदग्निसुवर्णकम् ।
पर्णांश्च परिपक्वानि फलानि विविधानि च ॥ २४
पतिपुत्त्रवतीं नारीं प्रदीपं मणिमुत्तमम् ।
मुक्तां प्रसूनमालाञ्च सद्यो मांसञ्च चन्दनम् ॥ २५
ददर्शैतानि वस्तूनि मङ्गलानि पुरो मुने ।
शृगालं नकुलं कुम्भं (क) शवं वामे शुभावहम् ॥२६
राजहंसं मयूरञ्च खञ्जनञ्च शुकं पिकम् ।
पारावतं शङ्खचिल्लं चक्रवाकञ्च मङ्गलम् ॥ २७
कृष्णसारञ्च सुरभीं चमरीं श्वेतचामरम् ।
धेनुं वत्सप्रयुक्ताञ्च पताकां दक्षिणे शुभाम् ॥ २८
नानाप्रकारवाद्यञ्च शुश्राव मङ्गलध्वनिम् ।
हरिशब्दस्य सङ्गीतं घण्टाशङ्खध्वनिं तथा ॥ २९
दृष्ट्वा श्रुत्वा मङ्गलं स जगाम तातमन्दिरम् ।
हर्षेणानन्दयुक्तश्च मनोयायिरथेन च ॥ ३०
कुमारः प्राप्य कैलासं न्यग्रोधाक्षयमूलके ।
क्षणं तस्थौ कृत्तिकाभिः पार्षदप्रवरैः सह ॥ ३१
पार्व्वती मङ्गलं कृत्वा राजमार्गं मनोहरम् ।
पद्मरागैरिन्द्रनीलैः संस्कृतं परितः परम् ॥ ३२
रम्भास्तम्भसमूहैश्च पट्टसूत्रप्रवर्द्धितैः ।
अखण्डपल्लवैर्युक्तं-पूर्णकुम्भसुशोभितम् ॥ ३३
पूर्णशस्यफलैर्व्याप्तं सिक्तं चन्दनवारिभिः ।
रत्नप्रदीपासंख्यैश्च मणिराजैर्विराजितम् ॥ ३४
नट-नर्त्तक-वेश्यानामुत्सवैः सङ्कुलं सदा ।
वन्दिभिर्विप्रवर्गैश्च दूर्व्वा-पुष्पकरैर्युतम् ॥ ३५
पतिपुत्त्रवतीभिश्च साध्वीभिश्च समन्वितम् ।
लक्ष्मीं सरस्वतीं गङ्गां सावित्रीं तुलसीं रतिम्॥३६
अरुन्धतीमहल्याञ्च दितिं तारां मनोरमाम् ।
अदितिं शतरूपाञ्च शचीं सन्ध्याञ्च रोहिणीम् ॥३७
अनसूयाञ्च स्वाहाञ्च संज्ञां वरुणकामिनीम् ।
आकूतिञ्च प्रसूतिञ्च देवहूतिञ्च मेनकाम् ॥ ३८
तामेकपाटलामेक-पर्णां मेनाककामिनीम् ।
वसुन्धराञ्च मनसां पुरस्कृत्य समाययौ ॥ ३९
रम्भा तिलोत्तमा मेना घृताची मोहिनी शुभा ।
उर्व्वशी रत्नमाला च सुशीला ललिता कला ॥ ४०
कदम्बमाला सुरसा वनमाला च सुन्दरी ।
एताश्चान्याश्च बह्व्यश्च विप्रेन्द्राप्सरसां गणाः ॥ ४१
सङ्गीत-नर्त्तनपराः सस्मिता वेशसंयुताः ।
करतालकराः सर्व्वा जग्मुरानन्दपूर्व्वकम् ॥ ४२
देवाश्च मुनयः शैला गन्धर्व्वाः किन्नरास्तथा ।
सर्व्वे ययुः प्रमुदिताः कुमारस्यानुसर्ज्जने ॥ ४३
नानाप्रकारवाद्यैश्च रुद्रैश्च पार्षदैः सह ।
भैरवैः क्षेत्रपालैश्च ययौ सार्द्धं महेश्वरः ॥ ४४
अथ शक्तिधरो हृष्टो दृष्ट्वाराात् पार्व्वतीं तदा ।
अवरुह्य रथात् तूर्णं शिरसा प्रणनाम ह ॥ ४५
तं पद्मप्रमुखं देवीगणञ्च मुनिकामिनीम् ।
शिवञ्च परया भक्त्या सर्व्वान् सम्भाष्य यत्नतः ॥ ४६
पार्व्वती कार्त्तिकं दृष्ट्वा क्रोड़े कृत्वा चुचुम्ब च ।
शङ्करश्च सुराः शैला देव्यश्च शैलयोषितः ॥ ४७
पार्व्वतीप्रमुखा देव्यो देवाश्च शङ्करस्तथा ।
शैलाश्च मुनयः सर्व्वे ददुस्तस्मै शुभाशिषम् ॥ ४८
कुमारः स गणैः सार्द्धमागत्य च शिवालयम् ।
ददर्श तं सभामध्ये विष्णुं क्षीरोदशायिनम् ॥ ४९
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम् ।
धर्म्म-ब्रह्मेन्द्र-चन्द्रार्क-वह्नि-वाय्वादिभिर्युतम् ॥ ५०
ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकारकम् ।
स्तुतं मुनीन्द्रैर्देवेन्द्रैः सेवितं श्वेतचामरैः ॥ ५१
तं दृष्ट्वा जगतां नाथं भक्तिनम्रात्मकन्धरः ।
पुलकाञ्चितसर्व्वाङ्गैः शिरसा प्रणनाम ह ॥ ५२
विधिं धर्म्मञ्च देवांश्च मुनीन्द्रांश्च मुदान्वितान् ।

(क) चाषमिति वा पाठः ।

प्रणनाम च प्रत्येकं प्राप तेषां शुभाशिषम् ॥ ५३
सर्व्वान् सम्भाष्य प्रत्येकमुवास कनकासने।
ददौ धनानि विप्रेभ्यः पार्व्वत्या सह शङ्करः ॥ ५४

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे कार्त्तिका-गमनं नाम षोड़शोऽध्यायः ॥१६॥

---

## सप्तदशोऽध्यायः।

नारायण उवाच।

अथ विष्णुर्जगत्कान्तो हृष्टः कृत्वा शुभक्षणम्।
रत्नसिंहासने रम्ये वासयामास कार्त्तिकम् ॥ १
नानाविधानि वाद्यानि कांस्यतालादिकानि च।
नानाविधानि यन्त्राणि वादयामास कौतुकात् ॥ २
वेदमन्त्राभिषिक्तैश्च सर्व्वतीर्थोदपूर्णकैः।
सद्रत्नकुम्भशतकैः स्नापयामास तं मुदा ॥ ३
सद्रत्नसाररचित-किरीटमुकुटाङ्गदम्।
अमूल्यरत्नरचित-भूषणानि बहूनि च ॥ ४
वह्निशुद्धांशुके दिव्ये क्षीरोदार्णवसम्भवे।
कौस्तुभं वनमालाञ्च तस्मै चक्रं ददौ मुदा ॥ ५
ब्रह्मा ददौ यज्ञसूत्रं वेदांश्च वेदमातरः।
सन्ध्यामन्त्रं कृष्णमन्त्रं स्तोत्रञ्च कवचं हरेः ॥ ६
कमण्डलुञ्च ब्रह्मास्त्रं विद्याञ्च वैरिमर्द्दिनीम्।
धर्म्मो धर्म्ममतिं दिव्यां सर्व्वजीवे दयां ददौ ॥ ७
परं मृत्युञ्जयं ज्ञानं सर्व्वशास्त्रावबोधनम्।
शश्वत्सुखप्रदं तत्त्व-ज्ञानञ्च सुमनोहरम् ॥ ८
योगतत्त्वं सिद्धितत्त्वं ब्रह्मज्ञानं सुदुर्लभम्।
शूलं पिणाकं परशुं शक्तिं पाशुपतं धनुः ॥ ९
संहारास्त्रविनिक्षेपं तत्संहारं ददौ शिवः।
श्वेतच्छत्रं रत्नमालां ददौ तस्मै जलेश्वरः ॥ १०
गजेन्द्रञ्च महेन्द्रश्च सुधाकुम्भं सुधानिधिः।
मनोयायिरथं सूर्य्यः सन्नाहञ्च मनोरमम् ॥ ११
यमदण्डं यमश्चैव महाशक्तिं हुताशनः।
नानाशस्त्राण्युपायानि सर्व्वे देवा ददुर्मुदा ॥ १२
कामशास्त्रं कामदेवो ददौ तस्मै मुदान्वितः।
क्षीरोदोऽमूल्यरत्नानि विशिष्टं रत्ननूपुरम् ॥ १३
पार्व्वती सस्मिता हृष्टा परमानन्दमानसा।
महाविद्यां सुशीलाञ्च विद्यां मेधां दयां स्मृतिम् ॥१४
बुद्धिं सुनिर्म्मलां शान्तिं तुष्टिं पुष्टिं क्षमां धृतिम्।
सुदृढाञ्च हरौ भक्तिं हरिदास्यं ददौ मुदा ॥ १५
प्रजापतिर्द्देवसेनां रत्नभूषणभूषिताम्।
सुविनीतां सुशीलाञ्च सुन्दरीं सुमनोहराम् ॥ १६
ददौ तस्मै विवाहेन वेदमन्त्रेण नारद।
यां वदन्ति महाषष्ठीं पण्डिताः शिशुपालिकाम् ॥१७
अभिषिच्य कुमारञ्च सर्व्वे देवा ययुर्गृहम्।
मुनयश्चैव गन्धर्व्वाः प्रणम्य जगदीश्वरान् ॥ १८
नारायणञ्च ब्रह्माणं धर्म्मं तुष्टाव शङ्करः।
प्रणनाम हरिं तातं धर्म्ममालिङ्ग्य नारद ॥ १९
प्रीत्या ययौ च शैलेन्द्रः सगणः शङ्करार्च्चितः।
ये ये तत्रागताः सर्व्वे ययुरानन्दपूर्व्वकम् ॥ २०
परमानन्दसंयुक्तो देव्या सह महेश्वरः।
कालान्तरे च तान् सर्व्वान् पुनरानीय शङ्करः ॥ २१
पुष्टिं ददौ विवाहेन गणेशाय महात्मने।
सुतार्थ्यां स्वगणैः सार्द्धं पार्व्वती हृष्टमानसा ॥ २२
सिषेवे स्वामिनः पादपद्मं सा सर्व्वकामदम्।
इत्येवं कथितं सर्व्वं कुमारस्याभिषेचनम् ॥ २३
विवाहः पूजनं तस्य गणेशस्य विवाहकम्।
पार्व्वतीपुत्त्रलाभश्च देवानाञ्च समागमः।
का ते मनसि वाञ्छास्ति किं भूयः श्रोतुमिच्छसि ॥२४

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे कुमाराभिषेको नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः।

नारद उवाच।

नारायण महाभाग वेदवेदाङ्गपारग।
पृच्छामि त्वामहं किञ्चिदतिसन्देहमीश्वर ॥ १
सुतस्य त्रिदशेशस्य शङ्करस्य महात्मनः।
विघ्ननिघ्नस्य यद्विघ्नमीश्वरस्य कथं प्रभो ॥ २
परिपूर्णतमः श्रीमान् परमात्मा परात्परः।
गोलोकनाथः स्वांशेन पार्व्वतीतनयः स्वयम् ॥ ३
अहो भगवतस्तस्य मस्तकच्छेदनं विभो।
ग्रहदृष्ट्या गणेशस्य तन्मे त्वं वक्तुमर्हसि ॥ ४

नारायण उवाच।

सावधानं शृणु ब्रह्मन्नितिहासं पुरातनम्।
विघ्नेशस्य विघ्नमिदं बभूव येन नारद ॥ ५
एकदा शङ्करः सूर्य्यं जघान परमक्रुधा।
मालिसुमालिहन्तारं (क) शूलेन भक्तवत्सलः ॥ ६
सोऽपि सूर्य्योऽव्यर्थशूलेन शिवतुल्येन तेजसा।
जहार चेतनां सद्यो रथाच्च निपपात ह ॥ ७
ददर्श कश्यपः पुत्रं मृतमुत्तानलोचनम्।
कृत्वा वक्षसि तं शोकाद्‌ विललाप भृशं मुहुः ॥ ८
हाहाकारं सुराश्चक्रुस्त्रासविह्वलपूर्ब्बशः।
अन्धीभूतं जगत् सर्व्वं बभूव तमसावृतम् ॥ ९
निष्प्रभं तनयं दृष्ट्वा शशाप कश्यपः शिवम्।
तपस्वी ब्रह्मणः पौत्रः प्रज्वलन् ब्रह्मतेजसा ॥ १०
मत्पुत्रस्य यथा वक्षश्छिन्नं शूलेन तेऽनघ।
त्वत्पुत्रस्य शिरश्छिन्नमेवम्भूतं भविष्यति ॥ ११
शिवश्च विगतक्रोधः (ख) क्षणेनैवाशुतोषकः।
ब्रह्मज्ञानेन तं सूर्य्यं जीवयामास तत्क्षणात् ॥ १२
ब्रह्म-विष्णु-महेशानामंशश्च त्रिगुणात्मकः।
सूर्य्यश्च चेतनां प्राप्य समुत्तस्थौ पितुः पुरः ॥ १३
ननाम पितरं भक्त्या शङ्करं भक्तवत्सलम्।
विज्ञाय शम्भोः शापञ्च कश्यपञ्च चुकोप ह ॥ १४
विषयं नैव जग्राह कोपेनैवमुवाच ह।
विषयञ्च परित्यज्य भजामि कृष्णमीश्वरम् ॥ १५
सर्व्वं तुच्छमनित्यञ्च नश्वरं चेश्वरं विना।
विहाय मङ्गलं सत्यं विद्वान् नेच्छेदमङ्गलम् ॥ १६
देवैश्च प्रेरितो ब्रह्मा समागत्य ससम्भ्रमः।
बोधयित्वा रविं तत्र युयोज विषये प्रभुः ॥ १७
शिवस्तमाशिषं कृत्वा ब्रह्मा च स्वालयं मुदा।
जगाम कश्यपश्चैव स्वराशिं रविरेव च ॥ १८
अथ माली सुमाली च व्याधिग्रस्तौ बभूवतुः।
श्वित्रौ गलितसर्व्वाङ्गौ शक्तिहीनौ हतप्रभौ ॥ १९
तावुवाच स्वयं ब्रह्मा युवाञ्च भजतां रविम्।
सूर्य्यकोपेण गलितौ युवामेव हतप्रभौ ॥ २०
सूर्य्यस्य कवचस्तोत्रं सर्व्वं पूजाविधिं विधिः।
जगाम कथयित्वा तौ ब्रह्मलोकं सनातनः ॥ २१

(क) मालीसुमालीहन्तारमिति वा पाठः।
(ख) गलितक्रोध इति पाठान्तरम्।

ततस्तौ पुष्करं गत्वा सिषेवाते रविं मुने।
स्नात्वा त्रिकालं भक्त्या च जपन्तौ मन्त्रमुत्तमम् ॥ २२
ततः सूर्य्याद्वरं प्राप्य निजरूपौ बभूवतुः।
इत्येवं कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि ॥ २३

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे विघ्नेश-संविघ्न-प्रश्नो नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः।

नारद उवाच।

किं स्तोत्रं कवचं ब्रह्मन् ब्रह्मणा च दयालुना।
दानवाभ्यां पुरा दत्तं सूर्य्यस्य परमात्मनः ॥ १
किं वा पूजाविधानं वा किं मन्त्रं व्याधिनाशनम्।
सर्व्वं चास्य महाभाग तन्मे त्वं वक्तुमर्हसि ॥ २

सूत उवाच।

नारदस्य वचः श्रुत्वा भगवान् करुणानिधिः।
स्तोत्रञ्च कवचं मन्त्रमुवाच पूजनक्रमम् ॥ ३

नारायण उवाच।

शृणु नारद वक्ष्यामि श्रीसूर्य्यपूजनक्रमम्।
स्तोत्रञ्च कवचं सर्व्व-पाप-व्याधि-विमोचनम् ॥ ४
मालि-सुमालिनौ दैत्यौ व्याधिग्रस्तौ बभूवतुः।
विधिं सस्मरतुस्तौ तु शिवमन्त्रप्रसादकम् ॥ ५
ब्रह्मा गत्वा च वैकुण्ठं पप्रच्छ कमलापतिम्।
शिवं तत्रैव गच्छन्तं वसन्तं हरिसन्निधौ ॥ ६

ब्रह्मोवाच।

मालिसुमालिनौ दैत्यौ व्याधिग्रस्तौ बभूवतुः।
कमुपायं वद ब्रह्मंस्तयोर्व्याधिविनाशने ॥ ७

श्रीविष्णुरुवाच।

कृत्वा सूर्य्यस्य सेवाञ्च पुष्करे पूर्णवत्सरम्।
व्याधिहन्तुर्मदंशस्य तौ च मुक्तौ भविष्यतः ॥ ८

शङ्कर उवाच।

सूर्य्यस्य स्तोत्रं कवचं मन्त्रं कल्पतरुं परम्।
देहि ताभ्यां जगत्कान्त व्याधिहन्तुर्महात्मनः ॥ ९
आरात् सम्पत्प्रदातारौ सर्व्वदाता हरिः स्वयम्।
व्याधिहन्ता दिनकरो यस्य यो विषयो विधे ॥ १०
तयोरनुमतिं प्राप्य ययौ दैत्यगृहं विधिः।

प्रणम्य तौ तं पृष्ट्वा च तस्मै ददतुरासनम् ॥ ११
तावुवाच स्वयं ब्रह्मा गलितौ च दयानिधिः ।
स्वल्पावाहाररहितौ पूयदुर्गन्धसंयुतौ ॥ १२
ब्रह्मोवाच ।
गृहीत्वा कवचं स्तोत्रं मन्त्रं पूजाविधिक्रमम् ।
गत्वा हि पुष्करं वत्सौ भजथः प्रणतौ रविम् ॥ १३
तावूचतुः ।
भजावः केन विधिना केन मन्त्रेण वा विधे ।
किं स्तोत्रं कवचं किं वा तदावाभ्यां प्रदेहि च ॥ १४
ब्रह्मोवाच ।
कृत्वा त्रिकालं स्नानञ्च मन्त्रेणानेन भास्करम् ।
संसेव्य भास्करं भक्त्या नीरुजौ च भविष्यथः ॥ १५
ओं ह्रीं नमो भगवते सूर्य्याय परमात्मने स्वाहा ।
इत्येनेन च मन्त्रेण सावधानं दिवाकरम् ॥ १६
सम्पूज्य भक्त्या दत्त्वा चैवोपहाराणि षोड़श ।
एवं संवत्सरं यावद् ध्रुवं मुक्तौ भविष्यथः ॥ १७
अपूर्व्वं कवचं तस्य युवाभ्यां प्रददाम्यहम् ।
यद्दत्तं गुरुणा पूर्व्वमिन्द्राय प्रीतिपूर्व्वकम् ॥ १८
तत् सहस्रभगाङ्गाय शापेन गौतमस्य च ।
अहल्याहरणेनैव पापयुक्ताय सङ्कटे ॥ १९
वृहस्पतिरुवाच ।
इन्द्र शृणु प्रवक्ष्यामि कवचं परमाद्भुतम् ।
यद्धृत्वा मुनयः पूता जीवन्मुक्ताश्च भारते ॥ २०
कवचं बिभ्रतो व्याधिर्न याति सन्निधिं भिया ।
यथा दृष्ट्वा वैनतेयं पलायन्ते भुजङ्गमाः ॥ २१
शुद्धाय गुरुभक्ताय स्वशिष्याय प्रकाशयेत् ।
खलाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात् ॥ २२
जगद्विलक्षणस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च गायत्री देवो दिनकरः स्वयम् ॥ २३
व्याधिप्रणाशे सौन्दर्य्ये विनियोगः प्रकीर्त्तितः ।
सद्यःपूतकरं सारं सर्व्वपापप्रणाशनम् ॥ २४
ओंक्लींह्रीं(क्रीं)श्रींश्रीसूर्य्यायस्वाहामेपातुमस्तकम् ।
अष्टादशाक्षरो मन्त्रः कपालं मे सदाऽवतु ॥ २५
ओं ह्रींह्रींश्रींश्रीसूर्य्याय स्वाहा मे पातु नासिकाम् ।
चक्षुर्मे पातु सूर्य्यश्च तारकाञ्च विकर्त्तनः ।
भास्करो मेऽधरं पातु दन्तं दिनकरः सदा ॥ २६
प्रचण्डः पातु गण्डं मे मार्त्तण्डः कर्णमेव च ।
मिहिरश्च सदा स्कन्धं पूषा जङ्घे च पातु मे ॥ २७
वक्षः पातु रविः शश्वन्नाभिं सूर्य्यः स्वयं सदा ।
कङ्कालं मे सदा पातु सर्व्वदेवनमस्कृतः ॥ २८
करौ पातु सदा ब्रध्नः पातु पादौ प्रभाकरः ।
विभाकरो मे सर्व्वाङ्गं पातु सन्ततमीश्वरः ॥ २९
इति ते कथितं वत्स कवचं सुमनोहरम् ।
जगद्विलक्षणं नाम त्रिजगत्सु सुदुर्लभम् ॥ ३०
पुरा दत्तञ्च मनवे पुलस्त्यः पुष्करे सदा ।
मया दत्तञ्च तुभ्यञ्च यस्मै कस्मै न दास्यसि ॥ ३१
व्याधितो मुच्यसे त्वञ्च कवचस्य प्रसादतः ।
भवानरोगी श्रीमांश्च भविष्यति न संशयः ॥ ३२
लक्षवर्षहविष्येण यत् फलं लभते नरः ।
तत् फलं लभते नूनं कवचस्यास्य धारणात् ॥ ३३
इदं कवचमज्ञात्वा यो मूढ़ो भास्करं भजेत् ।
दशलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ३४
इति श्रीब्रह्मवैवर्त्ते सूर्य्यकवचं समाप्तम् ।
ब्रह्मोवाच ।
धृत्वेदं कवचं वत्सौ कृत्वा च स्तवनं रवेः ।
युवां व्याधिविमुक्तौ च निश्चितन्तु भविष्यथः ॥ ३५
स्तवनं सामवेदोक्तं सूर्य्यस्य व्याधिमोचनम् ।
सर्व्वपापहरं सारं श्रीरारोग्यकरं परम् ॥ ३६
ब्रह्मोवाच ।
त्वं ब्रह्म परमं धाम ज्योतीरूपं सनातनम् ।
त्वामहं स्तोतुमिच्छामि भक्तानुग्रहकारकम् ॥ ३७
त्रैलोक्यलोचनं लोकनाथं पापप्रमोचनम् ।
तपसां फलदातारं दुःखदं पापिनां सदा ॥ ३८
कर्म्मानुरूपफलदं कर्म्मबीजं दयानिधिम् ।
कर्म्मरूपं क्रियारूपमरूपं कर्म्मबीजकम् ॥ ३९
ब्रह्म-विष्णु-महेशानामंशञ्च त्रिगुणात्मकम् ।
व्याधिदं व्याधिहन्तारं शोक-मोह-भयापहम् ॥ ४०
सुखदं मोक्षदं सारं भक्तिदं सर्व्वकामदम् ।
सर्व्वेश्वरं सर्व्वरूपं साक्षिणं सर्व्वकर्म्मणाम् ॥ ४१
प्रत्यक्षं सर्व्वलोकानामप्रत्यक्षमनूहकम् ।
शश्वद्रसहरं पश्चाद्रसदं सर्व्वसिद्धिदम् ॥ ४२
सिद्धिस्वरूपं सिद्धेशं सिद्धानां परमं गुरुम् ।
स्तवराजमिति प्रोक्तं गुह्याद्गुह्यतरं परम् ।
त्रिसन्ध्यं यः पठेन्नित्यं सर्व्वव्याधेः प्रमुच्यते ॥ ४३

आन्ध्यं कुष्ठञ्च दारिद्र्यं रोगः शोको भयं कलिः।
तस्य नश्यति विघ्नेश श्रीसूर्य्यकृपया ध्रुवम् ॥ ४४
महाकुष्ठी च गलितो चक्षुर्हीनो महाव्रणी।
यक्ष्मग्रस्तो महाशूली नानाव्याधियुतोऽपि वा।
मासं कृत्वा हविष्यान्नं श्रुत्वा स मुच्यते ध्रुवम् ॥ ४५
स्नानञ्च सर्व्वतीर्थानां लभते नात्र संशयः।
पुष्करं गच्छतं शीघ्रं भास्करं भजतः सुतौ ॥ ४६
इत्येवमुक्त्वा स विधिर्जगाम स्वालयं मुदा।
तौ निषेव्य दिनेशं तं नीरुजौ तौ बभूवतुः ॥ ४७
इत्येवं कथितं वत्स किं भूयः श्रोतुमिच्छसि।
सर्व्वविघ्नहरं सारं विघ्नेशविघ्नकारणम् (क) ॥ ४८

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे विघ्नकारण-कथनं नामोनविंशोऽध्यायः ॥१९॥

---

## विंशोऽध्यायः।

नारद उवाच।

हरेरंशसमुत्पन्नो हरितुल्यो भवान् धिया।
तेजसा विक्रमेणैव मत्प्रश्नं श्रोतुमर्हति ॥ १
विघ्ननिघ्नस्य यद्विघ्नं श्रुतं तत् परमाद्भुतम्।
तद्विघ्नकारिणश्चैव विघ्नकारणवक्त्रतः ॥ २
अधुना श्रोतुमिच्छामि स्वात्मसन्देहभञ्जनम्।
त्रैलोक्यनाथतनये गजास्ययोजना कथम् ॥ ३
स्थितेष्वास्येषु सर्व्वेषां जन्तूनां जन्तुसम्भवे (ख)।
त्रिशिष्टानां सुरूपेषु नानारूपेषु रूपिणाम् ॥ ४

नारायण उवाच।

गजास्ययोजनायाश्च कारणं शृणु नारद।
गोप्यं सर्व्वपुराणेषु वेदेषु च सुदुर्लभम् ॥ ५
तारणं सर्व्वदुःखानां कारणं सर्व्वसम्पदाम्।
हारणं विपदाञ्चैव रहस्यं पापमोचनम् ॥ ६
महालक्ष्म्याश्च चरितं सर्व्वमङ्गलमङ्गलम्।
सुखदं मोक्षदञ्चैव चतुर्व्वर्गफलप्रदम् ॥ ७
शृणु तात प्रवक्ष्येऽहमितिहासं पुरातनम्।
रहस्यं पाद्मकल्पस्य गुरा तातमुखाच्छ्रुतम् ॥ ८
एकदैव महेन्द्रश्च पुष्पभद्रां नदीं ययौ।
महासम्पन्मदोन्मत्तः कामी राजश्रियान्वितः ॥ ९
तत्तीरे च रहःस्थाने पुष्पोद्याने मनोहरे।
अतीवदुर्गमेऽरण्ये सर्व्वजन्तुविवर्ज्जिते ॥ १०
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते।
सुगन्धिपुष्पसंश्लिष्ट-वायुना सुरभीकृते ॥ ११
ददर्श रम्भां तत्रैव चन्द्रलोकात् समागताम्।
सुरतश्रमविश्राम-कामुकीं कामकामुकीम् ॥ १२
इच्छन्तीमीप्सितां क्रीड़ां गच्छन्तीं मदनाश्रमम्।
एकाकिनीमुन्मनस्कां मन्मथोद्धतमानसाम् ॥ १३
सुश्रोणीं सुदतीं श्यामां बिम्बाधरमनोहराम्।
बृहन्नितम्बभारार्त्तां गजेन्द्रमन्दगामिनीम् ॥ १४
सस्मितास्यशरच्चन्द्रं सकटाक्षञ्च बिभ्रतीम्।
बिभ्रतीं कबरीं रम्यां मालतीमाल्यशोभिताम् ॥१५
वह्निशुद्धांशुकधरां रत्नभूषणभूषिताम्।
कस्तूरीबिन्दुना सार्द्धं सिन्दूरबिन्दुमण्डिताम् ॥ १६
नीलोत्पलविनिन्दैक-कज्जलोज्ज्वललोचनाम्।
मणिकुण्डलयुग्मेन गण्डस्थलविराजिताम् ॥ १७
प्रत्युन्नतं सुकठिनं पत्रराजिविराजितम्।
सुखदं रसिकानाञ्च स्तनयुग्मञ्च बिभ्रतीम् ॥ १८
सर्व्वशोभाढ्यवेशाढ्यां सुभगां सुरतोत्सुकाम्।
प्राणाधिकाञ्च देवानां स्वच्छां स्वच्छन्दगामिनीम्१९
वरामप्सरसं रम्या-मतीवस्थिरयौवनाम्।
गुण-रूपवतीं शान्तां मुनिमानसमोहिनीम् ॥ २०
दृष्ट्वा तामतिवेशाढ्यां तत्कटाक्षेण पीड़ितः।
इन्द्रोऽतीन्द्रियचापल्यात् प्रवक्तुमुपचक्रमे ॥ २१

इन्द्र उवाच।

क्व गच्छसि वरारोहे कुतो वागमनं तव (क)।
मया दृष्टासि सुचिरात् कः प्रियोऽस्ति तवाधुना(ख)२२
तवान्वेषणकर्त्ताहं श्रुत्वा वाचिकवक्त्रतः।
शश्वत् तवानुरक्तश्च कामन्यां गणयामि ते ॥ २३
सुवासितजलार्थी यः किमिच्छेत् पङ्किलं जलम्।
पङ्कं नेच्छेच्चन्दनार्थी पद्मार्थी न चोत्पलम् ॥ २४
सुधार्थी न सुरामिच्छेद्दुग्धार्थी न जलाविलम्।

---

(क) इतः परं स्तोत्रमेतेन तं स्तुत्वा मुच्यते नात्र संशयः इत्यधिकः पाठः क्वाचित्कः। (ख)सम्भवेति वा पाठः।

(क) क्व गतासि मनोहरे इति क्वचित् पाठः।
(ख) मया दृष्टापि सुचिरमप्रियेण तवाधुनेति क्वचित् पाठः।

सुगन्धिपुष्पशायी यो न चास्तृतल्पमिच्छति ॥ २५
यः स्वर्गी नरकं नेच्छेत् सुभोगी न कुभोजनम् ।
पण्डितैः सह संवासी नेच्छेन्मूर्खेण सङ्गतिम्(क) ।
विहाय रत्नाभरणं कोऽपीच्छेल्लौहभूषणम् ॥ २६
त्वामाश्लिष्य महाविज्ञां को मूढ़ो गन्तुमिच्छति ।
विहाय गङ्गां को विज्ञो नदीमन्याञ्च वाञ्छति ॥२७
इन्द्रियैश्चेन्द्रियरतिं वर्द्धमानाञ्च सेवनैः ।
वरं प्रार्थयितारश्च जीविनश्च सुखार्थिनः ॥ २८
इत्येवमुक्त्वा मघवानवरुह्य गजश्वेरात् ।
भक्तियुक्तश्च पुरतस्तस्थौ तस्याश्च नारद ॥ २९
श्रुत्वा तद्वचनं रम्भा महाशृङ्गारलोलुपा ।
जहासानम्रवदना पुलकाञ्चितविग्रहा ॥ ३०
स्मेराननकटाक्षेण स्तनोरुदर्शनेन च ।
कामाग्न्याहुतिवाक्येन जहार तस्य चेतनाम् ॥ ३१
मितं सारं सुमधुरं सुस्निग्धं कोमलं प्रियम् ।
पुरुषायत्तवीजञ्च प्रवक्तुमुपचक्रमे ॥ ३२

रम्भोवाच ।

यास्यामि वाञ्छितं यत्र प्रश्नेन तव किं फलम् ।
नाहं सन्तोषजननी धूर्त्तानां दृष्टिमिचता ॥ ३३
यथा मधुकरो लोभात् सर्व्वपुष्परसं लभेत् ।
स्वादु यत्रातिरिक्तं स तत्र तिष्ठति सन्ततम् ॥ ३४
तथैव लम्पटपुमान् भ्रमेद्भ्रमरवत् सदा ।
न विवज्ञो हि स सेव्यो वायुवद्रसमाहरेत् ॥ ३५
सुपुमानङ्गवत् स्त्रीणां यथा शाखाश्च शाखिषु ।
लम्पटः काकवल्लोलः फलं भुक्त्वा प्रयाति च ॥ ३६
स्वकार्य्यमुद्धरेद्यावत् तावद्दासप्रयोजनम् ।
स्थितिः कार्य्यानुरोधेन यथा काष्ठे हुताशनः ॥३७
यावत् तड़ागे तोयानि तावद्यादांसि तेषु च ।
शुष्कारम्भे च तोयानां यान्ति स्थानान्तरं पुनः ॥३८
त्वं देवानामीश्वरोऽसि कामिनीनाञ्च वाञ्छितः ।
पुमांसं रसिकं शश्वद्वाञ्छन्ति रसिकाः सुखात्॥३९
युवानं रसिकं शान्तं सुवेशं सुन्दरं प्रियम् ।
गुणिनं धनिनं स्वच्छं कान्तमिच्छति कामिनी ॥ ४०
दुःशीलं रोगिणं वृद्धं रतिशक्तिविहीनकम् ।
अदातारमविज्ञञ्च नैव वाञ्छन्ति योषितः ॥ ४१
का मूढ़ा न च वाञ्छन्ति त्वामेव गुणसागरम् ।

(क) नेच्छेत् कामिनीसन्निधिमिति क्वचित् पाठः।

तवाज्ञाकारिणीं दासीं गृहाणात्र यथासुखम् ॥४२
इत्युक्त्वा सस्मिता सा च तं पपौ वक्रचक्षुषा ।
कामाग्निदग्धा विगत-लज्जा तस्थौ समीपतः ॥४३
ज्ञात्वा भावं स्वराताया: स्वरशास्त्रविशारदः ।
गृहीत्वा तां पुष्पतल्पे विजहार तया सह ॥ ४४
सहसा रहसि प्रौढ़ां नम्राञ्च सुभगां वराम् ।
पक्वबिम्बाधरोष्ठीञ्च चुचुम्ब चुम्बितस्तया ॥ ४५
नानाप्रकारशृङ्गारं विपरीतादिकं मुने ।
चकार कामी तत्रैव शृङ्गारो मूर्त्तिमानिव ॥ ४६
तौ कामाहितचित्तौ द्वा बुबुधाते दिवानिशम् ।
शश्वत्तद्गतचित्तौ च कामार्त्तौ ज्ञानवर्ज्जितौ ॥ ४७
स च कृत्वा स्थले क्रीड़ां तया सह सुरेश्वरः ।
ययौ जलविहारार्थं पुष्पभद्रानदीजलम् ॥ ४८
स चकार जलक्रीड़ां तया सह चिरं मुदा ।
जलात् स्थले स्थलात् तोये विजहार पुनः पुनः ॥४९
एतस्मिन्नन्तरे तेन वर्त्मना मुनिपुङ्गवः ।
सशिष्यो याति दुर्व्वासा वैकुण्ठाच्छङ्करालयं ॥ ५०
तञ्च दृष्ट्वा मुनीन्द्रञ्च देवेन्द्रः सम्भ्रमानसः ।
ननामागत्य सहसा ददौ तस्मै स चाशिषः ॥ ५१
पारिजातप्रसूनं यद्दत्तं नारायणेन वै ।
तच्च दत्तं महेन्द्राय मुनीन्द्रेण महात्मना ॥ ५२
दत्त्वा पुष्पं महाभागस्तमुवाच कृपानिधिः ।
माहात्म्यं तस्य यत् किञ्चिदपूर्व्वं मुनिसत्तमः ॥ ५३

दुर्व्वासा उवाच ।

सर्व्वविघ्नहरं पुष्पं नारायणनिवेदितम् ।
मूर्द्धीदं यस्य देवेन्द्र जयस्तस्यैव सर्व्वतः ॥ ५४
पुरः पूजा च सर्व्वेषां देवानामग्रणीर्भवेत् ।
तच्छायेव महालक्ष्मीर्न जहाति कदापि तम् ॥५५
ज्ञानेन तेजसा बुद्ध्या विक्रमेण बलेन च ।
सर्व्वदेवाधिकः श्रीमान् हरितुल्यपराक्रमः ॥ ५६
भक्त्या मूर्ध्नि न गृह्णाति योऽहङ्कारेण पामरः ।
नैवेद्यञ्च हरेरेव स भ्रष्टश्रीः सजातिभिः ॥ ५७
इत्युक्त्वा शङ्करांशश्च जगाम शङ्करालयम् ।
शक्रो रम्भान्तिके पुष्पं संस्थाप्य गजमस्तके ॥ ५८
शक्रं भ्रष्टश्रियं दृष्ट्वा सा जगाम सुरालयम् ।
पुंश्चली योग्यमिच्छन्ती नापरं चञ्चलाधमा ॥ ५९
देवराजं परित्यज्य गजराजो महाबली ।

प्रविवेश महारण्यं तं निक्षिप्य स्वतेजसा ॥ ६०
तत्रैव करिणीं प्राप्य मत्तः सम्बुभुजे बलात्।
सा बभूव तदंशगा योषिज्जातिः सुखार्थिनी ॥ ६१
तयोर्बभूवापत्यानां निवहस्तत्र कानने।
हरिस्तन्मस्तकं छित्त्वा युयोज तेन बालके ॥ ६२
इत्येवं कथितं वत्स किं भूयः श्रोतुमिच्छसि।
गजास्ययोजनायाश्च कारणं पापनाशनम् ॥ ६३

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे गजास्ययोजन-हेतुकथनं नाम विंशोऽध्यायः ॥२०॥

---

## एकविंशोऽध्यायः।

नारद उवाच।

ते देवा ब्रह्मशापेन निःश्रीकाः केन वा प्रभो।
बभूवुस्तद्रहस्यञ्च गोपनीयं सुदुर्लभम् ॥ १
कथं वा प्रापुरेते तां कमलां जगतां प्रसूम्।
किं चकार महेन्द्रश्च तद्भवान् वक्तुमर्हति ॥ २

नारायण उवाच।

गजेन्द्रेण पराभूतो रम्भया च सुमन्दधीः।
भ्रष्टश्रीर्दैन्ययुक्तश्च स जगामामरावतीम् ॥ ३
तां ददर्श निरानन्दो निरानन्दां पुरीं मुने।
दैन्यग्रस्तां बन्धुहीनां वैरिवर्गैः समाकुलाम् ॥ ४
सर्व्वं श्रुत्वा दूतमुखाज्जगाम मन्दिरं गुरोः।
तेन देवगणैः सार्द्धं जगाम ब्रह्मणः सभाम् ॥ ५
गत्वा ननाम तं शक्रः सुरैः सार्द्धं यथा गुरुम्।
तुष्टाव वेदविधिना स्तोत्रेण भक्तिसंयुतः।
प्रवृत्तिं कथयामास वाक्पतिस्तं प्रजापतिम् ॥ ६
श्रुत्वा ब्रह्मा नम्रवक्त्रः प्रवक्तुमुपचक्रमे।

ब्रह्मोवाच।

मत्प्रपौत्रोऽसि देवेन्द्र शश्वद्राजन् श्रिया ज्वलन्।
लक्ष्मीसमाशचीभर्त्ता परस्त्रीलोलुपः सदा ॥ ७
गौतमस्याभिशापेन भगाङ्गः सुरसंसदि।
पुनर्लज्जाविहीनस्त्वं परस्त्रीरतिलोलुपः ॥ ८
यः परस्त्रीषु निरतस्तस्य श्रीर्वा कुतो यशः।
स च निन्द्यः पापयुक्तः शश्वत् सर्व्वसभासु च ॥ ९
नैवेद्यं श्रीहरेरेव दत्तं दुर्व्वाससा च ते।
गजमूर्ध्नि त्वया न्यस्तं रम्भया हृतचेतसा ॥ १०
क्व सा रम्भा सर्व्वभोग्या क्वाधुना त्वं श्रिया हतः।
पद्मा त्यक्ता यन्निमित्तात्त्वया त्यक्तः क्षणेन सा ॥ ११
वेश्या सश्रीकमिच्छन्ती निःश्रीकं न च चञ्चला।
नवं नवं प्रार्थयन्ती परिनिन्द्य पुरातनम् ॥ १२
यद्गतं तद्गतं वत्स निषेकं न निवर्त्तते।
भज नारायणं भक्त्या पद्मायाः प्राप्तिहेतवे ॥ १३
इत्युक्त्वा तं जगत्स्रष्टुः स्तोत्रञ्च कवचं ददौ।
नारायणस्य मन्त्रञ्च नारायणपरायणः ॥ १४
स तैः सार्द्धञ्च गुरुणा जगाम मन्त्रमीप्सितम्।
गृहीत्वा कवचं तेन तुष्टाव पुष्करे हरिम् ॥ १५
वर्षमेकं निराहारो भारते पुष्करे शुभे।
सिषेवे कमलाकान्तं कमलाप्राप्तिहेतवे ॥ १६
आविर्भूय हरिस्तस्मै वाञ्छितञ्च वरं ददौ।
लक्ष्मीस्तोत्रञ्च कवचं मन्त्रमैश्वर्य्यविवर्द्धनम् ॥ १७
दत्त्वा जगाम वैकुण्ठमिन्द्रः क्षीरोदमेव च।
गृहीत्वा कवचं स्तुत्वा प्राप पद्मालयां मुने ॥ १८
स्ववैरिणं विजित्वा च स लब्धामरावतीम्।
प्रत्येकञ्च सुराः सर्व्वे स्वालयं प्रापुरीप्सितम् ॥ १९

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारदसंवादे शक्र-लक्ष्मी-प्राप्तिर्नामैकविंशोऽध्यायः ॥२१॥

---

## द्वाविंशोऽध्यायः।

नारद उवाच।

आविर्भूय हरिस्तस्मै किं स्तोत्रकवचं ददौ।
महालक्ष्म्याश्च लक्ष्मीशस्तन्मे ब्रूहि तपोधन ॥ १

नारायण उवाच।

पुष्करे च तपस्तप्त्वा विरराम सुरेश्वरः।
आविर्बभूव तत्रैव क्लिष्टं दृष्ट्वा हरिः स्वयम् ॥ २
तमुवाच हृषीकेशो वरं वृणु यथेप्सितम्।
स च वव्रे वरं लक्ष्मीमीशस्तस्मै ददौ मुदा ॥ ३
वरं दत्त्वा हृषीकेशः प्रवक्तुमुपचक्रमे।
हितं सत्यञ्च सारञ्च परिणामसुखावहम् ॥ ४

मधुसूदन उवाच।

गृहाण कवचं शक्र सर्व्वदुःखविनाशनम्।

परमैश्वर्य्यजनकं सर्व्वशत्रुविमर्द्दनम् ॥ ५
ब्रह्मणे च पुरा दत्तं संसारे च जलप्लुते।
यद्धृत्वा जगतां श्रेष्ठः सर्व्वैश्वर्य्ययुतो विधिः ॥ ६
बभूवुर्मुनयः सर्व्वे सर्व्वैश्वर्य्ययुता यतः।
सर्व्वैश्वर्य्यप्रदस्यास्य कवचस्य ऋषिर्विधिः ॥ ७
पङ्क्तिश्छन्दश्च सा देवी स्वयं पद्मालया सुर।
सिद्ध्यैश्वर्य्यजयेष्वेव विनियोगः प्रकीर्त्तितः ।
यद्धृत्वा कवचं लोकः सर्व्वत्र विजयी भवेत् ॥ ८
मस्तकं पातु मे पद्मा कण्ठं पातु हरिप्रिया।
नासिकां पातु मे लक्ष्मीः कमला पातु लोचनम् ॥९
केशान् केशवकान्ता च कपालं कमलालया।
जगत्प्रसूर्गण्डयुग्मं स्कन्धं सम्पत्प्रदा सदा ॥ १०
ओं श्रीं क्लीं कमलवासिन्यै स्वाहा पृष्ठं सदाऽवतु।
ओं श्रीं पद्मालयायै स्वाहा वक्षः सदाऽवतु।
पातु श्रीमम कङ्कालं बाहुयुग्मञ्च श्रीं नमः ॥ ११
श्रीं क्लीं(क)लक्ष्म्यै नमः पादौ पातु मे सन्ततं चिरम्१२
ओं ह्रीं क्लीं श्रीं नमः पद्मायै स्वाहा पातुनितम्बकम्।
ओं श्रीं महालक्ष्म्यै स्वाहा सर्व्वाङ्गं पातु मे सदा १३
ओं ह्रीं क्लीं श्रीं क्लीं महालक्ष्म्यै स्वाहा मांपातुसर्व्वतः।
इति ते कथितं वत्स सर्व्वसम्पत्करं परम् ॥ १४
सर्व्वैश्वर्य्यप्रदं नाम कवचं परमाद्भुतम् ॥ १५
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत् तु यः।
कण्ठे वा दक्षिणे बाहौ स सर्व्वविजयी भवेत् ॥ १६
महालक्ष्मीर्गृहं तस्य न जहाति कदाचन।
तस्य च्छायेव सततं सा च जन्मनि जन्मनि ॥ १७
इदं कवचमज्ञात्वा भजेल्लक्ष्मीं सुमन्दधीः।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ १८
इति श्रीब्रह्मवैवर्त्ते लक्ष्मीकवचं समाप्तम्।

नारायण उवाच।

दत्त्वा तस्मै च कवचं मन्त्रञ्च षोड़शाक्षरम्।
सन्तुष्टश्च जगन्नाथो जगतां हितकारणम् ॥ १९
ओं ह्रीं क्लीं श्रीं क्लीं नमो महालक्ष्म्यै हरिप्रियायै स्वाहा।
ददौ तस्मै च कृपया इन्द्राय च महामुने ॥ २०
ध्यानञ्च सामवेदोक्तं गोपनीयं सुदुर्लभम्।
सिद्धैर्मुनीन्द्रैर्दुष्प्राप्यं ध्रुवं सिद्धिप्रदं शुभम् ॥ २१
श्वेतचम्पकवर्णाभां शतचन्द्रसमप्रभाम्।

(क) ओं ह्रीं श्रीं इति क्वचित् पाठः।

वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम्।
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकारिकाम् ॥ २२
कस्तूरीबिन्दुमध्यस्थ-सिन्दूरबिन्दुभूषणाम्।
अमूल्यरत्नरचितकुण्डलोज्ज्वलभूषिताम्।
बिभ्रतीं कबरीभारं मालतीमाल्यशोभितम् ॥ २३
सहस्रदलपद्मास्थां स्वस्थाञ्च सुमनोहराम्।
शान्ताञ्च श्रीहरेः कान्तां तां भजेज्जगतां प्रसूम्॥२४
ध्यानेनानेन देवेन्द्र ध्यात्वा लक्ष्मीं मनोहराम्।
भक्त्या दास्यसि तस्यै तान्युपचाराणि षोड़श ॥२५
स्तुत्वानेन स्तवेनैव वक्ष्यमाणेन वासव।
नत्वा वरं गृहीत्वा च लभिष्यसि च निर्व्वृतिम् ॥२६
स्तवनं शृणु देवेन्द्र महालक्ष्म्याः सुखप्रदम्।
कथयामि सुगोप्यञ्च त्रिषु लोकेषु दुर्लभम् ॥ २७

नारायण उवाच।

देवि त्वां स्तोतुमिच्छामि न क्षमः स्तोतुमीश्वरीम्।
बुद्धेरगोचरां सूक्ष्मां तेजोरूपां सनातनीम् ॥ २८
अत्यनिर्व्वचनीयाञ्च को वा निर्व्वक्तुमीश्वरः।
स्वेच्छामयीं निराकारां भक्तानुग्रहविग्रहाम् ॥ २९
स्तौमि वाङ्मनसोः पारां किं वाहं जगदम्बिके।
परां चतुर्णां वेदानां पारबीजां भवार्णवे ॥ ३०
सर्व्वशस्याधिदेवीञ्च सर्व्वासामपि सम्पदाम् ॥ ३१
योगिनाञ्चैव योगानां ज्ञानानां ज्ञानिनां तथा।
वेदानाञ्च वेदविदां जननीं वर्णयामि किम् ॥ ३२
यया विना जगत् सर्व्वमवस्तु निष्फलं ध्रुवम्।
यथा स्तनान्धबालानां मात्रा वस्तु त्वया सह ॥ ३३
प्रसीद जगतां माता रक्षास्मानतिकातरान्।
वयं त्वच्चरणाम्भोजे प्रपन्नाः शरणं गताः ॥ ३४
नमः शक्तिस्वरूपायै जगन्मात्रे नमो नमः।
ज्ञानदायै बुद्धिदायै सर्व्वदायै नमो नमः ॥ ३५
हरिभक्तिप्रदायिन्यै मुक्तिदायै नमो नमः।
सर्व्वज्ञायै सर्व्वदायै महालक्ष्म्यै नमो नमः ॥ ३६
कुपुत्राः कुत्रचित् सन्ति न कुत्रचित् कुमातरः।
कुत्र माता पुत्रदोषात् तं विहाय च गच्छति ॥ ३७
हे मातर्दर्शनं देहि स्तनान्धान् बालकानिव।
कृपां कुरु कृपासिन्धु-प्रियेऽस्मान् भक्तवत्सले ॥ ३८
इत्येवं कथितं वत्स पद्मायाश्च शुभावहम्।
सुखदं मोक्षदं सारं शुभदं सम्पदः प्रदम् ॥ ३९

इदं स्तोत्रं महापुण्यं पूजाकाले च यः पठेत् ।
महालक्ष्मीर्गृहं तस्य न जहाति कदाचन ॥ ४०
इत्युक्त्वा श्रीहरिस्तत्र तत्रैवान्तरधीयत ।
देवो जगाम क्षीरोदं सुरैः सार्द्धं तदाज्ञया ॥ ४१

इति श्रीब्रह्मवैवर्त्ते गणेशखण्डे लक्ष्मीस्तवादि-कथनं द्वाविंशोऽध्यायः ॥२२॥

---

## त्रयोविंशोऽध्यायः ।

नारायण उवाच ।

इन्द्रश्च गुरुणा सार्द्धं सुरैश्च हृष्टमानसः ।
जगाम शीघ्रं-पद्मायै तीरं क्षीरपयोनिधेः ॥ १
कवचञ्च गले बद्ध्वा सद्रत्नगुटिकान्वितम् ।
मनसा स्तवनं दिव्यं स्मारं स्मारं पुनः पुनः ॥ २
ते सर्व्वे भक्तियुक्ताश्च तुष्टुवुः कमलालयाम् ।
साश्रुनेत्रातिदीनाश्च भक्तिनम्रात्मकन्धराः ॥ ३
सा तेषां स्तवनं श्रुत्वा सद्यः साक्षाद्बभूव ह ।
सहस्रदलपद्मस्था शतचन्द्रसमप्रभा ॥ ४
जगद्व्याप्तं सुप्रभया जगन्मात्रा यया मुने ।
तानुवाच जगद्धात्री हितं सारं यथोचितम् ॥ ५

महालक्ष्मीरुवाच ।

वत्सा नेच्छामि वो गेहान् गन्तुं नैव क्षमाधुना ।
भ्रष्टानां ब्रह्मशापेन बिभेमि ब्रह्मशापतः ॥ ६
प्राणा मे ब्राह्मणाः सर्व्वे शश्वत् पुत्राधिकप्रियाः ।
विप्रदत्तञ्च यत् किञ्चिदुपजीव्यं सदैव नः ॥ ७
विप्रा ब्रुवन्तु मां तुष्टा यास्यामि च तदाज्ञया ।
साम पूज्यां भुवं कर्त्तुं क्षमास्ते च तपस्विनः ॥ ८
गुरुभिर्ब्राह्मणैर्देवैर्भिक्षुभिर्वैष्णवैस्तथा ।
यदभाग्यं भवेद्दैवात् ते शप्ताः सन्ति सन्ततम् ॥ ९
नारायणश्च भगवान् बिभेति ब्रह्मशापतः ।
सर्व्वबीजश्च भगवान् सर्व्वेशश्च सनातनः ॥ १०
एतस्मिन्नन्तरे ब्रह्मन् ब्राह्मणा हृष्टमानसाः ।
आजग्मुः सस्मिताः सर्व्वे ज्वलन्तो ब्रह्मतेजसा ॥ ११
अङ्गिराश्च प्रचेताश्च क्रतुश्च भृगुरेव च ।
पुलहश्च पुलस्त्यश्च मरीचिरत्रिरेव च ॥ १२
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
सनत्कुमारो भगवान् साक्षान्नारायणात्मकः ॥ १३
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।
दुर्व्वासाः कश्यपोऽगस्त्यो गौतमः कण्व एव च ॥ १४
आवां कात्यायनश्चैव कणादः पाणिनिस्तथा ।
मार्कण्डेयो लोमशश्च वशिष्ठो भगवान् स्वयम् ॥ १५
ब्राह्मणा विविधैर्द्रव्यैः पूजयामासुरीश्वरीम् ।
देवाश्चारकणनैवेद्यैः परिहारेण भक्तितः ॥ १६
स्तुत्वा मुनीन्द्रास्तां भक्त्या चक्रुराराधनं मुदा ।
आगच्छ देवभवनं मर्त्यञ्च जगदम्बिके ॥ १७
तेषां तद्वचनं श्रुत्वा तानुवाच जगत्प्रसूः ।
परितुष्टा शासकी च निर्भया ब्राह्मणाज्ञया ॥ १८

महालक्ष्मीरुवाच ।

गृहान् यास्यामि देवानां शुभाकमाज्ञया द्विजाः ।
येषां गेहं न गच्छामि शृणुध्वं भारतेषु च ॥ १९
स्थिरा पुण्यवतां गेहे सुनीतिविदिनामहम् ।
गृहस्थानां नृपाणां वा पुत्रवत् पालयामि तान् ॥२०
यं यं रुष्टो गुरुर्देवो माता तातश्च बान्धवाः ।
अतिथिः पितृलोकश्च न यामि तस्य मन्दिरम् ॥ २१
मिथ्यावादी च यः शश्वन्नास्तीति वाचकः सदा ।
सत्त्वहीनश्च दुःशीलो न गेहं तस्य याम्यहम् ॥ २२
सत्यहीनः स्थाप्यहारी मिथ्यासाक्षीप्रदायकः ।
विश्वासघ्नः कृतघ्नो यो न यामि तस्य मन्दिरम् ॥२३
चिन्ताग्रस्तो भयग्रस्तः शत्रुग्रस्तोऽतिपातकी ।
ऋणग्रस्तोऽतिकृपणो न गेहं यामि पापिनाम् ॥ २४
दीक्षाहीनश्च शोकार्त्तो मन्दधीः स्त्रीजितः सदा ।
पुंश्चलीपतिपुत्रो यो तद्गेहं नैव याम्यहम् ॥ २५
यो दुर्व्वाक् कलहाविष्टः कलिः शश्वद्गृहालये ।
स्त्री प्रधाना गृहे यस्य न यामि तस्य मन्दिरम् ॥२६
यत्र नास्ति हरेः पूजा तदीयगुणकीर्त्तनम् ।
नोत्सुकस्तत्प्रशंसायां न यामि तस्य मन्दिरम् ॥ २७
कन्यात्मवेदविक्रेता नरघाती च हिंसकः ।
नरकागारसदृशं न यामि तस्य मन्दिरम् ॥ २८
मातरं पितरं भार्य्यां गुरुपत्नीं गुरुं सुतम् ।
अनाथां भगिनीं कन्यामनन्याश्रयबान्धवान् ॥ २९
कार्पण्याद्यो न पुष्णाति सञ्चयं कुरुते सदा ।
तद्गेहान्नरकागारान्न यामि तन्मुनीश्वराः ॥ ३०
दशनं वसनं यस्य समलं रूक्षमस्तकम् ।
विकृतौ ग्रास-हासौ च न यामि तस्य मन्दिरम् ॥ ३१

मूत्रं पुरीषमुत्सृज्य यस्तत् पश्यति मन्दधीः।
यः शेते स्निग्धपादेन न यामि तस्य मन्दिरम्॥ ३२
अधौतपादशायी यो नग्नः शेतेऽतिनिद्रितः।
सन्ध्याशायी दिवाशायी न यामि तस्य मन्दिरम्॥३३
मूर्द्ध्नि तैलं पुरो दत्त्वा योऽन्यदङ्गमुपस्पृशेत्।
ददाति पश्चाद्गात्रे वा न यामि तस्य मन्दिरम्॥३४
दत्त्वा तैलं मूर्द्ध्नि गात्रे विण्मूत्रं यः समुत्सृजेत्।
प्रणमेदाचरेत् पुष्पं न यामि तस्य मन्दिरम्॥ ३५
तृणं छिनत्ति नखरैर्नखरैर्विलिखेन्महीम्।
गात्रे पादे मलं यस्य न यामि तस्य मन्दिरम्॥ ३६
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं सुरस्य च।
यो हरेज्ज्ञानशीलश्च न यामि तस्य मन्दिरम्॥३७
यत् कर्म्म दक्षिणाहीनं कुरुते मूढधीः शठः।
स पापी पुण्यहीनश्च न यामि तस्य मन्दिरम्॥ ३८
मन्त्रविद्योपजीवी च ग्रामयाजी चिकित्सकः।
सूपकृद्देवलश्चैव न यामि तस्य मन्दिरम्॥ ३९
विवाहकर्म्मकार्य्यं वा यो निहन्ति च कोपतः।
दिवामैथुनकारी यो न यामि तस्य मन्दिरम्॥ ४०
इत्युक्त्वा च महालक्ष्मीरन्तर्द्धानं चकार ह।
ददौ दृष्टिञ्च देवानां स्वर्गे मर्त्ये च नारद॥ ४१
तां प्रणम्य सुराः सर्व्वे मुनयश्च मुदान्विताः।
प्रजग्मुः स्वालयं शीघ्रं शत्रुत्यक्तं सुखद्युतम्॥ ४२
नेदुर्दुन्दुभयः स्वर्गे बभूवुः पुष्पवृष्टयः।
प्रापुर्देवाः स्वराज्यञ्च निश्चलां कमलां मुने॥ ४३
इत्येवं कथितं वत्स लक्ष्मीचरितमुत्तमम्।
सुखदं मोक्षदं सारं किं पुनः श्रोतुमिच्छसि॥ ४४

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारदसंवादे-लक्ष्मीचरितं
नाम त्रयोविंशोऽध्यायः॥२३॥

---

## चतुर्व्विंशोऽध्यायः।

नारद उवाच।

नारायण महाभाग हरेरंशसमुद्भव।
सर्व्वं श्रुतं त्वत्प्रसादाद्गणेशचरितं शुभम्॥ १
दन्तद्वययुतं वक्त्रं गजराजस्य बालके।
विष्णुना योजितं ब्रह्मन्नेकदन्तः कथं शिशुः॥ २
कुतो गतोऽस्य दन्तोऽन्यस्तद्भवान् वक्तुमर्हति।
सर्व्वेश्वरस्त्वं सर्व्वज्ञः कृपावान् भक्तवत्सलः॥ ३

सूत उवाच।

नारदस्य वचः श्रुत्वा स्मेराननसरोरुहः।
एकदन्तस्य कथनं प्रवक्तुमुपचक्रमे॥ ४

नारायण उवाच।

शृणु नारद वक्ष्येऽहमितिहासं पुरातनम्।
एकदन्तस्य चरितं सर्व्वमङ्गलमङ्गलम्॥ ५
एकदा कार्त्तवीर्य्यश्च जगाम मृगयां मुने।
मृगान् निहत्य बहुलान् परिश्रान्तो बभूव सः॥ ६
निशामुखे दिनेऽतीते तत्र तस्थौ वने नृपः।
जमदग्न्याश्रमाभ्यासे उपोष्य सैन्यसंयुतः॥ ७
प्रातः सरोवरे राजा स्नातः शुचिरलङ्कृतः।
दत्तात्रेयेण दत्तञ्च जजाप भक्तितो मनुम्॥ ८
मुनिर्ददर्श राजानं शुष्ककण्ठोष्ठतालुकम्।
प्रीत्या सम्भाषयामास पप्रच्छ कुशलं मुनिः॥ ९
ननाम सम्भ्रमाद्राजा मुनिं सूर्य्यसमप्रभम्।
स च तस्मै ददौ प्रीत्या प्रणताय शुभाशिषम्॥ १०
वृत्तान्तं कथयामास राजा चानशनादिकम्।
सम्भ्रमेणैव मुनिना त्रस्तं राजा निमन्त्रितः॥ ११
विज्ञाप्य तं मुनिश्रेष्ठः प्रययौ स्वालयं मुदा।
लक्ष्मीसमां कामधेनुं कथयामास मातरम्॥ १२
उवाच सा मुनिं भीतं भयं किं ते मयि स्थिते।
जगद्भोजयितुं शक्तास्त्वं मया को नृपो मुने॥ १३
राजभोजनयोग्याहं यद्यद्द्रव्यं प्रयाचते।
सर्व्वं तुभ्यं प्रदास्यामि त्रिषु लोकेषु दुर्लभम्॥ १४
सौवर्णानि राजतानि पात्राणि विविधानि च।
भोजनार्हाण्यसंख्यानि पाकपात्राणि यानि च॥१५
पात्राणि स्वादुपूर्णानि प्रददौ मुनये च सा।
नानाविधानि स्वादूनि परिपक्कफलानि च॥ १६
पनसाम्रनारिकेल-श्रीफलानि च नारद।
राशीभूतान्यसंख्यानि स्वादूनि लड्डुकानि च॥ १७
यव-गोधूमचूर्णानां पिष्टकानां बहूनि च।
पक्वान्नानां पर्व्वतञ्च परमान्नस्य कन्दरम्॥ १८
दुग्धानाञ्च घृतानाञ्च नदीं दध्नां ददौ मुदा।
शर्कराणां तथा राशिं मोदकानाञ्च पर्व्वतम्।
पृथुकानां सुशालीनां पर्व्वतं प्रददौ मुदा॥ १९

ताम्बूलं प्रददौ पूर्णं कर्पूरादिसुवासितम् ।
नृपयोग्यं कौतुकञ्च सुन्दरं वस्त्रभूषणम् ॥ २०
मुनिः सम्भृतसम्भारो दृष्ट्वा द्रव्यं मनोहरम् ।
भोजयामास राजानं ससैन्यमवलीलया ॥ २१
यद्यत् सुदुर्लभं वस्तु परिपूर्णं नृपेश्वर ।
जगाम विस्मयं राजा दृष्ट्वा पात्रमुवाच ह ॥ २२

राजोवाच ।

द्रव्याण्येतानि सचिव दुर्लभान्यश्रुतानि च ।
ममासाध्यानि सहसा ह्यागतान्यवलोकय ॥ २३
नृपाज्ञया च सचिवः सर्व्वं दृष्ट्वा मुनेर्गृहे ।
राजानं कथयामास वृत्तान्तं महदद्भुतम् ॥ २४

सचिव उवाच ।

दृष्टं सर्व्वं महाराज निबोध मुनिमन्दिरम् ।
वह्निकुण्डयज्ञकाष्ठ-कुश-पुष्प-फलान्वितम् ॥ २५
कृष्णाचर्म्म स्रुवस्रुग्भिः शिष्यसङ्घैश्च सङ्कुलम् ।
तैजसाधारमस्यादि-धनादिपरिवर्ज्जितम् ॥ २६
वृक्षचर्म्मपरीधाना दृष्टा निर्भूषणाः प्रियाः ।
वृक्षचर्म्मपरीधाना दृष्टाः पुत्त्रा(क)जटाधराः ॥ २७
गृहैकदेशे दृष्टा सा कपिलैका मनोहरा ।
चार्व्वङ्गी चन्द्रवर्णाभा रक्तपङ्कजलोचना ॥ २८
ज्वलन्ती तेजसा तत्र पूर्णचन्द्रसमप्रभा ।
सर्व्वसम्पद्गुणाधारा साक्षादिव हरिप्रिया ॥ २९
स दैवबोधितो राजा दुर्बुद्धिः सचिवाज्ञया ।
मुनिं ययाचे तां धेनुं निबद्धः कालपाशतः ॥ ३०
किं वा पुण्यञ्च का बुद्धिर्निषेकः सर्व्वतो बली ।
पुण्यवान् बुद्धिमान् दैवाद्राजेन्द्रो याचते द्विजम् ॥ ३१
पुण्यात् प्रजायते कर्म्म पुण्यरूपञ्च भारते ।
पापात् प्रजायते कर्म्म पापरूपं भयावहम् ॥ ३२
पुण्यात् कृत्वा स्वर्गभोगं जन्म पुण्यस्थले नृणाम् ।
पापाद्भोक्ता च नरकं कुत्सिते जन्म जीविनाम् ॥ ३३
जीविनां निष्कृतिर्नास्ति स्थिते कर्म्मणि नारद ।
तेन कुर्व्वन्ति सन्तश्च सन्ततं कर्म्मणः क्षयम् ॥ ३४
सा विद्या तत् तपो ज्ञानं स गुरुः स च बान्धवः ।
सा माता स पिता पुत्त्रस्तत्क्षयं कारयेत् तु यः ॥ ३५
जीविनां दारुणो रोगः कर्म्मभोगः शुभाशुभः ।
भक्ता वैद्यस्तं निघ्नन्ति कृष्णभक्तिरसायनात् ॥ ३६
माया ददाति तां भक्तिं प्रतिजन्मनिषेविता ।
परितुष्टा जगद्धात्री भक्ताय बुद्धिदायिनी ॥ ३७
परा परमभक्ताय मायामस्मै ददाति च ।
मायां दत्त्वा मोहयितुं न विवेकं कदाचन ॥ ३८
मायाविमोहितो राजा मुनिमानीय यत्नतः ।
उवाच विनयं भक्त्या पुटाञ्जलियुतो मुदा ॥ ३९

राजोवाच ।

भिक्षां देहि कल्पतरो कामधेनुञ्च कामदाम् ।
मह्यं भक्ताय भक्तेश भक्तानुग्रहकारक ॥ ४०
युष्मद्विधानां दातॄणामदेयं नास्ति भारते ।
दधीचिर्देवताभ्यश्च ददौ स्वास्थि पुरा श्रुतम् ॥ ४१
भ्रूभङ्गलीलामात्रेण तपोराशे तपोधन ।
सम्भूतं कामधेनूनां स्रष्टुं शक्तोऽसि भारते ॥ ४२

मुनिरुवाच ।

अहो व्यतिक्रमं राजन् ब्रवीषि शठ वञ्चक ।
दानं दास्यामि विप्रोऽहं क्षत्रियाय नृपाधम ॥ ४३
कृष्णेन दत्ता गोलोके ब्रह्मणे परमात्मना ।
कामधेनुरियं यस्मै न देया प्राणतः प्रिया ॥ ४४
ब्रह्मणा भृगवे दत्ता प्रियपुत्त्राय भूमिप ।
मह्यं दत्ता च भृगुणा कपिला पैतृकी मम ॥ ४५
गोलोकजा कामधेनुर्दुर्लभा भुवनत्रये ।
लीलामात्रात् कथमहं कपिलां स्रष्टुमीश्वरः ॥ ४६
नाहं वै हालिको मूढ़ त्वया नीत्वापितोऽबुध ।
क्षणेन भस्मसात् कर्त्तुं क्षमोऽहमतिथिं विना ॥ ४७
गृहं गच्छ गृहं गच्छ मत्कोपं नैव वर्द्धय ।
पुत्त्रदारादिकं पश्य दैववाधित पामर ॥ ४८
मुनेस्तद्वचनं श्रुत्वा चुकोप स नराधिपः ।
नत्वा मुनिं सैन्यमध्यं प्रययौ विधिवाधितः ॥ ४९
गत्वा सैन्यसकाशं स कोपप्रस्फुरिताधरः ।
किङ्करान् प्रेषयामास धेनुमानयितुं बलात् ॥ ५०
कपिलासन्निधिं गत्वा रुरोद मुनिपुङ्गवः ।
कथयामास वृत्तान्तं शोकेन हतचेतनः ॥ ५१
रुदन्तं ब्राह्मणं दृष्ट्वा सुरभिस्तमुवाच ह ।
साक्षाल्लक्ष्मीस्वरूपा सा भक्तानुग्रहकातरा ॥ ५२

सुरभिरुवाच ।

इन्द्रो वा हालिको वापि स्ववस्तु दातुमीश्वरः ।
शास्ता पालयिता दाता स्ववस्तूनाञ्च सन्ततम् ॥ ५३

(क) सर्व्वे इति च पाठः ।

स्वेच्छया चेन्नृपेन्द्राय मां ददाति तपोधन ।
तेन सार्द्धं गमिष्यामि स्वेच्छया च तवाज्ञया ॥ ५४
अथवा न ददासि त्वं न गमिष्यामि ते गृहात् ।
मत्तो दत्तेन सैन्येन दूरीभूतं नृपं कुरु ॥ ५५
कथं रोदिषि सर्व्वज्ञ मायामोहितचेतनः ।
संयोगश्च वियोगश्च कालसाध्यो न चात्मनः ॥ ५६
त्वं वा को मे तवाहं का सम्बन्धः कालयोजितः ।
यावदेव हि सम्बन्धो ममत्वं तावदेव हि ॥ ५७
मनो जानाति तद्द्रव्यमात्मनश्चापि केवलम् ।
दुःखञ्च तस्य विच्छेदाद्यावत् स्वत्वञ्च तत्र वै ॥ ५८
इत्युक्त्वा कामधेनुश्च सुषाव विविधानि च ।
शस्त्राण्यस्त्राणि सैन्यानि सूर्य्यतुल्यप्रभाणि च ॥ ५९
निर्गताः कपिलावक्त्रात् त्रिकोटिखड्गधारिणः ।
विनिःसृता नासिकायाः शूलिनः पञ्चकोटयः ॥ ६०
विनिःसृता लोचनाभ्यां शतकोटि धनुर्द्धराः ।
कपालान्निःसृता वीरास्त्रिकोटि दण्डधारिणः ॥ ६१
वक्षःस्थलान्निःसृताश्च त्रिकोटि शक्तिधारिणः ।
शतकोटि गदाहस्ताः पृष्ठदेशाद्विनिर्गताः ॥ ६२
विनिःसृताः पादतलाद्वाद्यभाण्डाः सहस्रशः ।
जङ्घादेशान्निःसृताश्च त्रिकोटि राजपुत्रकाः ॥ ६३
विनिर्गता गुह्यदेशात् त्रिकोटि म्लेच्छजातयः ।
दत्त्वा सैन्यानि कपिला मुनये निर्भयं ददौ ॥ ६४
युद्धं कुर्व्वन्तु सैन्यानि त्वं न यासीत्युवाच ह ।
मुनिः सम्भृतसम्भारैर्हर्षयुक्तो बभूव ह ॥ ६५
नृपेण प्रेरितो भृत्यो नृपं सर्व्वमुवाच ह ।
कपिलासैन्यवृत्तान्त-मात्मवर्गपराजयम् ॥ ६६
तच्छ्रुत्वा नृपशार्द्दूलस्त्रस्तः कातरमानसः ।
दूतद्वारा च सैन्यानि चाजहार स्वदेशतः ॥ ६७

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
चतुर्व्विंशोऽध्यायः ॥२४॥

---

## पञ्चविंशोऽध्यायः ।

### नारायण उवाच ।

हरिं स्मरन् कार्त्तवीर्य्यो हृदयेन विदूयता ।
दूतं प्रस्थापयामास कुपितो मुनिसन्निधिम् ॥ १
युद्धं देहि मुनिश्रेष्ठ किं वा धेनुञ्च वाञ्छिताम् ।
मह्यं भृत्यायातिथये सुविचार्य्य यथोचितम् ॥ २
दूतस्य वचनं श्रुत्वा जहास मुनिपुङ्गवः ।
हितं सत्यं नीतिसारं सर्व्वं दूतमुवाच ह ॥ ३

### मुनिरुवाच ।

दृष्टो (क) नृपो निराहारः समानीतो मया गृहम् ।
विविधञ्च यथाशक्त्या भोजितश्च यथोचितम् ॥ ४
कपिलां याचते राजा मम प्राणाधिकां बलात् ।
तां दातुमक्षमो दूत युद्धं दास्यामि निश्चितम् ॥ ५
मुनेस्तद्वचनं श्रुत्वा दूतः सर्व्वमुवाच ह ।
नृपेन्द्रश्च सभामध्ये सन्नाहसंयुतं भिया ॥ ६
मुनिश्च कपिलामाह साम्प्रतं किं करोम्यहम् ।
कर्णधारं विना नौका तथा सैन्यं मया विना ॥ ७
कपिला च ददौ तस्मै शस्त्राणि विविधानि च ।
युद्धशास्त्रोपदेशञ्च सन्धानमौपयोगिकम् ॥ ८
जयो भवतु ते विप्र युद्धे जेष्यसि निश्चितम् ।
तव मृत्युर्न भविता चाव्यर्थास्त्रं विना ध्रुवम् ॥ ९
नृपेण सार्द्धं ते युद्धमयुक्तं ब्राह्मणस्य च ।
दत्तात्रेयस्य शिष्येणैवाव्यर्थशक्तिधारिणा ।
इत्युक्त्वा कपिला ब्रह्मन् विरराम मनस्विनी ॥ १०
मुनिर्मनस्वी सैन्यञ्च सज्जीभूतं चकार ह ।
गृहीत्वा सर्व्वसैन्यञ्च प्रजगाम रणस्थलम् ॥ ११
राजा जगाम युद्धाय ननाम मुनिपुङ्गवम् ।
उभयोः सैन्ययोर्युद्धं बभूव बहु दुष्करम् ॥ १२
राजसैन्यं जितं सर्व्वं कपिलासेनया बलात् ।
विचित्रञ्च रथं राज्ञो बभञ्ज लीलया रणे ॥ १३
धनुश्चिच्छेद सन्नाहं सा सेना कापिला मुदा ।
नृपेन्द्रः कापिलेयानि सैन्यानि जेतुमक्षमः ॥ १४
सैन्यानि तं शस्त्रवृष्ट्या न्यस्तशस्त्रं चकार ह ।
शरवृष्ट्या शस्त्रवृष्ट्या राजा मूर्च्छामवाप ह ॥ १५
किञ्चित् सैन्यं मृतं राज्ञः किञ्चिदेव पलायितम् ।
मुनीन्द्रो मूर्च्छितं दृष्ट्वा नृपेन्द्रमतिथिं मुने ॥ १६
कृपानिधिश्च कृपया तत् सैन्यं विससर्ज्ज ह ।
गत्वा सैन्यं विलीनञ्च कपिलायाश्च कृत्रिमम् ॥ १७
नृपाय मुनिना शीघ्रं दत्त्वा चरणरेणवः ।
आशीर्व्वादः प्रदत्तश्च जयोऽस्त्विति कृपालुना ॥ १८
कमण्डलुजलं दत्त्वा कारयामास चेतनाम् ।

(क) दृष्टेति पाठान्तरम् ।

स राजा चेतनां प्राप्य समुत्थाय रणाजिरे ॥ १९
मूर्द्ध्ना ननाम भक्त्या च मुनिश्रेष्ठं पुटाञ्जलिः।
मुनिः शुभाशिषं दत्त्वा चकारालिङ्गनं नृपम् ॥ २०
पुनस्तं स्नापयित्वा च भोजयामास यत्नतः।
नावनीतञ्च हृदयं ब्राह्मणानाञ्च सन्ततम् ॥ २१
अन्येषां क्षुरधाराभमसाध्यं दारुणं सदा।
उवाच तं मुनिश्रेष्ठस्त्वं गच्छन् नृपाधिपः ॥ २२

राजोवाच।

रणं देहि महाबाहो धेनुं किं वा मयेप्सिताम् ॥ २३

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारदसंवादे नृप-मुनि-युद्ध-
कथनं नाम पञ्चविंशोऽध्यायः ॥२५॥

---

## षड्विंशोऽध्यायः

नारायण उवाच।

हरिं स्मरन् मुनिश्रेष्ठो वाक्यं श्रुत्वा च भूभृतः।
हितं सत्यं नीतिसारं प्रवक्तुमुपचक्रमे ॥ १

मुनिरुवाच।

त्वं गच्छ महाभाग रक्ष धर्म्मं सनातनम्।
सर्व्वसम्पत् स्थिता शश्वत् स्थिते धर्म्मे सुनिश्चितम्॥२
त्वाञ्च दृष्ट्वा निराहारं समानीय गृहं नृप।
तव पूजामकरवं यथाशक्त्या विधानतः ॥ ३
साम्प्रतं मूर्च्छितं दृष्ट्वा पादरेणुं शुभाशिषम्।
अददां चेतनां प्राप्य वक्तुमेवोचितं न च ॥ ४
नृपस्तद्वचनं श्रुत्वा प्रणम्य मुनिपुङ्गवम्।
रथमन्यमारुरोह युद्धं देहीत्युवाच ह ॥ ५
मुनिः कृत्वा च सन्नाहं तं योद्धुमुपचक्रमे।
राजा तं युयुधे तत्र कोपेन हतचेतनः ॥ ६
कपिलादत्तशस्त्रेण न्यस्तशस्त्रं चकार तम्।
कपिलादत्तया शक्त्या पुनर्मूर्च्छामवाप ह ॥ ७
पुनश्च चेतनां प्राप्य राजा राजीवलोचनः।
राजा तं युयुधे तत्र कोपेन पुनरेव च ॥ ८
वह्निञ्च योजयामास समरे मुनिपुङ्गवम्।
मुनिर्निर्व्वापयामास वारुणेनावलीलया ॥ ९
नृपेन्द्रो वारुणास्त्रञ्च चिक्षेप समरे मुनिः।
वायव्यास्त्रेण स मुनिः शमयामास लीलया ॥ १०
वायव्यास्त्रं नृपश्रेष्ठश्चिक्षेप समरे तदा।
गान्धर्व्वेण मुनिश्रेष्ठः शमयामास तत्क्षणम् ॥ ११
नागास्त्रञ्च नृपश्रेष्ठश्चिक्षेप रणमूर्द्धनि।
गारुडेन मुनिश्रेष्ठो जघान तत्क्षणं मुने ॥ १२
माहेश्वरं महास्त्रञ्च शतसूर्य्यसमप्रभम्।
चिक्षेप नृपतिश्रेष्ठो द्योतयन्तं दिशो दश ॥ १३
वैष्णवास्त्रेण दिव्येन त्रिलोकव्यापकेन च।
मुनिर्निर्व्वापयामास वह्नियत्नेन नारद ॥ १४
मुनिर्नारायणास्त्रञ्च चिक्षेप मन्त्रपूर्व्वकम्।
अस्त्रं दृष्ट्वा महाराजो ननाम शरणं ययौ ॥ १५
ऊर्द्ध्वञ्च भ्रमणं कृत्वा क्षणं दीप्त्वा दिशो दश।
प्रलयाग्निसमं तत्र स्वयमन्तरधीयत ॥ १६
जृम्भणास्त्रञ्च स मुनिश्चिक्षेप रणमूर्द्धनि।
निद्रां प्राप तेन राजा सुष्वाप च मृतो यथा ॥ १७
दृष्ट्वा नृपं निद्रितञ्च अर्द्धचन्द्रेण तत्क्षणम्।
चिच्छेद सारथिं यानं धनुर्वाणं मुनिस्तदा ॥ १८
मुकुटञ्च क्षुरप्रेण छत्रं सन्नाहमेव च।
अस्त्रं तूणं वाजिगणं विविधे न च भूभृतः ॥ १९
मुनिस्तत्सचिवान् सर्व्वान् नागास्त्रेणावलीलया।
निबध्य स्थापयामास प्रहस्य समरस्थले ॥ २०
मुनिस्तं बोधयामास स्वमन्त्रेणावलीलया।
निबद्धान् सचिवान् सर्व्वान् दर्शयामास भूमिपम्॥२१
दर्शयित्वा नृपं तांश्च मोचयामास तत्क्षणम्।
नृपेन्द्रमाशिषं कृत्वा गृहं गच्छेत्युवाच ह ॥ २२
राजा कोपात् समुत्थाय शूलमुद्यम्य यत्नतः।
चिक्षेप तं मुनिश्रेष्ठं मुनिः शक्त्या जघान तम् ॥ २३
एतस्मिन्नन्तरे ब्रह्मा समागत्य रणस्थलम्।
सुप्रीतिं कारयामास सुनीत्या च परस्परम् ॥ २४
मुनिर्ननाम ब्रह्माणं तुष्टाव च रणस्थले।
राजा नत्वा विधिं विप्रं स्वालयं प्रययौ तदा ॥ २५
मुनिर्ययौ च स्वगृहं स्वगृहं कमलोद्भवः।
इत्येवं कथितं किञ्चिदपरं कथयामि ते ॥ २६

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारद-संवादे नृपमुनियुद्ध
वर्णने षड्विंशोऽध्यायः ॥२६ ॥

---

## सप्तविंशोऽध्यायः।

नारायण उवाच।

हरिं स्मृत्वा गृहं गत्वा राजा विस्मितमानसः।
पुनर्जगामारण्यञ्च जमदग्न्याश्रमं तदा॥ १
रथानाञ्च चतुर्लक्षं रथिनां दशलक्षकम्।
अश्वेन्द्राणां गजेन्द्राणां पदातीनामसंख्यकम्॥ २
राजेन्द्राणां सहस्रञ्च महाबलपराक्रमम्।
महासमृद्धियुक्तश्च त्रैलोक्यं जेतुमीश्वरः॥ ३
समृद्ध्या वेष्टयामास जमदग्न्याश्रमं मुदा।
रथस्थो वर्म्मयुक्तश्च कार्त्तवीर्य्यार्ज्जुनः स्वयम्॥ ४
सैन्यशब्दैर्वाद्यशब्दैर्महाकोलाहलैर्मुने।
जमदग्न्याश्रमस्थाश्च मूर्च्छामापुर्भयेन च॥५
पुरीं प्रविश्य बलवान् गृहीत्वा कपिलां शुभाम्।
गृहं गन्तुं मनश्चक्रे दुर्बुद्धिरसदाश्रयः॥ ६
समुत्तस्थौ मुनिश्रेष्ठो गृहीत्वा समरं धनुः।
एकाकी मुक्तगात्रश्च दत्तं नत्वा हरिं स्मरन्॥ ७
आश्रमस्थान् जनान् सर्व्वान् समाश्वास्य च यत्नतः।
आजगाम रणस्थानं निःशङ्को नृपतेः पुरः॥ ८
चकार शरजालञ्च स मुनिर्मन्त्रपूर्व्वकम्।
चच्छाद स्वाश्रमं तेन मानवं कर्म्मणा यथा॥ ९
अपरं शरजालञ्च चकार मुनिपुङ्गवः।
तेनैव वारणं चक्रे सर्व्वसैन्यं यथाक्रमम्॥ १०
मुनिना शरजालेन सर्व्वसैन्यं समावृतम्।
तानि सर्व्वाणि गुप्तानि पत्राणि पञ्जरे यथा॥ ११
राजा दृष्ट्वा मुनिश्रेष्ठमवरुह्य रथात् पुरः।
सार्द्धं नृपेन्द्रैर्भक्त्या च प्रणनाम पुटाञ्जलिः॥ १२
नत्वारुरोह यानं स मुनेः प्राप्य शुभाशिषम्।
आरुरोह नृपेन्द्राश्च स्वयानान् हृष्टमानसः॥ १३
नृपैः सार्द्धं नृपश्रेष्ठश्चिक्षेप मुनिपुङ्गवम्।
अस्त्रं शस्त्रं गदां शक्तिं जघान लीलया मुनिः।
मुनिश्चिक्षेप दिव्यास्त्रं चिच्छेद लीलया नृपः॥ १४
शूलं चिक्षेप नृपतिर्जघान तं तदा मुनिः।
अपरं शरजालञ्च चिक्षेप मुनिपुङ्गवः॥ १५
अस्त्रौघैर्दुर्निवार्य्यैश्च खण्डखण्डं नृपा ययुः।
निबद्धाः शरजालेन न च शक्ताः पलायितुम्॥ १६
जृम्भणास्त्रेण मुनिना ते च सर्व्वे विजृम्भिताः।
हस्त्यश्व-रथ-पादात-सहितं सर्व्वसैन्यकम्॥ १७
राजानं निद्रितं दृष्ट्वा न जघान मुनीश्वरः।
गृहीत्वा कपिलां हृष्टो रुदतीं शोकमूर्च्छिताम्।
बोधयित्वा पुरः कृत्वा स्वगृहं गन्तुमुद्यतः॥ १८
एतस्मिन्नन्तरे राजा चेतनां प्राप्य नारद।
निवारयामास मुनिं गृहीत्वा समरं धनुः॥ १९
जगाम कपिला त्रस्ता स्वस्थानञ्च रणस्थलात्।
मुनिश्च तस्थौ निःशङ्को गृहीत्वा समरं धनुः॥ २०
ब्रह्मास्त्रञ्च नृपश्रेष्ठः प्रचिक्षेप मुनिं तदा।
ब्रह्मास्त्रेण मुनीन्द्रस्य सद्यो निर्व्वाणतां गतम्॥ २१
दिव्यास्त्रेण मुनिश्रेष्ठो नृपस्य समरं धनुः।
रथञ्च सारथिञ्चैव चिच्छेद वर्म्म दुर्व्वहम्॥ २२
अथ राजा महाक्रुद्धो ददर्श स्वसमीपतः।
दत्तेन दत्तां शक्तिं तामेकपूरुषघातिनीम्॥ २३
जग्राह नत्वा दत्तं तं प्रणम्य भक्तिसुमनाः।
घूर्णयामास तत्रैव शतसूर्य्यसमप्रभाम्॥ २४
यत् तेजः सर्व्वदेवानां तेजो नारायणस्य च।
शम्भोश्च ब्रह्मणश्चैव मायायाश्चैव नारद॥ २५
तत्रैवावाहयामास स योगी मन्त्रपूर्व्वकम्।
तेजसा द्योतयामास गगनञ्च दिशो दश॥ २६
दृष्ट्वा क्षिपन्तीं तां देवा हाहाकारं चकार ह।
आकाशस्थाश्च समरं पश्यन्तो दुःखिता हृदा॥ २७
चिक्षेप तां घूर्णयित्वा कार्त्तवीर्य्यार्ज्जुनः स्वयम्।
सद्यः पपात सा शक्तिर्ज्ज्वलन्ती मुनिवक्षसि॥२८
विदार्य्योरो मुनेः शक्तिर्जगाम हरिसन्निधिम्।
दत्ताय हरिणा दत्ता दत्तेनैव नृपाय सा॥ २९
मूर्च्छां सम्प्राप्य स मुनिः प्राणांस्तत्याज तत्क्षणम्।
तेजोऽम्बरे भ्रामयित्वा ब्रह्मलोकं जगाम ह॥ ३०
शुद्धे मुनिं मृतं दृष्ट्वा रुरोद कपिला मुहुः।
हे तात तातेत्युच्चार्य्य गोलोकं सा जगाम ह॥ ३१
सर्व्वं सा कथयामास गोलोके कृष्णमीश्वरम्।
रत्नसिंहासनस्थं तं गोपैर्गोपीभिरावृतम्॥ ३२
कृष्णेन ब्रह्मणे दत्ता ब्रह्मणा भृगवे पुरा।
सा प्रीता पुष्करे ब्रह्मन् भृगुणा जमदग्नये॥ ३३
नत्वा तं कामधेनूनां समूहं सा जगाम ह।
तदश्रुबिन्दुना मर्त्ये रत्नशङ्खो बभूव ह॥ ३४
अथ राजा तं निहत्य बोधयित्वा स्वसैन्यकम्।

प्रायश्चित्तं विनिर्व्वर्त्य जगाम स्वालयं मुदा ॥ ३५
प्राणनाथं मृतं श्रुत्वा जगाम रेणुका सती।
मुनिं वक्षसि संस्थाप्य क्षणं मूर्च्छामवाप सा ॥ ३६
तदा सा चेतनां प्राप्य न रुरोद पतिव्रता।
एहि वत्स भृगो राम राम रामेत्युवाच ह ॥ ३७
आजगाम भृगुस्तूर्णं क्षणेन पुष्करादहो।
ननाम मातरं भक्त्या मनोयायी च योगवित् ॥ ३८
दृष्ट्वा रामो मृतं तातं शोकार्त्तां जननीं सतीम्।
आकर्ण्य रणवृत्तान्तं प्रयान्तीं कपिलां शुचा ॥३९
विललाप भृशं तत्र हे तात जननीति च।
चितां चकार योगीन्द्रश्चन्दनैराज्यसंयुताम् ॥ ४०
रेणुका राममादाय तूर्णं कृत्वा स्ववक्षसि।
चुचुम्ब गण्डे शिरसि रुरोदोच्चैर्भृशं मुहुः ॥ ४१
राम राम महाबाहो क्व यामि त्वां विहाय च।
वत्स वत्सेति कृत्वैवं विललाप भृशं मुहुः ॥ ४२
मत्प्राणाधिक हे वत्स मदीयं वचनं शृणु।
पित्रोः शेषं क्रियां कृत्वा पुत्र युद्धं न यास्यसि ॥ ४३
गृहे तिष्ठ सुखं वत्स तपस्यां कुरु शाश्वतीम्।
समरं नैव सुखदं दारुणैः क्षत्रियैः सह ॥ ४४
स मातुर्वचनं श्रुत्वा प्रतिज्ञां तां चकार ह।
त्रिःसप्तकृत्वो निर्भूपां करिष्यामि ध्रुवं महीम् ॥ ४५
कार्त्तवीर्य्यं हनिष्यामि लीलया क्षत्रियाधमम्।
पितॄंश्च तर्पयिष्यामि क्षत्रियक्षतजेन च ॥ ४६
इत्युदीर्य्य पुरो मातुर्विललाप मुहुर्मुहुः।
हितं तथ्यं नीतिसारं बोधयामास मातरम् ॥ ४७

राम उवाच।

पितुः शासनहन्तारं पितुर्वधविधायकम्।
यो न हन्ति महामूढो रौरवं स व्रजेद्ध्रुवम् ॥ ४८
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारापहारी च पितुर्बन्धोर्विहिंसकः (क) ॥४९
सततं मन्दकारी च निन्दकः कटुवाचकः।
एकादशैते पापिष्ठा वधार्हा वेदसम्मताः ॥ ५०
द्विजानां द्रविणादानं स्थानान्निर्य्यापणं सति।
वपनं ताड़नञ्चैव वधमाहुर्मनीषिणः ॥ ५१
एतस्मिन्नन्तरे तत्र आजगाम भृगुः स्वयम्।
अतिवृद्धो मनस्वी च हृदयेन विदूयता ॥ ५२
दृष्ट्वा च रेणुका रामो विनयञ्च चकार ह।
स तावुवाच वेदोक्तं परलोकहिताय च ॥ ५३

भृगुरुवाच।

मद्वंशजातो ज्ञानी त्वं कथं विलपसे सुत।
जलबुद्बुदवत् सर्व्वं संसारे च चराचरम् ॥ ५४
सत्यसारं सत्यबीजं कृष्णं चिन्तय पुत्रक।
यद्गतं तद्गतं वत्स गतं मा पुनरागतम् ॥ ५५
यद्भवेत् तद्भवत्येव भविता यद्भविष्यति।
सत्यं नैषेकिकं कर्म्म निषिक्तः केन वार्य्यते ॥ ५६
भूतं भव्यं भविष्यच्च तत् कृष्णेन निरूपितम्।
निरूपितं यत् तत् कर्म्म केन वत्स निवार्य्यते ॥ ५७
मायाबीजं मायिनाञ्च शरीरं पाञ्चभौतिकम्।
सङ्केतपूर्व्वकं नाम प्रातःस्वप्नसमं सुत ॥ ५८
क्षुधा-निद्रा-दया-शान्ति-क्षमा कान्त्यादयस्तथा।
यान्ति प्राणा मनो ज्ञानं प्रयाते परमात्मनि ॥ ५९
बुद्धिश्च शक्तयः सर्व्वा राजेन्द्रमिव किङ्कराः।
सर्व्वे तमनुगच्छन्ति तं कृष्णं भज यत्नतः ॥ ६०
के वा केषाञ्च पितरः के वा केषां सुताः सुत।
कर्म्मोर्म्मिप्रेरिताः सर्व्वे भवाब्धौ दुस्तरे परम् ॥ ६१
ज्ञानिनो मा रुदन्त्येव मा रोदीः पुत्र साम्प्रतम्।
वेदनाश्रुप्रपतनान्मृतानां नरकं ध्रुवम् ॥ ६२
साङ्केता बन्धुमुद्दिश्य यद्रुदन्ति च बान्धवाः।
शतवर्षं रुदित्वा तं न प्राप्नुवन्ति निश्चितम् ॥ ६३
पार्थिवांशञ्च पृथिवी गृह्णाति श्रुतिनोदितम्।
तोयांशञ्च यथा तोयं शून्यांशं गगनं स्मृतम्।
वाय्वंशञ्च तथा वायुस्तेजस्तेजोंऽशकं ध्रुवम् ॥ ६४
सर्व्वे विलीनाः सर्व्वेषु किमायास्यति रोदनात्।
नाम-श्रुति-यशः-कर्म्मकथामात्रावशेषितम् ॥ ६५
वेदोक्तञ्चैव यत् कर्म्म कुरु तत् पारलौकिकम्।
स च बन्धुः स पुत्रश्च परलोकहिताय यः ॥ ६६
भृगोस्तद्वचनं श्रुत्वा शोकं तत्याज तत्क्षणम्।
रेणुका च महासाध्वी तं वक्तुमुपचक्रमे ॥ ६७

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश
खण्डे नारायण-नारद-संवादे
भृगुरेणुकासंवादे सप्त-
विंशोऽध्यायः ॥२७॥

---

(क) षड़ेते आततायिनः इति वा पाठः।

## अष्टाविंशोऽध्यायः।

रेणुकोवाच।

ब्रह्मन्ननुगमिष्यामि प्राणनाथस्य साम्प्रतम्।
अतोऽश्चतुर्थदिवसे मृतोऽयमद्य मानद॥ १
कर्त्तव्या का व्यवस्थात्र वद वेदविदां वर।
समागतो मे सहसा पुण्येन कतिजन्मनाम्॥ २

भृगुरुवाच।

अहो पुण्यवती भर्त्तुरनुगच्छ महासति।
चतुर्थदिवसं शुद्धं स्वामिनः सर्व्वकर्म्मसु॥ ३
शुद्धा भर्त्तुश्चतुर्थेऽह्नि न शुद्धा दैव-पैत्रयोः।
दैवे कर्म्मणि पैत्रे च पञ्चमेऽह्नि विशुध्यति॥ ४
व्यालग्राही यथा व्यालं विलादुद्धरते बलात्।
तद्वत् स्वामिनमादाय साध्वी स्वर्गं प्रयाति च॥ ५
मोदते स्वामिना तत्र यावदिन्द्राश्चतुर्द्दश।
अत ऊर्द्धं कर्म्मभोगं भुङ्क्ते साध्वि शुभाशुभम्॥ ६
स पुत्रो भक्तिदाता यः सा च स्त्री यानुगच्छति।
स बन्धुर्दानदाता यः स शिष्यो गुरुमर्च्चयेत्॥ ७
सोऽभीष्टदेवो यो रक्षेत् स राजा पालयेत् प्रजाः।
स च स्वामी प्रियां धर्म्मे मतिं दातुमिहेश्वरः॥ ८
स गुरुर्धर्म्मदाता यो हरिभक्तिप्रदायकः।
एते प्रशंस्या वेदेषु पुराणेषु च निश्चितम्॥ ९

रेणुकोवाच।

गन्तुं स्वस्वामिना सार्द्धं का शक्ता भारते मुने।
का वाप्यशक्ता नार्य्यश्च तन्मे ब्रूहि तपोधन॥ १०

भृगुरुवाच।

बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा।
रजस्वला च कुलटा गलितव्याधिसंयुता॥ ११
पतिसेवाविहीना या अभक्ता कटुवाचिका।
एता गच्छन्ति चेद्दैवान्न कान्तं प्राप्नुवन्ति ताः॥ १२
संस्कृताग्निं पुरो दत्त्वा चितासु शायिनं पतिम्।
कान्तास्तमनुगच्छन्ति कान्तञ्चेत् प्राप्नुवन्ति ताः॥ १३
अनुगच्छन्ति याः कान्तं तमेव प्राप्नुवन्ति ताः।
सार्द्धं कृत्वा पुण्यभोगं प्रति जन्मनि जन्मनि॥ १४
इत्थं ते कथिता साध्वि व्यवस्था गृहिणां ध्रुवम्।
तीर्थे ह्यानमृतानाञ्च वैष्णवानाञ्च श्रूयताम्॥ १५
या साध्वी वैष्णवं कान्तं यत्र यत्रानुगच्छति।
प्रयाति स्वामिना सार्द्धं वैकुण्ठं हरिसन्निधिम्॥ १६
विशेषो नास्ति भक्तानां तीर्थे वान्यत्र नारद।
मरणे च समफलं मुक्तानां कृष्णभाविनाम्॥ १७
तयोः पातो नास्ति तस्मान्महति प्रलये सति।
नारायणं तं भजेत पुमान् स्त्री कमलालयाम्॥ १८
तीर्थे ह्यानमृतश्चापि वैकुण्ठं याति निश्चितम्।
सभार्य्यो मोदते तत्र यावद्वै ब्रह्मणः शतम्॥ १९
इत्युक्त्वा रेणुकां तत्र पर्शुराममुवाच ह।
वेदोक्तवचनं सर्व्वं स भृगुः समयोचितम्॥ २०
एहि वत्स महाभाग त्यज शोकममङ्गलम्।
उत्तानं कुरु तातञ्च दक्षिणाशिरसं भृगो॥ २१
वस्त्रं यज्ञोपवीतञ्च नूतनं परिधापय।
अनश्रुनयनो भूत्वा सन्तिष्ठ दक्षिणामुखः॥ २२
अरणीसम्भवाग्निञ्च गृहाण भक्तिपूर्व्वकम्।
पृथिव्यां यानि तीर्थानि सर्व्वाणि स्मरणं कुरु॥ २३
गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः।
कुरुक्षेत्रञ्च गङ्गाञ्च यमुनाञ्च सरिद्वराम्॥ २४
कौशिकीं चन्द्रभागाञ्च सर्व्वपापप्रणाशिनीम्।
गण्डकीमवकाशाञ्च पनसां सरयूं तथा॥ २५
पुष्पभद्राञ्च भद्राञ्च नर्म्मदाञ्च सरस्वतीम्।
गोदावरीञ्च कावेरीं स्वर्णरेखाञ्च पुष्करम्॥ २६
रैवतञ्च वराहञ्च श्रीशैलं गन्धमादनम्।
हिमालयञ्च कैलासं सुमेरुं रत्नपर्व्वतम्॥ २७
वाराणसीं प्रयागञ्च पुण्यं वृन्दावनं वनम्।
हरिद्वारञ्च बदरीं स्मारं स्मारं पुनः पुनः॥ २८
चन्दनागुरु-कस्तूरीं सुगन्धि कुसुमं तथा।
प्रदाय वाससाच्छाद्य स्थापयेमं चितोपरि॥ २९
कर्णाक्षि-नासिकास्येषु शलाकाञ्च हिरण्मयीम्।
कृत्वा निर्म्मञ्छनं तात देहि विप्राय सादरम्॥ ३०
सतिलं ताम्रपात्रञ्च धेनुञ्च रजतं तथा।
सदक्षिणं सुवर्णञ्च दत्त्वाग्निं देह्यकातरम्॥ ३१
कृत्वा तु दुष्कृतं कर्म्म जानता वाप्यजानता।
मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम्॥ ३२
ओं धर्म्माधर्म्मसमायुक्तं लोभ-मोहसमावृतम्।
दहेयं सर्व्वगात्राणि दिव्यान् लोकान् स गच्छतु॥ ३३
इमं मन्त्रं पठित्वा तु तातं कृत्वा प्रदक्षिणम्।
मन्त्रेणानेन जनकं देह्यग्निञ्च हरिं स्मरन्॥ ३४

अथोऽस्मात् त्वमधिजातोऽसि त्वदयं जायतां पुनः।
असौ लोकाय स्वर्गाय स्वाहेति वद साम्प्रतम्॥ ३५
अग्निं देहि शिरःस्थाने हे भगो भ्रातृभिः सह।
तच्चकार भृगुः सर्व्वं सगोत्रैराज्ञया भृगोः॥ ३६
अथ पुत्रं रेणुका सा कृत्वा पुत्रं स्ववक्षसि।
उवाच किञ्चिद्वचनं परिणामसुखावहम्॥ ३७
अविरोधो भवाब्धौ च सर्व्वमङ्गलमङ्गलम्।
विरोधो नाशवीजञ्च सर्व्वोपद्रवकारणम्॥ ३८
अकर्त्तव्यो विरोधो वै दारुणैः क्षत्रियैः सह।
प्रतिज्ञया चेत् कर्त्तव्यो मदीयं वचनं शृणु॥ ३९
आलोच्य ब्रह्मणा सार्द्धं भृगुणा दिव्यमन्त्रिणा।
यथोचितञ्च कर्त्तव्यं सद्भिरालोचनं शुभम्॥ ४०
इत्युक्त्वा तं परित्यज्य कान्तं कृत्वा स्ववक्षसि।
सा सुष्वाप चितायाञ्च पश्यन्ती तं हरिं स्मरन्॥ ४१
वह्निं ददौ चितायाञ्च स रामो भ्रातृभिः सह।
भ्रातृभिः पितृशिष्यैश्च सार्द्धं स विललाप च॥ ४२
राम रामेति रामेति वाक्यमुच्चार्य्य सा सती।
पुरस्तात् पर्शुरामस्य सत्ीभूता वभूव सा॥ ४३
अर्जुनोपि समाकर्ण्य तत्राजग्मुर्हरेश्वराः।
रथस्थाः श्यामवर्णाश्च सर्व्वे चारुचतुर्भुजाः॥ ४४
शङ्ख-चक्र-गदा-पद्मधारिणो वनमालिनः।
किरीटिनः कुण्डलिनः पीतकौषेयवाससः॥ ४५
रथे कृत्वा रेणुकां तां गत्वा ते ब्रह्मलोककम्।
जमदग्निं समदाय प्रजग्मुर्हरिसन्निधिम्॥ ४६
तौ दम्पती च वैकुण्ठे तस्थतुर्हरिसन्निधौ।
कृत्वा दास्यं हरेः शश्वत् सर्व्वमङ्गलमङ्गलम्॥ ४७
अथ रामो ब्राह्मणैश्च भृगुणा सह नारद।
पित्रोः शेषक्रियां कृत्वा ब्राह्मणेभ्यो धनं ददौ॥ ४८
गो-भू-हिरण्य-वासांसि दिव्यशय्यां मनोरमाम्।
सुवर्णाधारसहितां जलमन्नञ्च चन्दनम्॥ ४९
रत्नदीपं रौप्यशैलं सुवर्णासनमुत्तमम्।
सुवर्णाधारसहितं ताम्बूलञ्च सुवासितम्॥ ५०
छत्रञ्च पादुकाञ्चैव फलं माल्यं मनोहरम्।
फलमूलं जलञ्चैव मिष्टान्नञ्च मनोहरम्।
ब्राह्मणेभ्यो धनं दत्त्वा ब्रह्मलोकं जगाम सः॥ ५१
ददर्श ब्रह्मलोकं स शातकुम्भविनिर्म्मितम्।
स्वर्णप्राकारसंयुक्तं स्वर्णकुम्भविभूषितम्॥ ५२
ददर्श तत्र ब्रह्माणं ज्वलन्तं ब्रह्मतेजसा।
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम्॥ ५३
सिद्धेन्द्रैश्च मुनीन्द्रैश्च ऋषीन्द्रैः परिवेष्टितम्।
विद्याधरीणां नृत्यञ्च पश्यन्तं सस्मितं मुदा॥ ५४
सङ्गीतं श्रुतवन्तञ्च गीयमानञ्च गायनैः।
चन्दनागुरुकस्तूरी-कुङ्कुमेण विराजितम्॥ ५५
तपसां फलदातारं दातारं सर्व्वसम्पदाम्।
धातारं सर्व्वजगतां कर्त्तारमीश्वरं परम्॥ ५६
परिपूर्णतमं ब्रह्म जपन्तं कृष्णमीश्वरम्।
सुखयोगं प्रवोचन्तं पृच्छन्तं शिष्यमण्डलम्॥ ५७
दृष्ट्वा तमव्ययं भक्त्या प्रणनाम भृगुः पुरः।
उवैश्च रोदनं कृत्वा स्ववृत्तान्तमुवाच ह॥ ५८

भृगुरुवाच।

ब्रह्मंस्तवांशजातोऽहं जमदग्निसुतो विधे।
पितामहस्त्वमस्माकं त्वां विना कथयामि कम्॥ ५९
मृगयामागतं भूपमुपोषन्तं पिता मम।
पारणां कारयामास कपिलादत्तवस्तुना॥ ६०
स राजा कपिलालोभात् कार्त्तवीर्य्यार्ज्जुनः स्वयम्।
घातयामास मत्तातमित्युक्त्वोच्चै रुरोद सः॥ ६१
निरुध्य वाष्पं स पुनरुवाच करुणानिधिम्।
माता मे रेणुका साध्वी मां विहाय जगद्गुरो॥ ६२
अधुनाहमनाथश्च त्वं मे माता पिता गुरुः।
कर्त्ता पालयिता दाता पाहि मां शरणागतम्॥ ६३
आगतोऽहं तव सभां प्रमातुर्मातुराज्ञया।
उपायेन जगन्नाथ मद्वैरिसूदनं कुरु॥ ६४
स राजा स च धर्म्मिष्ठः स दयालुर्यशस्करः।
स पूज्यः स स्थिरश्रीश्च यो दीनं परिपालयेत्॥ ६५
उच्चैर्नीचं समं दृष्ट्वा यः प्रजां न च पालयेत्।
तद्गेहाद्याति रुष्टा श्रीः स भवेद्भ्रष्टसम्पदः॥ ६६
श्रुत्वा विप्र वटोर्व्वाक्यं करुणासागरो विधिः।
दत्त्वा शुभाशिषं तस्मै वासयामास वक्षसि॥ ६७
श्रुत्वा भृगोः प्रतिज्ञाञ्च विस्मितश्चतुराननः।
अतीवदुष्करां घोरां वहुजीवविघातिनीम्॥ ६८
निश्चयेण भवेत् सर्व्वमिति कृत्वा तु मानसे।
उवाच परशुरामं तं परिणामसुखावहम्॥ ६९

ब्रह्मोवाच।

प्रतिज्ञा दुर्लभा वत्स वहुजीवविघातिनी।

सृष्टिरेषा भगवतः सम्यवेदीश्वरेच्छया ॥ ७०
सृष्टिः सृष्टा मया पुत्र क्लेशेनैवेश्वराज्ञया।
सृष्टिलुप्ता प्रतिज्ञा ते दारुणा करुणापरा ॥ ७१
त्रिःसप्तकृत्वो निर्भूपां कर्त्तुमिच्छसि मेदिनीम्।
एकक्षत्रियदोषेण तज्जातिं हन्तुमिच्छसि ॥ ७२
ब्रह्मन् क्षत्रिय-विट्शूद्रैस्त्रिभिः सृष्टिश्च शाश्वती।
आविर्भूता तिरोभूता हरेरेव पुनः पुनः ॥ ७३
अव्यर्था त्वत्प्रतिज्ञा च भविता प्राक्तनेन च।
बह्वायासेन ते कार्य्य-सिद्धिर्भवितुमर्हति ॥ ७४
शिवलोकं गच्छ वत्स शङ्करं शरणं व्रज।
पृथिव्यां बहवो भूपाः सन्ति शङ्करकिङ्कराः ॥ ७५
विनाज्ञया महेशस्य को वा तान् हन्तुमीश्वरः।
बिभ्रतः कवचं दिव्यं शक्तेश्च शङ्करस्य च ॥ ७६
उपायं कुरु यत्नेन जयवीजं शुभावहम्।
उपायतः समारब्धाः सर्व्वे सिध्यन्त्युपक्रमे ॥ ७७
कृष्णस्य मन्त्रं कवचं ग्रहणं कुरु शङ्करात्।
दुर्लभं वैष्णवं तेजः शैवं शाक्तं विजेष्यति ॥ ७८
गुरुस्ते जगतां नाथः शिवो जन्मनि जन्मनि।
मन्त्रो मत्तो न युक्तस्ते यो युक्तः स भवेद्विधिः॥७९
निशिकान्तश्यते मन्त्रः कान्तः कान्ता गुरुः सुरः।
स्वयमेवोपतिष्ठन्ते ये येषां तेषु ते ध्रुवम् ॥ ८०
त्रैलोक्यविजयं नाम गृहीत्वा कवचं वरम्।
त्रिःसप्तकृत्वो निर्भूपां करिष्यसि महीं भृगो ॥ ८१
दिव्यं पाशुपतं तुभ्यं दाता दास्यति शङ्करः।
तेन दैवेन मन्त्रेण क्षत्रसङ्घं विजेष्यति ॥ ८२

इति श्रीब्रह्मवैवर्त्ते गणेशखण्डे नारायण-नारद-संवादे अष्टाविंशोऽध्यायः ॥२८॥

---

## ऊनत्रिंशोऽध्यायः।

नारायण उवाच।

ब्रह्मणो वचनं श्रुत्वा प्रणम्य च जगद्गुरुम्।
स्फीतस्तस्माद्वरं प्राप्य शिवलोकं जगाम सः ॥ १
लक्षयोजनमूर्द्ध्वञ्च ब्रह्मलोकाद्विलक्षणम्।
अत्यनिर्व्वचनीयञ्च वाय्वाधारं मनोहरम् ॥ २
वैकुण्ठं दक्षिणे यस्य गौरीलोकश्च वामतः।
यदधो ध्रुवलोकश्च सर्व्वलोकात् परः स्मृतः ॥ ३
तेषामूर्द्ध्वञ्च गोलोकः पञ्चाशत्कोटियोजनम्।
अत ऊर्द्ध्वं न लोकश्च सर्व्वोपरि च स स्मृतः ॥ ४
मनोयायी स योगीन्द्रः शिवलोकं ददर्श ह।
उपमानोपमेयाभ्यां रहितं महदद्भुतम् ॥ ५
योगीन्द्राणाञ्च प्रवरैः सिद्धविद्याविशारदैः।
कोटिकल्पतपःपूतैः पुण्यवद्भिर्निषेवितम् ॥ ६
वेष्टितं कल्पवृक्षाणां समूहैर्वाञ्छितप्रदैः।
समूहैः कामधेनूनामसंख्यानां विराजितम् ॥ ७
मधुलुब्धमधुलिहां मधुरध्वनिमोहितम्।
नवपल्लवसंयुक्त-पुंस्कोकिलरुतश्रुतम् ॥ ८
योगेन योगिना सृष्टं स्वेच्छया शङ्करेण च।
शिल्पिनां गुरुणा स्वप्ने न दृष्टं विश्वकर्म्मणा ॥ ९
जन्तुभिर्व्वेष्टितं ब्रह्मन् योगसृष्टैर्निरामयैः।
सरोवरशतैर्दिव्यैः पद्मराजिविराजितैः ॥१०
पारिजाततरूणाञ्च वनराजिविराजितैः।
पुष्पोद्यानायुतैर्युक्तं सदा चाति सुशोभितम् ॥ ११
मणीन्द्रसाररचितैः शोभितैर्मणिवेदिभिः।
राजमार्गशतैर्दिव्यैरत्यन्तरविभूषितम् ॥ १२
मणीन्द्रसारनिर्म्माण-शतकोटिगृहैर्युतम्।
नानाचित्रविचित्राढ्यै-र्मणीन्द्रकलसोज्ज्वलैः ॥ १३
तन्मध्यदेशे रम्ये च ददर्श शङ्करालयम्।
मणीन्द्रसारनिर्म्माणं प्राकारं सुमनोहरम् ॥ १४
अत्युर्द्ध्वमम्बरस्पर्शि क्षीरनीरनिभं परम्।
षोड़शद्वारसंयुक्तं शोभितं शतमन्दिरैः ॥ १५
अमूल्यरत्नरचितै रत्नसोपानभूषितैः।
रत्नस्तम्भकपाटैश्च हीरकेण परिष्कृतैः ॥ १६
माणिक्यजालमालाभिः सद्रत्नकलसोज्ज्वलैः।
नानाचित्रविचित्रेण चित्रितैः सुमनोहरैः ॥ १७
आलयस्य पुरस्तत्र सिंहद्वारं ददर्श सः।
रत्नेन्द्रसारनिर्म्माण-कवाटेन विभूषितम् ॥ १८
शोभितं वेदिकाभिश्च वाह्याभ्यन्तरतः सदा।
रचिताभिः पद्मरागैर्म्महामरकतैर्वृहम् ॥ १९
नानाप्रकारचित्रेण चित्रितं सुमनोहरम्।
द्वारे नियुक्तौ ददर्श द्वारपालौ भयङ्करौ ॥ २०
महाकरालदन्तास्यौ विकृतौ रक्तलोचनौ।
दग्धशैलप्रतीकाशौ महाबलपराक्रमौ ॥ २१
विभूतिभूषिताङ्गौ च व्याघ्रचर्म्माम्बरौ वरौ।

पिङ्गलाक्षौ विशालाक्षौ जटिलौ च त्रिलोचनौ ॥२२
त्रिशूलपट्टिशधरौ ज्वलन्तौ ब्रह्मतेजसा ।
तौ दृष्ट्वा मनसा भीतस्त्रस्तः किञ्चिदुवाच ह ॥ २३
विनयेन विनीतश्च दुर्व्विनीतौ महोल्बणौ (क) ।
आत्मनः सर्व्ववृत्तान्तं कथयामास तत्पुरः ॥ २४
विप्रस्य वचनं श्रुत्वा कृपायुक्तौ बभूवतुः ।
गृहीत्वाज्ञां हरद्वारा शङ्करस्य महात्मनः ॥ २५
प्रवेष्टुमाज्ञां ददतुरीश्वरानुचराविमौ ।
भृगुस्तदाज्ञामादाय प्रविवेश हरिं स्मरन् ॥ २६
प्रत्येकं षोड़शद्वारं ददर्श सुमनोहरम् ।
द्वारपालान् नियुक्तांश्च नानाचित्रविचित्रितम् ॥ २७
दृष्ट्वा तां महदाश्चर्य्यां ददर्श शूलिनः सभाम् ।
नानासिद्धगणाकीर्णां महर्षिगणसेविताम् ॥ २८
पारिजातप्रसूनाक्त-वायुना सुरभीकृताम् ।
ददर्श तत्र देवेशं शङ्करं चन्द्रशेखरम् ॥ २९
त्रिशूलपट्टिशधरं व्याघ्रचर्म्माम्बरं परम् ।
विभूतिभूषिताङ्गं तं नागयज्ञोपवीतिनम् ॥ ३०
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम् ।
महाशिवं शिवकरं शिववीजं शिवाश्रयम् ॥ ३१
आत्मारामं पूर्णकामं सूर्य्यकोटिसमप्रभम् ।
ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकारकम् ॥ ३२
शश्वज्ज्योतिःस्वरूपञ्च लोकानुग्रहविग्रहम् ।
दधतं जटाजालं दक्षकन्यास्थिभूषितम् ॥ ३३
तपसां फलदातारं दातारं सर्व्वसम्पदाम् ।
शुद्धस्फटिकसङ्काशं पञ्चवक्त्रं त्रिलोचनम् ॥ ३४
गुह्यं ब्रह्म प्रवोचन्तं शिष्येभ्यस्तत्त्वमुद्रया ।
स्तूयमानञ्च योगीन्द्रैः सिद्धेन्द्रैः परिषेवितम् ॥ ३५
पार्षदप्रवरैः शश्वत् सेवितं श्वेतचामरैः ।
ध्यायमानं परंब्रह्म परिपूर्णतमं परम् ॥ ३६
स्वेच्छामयं गुणातीतं जरा-मृत्युहरं परम् ।
ज्योतीरूपञ्च सर्व्वाद्यं श्रीकृष्णं प्रकृतेः परम् ॥३७
ध्यायन्तं परमानन्दं पुलकाञ्चितविग्रहम् ।
विह्वलं (ख) साश्रुनेत्रञ्च उद्गायन्तं गुणार्णवम् ॥ ३८
तैर्देवेन्द्रै (ग) रुद्रगणैः क्षेत्रपालैश्च वेष्टितम् ।

मूर्द्ध्ना ननाम तं दृष्ट्वा परशुरामोऽतिसादरम् ॥ ३९
तद्वामे कार्त्तिकेयञ्च दक्षिणे च गणेश्वरम् ।
नन्दीश्वरं महाकालं वीरभद्रञ्च तत्पुरः ।
क्रोड़े ददर्श कालीं तां गौरीं शैलेन्द्रकन्यकाम् ॥ ४०
ननाम सर्व्वान् मूर्द्ध्ना च भक्त्या च परया मुदा ।
दृष्ट्वा हरं परं सारं तं स्तोतुमुपचक्रमे ॥ ४१
सगद्गदपदं दीनं साश्रुनेत्रोऽतिकातरः ।
पुटाञ्जलियुतः शान्तः शोकार्त्तः शोकनाशनम् ॥४२

परशुराम उवाच ।

ईश त्वां स्तोतुमिच्छामि साम्प्रतं स्तोतुमक्षमः ।
अक्षराक्षरवीजञ्च किं वा स्तौमि निरीहकम् ॥ ४३
न योजनां कर्त्तुमीशो देवेशं स्तोतुमीप्सितम् (क) ।
वेदा न शक्ता यं स्तोतुं कस्त्वां स्तोतुमिहेश्वरः ॥४४
बुद्धेर्वाङ्मनसोः पारं सारात्सारं परात्परम् ।
ज्ञानबुद्धेरसाध्यञ्च सिद्धं सिद्धैर्निषेवितम् ॥ ४५
यमाकाशमिवाद्यन्त-मनन्तमादिमव्ययम् ।
विश्वतन्त्रमतन्त्रञ्च स्वतन्त्रं तन्त्रवीजकम् ॥ ४६
ध्यानासाध्यं दुराराध्य-मतिसाध्यं कृपानिधिम् ।
त्राहि मां करुणासिन्धो दीनबन्धोऽतिदीनकम् ॥४७
अद्य मे सफलं जन्म जीवितञ्च सुजीवितम् ।
स्वप्नादृष्टञ्च भक्तानां पश्यामि चक्षुषाधुना ॥ ४८
शक्रादयः सुरगणाः कलया यस्य सम्भवाः ।
चराचराः कलांशेन तं नमामि महेश्वरम् ॥ ४९
यं भास्करस्वरूपञ्च शशिरूपं हुताशनम् ।
जलरूपं वायुरूपं तं नमामि महेश्वरम् ॥ ५०
स्त्रीरूपं क्लीवरूपञ्च पुंरूपञ्च बिभर्त्ति यः ।
सर्व्वाधारं सर्व्वरूपं तं नमामि महेश्वरम् ॥ ५१
देव्या कठोरतपसा यो लब्धो गिरिकन्यया ।
दुर्लभस्तपसां यो हि तं नमामि महेश्वरम् ॥ ५२
सर्व्वेषां कल्पवृक्षञ्च वाञ्छाधिकफलप्रदम् ।
आशुतोषं भक्तबन्धुं तं नमामि महेश्वरम् ॥ ५३
अनन्तविश्वसृष्टीनां संहर्त्तारं भयङ्करम् ।
क्षणेन लीलामात्रेण तं नमामि महेश्वरम् ॥ ५४
यः कालः कालकालश्च कालवीजञ्च कालजः ।
अजः प्रजश्च यः सर्व्वस्तं नमामि महेश्वरम् ॥ ५५
इत्येवमुक्त्वा स भृगुः पपात चरणाम्बुजे ।

(क) महाबलाविति वा पाठः ।
(ख) सुस्वरमित्यपि पाठः ।
(ग) भवेन्द्रैश्च इति पाठः क्वचित्कः ।

(क) स्तौमि मूढ़धीरिति च पाठः ।

आशिषञ्च ददौ तस्मै सुप्रसन्नो बभूव सः ॥ ५६
जामदग्न्यकृतं स्तोत्रं यः पठेद्भक्तिसंयुतः।
सर्व्वपापविनिर्म्मुक्तः शिवलोकं स गच्छति ॥ ५७

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-
खण्डे नारायण-नारद-संवादे
ऊनत्रिंशोऽध्यायः ॥२९॥

---

## त्रिंशोऽध्यायः।

शङ्कर उवाच।

कस्त्वं वटो कस्य पुत्त्रः क्व वासः स्तवनं कथम्।
किं वा तेऽहं करिष्यामि वाञ्छितं वद साम्प्रतम् ॥ १

पार्व्वत्युवाच।

शोकाकुलं त्वां पश्यामि विमनस्कं सुविस्मितम्।
वयसातिशिशुं शान्तं गुणेन गुणिनां वरम् ॥ २

भृगुरुवाच।

जमदग्निसुतोऽहञ्च भृगुवंशसमुद्भवः।
माता मे रेणुका साध्वी पर्शुरामश्च नामतः ॥ ३
क्रीणीहि मां दयासिन्धो विद्यापणेन किङ्करम्।
मदीश शरणापन्नं रक्ष मां दीनवत्सल ॥ ४
मृगयामागतंभूप-मुपोषन्तं पिता मम।
चकारातिथ्यमानीय कपिलादत्तवस्तुना ॥ ५
राजा तं कपिलालोभाद्घातयामास मन्दधीः।
कपिला तं मृतं दृष्ट्वा गोलोकञ्च जगाम सा ॥ ६
मातानुगमनं चक्रे अनाथोऽहञ्च साम्प्रतम्।
त्वं मे पिता शिवा माता रक्ष मां पुत्त्रवत् प्रभो ॥७
मया कृता प्रतिज्ञा च शोकेनैवातिदुष्करा।
त्रिःसप्तकृत्वो निर्भूपां करिष्यामि महीमिति ॥ ८
कार्त्तवीर्य्यं हनिष्यामि समरे तातघातकम्।
इत्येवं परिपूर्णं मे भगवान् कर्त्तुमर्हति ॥ ९
ब्राह्मणस्य वचः श्रुत्वा दृष्ट्वा दुर्गामुखं हरः।
बभूवानम्रवक्त्रश्च शुष्ककण्ठौष्ठतालुकः (क) ॥ १०

पार्व्वत्युवाच।

तपस्विन् विप्रपुत्त्र त्वां निर्भूपां कर्त्तुमिच्छसि।
त्रिःसप्तकृत्वः कोपेन साहसस्ते महान् वटो ॥ ११
हन्तुमिच्छसि निःशस्त्रः सहस्रार्ज्जुनमीश्वरम्।

(क) सा च शुष्कौष्ठतालुका इति पाठः क्वचित्।

भ्रूभङ्गलीलया यस्य रावणस्य पराजयः ॥ १२
तस्मै प्रदत्तं दत्तेन श्रीहरेः कवचं वटो।
शक्तिरव्यर्थरूपा च यया ते हिंसितः पिता ॥ १३
हरेर्मन्त्रञ्च स्तवनं ध्यायते तद्दिवानिशम्।
को वा शक्नोति तं हन्तुं न पश्यामीह भूतले ॥१४
अरे विप्र गृहं गच्छ किं करिष्यति शङ्करः।
अन्ये भूपाश्च मद्भृत्याः का भीस्तेषां मयि स्थिते १५

भद्रकाल्युवाच।

अरे विप्रवटो जाल्म निर्भूपान् कर्त्तुमिच्छसि।
यथा हि वामनश्चन्द्रं करेणाहर्त्तुमिच्छति ॥ १६
नानायज्ञकृतः पुण्यान् महाबलपराक्रमान्।
दिगम्बरसहायेन मद्भृत्यान् हन्तुमिच्छसि ॥ १७
स तयोर्वचनं श्रुत्वा रुरोदोच्चैश्च शोकतः।
सहसा पुरतस्तेषां प्राणांस्त्यक्तुं समुद्यतः ॥ १८
विप्रस्य रोदनं दृष्ट्वा शङ्करः करुणानिधिः।
पश्यन् दुर्गाञ्च कालीञ्च कलातिविनयं विभुः ॥ १९
तयोरनुमतिं प्राप्य सर्व्वेषां भक्तवत्सलः।
जमदग्निसुतं सद्यः प्रवक्तुमुपचक्रमे ॥ २०

शङ्कर उवाच।

अद्यप्रभृति हे वत्स त्वं मे पुत्त्रसमो महान्।
दास्यामि मन्त्रं गुह्यं ते त्रिषु लोकेषु दुर्लभम् ॥ २१
एवम्भूतञ्च कवचं दास्यामि परमाद्भुतम्।
लीलया मत्प्रसादेन कार्त्तवीर्य्यं हनिष्यसि ॥ २२
त्रिःसप्तकृत्वो निर्भूपां करिष्यसि महीं द्विज।
जगत् ते यशसा पूर्णं भविष्यति न संशयः ॥ २३
इत्युक्त्वा शङ्करस्तस्मै ददौ मन्त्रं सुदुर्लभम्।
त्रैलोक्यविजयं नाम कवचं परमाद्भुतम् ॥ २४
स्तवं पूजाविधानञ्च पुरश्चरणपूर्व्वकम्।
मन्त्रसिद्धेरनुष्ठानं यथावन्नियमक्रमम् ॥ २५
सिद्धिस्थानं कालसंख्यां कथयामास नारद।
वेदवेदाङ्गनिखिलं पाठयामास तत्क्षणम् ॥ २६
नागपाशं पाशुपतं ब्रह्मास्त्रञ्च सुदुर्लभम्।
वह्निं नारायणास्त्रञ्च वायव्यं वारुणं तथा ॥ २७
गान्धर्व्वं गारुडञ्चैव जृम्भणास्त्रं तथैव च।
गदां शक्तिं तथा पाशं शूलमव्यर्थमुत्तमम् ॥ २८
नानाप्रकारशस्त्रास्त्रं मन्त्रञ्च विधिपूर्व्वकम्।
शस्त्रास्त्राणाञ्च संहारं विक्षेपमक्षयं धनुः ॥ २९

आत्मरक्षणसन्धानं संग्रामविजयक्रमम् ।
मायायुद्धञ्च विविधं हुङ्कारं मन्त्रपूर्व्वकम् ॥ ३०
रक्षणञ्च स्वसैन्यानां परसैन्यविमर्द्दनम् ।
नानाप्रकारमतुल-मुपायं रणसङ्कटे ।
संहारमोहिनीं विद्यां जन्म-मृत्युहरां हरेः ॥ ३१
स्थित्वा चिरं गुरोर्वासे सर्व्वविद्यां विबोध्य सः ।
तीर्थे कृत्वा मन्त्रसिद्धिं तांश्च नत्वा जगाम सः ॥ ३२

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-
खण्डे नारायण-नारद-संवादे
त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ।

नारद उवाच ।

भगवन् श्रोतुमिच्छामि किं मन्त्रं भगवान् हरः ।
कृपया पर्शुरामाय किं स्तोत्रं कवचं ददौ ॥ १
को वास्य मन्त्रस्याराध्यः किं फलं कवचस्य च ।
स्तवनस्य फलं किं वा तद्भवान् वक्तुमर्हति ॥ २

नारायण उवाच ।

मन्त्राराध्यो हि भगवान् परिपूर्णतमः स्वयम् ।
गोलोकनाथः श्रीकृष्णो गोपगोपीश्वरः प्रभुः ॥ ३
त्रैलोक्यविजयं नाम कवचं परमाद्भुतम् ।
स्तवराजं महापुण्यं विभूतियोगसम्भवम् ॥ ४
मन्त्रं कल्पतरुं नाम सर्व्वकामफलप्रदम् ।
प्रददौ पर्शुरामाय रत्नपर्व्वतसन्निधौ ॥ ५
स्वयम्प्रभानदीतीरे पारिजातवनान्तरे ।
आश्रमे लोकदेवस्य माधवस्य च सन्निधौ ॥ ६

महादेव उवाच ।

वत्स गच्छ महाभाग भृगुवंशसमुद्भव ।
पुत्राधिकोऽसि प्रेम्णा मे कवचग्रहणं कुरु ॥ ७
शृणु राम प्रवक्ष्यामि ब्रह्माण्डे परमाद्भुतम् ।
त्रैलोक्यविजयं नाम श्रीकृष्णस्य जयावहम् ॥ ८
श्रीकृष्णेन पुरा दत्तं गोलोके राधिकाश्रमे ।
रासमण्डलमध्ये च मह्यं वृन्दावने वने ॥ ९
अतिगुह्यतरं तत्त्वं सर्व्वमन्त्रौघविग्रहम् ।
पुण्यात् पुण्यतरञ्चैव परं स्नेहाद्वदामि ते ॥ १०
यद्धृत्वा पठनाद्देवी मूलप्रकृतिरीश्वरी ।
शुम्भं निशुम्भं महिषं रक्तबीजं जघान च ॥ ११
यद्धृत्वाहञ्च जगतां संहर्त्ता सर्व्वतत्त्ववित् ।
अवध्यं त्रिपुरं पूर्व्वं दुरन्तमवलीलया ॥ १२
यद्धृत्वा पठनाद्ब्रह्मा ससृजे सृष्टिमुत्तमाम् ।
यद्धृत्वा भगवान् शेषो विधत्ते विश्वमेव च ॥ १३
यद्धृत्वा कूर्म्मराजश्च शेषं धत्तेऽवलीलया ।
यद्धृत्वा भगवान् वायुर्विश्वाधारो विभुः स्वयम् ॥१४
यद्धृत्वा वरुणः सिद्धः कुवेरश्च धनेश्वरः ।
यद्धृत्वा पठनादिन्द्रो देवानामधिपः स्वयम् ॥ १५
यद्धृत्वा भाति भुवने तेजोराशिः स्वयं रविः ।
यद्धृत्वा पठनाच्चन्द्रो महाबलपराक्रमः ॥ १६
अगस्त्यः सागरान् सप्त यद्धृत्वा पठनात् पपौ ।
चकार तेजसा पूर्णं दैत्यं वातापिसंज्ञकम् ॥ १७
यद्धृत्वा पठनाद्देवी सर्व्वाधारा वसुन्धरा ।
यद्धृत्वा पठनात् पूता गङ्गा भुवनपावनी ॥ १८
यद्धृत्वा जगतां साक्षी धर्म्मो धर्म्मभृतां वरः ।
सर्व्वविद्याधिदेवी सा यच्च धृत्वा सरस्वती ॥ १९
यद्धृत्वा जगतां लक्ष्मीरन्नदात्री परात्परा ।
यद्धृत्वा पठनाद्देवान् सावित्री प्रसुषाव च ॥ २०
वेदाश्च धर्म्मवक्तारो यद्धृत्वा पठनाद्भृगो ।
यद्धृत्वा पठनाच्छुद्धस्तेजस्वी हव्यवाहनः ॥ २१
सनत्कुमारो भगवान् यद्धृत्वा ज्ञानिनां वरः ॥ २२
दातव्यं कृष्णभक्ताय साधवे च महात्मने ।
शठाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात् ॥ २३
त्रैलोक्यविजयस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च गायत्री देवो रासेश्वरः स्वयम् ॥ २४
त्रैलोक्यविजयप्राप्तौ विनियोगः प्रकीर्त्तितः ।
परात्परञ्च कवचं त्रिषु लोकेषु दुर्लभम् ॥ २५
प्रणवो मे शिरः पातु श्रीकृष्णाय नमः सदा ।
सदा पायात् कपालं कृष्णाय स्वाहेति पञ्चाक्षरः॥२६
कृष्णेति पातु नेत्रे च कृष्णस्वाहेति तारकाम् ।
हरये नम इत्येवं भ्रूलतां पातु मे सदा ॥ २७
ओं गोविन्दाय स्वाहेति नासिकां पातु सन्ततम् ।
गोपालाय नमो गण्डौ पातु मे सर्व्वतः सदा ॥ २८
श्रीकृष्णाय नमः कर्णौ पातु कल्पतरुर्मम ।
ओं कृष्णाय नमः शश्वत् पातु मेऽधरयुग्मकम् ॥२९
ओं गोविन्दाय स्वाहेति दन्तावलिं मे सदाऽवतु ।

ओं कृष्णाय दन्तरन्ध्रं दन्तोर्द्ध्वं क्लीं सदाऽवतु ॥ ३०
ओं श्रीकृष्णाय स्वाहेति जिह्विकां पातु मे सदा।
रासेश्वराय स्वाहेति तालुकं पातु मे सदा ॥ ३१
राधिकेशाय स्वाहेति कण्ठं पातु सदा मम।
नमो गोपाङ्गनेशाय वक्षः पातु सदा मम ॥ ३२
ओं गोपेशाय स्वाहेति स्कन्धं पातु सदा मम।
नमः किशोरवेशाय स्वाहा पृष्ठं सदाऽवतु ॥ ३३
उदरं पातु मे नित्यं मुकुन्दाय नमः सदा।
ओं ह्रीं क्लीं कृष्णाय स्वाहेति करौ पादौ सदा मम ३४
ओं विष्णवे नमो बाहु-युग्मं पातु सदा मम।
ओं ह्रीं भगवते स्वाहा नखरं पातु मे सदा ॥ ३५
ओं नमो नारायणायेति नखरन्ध्रं सदाऽवतु।
ओं ह्रीं ह्रीं पद्मनाभाय नाभिं पातु सदा मम ॥३६
ओं सर्व्वेशाय स्वाहेति कङ्कालं पातु मे सदा।
ओं गोपीरमणाय स्वाहा नितम्बं पातु मे सदा ॥३७
ओं गोपीरमणनाथाय पादौ पातु सदा मम।
ओं ह्रीं श्रीं रसिकेशाय स्वाहा सर्व्वं सदाऽवतु ॥३८
ओं केशवाय स्वाहेति मम केशान् सदाऽवतु।
नमः कृष्णाय स्वाहेति ब्रह्मरन्ध्रं सदाऽवतु ॥ ३९
ओं माधवाय स्वाहेति लोमानि मे सदाऽवतु।
ओं ह्रीं श्रीं रसिकेशाय स्वाहा सर्व्वं सदाऽवतु ॥४०
परिपूर्णतमः कृष्णः प्राच्यां मां सर्व्वदाऽवतु।
स्वयं गोलोकनाथो मामाग्नेय्यां दिशि रक्षतु ॥४१
पूर्णब्रह्मस्वरूपश्च दक्षिणे मां सदाऽवतु।
नैरृत्यां पातु मां कृष्णः पश्चिमे पातु मां हरिः ॥४२
गोविन्दः पातु मां शश्वद्वायव्यां दिशि नित्यशः।
उत्तरे मां सदा पातु रसिकानां शिरोमणिः ॥ ४३
ऐशान्यां मां सदा पातु वृन्दावनविहारकृत्।
वृन्दावनीप्राणनाथः पातु मामूर्द्ध्वदेशतः ॥ ४४
सदैव माधवः पातु बलिहारी महाबलः।
जले स्थले चान्तरीक्षे नृसिंहः पातु मां सदा ॥४५
स्वप्ने जागरणे शश्वत् पातु मां माधवः सदा।
सर्व्वान्तरात्मा निर्लिप्तो रक्ष मां सर्व्वतो विभुः ॥४६
इति ते कथितं वत्स सर्व्वमन्त्रौघविग्रहम्।
त्रैलोक्यविजयं नाम कवचं परमाद्भुतम् ॥ ४७
मया श्रुतं कृष्णवक्त्रात् प्रवक्तव्यं न कस्यचित्।
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत् तु यः ॥ ४८
कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः।
स च भक्तो वसेद्यत्र लक्ष्मीर्वाणी वसेत् ततः ॥ ४९
यदि स्यात् सिद्धकवचो जीवन्मुक्तो भवेत् तु सः।
निश्चितं कोटिवर्षाणां पूजायाः फलमाप्नुयात् ॥ ५०
राजसूयसहस्राणि वाजपेयशतानि च।
अश्वमेधायुतान्येव नरमेधायुतानि च ॥ ५१
महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा।
त्रैलोक्यविजयस्यास्य कलां नार्हन्ति षोड़शीम् ॥५२
व्रतोपवास-नियमः स्वाध्यायाध्ययनं तपः।
स्नानञ्च सर्व्वतीर्थेषु नास्यार्हन्ति कलामपि ॥ ५३
सिद्धत्वममरत्वञ्च दासत्वं श्रीहरेरपि।
यदि स्यात् सिद्धकवचः सर्व्वं प्राप्नोति निश्चितम् ॥५४
स भवेत् सिद्धकवचो दशलक्षं जपेत् तु यः।
यो भवेत् सिद्धकवचः सर्व्वज्ञः स भवेद्ध्रुवम् ॥ ५५
इदं कवचमज्ञात्वा भजेत् कृष्णं सुमन्दधीः।
कोटिकल्पप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ५६
गृहीत्वा कवचं वत्स महीं निःक्षत्रियां कुरु।
त्रिःसप्तकृत्वो निःशङ्कः सदानन्दोऽवलीलया ॥ ५७
राज्यं देयं शिरो देयं प्राणा देयाश्च पुत्रक।
एवम्भूतञ्च कवचं न देयं प्राणसङ्कटे ॥ ५८

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे कवचप्रदानं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः।

भृगुरुवाच।

सम्प्राप्तं कवचं नाथ शश्वत् सर्व्वाङ्गरक्षणम्।
सुखदं मोक्षदं सारं शत्रुसंहारकारणम् ॥ १
अधुना भगवन्मन्त्रं स्तोत्रं पूजाविधिं प्रभो।
देहि मह्यमनाथाय शरणागतपालक ॥ २

महादेव उवाच।

ओं श्रीं नमः श्रीकृष्णाय परिपूर्णतमाय च।
स्वाहेत्यनेन मन्त्रेण भज गोपीश्वरं विभुम् ॥ ३
मन्त्रेषु मन्त्रराजोऽयं महान् सप्तदशाक्षरः।
सिद्धोऽयं पञ्चलक्षेण जपेन मुनिपुङ्गव ॥ ४
तद्दशांशञ्च हवनं तद्दशांशाभिषेचनम्।

तर्पणं तद्दशांशञ्च तद्दशांशञ्च भोजनम् ॥ ५
सुवर्णानाञ्च शतकं पुरश्चरणदक्षिणा।
मन्त्रसिद्धस्य पुंसश्च विश्वं करतलं मुने ॥ ६
शक्तः पातुं समुद्रांश्च विश्वं संहर्त्तुमीश्वरः।
पाञ्चभौतिकदेहेन वैकुण्ठं गन्तुमीश्वरः॥७
तस्य संस्पर्शमात्रेण पदपङ्कजरेणुना।
पूतानि सर्व्वतीर्थानि सद्यः पूता वसुन्धरा ॥ ८
ध्यानञ्च सामवेदोक्तं शृणु मन्मुखतो मुने।
सर्व्वेश्वरस्य कृष्णस्य भक्ति मुक्ति-प्रदायि च ॥ ९
नवीनजलदश्यामं नीलेन्दीवरलोचनम्।
शरत्पार्व्वणचन्द्रास्य-मीषद्धास्यं मनोहरम् ॥ १०
कोटिकन्दर्पलावण्य-लीलाधाम-मनोहरम्।
रत्नसिंहासनस्थं तं रत्नभूषणभूषितम् ॥ ११
चन्दनोक्षितसर्व्वाङ्गं पीताम्बरधरं वरम्।
वीक्ष्यमाणञ्च गोपीभिः सस्मिताभिश्च सन्ततम् ॥१२
प्रफुल्लमालतीमाला-वनमालाविभूषितम्।
दधतं कुन्दपुष्पाढ्यां चूड़ां चन्द्रकचर्चिताम् ॥ १३
शेचां क्षिपन्तीं नभसश्चन्द्रताराऽन्वितस्य च।
रत्नभूषणसर्व्वाङ्गं राधावक्षःस्थलस्थितम् ॥ १४
सिद्धेन्द्रैश्च मुनीन्द्रैश्च देवेन्द्रैः परिसेवितम्।
ब्रह्म-विष्णु-महेशैश्च श्रुतिभिश्च स्तुतं भजे ॥ १५
ध्यानेनानेन तं ध्यात्वा चोपचाराणि षोड़श।
दत्त्वा भक्त्या च सम्पूज्य सर्व्वफलं लभेत् पुमान्॥१६
आर्घ्यं पाद्यमासनञ्च वसनं भूषणं तथा।
गामर्घ्यं मधुपर्कञ्च यज्ञसूत्रमनुत्तमम् ॥ १७
धूप-दीपौ च नैवेद्यं पुनराचमनीयकम्।
नानाप्रकारपुष्पञ्च ताम्बूलञ्च सुवासितम् ॥ १८
चन्दनागुरुकस्तूरी दिव्यतल्पं मनोहरम्।
भक्त्या भगवते देयं माल्यं पुष्पाञ्जलित्रयम् ॥ १९
ततः षडङ्गं सम्पूज्य पश्चात् सम्पूजयेद्गणम्।
श्रीदामानं सुदामानं वसुदामानमेव च ॥ २०
हरिभानुं चन्द्रभानुं सूर्य्यभानुं सुभानुकम्।
पार्षदप्रवरान् सप्त पूजयेद्भक्तिभावतः ॥ २१
गोपीश्वरीं राधिकाञ्च मूलप्रकृतिमीश्वरीम्।
कृष्णशक्तिं कृष्णपूज्यां पूजयेद्भक्तिपूर्व्वकम् ॥ २२
गोपगोपीगणं शान्तं मां ब्रह्माणञ्च पार्व्वतीम्।
लक्ष्मीं सरस्वतीं पृथ्वीं सर्व्वदेवं नवग्रहम ॥ २३

देवषट्कं समभ्यर्च्य पुनः पञ्चोपचारतः।
पश्चाद्देवं क्रमेणैव श्रीकृष्णं पूजयेत् सुधीः ॥ २४
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्।
समभ्यर्च्य देवषट्कमिष्टदेवञ्च पूजयेत् ॥ २५
गणेशं विघ्ननाशाय व्याधिनाशाय भास्करम्।
आत्मनः शुद्धये वह्निं श्रीविष्णुं मुक्तिहेतवे ॥ २६
ज्ञानाय शङ्करं दुर्गां परमैश्वर्य्यहेतवे।
सम्पूजने फलमिदं विपरीतमपूजने ॥ २७
ततः कृत्वा परीहार-मिष्टदेवञ्च भक्तितः।
स्तोत्रञ्च सामवेदोक्तं पठेद्भक्त्या च तच्छृणु ॥ २८

महादेव उवाच।

परंब्रह्म परं धाम परं ज्योतिः सनातनम्।
निर्लिप्तं परमात्मानं नमामि सर्व्वकारणम् ॥ २९
स्थूलात् स्थूलतमं देवं सूक्ष्मात् सूक्ष्मतमं परम्।
सर्व्वदृश्यमदृश्यञ्च स्वेच्छाचारं नमाम्यहम् ॥ ३०
साकारञ्च निराकारं सगुणं निर्गुणं प्रभुम्।
सर्व्वाधारञ्च सर्व्वञ्च स्वेच्छारूपं नमाम्यहम् ॥ ३१
अतीवकमनीयञ्च रूपं निरुपमं विभुम्।
करालरूपमत्यन्तं बिभ्रतं प्रणमाम्यहम् ॥ ३२
कर्म्मणः कर्म्मरूपं तं साक्षिणं सर्व्वकर्म्मणाम्।
फलञ्च फलदातारं सर्व्वरूपं नमाम्यहम् ॥ ३३
स्रष्टा पाता च संहर्त्ता कलया मूर्त्तिभेदतः।
नानामूर्त्तिकलांशेन यः पुमांस्तं नमाम्यहम् ॥ ३४
स्वयं प्रकृतिरूपश्च मायायाश्च स्वयं पुमान्।
तयोः परं स्वयं शश्वत् तं नमामि परात्परम् ॥ ३५
स्त्रीपुंनपुंसकं रूपं यो बिभर्त्ति स्वमायया।
स्वयं माया स्वयं मायी यो देवस्तं नमाम्यहम् ॥३६
तारणं सर्व्वदुःखानां सर्व्वकारणकारणम्।
धारणं सर्व्वविश्वानां सर्व्वबीजं नमाम्यहम् ॥ ३७
तेजस्विनां रविर्यो हि सर्व्वजातिषु ब्राह्मणः।
नक्षत्राणाञ्च यश्चन्द्रस्तं नमामि जगत्प्रभुम् ॥ ३८
रुद्राणां वैष्णवानाञ्च ज्ञानिनां यो हि शङ्करः।
नागानां यो हि शेषश्च तं नमामि जगत्पतिम् ॥३९
प्रजापतीनां यो ब्रह्मा सिद्धानां कपिलः स्वयम्।
सनत्कुमारो मुनिषु तं नमामि जगद्गुरुम् ॥ ४०
देवानां यो हि विष्णुश्च देवीनां प्रकृतिः स्वयम्।
स्वायम्भुवो मनूनां यो मानवेषु च वैष्णवः।

नारीणां शतरूपा च बहुरूपं नमाम्यहम् ॥ ४१
ऋतूनां यो वसन्तश्च मासानां मार्गशीर्षकः।
एकादशी तिथीनाञ्च नमामि सर्व्वरूपिणम् ॥ ४२
सागरः सरितां यश्च पर्व्वतानां हिमालयः।
वसुन्धरा सहिष्णूनां तं सर्व्वं प्रणमाम्यहम् ॥ ४३
पत्राणां तुलसीपत्रं दारुरूपेषु चन्दनम्।
वृक्षाणां कल्पवृक्षो यस्तं नमामि जगत्पतिम् ॥ ४४
पुष्पाणां पारिजातश्च शस्यानां धान्यमेव च।
अमृतं भक्ष्यवस्तूनां नानारूपं नमाम्यहम् ॥ ४५
ऐरावतो गजेन्द्राणां वैनतेयश्च पक्षिणाम्।
कामधेनुश्च धेनूनां सर्व्वरूपं नमाम्यहम् ॥ ४६
तैजसानां सुवर्णञ्च धनानां धान्यमेव च।
यः केशरी पशूनाञ्च वररूपं नमाम्यहम् ॥ ४७
यक्षाणाञ्च कुबेरो यो ग्रहाणाञ्च वृहस्पतिः।
दिक्पालानां महेन्द्रश्च तं नमामि परं वरम् ॥ ४८
वेदसङ्घश्च शास्त्राणां पण्डितानां सरस्वती।
अक्षराणामकारो यस्तं प्रधानं नमाम्यहम् ॥ ४९
मन्त्राणां विष्णुमन्त्रश्च तीर्थानां जाह्नवी स्वयम्।
इन्द्रियाणां मनो यो हि सर्व्वश्रेष्ठं नमाम्यहम् ॥५०
सुदर्शनञ्च शस्त्राणां व्याधीनां वैष्णवो ज्वरः।
तेजसां ब्रह्मतेजश्च वरेण्यञ्च नमाम्यहम् ॥ ५१
निश्चिकश्च बलवतां मनश्च शीघ्रगामिणाम्।
कालः कलयतां यो हि तं नमामि विलक्षणम् ॥ ५२
ज्ञानदाता गुरूणाञ्च मातृरूपश्च बन्धुषु।
मित्रेषु जन्मदाता यस्तं सारं प्रणमाम्यहम् ॥ ५३
शिल्पिनां विश्वकर्म्मा यः कामदेवश्च रूपिणाम्।
पतिव्रता यः पत्नीनां नमस्यं तं नमाम्यहम् ॥ ५४
प्रियेषु पुत्ररूपो यो नृपरूपो नरेषु च।
शालग्रामश्च यन्त्राणां तं विशिष्टं नमाम्यहम् ॥ ५५
धर्म्मः कल्याणबीजानां वेदानां सामवेदकः।
धर्म्माणां सत्यरूपो यो विशिष्टं तं नमाम्यहम् ॥ ५६
जले शैत्यस्वरूपो यो गन्धरूपश्च भूमिषु।
शब्दरूपश्च गगने तं प्रणम्यं नमाम्यहम् ॥ ५७
क्रतूनां राजसूयो यो गायत्री छन्दसाञ्च यः।
गन्धर्व्वाणां चित्ररथस्तं गरिष्ठं नमाम्यहम् ॥ ५८
क्षीरस्वरूपो गव्यानां पवित्राणाञ्च पावकः।
पुण्यदानाञ्च यस्तोयं तं नमामि शुभप्रदम् ॥ ५९
तृणानां कुशरूपो यो व्याधिरूपश्च वैरिणाम्।
गुणानां शान्तरूपो यश्चित्ररूपं नमाम्यहम् ॥ ६०
तेजोरूपो ज्ञानरूपः सर्व्वरूपश्च यो महान्।
सर्व्वानिर्व्वचनीयञ्च तं नमामि स्वयं विभुम् ॥ ६१
सर्व्वाधारेषु यो वायुर्यथात्मा नित्यरूपिणाम्।
आकाशो व्यापकानां यो व्यापकं तं नमाम्यहम् ॥६२
वेदानिर्व्वचनीयं यं न स्तोतुं पण्डितः क्षमः।
यदनिर्व्वचनीयञ्च को वा तत् स्तोतुमीश्वरः ॥ ६३
वेदा न शक्ता यं स्तोतुं जड़ीभूता सरस्वती।
तञ्च वाङ्मनसोः पारं को विद्वान् स्तोतुमीश्वरः ॥६४
शुद्धतेजःस्वरूपञ्च भक्तानुग्रहविग्रहम्।
अतीवकमनीयञ्च श्यामरूपं नमाम्यहम् ॥ ६५
द्विभुजं मुरलीवक्त्रं किशोरं सस्मितं मुदा।
शश्वद्गोपाङ्गनाभिश्च वीक्ष्यमाणं नमाम्यहम् ॥ ६६
राधया दत्तताम्बूलं भुक्तवन्तं मनोहरम्।
रत्नसिंहासनस्थञ्च तमीशं प्रणमाम्यहम् ॥ ६७
रत्नभूषणभूषाढ्यं सेवितं श्वेतचामरैः।
पार्षदप्रवरैर्गोपकुमारैस्तं नमाम्यहम् ॥ ६८
वृन्दावनान्तरे रम्ये रासोल्लाससमुत्सुकम्।
रासमण्डलमध्यस्थं नमामि रसिकेश्वरम् ॥ ६९
शतशृङ्गे महाशैले गोलोके रत्नपर्व्वते।
विरजापुलिने रम्ये प्रणमामि विहारिणम् ॥ ७०
परिपूर्णतमं शान्तं राधाकान्तं मनोहरम्।
सत्यं ब्रह्मस्वरूपञ्च नित्यं कृष्णं नमाम्यहम् ॥ ७१
श्रीकृष्णस्य स्तोत्रमिदं त्रिसन्ध्यं यः पठेन्नरः।
धर्म्मार्थ-काम-मोक्षाणां स दाता भारते भवेत् ॥ ७२
हरिदास्यं हरौ भक्तिं लभेत् स्तोत्रप्रसादतः।
इह लोके जगत्पूज्यो विष्णुतुल्यो भवेद्ध्रुवम् ॥ ७३
सर्व्वसिद्धेश्वरः शान्तोऽप्यन्ते याति हरेः पदम्।
तेजसा यशसा भाति यथा सूर्य्यो महीतले ॥ ७४
जीवन्मुक्तः कृष्णभक्तः स भवेन्नात्र संशयः।
अरोगी गुणवान् विद्वान् पुत्रवान् धनवान् सदा ॥ ७५
षड्भिज्ञो दशबलो मनोयायी भवेद्ध्रुवम्।
सर्व्वज्ञः सर्व्वदश्चैव स दाता सर्व्वसम्पदाम्।
कल्पवृक्षसमः शश्वद्भवेत् कृष्णप्रसादतः ॥ ७६
इत्येवं कथितं स्तोत्रं त्वं वत्स गच्छ पुष्करम्।
तत्र कृत्वा मन्त्रसिद्धिं पश्चात् प्राप्स्यसि वाञ्छितम्॥७

त्रिःसप्तकृत्वो निर्भूपां कुरु पृथ्वीं यथासुखम्।
समाशिषा मुनिश्रेष्ठ श्रीकृष्णस्य प्रसादतः॥ ७८

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारद-संवादे स्तवप्रदानं
नाम द्वात्रिंशोऽध्यायः॥ ३२॥

---

## त्रयस्त्रिंशोऽध्यायः।

नारायण उवाच।

शिवं प्रणम्य स भृगुर्दुर्गां काली मुदान्वितः।
गत्वा पुष्करतीर्थञ्च मन्त्रसिद्धिं चकार ह॥ १
स बभूव निराहारो मासं भक्तिसमन्वितः।
ध्यायन् कृष्णपदाम्भोजं वायुशुद्धिं चकार सः॥ २
ददर्श चक्षुरुन्मील्य गगनं तेजसा वृतम्।
दिशो दश द्योतयन्तं समाच्छन्नदिवाकरम्॥ ३
तेजोमण्डलमध्यस्थं रत्नयानं ददर्श ह।
ददर्श तत्र पुरुष-मतीवसुन्दरं वरम्॥ ४
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकारकम्।
मूर्द्ध्ना प्रणम्य दण्डवद्दरं वव्रे तमीश्वरम्॥ ५
त्रिःसप्तकृत्वो निर्भूपां करिष्यामि महीमिति।
पदारविन्दे सुदृढ़ां तां भक्तिमनपायिनीम्॥ ६
दास्यं सुदुर्लभं शश्वत् त्वत्पादाब्जे च देहि मे।
कृष्णस्तस्मै वरं दत्त्वा तत्रैवान्तरधीयत॥ ७
भृगुः प्रणम्य भवनं जगाम तत् परात्परम्।
पस्पन्द दक्षिणाङ्गञ्च परं मङ्गलसूचकम्॥ ८
वाञ्छाप्रतीतजननं सुस्वप्नञ्च ददर्श ह।
मनःप्रसन्नं स्फीतञ्च तद्बभूव दिवानिशम्॥
सम्भाष्य स्वजनं सर्व्वं गृहे तस्थौ मुदान्वितः॥ ९
स्वशिष्यान् पितृशिष्यांश्च भ्रातृवर्गांश्च बान्धवान्।
आनीयानीय विविधान् मन्त्रांश्च स चकार ह॥ १०
पौर्व्वापर्य्यं स्ववृत्तान्तं तानेवोक्त्वा शुभक्षणे।
तैरेव सार्द्धं बलवान् बभूव गमनोन्मुखः॥ ११
ददर्श मङ्गलं रामः शुश्राव जयसूचकम्।
बुबुधे मनसा सर्व्वं स्वजयं वैरिसंक्षयम्॥ १२
यात्राकाले च पुरतः शुश्राव सहसा मुनिः।
हरिशब्दं शङ्खशब्दं घण्टा-दुन्दुभिवादनम्॥ १३
आकाशवाणीं सङ्गीतं जयस्ते भवितेति च।
नरेङ्गितञ्च कल्याणं मेघशब्दं जयावहम्॥ १४
चकार यात्रां भगवान् स्मृत्वैवं विविधं शुभम्।
ददर्श पुरतो विप्र-वन्दि-देवज्ञ-भिक्षुकान्॥ १५
ज्वलत्प्रदीपं बिभ्रन्तीं पतिपुत्रवतीं सतीम्।
पुरो ददर्श स्मेरास्यां नानाभूषणभूषिताम्॥ १६
शवं शिवां पूर्णकुम्भं चाषञ्च नकुलं तथा।
गच्छन् ददर्श रामश्च यात्रामङ्गलसूचकम्॥ १७
कृष्णसारं गजं सिंहं तुरगं गण्डकं द्विपम्।
चमरीं राजहंसञ्च चक्रवाकं शुकं पिकम्॥ १८
मयूरं खञ्जनञ्चैव शङ्खचिल्लं चकोरकम्।
पारावतं बलाकाञ्च कारण्डं चातकं चटम्॥ १९
सौदामिनीं शक्रचापं सूर्य्यं सूर्य्यप्रभां शुभाम्।
सद्योमांसं सजीवञ्च मत्स्यं शङ्खं सुवर्णकम्॥ २०
माणिक्यं रजतं मुक्तां मणीन्द्रञ्च प्रवालकम्।
दधि लाजं शुक्लधान्यं शुक्लपुष्पञ्च कुङ्कुमम्॥ २१
पर्णं पताकां छत्रञ्च दर्पणं श्वेतचामरम्।
धेनुं वत्सप्रयुक्ताञ्च रथस्थं भूमिपं तथा॥ २२
दुग्धमाज्यं तथा पूगममृतं पायसं तथा।
शालग्रामं पक्वफलं स्वस्तिकं शर्करां मधु॥ २३
मार्ज्जारञ्च वृषेन्द्रञ्च मेष-पर्व्वत-मूषिकम्।
मेघाच्छन्नस्य च रवेरुदयं चन्द्रमण्डलम्॥ २४
कस्तूरीव्यजनं तोयं हरिद्रां तीर्थमृत्तिकाम्।
सिद्धार्थं सर्षपं दूर्व्वां विप्रबालञ्च बालिकाम्॥ २५
मृगं वेश्याञ्च भ्रमरं कर्पूरं पीतवाससम्।
गोमूत्रं गोपुरीषञ्च गोधूलिं गोपदाङ्कितम्॥ २६
गोष्ठं गवां वर्त्म रम्यां गोशालां गोरतिं शुभाम्।
भूषणं देवप्रतिमां ज्वलदग्निं महोत्सवम्॥ २७
ताम्रञ्च स्फटिकं वेदीं सिन्दूरं माल्यचन्दनम्॥ २८
गन्धञ्च हीरकं रत्नं ददर्श दक्षिणे शुभम्।
सुगन्धिवायोराघ्राणं प्राप विप्राशिषं शुभम्॥ २९
इत्येवं मङ्गलं ज्ञात्वा प्रययौ स मुदान्वितः।
अस्तं गते दिनकरे नर्म्मदातीरसन्निधौ॥ ३०
तत्राक्षयवटं दिव्यं ददर्श सुमनोहरम्।
अत्यूर्द्धं विस्तृतमति-पुण्याश्रमपदं परम्॥ ३१
पौलस्त्यतपसः स्थानं सुगन्धिवायुनान्वितम्।
कार्त्तवीर्य्यार्ज्जुनाभ्यासे तत्र तस्थौ गणैः सह॥ ३२
सुष्वाप पुष्पशय्यायां किङ्करैः परिषेवितः।

निद्रां ययौ परिश्रान्तः परमानन्दसंयुतः ॥ ३३
निशातिशेषे स भृगुश्चाह स्वप्नं ददर्श ह ।
न विस्तितं यत्स्वनसा वायु-पित्त-कफं विना ॥ ३४
गजाश्व-शैल-प्रासाद-गो-वृक्षफलितेषु च ।
आरुह्यमाणमात्मानं रुदन्तं कृमिभक्षितम् ॥ ३५
आरुह्यमाणमात्मानं नौकायां चन्दनोक्षितम् ।
धृतवन्तं पुष्पमालां शोभितं पीतवाससा ॥ ३६
विक्षतोक्षितसर्व्वाङ्गं वसा-पूयसमन्वितम् ।
वीणां वरां वादयन्तमात्मानञ्च ददर्श ह ॥ ३७
विस्तीर्णपद्मपत्रेषु स्वं ददर्श सरित्तटे ।
दध्याज्य-मधुसंयुक्तं भुक्तवन्तञ्च पायसम् ॥ ३८
भुक्तवन्तञ्च ताम्बूलं लभन्तं ब्राह्मणाशिषम् ।
फल-पुष्प-प्रदीपञ्च पश्यन्तं स्वं ददर्श ह ॥ ३९
परिपक्वफलं क्षीरसुधान्नं शर्करान्वितम् ।
स्वस्तिकं भुक्तवन्तं स्वं ददर्श च पुनः पुनः ॥ ४०
जलौकसा वृश्चिकेन मीनेन भुजगेन च ।
भक्षितं भीतमात्मानं पलायन्तं ददर्श सः ॥ ४१
ततो ददर्श चात्मानं मण्डलं चन्द्रसूर्य्ययोः ।
पतिपुत्रवतीं नारीं पश्यन्तं सस्मितं द्विजम् ॥ ४२
सुवेशया कन्यकया सस्मितेन द्विजेन च ।
ददर्श श्लिष्टमात्मानं तुष्टेन परितुष्टया ॥ ४३
फलितं पुष्पितं वृक्षं देवताप्रतिमां नृपम् ।
गजस्थञ्च रथस्थञ्च पश्यन्तं स्वं ददर्श ह ॥ ४४
पीतवस्त्रपरीधानां रत्नालङ्कारभूषिताम् ।
विशन्तीं ब्राह्मणीं गेहं पश्यन्तं स्वं ददर्श ह ॥ ४५
शङ्खञ्च स्फाटिकं श्वेतमालां मुक्ताञ्च चन्दनम् ।
सुवर्णं रजतं रत्नं पश्यन्तं स्वं ददर्श ह ॥ ४६
गजं वृषञ्च सपञ्च श्वेतञ्च श्वेतचामरम् ।
नीलोत्पलं दर्पणञ्च भार्गवः स्वं ददर्श ह ॥ ४७
रथस्थं नवरत्नस्थं मालतीमाल्यभूषितम् ।
रत्नसिंहासनस्थं स्वं भृगुः स्वप्ने ददर्श ह ॥ ४८
पद्मश्रेणीं पूर्णकुम्भं (क) दधि लाजं घृतं मधु ।
पर्णच्छत्रं छत्रिणञ्च भृगुः स्वप्ने ददर्श ह ॥ ४९
वकपङ्क्तिं हंसपङ्क्तिं कन्यापङ्क्तिं व्रतान्विताम् ।
पूजयन्तीं षट्शुभं भृगुः स्वप्ने ददर्श ह ॥ ५०
मण्डपस्थं द्विजगणं पूजयन्तं हरं हरिम् ।
जयोऽस्त्वित्युक्तवन्तं तं भृगुः स्वप्ने ददर्श ह ॥ ५१
सुधावृष्टिं पर्णवृष्टिं फलवृष्टिञ्च शाश्वतीम् ।
पुष्पचन्दनवृष्टिञ्च भृगुः स्वप्ने ददर्श ह ॥ ५२
सद्योमांसं जीवमत्स्यं मयूरं श्वेतखञ्जनम् ।
सरोवरञ्च तीर्थानि भृगुः स्वप्ने ददर्श ह ॥ ५३
पारावतं शुकं चाषं शङ्खचिल्लञ्च चातकम् ।
व्याघ्रं सिंहञ्च सुरभीं भृगुः स्वप्ने ददर्श ह ॥ ५४
गोरोचनां हरिद्राञ्च शुक्लधान्याचलं वरम् ।
ज्वलदग्निं तथा दूर्व्वां भृगुः स्वप्ने ददर्श ह ॥ ५५
देवालयसमूहञ्च शिवलिङ्गञ्च पूजितम् ।
अर्च्चितां मृण्मयीं शैवां भृगुः स्वप्ने ददर्श ह ॥ ५६
यव-गोधूमचूर्णानां पिष्टानि लड्डुकानि च ।
भृगुर्ददर्श स्वप्ने च बुभुजे च पुनः पुनः ॥ ५७
दिव्यवस्त्रपरीधानो रत्नभूषणभूषितः ।
अगम्यागमनं स्वप्ने चकार भृगुनन्दनः ॥ ५८
ददर्श नर्त्तकीं वेश्यां रुधिरञ्च सुरां पपौ ।
रुधिरोक्षितसर्व्वाङ्गः स्वप्ने च भृगुनन्दनः ॥ ५९
पक्वान्नं पीतवर्णानां मानुषाणाञ्च नारद ।
मांसानि बुभुजे रामो हृष्टः स्वप्नेऽरुणोदये ॥ ६०
अकस्मान्निगडैर्बद्धं हतं शस्त्रेण स्वं भृगुम् ।
दृष्ट्वा च बुबुधे प्रातः समुत्तस्थौ हरिं स्मरन् ॥ ६१
अतीवहृष्टः स्वप्नेन प्रातःकृत्यं चकार सः ।
मनसा बुबुधे सर्व्वं विजेष्यामि रिपुं ध्रुवम् ॥ ६२

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-
खण्डे नारायण-नारद-संवादे
त्रयस्त्रिंशोऽध्यायः ॥३३॥

---

## चतुस्त्रिंशोऽध्यायः ।

नारायण उवाच ।

स प्रातराह्निकं कृत्वा समालोच्य च तैः सह ।
दूतं प्रस्थापयामास कार्त्तवीर्य्याश्रमं भृगुः ॥ १
स दूतः शीघ्रमागत्य वसन्तं राजसंसदि ।
वेष्टितं सचिवैः सार्द्धमुवाच नृपतीश्वरम् ॥ २

रामदूत उवाच ।

नर्म्मदातीरसान्निध्ये न्यग्रोधाक्षयमूलके ।
स भृगुर्भ्रातृभिः सार्द्धं त्वं तत्र गन्तुमर्हसि ॥ ३

(क) पद्मश्रेणीं पूर्णकुम्भमिति क्वचित् पाठः ।

युद्धं कुरु महाराज जातिभिर्ज्ञातिभिः सह।
त्रिःसप्तकृत्वो निर्भूपां करिष्यति महीमिति ॥ ४
इत्युक्त्वा रामदूतश्च जगाम रामसन्निधिम्।
राजा पिधाय सन्नाहं समरं गन्तुमुद्यतः ॥ ५
गच्छन्तं समरं दृष्ट्वा प्राणेशं सा मनोरमा।
तत्रैव वारयामास वासयामास सन्निधौ ॥ ६
राजा मनोरमां दृष्ट्वा प्रसन्नवदनेक्षणः।
तामुवाच सभामध्ये वाक्यं मानसिकं मुने ॥ ७

कार्त्तवीर्य्यार्ज्जुन उवाच।

मामेवाह्वयते कान्ते जमदग्निसुतो महान्।
स तिष्ठन् नर्म्मदातीरे रणाय भ्रातृभिः सह ॥ ८
सम्प्राप्य शङ्कराच्छस्त्रं मन्त्रञ्च कवचं हरेः।
त्रिःसप्तकृत्वो निर्भूपां कर्त्तुमिच्छति मेदिनीम् ॥ ९
आन्दोलयति मे प्राणान् मनः संक्षुभितं मुहुः।
शश्वत् स्फुरति वामाङ्गं दृष्टं स्वप्नं शृणु प्रिये ॥ १०
तैलाभ्यङ्गितमात्मान-मदर्शं गर्द्दभोपरि।
बिभ्रन्तमोड्रपुष्पस्य माल्यञ्च रक्तचन्दनम् ॥ ११
रक्तवस्त्रपरीधानं लौहालङ्कारभूषितम्।
हसन्तञ्चैव क्रीड़न्तं निर्व्वाणाङ्गारराशिना ॥ १२
भस्माच्छन्नाञ्च पृथिवीं जवापुष्पान्वितां सति।
रहितं चन्द्र-सूर्य्याभ्यां रक्तसन्ध्यान्वितं नभः ॥ १३
मुक्तकेशाञ्च नृत्यन्तीं विधवां छिन्ननासिकाम्।
रक्तवस्त्रपरीधाना-मदर्शमट्टहासिनीम् ॥ १४
शववामग्निरहितां चितां भस्मसमन्विताम्।
भस्मवृष्टिमसृग्वृष्टि-मङ्गारवृष्टिमीश्वरि ॥ १५
पक्वतालफलाकीर्णां पृथिवीमस्थिसंयुताम्।
अदर्शं खर्पराशिञ्च छिन्नकेशनखान्वितम् ॥ १६
पर्व्वतं लवणानाञ्च राशीभूतं कपर्द्दकम्।
चूर्णानाञ्चैव तैलाना-मदर्शं कन्दरं निशि ॥ १७
अदर्शं पुष्पितं वृक्षमशोक-करवीरयोः।
तालवृक्षञ्च फलितं तत्र तत्र पतत् फलम् ॥ १८
स्वकरात् पूर्णकलसः पपात च बभञ्ज च।
इत्यदर्शञ्च गगनात् सम्पतच्चन्द्रमण्डलम् ॥ १९
अदर्शमम्बरात् सूर्य्यमण्डलं सम्पतद्भुवि।
उल्कापातं धूमकेतुं ग्रहणं चन्द्र-सूर्य्ययोः ॥ २०
विकृताकारपुरुषं विकटास्यं दिगम्बरम्।
आगच्छन्तञ्चाग्रतस्तु अदर्शञ्च भयानकम् ॥ २१
बाला द्वादशवर्षीया वस्त्रभूषणभूषिता।
संरुष्टा याति मद्गेहा-दित्यदर्शमहं निशि ॥ २२
विदार्य्य देहि राजेन्द्र लद्गेहाद्यामि काननम्।
वदसि त्वं मामिति च निश्यदर्शमहं शुचा ॥ २३
रुष्टो विप्रो मां शपति सन्न्यासी च तथा गुरुः।
भित्तौ पुत्तलिकाश्चित्रा नृत्यन्तीत्यदर्शं परम् ॥ २४
चञ्चलानाञ्च गृध्राणां काकानां निकरैः सदा।
पीड़ितं महिषाणाञ्च स्वमदर्शमहं निशि ॥ २५
तैलपीड़ितयन्त्रञ्च तैलकारेण भ्रामितम्।
दिगम्बरान् पाशहस्तानदर्शमहमीश्वरि ॥ २६
नृत्यन्ति गायनाः सर्व्वे गानं गायन्ति मे गृहे।
विवाहं परमानन्द-मित्यदर्शमहं निशि ॥ २७
रमणं कुर्व्वतो लोकान् केशाकेशीति कुर्व्वतः।
अदर्शं समरं रात्रौ काकानाञ्च शुनामिति ॥ २८
मोटकानि च पिण्डानि स्वन्नमानं यवसंयुतम्।
रक्तवस्त्रं शुक्लवस्त्र-मदर्शं निशि कामिनि ॥ २९
कृष्णाम्बरा कृष्णवर्णा नग्ना च मुक्तकेशिनी।
विधवा श्लिष्यति च मामदर्शं निशि शोभने ॥ ३०
नापितो मुण्डितो मुण्डं श्मश्रुश्रेणीं मम प्रिये।
वक्षःस्थलञ्च नखरमित्यदर्शमहं निशि ॥ ३१
पादुकाचर्म्मरज्जूनामदर्शं राशिमुल्बणम्।
चक्रं भ्रमन्तं भूमौ च कुलालस्येति सुन्दरि ॥ ३२
वात्यया घूर्णमानञ्च शुष्कवृक्षं समुत्थितम्।
घूर्णमानं कबन्धञ्च ददर्श निशि सुव्रते ॥ ३३
ग्रथितां मुण्डमालाञ्च घूर्णमानाञ्च वात्यया।
अतीवघोरदशना-मित्यदर्शमहं परे ॥ ३४
भूत-प्रेता मुक्तकेशा वमन्तश्च हुताशनम्।
मां भीषयन्ति सतत-मित्यदर्शमहं निशि ॥ ३५
दग्धजीवं दग्धवृक्षं व्याधिग्रस्तं नरं परम्।
अङ्गहीनञ्च वृषलमित्यदर्शमहं निशि ॥ ३६
गेह-पर्व्वत-वृक्षाणां सहसा पतनं परम्।
मुहुर्म्मुहुर्वज्रपात-मित्यदर्शमहं निशि ॥ ३७
कुक्कुराणां शृगालानां रोदनञ्च मुहुर्मुहुः।
गृहे गृहे च नियतमित्यदर्शमहं निशि ॥ ३८
अधोमस्तमूर्द्धपादं मुक्तकेशं दिगम्बरम्।
भूमौ भ्रमन्तं गच्छन्त-मित्यदर्शमहं नरम् ॥ ३९
विकृताकारशब्दञ्च श्मशाधिदेवरोदनम्।

प्रातः श्रुत्वाववोधञ्च कमुपायं वदाधुना ॥ ४०
नृपतेर्वचनं श्रुत्वा हृदयेन विदूयता।
रुदन्ती तं सगद्गद-मुवाच सा नृपेश्वरम् ॥ ४१

मनोरमोवाच।

हे नाथ रमणश्रेष्ठ श्रेष्ठः सर्व्वमहीभृताम्।
प्राणातिरेक प्राणेश शृणु वाक्यं शुभावहम् ॥ ४२
नारायणांशो भगवान् जामदग्न्यो महाबली।
सृष्टिसंहर्त्तुरीशस्य शिष्योऽयं जगतः प्रभोः ॥ ४३
त्रिःसप्तकृत्वो निर्भूपां करिष्यामि महीमिति।
प्रतिज्ञा यस्य रामस्य तेन सार्द्धं रणं त्यज ॥ ४४
पापिनं रावणं जित्वा शूरं स्वमपि मन्यसे।
स त्वया न जितो नाथ स्वपापेन पराजितः ॥ ४५
यो न रक्षति धर्म्मञ्च तस्य को रक्षिता भुवि।
स नश्यति स्वयं मूढ़ो जीवन्नपि मृतो हि सः ॥ ४६
शुभाशुभस्य सततं साक्षी धर्म्मस्य कर्म्मणः।
आत्मारामः स्थितः स्वान्ते मूढ़स्तं न हि पश्यति॥४७
पुत्रदारादिकं यद्वत् सर्व्वैश्वर्य्यमधर्म्मवित्।
जलबुद्बुदवत् सर्व्वमनित्यं नश्वरं नृप ॥ ४८
संसारं स्वप्नसदृशं मत्वा सन्तोऽत्र भारते।
ध्यायन्ते सततं धर्म्मं तपः कुर्व्वन्ति भक्तितः ॥ ४९
दत्तेन दत्तं यज्ज्ञानं तत् सर्व्वं विस्मृतं त्वया।
अस्ति चेद्विप्रहिंसायां कुबुद्धे लक्षणः कथम् ॥ ५०
सुखार्थं मृगयां गत्वा तत्रोपोष्य द्विजाश्रमे।
भुक्त्वा मिष्टमपूर्व्वञ्च हतो विप्रो निरर्थकः ॥ ५१
गुरु-विप्र-सुराणाञ्च यः करोति पराभवम्।
अभीष्टदेवस्तं रुष्टो विपत्तिस्तस्य सन्निधौ ॥ ५२
स्मरणं कुरु राजेन्द्र दत्तात्रेयपदाम्बुजम्।
गुरौ भक्तिश्च सर्व्वेषां सर्व्वविघ्नविनाशिनी ॥ ५३
गुरुदेवं समभ्यर्च्च तं भृगुं शरणं व्रज।
विप्रे देवे प्रसन्ने च क्षत्रियाणां न हि क्षतिः ॥५४
विप्रस्य किङ्करो भूपो वैश्यो भूपस्य भूमिप।
सर्व्वेषां किङ्कराः शूद्रा ब्राह्मणस्य विशेषतः ॥ ५५
अयशः मरणं शश्वत् क्षत्रियस्य च क्षत्रिये।
महद्भयमस्तच्छरणं गुरु-देव-द्विजेषु च ॥ ५६
ब्राह्मणं भज राजेन्द्र गरीयांसं सुरादपि।
ब्राह्मणे परितुष्टे च सन्तुष्टाः सर्व्वदेवताः ॥ ५७
इत्येवमुक्त्वा राजेन्द्रं क्रोड़े कृत्वा महासती।
मुहुर्म्मुहुर्मुखं दृष्ट्वा विललाप रुरोद च ॥ ५८
क्षणं तिष्ठ महाराज पुनरेवमुवाच सा।
स्नानं कुरु महाराज भोजयिष्यामि वाञ्छितम् ॥५९
चन्दनागुरुकस्तूरी-कुङ्कुमाद्यैरसुत्तमम्।
अनुलेपं करिष्यामि सर्व्वाङ्गे तव सुन्दरे ॥ ६०
क्षणं सिंहासने तिष्ठ क्षणं वक्षसि मे प्रभो।
सभायां रचिते तल्पे पश्यामि जन्मशोधनम् ॥ ६१
शतपुत्राधिकः प्रेम्णा सतीनाञ्च पतिर्नृप।
निरूपितो भगवता वेदेषु हरिणा स्वयम् ॥ ६२
मनोरमावचः श्रुत्वा राजा परमपण्डितः।
बोधयामास तां राज्ञीं ददौ प्रत्युत्तरं पुनः ॥ ६३

कार्त्तवीर्य्यार्ज्जुन उवाच।

शृणु कान्ते प्रवक्ष्यामि श्रुतं सर्व्वं त्वयोदितम्।
शोकार्त्तानाञ्च वचनं न प्रशस्यं सभासु च ॥ ६४
सुखं दुःखं भयं शोकः कलहः प्राप्तिरेव च।
कर्म्मभोगार्हकालेन सर्व्वं भवति सुन्दरि ॥ ६५
कालो ददाति राजत्वं कालो मृत्युं पुनर्भवम्।
कालः सृजति संसारं कालः संहरते पुनः ॥ ६६
करोति पालनं कालः कालरूपी जनार्द्दनः।
कालस्य कालः श्रीकृष्णो विधातुर्विधिरेव च ॥ ६७
संहर्त्तुर्वापि संहर्त्ता पातुः पाता निषेककृत्।
स निषेको निषेकेण ददाति तपसां फलम्।
कः केन हन्यते जन्तुर्निषेकेण विना सति ॥ ६८
स्रष्टा सृजति सृष्टिञ्च संहर्त्ता संहरेत् पुनः।
पाता पाति च भूतानि यस्याज्ञां परिपालयेत् ॥६९
यस्याज्ञया वाति वातः सन्ततं भयविह्वलः।
शश्वत् सञ्चरते मृत्युः सूर्य्यस्तपति सन्ततम् ॥ ७०
वर्षतीन्द्रो दहत्यग्निः कालो भ्रमति भीतवत्।
तिष्ठन्ति स्थावराः सर्व्वे चरन्ति सन्ततं चराः ॥ ७१
वृक्षाश्च पुष्पिताः काले फलिताः पल्लवान्विताः।
शुष्यन्ति कालतः काले वर्द्धन्ते च तदाज्ञया ॥ ७२
आविर्भूता तिरोभूता सृष्टिरेव तदाज्ञया।
तस्याज्ञया भवेत् सर्व्वं न किञ्चित् स्वेच्छयानृणाम्॥
नारायणांशो भगवान् पर्शुरामो महाबलः।
त्रिःसप्तकृत्वो निर्भूपां करिष्यति महीमिति ॥ ७४
प्रतिज्ञा विफला तस्य न भवेत् तु कदाचन।
निश्चितं तस्य वध्योऽहमिति जानामि सुव्रते ॥ ७५

ज्ञात्वा सर्व्वं भविष्यञ्च शरणं यामि तं कथम्।
प्रतिष्ठितानाञ्चाकीर्त्ति-र्मरणादतिरिच्यते ॥ ७६
इत्येवमुक्त्वा राजेन्द्रः समरं गन्तुमुद्यतः।
वाद्यञ्च वादयामास कारयामास मङ्गलम् ॥ ७७
शतकोटिर्न्नृपाणाञ्च राजेन्द्राणां त्रिलक्षकम्।
अक्षौहिणीनां शतकं महाबलपराक्रमम् ॥ ७८
अश्वानाञ्च गजानाञ्च पदातीनां तथैव च।
असंख्यकं रथानाञ्च गृहीत्वा गन्तुमुद्यतः ॥ ७९
बभूव स्तम्भिता साध्वी दृष्ट्वा तं गमनोन्मुखम्।
धृतवन्तञ्च सन्नाह-मक्षयं शरं धनुः ॥ ८०
क्रीड़ागारे क्षणं तस्थौ कृत्वा कान्तं स्ववक्षसि।
पश्यन्ती तन्मुखाम्भोजं चुचुम्ब च मुहुर्मुहुः ॥ ८१

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-
खण्डे नारायण-नारद-संवादे
चतुस्त्रिंशोऽध्यायः ॥३४॥

---

## पञ्चत्रिंशोऽध्यायः।

नारायण उवाच।

मनोरमा प्राणनाथं क्षणं कृत्वा स्ववक्षसि।
भविष्यं मनसा चक्रे यद्यत् स्वामिसुखाकृतम् ॥ १
पुत्रांश्च पुरतः कृत्वा बान्धवांश्च स्वकिङ्करान्।
सा सस्मार हरिपदं मेनेऽसत्यं भवं मुने ॥ २
योगेन भित्त्वा षट्चक्रं वायुं संस्थाप्य मूर्द्धनि।
ब्रह्मरन्ध्रस्थकमले सहस्रदलसंयुते ॥ ३
स्वान्तमाकृष्य विषयाज्जलबुद्बुदसन्निभात्।
संस्थाप्य बद्धा ध्यानेन लोलं ब्रह्मणि निष्कले ॥ ४
त्रिविधं कर्म्म संन्यस्य निर्म्मूलमपुनर्भवम्।
तत्र प्राणांश्च तत्याज न च प्राणाधिकं प्रियम् (क) ॥५
स राजा तां मृतां दृष्ट्वा विललाप रुरोद च।
सन्नाहं सम्परित्यज्य कृत्वा वक्षस्युवाच ताम् ॥ ६

राजोवाच।

मनोरमे समुत्तिष्ठ न यास्यामि रणाजिरे।
पश्य मां चेतनां प्राप्य विलपन्तं मुहुर्मुहुः ॥ ७
मनोरमे समुत्तिष्ठ मया सार्द्धं गृहं व्रज।
न करिष्यामि समरं भृगुणा सह भाविनि ॥ ८
मनोरमे समुत्तिष्ठ श्रीशैलं व्रज सुन्दरि।
तत्र क्रीड़ां करिष्यामि त्वया सार्द्धं यथा पुरा ॥ ९
मनोरमे समुत्तिष्ठ व्रज गोदावरीं प्रिये।
जलक्रीड़ां करिष्यामि त्व. ा सार्द्धं यथा पुरा ॥ १०
मनोरमे समुत्तिष्ठ नन्दनं व्रज सुन्दरि।
पुष्पभद्रानदीतीरे विहरिष्यामि निर्ज्जने ॥ ११
मनोरमे समुत्तिष्ठ मलयं व्रज सुन्दरि।
त्वया सार्द्धं रमिष्यामि तत्र चन्दनकानने ॥ १२
शीतेन गन्धयुक्तेन वायुना सुरभीकृते।
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते ॥ १३
चन्दनागुरुकस्तूरीं ममाङ्गे लेपनं कुरु।
चन्दनोक्षितसर्व्वाङ्गं पश्य मां सस्मिते सति ॥ १४
सुधातुल्यं सुमधुरं वचनं रचय प्रिये।
कुटिलभ्रूविकारञ्च कथं न कुरुषेऽधुना ॥ १५
नृपस्य रोदनं श्रुत्वा वाग्बभूवाशरीरिणी।
स्थिरो भव महाराज करोषि रोदनं कथम् ॥ १६
त्वं महाज्ञानिनां श्रेष्ठो दत्तात्रेयप्रसादतः।
जलबुद्बुदवत् सर्व्वं संसारं पश्य शोभनम् ॥ १७
कमलांशा च सा साध्वी जगाम कमलालयम्।
त्वमेव गच्छ वैकुण्ठं रणं कृत्वा रणाजिरे ॥ १८
इत्येवं वचनं श्रुत्वा जहौ शोकं नराधिपः।
ततश्चन्दनकाष्ठेन चितां दिव्यां चकार ह ॥ १९
संस्काराग्निं कारयित्वा पुत्रद्वारा ददाह ताम्।
नानाविधानि रत्नानि ब्राह्मणेभ्यो ददौ मुदा ॥ २०
नानाविधानि दानानि वस्त्राणि विविधानि च।
मनोरमायाः पुण्येन ब्राह्मणेभ्यो ददौ मुदा ॥ २१
भुज्यतां भुज्यतां शश्वद्दीयतां दीयतामिति।
शब्दो बभूव सर्व्वत्र कार्त्तवीर्य्याश्रमे मुने ॥ २२
कोषेषु स्वाधिकारेषु स्थितं यद्यद्धनं तदा।
मनोरमायाः पुण्येन ब्राह्मणेभ्यो ददौ मुदा ॥ २३
राजा जगाम समरं हृदयेन विदूयता।
सार्द्धं सैन्यसमूहैश्च वाद्यभाण्डैरसंख्यकैः ॥ २४
ददर्शामङ्गलं राजा पुरो वर्त्मनि वर्त्मनि।
ययौ तथापि समरं नाजगाम गृहं पुनः ॥ २५
मुक्तकेशीं छिन्ननासां रुदतीञ्च दिगम्बराम्।
कृष्णवस्त्रपरीधाना-मपरां विधवामपि ॥ २६
मुखदुष्टां योनिदुष्टां व्याधियुक्ताञ्च कुट्टिनीम्।

(क) तत्र प्राणाधिकप्रिया इत्यपि पाठः।

पतिपुत्रविहीनाञ्च डाकिनीं पुंश्चलीमहो ॥ २७
कुम्भकारं तैलकारं व्याधं सर्पोपजीविनम्।
कुचैलमतिरुक्षाङ्गं नग्नं काषायवासिनम्॥ २८
वशाविक्रयिणञ्चैव कन्याविक्रयिणं तथा।
चितां दग्धशवं भस्म निर्व्वाणाङ्गारमेव च ॥ २९
सर्पाहतनरं सर्पं गोधाञ्च शशकं विषम्।
आमपाकञ्च पिण्डञ्च मोदकञ्च तिलांस्तथा ॥ ३०
देवलं वृषवाहञ्च शूद्रश्राद्धान्नभोजिनम्।
शूद्रान्नपाचकं शूद्र-याजकं ग्रामयाजकम्॥ ३१
कुशपुत्तलिकाञ्चैव शवदाहनकारिणम्।
शून्यकुम्भं भग्नकुम्भं तैलं लवणमस्थि च ॥ ३२
कार्पासं कच्छपं चूर्णं कुक्कुरं शब्दकारिणम्।
दक्षिणे च शृगालञ्च कुर्व्वन्तं भैरवं रवम्॥ ३३
कपर्दकञ्च चौरञ्च छिन्नकेशं नखं मलम्।
कलहञ्च विलापञ्च विलापकारिणं जनम्॥ ३४
अमङ्गलं रुदन्तञ्च रुदन्तं शोककारिणम्।
मिथ्यासाक्ष्यप्रदातारं चौरञ्च नरघातिनम्॥ ३५
पुंश्चलीपतिपुत्रौ च पुंश्चल्योदनभोजिनम्।
देवता-गुरु-विप्राणां वस्तु-वित्तापहारिणम्॥ ३६
दत्तापहारिणं दस्युं हिंसकं सूचकं खलम्।
पितृ-मातृविरक्तञ्च द्विजाश्वत्थविघातिनम्॥ ३७
सत्यघ्नञ्च कृतघ्नञ्च स्थाप्यापहारिणं जनम्।
विप्रद्रुहं मित्रद्रुहं चनं विश्वासघातकम्॥ ३८
गुरु-देव-द्विजानाञ्च निन्दकं स्वाङ्गघातकम्।
जीवानां घातकञ्चैव स्वाङ्गहीनञ्च निर्द्दयम्॥ ३९
व्रतोपवासहीनञ्च दीक्षाहीनं नपुंसकं।
गलितव्याधिगात्रञ्च काणं वधिरमेव च ॥ ४०
पुक्कसं छिन्नलिङ्गञ्च सुरामत्तं सुरां तथा।
चिप्रं वमन्तं रुधिरं महिषं गर्द्दभं तथा ॥ ४१
मूत्रं पुरीषं श्लेष्माणं कृत्विनं नृकपालकम्।
झञ्झावातं रक्तवृष्टिं वात्याञ्च वृक्षपातनम्॥ ४२
शुकञ्च शूकरं गृध्रं श्येनं कङ्कञ्च भल्लुकम्।
पाशञ्च शुष्ककाष्ठञ्च वायसं गन्धकं तथा ॥ ४३
अग्रदानिब्राह्मणञ्च तन्त्रमन्त्रोपजीवनम्।
वैद्यञ्च रक्तपुष्पञ्च औषधं तुषमेव च ॥ ४४
कुवार्त्तां मृतवार्त्ताञ्च रिपुवार्त्ताञ्च(क) दारुणम्।

दुर्गन्धवातं दुःशब्दं राजा सम्प्राप वर्त्मनि ॥ ४५
मनश्च कुत्सितं प्राणाः क्षुभिताश्च निरन्तरम्।
वामाङ्गस्पन्दनं देहजाड्यं राज्ञो बभूव ह ॥ ४६
तथापि राजा निःशङ्को ददर्श युद्धमङ्गलम्।
सर्व्वसैन्यसमायुक्तः प्रविवेश रणाजिरम्॥ ४७
अवरुह्य रथात् तूर्णं दृष्ट्वा च पुरतो भृगुम्।
ननाम दण्डवद्भूमौ राजेन्द्रैः सह भक्तितः ॥ ४८
आशिषं युयुजे रामः स्वर्गं याहीति वाञ्छितम्।
तेषां सद्यस्तद्बभूव दुर्लङ्घ्या ब्राह्मणाशिषः ॥ ४९
भृगुं प्रणम्य राजेन्द्रो राजेन्द्रैः सह तत्क्षणात्।
आरुरोह रथं तूर्णं नानासज्जसमन्वितम्॥ ५०
नानाप्रकारवाद्यञ्च दुन्दुभिं मुरजादिकम्।
वादयामास सहसा ब्राह्मणेभ्यो ददौ धनम्॥ ५१
उवाच रामो राजेन्द्रं राजेन्द्राणाञ्च संसदि।
हितं सत्यं नीतिसारं वाक्यं वेदविदां वरः ॥ ५२

परशुराम उवाच।

अयि राजेन्द्र धर्मिष्ठ चन्द्रवंशसमुद्भव।
विष्णोरंशस्य शिष्यस्त्वं दत्तात्रेयस्य धीमतः ॥ ५३
स्वयं विद्वांश्च वेदांश्च श्रुत्वा वेदविदो मुखात्।
कथं दुर्व्वुद्धिरधुना सज्जनानां विडम्बना ॥ ५४
अहनः कपिलालोभान्निरीहं ब्राह्मणं कथम्।
ब्राह्मणी शोकसन्तप्ता भर्त्रा सार्द्धं गता सती ॥ ५५
किं करिष्यति ते भूप परत्रैवानयोर्वधात्।
सर्व्वं मिथ्यैव संसारं पद्मपत्रे यथा जलम्॥ ५६
सत्कीर्त्तिर्याथ दुष्कीर्त्तिः कथामात्रावशेषिता।
विडम्बनं वा किमतो दुष्कीर्त्तिश्च सतामहो ॥ ५७
क्व गता कपिला त्वं क्व क्व विवादी मुनिः कुतः।
यत् कृतं विदुषा राज्ञा न कृतं बालिकेन तत् ॥ ५[illegible]
त्वामुपोषन्तमीशं तं दृष्ट्वा तातो हि धार्म्मिकः [illegible]
पारणं कारयामास दत्तं तस्य फलं लदा ॥ ५९
अधीतं विधिवद्दत्तं ब्राह्मणेभ्यो दिने दिने।
जगत् ते यशसा पूर्णमयशो वार्द्धके कथम्॥ ६०
दाता वरिष्ठो धर्म्मिष्ठो यशस्वान् पुण्यवान् सुधी
कार्त्तवीर्य्यार्ज्जुनसमो न भूतो न भविष्यति ॥ ६[illegible]
पुरातना वदन्तीति वन्दिनो धरणीतले।
यो विख्यातः पुराणेषु तस्य दुष्कीर्त्तिरीदृशी॥
दुर्व्वाक्यं दुःसहं राजंस्तीक्ष्णास्त्रादपि जीविना

(क) विप्रशापचेति वा पाठः।

सङ्कटेऽपि सतां वक्त्रा दुरुक्तिर्न विनिर्गता ॥ ६३
न ददामि दुरुक्तिं ते प्रकृतं कथयाम्यहम्।
उत्तरं देहि राजेन्द्र मह्यं राजेन्द्रसंसदि ॥ ६४
सूर्य्य-चन्द्र-मनूनाञ्च वंशाः सन्त्यत्र संसदि।
सत्यं वद सभायाञ्च शृण्वन्तु पितरः सुराः ॥ ६५
शृण्वन्तु सर्व्वे राजेन्द्राः सदसद्वक्तुमीश्वराः।
पश्यन्तो हि समं सन्तः पाक्षिकं न वदन्ति च ॥ ६६
इत्युक्त्वा परशुरामश्च विरराम रणस्थले।
राजा बृहस्पतिसमः प्रवक्तुमुपचक्रमे ॥ ६७

कार्त्तवीर्य्यार्ज्जुन उवाच।

अये राम हरेरंशो हरिभक्तो जितेन्द्रियः।
श्रुतो धर्म्मो मुखाद्येषां लब्ध तेषां गुरोर्गुरुः ॥ ६८
कर्म्मणा ब्राह्मणो जातः करोति ब्रह्मभावनम्।
स्वधर्म्मनिरतः शुद्धस्तस्माद्ब्राह्मण उच्यते ॥ ६९
अन्तर्व्वहिश्च मननात् करोति कर्म्म जन्मनि।
मौनी शश्वद्वदेत् काले यो हि स मुनिरुच्यते॥७०
स्वर्णे लोष्ट्रे गृहेऽरण्ये पङ्के सुस्निग्धचन्दने।
समता भावना यस्य स योगी परिकीर्त्तितः ॥ ७१
सर्व्वजीवेषु यो विष्णुं भावयेत् समता धिया।
हरौ करोति भक्तिञ्च हरिभक्तः स च स्मृतः ॥ ७२
तपो धनं ब्राह्मणानां तपः कल्पतरुर्यथा।
तपस्या कामधेनुश्च सन्ततं तपसि स्पृहा ॥ ७३
ऐश्वर्य्ये क्षत्रियाणाञ्च वाणिज्ये च तथा विशाम्।
शूद्राणां विप्रसेवैव स्पृहा वेदे विनिन्दिता (क)॥७४
क्षत्रियाणाञ्च तपसि स्पृहातीवाप्रशंसिता (ख)।
ब्राह्मणानां विवादे च स्पृहातीवविनिन्दिता ॥ ७५
रागी राजसिकं स्वर्गं कुरुते कर्म्म रागतः।
रागान्धश्च राजसिकस्तेन राजा प्रकीर्त्तितः ॥ ७६
रागतः कामधेनुश्च मया भिक्षा कृता मुने।
को दोषस्तेन मे जातः क्षत्रियस्यानुरागिणः॥ ७७
कुतः कस्य मुनेरस्ति कामधेनुस्त्वया विना।
स्पृहा रणे वा भोगे वा युष्माकञ्च व्यतिक्रमः ॥ ७८
त्रिंशदक्षौहिणीं सेनां राजेन्द्राणां त्रिकोटिकाम्।
निहत्यायान्तमेको मां निहन्तुमहनं मुने ॥ ७९
आत्मानं हन्तुमायान्तमपि वेदाङ्गपारगम्।

(क) वेदेष्वनिन्दितेति वा पाठः।
(ख) स्पृहातीवप्रशंसितेति च पाठः क्वचित्कः।

न दोषो हनने तस्य न तेन ब्रह्महा भवेत् ॥ ८०
प्रायश्चित्तं हिंसकानां न वेदेषु निरूपितम्।
वधे समुचिते तेषामित्याह कमलोद्भवः ॥ ८१
पिता ते निहता भूपा महाबलपराक्रमाः।
इदानीं राजपुत्राश्च शिशवोऽत्र समागताः ॥ ८२
त्रिःसप्तकृत्वो निर्भूपां कृत्वा कर्त्तुं महीमिति।
त्वया कृता प्रतिज्ञा या तस्याश्च पालनं कुरु ॥ ८३
क्षत्रियाणां रणे धर्म्मो रणे मृत्युर्न गर्हितः।
रणे स्पृहा ब्राह्मणानां लोके वेदे विडम्बना ॥ ८४
तपोधनानां विप्राणां वाग्बलानां युगे युगे।
शान्तिस्वस्त्ययनं कर्म्म विप्र-धर्म्मो न सङ्गरः ॥ ८५
क्षत्रियाणां बलं युद्धं व्यापारश्च बलं विशाम्।
भिक्षा बलं भिक्षुकाणां शूद्राणां विप्रसेवनम् ॥ ८६
हरौ भक्तिर्हरेर्दास्यं वैष्णवानां बलं हरिः।
हिंसा बलं खलानाञ्च तपस्या च तपस्विनाम् ॥ ८७
बलं वेशश्च वेश्यानां योषितां यौवनं बलम्।
बलं प्रतापो भूपानां बालानां रोदनं बलम् ॥ ८८
सतां सत्यं बलं मिथ्या बलमेवासतां सदा।
अनुगानामनुगमः स्वल्पस्वानाञ्च सञ्चयः ॥ ८९
विद्या बलं पण्डितानां वाणिज्यं वणिजां बलम्।
शश्वत्सुकर्म्मशीलानां गाम्भीर्य्यं साहसं बलम् ॥ ९०
धनं बलञ्च धनिनां शुचीनाञ्च विशेषतः।
बलं विवेकः शान्तानां गुणिनां बलमेकता ॥ ९१
गुणो बलञ्च गुणिनां चौराणां चौर्य्यमेव च।
प्रियवाक्यञ्च कापट्य-मधर्म्मः पुंश्चलीबलम् ॥ ९२
हिंसा च हिंस्रजन्तूनां सतीनां पतिसेवनम्।
बलं सत्पुरुषाणाञ्च शिष्याणां गुरुसेवनम् ॥ ९३
बलं धर्म्मो गृहस्थानां भृत्यानां राजसेवनम्।
बलं स्तवः स्तावकानां ब्रह्म च ब्रह्मचारिणाम् ॥९४
यतीनाञ्च सदाचारो न्यासः सन्न्यासिनां बलम्।
पापं बलं पातकिना-मशक्तानां हरिर्बलं ॥ ९५
पुण्यं बलं पुण्यवतां प्रजानां नृपतिर्बलम्।
फलं बलञ्च वृक्षाणां जलधीनां जलं बलं ॥ ९६
जलं बलञ्च शस्यानां मत्स्यानाञ्च जलं बलं।
शान्तिर्बलञ्च भूपानां विप्राणाञ्च विशेषतः ॥ ९७
विप्रोऽशान्तो रणोद्योगी नैव दृष्टो न च श्रुतः।
स्थिते नारायणे देवे बभूवाद्य विपर्य्ययः ॥ ९८

इत्येवमुक्त्वा राजेन्द्रो विरराम रणाजिरे।
तस्यैतद्वचनं श्रुत्वा सर्व्वस्तूष्णीं वभूव ह ॥ ९९
रामस्य भ्रातरः सर्व्वे सुतीक्ष्णशस्त्रपाणयः।
आवेभिरे रणं कर्त्तुं महावीरास्तदाज्ञया ॥ १००
रणोन्मुखांश्च तान् दृष्ट्वा मत्स्यराजो महावलः।
समारेभे रणं कर्त्तुं मङ्गलो मङ्गलाश्रयः ॥ १०१
शरजालेन राजेन्द्रो वारयामास तानपि।
चिच्छिदुः शरजालञ्च जमदग्निसुतास्तदा ॥ १०२
राजा चिक्षेप दिव्यास्त्रं शतसूर्य्यप्रभं मुने।
माहेश्वरेण मुनयश्चिच्छिदुश्चावलीलया ॥ १०३
दिव्यास्त्रेणैव मुनयश्चिच्छिदुः सशरं धनुः।
रथञ्च सारथिञ्चैव राज्ञः सन्नाहमेव च ॥ १०४
न्यस्तशस्त्रं नृपं दृष्ट्वा मुनयो हर्षविह्वलाः।
दधार शूलिनः शूलं मत्स्यराजजिघांसया ॥ १०५
शूलनिक्षेपसमये वाग्वभूवाशरीरिणी।
शूलं त्यजत विप्रेन्द्राः शिवस्याव्यर्थमेव च ॥ १०६
शिवस्य कवचं दिव्यं दत्तं दुर्व्वाससा पुरा।
मत्स्यराजगलेऽस्तीति सर्व्वावयवरक्षणम् ॥ १०७
प्राणानाञ्च प्रदातारं कवचं याच तं नृपम्।
श्रुत्वैवाकाशवाणीञ्च भृङ्गी सन्न्यासवेशकृत् ॥ १०८
ययाचे कवचं भूपं जमदग्निसुतो महान्।
राजा ददौ च कवचं ब्रह्माण्डविजयं परम् ॥ १०९
गृहीत्वा कवचं तच्च शूलेनैव जघान ह।
पपात मत्स्यराजश्च शतचन्द्रसमाननः।
महावलिष्ठो गुणवान् चन्द्रवंशसमुद्भवः ॥ ११०

नारद उवाच।

शिवस्य कवकं ब्रूहि मत्स्यराजेन यद्धृतम्।
नारायण महाभाग श्रोतुं कौतूहलं मम ॥ १११

नारायण उवाच।

कवचं शृणु विप्रेन्द्र शङ्करस्य महात्मनः।
ब्रह्माण्डविजयं नाम सर्व्वावयवरक्षणम् ॥ ११२
पुरा दुर्व्वाससा दत्तं मत्स्यराजाय धीमते।
दत्त्वा षडक्षरं मन्त्रं सर्व्वपापप्रणाशनम् ॥ ११३
स्थिते च कवचे देहे नास्ति मृत्युश्च जीविनाम्।
अस्त्रे शस्त्रे जले वह्नौ सिद्धिश्चेन्नास्ति संशयः ॥११४
यद्धृत्वा पठनाद्वाणः शिवत्वं प्राप लीलया।
वभूव शिवतुल्यश्च यद्धृत्वा नन्दिकेश्वरः ॥ ११५
वीरश्रेष्ठो वीरभद्रो वभूव धारणाद्यतः।
त्रैलोक्यविजयी राजा हिरण्यकशिपुः स्वयम्।
हिरण्याक्षश्च विजयी वभूव धारणाद्यतः।
यद्धृत्वा पठनात् सिद्धो दुर्व्वासा विश्वपूजितः॥
जैगीषव्यो महायोगी पठनाद्धारणाद्यतः।
यद्धृत्वा वामदेवश्च देवलश्च्यवनः स्वयम्।
अगस्त्यश्च पुलस्त्यश्च वभूव विश्वपूजितः ॥ ११८
ओं नमः शिवायेति च मस्तकं मे सदाऽवतु।
ओं नमः शिवायेति च स्वाहा भाल सदाऽवतु ॥१
ओं ह्रीं श्रीं क्लीं शिवायेति स्वाहा नेत्रे सदाऽवतु
ओं ह्रीं क्लीं हूं शिवायेति नमो मे पातु नासिकाम् ॥१
ओं नमः शिवाय शान्ताय स्वाहा कण्ठं सदाऽवतु
ओं ह्रीं श्रीं ह्रूं संहारकर्त्रे स्वाहा कर्णौ सदाऽवतु१
ओं ह्रीं श्रीं पञ्चवक्त्राय स्वाहा दन्तं सदावतु।
ओं ह्रीं महेशाय स्वाहा चाधरं पातु मे सदा॥१२
ओं ह्रीं श्रीं क्लीं त्रिनेत्राय स्वाहा केशान् सदाऽ व
ओं ह्रीं ऐं महादेवाय स्वाहा वक्षः सदाऽवतु ॥१२
ओं ह्रीं श्रीं क्लीं ऐं रुद्राय स्वाहा नाभिं सदाऽवतु
ओं ह्रीं ऐं श्रीं ईश्वराय स्वाहा पृष्ठं सदा वतु ॥१२
ओं श्रीं क्लीं मृत्युञ्जयाय स्वाहा भ्रूश्च सदावतु।
ओं ह्रूं श्रीं क्लीं ईशानाय स्वाहा,पार्श्वं सदावतु ॥ १२
ओं ह्रीं ईश्वराय स्वाहा उदरं पातु मे सदा।
ओं श्रीं क्लीं(क)मृत्युञ्जयायस्वाहावाहूसदा वतु १२६
ओं ह्रूं श्रीं क्लीं ईश्वराय स्वाहा पातु करौ मम।
ओं महेश्वराय रुद्राय नितम्बं पातु मे सदा ॥१२७
ओं ह्रीं श्रीं भूतनाथाय स्वाहा पादौ सदावतु।
ओं सर्व्वेश्वराय सर्व्वाय स्वाहा सर्व्वं सदाऽवतु॥१२८
प्राच्यां मां पातु भूतेश आग्नेय्यां पातु शङ्करः।
दक्षिणे पातु मां रुद्रो नैरृत्यां स्थाणुरेव च ॥ १२९
पश्चिमे खण्डपरशुर्वायव्यां चन्द्रशेखरः।
उत्तरे गिरिशः पातु ऐशान्यामीश्वरः स्वयम् ॥ १३०
ऊर्द्ध्वे मृडः सदा पातु अधो मृत्युञ्जयः स्वयम्।
जले स्थले चान्तरीक्षे स्वप्ने जागरणे सदा ॥ १३१
पिनाकी पातु मां प्रीत्या भक्तञ्च भक्तवत्सलः ॥१३२
इति ते कथितं वत्स कवचं परमाद्भुतम्।
दशलक्षजपेनैव सिद्धिर्भवति निश्चितम् ॥ १३३

(क) ऐं क्लीं इति च पाठः।

यदि स्यात् सिद्धकवचो रुद्रतुल्यो भवेद्ध्रुवम्।
तव स्नेहान्मया ख्यातं प्रवक्तव्यं न कस्यचित् ॥१३४
कवचं काण्वशाखोक्त-मतिगोप्यं सुदुर्लभम्।
अश्वमेधसहस्राणि राजसूयशतानि च ॥ १३५
सर्व्वाणि कवचस्यास्य कलां नार्हन्ति षोड़शीम्।
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ॥ १३६
सर्व्वज्ञः सर्व्वसिद्धीशो मनोयायी भवेद्ध्रुवम्।
इदं कवचमज्ञात्वा भजेद्यः शङ्करं प्रभुम्।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ १३७

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे शङ्कर कवच-कथनं नाम पञ्चत्रिंशोऽध्यायः ॥३५

---

## षट्त्रिंशोऽध्यायः।

नारायण उवाच।

मत्स्यराजे निपतिते राजा युद्धविशारदः।
राजेन्द्रान् प्रेषयामास युद्धशास्त्रविशारदान् ॥ १
बृहद्बलं सोमदत्तं विदर्भं मिथिलेश्वरम्।
निषधाधिपतिञ्चैव मगधाधिपतिं तथा ॥ २
आययुः समरं योद्धुं पर्शुरामं महारथाः।
त्रिभिरक्षौहिणीभिश्च सेनाभिः सह नारद ॥ ३
रामस्य भ्रातरः सर्व्वे वीरास्तीक्ष्णास्त्रपाणयः।
वारयामासुरस्त्रैश्च तानेव रणमूर्द्धनि ॥ ४
ते वीराः शरजालेन दिव्यास्त्रेण प्रयत्नतः।
वारयामासुरेकैकं भ्रातृवर्गान् भृगोस्तथा ॥ ५
आययौ समरं शीघ्रं दृष्ट्वा तांश्च पराजितान्।
पिनाकहस्तः स भृगुर्ज्वलदग्निशिखोपमः ॥ ६
चिक्षेप नागपाशञ्च पर्शुरामो महाबलः।
चिच्छेद तं गारुड़ेन सोमदत्तो महाबलः ॥ ७
भृगुः शङ्करशूलेन सोमदत्तं जघान ह।
बृहद्बलञ्च गदया विदर्भं मुष्टिभिस्तथा ॥ ८
मैथिलं मुद्गरेणैव शक्त्या च नैषधं तथा।
मागधं चरणोद्घाते-रस्त्रजालेन सैनिकान् ॥ ९
निहत्य निखिलान् भूपान् संहाराग्निसमो रणे।
दुद्राव कार्त्तवीर्य्यञ्च पर्शुरामो महाबलः ॥ १०
दृष्ट्वा तं योद्धुमायान्तं राजानश्च महारथाः।
आययुः समरं कर्त्तुं कार्त्तवीर्य्यं निवार्य्य च ॥ ११
कान्यकुब्जाश्च शतशः सौराष्ट्राः शतशस्तथा।
राढ़ीयाः शतशश्चैव वारेन्द्राः शतशस्तथा ॥ १२
सौह्मा वङ्गाश्च शतशो महाराष्ट्रास्तथा दश।
कतिधा गुर्ज्जरातीयाः कालिङ्गाः शतशस्तथा ॥ १३
कृत्वा ते शरजालञ्च तमाचच्छुरेव वै।
तं छित्त्वाभ्युत्थितो रामो नीहारमिव भास्करः ॥१४
विरावं युयुधे रामस्तैः सार्द्धं समराजिरे।
द्वादशाक्षौहिणीं सेनां ततश्चिच्छेद पर्शुना ॥ १५
रम्भास्तम्भसमूहञ्च यथा खड्गेन लीलया।
छित्त्वा सेनां भूपवर्गं जघान शिवशूलतः ॥ १६
सर्व्वांस्तान् निहतान् दृष्ट्वा सूर्य्यवंशसमुद्भवः।
आजगाम सुचन्द्रश्च लक्षराजेन्द्रसंयुतः ॥ १७
द्वादशाक्षौहिणीभिश्च सेनाभिः सह संयुगे।
कोपेन युयुधे रामं सिंहं सिंहो यथा रणे ॥ १८
भृगुः शङ्करशूलेन नृपलक्षं निहत्य च।
द्वादशाक्षौहिणीं सेनां जघान पर्शुना बली ॥ १९
निहत्य सर्व्वाः सेनाश्च सुचन्द्रं युयुधे बली।
नागास्त्रं प्रेरयामास नियुध्यन्तं भृगुः स्वयम् ॥ २०
नागपाशञ्च चिच्छेद गारुड़ेन नृपेश्वरः।
जहास च भृगुं राजा समरे च पुनः पुनः ॥ २१
भृगुर्नारायणास्त्रञ्च चिक्षेप रणमूर्द्धनि।
अस्त्रं ययौ तं निघ्नन्तं शतसूर्य्यसमप्रभम् ॥ २२
दृष्ट्वास्त्रं नृपशार्द्दूलश्चावरुह्य रथात् क्षणात्।
न्यस्तशस्त्रः प्रणनाम स्तुत्वा नारायणं शिवम् ॥२३
तमेव प्रणतं त्यक्त्वा ययौ नारायणान्तिकम्।
अस्त्रराजो भगवतो रामः सम्प्राप विस्मयम् ॥ २४
भृगुः शक्तिञ्च मुषलं तोमरं पट्टिशं तथा।
गदां पर्शुञ्च कोपेन चिक्षेप नृपहिंसया ॥ २५
जग्राह काली तान् सर्व्वांश्चन्द्रस्यन्दनमास्थिता।
चिक्षेप शिवशूलं स नृपमाला बभूव तत् ॥ २६
ददर्श पुरतो रामो भद्रकालीं जगत्प्रसूम्।
वहन्तीं मुण्डमालाञ्च विकटास्यां भयङ्करीम् ॥ २७
विहाय शस्त्रमस्त्रञ्च पिनाकञ्च भृगुस्तदा।
तुष्टाव तां महामायां भक्तिनम्रात्मकन्धरः ॥ २८

परशुराम उवाच।

नमः शङ्करकान्तायै सारायै ते नमो नमः।

नमो दुर्गतिनाशिन्यै मायायै ते नमो नमः ॥ २९
नमो नमो जगद्धात्रे जगत्कर्त्र्यै नमो नमः।
नमोऽस्तु ते जगन्मात्रे कारणायै नमो नमः ॥ ३०
प्रसीद जगतां मातः सृष्टिसंहारकारिणि।
त्वत्पादे शरणं यामि प्रतिज्ञां सार्थकां कुरु ॥ ३१
त्वयि मे विमुखायाञ्च को मां रक्षितुमीश्वरः।
त्वं प्रसन्ना भव शुभे मां भक्तं भक्तवत्सले ॥ ३२
युष्माभिः शिवलोके च मह्यं दत्तो वरः पुरा।
तं वरं सफलं कर्त्तुं त्वमर्हसि वरानने ॥ ३३
परशुरामस्तवं श्रुत्वा प्रसन्नाऽभवदम्बिका।
माभैरित्येवमुक्त्वा तु तत्रैवान्तरधीयत ॥ ३४
एतद्भृगुकृतं स्तोत्रं भक्तियुक्तश्च यः पठेत्।
महाभयात् समुत्तीर्णः स भवेदवलीलया ॥ ३५
स पूजितश्च त्रैलोक्ये त्रैलोक्यविजयी भवेत्।
ज्ञानिश्रेष्ठो भवेच्चैव वैरिपक्षविमर्द्दकः ॥ ३६
इति श्रीब्रह्मवैवर्त्ते भृगुकृतं कालीस्तोत्रम्।
एतस्मिन्नन्तरे ब्रह्मा भृगुं धर्म्मभृतां वरम्।
आगत्य कथयामास रहस्यं राममेव च ॥ ३७

ब्रह्मोवाच।

शृणु राम महाभाग रहस्यं पूर्व्वमेव च।
सुचन्द्रजयहेतुञ्च प्रतिज्ञासार्थकाय च ॥ ३८
दशाक्षरी महाविद्या दत्ता दुर्व्वाससा पुरा।
सुचन्द्रायैव कवचं भद्रकाल्याः सुदुर्लभम् ॥ ३९
कवचं भद्रकाल्याश्च देवानाञ्च सुदुर्लभम्।
कवचं तद्गले तस्य सर्व्वशत्रुविमर्द्दकम् ॥ ४०
अतीवपूज्यं शस्तञ्च त्रैलोक्यजयकारणम्।
तस्मिन् स्थिते च कवचे कस्तं जेतुमलं भुवि ॥ ४१
भृगो गच्छतु भिक्षार्थं करोतु प्रार्थनां नृपम्।
सूर्य्यवंशोद्भवो राजा दाता परमधार्म्मिकः ॥ ४२
प्राणांश्च कवचं मन्त्रं सर्व्वं दास्यति निश्चितम् ॥ ४३
भृगुः सन्न्यासिवेशेन गत्वा राजान्तिकं मुने।
भिक्षां चकार मन्त्रञ्च कवचं परमाद्भुतम् ॥ ४४
राजा ददौ च मन्त्रञ्च कवचं परमादरम्।
ततः शङ्करशूलेन जघान तं नृपं भृगुः ॥ ४५
इति श्रीब्रह्मवैवर्त्ते गणेशखण्डे नारायण-
नारद-संवादे षट्त्रिंशोऽध्यायः ॥३६॥

---

## सप्तत्रिंशोऽध्यायः।

नारद उवाच।

कवचं श्रोतुमिच्छामि ताञ्च विद्यां दशाक्षरीम्।
नाथ त्वत्तो हि सर्व्वञ्च भद्रकाल्याश्च साम्प्रतम् ॥ १

नारायण उवाच।

शृणु नारद वक्ष्यामि महाविद्यां दशाक्षरीम्।
गोपनीयञ्च कवचं त्रिषु लोकेषु दुर्लभम् ॥ २
ओं ह्रीं श्रीं क्लीं कालिकायै स्वाहेति च महामनुम्(क)
दुर्व्वासा हि ददौ राज्ञे पुष्करे सूर्य्यपर्व्वणि ॥ ३
दशलक्षजपेनैव मन्त्रसिद्धिः कृता पुरा।
पञ्चलक्षजपेनैव राज्ञा कवचमुत्तमम् ॥ ४
बभूव सिद्धकवचोऽप्ययोध्यामाजगाम सः।
कृत्स्नां हि पृथिवीं जिग्ये कवचस्य प्रसादतः ॥ ५

नारद उवाच।

श्रुता दशाक्षरी विद्या त्रिषु लोकेषु दुर्लभा।
अधुना श्रोतुमिच्छामि कवचं ब्रूहि मे प्रभो ॥ ६

नारायण उवाच।

शृणु वक्ष्यामि राजेन्द्र कवचं परमाद्भुतम्।
नारायणेन यद्दत्तं कृपया शूलिने पुरा ॥ ७
त्रिपुरस्य वधे घोरे शिवस्य विजयाय च।
तदेव शूलिना दत्तं दुर्व्वाससे पुरा मुने ॥ ८
दुर्व्वाससा च यद्दत्तं सुचन्द्राय महात्मने।
अतिगुह्यतरं तत्त्वं सर्व्वमन्त्रौघविग्रहम् ॥ ९
ओं ह्रीं श्रीं क्लीं कालिकायै स्वाहा मे पातु मस्तक[म्]
क्लीं कपालं सदा पातु ह्रीं ह्रीं ह्रीं इति लोचने॥[१०]
ओं ह्रीं त्रिलोचने स्वाहा नासिकां मे सदाऽवतु।
क्रीं कालिके रक्ष रक्ष स्वाहा दन्तं सदाऽवतु ॥ ११
ह्रीं भद्रकालिके स्वाहा पातु मेऽधरयुग्मकम्।
ओं ह्रीं ह्रीं क्लीं कालिकायै स्वाहा कण्ठं सदाऽवतु[।]
ओं ह्रीं कालिकायै स्वाहा कर्णयुग्मं सदाऽवतु।
ओं क्रीं क्रीं क्रीं काल्यै स्वाहा मम स्कन्धं सदाऽवतु[।]
ओं क्रीं भद्रकाल्यै स्वाहा मम वक्षः सदाऽवतु।
ओं क्रीं कालिकायै स्वाहा मम नाभिं सदाऽवतु॥
ओं ह्रीं कालिकायै स्वाहा मम पृष्ठं सदाऽवतु।
रक्तबीजविनाशिन्यै स्वाहा हस्तौ सदाऽवतु ॥ १५

(क) महामन्त्रमिति बहुपुस्तकसम्मतः पाठः।

ओं क्रीं ह्रीं मुण्डमालिन्यै स्वाहा पादौ सदाऽवतु।
ओं ह्रीं चामुण्डायै स्वाहा सर्व्वाङ्गं मे सदाऽवतु॥१६
प्राच्यां पातु महाकाली आग्नेय्यां रक्तदन्तिका।
दक्षिणे पातु चामुण्डा नैऋत्यां पातु कालिका॥१७
श्यामा च वारुणे पातु वायव्यां पातु चण्डिका।
उत्तरे विकटास्या च ऐशान्यां साट्टहासिनी॥१८
ऊर्द्ध्वं पातु लोलजिह्वा मायाद्या पात्वधः सदा।
जले स्थले चान्तरीक्षे पातु विश्वप्रसूः सदा॥१९
इति ते कथितं वत्स सर्व्वमन्त्रौघविग्रहम्।
सर्व्वेषां कवचानाञ्च सारभूतं परात्परम्॥२०
सप्तद्वीपेश्वरो राजा सुचन्द्रोऽस्य प्रसादतः।
कवचस्य प्रसादेन मान्धाता पृथिवीपतिः॥२१
प्रचेता लोमशश्चैव यतः सिद्धो बभूव ह।
यतो हि योगिनां श्रेष्ठः सौभरिः पिप्पलायनः॥२२
यदि स्यात् सिद्धकवचः सर्व्वसिद्धेश्वरो भवेत्।
महादानानि सर्व्वाणि तपांसि च व्रतानि च।
निश्चितं कवचस्यास्य कलां नार्हन्ति षोडशीम्॥२३
इदं कवचमज्ञात्वा भजेत् कालीं जगत्प्रसूम्।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः॥२४

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-
खण्डे नारायण-नारद-संवादे
सप्तत्रिंशोऽध्यायः॥३७॥

---

## अष्टत्रिंशोऽध्यायः।

नारायण उवाच।

सुचन्द्रे पतिते ब्रह्मन् राजेन्द्राणां शिरोमणौ।
आजगाम पुष्कराक्षः सेनाक्षौहिणीयुतः॥१
सूर्य्यवंशोद्भवो राजा सुचन्द्रतनयो महान्।
महालक्ष्मीसेवकश्च लक्ष्मीमान् सूर्य्यसन्निभः॥२
महालक्ष्म्याश्च कवचं गले यस्य मनोहरम्।
परमैश्वर्य्यसंयुक्तः त्रैलोक्यविजयी ततः॥३
तं दृष्ट्वा भ्रातरः सर्व्वे पर्शुरामस्य धीमतः।
आययुः समरं कर्त्तुं नानाशस्त्रास्त्रपाणयः॥४
राजेन्द्रः शरजालेन च्छादयामास लीलया।
चिच्छिदुः शरजालञ्च ते वीराश्चावलीलया॥५
चिच्छिदुः स्यन्दनं राज्ञस्ते वीराः पञ्चबाणतः।
सारथिं पञ्चबाणेन रथाश्वं दशबाणतः॥६
तद्धनुः सप्तबाणेन तूणञ्च पञ्चबाणतः।
चिच्छिदुस्तद्भ्रातृवर्गान् विप्राः शङ्करशूलतः॥७
ते च व्यक्षौहिणीं सेनां निजघ्नुश्चावलीलया।
हन्तुं नृपेन्द्रं ते वीराः शिवशूलं निचिक्षिपुः।
गले बभूव तच्छूलं राज्ञः पुष्करमालिका॥८
शक्तिञ्च परिघञ्चैव भुशुण्डीं मुद्गरं तथा।
गदाञ्च चिक्षिपुर्विप्राः कोपेन ज्वलदग्नयः॥९
तानि शस्त्राणि चूर्णानि नृपेन्द्रदेहयोगतः।
विस्मिता भ्रातरः सर्व्वे भृगोरेव महामुने॥१०
रथं धनुश्च शस्त्राणि चास्त्राणि विविधानि च।
सेनां प्रस्थापयामास कार्त्तवीर्य्यार्ज्जुनः स्वयम्॥११
राजा स्यन्दनमारुह्य पुष्कराक्षो महाबलः।
चकार शरजालञ्च महाघोरतरं मुने॥१२
चिच्छिदुः शरजालञ्च ते वीराः शस्त्रपाणयः।
राजा प्रस्वापनेनैव निद्रितांस्तांश्चकार ह॥१३
भ्रातॄंश्च निद्रितान् दृष्ट्वा पर्शुरामो महाबलः।
हतशिष्टहतसर्व्वाङ्गान् बोधयामास तत्त्वतः॥१४
बोधयित्वा तान् निवार्य्य जगाम रणमूर्द्धनि।
चिक्षेप पर्शुं कोपेन शीघ्रं राजजिघांसया॥१५
छित्त्वा राज्ञः किरीटञ्च पर्शुर्भूमौ पपात ह।
जग्राह पर्शुं शीघ्रञ्च पर्शुरामो महाबलः॥१६
तदा शङ्करशूलञ्च चिक्षेप मन्त्रपूर्व्वकम्।
नृपस्य कुण्डलं छित्त्वा जगाम शिवसन्निधिम्॥१७
राजा निहन्तुं तं रामं शरजालं चकार ह।
चिच्छेद शरजालञ्च पर्शुरामश्च लीलया॥१८
क्रमेण राजा नानास्त्रं चिक्षेप मन्त्रपूर्व्वकम्।
तच्चिच्छेद क्रमेणैव भृगुः शस्त्रभृतां वरः॥१९
भृगुश्चिक्षेप नानास्त्रं महासन्धानपूर्व्वकम्।
तच्चिच्छेद महाराजः सन्धानेनावलीलया॥२०
रामश्चिक्षेप ब्रह्मास्त्रं सन्धानमन्त्रपूर्व्वकम्।
राजा निर्व्वापणं चक्रे सन्धानेनावलीलया॥२१
सर्व्वाण्यस्त्राणि शस्त्राणि रामः पाशुपतं विना।
चिक्षेप कोपविभ्रान्तो भूपश्चिच्छेद तानि च॥२२
रामः स्मृत्वा शिवं नलाक्षिपत् (क) पाशुपतं मुने।
नारायणश्च भगवानुवाच विप्ररूपधृक्॥२३

(क) क्षिप्तमिति पाठस्तु न सङ्गतः।

ब्राह्मण उवाच।

किं करोषि भृगो वत्स त्वमेव ज्ञानिनां वरः।
नरं हन्तुं पाशुपतं कोपात् किं क्षिपसि भ्रमात् ॥२४
विश्वं पाशुपतेनैव भवेद्भस्म च सत्वरम्।
सर्व्वघ्नञ्च शस्त्रमिदं विना श्रीकृष्णमीश्वरम् ॥ २५
अहं (क) पाशुपतं जेतुमलमेव सुदर्शनम्।
हरेः सुदर्शनञ्चैव सर्व्वास्त्रपरिमर्द्दकम् ॥ २६
पाशुपतं पशुपतेर्हरेरेव सुदर्शनम्।
एते प्रधाने सर्व्वेषां-मस्त्राणाञ्च जगत्त्रये ॥ २७
त्यज पाशुपतं ब्रह्मन् मदीयं वचनं शृणु।
यथा जेष्यसि राजानं पुष्कराक्षं महाबलम् ॥ २८
कार्त्तवीर्य्यमजेतारं यथा जेष्यसि साम्प्रतम्।
श्रूयतां सावधानेन तत् सर्व्वं कथयामि ते ॥२९
महालक्ष्म्याश्च कवचं त्रिषु लोकेषु दुर्लभम्।
भक्त्या च पुष्कराक्षेण धृतं कण्ठे विधानतः ॥ ३०
परं दुर्गतिनाशिन्याः कवचं परमाद्भुतम्।
धृतञ्च दक्षिणे बाहौ पुष्कराक्षसुतेन च ॥ ३१
कवचस्य प्रसादेन विश्वं जेतुं क्षमौ च तौ।
को जेता च त्रिभुवने देहे च कवचे स्थिते ॥ ३२
अहं यास्यामि भिक्षार्थं सन्निधाने तयोर्मुने।
करिष्यामि च तद्भिक्षां प्रतिज्ञासफलाय ते ॥ ३३
ब्राह्मणस्य वचः श्रुत्वा रामः संत्रस्तमानसः।
उवाच ब्राह्मणं वृद्धं हृदयेन विदूयता ॥३४

परशुराम उवाच।

न जानामि महाप्राज्ञ कस्त्वं ब्राह्मणरूपधृक्।
शीघ्रञ्च ब्रूहि मां मूढ़ं तदा गच्छ नृपान्तिकम् ॥ ३५
पर्शुरामवचः श्रुत्वा प्रहस्य ब्राह्मणः स्वयम्।
अहं विष्णुरेवमुक्त्वा ययौ भिक्षितुमीश्वरः ॥ ३६
गत्वा तयोः सन्निधानं ययाचे कवचञ्च तौ।
ददतुस्तौ च कवचे विष्णवे विष्णुमायया।
गृहीत्वा कवचे विष्णुर्वैकुण्ठं प्रजगाम सः ॥ ३७

नारद उवाच।

महालक्ष्म्याश्च कवचं केन दत्तं महामुने।
पुष्कराक्षाय भूपाय श्रोतुं कौतूहलं मम ॥३८
कवचञ्चापि दुर्गायाः पुष्कराक्षसुताय च।
दुर्लभं केन वा दत्तं तद्भवान् वक्तुमर्हति ॥ ३९

(क) अहो इति क्वचित् पाठः।

कवचञ्चापि किम्भूतं तयोश्च तस्य किं फलम्।
मन्त्रौ च तौ किं प्रकारौ तन्मे ब्रूहि जगद्गुरो ॥ ४०

नारायण उवाच।

दत्तं सनत्कुमारेण पुष्कराक्षाय धीमते।
महालक्ष्म्याश्च कवचं मन्त्रश्चापि दशाक्षरः ॥ ४१
स्तवनञ्चापि गोप्यं वै चोक्तं तच्चरितञ्च यत्।
ध्यानञ्च सामवेदोक्तं पूजाविधिमनोहरम् ॥ ४२
दुर्गायाश्चापि कवचं दत्तं दुर्व्वाससा पुरा।
स्तवनञ्चापि गोप्यञ्च मन्त्रश्चापि दशाक्षरः ॥ ४३
पश्चाच्छ्रोष्यसि तत् सर्व्वं देव्याश्च परमाद्भुतम्।
महायुद्धसमारम्भे दत्तं प्रार्थनया च यत् ॥ ४४
महालक्ष्म्याश्च मन्त्रञ्च शृणु तं कथयामि ते।
ओँ श्रीँ कमलवासिन्यै स्वाहेति परमाद्भुतम् ॥ ४५
ध्यानञ्च सामवेदोक्तं शृणु पूजाविधिं मुने।
दत्तं तस्मै कुमारेण पुष्कराक्षाय धीमते ॥ ४६
सहस्रदलपद्मस्थां पद्मनाभप्रियां सतीम्।
पद्मालयां पद्मवक्त्रां पद्मपत्राभलोचनाम् ॥ ४७
पद्मपुष्पप्रियां पद्म-पुष्पतल्पाधिशायिनीम्।
पद्मिनीं पद्महस्ताञ्च पद्ममालाविभूषिताम् ॥ ४८
पद्मभूषणभूषाढ्यां पद्मशोभाविवर्द्धिनीम्।
पद्मकाननं पश्यन्तीं सस्मितां तां भजे मुदा ॥ ४९
चन्दनाष्टदले पद्मे पद्मपुष्पेण पूजयेत्।
गणं सम्पूज्य दत्त्वा चैवोपचाराणि षोड़श ॥ ५०
ततस्तुत्वा च प्रणमेत् साधको भक्तिपूर्व्वकम्।
कवचं श्रूयतां ब्रह्मन् सर्व्वसारं वदामि ते ॥ ५१

नारायण उवाच।

शृणु विप्रेन्द्र पद्मायाः कवचं परमं शुभम्।
पद्मनाभेन यद्दत्तं नाभिपद्मे च ब्रह्मणे ॥ ५२
सम्प्राप्य कवचं ब्रह्मा तत्पद्मे ससृजे जगत्।
पद्मालयाप्रसादेन सलक्ष्मीको बभूव सः ॥ ५३
पद्मालयावरं प्राप्य पाद्मश्च जगतां प्रभुः।
पाद्मेन पद्मकल्पे च कवचं परमाद्भुतम् ॥ ५४
दत्तं सनत्कुमाराय प्रियपुत्राय धीमते।
कुमारेण च यद्दत्तं पुष्कराय च नारद ॥ ५५
यद्धृत्वा पठनाद्ब्रह्मा सर्व्वसिद्धेश्वरो महान्।
परमैश्वर्य्यसंयुक्तः सर्व्वसम्पत्समन्वितः ॥ ५६
यद्धृत्वा च धनाध्यक्षः कुबेरश्च धनाधिपः।

स्वायम्भुवो मनुः श्रीमान् पठनाद्धारणाद्यतः ॥५७
प्रियव्रतोत्तानपादौ लक्ष्मीवन्तौ यतो मुने।
पृथुः पृथ्वीपतिः सद्यो बभूव धारणाद्यतः ॥ ५८
कवचस्य प्रसादेन स्वयं दक्षः प्रजापतिः।
धर्म्मश्च कर्म्मणां साक्षी पाता यस्य प्रसादतः ॥ ५९
यद्धत्ते दक्षिणे बाहौ विष्णुः क्षीरोदशायकः।
भक्त्या बिभर्त्ति कण्ठे च शेषो नारायणांशकः ॥ ६०
यद्धृत्वा वामनं लेभे कश्यपश्च प्रजापतिः।
सर्व्वदेवाधिपः श्रीमान् महेन्द्रो धारणाद्यतः ॥ ६१
राजा मरुत्तो भगवान् बभूव धारणाद्यतः।
त्रैलोक्याधिपतिः श्रीमान् नहुषो यस्य धारणात्॥६२
विश्वं विजिग्ये खट्वाङ्गः पठनाद्धारणाद्यतः।
मुचुकुन्दो यतः श्रीमान् मान्धातृतनयो महान् ॥६३
सर्व्वसम्पत्प्रदस्यास्य कवचस्य प्रजापतिः।
ऋषिश्छन्दश्च बृहती देवी पद्मालया स्वयम् ॥ ६४
धर्म्मार्थ-काम-मोक्षेषु विनियोगः प्रकीर्त्तितः।
पुण्यबीजञ्च महतां कवचं परमाद्भुतम् ॥ ६५
ओँ ह्रीँ कमलवासिन्यै स्वाहा मे पातु मस्तकम्।
श्रीँ मे पातु कपालञ्च लोचने श्रीँ श्रियै नमः ॥ ६६
ओँ श्रीँ श्रियै स्वाहेति च कर्णयुग्मं सदाऽवतु।
ओँ श्रीँ ह्रीँ क्लीँ महालक्ष्म्यै स्वाहा मे पातु नासिकाम्॥६७
ओँ श्रीँ पद्मालयायै च स्वाहा दन्तं सदाऽवतु।
ओँ श्रीँ कृष्णप्रियायै च दन्तरन्ध्रं सदाऽवतु ॥ ६८
ओँ श्रीँ नारायणेशायै मम कण्ठं सदाऽवतु।
ओँ श्रीँ केशवकान्तायै मम स्कन्धं सदाऽवतु ॥६९
ओँ श्रीँ पद्मनिवासिन्यै स्वाहा नाभिं सदाऽवतु।
ओँ ह्रीँ श्रीँ संसारमात्रे मम वक्षः सदाऽवतु ॥ ७०
ओँ श्रीँ श्रीँ कृष्णकान्तायै स्वाहा पृष्ठं सदाऽवतु।
ॐ ह्रीँ श्रीँ श्रियै स्वाहा मम हस्तौ सदाऽवतु ॥७१
ह्रीँ श्रीनिवासकान्तायै मम पादौ सदाऽवतु।
ओँ ह्रीँ श्रीँ क्लीँ श्रियै स्वाहा सर्व्वाङ्गं मे सदाऽवतु ७२
प्राच्यां पातु महालक्ष्मीराग्नेय्यां कमलालया।
पद्मा मां दक्षिणे पातु नैर्ऋत्यां श्रीहरिप्रिया ॥ ७३
पद्मालया पश्चिमे मां वायव्यां पातु श्रीः स्वयम्।
उत्तरे कमला पातु ऐशान्यां सिन्धुकन्यका ॥ ७४
नारायणेशी पातूर्द्ध्वमधो विष्णुप्रियाऽवतु।
सन्ततं सर्व्वतः पातु विष्णुप्राणाधिका मम ॥ ७५

इति ते कथितं वत्स सर्व्वमन्त्रौघविग्रहम्।
सर्व्वैश्वर्य्यप्रदं नाम कवचं परमाद्भुतम् ॥ ७६
सुवर्णपर्व्वतं दत्त्वा मेरुतुल्यं द्विजातये।
यत् फलं लभते धर्म्मी कवचेन ततोऽधिकम् ॥ ७७
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत् तु यः।
कण्ठे वा दक्षिणे बाहौ स श्रीमान् प्रतिजन्मनि ॥ ७८
अस्ति लक्ष्मीर्गृहे तस्य निश्चला शतपूरुषम्।
देवेन्द्रैश्चासुरेन्द्रैश्च सोऽवध्यो निश्चितं भवेत् ॥ ७९
स सर्व्वपुण्यवान् धीमान् सर्व्वयज्ञेषु दीक्षितः।
स स्नातः सर्व्वतीर्थेषु यस्येदं कवचं गले ॥ ८०
यस्मै कस्मै न दातव्यं लोभ-मोह-भयैरपि।
गुरुभक्ताय शिष्याय शरणाय प्रकाशयेत् ॥ ८१
इदं कवचमज्ञात्वा भजेल्लक्ष्मीं जगत्प्रसूम्।
कोटिसङ्ख्यप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ८२

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-
खण्डे नारायण-नारद-संवादे
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशोऽध्यायः।

नारद उवाच।

कवचं कथितं ब्रह्मन् पद्मायाश्च मनोहरम्।
परं दुर्गतिनाशिन्याः कवचं कथय प्रभो ॥ १
पद्माक्षप्राणतुल्यञ्च जीवनं बलकारणम्।
कवचानाञ्च यत् सारं दुर्गासेवनकारणम् ॥ २

नारायण उवाच।

शृणु नारद वक्ष्यामि दुर्गायाः कवचं शुभम्।
श्रीकृष्णेनैव यद्दत्तं गोलोके ब्रह्मणे पुरा ॥ ३
ब्रह्मा त्रिपुरसंग्रामे शङ्कराय ददौ पुरा।
जघान त्रिपुरं रुद्रो यद्धृत्वा भक्तिपूर्व्वकम् ॥ ४
हरो ददौ गौतमाय पद्माक्षाय च गौतमः।
यतो बभूव पद्माक्षः सप्तद्वीपेश्वरो जयी ॥ ५
यद्धृत्वा पठनाद्ब्रह्मा ज्ञानवान् शक्तिमान् भुवि।
शिवो बभूव सर्व्वज्ञो योगिनाञ्च गुरुर्यतः ॥ ६
शिवतुल्यो गौतमश्च बभूव मुनिसत्तमः।
ब्रह्माण्डविजयस्यास्य कवचस्य प्रजापतिः ॥ ७
ऋषिश्छन्दश्च गायत्री देवी दुर्गतिनाशिनी।

ब्रह्माण्डविजयेष्वेव विनियोगः प्रकीर्त्तितः॥ ८
पुण्यतीर्थञ्च महतां कवचं परमाद्भुतम्।
ओं ह्रीं दुर्गतिनाशिन्यै स्वाहा मे पातु मस्तकम्॥९
ह्रीं मे पातु कपालञ्च ओं ह्रीं श्रीमिति लोचने।
पातु मे कर्णयुग्मञ्च ओं दुर्गायै नमः सदा॥ १०
ओं ह्रीं श्रीमिति नासां मे सदा पातु च सर्व्वतः।
ओं ह्रीं क्लीमिति(क)दन्तांश्चपातु क्लीमोष्ठयुग्मकम्॥११
क्लीं श्रीं क्लीं पातु कण्ठञ्च दुर्गे रक्षतु गण्डकम्।
स्कन्धं दुर्गविनाशिन्यै स्वाहा पातु निरन्तरम्॥१२
वक्षो विपद्विनाशिन्यै स्वाहा मे पातु सर्व्वतः।
दुर्गे दुर्गे रक्षणीति स्वाहा नाभिं सदाऽवतु॥ १३
दुर्गे दुर्गे रक्ष रक्ष पृष्ठं मे पातु सर्व्वतः।
ओं ह्रीं दुर्गायै स्वाहा च हस्तौ पादौ सदाऽवतु॥१४
ओं ह्रीं दुर्गायै स्वाहा च सर्व्वाङ्गं मे सदावतु।
प्राच्यां पातु महामाया आग्नेय्यां पातु कालिका॥१५
दक्षिणे दक्षकन्या च नैरृत्यां शिवसुन्दरी।
पश्चिमे पार्व्वती पातु वाराही वारुणे सदा॥ १६
कुवेरमाता कौवेर्य्यां ऐशान्यामीश्वरी सदा।
ऊर्द्ध्वे नारायणी पातु अम्बिकाऽधः सदाऽवतु॥ १७
ज्ञाने ज्ञानप्रदा पातु स्वप्ने निद्रा सदाऽवतु।
इति ते कथितं वत्स सर्व्वमन्त्रौघविग्रहम्॥ १८
ब्रह्माण्डविजयं नाम कवचं परमाद्भुतम्।
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु यत् फलम्॥ १९
सर्व्वव्रतोपवासे च तत् फलं लभते नरः।
गुरुमभ्यर्च्य विधिवद्वस्त्रालङ्कारचन्दनैः॥ २०
कण्ठे वा दक्षिणे वाहौ कवचं धारयेत् तु यः।
स च त्रैलोक्यविजयी सर्व्वशत्रुप्रमर्द्दकः॥ २१
इदं कवचमज्ञात्वा भजेद्दुर्गतिनाशिनीम्।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः॥ २२
कवचं काण्वशाखोक्त-मुक्तं नारद सुन्दरम्।
यस्मै कस्मै न दातव्यं गोपनीयं सुदुर्लभम्॥ २३

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे दुर्गाकवच-कथनं नाम एकोनचत्वारिंशोऽध्यायः॥३९॥

(क) ह्रीं श्रीं ह्रमिति वा पाठः।

## चत्वारिंशोऽध्यायः।

नारायण उवाच।

ते गत्वैला च वैकुण्ठे वैकुण्ठञ्च गते सति।
सपुत्रञ्च सहस्राक्षं जघान भृगुनन्दनः॥ १
कृत्वा युद्धन्तु सप्ताहं ब्रह्मास्त्रेण प्रयत्नतः।
राजा कवचहीनोऽपि सपुत्रश्च पपात ह॥ २
पतिते तु सहस्राक्षे कार्त्तवीर्य्यार्ज्जुनः स्वयम्।
आजगाम महावीरो द्विलक्षाक्षौहिणीयुतः॥ ३
सुवर्णरथमारुह्य रत्नसारपरिच्छदम्।
नानास्त्रं परितः कृत्वा तस्थौ समरमूर्द्धनि॥ ४
पर्शुरामश्च (क) समरे तं राजेन्द्रं ददर्श ह।
रत्नालङ्कारभूषाढ्यं राजेन्द्रकोटिभिः सह॥ ५
रत्नातपत्रभूषाढ्यं रत्नालङ्कारभूषितम्।
चन्दनोक्षितसर्व्वाङ्गं सस्मितं सुमनोहरम्॥ ६
राजा दृष्ट्वा मुनीन्द्रं त-मवरुह्य रथाद्रुतौ।
प्रणम्य रथमारुह्य तस्थौ नृपगणैः सह॥ ७
ददौ शुभाशिषं तस्मै रामश्च समयोचितम्।
प्रत्यावधिगतार्थेञ्च स्वर्गं गच्छेति सानुगः॥ ८
उभयोः सेनयोर्युद्धं बभूव तत्र नारद।
पलायिता रामशिष्या भ्रातरश्च महाबलाः।
क्षतविक्षतसर्व्वाङ्गाः कार्त्तवीर्य्यप्रपीड़िताः॥ ९
नृपस्य शरजालेन रामः शस्त्रभृतां वरः।
न ददर्श स्वसैन्यञ्च राजसैन्यं स्वमेव च॥ १०
चिक्षेप वह्निं रामश्च बभूवाग्निमयं रणे।
निर्व्वापयामास राजा वारुणेनावलीलया॥ ११
चिक्षेप रामो गन्धर्व्वं शैलसर्पसमन्वितम्।
वायव्येन महाराजः प्रेरयामास लीलया॥ १२
चिक्षेप रामो नागास्त्रं दुर्निवार्य्यं भयङ्करम्।
गारुड़ेन महाराजः प्रेरयामास लीलया॥ १३
माहेश्वरञ्च भगवांश्चिक्षेप भृगुनन्दनः।
निर्व्वापयामास राजा वैष्णवास्त्रेण लीलया॥
भृगुश्चिक्षेप ब्रह्मास्त्रं नृपनाशाय नारद।
ब्रह्मास्त्रेण च भूपस्य प्राप निर्व्वापणं रणे॥ १
दत्तदत्तञ्च यच्छूल-मव्यर्थं मन्त्रपूर्व्वकम्।
जग्राह राजा समरे पर्शुरामवधाय च॥ १६

(क) परशुरामश्चेति पाठे छन्दोभङ्गः सोढ़व्यः।

शूलं ददर्श रामश्च शतसूर्य्यसमप्रभम्।
प्रलयाग्निशिखोद्रिक्तं दुर्निवार्य्यं सुरैरपि॥ १७
पपात शूलं समरे रामस्योपरि नारद।
मूर्च्छामवाप स भृगुः पपात च हरिं स्मरन्॥ १८
पतिते पर्शुरामे च सर्व्वे देवा भयाकुलाः।
आजग्मुः समरं तत्र ब्रह्म-विष्णु-महेश्वराः॥ १९
शङ्करश्च महाज्ञानी महाज्ञानेन लीलया।
ब्राह्मणं जीवयामास तूर्णं नारायणाज्ञया॥ २०
भृगुश्च चेतनां प्राप्य ददर्श पुरतः सुरान्।
ननाम परं भक्त्या लज्जानम्रात्मकन्धरः॥ २१
राजा दृष्ट्वा सुरेशांश्च भक्तिनम्रात्मकन्धरः।
प्रणम्य शिरसा मूर्द्ध्ना तुष्टाव परमेश्वरान्॥ २२
तत्राजगाम भगवान् दत्तात्रेयो रणस्थलम्।
शिष्यरक्षानिमित्तेन कृपालुर्भक्तवत्सलः॥ २३
भृगुः पाशुपतास्त्रञ्च जग्राह कोपसंयुतः।
दत्तदत्तेन दृष्टेन बभूव स्तम्भितो रणे॥ २४
ददर्श स्तम्भितो रामो राजानं रणमूर्द्धनि।
नानापार्षदयुक्तेन कृष्णेन रक्षितं रणे॥ २५
सुदर्शनं प्रज्वलन्तं भ्रमणं कुर्व्वता सदा।
रक्षितेन स्तुतेनैव ब्रह्म-विष्णु-महेश्वरैः॥ २६
गोपालशतयुक्तेन गोपवेशविधारिणा।
नवीनजलदाभेन वंशीहस्तेन वादयन्॥ २७
एतस्मिन्नन्तरे तत्र वाग्बभूवाशरीरिणी।
दत्तेन दत्तं कवचं कृष्णस्य परमात्मनः॥ २८
राज्ञोऽस्ति दक्षिणे बाहौ सद्रत्नगुटिकान्वितम्।
गृहीतकवचे शम्भौ भिक्षया योगिनां गुरौ॥ २९
तदा हन्तुं नृपं शक्तो भृगुश्चेति च नारद।
श्रुत्वाऽशरीरिणीं वाणीं शङ्करो द्विजरूपधृक्॥ ३०
भिक्षां कृत्वा तु कवच-मानीय च नृपस्य च।
शम्भुना भगवे दत्तं कृष्णस्य कवचञ्च यत्॥ ३१
एतस्मिन्नन्तरे देवा जग्मुः स्वस्थानमुत्तमम्।
उवाच पर्शुरामश्च राजानं समरं प्रति॥ ३२

परशुराम उवाच।

राजेन्द्रोत्तिष्ठ समरं कुरु साहसपूर्व्वकम्।
कालभेदे जयो नृणां कालभेदे पराजयः॥ ३३
अधीतं विधिवद्दत्तं कृत्स्ना पृथ्वी सुशासिता।
यशः कृतञ्च संग्रामे त्वयाहं मूर्च्छितोऽधुना॥ ३४
जिताः सर्व्वे च राजेन्द्रा लीलया रावणो जितः।
जितोऽहं दत्तशूलेन शम्भुना जीवितः पुनः॥ ३५
रामस्य वचनं श्रुत्वा राजा परमधार्म्मिकः।
मूर्द्ध्ना प्रणम्य तं भक्त्या यथार्थोक्तिमुवाच ह॥ ३६

राजोवाच।

किमधीतं किं वा दत्तं का वा पृथ्वी सुशासिता।
गताः कतिविधा भूपा मादृशा धरणीतले॥ ३७
बुद्धिस्तेजो विक्रमश्च विविधा रणमन्त्रणा।
श्रीरैश्वर्य्यं तथा ज्ञानं दानशक्तिश्च लौकिकम्॥ ३८
आचारो विनयो विद्या प्रतिष्ठा परमं तपः।
सर्व्वं मनोरमासङ्गे गतमेव मम प्रभो॥ ३९
सा च स्त्रीप्राणतुल्या मे साध्वी पद्मांशसम्भवा।
यत्रेषु पत्नी मातेव स्नेहे क्रीड़नसङ्गिनी॥ ४०
आबाल्यात् सङ्गिनी शश्वच्छयने भोजने रणे।
तां विना प्राणहीनोऽहं विषहीनो यथोरगः॥ ४१
त्वया न दृष्टं युद्धं मे पुरेयं शोचना स्थिता।
द्वितीयशोचना विप्र हतोऽहं ब्राह्मणेन च॥ ४२
काले सिंहः शृगालञ्च शृगालः सिंहमेव च।
काले व्याघ्रं हन्ति मृगो गजेन्द्रं हरिणस्तथा॥ ४३
मक्षिकां मक्षिका काले गरुड़ञ्च तथोरगः।
किङ्करः स्तौति राजेन्द्रं काले राजा च किङ्करम्॥ ४४
इन्द्रश्च मानवः काले काले ब्रह्मा मरिष्यति।
तिरोभूता च प्रकृतिः काले श्रीकृष्णविग्रहे॥ ४५
मरिष्यन्ति सुराः सर्व्वे त्रिलोकस्थाश्चराचराः।
सर्व्वे काले लयं यान्ति कालो हि दुरतिक्रमः॥ ४६
कालस्य कालः श्रीकृष्णः स्रष्टुः स्रष्टा यथेच्छया।
संहर्त्ता चैव संहर्त्तुः पातुः पाता परात्परः॥ ४७
महान् स्थूलात् स्थूलतमः सूक्ष्मात् सूक्ष्मतमः क्रमः।
परमाणुपरः कालः कालश्च कालभेदकः॥ ४८
यस्य लोमानि विश्वानि स पुमांश्च महाविराट्।
तेजसा षोड़शांशश्च कृष्णस्य परमात्मनः॥ ४९
ततः क्षुद्रविराड्जातः सर्व्वेषां कारणं परम्।
यः स्रष्टा च स्वयं ब्रह्मा यन्नाभिकमलोद्भवः॥ ५०
नाभेः कमलदण्डस्य योऽन्तं न प्राप यत्नतः।
भ्रमणाल्लक्षवर्षञ्च ततः स्वस्थानसंस्थितः॥ ५१
तपश्चक्रे ततस्तत्र लक्षवर्षञ्च वायुभुक्।
ततो ददर्श गोलोकं श्रीकृष्णञ्च सपार्षदम्॥ ५२

गोपगोपीपरिवृतं द्विभुजं मुरलीकरम्।
रत्नसिंहासनस्थञ्च राधावक्षःस्थलस्थितम् ॥ ५३
दृष्ट्वानुज्ञां गृहीत्वा च प्रणम्य च पुनः पुनः।
ईश्वरेच्छाञ्च विज्ञाय स्रष्टुं सृष्टिं मनो दधे ॥ ५४
यः शिवः सृष्टिसंहर्त्ता स च स्रष्टुर्ललाटजः।
विष्णुः पाता क्षुद्रविराट् श्वेतद्वीपनिवासकृत् ॥ ५५
सृष्टिकारणभूताश्च ब्रह्मा-विष्णु-महेश्वराः।
सन्ति विश्वेषु सर्व्वेषु श्रीकृष्णस्य कलोद्भवाः ॥ ५६
तेऽपि देवाः प्राकृतिकाः प्राकृतश्च महाविराट्।
सर्व्वप्रसूता प्रकृतिः श्रीकृष्णः प्रकृतेः परः ॥ ५७
न शक्तः परमेशोऽपि तां शक्तिं प्रकृतिं विना।
सृष्टिं विधातुं मायेशो न सृष्टिर्मायया विना ॥ ५८
सा च कृष्णे तिरो भूत्वा सृष्टिसंहारपालके।
साविर्भूता सृष्टिकाले सा च नित्या महेश्वरी ॥ ५९
कुलालश्च घटं कर्त्तुं यथाऽशक्तो मृदं विना।
स्वर्णं विना स्वर्णकारः कुण्डलं कर्त्तुमक्षमः ॥ ६०
सा च शक्तिः सृष्टिकाले पञ्चधा चेश्वरेच्छया।
राधा पद्मा च सावित्री दुर्गा देवी सरस्वती ॥ ६१
प्राणाधिष्ठात्री या देवी कृष्णस्य परमात्मनः।
प्राणाधिकप्रियतमा सा राधा परिकीर्त्तिता ॥६२
ऐश्वर्य्याधिष्ठातृदेवी सर्व्वमङ्गलकारिणी।
परमानन्दरूपा च सा लक्ष्मीः परिकीर्त्तिता ॥ ६३
विद्याधिष्ठातृदेवी या परमेशस्य दुर्लभा।
वेदशास्त्रयोगमाता सा सावित्री प्रकीर्त्तिता ॥ ६४
बुद्ध्यधिष्ठात्री या देवी सर्व्वशक्तिस्वरूपिणी।
सर्व्वज्ञानात्मिका सर्व्वा सा दुर्गा दुर्गनाशिनी ॥ ६५
वागधिष्ठात्री या देवी शास्त्रज्ञानप्रदा सदा।
कृष्णकण्ठोद्भवा सा च या च देवी सरस्वती ॥ ६६
पञ्चधादौ स्वयं देवी मूलप्रकृतिरीश्वरी।
ततः सृष्टिक्रमेणैव बहुधा कलया च सा ॥ ६७
योषितः प्रकृतेरंशाः पुमांसः पुरुषस्य च।
मायया सृष्टिकाले च तद्विना न भवेद्भवः ॥ ६८
सृष्टिश्च प्रतिविश्वेषु ब्रह्मन् ब्रह्मोद्भवा सदा।
पाता विष्णुश्च संहर्त्ता शिवः शश्वच्छिवप्रदः ॥ ६९
इत्तदत्तं ज्ञानमिदं राम मह्यञ्च पुष्करे।
दीक्षाकाले च माघ्याञ्च मुनिप्रवरसन्निधौ ॥ ७०
इत्युक्त्वा कार्त्तवीर्य्यश्च रामं नत्वा च सस्मितः।
आरुरोह रथं शीघ्रं गृहीत्वा सशरं धनुः ॥ ७१
रामस्ततो राजसैन्यं ब्रह्मास्त्रेण जघान ह।
नृपं पाशुपतेनैव लीलया श्रीहरिं स्मरन् ॥ ७२
एवं त्रिःसप्तकृत्वश्च क्रमेण च वसुन्धराम्।
रामश्चकार निर्भूपां लीलया च शिवं स्मरन् ॥ ७३
गर्भस्थं मातृक्रोड़स्थं शिशुं वृद्धञ्च मध्यमम्।
जघानं क्षत्रियं रामः प्रतिज्ञापालनाय वै ॥ ७४
कार्त्तवीर्य्यश्च गोलोकं जगाम कृष्णसन्निधिम्।
जगाम पर्शुरामश्च स्वालयं श्रीहरिं स्मरन् ॥ ७५
त्रिःसप्तकृत्वो निर्भूपां मह्रीं दृष्ट्वा महेश्वरः।
पर्शुना रमणं दृष्ट्वा पर्शुरामं चकार तम् ॥ ७६
देवाश्च मुनयो देव्यः सिद्ध-गन्धर्व्व-किन्नराः।
सर्व्वे चक्रुः पुष्पवृष्टिं राममूर्द्धनि नारद ॥ ७७
स्वर्गे दुन्दुभयो नेदुर्हरिशब्दो बभूव ह।
पर्शुरामस्य यशसा शुभ्रेण पूरितं जगत् ॥ ७८
ब्रह्मा भृगुश्च शुक्रश्च च्यवनो वाल्मिकिस्तथा।
जमदग्निर्ब्रह्मलोका-दाजगाम प्रहर्षितः ॥ ७९
पुलकाञ्चितसर्व्वाङ्गाः सानन्दाश्रुसमन्विताः।
दूर्व्वा-पुष्प-कराः सर्व्वे कुर्व्वन्तो मङ्गलाशिषम् ॥ ८०
प्रणनाम च तान् रामो दण्डवत् पतितो भुवि।
क्रोड़े चकार ब्रह्मादी क्रमात् तातेति संवदन् ॥ ८१
तमुवाच स्वयं ब्रह्मा पर्शुरामं जगद्गुरुः।
हितं नीतं वेदसारं परिणामसुखावहम् ॥ ८२

ब्रह्मोवाच।

शृणु राम प्रवक्ष्यामि सर्व्वसम्मतसारं परम्।
काण्वशाखोक्तवचनं सत्यञ्च सर्व्वसम्मतम् ॥ ८३
पूज्यानामेव सर्व्वेषामिष्टः पूज्यतमः परः।
जनको जन्मदानाच्च पालनाच्च पिता स्मृतः ॥ ८४
गरीयान् जन्मदातुश्च सोऽन्नदाता पिता मुने।
विनान्नं नश्वरो देहोऽनित्यश्च पितुरुद्भवः ॥ ८५
तयोः शतगुणैर्माता पूज्या मान्या च वन्दिता।
गर्भधारण-पोषाभ्यां सा च ताभ्यां गरीयसी ॥ ८६
तेभ्यः शतगुणैः पूज्योऽभीष्टदेवः श्रुतौ श्रुतः।
ज्ञान-विद्या-मन्त्रदाताऽभीष्टदेवात् परो गुरुः ॥८७
गुरुवद्गुरुपुत्रश्च गुरुपत्नी ततोऽधिका।
देवे रुष्टे गुरू रक्षेद्गुरौ रुष्टे न कश्चन ॥ ८८
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।

गुरुरेव परं ब्रह्म ब्राह्मणेभ्यः प्रियः परः ॥ ८९
गुरुर्ज्ञानं ददात्येव ज्ञानञ्च हरिभक्तिदम्।
हरिभक्तिप्रदाता यः को वा बन्धुस्ततः परः ॥ ९०
अज्ञानतिमिराच्छन्नो ज्ञानदीपं यतो लभेत्।
लब्धा च निर्म्मलं पश्येत् को वा बन्धुस्ततः परः ॥ ९१
गुरुदत्तञ्च मन्त्रञ्च जप्त्वा ज्ञानं ततो लभेत्।
सर्व्वज्ञत्वञ्च सिद्धिञ्च को वा बन्धुस्ततोऽधिकः ॥ ९२
सुखं जयति सर्व्वत्र विद्यया गुरुदत्तया।
यया पूज्योऽपि जगति को वा बन्धुस्ततोऽधिकः॥९३
विद्यान्धो वा धनान्धो वा यो मूढ़ो न भजेद्गुरुम्।
ब्रह्महत्याधिकं पापं लभते नात्र संशयः ॥ ९४
दरिद्रं पतितं क्षुद्रं नरबुद्ध्याचरेद्गुरुम्।
सोऽशुचिस्तीर्थस्नातोऽपि नाधिकारी च कर्म्मसु॥९५
अभीष्टदेवः श्रीकृष्णो गुरुस्ते शङ्करः स्वयम्।
शरणं गच्छ हे पुत्र देवात् पूज्यतमं गुरुम् (क)॥९६
निःक्षत्रकृत्वो निर्भूपा त्वया पृथ्वी कृता यतः।
प्राप्ता त्वया हरेर्भक्तिस्तं शिवं शरणं व्रज ॥ ९७
शिवञ्च शिवरूपञ्च शिवदं शिवकारणम्।
शिववाक्यं शिवेशं तं गुरुं त्वं शरणं व्रज ॥ ९८
गोलोकनाथो भगवानंशेन शिवरूपधृक्।
इष्टदेवश्च स गुरुस्तमेव शरणं व्रज ॥ ९९
आत्मा कृष्णः शिवो ज्ञानं मनोऽहं सर्व्वजीविषु।
प्राणा विष्णोश्च प्रकृतिः सर्व्वशक्तियुता सुत ॥ १००
ज्ञानदं ज्ञानरूपञ्च ज्ञानबीजं सनातनम्।
मृत्युञ्जयं कालकालं तं गुरुं शरणं व्रज ॥ १०१
ब्रह्मज्योतिःस्वरूपं तं भक्तानुग्रहविग्रहम्।
शरणं व्रज सर्व्वज्ञं भगवन्तं सनातनम् ॥ १०२
प्रकृतिर्लङ्घनञ्च तपस्तप्त्वा यमीश्वरम्।
कान्तं प्रियपतिं लेभे तं गुरुं शरणं व्रज ॥ १०३
इत्युक्त्वा मुनिभिः सार्द्धं जगाम कमलोद्भवः।
रामश्च गन्तुं कैलासं मनश्चक्रे च नारद ॥ १०४

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-
खण्डे नारायण-नारद-संवादे
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

(क) देवमर्च्च्य जगद्गुरुमिति पाठान्तरम्।

## एकचत्वारिंशोऽध्यायः।

नारायण उवाच।

हरेश्च कवचं धृत्वा कृत्वा निःक्षत्रियां महीम्।
रामो जगाम कैलासं नमस्कर्त्तुं शिवं गुरुम् ॥ १
गुरुपत्नीं शिवामम्बां द्रष्टुं गुरुसुतौ च तौ।
गुणैर्नारायणसमौ कार्त्तिकेय-गणेश्वरौ ॥ २
मनोयायी महात्मा च शीघ्रं सम्प्राप्य तत्क्षणम्।
ददर्श नगरं रम्य-मतीव-सुमनोहरम् ॥ ३
शुद्धस्फटिकसङ्काशै-मणिभिः सुमनोहरैः।
सुवर्णभूमिसदृशै राजमार्गैर्विराजितम् ॥ ४
सिन्दूराकारवर्णैश्च वेष्टितं मणिवेदिभिः।
संयुक्तं मुक्तानिलयैः पूरितं मणिमण्डपैः ॥ ५
यक्षाणामालयैर्दिव्यैः संयुक्तं शतकोटिभिः।
कपाटस्तम्भसोपानैः शोभितैर्म्मणिनिर्म्मितैः ॥ ६
सुवर्णकलसैर्दिव्यै राजितैः श्वेतचामरैः।
रत्नकाञ्चनपूर्णैश्च यक्षेन्द्रगणवेष्टितैः ॥ ७
रत्नभूषणभूषाढ्यै-र्दीपितैः सुन्दरीगणैः।
बालिकाभिर्बालकैश्च चित्तपुत्तलिकाकरैः ॥ ८
क्रीड़द्भिः सस्मितैः शश्वत् स्वच्छन्दञ्च विराजितैः।
पारिजातद्रुमगणैः स्वर्णदीतीरनीरजैः ॥ ९
आकीर्णं पुष्पजालैश्च पुष्पितैश्च सुगन्धिभिः।
कल्पवृक्षाश्रितैः सिद्धैः कामधेनुपुरस्कृतैः ॥ १०
सिद्धविद्याधिनिपुणैः पुण्यवद्भिर्निषेवितम्।
वटवृक्षैरक्षयैश्च त्रिलक्षयोजनोच्छ्रितैः ॥ ११
शतयोजनविस्तीर्णैः शतस्कन्धसमन्वितैः।
असंख्यशाखानिकरै-रसंख्यफलसंयुतैः ॥ १२
नानापक्षिगणाकीर्णैः सुमनोहरशब्दितैः।
कम्पितैः शीतवातेन मण्डितञ्च सुगन्धिना ॥ १३
पुष्पोद्यानसहस्रेण सरसाञ्च शतेन च।
सिद्धेन्द्रालयलक्षैश्च मणिरत्नविकारजैः ॥ १४
रामश्च दृष्ट्वा नगर-मतीवहृष्टमानसः।
ददर्श पुरतो रम्यं श्रीयुक्तं शङ्कराश्रमम् ॥ १५
सुवर्णस्थूलशतकैर्मणिभिः स्वर्णवर्णकैः।
खचितं रत्नसारेण रचितं विश्वकर्म्मणा ॥ १६
चतुर्योजनविस्तीर्णं त्रिपञ्चयोजनोच्छ्रितम्।
चतुरस्रं चतुष्कोणं प्राकारं सुमनोहरम् ॥ १७

द्वारं रत्नकपाटेन नानाचित्रान्वितेन च।
युक्तं मणीन्द्रवेदीभिर्मणिस्तम्भविराजितैः ॥ १८
तद्दक्षिणे वृषेन्द्रञ्च वामे सिंहञ्च नारद।
नन्दीश्वरं महाकालं पिङ्गलाक्षं भयङ्करम् ॥ १९
विशालाक्षञ्च वाणञ्च विरूपाक्षं महाबलम्।
विकटाक्षं भास्कराक्षं रक्ताक्षं विकटोदरम् ॥ २०
संहारभैरवं काल-भैरवञ्च भयङ्करम्।
रुरु-भैरवमीशाभं महा-भैरवमेव च ॥ २१
कृष्णाङ्ग-भैरवञ्चैव क्रोध-भैरवमुल्बणम्।
कपाल-भैरवञ्चैव रुद्र-भैरवमेव च ॥ २२
सिद्धेन्द्रांश्च रुद्रगणान् विद्याधरांश्च गुह्यकान्।
भूतान्प्रेतान्पिशाचांश्चकुष्माण्डान् ब्रह्मराक्षसान्२३
वेतालान् दानवांश्चैव योगीन्द्रांश्च जटाधरान्।
यक्षान् किम्पुरुषांश्चैव किन्नरांश्च ददर्श ह ॥ २४
तान् दृष्ट्वा नन्दीकेशाज्ञां गृहीत्वा भृगुनन्दनः।
तान् सम्भाष्याभ्यन्तरञ्च जगामानन्दमानसः ॥ २५
रत्नेन्द्रसारनिर्म्माणं ददर्श शतमन्दिरम्।
अमूल्यरत्नकलसैर्ज्ज्वलद्भिश्च विराजितम् ॥ २६
अमूल्यरत्नरचितैर्मुक्तानिर्म्मलदर्पणैः।
हीरासारविकारैश्च कपाटैश्च विराजितम् ॥ २७
गोरोचनाभिर्मणिभिर्युतं स्तम्भसहस्रकैः।
मणिसारविकारैश्च सोपानैः परिशोभितम् ॥ २८
ददर्शाभ्यन्तरं द्वारं नानाचित्रेण चित्रितम्।
मुक्तामाणिक्यग्रथितैर्मालाजालैर्विराजितम् ॥ २९
ददर्श कार्त्तिकं वामे दक्षिणे च गणेश्वरम्।
वीरभद्रं महाकायं शिवतुल्यपराक्रमम् ॥ ३०
प्रधानपार्षदगणान् क्षेत्रपालांश्च नारद।
रत्नसिंहासनस्थांश्च रत्नभूषणभूषितान् ॥ ३१
तान् सम्भाष्य भृगुः शीघ्रं महाबलपराक्रमः।
परशुहस्तः परशुरामो गमनं कर्त्तुमुद्यतः ॥ ३२
गच्छन्तं तं गणेशश्च क्षणं तिष्ठेत्युवाच ह।
निद्रितो निद्रया युक्तो महादेवोऽधुनेति च ॥ ३३
ईश्वराज्ञां गृहीत्वाहमत्रागत्य क्षणान्तरे।
त्वया सार्द्धं गमिष्यामि भ्रातस्तिष्ठेति साम्प्रतम् ॥३४
श्रुत्वा गणेशवचनं परशुरामो महाबलः।
बृहस्पतिसमो वक्ता प्रवक्तुमुपचक्रमे ॥ ३५

इति ब्र० महा० गणे० एकचत्वारिंशोऽध्यायः ॥४१

## द्विचत्वारिंशोऽध्यायः।

परशुराम उवाच।

यास्याम्यन्तःपुरं भ्रातः प्रणामं कर्त्तुमीश्वरम्।
प्रणम्य मातरं भक्त्या यास्यामि त्वरितं गृहम् ॥
त्रिःसप्तकृत्वो निर्भूपा कृता पृथ्वी च लीलया।
कार्त्तवीर्य्यः सुचन्द्रश्च हतो यस्य प्रसादतः ॥ २
नानाविद्या यतो लब्धा नानाशास्त्रं सुदुर्लभम्।
तं गुरुं जगतां नाथं द्रष्टुमिच्छामि साम्प्रतम् ॥ ३
सगुणं निर्गुणञ्चैव भक्तानुग्रहविग्रहम्।
सत्यं सत्यस्वरूपञ्च ब्रह्मज्योतिः सनातनम् ॥ ४
स्वेच्छामयं दयासिन्धुं दीनबन्धुं मुनीश्वरम्।
आत्मारामं पूर्णकामं व्यक्ताव्यक्तं परात्परम् ॥ ५
परापराणां स्रष्टारं पुरस्कृतं पुरस्कृतम्।
पुराणं परमात्मान-मीशानमादिमव्ययम् ॥ ६
सर्व्वमङ्गलमङ्गल्यं सर्व्वमङ्गलकारणम्।
सर्व्वमङ्गलदं शान्तं सर्व्वैश्वर्य्यप्रदं वरम् ॥ ७
आशुतोषं प्रसन्नास्यं शरणागतवत्सलम्।
भक्ताभयप्रदं भक्त-वत्सलं समदर्शनम् ॥ ८
इत्युक्त्वा परशुरामश्च तस्थौ गणपतेः पुरः।
वाचा मधुरया तत्र तमुवाच गणेश्वरः ॥ ९

गणेश उवाच।

क्षणं तिष्ठ क्षणं तिष्ठ शृणु भ्रातरिदं वचः।
रहःस्थलनियुक्तश्च न दृष्टः स्त्रीयुतः पुमान् ॥ १०
स्त्रीसंयुक्तञ्च पुरुषं यः पश्यति नराधमः।
करोति रसभङ्गं वा कालसूत्रं व्रजेद्ध्रुवम् ॥ ११
तत्र तिष्ठति पापीयान् यावच्चन्द्रदिवाकरौ।
विशेषतश्च पितरं गुरुं भूतपतिं द्विज ॥ १२
रहः सुरतिसंसक्तं न हि पश्येद्विचक्षणः।
कामतः कोपतो वापि यः पश्येत् सुरतोन्मुखम् ॥१
स्त्रीविच्छेदो भवेत् तस्य ध्रुवं सप्तसु जन्मसु।
श्रोणीं वक्षःस्थलं वक्त्रं यः पश्यति परस्त्रियाः।
कामतोऽपि विमूढश्च सोऽन्धो भवति निश्चितम् ॥ १
गणेशस्य वचः श्रुत्वा प्रहस्य भृगुनन्दनः।
तमुवाच महाकोपान्निष्ठुरं वचनं मुने ॥ १५

परशुराम उवाच।

अहो श्रुतं किं वचन-मपूर्व्वं नीतमुत्तमम्।

इदमेव नयं नैवं श्रुतमीश्वरवक्त्रतः ॥ १६
श्रुतं श्रुतौ वाक्यमिदं कामिनाञ्च विकारिणाम्।
निर्विकारस्य च शिशोर्न दोषः कश्चिदेव हि ॥ १७
यास्यस्यन्तःपुरं भ्रातस्तव किं तिष्ठ बालक।
यथादृष्टि करिष्यामि कार्य्यञ्च समयोचितम् ॥ १८
तथैव तातो माता च एवमेव निरूपितम्।
जगतां पितरौ तौ च पार्व्वतीपरमेश्वरौ ॥ १९
पार्व्वती स्त्री पुमान् शम्भुरिति केन निरूपितः।
सर्व्वरूपः शङ्करश्च सर्व्वरूपा च पार्व्वती ॥ २०
गुणातीतस्य का क्रीड़ा तद्भङ्गो वा कुतो विभो।
क्रीड़ा लज्जा भीतिर्भङ्गो शाम्भस्य नेश्वरस्य च।
स्तनान्धं बालकं दृष्ट्वा पित्रोर्लज्जा कुतो भवेत् ॥ २१
लज्जायाश्च कुतो लज्जा लज्जेशस्य च तत् कुतः।
लज्जा लज्जामवाप्नोति तापं किं वा हुताशनः ॥२२
शीतं शीतमहो विप्र निदाघो दाहमेव च।
भीतिर्भीतिमवाप्नोति मृत्योर्मृत्युर्बिभेति किम् ॥ २३
कुतो ज्वरो ज्वरं हन्ति व्याधिं व्याधिश्च जीर्य्यति।
संहर्त्तारञ्च संहर्त्ता कालः कालाद्विभेति च ॥ २४
स्रष्टा सृजति स्रष्टारं पाता स्वं पाति तन्मतः।
क्षुत् क्षुधं समवाप्नोति तृष्णा तृष्णां प्रयाति किम् २५
निद्रा निद्राञ्च श्रीः शोभां शान्तिः शान्तिञ्च तन्मतः।
पुष्टिः पुष्टिमवाप्नोति तुष्टिस्तुष्टिं क्षमा क्षमाम्।
आत्मनः परमात्मास्ति शक्तिः शक्तेर्बिभेति किम् ॥२६
लोभ-मोह-काम-क्रोधाः स्वात्मना न हि बाधिताः।
दया न वद्धा दयया नेच्छा बलेच्छया प्रभो ॥ २७
ज्ञान-बुद्ध्योः को विकारो जरामाबाधते जराम्।
चिन्ता न चिन्तया ग्रस्ता चक्षुः स्वञ्च न पश्यति ॥२८
हर्षो मुदं किं प्राप्नोति शोकं शोको न बाधते।
का विपत्तिविपत्तेश्च सम्पत्तिः सम्पदः कुतः ॥ २९
मेधाया धारणा शक्तिः स्मृतेर्वा स्मरणं कुतः।
न दग्धः स्वप्रतापेन विवस्वानिति सम्मतः ॥ ३०
विपरीतमतो भ्रातस्त्वयैवाचरितोऽधुना।
न श्रुतोऽयं गुरुमुखान्न दृष्टश्च श्रुतौ श्रुतः ॥ ३१
इत्युक्त्वा पर्शुरामश्च प्रहस्य च पुनः पुनः।
शीघ्रं गन्तुं मनश्चक्रे गुरोरभ्यन्तरं मुदा ॥ ३२
पर्शुरामवचः श्रुत्वा जितक्रोधो गणेश्वरः।
शुद्धसत्त्वस्वरूपश्च प्रहस्य तमुवाच ह ॥ ३३

गणेश उवाच।

अज्ञानतिमिराच्छन्नो ज्ञानं प्राप्नोति ज्ञानिनः।
पितुर्भ्रातुर्मुखाज्ज्ञानं दुर्लभं भाग्यवान् लभेत् ॥ ३४
श्रुतं ज्ञानं विशिष्टञ्च ज्ञानिनामपि दुर्लभम्।
किञ्चिन्मम मन्दबुद्धेः शृणु भ्रातर्निवेदनम् ॥ ३५
यो निर्गुणः स निर्लिप्तः शक्तिभ्यो न हि संयुतः।
विष्णुचुराश्रितः शक्तौ निर्गुणः सगुणो भवेत्(क) ॥३६
यावन्ति च शरीराणि भोगार्हाणि महामुने।
प्राकृतानि च सर्व्वाणि श्रीकृष्णविग्रहं विना ॥ ३७
ध्यायन्ते योगिनस्तञ्च शुद्धज्योतिःस्वरूपिणम्।
हस्तपादादिरहितं निर्गुणं प्रकृतेः परम् ॥ ३८
वैष्णवास्तं नमस्यन्ति भक्तानुग्रहकारकम्।
कुतो बभूव तज्ज्योतिरहो तेजस्विना विना ॥ ३९
ज्योतिरभ्यन्तरे नित्यं शरीरं श्यामसुन्दरम्।
द्विभुजं मुरलीहस्तं सस्मितं पीतवाससम् ॥ ४०
अतीवामूल्यसद्रत्न-भूषणेन विभूषितम्।
ज्योतिरभ्यन्तरे मूर्त्तिं पश्यन्ति कृपया विभोः(ख)॥४१
तदा दास्ये नियुक्तास्ते भवन्त्येवेश्वरेच्छया।
योगस्तपो वा दास्यस्य कलां नार्हति षोड़शीम्॥४२
यदा सृष्ट्युन्मुखः कृष्णः ससृजे प्रकृतिं मुदा।
स तस्यां वीर्य्यपातञ्च वीर्य्याड्डिम्बो बभूव ह (ग) ४३
दिव्येन लक्षवर्षेण गर्भाड्डिम्बो विनिर्गतः।
तदा चकार निश्वासं ततो वायुर्बभूव ह ॥ ४४
निश्वासेन समं भ्रातर्मुखविन्दुर्विनिर्गतः।
ततो बभूव सहसा जलराशिर्हरेः पुरः ॥ ४५
तज्जले च स्थितो डिम्बो दिव्यवर्षञ्च लक्षकम्।
ततो बभूव सहसा विश्वाधारो महाविराट् ॥ ४६
यावन्ति गात्रे लोमानि तस्य सन्ति महात्मनः।
ब्रह्माण्डानि च तावन्ति विद्यमानानि निश्चितम् ॥४७
तत्रैव प्रतिब्रह्माण्डे ब्रह्म-विष्णु-महेश्वराः।
देवाश्च मुनयश्चैव विद्यमानाश्चराचराः ॥ ४८
महाविराड़ाश्रयश्च सर्व्वस्य च जनस्य च।
निश्वासवायुर्भगवान् बभूव श्रीहरेर्मुने ॥ ४९

(क) एष श्लोकः क्वचित् पुस्तके नास्ति।
(ख) विभो इति पाठः क्वाचित्कः।
(ग) तद्योनौ समर्पयेद्वीर्य्यं वीर्य्याड्डिम्बो बभूव ह इति च पाठः।

महाविष्णुश्च कलया ततः क्षुद्रविराड्भूत्।
तन्नाभिकमले ब्रह्मा भक्तरस्तल्ललाटजः॥ ५०
विष्णुस्तदंशः पाता यः श्वेतद्वीपनिवासकृत्।
एवं ते प्रतिब्रह्माण्डे ब्रह्मा-विष्णु-महेश्वराः॥ ५१
स्वयञ्च स्वांशकलया नानामूर्त्तिधरो हरिः।
तदा भवश्च सगुणः सर्व्वशक्तियुतस्तदा॥ ५२
कथं लज्जादिरहितः स च स्वेच्छामयो महान्।
सर्व्वदा सर्व्वभोगार्हः सर्व्वशक्तिसमन्वितः॥ ५३
लज्जा नास्त्येव लज्जायामतोऽयं सर्व्वसम्मतः।
या च लज्जावती देवी तस्या लज्जा कुतो गता॥५४
सर्व्वशक्तिमती दुर्गा प्रकृत्या सा च शैलजा।
तस्या लज्जादयः सन्ति सर्व्वदा सर्व्वसम्मताः॥ ५५
पञ्चधा या च प्रकृतिः श्रीकृष्णस्य बभूव ह।
राधा पद्मा च सावित्री दुर्गा देवी सरस्वती॥ ५६
प्राणाधिष्ठात्री या देवी कृष्णस्य परमात्मनः।
प्राणाधिका प्रिया सा च राधास्ति तस्य वक्षसि॥५७
विद्याधिष्ठात्री या देवी सावित्री ब्रह्मणः प्रिया।
लक्ष्मीर्नारायणस्यैव सर्व्वसम्पत्स्वरूपिणी॥ ५८
सरस्वती द्विधा भूत्वा कृष्णस्य मुखनिर्गता।
सावित्री ब्रह्मणः कान्ता स्वयं नारायणस्य च॥ ५९
बुद्ध्यधिष्ठात्री या देवी (क) ज्ञानसूः शक्तिसंयुता।
सा दुर्गा शूलिनः कान्ता तस्या लज्जा कुतो गता ६०
प्रकृतिः पञ्चधा भ्रातर्गोलोके च बभूव ह।
इमाः प्रधानाः कलया बभूवानेकधापि सा॥ ६१
विप्रेन्द्र नित्यं वैकुण्ठं ब्रह्माण्डात् परमुच्यते।
अविनाशिस्थलं शश्वल्लये प्राकृतिके ध्रुवम्॥ ६२
तत्र नारायणो देवः कृष्णार्द्धांशश्चतुर्भुजः।
वनमाली पीतवासाः शक्त्या च पद्मया सह॥ ६३
स्वयं कृष्णश्च गोलोके द्विभुजः श्यामसुन्दरः।
सस्मितो मुरलीहस्तो राधावक्षःस्थलस्थितः॥ ६४
गो-गोप-गोपीभिः शश्वत् संयुक्तो गोपरूपधृक्।
परिपूर्णतमः श्रीमान् निर्गुणः प्रकृतेः परः॥ ६५
स्वेच्छामयः स्वतन्त्रस्तु परमानन्दरूपधृक्।
सुराः कलोद्भवा यस्य षोड़शांशो महाविराट्॥६६
यतो भवन्ति विश्वानि स्थूलसूक्ष्मादिकानि च।

पुनस्तत्र प्रलीयन्ते एवमेव मुहुर्मुहुः॥ ६७
गोलोकमूर्द्धं वैकुण्ठात् पञ्चाशत्कोटियोजनम्।
नास्ति लोकस्तदूर्द्ध्वं च नास्ति कृष्णात् परः प्रभुः॥६८
इदं श्रुतं शम्भुवक्त्रान्मया ते कथितं द्विज।
क्षणं तिष्ठाधुना भ्रातरीश्वरः सुरतोन्मुखः॥ ६९

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारदसंवादे परशुराम संवादे
ज्ञाननिरूपणं नाम द्विचत्वा-
रिंशोऽध्यायः॥४२॥

---

## त्रिचत्वारिंशोऽध्यायः।

नारायण उवाच।

गणेशवचनं श्रुत्वा स तदा विगतः सुधीः।
परशुहस्तः परशुरामो निर्भयो गन्तुमुद्यतः॥ १
गणेश्वरस्तदा दृष्ट्वा शीघ्रमुत्थाय यत्नतः।
वारयामास सम्प्रीत्या चकार विनयं पुनः॥ २
रामस्तं प्रेषयामास हुं कृत्वा तु पुनः पुनः।
बभूव च ततस्तत्र वाग्युद्धं हस्तकर्षणम्॥ ३
परशुं निक्षेपणं कर्त्तुं मनश्चक्रे भृगुस्तदा।
हाहा कृत्वा कार्त्तिकेयो बोधयामास संसदि॥ ४
अव्यर्थमस्त्रं हे भ्रातर्गुरुपुत्रं कथं क्षिप।
गुरुवद्गुरुपुत्रञ्च मा भवान् हन्तुमर्हति॥ ५
परशुं क्षिपन्तं कुपितं रक्तपद्मदलेक्षणम्।
गणेशो बोधयामास निवर्त्तस्वेत्युवाच तम्॥ ६
पुनर्गणेशं रामश्च प्रेरयामास कोपतः।
पपात दूरतो वेगाच्छिन्नमानो गजाननः॥ ७
गजाननः समुत्थाय धर्म्मं कृत्वा तु साक्षिणम्।
पुनस्तं बोधयामास जितक्रोधः शिवात्मजः॥ ८
निवर्त्तस्व निवर्त्तस्वेत्युच्चार्य्य च पुनः पुनः।
प्रवेशने ते का शक्तिरीश्वराज्ञां विना प्रभो॥ ९
मम भ्राता त्वमतिथिर्विद्यासम्बन्धतो ध्रुवम्।
ईश्वरप्रियशिष्यश्च सहामि तेन हेतुना॥ १०
न चाहं कार्त्तवीर्य्यश्च भूपास्ते क्षुद्रजन्तवः।
अतो विप्र न जानासि माञ्च विश्वेश्वरात्मजम्॥११
क्षणं तिष्ठ निवर्त्तस्व समरे ब्राह्मणातिथे।
क्षणान्तरे त्वया सार्द्धं यास्यामीश्वरसन्निधिम्॥१

(क) सर्व्वत्र "अधिष्ठातृदेवी या" इति विशुद्धपाठः क्वचित्कः।

नारायण उवाच ।

हेरम्बवचनं श्रुत्वा प्रजहास पुनः पुनः ।
पर्शुं हेमं मनश्चक्रे प्रणम्य शङ्करं हरिम् ॥ १३
पर्शुं क्षिपन्तं कोपेन पर्शुरामं गजाननः ।
दृष्ट्वा मुमूर्षुं देवेशो धर्म्मं कृत्वा तु साक्षिणम् ॥ १४
चकार हस्तं योगेन स तदा कोटियोजनम् ।
योगीन्द्रस्तत्र सन्तिष्ठन् भ्रामयित्वा पुनः पुनः ॥१५
शतधा वेष्टयित्वा तु भ्रामयित्वा तु तत्र वै ।
ऊर्द्ध्वमुत्तोल्य वेगेन ह्युद्राहिं गरुडो यथा ॥ १६
सप्त द्वीपांश्च शैलांश्च काञ्चनीं सप्त सागरान् ।
क्षणेन दर्शयामास रामं योगेन स्तम्भितम् ॥ १७
हस्तपादाद्यनायत्तं जडं सर्व्वाङ्गकम्पितम् ।
पुनस्तं भ्रामयामास दर्पितं दर्पनाशनः ॥ १८
भूर्लोकञ्च भुवर्लोकं स्वर्लोकञ्च सुरेश्वरः ।
जनलोकं तपोलोकं ध्रुवलोकञ्च तत्परम् ॥ १९
गौरीलोकं शम्भुलोकं दर्शयामास नारद ।
दर्शयित्वा तु ब्रह्माण्डं स पपौ सप्त सागरान् ॥ २०
पुनरुद्गिरणं चक्रे सनक्रसागरोदकम् ।
तत्र समर्पयामास गभीरे सागरोदके ॥ २१
मुमूर्षन्तं सन्तरन्तं पुनर्जग्राह लीलया ।
पुनस्तत्र भ्रामयित्वा ब्रह्माण्डादूर्द्ध्वमुत्तमम् ॥ २२
वैकुण्ठं दर्शयामास सलक्ष्मीकं चतुर्भुजम् ।
क्षणं तत्र भ्रामयित्वा योगीन्द्रो योगमायया ॥२३
पुनः करञ्च योगेन वर्द्धयामास लीलया ।
गोलोकं दर्शयामास विरजाञ्च नदीश्वरीम् ॥२४
वृन्दावनं शतशृङ्गं शैलेन्द्रं रासमण्डलम् ।
गोप-गोपादिभिः सार्द्धं श्रीकृष्णं श्यामसुन्दरम् ॥ २५
द्विभुजं मुरलीहस्तं सस्मितं सुमनोहरम् ।
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम् ॥ २६
तेजसा कोटिसूर्य्याभं राधावक्षःस्थलस्थितम् ।
एवं कृष्णं दर्शयित्वा प्रणमय्य पुनः पुनः ॥ २७
क्षणेन लम्बमानस्य भ्रामयित्वा पुनः पुनः ।
दृष्ट्वा कृष्णमिष्टदेवं सर्व्वपापप्रणाशनम् ।
भ्रूणहत्यादिकं पापं भृगोर्दूरं चकार ह ॥ २८
न भवेद्दुयातना नष्टा विना भोगेन पापजा ।
स्वल्पाञ्च बुभुजे रामो गतान्या कृष्णदर्शनात् ॥ २९
क्षणेन चेतनां प्राप्य पपात वेगतो भुवि ।
बभूव दूरीभूतञ्च गणेशस्तम्भनं भृगोः ॥ ३०
सस्मार कवचं स्तोत्रं गुरुदत्तं सुदुर्लभम् ।
अभीष्टदेवं श्रीकृष्णं गुरुं शम्भुं जगद्गुरुम् ॥ ३१
चिक्षेप पर्शुमव्यर्थं शिवतुल्यञ्च तेजसा ।
ग्रीष्ममध्याह्नमार्त्तण्ड-प्रभाशतगुणं मुने ॥ ३२
पितुरव्यर्थमस्त्रञ्च दृष्ट्वा गणपतिः स्वयम् ।
जग्राह वामदन्तेन नास्त्रं व्यर्थं चकार ह ॥ ३३
निपत्य पर्शुवेगेन छित्त्वा दन्तं समूलकम् ।
जगाम रामहस्तञ्च महादेववरेण च ॥ ३४
हाहेति शब्दमाकाशे देवाश्चक्रुर्महाभिया ।
वीरभद्र-कार्त्तिकेय-क्षेत्रपालाश्च पार्षदाः ॥ ३५
पपात भूमौ दन्तश्च सरक्तः शब्दमुच्चरन् ।
यथा गैरिकयुक्तश्च महास्फाटिकपर्व्वतः ॥ ३६
शब्देन महता विप्र चकम्पे पृथिवी भिया ।
कैलासस्था जनाः सर्व्वे मूर्च्छामापुः क्षणं भिया॥३७
निद्रा बभञ्ज निद्राया निद्रेशस्य जगत्प्रभोः ।
आजगाम बहिः शम्भुः पार्व्वत्या सह सम्भ्रमात् ॥३८
पुरो ददर्श हेरम्बं लोहितास्यं क्षतं नतम् ।
भग्नदन्तं जितक्रोधं सस्मितं लज्जितं मुने ॥ ३९
पप्रच्छ पार्व्वती शीघ्रं स्कन्दं किमिति पुत्रक ।
स च तां कथयामास वार्त्तां पौर्व्वापरीं भिया ॥४०
चुकोप दुर्गा कृपया रुरोद च मुहुर्मुहुः ।
उवाच शम्भोः पुरतः पुत्रं कृत्वा स्ववक्षसि ॥ ४१
सम्बोध्य शम्भुं शोकेन भिया विनयपूर्व्वकम् ।
उवाच प्रणता साध्वी प्रणतार्त्तिहरं पतिम् ॥ ४२

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे
नारायण-नारदसंवादे गणेश-दन्तभङ्गो
नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥

---

## चतुश्चत्वारिंशोऽध्यायः ।

पार्व्वत्युवाच ।

सर्व्वे जानन्ति जगति दुर्गां शङ्करकिङ्करीम् ।
अपेक्षा-रहिता दासी तस्याश्च जीवनं वृथा ॥ १
ईश्वरस्य समाः सर्व्वास्तृणपर्व्वतजातयः ।
दासीपुत्रस्य शिष्यस्य कस्य दोष इति प्रभो ॥ २
विचारं कर्त्तुमुचितं त्वञ्च धर्म्मविदां वरः ।

वीरभद्रः कार्त्तिकेयः पार्षदाः सन्ति साक्षिणः ॥ ३
साक्ष्ये मिथ्यां को वदेद्वा द्वावेषां भ्रातरौ समौ ।
साक्ष्ये समे मनु-मिते सतां धर्म्मनिरूपणे ॥ ४
साक्षी सभायां यत् साक्ष्यं जानन्नप्यन्यथा वदेत् ।
कामतः क्रोधतो वापि लोभेन च भयेन च ॥ ५
स याति कुम्भीपाकञ्च निपात्य शतपूरुषम् ।
तैश्च सार्द्धं वसेत् तत्र यावच्चन्द्र-दिवाकरौ ॥ ६
अहं बोधितुं शक्ता निर्णेत्री च द्वयोरपि ।
तथापि तव साक्षात् तु ममाज्ञा निन्दिता श्रुतौ ॥७
किङ्कराणां प्रभा कुत्र नृपे वसति संसदि ।
उदिते भास्करे पृथ्व्यां खद्योतो हि यथा प्रभो ॥८
सुचिरं तपसा प्राप्तं त्वदीयं चरणाम्बुजम् ।
परित्यागभयेनैव सन्ततं भीतया मया ॥ ९
यत् किञ्चित् कोप-शोकाभ्यामुक्तं मोहनतत्परम् ।
तत् क्षमस्व जगन्नाथ पुत्रस्नेहाच्च दारुणात् ॥ १०
त्वया यदि परित्यक्ता तदा पुत्रेण तेन किम् ।
साध्व्याः सद्वंशजायाश्च शतपुत्राधिकः पतिः॥११
असद्वंशप्रसूता या दुःशीला ज्ञानवर्ज्जिता ।
स्वामिनं मन्यते नासौ पित्रोर्दोषेण कुत्सिता ॥१२
कुत्सितं पतितं मूढ़ं दरिद्रं रोगिणं जड़म् ।
कुलजा विष्णुतुल्यञ्च कान्तं पश्यति सन्ततम् ॥ १३
हुताशनो वा सूर्य्यो वा सर्व्वतेजस्विनां परः ।
पतिव्रता तेजसश्च कलां नार्हन्ति षोड़शीम् ॥ १४
महादानानि पुण्यानि व्रतान्यनशनानि च ।
तपांसि पतिसेवायाः कलां नार्हन्ति षोड़शीम् ॥१५
पुत्रो वापि पिता वापि बान्धवोऽथ सहोदरः ।
योषितां कुलजातानां न कश्चित् स्वामिनः समः॥१६
इत्युक्त्वा स्वामिनं दुर्गा ददर्श पुरतो भृगुम् ।
शम्भोः पदाब्जं सेवन्तं निर्भयं तमुवाच ह ॥ १७

पार्व्वत्युवाच ।

अये राम महाभाग ब्रह्मवंशः सुपण्डितः ।
पुत्रोऽसि जमदग्नेश्च शिष्योऽस्य योगिनां गुरोः ॥ १८
माता ते रेणुका साध्वी पद्मांशा सत्कुलोद्भवा ।
मातामहो वैष्णवश्च मातुलश्च ततोऽधिकः ॥ १९
त्वञ्च रेणुकभूपस्य मनुवंशोद्भवस्य च ।
दौहित्रो मातुलः साधुः शूरो विष्णुयशा नृपः ॥२०
कस्य दोषेण दुर्द्धर्षस्त्वं न जानेऽहमुद्धतः ।
येषां दोषैर्जनो दुष्टस्तव ते शुद्धमानसाः ॥ २१
अमोघं प्राप्य पर्शुञ्च गुरुञ्च करुणानिधिम् ।
परीक्षां क्षत्रिये कृत्वा बभूवास्य सुते पुनः ॥ २२
गुरवे दक्षिणां दातुमुचितञ्च श्रुतौ श्रुतम् ।
भग्नो दन्तस्तत्सुतस्य छेदयस्व च मस्तकम् ॥ २३
गणेश्वरं रणे जित्वा स्थितस्त्वं द्वावयोः पुरः ।
मा त्वं लब्धाशिषो भूत्वा पूजितोऽभूर्जगत्त्रये ॥ २४
पर्शुनाऽमोघवीर्य्येण शङ्करस्य वरेण च ।
हन्तुं शक्तः शृगालञ्च सिंहं शार्दूलमाखुभुक् ॥ २५
त्वद्विधं लक्षकोटिञ्च हन्तुं शक्तो गणेश्वरः ।
जितेन्द्रियाणां प्रवरो न हि हन्ति च मक्षिकाम्॥२६
तेजसा कृष्णतुल्योऽयं कृष्णांशश्च गणेश्वरः ।
देवाश्चान्ये कृष्णकलाः पूजास्य पुरतस्ततः ॥ २७
व्रतप्रभावतः प्राप्तः शङ्करस्य वरेण च ।
शोकेनातिकठोरेण न हि सम्यग्विमर्द्दिना ॥ २८
इत्युक्त्वा पार्व्वती रोषात् तं रामं हन्तुमुद्यता ।
रामः सस्मार तं कृष्णं प्रणम्य मनसा गुरुम् ॥ २९
एतस्मिन्नन्तरे दुर्गा ददर्श पुरतो द्विजम् ।
अतीववामनं बालं सूर्य्यकोटिसमप्रभम् ॥ ३०
शुक्लदन्तं शुक्लवस्त्रं शुक्लयज्ञोपवीतिनम् ।
दण्डिनं छत्रिणञ्चैव दधतं तिलकोज्ज्वलम् ॥ ३१
दधतं तुलसीमालां सस्मितं सुमनोहरम् ।
रत्नकेयूरवलयं रत्नमालाविभूषितम् ॥ ३२
रत्ननूपुरपादञ्च सद्रत्नमुकुटोज्ज्वलम् ।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् ॥ ३३
स्थिरमुद्रां दर्शयन्तं भक्तं वामकरेण च ।
दक्षिणेऽभयमुद्राञ्च भक्तेशं भक्तवत्सलम् ॥ ३४
बालिकाबालकगणैर्नागरैः सस्मितैर्युतम् ।
कैलासवासिभिः सर्व्वैरावृद्धैरीक्षितं मुदा ॥ ३५
तं दृष्ट्वा सम्भ्रमाच्छम्भुः सभृत्यः सहपुत्रकः ।
मूर्द्ध्ना भक्त्या प्रणनाम दुर्गा च दण्डवद्भुवि ॥ ३६
आशिषं प्रददौ बालः सर्व्वेभ्यो वाञ्छितप्रदः ।
तं दृष्ट्वा बालकाः सर्व्वे महाश्चर्य्यं ययुर्भिया ॥ ३७
दत्त्वा तस्मै शिवो भक्त्या चोपहाराणि षोड़श ।
पूजां चकार श्रुत्युक्तां परिपूर्णतमस्य च ॥ ३८
तुष्टाव काण्वशाखोक्त-स्तोत्रेण नतकन्धरः ।
पुलकाञ्चितसर्व्वाङ्गो भगवन्तं सनातनम् ॥ ३९

रत्नसिंहासनस्थं तमुवाच शङ्करः स्वयम्।
अतीवतेजसा सर्व्वं प्रच्छन्नीकृतमेव च॥ ४०
शङ्कर उवाच।
आत्मारामेषु कुशलप्रश्नोऽतीवविडम्बनम्।
ते शश्वत् कुशलाधाराः कुशलाकुशलप्रदाः॥ ४१
अद्य मे सफलं जन्म जीवितञ्च सुजीवितम्।
प्राप्तस्त्वमतिथिर्ब्रह्मन् कृष्णसेवाफलोदयात्॥ ४२
परिपूर्णतमः कृष्णो लोकनिस्तारहेतवे।
कलया पुण्यक्षेत्रे च भारते च कृपानिधिः॥ ४३
अतिथिः पूजितो येन पूजिताः सर्व्वदेवताः।
अतिथिर्यस्य सन्तुष्टस्तस्य तुष्टो हरिः स्वयम्॥४४
स्नानेन सर्व्वतीर्थानां सर्व्वदानेन यत् फलम्।
सर्व्वव्रतोपवासाभ्यां सर्व्वयज्ञेषु दीक्षया॥ ४५
सर्व्वैस्तपोभिर्विविधैर्नित्यैर्नैमित्तिकादिभिः।
तदेवातिथिसेवायाः कलां नार्हति षोड़शीम्॥४६
सोऽतिथिर्यस्य भग्नाशो याति रुष्टश्च मन्दिरात्।
कोटिजन्मार्ज्जितं पुण्यं तस्य नश्यति निश्चितम्॥४७
स्त्री-गोघ्नश्च कृतघ्नश्च ब्रह्मघ्नो गुरुतल्पगः।
पितृ-मातृ-गुरूणाञ्च निन्दको नरघातकः॥ ४८
सन्ध्याहीनोऽश्वत्थघाती सत्यघ्नो हरिनिन्दकः।
ब्रह्मस्वस्यापहारी च मिथ्यासाक्ष्यप्रदायकः॥ ४९
मित्रद्रोही कृतघ्नश्च वृषवाहश्च सूपकृत्।
शवदाही ग्रामयाजी ब्राह्मणो वृषलीपतिः॥ ५०
शूद्रश्राद्धान्नभोजी च शूद्रश्राद्धेषु भोजकः।
कन्याविक्रयकारी च श्रीहरेर्नामविक्रयी॥ ५१
लाक्षा-मांस-लौह-रस-तिलानां लवणस्य च।
विक्रेता ब्राह्मणश्चैव तुरगाणां गवां तथा॥ ५२
एकादशी-कृष्णसेवा-हीनो विप्रश्च भारते।
एते महापातकिन-स्त्रिषु लोकेषु निन्दिताः॥५३
कालसूत्रे च नरके पचन्ति ब्रह्मणः शतम्।
एतेभ्योऽप्यधिकः सोऽपि यस्यातिथिपराङ्मुखः॥ ५४
नारायण उवाच।
शङ्करस्य वचः श्रुत्वा सन्तुष्टः श्रीहरिः स्वयम्।
मेघगम्भीरया वाचा तमुवाच जगत्पतिः॥ ५५
श्रीविष्णुरुवाच।
श्वेतद्वीपादागतोऽहं ज्ञात्वा कोलाहलञ्च वः।
परशुरामस्य रक्षार्थं कृष्णभक्तस्य साम्प्रतम्॥ ५६
नैतेषां कृष्णभक्तानामशुभं विद्यते क्वचित्।
रक्षामि तांश्चक्रहस्तो गुरुमन्यं विना शिव॥ ५७
नाहं पाता गुरौ रुष्टे बलवद्गुरुहेलनम्।
तत्परः पातकी नास्ति सेवाहीनो गुरोश्च यः॥५८
मान्यः पूज्यश्च सर्व्वेभ्यः सर्व्वेषां जनको भवेत्।
अहो यस्य प्रसादेन सर्व्वान् पश्यति मानवः॥ ५९
जनको जन्मदानाच्च रक्षणाच्च पिता नृणाम्।
ततो विस्तीर्णकरणात् कलया स प्रजापतिः॥ ६०
पितुः शतगुणैर्माता पोषणाद्गर्भधारणात्।
वन्द्या पूज्या च मान्या च प्रसूरूपा वसुन्धरा॥ ६१
मातुः शतगुणैर्वन्द्यः पूज्यो मान्योऽन्नदायकः।
यद्विना नश्वरो देहो विष्णुश्च कलयान्नदः॥ ६२
अन्नदातुः शतगुणोऽभीष्टदेवः परः स्मृतः।
गुरुस्तस्माच्छतगुणो विद्यामन्त्रप्रदायकः॥ ६३
अज्ञानतिमिराच्छन्नं ज्ञानदीपेन चक्षुषा।
यः सर्व्वार्थं दर्शयति तत्परः कोऽपि बान्धवः॥ ६४
गुरुदत्तेन मन्त्रेण तपसेष्टसुखं लभेत्।
सर्व्वज्ञत्वं सर्व्वसिद्धिं तत्परः कोऽपि बान्धवः॥ ६५
सर्व्वं जयति सर्व्वत्र विद्यया गुरुदत्तया।
तस्मात् पूज्यो हि जगति को वा बन्धुस्ततोऽधिकः॥६६
विद्यान्धो वा धनान्धो वा यो मूढ़ो न भजेद्गुरुम्।
ब्रह्महत्यादिभिः पापैः स लिप्तो नात्र संशयः॥६७
दरिद्रं पतितं क्षुद्रं नर-बुद्ध्याचरेद्गुरुम्।
सोऽशुचिस्तीर्थस्नातोऽपि नाधिकारी च कर्म्मसु॥६८
पितरं मातरं भार्य्यां गुरुं पत्नीगुरुं परम्।
यो न पुष्णाति कापट्यात् स महापातकी शिव॥६९
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुरेव परंब्रह्म गुरुर्भास्कररूपकः॥ ७०
गुरुश्चन्द्रस्तथेन्द्रश्च वायुश्च वरुणोऽनलः।
सर्व्वरूपो हि भगवान् परमात्मा स्वयं गुरुः॥ ७१
नास्ति वेदात् परं शास्त्रं न हि कृष्णात् परः सुरः।
नास्ति गङ्गासमं तीर्थं न पुष्पं तुलसीपरम्॥७२
नास्ति क्षमावती भूमेः पुत्रान्नास्त्यपरः प्रियः।
न च दैवात् परा शक्तिर्व्रतं नैकादशीं विना॥ ७३
शालग्रामात् परो यन्त्रो न क्षेत्रं भारतात् परम्।
परं पुण्यस्थलानाञ्च पुण्यं वृन्दावनं यथा॥ ७४
मोक्षदानां यथा काशी वैष्णवानां यथा शिवः।

न पार्व्वतीपरा साध्वी न गणेशात् परो वशी ॥७५
न च विद्यासमो बन्धुर्नास्ति कश्चिद्गुरोः परः।
विद्यादातुः पुत्रदारौ तत्समौ नात्र संशयः ॥ ७६
गुरुस्त्रियाश्च पुत्त्रे च बभूव रामहेलनम्।
परं सम्मार्ज्जनं कर्त्तुमागतोऽहं तवालयम् ॥ ७७

नारायण उवाच।

इत्येवमुक्त्वा शम्भुश्च दुर्गां सम्बोध्य नारद।
उवाच भगवांस्तत्र सत्यसारं परं वचः ॥ ७८

श्रीविष्णुरुवाच।

शृणु देवि प्रवक्ष्यामि मदीयं वचनं शुभम्।
हितं नीतं वेदसारं परिणामसुखावहम् ॥ ७९
यथा ते गजवक्त्रश्च कार्त्तिकेयश्च पार्व्वति।
रामस्तथा ते पुत्त्रोऽपि नाख्येषु न्यूनता सति (क)॥८०
नाख्येषु स्नेहभेदश्च तव वा शङ्करस्य च।
विचार्य्य सर्व्वं सर्व्वज्ञे कुरु मातर्यथोचितम् ॥ ८१
पुत्त्रेण सार्द्धं पुत्त्रस्य विवादो दैवदोषतः।
दैवं हन्तुं कोऽपि शक्तो दैवञ्च बलवत् परम् ॥ ८२
पुत्त्राभिधानं वेदेषु पश्य वत्से वरानने।
एकदन्त इति ख्यातं सर्व्वदेवनमस्कृतम् ॥ ८३
पुत्त्रनामाष्टकं स्तोत्रं सामवेदोक्तमीश्वरि।
शृणुष्वावहितं मातः सर्व्वविघ्नहरं परम् ॥ ८४
गणेशमेकदन्तञ्च हेरम्बं विघ्ननायकम्।
लम्बोदरं शूर्पकर्णं गजवक्त्रं गुहाग्रजम् ॥ ८५
नामाष्टार्थञ्च पुत्त्रस्य शृणु मातर्हरप्रिये।
स्तोत्राणां सारभूतञ्च सर्व्वविघ्नहरं परम् ॥ ८६
ज्ञानार्थवाचको गश्च णश्च निर्व्वाणवाचकः।
तयोरीशं परंब्रह्म गणेशं प्रणमाम्यहम् ॥ ८७
एकशब्दः प्रधानार्थो दन्तश्च बलवाचकः।
बलं प्रधानं सर्व्वस्मादेकदन्तं नमाम्यहम् ॥ ८८
दीनार्थवाचको हेश्च रम्बः पालकवाचकः।
परिपालकं दीनानां हेरम्बं प्रणमाम्यहम् ॥ ८९
विपत्तिवाचको विघ्नो नायकः खण्डनार्थकः।
विपत्खण्डनकारं तं नमामि विघ्ननायकम् ॥ ९०
विष्णुदत्तैश्च नैवेद्यैर्यस्य लम्बोदरं पुरा।
पित्रा दत्तैश्च विविधैर्वन्दे लम्बोदरञ्च तम् ॥ ९१

(क) तथा परशुरामश्च भार्गवो नात्र संशयः। इति च पाठः।

शूर्पाकारौ च यत्कर्णौ विघ्नवारणकारणौ।
सम्पदौ ज्ञानरूपौ च शूर्पकर्णं नमाम्यहम् ॥ ९२
विष्णुप्रसादपुष्पञ्च यन्मूर्द्ध्नि मुनिदत्तकम्।
तद्गजेन्द्रवक्त्रयुतं गजवक्त्रं नमाम्यहम् ॥ ९३
गुहस्याग्रे च जातोऽय-माविर्भूतो हरालये।
वन्दे गुहाग्रजं देवं सर्व्वदेवाग्रपूजितम् ॥ ९४
एतन्नामाष्टकं दुर्गे नामभिः संयुतं परम्।
पुत्त्रस्य पश्य वेदे च तदा कोपं यथा कुरु ॥ ९५
एतन्नामाष्टकं स्तोत्रं नामार्थसंयुतं शुभम्।
त्रिसन्ध्यं यः पठेन्नित्यं स सुखी सर्व्वतो जयी ॥९६
ततो विघ्नाः पलायन्ते वैनतेयाद्यथोरगाः।
गणेश्वरप्रसादेन महाज्ञानी भवेद्ध्रुवम् ॥ ९७
पुत्त्रार्थी लभते पुत्त्रं भार्य्यार्थी विपुलां स्त्रियम्।
महाजडः कवीन्द्रश्च विद्यावांश्च भवेद्ध्रुवम् ॥ ९८

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे नारायण-नारद-संवादे गणेशस्तोत्र-कथनं नाम चतुश्चत्वा-रिंशोऽध्यायः ॥४४॥

---

## पञ्चचत्वारिंशोऽध्यायः।

नारायण उवाच।

पार्व्वतीं बोधयित्वा तु विष्णू राममुवाच ह।
हितं सारं नीतिसारं परिणामसुखावहम् ॥ १

श्रीविष्णुरुवाच।

राम त्वमधुना सत्यमपराधी श्रुतेर्मतः।
कोपात् कृत्वा दन्तभङ्गं गणेशस्य शिवोऽशिवे (क)
मयोक्तेनैव स्तोत्रेण स्तुत्वा गणपतिं परम्।
काण्वशाखोक्तस्तोत्रेण स्तुहि दुर्गां जगत्प्रसूम् ॥
श्रीकृष्णस्य परा शक्तिर्बुद्धिरूपा जगत्प्रभोः।
अस्याश्च तव रुष्टायां हतबुद्धिर्भविष्यसि ॥ ४
सर्व्वशक्तिस्वरूपेय-मनया शक्तिमज्जगत्।
अनया शक्तिमान् कृष्णो निर्गुणः प्रकृतेः परः ॥
सृष्टिं कर्त्तुं न शक्तश्च ब्रह्मा शक्त्याऽनया विना।
वयमस्याः प्रसूताश्च ब्रह्म-विष्णु-महेश्वराः ॥ ६
सुरसङ्घेऽसुरग्रस्ते काले घोरतरे द्विज।
तेजःसु सर्व्वदेवाना-माविर्भूता पुरा सती ॥ ७

(क) ऽयसि वै इति क्वचित् पाठः।

कृष्णाज्ञयाऽसुरान् हत्वा दत्त्वा तेभ्यः पदं ततः।
दक्षपत्न्यां जनिं लेभे दक्षस्य तपसा पुरा॥ ८
भार्य्या भूत्वा शङ्करस्य पुनः पत्युश्च निन्दया।
देहं त्यक्त्वा शैलपत्न्यां जनिं लेभे पुरा सती॥ ९
शङ्करस्तपसा लब्धो योगीन्द्राणां गुरोर्गुरुः।
लब्धो गणपतिः पुत्रः कृष्णांशः कृष्णसेवया॥ १०
त्वमेव ध्यायसे नित्यं तं न जानासि बालक।
स एव भगवान् कृष्णांशेन पार्व्वतीसुतः॥ ११
पुटाञ्जलिर्नतो भूत्वा स्तुहि दुर्गां शिवप्रियाम्।
शिवां शिवप्रदां शैवां शिववीजां शिवेश्वरीम्॥१२
शिवायाः स्तोत्रराजेन कृतेन शूलिना पुरा।
त्रिपुरस्य वधे घोरे ब्रह्मणा प्रेरितेन च॥ १३
इत्युक्त्वा श्रीपदं शीघ्रं जगाम श्रीनिकेतनम्।
ते हरौ हरिं स्मृत्वा रामस्तां स्तोतुमुद्यतः॥ १४
शुद्धदन्तेन स्तोत्रेण सर्व्वविघ्नहरेण च।
धर्म्मार्थ-काम-मोक्षाणां कारणेन च नारद॥ १५
पुटाञ्जलियुतो भूत्वा स्नात्वा गङ्गोदके शुभे।
गुरुं प्रणम्य भक्त्येशं धृत्वा धौते च वाससी॥ १६
आचम्य नत्वा मूर्द्ध्ना तां भक्तिनम्रात्मकन्धरः।
पुलकाञ्चितसर्व्वाङ्ग-आनन्दाश्रुसमन्वितः॥ १७

परशुराम उवाच।

श्रीकृष्णस्य च गोलोके परिपूर्णतमस्य च।
आविर्भूता विग्रहतः पुरा सृष्ट्युन्मुखस्य च॥ १८
सूर्य्यकोटिप्रभायुक्ता वस्त्रालङ्कारभूषिता।
वह्निशुद्धांशुकाधाना सस्मिता सुमनोहरा॥ १९
नवयौवनसम्पन्ना सिन्दूरविन्दुशोभिता।
ललिता कवरीभारं मालतीमाल्यमण्डितम्॥ २०
अहो निर्व्वचनीयां त्वां चार्व्वीं मुर्त्तिञ्च बिभ्रतीम्।
मोक्षप्रदा मुमुक्षूणां महाविष्णोर्विधिः स्वयम्॥२१
सुमोह क्षणमात्रेण दृष्ट्वा त्वां सर्व्वमोहिनीम्।
रासे सम्भूय सहसा सस्मिता धाविता पुरा॥ २२
सद्भिः ख्याता तेन राधा मूलप्रकृतिरीश्वरी।
कृष्णस्त्वां सहसाहूय वीर्य्याधानं चकार ह॥ २३
ततो डिम्बं महज्जज्ञे ततो भूतो महाविराट्।
यस्यैव लोमकूपेषु ब्रह्माण्डान्यखिलानि च॥ २४
तच्छृङ्गारक्रमेणैव त्वन्निश्वासो बभूव ह।
स निश्वासो महावायुः स विराड् विश्वधारकः॥२५
तव घर्म्मजलेनैव पुप्लाव विश्वगोलोकम्।
स विराड् विश्वनिलयो जलराशिर्बभूव ह॥ २६
ततस्त्वं पञ्चधाभूय पञ्च मूर्त्तीश्च बिभ्रती।
प्राणाधिष्ठात्री या मूर्त्तिः कृष्णस्य परमात्मनः।
कृष्णप्राणाधिकां राधां तां वदन्ति पुराविदः॥ २७
वेदाधिष्ठात्री या मूर्त्तिर्वेदशास्त्रप्रसूरपि।
तां सावित्रीं शुद्धरूपां प्रवदन्ति मनीषिणः॥ २८
ऐश्वर्य्याधिष्ठात्री मूर्त्तिः शान्तिश्च शान्तरूपिणम्।
लक्ष्मीं वदन्ति सन्तस्तां शुद्धां सत्त्वस्वरूपिणीम्॥२९
रागाधिष्ठात्री या देवी शुक्लमूर्त्तिः सतां प्रसूः।
सरस्वतीं तां शास्त्रज्ञां शास्त्रज्ञाः प्रवदन्त्यहो॥ ३०
बुद्धिर्विद्या सर्व्वशक्तिर्या मूर्त्तिरधिदेवता।
सर्व्वमङ्गलदां सन्तो वदन्ति सर्व्वमङ्गलाम्॥ ३१
सर्व्वमङ्गलमङ्गल्या सर्व्वमङ्गलरूपिणी।
सर्व्वमङ्गलवीजस्य शिवस्य मन्दिरेऽधुना॥ ३२
शिवे शिवास्वरूपा त्वं लक्ष्मीर्नारायणान्तिके।
सरस्वती च सावित्री वेदसूर्ब्रह्मणः प्रिया॥ ३३
राधा रासेश्वरस्यैव परिपूर्णतमस्य च।
परमानन्दरूपस्य परमानन्दरूपिणी॥ ३४
त्वत्कलांशांशकलया देवानामपि योषितः॥ ३५
त्वद्विद्या योषितः सर्व्वास्त्वं सर्व्ववीजरूपिणी।
छाया सूर्य्यस्य चन्द्रस्य रोहिणी सर्व्वमोहिनी॥३६
शची शक्रस्य कामस्य कामिनी रतिरीश्वरी।
वरुणानी जलेशस्य वायोः स्त्री प्राणवल्लभा॥ ३७
वह्नेः प्रिया या स्वाहा च कुबेरस्य च सुन्दरी।
यमस्य च सुशीला च नैर्ऋतस्य च कैटभी॥ ३८
ईशानस्य शशिकला शतरूपा मनोः प्रिया।
देवहूतिः कर्द्दमस्य वशिष्ठस्याप्यरुन्धती॥ ३९
अदितिर्देवमाता या लुद्रागस्त्यमुनेः प्रिया।
अहल्या गौतमस्यापि सर्व्वाधारा वसुन्धरा॥ ४०
गङ्गा च तुलसी चापि पृथिव्यां या सरिद्वरा।
एताः सर्व्वाश्च या अन्याः सर्व्वास्त्वत्कलयाम्बिके॥४१
गृहलक्ष्मीर्गृहे नृणां राजलक्ष्मीश्च राजसु।
तपस्विनां तपस्या त्वं गायत्री ब्राह्मणस्य च॥ ४२
सतां सत्त्वस्वरूपा त्व-मसतां कलहाङ्कुरा।
ज्योतीरूपा निर्गुणस्य शक्तिस्त्वं सगुणस्य च॥४३
सूर्य्ये प्रभास्वरूपा त्वं दाहिका च हुताशने।

जले शैत्यस्वरूपा च शोभारूपा निशाकरे॥ ४४
त्वं भूमौ गन्धरूपा च आकाशे शब्दरूपिणी।
क्षुत्पिपासादयस्त्वञ्च जीविनां सर्व्वशक्तयः॥ ४५
सर्व्वबीजस्वरूपा त्वं संसारे साररूपिणी।
स्मृतिर्मेधा च बुद्धिर्वा ज्ञानशक्तिर्विपश्चिताम्॥ ४६
कृष्णेन विद्या या दत्ता सर्व्वज्ञानप्रसूः शुभा।
शूलिने कृपया सा त्वं यतो मृत्युञ्जयः शिवः॥ ४७
सृष्टि-पालन-संहारशक्तयस्त्रिविधाश्च याः।
ब्रह्म-विष्णु-महेशानां सा त्वमेव नमोऽस्तु ते॥ ४८
मधुकैटभभीत्या च त्रस्तो धाता प्रकम्पितः।
स्तुत्वा मुमोच यां देवीं तां मूर्द्ध्ना प्रणमाम्यहम्॥४९
मधुकैटभयोर्युद्धे त्रातासौ विष्णुरीश्वरीम्।
बभूव शक्तिमान् स्तुत्वा तां दुर्गां प्रणमाम्यहम्॥५०
त्रिपुरस्य महायुद्धे सरथे पतिते शिवे।
यां तुष्टुवुः सुराः सर्व्वे तां दुर्गां प्रणमाम्यहम्॥५१
विष्णुना वृषरूपेण स्वयं शम्भुः समुत्थितः।
जघान त्रिपुरं स्तुत्वा तां दुर्गां प्रणमाम्यहम्॥५२
यदाज्ञया वाति वातः सूर्य्यस्तपति सन्ततम्।
वर्षतीन्द्रो दहत्यग्निस्तां दुर्गां प्रणमाम्यहम्॥ ५३
यदाज्ञया च कालश्च शश्वद्भ्रमति वेगतः।
मृत्युश्चरति जन्त्वोघे तां दुर्गां प्रणमाम्यहम्॥५४
स्रष्टा सृजति सृष्टिञ्च पाता पाति यदाज्ञया।
संहर्त्ता संहरेत् काले तां दुर्गां प्रणमाम्यहम्॥५५
ज्योतिःस्वरूपो भगवान् श्रीकृष्णो निर्गुणः स्वयम्।
यया विना न शक्तश्च सृष्टिं कर्त्तुं नमामि ताम्॥५६
रक्ष रक्ष जगन्मात-रपराधं क्षमस्व मे।
शिशूनामपराधेन तांश्च माता न कुप्यति॥ ५७
इत्युक्त्वा पर्शुरामश्च प्रणम्य तां रुरोद ह।
तुष्टा दुर्गा सम्भ्रमेण चाभयञ्च वरं ददौ॥ ५८
अमरो भव हे पुत्र वत्स सुस्थिरतां व्रज।
सर्व्वप्रसादात् सर्व्वत्र जयोऽस्तु तव सन्ततम्॥ ५९
सर्व्वान्तरात्मा भगवांस्तुष्टोऽस्तु सन्ततं हरिः।
भक्तिर्भवतु ते कृष्णे शिवदे च शिवे गुरौ॥ ६०
इष्टदेवे गुरौ यस्य भक्तिर्भवति शाश्वती।
तं हन्तुं न हि शक्ताश्च रुष्टाश्च सर्व्वदेवताः॥ ६१
श्रीकृष्णस्य च भक्तस्त्वं शिष्यश्च शङ्करस्य च।
गुरुपत्नीं स्तौषि यस्मात् कस्त्वां हन्तुमिहेश्वरः॥६२
अहो न कृष्णभक्तानामशुभं विद्यते क्वचित्।
अन्यदेवेषु ये भक्ता न भक्ता वा निरङ्कुशाः॥ ६३
चन्द्रमा बलवांस्तुष्टो येषां भाग्यवतां भृगो।
तेषां तारागणा रुष्टाः किं कुर्व्वन्ति च दुर्ब्बलाः॥६४
यस्य तुष्टः सभायां चेन्नरदेवो महान् सुखी।
तस्य किं वा करिष्यन्ति रुष्टा भृत्याश्च दुर्ब्बलाः॥६५
इत्युक्त्वा पार्व्वती तुष्टा दत्त्वा रामं शुभाशिषम्।
जगामान्तःपुरं तूर्णं हरिशब्दो बभूव ह॥ ६६
काण्वशाखोक्तस्तोत्रञ्च पूजाकाले च यः पठेत्।
यात्राकाले च प्रातर्वा वाञ्छितार्थं लभेद्ध्रुवम्॥ ६७
पुत्रार्थी लभते पुत्रं कन्यार्थी कन्यकां लभेत्।
विद्यार्थी लभते विद्यां प्रजार्थी चाप्नुयात् प्रजाम्।
भ्रष्टराज्यो लभेद्राज्यं धनभ्रष्टो धनं लभेत्॥ ६८
यस्य रुष्टो गुरुर्द्देवो राजा वा बान्धवोऽथवा।
तस्य तुष्टश्च वरदः स्तोत्रराजप्रसादतः॥ ६९
दस्युग्रस्तोऽहिग्रस्तश्च शत्रुग्रस्तो भयानकः।
व्याधिग्रस्तो भवेन्मुक्तः स्तोत्रस्मरणमात्रतः॥ ७०
राजद्वारे श्मशाने च कारागारे च बन्धने।
जलराशौ निमग्नश्च मुक्तो भवति स्तोत्रतः॥ ७१
स्वामिभेदे पुत्रभेदे मित्रभेदे च दारुणे।
स्तोत्रस्मरणमात्रेण वाञ्छितार्थं लभेद्ध्रुवम्॥ ७२
कृत्वा हविष्यं वर्षञ्च स्तोत्रराजं शृणोति या।
भक्त्या दुर्गाञ्च सम्पूज्य महावन्ध्या प्रसूयते॥ ७३
लभते सा दिव्यपुत्रं ज्ञानिनं चिरजीविनम्।
असौभाग्या च सौभाग्यं षण्मासश्रवणाल्लभेत्॥७४
नवमासं काकवन्ध्या मृतवत्सा च भक्तितः।
स्तोत्रराजं या शृणोति सा पुत्रं लभते ध्रुवं॥ ७५
कन्यामाता पुत्रहीना पञ्चमासं शृणोति या।
घटे सम्पूज्य दुर्गाञ्च सा पुत्रं लभते ध्रुवम्॥ ७६

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेशखण्डे पञ्चचत्वारिंशोऽध्यायः॥ ४५॥

---

## षट्चत्वारिंशोऽध्यायः।

नारायण उवाच।

स्तुत्वा दुर्गां पर्शुरामो हर्षविह्वलमानसः।
हरिणोक्तेन स्तोत्रेण प्रतुष्टाव गणेश्वरम्॥ १

पूजां चकार भक्त्या च नैवेद्यैर्विविधैरपि ।
धूपदीपैश्च गन्धैश्च पुष्पैश्च तुलसीं विना ॥ २
सम्पूज्य भ्रातरं भक्त्या स रामः शङ्कराज्ञया ।
गुरुपत्नीं गुरुं नत्वा गमनं कर्त्तुमुद्यतः ॥ ३
नारद उवाच ।
पूजां भगवतश्चक्रे रामो गणपतेर्यदा ।
नैवेद्यैर्विविधैः पुष्पैस्तुलसीञ्च विना कथम् ॥ ४
तुलसी सर्व्वपुष्पाणां मान्या धन्या मनोहरा ।
कथं पूतां सारभूतां न गृह्लाति गणेश्वरः ॥ ५
नारायण उवाच ।
शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् ।
ब्रह्मकल्पस्य वृत्तान्तं निगूढ़ञ्च मनोहरम् ॥ ६
एकदा तुलसी देवी प्रोद्भिन्ननवयौवना ।
तीर्थं भ्रमन्ती तपसा नारायणपरायणा ॥ ७
ददर्श गङ्गातीरे सा गणेशं यौवनान्वितम् ।
अतीवसुन्दरं शुद्धं सस्मितं पीतवाससम् ॥ ८
चन्दनोचितसर्व्वाङ्गं रत्नभूषणभूषितम् ।
ध्यायन्तं कृष्णपादाब्जं जन्म-मृत्यु-जरापहम् ॥ ९
जितेन्द्रियाणां प्रवरं योगीन्द्राणां गुरोर्गुरुम् ।
अरूपहार्थं निष्कामं सकामा तमुवाच ह ॥ १०
तुलस्युवाच ।
अयि किं ध्यायसे देव शान्तरूप गजानन ।
कथं लम्बोदरो देहो गजवक्त्रं कथं तव ॥ ११
एकदन्तः कथं वक्त्रे वदामुष्य च कारणम् ।
त्यज ध्यानं महाभाग सायं काल उपस्थितः ॥ १२
इत्युक्त्वा तुलसी देवी प्रजहास पुनः पुनः ।
तदा चेतसि दग्धा सा कामवाणैः सुदारुणैः ॥ १३
गणेशस्य प्रधानाङ्गे दत्त्वा किञ्चिज्जलं मुने ।
जघान तज्जन्यग्रेण निष्पन्दं कृष्णमानसम् ॥ १४
बभूव ध्यानभङ्गश्च तस्य नारद चेतनम् ।
दुःखञ्च ध्यानभेदेन हरिच्छेदो हि शोकदः ॥ १५
ध्यानं त्यक्त्वा हरिं स्मृत्वा ददर्श कामिनीं पुरः ।
नवयौवनसम्पन्नां सस्मितां कामपीड़िताम् ॥ १६
लम्बोदरश्च तां दृष्ट्वा परं विनयपूर्व्वकम् ।
उवाच सस्मितः शान्तः शान्तां कामातुरां वशी ॥१७
गणेश उवाच ।
का त्वं वत्से कस्य कन्ये मातर्मां ब्रूहि किं शुभे ।
पापदोऽशुभदः शश्वद्ध्यानभङ्गस्तपस्विनाम् ॥ १८
कृष्णः करोतु कल्याणं हन्तु विघ्नं कृपानिधिः ।
मद्ध्यानभङ्गजो दोषो नाशो भवतु ते शुभे ॥ १९
गणेशवचनं श्रुत्वा तमुवाच स्मरातुरा ।
सस्मितं शकटाक्षञ्च देवं मधुरया गिरा ॥ २०
तुलस्युवाच ।
धर्म्मध्वजस्य कन्याहं-मप्रौढ़ा च तपस्विनी ।
तपस्या मे स्वामिनोऽर्थं त्वं स्वामी भव मे प्रभो ॥२१
तुलसीवचनं श्रुत्वा गणेशः श्रीहरिं स्मरन् ।
तामुवाच महाप्राज्ञः प्राज्ञीं मधुरया गिरा ॥ २२
गणेश उवाच ।
हे मातर्नास्ति मे वाञ्छा घोरे दारपरिग्रहे ।
दारग्रहो हि दुःखाय न सुखाय कदाचन ॥ २३
हरिभक्तेर्व्यवायश्च तपस्या-नाशहेतुकः ।
मोक्षद्वार-कपाटञ्च भवबन्धन-पाशकः ॥ २४
गर्भवासकरः शश्वत् तत्त्वज्ञान-निकृन्तनः ।
संशयानां समारम्भो दुस्त्याज्यो वृषभैरपि ॥२५
गेहोऽयं करणानाञ्च सर्व्वमायाकरण्डकः ।
साहसानां समूहश्च दोषाणाञ्च विशेषतः ॥ २६
निवर्त्तस्व महाभागे पश्यान्यं कामुकं पतिम् ।
कामुकेनैव कामुक्याः सङ्गमो गुणवान् भवेत् ॥ २७
इत्येवं वचनं श्रुत्वा कोपात् तं सा शशाप ह ।
दारग्रहस्ते भविता सा साध्वीति गणेश्वरम् ॥ २८
इत्याकर्ण्य सुरश्रेष्ठस्तां शशाप शिवात्मजः ।
देवि त्वमसुरग्रस्ता भविष्यसि न संशयः ॥ २९
तत्पश्चान्महतां शापाद्वृक्षत्वं भवितेति च ।
महातपस्वीत्युक्त्वैव विरराम च नारद ॥ ३०
शापं श्रुत्वा तु तुलसी प्ररुरोद पुनः पुनः ।
तुष्टाव च सुरश्रेष्ठं स प्रसन्न उवाच ताम् ॥ ३१
गणेश उवाच ।
पुष्पाणां सारभूता त्वं भविष्यसि मनोरमे ।
कलांशेन महाभागे स्वयं नारायणप्रिया ॥ ३२
प्रिया त्वं सर्व्वदेवानां श्रीकृष्णस्य विशेषतः ।
पूता विमुक्तिदा नृणां मम त्याज्या च सर्व्वदा ॥३३
इत्युक्त्वा तां सुरश्रेष्ठो जगाम तपसे पुनः ।
हरेराराधनव्यग्रो वदरीसन्निधिं ययौ ॥ ३४
जगाम तुलसी देवी हृदयेन विदूयता ।

निराहारा तपश्चक्रे पुष्करे लक्षवर्षकम्॥ ३५
पश्चान्मुनीन्द्रशापेन गणेशस्य च नारद।
सा प्रिया शङ्खचूड़स्य बभूव सुचिरं मुने॥ ३६
ततः शङ्करशूलेन संममारासुरेश्वरः।
सा कलांशेन वृक्षत्वं स्वयं नारायणप्रिया॥ ३७
कथितश्चेतिहासस्ते श्रुतो धर्म्ममुखात् पुरा।
मोक्षप्रदश्च सारश्च पुराणेन प्रकीर्त्तितः॥ ३८
परशुरामो महाभागो जगाम तपसे वनम्।
प्रणम्य शङ्करं दुर्गां सम्पूज्य च गणेश्वरम्॥ ३९
पूजितो वन्दितः सर्व्वैः सुरेन्द्रमुनिपुङ्गवैः।
पार्व्वती-शिवसान्निध्ये तत्र तस्थौ गणेश्वरः॥ ४०
इदं गणपतेः खण्डं यः शृणोति समाहितः।
स राजसूययज्ञस्य फलमाप्नोति निश्चितम्॥ ४१
अपुत्रो लभते पुत्रं श्रीगणेश-प्रसादतः।
धीरं वीरञ्च धनिनं गुणिनं चिरजीविनम्॥ ४२
यशस्विनं पुत्रिणञ्च विद्वांसं सुकवीश्वरम्।
जितेन्द्रियाणां प्रवरं दातारं सर्व्वसम्पदाम्॥ ४३
सुपवित्रं सदाचारं प्रशंस्यं वैष्णवं भवे।
अहिंसकं दयालुञ्च तत्त्वज्ञानविशारदम्॥ ४४
भक्त्या गणेशं सम्पूज्य वस्त्रालङ्कारचन्दनैः।
श्रुत्वा गणपतेः खण्डं महावन्ध्या प्रसूयते॥ ४५
मृतवत्सा काकवन्ध्या ब्रह्मन् पुत्रं लभेद्ध्रुवम्।
अदूषितं दूषिता या सा च शुद्धा लभेत् सुतम्
सम्पूर्णं ब्रह्मवैवर्त्तं श्रुत्वा यल्लभते फलम्।
तत् फलं लभते मर्त्त्यः श्रुत्वेदं खण्डमुत्तमम्॥
वाञ्छां कृत्वा तु मनसि शृणोति परमास्थितः।
तस्मै ददाति सर्व्वेष्टं सुरश्रेष्ठो गणेश्वरः॥ ४८
श्रुत्वा गणपतेः खण्डं विघ्ननाशाय यत्नतः।
स्वर्णयज्ञोपवीतञ्च श्वेतच्छत्राश्वमाल्यकम्॥
प्रदीयते वाचकाय स्वस्तिकं तिललड्डुकम्।
परिपक्वफलान्येव हिमकालोद्भवानि च॥ ५०

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणेश-खण्डे नारायण-नारदसंवादे षट्-चत्वारिंशोऽध्यायः॥ ४६॥

---

इति गणेशखण्डं समाप्तम्।